करोति। सेयं पुष्टिः। अर्चनीयमुमर्थमृक्शब्द आचष्टे। अर्च्यते प्रशस्यतेऽनया देवविशेषः क्रियाविशेषस्तत्साधनविशेषो वेत्यृक्शब्दव्युत्पत्तिरिति। अथ द्वितीयं पादं विवृणोति। गायत्रमेको गायति शक्करीषूद्गाता गायत्रं गायतेः स्तुतिकर्मणः शक्कर्य ऋचः शक्नोतेस्तद्यदाभिर्वृत्रमशकद्धंतुं तच्छक्करीणां शक्करीत्वमिति विज्ञायत इति। अस्यायमर्थः। उद्गातृनामक एक ऋत्विग्गायत्रशब्दाभिधेयं स्तोत्रं शक्करीशब्दाभिधेयास्वृक्षु गायति। धातूनामनेकार्थत्वेन स्तुतिक्रियावाचिनो गायतिधातोरुत्पन्नोऽयं गायत्रशब्दः। शक्करीशब्दस्तु शक्नोतिधातोरुत्पन्नः। वृत्रं शत्रुं हंतुं शक्नोत्याभिर्ऋग्भिरित्येषा व्युत्पत्तिः कस्मिंश्चिद्ब्राह्मणे विज्ञायत इति। अथ तृतीयं पादं विवृणोति। ब्रह्मैको जाते जाते विद्यां वदति ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हतीति। अस्यायमर्थः। ब्रह्मनामक एक ऋत्विक् जाते जाते तदा तदोत्पन्ने यज्ञे प्रस्तुते प्रणयनादिकर्मणि विद्यामनुज्ञां वदति। ब्रह्मन्नपः प्रणेष्यामीत्येवं संबोधितः सन्नों प्रणयेत्यनुजानाति। स च ब्रह्मा वेदत्रयोक्तसर्वकर्माभिज्ञः। तस्माद्योग्यतां दृष्ट्वा तत्तदनुज्ञातुं सति प्रमादे समाधातुं च समर्थ इति। तच्च सामर्थ्यं छंदोगा आमनंति। एष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताध्वर्युरुद्गातान्यतरां। छां० उ० ४. १६. १.। इति। कृत्स्नो यज्ञः प्रमादराहित्याय मनसा सम्यगनुसंधेयो वाचा च वेदत्रयोक्तमंत्राः पठनीयाः। तत्र होत्रादयस्त्रयो मिलित्वा वाग्रूपं यज्ञमार्गं संस्कुर्वंति। ब्रह्मा त्वेक एव मनोरूपं यज्ञमार्गं कृत्स्नमपि संस्करोति। तस्मादस्यास्ति सामर्थ्यमिति। अथ चतुर्थं पादं विवृणोति। यज्ञस्य मात्रां विमिमीत एकोऽध्वर्युरध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेतेति। अस्यायमर्थः। अध्वर्युनामक एक ऋत्विग्यज्ञस्य मात्रां स्वरूपं विमिमीते विशेषेण निष्पादयति। मीयते निर्मीयत इति मात्रा स्वरूपं। तन्निष्पादकत्वं चाध्वर्योर्नामनिर्वचनादवगम्यते। अध्वर्युरित्यत्र छांदस्या प्रक्रियया लुप्तमकारं पुनः प्रक्षिप्याध्वरयुरिति नाम संपादनीयं। अध्वरं युनक्तीत्यवयवार्थः। अध्वरस्य नेतेति तात्पर्यार्थ इति। एतदेवाभिप्रेत्याध्वर्युवेदस्य यागनिष्पादकत्वद्योतकं निर्वचनं यास्को दर्शयति। मंत्रा मननाच्छंदांसि छादनात्स्तोमः स्तवनाद्यजुर्यजतेः। नि० ७. १२.। इति। एवं सत्यध्वर्युसंबंधिनि यजुर्वेदे निष्पन्नं यज्ञशरीरमुपजीव्य तदपेक्षितौ स्तोत्रशस्त्ररूपावयवावितरेण वेदद्वयेन पूर्येते इत्युपजीव्यस्य यजुर्वेदस्य प्रथमतो व्याख्यानं युक्तं। तत ऊर्ध्वं साम्नामृगाश्रितत्वादुभयोर्मध्ये प्रथमत ऋग्व्याख्यानं युक्तमित्यृग्वेद इदानीं व्याख्यायते॥

ननु वेद एव तावन्नास्ति। कुतस्तदवांतरविशेष ऋग्वेदः। तथा हि। कोऽयं वेदो नाम। न हि तत्र लक्षणं प्रमाणं वास्ति। न च तदुभयव्यतिरेकेण किंचिद्वस्तु प्रसिध्यति। लक्षणप्रमाणाभ्यां हि वस्तुसिद्धिरिति न्यायविदां मतं। प्रत्यक्षानुमानागमेषु प्रमाणविशेषेष्वंतिमो वेद इति तल्लक्षणमिति चेन्न। मन्वादिस्मृतिष्वतिव्याप्तेः। समयबलेन सम्यक् परोक्षानुभवसाधनमित्येतस्यागमलक्षणस्य तास्वपि सद्भावात्॥ अपौरुषेयत्वे सतीति विशेषणाददोष इति चेन्न। वेदस्यापि परमेश्वरनिर्मितत्वेन पौरुषेयत्वात्। शरीरधारिजीवनिर्मितत्वाभावादपौरुषेयत्वमिति चेन्न। सहस्रशीर्षा पुरुष इत्यादिश्रुतिभिरीश्वरस्यापि शरीरित्वात्॥ कर्मफलरूपशरीरधारिजीवनिर्मितत्वाभावमात्रेणापौरुषेयत्वं विवक्षितमिति चेन्न। जीवविशेषैरग्निवाय्वादित्यैर्वेदानामुत्पादितत्वात्। ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्। ऐ० ब्रा० ५. ३२.। इति श्रुतेरीश्वरस्याग्न्यादिप्रेरकत्वेन निर्मातृत्वं द्रष्टव्यं॥ मंत्रब्राह्मणात्मकः शब्दराशिर्वेद इति चेन्न। ईदृशो मंत्र ईदृशं ब्राह्मणमित्यनयोरद्याप्यनिर्णीतत्वात्। तस्मान्नास्ति किंचिद्वेदस्य लक्षणं॥

नापि तत्सद्भावे प्रमाणं पश्यामः। ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थं। छां० उ० ७. १. २.। इत्यादिवाक्यं प्रमाणमिति चेन्न। तस्यापि वाक्यस्य वेदांतःपातित्वेनात्माश्रयत्वप्रसंगात्। न खलु निपुणोऽपि स्वस्कंधमारोढुं प्रभवति॥ वेद एव द्विजातीनां निःश्रेयसकरः पर इत्यादिस्मृतिवाक्यं प्रमाणमिति चेन्न। तस्याप्युक्तश्रुतिमूलत्वेन निराकृतत्वात्॥ प्रत्यक्षादिकं तु शंकितुमप्ययोग्यं। वेदविषया तु लोकप्रसिद्धिः सार्वजनीनापि नीलं नभ इत्यादिवद्भ्रांता। तस्माल्लक्षणप्रमाणरहितस्य वेदस्य सद्भावो नांगीकर्तुं शक्यत इति पूर्वः पक्षः॥

अत्रोच्यते। मंत्रब्राह्मणात्मकत्वं तावददुष्टं लक्षणं। अत एवापस्तंबो यज्ञपरिभाषायामेवमाह। मंत्रब्राह्मणयोर्वेदनामधेयं। आ० प० ३१.। इति। तयोस्तु स्वरूपमुपरिष्टान्निर्णेष्यते॥ अपौरुषेयवाक्यत्वमितीदमपि यादृशमस्माभिर्विवक्षितं तादृशमुत्तरत्र स्पष्टीभविष्यति॥ प्रमाणान्यपि यथोक्तश्रुतिस्मृतिलोकप्रसिद्धिरूपाणि वेदसद्भावे द्रष्टव्यानि। यथा घटपटादिद्रव्याणां स्वप्रकाशत्वाभावेऽपि सूर्यचंद्रादीनां स्वप्रकाशत्वमविरुद्धं

तथा मनुष्यादीनां स्वस्कंधारोहासंभवेऽप्यकुंठितशक्तिर्वेदस्येतरवस्तुप्रतिपादकत्ववत्स्वप्रतिपादकत्वमप्यस्तु। अत एव संप्रदायविदोऽकुंठितां शक्तिं वेदस्य दर्शयंति। चोदना हि भूतं भविष्यंतं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवंजातीयकमर्थं शक्नोत्यवगमयितुमिति। तथा सति वेदमूलायाः स्मृतेस्तदुभयमूलाया लोकप्रसिद्धेश्च प्रामाण्यं दुर्वारं। तस्माल्लक्षणप्रमाणसिद्धो वेदो न केनापि चार्वाकादिनापोढुं शक्यत इति स्थितं॥

नन्वस्तु नाम वेदाख्यः कश्चित्पदार्थः। तथापि नासौ व्याख्यानमर्हति। अप्रमाणत्वेनानुपयुक्तत्वात्। न हि वेदः प्रमाणं। तल्लक्षणस्य तत्र दुःसंपादत्वात्। तथा हि। सम्यगनुभवसाधनं प्रमाणमिति केचिल्लक्षणमाहुः। अपरे त्वनधिगतार्थगंतृ प्रमाणमित्याचक्षते। न चैतदुभयं वेदे संभवति। मंत्रब्राह्मणात्मको हि वेदः। तत्र मंत्राः केचिदबोधकाः। अम्यक्सा त इंद्र ऋष्टिः। ऋग्वे॰ १. १६९. ३.। इत्येको मंत्रः। यादृश्मिन्धायि तमपस्यया विदत्। ऋग्वे॰ ५. ४४. ८.। इत्यन्यः। सृण्येव जर्भरी तुर्फरीतू। ऋग्वे॰ १०. १०६. ६.। इत्यपरः। एवं आपांतमन्युस्तृपलप्रभर्मा। ऋग्वे॰ १०. ८९. ५.। इत्यादय उदाहार्याः। न ह्येतैर्मंत्रैः कश्चिदप्यर्थोऽवबुध्यते। एतेष्वनुभव एव यदा नास्ति तदा तत्सम्यक्त्वं तदीयसाधनत्वं च दूरापेतं। अधः स्विदासी३दुपरि स्विदासी३त्। ऋग्वे॰ १०. १२९. ५.। इति मंत्रस्य बोधकत्वेऽपि स्थाणुर्वा पुरुषो वेत्यादिवाक्यवत्संदिग्धार्थबोधकत्वान्नास्ति प्रामाण्यं। ओषधे त्रायस्वैनं। तै॰ सं॰ १. २. १. १.। इति मंत्रो दर्भविषयः। आ॰ गृ॰ १. १७. ८.। स्वधिते मैनं हिंसीरिति क्षुरविषयः। आ॰ गृ॰ १. १७. ९.। शृणोत ग्रावाणः। तै॰ सं॰ १. ३. १३. १.। इति पाषाणविषयः। एतेष्वचेतनानां दर्भक्षुरपाषाणानां चेतनवत्संबोधनं श्रूयते। ततो द्वौ चंद्रमसाविति वाक्यवद्विपरीतार्थबोधकत्वादप्रामाण्यं। एक एव रुद्रो न द्वितीयाय तस्थे। तै॰ सं॰ १. ८. ६. १.। सहस्राणि सहस्रशो ये रुद्रा अधि भूम्यां। तै॰ सं॰ ४. ५. ११. १.। इत्यनयोस्तु मंत्रयोर्यावज्जीवमहं मौनीति वाक्यवद्व्याघातबोधकत्वादप्रामाण्यं। आप उंदंतु। तै॰ सं॰ १. २. १. १.। इति मंत्रो यजमानस्य क्षौरकाले जलेन शिरसः क्लेदनं ब्रूते। शुभिके शिर आरोह शोभयंती मुखं ममेति मंत्रो विवाहकाले मंगलाचरणार्थं पुष्पनिर्मितायाः शुभिकाया वरवध्वोः शिरस्यवस्थानं ब्रूते। तयोश्च मंत्रयोर्लोकप्रसिद्धार्थानुवादित्वादनधिगतार्थगंतृत्वं नास्ति। तस्मान्मंत्रभागो न प्रमाणं॥

अत्रोच्यते। अम्यगादिमंत्राणामर्थो यास्केन निरुक्तग्रंथेऽवबोधितः। तत्परिचयरहितानामनवबोधो न मंत्राणां दोषमावहति। अत एवात्र लोकन्यायमुदाहरंति। नैष स्थाणोरपराधो यदेनमंधो न पश्यति पुरुषापराधः स भवतीति। अधः स्विदासीदिति मंत्रश्च न संदेहप्रबोधनाय प्रवृत्तः। किंतर्हि। जगत्कारणस्य परवस्तुनोऽतिगंभीरत्वं निश्चेतुमेव प्रवृत्तः। तदर्थमेव हि गुरुशास्त्रसंप्रदायरहितैर्दुर्बोधत्वमधः स्विदित्यनया वचोभंग्योपन्यस्यति। स एवाभिप्राय उपरितनेषु को अद्धा वेद। ऋग्वे॰ ३. ५४. ५.। इत्यादिमंत्रेषु स्पष्टीकृतः। ओषध्यादिमंत्रेष्वपि चेतना एव तत्तदभिमानिनेवतास्तेन तेन नाम्ना संबोध्यंते। ताश्च देवता भगवता बादरायणेनाभिमानिव्यपदेशस्तु। वेदां॰ २. १. ५.। इति सूत्रे सूचिताः। एकस्यापि रुद्रस्य स्वमहिम्ना सहस्रमूर्तिस्वीकारान्नास्ति परस्परव्याघातः। जलादिद्रव्येण शिरःक्लेदनादेर्लोकप्रसिद्धत्वेऽपि तदभि[illegible]हस्याप्रसिद्धत्वात्तद्विषयत्वेनाज्ञातार्थज्ञापकत्वं। ततो लक्षणसद्भावादस्ति मंत्रभागस्य प्रामाण्यं॥

एतदेवाभिप्रेत्य भगवान् जैमिनिर्मंत्राधिकरणे मंत्राणां विवक्षितार्थत्वमसूचयत्। पू॰ मी॰ १. २. ३१–५३.। तानि च सूत्राणि क्रमेणोदाहृत्य व्याख्यास्यामः। तत्र पूर्वपक्षं सूचयति॥

तदर्थशास्त्रादिति॥१॥ यस्यार्थस्याभिधाने समर्थो मंत्रः स एवाभिधेयो यस्य शास्त्रस्य ब्राह्मणवाक्यस्य तदिदं वाक्यं तदर्थशास्त्रं। तस्माच्छास्त्रादविवक्षितार्थो मंत्र इत्यवगम्यते। तथा हि। उरु प्रथस्व। तै॰ सं॰ १. १. ८. वा॰ सं॰ १. २२.। इति मंत्रेण पुरोडाशप्रथनमभिधीयते। पुरोडाशं प्रथयति। तै॰ ब्रा॰ ३. २. ८. ४. शत॰ ब्रा॰ १. २. २. ८.। इति ब्राह्मणेनापि तदेवाभिधीयते। तथा सति मंत्रेणैव प्रतीतत्वात्तदर्थबोधनाय प्रवृत्तं ब्राह्मणमनर्थकं स्यात्। मंत्रस्याविवक्षितार्थत्वे तु विनियोगबोधनाय ब्राह्मणमुपयुक्तं। तस्मान्मंत्रा उच्चारणेनैवानुष्ठान उपकुर्वंति॥ ननूच्चारणार्थत्वे सत्यदृष्टं प्रयोजनं परिकल्प्येत। अर्थाभिधायकत्वे तु दृष्टं लभ्यते। तस्माद्ब्राह्मणस्यानुवादकत्वमभ्युपेत्यापि मंत्रस्याभिधानार्थत्वमेवेत्याशंक्योत्तरं सूत्रयति॥

वाक्यनियमादिति॥२॥ अग्निर्मूर्धा दिवः ककुत्। ऋग्वे॰ ८. ४४. १६.। इत्येवमेव वाक्यं पठितव्यमिति मंत्रे नियम उपलभ्यते। अर्थप्रत्यायनं तु मूर्धाग्निरित्येवं व्युत्क्रमपाठेऽपि भवत्येव। तस्मान्नियतपाठक्रमता-

फल्यायोच्चारणमेव मंत्रप्रयोजनं ॥ ननु पाठक्रमनियममाचरणादृष्टार्थत्वेऽपि मंत्रपाठोऽर्थबोधार्थ एवेत्याशंक्य तत्र दोषांतरं सूचयति ॥

बुद्धशास्त्रादिति ॥ ३॥ अग्नीदग्नीन्विहर । तै° सं° ६. ३. १. २. । इति प्रैषमंत्रः प्रयोगकाले पठ्यते । तत्रापि विहरणादिकमाग्नीध्रेणाध्ययनकाल एव स्वकर्तव्यत्वेन बुद्धं । तस्य च बुद्धार्थस्य पुनर्मंत्रोच्चारणेन शासनमनर्थकं। न हि सोपानत्के पादे पुनरप्युपानहं प्रतिमुंचति ॥ ननु बुद्धस्याप्यर्थस्य प्रमादिकविस्मरणपरिहाराय मंत्रेण स्मारणमस्त्वित्याशंक्य दोषांतरं सूचयति ॥

अविद्यमानवचनादिति ॥ ४॥ चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । ऋग्वे° ४. ५८. ३. । इति मंत्र आम्नायते । न खलु चतुःशृंगत्वाद्युपेतं किंचिद्यज्ञसाधनं विद्यते यन्मंत्रपाठेनानुस्मर्येत ॥ नन्वीदृशी काचिद्देवता स्यादित्याशंक्यान्यं दोषं सूचयति ॥

अचेतनेऽर्थबंधनादिति ॥ ५॥ ओषधे त्रायस्वैनं शृणोत ग्रावाण इत्यादावचेतने द्रव्ये चेतनोचितरक्षणश्रवणाद्यर्थं बध्नाति । स चायुक्तः ॥ नन्वभिमानिव्यपदेश इति वैयासिकशास्त्रे सूचितत्वादोषध्याद्यभिमानिचेतनदेवतात्र विवक्ष्यतामित्याशंक्य दोषांतरं सूचयति ॥

अर्थविप्रतिषेधादिति ॥ ६॥ अदितिर्द्यौरदितिरंतरिक्षं । ऋग्वे° १. ८९. १०. । इति मंत्र आम्नायते । यदेव द्यौस्तदेवांतरिक्षमित्ययमर्थो विप्रतिषिद्धः । एवं एक एव रुद्रः सहस्राणि सहस्रशो ये रुद्रा इत्यादिकमप्युदाहर्तव्यं ॥ ननु त्वमेव माता च पिता त्वमेवेत्यादिवद्दंतरिक्षादिरूपत्वेनादितिः स्तूयते । एवमेकस्यापि रुद्रस्य योगसामर्थ्या[illegible]नेकत्वीकारोऽस्तु । ततो नार्थविप्रतिषेध इत्याशंक्य दोषांतरं सूचयति ॥

स्वाध्यायवदवचनादिति ॥ ७॥ पूर्णिका नाम काचिद्योषिदवघातं करोति । तत्समीपे माणवकः स्वाध्यायग्रहणार्थं कदाचिदवघातमंत्रमधीते । न च तस्यार्थप्रकाशनविवक्षास्ति प्रति[illegible]रं तस्य मंत्रस्यापठ्यमानत्वादक्षरग्रहणायैव तं मंत्रमन्यांश्च मंत्रानभ्यस्यति । तत्र स्वाध्यायकाले पठितोऽप्यवघातमंत्रो यथा पूर्णिकां प्रति स्वार्थं न ब्रूते तथा कर्मकालेऽपि स्वार्थं न वक्ष्यति ॥ ननु तत्र माणवकस्यार्थे विवक्षा नास्ति । पूर्णिकाप्यवबोद्धुमक्षमा । कर्मणि त्वध्वर्यो[illegible] विद्यते बोधस्य संभवतीत्याशंक्य दोषांतरं सूचयति ॥

अविज्ञेयादिति ॥ ८॥ केषांचिन्मंत्राणामर्थो विज्ञातुं न शक्यते । तद्यथा । अम्यक्सा त इंद्र ऋष्टिरस्मे इत्येको मंत्रः । सृण्येव जर्भरी तुर्फरीतू इत्यपरो मंत्रः ॥ नन्वीदृशमंत्रार्थबोधायैव निगमनिरुक्तव्याकरणानि प्रवृत्तानीत्याशंक्य दोषांतरं सूचयति ॥

अनित्यसंयोगान्मंत्रानर्थक्यमिति ॥ ९॥ किं ते कृण्वंति कीकटेषु । ऋग्वे° ३. ५३. १४. । इति मंत्रे कीकटो नाम जनपद आम्नातः । तथा नैचाशाखं नाम नगरं प्रमगंदो नाम राजेत्येतेऽर्था अनित्या आम्नाताः । तथा च सति प्राक् प्रमगंदान्नायं मंत्रो भूतपूर्व इति गम्यते ॥ तदेवमेतैस्तदर्थशास्त्रादिभिर्हेतुभिर्मंत्राणामर्थप्रत्यायनार्थत्वं नास्ति । किंतूच्चारणाददृष्टार्था एवेति पूर्वपक्षः ॥

तत्र सिद्धांतं सूचयति ॥ अविशिष्टस्तु वाक्यार्थ इति ॥ १०॥ तुशब्देन मंत्राणामदृष्टार्थमुच्चारणमात्रं वारयति । क्रियाकारकसंबंधेन प्रतीयमानो वाक्यार्थो लोकवेदयोरविशिष्टः । तथा सति यथा लोकेऽर्थप्रत्यायनायैव वाक्यमुच्चार्यते तथा वैदिकयागप्रयोगेऽपि द्रष्टव्यं । मंत्रेण प्रकाशितस्त्वर्थोऽनुष्ठातुं शक्यते न त्वप्रकाशितः। तस्मान्मंत्रोच्चारणस्यार्थप्रकाशनरूपं दृष्टमेव प्रयोजनं ॥ नन्वभ्रिरसि नारिरसीत्यारभ्य त्रैष्टुभेन त्वा छंदसा ददे । तै° सं° ४. १. १. ३. । इति मंत्र आम्नातः । तेनैव मंत्रेण प्रतीतेऽप्यभ्र्यादाने पुनर्ब्राह्मणे तां चतुर्भिरभ्रिमादत्ते । तै° सं° ५. १. १. ४. । इति विधीयते । तदेतद्विधानं त्वत्पक्षे व्यर्थं स्यादित्या[illegible]रं सूचयति ॥

गुणार्थेन पुनःश्रुतिरिति ॥ ११॥ मंत्रेण प्रतीतस्यैवार्थस्य ब्राह्मणे यत्पुनःश्रवणं तदेतच्चतुःसंख्यालक्षणगुणविधानार्थत्वेनोपयुज्यते । एतस्य विधानस्याभावे चतुर्णां मंत्राणां मध्ये येन केनाप्येकेनाभ्रिरादीयेत ॥ नन्विमामगृभ्णन्रशनामृतस्य । तै° सं° ४. १. २. १. । इत्यश्वाभिधानीमादत्ते । तै° सं° ५. १. २. १. । इत्यत्र मंत्रसामर्थ्यादेव प्राप्तस्य रशनादानस्य पुनर्ब्राह्मणवाक्यं विनियोजकमाम्नायते । तदेतत्त्वन्मते व्यर्थमित्या[illegible]रं सूचयति ॥

परिसंख्येति ॥ १२॥ गर्दभाभिधानीं नादत्त इति निषेधः परिसंख्या । तदर्थमिदं ब्राह्मणवाक्यं ॥ ननु परिसंख्यायां त्रयो दोषाः प्राप्नुयुः । आदत्त इति रशनादानलक्षणं स्वार्थं जह्यात् । निषेधलक्षणः परार्थोऽस्य शब्दस्य कल्प्येत । रशनात्वसामान्येन च प्राप्तं गर्दभरशनाया आदानं बाध्येतेति त्रयो दोषाः । मैवं । गर्दभरशनाया अप्राप्तत्वा[illegible] । तथा हि । त्वत्पक्षे प्रकरणपाठान्यथानुपपत्त्या मंत्रेणानेनादानं कुर्यादिति वाक्यं

परिकल्प्यते। तेन च वाक्येन मंत्रादानयोः संबंधे सति पश्चात्किंविषयकमादानमिति वीक्षायां लिंगाद्रशनामात्रस्यादानमुपेत्य गर्दभरशनायाः प्राप्तिर्वक्तव्या। सा च विलंब्यत इत्यश्वाभिधानीमिति प्रत्यक्षेण वाक्येन। मंत्रादानयोः संबंधे सति लिंगाद्रशनामात्रे प्राप्तमादानमश्वाभिधानीमिति श्रुत्या विशेषे व्यवस्थाप्यते। ततो मंत्रस्य निराकांक्षत्वाद्गर्दभरशनाया अप्राप्तत्वान्नास्ति प्राप्तबाधः। अत एव निषेधार्थो न कल्प्यते। विध्यर्थश्च न त्यज्यते। तत्र कुतो दोषत्रयं। ईदृशमप्राप्तिरूपमेव गर्दभरशनाया निवारणमभिप्रेत्य परिसंख्येति सूचितं॥ ननूरु प्रथस्वेति प्रथयतीति ब्राह्मणस्य वैयर्थ्यं तदवस्थमेवेत्याशंक्योत्तरं सूत्रयति॥

अर्थवादो वेति ॥१३॥ वाशब्दो वैयर्थ्यं वारयति। अस्त्यत्रार्थवादः। यज्ञपतिमेव तत्प्रथयतीति तेनार्थवादेन संबंधाय ब्राह्मणे विधिः पठ्यते॥ ननु प्रथयतीत्यनेनैव विधिशब्देन प्रथनमनूद्य यज्ञपतिमेवेत्यादिनार्थवादेन स्तोतव्यं। तदेव तु प्रथनं कुतः प्राप्तमित्याशंक्योत्तरं सूत्रयति॥

मंत्राभिधानादिति ॥१४॥ अध्वर्युः पुरोडाशमुद्दिश्य मंत्रे प्रथस्वेत्येवमभिधत्ते। तस्मादभिधानादध्वर्युकर्तृकं प्रथनं प्राप्तं। यथा लोके यः कुर्विति ब्रूते स कारयत्येव तथात्रापि यः प्रथस्वेति ब्रूते स प्रथयत्येव॥ यदुक्तं अग्निर्मूर्धा दिव इति पाठक्रमनियमाददृष्टार्थौ मंत्र इति तत्रोत्तरं सूत्रयति॥

अविरुद्धं परमिति ॥१५॥ परं द्वितीयसूत्रोक्तमस्मत्पक्षेऽप्यविरुद्धं। न हि वयं पाठक्रमनियमाददृष्टं निवारयामः। किंतर्हि। मंत्रोच्चारणेन जायमानमर्थप्रत्यायनं दृष्टप्रयोजनत्वान्नोपेक्षितव्यमित्येतावदेव ब्रूमः॥ ननु प्रोक्षणीरासादय। वा॰ सं॰ १. २८.। इति मंत्रो बुद्धमेवार्थं शास्ति। तदयुक्तं। सोपानत्कस्योपानदंतरासंभवादित्युक्तमिति चेत् तस्य परिहारं सूत्रयति॥

संप्रैषकर्मणो गर्हानुपलंभः संस्कारत्वादिति ॥१६॥ संप्रैषकर्मणो गर्हा त्वदुक्तदोषो नोपलभ्यते। बुद्धस्याप्यर्थस्य मंत्रेणैवानुस्मरणे सति नियमादृष्टलक्षणस्य संस्कारस्य सद्भावात्॥ यच्चोक्तं चत्वारि शृंगेति मंत्रोऽसंतमेवार्थमभिधत्त इति तस्योत्तरं सूत्रयति॥

अभिधानेऽर्थवाद इति ॥१७॥ असतोऽर्थस्याभिधाने वाक्ये गौणस्यार्थस्योक्तिर्द्रष्टव्या। तद्यथा। चत्वारो होत्रध्वर्यूद्गातृब्रह्माणोऽस्य कर्मणः शृंगाणि। प्रातःसवनादयस्त्रयः पादाः। पत्नीयजमानौ द्वे शीर्षे। गायत्र्यादीनि सप्त छंदांसि हस्ताः। ऋग्वेदादिभिस्त्रिभिर्वेदैस्त्रेधा बंधनं। कामान्वर्षतीति वृषभः। रोरवीति स्तोत्रशस्त्रादिशब्दान्पुनःपुनः करोति। महो देवः सोऽयं प्रौढो यज्ञरूपो देवो मर्त्यानाविवेशेति मनुष्या एवात्राधिकारिणः। लोकेऽप्येवं गौणप्रयोगा दृश्यंते। चक्रवाकस्तनी हंसदंतावली काशवस्त्रा शैवलकेशिनीत्येवं नद्याः स्तूयमानत्वात्। एवमोषधे त्रायस्व शृणोत ग्रावाण इत्याद्यचेतनसंबोधनानि स्तुतिपरत्वेन योजनीयानि। यस्मिन्वपन ओषधिरपि त्रायते तत्र वपनकर्ता त्रायत इति किमु वक्तव्यं। तथा ग्रावाणोऽपि प्रातरनुवाकं शृण्वंति किमुत विद्वांसो ब्राह्मणा इत्यामंत्रणाभिप्रायः॥ योऽप्यदितिर्द्यौरदितिरंतरिक्षमिति विप्रतिषेध उक्तस्तस्योत्तरं सूत्रयति॥

गुणादविप्रतिषेधः स्यादिति ॥१८॥ यथा त्वमेव पिता त्वमेव मातेत्यत्र गौणप्रयोगादविरोधस्तद्वत्। एवमेकरुद्रदेवत्ये कर्मण्येको रुद्रः शतरुद्रदेवत्ये शतं रुद्रा [illegible]॥ यदप्युक्तं स्वाध्यायमधीयानो माणवकः पूर्णिकाया अवहंतिं न प्रकाशयितुमिच्छतीति तत्रोत्तरं सूत्रयति॥

विद्यावचनमसंयोगादिति ॥१९॥ वेदविद्याग्रहणकालेऽर्थस्य यदवचनं तदयज्ञसंयोगादुपपद्यते। न हि पूर्णिकाया अवघातो यज्ञसयुक्तः। नापि माणवको यज्ञमनुतिष्ठति। अतो यज्ञानुपकारान्न तत्रार्थविवक्षा॥ यदप्युक्तं अम्यक्सा त इंद्र ऋष्टिरेव जर्भरी तुर्फरीतू इत्यादावर्थस्य ज्ञातुमशक्यत्वान्नास्त्येवार्थ इति तत्रोत्तरं सूत्रयति॥

सतः परमविज्ञानमिति ॥२०॥ विद्यमान एवार्थः प्रमादालस्यादिभिर्न विज्ञायते। तेषां [illegible]व्याकरणवशेन धातुतोऽर्थः परिकल्पयितव्यः। तद्यथा। जर्भरी तुर्फरीतू इत्येवमादीन्यश्विनोरभिधानानि। तेषु हि द्विवचनांतत्वं लक्ष्यते। आश्विनं चेदं सूक्तमश्विनो' काममप्राः। ऋग्वे॰ १०. १०६. ११.। इति दर्शनात्। एतदेवाभिप्रेत्य निरुक्तकारो व्याचष्टे। जर्भरी भर्तारावित्यर्थस्तुर्फरीतू हंतारावित्यर्थः। नि॰ १३. ५.। इति। एवमम्यक्सा त इत्यादावप्युन्नेयं॥ यदप्युक्तं प्रमगंदाद्यनित्यार्थसंयोगान्मंत्रस्यानादित्वं न स्यादिति तत्रोत्तरं सूत्रयति॥

उक्तश्चानित्यसंयोग इति ॥२१॥ प्रथमपाद[illegible]करणे सोऽयमनित्यसंयोगदोष उक्तः परिहृतः।

तथा हि। तत्र पूर्वपक्षे वेदानां पौरुषेयत्वं वक्तुं काठकं कालापकमित्यादिपुरुषसंबंधाभिधानं हेतूकृत्यानित्यदर्शनाच्च। पू॰ मी॰ १. १. २८.। इति हेत्वंतरं सूचितं। तस्यायमर्थः। बबरः प्रावाहणिरकामयत। तै॰ सं॰ ७. १. १०. २.। इत्यनित्यानां बबरादीनामर्थानां दर्शनात्ततः पूर्वमसत्त्वात्पौरुषेयो वेद इति तस्योत्तरमेवं सूत्रितं। परं तु श्रुतिसामान्यमात्रं। पू॰ मी॰ १. १. ३१.। इति। तस्यायमर्थः। यत्काठकादिसमाख्यानं तत्प्रवचननिमित्तं। यत्तु परं बबराद्यनित्यदर्शनं तच्छब्दसामान्यमात्रं। न तु तत्रानित्यो बबराख्यः कश्चित्पुरुषो विवक्षितः। किंतु बबर इति शब्दानुकृतिः। तथा सति बबरेति शब्दं कुर्वन्वायुरभिधीयते। स च प्रावाहणिः। प्रकर्षेण वहनशीलः। एवमन्यत्राप्यूहनीयं। तदेवं कस्यचिदपि दोषस्यासंभवाद्विवक्षितार्था मंत्राः स्वार्थप्रकाशनायैव प्रयोक्तव्याः॥ नन्वर्थप्रकाशनार्थत्वे सति दृष्टं प्रयोजनं लभ्यत इति युक्तिमात्रमिदमुच्यते। न त्वेतदुपोद्बलकं किंचिच्छ्रौतं लिंगं पश्याम इत्याशंक्योत्तरं सूत्रयति॥

लिंगोपदेशश्च तदर्थवदिति॥२२॥ आग्नेय्याग्नीध्रमुपतिष्ठतेति श्रूयते। तस्यायमर्थः। अग्निर्देवता यस्या ऋचः सेयमाग्नेयी। तयाग्नीध्रस्थानमुपतिष्ठेतेति। अत्र ह्युपस्थानमुपदिशद्ब्राह्मणमग्ने नय। ऋग्वे॰ १. १८९. १.। इत्यनयोपतिष्ठेतेति मंत्रप्रतीकं पठित्वा नोपदिशति किंतु आग्नेयीत्वलिंगेनोपदिशति। यदा तस्यामृच्यग्निः प्राधान्येन प्रतिपाद्यते तदा तस्या ऋचोऽग्निर्देवता भवति। तथा सत्याग्नेय्येति देवतावाचितद्धितांतनिर्देश उपपद्यते। तस्मादयमुपदेशस्तन्मंत्रवाक्यमर्थवदिति बोधयति। अतो विवक्षितार्थत्वादर्थप्रत्यायनार्थं प्रयोगकाले मंत्रोच्चारणं॥ तस्मिन्नेव विवक्षितार्थत्वे लिंगांतरं सूत्रयति॥

ऊह इति॥२३॥ प्रकृतावाम्नातस्य मंत्रस्य विकृतौ समवेतार्थत्वाय तदुचितपदांतरस्य प्रक्षेपेण पाठ ऊहः। तद्यथा। अन्वेनं माता मन्यतामनु पितानु भ्रातेति प्राकृतः पशुविषयो मंत्रपाठः। तस्य च मंत्रस्य विकृतौ पशुद्वये सत्यन्वेनौ माता मन्यतामित्यूहः। पशुबहुत्वे सत्यन्वेनान्माता मन्यतामित्यूहः कर्तव्यः। एतन्मंत्रव्याख्यानरूपं ब्राह्मणमेवमाम्नायते। न माता वर्धते न पितेति। तत्रेदं चिंतनीयं। किमत्र शरीरवृद्धिर्निषिध्यते आहो स्विच्छब्दवृद्धिरिति। एकवचनांतस्य मातृशब्दस्य मातराविति द्विवचनांतत्वेन वा मातर इति बहुवचनांतत्वेन वा प्रयोगः शब्दवृद्धिः। तत्र न तावच्छरीरवृद्धिर्निषेद्धुं शक्यते। बाल्यकौमारयौवनादिवयोऽनुसारेण तद्वृद्धेः प्रत्यक्षत्वात्। अतः शब्दवृद्धिनिषेध एव परिशिष्यते। मातृशब्दपितृशब्दयोर्विशेषाकारेण वृद्धिनिषेधादितरस्यैनमिति शब्दस्यार्थानुसारिणी वृद्धिः सूचिता भवति। तत्र यद्यर्थो न विवक्ष्येत तदा पशुद्वित्वे द्विवचनं पशुबहुत्वे बहुवचनं च कथमूह्येत। तस्माद्विवक्षितार्था मंत्राः॥ तस्मिन्नेवार्थे लिंगांतरं सूत्रयति॥

विधिशब्दाच्चेति॥२४॥ मंत्रव्याख्यानरूपो ब्राह्मणगतः शब्दो विधिशब्द इत्युच्यते। स चैवमाम्नायते। शतं हिमाः शतं वर्षाणि जीव्यास्मेत्येवैतदाह। शत॰ ब्रा॰ २. ३. ४. २१.। इति। तत्र शतं हिमा इत्येतद्व्याख्येयमंत्रस्य प्रतीकं। अवशिष्टं तु तस्य तात्पर्यव्याख्यानं। मंत्रस्याविवक्षितार्थत्वे तु किं नाम तात्पर्यं मंत्रे व्याख्यायेत। तस्माद्विवक्षितार्था मंत्राः प्रयोगकाले स्वार्थप्रकाशनायैवोच्चारयितव्याः॥

तत्र संग्रहश्लोकौ। जै॰ न्या॰ १. २. ४.॥

मंत्रा उरु प्रथस्वेति किमदृष्टैकहेतवः। यागेषूत पुरोडाशप्रथनादेश्च भासकाः॥
ब्राह्मणेनापि तज्ज्ञानान्मंत्राः पुण्यैकहेतवः। न तज्ज्ञानस्य दृष्टत्वाद्दृष्टं वरमदृष्टत इति॥

नन्वस्तु मंत्रभागस्य प्रामाण्यं। ब्राह्मणभागस्य तु न तद्युज्यते। तथा हि। द्विविधं ब्राह्मणं। विधिरर्थवादश्चेति। तथा चापस्तंबः। कर्मचोदना ब्राह्मणानि ब्राह्मणशेषोऽर्थवादः। आ॰ प॰ ३२–३३.। इति। विधिरपि द्विविधः। अप्रवृत्तप्रवर्तनमज्ञातज्ञापनं चेति। आग्नावैष्णवं पुरोडाशं निर्वपंति दीक्षणीयं। ऐ॰ ब्रा॰ १. १.। इत्याद्याः कर्मकांडगतविधयोऽप्रवृत्तप्रवर्तकाः। आत्मा वा इदमेक एवाग्र आसीत्। ऐ॰ आ॰ २. ४. १.। इत्यादयो ब्रह्मकांडगता अज्ञातज्ञापकाः। तत्र कर्मकांडगतानां जर्तिलयवाग्वा वा जुहुयाद्गवीधुकयवाग्वा वा। तै॰ सं॰ ५. ४. ३. २.। इत्यादिविधीनां नास्ति प्रामाण्यं। प्रवृत्त्ययोग्यद्रव्यविधानेन सम्यगनुभवसाधनत्वाभावात्। अयोग्यत्वं च वाक्यशेषे समाम्नातं। अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेति। तत्र ह्यारण्यतिलानामारण्यगोधूमानां चाहुतिद्रव्यत्वं निषिद्धं। तस्माद्बाधितो जर्तिलादिविधिरप्रमाणं। एवमैतरेयतैत्तिरीयादिब्राह्मणेषु तत्तन्नादृत्यं तत्तथा न कार्यमिति वाक्याभ्यां बहवो विधयो निषिद्धाः। अपि चैतरेयब्राह्मणेऽनुदितहोमं बहुधा निंदित्वा तस्मादुदिते होतव्यमित्यसकृन्निगमितं। तैत्तिरीयाश्च तथैवामनंति। यदनुदिते

सूर्ये प्रातर्जुहुयादुभयमेवाग्नेयं स्यात् उदिते सूर्ये प्रातर्जुहोति । तै॰ ब्रा॰ २. १. २. ७. । इति । पुनरपि त एवोदितहोमे दोषमामनंति । यदुदिते सूर्ये प्रातर्जुहुयाद्यथातिथये प्रद्रुताय शून्यायावसथायाहार्यं हरंति तादृगेव तत् । तै॰ ब्रा॰ २. १. २. १२. । इति । तथैवातिरात्रे षोडशिनं गृह्णातीति विधिर्नातिरात्रे षोडशिनं गृह्णातीति निषेधेन बाध्यते । ज्योतिष्टोमादिष्वप्यनुष्ठानानंतरमेव स्वर्गादिफलं नोपलभ्यते । न हि भोजनानंतरं तृप्तेरनुपलंभोऽस्ति । तस्मात्कर्मविधिषु प्रामाण्यं दुःसंपादं ॥

अज्ञातज्ञापकेषु ब्रह्मविधिष्वपि परस्परविरोधान्नास्ति प्रामाण्यं । आत्मा वा इदमेक एवाग्र आसीत् । ऐ॰ आ॰ २. ४. १. । इत्यैतरेयिण आमनंति । असद्वा इदमग्र आसीत् । तै॰ आ॰ ८. ७. । इति तैत्तिरीयकाः । सोऽयं विरोधः । तस्माद्वेदे विधिभागः सर्वोऽप्यप्रमाणमिति प्राप्ते ब्रूमः ॥

अस्त्वेव जर्तिलादिविधेरप्रामाण्यं तदर्थस्याननुष्ठेयत्वात् । अनुष्ठेयस्त्वर्थ उपरितनेऽजाक्षीरेण जुहोतीति वाक्ये विधीयते । तत्प्रशंसार्थमत्र जर्तिलादिकमनूद्य निंद्यते । यथा गवामश्वानां च प्रशंसार्थमपशवो वा अन्ये गोअश्वेभ्य इति वाक्येनार्थवादरूपेणाजादीनां पशुत्वं निंद्यते तद्वत् । एवं तर्ह्यजादेर्यथा वस्तुतः पशुत्वमस्ति तथा जर्तिलादिविधिरत्र निंद्यमानोऽपि क्वचिच्छाखांतरे भवेदिति चेत् भवतु नाम । प्रामाण्यमपि तच्छाखाध्यायिनं प्रति भविष्यति । यथा गृहस्थाश्रमे निषिद्धमपि परान्नभोजनमाश्रमांतरेषु प्रामाणिकं तद्वत् । अनेन न्यायेन सर्वत्र परस्परविरुद्धौ विधिनिषेधौ पुरुषभेदेन व्यवस्थापनीयौ । यथा मंत्रेषु पाठभेदः शाखाभेदेन व्यवस्थितस्तद्वत् । तैत्तिरीया वायवः स्थोपायवः स्थ । तै॰ सं॰ १. १. १. । इति मंत्रमामनंति । वाजसनेयिनस्तूपायवः स्थेत्येतं भागं नामनंति । वा॰ सं॰ १. १. । प्रत्युत शतपथब्राह्मणे । १. ७. १. ३. । स भागोऽनूद्य निराकृतः । तथा सूक्तवाकमंत्रे शाखांतरपाठं निराकृत्य पाठांतरं तैत्तिरीया आमनंति । यद्ब्रूयात्सूपावसाना च स्वध्यवसाना चेति प्रमायुको यजमानः स्यात् । तै॰ सं॰ २. ६. ९. ६. । इति निराकरणं । सूपचरणा च स्वधिचरणा चेत्येव ब्रूयादिति पाठांतरोपदेशः । तत्रानुष्ठातृपुरुषभेदेन व्यवस्था । तद्वद्विधिषु द्रष्टव्यं । षोडशिग्रहणादिदूषणं त्वस्मृतमीमांसावृत्तांतस्य तवैव शोभते । पूर्वमीमांसायां दशमाध्यायस्याष्टमपादे षोडशिनो ग्रहणाग्रहणविकल्पो निर्णीतः । पू॰ मी॰ १०. ८. ६. । द्वितीयस्याध्यायस्य प्रथमपादे कालांतरभाविफलसिद्ध्यर्थमपूर्वं निर्णीतं । पू॰ मी॰ २. १. ५. । तदुत्तरमीमांसायां प्रथमाध्यायस्य चतुर्थपादे कारणत्वेन चाकाशादिषु यथा व्यपदिष्टोक्तेः । वेदां॰ १. ४. १४. । इत्यस्मिन्सूत्रे जगत्कारणे परमात्मनि श्रुतेर्विप्रतिपत्तिर्निराकृता । द्वितीयस्याध्यायस्य प्रथमपादारंभाधिकरणे त्वसद्व्यपदेशान्नेति चेन्न धर्मांतरेण वाक्यशेषात् । वेदां॰ २. १. १७. । इति सूत्रे तैत्तिरीयवाक्यगतस्यासच्छब्दस्य न शून्यपरत्वं किंत्वव्यक्तावस्थापरत्वमिति निर्णीतं । तथा जैमिनिश्चोदनासूत्रे विधिवाक्यं धर्मे प्रमाणमिति प्रतिज्ञायौत्पत्तिकसूत्रे तत्प्रामाण्यं समर्थयामास । पू॰ मी॰ १. १. २–५. । व्यासोऽपि शास्त्रयोनित्वसूत्रे । वेदां॰ १. १. ३. । वेदांतानां ब्रह्मणि प्रामाण्यं प्रतिज्ञाय तत्तु समन्वयात् । वेदां॰ १. १. ४. । इत्यादिसूत्रैः समर्थयामास । तस्मादमीमांसकस्य तव पूर्वोक्तस्थाणुंधन्यायो दुष्परिहारः । अतो विधिभागस्य प्रामाण्यं सुस्थितं ॥

अर्थवादभागस्य प्रामाण्यं महता प्रयत्नेन जैमिनिः समर्थयामास । तत्सूत्राणि व्याख्यास्यंते । पू॰ मी॰ १. २. १–१८. । तत्र पूर्वपक्षं सूत्रयति ॥

आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते इति ॥१॥ आम्नायस्य सर्वस्य क्रियाप्रतिपादनाय प्रवृत्तत्वादक्रियाप्रतिपादकानामर्थवादानां नास्ति कश्चिद्विवक्षितः स्वार्थः । ते चार्थवादा एवमाम्नायंते । सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं । तै॰ सं॰ १. ५. १. १. । स आत्मनो वपामुदखिदत् । तै॰ सं॰ २. १. १. ४. । देवा वै देवयजनमध्यवसाय दिशो न प्राजानन् । तै॰ सं॰ ६. १. ५. १. । इति । यस्मादीदृशस्य वाक्यस्य विवक्षितार्थः कश्चिदपि नास्ति तस्मादिदमनित्यमुच्यते । यद्यप्यनादित्वात्स्वरूपेणानित्यत्वं नास्ति तथापि धर्मावबोधनलक्षणस्य नित्यकार्यस्याभावादनित्यैः काव्यालापैः समानत्वादप्रमाणमित्यर्थः ॥ ननूदाहृतानामर्थवादानामनुष्ठेये धर्मे प्रामाण्याभावेऽपि स्वार्थे प्रामाण्यमस्तु तत्प्रत्यायकत्वेन स्वतः प्रामाण्यस्यापवदितुमशक्यत्वादित्याशंक्यान्येषु केषुचिदर्थवादेषु मानांतरविरोधदर्शनादप्रामाण्ये सति तदृष्टांतेन सर्वेषामप्यर्थवादानामप्रामाण्यमित्यभिप्रेत्य सूत्रयति ॥

शास्त्रदृष्टविरोधाच्चेति ॥२॥ शास्त्रविरोधो दृष्टविरोधः शास्त्रदृष्टविरोध इति त्रिविधो विरोधोऽर्थवादेषूपलभ्यते । तथा हि । स्तेनं मनोऽनृतवादिनी वागित्यत्र श्रूयमाणं मानसं चौर्यं वाचिकमनृतवदनं

च प्रतिषेधशास्त्रेण विरुद्धं। तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिस्तस्मादर्चिरेवाग्नेर्नक्तं ददृशे न धूम इत्यत्र दृष्टविरोधः। तथा न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वेत्यत्रापि प्रत्यक्षविरोधः। को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वा। तै॰ सं॰ ६.१.१.१.। इत्यत्र शास्त्रदृष्टविरोधः। स्वर्गकामो यजेतेत्यादिशास्त्रे ह्यामुष्मिकं फलं दृश्यते। तस्माद्विरोधादर्थवादानामप्रामाण्यं॥ ननु सोऽरोदीदित्यादीनां निष्प्रयोजनत्वात्स्तेनं मन इत्यादीनां च विरोधादप्रामाण्येऽपि फलप्रतिपादकानामर्थवादानां तदुभयवैलक्षण्यादस्तु प्रामाण्यमित्याशंक्योत्तरं सूत्रयति॥

तथा फलाभावादिति॥३॥ यथा मानांतरविरुद्धमर्थवादैरुक्तं तथा फलमप्यविद्यमानमेव तैरुच्यते। तथा हि गर्गत्रिरात्रं प्रकृत्य श्रूयते। शोभतेऽस्य मुखं य एवं वेदेति। दर्शपूर्णमासयोर्वेदाभिमर्शनं प्रकृत्य श्रूयते। आस्य प्रजायां वाजी जायते य एवं वेदेति। न च वयं वेदितॄणां तत्फलमुपलभामहे॥ नन्वैहिकफलवाक्यानां विसंवादादप्रामाण्येऽप्यामुष्मिकफलवाक्यानामस्तु प्रामाण्यमित्याशंक्योत्तरं सूत्रयति॥

अन्यानर्थक्यादिति॥४॥ एवं हि श्रूयते। पूर्णाहुत्या सर्वान्कामानवाप्नोति। पशुबंधयाजी सर्वाँल्लोकानभिजयति। तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदेति। तत्राग्न्याधेयगतया पूर्णाहुत्या सर्वकामप्राप्तेरन्यान्यग्निहोत्रादीन्युत्तरकालीनान्यनर्थकानि स्युः। तथा निरूढपशुबंधानुष्ठानेन सर्वलोकाभिजयाज्ज्योतिष्टोमादीनामानर्थक्यं। अध्ययनकालीनेनैवाश्वमेधवेदनेन ब्रह्महत्यादितरणात्तदनुष्ठानं च व्यर्थं स्यात्। तस्मादामुष्मिकफलवाक्यानामप्यप्रामाण्यं॥ ननु मा भूत्फलवाक्यानां प्रामाण्यं। तथापि निषेधवाक्येषु विरोधानुपलंभादस्तु प्रामाण्यमित्याशंक्योत्तरं सूत्रयति॥

अभागिप्रतिषेधादिति॥५॥ न पृथिव्यामग्निश्चेतव्यो नांतरिक्षे न दिवीत्यत्रांतरिक्षस्य च दिवश्च प्रतिषेधभागित्वं नास्ति तत्र चयनप्रसंगस्यैवाभावात्। मा भूत्तर्हि निषेधानां प्रामाण्यं॥ बबरः प्रावाहणिरकामयतेत्यादीनां पूर्वपुरुषवृत्तांताभिधायिनां विरोधानुपलंभादस्तु प्रामाण्यमित्याशंक्योत्तरं सूत्रयति॥

अनित्यसंयोगादिति॥६॥ बबरादिरूपेणानित्येनार्थेन संयोगे सत्यस्य वाक्यस्य ततः पूर्वमभावात्कालिदासादिवाक्यवत्पौरुषेयत्वं प्रसज्येत। किं बहुना। सर्वथापि नास्त्येवार्थवादानां प्रामाण्यमिति पूर्वः पक्षः॥

सिद्धांतं सूत्रयति॥ विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युरिति॥७॥ तुशब्दोऽर्थवादानामप्रामाण्यं वारयति। वायुर्वै क्षेपिष्ठेत्येवमादीनामर्थवादानां वायव्यं श्वेतमालभेत। तै॰ सं॰ २.१.१.१.। इत्यादिना विधिना सहैकवाक्यत्वादस्ति धर्मे प्रामाण्यं। न च विधिवाक्यस्यार्थवादनैरपेक्ष्येण पदान्वयसंपूर्तेस्तत्रार्थवादानां नास्त्युपयोग इति शंकनीयं। ते ह्यर्थवादाः पुरुषप्रवृत्तिमाकांक्षतां विधीनां स्तुत्यर्थत्वेनोपयुक्ताः स्युः। स्तुत्या च प्रलोभितः पुरुषस्तत्र प्रवर्तते॥ नन्वर्थवादानां प्रमादपठितत्वेनोपेक्षणीयत्वात्किमनेनैकवाक्यताप्रयासेनेत्याशंक्याह॥

तुल्यं च सांप्रदायिकमिति॥८॥ अनध्यायवर्जनादिनियमपुरःसरं गुरुसंप्रदायादध्ययनं यत्तत्सांप्रदायिकं। तच्च विधीनामर्थवादानां समानं। तस्माद्विधिवदेतेषामपि प्रमादपाठो न भवति॥ ननु शास्त्रदृष्टविरोधाच्चेत्येवमर्थवादे[illegible]त्याशंक्याह॥

अप्राप्ता चानुपपत्तिः प्रयोगे हि विरोधः स्याच्छब्दार्थस्त्वप्रयोगभूतस्तस्मादुपपद्येतेति॥९॥ स्तेनं मन इत्यादौ शास्त्रविरोधाद्यनुपपत्तिरप्राप्ता प्रयोगस्यानुक्तत्वात्। प्रयोगे हि स्तेयादीनामुच्यमाने शास्त्रविरोधः स्यात्। न चात्र स्तेयं कर्तव्यमिति प्रयोग उच्यते। किंतु स्तेयशब्दार्थ एवोच्यते। न च शब्दार्थः प्रयोगभूतः। तस्माच्छब्दार्थवचनमात्रेण शास्त्रविरोधाभावादयमर्थवाद उपपन्न एव॥ ननु स्तुत्यर्थेन विधीनां स्युरिति यदुक्तं तदसद्वैयधिकरण्यात्। वेतसशाखया चावकाभिश्च वि कर्षत्यापो वै शांताः। तै॰ सं॰ ५.४.४.३.। इत्यत्र वेतसावके विधीयेते आपश्च स्तूयंत इति वैयधिकरण्यमित्याशंक्याह॥

गुणवादस्त्विति॥१०॥ तुशब्दो वैयधिकरण्यदोषं वारयति। गुणवादो ह्यत्र विवक्षितः। यथा लोके कश्मीराभिजनो देवदत्तः कश्मीरदेशेषु स्तूयमानेषु स्तुतमात्मानं मन्यत एवमत्राप्यग्नौ जाते वेतसावके अप्सु स्तुतासु स्तुते एव भवतः। शांताभ्योऽग्नौ जातत्वाद्वेतसावके स्वयमपि शांते सत्यौ यजमानस्यानिष्टं शमयत इत्येतादृशस्य गुणस्य वादोऽत्राभिप्रेतः। सोऽरोदीदित्यत्रापि रजतस्य पतिताश्रुरूपत्वाद्रजतदाने गृहेऽपि रोदनप्रसंगाद्बर्हिषि रजतं न देयमिति तन्निषेधेन विधेयेनार्थवादस्यैकवाक्यत्वं। तत्र रजतदानाभावे रोदनाभावरूपो गुणोऽत्र विवक्षितः। तेन च गुणेन रजतदाननिवारणरूपो विधिः स्तूयते। यद्यपि रजतस्याश्रुप्रभ-

त्वमत्यंतमसत् तथापि यथोक्तनीत्या विधेः स्तुतिः संपद्यते। यः प्रजाकामः पशुकामः स्यात्स एतं प्राजापत्यमजं तूपरमालभेत। तै॰ सं॰ २.१.१.४.। इत्ययं विधिः प्रजापतिवपोत्खेदेन स्तूयते। यस्मात्प्रजापतिः स्ववपामप्युत्खिद्याग्नौ प्रहृत्य ततो जातं तूपरमजमात्मार्थमालभ्य प्रजाः पशूंश्च लब्धवांस्तस्मात्प्रजादिसंपादकोऽयं तूपर इति तूपरगुणस्य वादोऽत्र विवक्षितः। आदित्यः प्रायणीयश्चरुरित्येष विधिर्दिशो न प्राजानन्नित्यनेन दिग्मोहेन स्तूयते। यदियमदितिर्देवता दिग्मोहमप्यपनीय दिग्विशेषं ज्ञापयति तदा बहुविधकर्मसमुदायरूपे सोमयागेऽनुष्ठानविषयं भ्रममपनयतीति किमु वक्तव्यमित्येवमदितिदेवतागतस्य गुणस्य वादोऽत्र विवक्षितः। स्वकीयवपोत्खेदो देवयजनाध्यवसानमात्रेण दिग्मोहश्चेत्युभयमस्तु वा मा वा। सर्वथापि स्तुतिपरत्वमभ्युपगच्छतामस्माकं न किंचिद्धीयते। शिखा ते वर्धते वत्स गुडूचीं श्रद्धया पिबेत्यादावविद्यमानेनाप्यर्थेन लोके स्तुतिदर्शनात् ॥ अथ पूर्वपक्षिणा शास्त्रविरोधं दर्शयितुं यदुदाहृतं स्तेनं मनोऽनृतवादिनी वागिति तत्रोत्तरं सूचयति ॥

रूपात्प्रायादिति ॥११॥ हिरण्यं हस्ते भवत्यथ गृभ्णातीत्येतं विधिं स्तोतुमयमर्थवाद उच्यते। यथा लोके किमृषिणा देवदत्त एव पूजयितव्य इत्यत्र देवदत्तपूजां स्तोतुमेवौदासीन्यमृषावुपन्यस्यते न तु पूज्यत्वमृषेर्वारयितुं एवमत्रापि हस्ते हिरण्यग्रहणं प्रशंसितुं मनसः स्तेनरूपत्वं वाचोऽनृतवादित्वं चोपन्यस्यते। तत्र गुणवादेन शब्दार्थौ योजनीयः। यथा स्तेनाः प्रच्छन्नरूपा एवं मनोऽपीति प्रच्छन्नरूपत्वमत्र गुणः। प्रायेण वागनृतं वक्तीति प्रायिकत्वं तत्र गुणः। हस्तस्तु न प्रच्छन्नो नाप्यनृतबहुलः। अतो हस्ते हिरण्यधारणं प्रशस्तमिति स्तूयते ॥ यदपि दृष्टविरोधाय धूम एवाग्नेर्दिवा ददृश इत्यादिकमुदाहृतं तत्रोत्तरं सूचयति ॥

दूरभूयस्त्वादिति ॥१२॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति। सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातरित्येतौ विधी स्तोतुं सोऽर्थवादः। यस्मादर्चिर्दिवा न दृश्यते तस्मात्सूर्यमंत्र एव प्रातः प्रयोक्तव्यः। यस्माद्रात्रावर्चिरेव दृश्यते तस्मादग्निमंत्रो रात्रौ प्रयोक्तव्य इत्येवं तयोर्मंत्रयोः स्तुतिः। धूमार्चिषोरदर्शनोपन्यासस्तु दूरभूयस्त्वगुणनिमित्तः। भूयसि हि दूरे पर्वताग्रे वृक्षादयोऽपि न विस्पष्टं दृश्यंते। किंतु तृणसादृश्येन तेषां दर्शनाभास एव। तद्वदत्रापि ॥ यदप्यन्यद्दृष्टविरोधायैवोदाहृतं न चैतद्विद्मो वयं ब्राह्मणा वा स्मोऽब्राह्मणा वेति तत्रोत्तरं सूचयति ॥

स्व्यपराधात्कर्तुश्च पुत्रदर्शनादिति ॥१३॥ प्रवरे प्रव्रियमाणे ब्रूयाद्देवाः पितर इत्यस्य विधेः स्तावकोऽयमर्थवादः। यदि यजमानो देवाः पितर इत्यादिमंत्रेण प्रवरमनुमंत्रयेत्तदानीमब्राह्मणोऽपि ब्राह्मणो भवेदित्यनुमंत्रणस्य स्तुतिः। न चैतद्विद्म इत्येतदज्ञानवचनं दुर्ज्ञानत्वगुणेन तत्र प्रयुज्यते। यत्र स्त्रिया अपराधो भवति तत्र कर्तुरुत्पादयितुर्जारस्यापि पुत्रो दृश्यते। अतः पत्युपपत्योरुभयोः पुत्रदर्शनात्स्वकीयजन्म कीदृशमिति दुर्ज्ञानं। अनेनाभिप्रायेण [illegible] तत्र दृष्टविरोधः। न हि तत्र दृश्यमानं [illegible]तुं न चैतद्विद्म इत्युपन्यस्तं ॥ यदपि शास्त्रीयदर्शनविरोधायोदाहृतं को हि तद्वेद यद्यमुष्मिँल्लोकेऽस्ति वा न वेति तत्रोत्तरं सूचयति ॥

आकालिकेप्सेति ॥१४॥ दिक्ष्वतीकाशान्करोतीति प्राचीनवंशस्य द्वारविधिः। तस्य शेषोऽयं को हि तद्वेदेति। धूमाद्युपद्रवपरिहारेण प्रत्यक्षेण फलेन द्वारविधिः स्तूयते। स्वर्गप्राप्तिरूपं तु फलमाकालिकं। अकाले भवमाकालिकं विप्रकृष्टकालीनं न त्विदानींतनमित्यर्थः। तस्येप्सा प्राप्तुमिच्छा। सा च को हि तद्वेदेत्यनिश्चयोपन्यासे कारणं। यथा भाविकालीनः पौत्रप्रपौत्रादिवृत्तांतो निश्चेतुं न शक्यते तद्वत्स्वर्गप्राप्तिर्भाविकालीनेति गुणयोगादनिश्चयोपन्यासः। धूमादिपरिहारस्तु प्रत्यक्षत्वान्निश्चित इत्यभिप्रायः ॥ [illegible]ायोदाहृतं शोभतेऽस्य मुखं य एवं वेदेति तत्रोत्तरं सूचयति ॥

विद्याप्रशंसेति ॥१५॥ सोऽयं गर्गत्रिरात्रविधेः शेषः। तद्विषयं वेदनमपि मुखशोभाहेतुः किमुतानुष्ठानमिति स्तूयते। यथा कर्णाभरणादिना मुखं शोभितं भवत्येवं वेदितुरुत्साहेनैव विकसितं वदनं शोभितमिव शिष्टैरुद्वीक्ष्यते। अतः शोभासादृश्यगुणयोगात् शोभत इत्युच्यते। यदप्यन्यद्विरोधायोदाहृतमास्य प्रजायां वाजी जायते य एवं वेदेति सोऽपि वे[illegible]ः शेषः। अत्रापि कैमुतिकन्यायेन स्तुतिः पूर्ववद्योजनीया। वेदितुः पुत्रः पितृशिक्षया स्वयमपि विद्वान्भवति। ततः प्रतिग्रहेणान्नं प्राप्नोति। तस्मादीदृशं गुणमभिप्रेत्य वाजी जायत इत्युक्तं ॥ यदप्यन्यानर्थक्यायोदाहृतं पूर्णाहुत्या सर्वान्कामानवाप्नोतीति तत्रोत्तरं सूचयति ॥

[illegible]कारिकमिति ॥१६॥ पूर्णाहुतिं जुहुयादित्यस्य विधेः शेषोऽयं। सर्वकामावाप्तिहेतुत्वात्प्रशस्ति-

यमाहुतिरिति स्तूयते। यथा सर्वे ब्राह्मणा भोजयितव्या इत्यत्र सर्वत्वं स्वगृहागतब्राह्मणविषयं। एवं पूर्णाहुत्या कर्मसांगत्वे यत्फलं तस्मिन्नधिकारे प्रस्तावे संभावितं तद्विषयमेव सर्वत्वं द्रष्टव्यं। पूर्णाहुतेरभावे सत्याधानरूपं कर्मांगविकलं भवति। तच्च वैकल्यं पूर्णाहुत्या समाधीयत इत्येकः कामः। तस्मिन्समाहिते सत्याहवनीयाद्यग्नयोऽग्निहोत्रादिकर्मसु योग्या भवंतीत्ययमन्यः कामः। तैश्च कर्मभिस्तत्फलं प्राप्यत इति कामांतरं। ईदृशी सर्वकामावाप्तिराहुत्यंतरेष्वपि विद्यत इति चेत्। विद्यतां नाम। किं नश्छिन्नं। न खल्वेतावता पूर्णाहुतिस्तुतेः काचिद्धानिरस्ति॥ ननु पूर्णाहुतेरंगभावत्वात्तदीयफलश्रुतेरर्थवादत्वेन स्तावकत्वं भवतु। द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः। पू॰ मी॰ ४. ३. १.। इति सूत्रेण निर्णीतत्वात्। पशुबंधवाक्यस्य तु कर्मविधायकत्वात्सर्वलोकाभिजयस्य मुख्यफलत्वादन्यानर्थक्यं दुर्वारमित्याशंक्योत्तरं सूत्रयति॥

फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः सारतो वा फलविशेषः स्यादिति॥१७॥ पृथिव्यंतरिक्षद्युलोकेष्वन्यतमलोकाभिजयरूपं फलं पशुबंधकर्मणा निष्पाद्यते। तेषां च पृथिव्यादीनां फलानां कर्मांतरेण परिमाणाधिक्यं सारत्वं वा संपद्यते। ततः फलविशेषः स्यादिति नास्त्यानर्थक्यं। लोकवदित्युक्तार्थे दृष्टांतः। यथा लोके निष्केण खारीपरिमितान्व्रीहीन्विक्रीय निष्कांतरेण पुनः क्रये सति परिमाणाधिक्यं भवति। यथा वा निष्केण वस्त्रमात्रं लभ्यते निष्कद्वयेन तु सारभूतं दुकूलं। तथा भोगाधिक्यं भोगसारत्वं वा कर्मांतरेण द्रष्टव्यं। ब्रह्महत्याया अपि मानस्याः स्वल्पाया वेदनमात्रेण तरणं कायिकायास्तु महत्या अश्वमेधेनेति नास्त्यन्यानर्थक्यं॥ योऽपि नांतरिक्षे न दिवीत्यप्रसक्तप्रतिषेध उदाहृतस्तथा बबरः प्रावाहणिरित्यनित्यसंयोग उदाहृतस्तत्रोभयत्रोत्तरं सूत्रयति॥

अंत्ययोर्यथोक्तमिति॥१८॥ अंत्ययोरुदाहरणयोरुत्तरं पूर्वोक्तमेव द्रष्टव्यं। अंतरिक्षादौ च[illegible]ऽर्थवादो हिरण्यं निधाय चेतव्यमित्यस्य विधेः शेषः। अतोऽत्र स्तुत्यर्थेन विधीनां स्यु[illegible]रं। अंतरिक्षे चयनप्रसक्त्यभावात्तन्निंदा नित्यानुवादोऽस्तु। तेनापि विधिः स्तोतुं शक्यते। नित्यसिद्धार्थानुवादिना वायोः क्षेपिष्ठत्वेन पशुविधेः स्तुतत्वात्॥ बबरः प्रावाहणिरकामयतेत्यत्रापि बबरनामकः कश्चिदनित्यः पुरुषो मनुष्यो न विवक्षितः। किंतु बबरध्वनियुक्तः प्रकर्षेण वहनशीलो वायुर्व्यवहारदशायां नित्य एवार्थो विवक्षित इत्येतदुत्तरं प्रथमपादस्यांतिमाधिकरणे प्रोक्तं॥ तस्मात्संभावितदोषाणां परिहृतत्वादर्थवादानामस्ति प्रामाण्यं॥

तत्र संग्रहश्लोकाः। जै॰ न्या॰ १. २. १.॥

वायुर्वा इत्येवमादेरर्थवादस्य मानता। न विधेयेऽस्ति धर्मे किं किं वासौ तत्र विद्यते॥
विध्यर्थवादशब्दानां मिथोऽपेक्षापरिक्षयात्। नास्त्येकवाक्यता धर्मे प्रामाण्यं संभवेत्कुतः॥
विध्यर्थवादौ साकांक्षौ प्राशस्त्यपुरुषार्थयोः। तेनैकवाक्यता तस्माद्वादानां धर्ममानतेति॥

तदेवं वेदे विद्यमानानां त्रयाणां मंत्रविध्यर्थवादभागानामप्रामाण्यकारणाभावाद्बोधकानां तेषां प्रामाण्यस्य स्वतस्त्वांगीकारात्कृत्स्नस्यापि वेदस्य प्रामाण्यं सिद्धं॥

नन्वेवमपि वेदस्य पौरुषेयत्वेन विप्रलंभकवाक्यवदप्रामाण्यं स्यात्। पौरुषेयत्वं च प्रथमपादे पूर्वपक्षत्वेन जैमिनिः सूत्रयामास। पू॰ मी॰ १. १. २७–३२.॥

वेदांश्चैके संनिकर्षं पुरुषाख्येति॥१॥ एके वादिनो वेदान्प्रति संनिकर्षं मन्यंते। कालिदासादिभिर्निर्मितानां रघुवंशादिग्रंथानां समुच्चयार्थश्चकारः। ते ह्यत्र दृष्टांततया समुच्चीयंते। यथा रघुवंशादय इदानींतनास्तथा वेदा अपि। न तु वेदा अनादयः। अत एव वेदकर्तृत्वेन पुरुषा आख्यायंते। वैयासिकं भारतं वाल्मीकीयं रामायणमित्यत्र यथा भारतादिकर्तृत्वेन व्यासादय आख्यायंते तथा काठकं कौथुमं तैत्तिरीयमित्येवं तत्तद्वेदशाखाकर्तृत्वेन कठादीनामाख्यातत्वाद्वेदाः पौरुषेयाः॥ ननु नित्यानामेव सतां वेदानामुपाध्यायवत्संप्रदायप्रवर्तकत्वेन काठकादिसमाख्या स्यादित्याशंक्य युक्त्यंतरं सूत्रयति॥

अनित्यदर्शनाच्चेति॥२॥ अनित्या जननमरणवंतो बबरादयो वेदे श्रूयंते। बबरः प्रावाहणिरकामयत। तै॰ सं॰ ७. १. १०. २.। कुसुरुबिंद औद्दालकिरकामयत। तै॰ सं॰ ७. २. २. १.। इति। तथा सति बबरादिभ्यः पूर्वमभावादनित्या वेदाः। विमतं वेदवाक्यं पौरुषेयवाक्यत्वात्कालिदासादिवाक्यवदित्याद्यनुमानस[illegible]चयार्थश्चकारः॥

सिद्धांतं सूत्रयति॥ उक्तं तु शब्दपूर्वत्वमिति॥३॥ तुशब्दो वे[illegible]त्यत्वं वारयति। शब्दस्य वेदरूपस्य कठादिपुरुषेभ्यः पूर्व[illegible]त्वं प्राचीनैरेव सूत्रैरुक्तं। औत्पत्तिकस्तु शब्दस्यार्थेन संबंधः। पू॰ मी॰ १. १. ५.।

इत्यस्मिन्सूत्र औत्पत्तिकशब्देन सर्वेषां शब्दानां वेदानां तदर्थानां तदुभयसंबंधानां च नित्यत्वं प्रतिज्ञायोत्तराभ्यां शब्दाधिकरणवाक्याधिकरणाभ्यामुपपादितत्वात्का तर्हि काठकाद्याख्याया गतिरित्याशंक्य संप्रदायप्रवर्तनात्सेयमुपपद्यत इत्युत्तरं सूचयति ॥

आख्याप्रवचनादिति ॥ ४ ॥ अस्तियमाख्याया गतिः ॥ ततः परं बबराद्यनित्यदर्शनं यदुक्तं तस्य किमुत्तरमित्याशंक्योत्तरं सूचयति ॥

परं तु श्रुतिसामान्यमात्रमिति ॥ ५ ॥ यत्परं बबरादिकं तच्छब्दसामान्यमेव न तु मनुष्यो बबरनामकोऽत्र विवक्षितः । बबरध्वनियुक्तस्य प्रवहणस्वभावस्य वायोरत्र वक्तुं शक्यत्वात् ॥ ननु वेदे क्वचिदेवं श्रूयते । वनस्पतयः सत्रमासत सर्पाः सत्रमासतेति । तत्र वनस्पतीनामचेतनत्वात्सर्पाणां चेतनत्वेऽपि [illegible] तदनुष्ठानं संभवति । अतो जरद्गवो गायति मद्रकाणीत्याद्युन्मत्तबालवाक्यसदृशत्वात्केनचित्कृतो वेद इत्याशंक्योत्तरं सूचयति ॥

कृते चाविनियोगः स्यात्कर्मणः समत्वादिति ॥ ६ ॥ यदि ज्योतिष्टोमादिवाक्यं केनचित्पुरुषेण क्रियेत तदानीं कृते तस्मिन्वाक्ये स्वर्गसाधनत्वे ज्योतिष्टोमस्य विनियोगो न स्यात् । साध्यसाधनभावस्य पुरुषेण ज्ञातुमशक्यत्वात् । श्रूयते तु विनियोगः । ज्योतिष्टोमेन स्वर्गकामो यजेतेति । न चैतदुन्मत्तवाक्यसदृशं लौकिकविधिवाक्यवद्व्याकरण[illegible]पैस्त्रिभिरंशैरुपेताया भावनाया अवगमात् । लोके हि ब्राह्मणान्भोजयेदिति विधौ किं केन कथमित्याकांक्षायां तृप्तिमुद्दिश्यौदनेन द्रव्येण शाकसूपादिपरिवेषणप्रकारेणेति यथोच्यते तथा ज्योतिष्टोमविधावपि स्वर्गमुद्दिश्य सोमेन द्रव्येण दीक्षणीयाद्यंगोपकारप्रकारेणेत्युक्ते कथमुन्मत्तवाक्यसदृशं भवेत् । वनस्पत्यादिसत्रवाक्यमपि न तत्सदृशं तस्य सत्रकर्मणो ज्योतिष्टोमादिना समत्वात् । यत्परो हि शब्दः स शब्दार्थ इति न्यायविद आहुः । ज्योतिष्टो[illegible] विधायकत्वादनुष्ठाने तात्पर्यं । वन[illegible]वाक्यस्यार्थवादत्वात्प्रशंसायां तात्पर्यं । सा [illegible]विद्यमानेनापि कर्तुं शक्यते । अचेतना अविद्वांसोऽपि सत्रमनुष्ठितवंतः । किं पुनश्चेतना विद्वांसो ब्राह्मणा इति सत्रस्तुतिः । चकारः पूर्वपक्षोक्तस्य वाक्यत्वहेतोः कर्त्रनुपलंभेन पराहतिं समुच्चिनोति ॥ तस्मान्नास्ति वेदस्य पौरुषेयत्वं ॥

अत्रैतौ संग्रहश्लोकौ । जै॰ न्या॰ १. १. ८. ॥

पौरुषेयं न वा वेदवाक्यं स्यात्पौरुषेयता । [illegible]माख्यानाद्वाक्यत्वाच्चान्यवाक्यवत् ॥

समाख्यानं प्रवचनाद्वाक्यत्वं तु पराहतं । तत्कर्त्रनुपलंभेन स्यात्ततोऽपौरुषेयतेति ॥

ननु भगवता बादरायणेन वेदस्य ब्रह्मकार्यत्वं सूचितं । शास्त्रयोनित्वादिति । वेदां॰ १. १. ३. । ऋग्वेदादिशास्त्रकारणत्वाद्ब्रह्म सर्वज्ञमिति सूत्रार्थः । बाढं । नैतावता पौरुषेयत्वं भवति । मनुष्यनिर्मितत्वाभावात् । [illegible]षेयत्वमभिप्रेत्य व्यवहारदशायामाका[illegible] बादरायणेनैव देवताधिकरणे सूचितं । अत एव च नित्यत्वं । वेदां॰ १. ३. २९. । इति । श्रुतिस्मृती चात्र भवतः । वाचा विरूप नित्यया । ऋसं॰ ८. ७५. ६. । इति श्रुतिः । अनादिनिधना नित्या वागुत्सृष्टा स्वयंभुवेति स्मृतिः । तस्मात्कर्तृदोषशंकाया अनुदयान्मंत्रब्राह्मणात्मकस्य वेदस्य निर्विघ्नं प्रामाण्यं सिद्धं ॥

ननु मंत्रब्राह्मणात्मकत्वं वेदस्य न युक्तं । तयोः स्वरूपस्य निर्णेतुमशक्यत्वात् । मैवं । द्वितीयाध्यायस्य प्रथमपादे स[illegible]योरधिकरणयोर्निर्णीतत्वात् । सप्तमादि[illegible]ति । जै॰ न्या॰ २. १. ७. ॥

अहे बुध्निय मंत्रं म इति मंत्रस्य लक्षणं । नास्त्यस्ति वास्य नास्त्येतदव्याप्त्यादेरवारणात् ॥

याज्ञिकानां समाख्यानं लक्षणं दोषवर्जितं । तेऽनुष्ठानस्मारकादौ मंत्रशब्दं प्रयुंजते ॥

आधान इदमाम्नायते । अहे बुध्निय मंत्रं मे गोपाय । तै॰ ब्रा॰ १. २. १. २६. । इति । तत्र मत्रस्य लक्षणं नास्ति । अव्या[illegible]तिव्याप्त्योर्वारयितुमशक्यत्वात् । विहितार्थाभिधायको मंत्र इत्युक्ते वसंताय कपिंजलानालभते । वा॰ सं॰ २४. २०. । इत्यस्य मंत्रस्य विधिरूपत्वादव्याप्तिः । मननहेतुर्मंत्र इत्युक्ते ब्राह्मणेऽतिव्याप्तिः । एवमसिपदांतो मंत्र उत्तमपुरुषांतो मंत्र इत्यादिलक्षणानां परस्परमव्याप्तिरिति चेत् मैवं । याज्ञिकसमाख्यानस्य निर्दोषलक्षणत्वात् । तच्च समाख्यानमनुष्ठानस्मारकादीनां मंत्रत्वं गमयति । उरु प्रथस्वेत्यादयोऽनुष्ठानस्मारकाः । अग्निमीळे पुरोहितमित्यादयः स्तुतिरूपाः । इषे त्वेत्यादयस्त्वांताः । अग्न आ याहि वीतय इत्यादय आमंत्रणोपेताः । अग्नीदग्नीन्विहरेत्यादयः प्रैषरूपाः । अधः स्विदासी३दुपरि स्विदासी३दित्यादयो विचाररूपाः । अंबे अंबाल्यंबिके न मा नयति कश्चन । तै॰ सं॰ ७. ४. १९. १. । इत्यादयः परिदेवनरूपाः । पृच्छामि त्वा

परमंतं पृथिव्याः । तै° सं° ७. ४. १८. २. । इत्यादयः प्रश्नरूपाः । वेदिमाहुः परमंतं पृथिव्याः । तै° सं° ७. ४. १८. २. । इत्यादय उत्तररूपाः । एवमन्यदप्युदाहार्यं । ईदृशेष्वत्यंतविजातीयेषु समाख्यानमंतरेण नान्यः कश्चिदनुगतो धर्मोऽस्ति यस्य लक्षणत्वमुच्येत । लक्षणस्य चोपयोगः पूर्वाचार्यैर्दर्शितः । ऋषयोऽपि पदार्थानां नांतं यांति पृथक्त्वशः । लक्षणेन तु सिद्धानामंतं यांति विपश्चित इति । तस्मादभियुक्तानां मंत्रोऽयमिति समाख्यानं लक्षणं ॥

अष्टमाधिकरणमारचयति । जै° न्या° २. १. ८. ॥

नास्त्येतद्ब्राह्मणेत्यत्र लक्षणं विद्यतेऽथवा । नास्तीयंतो वेदभागा इति क्लृप्तेरभावतः ॥

मंत्रश्च ब्राह्मणं चेति द्वौ भागौ तेन मंत्रतः । अन्यद्ब्राह्मणमित्येतद्भवेद्ब्राह्मणलक्षणं ॥

चातुर्मास्येष्विदमाम्नायते । एतद्ब्राह्मणान्येव पंच हवींषि । तै° ब्रा° १. ७. १. १. । इति । तत्र ब्राह्मणस्य लक्षणं नास्ति । कुतः । वेदभागानामियत्तानवधारणेन ब्राह्मणभागेष्वन्यभागेषु च लक्षणस्याव्याप्त्यतिव्याप्त्योः शोधयितुमशक्यत्वात् । पूर्वोक्तो मंत्रभाग एकः । भागांतराणि च कानिचित्पूर्वैरुदाहर्तुं संगृहीतानि । हेतुर्निर्वचनं निंदा प्रशंसा संशयो विधिः । परक्रिया पुराकल्पो व्यवधारणकल्पनेति । तेन ह्यन्नं क्रियत इति हेतुः । तद्दध्नो दधित्वं । तै° सं° २. ५. ३. ४. । इति निर्वचनं । अमेध्या वै माषाः । तै° सं° ५. १. ८. १. । इति निंदा । वायुर्वै क्षेपिष्ठा देवता । तै° सं° ३. ४. ३. २. । इति प्रशंसा । तद्व्यचिकित्सज्जुहवानी३ मा हौषा३मिति । तै° सं° ६. ५. ९. १. । संशयः । यजमानेन संमितौदुंबरी भवति । तै° सं° ६. २. १०. ३. । इति विधिः । माषानेव मह्यं पचंतीति परकृतिः । पुरा ब्राह्मणा अभैषुरिति पुराकल्पः । यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाश्चतुष्कपालान्निर्वपेदिति । तै° सं° २. ३. १२. १. । विशेषावधारणकल्पना । एवमन्यदप्युदाहार्यं । न च हेत्वादीनामन्यतमं ब्राह्मणमिति लक्षणं । मंत्रेष्वपि हेत्वादिसद्भावात् । इंद्रवो वामुशंति हि । ऋग्वे° १. २. ४. । इति हेतुः । उदानिषुर्महीरिति तस्मादुदकमुच्यते । अथ° ३. १३. ४. । इति निर्वचनं । मोघमन्नं विंदते अप्रचेताः । ऋग्वे° १०. ११७. ६. । इति निंदा । अग्निर्मूर्धा दिवः ककुत् । ऋग्वे° ८. ४४. १६. । इति प्रशंसा । अधः स्विदासी३दुपरि स्विदासी३त् । ऋग्वे° १०. १२९. ५. । इति संशयः । वसंताय कपिंजलानालभत इति विधिः । सहस्रमयुता ददत् । ऋग्वे° ८. २१. १८. । इति परकृतिः । यज्ञेन यज्ञमयजंत देवाः । ऋग्वे° १. १६४. ५०. । इति पुराकल्पः । इतिकरणबहुलं ब्राह्मणमिति चेन्न । इत्यददा इत्ययजथा इत्यपच इति ब्राह्मणो गायेदित्यस्मिन्ब्राह्मणेन गातव्ये मंत्रेऽतिव्याप्तेः । इत्याहेत्यनेन वाक्येनोपनिबद्धं ब्राह्मणमिति चेन्न । राजा चित्रं भगं भक्षीत्याह । ऋग्वे° ७. ४१. २. । यो मायातुं यातुधानेत्याह यो वा रक्षाः शुचिरस्मीत्याह । ऋग्वे° ७. १०४. १६. । इत्यनयोर्मंत्रयोरतिव्याप्तेः । आख्यायिकारूपं ब्राह्मणमिति चेन्न । यमयमीसंवादसूक्तादावतिव्याप्तेः । तस्मान्नास्ति ब्राह्मणस्य लक्षणमिति प्राप्ते ब्रूमः । मंत्रब्राह्मणरूपौ द्वावेव वेदभागावित्यंगीकारान्मंत्रलक्षणस्य पूर्वमभिहितत्वादवशिष्टो वेदभागो ब्राह्मणमित्येतल्लक्षणं भविष्यति ॥ तदेतल्लक्षणद्वयं जैमिनिः सूत्रयामास । तच्चोदकेषु मंत्राख्या । शेषे ब्राह्मणशब्दः । पू° मी° २. १. ३२–३३. । इति । तच्चोदकेषु तदभिधायकेषु वाक्येषु मंत्र इति समाख्या संप्रदायविद्भिर्व्यवह्रियते । मंत्रानधीमह इति । मंत्रव्यतिरिक्तभागे तु ब्राह्मणशब्दस्तैर्व्यवहृत इत्यर्थः ॥

ननु ब्रह्मयज्ञप्रकरणे मंत्रब्राह्मणव्यतिरिक्ता इतिहासादयो भागा आम्नायंते । यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान् गाथा नाराशंसीः । तै° आ° २. ९. । इति । मैवं । विप्रपरिव्राजकन्यायेन ब्राह्मणाद्यवांतरभेदानामेवेतिहासादीनां पृथगभिधानात् । देवासुराः संयत्ता आसन् । तै° सं° ५. ३. ११. १. । इत्यादय इतिहासाः । इदं वा अग्रे नैव किंचनासीत् । तै° ब्रा° २. २. ९. १. । इत्यादिकं जगतः प्रागवस्थामुपक्रम्य सर्गप्रतिपादकं वाक्यजातं पुराणं । कल्पस्त्वारुणकेतुकचयनप्रकरणे समाम्नायते । इति मंत्राः कल्पोऽत ऊर्ध्वं यदि बलिं हरेत् । तै° आ° १. ३१. २. । इति । अग्निचयने यमगाथाभिः परि गायति । तै° सं° ५. १. ८. २. । इति विहिता मंत्रविशेषा गाथाः । मनुष्यवृत्तांतप्रतिपादिका ऋचो नाराशंस्यः । तस्मान्मंत्रब्राह्मणव्यतिरिक्तभागाभावान्मंत्रब्राह्मणस्वरूपस्य [illegible]दुभयात्मकत्वं वेदस्य सुस्थितं ॥

मंत्रावांतरविशेषस्य तस्मिन्नेव पाद इत्थं विचारितः । जै° न्या° २. १. १०. ॥

नर्क्सामयजुषां लक्ष्म सांकर्यादिति शंकिते । पादश्च गीतिः प्रश्लिष्टपाठ इत्यस्त्वसंकरः ॥

इदमाम्नायते । अहे बुध्निय मंत्रं मे गोपाय यमृषयस्त्रैविदा विदुः । ऋचः सामानि यजूंषीति । त्रीन्वेदान्विदंतीति त्रिविदः । त्रिविदां संबंधिनोऽध्येतारस्त्रैविदाः । ते च यं मंत्रभागमृगादिरूपेण त्रिविधमाहुस्तं

गोपायेति योजना। तत्र त्रिविधानामृक्सामयजुषां व्यवस्थितं लक्षणं नास्ति। कुतः। सांकर्यस्य दुष्परिहरत्वात्। अध्यापकप्रसिद्धेर्ऋग्वेदादिषु पठितो मंत्र इति हि लक्षणं वक्तव्यं। तच्च संकीर्णं। देवो वः सवितोत्पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः। तै॰ सं॰ १. १. ५. १.। इत्ययं मंत्रो यजुर्वेदे संप्रतिपन्नो यजुषां मध्ये पठितः। न च तस्य यजुष्ट्वमस्ति तद्ब्राह्मणे सावित्र्यर्चा। तै॰ ब्रा॰ ३. २. ५. ३.। इत्यृत्क्वेन व्यवहृतत्वात्। एतत्साम गायन्नास्ते। तै॰ आ॰ ९. १०. ५.। इति प्रतिज्ञाय किंचित्साम यजुर्वेदे गीतं। अक्षितमस्यच्युतमसि प्राणसंशितमसि। छां॰ उ॰ ३. १७. ६.। इति त्रीणि यजूंषि सामवेदे समाम्नातानि। तथा गीयमानस्य साम्न आश्रयभूता ऋचः सामवेदे समाम्नायंते। तस्मान्नास्ति लक्षणमिति चेन्न। पादादीनामसंकीर्णलक्षणत्वात्। पादेनार्थेन चोपेता वृत्तबद्धा मंत्रा ऋचः। गीतिरूपा मंत्राः सामानि। वृत्तगीतिवर्जितत्वेन प्रश्लिष्टपठिता मंत्रा यजूंषीत्युक्ते न क्वापि संकरः॥ तदेतत्त्रैविध्यं जैमिनिना सूत्रत्रयेण लक्षितं। तेषामृग्यत्रार्थवशेन पादव्यवस्था। गीतिषु सामाख्या। शेषे यजुःशब्दः। पू॰ मी॰ २. १. ३५–३७.। इति। एतमेव मंत्रावांतरविशेषमुपजीव्य वेदानामृग्वेदो यजुर्वेदः सामवेद इति त्रैविध्यं संपन्नं॥

तेषां च वेदानां सर्वेषामन्यतमस्य वा स्वप्रज्ञानुसारेणाध्ययनमुपनीतेन कर्तव्यं। तथा च याज्ञवल्क्यः स्मरति। वेदानधीत्य वेदौ वा वेदं वापि यथाक्रममिति। एकवेदपक्षे पितृपितामहादिपरंपराप्राप्त एव वेदोऽध्येतव्य इत्यभिप्रेत्य स्वाध्यायोऽध्येतव्य इति स्वशब्द आम्नातः। तच्चाध्ययनं न काम्यं किंतु नित्यं। अत एव पुरुषार्थानुशासने सूचितं॥

वेदस्याध्ययनं नित्यमनध्ययने पातादिति॥ पातित्यं चैवमाम्नायते। अपहतपाप्मा स्वाध्यायो देवपवित्रं वा एतत्। तं योऽनूत्सृजत्यभागो वाचि भवत्यभागो नाके। तदेषाभ्युक्ता। यस्तित्याज सखिविदं सखायं न तस्य वाच्यपि भागो अस्ति। यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पंथामिति। तस्मात्स्वाध्यायोऽध्येतव्यः। तै॰ आ॰ २. १५.। इति। अध्येतारं पुरुषं तदीयप्रयासाभिज्ञानेन सखिवत्पालयतीति सखिविद्वेदः। बहुद्रव्यप्रयाससाध्यक्रतुफलस्याध्ययनमात्रेण संपादनं तत्पालनं। तदप्याम्नायते। यं यं क्रतुमधीते तेन तेनास्येष्टं भवत्यग्नेर्वायोरादित्यस्य सायुज्यं गच्छति। तै॰ आ॰ २. १५.। इति। यद्यप्येतद्ब्रह्मयज्ञस्वाध्यायफलं तथापि ग्रहणार्थाध्ययनमंतरेण ब्रह्मयज्ञासंभवात् तदीयफलमपि संपद्यते। ईदृशं सखिविदं वेदरूपं सखायं यः पुमानध्ययनमकृत्वा परित्यजति तस्य वाच्यपि भाग्यं नास्ति। फले भाग्यं नास्तीति किमु वक्तव्यं। सकलदेवतानां धर्मस्य परब्रह्मतत्त्वस्य च प्रतिपादकं वेदमनुच्चार्य परनिंदानृतकलहहेतुं लौकिकीं वार्त्तां सर्वत्रोच्चारयतः स्पष्ट एव वाचि भाग्याभावः। अत एवाम्नायते। नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तदिति। शत॰ ब्रा॰ १४. ७. २. २३.। यद्यप्यसौ काव्यनाटकं शृणोति तथापि निरर्थकमेव तच्छ्रवणं। तेन सुकृतमार्गज्ञानाभावादित्यर्थः। स्मृतिरपि। योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमं। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः। मनु॰ २. १६८.। इति। एवमन्यान्यपि बहूनि वचनान्यत्रोदाहर्तव्यानि॥

नन्वधीते वेदे पश्चादध्ययनविध्यर्थं ज्ञानं। ज्ञाने सति पश्चादध्ययनप्रवृत्तिरित्यन्योन्याश्रय इति चेत् वाढं। अत एव गुरुमतानुसारिण आचार्यकर्तृकाध्यापनेन प्रवृत्तिं माणवकाध्ययनस्य महता प्रयासेन संपादयंति। मतांतरानुसारिणस्तु प्रकाशात्मादयोऽध्ययनात्प्रागेव संध्यावंदनादिविधिज्ञानवत्पित्रादिभ्योऽध्ययनविधिज्ञानं वर्णयंति। यद्यध्यापनविधिप्रयुक्तिर्यदि वा स्वविधिप्रयुक्तिः सर्वथाप्युपनीतैरध्येतव्य एव वेदः॥ तस्य चाध्ययनस्य दृष्टार्थत्वमक्षरग्रहणांतत्वं च पुरुषार्थानुशासने सूचितं। तानि सूत्राणि तद्वृत्तिं चोदाहरामः। अध्ययनस्य दृष्टार्थत्वं साधयितुं पूर्वपक्षयति॥

अदृष्टार्था त्वधीतिर्विहितत्वादिति॥१॥ दृष्टफलसाधने भोजनादौ विध्यदर्शनाद्विहितमध्ययनमदृष्टार्थमवगंतव्यं॥ अदृष्टविशेषो न श्रुत इति चेत्तत्राह॥

घृतकुल्याद्यतिदेशः स्वर्गकल्पनं वेति॥२॥ ब्रह्मयज्ञजपाध्ययनार्थवादं नित्याध्ययनेऽतिदिश्य तत्रत्यं घृतकुल्यादिकं रात्रिसत्रन्यायेन फलत्वेन कल्पनीयं। ये त्वर्थवादातिदेशं नेच्छंति तैर्विश्वजिन्न्यायेन स्वर्गः कल्पनीयः॥ दृष्टफलयोः [illegible]ः संभवे कथमदृष्टकल्पनेत्यत आह॥

अयुक्ते संस्कारप्राप्ती इति॥३॥ संस्कृतस्वाध्यायस्य क्वचित्क्रतौ विनियोगादर्शनात्प्राप्तेः स्वयमपुरुषार्थत्वाच्चेत्यर्थः॥ स्वा[illegible]हेतुतया पुरुषार्थ इत्याशंक्य विषनिर्हरणादिकार्यविनियुक्तमंत्रवदध्ययनांगतया विनियुक्तानां ज्योतिष्टोमादिवाक्यानां न स्वार्थे प्रामाण्यमित्याह॥

अन्यांगं नार्थप्रमापकमिति ॥४॥ अध्ययनविधायकं तु वाक्यं स्वविहिताध्ययनस्यैवांगमिति कृत्वा स्वार्थे प्रमाणमित्याह ॥

अध्ययनवाक्यमनन्यांगमिति ॥५॥ नन्वेवमदृष्टार्थत्वे कर्मकारकभूतस्वाध्यायगतफलाभावादध्येतव्य इति कर्मवाची तव्यप्रत्ययो विरुध्येतेत्यत आह ॥

[illegible] इति ॥६॥ सक्तूञ्जुहोतीत्यत्र कर्मत्वेन प्रधानभूतान्सक्तूनुद्दिश्य होमसंस्कारविधाने प्रतीयमानेऽपि होमसंस्कृतानां भस्मीभूतानां सक्तूनामन्यत्र विनियोगाभावात्कर्मप्राधान्यं हित्वा सक्तुभिर्जुहोतीति करणपरिणामः कृतः। एवमत्रापि कर्मगतयोः संस्कारप्राप्त्योरसंभवात् स्वाध्यायेनाधीयीतेति वाक्यपरिणामः कर्तव्यः ॥ इदानीं दृष्टफले सत्यदृष्टफलं न कल्प्यमिति सिद्धांतयति ॥

दृष्टे तु नादृष्टमिति ॥७॥ किं तद्दृष्टफलमिति तदाह ॥

दृष्टौ प्राप्तिसंस्काराविति ॥८॥ अक्षरप्राप्तेः परंपरया पुरुषार्थत्वमाह ॥

प्राप्त्यार्थबोध इति ॥९॥ जायत इति शेषः ॥ न च भोजनादिवदन्वयव्यतिरेकसिद्धत्वाद्विधिवैयर्थ्यमिति शंकनीयं। अवघातादिवन्नियमादृष्टाय विध्युपपत्तेरित्याह ॥

विधिर्नियत्या इति ॥१०॥ यत्तूक्तं संस्कृतस्य स्वाध्यायस्य विनियोगादर्शनान्न संस्कार इति तत्राह ॥

संस्कारसिद्धिः क्रत्वध्ययनविधिद्वयोपादानादिति ॥११॥ क्रतुविधयो हि विषयावबोधमपेक्षमाणास्तदवबोधे स्वाध्यायं विनियुंजते। अध्ययनविधिश्च लिखितपाठादि व्यावृत्त्याध्ययनसंस्कृतत्वं स्वाध्यायस्य गमयति। अत उभयोपादानात्तत्सिद्धिः ॥ ननु संस्कारो नामादृष्टातिशयः। स च न स्वाध्यायगतः। तव्यप्रत्ययेन स्वपदोपात्तप्रकृत्यर्थभूताध्ययनोपरक्तापूर्वाभिधानात्। ततः कथं स्वाध्यायस्य संस्कृतत्वमिति तत्राह ॥

तव्यः कर्मगादृष्टवाचीति ॥१२॥ अत्र तव्यप्रत्ययस्य कर्माभिधायितया कर्मकारकस्य तव्यप्रत्ययं प्रति प्रकृत्यर्थादध्ययनादपि प्रत्यासन्नत्वात्स्वाध्यायगतमेवापूर्वं तव्यप्रत्ययो वक्ति। अपूर्वस्य धात्वर्थजन्यत्वनियमेऽपि तदुपरक्तत्वानियमादिति भावः॥ यच्चोक्तमन्यांगं नार्थप्रमापकमिति तदसत्। यतो मंत्राणां स्वतंत्रादृष्टशेषाणां तथात्वं युज्यते। इह तु स्वाध्यायाश्रितमदृष्टं। तस्य च स्वाध्यायगताक्षरसामर्थ्यसिद्धार्थावबोधे फले सति फलांतरकल्पनायोगात्प्रामाण्यस्योपबृंहकमेवादृष्टं न तु प्रतिबंधकमित्याह ॥

स्वतंत्रादृष्टाशेषत्वान्न स्वार्थप्रमा प्रतिबध्यत इति ॥१३॥ सक्तुन्यायेन कर्मकारकप्राधान्ये परित्यक्ते स्वतंत्रादृष्टमेवात्रापि स्यादित्यत आह ॥

यथाश्रुतोपपत्तेर्न सक्तुन्याय इति ॥१४॥ सक्तुषु गत्यभावाच्छ्रुतं परित्यज्याश्रुतं कल्प्यतां नाम। नेह तद्युक्तं प्रदर्शितत्वादित्यर्थः ॥

इत्थमध्ययनविधेर्दृष्टार्थत्वं प्रसाध्यार्थावबोधपर्यंततां निराकर्तुं पूर्वपक्षयति ॥

वैधमर्थनिर्णयं भट्टगुरू विधेः पुम[illegible]ति ॥१॥ सर्वत्र विधेः पु[illegible]यत्वनियमादत्रापि पुरुषार्थभूतं फलवदर्थनिश्चयमध्ययनविधिप्रयुक्तं भट्टगुरू मन्येते ॥ ननु सकृदध्ययनादावृ[illegible]यो नोपलभ्यत इत्याशंक्य। तथा सति तत्सिद्धये सोऽध्ययनविधिरर्थनिश्चयहेतुं विचारं कल्पयिष्यतीत्याह ॥

स विचारमाक्षिपेदिति ॥२॥ ननु स्वविधेयतदुपकारिणोरेव विधिः प्रयोजक इति सर्वत्र नियमः। तथा सत्यतादृशं कथमत्राध्ययनविधिराक्षेप्स्यतीत्यत आह ॥

अविधेयानुपकार्याक्षेपोऽवघातावृत्तिवदिति ॥३॥ व्रीहीनवहंतीत्यत्रावघातमात्रं विधेयं न तु तदावृत्तिः। तस्या अधात्वर्थत्वात्। नापि सा विधे[illegible]। अंतरेणावृत्तिं सकृन्मुसलघातमात्रादवघातसिद्धेः। तथापि तंडुलनिष्पा[illegible] स विधिरावृत्तिं यद्वदाक्षिपेत तद्वत्प्रकृतेऽप्यवगंतव्यं ॥ ननु वेदमात्राध्यायिनोऽर्थावबोधानुदयेऽपि व्याकरणाद्यंगसहितवेदाध्यायिनस्तदुदयसद्भावात्तं प्रति व्यर्थं विचारं विधिर्न कल्पयेदित्याशंक्यार्थगतविरोधपरि[illegible] एव विचार इत्याह ॥

सांगाध्ययनात्तद्भावे विचारो विरोधापनुदिति ॥४॥ सिद्धांतयति ॥

प्राप्तेस्तु गवादिवत्पुमर्थत्वाद्विधिस्तदंत इति ॥५॥ यथा फलभूतस्य क्षीरादेर्हेतवो गवादयोऽपि पुरुषैरर्थ्यंते। तथा फलवदर्थावबोधहेतोरक्षरप्राप्तेरपि पुरुषार्थत्वादध्ययनविधिरक्षरप्राप्त्यवसानोऽवगंतव्यः ॥ नन्वक्षरप्राप्तेः पुरुषार्थत्वं फलवदर्थावबोधप्रयुक्तं चेत्तर्हि तद्बोधस्य मुख्यपुरुषार्थत्वाद्बोधांत एव विधिः किं न स्यादित्यत आह ॥

फलवद्बोधांतत्वेऽध्ययनाकात्स्र्यमिति ॥ ६॥ बोधस्य हि फलं कर्मानुष्ठानं। तथा सति यस्य ब्राह्मणादेर्यस्मिन्बृहस्पतिसवादावधिकारस्तस्य तद्वाक्यमात्राध्ययनं स्यात्। न तु राजसूयादिवाक्याध्ययनं। तत्र प्रवृत्त्यादिफलाभावात्। स्वपक्षे तु नायं दोष इत्याह ॥

कृत्स्नप्राप्तिर्जपार्थेति ॥ ७॥ न चाबोधकत्वेऽर्थावबोध एव न सिध्येदिति शंकनीयं। प्रमाणस्य प्रमेयबोधकत्वस्वाभाव्यात्। लौकिकाप्तवाक्यानामंतरेणैव विधिं बोधकत्वदर्शनादित्याह ॥

लोकवन्नैजो बोध इति ॥ ८॥ ननु बोधस्य विधिफलत्वे बोधकाममुद्दिश्य विधातुं शक्यत्वात्सुलभोऽधिकारी स्यादित्याशंक्य प्राप्तिपक्षेऽपि प्राप्तिकाम उपनीताष्टवर्षब्राह्मणोऽत्राधिकारी सुलभ एवेति परिहारं स्पष्टत्वादुपेक्ष्य बोधस्य काम्यत्वं दूषयति ॥

सोऽकाम्यः प्राग्बोध्यभानाभानयोरिति ॥ ९॥ बोध्यस्याग्निहोत्रादिलक्षणवेदार्थस्याध्ययनात्प्राक् संध्योपासनादिवत्पित्राद्युपदेशत एव भाने सिद्धत्वादेव सोऽर्थबोधो न काम्यः। अभाने [illegible]नः। ज्ञात एव विषये कामनानियमात् ॥ ननु सामान्यतो ज्ञाते विशेषतो बुभुत्सा संभवति। यद्वा विशेषतोऽपि पित्राद्युपदेशादवगते सत्यौपदेशिकज्ञानस्य प्रामाण्यनिर्णयाय पुनर्बोधकामना युक्तैवेत्याशंक्यैवमप्यर्थावबोधमुद्दिश्याध्ययनविधानं न संभवतीत्याह ॥

उद्देशायोगादिति ॥ १०॥ अग्निहोत्रादिविशेषज्ञानानां न तावदेकबुद्ध्या विशेषाकारेणोद्देशः संभवति। अनंतत्वात्सामान्याकारेणोद्देशे सामान्यमेव विधिफलं स्यान्न तु ज्ञानविशेषः। ततो नोद्देशो युक्तः ॥ नन्वर्थावबोधमु[illegible]णाभावे वेदस्य स्वार्थे तात्पर्यं न स्यादित्याशंक्योपक्रमादिलिंगगम्यं तात्पर्यं शब्दबलादेव सिध्यतीत्याह ॥

तात्पर्यं शब्दादिति ॥ ११॥ तर्ह्यर्थज्ञानमुद्दिश्य शब्दोच्चारणं लोके व्यर्थं स्यादिति चेन्न। पुरुषसंबंधकृतदोषाख्यप्रतिबंधपरिहारार्थत्वादित्याह ॥

उद्दिश्योच्चारणं दोषघ्नं लोक इति ॥ १२॥ नन्वध्ययनविधेर्बोधांतत्वाभावे विचारशास्त्रं न प्रवर्तेत प्रयोजकाभावादित्याशंक्याह ॥

विचार उत्तरविधिप्रयुक्त उपपद्यत इति ॥ १३॥ क्रतुबोधविधयः सांगवेदाध्ययनादापातप्रतिपन्नाः। विरोधपरिहारेण प्रतिष्ठितं निर्णयज्ञानमंतरेणानुष्ठापयितुमशक्नुवंतस्तन्निर्णयाय क्रतुविचारं प्रयोजयंति। श्रवणविधिस्तु साक्षादेव ब्रह्मविचारं विधत्ते। एवं च सति श्रवणविधेः स्वविधेयप्रयोजकत्वं क्रतुविधीनां च विधेयोपकारिप्रयोजक[illegible]द्यतेतरां। अध्ययनविधिप्रयुक्तिपक्षे तु तद्विधेः क्रतुद्वारा स्वर्गसिद्धिपर्यंतत्वात्क्रत्वनुष्ठानस्यापि तत्प्रयुक्तौ क्रतुविधिवैयर्थ्यमापद्येत ॥ नन्वध्ययनविधेस्त्रैवर्णिकमात्रं प्रति नित्यत्वात्तत्प्रयुक्तौ विचारस्यापि तल्लभ्येत नान्यथेति चेत्। क्रतुविचारस्य त्रैवर्णिकमात्रेऽपि नित्यत्वसिद्धिः किं वा ब्रह्मविचारस्य। तत्राद्योऽस्मन्मतेऽपि सम इत्याह ॥

अतो नित्यः क्रतुविचारस्त्रैवर्णिकमात्रस्येति ॥ १४॥ यतोऽकरणे प्रत्यवायश्रवणात्क्रतवस्त्रैवर्णिकानां नित्या अत इत्यर्थः ॥ द्वितीयोऽनिष्ट इत्याह ॥

ब्रह्मविचारः पुनः परमहंसस्यैवेति ॥ १५॥ नित्य इत्यनुषंग इति ॥

ननूक्तनीत्याध्ययनस्याक्षरग्रहणांतत्वेऽ[illegible]हितं स्यात्। मैवं। वाक्यांतरेण तद्विधानात्। ब्राह्मणेन निष्कारणो धर्मः षडंगो वेदोऽध्येयो ज्ञेयश्चेति तद्विधिः। तत्र निष्कारणशब्देनाध्ययनज्ञानयोः काम्यत्वं निवार्यते। अर्थज्ञाने पु[illegible] वचनद्वयं शाखांतरगतं निरुक्तकारो यास्क एवमुदाजहार। अथापि ज्ञानप्रशंसा भवत्यज्ञाननिंदा च।

स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थं।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥
यद्गृही[illegible]ज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हि चिदिति। नि॰ १. १८. ॥

अस्मिन्मंत्रद्वये योऽर्थज्ञ इत्यनेनैवार्धेन वेदार्थज्ञानं प्रशस्यते। इतरेणार्धत्रयेण ज्ञानराहित्यं निंद्यते। यो वेदार्थं जानाति सोऽयमिह लोके सकलं श्रेयः प्राप्नोति। तथा तेन ज्ञानेन पापक्षये सति मृतः स्वर्गं प्राप्नोति। तदेतदे[illegible] च ज्ञानफलं तैत्तिरीया मंत्रोदाहरणेन तदीयतात्पर्याभिधायिब्राह्मणेन च स्पष्टीचक्रुः।

तदेषाभ्युक्ता। ये अर्वाङुत वा पुराणे वेदं विद्वांसमभितो वदन्त्यादित्यमेव ते परिवदंति। सर्वे अग्निं द्वितीयं तृतीयं च हंसमिति। यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसंति। तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणाति। तै॰ आ॰ २.१५.। इति। वेदं विद्वांसमित्यनेन ज्ञः पुरुषः। स च द्विविधः। अर्वाचीनकाले समुत्पन्नश्चतुर्दशविद्यास्थानकुशलः कश्चिदुपाध्यायः पुरातनकाले समुत्पन्नो व्यासादिश्च। तमेतमुभयविधं विद्वांसं विद्यामदधनमदकुलमदोपेताः पंडितंमन्या ये पुरुषा अभितो विद्यादिषु दूषयंति ते सर्वेऽप्यादित्यमेव प्रथमं सर्वतो दूषयंति। आदित्यापेक्षया द्वितीयमग्निं दूषयंति। तदुभयापेक्षया तृतीयं हंसं दूषयंति। हंति सदा गच्छतीति हंसो वायुः। अग्न्यादिरूपत्वं च वेदविद आम्नातं। अग्नेर्वायोरादित्यस्य सायुज्यं गच्छतीति। न केवलमेतद्देवतात्रयं किंतु सर्वा अपि देवता वेदविदि वसंति। तस्माद्ब्राह्मणान्वेदविदो दृष्ट्वा स्मृत्वा वा प्रतिदिनं नमस्कुर्यान्न तु तस्मिन्विद्यमानमपि दोषं कीर्तयेत्। एवं सति तत्तन्मंत्रार्थभूताः सर्वा अपि देवता वेदार्थविदा स्मर्यमाणतया तदीयहृदयेऽवस्थिता अयं नमस्कर्ता तोषयति। न चैतदध्ययनस्यैव फलमिति शंकनीयं। विद्वांसमित्याम्नातत्वात्। अन्यथा वेदमधीयानमित्याम्नायेत। तस्मात्सर्वदेवताबुद्ध्या प्राणिभिः पूज्यस्य वेदार्थविदो लोकद्वयेऽपि श्रेयःप्राप्तिरुपपद्यते। यस्तु वेदमधीत्याप्यर्थं न विजानाति सोऽयं पुमान्भारमेव हरति धारयति। स्थाणुरिति दृष्टांतः। छिन्नशाखं शुष्कं वृक्षमूलं स्थाणुशब्देनोच्यते। स च यथेंधनार्थमेवोपयुज्यते न तु पुष्पफलार्थं। तथा केवलपाठकस्य व्रात्यत्वं न भवतीत्येतावदेव। न ह्यनुष्ठानं स्वर्गादिफलसिद्धिर्वास्ति। किलेत्यनेन लोकप्रसिद्धिर्द्योत्यते। लोकेऽपि पाठकस्य यावती धनादिपूजा ततोऽप्यधिका विदुषि दृश्यते। किंच यद्वेदवाक्यमाचार्याद्गृहीतमर्थज्ञानरहितं पाठरूपेणैव पुनः पुनरुच्चार्यते तत्कदाचिदपि न ज्वलति स्वार्थं न प्रकाशयति। यथाग्निरहितप्रदेशे प्रक्षिप्तं शुष्ककाष्ठं न ज्वलति तद्वत्। तथा सति तस्य वाक्यस्य वेदत्वमेव मुख्यं न स्यात्। अलौकिकं पुरुषार्थोपायं वेत्त्यनेनेति वेदशब्दनिर्वचनं। तथा चोक्तं। प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते। एतं विदंति वेदेन तस्माद्वेदस्य वेदतेति। अतो मुख्यवेदत्वसिद्धये ज्ञातव्य एव तदर्थः॥ किंचात्र यास्केन काचिदन्याप्यृगुदाहृता। नि॰ १.१९.।

उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनां।
उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासा इति॥

तत्र पूर्वार्धस्य तात्पर्यं स एव दर्शयति। अप्येकः पश्यन्न पश्यति वाचमपि च शृण्वन्न शृणोत्येनामित्यविद्वांसमाहार्धमिति। अस्यायमर्थः। यः पुमानर्थं न वेत्ति तं प्रति पूर्वार्धेन मंत्रो ब्रूते। एकः पुरुषः पाठमात्रपर्यवसितो वेदरूपां वाचं पश्यन्नपि न सम्यक् पश्यति। एकवचनबहुवचनादिविवेकाभावे पाठशुद्धेरपि कर्तुमशक्यत्वात्। वायुमेव स्वेन भागधेयेनोप धावति स एवैनं भूतिं गमयति। तै॰ सं॰ २.१.१.१.। आदित्यानेव स्वेन भागधेयेनोप धावति त एवैनं भूतिं गमयंतीत्यादावव्युत्पन्नः कथं पाठं निश्चिनुयात्। अन्यः कश्चिदर्थज्ञानाय व्याकरणाद्यंगानि शृण्वन्नपि मीमांसाराहित्यादेनां वेदरूपां वाचं न सम्यक् शृणोति। यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाञ्चतुष्कपालान्निर्वपेत्। तै॰ सं॰ २.३.१२.१.। इत्यत्र व्याकरणमात्रेण प्रतिगृहीतुरिष्टिः प्रतीयते। मीमांसायां तु न्यायेन दातुरिति निर्णीतं। पू॰ मी॰ ३.४.३०.। तस्मादुभयविधमप्यविद्वांसं प्रत्येवमाहेति। तृतीयपादतात्पर्यं दर्शयति। अप्येकस्मै तन्वं विसस्र इति स्वमात्मानं विवृणुते ज्ञानं प्रकाशनमर्थस्याहानया वाचेति। अस्यायमर्थः। अपिशब्दपर्याय उतोशब्दः। स च पूर्वोक्तानभिज्ञवैलक्षण्यायात्र प्रयुक्तो निपातानामनेकार्थत्वात्। यः पुमान्व्याकरणाद्यंगैः स्वशब्दार्थं मीमांसया तात्पर्यं च शोधयितुं प्रवृत्तस्तस्मा एकस्मै वेदः स्वकीयां तनुं विसस्रे। स्वमित्यादिकं पदव्याख्यानं। ज्ञानमित्यादिकं तात्पर्यव्याख्यानं। वेदार्थप्रकाशनक्षमं सम्यग्ज्ञानमनया तृतीयपादरूपया वाचा मंत्र आहेति। चतुर्थपादतात्पर्यं दर्शयति। उपमोत्तमया वाचा जायेव पत्ये कामयमाना सुवासा ऋतुकालेषु सुवासाः कल्याणवासाः कामयमाना ऋतुकालेषु यथा स एनां पश्यति स शृणोतीत्यर्थज्ञप्रशंसेति। अस्यायमर्थः। उत्तमया चतुर्थपादरूपया वाचा तृतीयपादार्थस्योपमोच्यते। उशतीत्येतस्य व्याख्यानं कामयमानेति। यद्यपि गृहकृत्यवेलायां मलिनवासास्तथापि संभोगकालेषु कल्याणवासा भवति। तत्र हेतुः। कामयमाना ऋतुकालेष्विति। यथा स पतिरेनां जायां साकल्येनादरयुक्तः पश्यति किंच तयोक्तमर्थं हितबुद्ध्या शृणोति तथायं चतुर्दशविद्यास्थानपरिशीलनोपेतः पुरुषो वेदार्थरहस्यं सम्यक् पश्यति। वेदोक्तं च धर्मब्रह्मरूपमर्थं हितबुद्ध्या स्वीकरोति। सेयमुक्ता वेदार्थाभिज्ञस्य प्रशंसेति॥ पुनरप्यृगंतरं यास्क उदाजहार। तस्योत्तरा भूयसे निर्वचनाय।

उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वंत्यपि वाजिनेषु।
अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पामिति ॥ नि॰ १. २०. ॥

अयमर्थः। पूर्वोदाहृताया उत त्वः पश्यन्नित्यादिकाया ऋचोऽनंतरमेवाम्नाता काचिदृक् तस्य पूर्वोक्तमंत्रार्थस्य भूयसे निर्वचनाय संपद्यते। तमर्थमतिशयेन प्रतिपादयितुं प्रभवति। कथमिति चेत् तदुच्यते। अपि चैकं चतुर्दशविद्यास्थानकुशलं पुरुषं वेदरूपाया वाचः सख्ये स्थित्वा स्थैर्येण वेदोक्तार्थामृतपानयुक्तमाहुः। अभिज्ञाः कथयंति। सखिविदं सखायमिति मंत्रे वेदस्य सखित्वमुदाहृतं। यद्वा। स्वर्गलोके देवानां सख्ये स्थित्वातिशयेन पीतामृतमाहुः। वाचामिना ईश्वराः सभासु प्रगल्भा वा वाजिनाः। तेषु मध्येऽप्येनं वेदार्थकुशलं चोदयितुं न हिन्वंति। न केऽपि प्राप्नुवंति। तेन सह विवदितुमसमर्थत्वात। यस्त्वन्यः पाठमात्रपरः पुष्पफलरहितां वाचं शुश्रुवान्भवति। पूर्वकांडोक्तस्य धर्मस्य ज्ञानं पुष्पं। उत्तरकांडोक्तस्य ब्रह्मणो ज्ञानं फलं। यथा लोके पुष्पं फलस्योत्पादकं तथा वेदानुवचनादिधर्मज्ञानमनुष्ठानद्वारा फलात्मकब्रह्मज्ञानेच्छां जनयति। तमेतं वेदानुवचनेन ब्राह्मणा विविदिषंति यज्ञेन दानेन तपसानाशकेन। बृ॰ उ॰ ४. ४. २२.। इति श्रुतेः। यथा च फलं तृप्तिहेतुस्तथा ब्रह्मज्ञानं कृतकृत्यत्वहेतुः। यत्पूर्णानंदैकबोधस्तद्ब्रह्माहमस्मीति कृतकृत्यो भवतीति श्रुतेः। तादृशपुष्पफलरहितवेदपाठकः स एष पुमानधेन्वा मायया सह चरति। नवप्रसूतिका क्षीरदोग्ध्री गौः प्रीतिहेतुत्वाद्धिनोतीति व्युत्पत्त्या धेनुरित्युच्यते। पाठमात्रपरं प्रति वेदरूपा वाग्धर्मब्रह्मज्ञानरूपं क्षीरं न दोग्धीत्यधेनुः। अत एवासौ माया कपटरूपा। ऐंद्रजालिकनिर्मितगोसदृशरूपत्वात्। तया मायया सह चरन्नयं परमपुरुषार्थं न लभत इत्यर्थः। इत्थं यास्केन ज्ञानस्तुत्यज्ञाननिंदोदाहरणस्य प्रपंचितत्वाद्यच्च सूयते तद्विधीयत इति न्यायेनाध्ययनवदर्थज्ञानस्यापि विधिरभ्युपगंतव्यः॥

किंच नचत्रेष्टिकांडे प्रतीष्टि फलवाक्यं यागतद्वेदनयोः समानमेवाम्नायते। यथा ह वा अग्निर्देवानामन्नाद एवं ह वा एष मनुष्याणां भवति य एतेन हविषा यजते य उ चैनदेवं वेद। तै॰ ब्रा॰ ३. १. ४. १.। इति। अतो यागवत्फलाय स्ववेदनमपि विधीयते। अनेन न्यायेन सर्वेष्वपि ब्राह्मणेषु वेदनविधयो द्रष्टव्याः। ननु विद्याप्रशंसा। पू॰ मी॰ १. २. १५.। इति सूत्रे वेदनफलानां प्रशंसारूपत्वं जैमिनिना सूचितमिति चेत् अस्तु नाम। विद्यमानेनापि फलेन प्रशंसितुं शक्यत्वात्। दर्शयागस्य पूर्णमासयागस्य चातिपाते सति प्रायश्चित्तरूपां वैश्वानरेष्टिं विधातुं विद्यमानेनैव स्वर्गफलेन स्तुतिः क्रियते। सुवर्गाय हि लोकाय दर्शपूर्णमासाविज्येते। तै॰ सं॰ २. २. ५. ४.। इति। एतच्चाचार्यैर्ब्रह्मज्ञानफलवाक्यस्य स्वार्थेऽपि तात्पर्यं दर्शयितुमुदाहृतं। इच्छाम्येवार्थवादत्वं वचसोऽन्यपरत्वतः। यथावस्त्वभिधायित्वान्न त्वभूतार्थवादता॥ इज्येते स्वर्गलोकाय दर्शादर्शौ यथा तथा। न त्वभूतार्थवादत्वं पापश्लोका श्रुतिर्यथेति॥ न च वेदनमात्रेण फलसिद्धावनुष्ठानवैयर्थ्यमिति शंकनीयं। फलभूयस्त्वेन [illegible]। उदाहृतं चात्र जैमिनिसूत्रं। फलस्य कर्मनिष्पत्तेस्तेषां लोकवत्परिमाणतः सारतो वा फलविशेषः स्यात्। पू॰ मी॰ १. २. १७.। इति। एतच्चास्माभिस्तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनमेवं वेदेत्युदाहरणेन व्याख्यातं। छंदोगाश्च केवलादनुष्ठानाद्विद्यासहितेऽनुष्ठाने फलातिशयमामनंति। तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद। नाना तु विद्या चाविद्या च। यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति। छां॰ उ॰ १. १. १०.। यद्यप्यंगावबद्धोपास्तिरत्र विद्याशब्देन विवक्षिता तथापि न्यायः सर्वास्वपि विद्यासु समानः॥

कुतस्तवैतावती वेदने भक्तिरिति चेत्। कुतो वा तवैतावान्प्रद्वेषः। प्रशंसा त्वस्माभिर्भूयसी दर्शिता। निंदां तु न क्वाप्युपलभामहे। किंतु कर्मजन्यमपूर्वं यथा मरणादूर्ध्वं जीवेन सह गच्छति तथा विद्याजन्यमप्यपूर्वं गच्छति। तथा च वाजसनेयिन आमनंति। तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च। शत॰ ब्रा॰ १४. ७. २. ३.। इति। तस्मादध्ययनवदर्थज्ञानस्यापि विहितत्वादर्थज्ञानाय वेदो व्याख्यातव्यः॥

विषयप्रयोजनसंबंधाधिकारिज्ञानमंतरेण श्रोतृप्रवृत्त्यभावाद्विषयादयो निरूप्यंते। व्याख्यानस्य व्याख्येयो वेदो विषयः। तदर्थज्ञानं प्रयोजनं। व्याख्यानव्याख्येयभावः संबंधः। ज्ञानार्थी चाधिकारी। यद्यप्येतावत्प्रसिद्धं तथापि वेदस्य विषयाद्यभावे व्याख्यानस्यापि परमविषयादिकं न स्यात्। अतो वेदस्य चतुष्टयमुच्यते। वेदे पूर्वोत्तरकांडयोः क्रमेण धर्मब्रह्मणी विषयः। तयोरनन्यलभ्यत्वात्। तथा च पुरुषार्थानुशासने सूचितं। धर्मब्रह्मणी वेदैकवेद्ये इति। जैमिनीये च द्वितीयसूत्रे चोदनैव धर्मे प्रमाणं। चोदना प्रमाणमेवेति नियमद्वयं संप्रदायविद्भिरभिहितं। चोदनैवेत्यमुमर्थमुपपादयितुं चतुर्थसूत्रे प्रत्यक्षविषयत्वं धर्मस्य निराकृतं। प्रत्यक्षम-

निमित्तं विद्यमानोपलंभनत्वात् । पू° मी° १. १. ४. । इति । अनुष्ठानादूर्ध्वमुत्पत्स्यमानस्य धर्मस्य पूर्वमविद्यमानत्वान्न प्रत्यक्षयोग्यतास्ति । उत्तरकालेऽपि रूपादिराहित्यान्नेंद्रियैरवगम्यते । अत एवादृष्टमिति सर्वैरभिधीयते । लिंगराहित्यान्नानुमानविषयत्वमप्यस्ति । सुखदुःखे धर्माधर्मयोर्लिंगमिति चेत् बाढं । अयमपि लिंगलिंगिभावो वेदेनैव गम्यते । ततश्चोदनैव धर्मे प्रमाणं ॥ वैयासिकस्य तृतीयसूत्रस्य द्वितीयवर्णके ब्रह्मणः सिद्धवस्तुनोऽपि शास्त्रैकविषयत्वं भाष्यकृद्भिर्व्याख्यातं । शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्राय इति । श्रुतिश्च भवति । नावेदविन्मनुते तं बृहंतमिति । तत्रोपपत्तिः पूर्वाचार्यैरेवमुदीरिता । रूपलिंगादिराहित्यान्न मानांतरयोग्यता । तस्मादनन्यलभ्यत्वादस्ति धर्मब्रह्मणोर्वेदविषयत्वं । तदुभयज्ञानं वेदस्य साक्षात्प्रयोजनं । न च तस्य ज्ञानस्य सप्तद्वीपा वसुमती राजासौ गच्छतीत्यादिज्ञानवदपुरुषार्थपर्यवसायित्वं शंकनीयं । धर्मप्रयुक्तस्य पुरुषार्थस्य स्रूयमानत्वात् । धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पंति धर्मेण पापमपनुदंति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदंति । तै° आ° १०. ६३. ७. । इति । उद्दंडस्य राज्ञो नियामकत्वाद्विवदमानयोः पुरुषयोर्मध्ये दुर्बलस्यापि राजसाहाय्यवज्जयहेतुत्वाच्च धर्मः पुरुषार्थः । तथा च वाजसनेयिनः सृष्टिप्रकरणे समामनंति । तच्छ्रेयो रूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथोऽबलीयान्बलीयांसमाशंसते धर्मेण यथा राज्ञैवं । शत° ब्रा° १४. ४. २. २६. । इति । ब्रह्मविदाप्नोति परं । तै° आ° ८. १. । ब्रह्म वेद ब्रह्मैव भवति । तरति शोकमात्मवित् । छां° उ° ७. १. ३. । इत्यादिश्रुतिषु ब्रह्मज्ञानप्रयुक्तः पुरुषार्थः प्रसिद्धः । तदुभयज्ञानार्थी वेदेऽधिकारी । स च त्रैवर्णिकः पुरुषः । स्त्रीशूद्रयोस्तु सत्यामपि ज्ञानापेक्षायामुपनयनाभावेनाध्ययनराहित्याद्वेदेऽधिकारः प्रतिबद्धः । धर्मब्रह्मज्ञानं तु पुराणादिमुखेनोत्पद्यते । तस्मात्त्रैवर्णिकपुरुषाणां वेदमुखेनार्थज्ञानेऽधिकारः ॥ संबंधस्तु वेदस्य धर्मब्रह्मभ्यां सह प्रतिपाद्यप्रतिपादकभावः । तदीयज्ञानेन सह जन्यजनकभावः । त्रैवर्णिकपुरुषैः सहोपकार्योपकारकभावः । तदेवं विषयाद्यनुबंधचतुष्टयमवगत्य समाहितधियः श्रोतारो वेदव्याख्याने प्रवर्ततां ॥

अतिगंभीरस्य वेदस्यार्थमवबोधयितुं शिक्षादीनि षडंगानि प्रवृत्तानि । अत एव तेषामपरविद्यारूपत्वं मुंडकोपनिषद्याथर्वणिका आमनंति । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदंति परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छंदो ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते । मुं° उ° १. १. ४. । इति । साधनभूतधर्मज्ञानहेतुत्वात्षडंगसहितानां कर्मकांडानामपरविद्यात्वं । परमपुरुषार्थभूतब्रह्मज्ञानहेतुत्वादुपनिषदां परविद्यात्वं ॥

वर्णस्वराद्युच्चारणप्रकारो यत्रोपदिश्यते सा शिक्षा । तथा च तैत्तिरीया उपनिषदारंभे समामनंति । शीक्षां व्याख्यास्यामः । वर्णः स्वरो मात्रा बलं साम संतान इत्युक्तः शीक्षाध्यायः । तै° आ° ७. २. । इति ॥ वर्णोऽकारादिः ॥ स चांगभूतशिक्षाग्रंथे स्पष्टमुदीरितः । त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः संभवतो मताः । प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयंभुवा । शि° ३. । इत्यादिना ॥ स्वर उदात्तादिः ॥ सोऽपि तत्रोक्तः । उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः । शि° ११. । इति ॥ मात्रा ह्रस्वादिः ॥ सापि तत्रोक्ता । ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि । शि° ११. । इति ॥ बलं स्थानप्रयत्नौ ॥ तत्राष्टौ स्थानानि वर्णानां । शि° १३. । इत्यादिना स्थानमुक्तं । अचोऽस्पृष्टा यणस्त्वीषदित्यादिना । शि° ३८. । प्रयत्न उक्तः ॥ सामशब्देन साम्यमुक्तं ॥ अतिद्रुतातिविलंबितगीत्यादिदोषराहित्येन माधुर्यादिगुणयुक्तोच्चारणं साम्यं । गीती शीघ्री शिरःकंपीत्यादिना । शि° ३२. । उपांशु दष्टं त्वरितमित्यादिना च । शि° ३५. । दोषा उक्ताः । माधुर्यमक्षरव्यक्तिरित्यादिना । शि° ३३. । गुणा उक्ताः ॥ संतानः संहिता ॥ वायवा याहीत्यत्रावादेशः । इंद्राग्नी आ गतमित्यत्र प्रकृतिभावः । एतच्च व्याकरणेऽभिहितत्वाच्छिक्षायामुपेक्षितं । शिक्ष्यमाणवर्णादिवैकल्ये बाधस्तत्रोदाहृतः । मंत्रो हीनः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेंद्रशत्रुः स्वरतोऽपराधात् । शि° ५२. । इति । इंद्रशत्रुर्वर्धस्व । तै° सं° २. ४. १२. १. । इत्यस्मिन्मंत्र इंद्रस्य शत्रुर्घातक इत्यस्मिन्विवक्षितेऽर्थे तत्पुरुषसमासे समासस्य । पा° ६. १. २२३. । इति सूत्रेण तत्पुरुषत्वादंतोदात्तेन भवितव्यं । आद्युदात्तस्तु प्रयुक्तः । तथा सति पूर्वपदप्रकृतिस्वरत्वेन बहुव्रीहित्वादिंद्रो घातको यस्येत्यर्थः संपन्नः । तस्मात्स्वरवर्णाद्यपराधपरिहाराय शिक्षाग्रंथोऽपेक्षितः ॥

कल्पस्त्वाश्वलायनापस्तंबबोधायनादिसूत्रं । कल्प्यते समर्थ्यते यागप्रयोगोऽत्रेति व्युत्पत्तेः । नन्वाश्वलायनः किं मंत्रकांडमनुसृत्य प्रवृत्तः किं वा ब्राह्मणमनुसृत्य । नाद्यः । दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः । आ° १. १. ३. ।

इत्येवं तेनोपक्रांतत्वात्। न ह्यग्निमीळे इत्यादयो मंत्रा दर्शपूर्णमासयोः क्वचिद्विनियुक्ताः। न द्वितीयः। आग्नावैष्णवं पुरोडाशं निर्वपंति दीक्षणीयमेकादशकपालं।ऐ॰ ब्रा॰ १. १.। इत्येवं दीक्षणीयेष्टेर्ब्राह्मणे प्रक्रांतत्वात्। अत्रोच्यते। मंत्रकांडो ब्रह्मयज्ञादिजपक्रमेण प्रवृत्तो न तु यागानुष्ठानक्रमेण। ब्रह्मयज्ञश्चैवं विहितः। यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः।तै॰ आ॰ २. १०. ६.। इति। सोऽयं ब्रह्मयज्ञजपोऽग्निमीळे इत्याम्नायक्रमेणैवानुष्ठेयः। तथा सर्वा ऋचः सर्वाणि यजूंषि सर्वाणि सामानि वाचः स्तोमे पारिप्लवं शंसतीति विधास्यते। तथाश्विने शस्यमाने सूर्यो नोदियादपि सर्वा दाशतयीरनुब्रूयादिति विधीयते। तथा रिच्यत इव वा एष प्रेव रिच्यते यो याजयति प्रति वा गृह्णाति याजयित्वा प्रतिगृह्य वानश्नन् त्रिः स्वाध्यायं वेदमधीयीत।तै॰ आ॰ २. १६.। इति प्रायश्चित्तरूपं वेदपारायणं विहितं। इत्यादिषु कृत्स्नमंत्रकांडविनियोगेषु संप्रदायपारंपर्यागत एव क्रम आदरणीयः। विशेषविनियोगांस्तु मंत्रविशेषाणां श्रुतिलिंगवाक्यादिप्रमाणान्युपजीव्याश्वलायनो दर्शयति। अतो मंत्रकांडक्रमाभावेऽपि न कश्चिद्विरोधः। इषे त्वेत्यादिमंत्रास्तु क्रत्वनुष्ठानक्रमेणैवाम्नाता इत्यापस्तंबादयस्तेनैव क्रमेण सूत्रनिर्माणे प्रवृत्ताः। आम्नातत्वादेव जपादिष्वपि स एव क्रमः। यद्यपि ब्राह्मणे दीक्षणीयेष्टिरुपक्रांता तथापि तस्या इष्टेर्दर्शपूर्णमासविकृतित्वेन तदपेक्षत्वादाश्वलायनस्यादौ तद्व्याख्यानं युक्तं। अतः कल्पसूत्रं मंत्रविनियोगेन क्रत्वनुष्ठानमुपदिश्योपकरोति। तर्हि प्र वो वाजा इत्यादीनां सामिधेनीनामृचामेव विनियोगमाश्वलायनो ब्रवीतु। नमः प्रवक्त्र इत्यादयस्त्वनाम्नाताः।आ॰ १. २.। कुतो विनियुज्यंत इति चेत् नायं दोषः। शाखांतरसमाम्नातानां ब्राह्मणांतरसिद्धस्य विनियोगस्य गुणोपसंहारन्यायेनात्र वक्तव्यत्वात्। सर्वशाखाप्रत्ययमेकं कर्मेति न्यायविदः। तस्माच्छिक्षेव कल्पोऽप्यपेक्षितः॥

व्याकरणमपि प्रकृतिप्रत्ययाद्युपदेशेन पदस्वरूपतदर्थनिश्चयायोपयुज्यते। तथा चैंद्रवायवग्रहब्राह्मणे समाम्नायते। वाग्वै पराच्यव्याकृतावदत्ते देवा इंद्रमब्रुवन्निमां नो वाचं व्याकुर्विति। सोऽब्रवीद्वरं वृणै मह्यं चैवैष वायवे च सह गृह्याता इति तस्मादैंद्रवायवः सह गृह्यते। तामिंद्रो मध्यतोऽवक्रम्य व्याकरोत्। तस्मादियं व्याकृता वागुद्यते।तै॰ सं॰ ६. ४. ७. ३.। इति। अग्निमीळे पुरोहितमित्यादिवाक् पूर्वस्मिन्काले पराची समुद्रादिध्वनिवदेकात्मिका सती अव्याकृता प्रकृतिः प्रत्ययः पदं वाक्यमित्यादिविभागकारिग्रंथरहितासीत्। तदानीं देवैः प्रार्थित इंद्र एकस्मिन्नेव पात्रे वायोः स्वस्य च सोमरसग्रहणरूपेण वरेण तुष्टस्तामखंडां वाचं मध्ये विच्छिद्य प्रकृतिप्रत्ययादिविभागं सर्वत्राकरोत्। तस्मादियं वागिदानीमपि पाणिन्यादिमहर्षिभिर्व्याकृता सर्वैः पठ्यत इत्यर्थः। तस्यैतस्य व्याकरणस्य प्रयोजनविशेषो वररुचिना वार्त्तिके दर्शितः। रक्षोहागमलघ्वसंदेहाः प्रयोजनमिति। एतानि रक्षादिप्रयोजनानि प्रयोजनांतराणि च महाभाष्ये पतंजलिना स्पष्टीकृतानि॥ रक्षार्थं वेदानामध्येयं व्याकरणं। लोपागमवर्णविकारज्ञो हि सम्यग्वेदान्परिपालयिष्यति वेदार्थं चाध्यवस्यति॥ ऊहः खल्वपि। न सर्वैर्लिंगैर्न सर्वाभिर्विभक्तिभिर्वेदे मंत्रा निगदिताः। ते चावश्यं यज्ञगतेन यथायथं विपरिणमयितव्याः। तान्नावैयाकरणः शक्नोति विपरिणमयितुं। तस्मादध्येयं व्याकरणं॥ आगमः खल्वपि। ब्राह्मणेन निष्कारणो धर्मः षडंगो वेदोऽध्येयो ज्ञेयश्चेति। प्रधानं च षट्स्वंगेषु व्याकरणं। प्रधाने च कृतो यत्नः फलवान्भवति॥ लघ्वर्थं चाध्येयं व्याकरणं। बृहस्पतिरिंद्राय दिव्यं वर्षसहस्रं प्रतिपदोक्तानां शब्दानां शब्दपारायणं प्रोवाच नांतं जगाम। बृहस्पतिश्च वक्ता। इंद्रश्चाध्येता। दिव्यं वर्षसहस्रमध्ययनकालः। अंतं च न जगाम। अद्य तु पुनर्यदि परमायुर्भवति स वर्षशतं जीवति। तत्र कुतः प्रतिपदपाठेन सकलपदावगमः। कुतस्तरां प्रयोगेण॥ असंदेहार्थं चाध्येयं व्याकरणं। याज्ञिकाः पठंति। स्थूलपृषतीमाग्निवारुणीमनड्वाहीमालभेतेति। तत्र न ज्ञायते किं स्थूलानि पृषंति यस्याः सा स्थूलपृषती किंवा स्थूला चासौ पृषती च स्थूलपृषतीति। तां नावैयाकरणः स्वरतोऽध्यवस्यति। यदि समासांतोदात्तत्वं तदा कर्मधारयः। अथ पूर्वपदप्रकृतिस्वरत्वं। ततो बहुव्रीहिरिति॥ इमानि च भूयः शब्दानुशासनस्य प्रयोजनानि। तेऽसुराः। दुष्टः शब्दः। यदधीतं। यस्तु प्रयुंक्ते। अविद्वांसः। विभक्तिं कुर्वंति। यो वा इमां। चत्वारि। उत त्वः। सक्तुमिव। सारस्वतीं। दशम्यां पुत्रस्य। सुदेवो असि वरुणेति॥ तेऽसुराः। तेऽसुरा हेऽलयो हेऽलय इति कुर्वंतः पराबभूवुः। तस्माद्ब्राह्मणेन न म्लेच्छितवै नापभाषितवै। म्लेच्छो ह वा एष यदपशब्दः। म्लेच्छा मा भूमेत्यध्येयं व्याकरणं॥ दुष्टः शब्दः। दुष्टः शब्दः स्वरतो वर्णतो वा मिथ्या प्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेंद्रशत्रुः स्वरतोऽपराधादिति। दुष्टाञ्छब्दान्मा प्रयुक्ष्महीत्यध्येयं व्याकरणं॥ यदधीतं। यदधीतमविज्ञातं निगदेनैव शब्द्यते। अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्। अविज्ञातमनर्थकं माधिगीष्म-

हीत्यध्येयं व्याकरणं ॥ यस्तु प्रयुंक्ते । यस्तु प्रयुंक्ते कुशलो विशेषे शब्दान्यथावद्व्यवहारकाले । सोऽनंतमाप्नोति जयं परत्र वाग्योगविद्दुष्यति चापशब्दैः ॥ कः । वाग्योगविदेव । यो हि शब्दाञ्जानाति अपशब्दानप्यसौ जानाति । यथैव शब्दज्ञाने धर्म [illegible]मपशब्दज्ञानेऽप्यधर्मः प्राप्नोति । अथवा भूयानधर्मः प्राप्नोति । भूयांसो ह्यपशब्दा अल्पीयांसः शब्दाः । एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः । यथा गौरित्येतस्य शब्दस्य गावी गोणी गोपोतलिकेत्येवमादयः । अथ योऽवाग्योगविदज्ञानं तस्य शरणं । विषम उपन्यासः । नात्यंतायाज्ञानं शरणं भवितुमर्हति । यो ह्यजानन्वै ब्राह्मणं हन्यात्सुरां वा पिबेत्सोऽपि मन्ये पतितः स्यात् । एवं तर्हि कः । अवाग्योगविदेव । अथ यो वाग्योगविज्ज्ञानं तस्य शरणं ॥ अविद्वांसः । अविद्वांसः प्रत्यभिवादे नाम्नो ये न प्लुतिं विदुः । कामं तेषु तु विप्रोष्य स्त्रीष्विवायमहं वदेदिति । स्त्रीवन्मा भूमेत्यध्येयं व्याकरणं ॥ विभक्तिं कुर्वंति । विभक्तिं कुर्वंति । याज्ञिकाः पठंति । प्रयाजाः सविभक्तिकाः कर्तव्या इति । न चांतरेण व्याकरणं प्रयाजाः सविभक्तिकाः शक्याः कर्तुं । तस्मादध्येयं व्याकरणं ॥ यो वा इमां । यो वा इमां पदशः स्वरशोऽक्षरशो वर्णशो वाचं विदधाति स आर्त्विजीनो भवति । आर्त्विजीनाः स्यामेत्यध्येयं व्याकरणं ॥ चत्वारि । चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आ विवेश । ऋक्सं० ४. ५८. ३. । इति । चत्वारि शृंगा चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । त्रयो अस्य पादाः त्रयः काला भूतभविष्यद्वर्तमानाः । द्वे शीर्षे सुपस्तिङश्च । सप्त हस्तासो अस्य सप्त विभक्तयः । त्रिधा बद्धः त्रिषु स्थानेषु बद्ध उरसि कंठे शिरसि च । वृषभो वर्षणात्कामानां । रोरवीति । रौतिः शब्दकर्मा । महो देवो मर्त्यां आ विवेश । महता देवेन नस्तादात्म्यं यथा स्यादित्यध्येयं व्याकरणं ॥ अथवा चत्वारि । चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः । गुहा त्रीणि निहिता नेंगयंति तुरीयं वाचो मनुष्या वदंति । ऋक्सं० १. १६४. ४५. । ये मनीषिणः । मनस ईषिणो मनीषिणः । गुहायां त्रीणि निहितानि नेंगयंति । न चेष्टंते । न निमिषंति । तुरीयं वाचो मनुष्या वदंति । तुरीयं ह वा एतद्वाचो यन्मनुष्येषु वर्तते ॥ उत त्वः । उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनां । उतो त्वस्मै तन्वं वि सस्रे जायेव पत्य उशती सुवासाः । ऋक्सं० १०. ७१. ४. ॥ अपि खल्वेकः पश्यन्नपि न पश्यति । अपि खल्वेकः शृण्वन्नपि न शृणोत्येनां । अविद्वांसमाहार्धं । त्वस्मै अन्यस्मै तन्वं विसस्रे । तनुं विवृणुते । जायेव पत्य उशती सुवासाः । यथा जाया पत्ये कामयमाना सुवासाः स्वमात्मानं विवृणुत एवं वाग्वाग्विदे स्वमात्मानं विवृणुते । वाङ्नो विवृणुयादित्यध्येयं व्याकरणं ॥ सक्तुमिव । सक्तुमिव तितउना पुनंतो यत्र धीरा मनसा वाचमक्रत । अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधि वाचि । ऋक्सं० १०. ७१. २. ॥ सक्तुः सचतेर्दुर्धावो भवति । कसतेर्वा स्याद्विपरीतस्य विकसितो भवति । तितउ परिपवनं भवति ततवद्वा तुन्नवद्वा । धीरा ध्यानवंतो मनसा प्रज्ञानेन वाचमक्रत । वाचमकृषत । अत्रा सखायः सख्यानि जानते । अत्र सखायः सख्यानि संजानते । सायुज्यानि जानते । क एष दुर्गो मार्ग एकगम्यः । वाग्विषयः । के पुनस्ते । वैयाकरणाः । कुत एतत् । भद्रैषां लक्ष्मीर्निहिताधि वाचि । एषां वाचि भद्रा लक्ष्मीर्निहिता भवति । लक्ष्मीर्[illegible]वृद्धा भवति ॥ सारस्वतीं । याज्ञिकाः पठंति । आहिताग्निरपशब्दं प्रयुंजानः प्रायश्चित्तीयां सारस्वतीमिष्टिं निर्वपेदिति । प्रायश्चित्तीया मा भूमेत्यध्येयं व्याकरणं ॥ दशम्यां पुत्रस्य । दशम्यां पुत्रस्य जातस्य नाम विदध्याद्घोषवदाद्यंतरंतस्थमभिनिष्ठानांतं द्व्यक्षरं चतुरक्षरं वा कृतं नाम कुर्यान्न तद्धितमिति । न चांतरेण व्याकरणं कृतस्तद्धिता वा शक्या विज्ञातुं । तस्मादध्येयं व्याकरणं ॥ सुदेवो असि । सुदेवो असि वरुण यस्य ते सप्त सिंधवः । अनुक्षरंति काकुदं सूर्म्यं सुषिरामिव । ऋक्सं० ८. ६९. १२. ॥ सप्त सिंधवः सप्त विभक्तयः । काकुज्जिह्वा । सास्मिन्नुद्यत इति काकुदं तालु । सूर्मिः स्थूला लोहप्रतिमेति ॥ एवं सिद्धे शब्दार्थसंबंध [illegible]वार्त्तिकोक्तान्यत्रापि प्रयोजनान्यनुसंधेयानि ॥

अथ निरुक्तप्रयोजनमु[illegible]ते । अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तं । गौः ग्मा ज्मा क्ष्मा क्षा क्षमेत्यारभ्य वसवः वाजिनः देवपत्न्यो देवपत्न्य इत्यंतो यः पदानां समाम्नायः समाम्नातस्तस्मिन्ग्रंथे पदार्थावबोधाय परापेक्षा न विद्यते । एतावंति पृथिवीनामान्येतावं[illegible] हि[illegible] तत्र तत्र विस्पष्टमभिहितत्वात् । तदेतन्निरुक्तं त्रिकांडं । तथा[illegible]ष्ये दर्शितं ॥

आद्यं नैघंटुकं कांडं द्वितीयं नैगमं तथा । तृतीयं दैवतं चेति समाम्नायस्त्रिधा स्थितः ॥
गौ[illegible]तमाद्यं नैघंटुकं मतं । जहाद्युल्बमृबीसांतं नैगमं संप्रचक्षते ॥
अग्न्यादिर्देवपत्न्यंतं देवताकांडमुच्यते । अग्न्यादिदेवीऊर्जाहुत्यंतः त्रितिमतो मतः ॥

वाय्वादयो भगांताः स्थुरंतरिक्षस्थदेवताः । सूर्यादिदेवपत्न्यंता द्युस्थाना देवता इति ॥
गवादिदेवपत्न्यंतं समाम्नायमधीयत इति ॥

एकार्थवाचिनां पर्यायशब्दानां संघो यत्र प्रायेणोपदिश्यते तत्र निघंटुशब्दः प्रसिद्धः । तादृशेष्वमरसिंहवैजयंतीहलायुधादिषु दश निघंटव इति व्यवहारात् । एवमत्रापि पर्यायशब्दसंघोपदेशादाद्यकांडस्य नैघंटुकत्वं । तस्मिन्कांडे त्रयोऽध्यायाः । तेषु प्रथमे पृथिव्यादिलोकदिक्कालादि[illegible] नामानि । द्वितीये मनुष्यतदवयवादिद्रव्यविषयाणि । तृतीये तदुभयद्रव्यगततनुत्वऋजुत्वह्रस्वत्वादिधर्मविषयाणि ॥ निगमशब्दो वेदवाची । यास्केन तत्र तत्रापि निगमो भवतीत्येवं वेदवाक्यानामवतारितत्वात्तस्मिन्निगम एव प्रायेण वर्तमानानां शब्दानां चतुर्थाध्यायरूपे द्वितीयस्मिन्कांड उपदिष्टत्वात्तस्य कांडस्य नैगमत्वं ॥ पंचमाध्यायरूपस्य तृतीयकांडस्य दैवत्वं विस्पष्टं ॥ पंचाध्यायरूपकांडत्रयात्मक एतस्मिन्ग्रंथे परनिरपेक्षतया पदार्थस्योक्तत्वात्तस्य ग्रंथस्य निरुक्तत्वं । तद्व्याख्यानं च समाम्नायः समाम्नात इत्यारभ्य तस्यास्तस्यास्ताद्भाव्यमनुभवत्यनुभवतीत्यंतैर्द्वादशभिरध्यायैर्यास्को निर्ममे । तदपि निरुक्तमित्युच्यते । एकैकस्य पदस्य संभाविता अवयवार्थास्तत्र निःशेषेणोच्यंत इति व्युत्पत्तेः । तत्र हि चत्वारि पदजातानि नामाख्याते चोपसर्गनिपाताश्चेति प्रतिज्ञायोच्चावचेष्वर्थेषु निपतंतीति निपातस्वरूपं निरुच्यैवमु[illegible]ं । नेति प्रतिषेधार्थीयो भाषायामुभयमन्वध्यायं नेंद्रं देवममंसतेति प्रतिषेधार्थीय इति । दुर्मदासो न [illegible]रायामित्युपमार्थीय इति च । नि॰ १. ४. । तत्र लोके केवलप्रतिषेधार्थीयस्यापि नकारस्य वेदे प्रतिषेधोपमालक्षणोभयार्थोदाहरणमस्मिन्ग्रंथेऽवगम्यते । एवं ग्रंथकारेणोक्तास्तत्तत्पदनिर्वचनविशेषास्तत्तन्मंत्रव्याख्यानावसर एवास्माभिरुदाहरिष्यंते । न च निर्वचनानां निर्मूलत्वं शंकनीयं । एतद्व्युत्पत्त्यर्थमेव ब्राह्मणेषु पदनिर्वचनानां केषांचिदुक्तत्वात् । तदाकृतीनामाकृतित्वमिति । तमिदंद्रं संतमिंद्र इत्याचक्षते । ऐ॰ आ॰ २. ४. ३. । इति । यदप्रथयत्तत्पृथिव्यै पृथिवित्वं । तै॰ ब्रा॰ १. १. ३. ७. । इति च । ग्रंथकारोऽपि तत्र तत्र स्वोक्तनिर्वचनमूल[illegible]ति । केषांचिन्निर्वचनानां व्याकरणबलेन सिद्धावपि न सर्वेषां सिद्धिरस्ति । अत एव ग्रंथकार आह । तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकं च । नि॰ १. १५. । इति । तस्माद्वेदार्थावबोधायोपयुक्तं निरुक्तं ॥

तथा छंदोग्रंथोऽप्युपयुज्यते । छंद[illegible] तत्र तत्र विहितत्वात् । तस्मात्सप्त च[illegible] छंदांसि प्रातरनुवाकेऽनूच्यंत इति ह्याम्नातं । गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगतीत्येतानि सप्त छंदांसि । चतुर्विंशत्यक्षरा गायत्री । ततोऽपि चतुर्भिरक्षरैरधिकाष्टाविंशत्यक्षरोष्णिक् । एवमु[illegible]का अनुष्टुबादयोऽवगंतव्याः । तथान्यत्रापि श्रूयते । गायत्रीभिर्ब्राह्मणस्याद्ध्यात् त्रिष्टुब्भी राजन्यस्य जगतीभिर्वैश्यस्येति । तत्र मगणयगणादिसाध्यो गायत्र्यादिविवेकश्छंदोग्रंथमंतरेण न सुविज्ञेयः । किंच । यो ह वा अविदितार्षेय[illegible]ण मंत्रेण याजयति वाध्यापयति वा स्थाणुं वर्च्छति गर्तं वापद्यते प्र वा मीयते पापीयान्भवति । तस्मादेतानि मंत्रे मंत्रे विद्यादिति श्रूयते । तस्मात्तद्वेदनाय छंदोग्रंथ उपयुज्यते ॥

ज्योतिषस्य प्रयोजनं तस्मिन्नेव ग्रंथेऽभिहितं । [illegible]कालार्थसिद्धय इति । कालविशेषविधयश्च श्रूयंते । संवत्सरमेतद्व्रतं चरेत्संवत्सरमुख्यं भृत्वेत्येवमादयः संवत्सरविधयः । वसंते ब्राह्मणोऽग्निमादधीत । ग्रीष्मे राजन्य आदधीत । शरदि वैश्य आदधीतेत्याद्या ऋतुविधयः । मासि मासि पृष्ठान्युपयंति । मासि मास्यतिग्राह्या गृह्यंत इत्याद्या मासविधयः । यं कामयेत वसीयान्स्यादिति तं पूर्वपक्षे याजयेदित्याद्याः पक्षविधयः । एकाष्टकायां दीक्षेरन् फल्गुनीपूर्णमासे दीक्षेरन् । तै॰ सं॰ ७. ४. ८. १. । [illegible]तिथिविधयः । प्रातर्जुहोति सायं जुहोतीत्याद्याः प्रातःकालादिविधयः । कृत्तिकास्वग्निमादधीत । तै॰ ब्रा॰ १. १. २. १. । इत्याद्या नक्षत्रविधयः । अतः कालविशेषानवगमयितुं ज्योतिषमुपयुज्यते ॥

एतेषां च वेदार्थोपकारिणां षण्णां ग्रंथानां वेदांगत्वं शिक्षायामेवमुदीरितं । शि॰ ४१-४२. ॥
छंदः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते । ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते ॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतं । त[illegible]त्सांगमधीत्यैव ब्रह्मलोके महीयते इति ॥

[illegible]दीनामपि वेदार्थज्ञानोपयोगो याज्ञवल्क्येन स्मर्यते । पु[illegible]मीमांसांगमिश्रिताः । वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश । १. ३. । इति ॥ इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् । बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरेदितीत्यन्यत्रापि स्मर्यते । [illegible] नाचिकेत[illegible]पाख्या[illegible]ने धर्मब्रह्मावबोधोपयुक्तानि तेषु तेष्वितिहासग्रंथेषु स्पष्टीकृतानि । उपनिषदुक्ताः सृष्टि-

स्थितिलयादयो ब्राह्मपाद्मवैष्णवादिपुराणेषु स्पष्टीकृताः। सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च। वंशानुचरितं चेति पुराणं पंचलक्षणमिति। सृष्ट्यादेः पुराणप्रतिपाद्यत्वावगमनात्। न्यायशास्त्रे प्रमाणप्रमेयसंशयप्रयोजनदृष्टांतादीनां षोडशपदार्थानां निरूपणात्तदनुसारेणेदं वाक्यमस्मिन्नर्थे प्रमाणं भवति नेतरदिति निर्णयः कर्तुं शक्यते। पूर्वोत्तरमीमांसयोर्वेदार्थोपयोगोऽतिस्पष्ट एव। मन्वत्रिविष्णुहारीतादिप्रोक्तासु स्मृतिषु वेदोक्तसंध्यावंदनादिविधयः प्रपंचिताः। तद्ध ह वा एते ब्रह्मवादिनः पूर्वाभिमुखाः संध्यायां गायत्रियाभिमंत्रिता आप ऊर्ध्वं विक्षिपंति। तै॰ आ॰ २. २. २.। इत्यादिकः संध्यावंदनविधिः। पंच वा एते महायज्ञाः सतति प्रतायंते। तै॰ आ॰ २. १०.। इत्यादिको महायज्ञविधिः। एवं विध्यंतराणि द्रष्टव्यानि। उक्तप्रकारेण पुराणादीनां वेदार्थज्ञानोपयोगाद्विद्यास्थानत्वं युक्तं। एतैः पुराणादिभिश्चतुर्दशभिर्विद्यास्थानैरुपबृंहिताया विद्याया ग्रहणेऽधिकारिविशेषः शाखांतरगतैश्चतुर्भिर्मंत्रैरुपदर्शितः। तांश्च मंत्रान्यास्क उदाजहार। नि॰ २. ४.॥ तत्रायं प्रथमो मंत्रः।

विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्यामिति॥

विद्याभिमानिनी देवता ब्राह्मणमुपदेष्टारमाचार्यमाजगाम। आगत्य चैवं प्रार्थयामास। हे ब्राह्मण मामनधिकारिणेऽनुपदिश्य पालय। तवाहं निधिवत्पुरुषार्थहेतुरस्मि। तादृशीं मयि तदुपदेष्टरि त्वयि च योऽसूयां करोति। यश्चार्जवेन विद्यां नाभ्यस्यति। योऽपि स्नानाचमनाद्याचारनियतो न भवति। तादृशेभ्यः शिष्याभासेभ्यो मां न ब्रूयाः। तथा सति त्वद्धृदये स्थित्वा फलप्रदा भवेयं॥ अथ द्वितीयो मंत्रः।

य आतृणत्त्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन्।
तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत्कतमच्चनाहेति॥

पूर्वस्मिन्मंत्र आचार्यस्य नियममभिधायास्मिन्मंत्रे शिष्यस्य नियमोऽभिधीयते। वितथमनृतमपुरुषार्थभूतं लौकिकं वाक्यं। तद्विपरीतं सत्यं वेदवाक्यमवितथं। तादृशेन वाक्येन य आचार्यः शिष्यस्य कर्णावातृणत्ति सर्वतस्तर्दनं पूरणं करोति। उपसर्गवशादौचित्याच्च तृणत्तिधातोरर्थांतरे वृत्तिः। सर्वदा वेदं यः श्रावयतीत्यर्थः। किं कुर्वन्। न दुःखं कुर्वन्। मंदप्रज्ञस्य माणवकस्यादावर्धर्चमृचं वा ग्रहीतुमशक्तस्य यथा दुःखं न भवति तथा पादं पादैकदेशं वा ग्राहयन्। किंच। अमृतं संप्रयच्छन्। अमृतत्वस्य देवजन्मनो मोक्षस्य वा प्रापकत्वादमृतं वेदार्थः। तस्य प्रदानं कुर्वन्। तं तादृशमाचार्यं सच्छिष्यो मु[illegible]रूपं मन्येत। पूर्वसिद्धौ तु मातापितरावधमस्य मनुष्यस्य शरीरस्य प्रदानादमुख्यौ। तस्मै गुरुमातापितृरूपायाचा[illegible] द्रोहं न कुर्यात्॥ अथ तृतीयो मंत्रः।

अध्यापिता ये गुरुं नाद्रियंते विप्रा वाचा मनसा कर्मणा वा।
यथैव ते न गुरोर्भोजनीयास्तथैव तान्न भुनक्ति श्रुतं तदिति॥

ये त्वधमा विप्रा गुरुणाध्यापिताः संतो विनयोक्त्या तदीयहितचिंतनेन शुश्रूषया वा गुरुं नाद्रियंत। आदररहितास्ते शिष्याभासा गुरोर्न भोजनीयाः। अनुभवयोग्या न भवंति। न हि तेषु गुरुः कृपां करोति। यथैव गुरुणा ते न पालनीयास्तथैव तानधमाञ्शिष्यांस्तच्छ्रुतं गुरूपदिष्टं वेदवाक्यं न पालयति। फलप्रदं न भवतीत्यर्थः॥ अथ चतुर्थो मंत्रः।

यमेव विद्याः शुचिमप्रम[illegible] मेधाविनं ब्रह्मचर्योपपन्नं।
यस्ते न द्रुह्येत्कतमच्चनाह तस्मै मा ब्रूया निधिपाय ब्रह्मन्निति॥

हे आचार्य यमेव मुख्यशिष्यं शुचित्वादिगुणोपेतं जानीयाः। किंच यो [illegible] न द्रुह्येत्। तस्मै तु मुख्यशिष्याय त्वदीयनिधिपालकाय ब्रह्मन् वेदरूपां मां विद्यां ब्रूयाः। इत्थं विद्यादेवतया [illegible]र्थितत्वादाचार्येण मु[illegible] वेदविद्योपदेष्टव्या॥

तदर्थमृग्वेदोऽस्माभिः षडंगानुसारेण व्याख्यायते। मंत्रब्राह्मणात्मके वेदे ब्राह्मणस्य मंत्रव्याख्यानोपयोगित्वादादौ ब्राह्मणमारण्यकांडस[illegible]तं व्याख्यातं। अथ तत्र तत्र ब्राह्मणोदाहरणेन मंत्रात्मकः संहिताग्रंथो व्याख्यातव्यः॥

स चाग्निमीळ इत्यारभ्य यथा वः [illegible]सहासतीत्यंतोऽष्टकांडैर्दशभिर्मंडलैश्च[illegible]षष्ट्यध्यायैः पंचाशीत्यनुवाकैरीषदधिकसहस्रसूक्तैरीषदधिकद्विसहस्रवर्गैरीष[illegible]धिकाभिर्दशसहस्रसंख्याभिर्ऋग्भिश्चोपेतः। तस्य च ग्रंथस्य कृत्स्न-

स्याप्याम्नातक्रमेणैव सामा[illegible]गो ब्रह्मयज्ञजपादौ पूर्वमेवाभिहितः। विशेषविनियोगस्तु तत्तत्क्रतौ सूत्रकारेण प्रदर्शितः। स च त्रिविधः। सूक्तविनियोगस्तृचादिविनियोग एकैकस्या ऋचो विनियोग[illegible]ति॥

तत्राग्निमीळ इति सूक्तं प्रातरनुवाक आग्नेये क्रतौ विनियुक्तं। स विनियोग आश्वलायनेन चतुर्थाध्यायस्य त्रयोदशे खंडे सूत्रितः। अग्ना नो अग्न इति षळग्निमीळेऽग्निं दूतमिति। तत्र हीनपादग्रहणात्सूक्तनिश्चयः। सूक्तं सूक्तादौ हीने पादे। आ॰ १. १.। इति परिभाषितत्वात्। तस्मिन्सूक्ते प्रथमाया ऋचो द्वितीयस्यां पवमानेष्टौ स्विष्टकृतो याज्यात्वेन विनियोगः। स च द्वितीयाध्यायस्य प्रथमखंडे सूत्रितः। साह्वान्विश्वा अभियुजोऽग्निमीळे पुरोहितमिति संयाज्ये इति। तत्र कृत्स्नपादग्रहणादृगित्यवगम्यते। ऋचं पादग्रहणे। आ॰ १. १.। इति परिभाषितत्वात्। तथा संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्। आ॰ २. १.। इति परिभाषितत्वात्स्विष्टकृत्संबंधनिश्चयः। तत्रापि द्वितीयमंत्रत्वेनोदाहृतत्वाद्याज्यात्वं। यद्यपि साह्वानित्यनया पुरोनुवाक्ययैव देवताया अनुस्मरणरूपसंस्कारः सिद्धस्तथापि याज्यानुवाक्ययोः समुच्चयो द्वादशेऽध्याये चतुर्थपादे मीमांसितः॥

पुरोनुवाक्यया याज्या विकल्प्या वा समुच्चिता। विकल्प्यान्यतरेणैव देवतायाः प्रकाशनात्॥

पुरोनुवाक्यासमाख्यानाद्वचनाच्च समुच्चयः। देवताप्रकाशनकार्य[illegible]। युग्मयोर्यथा विकल्पस्तथैवैकयुग्मगतयोरिति चेत् मैवं। पुरोनुवाक्येति समाख्याया उत्तरकालीनयाज्यामंतरेणानुपपत्तेः। किंच पुरोनुवाक्यामनूच्य याज्यया जुहोतीति प्रत्यक्षवचनेन देवतोपलक्षणहविष्प्रदानकार्ये भेदोक्तिपुरःसरं साहित्यं विधीयते। तस्मात्समुच्चय इति॥

एतच्चाग्निमित्यादिसूक्तं नवर्चं। अग्निं नव मधुच्छंदा वैश्वामित्र इत्यनुक्रमणिकायामुक्तत्वात्। विश्वामित्रपुत्रो मधुच्छं[illegible]स्य सूक्तस्य द्रष्टृत्वात्तदीय ऋषिः। ऋष गताविति धातुः। सर्वधातुभ्य इन्। उ॰ ४. ११७.। इगुपधात्कित्। उ॰ ४. ११९.। वेदप्राप्त्यर्थं तपोऽनुतिष्ठतः पुरुषान्स्वयंभूर्वेदपुरुषः प्राप्नोत्। तथा च श्रूयते। अजान्ह वै पृश्नींस्तपस्यमानान्ब्रह्म स्वयंभ्वभ्यानर्षत्तदृषयोऽभवन्। तै॰ आ॰ २. ९.। इति॥ तथातींद्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनादृषित्वमित्यभिप्रेत्य स्मर्यते। युगांतेऽंतर्हितान्वेदान्सेतिहासान्महर्षयः। लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवेति॥ [illegible]ज्ञानाभावे प्रत्यवायः स्मर्यते। अविदित्वा ऋषिं छंदो दैवतं योगमेव च। योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः॥ [illegible] ब्राह्मणार्थं स्वराद्यपि। अविदित्वा प्रयुंजानो मंत्रकंटक उच्यत इति॥ वेदनविधिश्च स्मर्यते। स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च। मंत्रं जिज्ञासमानेन वेदितव्यं पदे पद इति॥ अग्निमित्यादिसूक्तस्य छंदोऽनुक्रमणिकायां यद्यप्यत्र नोक्तं तथापि परिभाषायामेवमुक्तं। आदौ गायत्रं प्राग्घिरण्यस्तूपात्। अनु॰ १२. १४.। इति। हिरण्यस्तूप ऋषिर्येषां मंत्राणां वक्ष्यते ततः प्राचीनेषु मंत्रेषु सामान्येन गायत्रं छंद इत्यर्थः। पुरुषस्य पापसंबंधं वारयितुमाच्छादकत्वाच्छंद इत्युच्यते। तच्चारण्यकांडे समाम्नायते। छादयंति ह वा एनं छंदांसि पापात्कर्मण इति। अथवा चीयमानाग्निसंतापस्याच्छादकत्वाच्छंदः। तच्च तैत्तिरीया आमनंति। प्रजापतिरग्निमचिनुत स क्षुरपविर्भूत्वातिष्ठत् तं देवा बिभ्यतो नोपायन् ते छंदोभिरात्मानं [illegible] तच्छंदसां छंदस्त्वं। तै॰ सं॰ ५. ६. ६. १.। इति। यद्वा। अप मृत्युं वारायितु[illegible] छंदः। तदपि छांदोग्योपनिषद्याम्नातं। देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छंदोभिरा[illegible]सां छंदस्त्वं। छां॰ उ॰ १. ४. २.। इति॥ तथा [illegible]धातुनिमित्तो देवशब्द इत्येतदाम्नायते। दिवा वै नोऽभूदिति तद्देवानां देवत्वमिति। अतो दीव्यतीति देवः। मंत्रेण द्योत्यत इत्यर्थः। अस्मिन् सूक्ते स्तूयमानत्वादग्निर्देवः। तथा चानु[illegible]। मंडलादिष्वाग्नेयमैंद्रात्। अनु॰ १२. १२.। इति। तस्य सूक्तस्य प्रथमामृचं भगवान्वेदपुरुष आह॥

ओं अ॒ग्निमी॑ळे पु॒रोहि॑तं य॒ज्ञस्य॑ दे॒वमृ॒त्विज॑म्। होता॑रं रत्न॒धात॑मं ॥ १॥

ओं अ॒ग्निं। ई॒ळे॒। पु॒रःऽहि॑तं। य॒ज्ञस्य॑। दे॒वं। ऋ॒त्विज॑म्। होता॑रं। र॒त्न॒ऽधात॑मं ॥ १॥

अग्निनामकं देवमीळे। स्तौमि। ईड स्तुतौ। धा॰ २४. ९.। इति धातुः। डकारस्य ळकारो बह्वृचाध्येतृसंप्रदायप्राप्तः। तथा च पठ्यते। अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः। अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रममिति॥ मंत्रस्य होत्रा प्रयोज्यत्वादहं होता स्तौमीति लभ्यते। कीदृशमग्निं। यज्ञस्य पुरोहितं। यथा

राज्ञः पुरोहितस्तदभीष्टं संपादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं संपादयति । यद्वा । यज्ञस्य संबंधिनि
पूर्वभाग आहवनीयरूपेणावस्थितं । पुनः कीदृशं । देवं दानादिगुणयुक्तं । पुनः कीदृशं । होतारमृत्विजं ।
देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव । तथा च श्रूयते । अग्निर्वै देवानां होता । ऐ॰ ब्रा॰ ३. १४. । इति ।
पुनरपि कीदृशं । रत्नधातमं यागफलरूपाणां रत्नानामतिशयेन धारयितारं पोषयितारं वा । ऋचाग्निश-
ब्दस्य यास्को बहुधा निर्वचनं दर्शयति । अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामो
ऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयति संनममानोऽक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति
न स्नेहयति त्रिभ्य आख्यातेभ्यो जायत इति शाकपूणिरितादक्ताद्दग्धाद्वा नीतात्स खल्वेतेरकारमादत्ते
गकारमनक्तेर्वा दहतेर्वा नीः परस्तस्यैषा भवत्यग्निमीळे । नि॰ ७. १४. । इति । अस्यायमर्थः । सामान्येन
सर्वदेवतानां लक्षणस्याभिहितत्वादनंतरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकांक्षितमतोऽनुक्रमेण वक्ष्यामः ।
तत्र पृथिवीलोके स्थितोऽग्निः प्रथमं व्याख्यास्यते । कस्मात्प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयत इति
प्रश्नस्याग्रणीरित्यादिकमुत्तरं । देवसेनामग्रे स्वयं नयतीत्यग्रणीः । एतदेकमग्निशब्दस्य प्रवृत्तिनिमित्तं । तथा
च ब्राह्मणांतरं । अग्निर्देवानां सेनानीरिति । एतदेवाभिप्रेत्य बह्वृचा मंत्रब्राह्मण आमनंति । अग्निर्मुखं प्रथमो
देवतानामिति मंत्रः । ऐ॰ ब्रा॰ १. ४. । अग्निर्वै देवानामवमः । ऐ॰ ब्रा॰ १. १. । इति ब्राह्मणं । तथा तैत्तिरीया-
श्चामनंति । अग्निरग्रे प्रथमो देवतानां । तै॰ ब्रा॰ २. ४. ३. ३. । इति । अग्निरवमो देवतानामिति च । वाजस-
नेयिनस्त्वेवमामनंति । स वा एषोऽग्रे देवतानामजायत तस्मादग्निर्नामेति । यज्ञेष्वग्निहोत्रेष्टिपशुसोमरूपेष्वग्रं
पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात्प्रणीयत इति द्वितीयं प्रवृत्तिनिमित्तं । संनममानः सम्यक् स्वयमेव
प्रह्वीभवन्नंगं स्वकीयं शरीरं नयति काष्ठदाहे हविष्पाके च प्रेरयतीति तृतीयं प्रवृत्तिनिमित्तं । स्थूलाष्ठीवना-
मकस्य महर्षेः पुत्रो निरुक्तकारः कश्चिदक्नोपन इत्यग्निशब्दं निर्वक्ति । तत्र न क्नोपयतीत्युक्ते न स्नेहयति किंतु
काष्ठादिकं रूक्षयतीत्युक्तं भवति । शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते । इत
इण् गतौ । धा॰ २४. ३६. । इति धातुः । अक्तोऽञ्जू व्यक्तिम्रक्षणकांतिगतिषु । धा॰ २९. २१. । इति धातुः ।
दग्धो दह भस्मीकरणे । धा॰ २३. २२. । इति धातुः । नीतो णीञ् प्रापणे । धा॰ २२. ५. । इति धातुः । अग्निशब्दो
इकारककारनकारानपेक्षमाण एतिधातोरुत्पन्नादयनशब्दादकारमादत्ते । अनक्तिधातुगतस्य ककारस्य
गकारादेशं कृत्वा तमादत्ते । यद्वा । दहतिधातुजन्याद्दग्धशब्दाद्गकारमादत्ते । नीरिति नयतिधातुः । स च
ह्रस्वो भूत्वा परो भवति । ततो धातुत्रयं मिलित्वाग्निशब्दो भवति । यज्ञभूमिं गत्वा स्वकीयमंगं नयति
काष्ठदाहे हविष्पाके च प्रेरयतीति समुदायार्थः । तस्याग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिप्रदर्शनायै-
षाग्निमीळ इत्यृग्भवतीति । तामेतामृचं यास्क एवं व्याख्यातवान् । अग्निमीळेऽग्निं याचामीळिरध्येषणाकर्मा
पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञस्य देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो
देवः सा देवता होतारं ह्वातारं जुहोतेर्होतेत्यौर्णवाभो रत्नधातमं रमणीयानां धनानां दातृतमं । नि॰
७. १५. । इति । अस्यायमर्थः । ईडतिधातोः स्तुत्यर्थत्वं प्रसिद्धं । धातूनामनेकार्थत्वादिति न्यायमाश्रित्य
याच्ञाध्येषणापूजा अप्यत्रोचितत्वात्तदर्थतया व्याख्याताः । पुरोहितशब्दो द्वितीयेऽध्याये । नि॰ २. १२. ।
यद्देवापिः शं तनवे पुरोहित इत्येतामृचमुदाहृत्य पुर एनं दधातीति व्याख्यातः । तैत्तिरीयाश्च पौरोहित्ये
स्पर्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन पुर एनं दधत इत्यामनंति । देवशब्दो दानदीपनद्योतनाना-
मन्यतममर्थमाचष्टे । यज्ञस्य दाता दीपयिता द्योतयितायमग्निरित्युक्तं भवति । दीपनद्योतनयोरेकार्थत्वे
ऽप्यस्ति धातुभेदः । यद्यप्यग्निः पृथिवीस्थानस्तथापि देवान्प्रति हविर्वहनाद्द्युस्थानो भवति । देवशब्ददेवताश-
ब्दयोः पर्यायत्वादस्मिन्मंत्रप्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया । होतृशब्दस्य ह्वयतिधातोरु-
त्पन्नत्वेन देवानामाह्वातारमिति । और्णवाभनामकस्तु मुनिर्जुहोतिधातोरुत्पन्नो होतृशब्द इति मन्यते । अग्नेश्च
होतृत्वं होमाधिकरणत्वेन द्रष्टव्यं । रत्नशब्दो द्वितीयाध्याये मघामित्याद्यष्टाविंशतौ धननामसु पठितः ।
रमणीयत्वाद्रत्नत्वं । दधातिधातुरत्र दानार्थवाचीति । तदिदं नैरुक्तस्य यास्कस्य मंत्रव्याख्यानं ॥ अथ
व्याकरणप्रक्रियोच्यते । अगिधातोर्गत्यर्थात् । धा॰ ५. ३८. । अंगेर्नलोपश्च । उ॰ ४. ५०. । इत्यौणादिकसूत्रेण
निप्रत्ययः । इदित्त्वान्नुमागमेन प्राप्तस्य नकारस्य । पा॰ ७. १. ५८. । लोपश्च भवति । अंगति स्वर्गं गच्छति
हविर्नेतुमित्यग्निः । तत्र धातोः । पा॰ ६. १. १६२. । इत्यकार उदात्तः । आद्युदात्तश्च । पा॰ ३. १. ३. । इति प्रत्य-
यगत इकारोऽप्युदात्तः । अनुदात्तं पदमेकवर्जं । पा॰ ६. १. १५८. । इति द्वयोरन्यतरमुदात्तमवशिष्येतरस्या-

दात्तत्वं प्राप्तं। तत्र धातुस्वरे प्रथमतोऽवस्थिते सति पश्चादुपदिश्यमानः प्रत्ययस्वरोऽवशिष्यते। सति शिष्टस्वरो बलीयान्।पा० ६. १. १५८. ९.। इति हि न्यायः। ततोऽंतोदात्तमग्निप्रातिपदिकं। अनुदात्तौ सुप्पितौ।पा० ३. १. ४.। इत्यमित्येतद्द्वितीयैकवचनमनुदात्तं। तस्यामि पूर्वः।पा० ६. १. १०७.। इति यत्पूर्वरूपं तदुदात्तमेकादेश उदात्तेनोदात्तः।पा० ८. २. ५.। इति सूचितत्वात्। अग्निशब्दो धातुजन्येति मते सेयं प्रक्रिया सर्वापि द्रष्टव्या। मतद्वयं यास्केन प्रदर्शितं। नामान्याख्यातजानीति शाकटायनो नैरुक्तसमयश्च। न सर्वाणीति गार्ग्यो वैयाकरणानां चैके।नि० १. १२.। इति। गार्ग्यस्य मतेऽग्निशब्दस्याखंडप्रातिपदिकत्वात्फिषोऽंत उदात्तः।फि० १. १.। इत्यंतोदात्तत्वं। पूर्वोक्तेष्वग्रणीरित्यादिनिर्वचनेषु प्रकृतिप्रत्ययाद्यशेषप्रक्रिया यथोचितं कल्पनीया। एतदेवाभिप्रेत्य यास्क आह। अथ निर्वचनं तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयादथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येनाविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्न त्वेव न निर्ब्रूयात्।नि० २. १.। इति। अस्यायमर्थः। तत्तत्र निर्वचनीयपदसमूहमध्ये येष्वग्न्यादिपदेषु पूर्वोक्तरीत्या स्वरसंस्कारौ समर्थौ व्याकरणसिद्धौ स्यातां। स्वर उदात्तादिः। संस्कारो निप्रत्ययादिः। किंच तौ स्वरसंस्कारौ प्रादेशिकेन गुणेनान्वितौ स्यातां। शब्दस्यैकदेशः पूर्वोक्तोऽगिधातुः प्रदेशः। तत्र भवो गुणो गतिरूपोऽर्थः। तेनान्वितौ। तान्यग्न्यादिपदानि तथा व्याकरणानुसारेण निर्ब्रूयात्। तच्च निर्वचनमस्माभिः प्रदर्शितं। अथ पूर्वोक्तवैलक्षण्येन कश्चित्स्वेन विवक्षितोऽर्थो नान्वितस्तस्मिञ्शब्देऽनुगतो न भवेत्। तस्यैव व्याख्यानमप्रादेशिके विकार इति। अग्रनयनादिरूपः क्रियाविशेषो विकारः। स च प्रदेशेनाग्निशब्दैकदेशेनाच नाभिधीयत इत्यप्रादेशिकः। एवं सति यः पुमानर्थनित्यः स्वविवक्षितेऽर्थे नियतो निर्बंधवान्। ब्राह्मणानुसारेण वा देवतांतरविशेषणत्वेन योजयितुं वा स निर्बंधः। तदानीं स पुमान्केनचिद्वृत्तिसामान्येन स्वविवक्षितमर्थं परीक्षेत। तस्मिञ्शब्दे योजयेत्। वृत्तिः क्रिया। तद्रूपेण सामान्यं सादृश्यं। अस्माभिश्चाग्रनयनादिरूपं क्रियात्वसामान्यमुपजीव्याग्रणीत्वाद्यर्थो योजितः। तदिदं यास्काभिमतं निर्वचनं। स्थौलाष्ठीविरक्षरसाम्यान्निर्वक्ति। अक्नोपनशब्दस्यादौ निषेधार्थमकाररूपमक्षरं विद्यते। अग्निशब्दस्याप्यादावकारोऽस्ति। तदिदमक्षरसाम्यं। शाकपूणिस्तु वर्णसाम्यान्निर्ब्रूते। दग्धशब्दाग्निशब्दयोर्गकारवर्णेन साम्यं। सर्वथापि निर्वचनं न त्याज्यमिति॥ ईळ इत्येतत्पदं कृत्स्नमप्यनुदात्तं। तिङ्ङतिङः।पा० ८. १. २८.। इत्यतिङंतादग्निशब्दात्परस्येळ इत्यस्य तिङंतस्य निघातविधानात्। पदद्वयसंहिताकाले त्वीकारस्य धातुगतस्योदात्तादनुदात्तस्य स्वरितः।पा० ८. ४. ६६.। इति स्वरितत्वं। तस्मादूर्ध्वभाविन एकारस्य तिङ्प्रत्ययरूपस्य स्वरितात्संहितायामनुदात्तानां।पा० १. २. ३९.। इत्यैकश्रुत्यं प्रचयनामकं भवति॥ पुरःशब्दोऽंतोदात्तः। अयं पुरो भुवः।तै० सं० ४. ३. २. १.। इत्यत्र तथैवाम्नातत्वात्। पूर्वाधरावराणामसि पुरधवश्चैषां।पा० ५. ३. ३९.। इति पूर्वशब्दादस्प्रत्ययः पुरादेशश्च। ततोऽत्र प्रत्ययस्वरः।पा० ३. १. ३.। धाञो निष्ठायां दधातेर्हिः।पा० ७. ४. ४२.। इत्यादेशे सति प्रत्ययस्वरेणांतोदात्तो हितशब्दः। तत्र समासांतोदात्तत्वे प्राप्ते।पा० ६. १. २२३.। तदपवादत्वेन तत्पुरुषे तुल्यार्थेत्यादिना।पा० ६. २. २.। [illegible]प्रकृतिस्वरत्वं। यद्वा। पुरोऽव्ययं।पा० १. ४. ६७.। इति गतिसंज्ञायां गतिरनंतरः।पा० ६. २. ४९.। इति पूर्वपदप्रकृतिस्वरत्वं। तत ओकार उदात्तः। अवशिष्टानामनुदात्तस्वरितप्रचयाः पूर्ववद्द्रष्टव्याः। आद्याक्षरस्य संहितायां प्रचयप्राप्तौ।पा० १. २. ३९.। उदात्तस्वरितपरस्य सन्नतरः।पा० १. २. ४०.। इत्यतिनीचोऽनुदात्तः॥ यजयाचेत्यादिना।पा० ३. ३. ९०.। यजतेर्नङ्प्रत्यये सत्यंतोदात्तो यज्ञशब्दः। विभक्तेः सुप्स्वरेणानुदात्तत्वे सति।पा० ३. १. ४.। पश्चात्स्वरितत्वं॥ देवशब्दः पचाद्यजंतः।पा० ३. १. १३४.। स च फिट्स्वरेण।फि० १. १.। प्रत्ययस्वरेण।पा० ३. १. ३.। चित्स्वरेण।पा० ६. १. १६३.। वांतोदात्तः॥ ऋत्विक्शब्द ऋतौ यजतीति विग्रहे सत्यृत्विग्दधृक्।पा० ३. २. ५९.। इति निपातितः। गतिकारकोपपदात्कृत्।पा० ६. २. १३९.। इति कृदुत्तरपद[illegible]णांतोदात्तः। विभक्तिस्वरः पूर्ववत्॥ होतृशब्दस्तृन्प्रत्ययांतः।पा० ३. २. १३५.। नित्स्वरेणाद्युदात्तः।पा० ६. १. १९७.। स्वरितप्रचयौ पूर्ववत्॥ रत्नशब्दो नब्विषयस्यानिसंतस्य।फि० २. ३.। इत्याद्युदात्तः। तथा चाम्नायते रत्नं धातेति। रत्नानि दधातीति विग्रहः। समासत्वादंतोदात्तो रत्नधाशब्दः। यद्वा। कृदुत्तरपदप्रकृतिस्वरः। त[illegible]।पा० ५. ३. ५५.। पित्स्वरेणानुदात्ते सति।पा० ३. १. ४.। स्वरितप्रचितौ। संहितायामाद्याक्षरस्य प्रचयो द्वितीयाक्षरस्य सन्नतरत्वं। वेदावतार आद्याया ऋचोऽर्थश्च प्रपंचितः। विज्ञातं वेदगांभीर्यमथ संक्षिप्य वर्ण्यते॥

अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत । स देवाँ एह वक्षति ॥२॥

अग्निः । पूर्वेभिः । ऋषिऽभिः । ईड्यः । नूतनैः । उत । सः । देवान् । आ । इह । वक्षति ॥२॥

अयमग्निः पूर्वेभिः पुरातनैर्भृग्वंगिरःप्रभृतिभिर्ऋषिभिरीड्यः स्तुत्यो नूतनैरुतेदानींतनैरस्माभिरपि स्तुत्यः । सोऽग्निः स्तुतः सन्निह यज्ञे देवान्हविर्भुज आ वक्षति । वह प्रापणे इति धातुः । आवहत्वित्यर्थः ॥ पूर्वेभिरित्यत्र बहुलं छंदसि । पा० ७. १. १०. । इति भिस ऐसादेशाभावः । पूर्व पर्व अर्व पूरणे इति धातुः । पूर्वतिधातोरन्प्रत्यय औणादिकः । इन्प्रत्ययांत ऋषिशब्द ऋष्यंधकेति निपातनात् । पा० ४. १. ११४. । लघूपधगुणाभावः । पा० ७. ३. ८६. । कित्प्रत्ययो वात्र ज्ञेयः । उ० ४. ११९. । तौ शब्दौ नित्स्वरेणाद्युदात्तौ । ईड्यशब्दस्य ण्यत्प्रत्ययांतत्वात् । पा० ३. १. १२४. । तित्स्वरितं । पा० ६. १. १८५. । इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेनेडवंदेत्यादिना । पा० ६. १. २१४. । आद्युदात्तत्वं । नवस्य नू त्नप्तनखाश्च । पा० ५. ४. ३०. ६. । इति वार्त्तिकेन नवशब्दस्य नू इत्यादेशस्तनन्प्रत्ययश्च महावार्त्तिके विहितः । ततो नित्स्वरेणाद्युदात्तः । अवशिष्टस्वरा अग्न्यादिषु नूतनांतेषु पूर्ववदुन्नेयाः । उतशब्दो यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वे[illegible]नात्र समुच्चयार्थो द्रष्टव्यः । उच्चावचेष्वर्थेषु निपतंतीति निपातत्वं । तर्हि निपाता आद्युदात्ताः । फि० ४. १२. । इत्युकारस्योदात्तः प्राप्त इति चेन्न । प्रातःशब्दवदंतोदात्तत्वात् । यथा प्रातःशब्दोऽंतोदात्तत्वेनैव स्वरादिषु पठितः । पा० १. १. ३७. । एवमुतशब्दस्यापि पाठो द्रष्टव्यः स्वरादेराकृतिगणत्वात् । यद्वा । एवादीनामंतः । फि० ४. १४. । इत्यंतोदात्तः । स इत्यत्र फिट्स्वरः । देवशब्दः पूर्ववत् । देवानित्यस्य नकारस्य संहितायां दीर्घादटि । पा० ८. ३. ९. । इति रुत्वं । [illegible]कः । पा० ८. ३. २. । इत्यनुवृत्तावातोऽटि नित्यं । पा० ८. ३. ३. । इत्याकारः सानुनासिकः । भोभगो । पा० ८. ३. १७. । इति रोर्यकारः । स च लोपः शाकल्यस्य । पा० ८. ३. १९. । इति लुप्यते । तस्यासिद्धत्वात् । पा० ८. २. १. । न पुनः संधिकार्यं । आङो निपातत्वादाद्युदात्तत्वं । इदमो हप्रत्यये सति निष्पन्नत्वात् । पा० ५. ३. ११. । इहशब्दे प्रत्ययस्वरः । वहतिधातोर्लोडर्थे छांदसो लृट् । तस्य स्यप्रत्ययगतस्य यकारस्य लोपोऽपि छांदसः । यद्वा । लेटि सिब्बहुलम् । पा० ३. १. ३४. । इति सिप्प्रत्ययः । लेटोऽडाटौ । पा० ३. ४. ९४. । इत्यडागमश्च । ततो वक्षतीति संपद्यते । तस्य तिङंतत्वान्निघातः । संहितास्वराः पूर्ववत् ॥

आधाने तृतीयेष्टौ प्रथमाज्यभागस्यानुवाक्या । आ० २. १. । सूक्तगता तृतीया ॥

अग्निना रयिमश्नवत्पोषमेव दिवेदिवे । यशसं वीरवत्तमं ॥३॥

अग्निना । रयिं । अश्नवत् । पोषं । एव । दिवेऽदिवे । यशसं । वीरवत्ऽतमं ॥३॥

योऽयं होत्रा स्तुत्योऽग्निस्तेनाग्निना निमित्तभूतेन यजमानो रयिं धनमश्नवत् । प्राप्नोति । कीदृशं रयिं । दिवे दिवे पोषमेव प्रतिदिनं पुष्यमाणतया वर्धमानमेव । न तु कदाचिदपि क्षीयमाणं । यशसं दानादिना यशोयुक्तं वीरवत्तममतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतं । सति हि धने पुरुषाः संपद्यंते ॥ रयिशब्दो मघमित्यादिधननामसु पठितः । तत्र फिट्स्वरः । अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप् । इतश्च लोपः । पा० ३. ४. ९७. । इतीकारलोपः । लेटोऽडाटौ । पा० ३. ४. ९४. । इत्यडागमः । ततोऽश्नवदिति भवति । तस्य निघातः । घञंतत्वात् । पा० ६. १. १९७. । पोषशब्द आद्युदात्तः । एवशब्दस्य निपातत्वेऽप्येवादीनामंतः । फि० ४. १४. । इत्यंतोदात्तत्वं । वकारांताद्दिव्शब्दात्परस्याः सप्तम्याः सुपां सुलुक् । पा० ७. १. ३९. । इत्यादिना शेभावे सति । सावेकाच इत्यादिना । पा० ६. १. १६८. । ऊडिदंपदादीत्यादिना वा । पा० ६. १. १७१. । तस्योदात्तत्वं । नित्यवीप्सयोः । पा० ८. १. ४. । इति द्विर्भावे सत्युत्तरभागस्यानुदात्तं च । पा० ८. १. ३. । इत्यनुदात्तत्वं । यशोऽस्यास्तीति विग्रहे सत्यर्शआदिभ्योऽच् । पा० ५. २. १२७. । इत्यच्प्रत्ययः । चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वं । फिट्स्वरेणांत[illegible]ः पित्त्वादनुदात्तत्वं । ह्रस्वनुड्भ्यां । पा० ६. १. १७६. । इति तु न । सावर्णांतत्वात् । न गोश्वन् । पा० ६. १. १८२. । इति प्रतिषेधः ॥

अभिप्लवषडहस्य मध्यवर्तिषूक्थ्येषु तृतीयसवने मैत्रावरुणस्यामे यं यज्ञमित्यादिको वैकल्पिकोऽनुरूपस्तृचः । एतच्च सप्तमाध्याय एह्यू ष्वित्यादिखंडे सूचितं । अग्निं वो वृधंतममग्ने यं यज्ञमध्वरं । आ० ७. ८. । इति ॥

अग्ने॒ यं य॒ज्ञम॑ध्व॒रं वि॒श्वतः॑ परि॒भूरसि॑ । स इद्दे॒वेषु॑ गच्छति ॥ ४ ॥

अग्ने॑ । यं । य॒ज्ञं । अ॒ध्व॒रं । वि॒श्वतः॑ । प॒रि॒ऽभूः । असि॑ । सः । इत् । दे॒वेषु॑ । ग॒च्छ॒ति॒ ॥ ४ ॥

हे अग्ने त्वं यं यज्ञं विश्वतः सर्वासु दिक्षु परिभूः परितः प्राप्तवानसि स इत् स एव यज्ञो देवेषु तृप्तिं प्रणेतुं स्वर्गे गच्छति । प्राच्यादिचतुर्दिग्गतेष्वाहवनीयमार्जालीयगार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति । परिशब्देन होत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता । कीदृशं यज्ञं । अध्वरं हिंसारहितं । न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवंति ॥ अग्निशब्दस्य षाष्ठिकं । पा॰ ६. १. १९८. । आमंत्रिताद्युदात्तत्वं । न विद्यते ध्वरो ऽस्येति बहुव्रीहौ नञ्सुभ्यां । पा॰ ६. २. १७२. । इत्यंतोदात्तत्वं । विश्वत इत्यत्र तसिलः प्रत्ययस्वरत्वं बाधित्वा पूर्ववर्णस्य लिति । पा॰ ६. १. १९३. । इत्युदात्तत्वं । परिभूरित्यत्राव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते । पा॰ ६. २. २. । तदपवादत्वेन कृदुत्तरपदप्रकृतिस्वरत्वं । पा॰ ६. २. १३९. । असीति तिङंतस्य यद्वृत्तान्नित्यं । पा॰ ८. १. ६६. । इति निघाताभावः ॥

अ॒ग्निर्होता॑ क॒विक्र॑तुः स॒त्यश्चि॒त्रश्र॑वस्तमः । दे॒वो दे॒वेभि॒रा ग॑मत् ॥ ५ ॥

अ॒ग्निः । होता॑ । क॒विऽक्र॑तुः । स॒त्यः । चि॒त्रश्र॑वःऽतमः । दे॒वः । दे॒वेभिः॑ । आ । ग॒म॒त् ॥ ५ ॥

अयमग्निर्देवोऽन्यैर्देवैर्हविर्भोजिभिः सहा गमत् । अस्मिन्यज्ञे समागच्छतु । कीदृशोऽग्निः । होता होमनिष्पादकः कविक्रतुः । कविशब्दोऽत्र क्रांतवचनो न तु मेधाविनाम । क्रतुः प्रज्ञानस्य कर्मणो वा नाम । ततः क्रांतप्रज्ञः क्रांतकर्मा वा । सत्यः अनृतरहितः । फलमवश्यं प्रयच्छतीत्यर्थः । चित्रश्रवस्तमः । श्रूयत इति श्रवः कीर्तिः । अतिशयेन विविधकीर्तियुक्तः ॥ कविक्रतुश्चित्रश्रवस्तम इत्यत्रोभयत्र बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वं । सत्सु साधुः सत्यः सत्यादशपथे । पा॰ ५. ४. ६६. । इत्यत्रांतोदात्तो हरदत्तेन निपातितः । लोडंतस्य गच्छत्विति-शब्दस्य छत्वाभावः । उकारलोपश्छांदसः । ततो रूपं गमदिति भवति । स्पष्टमन्यत् ॥ ॥ १ ॥

यद॒ङ्ग दा॒शुषे॒ त्वमग्ने॑ भ॒द्रं क॑रि॒ष्यसि॑ । तवेत्तत्स॒त्यम॑ङ्गिरः ॥ ६ ॥

यत् । अ॒ङ्ग । दा॒शुषे॑ । त्वं । अग्ने॑ । भ॒द्रं । क॒रि॒ष्यसि॑ । तव॑ । इत् । तत् । स॒त्यं । अ॒ङ्गि॒रः॒ ॥ ६ ॥

अंगेत्यभिमुखीकरणार्थो निपातः । अंगाग्ने हे अग्ने त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं यद्भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तद्भद्रं तवेत् तवैव । सुखहेतुरिति शेषः । हे अंगिरोऽग्ने एतच्च सत्यं न त्वत्र विसंवादोऽस्ति । यजमानस्य वित्तादिसंपत्तौ सत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति । भद्रशब्दार्थं शाट्यायनिनः समामनंति । यद्वै पुरुषस्य वित्तं तद्भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रमिति ॥ अंगशब्दस्य निपातत्वेऽपि । फि॰ ४. १२. । अभ्यादित्वादंतोदात्तत्वं । दाश्वान् साह्वान् । पा॰ ६. १. १२. । इति सूत्रेण दाशृ दान इति धातोः क्वसुप्रत्ययो निपातितः । तत्र प्रत्ययस्वरः । आमंत्रितस्याग्निशब्दस्य पदात्परत्वेनाष्टमिकानुदात्तत्वं । पा॰ ८. १. १९. । न शंकनीयं । अपादादौ । पा॰ ८. १. १८. । इति पर्युदस्तत्वात् । ततः षाष्ठिकं । पा॰ ६. १. १९८. । आद्युदात्तत्वमेव । भद्रशब्दस्य नब्विषयत्वेन । फि॰ २. ३. । [illegible]पे भदि कल्याण इति धातोरुपरि रकप्रत्ययेन निपातनादंतोदात्तत्वं । [illegible] यच्छब्दप्रयोगान्निपातैर्यद्यदिहं[illegible] । पा॰ ८. १. ३०. । इति निघाते प्रतिषिद्धे स्यप्रत्ययस्वरेण । पा॰ ३. १. ३३. । सति शिष्टेन करिष्यसिशब्द उपांत्योदात्तः । तवेत्यत्र युष्मदस्मदोर्ङसि । पा॰ ६. १. २११. । इत्याद्युदात्तत्वं । अंगिरा अंगाराः । नि॰ ३. १७. । इति यास्कः । ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनंति । येऽंगारा आसंस्तेऽंगिरसोऽभवन् । ऐ॰ ब्रा॰ ३. ३४. । इति । तस्मादंगिरोनामकमुनिकारणत्वादंगाररूपस्याग्नेरंगिरस्त्वं । अत्र पदात्परत्वेनाष्टमिकानु[illegible]त्वं ॥

अग्नीषोमप्रणयन उप त्वाग्न इत्यादिकोऽनुवचनीयस्तृचः । एतच्च ब्राह्मणे समाम्नातं । उप त्वाग्ने दिवेदिव उप प्रियं पनिप्नतमिति तिस्रश्चैकां चान्वाह । ऐ॰ ब्रा॰ १. ३०. । इति ॥

उप॑ त्वाग्ने दि॒वेदि॑वे॒ दोषा॑वस्तर्धि॒या व॒यं। नमो॒ भर॑न्त॒ एम॑सि ॥७॥

उप॑। त्वा॒। अ॒ग्ने॒। दि॒वेऽदि॑वे। दोषा॑ऽवस्तः। धि॒या। व॒यं। नम॑ः। भर॑न्तः। आ। इ॒म॒सि॒ ॥७॥

हे अग्ने वयमनुष्ठातारो दिवे दिवे प्रतिदिनं दोषावस्ता रात्रावहनि च धिया बुद्ध्या नमो भरंतो नमस्कारं संपादयंत उप समीपे एमसि । त्वामागच्छामः ॥ उपशब्दस्य निपातस्वरः । फि॰ ४. १२. । त्वामौ द्वितीयायाः । पा॰ ८. १. २३. । इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः । दोषाशब्दो रात्रिवाची । वस्त इत्यहर्वाची । द्वंद्वसमासे कार्तकौजपादित्वात् । पा॰ ६. २. ३७. । आद्युदात्तः । साविकाचः । पा॰ ६. १. १६८. । इति धियो विभक्तिरुदात्ता । नम इति निपातः । भरंत इत्यत्र शपः । पा॰ ३. १. ६८. । पित्त्वाच्छतुर्लसार्वधातुकत्वाच्चानुदात्तत्वे सति । पा॰ ६. १. १८६. । धातुस्वरः शिष्यते । इममीत्यत्रेदंतो मसिः । पा॰ ७. १. ४६. । इत्यादेशो निघातश्च ॥

राज॑न्तमध्व॒राणां॑ गो॒पामृ॒तस्य॒ दीदि॑विं। वर्ध॑मानं॒ स्वे दमे॑ ॥८॥

राज॑न्तं। अ॒ध्व॒राणां॑। गो॒पां। ऋ॒तस्य॑। दीदि॑विं। वर्ध॑मानं। स्वे। दमे॑ ॥८॥

पूर्वमंत्रे त्वामुपैम इत्यग्निमुद्दिश्योक्तं । कीदृशं त्वां । राजंतं दीप्यमानं अध्वराणां राक्षसकृतहिंसारहितानां यज्ञानां गोपां रक्षकं ऋतस्य सत्यस्यावश्यंभाविनः कर्मफलस्य दीदिविं पौनःपुन्येन भृशं वा द्योतकं । आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते । स्वे दमे स्वकीयगृहे यज्ञशालायां हविर्भिर्वर्धमानं ॥ राजंतं वर्धमानमित्यत्रोभयत्र पूर्ववद्धातुस्वरः शिष्यते । दीदिविशब्दस्याभ्यस्तानामादिः । पा॰ ६. १. १८९. । इत्याद्युदात्तत्वं । दमशब्दो वृषादित्वात् । पा॰ ६. १. २०३. । आद्युदात्तः ॥

स नः॑ पि॒तेव॑ सू॒नवेऽग्ने॑ सूपाय॒नो भ॑व। सच॑स्वा नः स्व॒स्तये॑ ॥९॥

सः। नः॒। पि॒ताऽइ॑व। सू॒नवे॑। अग्ने॑। सु॒ऽउ॒पा॒य॒नः। भ॒व॒। सच॑स्व। नः॒। स्व॒स्तये॑ ॥९॥

हे अग्ने स त्वं नोऽस्मदर्थं सूपायनः शोभनप्राप्तियुक्तो भव । तथा नोऽस्माकं स्वस्तये विनाशर हित्यार्थं सचस्व । समवेतो भव । तत्रोभयत्र दृष्टांतः । यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति तद्वत् ॥ अस्मच्छब्दादेशस्य न इत्येतस्यानुदात्तं सर्वं । पा॰ ८. १. १८. । इत्यनुदात्तत्वं । चादयोऽनुदात्ताः । फि॰ ४. १६. । इतीवशब्दोऽनुदात्तः । इवेन नित्यसमासः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यं । पा॰ २. १. ४. २. । इति समस्तः पितेवेति शब्दो मध्योदात्तः । शोभनमुपायनं यस्येति बहुव्रीहौ नञ्सुभ्यामित्यंतोदात्तत्वं । सचस्वेत्यत्र पदात्परत्वं नास्तीति न निघातः लसार्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः ॥ ॥२॥

अग्निमीळ इत्यादिसूक्तमग्निष्टोमस्य प्रातरनुवाके यथा विनियुक्तं तथा वायवा याहीत्यादयस्तृचाः प्रउगशस्त्रे विनियुक्ताः । तत्रेदं चिंत्यते । शस्त्रं किं देवतास्मरणरूपसंस्कारकर्म किंवादृष्टफलं प्रधानकर्मेति । तत्र पूर्वपक्षं जैमिनिः सूचयामास । पू॰ मी॰ २. १. १३–२९. ॥

स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वादिति ॥१॥ आज्यैः स्तुवते पृष्ठैः स्तुवते प्रउगं शंसति निष्केवल्यं शंसतीति श्रूयते । तत्र स्तुतिः शंसनं च गुणिनिष्ठगुणाभिधानं । इंद्रस्य नु वीर्याणि प्र वोचं । ऋग्वे॰ १. ३२. १. । इत्यत्र दृष्टत्वात् । एवं सति याज्यान्यायेन गुणिन्या देवताया अभिधायकत्वेन स्तुतशस्त्रयोः संस्काररूपत्वमभ्युपेयं । याज्यायास्तद्रूपत्वं दशमाध्यायस्य चतुर्थपादे दृष्टार्थलाभेन निर्णीतं । पू॰ मी॰ १०. ४. ३९–४१. । तद्वदत्रापि तुशब्दः प्रधानकर्मत्वं व्यावर्तयति ॥ सिद्धांती तं पक्षं दूषयति ॥

अर्थेन त्वपकृष्येत देवतानामचोदनार्थस्य गुणभूतत्वादिति ॥२॥ तुशब्देन संस्कारत्वं वारयति । संस्कारपक्षे प्रयोजनवशेन मंत्रः स्वस्थानादपकृष्येत । कुतः । मंत्रगतं देवतावाचकं यदिंद्रादि नामास्ति तच्चोदनया मंत्ररूपया प्रतिपाद्यस्य देवतारूपस्यार्थस्य गुणभूतं । तस्माद्यत्र प्रधानभूतदेवतास्ति तत्र गुणभूतो मंत्रो नेतव्यः । तद्यथा । माहेंद्रग्रहसंनिधावभि त्वा शूर । ऋग्वे॰ ७. ३२. २२. । इत्ययं प्रगाथ आम्नातः । स चेंद्रं प्रकाशयति न

तु महेंद्रं। ततो यच्चैंद्रं कर्म तत्रायं प्रगाथोऽपकर्षणीयः। तथा सति क्रमसंनिधी बाध्येयातां ॥ तदेतत्सिद्धांतिनाभिहितं दूषणं पूर्वपक्षी समाधत्ते ॥

वशावद्वा गुणार्थं स्यादिति ॥३॥ वाशब्दः प्रगाथस्यान्यत्रनयनं वारयति। मंत्रे यदेतदिंद्रशब्दाभिधानं तदेतन्महत्वगुणोपलक्षणार्थं स्यात्। यथा सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामा लभेत। तै॰ सं॰ ३.४.३.२.। इत्यत्राजावशाशब्देन चोदिते कर्मणि छागशब्देन केवलेन युक्ता निगमा वशात्वगुणमप्युपलक्षयंति तद्वत्। तस्मान्महत्वगुणयुक्ते चोदिते कर्मणि निर्गुणेनेंद्रशब्देनाभिधानमविरुद्धं। लोकेऽपि महाराजे केवलराजशब्दप्रयोगमपि पश्यामः॥ तदेतत्समाधानं सिद्धांती दूषयति ॥

न श्रुतिसमवायित्वादिति ॥४॥ यदुक्तं वशान्यायेन राजन्यायेन वास्य ग्रहस्येंद्रो देवता युज्यत इति तन्न। देवतात्वस्य तद्धितश्रुतिसमवायित्वात्। माहेंद्रग्रह इत्यत्र सास्य देवतेत्यस्मिन्नर्थे महेंद्राद्घाणौ च। पा॰ ४.२.२९.। इति महेंद्रशब्दादण्प्रत्ययो विहितः। तस्मान्महेंद्र एव देवता न त्विंद्रः॥ विपक्षे बाधमाह ॥

गुणश्चानर्थक इति ॥५॥ यदींद्रो देवता स्यात्तदानीमैंद्रग्रह इत्येतावतैवार्थावगतौ माहेंद्र इति महत्वगुणोऽनर्थकः स्यात्। चकारः पूर्वहेतुना समुच्चयार्थः॥ हेत्वंतरमाह ॥

तथा याज्यापुरोरुचोरिति ॥६॥ इंद्रमहेंद्रयोर्देवतयोर्भेदे यथा महत्वगुणः सार्थकस्तथा याज्यापुरोनुवाक्ययोर्भेदोऽप्यस्मिन्नेव पक्ष उपपद्यते। एंद्र सानसिं। ऋग्वे॰ १.८.१.। इत्यादिके इंद्रस्य याज्यापुरोनुवाक्ये। महाँ इंद्रो य ओजसा। ऋग्वे॰ ८.६.१.। इत्यादिके महेंद्रस्य॥ [illegible] वशादृष्टांते वैषम्यमाह ॥

वशायामर्थसमवायादिति ॥७॥ या वशा विधिवाक्ये श्रुता तस्या एव निगमेषु छागशब्देन व्यवहारो न विरुद्धः। छागत्वलक्षणस्यार्थस्य वशायां समवेतत्वात्। तच्च प्रत्यक्षेणोपलभ्यते। इंद्रमहेंद्रयोस्तु भेद उपपादितः। तस्माद्विषमो दृष्टांतः। एवं संस्कारपक्षे प्रगाथस्यैंद्रकर्मण्यपकर्षप्रसंगात्तद्वारयितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमिति सिद्धांतिनो मतं॥ पुनरपि पूर्वपक्षी तदेतन्मतं निराचष्टे ॥

यच्चेति वार्थवत्त्वात्स्यादिति ॥८॥ वाशब्दः सिद्धांतिमतव्यावृत्त्यर्थं। यच्चैंद्रं कर्म तत्र प्रगाथो नेतव्य इत्ययमेव पक्षः स्यात्। कुतः। अर्थवत्त्वात्। ऐंद्रो मंत्र इंद्रं प्रकाशयितुं समर्थ इत्यर्थवान्स्यात्। महेंद्रं तु प्रकाशयितुमसमर्थत्वादानर्थक्यं प्रगाथस्य प्रसज्येत। तस्माद्देवताप्रकाशनरूपसंस्कारकर्मत्वमेव स्तोत्रशस्त्रयोर्युक्तमिति स्थितः पूर्वपक्षः॥ अथ सिद्धांतमाह ॥

अपि वा श्रुतिसंयो[illegible]णी स्तौतिशंसती क्रियोत्पत्तिं विदध्यातामिति ॥९॥ अपि वेत्यनेन संस्कारकर्मत्वं व्यावर्त्यते। स्तौतिधातुः शंसतिधातुश्चेत्येतावुभावपि स्वप्रकरण एव कस्याश्चित्प्रधानक्रियाया उत्पत्तिं विदध्यातां। कुतः। श्रुतिसंयोगात्। तयोर्धात्वोर्वाच्योऽर्थः श्रुतिरित्युच्यते। तत्संयोगः प्रधानकर्मत्वे सिध्यति। तथा हि गुणिनमुपसर्जनीकृत्य तन्निष्ठानां गुणानां प्राधान्येन कथनं स्तुतिः। यो देवदत्तः स चतुर्वेदाभिज्ञ इत्युक्ते सर्वे जनाः स्तुतिमवगच्छंति। गुणस्योपसर्जनत्वे तु न स्तुतिः प्रतीयते। यश्चतुर्वेदाभिज्ञस्तमाकारयेत्युक्ते स्तुतिं न मन्यंते किंत्वाह्वानप्राधान्यमेव बुध्यंते। एवं मंत्रेष्वपि या देवता सेयमीदृशैर्गुणैरुपेतेति गुणप्राधान्यविवक्षायां मुख्यः स्तौतिधात्वर्थो विधीयते। त्वत्पक्षे तु येयमीदृग्गुणयुक्ता सेयं देवतेति देवतास्मरणस्य प्राधान्यादियं स्तुतिर्न स्यात्। ततः श्रुतिवशादेते प्रधानकर्मणी। तथा सति देवताप्रकाशने तात्पर्याभावादैंद्रोऽपि प्रगाथः स्वप्रकरणगते माहेंद्रकर्मण्येवावतिष्ठते। यदि देवतास्मरणरूपं दृष्टं प्रयोजनं न लभ्येत तर्ह्यदृष्टमस्तु॥ प्रधानकर्मत्वे हेत्वंतरमाह ॥

शब्द[illegible]ति ॥१०॥ द्वाद[illegible] स्तोत्राणि द्वादश शस्त्राणीत्यत्र द्वादशशब्देन स्तोत्राणां पृथक्त्वमवगम्यते। देवताप्रकाशनपक्षे सर्वैरपि मंत्रसंघैः कृतस्य प्रकाशनस्यैकत्वेन द्वादशसंख्या न स्यात्। प्रधानकर्मणां त्वाज्यस्तोत्रपृष्ठस्तोत्रादिनामकानां भिन्नत्वाद्द्वादशत्वसंख्योपपद्यते। एवं शस्त्रवाक्येऽपि योज्यं॥ विपक्षे बाधमाह ॥

अनर्थकं च तद्वचनमिति ॥११॥ अग्निष्टुतिः श्रूयते। आग्नेया ग्रहा भवंतीति। तत्रैव पुनरप्यन्यदुच्यते आग्नेयीषु स्तुवते। आग्नेयीः शंसंतीति। त्वत्पक्षे तद्वचनमनर्थकं स्यात्। चोदकप्राप्तेषु स्तो[illegible]हानुसारेण देवतापदस्योहे सत्याग्नेयत्वसिद्धेः। प्रधानकर्मपक्षे तु देवताप्रकाशनरूपत्वाभावेनोहाभावादाग्नेयमंत्रांतरविधिवचनमर्थवद्भवति॥ पुनरपि हेत्वंतरमाह ॥

अन्यश्चार्थः प्रतीयत इति ॥१२॥ संबद्धे वै स्तोत्रशस्त्रे इति ह्याम्नातं। संबंधश्च द्वयोर्भवति न त्वेकस्य।

तस्मात्स्तोत्रशस्त्रयोरर्थभेदः प्रतीयते । स च संस्कारपक्षे न संभवति । देवताप्रकाशनरूपस्यार्थस्यैकत्वात् । प्रधानकर्मपक्षे तु स्तोत्रकर्म शस्त्रकर्म चेत्यर्थभेद उपपद्यते । यद्यपि ष्टुञ् स्तुतौ शंसु स्तुतावित्येकार्थौ तथापि प्रगीतमंत्रसाध्यं स्तोत्रं अप्रगीतमंत्रसाध्यं शस्त्रमिति तयोर्विवेकः ॥ हेत्वंतरमाह ॥

अभिधानं च कर्मवदिति ॥१३॥ यथा प्रधानकर्माग्निहोत्रं जुहोतीति द्वितीयासंयोगेनाभिहितं तथा प्रउगं शंसतीत्यभिधीयते । अतस्तत्सादृश्यात्प्रधानकर्मत्वं ॥ हेत्वंतरमाह ॥

फलनिर्वृत्तिश्चेति ॥१४॥ स्तुतस्य स्तुतमसि । तै० सं० ३. २. ७. १. । इति स्तोत्रानुमंत्रणमाम्नायवाक्यशेषे स्तोत्रफलमेवाम्नातं । इंद्रियावंतो वनामहे धुक्षीमहि प्रजामिषं । तै० सं० ३. २. ७. २. । इति । न तु देवताप्रयुक्तं फलमाम्नातं । अतो न देवतासंस्कारः किंतु प्रधानकर्मेति स्थितं । अनेन तु निर्णयेन प्रयोजनं विकृतिषूहाभावः । संस्कारपक्षे तु यस्यां विकृतौ देवतांतरं तत्र तद्वाचकं पदमूहनीयं स्यात् । तन्मा भूदिति प्रधानकर्मत्वमुक्तं । एतच्च दशमाध्याये सूचितं । ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् । पू० मी० १०. ४. ४९. । इति ॥ अत्र संग्रहश्लोकौ । जै० न्या० २. १. ५. ॥

प्रउगं शंसतीत्यादौ गुणतोत प्रधानता । दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः ॥
स्तुत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनं । तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतमिति ॥

अग्निष्टोमे सुत्यादिने सूर्योदयात्पूर्वं प्रेषितो होता प्रातरनुवाकमनुब्रूयात् । एतच्चैतरेयब्राह्मणे प्रपंचितं । देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहीत्याहाध्वर्युरित्यादि ब्राह्मणं । २. १५. । तस्मिंश्च प्रातरनुवाकेऽग्निमीळ इत्यादिसूक्तमंतर्भूतं । तच्च व्याख्यातं । प्रातःसवने वैश्वदेवग्रहणादूर्ध्वं प्रउगशस्त्रं होत्रा शंसनीयं । तच्च शस्त्रं वायवा याहीत्यादिसप्ततृचात्मकं । एतच्च ब्राह्मणे ग्रहोक्थमित्यादिखंडे प्रपंचितं । ऐ० ब्रा० ३. १. । तथा पंचमाध्याये स्तोत्रमग्रे शस्त्रादित्यादिखंडे सूचितं च । आ० ५. १०. ॥ अत्रेयमनुक्रमणिका । वायो वाय्वैंद्रवायवमैत्रावरुणास्तृचा अश्विना द्वादशाश्विनैंद्रवैश्वदेवसारस्वतास्तृचाः सप्तैताः प्रउगदेवता इति । अस्यायमर्थः । वायवा याहीत्यादिकं नवर्चं सूक्तं । अग्निं नवेत्यतो नवशब्दस्यानुवृत्तेः । तत्राद्यस्तृचो वायुदेवताकः । द्वितीय इंद्रवायुदेवताकः । तृतीयो मित्रावरुणदेवताकः । अश्विनेत्यादिकं द्वादशर्चं सूक्तं । तत्राद्यस्तृच आश्विनः । द्वितीय ऐंद्रः । तृतीयो वैश्वदेवः । चतुर्थः सारस्वतः । तेषु तृचेषु प्रतिपाद्या वाय्वादयः सरस्वत्यंताः सप्तसंख्याकाः प्रउगशस्त्रस्य देवता इति । मधुच्छंदसोऽनुवर्तनात्स एवर्षिः । तथैवानुवृत्त्या गायत्रं छंदः ॥ वायव्ये तृचे प्रथमा ग्रहस्यैंद्रवायवस्यैका पुरोनुवाक्या । एतच्च ब्राह्मणे समाम्नातं । वायव्या पूर्वा पुरोनुवाक्यैंद्रवायव्युत्तरा । ऐ० ब्रा० २. २६. । इति । तथा सूचितं च । वायवा याहि दर्शतेंद्रवायू इमे सुता इत्यनुवाक्ये । आ० ५. ५. । इति ॥

## वायवा याहि दर्शतेमे सोमा अरंकृताः । तेषां पाहि श्रुधी हवं ॥१॥

## वायो इति । आ । याहि । दर्शत । इमे । सोमाः । अरंऽकृताः । तेषां । पाहि । श्रुधि । हवं ॥१॥

दर्शत हे दर्शनीय वायो कर्मस्थितस्मिन्ना याहि । आगच्छ । त्वदर्थमिमे सोमा अरंकृताः । अभिषवादिसंस्कारोऽलंकारः । तेषां तान्सोमान् । यद्वा । तेषामेकदेशमित्यध्याहारः । पाहि । स्वकीयं भागं पिबेत्यर्थः । तत्पानार्थं हवमस्मदीयमाह्वानं श्रुधि । शृणु । अत्र यास्कः । वायवायाहि दर्शनीयेमे सोमा अरंकृता अलंकृतास्तेषां पिब शृणु नो ह्वानं । नि० १०. २. । इति ॥ दर्शतेत्यत्र भृमृदृशीत्यादिसूत्रेण । उ० ३. ११०. । अतच्प्रत्यय औणादिकः । चित्त्वादंतोदात्तस्यामंत्रितानुदात्तत्वं । अर्तिस्तुस्वित्यादिना । उ० १. १३९. । मन्प्रत्ययांतस्य सोमशब्दस्य नित्स्वरः । अरमित्यत्र छांदसो रेफादेशः । अरंकृतशब्दे समासांतोदात्तत्वं । पा० ६. १. २२३. । बाधित्वाव्ययपूर्वपदप्रकृतिस्वरप्राप्तौ । पा० ६. २. २. । भूषणेऽलं । पा० १. ४. ६४. । इत्यलंशब्दस्य गतिसंज्ञायां गतिकारकेत्यादिना । पा० ६. २. १३९. । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन गतिरनंतरः । पा० ६. २. ४९. । इति पूर्वपदप्रकृतिस्वरत्वं । निपातत्वादलंशब्द आद्युदात्तः । पाहीत्यत्र पिबादेशाभावश्छांदसः । श्रुधीत्यत्र श्रुशृणुपृकृवृभ्यश्छंदसि । पा० ६. ४. १०२. । हेर्धिभावः । तिङंतादुत्तरस्य निघातो नास्ति । सेर्ह्यपिच्च । पा० ३. ४. ८७. । इति पित्त्वनिषेधादनुदात्ते निवारिते प्रत्ययस्वरः । हवमित्यत्र ह्वयतिधातोर्बहुलं छंदसि । पा० ६. १. ३४. । इति संप्रसारणे सत्युकारांतत्वादृदोरप् । पा० ३. ३. ५७. । इत्यप्प्रत्ययः । तस्य पित्त्वादनुदात्ते सति धातुस्वरः शिष्यते । संहितायां श्रुधीत्यस्यान्येषामपि दृश्यते । पा० ६. ३. १३७. । इति दीर्घः ॥

वाय उक्थेभिर्जरंते त्वामच्छा जरितारः। सुतसोमा अहर्विदः ॥२॥

वायो इति। उक्थेभिः। जरंते। त्वां। अच्छ। जरितारः। सुतऽसोमाः। अहःऽविदः॥२॥

हे वायो जरितारः स्तोतार ऋत्विग्यजमानास्त्वामच्छ त्वामभिलक्ष्योक्थेभिराज्यप्रउगादिशस्त्रैर्जरंते। स्तुवंति। कीदृशाः। सुतसोमा अभिषुतेन सोमेनोपेता अहर्विदः। अहःशब्द एकेनाह्ना निष्पाद्येऽग्निष्टोमादिक्रतौ वैदिकव्यवहारेण प्रसिद्धः। क्रत्वभिज्ञा इत्यर्थः॥ अर्चति गायतीत्यादिषु चतुश्चत्वारिंशत्स्वर्चतिकर्मसु धातुषु जरते ह्वयतीति पठितं। स्तुतिरप्यर्चना[illegible] स्तुत्यर्थो जरतिधातुः। अच्छशब्दस्य संहितायां निपातस्य च।पा॰ ६. ३. १३६.। इति दीर्घः। सुतसोमा इत्यत्र बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरः।पा॰ ६. २. १.। अहर्विद इत्यत्र समासस्वरं।पा॰ ६. १. २२३.। बाधित्वा तत्पुरुषे तुल्यार्थेत्यादिना।पा॰ ६. २. २.। द्वितीयापूर्वपद[illegible] प्राप्ते तदपवादत्वेन गतिकारकोपपदात्कृत्।पा॰ ६. २. १३९.। इति कृदुत्तरपदप्रकृतिस्वरः॥

वायो तव प्रपृंचती धेना जिगाति दाशुषे। उरूची सोमपीतये ॥३॥

वायो इति। तव। प्रऽपृंचती। धेना। जिगाति। दाशुषे। उरूची। सोमऽपीतये ॥३॥

हे वायो तव धेना वाक् सोमपीतये सोमपानार्थं दाशुषे दाश्वांसं दत्तवंतं यजमानं जिगाति। गच्छति। हे यजमान त्वया दत्तं सोमं पास्यामीत्येवं वायुर्ब्रूत इत्यर्थः। कीदृशी धेना। प्रपृंचती प्रकर्षेण सोमसंपर्कं कुर्वती। सोमगुणं वर्णयंतीत्यर्थः। उरूची उरून्बहून्यजमानान् गच्छंती। ये ये सोमयाजिनस्तान् सर्वान्वर्णयंतीत्यर्थः॥ प्रपृंचतीत्यत्र शतुरनुमः।पा॰ ६. १. १७३.। इति ङीबुदात्तः। श्लोको धारेत्यादिषु सप्तपंचाशत्सु वाङ्नामसु गणो धेना ग्ना इति पठितं। वर्ततेऽयत इत्यादिषु द्वाविंशाधिकशतसंख्येषु गतिकर्मसु गाति जिगातीति पठितं। दाशुष इत्यत्र गत्यर्थकर्मणि।पा॰ २. ३. १२.। इति चतुर्थी। उरूचीत्यत्र गौरादित्वेन।पा॰ ४. १. ४१.। ङीषि कृते प्रत्ययस्वरः। सोमपीतय इत्यत्र बहुव्रीहित्वाभावेऽपि व्यत्ययेन पूर्वपदप्रकृतिस्वरः॥

इंद्रवायू इमे सुता उप प्रयोभिरा गतं। इंदवो वामुशंति हि ॥४॥

इंद्रवायू इति। इमे। सुताः। उप। प्रयःऽभिः। आ। गतं। इंदवः। वां। उशंति। हि ॥४॥

एतस्या ऋच ऐंद्रवायवग्रहे द्वितीयपुरोनुवाक्यारूपेण विशेषविनियोगः पूर्वमेवोक्तः॥ हे इंद्रवायू भवदर्थमिमे सोमाः सुताः। अभिषुताः। तस्माद्युवां प्रयोभिरन्नैरस्मभ्यं दातव्यैः सहोपा गतं। अस्मत्समीपं प्रत्यागच्छतं। हि यस्मादिंदवः सोमा वां युवामुशंति कामयंते तस्मादागमनमुचितं॥ इंद्रवायूशब्दस्यामंत्रितायुदात्तत्वं। प्रीणयंति भोक्तॄनिति प्रयांस्यन्नानि। प्रीञ्धातोरंतर्भावितण्यर्थात्।पा॰ ३. १. २६.। असुन्प्रत्यये सति नित्स्वरः। गमिधातोर्लोण्मध्यमपुरुषद्विवचने बहुलं छंदसि।पा॰ २. ४. ७३.। इति शपो लुकि सत्यनुदात्तोपदेशेत्यादिना।पा॰ ६. ४. ३७.। मकारलोपः। ततो गतमिति भवति। उन्दी क्लेदन इति धातोरुंदेरिच्चादेः।उ॰ १. १३.। इत्युन्प्रत्ययः। आद्यचरस्येकारादेशः। तत इंदुशब्दस्य नित्स्वरः। सोमरसस्य द्रवत्वात्क्लेदनं संभवति। युष्मच्छब्दादेशस्य वामित्येतस्यानुदात्तं सर्वमपादादावित्यनुदात्तः। उशंतीत्यस्य निघाते हि च।पा॰ ८. १. ३४.। इति सूत्रेण प्रतिषिद्धे सति प्रत्ययस्वरः। हिशब्दस्य निपातस्वरः॥

वायविंद्रश्च चेतथः सुतानां वाजिनीवसू। तावा यातमुप द्रवत् ॥५॥

वायो इति। इंद्रः। च। चेतथः। सुतानां। वाजिनीवसू इति वाजिनीऽवसू। तौ। आ। यातं। उप। द्रवत् ॥५॥

अत्र चकारेणान्यः समुच्चीयते। संनिहितत्वाद्वायुरेव। हे वायो त्वमिंद्रश्च युवामुभौ [illegible]तानामभिषुता-

न्सोमान् चेतथः। जानीथः। यद्वा। अभिषुतानां सोमानां विशेषमित्यध्याहारः। कीदृशौ युवां। वाजिनीवसू। वाजिनीशब्दो यद्यप्युषोनामसु पठितस्तथाप्यत्रासंभवान्न गृह्यते। वाजोऽन्नं। तद्यस्यां हविःसंततावस्ति सा वाजिनी। तस्यां वसत इति तौ वाजिनीवसू। आमंत्रितत्वादनुदात्तः। तौ तथाविधौ युवां द्रवत्क्षिप्रमुप समीप आ यातं। आगच्छतं। षड्विंशतिसंख्याकेषु क्षिप्रनामसु नु क्षिप्रं मक्षु द्रवदिति पठितं। तत्र फिट्स्वरः॥ ॥३॥

वायविंद्रश्च सुन्वत आ यातमुप निष्कृतं। मक्ष्वि१त्था धिया नरा ॥६॥

वायो इति। इंद्रः। च। सुन्वतः। आ। यातं। उप। निःऽकृतं। मक्षु। इत्था। धिया। नरा॥६॥

हे वायो त्वमिंद्रश्च सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य निष्कृतं संस्कृतं संस्कर्तारं वा सोममुपा यातं। आयच्छतं। नरा हे नरौ पुरुषौ पौरुषेण सामर्थ्येनोपेतौ युवयोरागतयोश्च सतोर्धियामुना कर्मणा। मक्षु त्वरया संस्कारः संपत्स्यते। इत्था सत्यं॥ वायो इत्यस्यामंत्रितस्येति षाष्ठिकमाद्युदात्तत्वं। इंद्रशब्द ऋज्रेंद्रेत्यादिना। उ० २. २८.। रन्प्रत्ययांतत्वेन निपातितो ञ्नित्यादिर्नित्यं। पा० ६. १. १९७.। इत्याद्युदात्तः। चशब्दस्यादयोऽनुदात्ताः। फि० ४. १६.। इत्यनुदात्तः। सुन्वत इत्यत्र शतुरनुमो नद्यजादी। पा० ६. १. १७३.। इति विभक्तेरुदात्तत्वं। निरित्येष समित्येतस्य स्थाने। नि० १२. ७.। इति यास्कः। कृतशब्द आदिकर्मणि क्तः कर्तरि च। पा० ३. ४. ७१.। संस्कर्तुं प्रवृत्त इत्यर्थः। कुगतिप्रादयः। पा० २. २. १८.। इति समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते थाथघञ्क्ताजबित्रकाणां। पा० ६. २. १४४.। इत्यंतोदात्तः। गतिरनंतरः। पा० ६. २. ४९.। इति तु निस उदात्तत्वं न भवति। तद्धि कर्मणि क्ते विहितं। पा० ६. २. ४८.। निष्करोतीति निष्कृदिति क्विबंतव्याख्याने तु गतिकारकोपपदात्कृत्। पा० ६. २. १३९.। इत्यृकार उदात्तः स्यात्। धिया। सावेकाचस्तृतीयादिः। पा० ६. १. १६८.। इति विभक्तिरुदात्ता। नरा। सुपां सुलुगित्यादिना संबोधनद्विवचनस्य डादेशः। पदात्परत्वादामंत्रितस्येत्याष्टमिको निघातः॥

मित्रं हुव इति मैत्रावरुणस्तृचो गवामयन आरंभणीये चतुर्विंशेऽहनि प्रातःसवने मैत्रावरुणस्य स्तोत्रियः। तत्रैवाभिप्लवषडहेऽपि विनियुक्तः। तथा चाश्वलायनेन चतुर्विंशे होताजनिष्टेत्यादिखंडे मित्रं वयं हवामहे मित्रं हुवे पूतदक्षं। आ० ७. २.। इत्यादि सूचितं। तथाहाभिप्लवपृष्ठ्याहानीति खंडे परिशिष्टानावापानुद्धृत्य मित्रं वयं हवामहे मित्रं हुवे पूतदक्षं। आ० ७. ५.। इति च॥

मित्रं हुवे पूतदक्षं वरुणं च रिशादसं। धियं घृताचीं साधंता ॥७॥

मित्रं। हुवे। पूतऽदक्षं। वरुणं। च। रिशादसं। धियं। घृताचीं। साधंता ॥७॥

अहमस्मिन्कर्मणि [illegible]नाय पूतदक्षं पवित्रबलं मित्रं हुवे। तथा रिशादसं रिशानां हिंसकानामदसमत्तारं वरुणं च हुवे। आह्वयामि। कीदृशौ मित्रावरुणौ। घृतमुदकमंचति भूमिं प्रापयति या धीर्वर्षणकर्म तां घृताचीं धियं साधंता साधयंतौ कुर्वंतौ॥ मित्रशब्दः पुँल्लिंगः प्रातिपदिकस्वरेणांतोदात्तः। हुव इति ह्वयतेर्बहुलं छंदसीति शपो लुकि सति ह्वः संप्रसारणं। पा० ६. १. ३२.। इत्यनुवृत्तौ बहुलं छंदसीति संप्रसारण उवङादेशः। तिङ्ङतिङ इति निघातः। पूतशब्दः प्रत्ययस्वरेणांतोदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। वरुणशब्दः कॄवृदारिभ्य उनन्। उ० ३. ५३.। इत्युनन्प्रत्ययांतो नित्त्वादाद्युदात्तः। रिशंति हिंसंतीति रिशाः शत्रवः। इगुपधज्ञाप्रीकिरः कः। पा० ३. १. १३५.। इति कः। प्रत्ययस्वरेणोदात्तः। तानत्तीति रिशादाः। तं। सर्वधातुभ्योऽसुन्। उ० ४. १८८.। इत्यसुन्प्रत्यये नित्स्वरेणोत्तरपदमाद्युदात्तं। कृदुत्तरपदप्रकृतिस्वरेण स एवावशिष्यते। शेषनिघाते सत्येकादेश उदात्तेनोदात्तः। पा० ८. २. ५.। इति सवर्णदीर्घोऽप्युदात्त एव। धीरित्यप इत्यादिषड्विंशतौ कर्मनामसु पठितः। प्रातिपदिकस्वरेणांतोदात्तः। घृतमंचतीति घृताची। ऋत्विग्दधृगित्यादिना। पा० ३. २. ५९.। क्विन्यनिदितां। पा० ६. ४. २४.। इति नकारलोपः। अंचतेश्चोपसंख्यानं। पा० ४. १. ६. २.। इति ङीप्। अचः। पा० ६. ४. १३८.। इत्यकारलोपे चौ। पा० ६. ३. १३८.। इति दीर्घत्वं। घृतशब्दो नब्विषयस्यानिसंतस्येत्याद्युदात्तं बाधित्वा घृतादीनां च। फि० १. २२.। इत्यंतोदात्तः। समासस्येत्यंतोदात्तस्यापवादकं

तत्पुरुषे तुल्यार्थेति पूर्वपदप्रकृतिस्वरं बाधित्वा गतिकारकोपपदा[illegible] धात्वका रस्य लोपे सत्यनुदात्तस्य च यत्रोदात्तलोपः । पा॰ ६. १. १६१. । इति ङीप उदात्तत्वे प्राप्ते चौ । पा॰ ६. १. २२२. । इति पूर्वपदांतोदात्तत्वं । साधंता । राध साध संसिद्धावित्य[illegible]वितण्यर्थाल्लटः शत्रादेशे । पा॰ ३. २. १२४. । श्नुं बाधित्वा व्यत्ययेन शप् । अदुपदेशत्वादुपरि शतृप्रत्ययस्य लसार्वधातुकानुदात्तत्वं । द्वितीयाद्विवचनस्य शपश्चानुदात्तौ सुप्पितावित्यनुदात्तत्वे धातोरिति धातुस्वर एव शिष्यते । सुपां [illegible]ना विभक्तेरा-कारादेशः ॥

## ऋ॒तेन॑ मि॒त्रावरुणावृतावृधावृतस्पृशा । क्रतुं॑ बृ॒हंत॑माशाथे ॥ ८ ॥

## ऋ॒तेन॑ । मि॒त्रा॒व॒रु॒णौ॒ । ऋ॒त॒ऽवृ॒धौ॒ । ऋ॒त॒ऽस्पृ॒शा॒ । क्रतुं॑ । बृ॒हंतं॑ । आ॒शा॒थे॒ इति॑ ॥ ८ ॥

हे मित्रावरुणौ युवां क्रतुं प्रवर्तमानमिमं सोमयागमाशाथे । आनशाथे । व्याप्तवंतौ । केन निमित्तेन । ऋतेन अवश्यंभावितया सत्येन फलेन । अस्मभ्यं फलं दातुमित्यर्थः । कीदृशौ युवां । ऋतावृधौ । ऋतमित्युद-कनाम । नि॰ २. २५. । सत्यं वा यज्ञं वा । नि॰ ४. १९. । इति यास्कः । उदकादीनामन्यतमस्य वर्धयितारौ । अत एव ऋतस्पृशा उदकादीन् स्पृशंतौ । कीदृशं क्रतुं । बृहंतं अंगैरुपांगैश्चातिप्रौढं ॥ ऋतशब्दो घृतादित्वादं-तोदात्तः । मित्रावरुणावित्यत्र मित्रश्च वरुणश्चेति मित्राव[illegible]णौ । देवताद्वंद्वे च । पा॰ ६. ३. २६. । इति पूर्वपद-स्यानङादेशः । ऋतस्य वर्धयितारावित्यर्थेऽंतर्भावितण्यर्थाद्वृधेः क्विप् । अन्येषामपि दृश्यते । पा॰ ६. ३. १३७. । इति पूर्वपदस्य दीर्घः । ऋतस्पृशा । सुपां सुलुगिति डादेशः ॥ मित्रावरुणावित्याद्यामंत्रितत्रयस्य स्वस्वपूर्वपदा-त्परत्वादामंत्रितस्येत्याष्टमिको निघातः । ननु ऋतेनेत्येतस्य सुबामंत्रिते परांगवत्स्वरे । पा॰ २. १. २. । इति परांगवद्भावेनामंत्रितानुप्रवेशात्पादादित्वेन पदादपरत्वेन [illegible]भावादामंत्रितस्य चेत्याद्युदात्तेन भवितव्यमिति चेन्न । परांगवद्भावस्य सुबामंत्रिताश्रयत्वेन पदविधित्वात्समर्थः पदविधिः । पा॰ २. १. १. । इति नियमात् । इह च ऋतेन मित्रावरुणावित्यनयोराशाथे [illegible]त्याख्यातेनैवान्वयेन परस्परमसामर्थ्यात् । यत्र पुनः परस्परान्वयेन सामर्थ्यं तत्र परांगवद्भावात्पादादेराद्युदात्तत्वं भवत्येव । यथा मरुतां पितस्तदहं गृणामीति । मृग्रोरुतिः । उ॰ १. ९६. । इत्युतिप्रत्ययांतत्वेन पृश्न्यै वै पयसो मरुतो जाताः । तै॰ सं॰ २. २. ११. ४. । इत्यादावं-तोदात्तोऽपि हि मरुच्छब्दो मरुतां पितरित्यत्र [illegible]त्तो जातः । प्रकृते त्वृतेनेत्य-स्यासामर्थ्यादेव न परांगवद्भाव इति ॥ ऋतावृधावित्यत्र द्वितीयामंत्रितस्य निघाते कर्तव्य आमंत्रितं पूर्वमवि-द्यमानवत् । पा॰ ८. १. ७२. । इति प्रथमामंत्रितेनाविद्यमानवद्भवितव्यमिति चेत् भवतु । अत एव तस्याव्यवधा-[illegible] प्रथमपदात्परत्वेनैव द्वितीयामंत्रितं निहन्यते । यथा । इमं मे गंगे यमुने । ऋग्वे॰ १०. ७५. ५. । इत्यादौ गंगेशब्दस्याविद्यमानवद्भावेऽपि तस्याव्यवधायकत्वादेव म इत्येतदेव पदमुपजीव्य यमुनेशब्दस्य नि-घातः । किंच प्रकृते मित्रावरुणावित्यामंत्रितं सामान्यवचनं । तस्य विशेषणतया विशेषवचनमृतावृधाविति । अतो नामंत्रिते समानाधिकरणे सामान्यवचनं । पा॰ ८. १. ७३. । इति पूर्वस्याविद्यमानवद्भावप्रतिषेधादपि [illegible] द्वितीयस्य निघातः ॥ न[illegible]दावित्यनुवृत्तेर्ऋतावृधेत्यस्य द्वितीयपादादित्वान्न भवितव्यं निघातेन । अत एव हीमं मे गंग इत्यत्र शुतुद्रिपदस्य पदात्परस्यामंत्रितस्यापि पादादित्वादेवानिघातादाद्यु-दात्तत्वं जातं । तद्वदत्रापि भवितव्यं वक्तव्यो वा विशेष इति । उच्यते । मित्रावरुणपदस्य सुबामंत्रित इति परांगवद्भावेन परानुप्रवेशादेव ऋतावृधेत्यस्य न पादादित्वं । शुतुद्रिपदमपि तर्ह्येवमेव पूर्वस्य स[illegible] [illegible]विन न पादादिरिति निहन्येतेति चेन्न । परांगवद्भा[illegible] चाश्रित्य प्रवृत्तेः पदविधिः । अतस्तयोः सत्येव परस्परान्वये परांगवद्भावेन भवितव्यं । समर्थः पदविधिरिति नियमात् । शु[illegible]द्रि स[illegible]तप-दयोश्च न परस्परेणान्वयः । किंतु सचतेत्यनेनेत्यसामर्थ्यान्न परांगवद्भावः । प्रकृते तु मित्रावरुण[illegible]विति द्वयोरपि सामानाधिकरण्येन पर[illegible]रान्वयादस्ति सामर्थ्यमिति भवितव्यं परांगवद्भावेन । यथा मरुतां पितरि-त्यत्रेति विशेषः ॥ नन्वत एव तर्हि मित्रावरुणपदस्य परांगवद्भावेन पादादित्वादपादादाविति पर्युदासादा-मंत्रितनिघातो न स्यादिति चेन्न । पूर्वं सुबंतं परं चा[illegible] यः स्वरः प्रवर्तते तत्र सुबामंत्रित इति परांगवद्भावः । भवति चैवंविध ऋतावृधपदनिघात इति । तत्र पूर्वस्य परांगव[illegible]त्वात्स प्रवर्तते । मित्रावरुणपदनिघात[illegible] पूर्वमेव [illegible] न परमामंत्रितमिति न परांगवद्भावः ॥ ननु परांगवद्भावव-

न्निघातोऽपि पदविधिरिति । ऋतेनेत्यनेनासामर्थ्यात्ततः पदात्परस्य मित्रावरुणपदस्य न स्यादिति चेन्न । समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः । पा॰ २. १. १. ११. । इति निघाते पदविधावपि समानवाक्यत्वमेव पर्याप्तं न परांगवद्भाववत्परस्परान्वयोऽपीत्यलं ॥ क्रतुं । कृञः कतुः । उ॰ १. ७८. । प्रत्ययस्वरेणादिरुदात्तः । आशाथे । आनशाथे । छंदसि लुङ्लङ्लिटः । पा॰ ३. ४. ६. । इति वर्तमाने लिट् । नुडभावश्छांदसः ॥

**क॒वी नो॑ मि॒त्रावरु॑णा तुविजा॒ता उ॑रु॒क्षया॑ । दक्षं॑ दधाते अ॒पसं॑ ॥ ९ ॥**

**क॒वी इति॑ । न॒ः । मि॒त्रावरु॑णा । तु॒वि॒ऽजा॒तौ । उ॒रु॒ऽक्षया॑ । दक्षं॑ । द॒धा॒ते॒ इति॑ । अ॒पसं॑ ॥ ९ ॥**

मित्रावरुणावेतौ देवौ नोऽस्माकं दक्षं बलमपसं कर्म च दधाते । पोषयतः । कीदृशौ । कवी मेधाविनौ तुविजातौ बहूनामुपकारकतया समुत्पन्नौ उरुक्षया बहुनिवासौ । विप्रो धीर इत्यादिषु चतुर्विंशतिसंख्याकेषु मेधाविनामसु कविर्मनीषीति पठितं । उरु तुवीत्येतौ शब्दौ द्वादशसु बहुनामसु पठितौ । ओजः पाज इत्यादिष्वष्टाविंशतिसंख्याकेषु बलनामसु दक्षो वीळ्विति पठितं । अपस्शब्दः षड्विंशतिसंख्याकेषु कर्मनामसु पठितः ॥ मित्रावरुणा । मित्रशब्दः प्रातिपदिकस्वरेणांतोदात्तः । वरुणशब्दो नित्स्वरेणाद्युदात्तः । द्वंद्वे देवताद्वंद्वे च । पा॰ ६. २. १४१. । इत्युभावपि शिष्येते । तुविजातौ । बहूनामुपकारकतया तत्संबंधित्वेन जाताविति षष्ठीसमासे समासांतोदात्तत्वं । चतुर्थीसमासे हि क्ते च । पा॰ ६. २. ४५. । इति पूर्वपदप्रकृतिस्वरः स्यात् । उरूणां बहूनां क्षयावुरुक्षयौ । क्षि निवासगत्योरिति धातोः क्षियंत्यस्मिन्निति क्षयः । अधिकरणे एरच् । पा॰ ३. ३. ५६. । इत्यच्प्रत्ययांतस्य चित इत्यंतोदात्तत्वे प्राप्ते क्षयो निवासे । पा॰ ६. १. २०१. । इत्याद्युदात्तत्वं विहितं । समासे तु समासस्येत्यंतोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेण प्राप्तमुत्तरपदाद्युदात्तत्वं यद्यपि थाथादिस्वरेणांतोदात्तेन बाध्यते तथापि परादिश्छंदसि बहुलं । पा॰ ६. २. १९९. । इत्युत्तरपदाद्युदात्तत्वं द्रष्टव्यं । दक्षो दक्षतेरुत्साहकर्मणो घञ् । ञित्वादाद्युदात्तः । आप्यते फलमनेनेत्यपः कर्म । आपः कर्माख्यायां ह्रस्वो नुट् च वा । उ॰ ४. २०७. । इत्यसुनंतस्यापसस्पारे । ऋग्वे॰ ६. ६९. १. । इत्यादौ नित्त्वादाद्युदात्तस्याप्यपस्शब्दस्यात्र व्यत्ययेन प्रत्ययाद्युदात्तत्वं ॥ ॥ ४ ॥

अश्विनेति द्वादशर्चं तृतीयं सूक्तं । [illegible] प्रातरनुवाकस्याश्विने क्रतौ विनियुक्तः । तथा च सूचितं । अथाश्विन एषो उषाः प्रातर्युजेति चतस्रोऽश्विना यज्वरीरिषः । आ॰ ४. १५. । इति ॥

**अश्वि॑ना॒ यज्व॑री॒रिषो॒ द्रव॑त्पाणी॒ शुभ॑स्पती । पुरु॑भुजा चन॒स्यतं॑ ॥ १ ॥**

**अश्वि॑ना । यज्व॑रीः । इषः॑ । द्रव॑त्पाणी॒ इति॒ द्रव॑त्ऽपाणी । शुभः॑ । प॒ती॒ इति॑ । पुरु॑ऽभुजा । च॒न॒स्यतं॑ ॥ १ ॥**

हे अश्विनौ युवामिषो हविर्लक्षणान्यन्नानि चनस्यतं । इच्छतं । भुंजाथामित्यर्थः । यद्यपि चनःशब्दोऽन्नवाची तथापीष इत्यनेन सह नास्ति [illegible] । [illegible] प्रयुक्तत्वात् । वक्तव्यमुवाच । समूलकाषं कषतीत्यादौ यथा पुनरुक्त्यभावस्तद्वत् । कीदृशीरिषः । यज्वरीः । यागनिष्पादयित्र्यः । कीदृशावश्विनौ । द्रवत्पाणी । हविर्ग्रहणाय द्रवद्भ्यां धावद्भ्यां पाणिभ्यामुपेतौ । शुभस्पती । शोभनस्य कर्मणः पालकौ । पुरुभुजा । विस्तीर्णभुजौ बहुभोजिनौ वा ॥ अश्विना । आमंत्रितस्येति षाष्ठिकमाद्युदात्तत्वं । यज्वरीः । यागकारणानामप्यन्नानामा[illegible] स्वव्यापारे कर्तृत्वविवक्षया सुयजोर्ङ्वनिप् । पा॰ ३. २. १०३. । इति ङ्वनिप्प्रत्ययः । वनो र च । पा॰ ४. १. ७. । इति ङीप् । ततः [illegible] रेफादेशः । प्रत्ययद्वयस्यानुदात्तौ सुप्पितावित्यनुदात्तत्वे धातुस्वर [illegible] । इषःशब्दे शसोऽनुदात्तत्वात्प्रातिपदिकस्वर एव शिष्यते । द्रवंतौ धावंतौ पाणी ययोस्तयोः संबोधनं द्रवत्पाणी इति । तस्यामंत्रिताद्युदात्तत्वं न पुनराष्टमिको निघातोऽपादादाविति प्रतिषेधात् । इष इति पूर्वपदस्य सुबामंत्रित इति परांगवद्भावेन मित्रावरुणावृतावृधौ । ऋग्वे॰ १. २. ८. । इतिवत्पादादित्वान्निघातो नेति चेन्न । तत्र सामानाधिकरण्येन परस्परान्वयात् । इह त्विषो द्रवत्पाणी इत्यनयोः सरस्वतिशुतुद्रिपदवदसामर्थ्येन प्रयुक्तत्वात् । शुभ इति शुभ शुम्भ दीप्तावित्यस्य संपदादित्वाद्भावे क्विबंतस्य षष्ठ्येकवचनं । षष्ठ्याः पतिपुत्र । पा॰ ८. ३. ५३. । इति विसर्जनीयस्य सत्वं । तस्य पती

इत्यामंत्रिते परतः परांगवद्भावादामंत्रितायुदात्तत्वं । न पुनराष्टमिको निघातः । तस्मिन्कर्तव्ये द्रवत्पाणी इति पूर्वस्यामंत्रितस्यामंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवद्भावेन पादादित्वादपादादाविति प्रतिषेधात् । ननु [illegible]वितिवन्नामंत्रिते समानाधिकरण इत्यविद्यमानव[illegible]त्वप्रतिषेधेन भवितव्यमिति चेन्न । मित्रावरुणपदं हि सामान्यवचनमिति [illegible]प्रतिषेधः । द्रवत्पाणीपदं तु न तथेति वैषम्यात् । पुरुभुजा । पुरू विस्तीर्णौ भुजौ ययोस्तौ । आमंत्रितायुदात्तत्वं । सुपां सुलुगिति डादेशः । पुरु बहु भुंजाते इति वा । चनस्यतमित्यत्र चायतेरन्ने ह्रस्वश्च । उ० ४. १९९. । इति चायृ पूजानिशामनयोरित्यस्यासुन्प्रत्यय आकारस्य ह्रस्वे चानुकृष्टे नुडागमे च । उ० ४. १९६. । लोपो व्योर्वलि । पा० ६. १. ६६. । इति यकारलोपे चनस्शब्दोऽन्ननामसु पठितः । तदात्मन इच्छतीति सुप आत्मनः क्यच् । पा० ३. १. ८. । सनाद्यंताः । पा० ३. १. ३२. । इति धातुत्वाल्लोण्मध्यमद्विवचनं । क्यचः प्रत्ययस्वरेणोदात्तत्वं । शपेकादेशे कृत एकादेश उदात्तेनोदात्तः । पा० ८. २. ५. । इत्युदात्तः । उपर्याख्यातस्य लसार्वधातुकानुदात्तत्वे स्वरितत्वं । न च तिङ्ङतिङ इति निघातः । पूर्वस्यामंत्रितस्याविद्यमानवत्त्वेन पदादपरत्वा[illegible] तदप्राप्तेः ॥

अश्विना पुरुदंससा नरा शवीरया धिया । धिष्ण्या वनतं गिरः ॥२॥

अश्विना । पुरुऽदंससा । नरा । शवीरया । धिया । धिष्ण्या । वनतं । गिरः ॥२॥

अश्विना हे अश्विनौ युवां गिरोऽस्मदीयाः स्तुतीर्धियादरयुक्तया बुद्ध्या वनतं । संभजतं । स्वीकुरुतं । कीदृशावश्विनौ । पुरुदंससा बहुकर्माणौ । षड्विंशतिसंख्याकेषु कर्मनामसु दंस इति पठितं । नरा नेतारौ धिष्ण्या धार्ष्ट्ययुक्तौ बुद्धिमंतौ वा । कीदृश्या धिया । शवीरया गतियुक्तया । अप्रतिहतप्रसरयेत्यर्थः ॥ अश्विनेत्याद्यामंत्रितचतुष्टयस्य षाष्ठिकमामंत्रितायुदात्तत्वं । पादादित्वान्नाष्टमिको निघातः । पुरुदंससेत्यपि हि पादादिरेवामंत्रितं पूर्वमविद्यमानवदिति पूर्वस्याविद्यमानवत्त्वात् । नामंत्रिते समानाधिकरण इति पूर्वस्य सामान्यवचनत्वेनास्य विशेषवचनत्वेन नाविद्यमानवत्त्वमिति चेन्न । [illegible]पुरुदंससः शब्दस्याप्यश्विनोरेव रूढ्या प्रयुज्यमानतया सामान्यशब्दत्वात् । सामान्यवचनं नाविद्यमानवदित्युक्तेऽर्थात्परस्य विशेषवचनत्वावगमात् ॥ उभयोः सामान्यवचनत्वे पर्यायत्वेन पौनरुक्त्यात्सहाप्रयोग इति चेन्न । गुणविशेषसंकी[illegible]नेकनाम[illegible]विशेषसंबंधसंकीर्तनस्यापि स्तुत्युपयोगेन सप्रयोजनत्वान्निष्प्रयोजनपुनर्वचनस्यैव पुनरुक्तत्वात् । अश्विपुरुदंसःशब्दयोरेकार्थवृत्तित्वेऽपि [illegible]व प्रवृत्तिनिमित्तभेदाभावेनासामानाधिकरण्यादपि नाविद्यमानवत्त्वप्रतिषेधः । भिन्नप्रवृत्तिनिमित्तानामेव [illegible] वृत्तिः सामानाधिकरण्यं ॥ अश्विशब्दस्याश्वसंबंधो निमित्तं पुरुदंसःशब्दस्य तु बहुकर्मसंबंध इति प्रवृत्तिनिमित्तभेद इति चेन्न । तद्धि द्वयं व्युत्पत्तिमात्रनिमित्तं न प्रवृत्तिनिमित्तं । व्युत्पत्तिनिमित्तभेदमात्रेणापि सामानाधिकरण्याभिधाने वृक्षमही[illegible]योरपि तथात्वप्रसंगः । अत एव हीडे रंतेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुति । एतानि ते अघ्निये नामानि । तै० सं० ७. १. ६. ८. । इत्यत्र स[illegible]सोपयोगित्वेनेडादिशब्दानामेतानि ते अघ्निये नामानीति वचनेन पर्यायाणामप्यनेकविशिष्टनामसंबंधनिबंधनस्तुत्यर्थत्वेनैव सहप्रयोगः । स्तुत्युपयोगेनैव व्युत्पत्तिनिमित्तभे[illegible] प[illegible]यत्वेनासामानाधिकरण्यादेव नामंत्रित इति निषेधाभावादामंत्रितं [illegible]र्वमविद्यमानवदिति पूर्वपूर्वस्याविद्यमानवत्त्वात्सर्वेषां षाष्ठिकमायुदात्तत्वं । तद्वत्प्रकृतेऽपि ॥ कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च — कृशृपृकटिपटिशौटिभ्य ईरन् । उ० ४. ३०. । इत्यत [illegible] ब[illegible]लवचनादन्यत्रापीत्यनेन शु गताविति धातोरीरन्प्रत्यये कृते सति नित्त्वाच्छवीरयाशब्द आद्युदात्तः । धियेत्यत्र साविकाच इति विभक्तिरुदात्ता । वनतमित्यत्र शपः पित्त्वाल्लोण्मध्यमद्विवचनस्य लसार्वधातुकत्वाच्च वन षण संभक्ताविति धातूदात्तत्वमेव शिष्यते । न च तिङ्ङतिङ इति निघातः पूर्वामंत्रितस्याविद्यमानवत्त्वेन पादादित्वात् । गिरः । सुपोऽनुदात्तत्वे प्रातिपदिकस्वरः शिष्यते ॥

दस्रा युवाकवः सुता नासत्या वृक्तबर्हिषः । आ यातं रुद्रवर्तनी ॥३॥

दस्रा । युवाकवः । सुताः । नासत्या । वृक्तऽबर्हिषः । आ । यातं । रुद्रवर्तनी इति रुद्रऽवर्तनी ॥३॥

अत्राश्विनेत्यनुवर्तते। हे अश्विनावा यातं। अस्मिन्कर्मण्यागच्छतं। किमर्थमिति तदुच्यते। सुता युष्मदर्थं सोमा अभिषुताः। तान् स्वीकर्तुमिति शेषः। कीदृशावश्विनौ। दस्रा दस्रौ शत्रूणामुपक्षपयितारौ। यद्वा। देववैद्यत्वेन रोगाणामुपक्षपयितारौ। अश्विनौ वै देवानां भिषजौ।ऐ० ब्रा० १. १८.। इति श्रुतेः। नासत्या। असत्यमनृतभाषणं। तद्रहितौ। अत्र यास्कः। सत्यावेव नासत्यावित्यौर्णवाभः। सत्यस्य प्रणेतारावित्याग्रायणः।नि० ६. १३.। इति। रुद्रवर्तनी। रुद्रशब्दस्य रोदनं प्रवृत्तिनिमित्तं। यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति तैत्तिरीयाः। यद्रोदयंति तस्माद्रुद्रा इति वाजसनेयिनः। रुद्राणां शत्रुरोदकानां शूरभटानां वर्तनिर्मार्गो धाटीरूपो ययोस्तौ रुद्रवर्तनी। यथा शूरा धाटीमुखेन शत्रून् रोदयंति तद्वदेतावित्यर्थः। युवाकव इत्यभिषुतसोमानां विशेषणं। वसतीवरीभिरेकधनाभिश्चाद्भिर्मिश्रिता इत्यर्थः। वृक्तबर्हिषः। वृक्तानि मूलैर्वर्जितानि बर्हींष्यास्तरणरूपाणि येषां सोमानां ते वृक्तबर्हिषः। यद्वा। भरता इत्यादिष्वृत्विङ्नामसु वृक्तबर्हिष इति। तदानीं तृतीयार्थे प्रथमा। ऋत्विग्भिरभिषुता इत्यन्वयः॥ दस्रा। आमंत्रितत्वान्निघातः। युवाकवः। यु मिश्रणे। युवंति मिश्रीभवंति वसतीवरीप्रभृतिभिः अप्यद्रव्यैरिति युवाकवः। कटिकुष्यादिष्वगणितस्यापि यौतेर्बहुलग्रहणात्।उ० ३. ७७.। काकुप्रत्ययः। तस्य कित्त्वेन गुणाभावादुवङादेशः। प्रत्ययस्वरेणाकार उदात्तः। न विद्यतेऽसत्यं ययोस्तौ नासत्यौ। नभ्राण्नपान्नवेदा नासत्येत्यादिना।पा० ६. ३. ७५.। प्रकृतिवद्भावान्नञो नलोपाभावः। पादादित्वेनानिघातादामंत्रिताद्युदात्तत्वं। वृक्तबर्हिषः। वृक्तं मूलैर्वर्जितं बर्हिरास्तीर्णं येषां सोमानां ते वृक्तबर्हिषः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण क्तप्रत्ययस्वर एव शिष्यते। आ इत्यत्रोपसर्गाश्चाभिवर्जं।फि० ४. १३.। इत्युदात्तः। रुद्रवर्तनी। आमंत्रितस्य निघातः॥

इंद्रा याहि चित्रभानो सुता इमे त्वायवः। अण्वीभिस्तना पूतासः॥४॥

इंद्र। आ। याहि। चित्रभानो इति चित्रऽभानो। सुताः। इमे। त्वाऽयवः। अण्वीभिः। तना। पूतासः॥४॥

चित्रभानो चित्रदीप्ते हे इंद्रास्मिन्कर्मण्या याहि। आगच्छ। सुता अभिषुता इमे सोमास्त्वायवस्त्वां कामयमाना वर्तंते। अण्वीभिः। अग्रुव इत्यादिषु द्वाविंशतिसंख्याकेष्वंगुलिनामस्वण्व्य इति पठितं। ऋत्विजामंगुलिभिः सुता इत्यन्वयः। किंच। एते सोमास्तना नित्यं पूतासः पूताः शुद्धा दशापवित्रेण बहुधा शोधितत्वात्॥ इंद्रशब्दं यास्को बहुधा निर्वक्ति। इंद्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयतीति वेरां धारयतीति वेंदवे द्रवतीति वेंदौ रमत इति वेंद्धे भूतानीति वा तद्यदेनं प्राणैः समैंधंस्तदिंद्रस्येंद्रत्वमिति विज्ञायत इदंकरणादित्याग्रायण इदंदर्शनादित्यौपमन्यव इंदतेर्वैश्वर्यकर्मण इंदञ्छत्रूणां दारयिता वा द्रावयिता वादरयिता च यज्वनां।नि० १०. ८.। इति। अस्यायमर्थः। दॄ विदारण इति धातुः। इरामन्नमुद्दिश्य तन्निष्पादकजलसिद्ध्यर्थं दृणाति मेघं विदीर्णं करोतीतींद्रः। डुदाञ् दान इति धातुः। इरामन्नं वृष्टिनिष्पादनेन ददातीतींद्रः। धाञ् पोषणार्थः। इरामन्नं तृप्तिकारणं सस्यं दधाति जलप्रदानेन पुष्णातीतींद्रः। इरासुत्पादयितुं कर्षकमुखेन भूमिं विदारयतीतींद्रः। पूर्वोक्तपोषणमुखेनेरां धारयति विनाशराहित्येन स्थापयतीतींद्रः। इंदुः सोमो वल्लीरसः। तदर्थं यागभूमौ द्रवति धावतीतींद्रः। इंदौ यथोक्ते सोमे रमते क्रीडतीतींद्रः। ञिइन्धी दीप्ताविति धातुः। भूतानि प्राणिदेहानिंद्धे जीवचैतन्यरूपेणांतः प्रविश्य दीपयतीतींद्रः। एतदेवाभिप्रेत्य वाजसनेयिन आमनंति। इंधो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषः। तं वा एतमिंधं संतमिंद्र इत्याचक्षते। परोक्षेण परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः।शत० ब्रा० १४. ६. १०. २.। इति। तद्यदित्यादिकं ब्राह्मणांतरवाक्यं। तत्तत्रेंद्रविषये निर्वचनमुच्यत इति शेषः। यद्यस्मात्कारणादेनं परमात्मरूपमिंद्रं देवं प्राणैर्वागादिभिः प्राणापानादिवायुभिश्च सहितं समैंधन्नुपासका ध्यानेन सम्यक् प्रकाशितवंतस्तत्तस्मात्कारणादिंद्रनाम संपन्नं। अस्मिन्पक्ष इध्यते दीप्यत इति कर्मणि व्युत्पत्तिः। आग्रायणनामको मुनिरिदंकरणादिंद्र इति निर्वचनं मन्यते। इंद्रो हि परमात्मरूपेणेदं जगत्करोति। औपमन्यवनामको मुनिरिदंदर्शनादिंद्र इति निर्वचनमाह। इदमित्यपरोक्षमुच्यते। विवेकेन हि परमात्मानमपरोक्षेण पश्यति। एतदेवाभिप्रेत्यारण्यकांडे समाम्नायते। स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमितीऽ३। तस्मादिदंद्रो नामेदंद्रो ह वै नाम तमिदंद्रं संतमिंद्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः।ऐ० आ० २.

४. ३.। इति। इदि परमैश्वर्य इति धातुः। तस्य च जगद्रूपत्वं परमैश्वर्यं। तद्योगादिंद्रः। अनेनाभिप्रायेण श्रूयते। इंद्रो मायाभिः पुरुरूप ईयते। ऋग्वे° ६. ४७. १८.। इति। इनशब्दस्येश्वरवाचकस्याकारलोपे सति नकारांतमिन्निति पदं भवति। दॄ भय इति धातुः। स च परमेश्वरः शत्रूणां दारयिता भीषयितेतींद्रः। द्रु गताविति धातुः। शत्रूणां द्रावयिता पलायनं प्रापयितेतींद्रः। यज्वनां यागानुष्ठायिनामादरयिता भयस्य परिहर्ता। एवमेतानि निर्वचनानि द्रष्टव्यानि॥ इंद्रेत्यत्रामंत्रितावुदात्तत्वं। आ इत्यत्र निपातत्वेनाद्युदात्तः। चित्रभानो। पदात्परत्वादामंत्रितनिघातः। त्वामिच्छंतीत्यर्थे युष्मच्छब्दात्सुप आत्मनः क्यच्। पा° ३. १. ८.। प्रत्ययोत्तरपदयोश्च। पा° ७. २. ९८.। इति मपर्यंतस्य त्वादेशः। क्याच्छंदसि। पा° ३. २. १७०.। इति क्यजंता-दुप्रत्ययः। त्वत्व इति प्राप्तौ युष्मदस्मदोरनादेशे। पा° ७. २. ८६.। इत्यविभक्तावपि हलादौ व्यत्ययेनात्वं। उकारः प्रत्ययस्वरेणाद्युदात्तः। अणुशब्दः सौक्ष्म्यवाचकस्तद्योगात्प्रकृतेऽंगुलीषु वर्तते। वोतो गुणवचनात्। पा° ४. १. ४४.। इति ङीषि प्राप्ते व्यत्ययेन ङीन्। नित्त्वादाद्युदात्तः। तना इत्ययं निपातो नित्यमित्यर्थे निपातत्वादाद्युदात्तः। पूतासः। आज्जसेरसुक्। पा° ७. १. ५०.। इत्यसुक्॥

इंद्रा याहि धियेषितो विप्रजूतः सुतावतः। उप ब्रह्माणि वाघतः॥५॥

इंद्र। आ। याहि। धिया। इषितः। विप्रऽजूतः। सुतऽवतः। उप। ब्रह्माणि। वाघतः॥५॥

हे इंद्र त्वमा याहि। अस्मिन्कर्मण्यागच्छ। किमर्थं। वाघत ऋत्विजो ब्रह्माणि वेदरूपाणि स्तोत्राण्युपैतुं। कीदृशस्त्वं। धियास्मदीयया प्रज्ञयेषितः प्राप्तः। अस्मद्भक्त्या प्रेरित इत्यर्थः। विप्रजूतः। यथा यजमानभक्त्या प्रेरितस्तथान्यैरपि विप्रैर्मेधाविभिर्ऋत्विग्भिः प्रेरितः। कीदृशस्य वाघतः। सुतावतः अभिषुतसोमयुक्तस्य॥ केत इत्यादिष्वेकादशसु प्रज्ञानामसु धीरिति पठितं। चतुर्विंशतिसंख्याकेषु मेधाविनामसु विप्रो धीर इति पठितं। भरता इत्यादिष्वष्टस्वृत्विङ्नामसु वाघत इति पठितं। इषित इत्यत्रेष गतावित्यस्मान्निष्ठायामिडागमः। आगमा अनुदात्ताः। म° ३. १. ३. ७.। इतीटोऽनुदात्तत्वात् क्तस्वरः शिष्यते। विप्रजूतः। डुवप् बीजतंतुसंतान इति धातोर्ऋज्रेंद्राग्रवज्रविप्रेत्यादिना। उ° २. २८.। रन्प्रत्ययांतो विप्रशब्दो निपातितः। निपातनादुपधाया इकारो लघूपधगुणाभावश्च। नित्त्वादाद्युदात्तः। तैर्जूतः प्राप्तः। जू इति सौत्रो धातुर्गत्यर्थः। श्र्युकः किति। पा° ७. २. ११.। इतीट्प्रतिषेधः। तृतीया कर्मणि। पा° ६. २. ४८.। इति पूर्वपदप्रकृतिस्वरत्व। सुतावतः। छांदसं दीर्घत्वं। मतुपोऽनुदात्तत्वात् क्तप्रत्ययस्वर एव शिष्यते। ब्रह्माणि। नब्विषयस्यानिसंतस्येत्याद्युदात्तः। वाघच्छब्द ऋत्विङ्नामसु पठितः प्रातिपदिकस्वरः॥

इंद्रा याहि तूतुजान उप ब्रह्माणि हरिवः। सुते दधिष्व नश्चनः॥६॥

इंद्र। आ। याहि। तूतुजानः। उप। ब्रह्माणि। हरिऽवः। सुते। दधिष्व। नः। चनः॥६॥

हरिशब्द इंद्रसंबंधिनोरश्वयोर्नामधेयं। हरी इंद्रस्य रोहितोऽग्नेरिति तदीयाश्वनामत्वेन पठितत्वात्। हे हरिवः अश्वयुक्तेंद्र त्वं ब्रह्माण्युपैतुमा याहि। कीदृशस्त्वं। तूतुजानः त्वरमाणः। आगत्य चास्मिन्सुते सोमा-भिषवयुक्ते कर्मणि नोऽस्मदीयं चनोऽन्नं हविर्लक्षणं दधिष्व। धारय। स्वीकुर्वित्यर्थः॥ तूतुजानः। तुजेर्लिटि लिटः कानज्वा। पा° ३. २. १०६.। इति कानजादेशः। तुजादीनां दीर्घोऽभ्यासस्य। पा° ६. १. ७.। इत्यभ्यासस्य दीर्घत्वं। अभ्यस्तानामादिः। पा° ६. ५. १८९.। इत्याद्युदात्तत्वं। हरिव इत्यत्र हरयोऽस्य संतीति मतुपि छंदसीरः। पा° ८. २. १५.। इति मकारस्य वत्वं। संबुद्धावुगिदचां। पा° ७. १. ७०.। इति नुम्। संयोगांतलोपे। पा° ८. २. २३.। नकारस्य मतुवसो रुः संबुद्धौ छंदसि। पा° ८. ३. १.। इति रुत्वं। आष्टमिको निघातः। ब्रह्माणीत्यस्य हरिव इत्यनेनासामर्थ्यात्समर्थः पदविधिरिति नियमात्सुबामंत्रितपरांगवद्भावाभावेनामंत्रित-निघाताभावादाद्युदात्तत्वे सत्युपेत्येकारस्य सन्नतरः। दधिष्वेत्यत्र दधातेर्लोटि थास्। थासः से। पा° ३. ४. ८०.। सवाभ्यां वामौ। पा° ३. ४. ९१.। इत्येकारस्य वादेशः। छंदस्युभयथा। पा° ३. ४. ११७.। इति सार्वधातुकार्धधातुकसंज्ञयोः सत्योः सार्वधातुकत्वेन शपि। पा° ३. १. ६८.। तस्य श्लौ च द्विर्भावः। पा° ६. १. १०.। आर्धधातुकत्वेनेडागमश्च। पा° ७. २ ३५.। आतो लोप इटि च। पा° ६. ४. ६४.। त्याकारलोपः। चनः। चायतेरन्ने ह्रस्वश्च। उ° ४. १९९.। इत्यसुनंतः। चका ासुडागमे यलोपः॥ ॥५॥

ओमासश्चर्षणीधृतो विश्वे देवास आ गत। दाश्वांसो दाशुषः सुतं ॥७॥

ओमासः। चर्षणिऽधृतः। विश्वे। देवासः। आ। गत। दाश्वांसः। दाशुषः। सुतं ॥७॥

हे विश्वे देवास एतन्नामका देवविशेषा दाशुषो हविर्दत्तवतो यजमानस्य सुतमभिषुतं सोमं प्रत्या गत। आगच्छत। ते च देवा ओमासो रक्षकाः चर्षणीधृतो मनुष्याणां धारका दाश्वांसः फलस्य दातारः। मनुष्या इत्यादिषु पंचविंश[illegible]के मनुष्यनामसु चर्षणिशब्दः पठितः। अश्विनावित्यादिष्वेकान्नशतसंख्याके देवविशेषनामसु विश्वे देवाः साध्या इति पठितं। एतामृचं यास्क एवं व्याख्यातवान्। अवितारो वावनीया वा मनुष्यधृतः सर्वे च देवा इहागच्छत दत्तवंतो दत्तवतः सुतमिति तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते यत्तु किंचिद्बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिंगमिति शाकपूणिः। नि॰ १२. ४०.। इति। अत्र विश्वशब्दः सर्वशब्दपर्याय इति यास्कस्य मतं। देवविशेषस्यैवासाधारणं लिंगमिति शाकपूणेर्मतं॥ अवंतीत्योमासो देवाः। मन्निन्वृत्त्यर्विसिविसिशुषिभ्यः कित्। उ॰ १. १४३.। इति मन्प्रत्ययः। ज्वरत्वरस्रिव्यविमवामुपधायाश्च। पा॰ ६. ४. २०.। इत्यूठ्। मनः कित्त्वेऽपि बाहुलकत्वाद्गुणः। आज्जसेरसुक्। पा॰ ७. १. ५०.। इति जसेरसुगागमः। आमंत्रिताद्युदात्तत्वं। चर्षणयो मनुष्याः। तान्वृष्टिदानादिना धारयंतीति चर्षणीधृतो देवाः। पूर्व[illegible]य सामान्यवचनस्य विभाषितं विशेषवचने बहुवचनं। पा॰ ८. १. ७४.। इत्यविद्यमानवत्त्वप्रतिषेधात्पादादित्वेन निघातः। नन्वत एव [illegible]चित इति परांगवत्त्वेनैकपदीभावात्पदादपरत्वेन कथं निघात इति चेन्न। वत्करणं स्वाश्रयमपि यथा स्यात्। म॰ ८. १. ७२.। इति वचनात्पदभेदप्रयुक्तस्य निघातस्याप्युपपत्तेः। ऐकपद्येऽप्याद्युदात्तत्वेऽनुदात्तं पदमेकवर्जमिति सुतरामेव निघातो भविष्यति॥ इत्थमेव तर्हि द्रवत्पाणी शुभस्पती इत्यत्रापि परांगवत्त्वेनैकपद्यादुत्तरस्य शेषनिघातप्रसंग इति चेन्न। तत्र परांगवद्भावस्य परेणामंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवद्भावेन बाधितत्वात्। इह पुनर्विभाषितं विशेषवचने बहुवचनमित्यविद्यमानवत्त्वस्य निषेधात्। पूर्वस्याप्यामंत्रितस्य विद्यमानवत्त्वात्परांगवत्त्वं स्वीकृतमिति वैषम्यं॥ विश्वे। पादादित्वादाद्युदात्तः। गणदेवतावचनस्यात्र विश्वशब्दो न सर्वशब्दपर्याय इति विशेष्यपरतया सामान्यवचनत्वादोमास इत्यनेन न सामानाधिकरण्यं। सामानाधिकरण्ये हि पूर्वस्य पादस्य परांगवद्भावे सति मित्रावरुणावृतावृधावित्यादाविवात्राप्यामंत्रिताद्युदात्तता न स्यात्। विश्व इत्यस्य विशेषणं देवास इति। दीव्यंतीति देवाः प्रकाशवंतः। नन्ववयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी। परि॰ ९८.। इति रूढ एवार्थो देवशब्दस्य ग्राह्यो न यौगिकः। यौगिकत्वे ह्यवयवार्थानुसंधानव्यवधानेन प्रतिपत्तिर्विलंबिता स्यात्। समुदायप्रसिद्धौ तु न विलंब इति चेन्न। स[illegible]द्धौ हि देवशब्दस्य सामान्यपरतया विशेषवचनत्वाभावाद्विभाषितं विशेषवचने बहुवचनमित्यनेनानिषिद्धत्वाद्विश्वे इत्यस्याविद्यमानवत्त्वेन शुभस्पती इति पदवद्देवास इत्यस्याप्याद्युदात्तत्वं स्यात्। स्वरानुसारेण च रूढित्यागेनापि देवशब्दस्य योगस्वीका[illegible] युक्त एव। आ गत। आगच्छत। बहुलं छंदसीति शपो लुकि सत्यनुदात्तोपदेशेत्यादिना मकारलोपः। आङः पदात्परत्वान्निघातः। दाश्वांसः। दाशृ दान इत्यस्य क्वसौ दाश्वान् साह्वान् मीढ्वांश्च। पा॰ ६. १. १२.। इति निपातनात्क्वा[illegible] इडागमो द्विर्वचनं च। पा॰ ७. २. १३.। न भवति। प्रत्ययस्वरेण क्वसोरुदात्तत्वं। दाशुष इत्यत्र वसोः संप्रसारणं। पा॰ ६. ४. १३१.। इति संप्रसारणं। संप्रसारणाच्च। पा॰ ६. १. १०८.। इति पूर्वरूपत्वं। आदेशप्रत्यययोः। पा॰ ८. ३. ५९.। इति षत्वं॥

विश्वे देवासो अप्तुरः सुतमा गंत तूर्णयः। उस्रा इव स्वसराणि ॥८॥

विश्वे। देवासः। अप्ऽतुरः। सुतं। आ। गंत। तूर्णयः। उस्राःऽइव। स्वसराणि ॥८॥

विश्वे देवास एतन्नामकगणरूपा देवविशेषाः सुतं सोममा गंत.। आगच्छंतु। कीदृशाः। अप्तुरः। तत्तत्काले वृष्टिप्रदा इत्यर्थः। तूर्णयः त्वरायुक्ताः। यजमानमनुग्रहीतुमालस्यरहिता इत्यर्थः। विश्वेषां देवानां सोमं प्रत्यागमन उस्रा इत्यादिर्दृष्टांतः। उस्राः सूर्यरश्मयः स्वसरा[illegible]णि प्रत्यालस्यरहिता यथा समागच्छंति तद्वत्। खेदय इत्यादिषु पंचदशसु रश्मिनामसूस्रा वसव इति पठितं। वस्तोरित्यादिषु द्वादशस्वहर्नामसु स्वसराणि घंसो घर्म इति पठितं। तत्र पदं यास्केन व्याख्यातं। स्वसरा[illegible]णि भवंति स्वयंसारीण्यपि

वा स्वरादित्यो भवति स एतानि सारयति। उस्रा इव स्वसराणीत्यपि निगमो भवति। नि॰ ५. ४.। इति ॥ देवासः। पचाद्यजंतादस्वाद्देरसुक्। पा॰ ३. १. १३४.। असुरः। तुर त्वरणे सुविकरणी। तुतुरति त्वरयंतीत्यर्थे क्विपेति क्विप्। गतिकारकोपपदात्कृदित्युत्तरपदप्रकृतिस्वरत्वं। आ गंत। आगच्छंतित्यर्थे व्यत्ययेन मध्यमपुरुषबहुवचनं। बहुलं छंदसीति शपो लुक्। तप्तनप्तनथनाश्च। पा॰ ७. १. ४५.। इति तबादेशेऽपित् । पा॰ १. २. ४.। इति प्रतिषेधान्ङित्त्वाभावादनुनासिकलोपाभावः। तिङ्ङतिङ इति निघातः। त्विषा संभ्रम इति धातोस्त्वरंत इति तूर्णयः। निरित्यनुवृत्तौ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्। उ॰ ४. ५१.। इति निप्रत्ययः। नित्वादाद्युदात्तः। उस्रा इवेत्यत्रेवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च। पा॰ २. १. ४. २.। इति समासे पूर्वपदप्रकृतिस्वरत्वं नित्यं। सरतीति सरः सूर्यः। पचाद्यच्। स्वः सरो येषां तानि स्वसराणि। बहुव्रीहौ प्रकृत्या पूर्वपदमिति स्वशब्द आद्युदात्तः ॥

विश्वे देवासो अस्रिध एहिमायासो अद्रुहः। मेधं जुषंत वह्नयः ॥९॥

विश्वे। देवासः। अस्रिधः। एहिऽमायासः। अद्रुहः। मेधं। जुषंत। वह्नयः ॥९॥

विश्वे देवास एतन्नामका देवविशेषा मेधं हविर्यज्ञसंबद्धं जुषंत। सेवंतां। कीदृशाः। अस्रिधः क्षयरहिताः शोषरहिता वा एहिमायासः सर्वतो व्याप्तप्रज्ञाः। यद्वा। सौचीकमग्निमप्सु प्रविष्टमेहि मा यासीरिति यद्वोचन् तदनुकरणहेतुकोऽयं विश्वेषां देवानां व्यपदेश एहिमायास इति। अद्रुहो द्रोहरहिताः वह्नयो वोढारो धनानां प्रापयितारः ॥ अस्रिधः। स्रिधिः क्षयार्थस्य शोषणार्थस्य वा संपदादिभ्यो भावे क्विपि । पा॰ ३. ३. १०८. ९.। नञा बहुव्रीहिः। पूर्वपदप्रकृतिस्वरं बाधित्वा नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। एहिमायासः। ईह चेष्टायां। आ समंतादीहत इत्येहिः। इन्। उ॰ ४. ११७.। इति सर्वधातुसाधारण इन्प्रत्ययो नित्वादाद्युदात्तः। एहिर्माया प्रज्ञा येषामिति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। अथवा। आङ् उदात्तादुत्तरस्येहीति लोण्मध्यमैकवचनस्य तिङ्ङतिङ इति निघात एकादेश उदात्तेनोदात्त इत्येकार उदात्तः। एहीत्येतत्पदयुक्तं मा यासीरित्यत्र मायेत्यक्षरद्वयं येषां त एहिमायासः। पूर्वपदप्रकृतिस्वरः। अद्रुहः। द्रुह जिघांसायां। संपदादित्वाद्भावे क्विपि बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। मेधं। मेधृ संगमे च। मेध्यते देवैः संगम्यत इति मेधं हविः। कर्मणि घञ्। ञित्वादाद्युदात्तः। जुषंत सेवंतामित्यर्थे छंदसि लुङ्लङ्लिटः। पा॰ ३. ४. ६.। इति धातुसंबंधे लङ्। यत उक्तरूपा विश्वे देवा अतो जुषंतेति द्रुहादिधात्वर्थैः संबंधात्। बहुलं छंदस्यमाङ्योगेऽपि। पा॰ ६. ४. ७५.। इत्यडागमाभावः। वह्नयः। निरित्यनुवृत्तौ वहिश्रीत्यादिना विहितस्य निप्रत्ययस्य नित्वादाद्युदात्तत्वं ॥

सारस्वते तृचे या प्रथमा सान्वारंभणीयेष्टौ सरस्वत्याः पुरोनुवाक्या। तथा दर्शपूर्णमासावारप्स्यमान इत्यस्मिन्खंडे पावका नः सरस्वती पावीरवी कन्या चित्रायुः। आ॰ २. ८.। इति सूचितं ॥

पावका नः सरस्वती वाजेभिर्वाजिनीवती। यज्ञं वष्टु धियावसुः ॥१०॥

पावका। नः। सरस्वती। वाजेभिः। वाजिनीऽवती। यज्ञं। वष्टु। धियाऽवसुः ॥१०॥

सरस्वती देवी वाजेभिर्हविर्लक्षणैरन्नैर्निमित्तभूतैः। यद्वा। यजमानेभ्यो दातव्यैरन्नैर्निमित्तभूतैः। नो ऽस्मदीयं यज्ञं वष्टु। कामयतां। कामयित्वा च निर्वहत्वित्यर्थः। तथा चारण्यककांडे श्रुत्यैव व्याख्यातं। यज्ञं वष्ट्विति यदाह यज्ञं वहत्वित्येव तदाह। ऐ॰ आ॰ १. १. ४.। इति। कीदृशी सरस्वती। पावका शोधयित्री वाजिनीवत्यन्नवत्क्रियावती धियावसुः कर्मप्राप्यधननिमित्तभूता। अन्नवत्क्रियावत्त्वं धननिमित्तत्वमारण्यककांडे श्रुत्या व्याख्यातं। यज्ञं वष्टु धियावसुरिति वाग्वै धियावसुः। ऐ॰ आ॰ १. १. ४.। इति। श्लोकः सोम इत्यादिषु पंचविंशतिसंख्याकेषु वाङ्नामस्विति वाचि पदेषु सरमा सरस्वतीति पठितं। एतामृचं यास्क एवं व्याचष्टे। पावका नः सरस्वत्यन्नैरन्नवती यज्ञं वष्टु धियावसुः कर्मवसुः। नि॰ ११. २६.। इति ॥ पवनं पावः शुद्धिः। पावं कायतीति पावका। कै गै रै शब्दे। आतोऽनुपसर्गे कः। पा॰ ३. २. ३.। इति कप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वेनांतोदात्तत्वं। यद्वा। पुनातीत्यर्थे ण्वुलि प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः। पा॰

७. ३. ४४.। इतीत्वस्याभावोऽंतोदात्तत्वं च छांदसं द्रष्टव्यं। सरःशब्दः सर्तेरसुनंतत्वादाद्युदात्तः। मतुप्ङीपोः पित्त्वादनुदात्तत्वं। वाजेभिः। वाजशब्दो वृषादित्वादाद्युदात्तः। स [illegible]त्वादाद्यंतगणः। वाजो ऽन्नमास्विति वाजिन्यः क्रियाः। अत इनिठनौ। पा° ५. २. ११५.। इतीनिप्रत्ययः। ताः क्रिया यस्याः संति सा सरस्वती वाजिनीवती। छंदसीर इति मतुपो वत्वं। मतुप्ङीपोः पित्त्वेनानुद[illegible]नेः प्रत्ययाद्युदात्तत्वमेव शिष्यते। यज्ञं। यजयाचेत्यादिना। पा° ३. ३. ९०.। नङ्प्रत्ययः। प्रत्ययस्वरेणांतोदात्तः। वष्टु। वश कांतौ। कांतिरभिलाषः। अदिप्रभृतिभ्यः शप इति शपो लुक्। निघातः। धियावसुः। धिया कर्मणा वसु यस्याः सकाशाद्भवति सा धियावसुः। साविकाच इति विभक्तिरुदात्ता। बहुव्रीहौ प्रकृत्या पूर्वपदमिति विभक्तिस्वर एव शिष्यते। छांदसस्तृतीयाया अलुक्॥

चो॒द॒यि॒त्री सू॒नृता॑नां॒ चेत॑न्ती सुमती॒नाम्। य॒ज्ञं द॑धे॒ सर॑स्वती ॥११॥

चो॒द॒यि॒त्री। सू॒नृता॑नाम्। चेत॑न्ती। सु॒ऽम॒ती॒नाम्। य॒ज्ञम्। द॒धे॒। सर॑स्वती ॥११॥

या सरस्वती सेयमिमं यज्ञं दधे। धारितवती। कीदृशी। सूनृतानां प्रियाणां सत्यवाक्यानां चोदयित्री प्रेरयित्री। सुमतीनां शोभनबुद्धियुक्तानामनुष्ठातॄणां चेतंती। तदीयमनुष्ठेयं ज्ञापयंती॥ चोदयित्री। चुद प्रेरणे। ण्यंतात्तृच्। चित्त्वादंतोदात्तः। ऋन्नेभ्यो ङीप्। पा° ४. १. ५.। इति ङीप्। तस्योदात्तयणो हल्पूर्वात् । पा° ६. १. १७४.। इत्युदात्तत्वं। सूनृतानां। ऊन परिहाणे इत्यतः क्विप्चेति क्विपि सुतरामूनयत्यप्रियमिति सूनिति प्रियमुच्यते। तच्च तदृतं सत्यं चेति सूनृतं। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। चेतंती। चिती संज्ञाने। अत्र शपो ङीपश्च पित्त्वादनुदात्तत्वं। शतुश्चादुपदेशाल्लसार्वधातुकस्वरेणानुदात्तत्वं। धात्वंतस्वर एव शिष्यते। सुमतिशब्दस्य मतुपि ह्रस्वत्वान्नामन्यतरस्यां। पा° ६. १. १७७.। इति विभक्तेरुदात्तत्वं॥

म॒हो अर्णः॒ सर॑स्वती॒ प्र चे॑तयति के॒तुना॑। धियो॒ विश्वा॒ वि रा॑जति ॥१२॥

म॒हः। अर्णः॑। सर॑स्वती। प्र। चे॒त॒य॒ति॒। के॒तुना॑। धियः॑। विश्वाः॑। वि। रा॒ज॒ति॒ ॥१२॥

द्विविधा हि सरस्वती विग्रहवद्देवता नदीरूपा च। तत्र पूर्वाभ्यामृग्भ्यां विग्रहवती प्रतिपादिता। अनया तु नदीरूपा प्रतिपाद्यते। तादृशी सरस्वती केतुना कर्मणा प्रवाहरूपेण महो अर्णः प्रभूतमुदकं प्र चेतयति। प्रकर्षेण ज्ञापयति। किंच। स्वकीयेन देवतारूपेण विश्वा धियः सर्वाण्यनुष्ठातृप्रज्ञानानि वि राजति। विशेषेण दीपयति। अनुष्ठानविषया बुद्धीः सर्वदोत्पादयतीत्यर्थः। सरस्वत्या द्विरूपत्वं यास्को दर्शयति। तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च निगमा भवंति। नि° २. २३.। इति। एकशतसंख्याकेषूदकनामस्वर्णः चोद इति पठितं। एतामृचं यास्को व्याचष्ट। महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभिविराजति। नि° ११. २७.। इति॥ महो अर्णः। महदिति तकारस्य व्यत्ययेन सकारः। तस्य रुत्वोत्वगुणाः। प्रातिपदिकस्वरेणांतोदात्तः। एङः पदांतादति। पा° ६. १. १०९.। इति पूर्वरूपे प्राप्ते प्रकृत्यांतःपादमव्यपरे। पा° ६. १. ११५.। इति प्रकृतिभावः। अर्तेरर्णः। उदके नुट् च। उ° ४. १९६.। इत्यसुन्प्रत्ययो नुडागमश्च। केतुना। प्रातिपदिकस्वरेणांतोदात्तः। विश्वाः। विश्वशब्दः क्वन्प्रत्ययांत आद्युदात्तः॥ ॥६॥ ॥१॥

प्रथमे मंडले द्वितीयानुवाके चत्वारि सूक्तानि। तत्र सुरूपेत्यादिकं दशर्चं प्रथमं सूक्तं। सुरूपकृत्नुं दशेत्यनुक्रांतत्वात्। पूर्ववन्मधुच्छंदसो गायत्रस्य चानुवृत्तेस्त एवर्षिच्छंदसी। इंद्रं पृच्छेति चतुर्थ्यामृचि लिंग[illegible] देवता॥ अभिप्लवषडहे ब्राह्मणाच्छंसिनः प्रातःसवने स्तोमवृद्धावावापार्थानि सुरूपकृत्नुमूतय इत्यादीनि षट् सूक्तानि। सूचितं चाभिप्लवपृष्ठ्याहानीति खंडे ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति षट् सूक्तानि। आ° ७. ५.। इति॥ आद्यानि त्रीणि सूक्तानि महाव्रते निष्केवल्य श[illegible] शस्तव्यानि। उक्तं च शौनकेन। सुरूपकृत्नुमूतय इति त्रीणींद्र सानसिं रयिमिति सूक्ते। ऐ° आ° ५. २. ५.। इति॥ चतुर्विंशेऽहनि माध्यंदिने सवने ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति वैकल्पिकः स्तोत्रियस्तृचः। होत्रकाणामिति खंडे मदे मदे हि नो ददिः सुरूपकृत्नुमूतये। आ° ७. ४.। इति [illegible]चितत्वात्॥ अग्निष्टोमे वैश्वदेवशस्त्रे सुरूपकृत्नुमूतय इति धाय्या। सुरूपकृत्नुमूतये तच्चत्रयं। आ° ५. १८.। इति सूचितत्वात्॥

सुरूपकृत्नुमूतये सुदुघामिव गोदुहे । जुहूमसि द्यविद्यवि ॥१॥

सुरूपऽकृत्नुं । ऊतये । सुदुघाऽइव । गोऽदुहे । जुहूमसि । द्यविऽद्यवि ॥१॥

सुरूपकृत्नुं शोभनरूपोपेतस्य कर्मणः कर्तारमिंद्रमूतयेऽस्मद्रक्षार्थं द्यवि द्यवि प्रतिदिनं जुहूमसि । आह्वयामः । आह्वाने दृष्टांतः । गोदुहे गोधुगर्थं सुदुघामिव सुष्ठु दोग्ध्रीं गामिव । यथा लोके गोर्यो दोग्धा तदर्थं तस्याभिमुख्येन दोहनीयां गामाह्वयति तद्वत् । वस्तोरित्यादिषु द्वादशसंख्याकेष्वहर्नामसु द्यविद्यवीति पठितं ॥ सुरूपकृत्नुं । करोतीति कृत्नुः । कृहनिभ्यां क्त्नुः । उ० ३. ३०. । कित्त्वाद्गुणाभावः । तकारोपजनश्छांदसः । समासांतोदात्तः । ऊतये । ऊतियूतिजूतिसातिहेतिकीर्तयश्च । पा० ३. ३. ९७. । इति क्तिन्नुदात्तो निपातितः । सुदुघां । सुष्ठु दुग्ध इति सुदुघा । दुहः कब्घश्च । पा० ३. २. ७०. । इति कप्प्रत्ययो हकारस्य च घकारः । कित्त्वाद्गुणाभावः । कपः पित्त्वादनुदात्तत्वे धातुस्वरेणोकार उदात्तः । सुशब्देन गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव स्वरः । इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं चेतीवसमासे स एव स्वरः । गां दोग्धीति गोधुक् । सत्सूद्विषेत्यादिना । पा० ३. २. ६१. । क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं । जुहूमसि । ह्वयतेर्लेडुत्तमपुरुषबहुवचने बहुलं छंदसीति शपः श्लुः । पा० २. ४. ७६. । अभ्यस्तस्य च । पा० ६. १. ३३. । इत्यभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात्संप्रसारणं । संप्रसारणाच्च । पा० ६. १. १०८. । इति परपूर्वत्वं । हलः । पा० ६. ४. २. । इति दीर्घः । ततः श्लाविति द्विर्वचनं । अभ्यासस्य ह्रस्वः । पा० ७. ४. ५९. । कुहोश्चुः । पा० ७. ४. ६२. । ८. ४. ५३. । इदंतो मसिः । पा० ७. १. ४६. । इतीकारागमः । प्रत्ययस्वरेण मकारस्योदात्तत्वं । द्यवि द्यवि । द्योशब्दः प्रातिपदिकस्वरेणांतोदात्तः । नित्यवीप्सयोः । पा० ८. १. ४. । इति द्विर्भावः । तस्य परमाम्रेडितं । पा० ८. १. २. । अनुदात्तं च । पा० ८. १. ३. । इति द्वितीयस्यानुदात्तत्वं ॥

उप नः सवना गहि सोमस्य सोमपाः पिब । गोदा इद्रेवतो मदः ॥२॥

उप । नः । सवना । आ । गहि । सोमस्य । सोमऽपाः । पिब । गोऽदाः । इत् । रेवतः । मदः ॥२॥

हे सोमपाः सोमस्य पातरिंद्र सोमं पातुं नोऽस्मदीयानि सवना त्रीणि सवनानि प्रत्युप समीप आ गहि । आगच्छ । आगत्य च सोमस्य सोमं पिब । रेवतो धनवतस्तव मदो हर्षो गोदा इद्गोप्रद एव । त्वयि हृष्टे सत्यस्माभिर्गावो लभ्यंत इत्यर्थः ॥ उप । निपातत्वादाद्युदात्तः । सवना । सूयते सोम एष्विति सवनानि । अधिकरणे ल्युट् । पा० ३. ३. ११७. । सुपो डादेशश्छिलोपश्च । लितीति प्रत्ययात्पूर्वस्याकारस्योदात्तत्वं । गहि । गमेर्बहुलं छंदसीति शपो लुक् । हेर्ङित्त्वादनुदात्तोपदेशेत्यादिना । पा० ६. ४. ३७. । मकारलोपः । अतो हेः । पा० ६. ४. १०५. । इत्याभाच्छास्त्रीये लुकि कर्तव्येऽसिद्धवदत्रा भात् । पा० ६. ४. २२. । इत्याभाच्छास्त्रीयो मकारलोपोऽसिद्धवत् । सोमपाः । आमंत्रितत्वाच्चेति निघातः । तस्याविद्यमानवत्त्वेऽपि पूर्वापेक्षया तिङ्ङतिङ इति पिबेत्यस्य निघातः । न च पूर्वस्यापि परांगवद्भावेनाविद्यमानवत्त्वं । असामर्थ्येन तदभावात् । गां ददातीति गोदाः । क्विप्च । पा० ३. २. ७६. । इति क्विपं परमपि सरूपं बाधित्वा प्रतिपदविधित्वादातो मनिन्क्वनिब्वनिपश्च । पा० ३. २. ७४. । इति विच् । क्विपि हि घुमास्थेत्यादिना । पा० ६. ४. ६६. । धातोराकारस्येत्वं स्यात् । रेवान् । रयिर्धनमस्यास्तीति मतुप् । ह्रस्वनुड्भ्यां मतुप् । पा० ६. १. १७६. । इति मतुबुदात्तः । छंदसीरः । पा० ८. २. १५. । इति वत्वं । रयेर्मतौ बहुलं छंदसि । पा० ६. १. ३७. ६. । इति संप्रसारणं परपूर्वत्वं गुणश्च । मदः । मदोऽनुपसर्गे । पा० ३. ३. ६७. । इत्यप् । पित्त्वादनुदात्तः ॥

अथा ते अंतमानां विद्याम सुमतीनां । मा नो अति ख्य आ गहि ॥३॥

अथ । ते । अंतमानां । विद्याम । सुऽमतीनां । मा । नः । अति । ख्यः । आ । गहि ॥३॥

अथ सोमपानानंतरं हे इंद्र ते तवांतमानामंतिकतमानां त्वदाश्रयेण समीपवर्तिनां सुमतीनां शोभनम-

तियुक्तानां शोभनप्रज्ञानां पुरुषाणां मध्ये स्थित्वा विद्याम। वयं त्वां जानीयाम। यद्वा। सुमतीनां शोभनबुद्धीनां कर्मानुष्ठानविषयाणां सुमतीनामित्यध्याहारः। बुद्धिलाभाय त्वां स्मरेमेत्यर्थः। त्वमपि नोऽति मा ख्यः। अस्मानतिक्रम्यान्येषां त्वत्स्वरूपं मा प्रकथय। किंवा गृह्यस्थानेवागच्छ॥ अथेति निपात आद्युदात्तः। निपातस्य चेति दीर्घत्वं। अंतमानां। अतिशयेनांतिका इत्यतिशायने तमप्। पा॰ ५. ३. ५५.। तमे तादेश्च। पा॰ ६. ४. १४९. ९.। इति तादिलोपः। अंतोऽस्यास्तीत्यंतिकः समीपः। अत इनिठनाविति ठन्। नित्त्वादाद्युदात्तः। दूरोत्कर्षस्य ह्यवसानं नास्ति। सामीप्योत्कर्षस्य पुनर्यो यस्य समीपः स एव तस्यांत इत्यंतवत्त्वात्समीपमंतिकमुच्यते। विद्याम। वेत्तेर्लिङि यासुट् परस्मैपदेषूदात्तो ङिच्च। पा॰ ३. ४. १०३.। इति यासुडुदात्तः। पादादित्वात्तिङ्ङतिङ इति न निघातः। सुमतीनां। मतिशब्दे क्तिन्नंतेऽपि मंत्रे वृषेषपचमनविद्भूवीरा उदात्तः। पा॰ ३. ३. ९६.। इतीकार उदात्तः। शोभना मतिर्येषां ते सुमतय इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरापवादेन नञ्सुभ्यामित्युत्तरपदांतोदात्तः। शोभना मतयः सुमतय इति कर्मधारयेऽप्यव्ययपूर्वपदप्रकृतिस्वरापवादः। कृदुत्तरपदप्रकृतिस्वरेणांतोदात्तत्वैव। अतो मतुपि ह्रस्वादंतोदात्ताच्च सुमतिशब्दात्परस्य नामो नामन्यतरस्यामित्युदात्तत्वं। ख्यः। ख्या प्रकथन इत्यस्य लुङि सिचस्यतिवक्तिख्यातिभ्योऽङ्। पा॰ ३. १. ५२.। इति च्लेरङादेशः। आतो लोप इटि च। पा॰ ६. ४. ६४.। इत्याकारलोपः। इतश्च। पा॰ ३. ४. १००.। इतीकारलोपो रुत्वविसर्गौ। न माङ्योगे। पा॰ ६. ४. ७४.। इत्यडभावः। गहि। गमेर्बहुलं छंदसीति शपो लुकि हेर्ङित्त्वादनुदात्तोपदेशेति मकारलोपस्यासिद्धवदत्रा भादित्यसिद्धत्वादतो हेरिति लुग्न भवति॥

परे॑हि॒ विग्र॒मस्तृ॑त॒मिंद्रं॑ पृच्छा वि॒प॒श्चित॑म्। यस्ते॒ सखि॑भ्य॒ आ वर॑म्॥४॥

परा॑। इ॒हि॒। विग्र॑म्। अस्तृ॑तम्। इंद्र॑म्। पृ॒च्छ॒। वि॒पः॒ऽचित॑म्। यः। ते॒। सखि॑ऽभ्यः। आ। वर॑म्॥४॥

अत्र यजमानं प्रति होता ब्रूते। हे यजमान त्वमिंद्रं परेहि। इंद्रस्य समीपे गच्छ। गत्वा च विपश्चितं मेधाविनं होतारं मां पृच्छ। असौ होता सम्यक् स्तुतवान्न वेत्येवं प्रश्नं कुरु। य इंद्रस्ते तव यजमानस्य सखिभ्य ऋत्विग्भ्यो वरं श्रेष्ठं धनपुत्रादिकमा समंतात्प्रयच्छतीति शेषः। तादृशमिंद्रमिति पूर्वत्रान्वयः। पुनरपि कीदृशं। विग्रं मेधाविनं अस्तृतमहिंसितं। विग्र इत्यादिषु चतुर्विंशतिसंख्याकेषु मेधाविनामसु विग्रविपश्चिच्छब्दौ पठितौ॥ विग्रं। वृषादित्वादाद्युदात्तः। अस्तृतं। अव्ययपूर्वपदप्रकृतिस्वरत्वं। इंद्रशब्द ऋज्रेंद्राग्रेत्यादिना रन्। नित्त्वादाद्युदात्तः। सखिभ्यः। समाने ख्यस्योदात्तः। उ॰ ४. १३६.। इति समान उपपदे ख्यातेरिण्। डिदित्यनुवृत्तेस्तस्य डित्त्वाट्टिलोपश्च। पा॰ ६. ४. १४३.। तत्संनियोगेन यलोपः। उपपदस्योदात्तत्वं। समानस्य छंदस्यमूर्धप्रभृत्युदर्केषु। पा॰ ६. ३. ८४.। इति सभावः। अतः सखिशब्द आद्युदात्तः। व्रियत इति वरः। ग्रहवृदृनिश्चिगमश्च। पा॰ ३. ३. ५८.। इत्यप्। तस्य पित्त्वाद्धातुस्वर एव॥

उ॒त ब्रु॑वंतु नो॒ निदो॒ निर॒न्यत॑श्चिदारत। दधा॑ना॒ इंद्र॒ इद्दुवः॑॥५॥

उ॒त। ब्रु॒वं॒तु॒। नः॒। निदः॑। निः। अ॒न्यतः॑। चि॒त्। आ॒र॒त॒। दधा॑नाः। इंद्रे॑। इत्। दुवः॑॥५॥

नोऽस्माकं संबंधिन ऋत्विज इति शेषः। ते ब्रुवंतु। इंद्रं स्तुवंतु। उतापि च हे निदो निंदितारः पुरुषा निरारत। इतो देशान्निर्गच्छत। अन्यतश्चिदन्यस्मादपि देशान्निर्गच्छत। कीदृशा ऋत्विजः। इंद्रे दुवः परिचर्यां दधानाः कुर्वाणाः। इच्छब्दोऽवधारणे। सर्वदा परिचर्यां कुर्वंत एव तिष्ठंत्वित्यर्थः॥ निंदंतीति निदः। णिदि कुत्सायां। क्विपि नुमभावश्छांदसः। सुपोऽनुदात्तत्वाद्धातुस्वरः। आमंत्रितत्वेऽपि वाक्यांतरत्वेन स्ववाक्यगतपदादपरत्वान्न निघात इत्याद्युदात्तत्वमेव। अन्यतः। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। चिदित्यपिशब्दार्थे। तेन न केवलमितः। इतो निर्गत्यान्यतोऽपि निर्गच्छतेति गम्यते। स एष धात्वर्थयोः संबंध आरतेति लुङा द्योत्यते। स हि धातुसंबंधाधिकारे विधीयते। आरत। अर्तेश्छंदसि लुङ्लङ्लिट इति लोडर्थे लुङ्। मध्यमबहुवचनस्य तादेशः। सर्तिशास्त्यर्तिभ्यश्च। पा॰ ३. १. ५६.। इति च्लेरङादेशः। ऋदृशोऽङि गुणः। पा॰ ७.

४. १६. । इति गुणः । आडागमः । दधानाः । शानचश्चित्त्वात्प्राप्तमंतोदात्तं बाधित्वा परत्वादभ्यस्तानामादिरित्याद्युदात्तत्वं । दुवः । नञ्विषयस्यानिसंतस्येत्याद्युदात्तः ॥ ॥ ७॥

## उत नः॑ सु॒भगाँ॑ अ॒रिर्वो॒चेयु॑र्दस्म कृ॒ष्टयः॑ । स्यामेदिंद्र॑स्य॒ शर्म॑णि ॥ ६॥

## उ॒त । नः॒ । सु॒ऽभगा॑न् । अ॒रिः । वो॒चेयुः॑ । द॒स्म॒ । कृ॒ष्टयः॑ । स्याम॑ । इत् । इंद्र॑स्य । शर्म॑णि ॥ ६॥

हे दस्म शत्रूणामुपचयपयितरिंद्र त्वदनुग्रहादरिरुत शत्रवोऽपि नोऽस्मान् सुभगान् शोभनधनोपेतान्वोचेयुः । उच्यासुः । कृष्टयो मनुष्या अस्मन्मित्रभूता वदंतीति किमु वक्तव्यमिति शेषः । ततो धनसंपन्ना वयमिंद्रस्य शर्मणींद्रप्रसादलब्धे सुखे स्यामेत् । भवेमैव । मघमित्यादिष्वष्टाविंशतिसंख्याकेषु धननामसु रयिः क्षत्रं भग इति पठितं । मनुष्या इत्यादिषु पंचविंशतिसंख्याकेषु मनुष्यनामसु कृष्टय इति पठितं ॥ उत । एवमादीनामंतः । फि० ४. १४. । इत्यंतोदात्तः । सुभगान् । भगशब्दस्य क्रत्वादिषु पाठान्नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं बाधित्वा क्रत्वादयश्च । पा० ६. २. ११८. । इत्युत्तरपदाद्युदात्तत्वं । संहितायां दीर्घादटि समानपादे । पा० ८. ३. ९. । इति नकारस्य रुत्वं । भोभगो । पा० ८. ३. १७. । इति यत्वं । लोपः शाकल्यस्य । पा० ८. ३. १९. । इति यलोपः । तस्यासिद्धत्वान्न पुनः संधिकार्यं । आतोऽटि नित्यं । पा० ८. ३. ३. । इत्याकारस्य सानुनासिकता । अरिः । वचनव्यत्ययः । अच इः । उ० ४. १३८. । इतीप्रत्ययांतः । प्रत्ययस्वरेणांतोदात्तः । वोचेयुः । उच्यासुः । वच परिभाषण इत्यस्मादाशीर्लिङि झेर्जुसादेशे । पा० ३. ४. १०८. । लिङ्याशिष्यङ् । पा० ३. १. ८६. । इत्यङ्प्रत्यये वच उम् । पा० ७. ४. २०. । इत्युमागमः । गुणः । किदाशिषि । पा० ३. ४. १०४. । इति यासुट् । छंदस्युभयथा । पा० ३. ४. ११७. । इति लिङादेशस्य सार्वधातुकत्वाल्लिङः सलोपोऽनंत्यस्य । पा० ७. २. ७९. । इति सकारलोपः । अतो येयः । पा० ७. २. ८०. । आद्गुणः । पा० ६. १. ८७. । अङोऽदुपदेशत्वाल्लसार्वधातुकस्वरेण लिङोऽनुदात्तत्वं । अङ्प्रत्ययस्वर एव शिष्यते । तेन सहैकारस्य गुण एकादेश उदात्तेनोदात्त इत्युदात्तः । दस्म । दसु उपक्षय इत्यस्मादंतर्भावितण्यर्थादिषियुधींधिदसिश्याधूसूभ्यो मक् । उ० १. १४४. । पदात्परत्वादामंत्रितनिघातः । कृष्टयः । क्तिच्क्तौ च संज्ञायां । पा० ३. ३. १७४. । इति क्तिचि मनुष्यनामत्वाच्चित इत्यंतोदात्तः । स्याम । अस भुवि । श्नसोरल्लोपः । पा० ६. ४. १११. । यासुट उदात्तत्वं । पादादित्वान्निघातः । शर्मणि । शॄ हिंसायां । हिनस्ति दुःखमिति शर्म । अन्येभ्योऽपि दृश्यंते । पा० ३. २. ७५. । इति मनिन् । नेड्वशि कृति । पा० ७. २. ८. । इतीट्प्रतिषेधः । नित्त्वादाद्युदात्तत्वं ॥ ८

## एमा॒शुमा॒शवे॑ भर यज्ञ॒श्रियं॑ नृ॒माद॑नं । प॒त॒यन्मं॑द॒यत्स॑खं ॥ ७॥

## आ । ई॒म् । आ॒शुं । आ॒शवे॑ । भ॒र॒ । य॒ज्ञ॒ऽश्रियं॑ । नृ॒ऽमाद॑नं । प॒त॒यत् । मं॒द॒यत्ऽस॑खं ॥ ७॥

ईमिति निपात इदंशब्दार्थे वर्तते । हे यजमानाशवे कृत्स्नसोमयागव्याप्तायेंद्रायेमा भर । इमं सोममाहर । कीदृशं सोमं । आशुं सवनत्रयव्याप्तं यज्ञश्रियं यज्ञस्य संपद्रूपं नृमादनं नृणामृत्विग्यजमानानां हर्षहेतुं पतयत्पतयंतं कर्माणि प्राप्नुवंतं मंदयत्सखं । य इंद्रो मंदयति यजमानान् हर्षयति तस्मिन्निंद्रे सखिभूतोऽयं सोमः । तत्प्रीतिहेतुत्वात्तृप्तिहेतुत्वाद्वा ॥ आशुं । कृवापाजिमिस्वदिसाध्यशूभ्य उण् । उ० १. १. । इत्युण् । प्रत्ययस्वरः । आशवे । पूर्ववत् । यज्ञश्रियं । समासस्यैत्यंतोदात्तः । माद्यंतेऽनेनेति मादनः । करणाधिकरणयोश्च । पा० ३. ३. ११७. । इति ल्युट् । तस्य लित्त्वात्पूर्व आकार उदात्तः । गतिकारकोपपदात्कृदिति स एव शिष्यते । पतयत् । पतेरदंतस्य चौरादिको णिच् । पा० ३. १. २५. । अतो लोपः । पा० ६. ४. ४८. । तस्य स्थानिवत्त्वादुपधाया वृद्ध्यभावः । पा० ७. २. ११६. १. १. ५६. । लटः शत्रादेशः । तस्य छंदस्युभयथेत्यार्धधातुकत्वेन शबभावाददुपदेशात् । पा० ६. १. १८६. । इति निघाताभावेन प्रत्ययाद्युदात्तत्वमेव भवति । आर्धधातुकत्वेऽपि सर्वे विधयश्छंदसि विकल्प्यंते । परि० ३५. । इति णेरनिटि । पा० ६. ४. ५१. । इति णिलोपाभावः । सुपां सुलुगित्यमो लुक् । न लुमता । पा० १. १. ६३. । इति प्रत्ययलक्षणनिषेधादुगिदचां । पा० ७. १. ७०. । इति न नुम् । एवं मंदयच्छब्दोऽंतोदात्तः । मंदयतींद्रे सखा । सप्तमीति योगविभागात्समासः । तत्पुरुषे तुल्यार्थेति सप्तमीपूर्वपदप्रकृतिस्वरत्वं ॥

अस्य पीत्वा शतक्रतो घनो वृत्राणामभवः । प्रावो वाजेषु वाजिनं ॥ ८ ॥

अस्य । पीत्वा । शतक्रतो इति शतऽक्रतो । घनः । वृत्राणां । अभवः । प्र । आवः ।
वाजेषु । वाजिनं ॥ ८ ॥

हे शतक्रतो बहुकर्मयुक्तेंद्र त्वमस्य सोमस्य संबंधिनमंशं पीत्वा वृत्राणां वृत्रनामकासुरप्रमुखाणां शत्रूणां घनोऽभवः । हंताभूः । ततो वाजेषु संग्रामेषु वाजिनं संग्रामवंतं स्वभक्तं प्रावः । प्रकर्षेण रक्षितवानसि ॥ अस्येतीदंशब्देन प्रयोगसमये पुरोदेशस्थः सोमो निर्दिश्यते न तु पूर्वप्रकृतः सोमः परामृश्यते । अतोऽनन्वादेशत्वान्नाचेदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ । पा० २. ४. ३२. । इत्यशादेशः । अतो न सर्वानुदात्तत्वं किंतु त्यदाद्यत्वे । पा० ७. २. १०२. । हलि लोपे । पा० ७. २. ११३. । अकारः प्रातिपदिकस्वरेणोदात्त इत्यंतोदात्तादित्यनुवृत्तावूडिदंपदाद्यप्पुम्रैद्युभ्यः । पा० ६. १. १७१. । इति विभक्तिरुदात्ता । पीत्वा । पिबतेः क्त्वाप्रत्यये घुमास्थादिनेत्वं । प्रत्ययस्वरेणांतोदात्तः । असामर्थ्यान्न परामंत्रितांगवद्भावः । घनः । मूर्तौ घनः । पा० ३. ३. ७७. । इति हंतेर्धातोः काठिन्येऽप्प्रत्ययः । तदस्यास्तीत्यर्शआद्यच्प्रत्ययः । चित्त्वादंतोदात्तः । वाजेषु । वृषादित्वादाद्युदात्तः । वाजिनं । इनिप्रत्ययस्वरः ॥

तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो । धनानामिंद्र सातये ॥ ९ ॥

तं । त्वा । वाजेषु । वाजिनं । वाजयामः । शतक्रतो इति शतऽक्रतो । धनानां । इंद्र ।
सातये ॥ ९ ॥

हे शतक्रतो बहुकर्मयुक्त यद्वा बहुप्रज्ञानयुक्तेंद्र धनानां सातये संभजनार्थं वाजेषु युद्धेषु वाजिनं बलवंतं त्वा पूर्वमंत्रोक्तगुणयुक्तं त्वां वाजयामः । अन्नवंतं कुर्मः । रण इत्यादिषु षट्चत्वारिंशत्सु संग्रामनामसु पौंस्ये महाधने वाजेऽज्मन्निति पठितं । अष्टाविंशतिसंख्याकेष्वन्ननामस्वंधो वाजः पाज इति पठितं । उरु तुवीत्यादिषु द्वादशसु बहुनामसु शतं सहस्रमिति पठितं । अपोऽप्न इत्यादिषु षड्विंशतिसंख्याकेषु कर्मनामसु शक्म क्रतुरिति पठितं । केतः केतुरित्यादिष्वेकादशसु प्रज्ञानामसु क्रतुरसुरिति पठितं ॥ त्वा । अनुदात्तं सर्वमित्यनुवृत्तौ त्वामौ द्वितीयाया इति त्वादेशः । वाजेषु । वज व्रज गतौ । वाजयति गमयति शरीरनिर्वाहमनेनेति वाजो बलमन्नं वा । ण्यंतात्करणे घञ् । तत्र ञित्स्वरस्यापवादे कर्षात्वतः । पा० ६. १. १५९. । इत्यंतोदात्तत्वे प्राप्ते तस्याप्यपवादत्वेन वृषादीनां च । पा० ६. १. २०३. । इत्याद्युदात्तत्वं । वाजयामः । वाजोऽस्यास्तीति वाजवान् । तं कुर्म इत्यर्थे तत्करोति तदाचष्टे । पा० ३. १. २६. ५–६. । इति णिच् । इष्ठवत्सौ प्रातिपदिकस्य । पा० ६. ४. १५५. १. । इति तस्मिन्परतः पुंवद्भावादिभ्यतोर्लुक् । पा० ५. ३. ६५. । इति मतुपो लुक् । टेः । पा० ६. ४. १५५. । इत्यकारलोपः । णिचश्चित्त्वादंतोदात्तत्वं । शपः पित्त्वेनानुदात्तत्वं । लसार्वधातुकस्वरेणाख्यातस्याप्यनुदात्तत्वं । पादादित्वान्तिङ्ङतिङ इति न निघातः । शतक्रतो । आमंत्रितनिघातः । धनानां । नड्विषयस्यानिसंतस्येत्याद्युदात्तः । सातये । उदात्त इत्यनुवृत्तौ मंत्रे वृषेषपचमनविदभूवीरा उदात्तः । पा० ३. ३. ९६. । इति क्तिन उदात्तत्वं । ऊतियूतिजूतिसातिहेतिकीर्तयश्चेति क्तिन्नुदात्तः ॥

योरायो३वनिर्महान्त्सुपारः सुन्वतः सखा । तस्मा इंद्राय गायत ॥ १० ॥

यः । रायः । अवनिः । महान् । सुऽपारः । सुन्वतः । सखा । तस्मै । इंद्राय । गायत ॥ १० ॥

य इंद्रो रायो धनस्यावनी रक्षकः स्वामी वा तस्मा इंद्राय गायत । हे ऋत्विजस्तत्प्रीत्यर्थं स्तुतिं कुरुत । कीदृश इंद्रः । महान् गुणैरधिकः सुपारः सुष्ठु कर्मणः पूरयिता सुन्वतो यजमानस्य सखा सखिवत्प्रियः ॥ रायः । ऊडिदंपदाद्यप्पुम्रैद्युभ्य इति विभक्तेरुदात्तत्वं । अवनिः । अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिंगनहिंसादहनभाववृद्धिषु चेत्यस्मादर्तिसृभृधृधम्यम्यश्यवितृभ्योऽनिः । उ० २. १०३. । इत्यनिः । प्रत्ययाद्युदात्तत्वं । सुपारः । पॄ पालनपूरणयोरित्यस्माण्णिजंतात्कर्तरीत्यनुवृत्तौ । पा० ३. १. ६८. । पचाद्यच् । पा० ३. १. १३४. । चित इत्यंतोदात्तः । सुन्वतः । शतुरनुमो नद्यजादी । पा० ६. १. १७३. ।

इति विभक्तिरुदात्ता । सखा । समाने ख्यश्चोदात्तः । उ० ४. १३६. । इतीण्प्रत्ययांतः । तत्संनियोगेन यलोपः । सशब्दस्य चोदात्तः । ङित्वाट्टिलोपः । तस्मै । अदिरित्यनुवृत्तौ त्यजितनियजिभ्यो ङित् । उ० १. १३१. । इति तनोतेरदिप्रत्ययः । ङित्वाट्टिलोपे प्रत्ययस्वरेण तच्छब्द उदात्तः । त्यदाद्यत्वं । एकादेश उदात्तेनोदात्त इत्युदात्तः । साविकाचस्तृतीयादिर्विभक्तिरिति विभक्तेरुदात्तत्वे प्राप्ते प्रथमैकवचनेऽवर्णांतत्वान्न गोश्वन्साववर्ण । पा० ६. १. १८२. । इति निषेधः । इंद्राय । इंद्रशब्दो रन्प्रत्ययांतो निपातितः । नित्वादाद्युदात्तः । कर्मणा यमभिप्रैति स संप्रदानं । पा० १. ४. ३२. । इत्यत्र क्रियाग्रहणं कर्तव्यं । पा० १. ४. ३२. १. । इति वचनाद्गानक्रियया प्राप्यत्वात्संप्रदानत्वेन चतुर्थी ॥ ॥ ८ ॥

आ त्विति द्वितीयं सूक्तं दशर्चं । सुरूपकृत्नुं दशैकोनेत्यत्र आ त्वा तु युंजंतीत्येवमनुक्रांतत्वात् । ऋषिच्छंदोदेवताविनियोगाः पूर्ववत् । विशेषविनियोगस्तु । अतिरात्रे तृतीयपर्याये मैत्रावरुणशस्त्रे स्तोत्रियोऽयं तृचः । अतिरात्रे पर्यायाणामिति खंड आ त्वेता नि षीदत । आ० ६. ४. । इत्युक्तत्वात् ॥

**आ त्वेता नि षीदतेंद्रमभि प्र गायत । सखायः स्तोमवाहसः ॥ १ ॥**

**आ । तु । आ । इत । नि । सीदत । इंद्रं । अभि । प्र । गायत । सखायः । स्तोमऽवाहसः ॥ १ ॥**

तुशब्दः क्षिप्रार्थो निपातः । द्वाभ्यामाङ्भ्यामन्वेतुमितशब्दोऽभ्यसनीयः । हे सखाय ऋत्विजः क्षिप्रमास्मत्कर्मण्यागच्छतागच्छत । आदरार्थोऽभ्यासः । आगत्य च नि षीदत । उपविशत । उपविश्य चेंद्रमभि प्र गायत । सर्वतः प्रकर्षेण स्तुत । कीदृशाः सखायः । स्तोमवाहसः । त्रिवृत्पंचदशादिस्तोमानस्मिन्कर्मणि वहंति प्रापयंतीति ॥ आ तु आ निपातत्वादाद्युदात्ताः । इत । इण् गतौ । द्व्यचोऽतस्तिङः । पा० ६. ३. १३५. । इति संहितायां दीर्घत्वं । नि । निपातत्वादाद्युदात्तः । सीदत । पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः । पा० ७. ३. ७८. । सदेः सीदादेशः । सदेरप्रतेः । पा० ८. ३. ६६. । इति संहितायां षत्वं । अभि । उपसर्गाश्चाभिवर्जमिति वचनात्प्रातिपदिकांतोदात्तत्वं । स्तोमवाहसः । अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन् । उ० १. १३९. । इति स्तौतेर्मन्प्रत्ययांतः स्तोमशब्दो नित्वादाद्युदात्तः । स्तोमं वहंतीति स्तोमवाहसः । वहिहाधाञ्भ्यश्छंदसि । उ० ४. २२०. । इत्यसुन्प्रत्ययः । तत्र णिदित्यनुवृत्तेरत उपधायाः । पा० ७. २. ११६. । इत्युपधाया वृद्धिः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च । उ० ४. २२६. । इत्यौणादिकसूत्रात्समास आद्युदात्तः ॥

**पुरूतमं पुरूणामीशानं वार्याणां । इंद्रं सोमे सचा सुते ॥ २ ॥**

**पुरुऽतमं । पुरूणां । ईशानं । वार्याणां । इंद्रं । सोमे । सचा । सुते ॥ २ ॥**

सखायोऽभिप्रगायतेति पदद्वयमत्रानुवर्तते । हे सखाय ऋत्विजः सचा यूयं सर्वैः सह । यद्वा । सचा परस्परसमवायेन सुतेऽभिषुते सोमे प्रवृत्ते सतींद्रमभिप्रगायत । कीदृशमिंद्रं । पुरूतमं । पुरून्बहूञ्छत्रूंस्तमयति ग्लापयतीति पुरूतमः । पुरूणां बहूनां वार्याणां वरणीयानां धनानामीशानं स्वामिनं ॥ पुरूतमं । तमु ग्लान इति धातोरंतर्भावितण्यर्थात्पचाद्यचि चित्वादंतोदात्तेऽपि कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । पुरूणां । पॄ पालनपूरणयोरित्यस्मात् कुरित्यनुवृत्तौ पॄभिदिव्यधिगृधिधृषिदृशिभ्यः । उ० १. २४. । इति कुप्रत्ययः । कित्वाद्गुणनिषेधे । पा० १. १. ५. । उदोष्ठ्यपूर्वस्य । पा० ७. १. १०२. । इत्युकारः । उरण् रपरः । पा० १. १. ५१. । प्रत्ययस्वरेणांतोदात्तः पुरुशब्दः । ऋतो मतुपि ह्रस्वादंतोदात्तात्पुरुशब्दात्परस्य नामो नामन्यतरस्यां । पा० ६. १. १७७. । इत्यंतोदात्तत्वं । ईशानं । ईश ऐश्वर्य इति धातोरनुदात्तेत्त्वात्परस्य शानचो लसार्वधातुकानुदात्तत्वं । वार्याणां । वृङ् संभक्तावित्यस्माद्दहलोर्ण्यत् । पा० ३. १. १२४. । ऋद्विधौ हि वृञ एव ग्रहणं न वृङः । पा० ३. १. १०९. १. । तित्स्वरितं । पा० ६. १. १८५. । इति प्रत्ययस्वरितं बाधित्वा ईडवंदवृशंसदुहां ण्यतः । पा० ६. १. २१४. । इति ण्यदंतस्याद्युदात्तत्वं । यतोऽनावः । पा० ६. १. २१३. । इत्यत्र तु ण्यतो ग्रहणं न भवति तस्य द्व्यनुबंधकत्वात् । एकानुबंधग्रहणे न

द्व्यनुबंधकस्येति नियमात्। सचा। षच समवाये। धात्वादेः षः सः। पा० ६. १. ६४.। संपदादित्वाद्भावे क्विप् । पा० ३. ३. १०८. ९.। इति क्विप्। तृतीयैकवचनं। धातुस्वरेणाद्युदात्तः। सर्वे विधयश्छंदसि विकल्प्यंते । परि० ३५.। इति न्यायेन साविकाच इति सूत्रं न प्रवर्तते। सचेत्यस्य निपातत्वपक्षे स्पष्टमाद्युदात्तत्वं ॥

स घा नो योग आ भुवत्स राये स पुरंध्यां। गमद्वाजेभिरा स नः ॥३॥

सः। घ। नः। योगे। आ। भुवत्। सः। राये। सः। पुरंऽध्यां। गमत्। वाजेभिः।
आ। सः। नः ॥३॥

घशब्दोऽवधारणार्थो निपातः। सर्वैस्तच्छब्दैः संबध्यते। स घ स एवेंद्रः पूर्वमंत्रोक्तगुणविशिष्टो नोऽस्माकं योगे पूर्वमप्राप्तस्य पुरुषार्थस्य संबंध आ भुवत्। आभवतु। पुरुषार्थं साधयत्वित्यर्थः। स एव राये धनार्थमा भुवत्। आभवतु। स एव पुरंध्यां योषित्या भुवत्। यद्वा। बहुविधायां बुद्धावा भुवत्। पुरंधिर्बहुधीः। नि० ६. १३.। इति यास्कः। स एव वाजेभिर्दैयैरन्नैः सह नोऽस्माना गमत्। आगच्छतु ॥ घ। चादयोऽनुदात्ता इत्यनुदात्तः। संहितायामृचि तुनुघमक्षुतङ्कुत्रोरुष्याणां। पा० ६. ३. १३३.। इति दीर्घः। योगे। घञो ञित्त्वादाद्युदात्तत्वं। भुवत्। भूयात्। भवतेराशीर्लिङि परतो लिङ्याशिष्यङित्यङ्प्रत्ययः। तस्य ङित्त्वेन गुणाभावादुवङादेशः। किदाशिषीति यासुट्न भवत्यनित्यमागमशासनमिति वचनात्। तिङ्ङतिङ इति निघातः। ऊडिदंपदाद्यप्पुम्रैद्युभ्य इति राय इत्येतस्य विभक्तेरुदात्तत्वं। पुरंध्यां। पुरंधिः पुरुधीः। पृषोदरादित्वात् । पा० ६. ३. १०९.। उकारस्यामादेश ईकारस्य ह्रस्वश्च। आद्युदात्तप्रकरणे दिवोदासादीनां छंदस्युपसंख्यानं । पा० ६. २. ९१. १.। इत्याद्युदात्तत्वं। अथवा पुरं शरीरं धीयतेऽस्यामिति कर्मण्यधिकरणे च। पा० ३. ३. ९३.। इति किप्रत्ययः। अलुक् छांदसः। नब्विषयस्यानिसंतस्येति पुरशब्द आद्युदात्तः। दासीभारादित्वात्। पा० ६. २. ४२.। पूर्वपदप्रकृतिस्वरत्वं। गमत्। गमेर्लेटस्तिप्। इतश्च लोपः परस्मैपदेष्वितीकारलोपः। बहुलं छंदसीति शपो लुक्। लेटोऽडाटावित्यडागमः। आगमा अनुदात्ताः। म० ३. १. ३. ७.। इति तस्यानुदात्तत्वे धातुस्वर एव शिष्यते। वाजेभिः। वृषादित्वादाद्युदात्तः ॥

यस्य संस्थे न वृण्वते हरी समत्सु शत्रवः। तस्मा इंद्राय गायत ॥४॥

यस्य। संऽस्थे। न। वृण्वते। हरी इति। समत्ऽसु। शत्रवः। तस्मै। इंद्राय। गायत ॥४॥

समत्सु युद्धेषु यस्येंद्रस्य संस्थे रथे युक्तौ हरी द्वावश्वौ शत्रवो न वृण्वते न संभजंते। रथमश्वौ च दृष्ट्वा पलायंत इत्यर्थः। तस्मा इंद्राय तत्संतोषार्थं हे ऋत्विजो गायत। स्तुतिं कुरुत। रण इत्यादिषु षट्चत्वारिंशत्सु संग्रामनामसु समत्सु समरण इति पठितं ॥ संस्थे। सम्यक् तिष्ठतीति संस्थो रथः। आतश्चोपसर्गे। पा० ३. १. १३६.। इति कप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वं। वृण्वते। प्रत्ययस्वरेणाकार उदात्तः। सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः। पा० ६. १. १५८. ९.। तिङ्ङतिङ इति निघातो न भवति यद्वृत्तान्नित्यमिति प्रतिषेधात्। पंचमीनिर्देशेऽपि। पा० १. १. ६७.। अत्र व्यवहितेऽपि कार्यमिष्यते। हरतो रथमिति हरी अश्वौ। इन्नित्यनुवृत्तौ हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च। उ० ४. ११८.। इतीन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं। समत्सु। संपूर्वादत्तेः क्विप्। शत्रवः। शतिः सौत्रो धातुर्हिंसार्थः। रुशातिभ्यां क्रुन्। उ० ४. १०३.। नित्त्वादाद्युदात्तत्वं। तस्मै। साविकाच इति विभक्त्युदात्तस्य न गोश्वन्साववर्णेति प्रतिषेधात्प्रातिपदिकस्वर एव ॥

सुतपाव्ने सुता इमे शुचयो यंति वीतये। सोमासो दध्याशिरः ॥५॥

सुतऽपाव्ने। सुताः। इमे। शुचयः। यंति। वीतये। सोमासः। दधिऽआशिरः ॥५॥

इमे सोमासोऽस्मिन्कर्मणि संपादिताः सोमाः सुतपाव्नेऽभिषुतस्य सोमस्य पानकर्त्रे। षष्ठ्यर्थे चतुर्थी। तस्य पातुर्वीतये भक्षणार्थं यंति। तमेव प्राप्नुवंति। कीदृशाः सोमाः। सुता अभिषुताः शुचयो दशापवित्रेण शोधितत्वाच्छुद्धा दध्याशिरः। अवनीयमानं दध्याशीर्दोषघातकं येषां सोमानां ते दध्याशिरः ॥ सुतपाव्ने। सुतं

पिबतीति सुतपावा। वनिपः पित्त्वाद्धातुस्वर एव शिष्यते। समासे द्वितीयापूर्वपदप्रकृतिस्वरं बाधित्वा कृदुत्तरपदप्रकृतिस्वरत्वं। शुचयः। शुच दीप्तौ। इन्नित्यनुवृत्ताविगुपधात्कित्। उ॰ ४. ११९.। इतीन्। कित्त्वाल्लघूपधगुणाभावः। नित्त्वादाद्युदात्तत्वं। वीतये। वी गतिप्रजनकांत्यशनखादनेष्वित्यस्मान्मंत्रे वृषेषपचमनविदभूवीरा उदात्तः। पा॰ ३. ३. ९६.। इति क्तिन्नुदात्तः। सोमासः। षुञ् अभिषवे। अर्तिस्तुसुहुसृधृक्षीत्यादिना। उ॰ १. १३९.। मन्। नित्त्वादाद्युदात्तः। आज्जसेरसुक्। पा॰ ७. १. ५०.। इत्यसुगागमः। दध्याशिरः। दधाति पुष्णातीति दधि। डुधाञ् धारणपोषणयोः। आदृगमहनजनः किकिनौ लिट् च। पा॰ ३. २. १७१.। इति किन्। लिड्वद्भावाद्द्विर्भावः। कित्त्वादाकारलोपः। नित्त्वादाद्युदात्तत्वं। शॄ हिंसायां। शृणाति हिनस्ति सोमेऽवनीयमानं सत्सोमस्य स्वाभाविकं रसमृजीषत्वप्रयुक्तं नीरसं दोषं वेत्याशीः। क्विप्यृत इद्धातोः। पा॰ ७. १. १००.। इतीत्वं रपरत्वं च। दध्येवाशीर्येषां सोमानां ते दध्याशिरः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥ ॥५॥

**त्वं सुतस्य पीतये सद्यो वृद्धो अजायथाः। इंद्र ज्यैष्ठ्याय सुक्रतो ॥६॥**

**त्वं। सुतस्य। पीतये। सद्यः। वृद्धः। अजायथाः। इंद्र। ज्यैष्ठ्याय। सुक्रतो इति सुऽक्रतो ॥६॥**

सुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा हे इंद्र त्वं सुतस्याभिषुतस्य सोमस्य पीतये पानार्थं ज्यैष्ठ्याय देवेषु ज्येष्ठत्वार्थं च सद्यस्तस्मिन्नेव क्षणे वृद्धोऽजायथाः। अभिवृद्धोत्साहेन युक्तोऽभूः॥ पीतये। पा पाने इत्यस्मात्स्थागापापचो भावे। पा॰ ३. ३. ९५.। इति क्तिन्। घुमास्थेत्यादिना। पा॰ ६. ४. ६६.। ईत्वं। तस्य नित्त्वेऽपि व्यत्ययेन प्रत्ययोदात्तत्वं। उत्तरसूत्रगतमुदात्तपदमत्रापि वा योजनीयं। सद्यः। सद्यः परुत्परारीति सूत्रेण। पा॰ ५. ३. २२.। समानेऽहनीत्यर्थे समानस्य सभावो द्यश्च प्रत्ययो निपात्यते। प्रत्ययस्वरेणोदात्तः। वृद्धः। वृधु वृद्धौ। उदितो वा। पा॰ ७. २. ५६.। इति क्त्वाप्रत्यय इटो विकल्पितत्वाद्यस्य विभाषा। पा॰ ७. २. १५.। इति निष्ठायामिट्प्रतिषेधः। प्रत्ययस्वरेणोदात्तः। ज्यैष्ठ्याय। ज्येष्ठस्य भावो ज्यैष्ठ्यं। गुणवचनब्राह्मणादिभ्यः कर्मणि च। पा॰ ५. १. १२४.। इति ष्यञ्। ञित्त्वादाद्युदात्तः॥

**आ त्वा विशंत्वाशवः सोमास इंद्र गिर्वणः। शं ते संतु प्रचेतसे ॥७॥**

**आ। त्वा। विशंतु। आशवः। सोमासः। इंद्र। गिर्वणः। शं। ते। संतु। प्रऽचेतसे ॥७॥**

हे इंद्र त्वां सोमासः सोमा आ विशंतु। आभिमुख्येन प्रविशंतु। कीदृशाः सोमाः। आशवः सवनत्रये प्रकृतिविकृत्योर्वा व्याप्तिमंतः। कीदृशेंद्र। गिर्वणो गीर्भिः स्तुतिभिः संभजनीय देवविशेष। गिर्वणा देवो भवति गीर्भिरेनं वनयंति। नि॰ ६. १४.। इति यास्कः। तथाविध हे इंद्र ते तव प्रचेतसे प्रकृष्टज्ञानाय शं सुखरूपाः सोमाः संतु॥ गिर्वणः। गृणंतीति गिरः स्तुतयः। गॄ शब्दे। क्विप्यृत इद्धातोः। पा॰ ७. १. १००.। इतीत्वं रपरत्वं च। गीर्भिर्वन्यते सेव्यत इति गिर्वणाः। वन षण संभक्तौ। संभक्तिः सेवा। सर्वधातुभ्योऽसुन्। उ॰ ४. १८८.। इत्यसुन्प्रत्ययः। प्रचेतसे। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥

**त्वां स्तोमा अवीवृधन्त्वामुक्था शतक्रतो। त्वां वर्धंतु नो गिरः ॥८॥**

**त्वां। स्तोमाः। अवीवृधन्। त्वां। उक्था। शतक्रतो इति शतऽक्रतो। त्वां। वर्धंतु। नः। गिरः ॥८॥**

हे शतक्रतो बहुकर्मन्बहुप्रज्ञ वेंद्र त्वां स्तोमाः सामगानां स्तोत्राण्यवीवृधन्। वर्धितवंति। तथा बह्वृचानामुक्था शस्त्राणि त्वामवीवृधन्। यस्मात्पूर्वमेवमासीत्तस्मादिदानीमपि नोऽस्माकं गिरः स्तुतयस्त्वां वर्धंतु। वर्धयंतु। अतिवृद्धं कुर्वंतु॥ स्तोमाः। मनो नित्त्वादाद्युदात्तः। अवीवृधन्। वृधु वृद्धौ। ण्यंतात्। पा॰ ३. १. २६.। लुङि चङि। पा॰ ३. १. ४८.। उर्ऋत्। पा॰ ७. ४. ७.। इति वृधेरुपधाया ऋकारस्य ऋकारविधानादंतरंगोऽपि

गुणो बाध्यते। द्विर्भाव।पा० ६.१.११.। हलादिशेष।पा० ७.४.६०.। सन्वद्भाव।पा० ७.४.९३.। इत्व।पा० ७.४.७९.। दीर्घत्व।पा० ७.४.९४.। अडागमाः।पा० ६.४.७१.। उक्था। उक्थानि। पातॄतुदिवचिरिचिसिचिभ्यस्थक्।उ० २.७.। इति वचेस्थक्प्रत्ययः। तस्य कित्त्वात्संप्रसारणं। शेश्छंदसि बहुलं।पा० ६.१.७०.। इति शिलोपो नलोपश्च। प्रत्ययस्वरेणांतोदात्तः। असामर्थ्यादामंत्रितपरस्यापि न परांगवद्भाव इति नानुदात्तत्वं। वर्धंतु। अंतर्भावितण्यर्थाद्वृधेर्व्यत्ययेन परस्मैपदं॥

**अक्षितोतिः सनेदिमं वाजमिंद्रः सहस्रिणं। यस्मिन्विश्वानि पौंस्या॥९॥**

**अक्षितऽऊतिः। सनेत्। इमं। वाजं। इंद्रः। सहस्रिणं। यस्मिन्। विश्वानि। पौंस्या॥९॥**

इंद्र इमं वाजं सोमरूपमन्नं सनेत्। संभजेत्। कीदृश इंद्रः। अक्षितोतिरहिंसितरक्षणः। कदाचिदपि रक्षां न विसृजतीत्यर्थः। कीदृशं वाजं। सहस्रिणं प्रकृतौ विकृतिषु च प्रवर्तमानत्वेन सहस्रसंख्यायुक्तं। यस्मिन्वाजे विश्वानि सर्वाणि पौंस्या पुंस्त्वानि बलानि वर्तंते तादृशं वाजमिति पूर्वत्रान्वयः॥ अक्षितोतिः। ननु क्षि क्षय इत्ययं धातुरकर्मकः। तस्य च कर्माभावादधिकरणे भावे कर्तरि वा क्तप्रत्ययेन भवितव्यं। तदिह यदि कर्तर्यधिकरणे वा स्यात्तदा तयोरर्थयोर्क्तप्रत्ययस्याविधानात्क्षियः इत्यनुवृत्तौ।पा० ६.४.५९.। निष्ठायामण्यदर्थे।पा० ६.४.६०.। इति दीर्घेण भवितव्यं। तथा च क्षियो दीर्घात्।पा० ८.२.४६.। इति निष्ठानत्वेऽक्षीणोतिति स्यात् न त्वक्षितेति। अथ नपुंसके भावे क्तः।पा० ३.३.११४.। इति भावपरः क्षितशब्दो गृह्यते। तदा तस्य ण्यदर्थत्वेनाण्यदर्थ इति निषेधाद्दीर्घनत्वयोरभावात्क्षितमिति सिध्यति। तदा तु नञ्तत्पुरुषः प्रकृतेन नान्वेतीति न विद्यते क्षितमस्येति बहुव्रीहिणैव भवितव्यं। तथा च नञ्सुभ्यां।पा० ६.२.१७२.। इत्यंतोदात्तत्वं स्यात्। पुनरूतिशब्देन बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव स्वरस्तिष्ठेदित्यभिमतमाद्युदात्तत्वं न सिध्येदिति। सत्यं। अत एवात्र क्षिधातुरंतर्भावितण्यर्थो गृह्यते। तेन सकर्मकत्वात्कर्मण्येषा निष्ठा। ततश्चाण्यदर्थ इति निषेधाद्दीर्घो निष्ठानत्वं च न भविष्यति। तथा च नञ्तत्पुरुषे न क्षिताक्षितावयितेत्यर्थः। तत्र चाव्ययपूर्वपदप्रकृतिस्वरत्वेन नञ उदात्तत्वं। पुनरूतिपदेन बहुव्रीहौ स एव स्वरः स्यास्यतीति न कोऽपि दोषः। रि क्षि चिरि जिरि दाश दृ हिंसायां।धा० २७.२८–३३.। इति क्षिणोतेर्हिंसार्थस्य वा कर्मणि निष्ठा। तथा चाहिंसितोतिरित्यर्थे उक्तक्रमेण स्वरः सिध्यतीति न दोषः। सनेत्। वन षण संभक्तौ। भौवादिकः। वाजं। वृषादित्वादाद्युदात्तः। इंद्रः। रन्नो निन्त्वादाद्युदात्तः। सहस्रिणं। सहस्रमस्यास्ति। अत इनिठनौ।पा० ५.२.११५.। प्रत्ययस्वरः। विश्वानि। विशेः क्वन्।उ० १.१५१.। निन्त्वादाद्युदात्तः। पुंसः कर्माणि पौंस्यानि। ब्राह्मणादेराकृतिगणत्वाद्गुणवचनब्राह्मणादिभ्यः कर्मणि च।पा० ५.१.१२४.। इति ष्यञ्। ञित्वादाद्युदात्तः। प्रथमाबहुवचनस्य सुपां सुलुगित्यादिना डादेशः। ननु स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्।पा० ४.१.८७.। इत्यनेन धान्यानां भवने क्षेत्रे खञ्।पा० ५.२.१.। इत्येतत्पर्यंतेष्वपत्याद्यर्थेषु नञ्स्नञोर्विधानाद्यथा पुंसोऽपत्यं पौंस्नः पुंस आगतः पौंस्नं इत्यादि तद्वत्पुंसो भावः कर्म वेत्यस्मिन्नर्थे ष्यञं बाधित्वा पौंस्नमित्येव भवितव्यं। कथमुच्यते पौंस्यानीति। उच्यते। आ च त्वात्।पा० ५.१.१२०.। इति सूत्रे त्वादित्यवधिनिर्देशाद्ब्रह्मणस्त्वः।पा० ५.१.१३६.। इत्येतत्पर्यंतरिमनिजादिभिः प्रत्ययैः सह त्वतलोः समावेशः। एवं तत्रैव चशब्दान्नञ्स्नञोरपि ष्यञादिभिः समावेश एव। न बाध्यबाधकभावः॥

**मा नो मर्ता अभि द्रुहन्तनूनामिंद्र गिर्वणः। ईशाना यवया वधं॥१०॥**

**मा। नः। मर्ताः। अभि। द्रुहन्। तनूनां। इंद्र। गिर्वणः। ईशानः। यवय। वधं॥१०॥**

हे गिर्वण इंद्र मर्ता विरोधिनो मनुष्या नोऽस्मदीयानां तनूनां शरीराणां माभि द्रुहन्। अभितो द्रोहं मा कुर्युः। ईशानः समर्थस्त्वं वधं वैरिभिः संपाद्यमानं यवय। अस्मत्तः पृथक्कुरु। मनुष्या इत्यादिषु पंचविंशतिसंख्याकेषु मनुष्यनामसु मर्ता व्राता इति पठितं॥ मर्ताः। असिहसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन्।उ० ३.८६.। इति तन्। निन्त्वादाद्युदात्तः। अभि। एवमादीनामंतः।फि० ४.१४.। द्रुहन्। द्रुह जिघांसायां। लिङर्थे लेट्।पा० ३.४.७.। इति प्रार्थनायां।पा० ३.३.१६१.। लेट्। तस्य झि।पा० ३.४.७८.। झोऽन्तः।पा० ७.१.३.। इतश्च लोपः परस्मैपदेषु।पा० ३.४.९७.। इतीकारलोपः। शपो लुक्। सार्वधातुकमपित्

। पा॰ १. २. ४. । इति तिङो ङित्त्वाल्लघूपधगुणाभावः । पा॰ १. १. ५. । तनूनां । असामर्थ्यान्न परांगवद्भावः । इंद्र गिर्वणः । गतं । ईशानः । धातोरनुदात्तेत्त्वाच्छपो लुकि लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते । यवय । यौतेर्णिचि संज्ञापूर्वको विधिरनित्य इति वृद्धिर्न क्रियते । अथवा यौतीति यवः । पचाद्यच् । पा॰ ३. १. १३४. । यवं करोतीत्यर्थे तत्करोति तदाचष्टे । पा॰ ३. १. २६. ५–६. । इति णिच् । इष्ठवद्भावाट्टिलोपः । पा॰ ६. ४. १५५. १. । तस्य स्थानिवद्भावाद्वृद्ध्यभावः । पा॰ १. १. ५६. । वधं । हनश्च वधः । पा॰ ३. ३. ७६. । इति भावेऽप् । तत्संनियोगशिष्टः स्थानिवद्भावेनांतोदात्तो वधादेशः । उदात्तनिवृत्तिस्वरेणाप उदात्तत्वं ॥ ॥१०॥

सुरूपेत्यादिषु षट्सूक्तेषु तृतीयस्य युंजंतीति सूक्तस्य मंत्रसंख्या [illegible] विनियोगश्चेत्येते पूर्ववदवगंतव्याः । दशर्चे तस्मिन्सूक्त आद्यास्तिस्रोऽतिमा चेत्येतास्तस्य ऐंद्र्यः । आदहेत्येतां चतुर्थीमारभ्य षडृचो मारुत्यः । तासु मध्ये वीळु चिदिंद्रेणेत्येते द्वे ऋचौ मारुत्यौ सत्यावैंद्र्यावपि भवतः । तदेतत्सर्वमनुक्रमणिकायामुक्तं । सुरूपकृत्नुं दशैंद्रमा तु युंजंत्यादहेत्येताः षण्मारुत्यो वीळु चिदिंद्रेणेत्यैंद्र्यौ चेति ॥ एतस्मिन्सूक्ते युंजंतीत्यसौ तृचस्तृतीये रात्रिपर्याये ब्राह्मणाच्छंसिनोऽनुरूपः । तथा चातिरात्रे पर्यायाणामिति खंडे योगे योगे तवस्तरं युंजंति ब्रध्नमरुषं । आ॰ ६. ४. । इति सूचितं ॥

युंजंति ब्रध्नमरुषं चरंतं परि तस्थुषः । रोचंते रोचना दिवि ॥१॥

युंजंति । ब्रध्नं । अरुषं । चरंतं । परि । तस्थुषः । रोचंते । रोचना । दिवि ॥१॥

इंद्रो हि परमैश्वर्ययुक्तः । परमैश्वर्यं चाग्निवाय्वादित्यनक्षत्ररूपेणावस्थानादुपपद्यते । ब्रध्नमादित्यरूपेणावस्थितं अरुषं हिं[illegible]रूपेणावस्थितं चरंतं वायुरूपेण सर्वतः प्रसरंतमिंद्रं परि तस्थुषः परितोऽवस्थिता लोकत्रयवर्तिनः प्राणिनो युंजंति । स्वकीये कर्मणि देवतात्वेन संबद्धं कुर्वंति । तस्यैवेंद्रस्य मूर्तिविशेषभूतानि रोचना रोचनानि नक्षत्राणि दिवि द्युलोके रोचंते । प्रकाशंते । अस्य मंत्रस्योक्तार्थपरत्वं ब्राह्मणांतरे व्याख्यातं । युंजंति ब्रध्नमित्याह । असौ वा आदित्यो ब्रध्नः । आदित्यमेवास्मै युनक्ति । अरुषमित्याह । अग्निर्वा अरुषः । अग्निमेवास्मै युनक्ति । चरंतमित्याह । वायुर्वै चरन् । वायुमेवास्मै युनक्ति । परि तस्थुष इत्याह । इमे वै लोकाः परि तस्थुषः । इमानेवास्मै लोकान्युनक्ति । रोचंते रोचना दिवीत्याह । नक्षत्राणि वै रोचना दिवि । नक्षत्राण्येवास्मै रोचयति । तै॰ ब्रा॰ ३. ९. ४. १. । इति । [illegible]केषु महन्नामसु महो ब्रध्न इति पठितं । आदित्यस्यापि महत्त्वादेव ब्रध्नत्वं ॥ युंजंति । अंतेः प्रत्ययस्वरेणाद्युदात्तत्वं । ब्रध्नं । प्रातिपदिकांतोदात्तः । अरुषं । उष रुष रिष हिंसार्थाः । रोषंतीति रुषा हिंसकाः । इगुपधज्ञाप्रीकिरः कः । पा॰ ३. १. १३५. । इति कः । प्रत्ययस्वरेणोदात्तः । न संति रुषा यस्यासावरुषः । नञ्सुभ्यां । पा॰ ६. २. १७२. । इत्युत्तरपदांतोदात्तत्वं । अमि पूर्वः । पा॰ ६. १. १०७. । इति पूर्वरूप एकादेश उदात्तेनोदात्तः । पा॰ ८. २. ५. । इत्युदात्तत्वं । चरंतं । शपः पित्त्वादनुदात्तत्वं । शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । तस्थुषः । तिष्ठतेर्लिटः क्वसुरादेशः । पा॰ ३. २. १०७. । वस्वेकाजाद्घसां । पा॰ ७. २. ६७. । [illegible]मपि बाधित्वा संप्रसारणं संप्रसारणाश्रयं च बलीयः । म॰ ६. १. १७. २. । इति शसि परतो भत्वात् । पा॰ १. ४. १८. । वसोः संप्रसारणं । पा॰ ६. ४. १३१. । परपूर्वत्वं । शासिवसिघसीनां च । पा॰ ८. ३. ६०. । इति षत्वं । वसोः प्रत्ययस्वरेणोदात्तत्वं । रोचंते । तिङो लसार्वधातुकानुदात्तत्वं । शपः पित्त्वादनुदात्तत्वं । धातुस्वर एव । रोचना । अनुदात्तेतश्च हलादेः । पा॰ ३. २. १४९. । इति युच् । [illegible] । पा॰ ७. १. १. । इत्यनादेशः । चित इत्यंतोदात्तत्वं । दिवि । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं ॥

युंजंत्यस्य काम्या हरी विपक्षसा रथे । शोणा धृष्णू नृवाहसा ॥२॥

युंजंति । अस्य । काम्या । हरी इति । विऽपक्षसा । रथे । शोणा । धृष्णू इति । नृऽवाहसा ॥२॥

अस्य ब्रध्नादिश[illegible] अतिपाद्यस्यादित्यादिमूर्तिभिस्तत्र तत्रावस्थितस्येंद्रस्य रथे हरी [illegible]तन्नामानौ द्वावश्वौ

सारथयो युंजंति। इंद्रसंबंधि[illegible]हरिनामत्वं हरी इंद्रस्य रोहितोऽग्नेः। नै॰ १. १५.। इति पठितत्वात्। कीदृशौ हरी। काम्या कामयितव्यौ विपक्षसा। विविधे पक्षसी रथस्य पार्श्वौ ययोरश्वयोस्तौ विपक्षसौ। रथस्य द्वयोः पार्श्वयोर्योजिताविल्यर्थः। शोणा रक्तवर्णौ धृष्णू प्रगल्भौ नृवाहसा नृणां पुरुषाणामिंद्रतत्सारथिप्रमुखाणां वोढारौ॥ अस्य। अश्वमित्युक्तस्य परामर्शादिदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ। पा॰ २. ४. ३२.। इत्यम्। शित्वात्। पा॰ १. १. ५५.। सर्वादेशोऽनुदात्तः। विभक्तिरनुदात्तैवेति सर्वानुदात्तत्वं। काम्या। कमु कांतौ। कमेर्णिङ्। पा॰ ३. १. ३०.। कामयतेरचो यत्। पा॰ ३. १. ९७.। तित्स्वरितापवादत्वेन यतोऽनावः। पा॰ ६. १. २१३.। इत्याद्युदात्तत्वं। सुपां सुलुगिति द्विवचनस्य डादेशः। हरतो रथमिति हरी। हृपिषीत्यादिना। उ॰ ४. ११८.। इन्। नित्त्वादाद्युदात्तः। विपक्षसा। पचिवचिभ्यां सुट् च। उ॰ ४. २१९.। इति पचेरसुन् सुडागमश्च। विभिन्ने पक्षसी पार्श्वौ ययोस्तौ। विशब्दो निपातत्वादाद्युदात्तः। पूर्वपदप्रकृतिस्वरेण स एव शिष्यते। द्विवचनस्य डादेशः। रथे। रमंतेऽस्मिन्निति रथः। रमु क्रीडायां। हनिकुषिनीरमिकाशिभ्यः क्थन्। उ॰ २. २.। इति क्थन्। कित्वादनुदात्तोपदेशेत्यादिना। पा॰ ६. ४. ३७.। मकारलोपः। नित्स्वरेणाद्युदात्तः। शोणा। शोणृ वर्णगत्योः। गमनकरणत्वात्करणे घञ्। ञित्वादाद्युदात्तः। सुपां सुलुगिति डादेशः। धृष्णू। ञिधृषा प्रागल्भ्ये। त्रसिगृधिधृषिक्षिपेः क्नुः। पा॰ ३. २. १४०.। कित्वाद्गुणाभावः। प्रत्ययस्वरः। नृवाहसा। नॄन्वहत इति वहेर्वहिहाधाञ्भ्यश्छंदसि। उ॰ ४. २२०.। इत्यसुन्। णिदित्यनुवृत्तेर्वृद्धिः। नित्त्वादाद्युदात्तः। कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते॥

केतुं कृण्वन्नकेतवे पेशो मर्या अपेशसे। समुषद्भिरजायथाः॥३॥

केतुं। कृण्वन्। अकेतवे। पेशः। मर्याः। अपेशसे। सं। उषत्ऽभिः। अजायथाः॥३॥

हे मर्या मनुष्या इदमाश्चर्यं पश्यतेत्यध्याहारः। किमाश्चर्यमिति तदुच्यते। आदित्यरूपोऽयमिंद्र उषद्भिर्दाहकैः रश्मिभिः प्रतिदिनमुषःकालैर्वा संभूयाजायथाः। उदपद्यत। अथवा सूर्यस्यैवास्मिन्मये मरणमुपचर्यं। व्यत्ययेन बहुवचनं कृत्वा संबोधनं क्रियते। हे मर्य प्रतिदिनं त्वमजायथा इति योज्यं। किं कुर्वन्। अकेतवे रात्रौ निद्राभिभूतत्वेन प्रज्ञानरहिताय प्राणिने केतुं कृण्वन्। प्रातः प्रज्ञानं कुर्वन्। अपेशसे रात्रावंधकारावृतत्वेनानभिव्यक्तत्वाद्रूपरहिताय पदार्थाय प्रातरंधकार[illegible] पेशो रूपमभिव्यज्यमानं कुर्वन्। पेश इति रूपनाम पिंशतेः। नि॰ ८. ११.। इति यास्कः। अकेतवेऽपेशस इति चतुर्थ्यौ षष्ठ्यर्थे द्रष्टव्यौ॥ केतुं। प्रातिपदिकस्वरः। कृण्वन्। कृवि हिंसाकरणयोश्च। लटः शत्रादेशः। इदितो नुम् धातोः। पा॰ ७. १. ५८.। इति नुमागमः। कर्तरि शपि प्राप्ते धि[illegible]। पा॰ ३. १. ८०.। इत्युप्रत्ययः। तत्संनियोगेन वकारस्य चाकारः। अतो लोपः। पा॰ ६. ४. ४८.। इत्यकारलोपः। तस्य स्थानिवद्भावात्पूर्वस्य लघूपधगुणो न भवति। पा॰ ७. ३. ८६.। अकारस्य प्रत्ययस्वरेणोदात्तत्व। अकेतवे। बहुव्रीहौ नञ्सुभ्यां। पा॰ ६. २. १७२.। इत्युत्तरपदांतोदात्तत्वं। पेशः। नब्विषयस्यानिसंतस्य। फि॰ २. ३.। इत्याद्युदात्तः। मर्याः। छंदसि नि[illegible]त्यादौ। पा॰ ३. १. १२३.। म्रियतेर्निपातः। आमंत्रितनिघातः। पा॰ ८. १. १९.। असामर्थ्यात्पूर्वस्य न परांगवद्भावः। अपेशसे। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। सं। निपात आद्युदात्तः। उषद्भिः। उष प्लुष दाहे। ज्वलद्भिः रश्मिभिः। लटः शत्रादेशे शपि प्राप्ते व्यत्ययेन शः। सार्वधातुकमपित्। पा॰ १. २. ४.। इति तस्य ङित्वाल्लघूपधगुणो न भवति। शस्य प्रत्ययस्वरेणोदात्तत्वं। उपरि शतुरदुपदेशाल्लसार्वधातुकानुदात्तत्वं। एकादेश उदात्तेनोदात्तः। अजायथाः। अजायतेत्यर्थे पुरुषव्यत्यये निघातः॥

आदह स्वधामनु पुनर्गर्भत्वमेरिरे। दधाना नाम यज्ञियं॥४॥

आत्। अह। स्वधां। अनु। पुनः। गर्भऽत्वं। आऽईरिरे। दधानाः। नाम। यज्ञियं॥४॥

अत्रास्ति विशेषविनियोगः। चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिशस्त्र आदह स्वधामन्विति द्वे ऋचौ। इंद्रेण सं हि दृक्षस इत्येका। अयं तृचः षळह[illegible]। तथा च सूत्रितं चतुर्विंशे होताजनिष्टेति खंडे। इंद्रेण सं हि दृक्षस आदह स्वधामन्वित्येका द्वे च। आ॰ ७. २.। इति। यद्यपीतदिंद्रं सूक्तं

तथाप्यादहेत्यादिषु षट्सु मरुतो वर्ण्यंते। प्रायेणैंद्रे मरुत [illegible]त्वात्। अनु॰ २. २२.॥ आदित्ययमानंतर्यार्थो निपातः। अहेत्यवधारणार्थः। आदह वर्षर्तोरनंतरमेव। स्वधामनु। इतः परं जनिष्यमाणमन्नमुदकं वानुलक्ष्य मरुतो देवा गर्भत्वमेरिरे। मेघमध्ये जलस्य गर्भाकारं प्रेरितवंतः। जलस्य कर्तारं पर्जन्यं प्रेरितवंतः। प्रतिसंवत्सरमेवं कुर्वंतीति दर्शयितुं पुनःशब्दः प्रयुक्तः। कीदृशा मरुतः। यज्ञियं यज्ञार्हं नाम दधाना धारयंतः। सप्तसु गणेषु मरुतामीदृङ्चान्यादृङ्ङित्यादीनि यज्ञयोग्यानि ना[illegible]। अंध इत्यादिष्वष्टाविंशतिसंख्याकेष्वन्ननामसूर्क् रसः स्वधेति पठितं। अर्णः इत्यादिष्वेकशतसंख्याकेषूदकनामसु तेजः स्वधाचरमिति पठितं॥ आदह निपातावाद्युदात्तौ। स्वधां। स्वं लोकं दधाति पुष्णातीति स्वधा। आतोऽनुपसर्गे कः। पा॰ ३. २. ३.। कृदुत्तरपदप्रकृतिस्वरत्वं। अनुपुनःशब्दौ निपातावाद्युदात्तौ। गर्भस्य भावो गर्भत्वं। प्रत्ययस्वरः। एरिरे। अंतर्भावितण्यर्थादीर गतावित्यस्मादनु[illegible]तः परस्य लिटो झस्य इरेच्। पा॰ ३. ४. ८१.। चित्त्वादंतोदात्तः। सह सुपा। पा॰ २. १. ४.। इत्यत्र सुपेति योगविभागादाङा सह तिङः समासेऽपि समासस्य। पा॰ ६. १. २२३.। इत्यंतोदात्तत्वं। इजादेश्च गुरुमतोऽनृच्छः। पा॰ ३. १. ३६.। इत्याम् न भवति मंत्रत्वात्। अहशब्दयोगान्निघाताभावः। तुपश्यपश्यताहैः पूजायां। पा॰ ८. १. ३९.। इति निषेधात्। दधानाः। [illegible]दंतोदात्तत्वे प्राप्तेऽभ्यस्तानामादिः। पा॰ ६. १. १८९.। इत्याद्युदात्तत्वं। यज्ञमर्हतीति यज्ञियं। यज्ञर्त्विग्भ्यां घखञौ। पा॰ ५. १. ७१.। इति घप्रत्ययः। आयनेयीनीयियः फढखछघां प्रत्ययादीनां। पा॰ ७. १. २.। इतीयादेशः। प्रत्ययस्वरेणेकार उदात्तः॥

वीळु चिदारुजत्नुभिर्गुहा चिदिंद्र वह्निभिः। अविंद उस्रिया अनु ॥५॥

वीळु। चित्। आरुजत्नुऽभिः। गुहा। चित्। इंद्र। वह्निऽभिः। अविंदः। उस्रियाः। अनु ॥५॥

अस्ति किंचिदुपाख्यानं। पणिभिर्देवलोकाद्गावोऽपहृता अंधकारे प्रक्षिप्ताः। तांश्चेंद्रो मरुद्भिः सहाजयदिति। एतच्चानु[illegible]यां सूचितं। पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनीमिंद्रेण प्रहितामसुरैः पणयो मित्रीयंतः प्रोचुः। अनु॰ ऋग्वे॰ १०. १०८.। इति। मंत्रांतरे च दृष्टांततया सूचितं। निरुद्धा आपः पणिनेव गावः। ऋग्वे॰ १. ३२. ११.। इति। तदेतदुपाख्यानमभिप्रेत्योच्यते॥ हे इंद्र वीळु चिद्दृढमपि दुर्गमस्थानमारुजत्नुभिर्भंजद्भिर्वह्निभिर्वोढृभिरन्यत्र नेतुं समर्थैर्मरुद्भिः सहितस्त्वं गुहा चित् गुहायामपि स्थापिता उस्रिया गा अन्वविंदः। अन्विष्य लब्धवानसि। ओजः पाज [illegible]तिसंख्याके बलनामसु दक्षो वीळु च्यौत्नमिति पठितं। नवसंख्याकेषु [illegible] पठितं॥ वीळु। प्रातिपदिकस्वरः। चित्। चादिरनुदात्तः। आरुजत्नुभिः। रुजो भंग इत्यौणादिकः कत्नुच्प्रत्ययः। कित्त्वाद्गुणाभावः। चित्त्वादंतोदात्तत्वं। समासे कृदुत्तरपदप्रकृतिस्वरत्वं। गुहा। सप्तम्या डादेशः। ग्रामादीनां च। फि॰ २. १५.। इत्याद्युदात्तः। वह्निभिः। वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्। उ॰ ४. ५१.। इति वहेर्निप्रत्ययः। नित्त्वादाद्युदात्तः। अविंदः। शे मुचादीनां। पा॰ ७. १. ५९.। इति नुमागमः। लुङ्लङ्लृङ्क्ष्वडुदात्तः। पा॰ ६. ४. ७१.। वसंतीत्युस्रियाः। वसेः कर्तरि रियक्प्रत्ययः। षत्वाभावश्च बाहुलकादूहनीयः। उक्तं हि। यन्न [illegible] प्रत्ययतः प्रकृतेश्च तदूह्यमिति। इकारः प्रत्ययस्वरेणोदात्तः॥ ॥११॥

देवयंतो यथा मतिमच्छा विदद्वसुं गिरः। महामनूषत श्रुतं ॥६॥

देवऽयंतः। यथा। मतिं। अच्छ। विदत्ऽवसुं। गिरः। महां। अनूषत। श्रुतं ॥६॥

देवयंतो [illegible] गिरः स्तोतार ऋत्विजो महां प्रौढं मरुद्गणमच्छ प्राप्तुमनूषत। स्तुतवंतः। कीदृशं मरुद्गणं। विदद्वसुं वेदयद्भिः स्वमहिमप्रख्यापकैर्वसुभिर्धनैर्युक्तं श्रुतं विख्यातं। मरुद्गणस्य दृष्टांतः। यथा मतिं। मंतारमिंद्रं यथा स्तुवंति तथेत्यर्थः॥ देवयंतः। देवानात्मन इच्छंतः। सुप आत्मनः क्यच्। पा॰ ३. १. ८.। क्यचि च। पा॰ ७. ४. ३३.। [illegible]तीत्वमकारांतस्य [illegible]। पा॰ ७. ४. २५.। इति दीर्घत्वं च न भवति। न च्छंदस्यपुत्रस्य। पा॰ ७. ४. ३५.। इत्यनेन क्यचि यत्प्राप्तमीत्वं दीर्घत्वं वा तस्य सर्वस्य

प्रतिषेधात्। यद्यपीत्वमेव प्रकृतं तथापि व्यवहितस्यापि दीर्घत्वस्य स प्रतिषेध इति विज्ञायते। अश्वायंत इत्यादावश्वाघस्यात्। पा० ७. ४. ३७.। इत्यात्वविधानादिति ह्युक्तं। क्यजंताच्छतृप्रत्ययः। क्यचश्चित्त्वाच्चित इत्यंतोदात्तत्वं। शपः पित्त्वेन शतुश्च लसार्वधातुकस्वरेणानुदात्तत्व एकादेश उदात्तेनोदात्त इत्युदात्तः। यथा। प्रकारवचने थाल्। पा० ५. ३. २३.। लिति। पा० ६. १. १९३.। इति प्रत्ययात्पूर्वमुदात्तत्वं। मतिं। मंत्रे वृषेषपचमनेत्यादिना। पा० ३. ३. ९६.। क्तिन्नुदात्तः। मतिशब्दो ज्ञानपरोऽप्युपचाराज्ज्ञातरींद्रे वर्तते। अथवा पदांतरे विशेष्यानुपादानादिंद्रस्यैषा संज्ञा। ततश्च क्तिच्क्तौ च संज्ञायां। पा० ३. ३. १७४.। इति मन्यतेः कर्तरि क्तिच्। तस्योपदेशेऽनुदात्तत्वादिट्प्रतिषेधः। पा० ७. २. १०.। चित्त्वादंतोदात्तत्वं। अच्छ। अध्याहृतगच्छत्यर्थयोगादच्छ गत्यर्थवदेषु। पा० १. ४. ६९.। इति गतिसंज्ञया सह निपातसंज्ञाया अपि समावेशात्। पा० १. ४. ६०.। निपाता आद्युदात्ताः। फि० ४. १२.। इत्याद्युदात्तत्वं। विदद्वसुं। विद ज्ञान इत्यस्मादंतर्भावितण्यर्थाच्छतृप्रत्यये विदंत्यौदार्यातिशयवत्तया ज्ञापयंति वसूनि धनानि यं स विदद्वसुः। विदेः शतृप्रत्ययेऽदिप्रभृतिभ्यः शपः। पा० २. ४. ७२.। इति शपो लुकि प्रत्ययस्वरेण शतुरुदात्तत्वं। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते। गृणंति स्तुवंतीति गिरः। गृणातेः क्विप्यृत इद्धातोः। पा० ७. १. १००.। इतीत्वं रपरत्वं। धातुस्वरेणोदात्तत्वं। महां। महांतं। नकारतकारयोर्लोपश्छांदसः। प्रातिपदिकस्वरेणोदात्तत्वं। अनूषत। णु स्तुतौ। व्यत्ययेनात्मनेपदं। लुङि झस्यादादेशः। पा० ७. १. ५.। सिचि कुटादित्वेन। पा० १. २. १.। ङित्त्वाद्गुणाभावः। इडभाव उकारदीर्घत्वं च छांदसं। निघातः। शृतं। प्रत्ययस्वरः॥

**इंद्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा। मंदू समानवर्चसा॥७॥**

**इंद्रेण। सं। हि। दृक्षसे। संऽजग्मानः। अबिभ्युषा। मंदू इति। समानऽवर्चसा॥७॥**

हे मरुद्गण त्वमिंद्रेण संजग्मानः संगच्छमानः सं दृक्षसे हि। सम्यग्दृश्येथाः खलु। अवश्यमस्माभिर्द्रष्टव्य इत्यर्थः। कीदृशेनेंद्रेण। अबिभ्युषा भीतिरहितेन। कीदृशाविंद्रमरुद्गणौ। मंदू नित्यप्रमुदितौ समानवर्चसा तुल्यदीप्ती। पुरा कदाचिद्वृत्रवधदशायामिंद्रस्य सखायः सर्वे देवा वृत्रश्व[illegible]रिताः। तदानीमिंद्रस्य वृत्रसंबंधिसकलसेनाजयार्थं मरुद्भिः संगमोऽभूत्। सोऽयमर्थो वृत्रस्य त्वा श्वसथात्। ऋग्वे० ८. ९६. ७.। इति मंत्रे संगृहीत इंद्रो वै वृत्रं हनिष्यन्। ऐ० ब्रा० ३. २०.। इति ब्राह्मणे प्रपंचितश्च। इंद्रशब्दः परमैश्वर्यवंतं मरुद्गणं वाभिधत्ते। तदानीमिंद्रस्य संबोधनं बहिरेवाध्याहर्तव्यं। तथा चैयमृग्यास्केन व्याख्याता। इंद्रेण हि संदृश्यसे संगच्छमानोऽबिभ्युषा गणेन मंदू मदिष्णू युवां स्थोऽपि वा मंदुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातं। नि० ४. १२.। इति॥ सं दृक्षसे। संपश्येथाः। दृशेश्चेति वक्तव्यं। पा० १. ३. २९. २.। इत्यात्मनेपदं। दृशेर्लिङर्थे लेट्। पा० ३. ४. ७.। इति प्रार्थनायां लेट्। थासः से। पा० ३. ४. ८०.। लेटोऽडाटौ। पा० ३. ४. ९४.। इत्यडागमः। सिब्बहुलं लेटि। पा० ३. १. ३४.। इति सिप्। संज्ञापूर्वको विधिरनित्य इति गुणाभावः। व्रश्चादिना षत्वं। पा० ८. २. ३६.। षढोः कः सि। पा० ८. २. ४१.। इति कत्वं। आदेशप्रत्यययोः। पा० ८. ३. ५९.। इति सिपः षत्वं। बहुलग्रहणात्सिपः परस्याच्च्वपि भवति। पा० २. ४. ७३.। सिपा व्यवधानात्पश्चादेशो न भवति। पा० ७. ३. ७८.। शपः पित्त्वादनुदात्तत्वं। उत्तरस्य लसार्वधातुकानुदात्तत्वं। धातुस्वर एव शिष्यते। हिशब्दयोगात्तिङ्ङतिङ इति निघातो न भवति। हि च। पा० ८. १. ३४.। इति प्रतिषेधात्। संजग्मानः। गमेः संपूर्वाच्छंदसि लुङ्लङ्लिटः। पा० ३. ४. ६.। इति वर्तमाने लिट्। समो गम्यृच्छिभ्यां। पा० १. ३. २९.। इत्यात्मनेपदविधानाल्लिटः कानजादेशः। पा० ३. २. १०६.। द्विर्भावः। पा० ६. १. ८.। हलादिशेषः। पा० ७. ४. ६०.। अभ्यासस्य चुत्वं। पा० ७. ४. ६२.। गमहनेत्युपधालोपः। पा० ६. ४. ९८.। [illegible]दंतोदात्तत्वं। गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वं। अबिभ्युषा। ञिभी भये। पूर्ववल्लिट्। शेषात्कर्तरि परस्मैपदं। पा० १. ३. ७८.। इति परस्मैपदं। क्वसुश्च। पा० ३. २. १०७.। इति लिटः क्वसुरादेशः। तस्य कित्त्वाद्गुणाभावः। द्विर्भावः। अभ्यासस्य ह्रस्वजश्त्वे। पा० ७. ४. ५९. ८. ४. ५४.। क्वाति[illegible]। पा० ७. २. १३.। प्राप्त इड्वस्वेकाजाद्घसां। पा० ७. २. ६७.। इति नियमान्निवर्तते। नञ्समासे तृतीयैकवचने भत्वाद्वसोः संप्रसारणं। पा० ६. ४. १३१.। इति वकारस्योकारः। संप्रसारणाच्च। पा० ६. १. १०८.। इति पूर्वरूपत्वं। शासिवसिघसीनां च। पा० ८. ३. ६०.। इति षत्वं। इयङादेशं बाधित्वैरनेकाचोऽसंयोगपूर्वस्य। पा० ६. ४. ८२.। इति यणादेशः। अव्ययपूर्वपदप्रकृ-

तिस्वरत्वं। पूर्वेण सह संहि[illegible]ङः पदांतादति। पा॰ ६.१.१०९.। इति परपूर्वत्वे प्राप्ते प्रकृत्यांतःपादमव्यपरे। पा॰ ६.१.११५.। इति प्रकृतिभावः। मंदू। मदि स्तुतिमोदमदस्वप्नकांतिगतिषु। इदितो नुम् धातोः। पा॰ ७.१.५८.। इति नुमागमः। कुरित्यनुवृत्तौ खरुशंकुपीयुनीलंगुलिगु। उ॰ १.३७.। इत्यत्राविभक्तिकनिर्देशाद्बंतेर्हिगुरितिवद्वालंतरादपि कुरित्युक्तं। प्रत्ययस्वरेणांतोदात्तः। द्विवचनमौ। पा॰ ४.१.२.। प्रथमयोः पूर्वसवर्णः। पा॰ ६.१.१०२.। तृतीयैकवचने चेत् सुपां सुलुगित्यादिना पूर्वसवर्णदीर्घत्वं। समानवर्चसा। समानं वर्चो ययोरिति वा यस्येति वा बहुव्रीहिः। द्विवचने सुपां सुलुगित्या[illegible]। समानपदस्य प्रातिपदिकांतोदात्तत्वं। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण तदेवावशिष्यते॥

अनवद्यैरभिद्युभिर्मखः सहस्वदर्चति। गणैरिंद्रस्य काम्यैः॥८॥

अनवद्यैः। अभिद्युऽभिः। मखः। सहस्वत्। अर्चति। गणैः। इंद्रस्य। काम्यैः॥८॥

मखः प्रवर्तमानोऽयं यज्ञोऽनवद्यैर्दोषरहितैरभिद्युभिर्द्युलोकमभिगतैः काम्यैः फलप्रदत्वेन कामयितव्यैर्गणैर्मरुत्समूहैः सहितमिंद्रस्येंद्रं सहस्वद्बलोपेतं यथा भवति तथार्चति। पूजयति। अयं यज्ञो मरुत इंद्रं चातिशयेन प्रीणयतीत्यर्थः। यज्ञ इत्यादिषु पंचदशसु यज्ञनामसु मखो विष्णुरिति पठितं। चतुश्चत्वारिंशत्स्वर्चतिकर्मस्वर्चति गायतीति पठितं॥ न विद्यतेऽवद्यं येषां तेऽनवद्याः। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। अभिगता द्यौर्यैस्तेऽभिद्यवः। तैरभिद्युभिः। अभिशब्दः प्रातिपदिकस्वरेणांतोदात्तः। बहुव्रीहौ पूर्वप[illegible] स एव शिष्यते। मखः। प्रातिपदिकस्वरः। सहो बलमस्मिन्नर्चनकर्मण्यस्तीति सहस्वत्। तसौ मत्वर्थे। पा॰ १.४.१९.। इति भसंज्ञया पदसंज्ञाया बाधितत्वात्सकारस्य रुत्वाभावः। मादुपधायाश्च मतोर्वोऽयवादिभ्यः। पा॰ ८.२.९.। इति मतुपो मस्य वत्वं। सहस्शब्दो नब्विषयस्यानिसंतस्येत्याद्युदात्तः। मतुपः पित्त्वात्स एव शिष्यते। काम्यैः। कमेर्णिङ्। पा॰ ३.१.३०.। अत उपधायाः। पा॰ ७.२.११६.। इति वृद्धिः। जनी जॄष् क्नसु रंजोऽमंताश्च। धा॰ १९.६३-६७.। इत्यमंतत्वेन प्राप्तस्य मित्त्वस्य न कम्यमि चमामिति प्रतिषेधात्। धा॰ १९.६९.। मितां ह्रस्वः। पा॰ ६.४.९२.। इत्युपधाह्रस्वत्वं न भवति। ण्यंतादचो यत्। पा॰ ३.१.९७.। णिलोपः। पा॰ ६.४.५१.। तित्स्वरितं। पा॰ ६.१.१८५.। इति प्राप्ते यतोऽनावः। पा॰ ६.१.२१३.। इत्याद्युदात्तत्वं॥

अतः परिज्मन्ना गहि दिवो वा रोचनादधि। समस्मिन्नृंजते गिरः॥९॥

अतः। परिऽज्मन्। आ। गहि। दिवः। वा। रोचनात्। अधि। सं। अस्मिन्। ऋंजते। गिरः॥९॥

हे परिज्मन् परितो व्यापिन्मरुद्गण अतोऽस्मान्मरुद्गणस्थानादंतरिक्षाद्वा गहि। आ[illegible]कर्मण्यागच्छ। दिवो वा। द्युलोकाद्वा समागच्छ। रोचनादधि। दी[illegible]मंडलाद्वा समागच्छ। अस्मदीयकर्मकाले यत्र यत्र तिष्ठसि ततः सर्वस्मादागच्छेत्यर्थः। [illegible] तदुच्यते। अस्मिन्कर्मणि वर्तमान ऋत्विग्गिरः स्तुतीः समृंजते। सम्यक् प्रसाधयति। ऋंजतिः प्रसाधनकर्मा। नि॰ ६.२१.। इति यास्कः। एताः स्तुतीः श्रोतुमागच्छेत्यर्थः। यद्यप्यृत्विजा मंत्रस्य प्रयुज्यमानत्वादृंजतिधातोरुत्तमपु[illegible] भवितव्यं तथापि परोक्षकृतत्वेन निर्देशात्प्रथमपुरुषप्रयोगः। परोक्षकृतलक्षणं च यास्क आह। तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च। तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यंते प्रथमपुरुषैश्चाख्यातस्य। नि॰ ७.१.। इति॥ अतः। पंचम्यास्तसिल्। पा॰ ५.३.७.। एतदोऽश्। पा॰ ५.३.५.। शित्त्वात्सर्वादेशः। पा॰ १.१.५५.। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। परिज्मन्। अज गतिक्षेपणयोः। अन्येभ्योऽपि दृश्यंते। पा॰ ३.२.७५.। इति मनिन्। अकारलोपश्छांदसः। आमंत्रितनिघातः। गहि। गमेर्बहुलं छंदसि। पा॰ २.४.७३.। इति शपो लुक्। हेर्ङित्त्वात्। पा॰ ३.४.८७.। अनु[illegible]त्यादिना। पा॰ ६.४.३७.। मलोपः। अतो हेः। पा॰ ६.४.१०५.। इति हिलोपो न भवति तस्मिन्कर्तव्येऽसिद्धवदत्रा भात्। पा॰ ६.४.२२.। इति [illegible]तत्वात्। दिवः। ऊडिदमित्यादिना विभक्तिरुदात्तत्वं। वा। चादयोऽनुदात्ताः। फि॰ ४.१६.। इत्यनुदात्तः। रोचनात्। रुच दीप्तौ। अनुदात्तेतश्च हलादेः। पा॰ ३.२.१४९.। इति युच्। [illegible]योरनाकौ। पा॰ ७.१.१.।

इत्यनादेशः। चिदित्यंतोदात्तः। अधि। आधपरी अनर्थकौ। पा॰ १. ४. ९३.। इति कर्मप्रवचनीयत्वेन सह निपातसंज्ञायाः समावेशान्निपाता आद्युदात्ता इत्याद्युदात्तः। अस्मिन्। [illegible] मो ऽन्वादेशेऽशनुदात्तस्तृतीयादौ। पा॰ २. ४. ३२.। इत्यश् अनुदात्तः। शित्त्वात्सर्वादेशः। विभक्तिरनुदात्तौ सुप्पितौ। पा॰ ३. १. ४.। इत्यनुदात्तेति सर्वानुदात्तत्वं। ऋंजते। ऋजि भृजी भर्जने। समित्युपसर्गयोगात्प्रसाधने वर्तते। निघातः। गिरः। प्रातिपदिकस्वरः॥

इतो वा सातिमीमहे दिवो वा पार्थिवादधि। इंद्रं महो वा रजसः॥१०॥

इतः। वा। सातिं। ईमहे। दिवः। वा। पार्थिवात्। अधि। इंद्रं। महः। वा। रजसः॥१०॥

इंद्रं देवं प्रति सातिं धनदानमधीमहे। आधिक्येन याचामहे। कस्माल्लोकादिति तदुच्यते। इतोऽस्माद्दृश्यमानात्पार्थिवात्पृथिवीलोकाद्वा दिवो वा द्युलोकाद्वा महो महतः प्रौढाद्रजसो वा पद्यादीनां रंजकादंतरिक्षलोकाद्वा। अयमिंद्रो यतःकुतश्चिदानीयास्मभ्यं धनं प्रयच्छत्वित्यर्थः। सप्तदशसु याच्ञाकर्मस्वीमहे यामीति पठितं॥ इतः। इदंशब्दात्पंचम्यास्तसिल्। इदम इश्। पा॰ ५. ३. ३.। इतीश्। शित्त्वात्सर्वादेशः। अचोऽडिदमित्यस्यावकाशः। पा॰ ६. १. १७१.। आभ्यां एभिः। लितीत्यस्यावकाशः। पा॰ ६. १. १९३.। पचनं पाचकः। उभावपि नित्यौ। तत्र परत्वाद्विप्रतिषेधे परं कार्यं। पा॰ १. ४. २.। इति लितीतीकारस्योदात्तत्वं। पञ्चात्तसेः प्रागिदशो विभक्तिः। पा॰ ५. ३. १.। इति विभक्तिसं[illegible]विभक्ति-रुच्यमानमुदात्तत्वं भवति। सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव। परि॰ ४०.। इत्यूडिदमित्यस्य पुनरप्रवृत्तिरेवेति चेन्न। लक्ष्यानुरोधेन पुनः प्रसंगविज्ञानं चेति स्वीकारात्। नन्वेवं यतस्तत इत्यादावपि परेण लित्स्वरेण बाधितमपि साविकाच इति तसिल उदात्तत्वं स्यादिति चेन्न। यत्तच्छब्दयोः सावर्णात्वे न गोश्वन्साववर्णेति। पा॰ ६. १. १८२.। निषेधात्। न च पुनः प्रसंगविज्ञानं चेत्येतत्सार्वत्रिकं लक्ष्यानुरोधेन क्वचिदेव तदाश्रयणादिति। सातिं। षणु दाने। धात्वादेः षः सः। पा॰ ६. १. ६४.। भावे क्तिन्। जनसनखनां सन्झलोः। पा॰ ६. ४. ४२.। इति नकारस्यात्वं। तितुत्रतथसिसुसरकसेषु च। पा॰ ७. २. ९.। इति निषेधादिण्न भवति। नित्स्वरे प्राप्त उदात्त इत्यनुवृत्तावूतियूतिजूतिसातिहेतिकीर्तयश्च। पा॰ ३. ३. ९७.। इति निपातनादंतोदात्तत्वं। ईमहे। ईङ् गतौ। श्यनोऽपि बहुलं छंदसीति लुक्। अस्य धातोर्ङित्त्वात्तास्यनु[illegible] पदेशात्। पा॰ ६. १. १८६.। इति लसार्वधातुकस्यानुदात्तत्वे धातुस्वर एव शिष्यते। न च तिङ्ङतिङ इति निघातः। चवायोगे प्रथमा। पा॰ ८. १. ५९.। इति निषेधात्। उत्तरवाक्ययोरपि हि वाशब्दयोगादन्यथा वाक्यापरिपूर्तेस्तिङ्विभक्तेरवश्यमध्याहारात्तदपेक्षयैषा प्रथमा तिङ्विभक्तिरिति। दिवः। [illegible] विभक्तेरुदात्तत्वं। पार्थिवात्। प्रथ प्रख्याने। प्रथत इति पृथिवी। प्रथेः षिवन्संप्रसारणं च। उ॰ १. १५०.। इति षिवन्प्रत्ययः। षिद्गौरादिभ्यश्च। पा॰ ४. १. ४१.। इति ङीष्। प्रत्ययस्वरेणोदात्तः। शेषनिघातेनानुदात्तादिः पृथिवीशब्दः। पृथिव्या विकार इत्यर्थ ओरञित्यनुवृत्तावनुदात्तादेश्च। पा॰ ४. ३. १४०.। इत्यञ्। यस्येति च। पा॰ ६. ४. १४८.। इतीकारलोपः। तद्धितेष्वचामादेः। पा॰ ७. २. ११७.। इत्यादिवृद्धिः। रपरत्वं। पा॰ १. १. ५१.। ञ्नित्यादिर्नित्यमित्याद्युदात्तः। अधि। निपातत्वादाद्युदात्तः। इंद्रं। रन्प्रत्ययांत आद्युदात्तः। महः। महत इत्यस्याकारतकारयोर्लोपश्छांदसः। साविकाच इति विभक्तेरुदात्तत्वं। रजसः। नाब्विषयस्यानिसंतस्येत्याद्युदात्तत्वं॥ ॥१२॥

इंद्रमित्यादिकं दशर्चं यत्सूक्तं तत्सु [illegible] चतुर्थं। ऋषिश्छंदोदेवता विनियोगश्च पूर्ववत्। विशेषविनियोगस्तूच्यते। महाव्रते निष्केवल्यशस्त्र इंद्रमिद्गाथिन इति सूक्तं। तथा च पंचमारण्यके सूचितं। शिरो गायत्रमिंद्रमिद्गाथिनः। ऐ॰ आ॰ ५. २. १.। इति तथा चतुर्विंशेऽहनि ब्राह्मणाच्छंसिनः शस्त्र इंद्रमिद्गाथिन इति षळहस्तोत्रियस्तृचः। चतुर्विंशे [illegible] याहि सुषुमा हि त इंद्रमिद्गाथिनो बृहत्। आ॰ ७. २.। इति सूचितत्वात्॥ अतिरात्रे प्रथमे पर्यायेऽच्छावाकशस्त्रेऽयमेव तृचोऽनुरूपः। सूचितं च। इंद्राय मद्वने सु[illegible]गाथिनो बृहत्। आ॰ ६. ४.। इति॥

इंद्रमिद्गाथिनो बृहदिंद्रमर्केभिरर्किणः । इंद्रं वाणीरनूषत ॥१॥

इंद्रं । इत् । गाथिनः । बृहत् । इंद्रं । अर्केभिः । अर्किणः । इंद्रं । वाणीः । अनूषत ॥१॥

गाथिनो गीयमानसामयुक्ता उद्गातार इंद्रमिदिंद्रमेव बृहत् त्वामिद्धि हवामहे । ऋग्वे॰ ६. ४६. १. । इत्यस्यामृच्युत्पन्नेन बृहन्नामकेन साम्नानूषत । स्तुतवंतः । अर्किणोऽर्चनहेतुमंत्रोपेता होतारोऽर्केभिर्ऋग्रूपैर्मंत्रैरिंद्रमेवानूषत । ये त्ववशिष्टा अध्वर्यवस्ते वाणीर्वाग्भिर्यजूरूपाभिरिंद्रमेवानूषत । अर्कशब्दस्य मंत्रपरत्वं यास्केनोक्तं । अर्को मंत्रो भवति यदेनेनार्चंति । नि॰ ५. ४. । इति । श्लोक इत्यादिषु सप्तपंचाशत्सु वाङ्नामसु वाशी वाणीति पठितं ॥ गाथिनः । उषिकुषिगार्तिभ्यस्थन् । उ॰ २. ४. । इति गायतेस्थन्प्रत्ययः । नित्त्वादाद्युदात्तः । गाथा एषां संतीति गाथिनः । व्रीह्यादिभ्यश्च । पा॰ ५. २. ११६. । इतीनिः । प्रत्ययस्वरेणेकार उदात्तः । स च सति शिष्टः । बृहत् । बृहता । तृतीयैकवचनस्य सुपां सुलुगिति लुक् । पृषद्बृहन्महज्जगच्छतृवच्च । उ॰ २. ८४. । इत्यंतोदात्तो निपातितः । अर्केभिः । अर्च पूजायां । अर्च्यंत एभिरित्यर्का मंत्राः । पुंसि संज्ञायां घः प्रायेण । पा॰ ३. ३. ११८. । इति घः । चजोः कु घिण्ण्यतोः । पा॰ ७. ३. ५२. । इति कुत्वं । प्रत्ययस्वरेणांतोदात्तः । बहुलं छंदसि । पा॰ ७. १. १०. । इति भिस ऐसादेशो न भवति । अर्काः स्तुतिसाधनभूता मंत्रा एषां संतीत्यर्किणः । वाणीः । वृषादीनां च । पा॰ ६. १. २०३. । इत्याद्युदात्तः । दीर्घाज्जसि च । पा॰ ६. १. १०५. । इति पूर्वसवर्णदीर्घनिषेधस्य वा छंदसि । पा॰ ६. १. १०६. । इति विकल्पितत्वाद्दीर्घः । तृतीयार्थे प्रथमा । अनूषत । णु स्तुतौ । णो नः । पा॰ ६. १. ६५. । इति नत्वं । लुङि व्यत्ययेनात्मनेपदं । झस्यादादेशः । पा॰ ७. १. ५. । सिच इडभाव उकारस्य दीर्घत्वं च छांदसं । धातोः कुटादित्वात् । पा॰ १. २. १. । सिचो ङित्त्वेन । पा॰ १. १. ५. । गुणाभावः ॥

इंद्र इद्धर्योः सचा संमिश्ल आ वचोयुजा । इंद्रो वज्री हिरण्ययः ॥२॥

इंद्रः । इत् । हर्योः । सचा । संऽमिश्लः । आ । वचःऽयुजा । इंद्रः । वज्री । हिरण्ययः ॥२॥

इंद्र इदिंद्र एव हर्योरिंद्रस्याश्वयोः सचा सह युगपदा संमिश्लः सर्वतः सम्यग्मिश्रयिता कीदृशयोर्हर्योः । वचोयुजा । इंद्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः । अयमिंद्रो वज्री वज्रयुक्तो हिरण्ययो हिरण्मयः । सर्वाभरणभूषित इत्यर्थः ॥ हर्योः । हरत इति हरी । इन् । नित्त्वादाद्युदात्तः । सचा सहेत्युक्तं । नि॰ ५. ५. । संमिश्लः । मिश्रणं मिश्रः । मिश्रयतेर्घञ् । पा॰ ३. ३. १८. । सम्यक् मिश्रो यस्यासौ संमिश्रः । लत्वं छांदस । सम्यक् मिश्रयितेत्यर्थः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । वचोयुजा । वचसा युज्येते इति वचोयुजौ । तयोः । षष्ठीद्विवचनस्य सुपां सु[illegible]देशः । युज्शब्दो धातुस्वरेणांतोदात्तः । कृदुत्तरपद[illegible]स्वरेण स एव शिष्यते । वज्री । वज्रमस्यास्ति । अत इनिठनौ । पा॰ ५. २. ११५. । प्रत्ययस्वरः । हिरण्ययः । ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छंदसि । पा॰ ६. ४. १७५. । इति हिरण्मयशब्दस्य मकारलोपो निपात्यते । अकारः प्रत्ययस्वरेणोदात्तः । पूर्वेणानुदात्तेन सहैकादेश उदात्तेनोदात्त इत्युदात्तः ॥

इंद्रो दीर्घाय चक्षस आ सूर्यं रोहयद्दिवि । वि गोभिरद्रिमैरयत् ॥३॥

इंद्रः । दीर्घाय । चक्षसे । आ । सूर्यं । रोहयत् । दिवि । वि । गोभिः । अद्रिं । ऐरयत् ॥३॥

अयमिंद्रो दीर्घाय प्रौढाय निरंतराय चक्षसे दर्शनाय दिवि द्युलोके सूर्यमा रोहयत् । पुरा वृत्रासुरेण जगति यदापादितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिद्ध्यर्थमादित्यं द्युलोके स्थापितवानित्यर्थः । स च सूर्यो गोभिः स्वकीयरश्मिभिरद्रिं पर्वतप्रमुखं सर्वं जगद्व्यैरयत् । विशेषेण दर्शनार्थं प्रेरितवान् । प्रकाशितवानित्यर्थः । अथवा । इंद्र एव गोभिर्जलैर्निमित्तभूतैरद्रिं मेघं व्यैरयत् । विशेषेण प्रेरितवान् । पंचदशसंख्याकेषु रश्मिनामसु खेदयः किरणा गाव इति पठितं । त्रिंशत्संख्याकेषु मेघनामस्वद्रिर्ग्रावेति पठितं ॥ दीर्घाय । प्रातिपदिकस्वरेणांतोदात्तः । चक्षसे । चक्षेः सर्वधातुभ्योऽसुन् । उ॰ ४. १८८. । इत्यसुन् । बहुलग्रहणात्ख्याञादेशाभावः । नित्त्वादाद्युदात्तः । सूर्यं । सुवति प्रेरयतीति सूर्यः । षू प्रेरणे । धात्वादेः षः सः । राजसूयसूर्य-

त्यादिना । पा० ३. १. ११४. । क्यप्प्रत्ययः । तस्य रुडागमश्च निपात्यते । क्यपः कित्त्वाद्गुणाभावः । पित्त्वादनुदात्तत्वं । धातुस्वर एव शिष्यते । रोहयत् । रुहेर्ण्यंताल्लङि बहुलं छंदस्यमाङ्योगेऽपि । पा० ६. ४. ७५. । इत्यडभावो निघातश्च । दिवि । [illegible] विभक्तिरुदात्तत्वं । अद्रिं । अदिशदिभूशुभिभ्यः क्रिन् । उ० ४. ६५. । इति क्रिन्प्रत्ययः । अदंति पशवस्तृणादिकमचेत्यद्रिः । नित्त्वादाद्युदात्तत्वं । ऐरयत् । ईर गतौ । स्वंताल्लङ् । निघातः ॥

इंद्रं वाजेषु नोऽव सहस्रप्रधनेषु च । उग्र उग्राभिरूतिभिः ॥ ४ ॥
इंद्रं । वाजेषु । नः । अव । सहस्रऽप्रधनेषु । च । उग्रः । उग्राभिः । ऊतिऽभिः ॥ ४ ॥

हे इंद्र उग्रः शत्रुभिरप्रधृष्यस्त्वमुग्राभिरप्रधृष्याभिरूतिभिरस्मद्विषयरक्षाभिर्वाजेषु युद्धेषु नोऽस्मानव । रक्ष । तथा सहस्रप्रधनेषु च । सहस्रसंख्याकगजाश्वादिलाभयुक्तेषु महायुद्धेष्वपि रक्ष ॥ वाजेषु । वृषादीनां च । पा० ६. १. २०३. । इत्याद्युदात्तत्वं । नोऽव । नसः सकारस्य हल्वोत्वगुणेषु प्रकृत्यांतःपादमिति प्रकृतिभावो न भवति । अव्यपर इति निषेधात् । पा० ६. १. ११५. । अव । अव रक्षणे । तिङ्ङतिङ इति निघातः । यद्यपि सहस्रप्रधनेषु चावित्यध्याहृतां [illegible] प्रथमायाः श्रूयमाणाया अवेति क्रियायाश्चवायोगे प्रथमा । पा० ८. १. ५९. । इति निघातनिषेधः प्राप्तस्तथापि वाजेष्वित्यत्र चकारस्य [illegible] पि विभाषा । पा० ८. १. ६३. । इति निषेधस्य विकल्पितत्वाद्च निघातः प्रवर्तते । सहस्रशब्दः कर्दमादीनां च । फि० ३. १०. । इति मध्योदात्तः । सहस्रप्रधनेषु वाजेषु । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । उग्रः । उच समवाये । चस्य गः । ऋज्रेंद्रेति रन् । व्यत्ययेनांतोदात्तः । ऊतिभिः । ऊतियूतीत्यादिना क्तिन्नुदात्तः ॥

इंद्रं वयं महाधन इंद्रमर्भे हवामहे । युजं वृत्रेषु वज्रिणं ॥ ५ ॥
इंद्रं । वयं । महाऽधने । इंद्रं । अर्भे । हवामहे । युजं । वृत्रेषु । वज्रिणं ॥ ५ ॥

वयमनुष्ठातारो महाधने प्रभूतधननिमित्तमिंद्रं हवामहे । आह्वयामः । अर्भेऽर्भके स्वल्पेऽपि धने निमित्तभूते सतींद्रं हवामहे । कीदृशमिंद्रं । युजं सहकारिणं समाहितं वा वृत्रेषु शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय वज्रिणं वज्रोपेतं ॥ महाधनशब्दो यद्यपि संग्रामनामसु पठितस्तथापि महद्धनमत्र संग्राम इति बहुव्रीहित्वे [illegible] तद्गृहीतं । महाधने महच्च तद्धनं चेति समासस्येत्यंतोदात्तः । अर्भे । अर्तिगृभ्यां भन् । उ० ३. १५२. । नित्त्वादाद्युदात्तः । हवामहे । ह्वेञ् स्पर्धायां शब्दे च । ञित्त्वात्कर्त्रभिप्राये । पा० १. ३. ७२. । आत्मनेपदं । लटः स्थाने महिङ् । पा० ३. ४. ७८. । टित आत्मनेपदानां । पा० ३. ४. ७९. । इति टेरेत्वं । कर्तरि शप् । पा० ३. १. ६८. । ह्वः संप्रसारणं । पा० ६. १. ३२. । इत्यनुवृत्तौ बहुलं छंदसि । पा० ६. १. ३४. । इति संप्रसारणं वकारस्योकारः । परपूर्वत्वं । गुणावादेशौ । अतो दीर्घो यञि । पा० ७. ३. १०१. । इति दीर्घत्वं । तिङ्ङतिङ इति निघातः । युजं । युज समाधावित्यस्य क्विप् । युजेरसमासे । पा० ७. १. ७१. । इति नुम् न भवति । स हि युजेरिति निर्देशादिकाररहितस्य न भवति । अनित्यमागमशासनमिति वा युजियोग इत्यस्यापि नुम् न भवति । वृत्रेषु । वृतु वर्तने । प्रतिकूलतया वर्तत इति वृत्राणि शत्रुकुलानि । स्फायितंचीत्यादिना रक्प्रत्ययः । उ० २. १३. । कित्त्वाद्गुणाभावः । प्रत्ययस्वरः । वज्रिणं । अत इनिठनाविति इनिः । प्रत्ययस्वरः ॥ ॥ १३ ॥

स नो वृषन्नमुं चरुं सत्रादावन्नपा वृधि । अस्मभ्यमप्रतिष्कुतः ॥ ६ ॥
सः । नः । वृषन् । अमुं । चरुं । सत्राऽदावन् । अप । वृधि । अस्मभ्यं । अप्रतिऽस्कुतः ॥ ६ ॥

हे सत्रादावन् अस्मदभीष्टानां सर्वेषां फलानां सह प्रदातः अतो [illegible] हे वृषन् वृष्टिप्रदेंद्र नोऽस्मदर्थममुं दृश्यमानं चरुं मेघमपा वृधि । उद्घाटय । तथैवास्मभ्यम [illegible] तः प्रतिशब्दरहितः । यद्यदस्माभिर्याच्यते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयति । अतोऽस्मद्विषये कदाचिदप्यप्रतिस्खलितः । एतदेवाभिप्रेत्य यास्क आह । अप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितो वा । नि० ६. १६. । इति ॥ वृषन् । आमंत्रितनि-

घातः । असुं । प्रातिपदिकस्वरेणांतोदात्तः । चरुं । चरतीति चरुः । भृमृशीतॄचरित्सरितनिधनिमिमस्जिभ्य उः । उ° १. ७. । इत्युप्रत्ययः । प्रत्ययस्वरेणांतोदात्तः । सत्रादावन् । सत्राशब्दः सहार्थे । अभिमतफलजातं सकलं सह ददातीति सत्रादावा । आतो मनिन्क्वनिब्वनिपश्च । पा° ३. २. ७४. । इति वनिप् । आमंत्रितस्य चेत्याद्युदात्तत्वं । पादादित्वान्न निघातः । अप । निपातस्य च । पा° ६. ३. १३६. । इति दीर्घः । निपात आद्युदात्तः । वृधि । वृञ् वरणे । लोटः सिप् । तस्य सेर्ह्यपिच्च । पा° ३. ४. ८७. । इति हिः । स्वादिभ्यः श्नुः । पा° ३. १. ७३. । तस्य बहुलं छंदसीति लुक् । श्रुशृणुपॄकृवृभ्यश्छंदसि । पा° ६. ४. १०२. । इति हेर्धिरादेशः । तस्य ङित्त्वात्पूर्वस्य गुणाभावः । निघातः । अस्मभ्यं । अस्मच्छब्दाद्भ्यसो भ्यं । पा° ७. १. ३०. । इति भ्यमादेशः । शेषे लोपः । पा° ७. २. ९०. । इति दकारलोपः । बहुवचने झल्येत् । पा° ७. ३. १०३. । इत्येत्वं न भवति । अंगवृत्ते पुनर्वृत्तावविधि[illegible]रित्युक्तं । म° ७. १. ३०. । प्रातिपदिकस्वरेण सैत्यकार उदात्तः । भ्यसोऽभ्यमित्यभ्यमादेशपक्षे शेषे लोप इति मपर्यंतशेषस्यादृशब्दस्य लोपः । [illegible]णाभ्यम आदेरकारस्योदात्तत्वं । पा° ६. १. १६१. । अप्रतिष्कुतः । केनाचिद[illegible]तः । कुङ् शब्दे । निष्ठा । पा° ३. २. १०२. । इति कर्मणि क्तप्रत्ययः । प्रतेः प्राक्प्रयोगः । पारस्करादेराकृतिगणत्वात्सु[illegible]गमः । पा° ६. १. १५७. । सु[illegible]त्वात्षत्वं । पा° ८. ३. ९८. । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं ॥

तुंजेतुंजे य उत्तरे स्तोमा इंद्रस्य वज्रिणः । न विंधे अस्य सुष्टुतिं ॥ ७ ॥

तुंजेऽतुंजे । ये । उत्ऽतरे । स्तोमाः । इंद्रस्य । वज्रिणः । न । विंधे । अस्य । सुऽस्तुतिं ॥ ७ ॥

तुंजे तुंजे तस्मिं[illegible]दातरि देवांतरे ये स्तोमाः स्तोत्रविशेषा उत्तर उत्कृष्टाः संति तैः स्तोमैः सर्वैरपि वज्रिणो वज्रयुक्तस्यास्येंद्रस्य सुष्टुतिं योग्यां शोभनस्तुतिं न विंधे । न विंदामि । इंद्रस्यात्यंतगुणबाहुल्येन देवांतरेषूत्तमत्वेन प्रसिद्धान्यपि स्तोत्राणि न पर्याप्तानीत्यर्थः । एतामृचं यास्क एवं व्याचष्टे । तुंजस्तुंजतेर्दानकर्मणः । दाने दाने य उत्तरे स्तोमा इंद्रस्य वज्रिणो नास्य तैर्विंदामि समाप्तिं स्तुतेः । नि° ६. १८. । इति ॥ तुंजे तुंजे । तुंजतिर्दानकर्मेत्युक्तं । ततः कर्तरि पचाद्यच् । पा° ३. १. १३४. । चित इत्यंतोदात्तत्वं । नित्यवीप्सयोः । पा° ८. १. ४. । इति द्विर्भावः । तस्य परमाम्रेडितं । पा° ८. १. २. । इति द्वितीयस्याम्रेडितसंज्ञा । अनुदात्तं च । पा° ८. १. ३. । इत्यनुदात्तत्वं । दातरि दातरीत्यर्थः । निरुक्ते तु दाने दान इत्यर्थतो व्याख्यानं । उत्तरे । तॄ प्लवनतरणयोः । भावे ऋदोरप् । पा° ३. ३. ५७. । उच्छब्द उत्कृष्टवचनः । उत्कृष्टस्तरो यस्येति बहुव्रीहिः । उच्छब्दो निपाता आद्युदात्ता इत्याद्युदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । स्तोमाः । अर्तिस्तुसुहुसृधृक्षि इत्यादिना । उ° १. १३९. । स्तोमशब्दो मनंतो नित्त्वादाद्युदात्तः । विंधे । विद्लृ लाभे । लट् । स्वरितेत्त्वादात्मनेपदं । उत्तमैकवचनमिट् । पा° ३. ४. ७८. । तुदादिभ्यः शः । पा° ३. १. ७७. । शे मुचादीनामिति नुम् । पा° ७. १. ५९. । दकारस्य व्यत्ययेन धकारः । अस्य । प्रकृतस्येंद्रस्य परामर्शादन्वादेश इदमोऽश् । पा° २. ४. ३२. । [illegible]ऽनुदात्तः । सुष्टुतिं । ष्टुञ् स्तुतौ । धात्वादेः षः सः । पा° ६. १. ६४. । इति सत्वं । स्त्रियां क्तिन् । पा° ३. ३. ९४. । इति भावे क्तिन् । स्वित्युदात्तेनोपसर्गेण प्रादिसमासः । पा° २. २. १८. । उप[illegible]दिना षत्वं । पा° ८. ३. ६५. । [illegible]न सोः प्राप्तमुदात्तत्वं बाधित्वा गतिकारकोपपदात्कृत् । पा° ६. २. १३९. । इत्युत्तरपदप्रकृतिस्वरेण धातोरुदात्तत्वे प्राप्ते [illegible]पवादत्वेन तादौ च निति कृत्यतौ । पा° ६. २. ५०. । इत्यनंतरस्य गतिसंज्ञकस्य सोरेवोदात्तत्वेन भवितव्यं । तत्तु मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः । पा° ६. २. १५१. । इत्युत्तरपदांतोदात्तत्वेन बाध्यते । तथा च सुहवां सुष्टुती हुवे । ऋग्वे° २. ३२. ४. । वृष्णे चोदस्व सुष्टुति । ऋग्वे° ८. ७५. ६. । यास्ते राके सुमतयः । ऋग्वे° २. ३२. ५. । [illegible]त्वमित्याहुः । यथा तु मन्क्तिन्नित्यादौ वृत्तावुक्तं तथैव तन्न घटत इति लक्ष्यते । तत्र हि [illegible]वाशिषि । पा° ६. २. १४८. । इत्यतः [illegible]नुवृत्तेः पाणिनिकृतिरित्यादाविव मन्क्तिन्नित्यादिसूत्रमित्युक्तं । कारकादित्येव प्रकृतिः प्रहृतिरिति च प्रत्युदाहृतं । स्यादेतत् । स्तूयतेऽनयेति स्तुतिरिति क्तिना करणभूतगर्भिधीयते । सुशब्देन च करणमेव विशेष्यते न धात्वर्थः । तथा च सुष्टुति[illegible] सुशब्दः कारकपर एव भविष्यति । प्रकृतिः प्रहृतिरित्यादौ तु प्रशब्दो धात्वर्थे विशेषणमेवेति तत्प्रत्युदाहरणोपपत्तिरिति । न । एवं सति सुशब्दस्य क्रियायोगाभावादुपसर्गाः क्रियायोगे । पा° १. ४. ५९. । इत्युक्ता उपसर्गसंज्ञा न स्यात् । तथा चो[illegible]दिना षत्वं न

स्यात्। ननु क्तिना करणमभिधीयते। क्रियासाधनं च करणं। तथा च करणविशेषणस्यापि सुशब्दस्य करणांतर्गतक्रियायोगादुपसर्गता भविष्यतीति। न। तथा सति यत्क्रियायुक्तास्तं प्रत्युपसर्गसंज्ञका इति करोत्यर्थमेव प्रति सोरुपसर्गता न तु स्तुधात्वर्थं प्रतीत्यस्य षत्वं न स्यादेव। ननु स्तुधात्वर्थद्वारैव तत्करणस्य सुशब्दो विशेषणं भविष्यति। या हि शोभना स्तुतिस्तत्करणमपि शोभनमेवेति। एवं च स्तुधात्वर्थसंबंधात्तं प्रत्युपसर्गत्वेन षत्वमपि भविष्यति। तद्द्वारा करणविशेषणत्वात् कारकवचनोऽपि सुशब्दो भविष्यतीति। वृत्त्यविरोधेनैव मन्क्तिनादिसूत्रस्य सुष्टुतिशब्दो विषयो भविष्यति। प्रकृतिः प्रहृतिरित्यत्र भावे क्तिन् प्रत्युदाहृतेति। न। तत्र प्रशब्दस्य करणपरत्वं। करणे क्तिनुदाहरणेऽपि धात्वर्थमात्रविशेषणतैव विवक्षिता न तद्द्वारा प्रत्ययार्थविशेषणतापीति तत्प्रत्युदाहरणोपपत्तिरिति। सुष्टुतिरित्यत्र पुनः क्तिनभिधेयकरणपर्यंतं सुशब्दस्य व्यापार इत्युदाहरणतैव न प्रत्युदाहरणतेति। न। किमत्र सुशब्दः श्रुत्यैव प्रकृतिप्रत्ययार्थोभयविशेषणपरः। उत श्रुत्यैकं विशिनष्टि अर्थादितरदिति। यदाप्युभयपरत्वं तदापि किं यौगपद्येन उत क्रमेणेति। आद्ये प्रति विशेष्यं विशेषणपदावृत्तिरिति प्रसंगः। द्वितीये विरम्य व्यापारापातः। न च शब्दबुद्धिकर्मणां विरम्य व्यापारः कस्यचिद्दृष्ट इष्टो वा। अतो न श्रुत्योभयपरत्वं। अथैकत्र श्रुत्या तात्पर्यं। अपरत्र त्वर्थादिति। तत्र धात्वर्थसंबंधस्यार्थिकत्वे षत्वासिद्धिः। प्रत्ययार्थसंबंधस्यार्थिकत्वे मन्क्तिन्नित्यादिस्वरासिद्धिः। आर्थिकेनापि कारकसंबंधेनोदाहरणत्वाभिधाने प्रकृतिः प्रहृतिरित्यादिप्रत्युदाहरणं न स्यात्। श्रुत्या धात्वर्थमात्रसंबंधस्यापि प्रशब्दस्यार्थात्तत्करणसंबंधः केन वारयितुं शक्यत इत्येषा दिक्। अत इह प्रत्ययार्थमात्रसंबंधपरत्वांगीकारेण स्वरः सिध्यतु षत्वं तु छांदसमस्तु। शोभना स्तुतिर्यस्यामिति बहुव्रीहिर्वा भवतु। एवं च नञ्सुभ्यां। पा॰ ६. २. १७२.। इत्यंतोदात्तं भविष्यति। अथवा सुष्ठु स्तुवंतीति सुष्टुतय इति करणभूता ऋचः स्तुतिशब्देनोच्यंते। क्तिच्क्तौ च संज्ञायां। पा॰ ३. ३. १७४.। इति क्तिच्प्रत्यये सति चित्त्वादंतोदात्तता भविष्यति। न च करणीभूतानामृचां कर्तृप्रत्ययेन क्तिचा कथमभिधानमिति वाच्यं। काष्ठानि पचंतीतिवत्तासामपि स्वव्यापारप्राधान्यविवक्षया करणत्वोपपत्तेरिति॥

वृषा यूथेव वंसगः कृष्टीरियर्त्योजसा। ईशानो अप्रतिष्कुतः॥८॥

वृषा। यूथाऽइव। वंसगः। कृष्टीः। इयर्ति। ओजसा। ईशानः। अप्रतिऽस्कुतः॥८॥

वृषा कामानां वर्षितेंद्र ओजसा स्वकीयबलेनानुग्रहीतुं कृष्टीर्मनुष्यानियर्ति। प्राप्नोति। कीदृश इंद्रः। ईशानः समर्थोऽप्रतिष्कुतः प्रतिशब्दरहितः। याच्यमानं न परिहरतीत्यर्थः। इंद्रस्य दृष्टांतः। वंसगो वननीयगतिर्वृषभो यूथेव गोयूथानि यथा प्राप्नोति तद्वत्॥ वृषा। कनिन्युवृषितक्षिधन्विराजिद्युप्रतिदिवः। उ॰ १. १५६.। इति वर्षतेः कनिन्प्रत्ययः। किंत्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तः। यूथा इव। युवंति मिश्रीभवंतीति यूथानि। यु मिश्रणामिश्रणयोः। तिथपृष्ठगूथयूथप्रोथाः। उ॰ २. १२.। इति थक्प्रत्ययांतो निपातितः। निपातनाद्दीर्घत्वं। प्रत्ययस्वरेणाकार उदात्तः। शेश्छंदसि बहुलं। पा॰ ६. १. ७०.। इति लुक्। इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यं। पा॰ २. १. ४. २.। इति समासेऽपि स एव स्वरः। वंसगः। पृषोदरादित्वादभिमतरूपस्वरसिद्धिः। पा॰ ६. ३. १०९.। कर्षंतीति कृष्टयः। क्तिच्क्तौ च संज्ञायामिति क्तिच्। चित्त्वादंतोदात्तः। इयर्ति। ऋ सृ गतौ। तिप्। शपः श्लुः। श्लौ। पा॰ ६. १. १०.। इति द्विर्भावः। अभ्यासस्योरदत्वहलादिशेषौ। पा॰ ७. ४. ६६. ६०.। अर्तिपिपर्त्योश्च। पा॰ ७. ४. ७७.। इत्यकारस्य इकारः। अभ्यासस्यासवर्णे। पा॰ ६. ४. ७८.। इतीयङादेशः। अंगस्य गुणो रपरत्वं। ओजसा। उब्जेर्बलोपश्च। उ॰ ४. १९१.। इत्यसुन् तत्संनियोगेन बकारलोपः। लघूपधगुणः। पा॰ ७. ३. ८६.। नित्त्वादाद्युदात्तः। ईशानः। ईश ऐश्वर्ये। लटः शानच्। अदिप्रभृतिभ्यः शप इति शपो लुक्। चित इत्यंतोदात्तं बाधित्वानुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वेन धातुस्वर एव शिष्यते। अप्रतिष्कुतः। अप्रतिशब्दितः। कु शब्दे। कर्मणि क्तः। पारस्करादित्वात्सुडागमः। सुषामादित्वात्षत्वं। नञ्समासः। अव्ययपूर्वपदप्रकृतिस्वरत्वं॥

य एकश्चर्षणीनां वसूनामिरज्यति। इंद्रः पंच क्षितीनां॥९॥

यः। एकः। चर्षणीनां। वसूनां। इरज्यति। इंद्रः। पंच। क्षितीनां॥९॥

य इंद्रः स्वयमेक एव चर्षणीनां मनुष्याणामिरज्यति ईष्टे तथा वसूनां धनानामिरज्यति स इंद्रः पंच

निषादपंचमानां चितीनां निवासार्हाणां वर्णानामनुग्रहीतेति शेषः ॥ एकः । इण् गतौ । इणभीकापाशल्यति-मर्चिभ्यः कन् । उ० ३. ४३. । इति कन् । बाहुलकात्कलोपाभावः । नित्त्वादाद्युदात्तत्वं । चर्षणीनां । प्रातिपदिकस्वरेणांतोदात्तः । अंतोदात्तादित्यनुवृत्तौ नामन्यतरस्यामिति विभक्तिरुदात्तत्वं । वसूनां । निदित्यनुवृत्तौ शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबंधिमनिभ्यश्च । उ० १. ११. । इत्युप्रत्ययः । नित्त्वादाद्युदात्तः । इरज्यति । कंड्वादिष्विरज् ईर्ष्यायां । अचैश्वर्यार्थः । कंड्वादिभ्यो यक् । पा० ३. १. २७. । प्रत्ययस्वरेणोदात्तः । पंच । पचि व्यक्तीकरणे । पंचेश्चेति कनिन् । नित्त्वादाद्युदात्तः । चितीनां । प्रातिपदिकस्वरेणांतोदात्तः । नामन्यतरस्यामिति विभ[illegible] ॥

आश्विनं शंसिष्यन्निंद्रं वो विश्वतस्परीति जुहुयात् । संस्थितेष्वाश्विनाय स्तुवत इति खंडे बण्महाँ असि सूर्येति द्वाभ्यामिंद्रं वो विश्वतस्परि । आ० ६. ५. । इति सूचितं ॥ चतुर्विंशेऽहनि प्रातःसवने [illegible]सेन इंद्रं वो विश्वतस्परीत्यारंभणीया । चतुर्विंश इत्युपक्रम्य ऋजुनीती नो वरुण इंद्रं वो विश्वतस्परि । आ० ७. २. । इति सूचितं ॥

इंद्रं॑ वो वि॒श्वत॒स्परि॒ हवा॑महे॒ जने॑भ्यः । अ॒स्माक॑मस्तु॒ केव॑लः ॥ १० ॥
इंद्रं॑ । वः॒ । वि॒श्वतः॑ । परि॑ । हवा॑महे । जने॑भ्यः । अ॒स्माक॑ । अ॒स्तु॒ । केव॑लः ॥ १० ॥

हे ऋत्विग्यजमाना विश्वतः सर्वेभ्यो जनेभ्यः परि उपर्यवस्थितमिंद्रं वो युष्मदर्थं हवामहे । आह्वयामः । अतः स इंद्रोऽस्माकं केवलोऽसाधारणोऽस्तु । इतरेभ्योऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः ॥ इंद्रं । रन्प्रत्ययांतो नित्त्वादाद्युदात्तः । वः । अनुदात्तं सर्वमित्यनुवृत्तौ बहुवचनस्य वस्नसौ । पा० ८. १. २१. । इति वस् । विश्वतः । लितीति प्रत्ययात्पूर्वमुदात्तं । परि । निपातत्वादाद्युदात्तः । संहितायां पंचम्याः परावध्यर्थे । पा० ८. ३. ५१. । इति विसर्जनीयस्य सत्वं । हवामहे । ह्वेञः शपि बहुलं छंदसीति संप्रसारणपरपूर्वत्वे । गुणावादेशौ । जनेभ्यः । जन्यंत इति जनाः । जनयतेः कर्मणि घञ् । जनिवध्योश्च । पा० ७. ३. ३५. । इत्युपधाया वृद्ध्यभावः । ञित्त्वादाद्युदात्तत्वं । अस्माकं । अस्मच्छब्दोऽंतोदात्तः । शेषे लोपः । पा० ७. २. ९०. । इत्यंतलोपपक्षे साम आकं । पा० ७. १. ३३. । [illegible]श उदात्तः । टिलोपपक्ष उदात्तनिवृत्तिस्वरेणाकार उदात्तः । केवलः । वृषादेराकृतिगणत्वा[illegible]ाद्युदात्तः ॥ ॥ १४ ॥ ॥ २ ॥

तृतीयेऽनुवाके चत्वारि सूक्तानि । तत्रैंद्र सानसिमित्यादिकं प्रथमं दशर्चं सूक्तं सुरूपकृत्नुमित्यादिषु षट्सु पंचमं । ऋष्याद्यस्तु पूर्ववत् । वि[illegible]ोऽस्तु । महाव्रते निष्केवल्य औष्णिहतृचाशीतावैंद्र सानसिं रयिमित्यादिके द्वे सूक्ते । पंचमारण्यक औष्णिही तृचाशीतिरिति खंडे शौनकेन सूचितं । सुरूपकृत्नुमूतय इति चैषैंद्र सानसिं रयिमिति सूक्ते । ऐ० आ० ५. २. ५. । इति ॥ अतिरात्रे प्रथमपर्यायेऽच्छावाकशस्त्र ऐंद्र सानसिमिति सूक्तं । सूचितं च । इंद्रमिद्गाथिनो बृहदैंद्र सानसिं । आ० ६. ४. । इति ॥ दर्शयाग इंद्र्याजिनः सांनाय्यस्यानुवाक्यैंद्र सानसिं रयिमिति । उक्ता देवता इत्यस्मिन्खंड ऐंद्र सानसिं रयिं प्र ससाहिषे पुरुहूत शत्रून् । आ० १. ६. । इति सूचितं ॥

एंद्र॑ सा॒न॒सिं र॒यिं स॒जित्वा॑नं सदा॒सहं॑ । वर्षि॑ष्ठमू॒तये॑ भर ॥ १ ॥
आ । इं॒द्र॒ । सा॒न॒सिं । र॒यिं । स॒ऽजित्वा॑नं । स॒दा॒ऽसहं॑ । वर्षि॑ष्ठं । ऊ॒तये॑ । भ॒र ॥ १ ॥

हे इंद्र ऊतयेऽस्मद्रक्षार्थं रयिं धनमा भर । आहर । कीदृशं रयिं । सानसिं संभजनीयं सजित्वानं समानशत्रुजयशीलं । धनेन हि शूरान्भृत्यान्संपाद्य शत्रवो जीयंते । सदासहं सर्वदा शत्रूणामभिभवहेतुं वर्षिष्ठं अतिशयेन वृद्धं । प्रभूतमित्यर्थः ॥ सानसिं । वन षण संभक्तावित्यस्मादसिप्रत्ययो वृद्धिरंतोदात्तत्वं च सानसिधर्णसीत्यादिना । उ० ४. १०७. । निपात्यते । रयिं । प्रातिपदिकस्वरेणांतोदात्तः । सजित्वानं । समानानरीञ्जेतुं शीलमस्य । अन्येभ्योऽपि दृश्यंते । पा० ३. २. ७५. । इति क्वनिप् । उपपदसमासः । समानस्य च्छंदस्यमूर्धप्रभृत्युदर्केषु । पा० ६. ३. ८४. । इति समानस्य सभावः । कृदुत्त[illegible] धातुस्वर एव शिष्यते । वर्षिष्ठं । [illegible]शब्दा[illegible]तिशायने तमबिष्ठनौ । पा० ५. ३. ५५. । इतीष्ठन् । प्रियस्थिरेत्यादिना । पा० ६. ४. १५७. । वृद्धशब्दस्य

वर्षादेशः। इष्टनो नित्वादाद्युदात्तत्वं। ऊतये। उदात्त [illegible]वृतिधूतिजूतिसातीत्यादिना क्तिन्नुदात्तो निपातितः। भर। हृग्रहोर्भश्छंदसि। पा॰ ८. २. ३२. १.। इति हकारस्य भकारः। ते प्राग्धातोः। पा॰ १. ४. ८०.। इति धातोः प्राक्प्रयोक्तव्यस्याङो व्यवहिताश्च। पा॰ १. ४. ८२.। इति छंदसि व्यवहितप्रयोगः॥

नि येन॑ मुष्टिह॒त्यया॒ नि वृ॒त्रा रु॒णधा॑महै। त्वोता॑सो॒ न्यर्व॑ता॥२॥

नि। येन॑। मु॒ष्टि॒ऽह॒त्यया॑। नि। वृ॒त्रा। रु॒णधा॑महै। त्वाऽऊ॑तासः। नि। अर्व॑ता॥२॥

येन धनेन संपादितानां भटानां नि मुष्टिहत्यया नितरां मुष्टिप्रहारेण वृत्रा शत्रून्नि रुणधामहै निरुद्धान्करवाम तादृशं धनमाहरेत्यर्थः। त्वोतासस्त्वया रक्षिता वयमर्वतास्मदीयेनाश्वेन नि रुणधामहा इत्यनुषंगः। पदातियुद्धेनाश्वयुद्धेन च शत्रून्विनाशयामेत्यर्थः॥ मुष्टिहत्यया। हनस्त च। पा॰ ३. १. १०८.। इति सुबंत उपपदे क्यप्। तत्संनियोगेन नकारस्य तकारः। कृदुत्तरपदप्रकृतिस्वरे प्राप्ते परादिश्छंदसि बहुलं। पा॰ ६. २. १९९.। इति बहुलग्रहणेन चिचक्रादीनां छंद[illegible]धानात्। पा॰ ६. २. १९९. १.। अंतोदात्तत्वं। नि। आख्यातसंबंधस्यापि नेरुपसर्गस्य व्यवहिताश्चेति व्यवहितप्रयोगः। वृत्रा। शेश्छंदसि बहुलं। पा॰ ६. १. ७०.। इति शेर्लोपः। नलोपः। रुणधामहै। आट्संयोगेन पित्त्वात्। पा॰ ३. ४. ९२.। श्नसोरल्लोपः। पा॰ ६. ४. १११.। इत्यकारलोपो न भवति। पित्त्वादेव चाख्यातस्यानुदात्तत्वेन विकरणस्य श्नम एवोदात्तत्वं शिष्यते। ननु तिङ्ङतिङ इति निघातेन भवितव्यं। न। द्वे ह्यत्र तिङ्विभक्ती। निविडया मुष्ट्या निरुणधामहा इत्यत्र श्रुतैका। अर्वता निरुणधामहा इत्यत्रानुषक्ता द्वितीया। तयोः समुच्चयार्थश्चकारो लुप्यते। तेन चादिलोपे विभाषा। पा॰ ८. १. ६३.। इति प्रथमेयं तिङ्विभक्तिर्न निहन्यते। यथा नात्मना तृप्यति नान्यस्मै ददाति। तै॰ सं॰ २. ५. ४. ३.। इत्यत्र हि समुच्चयार्थस्य चशब्दस्य लोपात्तृप्यतीति प्रथमा तिङ्विभक्तिर्न निहन्यते ददातीति द्वितीया तु निहन्यत एव। ननु तत्र द्वे तिङ्विभक्ती श्रूयेते। इह पुनरेकैव श्रुता। सैवोत्तरत्रानुषज्यते नान्या श्रूयत इति द्वितीयाभावात्कथमियं प्रथमा। न। अनुषंगलभ्यद्वितीयापेक्षमपि प्राथम्यमुपजीव्य निघातनिषेधदर्शनात्। पुरोडाशं चाधिश्रयत्याज्यं च। तै॰ सं॰ १. ६. ९. ३.। प्रोक्षणीश्चासादयत्याज्यं च। तै॰ सं॰ १. ६. ९. ४.। इत्यत्र ह्यधिश्रयत्यासादयतीत्याख्यातयोः प्रथमवाक्यद्वयश्रुतयोरुत्तरवाक्यद्वयेऽनुषंगमपेक्ष्यैव प्राथम्यस्वीकारेण चवायोगे प्रथमा। पा॰ ८. १. ५९.। इति निघातनिषेधो दृष्ट इति। त्वयोता [illegible]। प्रत्ययोत्तरपदयोश्च। पा॰ ७. २. ९८.। इति मपर्यंतस्य त्वादेशे दकारलोपश्छांदसः। अवतेर्निष्ठायामिडभावश्च। ज्वरत्वरस्रिव्यविमवामुपधायाश्च। पा॰ ६. ४. २०.। इत्यूठ्। एत्येधत्यूठ्सु। पा॰ ६. १. ८९.। इति वृद्ध्यभावश्छांदसः। तृतीया कर्मणि। पा॰ ६. २. ४८.। इति पूर्वपदप्रकृतिस्वरेणाकार उदात्तः। एकादेश उदात्तेनोदात्त इत्युदात्त ओकारः। अर्वता। अर्वति गच्छतीत्यर्वा। अर्व गतौ। अन्येभ्योऽपि दृश्यंत इति वनिप्प्रत्ययः। नेड्वशि कृति। पा॰ ७. २. ८.। इतीट्प्रतिषेधः। लोपो व्योर्वलि। पा॰ ६. १. ६६.। इति वकारलोपः। अर्वणस्त्रसावनञः। पा॰ ६. ४. १२७.। इति तकारः। वनिपः पित्त्वाद्धातुस्वर एव॥

इंद्र॒ त्वोता॑स॒ आ व॒यं वज्रं॑ घ॒ना द॑दीमहि। जये॑म॒ सं यु॒धि स्पृधः॑॥३॥

इंद्र॑। त्वाऽऊ॑तासः। आ। व॒यं। वज्रं॑। घ॒ना। द॒दी॒म॒हि॒। जये॑म। सं। यु॒धि। स्पृधः॑॥३॥

हे इंद्र त्वोतासस्त्वया पालिता वयं घना घनं शत्रुप्रहरणायात्यंतदृढं वज्रमायुधमा ददीमहि। स्वीकुर्मः। तेन च वज्रेण युधि युद्धे स्पृधः स्पर्धमानाञ्छत्रून्सं जयेम। सम्यक् जयेम॥ त्वोतासः। उक्तं। वज्रं। वज व्रज गतौ। ऋज्रेंद्राग्रेत्यादिना रन्प्रत्ययांतो निपातः। घना। घनः काठिन्यं। तदस्यास्तीत्यर्शआदित्वादच्। पा॰ ५. २. १२७.। [illegible]। सुपां सुलुगिति डादेशः। ददीमहि। डुदाञ् दाने। प्रार्थनायां लिङ्। [illegible] च कर्तृगामिन्यात्स्वरितञितः। पा॰ १. ३. ७२.। इत्यात्मनेपदोत्तमपुरुषबहुवचनं महिङ्। जुहोत्यादिभ्यः श्लुः। पा॰ २. ४. ७५.। श्लौ। पा॰ ६. १. १०.। इति द्विर्भावः। लिङः सलोपोऽनंत्यस्य। पा॰ ७. २. ७९.। इति सलोपः। श्नाभ्यस्तयोरातः। पा॰ ६. ४. ११२.। इत्याकारलोपः। जयेम। शपः पित्त्वादनु[illegible]। तिङश्च सार्वधातुकस्वराद्धातुस्वर एव शिष्यते। छंदसि परेऽपि। पा॰ १. ४. ८१.। इति समः परः प्रयोगः। युधि।

युध संप्रहारे। संपदादित्वाद्भावे क्विप्। पा॰ ३. ३. १०८. ९.। सावेकाच इति विभक्तेरुदात्तत्वं। स्पर्धंत इति स्पृधः। स्पर्ध संघर्षे। क्विप्च। पा॰ ३. २. ७६.। इति क्विप्। बहुलं छंदसीति रेफस्य संप्रसारणमृकारः। अकारलोपश्च॥

वयं शूरेभिरस्तृभिरिंद्र त्वया युजा वयं। सासह्याम पृतन्यतः॥४॥

वयं। शूरेभिः। अस्तृऽभिः। इंद्र। त्वया। युजा। वयं। ससह्याम। पृतन्यतः॥४॥

वयं कर्मानुष्ठातारः शूरेभिः शौर्ययुक्तैरस्तृभिरायुधानां प्रक्षेप्तृभिर्भटैः संयुज्येमहीति शेषः। हे इंद्र तादृशा भटसहिता वयं युजा सहायभूतेन त्वया पृतन्यतः सेनामिच्छतः शत्रून्सासह्याम। अतिशयेनाभिभवेम॥ शूरेभिः। शु श्रु गतौ। क्रन्नित्यनुवृत्तौ शुषिचिमीनां दीर्घश्च। उ॰ २ २५.। इति क्रन्। कित्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तत्वं। बहुलं छंदसीत्यैसो निषिद्धत्वाद्बहुवचने झल्येदित्येत्वं। सहयोगे तृतीयाबलाद्वयमित्यस्मत्पदसमभिव्याहाराच्च वयं संयुज्येमहीति गम्यं। विनापि सहशब्देन वृद्धो यूना। पा॰ १. २. ६५.। इति निपातनादिति ह्युक्तं। पा॰ २. ३. १९.। अस्तृभिः। शस्त्रास्त्रप्रक्षेपणशीलैः। तद्धर्मभिस्तत्साधुकारिभिर्वा। असु क्षेपणे। तृन्। पा॰ ३. २. १३५.। इति ताच्छील्यादिषु तृन्। नित्त्वादाद्युदात्तः। रधादिभ्यश्च। पा॰ ७. २. ४५.। इति विकल्पविधानादयं पक्ष इडभावः। त्वया। युष्यसिभ्यां मदिक्। उ॰ १. १३८.। कित्त्वाद्गुणाभावः। युष्मदः प्रत्ययस्वरेणाकार उदात्तः। तृतीयैकवचनं टा। पा॰ ४. १. २.। त्वमावेकवचने। पा॰ ७. २. ९७.। इति मपर्यंतस्य त्वादेशः। अतो गुणे। पा॰ ६. १. ९७.। इति पररूपत्वं। एकादेश उदात्तेनोदात्त इत्युदात्तः। युजा। अंचुयुजिक्रुंचां च। पा॰ ३. २. ५९.। इति क्विन्। सावेकाच इति विभक्तेरुदात्तत्वं। सासह्याम। भृशं पुनः पुनः सहेमहि। षह मर्षणे। धात्वादेः षः सः। धातोरेकाचो हलादेः क्रियासमभिहारे यङ्। पा॰ ३. १. २२.। यङोऽचि च। पा॰ २. ४. ७४.। इति लुक्। सन्यङोः। पा॰ ६. १. ९.। इति द्विर्भावः। हलादिशेषः। पा॰ ७. ४. ६०.। दीर्घोऽकितः। पा॰ ७. ४. ८३.। इति दीर्घः। प्रार्थनायां लिङ्। चर्करीतं परस्मैपदमदादिवच्च द्रष्टव्यमिति परस्मैपदेषूत्तमपुरुषबहुवचनं मस्। कर्तरि शप्। अदादिवद्भावाल्लुक्। नित्यं ङितः। पा॰ ३. ४. ९९.। इत्यंत्यसकारलोपः। यासुट् परस्मैपदेषूदात्तो ङिच्च। पा॰ ३. ४. १०३.। इति यासुट्। लिङः सलोपोऽनंत्यस्य। पा॰ ७. २. ७९.। इति सकारलोपः। सति शिष्टत्वाद्यासुट एवोदात्तत्वं शिष्यते। पादादित्वान्न निघातः। पृतन्यतः। योद्धुं पृतनामात्मन इच्छतः। सुप आत्मनः क्यजिति क्यच्। सनाद्यंता धातवः। पा॰ ३. १. ३२.। इति धातुसंज्ञायां सुपो धातुप्रातिपदिकयोः। पा॰ २. ४. ७१.। इति सुपो लुक्। क्यचि च। पा॰ ७. ४. ३३.। इत्यनुवृत्तौ कव्यध्वरपृतनस्यर्चि लोपः। पा॰ ७. ४. ३९.। इत्याकारलोपः। पृतन्यधातुश्चित्त्वादंतोदात्तः। उपरि लटः शत्रादेशः। कर्तरि शप्। पित्त्वादनुदात्तत्वं। शतुश्च लसार्वधातुकस्वरेणोदात्तेन सहैकादेश उदात्तेनोदात्त इति पृतन्यच्छब्दोऽंतोदात्तः। शसः सुप्स्वरेणानुदात्तस्यांतोदात्तादित्यनुवृत्तौ शतुरनुमो नद्यजादी। पा॰ ६. १. १७३.। इत्युदात्तत्वं॥

महाँ इंद्रः परश्च नु महित्वमस्तु वज्रिणे। द्यौर्न प्रथिना शवः॥५॥

महान्। इंद्रः। परः। च। नु। महिऽत्वं। अस्तु। वज्रिणे। द्यौः। न। प्रथिना। शवः॥५॥

अयमिंद्रो महान् शरीरेण प्रौढः परश्च गुणैरुत्कृष्टोऽपि। नु किंच वज्रिणे वज्रयुक्तायेंद्राय महित्वं पूर्वोक्तं द्विविधमाधिक्यं सर्वदास्तु। स्वभावसिद्धस्यापि भक्त्या प्रार्थनमेतत्। किंच। द्यौर्न द्युलोक इव शवो बलमिंद्रस्य सेनारूपं प्रथिना प्रथिम्ना पृथुत्वेन युज्यतामिति शेषः। यथा द्युलोकः प्रभूत एवमस्य सेना प्रभूता। नुशब्दो यद्यपि क्षिप्रनामसु नु मक्ष्विति [illegible] तस्यान्वयाभावान्निपातत्वेनानेकार्थत्वसंभवाच्च समुच्चयार्थोऽत्र गृहीतः। नशब्दो लोके प्रतिषेधार्थ एव। स्वाध्याये तु प्रतिषेधार्थ उपमानार्थश्चेति द्विविधः। येन पदेनान्वीयते तस्मात्पूर्वं प्रयुज्यमानः प्रतिषेधार्थ उपरिष्टात्प्रयुज्यमान उपमार्थः। तथा च यास्क उदाहरति। उभयसन्वध्यायं नेंद्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति। दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपाचारस्तस्य येनोपमिमीते। नि॰ १. ४.। इति। अत्रोपमेयवाचिनो द्युशब्दस्यापि

वर्षादेशः। इष्टनो नित्त्वादाद्युदात्तत्वं। ऊतये। उदात्त ऊतियूतिजूतिसातिहेतिकीर्तयश्च इति क्तिन्नुदात्तो निपातितः। भर। हृग्रहोर्भश्छंदसि। पा॰ ८. २. ३२. १.। इति हकारस्य भकारः। ते प्राग्धातोः। पा॰ १. ४. ८०.। इति धातोः प्राक्प्रयोक्तव्यस्याङो व्यवहिताश्च। पा॰ १. ४. ८२.। इति छंदसि व्यवहितप्रयोगः॥

नि येन॑ मुष्टिह॒त्यया॒ नि वृ॒त्रा रु॒णधा॑महै। त्वोता॑सो॒ न्यर्वं॑ता॥२॥
नि। येन॑। मु॒ष्टि॒ऽह॒त्यया॑। नि। वृ॒त्रा। रु॒णधा॑महै। त्वाऽऊ॑तासः। नि। अर्वं॑ता॥२॥

येन धनेन संपादितानां भटानां नि मुष्टिहत्यया नितरां मुष्टिप्रहारेण वृत्रा शत्रून्नि रुणधामहै निरुद्धान्करवाम तादृशं धनमाहरेत्यर्थः। त्वोतासस्त्वया रक्षिता वयमर्वतास्मदीयेनाश्वेन नि रुणधामहा इत्यनुषंगः। पदातियुद्धेनाश्वयुद्धेन च शत्रून्विनाशयामेत्यर्थः॥ मुष्टिहत्यया। हनस्त च। पा॰ ३. १. १०८.। इति सुबंत उपपदे क्यप्। तत्संनियोगेन नकारस्य तकारः। कृदुत्तरपदप्रकृतिस्वरे प्राप्ते परादिश्छंदसि बहुलं। पा॰ ६. २. १९९.। इति बहुलग्रहणेन चिचक्रादीनां छंदस्यंतोदात्तत्वाभिधानात्। पा॰ ६. २. १९९. १.। अंतोदात्तत्वं। नि। आख्यातसंबंधस्यापि नेरुपसर्गस्य व्यवहिताश्चेति व्यवहितप्रयोगः। वृत्रा। शेश्छंदसि बहुलं। पा॰ ६. १. ७०.। इति शेर्लोपः। नलोपः। रुणधामहै। आटसंयोगेन पित्त्वात्। पा॰ ३. ४. ९२.। श्नसोरल्लोपः। पा॰ ६. ४. १११.। इत्यकारलोपो न भवति। पित्त्वादेव चाख्यातस्यानुदात्तत्वेन विकरणस्य श्नम एवोदात्तत्वं शिष्यते। ननु तिङ्ङतिङ इति निघातेन भवितव्यं। न। द्वे ह्यत्र तिङ्विभक्ती। निविडया मुष्ट्या निरुणधामहा इत्यत्र श्रुतैका। अर्वता निरुणधामहा इत्यत्रानुषक्ता द्वितीया। तयोः समुच्चयार्थश्चकारो लुप्यते। तेन चादिलोपे विभाषा। पा॰ ८. १. ६३.। इति प्रथमेयं तिङ्विभक्तिर्न निहन्यते। यथा नात्मना तृप्यति नान्यस्मै ददाति। तै॰ सं॰ २. ५. ४. ३.। इत्यत्र हि समुच्चयार्थस्य चशब्दस्य लोपात्तृप्यतीति प्रथमा तिङ्विभक्तिर्न निहन्यते ददातीति द्वितीया तु निहन्यत एव। ननु तत्र द्वे तिङ्विभक्ती श्रूयेते। इह पुनरेकैव श्रुता। सैवोत्तरत्रानुषज्यते नान्या श्रूयत इति द्वितीयाभावात्कथमियं प्रथमा। न। अनुषंगलब्धद्वितीयापेक्षमपि प्राथम्यमुपजीव्य निघातनिषेधदर्शनात्। पुरोडाशं चाधिश्रयत्याज्यं च। तै॰ सं॰ १. ६. ९. ३.। प्रोक्षणीश्चासादयत्याज्यं च। तै॰ सं॰ १. ६. ९. ४.। इत्यत्र ह्यधिश्रयत्यासादयतीत्याख्यातयोः प्रथमवाक्यद्वयश्रुतयोरुत्तरवाक्यद्वयेऽनुषंगमपेक्ष्यैव प्राथम्यस्वीकारेण चवायोगे प्रथमा। पा॰ ८. १. ५९.। इति निघातनिषेधो दृष्ट इति। त्वयोता [illegible]। प्रत्ययोत्तरपदयोश्च। पा॰ ७. २. ९८.। इति मपर्यंतस्य त्वादेशे दकारलोपश्छांदसः। अवतेर्निष्ठायामिडभावश्च। ज्वरत्वरस्रिव्यविमवामुपधायाश्च। पा॰ ६. ४. २०.। इत्यूठ्। एत्येधत्यूठ्सु। पा॰ ६. १. ८९.। इति वृद्ध्यभावश्छांदसः। तृतीया कर्मणि। पा॰ ६. २. ४८.। इति पूर्वपदप्रकृतिस्वरेणाकार उदात्तः। एकादेश उदात्तेनोदात्त इत्युदात्त ओकारः। अर्वता। अर्वति गच्छतीत्यर्वा। अर्व गतौ। अन्येभ्योऽपि दृश्यंत इति वनिप्प्रत्ययः। नेड्वशि कृति। पा॰ ७. २. ८.। [illegible]। लोपो व्योर्वलि। पा॰ ६. १. ६६.। इति वकारलोपः। अर्वणस्त्रसावनञः। पा॰ ६. ४. १२७.। इति तकारः। वनिपः पित्त्वाद्धातुस्वर एव॥

इंद्र॒ त्वोता॑स॒ आ व॒यं वज्रं॑ घ॒ना द॑दीमहि। जयें॑म॒ सं युधि स्पृधः॑॥३॥
इंद्र॑। त्वाऽऊ॑तासः। आ। व॒यं। वज्रं॑। घ॒ना। द॒दी॒म॒हि। जयें॑म। सं। युधि। स्पृधः॑॥३॥

हे इंद्र त्वोतासस्त्वया पालिता वयं घना घनं शत्रुप्रहरणायात्यंतदृढं वज्रमायुधमा ददीमहि। स्वीकुर्मः। तेन च वज्रेण युधि युद्धे स्पृधः स्पर्धमानाञ्छत्रून्सं जयेम। सम्यक् जयेम॥ त्वोतासः। उक्तं। वज्रं। वज व्रज गतौ। ऋज्रेंद्राग्रेत्यादिना रन्प्रत्ययांतो निपातः। घना। घनः काठिन्यं। तदस्यास्तीत्यर्शआदिभ्योऽच्। पा॰ ५. २. १२७.। चित्त्वादंतोदात्तः। सुपां सुलुगिति डादेशः। ददीमहि। डुदाञ् दाने। प्रार्थनायां लिङ्। क्रियाफलस्य कर्तृगामित्वात्स्वरितञितः। पा॰ १. ३. ७२.। इत्यात्मनेपदोत्तमपुरुषबहुवचनं महिङ्। जुहोत्यादिभ्यः श्लुः। पा॰ २. ४. ७५.। श्लौ। पा॰ ६. १. १०.। इति द्विर्भावः। लिङः सलोपोऽनंत्यस्य। पा॰ ७. २. ७९.। इति सलोपः। श्नाभ्यस्तयोरातः। पा॰ ६. ४. ११२.। इत्याकारलोपः। जयेम। शपः पित्त्वादनुदात्तत्वं। तिङश्च सार्वधातुकस्वराद्धातुस्वर एव शिष्यते। छंदसि परेऽपि। पा॰ १. ४. ८१.। इति समः परः प्रयोगः। युधि।

युध संप्रहारे। संपदादित्वाद्भावे क्विप्। पा॰ ३. ३. १०८. ९.। साविकाच इति विभक्तेरुदात्तत्वं। स्पृधंत इति स्पृधः। स्पर्ध संघर्षे। क्विप्च। पा॰ ३. २. ७६.। इति क्विप्। बहुलं छंदसीति रेफस्य संप्रसारणमृकारः। अकारलोपश्च॥

# व॒यं शूरे॑भि॒रस्तृ॑भि॒रिंद्र॒ त्वया॑ यु॒जा व॒यं। सा॒स॒ह्याम॑ पृतन्य॒तः॥४॥

# व॒यं। शूरे॑भिः। अस्तृ॑ऽभिः। इंद्र॑। त्वया॑। यु॒जा। व॒यं। स॒स॒ह्याम॑। पृ॒त॒न्य॒तः॥४॥

वयं कर्मानुष्ठातारः शूरेभिः शौर्ययुक्तैरस्तृभिरायुधानां प्रक्षेप्तृभिर्भटैः संयुज्येमहीति शेषः। हे इंद्र तादृशा भटसहिता वयं युजा सहायभूतेन त्वया पृतन्यतः सेनामिच्छतः शत्रून्सासह्याम। अतिशयेनाभिभवेम॥ शूरेभिः। शु श्रु गतौ। क्रन्नित्यनुवृत्तौ शुषिचिमीनां दीर्घश्च। उ॰ २ २५.। इति क्रन्। कित्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तत्वं। बहुलं छंदसीत्यैसो निषिद्धत्वाद्बहुवचने झल्येदित्येत्वं। सहयोगे तृतीयाबलादयमित्यस्मत्पदसमभिव्याहाराच्च वयं संयुज्येमहीति गम्यं। विनापि सहशब्देन वृद्धो यूना। पा॰ १. २. ६५.। इति निपातनादिति ह्युक्तं। पा॰ २. ३. १९.। अस्तृभिः। शस्त्रास्त्रप्रक्षेपणशीलैः। तद्धर्मभिस्तत्साधुकारिभिर्वा। असु क्षेपणे। तृन्। पा॰ ३. २. १३५.। इति ताच्छील्यादिषु तृन्। नित्त्वादाद्युदात्तः। रधादिभ्यश्च। पा॰ ७. २. ४५.। इति विकल्पविधानादयं पक्ष इडभावः। त्वया। युष्यसिभ्यां मदिक्। उ॰ १. १३८.। कित्त्वाद्गुणाभावः। युष्मदः प्रत्ययस्वरेणाकार उदात्तः। तृतीयैकवचनं टा। पा॰ ४. १. २.। त्वमावेकवचने। पा॰ ७. २. ९७.। इति मपर्यंतस्य त्वादेशः। अतो गुणे। पा॰ ६. १. ९७.। इति पररूपत्वं। एकादेश उदात्तेनोदात्त इत्युदात्तः। युजा। [illegible] च। पा॰ ३. २. ५९.। इति क्विन्। साविकाच इति विभक्तेरुदात्तत्वं। सासह्याम। भृशं पुनः पुनः सहेमहि। षह मर्षणे। धात्वादेः षः सः। धातोरेकाचो हलादेः क्रियासमभिहारे यङ्। पा॰ ३. १. २२.। यङोऽचि च। पा॰ २. ४. ७४.। इति लुक्। सन्यङोः। पा॰ ६. १. ९.। इति द्विर्भावः। हलादिःशेषः। पा॰ ७. ४. ६०.। दीर्घोऽकितः। पा॰ ७. ४. ८३.। इति दीर्घः। प्रार्थनायां लिङ्। चर्करीतं परस्मैपदमदादिवच्च द्रष्टव्यमिति परस्मैपदोत्तमपुरुषबहुवचनं मस्। कर्तरि शप्। अदादिवद्भावाल्लुक्। नित्यं ङितः। पा॰ ३. ४. ९९.। इत्यंत्यसकारलोपः। यासुट् परस्मैपदेषूदात्तो ङिच्च। पा॰ ३. ४. १०३.। इति यासुट्। लिङः सलोपोऽनंत्यस्य। पा॰ ७. २. ७९.। इति सकारलोपः। सति शिष्टत्वाद्यासुट एवोदात्तत्वं शिष्यते। पादादित्वान्न निघातः। पृतन्यतः। योद्धुं पृतनामात्मन इच्छतः। सुप आत्मनः क्यजिति क्यच्। सनाद्यंता धातवः। पा॰ ३. १. ३२.। इति धातुसंज्ञायां सुपो धातुप्रातिपदिकयोः। पा॰ २. ४. ७१.। इति सुपो लुक्। क्यचि च। पा॰ ७. ४. ३३.। [illegible] कव्यध्वरपृतनस्यर्चि लोपः। पा॰ ७. ४. ३९.। इत्याकारलोपः। पृतन्यधातुश्चित्त्वादंतोदात्तः। उपरि लटः शत्रादेशः। कर्तरि शप्। पित्त्वादनुदात्तत्वं। शतुश्च लसार्वधातुकस्वरेणोदात्तेन सहैकादेश उदात्तेनोदात्त इति पृतन्यच्छब्दोऽंतोदात्तः। शसः सुप्स्वरेणानुदात्तस्यांतोदात्तादित्यनुवृत्तौ शतुरनुमो नद्यजादी। पा॰ ६. १. १७३.। इत्युदात्तत्वं॥

# म॒हाँ इंद्रः॑ प॒रश्च॒ नु म॑हि॒त्वम॑स्तु व॒ज्रिणे॑। द्यौर्न प्र॑थि॒ना शवः॑॥५॥

# म॒हान्। इंद्रः॑। प॒रः। च॒। नु। म॒हि॒ऽत्वं। अ॒स्तु॒। व॒ज्रिणे॑। द्यौः। न। प्र॒थि॒ना। शवः॑॥५॥

अयमिंद्रो महान् शरीरेण प्रौढः परश्च गुणैरुत्कृष्टोऽपि। नु किंच वज्रिणे वज्रयुक्तायेंद्राय महित्वं पूर्वोक्तं द्विविधमाधिक्यं सर्वदास्तु। स्वभावसिद्धस्यापि भक्त्या प्रार्थनमेतत्। किंच। द्यौर्न द्युलोक इव शवो बलमिंद्रस्य सेनारूपं प्रथिना प्रथिम्ना पृथुत्वेन युज्यतामिति शेषः। यथा द्युलोकः प्रभूत एवमस्य सेना प्रभूता। नुशब्दो यद्यपि क्षिप्रनामसु नु मक्ष्विति पठितस्तथाप्यत्र तस्यान्वयाभावान्निपातत्वेनानेकार्थत्वसंभवाच्च समुच्चयार्थोऽत्र गृहीतः। नञ्शब्दो लोके प्रतिषेधार्थ एव। स्वाध्याये तु प्रतिषेधार्थ उपमानार्थश्चेति द्विविधः। येन पदेनान्वीयते तस्मात्पूर्वं प्रयुज्यमानः प्रतिषेधार्थ उपरिष्टात्प्रयुज्यमान उपमार्थः। तथा च यास्क उदाहरति। उभयमन्वध्यायं नेंद्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति। दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपाचारस्तस्य येनोपमिमीते। नि॰ १. ४.। इति। अत्रोपमेयवाचिनो द्युशब्दस्यापि

प्रयुक्तत्वादुपमार्थः स्वीकृतः। अष्टाविंशतिसंख्याकेषु बलनामस्वाजः पाजः शव इति पठितं ॥ महानिति नकारस्य संहितायां दीर्घादटि समानपादे ।पा० ८.३.९.। इति रुत्वं। आतोऽटि नित्यं ।पा० ८.३.३.। इति पूर्वस्मादकारात्परोऽनुनासिकः। भोभगोअघोअपूर्वस्य योऽशि ।पा० ८.३.१७.। इति यकारः। तस्य लोपः। ।पा० ८.३.१९.। तस्यासिद्धत्वात् ।पा० ८.२.१.। स्वरसंधिर्न भवति। महेरिन् ।उ० ४.११७.। इत्यौणादिक इन्। महेर्भावो महित्वं। त्व इति प्रत्ययस्वरेणोदात्तः। स एव शिष्यते। वज्रिणे। इकारः प्रत्ययस्वरेणोदात्तः। द्यौः। द्योशब्दः प्रातिपदिकस्वरेणांतोदात्तः। गोतो णित् ।पा० ७.१.९०.। इति विभक्तेर्णित्त्वादचो ञ्णिति ।पा० ७.२.११५.। इति वृद्धिरांतरतम्यादुदात्तैव भवति। प्रथिना। प्रथिम्ना। पृथोर्भाव इत्यर्थे पृथ्वादिभ्य इमनिज्वा ।पा० ५.१.१२२.। इतीमनिच्। र ऋतो हलादेर्लघोः ।पा० ६.४.१६१.। इति ऋकारस्य रभावः। तुरिष्ठेमेयःसु ।पा० ६.४.१५४.। इत्यनुवृत्तौ टेः ।पा० ६.४.१५५.। इति टिलोपः। प्रथिमन्शब्दश्चित्त्वादंतोदात्तः। तृतीयैकवचने भत्वादल्लोपोऽनः ।पा० ६.४.१३४.। इत्यकारलोपः। छांदसो मकारलोपः। अनुदात्तस्य च यत्रोदात्तलोप इति विभक्तेरुदात्तत्वं। शवः। नब्विषयस्यानिसंतस्येत्याद्युदात्तत्वं॥ ॥१५॥

## स॒मो॒हे वा॒ य आश॑त॒ नर॑स्तो॒कस्य॒ सनि॑तौ। विप्रा॑सो वा धिया॒यवः॑ ॥६॥

## स॒म्ऽओ॒हे। वा॒। ये। आश॑त। नरः॑। तो॒कस्य॑। सनि॑तौ। विप्रा॑सः। वा॒। धि॒या॒ऽयवः॑ ॥६॥

ये नरः पुरुषाः समोहे संग्रामे तोकस्यापत्यस्य सनितौ वा लाभे वाशत। व्याप्तवंतः। इंद्रं स्तुत्वेति शेषः। वा अथवा विप्रासो मेधाविनो धियायवः प्रज्ञाकामाः संत आशत ते सर्वे लभंत इत्यध्याहारः। रण इत्यादिषु षट्चत्वारिंशत्संग्रामनामसु समोहे समिथ इति पठितं। पंचदशस्वपत्यनामसु तुक् तोकमिति पठितं॥ समोहे। प्रातिपदिकांतोदात्तत्वं। वा। चादयोऽनुदात्ता इत्यनुदात्तः। आशत। अशू व्याप्तौ। छांदसश्लेर्लोपः। आडागम उदात्तः ।पा० ६.४.७२.। सति शिष्टत्वेन स एव शिष्यते। नरः। प्रातिपदिकस्वरः। सनितौ। स्त्रियां क्तिन्। तितुत्रेष्वग्रहादीनामिति वचनात् ।पा० ७.२.९.१.। निगृहीतिर्निपठितिरितिवदिडागमः। विप्रासः। ऋज्रेंद्रेत्यादिना विप्रशब्दो रन्प्रत्ययांतो निपातितः। धियायवः। धि धारणे। धीयते धार्यतेऽवबुध्यते श्रुतमर्थजातमनयेति धिया प्रज्ञा। तामात्मन इच्छंतीति क्यच्। क्याच्छंदसि ।पा० ३.२.१७०.। इत्युप्रत्ययः। अतो लोपः। प्रत्ययस्वरेणांतोदात्तः॥

## यः कु॒क्षिः सो॑म॒पात॑मः समु॒द्र इ॑व॒ पिन्व॑ते। उ॒र्वीरापो॒ न का॒कुदः॑ ॥७॥

## यः। कु॒क्षिः। सो॒म॒ऽपात॑मः। स॒मु॒द्रःऽइ॑व। पिन्व॑ते। उ॒र्वीः। आपः॑। न। का॒कुदः॑ ॥७॥

यः कुक्षिरस्येंद्रस्योदरप्रदेशः सोमपातमोऽतिशयेन सोमस्य पाता स कुक्षिः समुद्र इव पिन्वते। वर्धते। सेचनार्थो धातुरौचित्येन वृद्धिं लक्षयति। काकुदो मुखसंबंधिन्य उर्वीर्बह्व्य आपो न जलानीव। जिह्वासंबंधमास्योदकं यथा कदाचिदपि न शुष्यति तथेंद्रस्य कुक्षिः सोमपूर्णो न शुष्यतीत्यर्थः। यद्यपि श्लोक इत्यादिषु सप्तपंचाशत्सु वाङ्नामसु काकुज्जिह्वेति पठितं तथाप्युदकसंबंधसादृश्यलक्षणया काकुच्छब्देन मुखमुपलक्ष्यते। संबंधवाचिनस्तद्धितस्यात्र छांदसो लोपो द्रष्टव्यः॥ सोमपातमः। सोमं पिबतीति सोमपाः। आकारो धातुस्वरेणोदात्तः। कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। तमपः पित्त्वादनुदात्तत्वं। समुद्रशब्दः प्रातिपदिकत्वादंतोदात्तः। इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ।पा० २.१.४.२.। इति प्रकृतिस्वरः। पिन्वते। पिवि सेचने। इदितो नुम् धातोरिति नुमागमः। शपः पित्त्वेनानुदात्तत्वं। तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते। उर्वीः। उरुशब्दोऽंतोदात्तः। वोतो गुणवचनात् ।पा० ४.१.४४.। इति ङीष्। यणादेशः। उदात्तयणो हल्पूर्वात् ।पा० ६.१.१७४.। इतीकार उदात्तः। जसा सहैकादेश उदात्तेनोदात्त इत्येकादेश उदात्तः। आपः। प्रातिपदिकस्वरः। काकुदः। प्रातिपदिकस्वरेणांतोदात्तः॥

अभिप्लवषडहस्योक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिन एवा ह्यस्य सूनृतेत्यनुरूपस्तृचः। एह्यू षु ब्रवाणि त इति खंडे अथ ब्राह्मणाच्छंसिन इत्युपक्रम्य एवा ह्यसि वीरयुरेवा ह्यस्य सूनृता। आ० ७.८.। इति सूचितं॥

एवा ह्यस्य सूनृता विरप्शी गोमती मही । पक्वा शाखा न दाशुषे ॥८॥
एव । हि । अस्य । सूनृता । विऽरप्शी । गोऽमती । मही । पक्वा । शाखा । न ।
दाशुषे ॥८॥

अस्येंद्रस्य सूनृता [illegible] वाग्दाशुषे हविर्दत्तवते यजमानाय तदर्थमेवा हि एवं खलु । अनंतरपद्वक्ष्यमाणगुणोपेता भवतीत्यर्थः । कीदृशी । विरप्शी विविधरपणोपेतवाक्ययुक्ता । बहुविधोपचारवादिनीत्यर्थः । गोमती बह्वीभिर्गोभिरुपेता । गोप्रदेत्यर्थः । अत एव मही महती पूज्या । यथोक्तवाचो दृष्टांतः । पक्वा शाखा न । यथा बहुभिः पक्वैः फलैरुपेता [illegible] प्रीतिहेतुस्तद्वत् । यद्यपि महन्नामसु व्राधन् विरप्शीति पठितं तथाप्यत्र महीत्यनेन पुनरुक्तिप्रसंगादवयवार्थो गृहीतः ॥ एव । एवमादीनामंत इत्यंतोदात्तः । संहितायां निपातस्य चेति दीर्घः । हि । निपात आद्युदात्तः । अस्य । प्रकृतस्येंद्रस्य परामर्शादिदमोऽन्वादेश इत्यादिनाशादेशोऽनुदात्त इति सर्वानुदात्तः । सूनृता । ऊन परिहाणे । सुतरामूनयत्यप्रियमिति सून् । सा चासावृता सत्या चेति सूनृता प्रियसत्या वाक् । परादिश्छंदसि बहुलमित्यृकार उदात्तः । विरप्शी । विचित्रं रपणं विरप् । रप लप व्यक्तायां वाचि । संपदादित्वाद्भावे क्विप् । तदेषामस्तीति [illegible] वाक्यानि । तानि यस्यां वाचि संति सा वाग्विरप्शिनी । अत [illegible]नाविनीति: । यस्येति च । पा॰ ६. ४. १४८. । इत्यकारलोपः । ऋन्नेभ्यो ङीप् । पा॰ ४. १. ५. । इति ङीप् । इकारः प्रत्ययस्वरेणोदात्तः । नकारलोपश्छांदसः । सवर्णदीर्घ एकादेश उदात्तेनोदात्त इत्युदात्तः । गावोऽस्यां संतीति गोमती । मतुब्ङीपौ पित्त्वादनुदात्तौ । प्रातिपदिकस्वर एव शिष्यते । मही । महती । उगितश्च । पा॰ ४. १. ६. । इति ङीप् । तस्य पित्त्वादनुदात्तत्वे प्राप्ते शतुरनुमो नद्यजादी इत्यत्र बृहन्महतोरुपसंख्यानं । पा॰ ६. १. १७३. १. । इत्युदात्तत्वं । अच्छब्दलोपश्छांदसः । पक्वा । डुपचष् पाके । निष्ठा । पा॰ ३. २. १०२. । इति क्तप्रत्ययः । पचो वः । पा॰ ८. २. ५२. । इति वत्वं । चोः कुः । पा॰ ८. २. ३०. । इति कुत्वं । प्रत्ययस्वरेणांतोदात्तः । टापा सह सवर्णदीर्घ एकादेश उदात्तेनोदात्त इत्युदात्तः । शाखा । शाखृ श्लाखृ व्याप्तौ । पचाद्यच् । चित्त्वादंतोदात्ते प्राप्ते वृ[illegible]गणत्वाद्वृषादित्वादाद्युदात्तत्वं । दाशुषे । दाशृ दाने । दाश्वान्साह्वान्मीढ्वांश्च । पा॰ ६. १. १२. । इति निपातनात्क्वसाविडभावो द्विर्वचनाभावश्च । चतुर्थ्येकवचने यचि भं । पा॰ १. ४. १८. । इति भसंज्ञायां वसोः संप्रसारणं । पा॰ ६. ४. १३१. । इति संप्रसारणं । वकारस्योकारः । परपूर्वत्वं । शासिवसिघसीनां च । पा॰ ८. ३. ६०. । इति षत्वं । प्रत्ययस्वरेणोकार उदात्तः ॥

एवा हि ते विभूतय ऊतय इंद्र मावते । सद्यश्चित्संति दाशुषे ॥९॥
एव । हि । ते । विऽभूतयः । ऊतयः । इंद्र । माऽवते । सद्यः । चित् । संति । दाशुषे ॥९॥

हे इंद्र ते तव विभूतय [illegible]श्वर्यविशेषा एवा हि एवंविधाः खलु । किंविधा इति तदुच्यते । मावते मत्सदृशाय दाशुषे हविर्दत्तवते [illegible]रूपाः सद्यश्चित्संति । यदा कर्मानुष्ठितं तदैव भवंति ॥ मावते । मत्सदृशाय । वतुप्प्रकरणे युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानं । पा॰ ५. २. ३९. १. । इत्यस्मच्छब्दाद्वतुप् । मपर्यंतस्य प्र[illegible] । पा॰ ७. २. ९८. । इति मादेशः । अद्शब्देन सहातो गुणे । पा॰ ६. १. ९७. । इति पररूपत्वं । दृग्दृशवतुषु । पा॰ ६. ३. ८९. । इत्यनुवृत्तावा सर्वनाम्नः । पा॰ ६. ३. ९१. । इति दकारस्याकारः । सवर्णदीर्घत्वं । वतुपः पित्त्वात्प्रातिपदिकस्वर एव शिष्यते । सद्यः । समाने द्यवीत्यर्थे सद्यः परुत्परार्यैषमः । पा॰ ५. ३. २२. । इत्यादिना निपातितं । प्रत्ययस्वरेणांतोदात्तत्वं । चित् । चादयोऽनुदात्ता इत्यनुदात्तः । संति । अस भुवि । लटः स्थाने झि । झोऽन्तः । पा॰ ७. १. ३. । अदिप्रभृतिभ्यः शप इति शपो लुक् । तिङः प्रत्ययाद्युदात्तत्वं । प्रत्ययलोपे प्रत्ययलक्षणं । पा॰ १. १. ६२. । इति [illegible]अत्र लसार्वधातुकानुदात्तत्वं न भवति । वर्णाश्रयविधौ प्रत्ययलक्षणं नास्ति । परि॰ २१. । इति निषेधात् । दाशुषे । गतमंत्रे गतं ॥

एवा ह्यस्य काम्या स्तोम उक्थं च शंस्या । इंद्राय [illegible]मपीतये ॥१०॥
एव । हि । अस्य । काम्या । स्तोमः । उक्थं । च । शंस्या । इंद्राय । सोमऽपीतये ॥१०॥

अस्येंद्रस्य स्तोमः सामसाध्यं स्तोत्रमुक्थं चर्क्साध्यं शस्त्रमथैवा ह्येते उभे एवंविधे खलु। किंविधे इति तदुच्यते। काम्या कामयितव्ये शंस्या ऋत्विग्भिः शंसनीये। किमर्थं शंसनमिति तदुच्यते। इंद्राय सोमपीतये। इंद्रस्य सोमपानार्थं॥ एवा ह्यस्य। व्यवहितमंत्रे गतं। काम्या। कमेर्णिङंतादचो यत्। पा॰ ३. १. ९७.। णेरनिटि। पा॰ ६. ४. ५१.। इति णिलोपः। तित्स्वरितमिति स्वरिते प्राप्ते यतोऽनावः। पा॰ ६. १. २१३.। इत्याद्युदात्तत्वं। सुपो डादेशः। स्तोमः। अर्तिस्तुसुहुसृधृक्षि इत्यादिना। उ॰ १. १३९.। मन्प्रत्ययः। उक्थं। वच परिभाषणे। पातॄतुदिवचिरिचिसिचिभ्यस्थक्। उ॰ २. ७.। इति थक्। कित्त्वात्संप्रसारणं। परपूर्वत्वगुणाभावौ। शंस्या। शंसु स्तुतौ। ण्यंतादचो यत्। यतोऽनाव इत्याद्युदात्तत्वं। सुपो डादेशः। सोमस्य पीतिः सोमपीतिः। कृदुत्तरपदप्रकृतिस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वं। अथवा सोमस्य पीतिर्यस्येंद्रस्येति सोमपीतिरिंद्रः। बहुव्रीहौ प्रकृत्या पूर्वपदं। पा॰ ६. २. १.। इति पूर्वपदप्रकृतिस्वरत्वं॥ ॥ १६॥

इंद्रेहीत्यादिकं दशर्चं सूक्तं सुरूपकृत्नुमित्यादिषु षष्ठं। ऋष्यादयस्तस्य पूर्ववत्। विशेषस्त्वतिरात्रे द्वितीयपर्याये ऽच्छावाकशस्त्र इंद्रेहीत्यनुरूपस्तृचः। अतिरात्रे पर्यायाणामिति खंड इदं वसो सुतमंध इंद्रेहि मत्स्यंधसः। आ॰ ६. ४.। इति सूत्रितं॥

इंद्रेहि मत्स्यंधसो विश्वेभिः सोमपर्वभिः। महाँ अभिष्टिरोजसा॥ १॥

इंद्र। आ। इहि। मत्सि। अंधसः। विश्वेभिः। सोमपर्वऽभिः। महान्। अभिष्टिः। ओजसा॥ १॥

हे इंद्र एहि। अस्मिन्कर्मण्यागच्छ। आगत्य च विश्वेभिः सर्वैः सोमपर्वभिः सोमरसरूपैरंधसोऽधोभिरन्नैर्मत्सि। माद्य। हृष्टो भव। तत ऊर्ध्वमोजसा बलेन महान्भूत्वाभिष्टिः शत्रूणामभिभविता भवेति शेषः। अष्टाविंशतिसंख्याकेषु बलनामस्वोजः पाज इति पठितं॥ आ इहि। आद्गुणः। पा॰ ६. १. ८७.। इंद्र एहि। यो ह्युभयोः स्थाने लभतेऽसावन्यतरव्यपदेशमित्याङ्भ्याङोरेकादेश आङ्व्यपदेशादोमाङोश्च। पा॰ ६. १. ९५.। इति पररूपं। मत्सि। माद्य। मदी हर्षग्लपनयोः। लोटः सिप्। सर्वे विधयश्छंदसि विकल्प्यंत इति सेर्हिरादेशः। पा॰ ३. ४. ८७.। न भवति। दिवादिभ्यः श्यन्। पा॰ ३. १. ६९.। इति श्यन्। बहुलं छंदसीति श्यनो लुक्। न लुमतांगस्य। पा॰ १. १. ६३.। इति प्रत्ययलक्षणप्रतिषेधाच्छमामष्टानां दीर्घः श्यनि। पा॰ ७. ३. ७४.। इत्युपधादीर्घो न भवति। सिपः पित्त्वादाद्युदात्तस्वर एव। अंधसः। अदेर्नुम् धश्च। उ॰ ४. २०५.। इत्यसुन्। व्यत्ययेन तृतीयाबहुवचनं कर्तव्यं। नित्त्वादाद्युदात्तः। विश्वेभिः। अशिप्रुषीत्यादिना। उ॰ १. १५१.। क्वन्। नित्त्वादाद्युदात्तत्वं। ऐसादेशो बहुलं छंदसीति न भवति। सोमपर्वभिः। लतारूपं सोमं पृणंति पूरयंतीति सोमपर्वाणः सोमरसाः। पॄ पालनपूरणयोः। अन्येभ्योऽपि दृश्यंत इति वनिप्। गुणो रपरत्वं। वनिपः पित्त्वादाद्युदात्तस्वर एव। उपपदसमासे कृदुत्तरपदप्रकृतिस्वरेण पुनः स एव भवति। अभिष्टिरभिगंता। इष गतौ। मंत्रे वृषेषेत्यादिना। पा॰ ३. ३. ९६.। क्तिन्नुदात्तः। स हि भावपरोऽपि भवितारं लक्षयति। कित्त्वाल्लघूपधगुणाभावः। तितुत्रतथसिसुसरकसेषु च। पा॰ ७. २. ९.। इतीडागमो न भवति। अभिशब्दस्येकार एमनादिषु पररूपं वक्तव्यं। पा॰ ६. १. ९४. ६.। इति पररूपत्वं। प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वं। ओजसा। उब्जेर्बलोपश्च। उ॰ ४. १९१.। इत्यसुन्। नित्त्वादाद्युदात्तः॥

एमेनं सृजता सुते मंदिमिंद्राय मंदिने। चक्रिं विश्वानि चक्रये॥ २॥

आ। ईं। एनं। सृजत। सुते। मंदिं। इंद्राय। मंदिने। चक्रिं। विश्वानि। चक्रये॥ २॥

ईमित्यनर्थकः पादपूरणाय प्रयुक्तः। हे अध्वर्यवः सुतेऽभिषुते चमसस्थे सोम एनं सोममिंद्रायेंद्रार्थमा सृजत। पुनरभ्युन्नयत। शुक्रामंथिचमसगणे पुनरभ्युन्नयनमापस्तंबेनोक्तं। होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वमिति। आप॰ १२. २३. ४.। इति। कीदृशमेनं। मंदिं हर्षहेतुं चक्रिं साधुकरणशीलं। कीदृशायेंद्राय। मंदिने हर्षयुक्ताय विश्वानि सर्वाणि कर्माणि चक्रये कृतवते। सर्वकर्मनिष्पादनशीलायेत्यर्थः। ईमित्यस्य पादपूरणार्थत्वं यास्क आह। अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रंथेषु वाक्यपूरणा

आगच्छंति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति । नि॰ १. ९. । इति । अस्यायमर्थः । अन्यैरेव पदैर्विवक्षितेऽर्थे समाप्ते सति ये शब्दा ईमित्यादयः प्रयुक्तास्ते शब्दा अमिताक्षरेषु छंदोराहित्येन परिमिताक्षररहितेषु ब्राह्मणादिवाक्येषु वाक्यपूरणार्था द्रष्टव्याः । मिताक्षरेषु छंदोयुक्तेषु ग्रंथेषु पादपूरणार्थाः । ते च कमीमित्यादय इति । ईमित्यस्य शब्दस्यानर्थक्यायैतामृचमुदाजहार । एमेनं सृजता सुते । आसृजतैनं सुते । नि॰ १. १०. । इति ॥ एनं । इदमो द्वितीयायां द्वितीयाटौःस्वेनः । पा॰ २. ४. ३४. । इत्येनादेशोऽनुदात्त इत्यनुवृत्तेः सर्वानुदात्तः । सृजत । संहितायामन्येषामपि दृश्यते । पा॰ ६. ३. १३७. । इति दीर्घः । मंदिं । प्रमोदहेतुं । मदि स्तुतिमोदमदस्वप्नकांतिगतिषु । इदितो नुम् धातोरिति नुम् । मंदमानं प्रयुंक्त इत्यर्थे हेतुमति च । पा॰ ३. १. २६. । इति णिच् । ण्यंतस्याजंतत्वादच इः । उ॰ ४. १३८. । इतीकारप्रत्ययः । णेरनिटीति णिलोपः । प्रत्ययस्वरेणांतोदात्तत्वं । मंदिने । मंदेः पूर्ववत् । चतुर्थ्येकवचनेऽनपुंसकस्यापि । पा॰ ७. १. ७३. । व्यत्ययेन नुमागमः । चक्रिं । डुकृञ् करणे । आदृगमहनजनः किकिनौ लिट् च । पा॰ ३. २. १७१. । इति तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु किन्प्रत्ययः । तस्य कित्त्वाद्गुणाभावः । यणादेशः । लिड्वद्भावाद्द्विर्वचनं । द्विर्वचनेऽचि । पा॰ १. १. ५९. । इति यणादेशस्य स्थानिवद्भावात्कृशब्दो द्विरुच्यते । अभ्यासस्योरत्त्वरपरत्वचुत्वहलादिशेषाः । किनो नित्त्वादाद्युदात्तः । विश्वानि । विशेः क्वन् । नित्त्वादाद्युदात्तः । अस्य चक्रय इति कृदंतेन योगेऽपि कर्तृकर्मणोः कृति । पा॰ २. ३. ६५. । इति षष्ठी न भवति । किकिनौ लिट् चेति किनो लिड्वद्भावेन न लोकाव्ययनिष्ठाखलर्थतृनां । पा॰ २. ३. ६९. । इति निषेधात् ॥

मत्स्वा सुशिप्र मंदिभिः स्तोमेभिर्विश्वचर्षणे । सचैषु सवनेष्वा ॥३॥

मत्स्व । सुऽशिप्र । मंदिऽभिः । स्तोमेभिः । विश्वऽचर्षणे । सचा । एषु । सवनेषु । आ ॥३॥

हे सुशिप्र हे शोभनहनो शोभननासिक वा । शिप्रे हनू नासिके वा । नि॰ ६. १७. । इति यास्केनोक्तत्वात् । तादृश हे इंद्र मंदिभिर्हर्षहेतुभिः स्तोमेभिः स्तोत्रैर्मत्स्व । हृष्टो भव । हे विश्वचर्षणे सर्वमनुष्ययुक्त । सर्वैर्यजमानैः पूज्येत्यर्थः । तादृशेंद्र त्वमेषु यागगतेषु त्रिषु सवनेषु सचा देवैरन्यैः सहा गच्छेति शेषः ॥ मदि स्तुतीत्यस्य लोव्यनित्यमागमशासनमिति वचनेदितो नुम् धातोरिति नुम् न भवति । अनुदात्तेत्त्वात्तास्यनुदात्तेन्ङिददुपदेशात् । पा॰ ६. १. १८६. । इति लसार्वधातुकानुदात्तत्वं । धातुस्वर एव । संहितायां द्व्यचोऽतस्तिङः । पा॰ ६. ३. १३५. । इति दीर्घत्वं । सुशिप्रेत्यामंत्रितनिघातः । मंदिभिः । गतमंत्रे व्याख्यातं । स्तोमेभिः । मन्प्रत्ययस्य नित्त्वादाद्युदात्तत्वं । बहुलं छंदसीति भिस ऐसादेशो न भवति । विश्वचर्षणे । निघातः । सचा । उक्तं । एषु । ऊडिदमित्यादिना विभक्तिरुदात्तत्वं ॥

असृग्रमिंद्र ते गिरः प्रति त्वामुदहासत । अजोषा वृषभं पतिं ॥४॥

असृग्रं । इंद्र । ते । गिरः । प्रति । त्वां । उत् । अहासत । अजोषाः । वृषभं । पतिं ॥४॥

हे इंद्र ते गिरस्त्वदीयाः स्तुतीरसृग्रं । सृष्टवानस्मि । तास्च गिरः स्वर्गेऽवस्थितं त्वां प्रत्युदहासत । उद्गत्य प्राप्नुवन् । तादृशीर्गिरस्त्वमजोषाः । सेवितवानसि । कीदृशं त्वां । वृषभं कामानां वर्षितारं पतिं सोमस्य पातारं यजमानानां पालयितारं वा । पाता वा पालयिता वा । नि॰ ४. २६. । इति यास्केनोक्तत्वात् ॥ असृग्रं । असृजं । सृज विसर्गे । लङो मिप् । तुदादिभ्यः शः । पा॰ ३. १. ७७. । बहुलं छंदसि । पा॰ ७. १. ८. । इत्यत्र विकरणस्य रुडागमः । जकारस्य गकारः । लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यडागम उदात्तः । सति शिष्टत्वात्स एव शिष्यते । गिरः । प्रातिपदिकस्वरः । अहासत । ओहाङ् गतौ । लुङ् । झस्यादादेशः । पा॰ ७. १. ५. । च्लेः सिच् । पा॰ ३. १. ४४. । अडागमो निघातश्च । अजोषाः । जुषी प्रीतिसेवनयोः । लङ्स्थास् । तुदादिभ्यः शः । तस्य छंदस्युभयथा । पा॰ ३. ४. ११७. । इत्यार्धधातुकत्वेन ङित्त्वाभावाल्लघूपधगुणः । थासस्थकारलोपश्छांदसः । सवर्णदीर्घः । अडागमः । सति शिष्टत्वादुदात्तः शिष्यते । वृषभं । पृषु वृषु मृषु सेचने । अभजित्यनुवृत्तावृषिवृषिभ्यां कित् । उ॰ ३. १२३. । इत्यभच्प्रत्ययः । कित्त्वाद्गुणाभावः । चित्त्वादंतोदात्तः । पतिं । पा रक्षणे । पातेर्डतिः । उ॰ ४. ५७. । डित्वाट्टिलोपः । प्रत्ययाद्युदात्तत्वं ॥

सं चौदय चित्रमर्वाग्राध इंद्र वरेण्यं। असदित्ते विभु प्रभु ॥५॥

सं। चोदय। चित्रं। अर्वाक्। राधः। इंद्र। वरेण्यं। असत्। इत्। ते। विऽभु। प्रऽभु ॥५॥

हे इंद्र वरेण्यं श्रेष्ठं राधो धनं चित्रं मणिमुक्तादिरूपेण बहुविधमर्वागस्मदभिमुखं यथा भवति तथा सं चोदय। सम्यक् प्रेरय। भोगाय यावत्पर्याप्तं तावद्विभुशब्देनोच्यते। ततोऽप्यधिकं प्रभुशब्देन। तादृशं धनं ते तवैवासदित्। अस्त्येव। तस्मादस्मभ्यं प्रयच्छेत्यर्थः। मघमित्यादिष्वष्टाविंशतिधननामसु रायो राध इति पठितं॥ चोदय। चुद प्रेरणे। ण्यंताल्लोट्। तिङ्ङतिङ इति निघातः। राधः। राध्नुवंत्यनेनेति राधो धनं। सर्वधातुभ्योऽसुन्। उ॰ ४. १८८.। नित्त्वादाद्युदात्तः। वरेण्यं। वृञ एण्यः। वृषादित्वादाद्युदात्तः। असत्। अस भुवि। लेट्। तिप्। इतश्च लोपः। पा॰ ३. ४. ९७.। इतीकारलोपः। लेटोऽडाटावित्यडागमः। अदिप्रभृतिभ्यः शप इति शपो लुक्। आगमा अनुदात्ता इत्यटोऽनुदात्तत्वाद्धातुस्वर एव। विभु। विभवतीति विभु। भुव इत्यनुवृत्तौ विप्रसंभ्यो ड्वसंज्ञायां। पा॰ ३. २. १८०.। इति डुप्रत्ययः। डित्त्वाट्टिलोपः। प्रत्ययस्वरेणोकार उदात्तः। कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। एवं प्रभु॥ ॥१७॥

अस्मान्त्सु तत्र चोदयेंद्र राये रभस्वतः। तुविद्युम्न यशस्वतः ॥६॥

अस्मान्। सु। तत्र। चोदय। इंद्र। राये। रभस्वतः। तुविऽद्युम्न। यशस्वतः ॥६॥

हे तुविद्युम्न प्रभूतधनेंद्र राये धनसिद्ध्यर्थमस्माननुष्ठातॄन् तत्र कर्मणि सु चोदय। सुष्ठु प्रेरय। कीदृशानस्मान्। रभस्वत उद्योगवतो यशस्वतः कीर्तिमतः॥ तत्र। तच्छब्दात्सप्तम्यास्त्रल्। पा॰ ५. ३. १०.। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। इंद्र। आमंत्रितायुदात्तत्वं। पादादित्वान्न निघातः। राये। ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। रभस्वतः। रभ राभस्ये। राभस्यं कार्योपक्रमः। सर्वधातुभ्योऽसुन्। नित्त्वादाद्युदात्तः। मतुपः पित्त्वादनुदात्तत्वं। स्वादिष्वसर्वनामस्थाने। पा॰ १. ४. १७.। इति न पदत्वं तसौ मत्वर्थे। पा॰ १. ४. १९.। इति भसंज्ञया बाधितत्वात्। आ कडारादेका संज्ञा। पा॰ १. ४. १.। इति नियमात्। तुविद्युम्न। तुवि बहु द्युम्नं धनं यस्य। षाष्ठिकमामंत्रितायुदात्तत्वं। यशस्वतः। यशोऽस्यास्तीति मतुप्। अस्मायामेधास्रजो विनिः। पा॰ ५. २. १२१.। इति विनिना न बाध्यते मतुपः सर्वत्र समुच्चयात्। यशस्शब्दो नब्विषयस्यानिसंतस्येत्याद्युदात्तः। मतुपः पित्त्वात्स एव शिष्यते॥

सं गोमदिंद्र वाजवदस्मे पृथु श्रवो बृहत्। विश्वायुर्धेह्यक्षितं ॥७॥

सं। गोऽमत्। इंद्र। वाजऽवत्। अस्मे इति। पृथु। श्रवः। बृहत्। विश्वऽआयुः।
धेहि। अक्षितं ॥७॥

हे इंद्र श्रवो धनमस्मे सं धेहि। अस्मभ्यं सम्यक् प्रयच्छ। कीदृशं श्रवः। गोमत् बह्वीभिर्गोभिरुपेतं वाजवत् प्रभूतेनान्नेनोपेतं पृथु परिमाणेनाधिकं बृहत् गुणैरधिकं विश्वायुः कृत्स्नायुष्यकारणं अक्षितं विनाशरहितं॥ गोमत्। वाजवत्। उभयत्र मतुपोऽनुदात्तत्वात्प्रातिपदिकस्वर एव। वाजशब्दो वृषादिराद्युदात्तः। अस्मे। अस्मच्छब्दाच्चतुर्थीबहुवचनस्य सुपां सुलुगित्यादिना शे आदेशः। शित्त्वात्सर्वादेशः। प्रातिपदिकस्वरेणांतोदात्तत्वं। शेषे लोपष्टिलोप इति पक्षे। पा॰ ७. २. ९०.। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं। अंत्यलोपपक्षेऽतो गुणे इति पररूप एकादेश उदात्तेनोदात्त इत्युदात्तत्वं। पृथु। प्रथ प्रख्याने। प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च। उ॰ १. २९.। इति कुप्रत्ययः। रेफस्य संप्रसारणमृकारः। परपूर्वत्वं। कोः कित्त्वान्न लघूपधगुणः। श्रूयत इति श्रवो धनं। असुन्प्रत्ययः। नित्त्वादाद्युदात्तः। बृहत्। प्रातिपदिकस्वरः। विश्वायुः। विश्वमायुर्यस्मिन्धने। विश्वशब्दः क्वन्प्रत्ययांतः। तस्य बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते परादिश्छंदसि बहुलमिति पूर्वपदांतोदात्तत्वं। एकादेश उदात्तेनोदात्त इत्युदात्तः। अक्षितं। क्षि क्षय इत्यस्मादंतर्णीतण्यर्थात्कर्मणि निष्ठा। तेन ण्यदर्थत्वान्निष्ठायामण्यदर्थे। पा॰ ६. ४. ६०.। इति न दीर्घत्वं। अत एव क्षियो दीर्घात्। पा॰ ८. २. ४६.। इति न निष्ठानत्वं। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं॥

अस्मे धेहि श्रवो बृहद्द्युम्नं सहस्रसातमं। इंद्र ता रथिनीरिषः ॥८॥
अस्मे इति। धेहि। श्रवः। बृहत्। द्युम्नं। सहस्रऽसातमं। इंद्र। ताः। रथिनीः। इषः ॥८॥

हे इंद्र बृहच्छ्रवो महतीं कीर्तिमस्मे धेहि। अस्मभ्यं प्रयच्छ। तथा सहस्रसातममतिशयेन सहस्रसंख्यादानोपेतं द्युम्नं धनमस्मे धेहि। तथा ता व्रीहियवादिरूपेण प्रसिद्धा रथिनीर्बहुरथोपेता इषोऽन्नान्यस्मे धेहि॥ अस्मे। सुपां सुलुगित्यादिना शे आदेशः। धेहि। घ्वसोरेद्धावभ्यासलोपश्च। पा॰ ६. ४. ११९.। इत्येत्वाभ्यासलोपौ। श्रूयत इति श्रवः। असुनो नित्त्वादाद्युदात्तत्वं। सहस्रं सनुते ददातीति सहस्रसाः। षणु दाने। जनसनखनक्रमगमो विट्। पा॰ ३. २. ६७.। विड्वनोरनुनासिकस्यात्। पा॰ ६. ४. ४१.। इत्याकारादेशः। धातुस्वरेणांतोदात्तः। पुनः कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। रथा आसां संतीति रथिन्य इति प्रत्ययस्याद्युदात्तत्वं। ऋन्नेभ्यो ङीप्। पा॰ ४. १. ५.। स च पित्त्वादनुदात्तः। इषो यौगिकत्वे धातुस्वरः। रूढत्वे प्रातिपदिकस्वरः॥

वसोरिंद्रं वसुपतिं गीर्भिर्गृणंत ऋग्मियं। होम गंतारमूतये ॥९॥
वसोः। इंद्रं। वसुऽपतिं। गीःऽभिः। गृणंतः। ऋग्मियं। होम। गंतारं। ऊतये ॥९॥

वसोर्वसुनोऽस्मदीयस्य धनस्योतये रक्षार्थमिंद्रं होम। वयमाह्वयामः। किं कुर्वंतः। गीर्भिः स्तुतिभिर्गृणंतः स्तुवंतः। कीदृशमिंद्रं। वसुपतिं धनपालकं ऋग्मियं ऋचां मातारं गंतारं यागदेशे गमनशीलं॥ वसोः। वस निवासे। शृस्वृस्निहीत्यादिना। उ॰ १. ११.। उप्रत्ययः। निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः। वसुपतिं। समासांतोदात्तत्वे प्राप्ते पत्यावैश्वर्ये। पा॰ ६. २. १८.। इति पूर्वपदप्रकृतिस्वरत्वं। गीर्भिः। साविकाच इति विभक्तेरुदात्तत्वं। गृणंतः। गॄ शब्दे। लटः शतृ। क्र्यादिभ्यः श्ना। पा॰ ३. १. ८१.। शतुः सार्वधातुकमपिदिति ङित्वात् श्नाभ्यस्तयोरातः। पा॰ ६. ४. ११२.। इत्याकारलोपः। शतुरकारस्य प्रत्ययस्वरेणोदात्तत्वं। ऋग्मियं। ऋचो मिमीत इत्यृग्मीः। तमृग्मियं। माङ् माने शब्दे च। क्विपेति क्विप्। घुमास्थेत्यादिना। पा॰ ६. ४. ६६.। ईत्वं। चकारस्य चोः कुः। झलां जशोऽंते। पा॰ ८. २. ३९.। इति जश्त्वं। गकारः। द्वितीयैकवचनेऽचि श्नुधात्वित्यादिना। पा॰ ६. ४. ७७.। इयङादेशः। एरनेकाच इति यणादेशः। पा॰ ६. ४. ८२.। सर्वे विधयश्छंदसि विकल्प्यंत इति न भवति। कृदुत्तरपदप्रकृतिस्वरेणेकार उदात्तः। होम। आह्वयामः। ह्वेञ् स्पर्धायां शब्दे च। लट्। तस्मादस्मदो बहुत्वेऽपि व्यत्ययेन मिप्। इकारस्य व्यत्ययेनाकारः। शपो बहुलं छंदसीति लुक्। बहुलं छंदसि। पा॰ ६. १. ३४.। इति ह्वः संप्रसारणं परपूर्वत्वं गुणः। धातोः। पा॰ ६. १. १६२.। इत्योकार उदात्तः। मिपः पित्स्वरेणानुदात्तत्वं। गंतारं। गम्लृ सृप्लृ गतौ। ताच्छील्ये तृन्। नित्त्वादाद्युदात्तः। ऊतये। ऊतियूतीत्यादिना क्तिन्नुदात्तो निपातितः॥

सुतेसुते न्योकसे बृहद्बृहत एदरिः। इंद्राय शूषमर्चति ॥१०॥
सुतेऽसुते। निऽओकसे। बृहत्। बृहते। आ। इत्। अरिः। इंद्राय। शूषं। अर्चति ॥१०॥

आकार इच्छब्दश्च पादपूरणौ। यद्वा। व्याप्तिवचन आकारः। आङीषदर्थेऽभिव्याप्तौ। अम॰ ३. ४. ३२.। इत्यभिधानात्। इच्छब्दोऽपिशब्दार्थः। इयर्ति गच्छत्यनुष्ठेयं कर्म प्राप्नोतीत्यरिर्यजमानः। एदरिः सर्वोऽपि यजमान इंद्राय सुते सुत इंद्रार्थमभिषुते तत्तत्सोमे शूषं बलमर्चति। स्तौति। इंद्रस्य पराक्रमं प्रशंसतीत्यर्थः। कीदृशं शूषं। बृहत् प्रौढं। कीदृशायेंद्राय। न्योकसे नियतस्थानाय बृहते प्रौढाय॥ सुते सुते। षुञ् अभिषवे। क्तप्रत्ययः प्रत्ययस्वरेणोदात्तः। नित्यवीप्सयोरिति वीप्सायां द्विर्भावः। तस्य परमाम्रेडितमिति द्वितीयस्याम्रेडितत्वेनानुदात्तं च। पा॰ ८. १. ३.। इत्यनुदात्तत्वं। न्योकसे। नियतमोको यस्य तस्मै। निशब्दो निपाता आद्युदात्ता इत्युदात्तः। तस्य यणादेश उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य। पा॰ ८. २. ४.। इत्योकारः स्वरितः। बृहते। बृहन्महतोरुपसंख्यानं। पा॰ ६. १. १७३. १.। इत्यजादिविभक्तेरुदात्तत्वं। अरिः। ऋ गतौ।

अच इः। उ॰ ४. १३८.। इतीकारप्रत्ययः। गुणो रपरत्वं। प्रत्ययस्वरेणेकार उदात्तः। इंद्राय। ऋज्रेंद्रेत्यादिना रन्प्रत्यय इकार उदात्तः। शूषं। प्रातिपदिकस्वरः। अर्चति। निघातस्वरः॥ ॥१८॥

गायंतीति सूक्तस्य मंत्रसंख्या छंदोविशेषश्चैवमनुक्रम्यते। गायंति द्वादशानुष्टुभं त्विति। तुहिह्वेत्यादिपरिभाषायां। अनु॰ १२. ३.। तुशब्दस्य सूक्तद्वये परिभाषितत्वादस्य सूक्तस्य वक्ष्यमाणस्य चानुष्टुभत्वं द्रष्टव्यं। ऋषिदेवते पूर्ववत्॥ अभिप्लवषडहस्योक्थ्येषु तृतीयसवनेऽच्छावाकस्य गायंतीति स्तोत्रियस्तृचः। एह्यू ष्विति खंडे गायंति त्वा गायत्रिण आ त्वा गिरो रथीरिव। आ॰ ७. ८.। इति सूचितं॥

गायँति त्वा गायत्रिणोऽर्चंत्यर्कमर्किणः। ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे ॥१॥
गायँति। त्वा। गायत्रिणः। अर्चँति। अर्कं। अर्किणः। ब्रह्माणः। त्वा। शतक्रतो इति शतऽक्रतो। उत्। वंशंऽइव। येमिरे ॥१॥

हे शतक्रतो बहुकर्मन्बहुप्रज्ञ वेंद्र त्वां गायत्रिण उद्गातारो गायंति। स्तुवंति। अर्किणोऽर्चनहेतुमंत्रयुक्ता होतारोऽर्कमर्चनीयमिंद्रमर्चंति। शस्त्रगतैर्मंत्रैः प्रशंसंति। ब्रह्माणो ब्रह्मप्रभृतय इतरे ब्राह्मणास्त्वामुद्येमिरे। उन्नतिं प्रापयंति। तत्र दृष्टांतः। वंशमिव। यथा वंशाग्रे नृत्यंतः शिल्पिनः प्रौढं वंशमुन्नतं कुर्वंति। यथा वा सन्मार्गवर्तिनः स्वकीयं कुलमुन्नतं कुर्वंति। तद्वत्। एतामृचं यास्क एवं व्याचष्ट। गायंति त्वा गायत्रिणः प्रार्चंति तेऽर्कमर्किणो ब्रह्माणस्त्वा शतक्रत उद्येमिरे वंशमिव। वंशो वनशयो भवति वननाच्छ्रूयत इति वा। नि॰ ५. ५.। इति। अर्कशब्दं च बहुधा व्याचष्टे। अर्को देवो भवति यदेनमर्चंत्यर्को मंत्रो भवति यदेनेनार्चंत्यर्कमन्नं भवत्यर्चति भूतान्यर्को वृक्षो भवति स वृतः कटुकिम्ना। नि॰ ५. ४.। इति॥ गायंति। शप्तिपौ पित्त्वात्सार्वधातुकत्वाच्चानुदात्तौ। धातुरुदात्तः। गायत्रिणः। गायत्रं साम येषामुद्गातॄणामस्ति ते। अत इनिठनौ। प्रत्ययस्वरेणेकार उदात्तः। अर्चंति। अर्च पूजायां। भौवादिकः। शप्तिपावनुदात्तौ। धातुस्वर एव। पादादित्वान्न निघातः। अर्कं। अर्चंत्येभिरित्यर्का मंत्राः। तैरर्चनीयतया तदात्मक इंद्रोऽपि लक्षणयार्कः। पुंसि संज्ञायां घः प्रायेण। पा॰ ३. ३. ११८.। इति करणे घः। चजोः कु घिण्यतोः। पा॰ ७. ३. ५२.। इति चकारस्य कुत्वं। ककारः। प्रत्ययस्वरेणांतोदात्तः। अर्का मंत्रा एषां संतीत्यर्किणो होतारः। एकाक्षरात्कृतो जातेः सप्तम्यां च न तौ स्मृतौ। पा॰ ५. २. ११५. २.। इति छंदंतादिनिठनौ यद्यपि प्रतिषिद्धौ तथाप्यत्र व्यत्ययादिनिः। प्रत्ययस्वरेणेकार उदात्तः। ब्रह्माणः। प्रातिपदिकस्वरेणांतोदात्तः। शतक्रतो। निघातः। संहितायामवादेशे लोपः शाकल्यस्य। पा॰ ८. ३. १९.। इति वकारलोपः। वंशशब्दः प्रातिपदिकस्वरेणांतोदात्तः। इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च। पा॰ २. १. ४. २.। इति स एव शिष्यते। येमिरे। यम उपरमे। तिङ्ङतिङ इति निघातः॥

यत्सानोः सानुमारुहद्भूर्यस्पष्ट कर्त्वं। तदिंद्रो अर्थं चेतति यूथेन वृष्णिरेजति ॥२॥
यत्। सानोः। सानुं। आ। अरुहत्। भूरि। अस्पष्ट। कर्त्वं। तत्। इंद्रः। अर्थं। चेतति। यूथेन। वृष्णिः। एजति ॥२॥

यद्यदा सानोः सानुमारुहत् यजमानः सोमवल्लीसमिदाद्याहरणायैकस्मात्पर्वतभागादपरं पर्वतभागमारूढवान्। तथा भूरि प्रभूतं कर्त्वं कर्म सोमयागरूपमस्पष्ट स्पृष्टवान्। उपक्रांतवानित्यर्थः। तत्तदानीमिंद्रोऽर्थं यजमानस्य प्रयोजनं चेतति। जानाति। ज्ञात्वा च वृष्णिः कामानां वर्षिता सन् यूथेन मरुद्गणेन सहैजति। कंपते। स्वस्थानाद्यज्ञभूमिमागंतुमुद्युंक्त इत्यर्थः॥ सानोः। षणु दाने। सनोति ददाति निवसतामवकाशमिति सानुः। दृसनिजनिचरिचटिरहिभ्यो ञुण्। उ॰ १. ३.। णित्त्वादुपधाया वृद्धिः। ञित्त्वादाद्युदात्तत्वं च। अरुहत्। रुहेर्लङि तिपि शपि संज्ञापूर्वको विधिरनित्यः। परि॰ ९३. १.। इति लघूपधगुणो न भवति। लुङ्लङ्लृङ्क्ष्वडुदात्तः। सति शिष्टत्वात्स एव शिष्यते। निपातैर्यद्यदिहंतेति। पा॰ ८. १. ३०.। निषेधान्निघातो न भवति। भूरि। अदिशदिभूशुभिभ्यः क्रिन्। उ॰ ४. ६५.। कित्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तः।

अस्पृष्ट । स्पृश बाधनस्पर्शनयोः । स्वरितञित इत्यात्मनेपदं । लङः प्रथमपुरुषैकवचनं त । बहुलं छंदसीति शपो लुक् । व्रश्चादिषत्वष्टुत्वे । पा॰ ८. २. ३६. ८. ४. ४१. । लुङ्लङ्लृङ्क्ष्वडुदात्त इत्यडागम उदात्तः । स एव शिष्यते । अनुषंगेण यच्छब्दयोगान्निघाताभावः । कर्त्वे । डुकृञ् करणे । अन्येभ्योऽपि दृश्यंते । पा॰ ३. २. ७५. । इति विच् । गुणो रपरत्वं । विचः सर्वापहारी लोपः । करो भावः कर्त्वं । अर्थं । अर्तेरुषिकुषिगार्तिभ्यस्थन् । उ॰ २. ४. । नित्वादाद्युदात्तः । यूथेन । तिथपृष्ठगूथयूथप्रोथाः । उ॰ २. १२. । इति थक्प्रत्ययांतो निपातितः । वृष्णिः । निरित्यनुवृत्तौ सृवृषिभ्यां कित् । उ॰ ४. ४९. । इति निप्रत्ययांतः । कित्वाद्गुणाभावः । प्रत्ययस्वरेणांतोदात्तः । एजति । एजृ कंपने । तिङ्ङतिङ इति निघातः ॥

युक्ष्वा हि केशिना हरी वृषणा कक्ष्यप्रा । अथा न इंद्र सोमपा गिरामुपश्रुतिं चर ॥ ३ ॥

युक्ष्व । हि । केशिना । हरी इति । वृषणा । कक्ष्यऽप्रा । अथ । नः । इंद्र । सोमऽपाः । गिरां । उपऽश्रुतिं । चर ॥ ३ ॥

हे सोमपाः सोमपानयुक्तेंद्र हरी त्वदीयावश्वौ युक्त्वा हि । सर्वथा संयोजय । अथानंतरं नोऽस्मदीयानां गिरां स्तुतीनामुपश्रुतिं समीपे श्रवणमुद्दिश्य चर । तत्प्रदेशं गच्छ । कीदृशौ हरी । केशिना स्कंधप्रदेशे लंबमानकेशयुक्तौ वृषणा सेचनसमर्थौ युवानौ कक्ष्यप्रा । अश्वस्योदरबंधनरज्जुः कक्ष्या । तस्याः पूरकौ । पुष्टांगावित्यर्थः ॥ युक्ष्व । श्नमो लोपश्छांदसः । सति शिष्टत्वेन प्रत्ययस्वरः शिष्यते । द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं । केशिना । प्रशस्ताः केशा अनयोः संतीति मत्वर्थीय इनिः । प्रत्ययस्वरः । सुपां सुलुगित्यादिना द्विवचनस्याकारादेशः । वृषणा । पृषु वृषु मृषु सेचने । कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः । उ॰ १. १५६. । इति कनिन् । ञ्नित्यादिर्नित्यमित्याद्युदात्तः । वा षपूर्वस्य निगमे । पा॰ ६. ४. ९. । इत्युपधायाः पक्षे दीर्घाभावः । पूर्ववदाकारः । कक्ष्यप्रा । कक्षयोर्भवं कक्ष्यं सूत्रं । तत्प्रातः पूरयतः पुष्टत्वादिति कक्ष्यप्रौ । प्रा पूरणे । आतोऽनुपसर्गे कः । पा॰ ३. २. ३. । इति कप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरेणांतोदात्तत्वं । आकारः पूर्ववत् । अथ । निपातस्येति संहितायां दीर्घः । नः । अनुदात्तं सर्वमपादादावित्यनुवृत्तौ बहुवचनस्य वस्नसौ । पा॰ ८. १. २१. । इति नसादेशोऽनुदात्तः । इंद्र सोमपा । उभावामंत्रितस्य चेति सर्वानुदात्तौ । गिरां । सावेकाचस्तृतीयादिर्विभक्तिरिति विभक्तिरुदात्ता । उपशब्दो निपातत्वादाद्युदात्तः । श्रुतिशब्देन प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तादौ च निति कृत्यतौ । पा॰ ६. २. ५०. । इति तुवर्जिततादिपरत्वाद्गतेः प्रकृतिस्वरः । चर । निघातः ॥

विशेषविनियोगस्तु यत्र श्रौतो न सूचितः । स्मार्तं तत्र विजानीयाद्गृह्यविधानादिसूत्रतः ॥ एहि स्तोमानित्यृगेषा सूत्रे विशेषतः[illegible] न विनियुक्ता । साधारण[illegible]स्तु ब्रह्मयज्ञादौ सर्वत्रानुसंधेयः ॥

एहि स्तोमाँ अभि स्वराभि गृणीह्या रुव । ब्रह्म च नो वसो सचेंद्र यज्ञं च वर्धय ॥ ४ ॥

आ । इहि । स्तोमान् । अभि । स्वर । अभि । गृणीहि । आ । रुव । ब्रह्म । च । नः । वसो इति । सचा । इंद्र । यज्ञं । च । वर्धय ॥ ४ ॥

हे वसो निवासकारणभूतेंद्र एहि । अस्मिन्कर्मण्यागच्छ । आगत्य च [illegible]नि स्तोत्राण्यभि स्वर । अभिलक्ष्य प्रशंसारूपं शब्दं कुरु । तथाध्वर्यवमभिलक्ष्य गृणीहि । शब्दं कुरु । तथा होतृप्रयुक्तानि शस्त्राण्यालक्ष्य रुव । शब्दं कुरु । परितोषेण सर्वानृत्विजः प्रशंसेत्यर्थः । तत ऊर्ध्वं नोऽस्माकं ब्रह्म चान्नं च यज्ञं चानुष्ठीयमानं कर्म च सचा सह वर्धय । सांगत्वसंपादनेन यज्ञं वर्धयित्वा तत्फलमन्नं च प्रवृद्धं कुरु । अंध इत्यादिष्वष्टाविंशत्यन्ननामसु ब्रह्म वर्च इति पठितं ॥ इहि । इण् गतौ । सेर्हिः । हेरपित्त्वेन ङित्त्वाद्गुणाभावः । निघातः । आङा सह गुण एकादेश उदात्तेनोदात्त इत्युदात्तः । स्तोमान् । अर्तिस्तुस्वित्यादिना मन् । नित्वादाद्युदात्तः । उत्तरपदेन संहितायां नकारस्य दीर्घादटि समानपाद इति रुत्वं । आतोऽटि नित्यमित्याकारस्यानुनासिकः । भोभगोअघोअपूर्वस्य योऽशीति यत्वं । तस्य लोपः शाकल्यस्येति लोपः । तस्यासिद्ध-

त्वात्स्वरसंधिर्न भवति । अभि । एवमादीनामंत इत्यंतोदात्तः । स्वर । स्वृ शब्दोपतापयोः । निघातः । अभि । गतं । गृणीहि । गॄ शब्दे । सेर्ह्यपिच्चेति हिः । क्र्यादिभ्यः श्ना । ई हल्यघोः । पा॰ ६. ४. ११३. । इतीत्वं । प्वादीनां ह्रस्वः । पा॰ ७. ३. ८०. । इत्यॄकारस्य ऋकारः । ऋवर्णाच्चेति वक्तव्यं । का॰ ८. ४. १. १. । इति णत्वं । तिङ्ङतिङ इति निघातः । रुव । रु शब्दे । सेर्ह्यपिच्च । शपि प्राप्ते व्यत्ययेन शः । तस्य ङित्त्वेन गुणाभावादुवङादेशः । अतो हेरिति हेर्लुक् । तिङ्ङतिङ इति निघातः । ब्रह्म । तृहि वृहि वृद्धौ । मनिन्नित्यनुवृत्तौ बृंहेरम् नलोपश्च । उ॰ ४. १४५. । इति मनिन् । तत्संनियोगेन नलोपः । अमागमश्च । मिदचोऽंत्यात्परः । पा॰ १. १. ४७. । इत्यृकारात्परः । यणादेशः । मनिनो नित्त्वादाद्युदात्तत्वं । वसो । आमंत्रितनिघातः । यज्ञं । यजयाचेत्यादिना । पा॰ ३. ३. ९०. । नङ् । प्रत्ययस्वरः । वर्धय । निघातः । अत्र चकारद्वयश्रवणादियमेव तिङ्विभक्तिः पूर्ववाक्येष्वनुषज्यते । अतोऽनुषक्तैव प्रथमा न श्रुतेत्यश्रुतायाश्चवायोगे प्रथमा । पा॰ ८. १. ५९. । इति निघातनिषेधो न भवति ॥

अभिप्लवषडहगतोक्थ्येष्वच्छावाकस्य तृतीयसवन उक्थमिंद्राय शंस्यमित्यनुरूपस्तृचः । एह्यू ष्विति खंड इंद्रं विश्वा अवीवृधन्नुक्थमिंद्राय शंस्यं । आ॰ ७. ८. । इति सूत्रितं ॥

उक्थमिंद्राय शंस्यं वर्धनं पुरुनिष्षिधे । शक्रो यथा सुतेषु णो रारणत्सख्येषु च ॥ ५ ॥
उक्थं । इंद्राय । शंस्यं । वर्धनं । पुरुनिःऽसिधे । शक्रः । यथा । सुतेषु । नः । ररणत् । सख्येषु । च ॥ ५ ॥

इंद्रायेंद्रार्थं वर्धनं वृद्धिसाधनमुक्थं शस्त्रं शंस्यं । अस्माभिः शंसनीयं । कीदृशायेंद्राय । पुरुनिष्षिधे बहूनां शत्रूणां निषेधकारिणे । शक्र इंद्रो नोऽस्मदीयेषु सुतेषु पुत्रेषु सख्येषु च सखित्वेष्वपि यथा येन प्रकारेण रारणत् अतिशयेन शब्दं कुर्यात्तथा शंस्यमिति पूर्वत्रान्वयः । अस्मदीयेन शस्त्रेण परितुष्ट इंद्रोऽस्माकं पुत्रानस्मत्सख्यानि च बहुधा प्रशंसत्वित्यर्थः ॥ उक्थं । वचेस्थक्प्रत्यय उक्तः । उ॰ २. ७. । प्रत्ययस्वरः । शंस्यं । शन्सु स्तुतौ । ण्यंतादचो यत् । णेरनिटीति णिलोपः । तित्स्वरिते प्राप्ते यतोऽनाव इत्याद्युदात्तत्वं । वर्धनं । करणाधिकरणयोश्च । पा॰ ३. ३. ११७. । इति करणे ल्युट् । लितीति प्रत्ययपूर्वस्योदात्तत्वं । पुरुनिष्षिधे । बहूनां शत्रूनां निषेधकाय । षिध गत्यां । धात्वादेः षः सः । अत्र निरित्युपसर्गस्य निःशब्दसमानार्थस्य प्राक्प्रयोगः । क्विप्चेति क्विप् । क्विपः सर्वापहारी लोपः । कुगतिप्रादयः । पा॰ २. २. १८. । इति समासः । निसः सकारेणो व्यवधानं छांदसत्वादनादृत्योपसर्गात्सुनोतीत्यादिना । पा॰ ८. ३. ६५. । धातुसकारस्य षत्वं । निसः सकारस्य ष्टुना ष्टुः । पा॰ ८. ४. ४१. । इति षत्वं । पुरुशब्देन कर्मणि षष्ठ्यंतेन समासः । षिधो धातुस्वरेणोदात्तत्वं । निष्षिध इति प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वं । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्पुनः कारकसमासेऽपि स एव स्वरः । शक्नोतीति शक्रः । स्फायितंचिवंचिशकीत्यादिना । उ॰ २. १३. । रक् । प्रत्ययस्वरः । यथा । प्रकारवचने थाल् । पा॰ ५. ३. २३. । लित्स्वरेण प्रत्ययात्पूर्वोऽकार उदात्तः । सुतेषु । क्तः प्रत्ययस्वरेणोदात्तः । नसो नकारस्य नश्च धातुस्थोरुषुभ्यः । पा॰ ८. ४. २७. । इति संहितायां णत्वं । रारणत् । रण शब्दार्थः । धातोरेकाचः । पा॰ ३. १. २२. । इति यङ् । यङोऽचि च । पा॰ २. ४. ७४. । इति लुक् । प्रत्ययलक्षणेन । पा॰ ६. १. ९. । द्विर्भावो हलादिःशेषः । दीर्घोऽकितः । पा॰ ७. ४. ८३. । इति दीर्घः । प्रत्ययलक्षणेन सनाद्यंता धातवः । पा॰ ३. १. ३२. । इति धातुसंज्ञायां लिङर्थे लेट् । पा॰ ३. ४. ७. । इति हेतुहेतुमद्भावलक्षणे । पा॰ ३. ३. १५६. । लिङर्थे लेट् । अत्र हींद्रकर्तृकं रारणनमुक्थशंसनस्य कर्तव्यत्वे हेतुः । लेटस्तिप् । इतश्च लोपः परस्मैपदेष्वितीकारलोपः । लेटोऽडाटावित्यडागमः । कर्तरि शप् । तस्य चर्करीतं परस्मैपदमदादिवच्च द्र[illegible]भृतिभ्यः शप इति प्राप्तो लुग्बहुलं छंदसीति निषिध्यते । शपोऽनुदात्तत्वाद्धातोरंतोदात्त एव शिष्यते । शपा लसार्वधातुकस्य व्यवधानात्तत्र परतो विधीयमानमभ्यस्तानामादिरित्याद्युदात्तत्वं न भवति । न च तिङ्ङतिङ इति निघातः । अत्र यथाशब्दयोगेन यावद्यथाभ्यां । पा॰ ८. १. ३६. । इति निषेधात् । चवायोगे प्रथमेति वात्र निघातो न भविष्यति । अत्र ह्युत्तरवाक्ये सख्येषु चेति चानुकृष्टविभक्त्यपेक्षयेयं प्रथमा तिङ्विभक्तिः । सख्येषु । सख्युः कर्माणि सख्यानि । तेषु । कर्मणि चेत्यनुवृत्तौ

सख्युर्यः । पा० ५. १. १२६. । इति सखिशब्दाद्यप्रत्ययः । तत्र भसंज्ञायां यस्येति च । पा० ६. ४. १४८. । इतीकारलोपः । प्रत्ययस्वरः ॥

**तमित्सखित्व ईमहे तं राये तं सुवीर्ये । स शक्र उत नः शकदिंद्रो वसु दयमानः ॥६॥**

**तम् । इत् । सखिऽत्वे । ईमहे । तं । राये । तं । सुऽवीर्ये । सः । शक्रः । उत । नः । शकत् । इंद्रः । वसु । दयमानः ॥६॥**

सखित्वे निमित्तभूते सति तमित्तमेवेंद्रमीमहे । प्राप्नुमः । तथा राये धनार्थं तमीमहे । तथा सुवीर्ये शोभनसामर्थ्यनिमित्तं तमीमहे । उतापि च शक्रः शक्तिमान्स इंद्रो नोऽस्मभ्यं वसु धनं दयमानः प्रयच्छन् शकत् । अस्मदीयरक्षणे शक्तोऽभूत् । सप्तदशयाच्ञाकर्मस्वीमहे यामीति पठितं । तदनुसारेणेंद्रं याचामह इति व्याख्येयं ॥ सख्युर्भावः सखित्वं । तस्य भावस्त्वतलौ । पा० ५. १. ११९. । इति त्वः । प्रत्ययस्वरेणोदात्तः । ईमहे । ईङ् गतौ । ङित्त्वादात्मनेपदं । पा० १. ३. १२. । दिवादिभ्यः श्यन् । बहुलं छंदसीति श्यनो लुक् । तिङ्ङतिङ इति निघातः । राये । ऊडिदमिति विभक्तेरुदात्तत्वं । सुवीर्ये । शोभनं वीर्यं यस्यासौ सुवीर्यः । भवितृवाचिनानेन भावो लक्ष्यते । सुवीर्यत्व इत्यर्थः । बहुव्रीहा[illegible]ौ वीरवीर्यौ च । पा० ६. २. १२०. । इत्युत्तरपदाद्युदात्तत्वं । शक्नोतीति शक्रः । स्फायितंचिवंचिशकीत्यादिना रक् । प्रत्ययस्वरः । शकत् । शक्लृ शक्तौ । धातुसंबंधाधिकारे छंदसि लुङ्लङ्लिटः । पा० ३. ४. ६. । इति लुङ् । यतः शक्नोत्यतस्तमीमह इति धातुसंबंधः । लुङस्तिप् । पुषादिद्युताद्यॢदितः परस्मैपदेषु । पा० ३. १. ५५. । इति च्लेरङादेशः । बहुलं छंदसि । पा० ६. ४. ७५. । इत्यडागमाभावः । तिङ्ङतिङ इति निघातः । वसु । निदित्यनुवृत्तौ वसेरुप्रत्ययः । उ० १. ११. । नित्त्वादाद्युदात्तत्वं । दयमानः । दय दानगतिरक्षणहिंसादानेषु । अनुदात्तेत्त्वादात्मनेपदं । लटः शानजादेशः । पा० ३. २. १२४. । शपः पित्त्वादनुदात्तत्वं । शानचश्चित इत्यंतोदात्तत्वं बाधित्वादुपदेशाच्छप उत्तरत्वेन परत्वात्सार्वधातुकत्वानुदात्तत्वं । धातुस्वर एव शिष्यते ॥ ॥१९॥

**सुविवृतं सुनिरजमिंद्र त्वादातमिद्यशः । गवामप व्रजं वृधि कृणुष्व राधो अद्रिवः ॥७॥**

**सुऽविवृतं । सुनिःऽअजं । इंद्र । त्वाऽदातं । इत् । यशः । गवां । अप । व्रजं । वृधि । कृणुष्व । राधः । अद्रिऽवः ॥७॥**

हे इंद्र यशोऽन्नं कर्मफलभूतं सुविवृतं सुष्ठु सर्वत्र प्रसृतं सुनिरजं सुखेन निःशेषं प्राप्तुं शक्यं त्वादातमित्त्वया शोधितं च संपन्नमिति शेषः । इतः परं क्षीरादिरसलाभार्थं गवां व्रजं निवासस्थानमप वृधि । अपवृतमुद्घाटितद्वारं कुरु । हे अद्रिवः [illegible]केंद्र राधो धनं कृणुष्व । संपादय ॥ सुविवृतं । वृञ् वरणे । कर्मणि क्तप्रत्ययः । विशब्देन प्रादिसमासः । विवृतमित्यत्र कृदुत्तरपदप्रकृतिस्वरं बाधित्वा कर्मवाचिनि क्तांते परतो गतिरनंतरः । पा० ६. २. ४९. । इति पूर्वपद[illegible] प्राप्ते परादिश्छंदसि बहुलं । पा० ६. २. १९९. । इत्यृकार उदात्तः । पुनः सुशब्देन समासे कृदुत्तरपदप्रकृतिस्वरेण स एवर्कार उदात्तः । ननु वृतमित्येव कृदंतं न तु विवृतमिति प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदंतस्य ग्रहणं । परि० २३. । इति वचनात् । सुवि[illegible]त्र च समासे वृतमित्येतावन्मात्रं नोत्तरपदं किंतु विवृतमिति । तत्कथं कृदुत्तरपदप्रकृतिस्वरत्वमिति चेत् उच्यते । प्रत्ययग्रहणपरिभाषापवादेन कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं । परि० २८. । इत्यनेन विवृतमित्यस्यापि कृदंतव्यपदेशोपपत्तेः । ननु विवृतमित्यस्य यथा कृदंतव्यपदेशः । एवं क्तांतव्यपदेशोऽप्यस्ति तथैव परिभाषया । तथा च कर्मणि क्तांत उत्तरपदे परतो गतिरनंतर इति सुशब्दस्य प्रकृतिस्वरः प्राप्नोति । न चात्रापि परादिश्छंदसि बहुलमित्येवं नास्ति विस्तारः । तथा हि । सति सुविवृतमित्यत्र विवृतमित्येवोत्तरपदमिति तदादिरिकार एवोदात्तः स्यात् । विवृतमिति समासे यद्यप्यृकारः पदादिर्भवति तथापि सुविवृतमिति समासस्य सति शिष्टत्वेन बलीयस्त्वात्तत्रत्य एवोत्तरपदादाविकार एवोदात्तस्वरेण भवितव्यमिति । उच्यते । गतिरनंतर इत्यत्रानुवृत्तेः क्तग्रहणे [illegible]षा नाश्रीयते । तदाश्रयणे व्यवहितगतावपि प्रकृतिस्वरे सत्यनंतर-

ग्रहणमनर्थकं स्यात्। अनेनैव चाभिप्रायेणानंतरग्रहणस्य प्रयोजनमभ्युहृतमित्यत्र व्यवहितस्याभिशब्दस्य मा भूदिति प्रत्युदाहृतं। तस्मात्सुविवृतमित्यृकार एवोदात्त इति स्थितं। सुनिरजं। अनायासेन निरवशेषं प्राप्यं। अज गतिक्षेपणयोः। सुनिसोरुपसर्गयोः प्राक्प्रयोगः। ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्। पा॰ ३. ३. १२६.। न चात्र सुशब्दस्य निसा व्यवधानं शंकनीयं। सुशब्दस्य ह्युपपदमात्रं। खलो निमित्तं नानंतर्यं। अत एव सुपरिहरं दुष्परिहरमित्यादयः प्रयोगा इति। पूर्ववद्गतिसमासे लितीति प्रत्ययात्पूर्वमुदात्तमिति धात्वकार उदात्तः। निसा समासे कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। पुनः सुशब्देन समासे कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति परिभाषया कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। त्वादातं। त्वया शोधनेन विशदीकृतं। दैप् शोधने। आदेच उपदेशेऽशिति। पा॰ ६. १. ४५.। इत्यात्वं। सत्यपि हि पकारे नानुबंधकृतमनेजंतत्वं। परि॰ ७.। इत्येजंत एवायं। निष्ठेति कर्मणि क्तः। दाधा घ्वदाप्। पा॰ १. १. २०.। इत्यत्रादाबिति प्रतिषेधेन घुसंज्ञाया अभावाद्दो दद्घोः। पा॰ ७. ४. ४६.। इति ददादेशो न भवति। ननु दाप् लवन इति प्रतिपदोक्तस्यैव दापस्तत्रादाबिति निषेधः। न पुनर्लाक्षणिकस्य दैपः। लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्य। परि॰ १०५.। इति नियमादिति चेन्न। गामादाग्रहणेष्वविशेषः। परि॰ १०६.। इति प्रतिप्रसवात्। युष्मच्छब्दात्तृतीयैकवचनस्य सुपां सुलुगिति डादेशः। त्वमावेकवचने। पा॰ ७. २. ९७.। इति मपर्यंतस्य त्वादेशः। अतो गुण इति पररूपत्वं। भसंज्ञायां टेरित्यद्शब्दस्य लोप उद[illegible]ार उदात्तः। कर्तृकरणे कृता बहुलं। पा॰ २. १. ३२.। इति तृतीयासमासः। तत्पुरुषे कृति बहुलं। पा॰ ६. ३. १४.। इति तृतीयाया अप्यलुक्। कृदुत्तरपदप्रकृतिस्वरे प्राप्ते तृतीया कर्मणि। पा॰ ६. २. ४८.। इति पूर्वपदप्रकृतिस्वरत्वं। यशः। अशू व्याप्तौ। अशेर्युट् च। उ॰ ४. १९०.। इत्यसुन्। तत्संनियोगेन धातोर्युडागमः। नित्त्वादाद्युदात्तत्वं। गवां। प्रातिपदिकस्वरः। सावेकाच इति विभक्तेरुदात्तत्वं प्राप्तं। न गोश्वन्साववर्णेति निषिध्यते। वृधि। वृञ् वरणे। श्रुशृणुपॄकृवृभ्यश्छंदसि। पा॰ ६. ४. १०२.। इति हेर्धिरादेशः। बहुलं छंदसीति श्नोरपि लुक्। निघातः। कृणुष्व। कृवि हिंसाकरणयोश्च। इदितो नुम्। व्यत्ययेनात्मनेपदं। लोटस्थास्। पा॰ ३. ४. ७८.। थासः से। पा॰ ३. ४. ८०.। सवाभ्यां वामौ। पा॰ ३. ४. ९१.। कर्तरि शपि प्राप्ते। पा॰ ३. १. ६८.। धिन्विकृण्व्योरच्च। पा॰ ३. १. ८०.। इत्युप्रत्ययः। तत्संनियोगेन वकारस्य चाकारः। तस्यातो लोपः। पा॰ ६. ४. ४८.। इति लोपः। अचः परस्मिन्पूर्वविधौ। पा॰ १. १. ५७.। इत्यकारलोपस्य स्थानिवद्भावाल्लघूपधगुणो न भवति। अत्र सति [illegible] विकरणेभ्य इति सति शिष्टमपि विकरणस्वरं बाधित्वा तिङ एव प्रत्ययाद्युदात्तत्वं। राधः। असुनंतो [illegible]। अद्रिवः। अद्रिर्वज्रं। तदस्यास्तीति मतुप्। छंदसीरः। पा॰ ८. २. १५.। इति वत्वं। संबुद्धावुगिदचां। पा॰ ७. १. ७०.। इति नुम्। हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्। संयोगांतस्य लोपः। इति लोपौ। पा॰ ६. १. ६८.। मतुवसो रुः संबुद्धौ छंदसि। पा॰ ८. ३. १.। इति रुत्वं। विसर्जनीयः। आमंत्रितस्य च निघातः॥

नहि त्वा रोदसी उभे ऋघायमाणमिन्वतः।
जेषः स्वर्वतीरपः सं गा अस्मभ्यं धूनुहि॥८॥
नहि। त्वा। रोदसी इति। उभे इति। ऋघायमाणं। इन्वतः।
जेषः। स्वःऽवतीः। अपः। सं। गाः। अस्मभ्यं। धूनुहि॥८॥

हे इंद्र ऋघायमाणं शत्रुवधं कुर्वाणं त्वां रोदसी उभे द्यावापृथिव्यावपि त्वदीयं महिमानं नहीन्वतः। व्याप्तुं न समर्थे इत्यर्थः। तादृशस्त्वं स्वर्वतीः स्वर्लोकयुक्ता अपो वृष्टिरूपा जेषः। जयेः। प्रेरयेत्यर्थः। अपां स्वर्गसंबंधश्चान्यत्र दिवो वृष्टिं च्यावयति। तै॰ सं॰ ३. ३. ४. १.। इति श्रुतं। किंच वृष्टिप्रदानादन्नसंपत्तेरूर्ध्वमस्मभ्यं क्षीरादिरसप्रदा गाः सं धूनुहि। सम्यक् प्रेरय॥ नहि। नञो हिशब्देन सह सुपा। पा॰ २. १. ४.। इति समासः। समासत्वादंतोदात्तत्वं। त्वा। अनुदात्तं सर्वमित्यनुवृत्तौ त्वामौ द्वितीयायाः। पा॰ ८. १. २३.। इति त्वादेशः। रोदसी। रुदेरसुन्। नित्त्वादा[illegible]दात्तः। उगितश्च। पा॰ ४. १. ६.। इति ङीप्। उभे। प्रातिपदिकस्वरेणांतोदात्तः। श्वा सहैकादेश उदात्तः। ऋघायमाणं। नॄन्हंतीत्यृघा। अन्येभ्योऽपि दृश्यंत इति विच्। दृशिग्रहणस्य विध्यंतरोपसंग्रहणार्थ[illegible]ो हकारस्य च घकारः। अनृघा ऋघा भवतीत्यभूततद्भावे लोहि-

तादिंडाभ्यः क्यष्। पा॰ ३. १. १३.। इति क्यष्प्रत्ययो भवति। स ह्याकृतिगणः। लोपश्च हलः। पा॰ ३. १. १२.। इत्यनुवृत्तेर्नकारलोपश्च। वा क्यषः। पा॰ १. ३. ९०.। इत्यात्मनेपदं। लटः शानच्। शपोऽदुपदेशात्परत्वाच्छानचो लसार्वधातुकानुदात्तत्वं। शपः पित्त्वादनुदात्तत्वं। क्यषः प्रत्ययस्वरः। एकादेशस्योदात्तत्वं। इन्वतः। इवि व्याप्तौ। इदितो नुम् धातोरिति नुम्। शपः पित्त्वादनुदात्तत्वं। लडादेशस्य तसश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते। हि चेति निषेधात्तिङ्ङतिङ इति निघातो न भवति। जेषः। जेः प्रार्थनायां लिङर्थे लेट्। तस्य मध्यमपुरुषैकवचनं सिप्। इतश्च लोपः परस्मैपदेष्वितीकारलोपः। कर्तरि शपि प्राप्ते तदपवादः सिब्बहुलं लेटीति सिप्। अडागमस्यानुदात्तत्वाद्धातुस्वर एव शिष्यते। स्वःशब्दः ... स्वर्वत्यः। न्यङ्स्वरौ स्वरितौ। फि॰ ४. ६.। इति स्वर्शब्दः स्वरितः। मतुब्ङीपौ पित्त्वादनुदात्तौ। संहितायां स्वरितात्संहितायामनुदात्तानां। पा॰ १. २. ३९.। इत्येकश्रुतिः। स्वरित एव शिष्यते। अपः। ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। धूनुहि। धूञ् कंपने। लोट्। सेर्ह्यपिच्च। स्वादिभ्यः श्नुः। उतश्च प्रत्ययादसंयोगपूर्वात्। पा॰ ६. ४. १०६.। इति प्राप्तस्य लुकश्छांदसत्वादभावः॥

अभिप्लवषडहस्योक्थ्येषु तृतीयसवनेऽच्छावाकस्य षट्स्तोत्रियानुरूपयुगलेषु द्वितीयस्मिन्युगल आश्रुत्कर्णेति तृचोऽनुरूपः। एह्यू ष्विति खंडे श्रुधी हवं तिरश्च्या आश्रुत्कर्ण श्रुधी हवं। आ॰ ७. ८.। इति सूत्रितं॥

आश्रु॑त्कर्ण श्रु॒धी हवं॒ नू चि॑द्दधिष्व मे॒ गिरः॑।
इंद्र॒ स्तोम॑मि॒मं मम॑ कृ॒ष्वा यु॒जश्चि॒दंत॑रं॥९॥
आश्रु॑त्ऽकर्ण। श्रु॒धि। हव॑ं। नु। चि॒त्। द॒धि॒ष्व॒। मे॒। गिरः॑।
इंद्र॑। स्तोम॑ं। इ॒मं। मम॑। कृ॒ष्व। यु॒जः। चि॒त्। अंत॑रं॥९॥

हे आश्रुत्कर्ण सर्वतः श्रोतारौ कर्णौ यस्य तादृगिंद्र हवमस्मदीयमाह्वानं नु क्षिप्रं श्रुधि। शृणु। मे मम होतुर्गिरश्चित्स्तुतीरपि दधिष्व। चित्ते धारय। किंच मम मदीयमिमं स्तोमं स्तोत्ररूपं वाक्यसमूहं युजश्चित्स्वकीयसख्युरप्यंतरं कृष्व। आसन्नं कुरु। यथा वचनं तस्य प्रियं मन्यसे तद्वदस्मदीयस्तुतिष्वपि प्रीतिं कुर्वित्यर्थः॥ आश्रुत्कर्ण। आ समंताच्छृणुत इत्याश्रुत्। क्विप्। ह्रस्वस्य तुक्। पा॰ ६. १. ७१.। तादृशौ कर्णौ यस्य। आमंत्रितस्य चेत्याद्युदात्तत्वं। श्रुधी। श्रु श्रवणे। लोटो हिः। श्रुवः शृ च। पा॰ ३. १. ७४.। इति विहितश्नोर्बहुलं छंदसीति लुक्। तत्संनियोगशिष्टत्वाच्छृभावोऽपि निवर्तते। श्रुशृणुपृकृवृभ्यश्छंदसि। पा॰ ६. ४. १०२.। इति हेर्धिरादेशः। सति शिष्टत्वात्प्रत्ययस्वरः। आमंत्रितं पूर्वमविद्यमानवत्। पा॰ ८. १. ७२.। इत्यविद्यमानवत्त्वेन पदात्परत्वाभावात्तिङ्ङतिङ इति निघातो न भवति। संहितायामन्येषामपि दृश्यत इति दीर्घः। हवं। ह्वेञ् स्पर्धायां शब्दे च। बहुलं छंदसीत्यनैमित्तिके संप्रसारणे कृते पश्चादुकारांतत्वेन ऋदोरप्। पा॰ ३. ३. ५७.। इत्यप्प्रत्ययः। अपः पित्त्वाद्धातुस्वरः। नु। संहितायामृचि तुनुघमक्षुतङ्कुत्रोरुष्याणां। पा॰ ६. ३. १३३.। इति दीर्घः। चित्। चादिरनुदात्तः। दधिष्व। दधातेर्लोट्। थासः से। सवाभ्यां वामौ। पा॰ ३. ४. ९१. शपः श्लुः। अभ्यासस्य ह्रस्वत्वादि। छंदस्युभयथेत्यार्धधातुकत्वादिडागमः। आकारलोपः। निघातः। मम। तवममौ ङसि। पा॰ ७. २. ९६.। इत्यनेन मपर्यंतस्य ममादेशः। प्रातिपदिकस्वरेणांतोदात्तत्वे प्राप्ते युष्मदस्मदोर्ङसि। पा॰ ६. १. २११.। इत्याद्युदात्तत्वं। कृष्व। डुकृञ् करणे। लोट्। थासः से। सवाभ्यां वामौ। शपो बहुलं छंदसीति लुक्। सति शिष्टत्वात्प्रत्ययस्वरः। पादादित्वान्न निघातः। युजः। सावेकाच इति विभक्तेरुदात्तत्वं। अंतरं। वृषादित्वादाद्युदात्तः॥

वि॒द्मा हि त्वा॒ वृष॑तमं॒ वाजे॑षु हवन॒श्रुतं॑। वृष॑तमस्य हूमह ऊ॒तिं स॑हस्र॒सात॑मां॥१०॥
वि॒द्म। हि। त्वा॒। वृष॑न्ऽतमं। वाजे॑षु। ह॒व॒न॒ऽश्रुतं॑। वृष॑न्ऽतमस्य। हू॒म॒हे॒। ऊ॒तिं।
स॒ह॒स्र॒ऽसात॑मां॥१०॥

हे इंद्र त्वां विद्म। जानीमः। कीदृशं त्वां। वृषंतमं कामानामतिशयेन वर्षितारं वाजेषु संग्रामेषु हवनश्रुतं

अस्मदीयस्याह्वानस्य श्रोतारं। वृषतमस्यातिशयेन कामादीनां वर्षितुस्तवोतिं रक्षामस्मद्विषयामुद्दिश्य ह्वमहे। त्वामाह्वयामः। कीदृशीमूतिं। सहस्रसातमामतिशयेन धनसहस्राणां दात्रीं॥ विद्म। विदो लटो वा। पा॰ ३. ४. ८३.। इति मसो मादेशः। प्रत्ययस्वरेणांतोदात्तः। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। वृषंतमं। पृषु वृषु मृषु सेचने। कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः। उ॰ १. १५६.। इति कनिन्। नित्त्वादाद्युदात्तः। तमपः पित्त्वात्स एव शिष्यते। अयस्मयादीनि छंदसि। पा॰ १. ४. २०.। इति भत्वेन पदत्वाभावान्नलोपाभावः। पा॰ ८. २. ७.। वाजेषु। वाजशब्दो वृषादिराद्युदात्तः। हवनश्रुतं। ह्व इत्यनुवृत्तौ बहुलं छंदसीति क्युटि संप्रसारणं। हवनं शृणोतीति क्विप्। तुगागमः। वृषंतमस्य। उक्तं। ह्वमहे। बहुलं छंदसीति संप्रसारणं। शप [illegible] बहुलं छंदसीति शपो लुक्। ऊतिं। ऊतियूति[illegible]दात्तो निपातितः। सहस्रसातमां। सहस्रं सनोतीति सहस्रसाः। षणु दाने। जनसनखनक्रमगमो विट्। पा॰ ३. २. ६७.। विड्वनोरनुनासिकस्यात्। पा॰ ६. ४. ४१.। इत्याकारादेशः। कृदुत्तरपदप्रकृतिस्वरत्वं तमपः पित्त्वादेव शिष्यते॥

आ तू न॑ इंद्र कौशिक मंदसा॒नः सु॒तं पि॑ब।
नव्य॒मायुः॒ प्र सू ति॑र कृ॒धी स॑हस्र॒सामृषिं॑॥११॥
आ। तु। नः॒। इं॒द्र॒। कौ॒शि॒क॒। मं॒द॒सा॒नः। सु॒तं। पि॒ब॒।
नव्यं॑। आयुः॑। प्र। सु। ति॒र॒। कृ॒धि। स॒ह॒स्र॒ऽसां। ऋषिं॑॥११॥

हे इंद्र तु चिप्रं नोऽस्मान्प्रत्या गच्छेति शेषः। हे कौशिक कुशिकस्य पुत्रेंद्र मंदसानो हृष्टो भूत्वा सुतमभिषुतं सोमं पिब। यद्यपि विश्वामित्रः कुशिकस्य पुत्रस्तथापि तद्रूपेणेंद्रस्यैवोत्पन्नत्वात्कुशिकपुत्रत्वमविरुद्धं। अयं वृत्तांतोऽनुक्र[illegible]। कुशिकस्त्वैषीरथिरिंद्रतुल्यं पुत्रमिच्छन्ब्रह्मचर्यं चचार। तस्येंद्र एव गाथी पुत्रो जज्ञे। अनु॰ ऋग्वे॰ ३. १.। इति। हे इंद्र नव्यं सर्वैर्देवैः स्तुत्यं कर्मानुष्ठानपरमायुर्जीवितं प्र सू तिर। प्रकर्षेण सुष्ठु वर्धय। ततो मां सहस्रसां सहस्रसंख्याकलाभोपेतमृषिमतींद्रियद्रष्टारं कृधि। कुरु॥ तु। संहितायामृचि तुनुघमक्षुतङ्कुत्रोरुष्याणामिति दीर्घः। नः। संहितायामुदात्तादनुदात्तस्य स्वरितः। इंद्र। आमंत्रितनिघातः। कौशिक। निघातः। मंदसानः। हृष्यन्। मदि स्तुतिमोदमदस्वप्नकांतिगतिषु। असानजित्यनुवृत्तावृंजिवृधिमंदिसहिभ्यः कित्। उ॰ २. ८७.। इत्यसानच्प्रत्ययः। चित्त्वादंतोदात्तः। सुतं। प्रत्ययस्वरः। नव्यं। णु स्तुतौ। अचो यत्। गुणः। वांतो यि प्रत्यये। पा॰ ६. १. ७९.। इत्यवादेशः। यतोऽनाव इत्याद्युदात्तत्वं। आयुः। उसि निदित्यनुवृत्तावेतेर्णिच्च। उ॰ २. ११९.। इत्युसिप्रत्ययः। णित्त्वाद्वृद्ध्यायादेशौ। नित्त्वादाद्युदात्तत्वं। सु। निपातस्य चेति संहितायां दीर्घत्वं। तिर। तरतेर्व्यत्ययेन शः। ऋत इद्धातोः। पा॰ ७. १. १००.। इतीत्वं। अतो हेरिति हेर्लुक्। कृधि। डुकृञ् करणे। बहुलं छंदसीति शपो लुक्। श्रुशृणुपृकृवृभ्यश्छंदसीति हेर्धिरादेशः। सहस्रसां। उक्तं। ऋषिं। ऋषी गतौ। इन्नित्यनुवृत्ताविगुपधात्कित्। कित्त्वाद्गुणाभावः। नित्त्वादाद्युदात्तत्वं॥

प्रवर्ग्ये परि त्वेत्यभिष्टुयात्। सृष्टोदकमिति खंडे परि त्वा गिर्वणो गिरोऽधि द्वयोरदधा उक्थ्यं वचः। आ॰ ४. ६.। इति सूचितं। तथा हविर्धानप्रवर्तने सेयं परिधानीया। हविर्धाने प्रवर्तयंतीति खंडे परि त्वा गिर्वणो गिर इति परिदध्यात्। आ॰ ४. ९.। इति सूचितं। तथा ब्राह्मणं च। परि त्वा गिर्वणो गिर इत्युत्तमया परिदधाति। ऐ॰ ब्रा॰ १. २९.। इति॥

परि॑ त्वा गिर्वणो॒ गिर॑ इ॒मा भ॑वंतु वि॒श्वतः॑।
वृ॒द्धायु॒मनु॒ वृद्ध॑यो॒ जुष्टा॑ भवंतु॒ जुष्ट॑यः॥१२॥
परि॑। त्वा॒। गि॒र्व॒णः॒। गिरः॑। इ॒माः। भ॒वं॒तु॒। वि॒श्वतः॑।
वृ॒द्धऽआ॑युं। अनु॑। वृद्ध॑यः। जुष्टाः॑। भ॒वं॒तु॒। जुष्ट॑यः॥१२॥

हे गिर्वणोऽस्मदीयस्तुतिभागिंद्र विश्वतः सर्वेषु कर्मसु प्रयुज्यमाना इमा गिरोऽस्मदीया स्तुतयस्त्वा त्वां परि भवंतु। सर्वतः प्राप्नुवंतु। कीदृश्यो गिरः। वृद्धायुमनु प्रवृद्धेनायुषेणोपेतं त्वामनुलक्ष्य वृद्धयो वर्धमानाः। किंचैता गिरो जुष्टास्त्वया सेविताः सत्यो जुष्टयोऽस्माकं प्रीतिहेतवो भवंतु ॥ गिर्वणः। गीर्भिर्वन्यत इति गिर्वणाः। वन षण संभक्तौ। सर्वधातुभ्योऽसुन्। गिर उपधाया दीर्घाभावश्छांदसः। आमंत्रितनिघातः। विश्वतः। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। वृद्धायुं। वृधु वृद्धौ। क्तप्रत्ययः। उदितो वा। पा° ७. २. ५६.। इतीटः क्त्वाप्रत्यये विकल्पितत्वाद्यस्य विभाषा। पा° ७. २. १५.। इति निष्ठायामिडभावः। प्रत्ययस्वरः। इण् गतौ। छंदसीणः। उ° १. २.। इत्युण्। णित्त्वाद्वृद्धिः। आयादेशश्च। वृद्धमायुर्यस्य। बहुव्रीहौ पूर्वपदप्रकृति-स्वरत्वं। वृद्धयः। वृधेः क्तिनि तितुत्रतथसिसुसरकसेषु च। पा° ७. २. ९.। इतीडभावः। नित्त्वादाद्युदात्तत्वं। जुष्टाः। श्वीदितो निष्ठायां। पा° ७. २. १४.। इतीडभावः। जुष्टार्पिते इत्यनुवृत्तौ नित्यं मंत्रे। पा° ६. १. २१०.। इत्याद्युदात्तत्वं। जुष्टयः। जुषी प्रीतिसेवनयोः। क्तिन्। तितुत्रेतीडभावः। नित्त्वादाद्युदात्तः॥ ॥२०॥

इंद्रं विश्वा इत्यष्टर्चस्य सूक्तस्य मधुच्छंदसः पुत्रो जेतृनामक ऋषिः। तथा चानुक्रांतं। इंद्रमष्टौ जेता माधुच्छंदस इति। छंदस्त्वानुष्टुभमिति पूर्वसूक्तोक्तं। इंद्रो देवतानुवर्तते ॥ विनियोगस्तु। महाव्रते निष्केवल्ये इत्येतत्सूक्तं शंसनीयं। ऊरू इति खंडे शौनकेन सूचितं। इंद्रं विश्वा अवीवृधन्नित्यानुष्टुभं तस्य प्रथमायाः पूर्वमर्धर्चं शस्त्वोत्तरेणार्धर्चेनोत्तरस्याः पूर्वमर्धर्चं व्यतिषजति पादैः पादाननुष्टुप्कारं प्रागुत्तमायाः। ऐ° आ° ५. ३. १.। इति। ब्राह्मणं च प्रथमारण्यके पठ्यते प्र वो मह इति खंडे। इंद्रं विश्वा अवीवृधन्निति पदानुषंगाः। ऐ° आ° १. ५. २.। इति। तथा पृष्ठ्यस्य पंचमेऽहनि निष्केवल्ये शस्त्र इंद्रं विश्वा अवीवृधन्नित्यनुरूपः। स्तोमे वर्धमान इति खंडे सूचितं। उप नो हरिभिः सुतमिंद्रं विश्वा अवीवृधन्। आ° ७. १२.। इति ॥

इंद्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः। रथीतमं रथीनां वाजानां सत्पतिं पतिं ॥१॥

इंद्रं। विश्वाः। अवीवृधन्। समुद्रऽव्यचसं। गिरः। रथिऽतमं। रथिनां। वाजानां। सत्ऽपतिं। पतिं ॥१॥

विश्वाः सर्वा गिरोऽस्मदीयाः स्तुतय इंद्रमवीवृधन्। वर्धितवत्यः। कीदृशमिंद्रं। समुद्रव्यचसं समुद्रवद्व्याप्तवंतं रथीनां रथयुक्तानां योद्धॄणां मध्ये रथीतमं अतिशयेन रथयुक्तं वाजानामन्नानां पतिं स्वामिनं सत्पतिं सतां सन्मार्गवर्तिनां पालकं॥ विश्वाः। विशेः क्वन्। नित्स्वरः। अवीवृधन्। वृधेर्णिचि चङ्युर्च्छेदित्यनुवृत्तौ नित्यं छंदसि। पा° ७. ४. ८.। इत्यृकारस्य ऋकारविधानाल्लघूपधगुणाभावः। निघातस्वरः। समुद्रव्यचसं। व्यचेरसुन्। गाङ्कुटादिभ्योऽञ्णिन्ङित्। पा° १. २. १.। इति प्राप्तस्य ङित्त्वस्य व्यचेः कुटादित्वमनसि। पा° १. २. १. १.। इत्यसिनिषेधाद्ग्रहिज्येत्यादिना ङिति विधीयमानं संप्रसारणं। पा° ६. १. १६.। न भवति। समुद्रव्यच इव व्यचो यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। रथीतमं रथीनां। रथशब्दादुत्पन्नस्येनश्छांदसं दीर्घत्वं। प्रत्ययस्व[illegible] च। वाजानां। वृषादित्वादाद्युदात्तत्वं। सत्पतिं। पत्यावैश्वर्ये। पा° ६. २. १८.। इति पूर्वपदप्रकृतिस्वरत्वं ॥

सख्ये त इंद्र वाजिनो मा भेम शवसस्पते। त्वामभि प्र णोनुमो जेतारमपराजितं ॥२॥

सख्ये। ते। इंद्र। वाजिनः। मा। भेम। शवसः। पते। त्वां। अभि। प्र। नोनुमः। जेतारं। अपराऽजितं ॥२॥

हे शवसस्पते बलस्य पालकेंद्र ते तव सख्येऽनुग्रहप्रयुक्ते सखित्वे वर्तमाना वयं वाजिनोऽन्नवंतो भूत्वा मा भेम। शत्रुभ्यो भीतिं प्राप्ता मा भूम। अतस्त्वामभयहेतुमभि प्र णोनुमः। सर्वतः प्रकर्षेण स्तुमः। कीदृशं त्वां। जेतारं युद्धेषु जयशीलं अपराजितं क्वापि पराजयरहितं॥ सख्ये। सख्युः कर्म सख्यं। सख्युर्यः। पा° ५. १. १२६.। प्रत्ययस्वरः। वाजिनः। वाजोऽन्नमेषामस्तीति वाजिनः। प्रत्ययस्वरः। भेम। ञिभी भये। लुङ्युत्तमबहुवचनं मस। नित्यं ङितः। पा° ३. ४. ९९.। इति सलोपः। बहुलं छंदसीति च्लेर्लुक्। छंदस्युभयथेति तिङ

आर्धधातुकत्वेन ङित्त्वाभावाद्गुणः । न माङ्योगे । पा॰ ६. ४. ७४. । इत्यडागमप्रतिषेधः । शवसस्पते । शवसः षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु । पा॰ ८. ३. ५३. । इति विसर्जनीयस्य संहितायां सत्वं । सुबामंत्रितपरांगवत्स्वरे इति भावेन । पा॰ २. १. २. । पदद्वयनिघातः । नोनुमः । णु स्तुतौ । णो नः । पा॰ ६. १. ६५. । इति नत्वं । यङो लुक् । प्रत्ययलक्षणेन सन्यङोरिति द्विर्भावः । गुणो यङ्लुकोः । पा॰ ७. ४. ८२. । इत्यभ्यासस्य गुणः । प्रत्ययलक्षणेन धातुसंज्ञायां लटो मस् । अदादिवद्भावाच्छपो लुक् । उपसर्गादसमासेऽपि णोपदेशस्य । पा॰ ८. ४. १४. । इति संहितायां णत्वं । जेतारं । जि जये । ताच्छील्यादिषु तृन् । ञ्नित्यादिर्नित्यं । पा॰ ६. १. १९७. । इत्याद्युदात्तत्वं । अपराजितं । अव्ययपूर्वपदप्रकृतिस्वरत्वेन नञ उदात्तत्वं ॥

पूर्वीरिंद्रस्य रातयो न वि दस्यंत्यूतयः । यदी वाजस्य गोमतः स्तोतृभ्यो मंहते मघं ॥३॥

पूर्वीः । इंद्रस्य । रातयः । न । वि । दस्यंति । ऊतयः । यदि । वाजस्य । गोऽमतः । स्तोतृऽभ्यः । मंहते । मघं ॥३॥

इंद्रस्य संबंधिन्यो रातयो धनदानानि पूर्वीरनादिकालसिद्धाः प्रभूता वा । अस्येंद्रस्य सर्वदा यष्टृभ्यो धनदानमेव स्वभाव इत्यर्थः । एवं सतीदानींतनोऽपि यजमानः स्तोतृभ्य ऋत्विग्भ्यो गोमतो गोसहितस्य वाजस्यान्नस्य पर्याप्तं मघं धनं यदि मंहते दक्षिणारूपेण ददाति तदानीमूतयो बहुधनदानपूर्वकाणींद्रस्यास्मद्विषयाणि रक्षणानि न वि दस्यंति । विशेषेण नोपक्षीयंते । मघं रेक्ण इत्यादिष्वष्टाविंशतिसंख्याकेषु धननामसु मघशब्दः पठितः । दाति दाशतीत्यादिषु दशसु दानकर्मसु मंहत इति पठितं ॥ पूर्वीः । पुरुशब्दस्य वोतो गुणवचनादिति ङीष् । आयस्योकारस्य दीर्घश्छांदसः । जसि दीर्घाज्जसि चेति निषेधं बाधित्वा वा छंदसि । पा॰ ६. १. १०६. । इति पूर्वसवर्णदीर्घत्वं । ङीषः प्रत्ययस्वरेणोदात्तत्वं । रातयः । मंत्रे वृषेषपचमनविदभूवीरा उदात्तः । पा॰ ३. ३. ९६. । इति क्तिन उदात्तत्वं । दस्यंति । दसु उपक्षये । दिवादिभ्यः श्यन् । निघातः । ऊतयः । ऊतियूतीत्यादिना क्तिनुदात्तः । यदि । निपातत्वादाद्युदात्तः । संहितायां निपातस्य चेति दीर्घत्वं । स्तोतृभ्यः । ष्टुञ् स्तुतौ । धात्वादेः षः सः । तृचश्चित्त्वादंतोदात्तत्वं । मंहते । शपः पित्त्वादनुदात्तत्वं । तिङश्च लसार्वधातुकस्वरेण तिङ्ङतिङ इति निघातो न भवति निपातैर्यद्यदिहंतेति निषेधात् ॥

आभिप्लवषडहस्योक्थ्ये तृतीयसवनेऽच्छावाकस्य पुरां भिंदुर्युवा कविरिति स्तोत्रियस्तृचः । तथा च सूचितं । एह्यू ष्विल्युपक्रम्य पुरां भिंदुर्युवा कविर्वृषा ह्यसि राधसे । आ॰ ७. ८. । इति ॥

पुरां भिंदुर्युवा कविरमितौजा अजायत ।
इंद्रो विश्वस्य कर्मणो धर्ता वज्री पुरुष्टुतः ॥४॥
पुरां । भिंदुः । युवा । कविः । अमितऽओजाः । अजायत ।
इंद्रः । विश्वस्य । कर्मणः । धर्ता । वज्री । पुरुऽस्तुतः ॥४॥

अयमिंद्र उच्यमानगुणयुक्तोऽजायत । संपन्नः । कीदृग्गुणक इति तदुच्यते । पुरामसुरपुराणां भिंदुर्भेत्ता युवा कदाचिदपि वलीपलितादिवार्धकरहितः कविर्मेधावी अमितौजाः प्रभूतबलः विश्वस्य कर्मणः कृत्स्नस्य ज्योतिष्टोमादेर्धर्ता पोषकः वज्री यजमानरक्षणार्थं सर्वदा वज्रयुक्तः पुरुष्टुतो बहुविधे तत्तत्कर्मणि स्तुतः ॥ भिंदुः । भिदिर् विदारणे । कुरित्यनुवृत्तौ पृभिदिव्यधिगृधिधृषिदृशिभ्यः । उ॰ १. २४. । इति कुप्रत्ययः । तस्य छंदस्युभयथेति सार्वधातुकसंज्ञायां रुधादिभ्यः श्नम् । पा॰ ३. १. ७८. । मिदचोऽन्त्यात्परः । पा॰ १. १. ४७. । श्नसोरल्लोपः । अनुस्वारस्य ययि परसवर्णः । पा॰ ८. ४. ५८. । अचः परस्मिन्पूर्वविधौ । पा॰ १. १. ५७. । इति प्राप्तस्य स्थानिवद्भावस्य न पदांतेत्यादिना । पा॰ १. १. ५८. । निषेधः । युवा । यु मिश्रणामिश्रणयोः । कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः । उ॰ १. १५६. । इति कनिन् । नित्त्वादाद्युदात्तः । कविः । कु शब्दे । अच इः । उ॰ ४. १३८. । इतीः । प्रत्ययस्वरः । अमितौजाः । अमितशब्दस्याव्ययपूर्वपदप्रकृतिस्वरत्वं । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । विश्वस्य । अशिप्रुषीत्यादिना । उ॰ १. १५१. । क्वन् । नित्त्वादाद्युदात्तः । कर्मणः ।

अन्येभ्योऽपि दृश्यंत इति मनिन्। नित्स्वरः। धर्ता। तृच्। चित्त्वादंतोदात्तः। वज्री। मत्वर्थीय इनिः। प्रत्ययस्वरः। पुरुष्टुतः। सुतस्तोमयोश्छंदसि। पा॰ ८. ३. १०५.। इति षत्वं। बहुषु प्रदेशेषु स्तुतः। थाथघञ्क्ताजबित्रकाणां। पा॰ ६. २. १४४.। इत्यंतोदात्तत्वं। तृतीयासमासे हि थाथादिस्वरापवादस्तृतीया कर्मणि। पा॰ ६. २. ४८.। इति पूर्वपदप्रकृतिस्वरः स्यात्॥

त्वं वलस्य गोमतोऽपावरद्रिवो बिलं।
त्वां देवा अबिभ्युषस्तुज्यमानास आविषुः ॥५॥
त्वं। वलस्य। गोऽमतः। अप। अवः। अद्रिऽवः। बिलं।
त्वां। देवाः। अबिभ्युषः। तुज्यमानासः। आविषुः ॥५॥

वलनामकः कश्चिदसुरो देवसंबंधिनीर्गा अपहृत्य कस्मिंश्चिद्बिले निरगूहत्। तदानीमिंद्रस्तद्बिलं स्वसैन्येन समावृत्य तस्माद्बिलाद्गा निःसारयामास। तदिदमुपाख्यानमिंद्रो वलस्य बिलमपौर्णोत्। तै॰ सं॰ २. १. ५. १.। इत्यादिब्राह्मणेषु मंत्रांतरेषु च प्रसिद्धं। तदेतद्धृदि निधायायं मंत्रः प्रवर्तते॥ हे अद्रिवो वज्रयुक्तेंद्र त्वं गोमतो वलस्य गोभिर्युक्तस्य वलनामकस्यासुरस्य संबंधि बिलमपावः। स्वसैन्यमुखेनापावृतवानसि। तदानीं तुज्यमानासो बलेन हिंस्यमाना देवा अबिभ्युषस्त्वदीयरक्षया बलाद्भीताः संतस्त्वामाविषुः। प्राप्तवंतः॥ अप। निपातत्वादाद्युदात्तः। अवः। वृञ् वरणे। लङ्। सिप्। इतश्च लोपः। स्वादिभ्यः श्नुः। तस्य बहुलं छंदसीति लुक्। गुणो रपरत्वं हल्ङ्याब्भ्यो हल्लोपः। विसर्जनीयः। अडागमः। अद्रिवः। अद्रिरस्यास्तीति मतुप्। छंदसीर इति वत्वं। संबोधन उगिदचामिति नुम्। हल्ङ्यादिसंयोगांतलोपौ। मतुवसो रुः संबुद्धौ छंदसि। पा॰ ८. ३. १.। इति रुत्वं। बिलं। नब्विषयस्यानिसंतस्येत्याद्युदात्तत्वं। अबिभ्युषः। ञिभी भये। लिट्। द्विर्भावः। अभ्यासस्य ह्रस्वजश्त्वे। क्वसुश्चेति लिटः क्वसुरादेशः। क्रादिनियमात्प्राप्त इट् वस्वेकाजाद्घसामिति नियमान्निवर्तते। जसि सर्वनामस्थानेऽपि व्यत्ययेन भत्वाद्वसोः संप्रसारणं। परपूर्वत्वं। शासिवसिघसीनां चेति षत्वं। अचि श्नुधात्वित्यादिना। पा॰ ६. ४. ७७.। प्राप्तमियङादेशं बाधित्वा एरनेकाच इति यणादेशः। नञ्समासः। अव्ययपूर्वपदप्रकृतिस्वरत्वं। तुज्यमानासः। तुजेर्हिंसार्थात्परस्य कर्मणि लटः स्थाने शानच्। सार्वधातुके यक्। पा॰ ३. १. ६७.। इति यक्। तस्माददुपदेशादुत्तरस्य लसार्वधातुकस्यानुदात्तत्वं। यक एव प्रत्ययस्वरः शिष्यते। आविषुः। अव रक्षणादिषु। अस्माद्गत्यर्थाल्लुङो झिः। तस्य सिजभ्यस्तविदिभ्यश्च। पा॰ ३. ४. १०९.। इति जुस्। सिच इडागमः। आडजादीनां। पा॰ ६. ४. ७२.। इत्याडागमः। आदेशप्रत्ययोरिति षत्वं॥

तवाहं शूर रातिभिः प्रत्यायं सिंधुमावदन्।
उपातिष्ठंत गिर्वणो विदुष्टे तस्य कारवः ॥६॥
तव। अहं। शूर। रातिऽभिः। प्रति। आयं। सिंधुं। आऽवदन्।
उप। अतिष्ठंत। गिर्वणः। विदुः। ते। तस्य। कारवः ॥६॥

हे शूर संग्रामे शौर्ययुक्तेंद्र तव रातिभिः कर्मसु त्वदीयैर्धनदानैर्निमित्तभूतैरहं होता प्रत्यायं। त्वां पुनरागतोऽस्मि। पुरा बहुषु कर्मसु त्वत्तो धनस्य लब्धत्वादस्मिन्कर्मणि प्रत्यागमनमित्युच्यते। किं कुर्वन्। सिंधुं स्यंदमानं सोममावदन् सर्वतः कथयन्। अस्मिन्सोमयागे त्वदीयां धनदानकीर्तिं प्रकटयन्नित्यर्थः। हे गिर्वणो गीर्भिर्वननीयेंद्र कारवः कर्तार ऋत्विग्यजमाना उपातिष्ठंत। पुरा धनलाभार्थं त्वामुपस्थितवंतः। उपस्थाय च तस्य तावकस्योदारत्वेन प्रतीतस्य ते तव धनदानं विदुः। जानंति। गिर्वणश्शब्दं यास्क इत्थं निर्ब्रूते। गिर्वणा देवो भवति गीर्भिरेनं वनयंति। नि॰ ६. १४.। इति। रेभो जरितेत्यादिषु त्रयोदशसु स्तोतृनामसु कारुशब्दः पठितः॥ तव। युष्मदस्मदोर्ङसीत्याद्युदात्तत्वं। रातिभिः। मंत्रे वृषेत्यादिना क्तिनुदात्तः। आयं। इणो लङ्।

तस्थस्थमिपां तांतंतामः । पा॰ ३. ४. १०१. । इत्यमादेशः । अदिप्रभृतिभ्यः शप इति शपो लुक् । आडागमः । वृद्ध्यायादेशौ । तिङ्ङतिङ इति निघातः । सिंधुं । स्यन्दू प्रस्रवणे । निदित्यनुवृत्तौ स्यंदेः संप्रसारणं धश्च । उ॰ १. १२. । इत्युप्रत्ययो धकारश्चांतादेशः । नित्त्वादाद्युदात्तः । आवदन् । वद व्यक्तायां वाचि । लटः शतृ । शपः पित्त्वादनुदात्तत्वं । शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । आङा सह कुगतिप्रादयः । पा॰ २. २. १८. । इति समासः । कृदुत्तरपदप्रकृतिस्वरत्वं । अतिष्ठंत । उपान्मंत्रकरणे । पा॰ १. ३. २५. । इत्यात्मनेपदं । गिर्वणः । वन षण संभक्तौ । असुन् । आमंत्रितस्य चेति निघातः । विदुः । विद ज्ञाने । लट् । अदिप्रभृतिभ्यः शप इति शपो लुक् । विदो लटो वा । पा॰ ३. ४. ८३. । इति झेरुस् । मतान्तरेणाद्य निघातः । संहितायां युष्मत्तत्ततक्षुःष्वंतःपादं । पा॰ ८. ३. १०३. । इति षत्वं । ष्टुना ष्टुरित्युत्तरस्य तकारस्य ष्टुत्वं । तस्य । साविकाच इति विभक्तेरुदात्तत्वं प्राप्तं न गोश्वन्साववर्णेति निषिध्यते । कारवः । कृवापाजीत्यादिना । उ॰ १. १. । उण् । प्रत्ययस्वरः ॥

मायाभिरिंद्र मायिनं त्वं शुष्णमवातिरः । विदुष्टे तस्य मेधिरास्तेषां श्रवांस्युत्तिर ॥७॥
मायाभिः । इंद्र । मायिनं । त्वं । शुष्णं । अव । अतिरः । विदुः । ते । तस्य । मेधिराः । तेषां । श्रवांसि । उत् । तिर ॥७॥

हे इंद्र त्वं मायिनं नानाविधकपटोपेतं शुष्णं भूतानां शोषणहेतुमेतन्नामकमसुरं मायाभिस्तत्प्रतिकूलैः कपटविशेषैः । यद्वा । तद्वधोपायगोचरप्रज्ञाभिः । अवातिरः । हिंसितवानसि । एतच्च यास्केनोक्तं । इंद्रः शुष्णं जघान । नि॰ ३. ११. । इति । शुष्णं पिप्रुं । ऋग्वे॰ १. १०३. ८. । इत्यादिमंत्रे चायमर्थो विस्पष्टः । मेधिरा मेधावंतोऽनुष्ठातारस्तस्य तादृशस्य ते तव महिमानं विदुः । जानंति । तेषां जानतामनुष्ठातॄणां श्रवांस्यन्नान्युत्तिर । वर्धय । केतः केतुरित्यादिष्वेकादशसु प्रज्ञानामसु माया वयुनमिति पठितं । श्रवःशब्दं यास्को निर्वक्ति । श्रव इत्यन्ननाम श्रूयत इति सतः । नि॰ १०. ३. । इति ॥ मायाभिः । माङ् माने । माच्छाससिसूभ्यो यः । उ॰ ४. १०९. । इति यप्रत्ययः । प्रत्ययस्वरः । मायिनं । मायास्यास्तीति मायी । व्रीह्यादित्वादिनिप्रत्ययः । पा॰ ५. २. ११६. । प्रत्ययस्वरः । शुष्णं । शुष शोषणे । अस्मादंतर्भावितण्यर्थान्निदित्यनुवृत्तौ तृषिशुषिरसिभ्यः किच्च । उ॰ ३. १२. । इति नप्रत्ययः । नित्त्वादाद्युदात्तः । अतिरः । तरतेर्लङि व्यत्ययेन शः । तस्य ङित्त्वेन गुणाभावादृत इद्धातोरितीत्वं । रपरत्वं । विदुष्टे तस्य । गतमंत्रे गतं । मेधिराः । मिधृ मेधृ मेधाहिंसनयोः । औणादिक इरन् । नित्त्वादाद्युदात्तः । श्रवांसि । नब्विषयत्वादाद्युदात्तः ॥

इंद्रमीशानमोजसाभि स्तोमा अनूषत । सहस्रं यस्य रातय उत वा संति भूयसीः ॥८॥
इंद्रं । ईशानं । ओजसा । अभि । स्तोमाः । अनूषत । सहस्रं । यस्य । रातयः । उत । वा । संति । भूयसीः ॥८॥

स्तोमाः स्तोतार ऋत्विज ओजसा बलेनेशानं जगतो नियामकमिंद्रमभ्यनूषत । सर्वत्र स्तुतवंतः । यस्येंद्रस्य रातयो धनदानानि सहस्रं सहस्रसंख्योपेतानि संति । उत वाथवा भूयसीः सहस्रसंख्याया अप्यधिकाः संति । तमिंद्रमिति पूर्वत्रान्वयः ॥ इंद्रं । ऋज्रेंद्रेत्यादिना रन् । नित्त्वादाद्युदात्तः । ईशानं । लटः शानच् । अदिप्रभृतिभ्यः शप इति शपो लुक् । धातोरनुदात्तेत्त्वात्तास्यनुदात्तेत्यादिना शानचोऽनुदात्तत्वं । ओजसा । नब्विषयत्वादाद्युदात्तः । स्तोमाः । अर्तिस्तुसुहुत्यादिना मन्प्रत्ययः । नित्त्वादाद्युदात्तः । अनूषत । णु स्तुतौ । णो नः । लुङ् । व्यत्ययेन झः । तस्यादादेशः । पा॰ ७. १. ५. । च्लेः सिच् । अस्य धातोः कुटादित्वेन सिचो ङित्त्वाद्गुणाभावः । इडभावश्छांदसः । दीर्घत्वं च । अडागमः । सहस्रं । कर्दमादीनां च । फि॰ ३. १०. । इति द्वितीयाचरमुदात्तं । रातयः । मंत्रे वृषेत्यादिना क्तिन्नुदात्तः । उत । प्रातिपदिकस्वरः । वा । चादिरनुदात्तः । संति । प्रत्ययाद्युदात्तत्वं । तिङ्ङतिङ इति निघातो न भवति यद्वृत्तान्नित्यमिति प्रतिषेधात् । स हि व्यवहितेऽपि भवतीत्युक्तं । भूयसीः । सहस्रादतिशयेन बह्व्यो भूयस्यः । अत्र विभक्त्यर्थस्य सहस्रस्य संनिधिबलादुपपद-

त्वप्रतीतिर्द्विवचनविभज्योपपदे तरबीयसुनौ । पा॰ ५. ३. ५७. । इति बहुशब्दादीयसुन् । बहोर्लोपो भू च बहोः । पा॰ ६. ४. १५८. । इतीकारलोपः प्रकृतेर्भू इत्यादेशश्च । ईयसुनो नित्त्वादाद्युदात्तत्वं । उगितश्चेति ङीप् ॥ ॥२१॥ ॥३॥

चतुर्थानुवाके षट् सूक्तानि । तत्राग्निं दूतमित्यादिकस्य द्वादशर्चस्य प्रथमस्य सूक्तस्य काण्वपुत्रो मेधातिथिर्ऋषिः । अपवादाभावादनुवर्तमानं प्राग्घिर[illegible] गायत्रमेव छंदः । अग्निर्देवताकत्वं विस्पष्टं । अत एवानुक्रम्यते । अग्निं द्वादश मेधातिथिः काण्व आग्नेयमग्निनेति पादो द्व्यग्निदैवतो निर्मथ्य आहवनीयश्चेति ॥ विनियोगस्तु । प्रातरनुवाक आग्नेये क्रतौ गायत्रे छंदस्यग्निं दूतमिति सूक्तं । अथैतस्या रात्रेर्विवासकाल इति खंडेऽग्निमीळेऽग्निं दूतं । आ॰ ४. १३. । इति सूत्रितं ॥ तथा पृष्ठ्यषडहस्य द्वितीयेऽहनीदमेव सूक्तमाज्यशस्त्रं । पृष्ठ्यस्याभिप्लवेनोक्ते अहनी इति खंडे सूत्रितं । अग्निं दूतमिति द्वितीये । आ॰ ७. १०. । इति ॥ दर्शपूर्णमासयोः सामिधेनीष्वग्निं दूतमित्येका नमः प्रवक्त्र इति खंडे सूत्रितं । ईळेन्यो नमस्यस्तिरोऽग्निं दूतं वृणीमहे । आ॰ १. २. । इति ॥

**अ॒ग्निं दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसं । अ॒स्य य॒ज्ञस्य॑ सु॒क्रतुं॑ ॥१॥**

**अ॒ग्निं । दू॒तं । वृ॒णी॒म॒हे॒ । होता॑रं । वि॒श्वऽवे॑दसं । अ॒स्य । य॒ज्ञस्य॑ । सु॒ऽक्रतुं॑ ॥१॥**

अग्नेर्दूतत्वमेतन्मंत्रव्याख्याने तैत्तिरीयब्राह्मणे समाम्नायते । अग्निर्देवानां दूत आसीदुशनाः काव्योऽसुराणां । तै॰ सं॰ २. ५. ८. ५. । इति । तादृशं देवदूतमग्निमस्मिन्कर्मणि वृणीमहे । संभजामः । कीदृशं । होतारं देवानामाह्वातारं विश्ववेदसं सर्वधनोपेतं अस्य प्रवर्तमानस्य यज्ञस्य निष्पादकत्वेन सुक्रतुं शोभनकर्माणं शोभनप्रज्ञं वा । मघमित्यादिष्वष्टाविंशतिसंख्याकेषु धननामसु वेदस्शब्दः पठितः ॥ होतारं । ह्वेञ् स्पर्धायां शब्दे च । ताच्छील्यादिषु तृन् । बहुलं छंदसीति संप्रसारणे परपूर्वत्वे गुणः । नित्त्वादाद्युदात्तः । विश्ववेदसं । बहुव्रीहौ विश्वं संज्ञायां । पा॰ ६. २. १०६. । इति पूर्वपदांतोदात्तत्वं । अस्य । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । सुक्रतुं । क्रत्वादयश्च । पा॰ ६. २. ११८. । इत्याद्युदात्तत्वं ॥

**अ॒ग्निम॑ग्निं॒ हवी॑मभिः॒ सदा॑ हवंत वि॒श्पतिं॑ । ह॒व्य॒वाहं॑ पुरुप्रि॒यं ॥२॥**

**अ॒ग्निंऽअ॑ग्निं । हवी॑मऽभिः । सदा॑ । ह॒वं॒त॒ । वि॒श्पतिं॑ । ह॒व्य॒ऽवाहं॑ । पु॒रु॒ऽप्रि॒यं ॥२॥**

यद्यप्यग्निः स्वरूपेणैक एव तथापि प्रयोग[illegible]दात्पावकादिविशेषणभेदाद्वा बहुविधत्वमभिप्रेत्याग्निमग्निमिति वीप्सा । तं हवीमभिराह्वानकरणैर्मंत्रैः सदा हवंत । निरंतरमनुष्ठातार आह्वयंति । कीदृशं । विश्पतिं विशां प्रजानां होत्रादीनां पालकं हव्यवाहं [illegible]र्दत्तस्य हविषो देवान्प्रति वोढारं । अत एव पुरुप्रियं बहूनां प्रीत्यास्पदं ॥ अग्निमग्निं । नित्यवीप्सयोरिति वीप्सायां द्विर्भावः । तस्य परमाम्रेडितमित्युत्तरस्याम्रेडितसंज्ञायामनुदात्तं चेत्यनुदात्तत्वं । हवीमभिः । ह्वेञ् स्पर्धायां शब्दे च । आह्वानकरणभूतेषु मंत्रेषु स्वव्यापारस्वातंत्र्य[illegible]त्वयान्येभ्योऽपि दृश्यंत इति कर्तरि मनिन् । तस्य छांदस ईडागमः । बहुलं छंदसीति धातोः संप्रसारणं परपूर्वत्वं गुणावादेशौ । नित्त्वादाद्युदात्तत्वं । सदा । [illegible] । पा॰ ५. ३. १५. । सर्वशब्दाद्दाप्रत्ययः । सर्वस्य सोऽन्यतरस्यां दि । पा॰ ५. ३. ६. । इति सभावः । व्यत्ययेनाद्युदात्तत्वं । हवंत । ह्वेञो लट् । झस्यांतादेशः । टेरेत्वाभावश्छांदसः । शपि बहुलं छंदसीति संप्रसारणं । तिङ्ङतिङ इति निघातः । विश्पतिं । पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरे प्राप्ते परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । हव्यवाहं । वह प्रापणे । वहश्च । पा॰ ३. २. ६४. । इति ण्विप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वं । पुरुप्रियं । पुरूणां प्रियं । समासांतोदात्तत्वं ॥

**अग्ने॑ दे॒वाँ इ॒हा व॑ह जज्ञा॒नो वृ॒क्तब॑र्हिषे । असि॒ होता॑ न॒ ईड्यः॑ ॥३॥**

**अग्ने॑ । दे॒वान् । इ॒ह । आ । व॒ह॒ । ज॒ज्ञा॒नः । वृ॒क्तऽब॑र्हिषे । असि॑ । होता॑ । नः॒ । ईड्यः॑ ॥३॥**

हे अग्ने जज्ञानोऽ[illegible] वृक्तबर्हिषे आस्तरणार्थं छिन्नेन बर्हिषा युक्ताय तं यजमानमनुग्रहीतुमिह

कर्मणि हविर्भुजो देवाना वह। नोऽस्मदर्थं होता देवानामाह्वाता त्वमीड्यः स्तुत्योऽसि ॥ देवानित्यत्र संहितायां दीर्घादटि समानपाद इति रुत्वं। आतोऽटि नित्यमित्यनुनासिकभावः। जज्ञानः। जनी प्रादुर्भावे। लिटः कानच्। गमहनेत्युपधालोपः। द्विर्वचनेऽचि। पा॰ १. १. ५९.। इति तस्य स्थानिवद्भावाद्द्विर्वचनं। चित्त्वादंतोदात्तः। वृक्तबर्हिषे। ओव्रश्चू छेदने। निष्ठेति क्तप्रत्ययः। यस्य विभाषेतीट्प्रतिषेधः। वृक्तं बर्हिर्यस्मै यजमानाय येन वा ऋत्विजा। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। असि। अस्तेः सिप्। अदिप्रभृतिभ्यः शप इति शपो लुक्। तासस्त्योर्लोपः। पा॰ ७. ४. ५०.। इति सकारस्य लोपः। पादादित्वान्न निघातः। होता। ह्वयतेस्ताच्छील्यादिषु तृन्। बहुलं छंदसीति संप्रसारणं। नित्त्वादाद्युदात्तः। ईड्यः। ईड स्तुतौ। ऋहलोर्ण्यत्। पा॰ ३. १. १२४.। तित्स्वरिते प्राप्ते ईडवंदवृशंसदुहां ण्यतः। पा॰ ६. १. २१४.। इत्याद्युदात्तत्वं ॥

ताँ उ॑श॒तो वि बो॑धय॒ यद॑ग्ने॒ यासि॑ दू॒त्यँ॑। दे॒वैरा स॑त्सि ब॒र्हिषि॑ ॥४॥

तान्। उ॒श॒तः। वि। बो॒ध॒य॒। यत्। अ॒ग्ने॒। यासि॑। दू॒त्यँ॑। दे॒वैः। आ। स॒त्सि॒। ब॒र्हिषि॑ ॥४॥

हे अग्ने यद्यस्मात्कारणाद्दूत्यं यासि देवानां दूतकर्म प्राप्नोषि तस्मात्कारणादुशतो हविः कामयमानांस्तान्देवान् हविःस्वीकारार्थं वि बोधय। विबोध्य च बर्हिष्यस्मिन्कर्मणि तैर्देवैः सह आ सत्सि। आसीद। आगत्योपविश ॥ तान्। दीर्घादटि समानपाद इति संहितायां रुत्वं। आतोऽटि नित्यमित्यनुनासिकभावः। उशतः। वश कांतौ। लटः शतृ। अदिप्रभृतिभ्यः शप इति शपो लुक्। ग्रहिज्येत्यादिना संप्रसारणं। शतुरनुमो नद्यजादी इति विभक्तेरुदात्तत्वं। यासि। यद्वृत्तान्नित्यमिति निघातप्रतिषेधः। दूतस्य भागः कर्म वा दूत्यं। दूतस्य भागकर्मणी। पा॰ ४. ४. १२०.। इति यत्। तस्य तित्स्वरितापवादत्वेन यतोऽनाव इति प्राप्तमाद्युदात्तत्वं सर्वे विधयश्छंदसि विकल्प्यंत इति निवर्तते। अतस्तित्स्वरितमित्येव भवति। शेषनिघातः। सत्सि। सीदसि। षद्लृ विशरणगत्यवसादनेषु। लटः सिपि शपो बहुलं छंदसीति लुक्। न लुमतांगस्येति प्रत्ययलक्षणप्रतिषेधात् पाघ्रेत्यादिना। पा॰ ७. ३. ७८.। सीदादेशो न भवति। बर्हिषि। बृह बृहि वृद्धौ। बृंहेर्नलोपश्च। उ॰ २. ११०.। इतीसिप्रत्ययः। प्रत्ययस्वरेणेकार उदात्तः ॥

घृता॑हवन दीदिवः॒ प्रति॑ ष्म॒ रिष॑तो दह। अग्ने॒ त्वं र॑क्ष॒स्विनः॑ ॥५॥

घृत॑ऽआहवन। दी॒दि॒ऽवः॒। प्रति॑। स्म॒। रिष॑तः। द॒ह॒। अग्ने॑। त्वं। र॒क्ष॒स्विनः॑ ॥५॥

हे घृताहवन घृतेनाहूयमान दीदिवो दीप्यमानाग्ने त्वं रक्षस्विनो रक्षोयुक्तान् रिषतो हिंसकान् शत्रून्प्रत्यस्माकं प्रतिकूलान्दह स्म। सर्वथा भस्मीकुरु ॥ घृतेनाहूयतेऽस्मिन्निति करणाधिकरणयोश्चेत्यधिकरणे ल्युट्। अत्र जुहोतेरविवक्षितकर्मत्वेनाकर्मकत्वाद्घृतस्य करणत्वमेव न तु कर्मत्वं। अतो नैषा तृतीया च होश्छंदसि। पा॰ २. ३. ३.। इति कर्मणि तृतीया। किंतु कर्तृकरणयोस्तृतीया। पा॰ २. ३. १८.। इति कर[illegible]। अतः कर्तृकरणे कृता बहुलं। पा॰ २. १. ३२.। इति समासः। तत्र पूर्वपदप्रकृतिस्वरापवादे कृ[illegible]स्वरे प्रातिपदिकावस्थायामेव कृते सति पश्चाद्विभक्तावुत्पन्नायामामंत्रितस्य चेत्याद्युदात्तत्वं। दीदिवः। दीव्यतेर्लिटः क्वसुः। तस्य वस्वेकाजाद्घसामिति [illegible]भावः। द्विर्वचनं। हलादिशेषः। उत्तरवकारस्य लोपो व्योर्वलीति लोपः। क्वसुः। कित्त्वाद्गुणाभावः। तुजादीनां दीर्घोऽभ्यासस्य। पा॰ ६. १. ७.। इति दीर्घत्वमभ्यासस्य। संबुद्धावुगिदचामिति नुम्। संयोगांतस्य लोपः। पा॰ ८. २. २३.। इति सकारलोपे नकारस्य मतुवसो रुः संबुद्धौ छंदसीति रुत्वं। विसर्गः। पदात्परत्वादामंत्रितनिघातः। ननु पूर्वामंत्रित[illegible]त्वेन न निघातोपपत्तिः। न च नामंत्रिते समानाधिकरणे सामान्यवचनं। पा॰ ८. १. ७३.। [illegible]त्यविद्यमानवत्त्वप्रतिषेधः। उभयोरपि पदविशेषणत्वेन विशेषवचनत्वात्। अत एव परस्परमनन्वयेनासामर्थ्यात्समर्थः पदविधिः। पा॰ २. १. १.। इति च नियमात्पूर्वस्य न परांगवद्भावो येनैकपद्येन निघातः स्यात्। अत एव हीडे रंतेऽदिते सरस्वतीत्यादौ। तै॰ सं॰ ७. १. ६. ८.। पृथक् पृथगाद्युदात्तत्वमिति। उच्यते। अत्र दीदिव इति नाग्निपदस्य विशेषणं किंतु घृताहवनपदस्यैव द्योतनार्थं। घृताहवन इति विशेष्यत्वेन विवक्षितत्वात्। विशिष्टस्य तु पश्चादग्निविशेषणता। तत्र दीदिवःपदं प्रति घृताहवनपदस्य विशेष्यत्वान्नामंत्रिते समानाधिकरण इत्यविद्यमानवत्त्वप्रतिषे-

धान्निघातोपपत्तिः । अत एव परस्परविशेषणविशेष्यभावेन सामर्थ्यात्सुवामंचित इति परांगवद्भावे शेषनिघातेनापि स्वरोपपत्तिरिति । इडे रंत इत्यादौ तु नैवं परस्परान्वय इति वैषम्यं । रिषतः । रुष रिष हिंसार्था इति । भौवादिकस्य लटः शत्रादेशे अपि छांदसो गुणाभावः । तौदादिकस्य वा रुश रिश हिंसायामित्यस्य छांदसं षत्वं । विकरणस्य शस्य ङित्त्वाद्गुणाभावः । रक्षस्शब्दादस्मायामेधास्रजो विनिः । पा॰ ५. २. १२१. । इति मत्वर्थीयो विनिः । तस्य प्रत्ययाद्युदात्तत्वं ॥

अग्निमंथनेऽग्निनाग्निः समिध्यत इत्येषानुवचनीया । प्रातर्वैश्वदेव्यां प्रेषित इति खंडे सूचितं । अग्निनाग्निः समिध्यते त्वं ह्यग्ने अग्निना । आ॰ २. १६. । इति ॥ एषैवाग्निमत इत्यस्यानुवाक्या । अथाग्नेय्य इति खंडेऽग्नावग्निप्रणयन इत्युपक्रम्य सूचितं । यद्वो वयं प्रमिनाम व्रतान्यग्निनाग्निः समिध्यते । आ॰ ३. १३. । इति ॥

**अग्निनाग्निः समिध्यते कविर्गृहपतिर्युवा । हव्यवाड् जुह्वास्यः ॥ ६ ॥**

**अग्निना । अग्निः । सं । इध्यते । कविः । गृहऽपतिः । युवा । हव्यऽवाट् । जुहुऽआस्यः ॥ ६ ॥**

अग्निराहवनीयाख्यस्तस्मिन्प्रक्षिप्यमाणेनाग्निना निर्मथ्येन प्रणीतेन वा सह समिध्यते । सम्यक् दीप्यते । कीदृशोऽग्निः । कविर्मेधावी गृहपतिर्यजमानगृहस्य पालको युवा नित्यतरुणो हव्यवाट् हविषो वोढा जुह्वास्यो जुहूरूपेण मुखेन युक्तः ॥ गृहपतिः । पत्यावैश्वर्ये इति पूर्वपदप्रकृतिस्वरत्वं । युवा । यु मिश्रणे । कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव इति कनिन् । नित्त्वादाद्युदात्तः । हव्यं वहतीति हव्यवाट् । वहश्चेति ण्विप्रत्ययः । णित्त्वादुपधावृद्धिः । गतिकारकोपपदात्कृदुत्तरपदप्रकृतिस्वरत्वं । जुह्वास्यः । हूयतेऽनयेति जुहूः । द्रुवः स्रुवश्च । उ॰ २. ६०. । इति क्विप् । तत्संनियोगाद्दीर्घः । श्रुवद्भावाद्द्विर्भावः । चुलजश्त्वे । प्रातिपदिकस्वरेणांतोदात्तः । जुहूरास्यं यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव शिष्यते । शेषनिघातः । यणादेश उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य । पा॰ ८. २. ४. । इत्याकारः स्वरितः ॥ ॥ २२ ॥

**कविमग्निमुप स्तुहि सत्यधर्माणमध्वरे । देवममीवचातनं ॥ ७ ॥**

**कविं । अग्निं । उप । स्तुहि । सत्यऽधर्माणं । अध्वरे । देवं । अमीवऽचातनं ॥ ७ ॥**

हे स्तोतृसंघ अध्वरे क्रतावग्निमुप स्तुहि । उपेत्य स्तुतिं कुरु । कीदृशं । कविं मेधाविनं सत्यधर्माणं सत्यवदनरूपेण धर्मेणोपेतं देवं द्योतमानं अमीवचातनममीवानां हिंसकानां शत्रूणां रोगाणां वा घातकं ॥ सत्यं धर्मो यस्येति सत्यधर्मा । धर्मादनिच् केवलात् । पा॰ ५. ४. १२४. । इत्यनिच् समासांतः । अंतःपदेन तस्य समासत्वाभिधानाद्बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे शेषनिघातेनानुदात्तत्वं । अमीवशब्दोऽम रोग इत्यस्मात् शेवायह्वजिह्वाग्रीवाप्वामीवाः । उ॰ १. १५४. । इति वन्प्रत्यय ईडागमे च निपातितः । नित्त्वादाद्युदात्तः । चते चदे याचने चेत्यस्माद्धिंसार्थात् णिजंतान्नंद्यादित्वात् ल्युः । पा॰ ३. १. १३४. । युोरनादेशः । पा॰ ७. १. १. । णेरनिटीति णिलोपः । लितीति धातोरकारस्योदात्तत्वं । न च स्वरे कर्तव्ये णिलोपस्य स्थानिवद्भावः । न पदांतद्विर्वचनेत्यादिना प्रतिषेधात् । पा॰ १. १. ५८. । अमीवानां चातन इति समासे कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते ॥

**यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति । तस्य स्म प्राविता भव ॥ ८ ॥**

**यः । त्वां । अग्ने । हविःऽपतिः । दूतं । देव । सपर्यति । तस्य । स्म । प्रऽअविता । भव ॥ ८ ॥**

हे अग्ने देव यो हविष्पतिर्यजमानो देवदूतं त्वां सपर्यति परिचरति तस्य यजमानस्य प्राविता भव स्म । अवश्यं रक्षको भव ॥ हूयत इति हविः । अर्चिशुचीत्यादिना । उ॰ २. १०९. । इसिः । प्रत्ययस्वरेणेकार उदात्तः । हविषः पतिर्हविष्पतिः । नित्यं समासेऽनुत्तरपदस्थस्य । पा॰ ८. ३. ४५. । इति षत्वं । पत्यावैश्वर्ये इति पूर्वपदप्रकृतिस्वरत्वं । सपरशब्दात्कंड्वादिभ्यो यक् । पा॰ ३. १. २७. । इति यक् । धातुप्रकरणाद्गुणप्रतिषेधाद्यर्थोद्यकः

कित्वाद्य सपरशब्दस्य धातुत्वात्ततो विहितस्य यक आर्धधातुकत्वे सत्यतो लोप इति लोपः। सनाद्यंता धातव इति धातुसंज्ञायां तिप्। कर्तरि शप्। तस्मिन्पूर्वस्यातो गुण इति पररूपत्वं। यकः प्रत्ययस्वरेणोदात्तत्वं। शपा सहैकादेशस्यैकादेश उदात्तेनोदात्त इत्युदात्तत्वं। तिङ्ङतिङ इति निघातो न भवति यद्वृत्तान्नित्यमिति प्रतिषेधात्॥

गार्हपत्याहवनीययोः परस्परसंसर्गे विहितस्य हविषो याज्या यो अग्निं देववीतय इत्येषा। अथाग्नेय्य इष्टय इति खंड सूचितं। यो अग्निं देववीतये कुवित्सु नो गविष्टये। आ० ३.१३.। इति॥

**यो अ॒ग्निं दे॒ववी॑तये ह॒विष्माँ॑ आ॒विवा॑सति। तस्मै॑ पावक मृळय॥९॥**

**यः। अ॒ग्निं। दे॒वऽवी॑तये। ह॒विष्मा॑न्। आ॒ऽविवा॑सति। तस्मै॑। पा॒व॒क॒। मृ॒ळ॒य॒॥९॥**

हविष्मान् हविर्युक्तो यो यजमानो देववीतये देवानां हविर्भक्षणहेतुयागार्थमग्निमाविवासति अग्नेः समीपे विशेषेणागत्य परिचर्यां करोति हे पावकाग्ने तस्मै मृळय। तं यजमानं सुखय॥ देववीतये। वी गतिप्रजनकांत्यशनखादनेष्वित्यस्मादशनार्थात् क्तिन्। देवानां वीतिर्यस्मिन्यागे स देववीतिः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। हविष्मान्। नब्विषयस्यानिसंतस्येति पर्युदासाद्धविःशब्दोऽंतोदात्तः। मतुपः सर्वानुदात्तत्वात्स एव शिष्यते। आविवासति। वा गतिगंधनयोः। अस्मादंतर्भावितण्यर्थादागमयितुमिच्छतीत्यर्थे सन्। आङ्गानेच्छा परिचर्यायां पर्यवस्यतीति विवासतिशब्दः परिचर्यार्थे निघंटौ पठितः। द्विर्भावः। अभ्यासस्य ह्रस्वः। सन्यतः। पा० ७.४.७९.। इतीत्वं। ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं। तिङ्ङतिङ इति निघातो न भवति यद्वृत्तान्नित्यमिति प्रतिषेधात्। तिङि चोदात्तवति। पा० ८.१.७१.। इत्याङो निघातः। सह सुपा। पा० २.१.४.। इत्यत्र सहेति योगविभागात्तिङंतेनाङा सह समासे समासांतोदात्तत्वे प्राप्ते परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। तस्मै। क्रियाग्रहणं कर्तव्यं। पा० १.४.३२.१.। इति संप्रदाने चतुर्थी॥

पवमानेष्टावग्नेः पावकस्यानुवाक्या स नः पावक दीदिव इति। पौर्णमासेनेष्टिपशुसोमा उपदिष्टा इति खंडे सूचितं। स नः पावक दीदिवोऽग्ने पावक रोचिषा। आ० २.१.। इति॥

**स नः॑ पावक दीदि॒वोऽग्ने॑ दे॒वाँ इ॒हा व॑ह। उप॑ य॒ज्ञं ह॒विश्च॑ नः॥१०॥**

**सः। नः॒। पा॒व॒क॒। दी॒दि॒ऽवः॒। अग्ने॑। दे॒वान्। इ॒ह। आ। व॒ह॒। उप॑। य॒ज्ञं। ह॒विः। च॒। नः॒॥१०॥**

हे दीदिवो दीप्यमान पावक शोधकाग्ने स त्वं नोऽस्मदर्थमिह देवयजनदेशे देवाना वह। ततो नोऽस्मदीयं यज्ञं तच्चत्यं हविश्चोप देवसमीपे प्रापयेति शेषः॥ दीदिवः। दिवु क्रीडादौ। छंदसि लुङ्लङ्लिट इति वर्तमाने लिट्। क्वसुः। द्विर्भावो हलादिशेषः। तुजादीनां दीर्घोऽभ्यासस्येत्यभ्यासस्य दीर्घत्वं। वस्वेकाजाद्धसामिति नियमाद्वसोरिट्प्रतिषेधः। लोपो व्योर्वलीति वकारलोपः। संबुद्धावुगिदचामित्यादिना नुम्। हल्ङ्यादिलोपः संयोगांतलोपः। मतुवसोरिति रुत्वं। विसर्गः। अग्ने। पादादित्वान्न निघातः। देवाँ इहेत्यत्र दीर्घादटि समानपाद इति रुत्वं। आतोऽटि नित्यमित्याकारस्यानुनासिकः। भोभगोअघोअपूर्वस्य योऽशीति रोर्यकारः। लोपः शाकल्यस्येति यकारलोपः। तस्यासिद्धत्वादाद्गुणो न भवति। इह। इदमो हः। पा० ५.३.११.। इति सप्तम्यंताद्धप्रत्ययः। इदम इश्। पा० ५.३.३.। तद्धितांतत्वात्प्रातिपदिकत्वे सुपो धातुप्रातिपदिकयोः। पा० २.४.७१.। इति सप्तम्या लुक्। तद्धितश्चासर्वविभक्तिः। पा० १.१.३८.। इत्यव्ययसंज्ञायामव्ययादाप्सुपः। पा० २.४.८२.। इत्युत्तरस्याः सप्तम्या लुक्। अकारः प्रत्ययस्वरेणोदात्तः॥

**स नः॑ स्त॒वान॒ आ भ॑र गाय॒त्रेण॒ नवी॑यसा। र॒यिं वी॒रव॑ती॒मिष॑म्॥११॥**

**सः। नः॒। स्त॒वा॒नः। आ। भ॒र॒। गा॒य॒त्रेण॑। नवी॑यसा। र॒यिं। वी॒रऽव॑तीं। इष॑म्॥११॥**

हे अग्ने नवीयसा नवतरेण पूर्वैरप्रयुक्तेन गायत्रेण गायत्रीछंदस्केनानेन सूक्तेन स्तवानः स्तूयमानः

स त्वं नोऽस्मदर्थं रयिं धनं वीरवतीं शूरपुत्रप्रभृत्यपत्ययुक्तामिषमन्नं चा भर। संपादय॥ स्तवानः। ष्टुञ् स्तुतौ। धात्वादेः षः सः। स्वरितञित इत्यात्मनेपदं। लटः शानच्। कर्तरि शप्। बहुलं छंदसीति लुगभावः। गुणावादेशौ। आने मुक्। पा॰ ७. २. ८२.। इति मुग्न भवत्यनित्यमागमशासनमित्यागमानुशासनस्यानित्यत्वात्। शपः पित्त्वादनुदात्तत्वं। शानचश्चित्त्वादंतोदात्तस्यादुपदेशाच्छपः परत्वाल्लसार्वधातुकानुदात्तत्वं। धातुस्वर एव शिष्यते। भर। हृग्रहोर्भश्छंदसि। पा॰ ८. २. ३२. १.। इति भत्वं। गायत्रेण। गायत्र्याः संबंधि गायत्रं। तस्येदं। पा॰ ४. ३. १२०.। इत्यण्प्रत्ययः। प्रत्ययस्वरः। नवीयसा। नवशब्दादातिशायनिक ईयसुन्प्रत्ययः। नित्त्वादाद्युदात्तः। वीरवतीं। मतुब्ङीपोः पित्त्वादनुदात्तत्वं। अकारः प्रातिपदिकस्वरेणोदात्तः॥

अग्ने॑ शु॒क्रेण॑ शो॒चिषा॒ विश्वा॑भिर्दे॒वहू॑तिभिः। इ॒मं स्तोमं॑ जुषस्व नः ॥१२॥

अग्ने॑। शु॒क्रेण॑। शो॒चिषा॑। विश्वा॑भिः। दे॒वहू॑तिऽभिः। इ॒मं। स्तोमं॑। जु॒ष॒स्व॒। नः॒ ॥१२॥

हे अग्ने शुक्रेण शोचिषा त्वदीयश्वेतवर्णदीप्त्या विश्वाभिर्देवहूतिभिस्त्वत्कृतसर्वदेवताह्वानसाधनस्तोत्रैश्च युक्तस्त्वं नोऽस्मदीयमिमं स्तोमं स्तोत्रविशेषं जुषस्व। सेवस्व॥ विश्वशब्दो विशेः क्वनंतो नित्त्वादाद्युदात्तः। देवहूतिभिः। देवशब्दः पचाद्यजंतः। चित्त्वादंतोदात्तः। देवानां हूतय आह्वानान्यासु स्तुतिष्विति देवहूतयः स्तुतयः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। स्तूयतेऽनेनेति स्तोमः। अर्तिस्तुस्वित्यादिना मन्। नित्त्वादाद्युदात्तः॥ ॥२३॥

सुसमिद्ध इत्यादिकं द्वादशर्चं द्वितीयमाप्रीसूक्तं। तस्य काण्वो मेधातिथिर्ऋषिः। गायत्रं छंदः। प्रत्यृचं प्रतीयमानाः समिद्धतनूनपादादिका द्वादश देवताः। तथा चानुक्रमणिकायामृक्संख्यामृषिं छंदश्चानुवृत्तिबलात्सिद्धवत्कृत्य देवता उदाहृताः। सुसमिद्ध इतीध्मः समिद्धो वाग्निस्तनूनपान्नराशंस इळो बर्हिर्देवीर्द्वार उषासानक्ता दैव्यौ होतारौ प्रचेतसौ तिस्रो देव्यः सरस्वतीळाभारत्यस्त्वष्टा वनस्पतिः स्वाहाकृतय इति प्रत्यृचं देवता एतदाप्रीसूक्तमिति॥ विनियोगस्तु पशौ सुसमिद्धो न आ वहेति काण्वमाप्रीसूक्तं। एकादश प्रयाजा इति खंडे सूत्रितं। समिद्धो अद्येति सर्वेषां यथर्षि वा। आ॰ ३. २.। इति॥

सुस॑मिद्धो न॒ आ व॑ह दे॒वाँ अ॑ग्ने ह॒विष्म॑ते। होत॑ः पावक॒ यक्षि॑ च ॥१॥

सुऽस॑मिद्धः। न॒ः। आ। व॒ह॒। दे॒वान्। अ॒ग्ने॒। ह॒विष्म॑ते। होत॒रिति॑। पा॒व॒क॒। यक्षि॑। च॒ ॥१॥

हे अग्ने सुसमिद्धनामकस्त्वं नोऽस्मदीयाय हविष्मते यजमानाय तदनुग्रहार्थं देवाना वह। हे पावक शोधक होतर्होमनिष्पादकाग्ने यक्षि च। यज च॥ सुसमिद्धः। समः क्रियाविशेषणत्वेन गतिसंज्ञकत्वात्प्रादिसमासः। शोभनवाचिनः सुशब्दस्य तु विशेषणं विशेष्येण बहुलं। पा॰ २. १. ५७.। इति समिद्धपदेन कर्मधारयसमासः। सुशब्दः प्रातिपदिकस्वरेणोदात्तः। कर्मधारयेऽनिष्ठा। पा॰ ६. २. ४६.। इति पूर्वपदप्रकृतिस्वरत्वं। क्रियाविशेषणत्वे हि सुशब्दस्य गतित्वात्प्रादि[illegible] गतिरनंतर इति समो यदुदात्तत्वं तदेव कृदुत्तरपदप्रकृतिस्वरत्वेन स्थास्यतीति सुशब्दोऽनुदात्तः स्यात्। देवाँ अग्ने। पूर्ववद्रुत्वानुनासिके। हविष्मते। हविरस्यास्तीति मतुप्। तसौ मत्वर्थे। पा॰ १. ४. १९.। इति भत्वेन पदत्वस्य बाधितत्वान्न रुत्वं। होतःपावकशब्दयोरामंत्रितयोः पृथक्पृथगेव क्रियान्वये परस्परमसामर्थ्यात्परांगवद्भावाभावान्न तन्निबंधनमैकस्वर्यं। न च द्वितीयस्यामंत्रितस्याष्टमिकनिघातेनैकस्वर्यं। आमंत्रितं पूर्वमविद्यमानवदिति पूर्वस्याविद्यमानवत्त्वेन पदात्परत्वाभावात्पादादित्वाच्च परस्परसामानाधिकरण्येऽपि होतरित्यस्य विशेषणत्वे समानमेवाविद्यमानवत्त्वं। अत एवाविद्यमानवत्त्वात्सामर्थ्येऽपि न परांगवद्भाव इति नैकस्वर्यसिद्धिः। अतो होतरिति विशेष्यं। अतः पुनातीति पावक इत्यवयवप्रसिद्धिस्वीकारेण विशेषणत्वाद्धोतरिति विशेष्यं। तच्च सामान्यवचनमिति नामंत्रिते समानाधिकरण [illegible]त्यविद्यमानवत्त्वप्रतिषेधात्पदात्परत्वादपादादित्वाच्च द्वितीयामंत्रितस्याष्टमिकनिघा[illegible]न वा परांगवद्भावे सति शेषनिघातेन वा सर्वानुदात्तत्वसिद्धिः। यक्षि। यजेर्लोटः सिपि बहुलं छंदसीति शपो

लुक्। व्रश्चादिना षत्वं। षढोः कः सि। पा० ८. २. ४१.। इति कत्वं। सेर्हिरादेशश्छांदसत्वान्न भवति। सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वर एव शिष्यते। न च तिङ्ङतिङ इति निघातः। पूर्वस्य पावकेत्यामंत्रितस्याविद्यमानवत्त्वेन पदादपरत्वात्। अत एव तस्याव्यवधायकत्वेन होतरित्यपेक्ष्य निघातः स्यादिति चेन्न। यक्षिपदापेक्षया होतरित्यस्यापि पूर्वत्वेनाविद्यमानवत्त्वात्। ननु नामंत्रिते सामानाधिकरण्ये इति तस्य निषिद्धमविद्यमानवत्त्वं। न च पावकपदस्याविद्यमानवत्त्वेन समानाधिकरणपरत्वाभावः। यक्षिपदस्यैव हि कार्यं प्रति पावकपदं पूर्वत्वादविद्यमानवत्स्यात्। होतःपदकार्यमविद्यमानवत्त्वप्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवत्येव होतरित्यस्याविद्यमानवत्त्वप्रतिषेधः। अतस्तस्य विद्यमानवत्त्वात्तदपेक्षया यक्षीत्यस्य निघातः प्राप्नोत्येव। सत्यं। अत्र यक्षीत्यस्य चशब्दपरत्वाच्चादिषु च। ८. १. ५८.। इति निघातप्रतिषेधो भविष्यतीत्यदोषः॥

मधुमंतं तनूनपाद्यज्ञं देवेषु नः कवे। अद्या कृणुहि वीतये॥ २॥

मधुऽमंतं। तनूऽनपात्। यज्ञं। देवेषु। नः। कवे। अद्य। कृणुहि। वीतये॥ २॥

हे कवे मेधाविन् अग्ने तनूनपादेतन्नामकस्त्वमद्यास्मिन्दिने नोऽस्मदीयं मधुमंतं रसवंतं यज्ञं हविर्वीतये भक्षणार्थं देवेषु कृणुहि। कुरु। प्रापयेत्यर्थः॥ मधुमंतं। फलिपाटिनमिमनिजनां गुकपटिनाकिधतश्च। उ० १. १९.। इति मन्यतेरुप्रत्ययो धकारश्चांतादेशः। निदित्यनुवृत्तेः प्रत्ययस्य नित्त्वादाद्युदात्तो मधुशब्दः। तनूनपात्। आमंत्रितनिघातः। अद्य। सद्यःपरुदित्यादिनास्मिन्काल इत्यर्थे द्यप्रत्ययांतो निपातितः। प्रत्ययस्वरेणांतोदात्तः। तद्धितश्चासर्वविभक्तिरित्यव्ययत्वादव्ययादाप्सुप इत्युपरि सप्तम्या लुक्। संहितायामन्येषामपि दृश्यत इति दीर्घत्वं। कृणुहि। कृवि हिंसाकरणयोश्च। इदितो नुम् धातोरिति नुम्। लोटः सेर्हिरादेशः। धिन्विकृण्व्योरच्चेति शपोऽपवादो विकरण उप्रत्ययः। तत्संनियोगेन वकारस्याकारः। तस्यातो लोप इति लोपः। तस्य स्थानिवद्भावाल्लघूपधगुणो न भवति। उतश्च प्रत्ययादसंयोगपूर्वात्। पा० ६. ४. १०६.। इति हेर्लुग्न भवत्युतश्च प्रत्ययाच्छंदो वावचनं। पा० ६. ४. १०६. १.। इति वचनात्। तिङ्ङतिङ इति निघातः। वीतये। मंत्रे वृषेषपचमनविदभूवीरा उदात्त इति क्तिन्नुदात्तः॥

नराशंसमिह प्रियमस्मिन्यज्ञ उप ह्वये। मधुजिह्वं हविष्कृतं॥ ३॥

नराशंसं। इह। प्रियं। अस्मिन्। यज्ञे। उप। ह्वये। मधुऽजिह्वं। हविःऽकृतं॥ ३॥

इह देवयजनदेशेऽस्मिन्प्रवर्तमाने यज्ञे नराशंसमेतन्नामकमग्निमुप ह्वये। आह्वयामि। कीदृशं। प्रियं देवानां प्रीतिहेतुं मधुजिह्वं मधुरभाषिजिह्वोपेतं माधुर्यरसास्वादकजिह्वोपेतं वा हविष्कृतं हविषो निष्पादकं॥ नरशब्दो नॄ नय इत्यस्मादचंतः। प्रत्ययस्य पित्त्वाद्धातुस्वर एव शिष्यते। शंसंत्यस्मिन्निति शंसः। हलश्च। पा० ३. ३. १२१.। इत्यधिकरणे घञ्। नराणां शंस इति समासे कदुत्तरपदप्रकृतिस्वरे प्राप्ते उभे वनस्पत्यादिषु युगपत्। पा० ६. २. १४०.। इति पूर्वोत्तरपदे प्रकृतिस्वरे भवतः। अत एव वनस्पत्यादिषु पाठान्नरशब्दस्य दीर्घत्वं। इह। इदमो ह इति हप्रत्ययः। इदम इशितीशादेशः। प्रत्ययस्वरः। प्रियं। प्रीणातीति प्रियः। इगुपधज्ञाप्रीकिरः क इति कः। प्रत्ययस्वरः। अस्मिन्। ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। ह्वये। निघातः। मधुजिह्वं। मधुशब्दस्याद्युदात्तत्वमुक्तं। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव शिष्यते। हविष्कृतं। हविः करोतीति हविष्कृत्। क्विपि ह्रस्वस्य तुक्। नित्यं समासेऽनुत्तरपदस्थस्येति षत्वं। कृदुत्तरपदप्रकृतिस्वरत्वं॥

अग्ने सुखतमे रथे देवाँ ईळित आ वह। असि होता मनुर्हितः॥ ४॥

अग्ने। सुखऽतमे। रथे। देवान्। ईळितः। आ। वह। असि। होता। मनुःऽहितः॥ ४॥

इट्शब्दाभिधेय हे अग्ने ईळितोऽस्माभिः स्तुतः सन् सुखतमेऽतिशयेन सुखहेतौ कस्मिंश्चिद्रथे देवान्स्थापयित्वा कर्मभूमावा वह। इट्शब्दाभिधेयत्वमत्र सूचयितुमीळित इति विशेषणं। मनुर्हितो मनुना मंत्रेण

मनुष्येण वा यजमानादिरूपेण हितोऽत्र स्थापितस्त्वं होता देवानामाह्वातासि ॥ सुखतमे । सुखमस्मिन्नस्तीति मतुप् । तस्य गुणवचनेभ्यो मतुपो लुग्वक्तव्यः । पा॰ ५. २. ९४. ३. । इति लुक् । अतिशयेन सुखः सुखतमः । तमपो ऽनुदात्तत्वात्प्रातिपदिकस्वरः । रथे । रमु क्रीडायां । रमंतेऽस्मिन्निति रथः । हनिकुषिनीरमिकाशिभ्यः क्थन् । उ॰ २. २. । इति क्थन् । एकाच उपदेशेऽनुदात्तात् । पा॰ ७. २. १०. । इतीट्प्रतिषेधः । अनुदात्तोपदेशेत्यादिना । पा॰ ६. ४. ३७. । मकारलोपः । नित्त्वादाद्युदात्तत्वं । ईळितः । ईड स्तुतौ । निष्ठेति क्तः । इडागमः । तस्या-गमा अनुदात्ता इत्यनुदात्तः । प्रत्ययस्वरः । देवानिति नकारस्य संहितायां दीर्घादटि समानपाद इति रुत्वं । आतोऽटि नित्यमित्याकारस्यानुनासिकभावः । भोभगो इत्यादिना रोर्यत्वं । तस्य लोपः शाकल्यस्येति लोपः । तस्यासिद्धत्वादाद्गुणो न भवति । आ । निपातत्वादाद्युदात्तः । असि । अस भुवि । लटः सिप् । अदिप्रभृतिभ्यः शप इति शपो लुक् । तासस्त्योर्लोप इति सकारस्य लोपः । होता । ताच्छील्ये तृन् । सौ ऋदुशन इत्यादिना । पा॰ ७. १. ९४. । अनङ् । ङित्त्वादंतादेशः । अप्तृन्नित्यादिना । पा॰ ६. ४. ११. । उपधादीर्घः । हल्ङ्यादिलोप-नलोपौ । नित्त्वादाद्युदात्तः । मनुर्हितः । मन्यत इति मनुः । मन ज्ञाने । शॄस्वृस्निहित्रप्यसिवसिहनिक्लिदिबंधि-मनिभ्यश्च । उ॰ १. १०. । इत्युप्रत्ययः । तत्र निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः । हितः । दधातेर्निष्ठेति कर्मणि क्तः । दधातेर्हिः । पा॰ ७. ४. ४२. । इति हिरादेशः । मनुना हित इति समासे तृतीयायाः स्थाने सुपां सुलुगित्यादिना स्वित्यादेशः । तस्य रुत्वं । लुगभावश्छांदसः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं ॥

स्तृणीत बर्हिरानुषग्घृतपृष्ठं मनीषिणः । यत्रामृतस्य चक्षणं ॥ ५ ॥

स्तृणीत । बर्हिः । आनुषक् । घृतऽपृष्ठं । मनीषिणः । यत्र । अमृतस्य । चक्षणं ॥ ५ ॥

हे मनीषिणो बुद्धिमंत ऋत्विजो बर्हिर्दर्भं स्तृणीत । वेदेरुपर्याच्छादयत । अत्रापि बर्हिर्नामकोऽग्निः सूच्यते । कीदृशं बर्हिरास्तरणीयं । आनुषक् अनुक्रमेण सक्तं परस्परं संबद्धं घृतपृष्ठं । घृतपूर्णानां स्रुचां बर्हि-ष्यासादितत्वाद्घृतं पृष्ठ उपरिभागे यस्य बर्हिषस्तद्घृतपृष्ठं । यत्र यस्मिन्बर्हिष्यमृतस्यामृतसमानस्य घृतस्य चक्षणं दर्शनं भवति । यद्वा । मरणरहितस्य देवस्य बर्हिर्नामकस्याग्नेर्दर्शनं भवति । तद्बर्हिः स्तृणीतेति पूर्वत्रान्वयः ॥ स्तृणीत । स्तृञ् आच्छादने । लोण्मध्यमपुरुषस्य बहुवचनं । लोटो लङ्वत् । पा॰ ३. ४. ८५. । तस्थस्थमिपां । पा॰ ३. ४. १०१. । इति थस्य तादेशः । क्र्यादिभ्यः श्ना । ई हल्यघोः । पा॰ ६. ४. ११३. । इतीत्वं । ऋवर्णाच्चेति वक्तव्यं । का॰ ८. ४. १. १. । इति णत्वं । प्वादीनां ह्रस्वः । पा॰ ७. ३. ८०. । इति धातोर्ह्रस्वत्वं । सति शिष्टस्वरबलीयस्त्व-मन्यत्र विकरणेभ्यः । अतस्तिङ एव प्रत्ययस्वरेणोदात्तत्वं । बर्हिः । बृंहेर्नलोपश्च । उ॰ २. ११०. । इतीस्प्रत्ययन-लोपौ । प्रत्ययस्वरः । आनुषक् । आ समंतादनुषजतीत्यानुषक् । षन्ज संगे । धात्वादेः षः सः । क्विप्चेति क्विप् । अनिदितां । पा॰ ६. ४. २४. । इति लोपः । आङन्वोरुपसर्गयोः प्राक्प्रयोगः । गतिसमासः । उपसर्गात्सुनोती-त्यादिना षत्वं । घृतपृष्ठं । घृ क्षरणदीप्त्योः । निष्ठेति क्तः । प्रत्ययस्वरेणोदात्तः । घृतयुक्तं पृष्ठमस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । मनीषिणः । आमंत्रितनिघातः । अमृतस्य । न विद्यते मृतं मरणमस्मिन्नित्यमृतं । बहु-व्रीहौ पूर्वपदप्रकृतिस्वरत्वं बाधित्वा नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वे प्राप्ते नञो जरमरमित्रमृताः । पा॰ ६. २. ११६. । इत्युत्तरपदाद्युदात्तत्वं । चक्षणं । चक्षिङ् व्यक्तायां वाचि । वागभिव्यक्तिवाची धातुरिहाभिव्यक्तिमात्रं लक्षयति । ल्युट् च । पा॰ ३. ३. ११५. । इति भावे ल्युट् । योरनादेशः । तस्यार्धधातुकत्वाच्चक्षिङः ख्याञ् । पा॰ २. ४. ५४. । इति ख्याञादेशे प्राप्तेऽसनयोश्च । पा॰ २. ४. ५४. १०. । इति प्रतिषेधः ॥

वि श्रयंतामृतावृधो द्वारो देवीरसश्चतः । अद्या नूनं च यष्टवे ॥ ६ ॥

वि । श्रयंतां । ऋतऽवृधः । द्वारः । देवीः । असश्चतः । अद्य । नूनं । च । यष्टवे ॥ ६ ॥

द्वारो यज्ञशालाद्वाराणि वि श्रयंतां । कपाटोद्घाटनेन विश्रियंतां । कीदृश्यः । ऋतावृध ऋतस्य सत्यस्य यज्ञस्य वा वर्धयित्र्यो देवीर्द्योतमाना असश्चतोऽसक्तंत्य उद्घाटनेन प्रविष्टपुरुषसंगरहिताः । यद्वा । असश्चतः प्रविष्टपुरुष[illegible]गृहांस्तत्पुरुषप्रवेशाय द्वाराभिमानिन्य एतत्संज्ञिका अग्निविशेषमूर्तयो वि श्रयंतां । वि-शेषेण सेवंतां । द्वारसेवया तत्र पुरुषप्रवेशेन वा किं प्रयोजनमिति तदुच्यते । अद्यास्मिन्दिने नूनमवश्यं यष्टवे

यष्टुं। चकाराद्विनांतरेष्वपीति द्रष्टव्यं ॥ ऋतावृधः। ऋतं वर्धयंतीत्यर्थे वृधेरंतर्भावितण्यर्थात्क्विप्चेति क्विप्। उपपदसमासः। अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घत्वं। वृधिधातुस्वरेणोदात्तः। समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। देवीः। वा छंदसीति पूर्वसवर्णदीर्घत्वं। देवशब्दात्पचाद्यजंतात्पुंयोगादाख्यायां। पा॰ ४. १. ४८.। इति ङीष्। प्रत्ययस्वरेणोदात्तः। विभक्त्या सहैकादेश उदात्तेनोदात्त इत्युदात्तः। असश्चतः। षस्तुन्चु षस्ज गतौ। जकारस्य व्यत्ययेन चकारः। लटः शत्रादेशः। द्वाराभावे न विद्यंते सश्चंतो गच्छंतो येषु प्राग्वंशादिषु तानसश्चतः। अद्य। सद्यःपरुदित्यादिना द्यप्रत्ययांतो निपातितः। तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञकत्वात्परस्या विभक्तेर्लुक्। प्रत्ययस्वरेणांतोदात्तः। संहितायामन्येषामपि दृश्यत इति दीर्घत्वं। नूनं। एवमादीनामंत इत्यंतोदात्तत्वं। यष्टवे। यजेस्तुमर्थे सेसेनित्यादिना। पा॰ ३. ४. ९.। तवेन्प्रत्ययः। व्रश्चादिना षत्वं। नित्त्वादाद्युदात्तः॥ ॥२४॥

नक्तोषासा सुपेशसास्मिन्यज्ञ उप ह्वये। इदं नो बर्हिरासदे ॥७॥
नक्तोषसा। सुऽपेशसा। अस्मिन्। यज्ञे। उप। ह्वये। इदं। नः। बर्हिः। आऽसदे ॥७॥

नक्तशब्द उषःशब्दश्च लोके कालविशेषवाचिनौ। इह तु तत्कालाभिमानिवह्निमूर्तिद्वये प्रयुज्येते। नक्तोषासा नक्तोषोनामिके वह्निमूर्ती अस्मिन्प्रवर्तमाने यज्ञकर्मण्युप ह्वये। आह्वयामि। किमर्थं। नोऽस्मदीयमिदं वेद्यामास्तीर्णं बर्हिर्दर्भमासदे। आसत्तुं। प्राप्तुं। कीदृश्यौ। सुपेशसा शोभनरूपयुक्ते ॥ नक्तं चोषाश्च नक्तोषसा। द्वितीयाद्विवचनस्य सुपां सुलुगित्याकारः। मलोप उपधादीर्घश्छांदसौ। देवताद्वंद्वे च। पा॰ ६. २. १४१.। इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं। सुपेशसा। शोभनं पेशो रूपं ययोस्ते। पूर्ववदाकारः। पेशःशब्दो नब्विषयत्वादाद्युदात्तः। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वस्यापवादत्वेनाद्युदात्तं द्व्यच्छंदसि। पा॰ ६. २. ११९.। इत्युत्तरपदाद्युदात्तत्वं। अस्मिन्। ऊडिदमित्यादिना विभक्तिरुदात्ता। आसदे। षद्लृ विशरणगत्यवसादनेषु। धात्वादेः षः सः। आङ्पूर्वादस्मात्संपदादिभ्यो भावे क्विप्। पा॰ ३. ३. १०८. ९.। प्रादिसमासः। कृदुत्तरपदप्रकृतिस्वरत्वं॥

ता सुजिह्वा उप ह्वये होतारा दैव्या कवी। यज्ञं नो यक्षतामिमं ॥८॥
ता। सुऽजिह्वौ। उप। ह्वये। होतारा। दैव्या। कवी इति। यज्ञं। नः। यक्षतां। इमं ॥८॥

तच्छब्दोऽत्र सर्वनामत्वात्प्रसिद्धार्थवाची। ता तौ याज्ञिकानां प्रसिद्धौ द्वावग्नी उप ह्वये। आह्वयामि। नोऽस्मदीयमिमं यज्ञं यक्षतां। तावुभौ यजतामनुतिष्ठतां। कीदृशौ। सुजिह्वौ शोभनजिह्वोपेतौ। प्रियवचनौ शोभनज्वालौ वेत्यर्थः। होतारा होमनिष्पादकौ दैव्या दैव्यौ देवसंबंधिनौ। अत एविमावग्नी दैव्यहोतृनामकौ। कवी मेधाविनौ ॥ ता तौ। द्वितीयाद्विवचनस्य सुपां सुलुगित्याकारः। एकादेश उदात्तेनोदात्त इत्युदात्तः। सुजिह्वौ। शोभना जिह्वा ययोस्तौ। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। पूर्ववदेकादेशस्वरः। संहितायामादेशः। वस्य लोपः शाकल्यस्येति लोपः। होतारा। जुहोतेस्तृन्। द्विवचने ऋतो ङि। पा॰ ७. ३. ११०.। इति गुणः। अप्तृन्नित्युपधादीर्घः। पूर्ववदाकारः। नित्त्वादाद्युदात्तः। दैव्या। देवानामिमौ। देवाद्यञञौ। पा॰ ४. १. ८५. ३.। इति यञ्। यस्येति चेत्यकारलोपः। ञ्नित्यादिर्नित्यमित्याद्युदात्तः। पूर्ववदाकारः। यक्षतां। यजतां। लोटि शपि परतः सिब्बहुलं लेटीति बहुलग्रहणात्सिप्। [illegible] ॥

इळा सरस्वती मही तिस्रो देवीर्मयोभुवः। बर्हिः सीदंत्वस्रिधः ॥९॥
इळा। सरस्वती। मही। तिस्रः। देवीः। मयःऽभुवः। बर्हिः। सीदंतु। अस्रिधः ॥९॥

अत्र महीशब्दो महत्त्वगुणयुक्तां भारतीमाचष्टेऽन्येष्वाप्रीसूक्तेषु सदृशेष्विळा सरस्वती भारतीत्याम्नातत्वात्। इळादिशब्दाभिधेया वह्निमूर्तयस्तिस्रो देवीर्दीप्यमाना बर्हिर्वि[illegible] सीदंतु। प्राप्नुवंतु। कीदृश्यः। मयोभुवः सुखोत्पादिका अस्रिधः शोषिणा क्षयेण वा रहिताः॥ इळा। ईड स्तुतौ। छांदसं ह्रस्वत्वं।

क्विप्। धातुस्वरः। टापं चापि हलंतानां यथा वाचा दिशा निशेति टाप्। सरस्वती। सरोऽसुनंतो नित्त्वादाद्युदात्तः। तदस्यास्तीति मतुप्। अदुपधत्वाद्वत्वं। तसौ मत्वर्थ इति भत्वेन पदत्वस्य बाधितत्वाद्रुत्वाद्यभावः। उगितश्चेति ङीप्। मतुब्ङीपौ पित्त्वादनुदात्तौ। मही। महतीशब्दे तकारलोपश्छांदसः। यस्येति चेत्यकारलोपः। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वं। तिस्रः। त्रिशब्दाज्जसि त्रिचतुरोः स्त्रियां तिसृचतसृ। पा॰ ७. २. ९९.। इति तिस्रादेशः। अचि र ऋतः। पा॰ ७. २. १००.। इति रेफादेशः। तिसृभ्यो जसः। पा॰ ६. १. १६६.। इति जस उदात्तत्वं। देवीः। देवानां पत्न्यो देव्यः। पुंयोगादाख्यायामिति ङीष्। यस्येति चेत्यकारलोपः। प्रत्ययस्वरेण ङीष उदात्तत्वं। जसि दीर्घाज्जसि च। पा॰ ६. १. १०५.। इति निषिद्धं दीर्घत्वं वा छंदसीति पक्षेऽभ्यनुज्ञायते। मयोभुवः। मीञ् हिंसायां। हिनस्ति दुःखमिति सुखं मयः। तद्भावयंतीति मयोभुवः। अंतर्भावितण्यर्थाद्भुवः क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वं। बर्हिः। बृंहेर्नलोपश्चेतीसिप्रत्ययः। प्रत्ययस्वरः। सीदंतु। षद्लृ विशरणादौ। पाघ्रेत्यादिना सीदादेशः। अस्रिधः। स्रिधिर्हिंसार्थस्य शोषणार्थस्य वा संपदादिभ्यो भावे क्विपि नञा बहुव्रीहिः। पूर्वपदप्रकृतिस्वरं बाधित्वा नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं॥

पत्नीसंयाजे त्वष्टुः पुरोनुवाक्येह त्वष्टारमग्रियमिति। शं युवाकाय संप्रेषित इति खंडे सूत्रितं। सं ते पयांसि समु यंतु वाजा इह त्वष्टारमग्रियं। आ॰ १. १०.। इति॥

इ॒ह त्वष्टा॑रमग्रि॒यं वि॒श्वरू॑पमु॒प॑ ह्वये। अ॒स्माक॑मस्तु॒ केव॑लः॥१०॥

इ॒ह। त्वष्टा॑रं। अ॒ग्रि॒यं। वि॒श्वऽरू॑पं। उप॑। ह्व॒ये॒। अ॒स्माकं॑। अ॒स्तु॒। केव॑लः॥१०॥

त्वष्टारं त्वष्टृनामकमग्निमिह कर्मण्युप ह्वये। कीदृशं। अग्रियं श्रेष्ठं विश्वरूपं बहुविधरूपोपेतं। सोऽस्माकं केवलोऽसाधारणोऽस्तु। इतरयजमानेभ्योऽप्यधिकमनुग्रहं करोत्वित्यर्थः॥ त्वष्टारं। तक्षू त्वक्षू तनूकरणे। तृन्। स्वरतिसूतिसूयतिधूञूदितो वा। पा॰ ७. २. ४४.। इतीडभावपक्षे स्कोः संयोगाद्योरंते च। पा॰ ८. २. २९.। इति ककारलोपः। ष्टुत्वं। द्वितीयैकवचने ऋतो [illegible]रिति गुणेऽप्तृन्नित्यादिनोपधाया दीर्घः। तृनो नित्त्वादाद्युदात्तत्वं। अग्रियं। अग्रादित्यनुवृत्तौ घच्छौ च। पा॰ ४. ४. ११७.। इति घच्। आयनेयीत्यादिना। पा॰ ७. १. २.। घकारस्य इयादेशः। यस्येति लोपः। आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थं। पा॰ ७. १. २. १.। इत्युपदेशिवद्भावात्प्रत्ययाद्युदात्तत्वाद्वचश्चित्त्वादंतोदात्तत्वं। विश्वरूपं। विश्वानि रूपाणि त्वष्टुत्पन्नत्वेन यस्य। त्वष्टा वै पशूनां मिथुनानां रूपकृत्। तै॰ सं॰ ६. १. ८. ५.। इति श्रुतेः। विश्वशब्दस्याद्युदात्तत्वात्पूर्वपद[illegible] प्राप्ते बहुव्रीहौ विश्वं संज्ञायां। पा॰ ६. २. १०६.। इति पूर्वपदांतोदात्तत्वं। अस्माकं। असु क्षेपणे। युष्यसिभ्यां मदिक्। उ॰ १. १३८.। प्रत्ययस्वरेणांतोदात्तः। षष्ठीबहुवचनमाम्। अत्र परमपि योऽचि। पा॰ ७. २. ८९.। इति यत्वं बाधित्वा नित्यत्वात्प्रतिपदविधित्वाच्चाम आकमादेशे कृते। पा॰ ७. १. ३३.। अनादेश इति निषेधेन। पा॰ ७. २. ८६। यत्वाभावाच्छेषे लोप इति दकारलोपेऽकारांतत्वेन पश्चात्प्राप्तस्यापि सुटः। पा॰ ७. १. ५२.। साम इति निर्देशे स्थानिन्यंतर्भावेन निवृत्तिः। एवमर्थ एव हि साम इति ससुट्कनिर्देशः। केवलः। वृषादेराकृतिगणत्वादाद्युदात्तः॥

अव॑ सृजा वनस्पते॒ देव॑ दे॒वेभ्यो॑ ह॒विः। प्र दा॒तुर॑स्तु॒ चेत॑नं॥११॥

अव॑। सृ॒ज॒। व॒न॒स्प॒ते॒। देव॑। दे॒वेभ्यः॑। ह॒विः। प्र। दा॒तुः। अ॒स्तु॒। चेत॑नं॥११॥

हे वनस्पते एतन्नामकाग्ने देव हविर्भुग्भ्यो देवेभ्योऽस्मदीयं हविरव सृज। समर्पयेत्यर्थः। प्र दातुर्यजमानस्य चेतनं परलोकविषयं विज्ञानं त्वत्प्रसादादस्तु॥ वनस्पते। आमंत्रितनिघातः। देव। [illegible] निघातः। षाष्ठिकमामंत्रिताद्युदात्तत्वं। हविः। इसः प्रत्ययस्वरः। दातुः। ददातेस्तृच्। चित इत्यंतोदात्तः। ङसि ऋत उत्। पा॰ ६. १. १११.। इत्युत्वं। एकादेशो रपरत्वं च। रात्सस्य। पा॰ ८. २. २४.। इति सलोपः। एकादेशस्वरेणोकार उदात्तः। चेतनं। चिती संज्ञाने। करणे ल्युट्। योरनादेशः। लघूपधगुणः। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं॥

स्वाहा यज्ञं कृणोतनेंद्राय यज्वनो गृहे । तत्र देवाँ उप ह्वये ॥१२॥

स्वाहा । यज्ञं । कृणोतन । इंद्राय । यज्वनः । गृहे । तत्र । देवान् । उप । ह्वये ॥१२॥

स्वाहाशब्दो हविष्प्रदानवाची सन् एतन्नामकमग्निविशेषं लक्षयति । तदग्निसंपादितं यज्ञमिंद्रायेंद्रतुष्ट्यर्थं यज्वनो यजमानस्य गृहे ऋत्विजः कृणोतन । कुरुत । तत्र यज्ञे देवानुप ह्वये ॥ कृणोतन । कृवि हिंसाकरणयोश्च । इदित्वान्नुम् । लोण्मध्यमबहुवचनस्य तस्थस्थमिपामिति तादेशः । तप्तनप्तनथनाश्च ।पा॰ ७. १. ४५.। इति तनबादेशः । शपि प्राप्ते धिन्विकृण्व्योरच्चेत्युप्रत्ययः । तत्संनियोगेन वकारस्य चाकारः । तस्यातो लोप इति लोपः । तस्याचः परस्मिन्निति स्थानिवद्भावादृकारस्य लघूपधगुणो न भवति । तनपः पित्त्वेनाङित्त्वादुकारस्य गुणः । इंद्राय । ऋज्रेंद्रेत्यादिना रन् । नित्त्वादाद्युदात्तः । यज्वनः । यज देवपूजासंगतिकरणदानेषु । सुयजोर्ङ्वनिप् ।पा॰ ३. २. १०३.। ङसि भसंज्ञायामल्लोपे प्राप्ते न संयोगाद्वमंतात् ।पा॰ ६. ४. १३७.। इति निषेधः । वनिपः पित्त्वेन धातुस्वर एव शिष्यते । गृहे । ग्रह उपादाने । गेहे कः ।पा॰ ३. १. १४४.। इति कप्रत्ययः । ग्रहिज्येत्यादिना ।पा॰ ६. १. १६.। संप्रसारणं । परपूर्वत्वं । प्रत्ययस्वरः । तत्र । त्रल् । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । देवाँ उपेत्यत्र संहितायां दीर्घादटीति नकारस्य रुत्वं । आतोऽटि नित्यमित्याकारस्यानुनासिकादेशः । भोभगो इति यत्वं । तस्य लोपः शाकल्यस्येति लोपः ॥ ॥२५॥

ऐभिरग्न इत्यादिकस्य द्वादशर्चस्य तृतीयसूक्तस्य ऋषिच्छंदसी पूर्ववत् । तच्च सूक्तं बहुदेवताकं । अत एवानुक्रम्यते । ऐभिर्वैश्वदेवमिति ॥ विनियोगस्तु । व्यूढद्वादशाहस्य प्रथमे छंदोमे तृतीयसवने वैश्वदेवशस्त्र ऐभिरग्ने दुवो गिर इति सूक्तं । तथा च सूत्रितं । अथ छंदोमाः समुद्रादूर्मिरित्युपक्रम्यैभिरग्ने दुवो गिर इति वैश्वदेवं ।आ॰ ८. ९.। इति ॥

ऐभिरग्ने दुवो गिरो विश्वेभिः सोमपीतये । देवेभिर्याहि यक्षि च ॥१॥

आ । एभिः । अग्ने । दुवः । गिरः । विश्वेभिः । सोमऽपीतये । देवेभिः । याहि । यक्षि । च ॥१॥

हे अग्ने एभिरस्मिन्यज्ञे संभावितैर्विश्वेभिर्देवेभिः सर्वैर्देवैः सह सोमपीतये सोमपानोपेतयागार्थं दुवोऽस्मदीयां परिचर्यां गिरोऽस्मदीयाः स्तुतीश्च प्रत्या याहि । आगच्छ । यक्षि च । आगत्य यज च ॥ एभिः । पूर्वनिर्दिष्टानां देवानामिदमा परामर्शादिदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ।पा॰ २. ४. ३२.। इत्यशनुदात्तः । शित्त्वात्सर्वादेशः । नेदमदसोरकोः ।पा॰ ७. १. ११.। इति भिस ऐसादेशाभावः । विभक्तिरनुदात्तैव । न चोङिदमित्यादिना विभक्तेरुदात्तत्वं तत्रांतोदात्तादित्यधिकारात् । दुवः । नब्विषयस्यानिसंतस्येत्याद्युदात्तत्वं । विश्वेभिः । विश्वशब्दो विशेः क्वनंतो नित्त्वादाद्युदात्तः । बहुलं छंदसीति भिस ऐस् न भवति । बहुवचने झल्येत् ।पा॰ ७. ३. १०३.। इत्येत्वं । सोमपीतये । सोमशब्दोऽर्तिस्तुस्वित्यादिना मनंतो नित्त्वादाद्युदात्तः । सोमस्य पीतिर्यस्मिन्यागे स सोमपीतिः । तस्मै । तादर्थ्ये चतुर्थी । देवेभिः । बहुलं छंदसीति भिस ऐसादेशाभावः । बहुवचने झल्येदित्येत्वं । यक्षि । यजेर्लोटः सिप् । बहुलं छंदसीति शपो लुक् । व्रश्चादिना षत्वं । षढोः कः सीति कत्वं । सेर्हिरादेशश्छांदसत्वान्न भवति । सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वर एव ॥

आ त्वा कण्वा अहूषत गृणंति विप्र ते धियः । देवेभिरग्न आ गहि ॥२॥

आ । त्वा । कण्वाः । अहूषत । गृणंति । विप्र । ते । धियः । देवेभिः । अग्ने । आ । गहि ॥२॥

हे विप्र मेधाविन्नग्ने कण्वा मेधाविन ऋत्विजस्त्वा यज्ञनिष्पादकं त्वामाहूषत । आह्वयंति । तथा ते धियस्त्वदीयानि कर्माणि गृणंति । कथयंति । ततो हे अग्ने देवेभिर्देवैः सहा गहि । आगच्छ । विप्र इत्यादिषु चतुर्विंशतिसंख्याकेषु मेधाविनामसु कण्व ऋभुरिति पठितं ॥ त्वा । त्वामौ द्वितीयाया इति त्वादेशः । सर्वानुदात्तः । कण्वाः । कण शब्दार्थः । अशिप्रुषिलटिकणिखटीत्यादिना क्वन् । नित्त्वादाद्युदात्तः । अहूषत । ह्वेञ् स्पर्धायां शब्दे च । छंदसि लुङ्लङ्लिट इति वर्तमाने लुङ् । ञित्त्वादात्मनेपदं । झ आत्मनेपदेष्वनत इत्यदादेशः । च्लेः सिच् । एकाच इतीट्प्रतिषेधः ।पा॰ ७. २. १०.। बहुलं छंदसीति संप्रसारणं परपूर्वत्वं । हलः ।पा॰ ६. ४. २.।

इति दीर्घत्वं । आदेशप्रत्यययोरिति षत्वं । छांदसत्वादृकारस्य न गुणः । अडागमः । गृणंति । गॄ शब्दे । लट् । झि । झोऽंतः । क्र्यादिभ्यः श्ना । प्वादीनां ह्रस्व इति धातोर्ह्रस्वत्वं । श्नाभ्यस्तयोरातः । पा° ६. ४. ११२. । इत्याकारलोपः । ऋवर्णाच्चेति वक्तव्यं । का° ८. ४. १. १. । इति णत्वं । तिङः स्वर एव शिष्यते । विप्र । आमंत्रितनिघातः । ते । अनुदात्तमित्यनुवृत्तौ तेमयावेकवचनस्य । पा° ८. १. २२. । इति षष्ठ्यास्ते इत्यादेशः । देवेभिः । छांदस ऐसभावः । गहि । गम्लृ सृप्लृ गतौ । लोटः सिप् । सेर्ह्यपिच्च । कर्तरि शप् । तस्य बहुलं छंदसीति लुक् । अनुदात्तोपदेशेत्यादिना मकारलोपः । तस्यासिद्धवदत्रा भादि[illegible]तो हेरिति हेर्लुग्न भवति ॥

इंद्रवायू बृहस्पतिं मित्राग्निं पूषणं भगं । आदित्यान्मारुतं गणं ॥ ३ ॥

इंद्रवायू इति । बृहस्पतिं । मित्रा । अग्निं । पूषणं । भगं । आदित्यान् । मारुतं । गणं ॥ ३ ॥

इंद्रादिदेवान्मारुतं मरुतां वायूनां संबंधिनं गणं च हे अग्ने यक्षीति पदद्वयमनुवर्तते ॥ इंद्रश्च वायुश्चेंद्रवायू । देवताद्वंद्वे च । पा° ६. ३. २६. । इति प्राप्तस्यानङ उभयत्र वायोः प्रतिषेधो वक्तव्यः । पा° ६. ३. २६. १. । इति प्रतिषेधः । देवताद्वंद्वे च । पा° ६. २. १४१. । इति प्राप्तस्योभयपदप्रकृतिस्वरस्य नोत्तरपदेऽनुदात्तादौ । पा° ६. २. १४२. । इति निषेधः । समासांतोदात्तत्वमेव । बृहस्पतिं । तद्बृहतोः करपत्योश्चोरदेवतयोरभिधेययोः सुट् तलोपो वक्तव्यः । म° ६. १. १५७. । इति तलोपः सुडागमश्च । बृहच्छब्दमाद्युदात्तं केचिद्वर्णयंतीति वामनः । पा रक्षणे । पातीति पतिः । पातेर्डतिः । उ° ४. ५७. । प्रत्ययस्वरेणाद्युदात्तः । समास उभे वनस्पत्यादिषु युगपत् । पा° ६. २. १४०. । इत्युभयपदप्रकृतिस्वरत्वं । मित्रा । द्वितीयायाः सुपां सुलुगित्यादिना विभक्तेराजादेशः । आदित्यान् । अदितेरपत्यान्यादित्याः । दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः । पा° ४. १. ८५. । प्रत्ययस्वरः । मारुतं । मरुतां विकारः । अनुदात्तादेश्च । पा° ४. ३. १४०. । इत्यञ् । ञित्त्वादाद्युदात्तः ॥

प्र वो भ्रियंत इंदवो मत्सरा मादयिष्णवः । द्रप्सा मध्वश्चमूषदः ॥ ४ ॥

प्र । वः । भ्रियंते । इंदवः । मत्सराः । मादयिष्णवः । द्रप्साः । मध्वः । चमूऽसदः ॥ ४ ॥

हे इंद्रादिदेवा वो युष्मदर्थमिंदवः सोमाः प्र भ्रियंते । प्रकर्षेण संपाद्यंते । कीदृशाः । मत्सरास्तृप्तिकराः । मत्सरः सोमो मंदतेस्तृप्तिकर्मणः । नि° २. ५. । इति यास्कः । मादयिष्णवो हर्षहेतवो द्रप्सा विंदुरूपा मध्वो मधुराः चमूषदश्चमूषु चमसादिपात्रेष्ववस्थिताः ॥ प्र । व्यवहिताश्च । पा° १. ४. ८२. । इति व्यव[illegible] । भ्रियंते । भृञो यकि रिङ् शयग्लिङ्क्षु । पा° ७. ४. २८. । इति रिङादेशः । हृञो वा । हृग्रहोर्भश्छंदसीति हकारस्य भकारः । इंदवः । उन्दी क्लेदने । उंदंति पात्राणीति । निदित्यनुवृत्तावुंदेरिच्चादेः । उ° १. १३. । इत्युप्रत्यय आदेरिकारश्च । नित्त्वादाद्युदात्तः । मत्सराः । मद तृप्तियोगे । चिदित्यनुवृत्तौ कृधूमदिभ्यः कित् । उ° ३. ७३. । इति सरप्रत्ययः । तितुत्रतथसिसुसरकसेषु चेतीट्प्रतिषेधः । चित्त्वादंतोदात्तः । मादयिष्णवः । मदी हर्षग्लपनयोः । मदेर्णेश्छंदसि । पा° ३. २. १३७. । इतीष्णुच् । णेरनिटीति णिलोपे प्राप्तेऽयामंताल्वाय्येत्न्विष्णुषु । पा° ६. ४. ५५. । इत्ययादेशः । चित्त्वादंतोदात्तः । मध्वः । मधुशब्द आद्युदात्त उक्तः । मधुशब्दस्य व्यत्ययेन पुँल्लिंगत्वं । संज्ञापूर्वको विधिरनित्य इति जसि च । पा° ७. ३. १०९. । इति गुणो न भवति । चमूषदः । चमु छमु जमु झमु अदने । चम्यते भक्ष्यते येषु चमसेषु ते चम्वः । कृषिचमीत्यादिना । उ° १. ८२. । ऊः । तत्र सीदंतीति चमूषदः । सत्सूद्विषेत्यादिना । पा° ३. २. ६१. । क्विप् । सुषा[illegible] । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

ईळते त्वामवस्यवः कण्वासो वृक्तबर्हिषः । हविष्मंतो अरंकृतः ॥ ५ ॥

ईळते । त्वां । अवस्यवः । कण्वासः । वृक्तऽबर्हिषः । हविष्मंतः । अरंऽकृतः ॥ ५ ॥

हे अग्ने त्वामीळते । ऋत्विजः स्तुवंति । कीदृशाः । अवस्यवः । अवनं रक्षणं तद्धेतून्देवानिच्छंतः । कण्वासो मेधाविनो वृक्तबर्हिष आस्तरणार्थं छिन्नदर्भा हविष्मंतो हविर्युक्ता अरंकृतोऽलंकर्तारः ॥ ईळते ।

ईड स्तुतौ । अनुदात्तेत्त्वाल्लटो झः । अदिप्रभृतिभ्यः शप इति शपो लुक् । झस्यादादेशः । टेरेत्वं । तास्यनुदात्तेदित्यादिना लसार्वधातुकस्यानुदात्तत्वाद्धातुस्वर एव शिष्यते । अवस्यवः । अवंतीत्यवा देवाः । तानतिशयेनेच्छंति । सुप आत्मनः क्यच् । क्यचि च । पा॰ ७. ४. ३३. । इतीत्वं न भवति । न च्छंदस्यपुत्रस्य । पा॰ ७. ४. ३५. । इति निषेधात् । सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः । म॰ ७. १. ५१. २. । इति सुक् । क्याच्छंदसीत्युप्रत्ययः । अतो लोपः । प्रत्ययस्वरेणांतोदात्तत्वं । कण्वासः । कण शब्दार्थः । कणंति ध्वनंति स्तोत्रादिपाठेनेति कण्वा ऋत्विजः । अशिप्रुषीत्यादिना क्वन् । नित्त्वादाद्युदात्तः । आज्जसेरसुक् । पा॰ ७. १. ५०. । इत्यसुक् । वृक्तबर्हिषः । वृक्तमुक्तं । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । हविष्मंतः । हविरेषामस्तीति हविष्मंतः । तसौ मत्वर्थ इति भत्वेनापदत्वान्न रुत्वं । अरंकृतः । अलंकुर्वंतीत्यरंकृतः । क्विप्चेति क्विप् । ह्रस्वस्य तुक् । कपिलकादीनां संज्ञाच्छंदसोर्वा लो रत्वमापद्यते । पा॰ ८. २. १८. ३. । इति लकारस्य रेफादेशः ॥

घृतपृष्ठा मनोयुजो ये त्वा वहंति वह्नयः । आ देवान्त्सोमपीतये ॥ ६ ॥

घृतऽपृष्ठाः । मनःऽयुजः । ये । त्वा । वहंति । वह्नयः । आ । देवान् । सोमऽपीतये ॥ ६ ॥

हे अग्ने त्वा त्वां येऽश्वा रथेन वहंति । कीदृशाः । घृतपृष्ठाः पुष्टांगत्वेन दीप्तपृष्ठा मनोयुजो मनःसंकल्पमात्रेण रथे युज्यमाना वह्नयो वोढारः । तैरश्वैः सोमपीतये सोमपानहेतुयागार्थं देवाना वहेति शेषः ॥ घृतपृष्ठाः । घृ क्षरणदीप्त्योः । घृतं दीप्तं पृष्ठं येषां ते घृतपृष्ठाः । घृतशब्दः प्रत्ययस्वरेणांतोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । मनसा युंजत इति मनोयुजः । ऋत्विग्दधृगित्यादिना क्विन् । कृदुत्तरपदप्रकृतिस्वरत्वं । त्वा । त्वामौ द्वितीयाया इत्यनुदात्तस्त्वादेशः । वहंति । शप्तिङोरनुदात्तत्वाद्धातुस्वरः । यद्वृत्तयोगान्निघाताभावः । वह्नयः । निरित्यनुवृत्तौ वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् । उ॰ ४. ५१. । इति निप्रत्ययः । तस्य नित्त्वादाद्युदात्तत्वं । सोमपीतये । उक्तं । सकारे परतो नकारस्य संहितायां नश्च । पा॰ ८. ३. ३०. । इति धुडागमः । खरि च । पा॰ ८. ४. ५५. । इति चर्त्वं । चयो द्वितीयाः शरि पौष्करसादेः । पा॰ ८. ४. ४८. ३. । इति द्वितीयस्थकारः ॥ ॥ २६ ॥

तान्यजत्राँ ऋतावृधोऽग्ने पत्नीवतस्कृधि । मध्वः सुजिह्व पायय ॥ ७ ॥

तान् । यजत्रान् । ऋतऽवृधः । अग्ने । पत्नीऽवतः । कृधि । मध्वः । सुऽजिह्व । पायय ॥ ७ ॥

हे अग्ने तानिंद्रादीन्देवान्यजत्रान्यजनीयान् ऋतावृधः सत्यस्य यज्ञस्य वा वर्धकान् पत्नीवतः पत्नीयुक्तान्कृधि । कुरु । हे सुजिह्व शोभनजिह्वोपेत मध्वो मधुरस्य सोमस्य भागं देवान्पायय ॥ यजत्रान् । अमिनक्षियजिवंधिपतिभ्योऽत्रन् । उ॰ ३. १०५. । इति यजेरत्रन्प्रत्ययः । ऋतावृधः । वृधु वृद्धौ । अंतर्भावितण्यर्थात् क्विप्चेति क्विप् । अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घत्वं । वृधेर्धातुस्वरः । समासे कृदुत्तरपदप्रकृतिस्वरत्वं । अग्ने । पादादित्वान्नामंत्रितनिघातः । षाष्ठिकमाद्युदात्तत्वं । पत्नीवतः । पत्युर्नो यज्ञसंयोगे । पा॰ ४. १. ३३. । इति ङीप् । इकारस्य च नकारः । ता एषां संतीति मतुप् । छंदसीर इति वत्वं । पतिशब्दो डतिप्रत्ययांतत्वादाद्युदात्तः । ङीम्मतुपोरनुदात्तत्वात्स एव शिष्यते । कृधि । कृञो लोटः सिः । सेर्ह्यपिच्चेति हिः । बहुलं छंदसीति विकरणलुक् । श्रुशृणुपॄकृवृभ्यश्छंदसि । पा॰ ६. ४. १०२. । इति हेर्धिरादेशः । ङित्त्वाद्गुणाभावः । मध्वः । उक्तं । सुजिह्व । आमंत्रितनिघातः । पायय । पा पाने । पिबंतं प्रयुंक्त इति हेतुमति चेति णिच् । शाच्छासाह्वाव्यावेपां युक् । पा॰ ७. ३. ३७. । इति युक् । पूर्वस्यामंत्रितस्याविद्यमानवत्त्वं । अत एवाव्यवधायकत्वान्मध्व इत्यपेक्ष्य तिङ्ङतिङ इति निघातः ॥

ये यजत्रा य ईड्यास्ते ते पिबंतु जिह्वया । मधोरग्ने वषट्कृति ॥ ८ ॥

ये । यजत्राः । ये । ईड्याः । ते । ते । पिबंतु । जिह्वया । मधोः । अग्ने । वषट्ऽकृति ॥ ८ ॥

ये देवा यजत्रा यष्टव्याः । तथा ये देवा ईड्याः स्तुत्याः । ते सर्वेऽपि वषट्कृति वषट्कारकाले वषट्कारयुक्ते यागे वा हे अग्ने ते त्वदीयया जिह्वया मधोर्मधुरस्य सोमस्य भागं पिबंतु ॥ यजत्राः । गतं । ईड्याः । ईड

स्तुतौ। ऋहलोर्ण्यत्। तित्स्वरिते प्राप्ते ईडवंदवृशंसदुहां ण्यत इत्याद्युदात्तत्वं। द्वितीयस्य तेशब्दस्य युष्मदादेशस्य सर्वानुदात्तत्वं। मधोः। उप्रत्ययस्य नित्त्वादाद्युदात्तत्वमुक्तं। अग्ने। आमंत्रितनिघातः। वषट्कृति। करोतेः संपदादिभ्यो भावे क्विप्। वषडित्यस्य करणं यस्मिन्याग इति बहुव्रीहिः। वषडित्यस्य निपातत्वादाद्युदात्तत्वं। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥

आकीं सूर्यस्य रोचनाद्विश्वान्देवाँ उषर्बुधः। विप्रो होतेह वक्षति ॥९॥

आकीं। सूर्यस्य। रोचनात्। विश्वान्। देवान्। उषःऽबुधः। विप्रः। होता। इह। वक्षति ॥९॥

विप्रो मेधावी होता होमनिष्पादकोऽग्निरुषर्बुध उषःकाले यागगमनाय प्रबुध्यमानान्विश्वान्देवान्सूर्यस्य संबंधिनो रोचनाल्लोकादिह कर्मण्याकीं वक्षति। आवहतु॥ आकीं। निपात आद्युदात्तः। सूर्यस्य। सूर्यशब्दो राजसूयसूर्येत्यादिना। पा॰ ३. १. ११४.। क्यप्प्रत्ययांतो निपातितः। क्यपः पित्त्वाद्धातुस्वरेणाद्युदात्तः। रोचनात्। रोचमानात्। रुच दीप्तौ। अनुदात्तेतश्च हलादेः। पा॰ ३. २. १४९.। इति कर्तरि युच्। चित इत्यंतोदात्तत्वं। विश्वान्। विशेः क्वनंतो नित्त्वादाद्युदात्तः। उषर्बुधः। उषर्बुध्यंत इत्युषर्बुधः। क्विचेति क्विप्। धातुस्वरेणोकार उदात्तः। समासे कृदुत्तरपदप्रकृतिस्वरत्वं। विप्रः। ऋज्रेंद्रेत्यादिना रन्। नित्त्वादाद्युदात्तः। होता। हुयतेस्ताच्छील्ये तृन्। बहुलं छंदसीति संप्रसारणं। परपूर्वत्वं। गुणः। नित्त्वादाद्युदात्तः। इह। इदमो ह इति हप्रत्ययः। इदम इशितीश्। शित्त्वात्सर्वादेशः। प्रत्ययस्वरः। वक्षति। वहेः प्रार्थनायां लिङर्थे लेट्। तस्य तिप्। कर्तरि शप्। शपि परतः सिब्बहुलं लेटीति सिप्। ढत्वकत्वषत्वानि। तिङ्ङतिङ इति निघातः॥

अग्निष्टोमे प्रउगशस्त्रस्य याज्या विश्वेभिः सोम्यं मध्विति स्तोत्रमग्रे शस्त्रादिति खंडे सूचितं। विश्वेभिः सोम्यं मध्विति याज्या। आ॰ ५. १०.। इति॥

विश्वेभिः सोम्यं मध्वग्न इंद्रेण वायुना। पिबा मित्रस्य धामभिः ॥१०॥

विश्वेभिः। सोम्यं। मधु। अग्ने। इंद्रेण। वायुना। पिब। मित्रस्य। धामऽभिः ॥१०॥

हे अग्ने त्वं विश्वेभिः सर्वैः पूषभगादिभिर्देवैरिंद्रेण वायुना मित्रस्य संबंधिभिर्धामभिस्तेजोभिर्मूर्तिविशेषरूपैश्च सह सोम्यं सोमसंबंधि मधु मधुरं भागं पिब॥ विश्वेभिः। बहुलं छंदसीति भिस ऐसादेशाभावः। सोम्यं। सोममर्हति य इत्यनुवृत्तौ मये च। पा॰ ४. ४. १३८.। इति यप्रत्ययः सोमस्य विकार इत्यर्थे। यस्येति चेत्यकारलोपः। प्रत्ययस्वरः। मधु। फलिपाटिनमिमनीत्यादिना। उ॰ १. १९.। उप्रत्ययः। नित्त्वाद्धत्वं। नित्त्वादाद्युदात्तः। वायुना। कृवापाजिमीत्यादिना उण्। आतो युक् चिण्कृतोः। पा॰ ७. ३. ३३.। इति युक्। प्रत्ययस्वरः। पिब। पा पाने। लोटः सेर्हिरादेशः। शपि पाघ्रेत्यादिना पिबादेशः। अतो हेरिति हेर्लुक्। शपः पित्त्वाद्धातुस्वरः। पादादित्वान्न निघातः। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। धामभिः। धाञ्। आतो मनिन्निति मनिन्। नित्स्वरः॥

त्वं होता मनुर्हितोऽग्ने यज्ञेषु सीदसि। सेमं नो अध्वरं यज ॥११॥

त्वं। होता। मनुःऽहितः। अग्ने। यज्ञेषु। सीदसि। सः। इमं। नः। अध्वरं। यज ॥११॥

हे अग्ने मनुर्हितो मनुषा होत्रा मनुष्येण हितः संपादितो होता होमनिष्पादको यस्त्वं यज्ञेषु सीदसि तिष्ठसि स त्वं नोऽस्मदीयमिममध्वरं यज्ञं यज। निष्पादय॥ मनुर्हितः। मन्यत इति मनुः। निद्वेत्यनुवृत्तौ बहुलमन्यत्रापि। उ॰ २. १२२.। उस्। नित्त्वादाद्युदात्तः। हितः। धाञो धातोर्निष्ठेति क्तप्रत्ययः। दधातेर्हिरिति हिरादेशः। मनुषा हितो मनुर्हितः। कर्तृकरणे कृता बहुलमिति समासः। क्तस्वरापवादेन तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। सीदसि। षद्लृ विशरणगत्यवसादनेषु। लटः सिप्। शपि पाघ्राध्मेत्यादिना सीदादेशः। निघातः। सेममित्यत्र संहितायां सोऽचि लोपे चेत्पादपूरणं। पा॰ ६. १. १३४.। इति

सोर्लोपे गुणः । अध्वरं । न विद्यते ध्वरो हिंसा यस्मिन्सोऽध्वरः । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । नो अध्वरमित्यत्र संहितायामेङः पदांतादति ।पा॰ ६. १. १०९.। इति पूर्वरूपं प्राप्तं प्रकृत्यांतःपादमव्यपर इति प्रकृतिभावान्निवर्तते ॥

युक्ष्वा ह्यरुषी रथे हरितो देव रोहितः । ताभिर्देवाँ इहा वह ॥१२॥

युक्ष्व । हि । अरुषीः । रथे । हरितः । देव । रोहितः । ताभिः । देवान् । इह । आ । वह ॥१२॥

हे देवाग्ने रोहितो रोहिच्छब्दाभिधेयास्त्वदीया वडवा रथे युक्ष्व । योजय । हिशब्दः पादपूरणार्थः । कीदृशीः । अरुषीर्गतिमतीर्हरितो हर्तुं रथारूढान्पुरुषान्नेतुं समर्थाः । ताभिर्वडवाभिरिहास्मिन्कर्मणि देवाना वह ॥ युक्ष्व । युजिर् योगे । लोट् । स्वरितेत्त्वादात्मनेपदं । थासः से । सवाभ्यां वामौ । रुधादिभ्यः श्नम् । तस्य बाहुलकाल्लुक् । कुत्वषत्वे । प्रत्ययस्वरेणांतोदात्तः । संहितायां द्व्यचोऽतस्तिङ इति दीर्घः । अरुषीः । ऋ गतौ । रंति गच्छंतीत्यरुष्यो वडवाः । ऋहनिभ्यामुषन् ।उ॰ ४. ७३.। धातोर्गुणो रपरत्वं । नित्त्वादाद्युदात्तो ऽरुषशब्दः । तस्मात्स्त्रियां छांदसो ङीप् । शसि प्रथमयोः पूर्वसवर्णः ।पा॰ ६. १. १०२.। इति दीर्घः । रथे । रमेरौणादिकः क्थन्प्रत्ययः । निन्त्वादाद्युदात्तः । हरितः । हृसृरुहियुषिभ्य इतिः ।उ॰ १. ९९.। इति हरतेरिति-प्रत्ययः । इकारः प्रत्ययस्वरेणोदात्तः । रोहितः । रुहेरपि तेनैव सूत्रेणेतिः । इकारः प्रत्ययस्वरेणोदात्तः । ताभिः । साविकाच इति विभक्तेः प्राप्तमुदात्तत्वं सावर्वर्णेति निषिध्यते । देवानित्यत्र पूर्ववद्रुत्वानुना-सिकौ ॥ ॥२७॥

इंद्र सोममित्यादिकस्य द्वादशर्चस्य चतुर्थस्य सूक्तस्य ऋषिश्छंदसी पूर्ववत् । यद्यप्येतत्सूक्तं कृत्स्नमृतुदेवताकं तथापि प्रत्यृचमिंद्रादिदेवतांतराणि मिलितानि । तथा चानुक्रम्यते । इंद्र सोममृतव्यं तत्रैंद्री मारुती त्वाष्ट्राग्नेय्यैंद्री मैत्रावरुणी चतस्रो द्रविणोदस आश्विन्याग्नेय्यृतुदेवताः सर्वत्रेति ॥ विनियोगस्तु स्मार्तो द्रष्टव्यः ॥

इंद्र सोमं पिब ऋतुना त्वा विशंत्विंदवः । मत्सरासस्तदोकसः ॥१॥

इंद्र । सोमं । पिब । ऋतुना । आ । त्वा । विशंतु । इंदवः । मत्सरासः । तत्ऽओकसः ॥१॥

हे इंद्र ऋतुना सह सोमं पिब । इंदवः पीयमानाः सोमास्त्वा त्वामा विशंतु । कीदृशाः । मत्सरासस्तृप्तिकराः तदोकसस्तन्निवासाः । सर्वदा त्वदुदरनिवासिन इत्यर्थः ॥ इंद्र । षाष्ठिकमामंत्रिताद्युदात्तत्वं । सोमं । अर्तिस्तुसुहुसृधृक्षि इत्यादिना मन् । निन्त्वादाद्युदात्तः । पिब । पिबा मित्रस्य ।ऋग्वे॰ १. १४. १०.। इत्यत्रोक्तं । अस्या त्वा विशंत्वित्युत्तरवाक्यगताख्यातार्थेन सह समुच्चयार्थश्चशब्दो लुप्तः । अतश्चादिलोपे विभाषेतीयं प्रथमा तिङ्विभक्तिर्न निहन्यते । विशंत्विति चलोपसाम्येऽपि द्वितीयत्वान्निहन्यत एव । सांहितिके गुणे प्राप्ते इति प्राप्तस्य गुणस्य ऋत्यकः ।पा॰ ६. १. १२८.। इति शाकल्यमते प्रकृतिभावादभावः । इंदवः । प्र वो भ्रियंते ।ऋग्वे॰ १. १४. ४.। इत्यत्रोक्तं । मत्सरासः । तत्रैवोक्तं । आज्जसेरसुगित्यसुक् । तदोकसः । तदेवौकः स्थानं येषां ते तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

मरुतः पिबत ऋतुना पोत्राद्यज्ञं पुनीतन । यूयं हि ष्ठा सुदानवः ॥२॥

मरुतः । पिबत । ऋतुना । पोत्रात् । यज्ञं । पुनीतन । यूयं । हि । स्थ । सुऽदानवः ॥२॥

हे मरुतः ऋतुना सह पोत्रात्पोतृनामकस्य ऋत्विजः पात्रात्सोमं पिबत । ततोऽस्मदीयं यज्ञं पुनीतन । शोधयत । हे सुदानवः शोभनदातारो मरुतः । हि यस्माद्यूयं स्थ युष्माकं शोधयितृत्वं प्रसिद्धं । तस्माच्छोधयतेत्यर्थः ॥ पिबत । अत्र तिङोऽदुपदेशाल्लसार्वधातुकानुदात्तत्वं । धातुस्वरः । पूर्वामंत्रितस्याविद्यमानवत्त्वेन पदादपरत्वान्निघाताभावः । पूर्ववत्प्रकृतिभावः । पोत्रात् । पोतुः संबंधि पात्रं पोत्रं । तस्येदमित्यण् । तद्धितेष्वचामादेः ।पा॰ ७. २. ११७.। इति प्राप्ता वृद्धिः सर्वे विधयश्छंदसि विकल्प्यंत इति न भवति । नन्वेवमप्यत उपधाया ऋकारस्याचो ञ्णिति ।पा॰ ७. २. ११५.। इति वृद्धिः प्राप्नोति । त्वाष्ट्रो जागत इत्यत्र हि विप्र-

तिषेधे परं कार्यं । पा॰ १. ४. २. । इति परयादिवृद्ध्यांत्योपधलक्षणा वृद्धिर्बाध्यत इत्युक्तं । इह तु परस्या आदिवृद्धेश्छांदसत्वेन निवृत्तत्वादंत्यवृद्धिः प्राप्नोत्येवेति । एवं तर्ह्यचाप्यादिवृद्धिरौकारः क्रियतां । तस्य तु छांदस ओकारो भविष्यति । पुनीतन । पूञ् पवने । लोट् । लोटो लङ्वत् । पा॰ ३. ४. ८५. । इति लङ्वद्भावात्तस्य तस्थस्थमिपामिति तादेशः । क्र्यादिभ्यः श्ना । ई हल्यघोरितीकारः । तप्तनप्तनथनाश्चेति तनादेशः । प्वादीनां ह्रस्व इति ह्रस्वः । प्रत्ययद्वयस्यापि सार्वधातुकमपिदिति ङित्त्वात्स्वस्वपूर्वस्य गुणाभावः । यूयं । युष्मदः परस्य जसो ङेप्रथमयोरम् । पा॰ ७. १. २८. । इत्यमादेशः । न विभक्तौ तुस्माः । पा॰ १. ३. ४. । इति मकारस्येत्संज्ञाप्रतिषेधः । यूयवयौ जसि । पा॰ ७. २. ९३. । इति मपर्यंतस्य यूयादेशः । शेषे लोपः । अत्र यूयादेशात्प्रागेवांतरंगत्वात्प्रातिपदिकस्यांतोदात्तत्वं । शेषनिघातः । ततो यूयादेशः स्थानेऽंतरतमः । पा॰ १. १. ५०. । इति सर्वानुदात्तः । तत्र शेषे लोपोऽंत्यलोप इति पक्षे पूर्वसवर्णदीर्घत्वं बाधित्वा योऽयममि पूर्वः । पा॰ ६. १. १०७. । इति प्रातिपदिकांतेनोदात्तेन सहानुदात्तस्य सुप एकादेशः स एकादेश उदात्तेनोदात्त इत्युदात्तः । टिलोपपक्षे तूदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं । स्थ । अस भुवि । लटो मध्यमबहुवचनं थ । अदिप्रभृतिभ्यः शप इति शपो लुक् । श्नसोरल्लोप इत्यकारलोपः । व्यत्ययेन षत्वं । हि चेति निषेधात्तिङ्ङतिङ इति निघातो न भवति । संहितायामन्येषामपि दृश्यत इति दीर्घत्वं । अत्र हे सुदानवो यूयं हि स्थेति विवक्षितं । सुदानवः । दाभाभ्यां नुः । उ॰ ३. ३२. । सोः प्रादिसमासः । आमंत्रितनिघातः । अत्र यूयमित्युद्दिश्य सुदानवः स्थेति न विधीयते येनामंत्रितनिघातो न स्यात् । किंतु सुदानव इति सिद्धवदातृत्वेन संबोध्य तेषु तेषु मारुतसूक्तेषु मरुतां प्रसिद्धात्मभावातिशयायूयं स्थेति युष्मच्छब्देन प्रतिनिर्दिश्य पुनीतनेति प्रार्थने पवने तेषां हेतुत्वं हिशब्देनोच्यते ॥

अभि यज्ञं गृणीहि नो ग्नावो नेष्टः पिब ऋतुना । त्वं हि रत्नधा असि ॥ ३ ॥

अभि । यज्ञं । गृणीहि । नः । ग्नावः । नेष्टरिति । पिब । ऋतुना । त्वं । हि । रत्नऽधाः । असि ॥ ३ ॥

ग्नाशब्दः स्त्रीवाची । तथा च यास्क आह । मेना ग्ना इति स्त्रीणां मेना मानयंत्येना ग्ना गच्छंत्येनाः । नि॰ ३. २१. । इति । ग्ना अस्य संतीति ग्नावान् । नेष्टृशब्दोऽत्र त्वष्टारं देवमाह । कस्मिंश्चिद्देवसत्रे नेष्टृत्वेन त्वष्टुर्वृत्तत्वात् । हे ग्नावः पत्नीयुक्त नेष्टः त्वष्टः । नोऽस्मदीयं यज्ञमभि गृणीहि । अभितो देवानां समीपे स्तुहि । ऋतुना सह त्वं सोमं पिब । हि यस्मात्त्वं रत्नधा असि रत्नानां दातासि दाता भवसि तस्मात्सोमं पातुमर्हसीत्यर्थः ॥ अभि । उपसर्गाश्चाभिवर्जं । फि॰ ४. १३. । इति पर्युदासादभेरंतोदात्तत्वं । गृणीहि । गॄ शब्दे । लोटि सिपो हिः । क्र्यादिभ्यः श्ना । ईर्ङित्त्वादी हल्यघोरितीत्वं । श्नाप्रत्ययस्य ङित्त्वाद्गुणाभावः । प्वादीनां ह्रस्वः । तिङ्ङतिङ इति निघातः । ग्ना अस्य संतीति मतुप् । व्यत्ययेन वत्वं । संबुद्धौ मतुवसो रुरिति रुत्वं । विसर्गः । पादादित्वेनामंत्रितनिघाताभावात् पाष्ठिकमामंत्रितायुदात्तत्वं । ग्नाव इत्यस्य विशेषणतया विशेषवचनत्वान्नामंत्रिते समानाधिकरण इति निषेधाभावादविद्यमानवत्त्वेनोत्तरस्य नेष्टृशब्दस्य षाष्ठिकमायुदात्तत्वं । पिब । शपः पित्त्वाद्धातुस्वरः । पूर्वयोरामंत्रितयोरविद्यमानवत्त्वेन निघाताभावः । रत्नानि दधातीति रत्नधाः । क्विपेति क्विप् । धातुस्वरः । समासे क्रदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । असि । सिपः पित्त्वाद्धातुस्वरः । तिङ्ङतिङ इति निघातो न भवति हि चेति प्रतिषेधात् ॥

अग्ने देवाँ इहा वह सादया योनिषु त्रिषु । परि भूष पिब ऋतुना ॥ ४ ॥

अग्ने । देवान् । इह । आ । वह । सादय । योनिषु । त्रिषु । परि । भूष । पिब । ऋतुना ॥ ४ ॥

हे अग्ने देवानिहास्मिन्यज्ञे आ वह । ततो योनिषु स्थानेषु त्रिषु सवनेषु सादय । देवानुपवेशय । ततस्तान्परि भूष । अलंकुरु । ऋतुना सह त्वं सोमं पिब ॥ अग्ने देवानित्ययं पादो गतः । योनिषु । यु मिश्रणे । वहिश्रीत्यादिना । उ॰ ४. ५१. । निप्रत्ययः । नित्त्वादाद्युदात्तः । त्रिषु । षट्त्रिचतुर्भ्यो हलादिः । पा॰ ६. १. १७९. । इति विभक्तेरुदात्तत्वं । भूष अलंकारे । तिङ्ङतिङ इति निघातः । पिब ऋतुना । गतौ ॥

ब्राह्मणादिंद्र राधसः पिबा सोममृतूँरनु । तवेद्धि सख्यमस्तृतं ॥५॥
ब्राह्मणात् । इंद्र । राधसः । पिब । सोमं । ऋतून् । अनु । तव । इत् । हि । सख्यं । अस्तृतं ॥५॥

हे इंद्र ब्राह्मणाद्ब्राह्मणाच्छंसिसंबद्धाद्राधसो धनभूतात्पात्रात्सोमं पिब । किं कृत्वा । ऋतूननु ऋतुदेवाननुसृत्य । ऋतवोऽपि पिबंत्वित्यर्थः । हि यस्मात्तवेत्तव सख्यमस्तृतमृतूनामविच्छिन्नं तस्मादृतुभिः सह पानं युक्तं ॥ ब्राह्मणात् । ब्रह्मशब्देनात्र ब्रह्मवर्गे द्वितीयो ब्राह्मणाच्छंसी कथ्यते । स च पुँल्लिंगे शेषनिघातेनानुदात्तादिः । तस्य संबंधुत्तष्टस्त्रमसः । स च तस्यैवावयववन्नियत इत्यवयवविवक्षायामनुदात्तादेरञ् । पा॰ ४. २. ४४. । तेन ञित्त्वादाद्युदात्तश्चमसपरोऽत्र ब्राह्मणशब्दः । राधसः । सर्वधातुभ्योऽसुन् । नित्त्वादाद्युदात्तः । पिब । पादादित्वादाद्युदात्तत्वं । द्व्यचोऽतस्तिङ इति दीर्घत्वं । ऋतूँरन्वित्यत्र दीर्घादटि समानपाद इति नकारस्य रुत्वं । अत्रानुनासिकः पूर्वस्य तु वा । पा॰ ८. ३. २. । इत्यूकारस्यानुनासिकत्वं । तव । युष्मदस्मद्भ्यां ङसोऽश् । पा॰ ७. १. २७. । शित्त्वात्सर्वादेशः । तवममौ ङसीति तवादेशः । युष्मदस्मदोर्ङसीत्याद्युदात्तत्वं । सख्यं । सख्युः कर्म सख्यं । सख्युर्यः । यस्येति लोपः । प्रत्ययस्वरः । अस्तृतं । स्तृणातेर्हिंसार्थस्य क्तः । नञ्समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वं ॥

युवं दक्षं धृतव्रत मित्रावरुण दूळभं । ऋतुना यज्ञमाशाथे ॥६॥
युवं । दक्षं । धृतऽव्रता । मित्रावरुणा । दुःऽदभं । ऋतुना । यज्ञं । आशाथे इति ॥६॥

हे धृतव्रता स्वीकृतकर्माणौ मित्रावरुणा हे मित्रनामकवरुणनामकौ देवौ युवमुभौ युवामृतुना सहास्मदीयं यज्ञमाशाथे । व्याप्नुथः । कीदृशं यज्ञं । दक्षं प्रवृद्धं दूळभं दुर्दहं । शत्रुभिर्दग्धुं विनाशयितुम[illegible]र्थः ॥ युवं । प्रथमाद्विवचनस्य ङेप्रथमयोरमित्यमादेशः । युवावौ द्विवचने । पा॰ ७. २. ९२. । इति मपर्यंतस्य युवादेशः । शेषे लोप इति टिलोपोऽंत्यलोपो वा । अमि पूर्वत्वं । भाषायामेव ह्यात्वं । टिलोपपक्ष उदात्तनिवृत्तिस्वरेणाम उदात्तत्वं । अंत्यलोपपक्ष एकादेश उदात्तः । दक्षं । दक्ष वृद्धौ । दक्षंत्यनेनेति करणे घञ् । एवं हि पुँल्लिंगत्वनियमः । अन्यस्यानियम इति नपुंसकत्वं । धृतव्रता मित्रावरुणा । धृतानि व्रतानि याभ्यां तौ धृतव्रतौ । मित्रस्य वरुणस्य मित्रावरुणौ । उभयत्र सुपां सुलुगित्यादिना विभक्तेराकारः । मित्रशब्दस्य देवताद्वंद्वे चेत्यानङादेशः । प्रथमस्यामंत्रितनिघातः । द्वितीयस्य पादादित्वादाद्युदात्तत्वं । संहितायां छांदसं ह्रस्वत्वं । दूळभं । दह भस्मीकरणे । दुःखेन दह्यत इति दुर्दहं । ईषद्दुःसुष्वित्यादिना । पा॰ ३. ३. १२६. । दुर्युपपदे दग्धेः खल् । व्यत्ययो बहुलमित्युकारस्य ऊकारो रेफस्य लोपो दकारस्य डकारो हकारस्य च भकारः । लितीति प्रत्ययात्पूर्वमुदात्तत्वं । कृदुत्तरपदत्वेन स एव शिष्यते । आशाथे । अशू व्याप्तौ । छंदसि लुङ्लङ्लिट इति वर्तमाने लिट् । मध्यमद्विवचनमाथां । टेरेत्वं । अत आदेः । पा॰ ७. ४. ७०. । इत्यभ्यासस्य दीर्घः । अश्नोतेश्च । पा॰ ७. ४. ७२. । इति प्राप्तो नुडागमोऽनित्यमागमशासनमिति निवर्तते ॥ ॥२८॥

द्रविणोदा द्रविणसो ग्रावहस्तासो अध्वरे । यज्ञेषु देवमीळते ॥७॥
द्रविणःऽदाः । द्रविणसः । ग्रावऽहस्तासः । अध्वरे । यज्ञेषु । देवं । ईळते ॥७॥

अध्वरेऽग्निष्टोमे प्रकृतिरूपे यज्ञेषु विकृतिरूपेषूकथ्यादिषु च देवमग्निमीळते । ऋत्विजः स्तुवंति । कीदृशा ऋत्विजः । द्रविणसो धनार्थिनो ग्रावहस्तासोऽभिषवसाधनपाषाणधारिणः । कीदृशं देवं । द्रविणोदा धनप्रदं । यद्वा । धनप्रदोऽग्निः सोमं पिबत्विति शेषः । तमेतं मंत्रं यास्क एवं निर्वक्ति । द्रविणोदाः कस्माद्धनं द्रविणमुच्यते यदेनदभिद्रवंति बलं वा द्रविणं यदेनेनाभिद्रवंति तस्य दाता द्रविणोदास्तस्यैषा भवति । द्रविणोदा द्रविणस इत्यादि । नि॰ ८. १. । सोऽयं यास्कोक्तो निर्वचनप्रपंचस्त[illegible]स्मिन्नेव ग्रंथेऽवगंतव्यः ॥ द्रविणोदाः । द्रुदक्षिभ्यामिनन् । उ॰ २. ५०. । नित्त्वादाद्युदात्तो द्रविणशब्दः । तद्ददातीति द्रविणोदाः । क्विब्वेति

क्विप्। पूर्वपदस्य सकारोपजनश्छांदसः। त्वलोले। क्रदुत्तरपदप्रकृतिस्वरत्वं। देवविशेषणत्वेनैकवाक्यतापचे द्वितीयायाः स्वादेशः। अथवा द्रविणमात्मन इच्छंति द्रविणस्यंति। सुप आत्मनः क्यच्। सर्वप्रातिपदिकेभ्यो लालसायां सुग्वक्तव्यः। म० ७. १. ५१. २.। इति क्यचि परतः सुगागमः। द्रविणस्यतेः संपदादित्वाद्भावे क्विप्। अतो लोपः। क्वौ लुप्तं न स्थानिवद्भवति। म० १. १. ५८. २.। इति तस्य स्थानिवत्त्वप्रतिषेधाद्यलोपः। एवं द्रविणस्शब्दो धनेच्छावचनः। द्रविणेच्छां दस्यति यथेष्टधनप्रदानेनोपचयपयतीत्यर्थे दसु उपचय इत्यस्मादं-तर्भावितण्यर्थात्क्विचेति क्विप्। एवं द्रविणोदःशब्दः सकारांतो भवति। तथा द्राविणोदसाः प्रवादा भवंतीति नैरुक्तो व्यवहार उपपद्यते। नि० ८. २.। अतो द्रविणोदस्शब्दो भिन्नवाक्यत्वे स्वार्थे प्रथमा। एकवाक्यत्वे तु व्यत्ययेन द्वितीयार्थो भवति। द्रविणस इत्यत्रापि वाक्यभेदपचे द्रविणसः सोमस्येत्यर्थे सकारोपजनश्छांदसः। आद्युदात्तत्वं तु नियमेन स्थितं। ऋत्विग्विशेषणत्वेनैकवाक्यत्वपचे तु क्यजंतात्क्विप्। अतो लोपादि पूर्ववत्। अत्र तु पचे क्यचश्चित्त्वेनांतोदात्तत्वे प्राप्ते व्यत्ययेनाद्युदात्तत्वं। ग्रावयुक्ता हस्ता येषां ते ग्रावहस्तासः। आज्जसेरसुक्। ग्रावशब्दो वृषादित्वादाद्युदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। अध्वरे। न विद्यते ध्वरो हिंसा यस्मिन्। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। ईळते। अनुदात्तेत्त्वादात्मनेपदं। अदिप्रभृतिभ्य इति शपो लुक्। झस्यादादेशः॥

द्रविणोदा ददातु नो वसूनि यानि शृण्विरे। देवेषु ता वनामहे ॥८॥

द्रविणःऽदाः। ददातु। नः। वसूनि। यानि। शृण्विरे। देवेषु। ता। वनामहे ॥८॥

द्रविणोदा देवो नोऽस्मभ्यं वसूनि धनानि ददातु यानि धनानि शृण्विरे हविरुपयुक्तत्वेन श्रूयंते। ता तानि च सर्वाणि धनानि देवेषु निमित्तभूतेषु वनामहे। संभजामः। धनैर्देवान्यष्टुं तानि स्वीकुर्म इत्यर्थः॥ द्रविणोदाः। गतं। वसूनि। शृस्वृस्निहीत्यादिना। उ० १. ११.। उप्रत्ययः। निदित्यनुवृत्तेराद्युदात्तः। शृण्विरे। श्रु श्रवणे। छंदसि लुङ्लङ्लिट इति वर्तमाने लिट्। इरयो रे। पा० ३. ४. ८१.। छंदस्युभयथेति सार्वधातुकत्वे व्यत्ययेन श्नुः। तत्संनियोगेन शृभावश्च। उवङि प्राप्ते हुश्नुवोः सार्वधातुके। पा० ६. ४. ८७.। इति यणादेशः। चित इत्यंतोदात्तत्वं। यद्वृत्तान्नित्यमिति निघातप्रतिषेधः। ता। शेश्छंदसि बहुलमिति शेर्लोपः। नलोपः प्रातिपदिकांतस्य। पा० ८. २. ७.। इति नलोपः। वनामहे। वन षण संभक्तौ। व्यत्ययेनात्मनेपदं॥

द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत। नेष्ट्रादृतुभिरिष्यत ॥९॥

द्रविणःऽदाः। पिपीषति। जुहोत। प्र। च। तिष्ठत। नेष्ट्रात्। ऋतुऽभिः। इष्यत ॥९॥

द्रविणोदा देव ऋतुभिः सह नेष्ट्रान्नेष्टृसंबंधिपात्रात्पिपीषति। सोमं पातुमिच्छति। ततो हे ऋत्विज इष्यत। होमस्थाने गच्छत। गत्वा च जुहोत। होमं कुरुत। हुत्वा प्र तिष्ठत च। होमस्थानात्स्थानांतरं प्रति प्रस्थानमपि कुरुत॥ द्रविणोदाः। गतं। पिपीषति। पा पाने। पातुमिच्छतीति सन्। छांदस ईकारः। तिङ्-तिङ इति निघातः। जुहोत। लोण्मध्यमबहुवचनं। तस्य लङ्वद्भावात्तादेशः। तस्य तप्तनप्तनथनाश्चेति तबादेशः। तस्य पित्त्वाद्गुणः। अभ्यस्तानामादिरित्यनुवृत्तावनुदात्ते च। पा० ६. १. १९०.। इत्याद्युदात्तत्वे प्राप्ते भीह्रीभृहुमदजनधनदरिद्राजागरां प्रत्ययात्पूर्वं पिति। पा० ६. १. १९२.। इत्योकार उदात्तः। तिष्ठत। ष्ठा गतिनिवृत्तौ। लोण्मध्यमबहुवचनस्य थस्य लङ्वद्भावात्तादेशः। शपि पाघ्राध्मेत्यादिना तिष्ठादेशः। समवप्र-विभ्यः स्थः। पा० १. ३. २२.। इत्यात्मनेपदं न भवति। तत्रानुवृत्तस्य निर्दिष्टग्रहणस्यानंतर्यार्थत्वात्। अत्र चशब्देन व्यवधानात्ते प्राग्धातोः। पा० १. ४. ८०.। इत्युपसर्गत्वेन प्राक्प्रयोक्तव्यस्यापि प्रशब्दस्य व्यवहिताश्चेति छंदसि व्यवहितप्रयोगः। अत्र चशब्दो जुहोतेति पूर्वेण सह समुच्चयार्थः। न पुनरिष्यतेत्युत्तरेण। तेना-प्रथमत्वाच्चवायोगे प्रथमा। पा० ८. १. ५९.। इति निषेधाभावात्तिङ्ङतिङ इति निघातः। नेष्ट्रात्। पो-त्रादयं पुनीतन। ऋग्वे० १. १५. २.। इत्यत्र पोत्रशब्देन यदुक्तं तदत्र द्रष्टव्यं। इष्यत। इष गतौ। लोण्म-ध्यमबहुवचनं॥

यत्त्वा तुरीयमृतुभिर्द्रविणोदो यजामहे। अध स्मा नो ददिर्भव ॥१०॥

यत्। त्वा। तुरीयं। ऋतुऽभिः। द्रविणःऽदः। यजामहे। अध। स्म। नः। ददिः। भव ॥१०॥

हे द्रविणोदो देव यद्यस्मात्कारणादृतुभिः सह त्वां यजामहे। अधेत्ययं निपातस्तच्छब्दार्थः। तस्मात्कारणान्नोऽस्मभ्यं ददिर्धनस्य दाता भव स्म। अवश्यं भव। तुरीयं चतुर्णां पूरणं ॥ तुरीयं। चतुरश्छयतावाद्यक्षरलोपश्च।पा० ५. २. ५१. १.। इति छप्रत्ययः। तस्य प्रत्ययस्वरेणोदात्तात्प्रागेवायनेयीनित्यादिना।पा० ७. १. २.। ईयादेशः। आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थं।पा० ७. १. २. १.। इति वचनात्कृत आदेशे प्रत्ययस्वरेणेकार उदात्तः। द्रविणोदः। उक्तं। पादादित्वादामंत्रिताद्युदात्तत्वं। यजामहे। अत्र शपः पित्त्वेन तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव। पूर्वस्यामंत्रितस्याविद्यमानवत्त्वाद्यद्वृत्तयोगाद्वा न निघातः। व्यवहितयोगेऽपि हि स निषेध इत्युक्तं। अध। छांदसो धकारः। स्म। चादिरनुदात्तः। संहितायां निपातस्य चेति दीर्घः। ददिः। डुदाञ् दाने। आदृगमहनजनः किकिनौ लिट् च।पा० ३. २. १७१.। इति किप्रत्ययः। लिड्वद्भावाद्द्विर्वचनादि। आतो लोप इटि च।पा० ६. ४. ६४.। इत्याकारलोपः। प्रत्ययस्वरः ॥

अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता। ऋतुना यज्ञवाहसा ॥११॥

अश्विना। पिबतं। मधु। दीद्यग्नी इति दीदिऽअग्नी। शुचिऽव्रता। ऋतुना। यज्ञऽवाहसा ॥११॥

हे अश्विनौ मधु माधुर्योपेतं सोमं पिबतं। कीदृशौ। दीद्यग्नी द्योतमानाहवनीयाद्यग्नियुक्तौ शुचिव्रता शुद्धकर्माणौ ऋतुना ऋतुदेवतया सह यज्ञवाहसा यज्ञस्य निर्वाहकौ ॥ अश्विना। संबोधनद्विवचनस्य सुपां सुलुगित्याकारः। आमंत्रिताद्युदात्तः। पिबतं। शपः पित्त्वादनुदात्तत्वं। तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते। मधु। [illegible]।उ० १. १९.। उप्रत्ययः। निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तः। दीद्यग्नी। दिवु क्रीडादौ। अन्येभ्योऽपि दृश्यंत इति विच्। वेरपृक्तलोपाद्वलि लोपो बलीयानिति प्रथमवकारस्य लोपः।पा० ६. १. ६६–६७.। प्रथमं प्रत्ययलोपे हि वर्णाश्रयविधौ प्रत्ययलक्षणं नास्ति।परि० २१.। इति निषेधाद्वलि लोपो न स्यात्। छांदसं द्विर्वचनं। तुजादित्वादभ्यासस्य दीर्घत्वं। यङ्लुगंताद्वा संज्ञापूर्वको विधिरनित्य इत्यभ्यासस्य गुणाभावः। दीदिरग्निर्ययोस्तौ दीद्यग्नी। आमंत्रिताद्युदात्तत्वं। छांदसत्वान्न निघातः। शुचिव्रता। शुचि व्रतं ययोस्तौ। सुपां सुलुगित्याकारः। दीद्यग्निशब्दस्य सामान्यवचनत्वेन नामंत्रित इत्यविद्यमानवत्त्वप्रतिषेधादाष्टमिकनिघातत्वं। पूर्वस्य परांगवद्भावादैकस्वर्यं। यज्ञवाहसा। वह प्रापणे। यज्ञं वहत इति यज्ञवाहसौ। वहिहाधाञ्भ्यश्छंदसि।उ० ४. २२०.। इत्यसुन्। तत्र हि गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेति वचनात्सोपपदानामपि भवति।उ० ४. २२६.। इत्युक्तं। णिदित्यनुवृत्तेरुपधावृद्धिः। सुपां सुलुगित्यादिना विभक्तेराकारः। आमंत्रितनिघातः। असामर्थ्यात्पूर्वस्य न परांगवद्भावः ॥

गार्हपत्येन सन्त्य ऋतुना यज्ञनीरसि। देवान्देवयते यज ॥१२॥

गार्हऽपत्येन। सन्त्य। ऋतुना। यज्ञऽनीः। असि। देवान्। देवऽयते। यज ॥१२॥

हे संत्य फलप्रदाग्निदेव गार्हपत्येन गृहपतिनाग्निना रूपेण युक्तः सन् ऋतुना ऋतुदेवेन सह यज्ञनीर्यज्ञस्य निर्वाहकोऽसि। तस्मात्त्वं देवयते देवविष[illegible] यजमानाय देवान्यज ॥ गार्हपत्येन। गृहपतिना संयुक्ते ञ्यः।पा० ४. ४. ९०.। यस्येति लोपः। ञित्त्वादादिवृद्धिराद्युदात्तत्वं च। गृहपतित्वमित्यर्थे पत्यंतपुरोहितादिभ्यः।पा० ५. १. १२८.। इति यकि त्वंतोदात्तत्वं स्यात्। संत्य। सनने भव। षणु दाने। क्तिच्क्तौ चेति क्तिच्। न क्तिचि दीर्घश्च।पा० ६. ४. ३९.। इति दीर्घनलोपाभावः। भवे छंदसि।पा० ४. ४. ११०.। इति यत्। तत्र साधुः।पा० ४. ४. ९८.। इति वा। निघातः। यज्ञं नयतीति यज्ञनीः। सत्सूद्विषेत्यादिना क्विप्। ह्रस्वदुत्त-

रपदप्रकृतिस्वरः । देवयते । देवानात्मन इच्छतीति देवयन् । तस्मै । क्यचि चेतीत्वं न भवति । न च्छंदस्यपुत्र-स्येति निषेधात् । अश्वाघस्य । पा० ७. ४. ३७. । इत्यात्वविधानादीत्वनिषेधे प्राप्तस्य दीर्घस्याथेष निषेध इत्युक्तं । शतुरनुमो नद्यजादी इति विभक्तेरुदात्तत्वं । अत्र क्यचश्चित्वादंतोदात्तत्वं । शपः पित्वादनुदात्तत्वं । शतुश्च लसार्वधातुकस्वरेणोभयोः क्यचा सहैकादेश एकादेश उदात्तेनोदात्त इत्युदात्तः । तस्मादंतोदात्तत्वात्परस्या विभक्तेः शतुरनुमो नद्यजादी इत्युदात्तत्वं ॥ ॥ २९ ॥

आ त्वा वहंत्विति पंचमं नवर्चं सूक्तं । ऋषिश्छंदसी पूर्ववत् । अनुवर्तते विशेषादेशाभावादिंद्रो देवता ॥ विनियोगस्तु । प्रातःसवने मैत्रावरुणस्योन्नीयमाने सूक्तमा त्वा वहंतु हरय इति । तथा च द्विदेवत्यैश्चरंतीति खंडे सूचितं । उन्नीयमानेभ्योऽन्वाहा त्वा वहंतु । आ० ५. ५. । इति ॥ तथा षोडशिशस्त्र आ त्वा वहंतु हरय इति तिस्रः । तथा सूचितमथ षोडशीति खंडे । आ त्वा वहंतु हरय इति तिस्रो गायत्र्यः । आ० ६. २. । इति ॥

## आ त्वा वहंतु हरयो वृषणं सोमपीतये । इंद्रं त्वा सूरचक्षसः ॥ १ ॥

## आ । त्वा । वहंतु । हरयः । वृषणं । सोमऽपीतये । इंद्रं । त्वा । सूरऽचक्षसः ॥ १ ॥

हे इंद्र वृषणं कामानां वर्षितारं त्वां सोमपीतये सोमपानार्थं हरयस्त्वदीया अश्वा आ वहंतु । अस्मिन्कर्मण्यानयंतु । तथा सूरचक्षसः सूर्यसमानप्रकाशयुक्ता ऋत्विजस्त्वां मंत्रैः प्रकाशयंत्विति शेषः ॥ हरंतीति हरयः । इन् सर्वधातुभ्यः । उ० ४. ११७. । इतीन् । नित्वादाद्युदात्तः । वृषणं । कनिन्युवृषितक्षीत्यादिना कनिन् । कित्वाल्लघूपधगुणाभावः । वा षपूर्वस्य निगमे । पा० ६. ४. ९. । इति विकल्पितमुपधादीर्घत्वं । सोमपीतये । ऐभिरग्न इत्यत्रोक्तं । ऋग्वे० १. १४. १. । सूरचक्षसः । चक्षिङ् व्यक्तायां वाचि । सर्वधातुभ्योऽसुन् । चक्षिङः ख्याञ् । पा० २. ४. ५४. । इति न भवति । असनोः प्रतिषेधो वक्तव्य इति निषेधात् । षू प्रेरणे । सुवतीति सूरः । सुसूधागृधिभ्यः क्रन् । उ० २. २४. । इति क्रन् । कित्वाद्गुणाभावः । नित्वादाद्युदात्तः । सूरवत्ख्यानं प्रकाशो येषां । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

## इमा धाना घृतस्नुवो हरी इहोप वक्षतः । इंद्रं सुखतमे रथे ॥ २ ॥

## इमाः । धानाः । घृतऽस्नुवः । हरी इति । इह । उप । वक्षतः । इंद्रं । सुखऽतमे । रथे ॥ २ ॥

हरिशब्द इंद्ररथस्य वोढारावश्वावाचष्टे । तथा च श्रुत्यंतरं । हर्योः स्थातेति । हरिभ्यां त्विंद्रो देवतां गमयत्विति च । एतदेवाभिप्रेत्य निघंटुकार आह । हरी इंद्रस्येति । तादृशौ हरी इमा यागार्थं वेद्यामासादितत्वेन पुरोवर्तिनीर्धाना भ्रष्टयवतंडुलानुद्दिश्य सुखतमे रथ इंद्रमवस्थाप्येहास्मिन्कर्मण्युप वक्षतः । वेदिसमीपे वहतां । कीदृशीर्धानाः । घृतस्नुवोऽलंकरणोपस्तरणाभिघारणेन घृतस्राविणीः ॥ धीयंत इति धानाः । धाप्वस्यज्यतिभ्यो नः । उ० ३. ६. । इति नः । प्रत्ययस्वरः । घृतस्नुवः । घृतं स्नुवंतीति घृतस्नुवः । क्विपि तुगभावश्छांदसः । धातुस्वरः । समासे कृदुत्तरपदप्रकृतिस्वरत्वं । स्नोः संयोगपूर्वत्वेन यणभावादुवङादेशः । हरी । हृञ् हरणे । सर्वधातुभ्य इन् । नित्वादाद्युदात्तः । प्रगृह्यत्वात्संहितायां प्रकृतिभावः । वक्षतः । प्रार्थनायां लिङर्थे लेट् । तस्य प्रथमपुरुषद्विवचनं तस् । लेटोऽडाटावित्यडागमः । शपि प्राप्ते सिब्बहुलं लेटीति सिप् । ढत्वकुत्वषत्वानि । तिङ्ङतिङ इति निघातः । सुखतमे । गतं ॥

## इंद्रं प्रातर्हवामह इंद्रं प्रयत्यध्वरे । इंद्रं सोमस्य पीतये ॥ ३ ॥

## इंद्रं । प्रातः । हवामहे । इंद्रं । प्रऽयति । अध्वरे । इंद्रं । सोमस्य । पीतये ॥ ३ ॥

प्रातः कर्मारंभे प्रातःसवन इंद्रं हवामहे । आह्वयामः । तथैवाध्वरे सोमयागे प्रयति प्रगच्छति प्रारभ्य वर्तमाने सति माध्यंदिने सवने तमिंद्रं हवामहे । तथा यज्ञसमाप्त्यवसरे तृतीयसवने सोमस्य पीतये सोमपानार्थं हवामहे ॥ प्रातः । स्वरादिष्वंतोदात्तो निपातितः । हवामहे । ह्वेञो लटि शपि परतो ह्वः संप्रसारणमित्यनुवृत्तौ बहुलं छंदसीति संप्रसारणं । परपूर्वत्वं । गुणावादेशौ । प्रयति । इण् गतौ । लटः शतृ । अदिप्रभृतिभ्यः शप इति शपो लुक् । शतुर्ङित्वाद्गुणाभावः । प्रादिसमासः । कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं

। परि॰ २८.। इति वचनात्प्रत्ययग्रहण इति नियमाभावात् शतुरनुमो नद्यजादी इति विभक्तेरुदात्तत्वं । अध्वरे । उक्तं । संहितायामुदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य । पा॰ ८. २. ४.। इत्यकारस्य स्वरितत्वं । पीतये । पा पाने । क्तिनि च्छांदसमंतोदात्तत्वं ॥

उप नः सुतमा गहि हरिभिरिंद्र केशिभिः । सुते हि त्वा हवामहे ॥ ४ ॥

उप । नः । सुतं । आ । गहि । हरिऽभिः । इंद्र । केशिऽभिः । सुते । हि । त्वा । हवामहे ॥ ४ ॥

हे इंद्र केशिभिः केसरयुक्तैर्हरिभिरश्वैस्त्वं नोऽस्मदीयं सुतमभिषुतं सोमं प्रत्युप समीप आ गहि । आगच्छ । सुतेऽभिषुते सोमे निमित्तभूते सति यस्मात्कारणात्त्वा हवामहे त्वामाह्वयामः । तस्मादागच्छेति पूर्वत्रान्वयः ॥ गहि । गमेर्लोटः सेर्हिः । शप इत्यनुवृत्तौ बहुलं छंदसीति शपो लुक् । इषुगमियमां छः । पा॰ ७. ३. ७७.। इति छत्वं न भवति । न लुमतांगस्येति प्रतिषेधात् । अनुदात्तोपदेशेत्यादि[illegible]लोपः । तस्यासिद्धवदत्रा भात् । पा॰ ६. ४. २२.। इत्यसिद्धत्वादतो हेरिति हेर्लुग्न भवति । केशिभिः । क्लिशेरन् लो लोपश्च । उ॰ ५. ३३.। इत्यन् । मत्वर्थीय इनिः । प्रत्ययस्वरः । हवामहे । ह्व इत्यनुवृत्तौ बहुलं छंदसीति संप्रसारणं । शपः पित्त्वादनुदात्तत्वं । तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव । तिङ्ङतिङ इति न निघातो हि चेति प्रतिषेधात् ॥

सेमं नः स्तोममा गह्युपेदं सवनं सुतं । गौरो न तृषितः पिब ॥ ५ ॥

सः । इमं । नः । स्तोमं । आ । गहि । उप । इदं । सवनं । सुतं । गौरः । न । तृषितः । पिब ॥ ५ ॥

हे इंद्र स त्वं नोऽस्मदीयमिमं स्तोमं स्तुतिं प्रत्या गहि । आगच्छ । आगमने हेतुरुच्यते । उप देवयजनसमीपे सुतमभिषुतसोमयुक्तमिदमिदानीमनुष्ठीयमानं सवनं प्रातःसवनादिरूपं कर्म वर्तते । तस्माद्गौरो न गौरमृग इव तृषितः सन्निमं सोमं पिब ॥ सः इममित्यत्र संहितायां सोऽचि लोपे चेत्पादपूरणं । पा॰ ६. १. १३४.। इति सुलोपः । गहि । गतं । सवनं । सूयतेऽस्मिन्सोम इत्यधिकरणे ल्युट् । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । ल्युडंतात्सप्तम्याः सुपां सुपो भवंतीति वक्तव्यं । म॰ ७. १. ३९.। इति वचनाद्द्वितीया । अभिषुतसोमयुक्तमिदं सवनमिति कर्मण्येव वा द्वितीया । तदा सुतशब्दादर्शआदित्वादच् । पा॰ ५. २. १२७.। तृषितः । ञितृष पिपासायां । निष्ठेति क्तः । प्रत्ययस्वरेणोदात्तः । पश्चादिट आगमा अनुदात्ता इत्यनुदात्तत्वं ॥ ॥ ३० ॥

इमे सोमास इंदवः सुतासो अधि बर्हिषि । ताँ इंद्र सहसे पिब ॥ ६ ॥

इमे । सोमासः । इंदवः । सुतासः । अधि । बर्हिषि । तान् । इंद्र । सहसे । पिब ॥ ६ ॥

इंदुशब्द उन्दी क्लेदन इति धातोरुत्पन्नः । इंदवः क्लेदनयुक्ता इमे वेद्यामवस्थिताः सोमासस्तत्पात्रगताः सोमा बर्हिषि यज्ञेऽध्याधिक्येन सुतासः । अभिषुताः । हे इंद्र सहसे बलार्थं तान्सोमान्पिब ॥ सोमासः । आज्जसेरसुगिति जसोऽसुगागमः । इंदवः । उक्तं । सुतासः । पूर्ववदसुक् । संहितायां प्रकृत्यांतःपादमव्यपर इति प्रकृतिभावात्परपूर्वत्वं न भवति । बर्हिषि । बृंहेर्नलोपश्च । उ॰ २. ११०.। इतीस् । प्रत्ययस्वरः । ताँ इंद्रेत्यत्र दीर्घादटि समानपाद इति रुत्वं । यत्वयलोपौ । अनुनासिकः । सहसे । षह मर्षणे । असुनंतो नित्त्वादाद्युदात्तः ॥

अयं ते स्तोमो अग्रियो हृदिस्पृगस्तु शंतमः । अथा सोमं सुतं पिब ॥ ७ ॥

अयं । ते । स्तोमः । अग्रियः । हृदिऽस्पृक् । अस्तु । शम्ऽतमः । अथ । सोमं । सुतं । पिब ॥ ७ ॥

हे इंद्र अयमस्माभिः क्रियमाणः स्तोमः स्तोत्रविशेषोऽग्रियः श्रेष्ठः सन् ते तव हृदिस्पृक् मनस्यंगीकृतः शंतमः सुखतमोऽस्तु । अथ स्तुतेरनंतरं सुतमभिषुतं सोमं पिब ॥ अग्रियः । अग्रादित्यनुवृत्तौ घच्छौ च । पा॰ ४. ४. ११७.। इति घच् । चित्त्वादंतोदात्तः । हृदि स्पृशतीति हृदिस्पृक् । स्पृशोऽनुदके क्विन् । पा॰ ३. २. ५८.।

तत्पुरुषे कृति बहुलं। पा॰ ६. ३. १४.। इत्यलुक्। क्विन्प्रत्ययस्य कुः। पा॰ ८. २. ६२.। इति शकारस्य कुत्वं। कृदुत्तरपदप्रकृतिस्वरत्वं। शंतमः। सुखकरद्रव्यवचनोऽत्र शंशब्दः। ततस्तमप्। अत्र सुखप्रकर्षस्य गुणद्वारा गुणनिष्ठद्रव्ये संक्रांतत्वादद्रव्यप्रकर्ष इति निषेधात् किमेत्तिङव्ययेत्यादिना। पा॰ ५. ४. ११.। आम् न भवति द्रव्यस्य स्वतः प्रकर्षाभावात्। ईदृगर्थ एव हि स निषेधः। अथा सोमं। संहितायां निपातस्येति दीर्घः॥

विश्वमित्सवनं सुतमिंद्रो मदाय गच्छति। वृत्रहा सोमपीतये॥ ८॥

विश्वं। इत्। सवनं। सुतं। इंद्रः। मदाय। गच्छति। वृत्रऽहा। सोमऽपीतये॥ ८॥

वृत्रहा शत्रुघातक इंद्रः सोमपीतये सोमपानाय मदाय तत्पानजन्यहर्षाय च विश्वमित्सर्वमपि सुतमभिषुतसोमयुक्तं सवनं प्रातःसवनादिरूपं कर्म गच्छति॥ विश्वं। अशिप्रुषीत्यादिना क्वन्। नित्त्वादाद्युदात्तः। सवनं सुतं। पूर्ववत्। मदाय। मदोऽनुपसर्गे। पा॰ ३. ३. ६७.। [illegible]। पित्त्वाद्धातुस्वरः। गच्छति। इषुगमियमां छः। वृत्रहा। वृत्रं हतवान्। ब्रह्मभ्रूणवृत्रेषु क्विप्। पा॰ ३. २. ८७.। इन्हन्पूषेत्यादिना नियतं दीर्घत्वं सौ च। पा॰ ६. ४. १२–१३.। इति प्रतिप्रसवा[illegible]वति। [illegible]। सोमपीतये। अधिकरणबहुव्रीहिरित्युक्तं। तत्पुरुषे वा दासीभारादित्वात्। पा॰ ६. २. ४२.। पूर्वपदप्रकृतिस्वरत्वं॥

सेमं नः काममा पृण गोभिरश्वैः शतक्रतो। स्तवाम त्वा स्वाध्यः॥ ९॥

सः। इमं। नः। कामं। आ। पृण। गोभिः। अश्वैः। शतक्रतो इति शतऽक्रतो। स्तवाम। त्वा। सुऽआध्यः॥ ९॥

हे शतक्रतो स त्वं नोऽस्मदीयमिमं कामं काम्यमानं फलं गोभिरश्वैश्च सह आ पृण। सर्वतः पूरय। वयमपि स्वाध्यः सुष्ठु सर्वतो ध्यानयुक्ताः संतस्त्वा त्वां स्तवाम॥ सेमं। संहितायां सोऽचि लोपे चे[illegible]ति सुलोपः। कामं। कमेर्घञि कर्षात्वतो घञोऽंत उदात्तः। पा॰ ६. १. १५९.। इत्यंतोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वं। पृण। पृण प्रीणने। लोटः सेर्हिः। तुदादिभ्यः शः। तस्य ङित्त्वाद्गुणाभावः। अतो हेरिति हेर्लुक्। गोभिः। साविकाच इति प्राप्तं विभक्तेरुदात्तत्वं न गोश्वन्सावर्णेति प्रतिषिध्यते। अश्वैः। क्वनंत इत्युक्तं। असामर्थ्यान्न परांगवद्भावः। स्तवाम। ष्टुञ् स्तुतौ। धात्वादेः षः सः। लोडुत्तमबहुवचनस्य लोटो लङ्वदिति लङ्वद्भावान्नित्यं ङितः। पा॰ ३. ४. ९९.। इति सकारस्य लोपः। आडुत्तमस्य पिच्च। पा॰ ३. ४. ९२.। इत्याडागमः। प्रत्ययस्य पित्त्वादनुदात्तत्वं। धातुस्वर एव। स्वाध्यः। ध्यै चिंतायां। स्वाङोरुपसर्गयोः प्राक्प्रयोगः। अन्येभ्योऽपि दृश्यते। पा॰ ३. २. १७८.। इति क्विप्। दृशिग्रहणस्य विध्यंतर[illegible]च संप्रसारणे सति परपूर्वत्वं। हल इति दीर्घः। जसेरनेकाचः। पा॰ ६. ४. ८२.। इति यणादेशः। गतिकार[illegible]दुत्तरपदप्रकृतिस्वरत्वं। उदात्तयणो हल्पूर्वादिति जस उदात्तत्वं न भवति [illegible]। अत उदात्त[illegible]ः स्वरितोऽनुदात्तस्येति स्वरितत्वमेव भवति॥ ॥ ३१॥

इंद्रावरुणयोरित्यादिकं नवर्चं षष्ठं सूक्तं। अत एव नवशब्दानुवृत्तावनुक्रम्यते। इंद्रावरुणयोरिंद्रावरुणं युवाकु [illegible]। अत्र देवता विस्पष्टा। ऋषिश्छंदसी तु पूर्ववदनुवर्तेते। अयं तु विशेषः। युवाकु हीत्यादिके द्वे ऋचौ पादनिचृन्नामकच्छंदोयुक्ते॥ विनियोगस्तु स्मार्तो लैंगिको वा कश्चिदवगंतव्यः॥

इंद्रावरुणयोरहं सम्राजोरव आ वृणे। ता नो मृळात ईदृशे॥ १॥

इंद्रावरुणयोः। अहं। संऽराजोः। अवः। आ। वृणे। ता। नः। मृळातः। ईदृशे॥ १॥

अहमनुष्ठाता सम्राजोः समीचीनराज्योपेतयोः सम्यग्दीप्यमानयोर्वेंद्रावरुणयोर्देवयोः संबंधवो रक्षणमा वृणे। सर्वतः प्रार्थये। ता तौ देवावीदृशे एवंविधेऽस्मदीयवरणे निमित्तभूते सति मृळातः। अस्मान्सुखयतः॥ इंद्रशब्दो रन्प्रत्ययांतः। वरुणशब्द उनन्प्रत्ययांतः। उभौ नित्त्वादाद्युदात्तौ। समासे देवताद्वंद्वे चेति पूर्वपदस्यानङादेशः। उभे युगपा[illegible]ै देवताद्वंद्वे चेति युगपदुभयपदप्रकृतिस्वरत्वं। सम्राजोः।

राजृ दीप्तौ। सत्सूद्विषेत्यादिना क्विप्। मो ओऽनुस्वारः। पा० ८. ३. २३। इत्यनुस्वारे प्राप्ते मो राजि समः क्वौ। पा० ८. ३. २५। इति मकारादेशः। कृदुत्तरपदप्रकृतिस्वरत्वं। कर्तृकर्मणोः कृति। पा० २. ३. ६५। इति कर्तरि षष्ठी। अवः। अव रक्षणादिषु। भावेऽसुन्। नित्त्वादाद्युदात्तः। ता। सुपां सुलुगित्यादिना द्विवचनस्य डादेशः। टिलोपे विभक्तेरुदात्तनिवृत्तिस्वरः। मृळातः। मृड सुखने। प्रार्थनायां लिङर्थे लेट्। द्विवचनं तस्। लेटोऽडाटावित्याडागमः। तुदादिभ्यः शः। ङित्त्वाल्लघूपधगुणाभावः। ईदृशे। त्यदादिषु दृशोऽनालोचने कञ् च। पा० ३. २. ६०। इतीदंशब्द उपपदे दृशेः कञ्। उपपदसमासे इदंकिमोरीश्की। पा० ६. ३. ९०। इतीदम ईश्। शित्त्वात्सर्वादेशः। कञः कित्त्वाद्गुणाभावः। ञित्त्वादुत्तरपदस्याद्युदात्तत्वं। उपपदसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते॥

गंतारा हि स्थोऽवसे हवं विप्रस्य मावतः। धर्तारा चर्षणीनां ॥२॥

गंतारा। हि। स्थः। अवसे। हवं। विप्रस्य। माऽवतः। धर्तारा। चर्षणीनां ॥२॥

हे इंद्रावरुणौ अवसेऽवितुमनुष्ठातारं रक्षितुं मावतो मद्विधस्य विप्रस्य ब्राह्मणर्त्विजो हवमाह्वानं गंतारौ स्थो हि। प्राप्तिशीलौ भवथः खलु। कीदृशौ। चर्षणीनां मनुष्याणां धर्तारौ योगक्षेमसंपादनेन धारयितारौ॥ गंतारा। गमेस्ताच्छील्ये तृन्। द्विवचनस्य सुपां सुलुगित्यादिनाकारादेशः। ऋदृशोऽङि गुणः। पा० ७. ४. १६। अप्तृन्नित्यादिनोपधादीर्घत्वं। तृनो नित्त्वादाद्युदात्तत्वं। स्थः। अस भुवि। लट्मध्यमपुरुषद्विवचनं थस्। अदिप्रभृतिभ्यः शप इति शपो लुक्। हि चेति निघातप्रतिषेधः। अवसे। अव रक्षणे। तुमर्थे सेसेनित्यसेन्। पा० ३. ४. ९। नित्त्वादाद्युदात्तः। हवं। ह्वेञो बहुलं छंदसीत्यनैमित्तिके संप्रसारणे परपूर्वत्वे च ऋदोरप्। गुणावादेशौ। अपः पित्त्वादनुदात्तत्वं। धातुस्वर एव। विप्रस्य। डुवप् बीजतंतुसंताने। अस्य ऋज्रेंद्रेत्यादिना रन् निपातितः। नित्त्वादाद्युदात्तः। मावतः। वतुप्रकरणे युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानं। पा० ५. २. ३९. १। वतुप्। प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य मादेशः। पा० ७. २. ९८। आ सर्वनाम्नः। पा० ६. ३. ९१। इति दकारस्याकारः। सवर्णदीर्घः। मतुपः पित्त्वादनुदात्तत्वं। प्रातिपदिकांतोदात्तत्वे स एव शिष्यते। धर्तारा। धृञ् धारणे। ण्वुल्तृचौ। पा० ३. १. १३३। इति तृच्। एकाच उपदेश इतीट्प्रतिषेधः। गुणो रपरत्वं। अप्तृन्नित्यादिनोपधादीर्घः। सुपां सुलुगित्याकारः। तृचश्चित्त्वादंतोदात्तत्वं। चर्षणीनां। कृषेरादेश्च चः। उ० २. १०५। इत्यनिप्रत्ययः। तत्संनियोगेन ककारस्य चकारः। प्रत्ययाद्युदात्तत्वं बाधित्वा छांदसमंतोदात्तत्वं। अत एव नामन्यतरस्यामिति विभक्तेरुदात्तत्वं। तत्र हि मतुपि यो ह्रस्वांतस्तत उत्तरस्य नाम उदात्तत्वमिति व्याख्यातं॥

अनुकामं तर्पयेथामिंद्रावरुण राय आ। ता वां नेदिष्ठमीमहे ॥३॥

अनुऽकामं। तर्पयेथां। इंद्रावरुणा। रायः। आ। ता। वां। नेदिष्ठं। ईमहे ॥३॥

इंद्रावरुणा हे इंद्रावरुणौ अनुकाममस्मदीयाभिलाषमनु रायो धनस्य प्रदानेना तर्पयेथां। सर्वतोऽस्मांस्तृप्तान् कुरुतं। वयं यदा यदा धनं कामयामहे तदा तदा प्रयच्छतमित्यर्थः। ता वां तादृशौ युवां नेदिष्ठमतिशयेन सामीप्यं यथा भवति तथा ईमहे। याचामहे। कालविलंबमंतरेण धनं दातव्यमित्यर्थः। सप्तदशसु याच्ञाकर्मस्वीमह इति पठितं॥ अनुकामं। कामस्य पश्चादनुकामं। अथवा कामे कामेऽनुकामं। अनुरिह पश्चादर्थे। अथवा वीप्सालक्षणे यथार्थे। योग्यता वीप्सा पदार्थानतिवृत्तिः सादृश्यं चेति चत्वारो हि यथार्था गृहीताः। अव्ययं विभक्तीत्यादिना। पा० २. १. ६। अव्ययीभावसमासः। अव्ययीभावश्च। पा० १. १. ४१। इत्यव्ययसंज्ञायामव्ययादाप्सुपः। पा० २. ४. ८२। इति प्राप्तस्य लुकोऽपवादो नाव्ययीभावादतोऽम् त्वपंचम्याः। पा० २. ४. ८३। इति विभक्तेरमादेशः। समासस्येत्यंतोदात्तत्वं। तर्पयेथां। तृप्रीणने। तस्माल्लोटो णिचश्च। पा० १. ३. ७४। इत्यात्मनेपदं। मध्यमद्विवचनमाथां। टेरेत्व आमेतः। पा० ३. ४. ९०। इत्यामादेशः। शपि सत्यतो येयः। पा० ७. २. ८०। इत्याकारस्येयादेशः। आद्गुणो यलोपश्च। इंद्रावरुणा। सुपां सुलुगिति द्विवचनस्याकारः। आमंत्रितायुदात्तत्वं। संहितायामचः ह्रस्वत्वं। रायः। ऊडिदंपदाद्यप्पुम्रैद्युभ्यः विभक्तेरुदात्तत्वं। ता। सुपां

सुलुगिति विभक्तेराकारः। पदात्परत्वाद्युवामित्यस्य वामादेशोऽनुदात्तः। नेदिष्ठं। अतिशयेनांतिकं। अतिशायन इष्ठन्। अंतिकबाढयोर्नेदसाधौ। पा॰ ५. ३. ६३.। इति नेदादेशः। यस्येति लोपः। इष्ठनो नित्त्वादाद्युदात्तत्वं। ईमहे। ईङ् गतौ। ङित्त्वादात्मनेपदं। बहुलं छंदसीति शपो लुक्। निघातः॥

युवाकु हि शचीनां युवाकु सुमतीनां। भूयाम वाजदाव्नां॥४॥

युवाकु। हि। शचीनां। युवाकु। सुऽमतीनां। भूयाम। वाजऽदाव्नां॥४॥

हि यस्मात्कारणाच्छचीनामस्मदीयकर्मणां संबंधि सोमरूपं हविर्युवाकु वसतीवरीभिरेकधनाभिरुदकैः पयःसक्त्वादिद्रव्यांतरैश्च मिश्रितं। तथा सुमतीनां शोभनबुद्धियुक्तानामृत्विजां स्तोत्ररूपं वचनमपि युवाकु नानाविधैः स्तुत्यगुणैर्मिश्रितं। तस्मात्कारणात् हे इंद्रावरुणौ तथाविधं हविः स्वीकुर्वतोर्युवयोः प्रसादाद्वयं वाजदाव्नामन्नप्रदानां पुरुषाणां मध्ये मुख्या भूयाम। भवेम। अपोऽप्न इत्यादिषु षड्विंशतिसंख्याकेषु कर्मनामसु शची शमीति पठितं॥ युवाकु। यु मिश्रणे। कटिकुषिभ्या काकुः। उ॰ ३. ७७.। इत्यत्र बाहुलकाद्यौतेरपि काकुः प्रत्ययः। कित्त्वेन गुणाभावादुकारस्योवङादेशः। प्रत्ययस्वरेण मध्योदात्तत्वं। शचीशब्दः केषांचिन्मते शार्ङ्गरवादिः। ङीनंतो नित्त्वादाद्युदात्तः। पा॰ ४. १. ७३.। इत्युभे वनस्पत्यादिषु युगपदित्यत्र। का॰ ६. २. १४०.। वृत्तिकृतोक्तं। सुमतीनां। विद्याम सुमतीनां। ऋग्वे॰ १. ४. ३.। इत्यत्रोक्तं। भूयाम। प्रार्थनायां लिङ्। उत्तमबहुवचने नित्यं ङित इति सकारलोपः। यासुट् परस्मैपदेषूदात्तो ङिच्च। पा॰ ३. ४. १०३.। इत्युदात्तो यासुडागमः। लिङः सलोपोऽनंत्यस्य। पा॰ ७. २. ७९.। इति सकारलोपः। बहुलं छंदसीति शपो लुक्। सति शिष्टत्वाद्यासुडुदात्त एव शिष्यते। वाजदाव्नां। वाजं ददतीति वाजदावानः। आतो मनिन्नित्यादिना वनिप्। तस्य पित्त्वाद्धातुस्वर एव शिष्यते। समासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। अल्लोपोऽनः। पा॰ ६. ४. १३४.। इत्यकारलोपः। तस्याचः परस्मिन्निति स्थानिवद्भावाल्लोपो व्योर्वलीति वकारलोपो न भवति॥

इंद्रः सहस्रदाव्नां वरुणः शंस्यानां। क्रतुर्भवत्युक्थ्यः॥५॥

इंद्रः। सहस्रऽदाव्नां। वरुणः। शंस्यानां। क्रतुः। भवति। उक्थ्यः॥५॥

अयमिंद्रः सहस्रदाव्नां सहस्रसंख्याकधनप्रदानां मध्ये क्रतुर्धनदानस्य कर्ता भवति। प्रभूतं ददातीत्यर्थः। तथा वरुणः शंस्यानां स्तुत्यानां मध्य उक्थ्यः स्तुत्यो भवति। अतिशयेन स्तुत्य इत्यर्थः॥ वरुणः। उनन्प्रत्ययो नित्त्वादाद्युदात्तः। शंस्यानां। शंसु स्तुतौ। ऋहलोर्ण्यत्। तित्स्वरितमिति प्राप्ते ईडवंदवृशंसदुहां ण्यत इत्याद्युदात्तः। क्रतुः। कृञः कतुः। उ॰ १. ७८.। इति कतुः। कित्त्वाद्गुणाभावे यणादेशः। प्रत्ययस्वरेणाद्युदात्तः। उक्थ्यः। उक्थं शस्त्रं। तेन स्तुत्यत्वेन तत्र भव उक्थ्यः। भवे छंदसि। पा॰ ४. ४. ११०.। इति यत्। यस्येति लोपः। अत्र तित्स्वरितं प्राप्तं बाधित्वा तीर्थ्याय कूप्यायेत्यादिवत् द्व्यच्त्वाद्यतोऽनाव इति प्राप्तमाद्युदात्तत्वं सर्वे विधयश्छंदसि विकल्प्यंत इति न क्रियते। ननु यस्येति लोपात्प्रागेव तित्स्वरितत्वमस्तु। न हि तदा यतोऽनाव इत्यस्य द्व्यच्त्वाभावात्। अत एव ह्रूर्म्याय च सूर्म्याय चेत्यादौ स्वरितत्वं दृश्यते। न च परत्वान्नित्यत्वाच्च यस्येति लोपेन प्रथमतो भाव्यमिति वाच्यं। प्रकृतिप्रत्ययाश्रयाद्बहिरंगाद्यस्येति लोपात्प्रत्ययमात्राश्रयतयांतरंगत्वेन तित्स्वरितमित्येतस्य प्राबल्यात्। अत ऊर्म्यायेत्यादिवदुक्थ्य इत्यत्रापि लक्षणत एव स्वरितत्वं भविष्यतीति। किं छांदसत्वेन। यत्र हि लोपमंतरेणैव द्व्यच्त्वं तत्र यतोऽनाव इत्येतद्भवति। यथा चेयं येयमिति। लोपनिबंधनद्व्यच्त्वप्रदेशेषु तु स्वरितेनैव भवितव्यमिति। एवं तर्हि तीर्थ्याय कूप्यायेत्यादौ यदाद्युदात्तत्वं तदेव छांदसमस्तु। अथाच तु वर्णादांगं बलीयः। परि॰ ५५.। इत्यंतरंगत्वेऽपि स्वरितत्वं बाधित्वा लोप एव भविष्यति। तर्ह्युक्थ्य ऊर्म्याय सूर्म्यायेत्यादौ च छांदसमस्तु। सर्वथैकत्र छांदसत्वान्न मुच्यते॥ ॥३२॥

तयोरिदवसा वयं सनेम नि च धीमहि। स्यादुत प्ररेचनं॥६॥

तयोः। इत्। अवसा। वयं। सनेम। नि। च। धीमहि। स्यात्। उत। प्रऽरेचनं॥६॥

तयोरित्पूर्वोक्तयोरिंद्रावरुणयोरेवावसा रक्षणेन वयमनुष्ठातारः सनेम। संभजेम धनमिति शेषः। नि

धीमहि च। प्राप्ते धने यावदपेक्षितं तावद्भुक्त्वा ततोऽवशिष्टं धनं क्वचिन्निधिरूपेण स्थापयामस्य। उतापि च प्ररेचनं भुक्तान्निहिताच्च प्रकर्षेणाधिकं धनं स्यात्। संपद्यतां ॥ अवसा। असुन्। नित्त्वादाद्युदात्तः। वयं। यूयं हि ष्ठा। ऋग्वे॰ १.१५.२.। इत्यत्र यदुक्तं तदत्र द्रष्टव्यं। सनेम। आशिषि लिङ्। तस्य मस्। नित्यं ङित इति सकारलोपः। किदाशिषि। पा॰ ३.४.१०४.। इति यासुट्। छंदस्युभयथेति सार्वधातुकमप्यस्तीति लिङः सलोपोऽनंत्यस्येति सकारलोपः। अतो येय इतीयादेशः। लोपो व्योर्वलीति यलोपः। लिङ्याशिष्यङ्। पा॰ ३.१.८६.। इत्यङ्। आद्गुणः। पादादित्वान्न निघातः। धीमहि। डुधाञ् धारणपोषणयोः। आशिषि लिङो महिङ्। तस्य छंदस्युभयथेति सार्वधातुकार्धधातुकसंज्ञे। तत्र सार्वधातुकत्वेन लिङः सलोपोऽनंत्यस्येति सकारलोपः। सार्वधातुकमपिदिति ङित्त्वं शप् च। बहुलं छंदसीति जुहोत्यादेरपि शपो लुक्। आर्धधातुकत्वादातो लोप इटि च। पा॰ ६.४.६४.। इत्याकारलोपः। निघातः। सनेमेत्यपेक्षया द्वितीयत्वाद्च चवायोगे प्रथमेति न निषेधः। स्यात्। अस्तेः प्रार्थनायां लिङ्। तिप्। इतश्चेतीकारलोपः। यासुट् परस्मैपदेषूदात्तो ङिच्चेति यासुड्ङित्त्वे। अदिप्रभृतिभ्यः शप इति शपो लुक्। श्नसोरल्लोप इत्यकारलोपः। पादादित्वादनिघातः। उत। एवमादीनामंत इत्यंतोदात्तः। प्ररेचनं। रिचिर् विरेचने। भावे ल्युट्। योरनादेशः। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। प्रादिसमासः। कृदुत्तरपदप्रकृतिस्वरत्वं ॥

इं॒द्रा॒व॒रु॒ण॒ वा॒मह॒ं हु॒वे चि॒त्राय॒ राध॑से। अ॒स्मान्त्सु जि॒ग्युष॑स्कृतं ॥ ७ ॥
इं॒द्रा॒व॒रु॒णा॒। वा॒ं। अ॒हं। हु॒वे। चि॒त्राय॑। राध॑से। अ॒स्मान्। सु। जि॒ग्युषः॑। कृ॒तं॒ ॥ ७ ॥

इंद्रावरुणा हे इंद्रावरुणौ वां युवामुभावहं हुवे। आह्वयामि। किमर्थं। चित्राय मणिमुक्तादिरूपेण विविधाय राधसे धनाय। तत आहूतौ युवामस्माननुष्ठातॄन् सु जिग्युषः शत्रुविषये सुष्ठु जययुक्तान् कृतं। कुरुतं ॥ इंद्रावरुणा। सुपां सुलुगित्यादिना संबोधनस्याकारः। देवताद्वंद्वे चेति पूर्वपदस्यानङ्। आमंत्रिताद्युदात्तत्वं। संहितायां छांदसं ह्रस्वत्वं। हुवे। ह्वयतेर्बहुलमेकवचनमिट्। शप [illegible] बहुलं छंदसीति लुक्। ह्व इत्यनुवृत्तौ बहुलं छंदसीति संप्रसारणं परपूर्वत्वं। अचि श्नुधात्वित्यादिनोवङ् । पा॰ ६.४.७७.। न च हुश्नुवोरित्यादिना। पा॰ ६.४.८७.। यणादेशः। जुहोतेरेव हि प्रतिपदोक्तस्य तत्। न पुनरस्य लाक्षणिकत्वात्। इटः प्रत्ययस्वरेणोदात्तत्वं। पादादित्वान्न निघातः। राधसे। असुन्। नित्त्वादाद्युदात्तत्वं। अस्मान्। शसि द्वितीयायां च। पा॰ ७.२.८७.। इत्यात्वं। शसो नः। पा॰ ७.१.२९.। इति नत्वं। जिग्युषः। जि जये। लिटः क्वसुश्चेति क्वसुः। द्विर्भावः। सन्लिटोर्जेः। पा॰ ७.३.५७.। इति द्वितीयस्य कुत्वं। क्वसोः कित्त्वाद्गुणाभावः। क्रादिनियमात्प्राप्तस्येटो वस्येकाजाद्घसामिति नियमेन निवृत्तिः। द्वितीयाबहुवचनं शस्। भसंज्ञायां वसोः संप्रसारणमिति संप्रसारणं। परपूर्वत्वं। एरनेकाच इति यणादेशः। शासिवसिघसीनां चेति षत्वं। प्रत्ययस्वरेणोकार उदात्तः। कृतं। डुकृञ् करणे। लोण्मध्यमद्विवचनस्य लङ्वद्भावात्तमादेशः। शपो बहुलं छंदसीति लुक्। तिङ्ङतिङ इति निघातः ॥

इं॒द्रा॒व॒रु॒ण॒ नू नु वां॒ सिषा॑संतीषु धी॒ष्वा। अ॒स्मभ्यं॒ शर्म॑ यच्छतं ॥ ८ ॥
इं॒द्रा॒व॒रु॒णा॒। नु। नु। वा॒ं। सिसा॑संतीषु। धी॒षु। आ। अ॒स्मभ्य॑ं। शर्म॑। य॒च्छ॒तं॒ ॥ ८ ॥

इंद्रावरुणा हे इंद्रावरुणौ धीष्वस्मदीयबुद्धिषु वां युवां सिषासंतीषु सनितुं संभक्तुं सम्यक् सेवितुमिच्छंतीषु तदानीमा समंतादस्मभ्यं शर्म सुखं नू नु अतिशयेन क्षिप्रं यच्छतं। दत्तं। मङ्क्षु शतिसंख्याकेषु क्षिप्रनामसु नु मक्ष्विति पठितं। तस्य द्विरावृत्तिरादरातिशयं लभ्यते ॥ इंद्रावरुणा। उक्तं। नू नु। ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणां। पा॰ ६.३.१३३.। इति पूर्वस्य दीर्घत्वं। सिषासंतीषु। वन षण संभक्तौ। धात्वादेः षः सः। इच्छायां सन्। द्विर्भावो हलादिशेषः। सन्यत इतीत्वं। आदेशप्रत्यययोरिति षत्वं। सनीवंतेत्यादिना। पा॰ ७.२.४९.। विकल्पादिडभावः। जनसनखनां सञ्झलोः। पा॰ ६.४.४२.। इति नकारस्याकारः। उपरि लटः शतृ। कर्तरि शप्। उगितश्चेति ङीप्। शप्श्यनोर्नित्यं। पा॰ ७.१.८१.। इति नुम्। ङीपः शपश्च पित्त्वाच्छतुर्लसार्वधातुकत्वेनानुदात्तत्वं। सनो नित्त्वादाद्युदात्तत्वं। तदेव शिष्यते। धीषु। सावेकाच इति विभक्तेरु-

दात्तत्वं । अस्मभ्यं । अस्मभ्यमप्रतिष्कुतः । ऋग्वे॰ १. ७. ६. । इत्यत्रोक्तं । यच्छतं । दाण् दाने । शपि पाघ्रे-त्यादिना यच्छादेशः ॥

प्र वामश्नोतु सुष्टुतिरिंद्रावरुण यां हुवे । यामृधाथे सधस्तुतिं ॥ ९ ॥

प्र । वां । अश्नोतु । सुऽस्तुतिः । इंद्रावरुणा । यां । हुवे । यां । ऋधाथे इति । सधऽस्तुतिं ॥ ९ ॥

इंद्रावरुणा हे इंद्रावरुणौ यामस्मत्कर्तृकां शोभनस्तुतिं प्रति ह्वये युग्मुभावाह्वयामि । किंच सधस्तुतिं युवयोरुभयोः साहित्येन क्रियमाणायाः स्तवक्रियाया यां सुष्टुतिं प्रतिलभ्य ऋधाथे युवां वर्धाथे । तादृशी सुष्टुतिः शोभनस्तुतिहेतुभूत ऋक्समूहो वामश्नोतु । युवा व्याप्नोतु ॥ अश्नोतु । अशू व्याप्तौ । लोटो व्यत्ययेन तिप् । स्वादिभ्यः श्नुः । सुष्टुतिः । न विंधे अस्य सुष्टुतिं । ऋग्वे॰ १. ७. ७. । इत्यत्रोक्तं । इंद्रावरुणा । ह्वये । उक्ते । अत्र तु यद्वृत्तयोगान्न निघातः । ऋधाथे । ऋधु वृद्धौ । लट् । व्यत्ययेनात्मनेपदं । मध्यमद्विवचने श्नोर्बहुलं छंदसीति लुक् । प्रत्ययस्वरेणाकार उदात्तः । यच्छब्दयोगान्न निघातः । सधस्तुतिं । सह स्तुतिर्यस्यां सुष्टुतौ सा सधस्तुतिः । अत्र सुष्टुतिरित्यन्यपदार्थे स्तुतिशब्दस्य स्तूयतेऽनयेति करणसाधनत्वेन ऋक्परत्वेऽयं स्तुति-शब्दो भावसाधनतया स्तवनक्रियापरः । तस्मिन्भावसाधनत्वेन क्रियापरेऽयं करणसाधनतया ऋक्पर इति समस्यमानपदार्थाद्न्यः । संहितयत्र हकारस्य व्यत्ययेन धकारः । सहशब्द एवमादित्वादंतोदात्तः । बहु-व्रीहित्वेन पूर्वपदप्रकृतिस्वरत्वं ॥ ॥३३॥ ॥४॥

पंचमेऽनुवाके षट् सूक्तानि । तत्र सोमानमित्यादिकं नवर्चं प्रथमं सूक्तं । ऋषिच्छंदसी पूर्ववत् । देवताविशेषस्त्वेवमनुक्रम्यते । सोमानमिति पंच ब्राह्मणस्पत्यास्तुर्थ्यामिंद्रस्य सोमस्य पंचम्यां दक्षिणा चान्याः सादसस्त्या नाराशंसी वांत्येति । सूक्तगता आद्याः पंचर्चो ब्रह्मणस्पतिदेवताकाः । तासां मध्ये स घा वीर इत्येतस्यास्तुर्थ्या ऋचो ब्रह्मणस्पतिरिंद्रस्य सोमश्चेति तिस्रो देवताः । त्वं तमित्येतस्याः पंचम्या दक्षिणया सह पूर्वोक्तास्तिस्रो देवताः । षष्ठीमारभ्य तिसृणां सदसस्पतिर्देवता । नराशंसमित्येतस्या नवम्याः सदसस्पतिर्नराशंसो वा विकल्प्यते ॥ विनियोगस्तु पूर्ववत् ॥

सोमानं स्वरणं कृणुहि ब्रह्मणस्पते । कक्षीवंतं य औशिजः ॥ १ ॥

सोमानं । स्वरणं । कृणुहि । ब्रह्मणः । पते । कक्षीवंतं । यः । औशिजः ॥ १ ॥

हे ब्रह्मणस्पते एतन्नामकदेव सोमानमभिषवस्य कर्तारं मामनुष्ठातारं स्वरणं देवेषु प्रकाशनवंतं कृणुहि । कुरु । अत्र दृष्टांतः । कक्षीवंतमेतन्नामकमृषिं । इवशब्दोऽत्राध्याहर्तव्यः । कक्षीवान्यथा देवेषु प्रसिद्धस्तद्वदित्यर्थः । यः कक्षीवानृषिरौशिज उशिजः पुत्रः । तमिवेति पूर्वत्र योजना । कक्षीवतोऽनुष्ठातृषु मुनिषु प्रसिद्धिस्तैत्तिरी-[illegible] । एवं वै पर आट्णारः कक्षीवाँ औशिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत । तै॰ सं॰ ५. ६. ५. ३. । इति । ऋगंतरेऽप्यृषित्वकथनेनानुष्ठातृत्वप्रसिद्धिः सूच्यते । अहं कक्षीवाँ ऋषिरस्मि विप्रः । ऋग्वे॰ ४. २६. १. । इति । तस्माद्स्यानुष्ठातारं प्रति दृष्टांतत्वं युक्तं । सोऽयं मंत्रो यास्केनैवं व्याख्यातः । सोमानं सोतारं प्रकाशनवंतं कुरु ब्रह्मणस्पते कक्षीवंतमिव य औशिजः । कक्षीवान्कक्ष्यावानौशिज उशिजः पुत्र उशिग्वष्टेः कांतिकर्मणोऽपि त्वयं मनुष्यकक्ष एवाभिप्रेतः स्यात्तं सोमानं सोतारं मा प्रकाशनवंतं कुरु ब्रह्मणस्पते । नि॰ ६. १०. । इति । अस्मिन्मंत्रे सोमानमिति पादेन कृणुहि ब्रह्मण इति पादेन सूचितं तात्पर्यं [illegible] आमनंति । सोमानं स्वरणमित्याह सोमपीथमेवाव रुंधे । कृणुहि ब्रह्मणस्पत इत्याह ब्रह्मवर्चसमेवाव रुंधे । तै॰ सं॰ १. ५. ८. ४. । इति ॥ सोमानं । सुनोतीति । षुञ् अभिषवे । अन्येभ्योऽपि दृश्यंत इति मनिन् । दृशिग्रहणस्य विध्यंतरोपसंग्रहणार्थत्वान्नित्त्वेऽपि नाद्युदात्तत्वं किंतु प्रत्ययस्वर एव । उणादिषु वा सोमन्शब्दो द्रष्टव्यः । पा॰ ६. १. १९७. । [illegible]दिको वा मनिर्द्रष्टव्यः । स्वरणं । प्रख्यातं । स्वृ शब्दोपतापयोः । कृत्यल्युटो बहुलं । पा॰ ३. ३. ११३. । इति कर्मणि ल्युट् । लितीत्यकार उदात्तः । कृणुहि । कृवि हिंसाकरणयोः । इदितो नुम् धातोरिति नुम् । लोटः सिपो हिः । शपि प्राप्ते धिन्विकृण्व्योरच्चेत्युप्रत्ययः । तत्संनियोगेन वका-

रस्य चाकारः। तस्यातो लोप इति लोपः। तस्य स्थानिवद्भावान्न पूर्वस्य लघूपधगुणः। हेर्ङित्त्वादुकारस्य न गुणः। उतश्च प्रत्ययाच्छंदोवावचनं। पा० ६. ४. १०६. १.। इति हेर्लुप। सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वचनाद्धेरेव प्रत्ययस्वरेणोदात्तत्वं। पादादित्वान्न निघातः। ब्रह्मणः। षष्ठ्याः पतिपुत्रेत्यादिना। पा० ८. ३. ५३.। संहितायां विसर्जनीयस्य सकारः। सुबामंत्रितपरांगवद्भावात्पदद्वयस्यामंत्रितनिघातः। वचीवंतं। कक्षे भवा कक्ष्याश्वोदरसंबंधिनी रज्जुः। भवे छंदसि। पा० ४. ४. ११०.। इति यत्प्रत्ययः। सास्यास्तीत्यर्थ आसंदीवदष्ठीवच्चक्रीवत्कक्षीवत्। पा० ८. २. १२.। इत्यृषिविशेषनाम कक्षीवच्छब्दो निपातितः। छंदसीर इति वत्वं। यप्रत्ययस्वरेण तदादेशो निपातित ईकार उदात्तः। मतुप्सुपौ पित्त्वादनुदात्तौ। औशिजः। वश कांतौ। इजीत्यनुवृत्तौ वशेः किच्च। उ० २. ७१.। इतीजिप्रत्ययः। तस्य कित्त्वाद्ग्रहिज्येत्यादिना संप्रसारणं परपूर्वत्वे गुणाभावः। स तस्यापत्यं। पा० ४. १. ९२.। इति प्राग्दीव्यतोऽण्। पा० ४. १. ८३.। आदिवृद्धिः। प्रत्ययस्वरेणांतोदात्तत्वं ॥

यो रेवान्यो अमीवहा वसुवित्पुष्टिवर्धनः। स नः सिषक्तु यस्तुरः ॥२॥
यः। रेवान्। यः। अमीवऽहा। वसुऽवित्। पुष्टिऽवर्धनः। सः। नः। सिसक्तु। यः। तुरः ॥२॥

यो ब्रह्मणस्पती रेवान्धनवान्यश्चामीवहा रोगाणां हंता वसुविद्धनलब्धा पुष्टिवर्धनः पुष्टेर्वर्धयिता यश्च तुरस्त्वरोपेतः शीघ्रफलदः स ब्रह्मणस्पतिर्नोऽस्मान् सिषक्तु। सेवतां। परिगृह्यानुगृह्णात्वित्यर्थः। अत्र सिषक्तुशब्दस्य सेवार्थत्वं यास्क आह। सिषक्तु सचत इति सेवमानस्य। नि० ३. २१.। इति प्रत्यायकौ शब्दाविति शेषः॥ रेवान्। रयिरस्यास्तीति मतुप्। रयेर्मतौ बहुलं। पा० ६. १. ३७. ६.। इति यकारस्य संप्रसारणं परपूर्वत्वं। छंदसीर इति वत्वं। आद्गुणः। ननु वत्वस्यासिद्धत्वाद्बहिरंगत्वाच्च प्रागेव गुणे कृत इवर्णाभावान्न वत्वं। न चांतादिवच्च। पा० ६. १. ८५.। इत्यादिवद्भावेनैवर्णसंपादनं वर्णाश्रयविधौ तत्प्रतिषेधात्। अन्यथा खट्वाभिरित्यत्र सवर्णदीर्घस्यांतवद्भावेन अकारत्वादतो भिस ऐस्। पा० ७. १. ९.। इत्यैसादेशः स्यात्। न च निरवकाशत्वेन वत्वस्यानवकाशत्वं। अग्निवान्वै दर्भस्तंबः। उप ब्रह्माणि हरिवः। ऋग्वे० १०. १०४. ६.। इत्यादाववकाशत्वाभात्। सत्यं। अत्र गुणप्रवृत्तेः प्रागिकारात्परो मतुप्। कदाचिदिवर्णात्परस्य मतुपः पश्चादेकारादेशेनिवर्णाभावेऽपि भवति वत्वमिति छंदसीर इति सूत्रकृता विवक्षितं। अमुनैवाभिप्रायेण हरिव इत्यादिकमुदाहृत्यायंते वृत्तिकृता अरेवानित्यप्युदाहृतं। का० ८. २. १५.। ह्रस्वनुड्भ्यामित्यत्रारेशब्दान्मतुप इत्युदात्तत्वं वक्तव्यं। पा० ६. १. १७६. १.। इत्यत्रारेशब्दो रैशब्दस्याप्युपलक्षणं। अत एव हि रेवाँ इंद्रेत्यादौ मतुप उदात्तत्वं दृष्टं। अथवा ह्रस्वनुड्भ्यामित्यत्रापि कदाचिद्ध्रस्वात्परस्य मतुप उदात्तत्वमित्येव व्याख्येयं। एवं च संप्रसारणपरपूर्वत्वयोः कृतयोर्गुणात्प्राग्घ्रस्वात्परो मतुबिति रेवानरेवानित्यादौ सर्वत्रोदात्तत्वं सिध्यति। अयमेव सूत्रकृतोऽभिप्रायो वार्त्तिककृता व्याख्यात इति। अमीवहा। अम रोग इत्येतस्मादूनप्रत्ययेनामीवशब्दो निपातितः। तं हंतीति बहुलं छंदसीति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वं। वसुवित्। वसु विंदतीति वसुवित्। क्विबेति क्विप्। उत्तरपदप्रकृतिस्वरत्वं। पुष्टिवर्धनः। वर्धयतेर्नंद्यादित्वाल्ल्युः। पा० ३. १. १३४.। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। पुष्टेर्वर्धन इति कर्मणि षष्ठ्या समासः। कृदुत्तरपदप्रकृतिस्वरत्वं। सिषक्तु। षच समवाये। लोटि बहुलं छंदसीति शपः श्लुः। श्लाविति द्वित्वे हलादिशेषे बहुलं छंदसीत्यभ्यासस्याकारस्येकारः। पा० ७. ४. ७८.। तुरः। तुर त्वरणे। इगुपधज्ञाप्रीकिरः कः। प्रत्ययस्वरः॥

मा नः शंसो अररुषो धूर्तिः प्रणङ्मर्त्यस्य। रक्षा णो ब्रह्मणस्पते ॥३॥
मा। नः। शंसः। अररुषः। धूर्तिः। प्रणक्। मर्त्यस्य। रक्ष। नः। ब्रह्मणः। पते ॥३॥

अररुषो मर्त्यस्योपद्रवं कर्तुमस्मत्समीपं प्राप्तस्य शत्रुरूपस्य मनुष्यस्य धूर्तिर्हिंसकः शंसः शंसनं। अधिक्षेप इत्यर्थः। तादृशो वाग्विशेषो नोऽस्मान्मा प्रणक्। मा संपृणक्तु। शत्रुणा प्रयुक्तोऽधिक्षेपः कदाचिदस्मान्मा प्राप्नोत्वित्यर्थः। तदर्थं हे ब्रह्मणस्पते नोऽस्मान्रक्ष। पालय॥ मा। निपातः। शंसनं शंसः। भावे घञ्। ञित्त्वादाद्युदात्तः। अररुषः। अर्तेररुः। उ० ४. ७९.। इत्यंतर्भावितण्यर्थाद् गतावित्यस्माद्‌-रुः। गुणो रपरत्वं। प्रत्य-

यस्वरे प्राप्ते वृषादित्वादाद्युदात्तः। धूर्तिः। धुर्वी हिंसार्थः। क्तिच्क्तौ च संज्ञायामिति क्तिच्। तितुत्रतथसिसुसरकसेषु चेतीट्प्रतिषेधः। उपधायाश्च। पा॰ ७. १. १०१.। इत्युपधादीर्घत्वं। वलि लोपं बाधित्वोटि प्राप्ते। पा॰ ६. ४. १९.। राल्लोपः। पा॰ ६. ४. २१.। इति वकारलोपः। प्रणक्। पृची संपर्के। लङस्तिप्। इतश्चेतीकारलोपः। हल्ङ्याब्भ्यो दीर्घादिलोपः। कुत्वं। रुधादिभ्यः श्नम्। तस्य व्यत्ययो बहुलं। पा॰ ३. १. ८५.। इत्यडागमः। यणादेशः। अकारस्यागमानुदात्तत्वं बाधित्वा व्यत्ययेनोदात्तत्वं। चादिलोपे विभाषेति निघाताभावः। मर्त्यस्य। मृङ् प्राणत्यागे। असिहसिमृ इत्यादिना। उ॰ ३. ८६.। औणादिकस्तन्प्रत्ययः। मर्तेषु भव इत्यर्थे भवे छंदसीति यत्। यतोऽनाव इत्याद्युदात्तत्वं। रक्ष। रक्ष पालने। शपः पित्त्वादनुदात्तत्वं। धातुस्वर एव शिष्यते। पादादित्वान्न निघातः। रक्षा णः। द्व्यचोऽतस्तिङ इति दीर्घः। उपसर्गाद्बहुलं। पा॰ ८. ४. २८.। इति बहुलग्रहणादनुपसर्गादपि नसो णत्वं। ब्रह्मणस्पते। षष्ठ्याः पतिपुत्रेति संहितायां विसर्गस्य सकारः। सुबामंत्रित इति परांगवद्भावात्पदद्वयस्यामंत्रितनिघातः॥

स घा वीरो न रिष्यति यमिंद्रो ब्रह्मणस्पतिः। सोमो हिनोति मर्त्यं ॥४॥

सः। घ। वीरः। न। रिष्यति। यं। इंद्रः। ब्रह्मणः। पतिः। सोमः। हिनोति। मर्त्यं ॥४॥

इंद्रो देवो यं मर्त्यं यक्ष्यमाणं हिनोति प्राप्नोति वर्धयति वा। तथा ब्रह्मणस्पतिर्देवो हिनोति। तथा सोमो हिनोति। स घ स एव यजमानो वीरो वीर्ययुक्तः सन्न रिष्यति। न विनश्यति॥ घ। चादिरनुदात्तः। संहितायामृचि तुनुघमक्षुतङ्कुत्रोरुष्याणां। पा॰ ६. ३. १३३.। इति दीर्घः। ब्रह्मणस्पतिः। उक्तं। हिनोति। हि गतौ वृद्धौ च। स्वादिभ्यः श्नुः। तिपः पित्त्वात् श्नुप्रत्ययस्वर एव शिष्यते॥

त्वं तं ब्रह्मणस्पते सोम इंद्रश्च मर्त्यं। दक्षिणा पात्वंहसः ॥५॥

त्वं। तं। ब्रह्मणः। पते। सोमः। इंद्रः। च। मर्त्यं। दक्षिणा। पातु। अंहसः ॥५॥

हे ब्रह्मणस्पते त्वं तं मर्त्यमनुष्ठातारं मनुष्यमंहसः [illegible]ते शेषः। तथा सोमः पात्विंद्रश्च पातु दक्षिणाख्या देवता च पातु॥ दक्षिणा। दक्ष वृद्धौ। द्रुदक्षिभ्यामिनन्। उ॰ २. ५०.। नित्त्वादाद्युदात्तः। अंहसः। नब्विषयस्येत्यादिनाद्युदात्तः॥ ॥३४॥

अनुप्रवचनीयचरोर्होमे सदसस्पतिमित्येषा विनियुक्ता। तथा च गृह्ये मेखलामाबध्येति खंडे पठ्यते। आचार्यः समन्वारब्धे जु[illegible]तं। आ॰ गृ॰ १. २२. ११.। इति॥

सदसस्पतिमद्भुतं प्रियमिंद्रस्य काम्यं। सनिं मेधामयासिषं ॥६॥

सदसः। पतिं। अद्भुतं। प्रियं। इंद्रस्य। काम्यं। सनिं। मेधां। अयासिषं ॥६॥

मेधां लब्धुं सदसस्पतिमेतन्नामकं दे[illegible]। प्राप्तवानस्मि। कीदृशं। अद्भुतमाश्चर्यकरं इंद्रस्य प्रियं सोमपाने सहचारित्वात् काम्यं कमनीयं सनिं धनस्य दातारं॥ सदसः। षद्लृ विशरणादौ। सर्वधातुभ्योऽसुन्। नित्त्वादाद्युदात्तः। पतिं। पातेर्डतिः। उ॰ ४. ५७.। टिलोपः। प्रत्ययस्वरः। प्रियं। इगुपधज्ञाप्रीकिरः कः। यङादेशः। प्रत्ययस्वरः। काम्यं। कामयतेरचो यत्। णेरनिटीति णिलोपः। यतोऽनाव इत्याद्युदात्तत्वं। सनिं। षणु दाने। धात्वादेः षः सः। अच इरित्यनुवृत्तौ [illegible]खनिचरिचटिभ्यश्च। उ॰ ४. १३९.। इति इप्रत्ययः। प्रत्ययस्वरः। अयासिषं। या प्रापणे। लुङ्। मिपोऽमादेशः। यमरमनमातां सक् च। पा॰ ७. २. ७३.। इति सिच इडागमः। धातोः सगागमः। निघातः॥

यस्मादृते न सिध्यति यज्ञो विपश्चितश्चन। स धीनां योगमिन्वति ॥७॥

यस्मात्। ऋते। न। सिध्यति। यज्ञः। विपःऽचितः। चन। सः। धीनां। योगं। इन्वति ॥७॥

यज्ञोऽयमनुष्ठातव्यो विपश्चितश्चन विदुषोऽपि यजमानस्य यस्मात्सदसस्पतिर्देवादृते न सिध्यति सोऽयं सदसस्पतिर्देवो धीनां मनोऽनुष्ठानविषयाणामस्मद्बुद्धीनामनुष्ठेयकर्मणां वा योगं संबंधमिन्वति । व्याप्नोति । यजमानमनुगृह्य तदीयं यज्ञं निष्पादयतीत्यर्थः ॥ यस्मात् । पञ्चम्यादिना । पा० २. ३. २९. । ऋतेयोगात्पंचमी । सावेकाच इति विभक्तेरुदात्तत्वे प्राप्ते न गोश्वन्सावर्णेति प्रतिषेधः । सिध्यति । षिधु संराद्धौ । श्यनो नित्त्वादाद्युदात्तत्वं । यद्वृत्तान्नित्यमिति निघातप्रतिषेधः । धीनां । सावेकाच इति विभक्तेरुदात्तत्वं । योगं । युजिर् योगे । घञो ञित्त्वादाद्युदात्तत्वं । इन्वति । इवि व्याप्तौ । शप् । इदितो नुम् धातोरिति नुम् । निघातः ॥

आदृ॑ध्नोति ह॒विष्कृ॑तिं॒ प्राञ्चं॑ कृणो॒त्य॑ध्व॒रं । होत्रा॑ दे॒वेषु॑ गच्छति ॥ ८ ॥

आत् । ऋ॒ध्नो॒ति॒ । ह॒विः॒ऽकृ॑तिं । प्राञ्चं॑ । कृ॒णो॒ति॒ । अ॒ध्व॒रं । होत्रा॑ । दे॒वेषु॑ । ग॒च्छ॒ति॒ ॥ ८ ॥

आदनंतरमेव हविष्कृतिं हविःसंपादनयुक्तं यजमानमृध्नोति । सदसस्पतिर्देवो वर्धयति । ह्यवर्द्धनमेव फलं प्रयच्छतीत्यर्थः । तथाविधफलसिद्धयेऽध्वरं यजमानेनानुष्ठीयमानं यज्ञं प्राञ्चं प्रकर्षेण गच्छंतमविघ्नेन परिसमाप्तियुक्तं कृणोति । करोति । होत्रा हूयमाना देवता तुष्टा सती यजमानं प्रख्यापयितुं देवेषु गच्छति । यद्वा । होत्रास्मदीयस्तुतिरूपा वाक् देवान्परितोषयितुं देवेषु गच्छति । श्लोको धारेत्यादिषु सप्तपंचाशत्सु वाङ्नामसु होत्रा गीरिति पठितं ॥ हविष्कृतिं । हविषः कृतिः संपादनं यस्य यजमानस्य सोऽयं हविष्कृतिः । बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरत्वं । प्राञ्चं । अनिगंतोऽञ्चतौ वप्रत्यये । पा० ६. २. ५२. । इति गतेः प्रकृतिस्वरत्वं । पश्चादेकादेशस्वरः । अध्वरं । न विद्यते ध्वरो हिंसा यस्मिन् । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । हूयतेऽस्यामिति होत्रा देवता । हुयामाश्रुभसिभ्यस्त्रन् । उ० ४. १६७. । इति त्रन् । नित्त्वादाद्युदात्तः ॥

न॒रा॒शंसं॑ सु॒धृष्ट॑म॒मप॑श्यं स॒प्रथ॑स्तमं । दि॒वो न सद्म॑मखसं ॥ ९ ॥

न॒रा॒शंसं॑ । सु॒ऽधृष्ट॑मं । अप॑श्यं । स॒प्रथः॑ऽतमं । दि॒वः । न । सद्म॑ऽमखसं ॥ ९ ॥

नराशंसमेतन्नामकं देवविशेषं । यद्वा । अवयवार्थव्युत्पत्त्या सदसस्पतिविषयोऽयं शब्दः । व्युत्पत्तिं च यास्को दर्शयति । नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसंत्यग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति । नि० ८. ६. । इति । अत्राप्येवंसदसस्पतेरपि नरैः शस्यमानत्वान्नराशंसत्वं । एवमेवाभिप्रायं हृदि निधाय ब्राह्मणमेवमाम्नायते । प्रजा वै नरो वाक् शंसः । ऐ० ब्रा० ६. २७. । इति । अतो मनुष्यैः शस्यमानो यः सदसस्पतिर्यो वा नराशंसनामको देवस्तमपश्यं । शास्त्रदृष्ट्या दृष्टवानस्मि । कीदृशं । सुधृष्टममत्याधिक्येन धार्ष्ट्ययुक्तं सप्रथस्तममतिशयेन प्रख्यातं सद्ममखसं प्राप्ततेजस्कं । तत्र दृष्टांतः । दिवो न द्युलोकानिव । आदित्यचंद्रनक्षत्रादिभिरधिष्ठिता द्युलोकविशेषा यथा तेजस्विनस्तद्वदयं नराशंसस्तेजस्वीत्यर्थः ॥ सुधृष्टमं । शोभनं धृष्णोतीति सुधृक् । क्विन्निति क्विप् । आतिशायनिकस्तमप् । षकारस्य जश्त्वाभावश्छांदसः । छांदसत्वादुदात्तत्वेन ष्वकार उदात्तः । अपश्यं । पाघ्राध्मेत्यादिना पश्यादेशः । लुङ्लङ्लृङ्क्ष्वडुदात्तः । पा० ६. ४. ७१. । इत्यट उदात्तत्वं । पादादित्वान्न निघातः । सप्रथस्तमं । प्रथ प्रख्याने । प्रथनं प्रथः । सर्वधातुभ्योऽसुन् । नित्त्वादाद्युदात्तत्वं । सह प्रथसा वर्तत इति तेन सहेति तुल्ययोगे । पा० २. २. २८. । इति बहुव्रीहिसमासः । वोपसर्जनस्य । पा० ६. ३. ८२. । इति सादेशः । पूर्वपदप्रकृतिस्वरत्वे प्राप्ते परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । दिवः । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । सद्ममखसं । सीदंतीति सद्म । षद्लृ विशरणादौ । अन्येभ्योऽपि दृश्यंत इति मनिन् । नित्त्वादाद्युदात्तः । सद्म महो यस्येति बहुव्रीहौ हकारस्य व्यत्ययेन खकारः ॥ ॥ ३५ ॥

प्रति त्यमिति नवर्चं द्वितीयं सूक्तं । ऋषिच्छंदसी पूर्ववत् । देवता त्वनुक्रम्यते । प्रति त्यमाग्निमारुतमिति ॥ कारीर्यां प्रति त्यमित्येषा धाय्या । तथा च सूचितं । वर्षकामेष्टिः कारीरी तस्यां प्रति त्यं चारुमध्वरमीळे अग्निं स्ववसं नमोभिरिति धाय्ये । आ० २. १३. । इति ॥

प्रति॒ त्यं चारु॑मध्व॒रं गो॑पी॒थाय॒ प्र हू॑यसे । म॒रुद्भि॑रग्न॒ आ ग॑हि ॥ १ ॥

प्रति॑ । त्यं । चारुं॑ । अ॒ध्व॒रं । गो॒ऽपी॒थाय॑ । प्र । हू॒य॒से॒ । म॒रुत्ऽभिः॑ । अ॒ग्ने॒ । आ । ग॒हि॒ ॥ १ ॥

त्यच्छब्दः सर्वनाम तच्छब्दपर्यायः । हे अग्ने यो यज्ञस्यारंगवैकल्यरहितस्त्वं तथाविधं चारुमध्वरं प्रतिलभ्य गोपीथाय सोमपानाय प्र हूयसे । प्रकर्षेण त्वं हूयसे । तस्मादस्मिन्नध्वरे त्वं मरुद्भिर्देवविशेषैः सहा गहि । आगच्छ । सेयमृग्यास्केनैवं व्याख्याता । तं प्रति चारुमध्वरं सोमपानाय प्रहूयसे सोऽग्ने मरुद्भिः सहागच्छ । नि° १०. ३६. । इति ॥ प्रति । निपात आद्युदात्तः । त्यं । त्यदादीनामः । पा° ७. २. १०२. । प्रातिपदिकस्वरः । चारुं । दृसनिजनिचरीत्यादिना । उ° १. ३. । ञुण् । अत उपधाया इति वृद्धिः । ञित्वादाद्युदात्तः । गोपीथाय । निशीथगोपीथावगथाः । उ° २. ९. । इति थकप्रत्ययांतो निपातितः । प्र । निपातस्वरः ॥

नहि देवो न मर्त्यो महस्तव क्रतुं परः । मरुद्भिरग्न आ गहि ॥२॥

नहि । देवः । न । मर्त्यः । महः । तव । क्रतुं । परः । मरुत्ऽभिः । अग्ने । आ । गहि ॥२॥

हे अग्ने महो महतस्तव संबंधिनं क्रतुं कर्मविशेषमुल्लंघ्य परो नहि उत्कृष्टो देवो न भवति खलु । तथा मर्त्यो मनुष्यश्च परो न भवति । ये मनुष्यास्त्वदीयं क्रतुमनुतिष्ठंति ये च देवास्त्वदीये क्रताविज्यंते त एवोत्कृष्टा इत्यर्थः । मरुद्भिरित्यादि पूर्ववत् ॥ नहि । एवमादीनामंत इत्यंतोदात्तः । देवः । पचाद्यजंतश्चित्त्वादंतोदात्तः । महः । महतस्तलोपश्छांदसः । बृहन्महतोरुपसंख्यानं । पा° ६. १. १७३. १. । इति विभक्तेरुदात्तत्वं । तव । युष्मदस्मदोर्ङसीत्याद्युदात्तत्वं । क्रतुं । कृञः कतुः । उ° १. ७८. । प्रत्ययाद्युदात्तत्वं । गहि । गम्लृ सृप्लृ गतौ । लोटः सेर्हिः । बहुलं छंदसीति शपो लुक् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । तस्य[illegible] भादित्यसिद्धत्वादतो हेरिति लुङ् भवति । निघातः ॥

ये महो रजसो विदुर्विश्वे देवासो अद्रुहः । मरुद्भिरग्न आ गहि ॥३॥

ये । महः । रजसः । विदुः । विश्वे । देवासः । अद्रुहः । मरुत्ऽभिः । अग्ने । आ । गहि ॥३॥

हे अग्ने ये मरुतो महो रजसो महत उदकस्य वर्षणप्रकारं विदु[illegible] । कीदृशा मरुतः । विश्वे सर्वे सप्तविधगणोपेताः । सप्तगणा वै मरुतः । तै° सं° २. २. ११. १. । इति श्रुतेः । देवासो द्योतमाना अद्रुहो द्रोहरहिता वर्षणेन सर्वभूतोपकारित्वात् । तथा चोपरिष्टादाम्नायते । उदीरयथा मरुतः समुद्रतो यूयं वृष्टिं वर्षयथा पुरीषिणः । ऋग्वे° ५. ५५. ५. । इति । शाखांतरेऽपि मंत्रांतरस्य ब्राह्मणमेवमाम्नायते । मरुतां पृषतयः स्थेत्याह मरुतो वै वृष्ट्या ईशत इति । रजःशब्दो यास्केन बहुधा व्याख्यातः । रजो रजतेर्ज्योती रज उच्यत उदकं रज उच्यते लोका रजांस्युच्यंतेऽसृगहनी रजसी उच्येते । नि° ४. १९. । इति ॥ रजसः । नब्विषयस्यानिसंतस्येत्याद्युदात्तः । विदुः । विद ज्ञाने । विदो लटो वा । पा° ३. ४. ८३. । इति झेरुसादेशः । प्रत्ययस्वरः । [illegible] । विश्वे । विशेः क्वन्नंतस्य नित्वादाद्युदात्तत्वं । देवासः । आज्जसेरसुक् । देवशब्दः पचाद्यजंतः । चित्त्वादंतोदात्तः । अद्रुहः । संपदादित्वाद्भावे क्विपि बहुव्रीहौ नञ्सुभ्यामित्यंतोदात्तत्वं । कर्तरि वा क्विप् । तत्पुरुषे अव्ययपूर्वपदप्रकृतिस्वरत्वं स्यात् । न च तदुत्तरपदप्रकृतिस्वरत्वं । यतो नञ् न गतिर्न च कारक इति । पा° ६. २. १३९. ॥

य उग्रा अर्कमानृचुरनाधृष्टास ओजसा । मरुद्भिरग्न आ गहि ॥४॥

ये । उग्राः । अर्कं । आनृचुः । अनाधृष्टासः । ओजसा । मरुत्ऽभिः । अग्ने । आ । गहि ॥४॥

ये मरुत उग्रास्तीव्राः संतोऽर्कमुदकमानृचुः अर्चितवंतः । वर्षणेन संपादितवंत इत्यर्थः । तैर्मरुद्भिरित्यन्वयः । कीदृशा मरुतः । ओजसा बलेनानाधृष्टासोऽतिरस्कृताः । सर्वेभ्योऽपि प्रबला इत्यर्थः । अर्कशब्दस्योदकवाचित्वं वाजसनेयिन आमनंति । आपो वा अर्कः । शत° ब्रा° १०. ६. ५. २. । इति । तन्निर्वचनं च त एवामनंति । सोऽर्चन्नचरत्तस्यार्चत आपो[illegible] वै मे कमभूदिति तदेवार्कस्यार्कत्वं । शत° ब्रा° १०. ६. ५. १. । इति । जगत्स्रष्टा हिरण्यगर्भ उदकं स्रष्टुमुद्युक्तोऽर्चन् उदकसत्यसंकल्पमा[illegible]पनेन स्वात्मानं पूजयन्नचरत् । तथा पूजयतो हिरण्यगर्भस्य सकाशादुदकमुत्पन्नं । तदानीमर्चतो मत्तः कमभूदित्यवोचत् । तेनो[illegible]र्कनाम

निष्पन्नमित्यर्थः ॥ आनृचुः । अर्चतेः । अपस्पृधेथामित्यादिना । पा० ६. १. ३६. । निपातितः । प्रत्ययस्वरः । यद्वृत्तयोगान्न निघातः । अनाधृष्टासः । अव्ययपूर्वपदप्रकृतिस्वरत्वं । ओजसा । उब्जेर्बलोपश्च । उ० ४. १९१. । इत्यसुन । नित्त्वादाद्युदात्तः ॥

ये शुभ्रा घोरवर्पसः सुक्षत्रासो रिशादसः । मरुद्भिरग्न आ गहि ॥५॥

ये । शुभ्राः । घोरऽवर्पसः । सुऽक्षत्रासः । रिशादसः । मरुत्ऽभिः । अग्ने । आ । गहि ॥५॥

ये मरुतः शुभ्रत्वादिगुणोपेतास्तैर्मरुद्भिरित्यन्वयः । शुभ्राः शोभना घोरवर्पस उग्ररूपधराः सुक्षत्रासः शोभनधनोपेता रिशादसो हिंसकानां भक्षकाः । मघमित्यादिष्वष्टाविंशतिसंख्याकेषु धननामसु क्षत्रं भग इति पठितं ॥ शुभ्राः । स्फायितंचीत्यादिना शुभेरौणादिको रक्प्रत्ययः । प्रत्ययस्वरः । घोरवर्पसः । घोरं वर्पो येषां बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । सुक्षत्रासः । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । आद्युदात्तं द्व्यच्छंदसि । पा० ६. २. ११९. । इत्येव तु न भवति क्षत्रशब्दस्यांतोदात्तत्वात् । रिशंति हिंसंतीति रिशाः । तानदंतीति रिशादसः । सर्वधातुभ्योऽसुन्प्रत्ययः । नित्स्वरेणोत्तरपदमाद्युदात्तं । बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव शिष्यते ॥ ॥३६॥

ये नाकस्याधि रोचने दिवि देवास आसते । मरुद्भिरग्न आ गहि ॥६॥

ये । नाकस्य । अधि । रोचने । दिवि । देवासः । आसते । मरुत्ऽभिः । अग्ने । आ । गहि ॥६॥

ये मरुतो नाकस्याधि दुःखरहितस्य सूर्यस्योपरि दिवि द्युलोके रोचने दीप्यमाने ये देवासः स्वयमपि दीप्यमाना आसते । तैर्मरुद्भिरित्यन्वयः ॥ नाकस्य । कं सुखं । तदस्मिन्नास्त्यसावक इति बहुव्रीहिं कृत्वा पश्चान्नञ् । न अको नाक इति नञ्तत्पुरुषः । नलोपो नञः । पा० ६. ३. ७३. । इति लोपो न भवति । नभ्राण्नपादित्यादिना । पा० ६. ३. ७५. । प्रकृतिभावात् । तत्पुरुषे तुल्यार्थेत्यादिना । पा० ६. २. २. । अव्ययपूर्वपदप्रकृतिस्वरत्वेनोदात्तत्वं । प्रथमतस्तत्पुरुषं कृत्वा पश्चाद्बहुव्रीहावुत्तरपदांतोदात्तत्वं स्यात् । अधिशब्द उपर्यर्थे । उपसर्गप्रतिरूपको निपातः । रोचने । रुच दीप्तौ । अनुदात्तेतश्च हलादेरिति युच् । चित इत्यंतोदात्तत्वं । दिवि । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । देवासः । आज्जसेरसुगित्यसुक् । आसते । आस उपवेशने । अनुदात्तेत्त्वादात्मनेपदं । झस्यादादेशः । अदिप्रभृतिभ्यः शप इति शपो लुक् । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वं । यद्वृत्तयोगान्न निघातः ॥

य ईंखयंति पर्वतान् तिरः समुद्रमर्णवं । मरुद्भिरग्न आ गहि ॥७॥

ये । ईंखयंति । पर्वतान् । तिरः । समुद्रं । अर्णवं । मरुत्ऽभिः । अग्ने । आ । गहि ॥७॥

ये मरुतः पर्वतान्मेघानींखयंति चालयंति तथार्णवमुदकयुक्तं समुद्रं तिरः कुर्वंतीति शेषः । निश्चलस्य जलस्य तरंगाद्युत्पत्त्यर्थे चालनं तिरस्कारः । तैर्मरुद्भिरित्यन्वयः ॥ ईंखयंति । उख उखेत्यादावीखिर्गत्यर्थः । हेतुमति चेति णिच् । इदितो नुम् धातोरिति नुम् । णिजंतधातोश्चित इत्यंतोदात्तत्वं । शपः पित्त्वादनुदात्तत्वं । तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । पर्वतान् । पूर्व पर्व मर्व पूरणे । औणादिकोऽतन् । प्रत्ययस्वरः ॥

आ ये तन्वंति रश्मिभिस्तिरः समुद्रमोजसा । मरुद्भिरग्न आ गहि ॥८॥

आ । ये । तन्वंति । रश्मिऽभिः । तिरः । समुद्रं । ओजसा । मरुत्ऽभिः । अग्ने । आ । गहि ॥८॥

ये मरुतो रश्मिभिः सूर्यकिरणैः सहा तन्वंति आप्नुवंति । आकाशमिति शेषः । किंच ओजसा स्वकीयबलेन समुद्रं तिरस्कुर्वंति । तैर्मरुद्भिरित्यन्वयः ॥ तन्वंति । तनु विस्तारे । लटो झोऽंतः । तनादिकृञ्भ्य उः । पा॰ ३. १. ७९. । सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति तिङ एवाद्युदात्तत्वं । समुद्रं । उन्दी क्लेदने । स्फायितंचीति रक् । समासे कृदुत्तरपदप्रकृतिस्वरत्वं ॥

अभि त्वा पूर्वपीतये सृजामि सोम्यं मधु । मरुद्भिरग्न आ गहि ॥९॥

अभि । त्वा । पूर्वऽपीतये । सृजामि । सोम्यं । मधु । मरुत्ऽभिः । अग्ने । आ । गहि ॥९॥

हे अग्ने पूर्वपीतये पूर्वकाले प्रवृत्ताय पानाय त्वां प्रति सोम्यं मधु सोमसंबंधिनं मधुररसमभि सृजामि । सर्वतः संपादयामि । अतस्त्वं मरुद्भिः सहात्रागच्छ ॥ अभि । एवमादीनामंत इत्यंतोदात्तत्वं । त्वामौ द्वितीयाया इति त्वादेशः सर्वानुदात्तः । पूर्वपीतये । पूर्वा चासौ पीतिश्च । पुंवत्कर्मधारयेत्यादिना । पा॰ ६. ३. ४२. । पुंवद्भावः । सृजामि । सृज विसर्गे । मिपः पित्त्वादनुदात्तत्वं । विकरणस्वरः । सोम्यं । सोममर्हति यः । प्रत्ययस्वरेणांतोदात्तः । मधु । फलिपाटिनमीत्यादिना । उ॰ १. १९. । उप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तत्वं । अन्यद्गतं ॥ ॥३७॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके प्रथमोऽध्यायः समाप्तः ॥

---

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अत्र प्रथमाष्टके द्वितीयोऽध्याय आरभ्यते । तत्रायं देवायेत्यष्टर्चं सूक्तं । तस्य ऋषिच्छंदसी पूर्ववत् । ऋभुदेवताकत्वमनुक्रम्यते । अयमष्टावार्भवमिति ॥ विनियोगस्तु सूक्तस्य लैंगिकः स्मार्तो वा द्रष्टव्यः ॥ व्यूढस्य प्रथमे छंदोमे वैश्वदेवशस्त्रेऽयं देवाय जन्मन इत्यार्भवस्तृचः । अथ च्छंदोमा इति खंडे सूत्रितं । अभि त्वा देव सवितः प्रेतां यज्ञस्य शंभुवायं देवाय जन्मन इति तृचाः । आ॰ ८. ९. । इति ॥

अयं देवाय जन्मने स्तोमो विप्रेभिरासया । अकारि रत्नधातमः ॥१॥

अयं । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया । अकारि । रत्नऽधातमः ॥१॥

ऋभवो हि मनुष्याः संतस्तपसा देवत्वं प्राप्ताः । ते चात्र सूक्ते देवताः । तत्संघो जा[illegible]ना जन्मशब्देनैकवचनांतेनात्र निर्दिश्यते । जन्मने जायमानाय ऋभुसंघरूपाय देवाय तत्प्रीत्यर्थमयं स्तोमः स्तोत्रविशेषो विप्रेभिर्मेधाविभिर्ऋत्विग्भिरासया स्वकीयेनास्येनाकारि । निष्पादितः । कीदृशः स्तोमः । रत्नधातमोऽतिशयेन रमणीयमणिमुक्तादिधनप्रदः । स्तोत्रेण तुष्टा ऋभवो धनं प्रयच्छंतीत्यर्थः ॥ आसया । आस्य[illegible] । तृतीयैकवचनस्य सुपां सुलुगित्यादिना याजादेशः । व्यत्ययेन प्र[illegible] लोपः । चित इत्यंतोदात्तः । रत्नधातमः । रत्नानि दधातीति रत्नधाः । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

य इंद्राय वचोयुजा ततक्षुर्मनसा हरी । शमीभिर्यज्ञमाशत ॥२॥

ये । इंद्राय । वचःऽयुजा । ततक्षुः । मनसा । हरी इति । शमीभिः । यज्ञं । आशत ॥२॥

ये ऋभव इंद्रायेंद्रप्रीत्यर्थं वचोयुजा ताडनादिकं विना वाङ्मात्रेण रथे युज्यमानौ सुशिक्षितौ हरी एतन्नामकावश्वौ मनसा ततक्षुः संपादितवंतः। ऋभूणां सत्यसंकल्पत्वात्तत्संकल्पमात्रेणेंद्रस्याश्वौ संपन्नावित्यर्थः। ते ऋभवः शमीभिर्ग्रहचमसादिनिष्पादनरूपैः कर्मभिर्यज्ञमस्मदीयमाशत। व्याप्नवंतः। अपोऽम इत्यादिषु षड्विंशतिसंख्याकेषु कर्मनामसु शमी शिमीति पठितं ॥ वचोयुजा। वचसा युंजाति। सत्सूद्विषेत्यादिना क्विप्। सुपां सुलुगित्यादिना विभक्तेराकारः। कृदुत्तरपदप्रकृतिस्वरः। ततक्षुः। तक्षू त्वक्षू तनूकरणे। लिटि झेरुसादेशः। पादादित्वादनिघातः। शमीभिः। शमयंति पापानीति शम्यः कर्माणि। औणादिक इन्। कृदिकारादक्तिनः। पा॰ ४.१.४५.। इति ङीष्। वृषादित्वादाद्युदात्तः। आशत। अशू व्याप्तौ। लङि झस्यादादेशः। स्वादिभ्यः श्नुः। तस्य बहुलं छंदसीति लुक्। आडागमः। तिङ्ङतिङ इति निघातः ॥

तक्ष॒न्नास॑त्याभ्यां॒ परि॑ज्मानं सु॒खं रथं॑। तक्ष॑न्धे॒नुं स॑ब॒र्दुघां॑ ॥३॥

तक्ष॑न्। नास॑त्याभ्यां। परि॑ऽज्मानं। सु॒ऽखं। रथं॑। तक्ष॑न्। धे॒नुं। स॒ब॒ः॒ऽदुघां॑ ॥३॥

नासत्याभ्यामश्विदेवप्रीत्यर्थं रथं तक्षन्। ऋभवो देवाः कंचिद्रथमतक्षन्। तक्षणेन संपादितवंतः। कीदृशं। परिज्मानं परितो गंतारं सुखं उपर्युपवेशने सुखकरं। किंच धेनुं कांचिद्गां तक्षन्। धातूनामनेकार्थत्वात्तक्षतिरत्र संपादनवाची। कीदृशीं धेनुं। सबर्दुघां सबरः क्षीरस्य दोग्ध्रीं ॥ तक्षन्। बहुलं छंदसीत्यडभावः। नासत्याभ्यां। न विद्यते सत्यं ययोस्तावसत्यौ। न असत्यौ नासत्यौ। नभ्राण्नपादित्यादिना नलोपाभावः। परिज्मानं। अजेः परिपूर्वस्य श्वन्नुक्षन्नित्यादिना। उ॰ १.१५८.। मन्प्रत्ययेऽकारलोप आद्युदात्तत्वं च निपातनात्। सबर्दुघां। सबः पयो दोग्धीति सबर्दुघा। दुहः कब्घश्च। पा॰ ३.२.७०.। इति कप्। सबरिति रेफांतं प्रातिपदिकं क्षीरवाचीति संप्रदायविदः। कपः पित्त्वादनुदात्तत्वं। धातुस्वर एव शिष्यते। समासे कृदुत्तरपदप्रकृतिस्वरः ॥

द्वितीये छंदोमे वैश्वदेवशस्त्रे युवाना पितरा पुनरित्यार्भवस्तृचः। द्वितीयस्याग्निं वो देवमिति खंडे सूचितं। मही द्यौः पृथिवी च नो युवाना पितरा पुनरिति तृचौ। आ॰ ८.१०.। इति ॥

युवा॑ना पि॒तरा॒ पुन॑ः स॒त्यमं॑त्रा ऋजू॒यव॑ः। ऋ॒भवो॑ वि॒ष्ट्य॑क्रत ॥४॥

युवा॑ना। पि॒तरा॑। पुन॒रिति॑। स॒त्यऽमं॑त्राः। ऋ॒जु॒ऽयव॑ः। ऋ॒भव॑ः। वि॒ष्टी। अ॒क्र॒त ॥४॥

ऋभव एतन्नामका देवाः पितरौ स्वकीयौ मातापितरौ पूर्वं वृद्धावपि पुनर्युवाना तरुणावक्रत। कृतवंतः। कीदृशाः। सत्यमंत्रा अवितथमंत्रसामर्थ्योपेताः। पुरश्चरणाद्यनुष्ठानेन संजातमंत्रसिद्धयः। यत्फलं हि मंत्राः प्रयुज्यंते तत्तत्फलं तथैव संपद्यते। तस्माज्जीर्णयोः पित्रोर्युवत्वं संपादयितुं समर्था इत्यर्थः। ऋजूयव ऋजुतामात्मन इच्छंतः। छलरहिता इत्यर्थः। अत एवैतेषामनुष्ठिता मंत्राः सिध्यंति। विष्टी विष्टयो व्याप्तियुक्ताः। सर्वेषु कार्येष्वेतदीयस्य मंत्रसामर्थ्यस्याप्रतिघातोऽत्र व्याप्तिरुच्यते। ऋभुशब्दं यास्क एवं निर्वक्ति। ऋभव उरु भांतीति वर्तेन भांतीति वर्तेन भवंतीति वा। नि॰ ११.१५.। इति ॥ युवाना। युवन्शब्दो यौतेः कनिनंतो नित्त्वादाद्युदात्तः। सुपां सुलुगित्यादिना विभक्तेराकारः। पितरा। पूर्ववदाकारः। सत्यमंत्राः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। ऋजुशब्दो भावपरः। ऋजुत्वमात्मन इच्छंति। क्यच्। अकृत्सार्वधातुकयोर्दीर्घः। पा॰ ७.४.२५.। इति दीर्घः। क्याच्छंदसीत्युप्रत्ययः। प्रत्ययस्वरः। विष्टी। विष्लृ व्याप्तौ। क्तिच्क्तौ च संज्ञायामिति क्तिच्। तितुत्रेत्यादिनेट्प्रतिबंधः। तस्माज्जस इयाडियाजीकाराणामुपसंख्यानं। पा॰ ७.१.३९.१.। इति तस्येकारादेशः। स चालोऽंत्यस्य। पा॰ १.१.५२.। इति सकारस्य भवति। तत आद्गुण इति गुणे कृते प्रथमयोः पूर्वसवर्णः। पा॰ ६.१.१०२.। इति पूर्वसवर्णदीर्घः। तं बाधित्वा परत्वाज्जसि च। पा॰ ७.३.१०९.। इति ह्रस्वस्य गुणेन भवितव्यमिति चेन्न। सं[illegible] विधेरनित्यत्वात्। अक्रत। कृञो लुङ्। आत्मनेपदं। झस्य [illegible]। मंत्रे घसेत्यादिना। पा॰ २.४.८०.। च्लेर्लुक्। यणादेशः। अडागमः। निघातः ॥

सं वो॒ मदा॑सो अग्मते॒न्द्रे॑ण च म॒रुत्व॑ता । आ॒दि॒त्येभि॑श्च॒ राज॑भिः ॥ ५ ॥

सं । व॒ः । मदा॑सः । अ॒ग्म॒त॒ । इन्द्रे॑ण । च॒ । म॒रुत्व॑ता । आ॒दि॒त्येभि॑ः । च॒ । राज॑ऽभिः ॥ ५ ॥

हे ऋभवो वो युष्माकं संबंधिनो मदासो मदहेतवः सोमा इंद्रेण चादित्यैभिरादित्यैश्च समग्मत । संगताः । ऋभूणामिंद्रादित्यैः सह सोमपानं तृतीयसवनेऽस्ति । अत ए[illegible]द् आश्वलायनेनैवं पठितः । इंद्रमादित्यवंतमृभुमंतं विभुमंतं वाजवंतं बृहस्पतिमंतं विश्वदेव्यावंतमावहेति । आ॰ ५. ३. । कीदृशेनेंद्रेण । मरुत्वता मरुद्भिर्युक्तेन । अत एव मंत्रांतरमेवमाम्नायते । मरुद्भिरिंद्र सख्यं ते अस्तु । ऋग्वे॰ ८. ९६. ७. । इति । कीदृशैरादित्यैभिः । राजभिर्दीप्यमानैः ॥ मदासः । मावंत्येभिरिति मदाः सोमाः । मदोऽनुपसर्गे । पा॰ ३. ३. ६७. । इत्यप् । तस्य पित्त्वादनुदात्तत्वं । धातुस्वर एव शिष्यते । आज्जसेरसुगिति जसोऽसुगागमः । अग्मत । गमेः संपूर्वाल्लुङ् । समो गम्यृच्छीत्यादिना । पा॰ १. ३. २९. । आत्मनेपदं । झस्यादादेशः । मंत्रे घसेत्यादिना च्लेर्लुक् । गमहनेत्यादिना । पा॰ ६. ४. ९८. । उपधालोपः । व्यवहिताश्चेति समो व्यवहितप्रयोगः । निघातः । मरुत्वता । मरुतोऽस्य संतीति मरुत्वान् । तसौ मत्वर्थ इति भसंज्ञया पदसंज्ञाया बाधितत्वाज्जश्त्वाभावः । झयः । पा॰ ८. २. १०. । इति मतुपो वत्वं । आदित्येभिः । बहुलं छंदसीति भिस ऐसादेशाभावे बहुवचने झल्येदित्येत्वं । राजभिः । राजन्शब्दस्य कनिनंतत्वेन नित्त्वादाद्युदात्तत्वं ॥ ॥ १ ॥

उ॒त त्यं च॑म॒सं नव॒ं त्वष्टु॑र्दे॒वस्य॒ निष्कृ॑तं । अक॑र्त च॒तुर॒ः पुन॑ः ॥ ६ ॥

उ॒त । त्यं । च॒म॒सं । नव॑ं । त्वष्टु॑ः । दे॒वस्य॑ । निःऽकृ॑तं । अक॑र्त । च॒तुर॑ः । पुन॒रिति॑ ॥ ६ ॥

उतापि च त्वष्टुरेतन्नामकस्य देवस्य संबंधी तक्षणव्यापारः । नवं नूतनं त्यं चमसं तं सोमधारणक्षमं काष्ठपात्रविशेषं निष्कृतं निःशेषेण संपादितमकरोदिति शेषः । तक्षणव्यापारकुशलस्य त्वष्टुः शिष्या ऋभवस्तेन निर्मितं तमेकं चमसं पुनरपि चतुरोऽकर्त । चतुर्धा विभक्तांश्चमसान्कृतवंतः । एकस्य चतुर्विधत्वकरणरूपोऽयमर्थो मंत्रांतरेऽपि विस्पष्टः । एकं चमसं चतुरः कृणोतन । ऋग्वे॰ १. १६१. २. । इति ॥ नवं । णु स्तुतौ । नूयत इति नवं । कर्मणि अप्प्रत्ययः । स हि घञोऽपवादत्वाद्घञर्थे सर्वत्र भवति । घञ्प्रत्ययश्चाकर्तरि च कारके संज्ञायां । पा॰ ३. ३. १९. । इति कर्तृव्यतिरिक्ते सर्वत्र कारके भवति । यद्यपि तत्र संज्ञायामित्युक्तं तथापि चकारस्य संज्ञाव्यभिचारार्थत्वादसंज्ञायामपि भवत्येव । संबध्यत इति संबंधः । कर्मणि घञित्युक्तं । त्वष्टुः । तक्षू त्वक्षू तनूकरणे । औणादिकस्तृन् । ऊदित्त्वात्पक्ष इडभावः । पा॰ ७. २. ४४. । स्कोः संयोगाद्योरंते च । पा॰ ८. २. २९. । इति ककारलोपः । निष्कृतं । कृञो निरुपसृष्टात्कर्मणि क्तः । प्रादिसमासे नित्यं समासेऽनुत्तरपदस्थस्य । पा॰ ८. ३. ४५. । इति षत्वं । अत्र कर्तृकर्मणोः कृति । पा॰ २. ३. ६५. । इति प्राप्ता षष्ठी यद्यपि न लोकाव्ययेति निषिद्धा । पा॰ २. ३. ६९. । तथापि कर्तुः शेषत्वेन विवक्षितत्वात्कर्तृकरणयोस्तृतीया । पा॰ २. ३. १८. । इत्येतस्याः प्राप्तेः शैषिकी षष्ठी । यथा कर्मणि शेषत्वेन विवक्षिते । पा॰ २. ३. ५०. । माषाणामश्नीयादिति । गतिरनंतर इति निस उदात्तत्वं । अकर्त । अकृषत । कृञो लुङि झस्य व्यत्ययेन तादेशः । मंत्रे घसेत्यादिना च्लेर्लुक् । छंदस्युभयथेति तिङ आर्धधातुकत्वाद्ङित्त्वाभावेन गुणः । चतुरः । चतुरः शसि । पा॰ ६. १. १६७. । इत्युकार उदात्तः । पुनः । स्वरादिष्वाद्युदात्तः पठितः ॥

तृतीये छंदोमे वैश्वदेवशस्त्रे ते नो रत्नानि धत्तनेति द्वे ऋचावार्भव्यौ । तृतीयस्यागन्म महेति खंडे सूत्रितं । इंद्र इषे ददातु नस्ते नो रत्नानि धत्तनेत्येका द्वे च । आ॰ ८. ११. । इति ॥

ते नो॒ रत्ना॑नि धत्तन॒ त्रिरा साप्ता॑नि सुन्व॒ते । एक॑मेकं सुश॒स्तिभि॑ः ॥ ७ ॥

ते । न॒ः । रत्ना॑नि । ध॒त्त॒न॒ । त्रिः । आ । साप्ता॑नि । सु॒न्व॒ते । एक॑म्ऽएकं । सु॒श॒स्तिऽभि॑ः ॥ ७ ॥

पूर्वास्वृक्षु ये प्रतिपादिता ऋभवस्ते यूयं सुशस्तिभिः शोभनैः [illegible]र्युक्ताः संतो नोऽस्माकं संबंधिने सुन्वते सोमाभिषवं कुर्वते यजमानाय रत्नानि रमणीयानि सुवर्णमणिमुक्तादीनि धनान्येकमेकं क्रमेण प्रत्येकं धत्तन । प्रयच्छत । सुवर्णादीनां मध्ये प्रतिद्रव्यं यावदपेक्षितं तावदिति विवक्षयैकमेकमित्युक्तं । कीदृशानि

रत्नानि । त्रिरा त्रिवारमावृत्तानि । उत्तमानि मध्यमान्यधमानि चेत्येवं रत्नानां त्रिरावृत्तिः । किंच साप्तानि सप्तसंख्यानिष्पन्नवर्गरूपाणि कर्माणि च धत्तन । संपादयत । कीदृशानि साप्तानि । त्रिरा त्रिवारमावृत्तानि । अग्न्याधेयदर्शपूर्णमासादीनां सप्तानां हविर्यज्ञानामेको वर्गः । औपासनहोमो वैश्वदेवमित्यादीनां सप्तानां पाकयज्ञानां वर्गो द्वितीयः । अग्निष्टोमोऽत्यग्निष्टोम इत्यादीनां सप्तानां सोमसंस्थानां वर्गस्तृतीयः ॥ रत्नानि । रमु क्रीडायां । निदित्यनुवृत्तौ रमेस्त च । उ॰ ३. १४. । इति नप्रत्ययः । तत्संनियोगेन मकारस्य तकारः । नित्त्वादाद्युदात्तः । धत्तन । धत्त । तप्तनप्तनथनाश्चेति तशब्दस्य तनादेशः । सप्तानां वर्गः साप्तं । सप्तनोऽञ् छंदसि । पा॰ ५. १. ६१. । इति वर्गेऽञ्प्रत्ययः । नस्तद्धिते । पा॰ ६. ४. १४४. । इति टिलोपः । ञित्त्वादादिवृद्धिराद्युदात्तत्वं च । अत्र वर्गवचनेनानेन वर्गिणो लक्ष्यंते । तेन बहुवचनं । अन्यथा ह्येक एव वर्गस्त्रिरावृत्त इत्येकवचनमेव स्यात् । सुन्वते । शतुरनुम इति विभक्तेरुदात्तत्वं । एकमेकं । नित्यवीप्सयोरिति वीप्सायां द्विर्भावः । एकशब्द इणः कनंतो नित्त्वादाद्युदात्तः । द्वितीयस्यैकशब्दस्य तस्य परमाम्रेडितमित्याम्रेडितसंज्ञायामनुदात्तं चेत्यनुदात्तत्वं । सुशस्तिभिः । शस्यत आभिरिति शस्तय ऋचः । शंसु स्तुतौ । करणे क्तिन् । तस्य कित्त्वान्नलोपः । शोभनाः शस्तय इति प्रादिसमासे यद्यपि च क्तिनो नित्त्वादाद्युदात्तत्वेन कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव प्राप्तं तत्तु परेण मन्क्तिन्व्याख्यानेत्यादिनोत्तरपदांतोदात्तत्वेन बाध्यते । पा॰ ६. २. १५१. ॥

अधारयंत वह्नयोऽभजंत सुकृत्यया । भागं देवेषु यज्ञियं ॥ ८ ॥
अधारयंत । वह्नयः । अभजंत । सुऽकृत्यया । भागं । देवेषु । यज्ञियं ॥ ८ ॥

वह्नयश्चमसादिसंपादनेन यज्ञस्य वोढार ऋभवोऽधारयंत । पूर्वं मनुष्यत्वेन मरणयोग्या अप्यमृतत्वलाभेन प्राणान्धारितवंतः । तथा च मंत्रांतरमाम्नायते । मर्तासः संतो अमृतत्वमानशुः । ऋग्वे॰ १. ११०. ४. । इति । किंचैते सुकृत्यया यज्ञसाधनद्रव्यसंपादनरूपेण शोभनव्यापारेण देवेषु मध्ये स्थिता यज्ञियं यज्ञार्हं भागं हविर्लक्षणमभजंत । सेवितवंतः । अयमर्थः सौधन्वना यज्ञियं भागमानश । ऋग्वे॰ ३. ६०. १. । इत्यादिमंत्रे विस्पष्टः । ब्राह्मणेऽप्यृभवो वै देवेषु तपसा सोमपीथमभ्यजयन् । ऐ॰ ब्रा॰ ३. ३०. । इत्याद्युपाख्यानं विस्पष्टं ॥ वह्नयः । निदित्यनुवृत्तौ वहिश्रीत्यादिना निप्रत्ययः । अभजंत । पादादित्वादनिघातः । सुकृत्यया । विभाषा कृवृषोः । पा॰ ३. १. १२०. । इति कृञः कर्मणि क्यप् । शोभनं कृत्यं यस्या भजनक्रियायाः सा सुकृत्या । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं बाधित्वा नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । ननु कृत्यशब्दे क्यपः पित्त्वेनानुदात्तत्वाद्धातु-स्वरेणादिरुदात्तः । ततश्चाद्युदात्तं द्व्यच्छंदसीत्यनेनाद्युदात्तत्वेन भवितव्यं । तेन हि पुरस्तादपवादेन परमपि नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं बाध्यत इत्युक्तं । एवं तर्हि कृञः श च । पा॰ ३. ३. १००. । इति स्त्रियां भावे क्यप्प्रत्ययांतः कृत्याशब्दः । क्यपः पित्त्वेऽपि व्यत्ययेनोदात्तत्वं । प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते । भागं । कर्षात्वतः । पा॰ ६. १. १५९. । इत्यंतोदात्तः । यज्ञियं । यज्ञमर्हतीत्यर्थे यज्ञर्त्विग्भ्यां घखञौ । पा॰ ५. १. ७१. । इति घः । तस्य इयादेशः । प्रत्ययस्वरः ॥ ॥ २ ॥

इहेंद्राग्नी इत्यादिकं षडृचं चतुर्थं सूक्तं । तस्य ऋषिच्छंदसी पूर्ववत् । देवता इंद्राग्नी । इह षळैंद्राग्नमिति ॥ विनियोगस्तु । अग्निष्टोमेऽच्छावाकशस्त्र इहेंद्राग्नी उप ह्वय इति सूक्तं । स्तोत्रमग्रे शस्त्रादिति खंड इहेंद्राग्नी उपेयं वामस्य मन्मन इति नव । आ॰ ५. १०. । इति सूत्रितत्वात् ॥ तथाभिप्लवषडहे प्रातःसवनेऽच्छावाकशस्त्रे स्तोमातिशंसनार्थमेतदेव सूक्तं । तथा च सूत्रितं । अभिप्लवपृष्ठ्याहानां तु इहेंद्राग्नी इंद्राग्नी आ गतं । आ॰ ७. ५. । इति ॥

इहेंद्राग्नी उप ह्वये तयोरित्स्तोममुश्मसि । ता सोमं सोमपातमा ॥ १ ॥
इह । इंद्राग्नी इति । उप । ह्वये । तयोः । इत् । स्तोमं । उश्मसि । ता । सोमं । सोमऽपातमा ॥ १ ॥

इह । अस्मिन्कर्मणींद्राग्नी देवावुप ह्वये । आह्वयामि । तयोरिंद्राग्न्योरेव स्तोमं स्तोत्रमुश्मसि । कामयामहे । सोमपातमातिशयेन सोमं पातुं चमौ तौ द्वौ देवौ सोमं पिबतामिति शेषः ॥ इंद्राग्नी । अत्र देवता-

द्वंद्वेऽपि पूर्वपदस्यानङ् न भवति । तत्र हि द्वंद्व इत्यनुवृत्तौ पुनर्द्वंद्वग्रहणाल्लोकप्रसिद्धसाहचर्याणामेव द्वंद्व इत्युक्तं । का° ६. ३. २६. । तस्मादत्रावग्रहे ह्रस्व इंद्रशब्दः । समासस्येत्यंतोदात्तत्वं । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं तु न भवति । अग्निशब्दस्यानुदात्तादित्वेन नोत्तरपदेऽनुदात्तादौ । पा° ६. २. १४२. । इति प्रतिषेधात् । उश्मसि । वश कांतौ । लटो मस् । इदंतो मसिः । पा° ७. १. ४६. । इतीकारोपजनः । अदादित्वाच्छपो लुक् । ग्रहिज्येत्यादिना संप्रसारणं । ता सोमपातमा । उभयत्र सुपां सुलुगित्याकारः ॥

ता यज्ञेषु प्र शंसतेंद्राग्नी शुंभता नरः । ता गायत्रेषु गायत ॥ २ ॥

ता । यज्ञेषु । प्र । शंसत । इंद्राग्नी इति । शुंभत । नरः । ता । गायत्रेषु । गायत ॥ २ ॥

हे नरो मनुष्या ऋत्विजः ता पूर्वोक्तौ ताविंद्राग्नी यज्ञेष्वनुष्ठीयमानकर्मसु प्र शंसत शस्त्रैः । तथा शुंभत । नानाविधैरलंकारैः शोभितौ कुरुत । तथा ता पूर्वोक्तौ ताविंद्राग्नी गायत्रेषु गायत्रं छंदस्केषु मंत्रेषु सामरूपेण गायत ॥ ता । सुपां सुलुगित्याकारः । शुंभत । अन्येषामपि दृश्यत इति दीर्घः ॥

ता मित्रस्य प्रशस्तय इंद्राग्नी ता हवामहे । सोमपा सोमपीतये ॥ ३ ॥

ता । मित्रस्य । प्रऽशस्तये । इंद्राग्नी इति । ता । हवामहे । सोमऽपा । सोमऽपीतये ॥ ३ ॥

मित्रस्य स्नेहविषयस्य ममानुष्ठातुः प्रशस्तये ता पूर्वोक्तौ देवौ संपद्येतामिति शेषः । यद्वा । मित्रस्य मम संबंधिनौ ताविंद्राग्नी प्रशस्तये प्रशंसितुमिच्छाम इति शेषः । सोमपा सोमपानक्षमौ ता पूर्वोक्ताविंद्राग्नी सोमपीतये सोमपानार्थं हवामहे । आह्वयामः ॥ प्रशस्तये । तुमर्थाच्च भाववचनात् । पा° २. ३. १५. । इति चतुर्थी । कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा तादौ च निति कृत्यतौ । पा° ६. २. ५०. । इति गतेः प्रकृतिस्वरत्वं । सोमपीतये । सोमस्य पीतिर्यस्मिन्कर्मणि तस्मै । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । सोमस्य पीतिरिति तत्पुरुषे वा दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं ॥

उग्रा संता हवामह उपेदं सवनं सुतं । इंद्राग्नी एह गच्छतां ॥ ४ ॥

उग्रा । संता । हवामहे । उप । इदं । सवनं । सुतं । इंद्राग्नी इति । आ । इह । गच्छतां ॥ ४ ॥

सुतमभिषवोपेतमिदमनुष्ठीयमानं सवनं प्रातःसवनादिरूपं कर्मोप सामीप्येन प्राप्तुमुग्रा संता वैरिवधादिषु क्रूरौ संतौ देवौ हवामहे । आह्वयामः । इंद्राग्नी देवाविह कर्मण्या गच्छतां ॥ संता । अस्तेः शतरि श्नसोरल्लोपः । सवनं सुतमिति द्वयं सेमं नः सोममा गहि । ऋग्वे° १. १६. ५. । इत्यत्रोक्तं ॥

ता महांता सदस्पती इंद्राग्नी रक्ष उब्जतं । अप्रजाः संत्वत्रिणः ॥ ५ ॥

ता । महांता । सदस्पती इति । इंद्राग्नी इति । रक्षः । उब्जतं । अप्रजाः । संतु । अत्रिणः ॥ ५ ॥

तौ पूर्वोक्ताविंद्राग्नी रक्षो राक्षसजातमुब्जतं । ऋजुकुरुतं । क्रौर्यं परित्याजयतमित्यर्थः । कीदृशौ । महांता महांतौ गुणैरधिकौ सदस्पती सभापालकौ । तयोः प्रसादादत्रिणो भक्षका राक्षसा अप्रजा अनुत्पन्नाः संतु ॥ महांता । सांतमहतः संयोगस्य । पा° ६. ४. १०. । इति दीर्घः । सदस्पती । सदसस्पती इति समासे षष्ठ्या लुकि प्रातिपदिकसकारस्य रुत्वाभावश्छांदसः । उभे वनस्पत्यादिषु युगपदित्युभयपदप्रकृतिस्वरत्वं । इंद्राग्नी । आमंत्रितानुदात्तत्वं । अप्रजाः । प्रजायंत इति प्रजाः । अन्येष्वपि दृश्यते । पा° ३. २. १०१. । इति जनेर्डप्रत्ययः । न प्रजा अप्रजाः । प्रजाशब्दस्य बहुव्रीहौ हि नित्यमसिच् प्रजामेधयोः । पा° ५. ४. १२२. । इत्यसिजादेशः स्यात् । अव्ययपूर्वपदप्रकृतिस्वरः । अत्रिणः । तृजंतस्यात्तृशब्दस्य जसश्छांदस इनुडागमः । चित इति ऋकार उदात्तः । तस्य यणादेश उदात्तयणो हल्पूर्वादितीकार उदात्तः ॥

तेन सत्येन जागृतमधि प्रचेतुने पदे । इंद्राग्नी शर्म यच्छतं ॥ ६ ॥

तेन । सत्येन । जागृतं । अधि । प्रऽचेतुने । पदे । इंद्राग्नी इति । शर्म । यच्छतं ॥ ६ ॥

हे इंद्राग्नी सत्येनावश्यफलप्रदानादवितथेन तेनास्माभिरनुष्ठितेन कर्मणा प्रचेतुने प्रकर्षेण फलभोगज्ञापके पदे स्वर्गलोकादिस्थानेऽधि जागृतं। आधिक्येन सावधानौ भवतं। ततोऽस्मभ्यं शर्म यच्छतं। सुखं गृहं वा दत्तं। गयः छदर इत्यादिषु द्वाविंशतिसंख्याकेषु गृहनामसु शर्म वर्मेत्युक्तं॥ जागृतं। जागृ निद्राक्षये। अदिप्रभृतिभ्यः शप इति शपो लुक्। तिङ्ङतिङ इति निघातः। प्रचेतुने। चिती संज्ञाने इत्यस्माण्णयंताद्बाहुलकादौणादिक उनप्रत्ययः। समासे कृदुत्तरपदप्रकृतिस्वरत्वं। इंद्राग्नी। हेइंद्राग्नी इत्यत्रोक्तं। आमंत्रितत्वादाद्युदात्तत्वमत्र विशेषः। शृणाति हिनस्ति दुःखमिति शर्म। शॄ हिंसायां। अन्येभ्योऽपि दृश्यंत इति मनिन्। यच्छतं। इषुगमियमां छ इति छः॥ ॥३॥

प्रातर्युजेत्यादिकमेकविंशत्यृचं पंचमं सूक्तं। तस्य ऋषिश्छंदसी पूर्ववत्। देवताविशेषस्त्वनुक्रम्यते। प्रातर्युजा सैका चतस्र आश्विन्यस्तथा सावित्र्य आग्नेय्यौ द्वे देवीनामैकैकेंद्राणीवरुणान्यग्नायीनां द्यावापृथिव्ये पार्थिवी षड्वैष्णव्योऽतो देवा दैवी वेति। सूक्तसंख्यानुवर्तत इत्यस्मिन्खंडेऽनिरुक्ता संख्या विंशतिः। अनु० १२. ४.। इति परिभाषितत्वात् प्रातर्युजेति सूक्ते संख्याविशेषस्यानिरुक्ता संख्या विंशतिसंख्या द्रष्टव्या। सा च विंशतिरेकयाधिकया सह वर्तत इति सैका। तत्रादौ चतस्र ऋचोऽश्विदेवताकाः। पंचमीमारभ्याष्टम्यंताश्चतस्रः सवितृदेवताकाः। नवमी दशमी चोभे अग्निदेवताके। एकादश्या ऋचो देवसंबंधिन्यो देव्यो देवताः। द्वादश्या इंद्रवरुणाग्निपत्न्य इंद्राणीवरुणान्यग्नाय्यो देवताः। त्रयोदशीचतुर्दश्यौ द्यावापृथिवीदेवताके। पंचदशी पार्थिवी। षोडश्याद्याः षड्विष्णुदेवत्याः। षोडशी छत्स्नदेवत्या वा॥ अत्र सूक्तविनियोगो लैंगिकः॥ प्रातरनुवाक आश्विने क्रतौ प्रातर्युजा वि बोधयेति चतस्र ऋचः। सूचितं च। अथाश्विन एषो उषाः प्रातर्युजेति चतस्रः। आ० ४. १५.। इति॥ आश्विनग्रहस्य प्रातर्युजेत्येका पुरोनुवाक्या द्विदेवत्यैश्चरंतीति खंडे सूचितं। आश्विनस्य प्रातर्युजा वि बोधय। आ० ५. ५.। इति॥

प्रातर्युजा वि बोधयाश्विनावेह गच्छतां। अस्य सोमस्य पीतये॥१॥

प्रातःऽयुजा। वि। बोधय। अश्विनौ। आ। इह। गच्छतां। अस्य। सोमस्य। पीतये॥१॥

अत्र होताध्वर्युमुद्दिश्य ब्रूते। हे अध्वर्यो प्रातर्युजा प्रातःसवनग्रहेण [illegible] देवौ वि बोधय। विशेषेण प्रबुद्धौ कुरु। अश्विनौ प्रबुद्धौ चाश्विनौ देवावस्याभिषवसंस्कारयुक्तस्य सोमस्य पीतये पानायेह कर्मण्या गच्छतां॥ प्रातर्युजाति गृह्यमाणेन ग्रहेण सहेति प्रातर्युजा। सत्सूद्विषेत्यादिना क्विप्। सुपां सुलुगित्याकारः। कृदुत्तरपदप्रकृतिस्वरत्वं। अस्य। ऊडिदं[illegible]ना विभक्तेरुदात्तत्वं। पीतये। व्यत्ययेन क्तिन उदात्तत्वं॥

या सुरथा रथीतमोभा देवा दिविस्पृशा। अश्विना ता हवामहे॥२॥

या। सुऽरथा। रथिऽतमा। उभा। देवा। दिविऽस्पृशा। अश्विना। ता। हवामहे॥२॥

योभाश्विना देवा यावुभावश्विनौ देवौ सुरथा शोभनरथयुक्तौ रथीतमा रथिनां मध्येऽतिशयेन रथिनौ दिविस्पृशा द्युलोकनिवासिनौ ता हवामहे। तादृशावश्विनावाह्वयामः॥ येत्यादिष्वष्टसु पदेषु सुपां सुलुगिति द्विवचनस्याकारः। सुरथा। शोभनो रथो ययोस्तौ सुरथौ। समासांतोदात्तत्वापवादं बहुव्रीहौ पूर्वपदप्रकृतिस्वरं बाधित्वा नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वे प्राप्त आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। रथीतमा। अन्येषामपि दृश्यत इति संहितायामिकारस्य दीर्घत्वं। दिविस्पृशा। दिवि स्पृशत इति दिविस्पृशौ। क्विप्चेति क्विप्। तत्पुरुषे कृति बहुलमित्यलुक्। गतिकारको[illegible]ति कृदुत्तरपदप्रकृतिस्वरत्वं॥

या वां कशा मधुमत्यश्विना सूनृतावती। तया यज्ञं मिमिक्षतं॥३॥

या। वां। कशा। मधुऽमती। अश्विना। सूनृताऽवती। तया। यज्ञं। मिमिक्षतं॥३॥

अश्विना हे अश्विनौ देवौ वां युवयोः संबंधिनी या कशाश्वताडनी विद्यते तया सहागत्य यज्ञमस्मदीयं

मिमिक्षतं। सोमरसेन सेक्तुमिच्छतं। कशयाश्वान्दृढं ताडयित्वा सहसा समागत्य भवद्विषयां सोमरसाहुतिं निष्पादयितुमुद्युक्तौ भवतमित्यर्थः। कीदृशी कशा। मधुमती। अर्णः क्षोद इत्यादिष्वेकशतसंख्याकेषूदकनामसु मधु पुरीषमिति पठितं। तस्मादुदकवतीत्युक्तं भवति। अश्वस्य शीघ्रगत्या यत्स्वेदोदकं स्रवति तेनेयं कशा क्लिन्नेत्यर्थः। सूनृतावती प्रियसत्यवाग्युक्ता। तीव्रेण कशाताडनेन यो ध्वनिर्निष्पद्यते ताडनवेलायामश्वारूढेन च य आक्रोशः क्रियते तदुभयं शीघ्रगमनहेतुत्वेन यजमानस्य प्रियं। यद्वा। श्लोको धारेत्यादिषु सप्तपंचाशद्वाङ्नामसु कशा धिषणेति पठितं। अश्विनोर्या वाक् मधुमती माधुर्योपेता [illegible] सूनृतावती प्रियत्वसत्यत्वोपेता। फलप्र[illegible]र्थः। तया वाचा युक्तौ यज्ञं मिमिक्षतमिति योजनीयं॥ कशा। कश गतिशातनयोः। पचाद्यच्। वृषादित्वादाद्युदात्तः। सूनृतावती। ऊन परिहाणे। [illegible]ऊनयत्यप्रियमिति सून्। तथाविधमृतं सत्यं यस्यां वाचि सा सूनृता। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं बाधित्वा परादिश्छंदसि बहुलमिति ऋकार उदात्तः। सा यस्या अस्ति सा कशा सूनृतावतीति कशायाः संज्ञा। एवंनामा या कशेत्यर्थः। संज्ञायां। पा॰ ८. २. ११.। इति मतुपो वत्वं। मिमिक्षतं। मिहेः सन्। हलंताच्च। पा॰ १. २. १०.। इति कित्त्वाद्गुणाभावः। ढत्वकत्वषत्वानि॥

नहि वामस्ति दूरके यत्रा रथेन गच्छथः। अश्विना सोमिनो गृहं ॥४॥

नहि। वां। अस्ति। दूरके। यत्र। रथेन। गच्छथः। अश्विना। सोमिनः। गृहं ॥४॥

अश्विना हे अश्विनौ देवौ युवां सोमिनः सोमवतो यजमानस्य गृहं प्रति रथेन गच्छथः। स मार्गो वां युवयोर्दूरके दूरदेशे नह्यस्ति। न वर्तते खलु। यद्वा। यत्र गृहे गच्छथस्तच्च गृहं दूरे न भवति॥ नहि। एवमादीनामंत इत्यंतोदात्तः। अस्ति। चादिलोपे विभाषेति निघाताभावः। अत्र हि गृहं दूरे च नास्ति युवां च रथेन गच्छथ इति समुच्चयस्यार्थो गम्यते। चशब्दो न प्रयुज्यत इति चलोपे प्रथमा तिङ्विभक्तिरस्तीति। यत्र। निपातस्य चेति संहितायां दीर्घत्वं। गच्छथः। इयं यद्यपि न प्रथमा तथापि यत्रेति यद्वृत्तयोगान्न निघातः॥

व्यूढस्य द्वितीये छंदोमे वैश्वदेवशस्त्रे [illegible] इति सावित्र्यस्तिस्रः। द्वितीयस्येति खंडे सूत्रितं। हिरण्यपाणिमूतय इति चतस्रो मही द्यौः पृथिवी च नः। आ॰ ८. १०.। इति॥

हिरण्यपाणिमूतये सवितारमुप ह्वये। स चेत्ता देवता पदं ॥५॥

हिरण्यऽपाणिं। ऊतये। सवितारं। उप। ह्वये। सः। चेत्ता। देवता। पदं ॥५॥

ऊतयेऽस्मद्रक्षणार्थं सवितारं देवमुप ह्वये। [illegible]। स च सविता देव [illegible]तन्मंत्रप्रतिपाद्यदेवता भूत्वा पदं यजमानेन प्राप्यं स्थानं चेत्ता। ज्ञापयिता भवति। कीदृशं सवितारं। हिरण्यपाणिं यजमानाय दातुं हस्ते सुवर्णधारिणं। यद्वा। देवकर्तृके यागे सविता स्वयमृत्विग्भूत्वा [illegible]। तदानीं कस्यांचिदिष्टावध्वर्यवस्तस्मै सवित्रे ब्रह्मणे प्राशित्रनामकं पुरोडाशभागं दत्तवंतः। तच्च प्राशित्रं हस्ते सवित्रा गृहीतं सत्तदीयपाणिं चिच्छेद। ततः प्राशित्रस्य दातारोऽध्वर्यवः सुवर्णमयं पाणिं निर्माय प्रक्षिप्तवंतः। सोऽयमर्थः कौषीतकिब्राह्मणे समाम्नातः। सवित्रे प्राशित्रं प्रतिजह्रुस्तत्तस्य पाणी प्रचिच्छेद तस्मै हिरण्मयौ प्रतिदधुस्तस्माद्धिरण्यपाणिरिति स्तुत इति। हिरण्यश[illegible] पाणिशब्दं च यास्क एवं निर्वक्ति। हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते [illegible] वा हितरमणं भवतीति वा हृदयरमणं भवतीति वा हर्यतेर्वा स्यात्प्रेप्साकर्मणः। नि॰ २. १०.। इति। तथा पाणिः। पणायतेः पूजाकर्मणः। नि॰ २. २६.। इति॥ हिरण्यशब्दो नब्विषयत्वादाद्युदात्तः। बहुव्रीहौ पू[illegible]। ऊतये। उदात्त इत्यनुवृत्तावूतियूतिजूतिसातीत्यादिना क्तिन्नंतोऽतोदात्तो निपातितः। सवितारं। तृ[illegible]त्तत्वं। चेत्ता। चिती संज्ञाने। अस्मादंतर्भावितण्यर्थात्ताच्छील्ये तृन्। [illegible]भावः। नित्त्वादाद्युदात्तः। देवता। देवात्तल्। पा॰ ५. ४. २७.। इति स्वार्थे तल्। लितीति प्रत्ययात्पूर्वमुदात्तत्वं। पदशब्दः पचाद्यजंतः। चित इत्यंतोदात्तः॥ ॥४॥

**अपां नपातमवसे सवितारमुप स्तुहि । तस्य व्रतान्युश्मसि ॥६॥**

**अपां । नपातं । अवसे । सवितारं । उप । स्तुहि । तस्य । व्रतानि । उश्मसि ॥६॥**

अत्र होता [illegible]न्यं वा शस्त्रिणं ब्रूते । अवसेऽस्मात्रक्षितुं सवितारमुप स्तुहि । तस्य सवितुः संबंधीनि व्रतानि कर्माणि सोमयागादि[illegible]श्मसि । कामयामहे । कीदृशं सवितारं । अपां नपातं जलस्य न पालकं । संतापेन [illegible]र्थः ॥ अपां । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । नपातं । पा रक्षणे । अस्य शत्रंतः पाच्छब्दः । तस्य नञा समासे नभ्राण्नपादित्यादिना नलोपप्रतिषेध इति वृत्तिकारः । अग्निर्ह्यपो न पाति तच्छोषकत्वात् । तर्हि कथमपामिति षष्ठी । न लोकाव्ययनिष्ठाखलर्थेति । पा॰ २. ३. ६९. । कर्मणि षष्ठ्याः प्रतिषेधादिति चेत् । तर्ह्येषा शेषलक्षणास्तु । अग्न्यादित्यावपां कारणतया संबंधिनावग्नेराप इति श्रुतेः । आदित्याज्जायते वृष्टिः । मनु॰ ३. ७६. । इति स्मृतेश्च । अस्मिन्पक्ष उगिदचामिति नुमभावोऽपि निपातनादेवेति मंतव्यं । पातेः क्विबंतस्य तुग्वा निपातनाद्द्रष्टव्यः । अथवा न पातयतीति नपात् । पत्लृ गताविति धातोर्ण्यं-तात्क्विप् । [illegible]रौ ह्यपां न प्रापकौ प्रत्युत तच्छोषकौ । अव्ययपूर्वपदप्रकृतिस्वरत्वं । अवसे । तुमर्थे सेसेनित्यादिना असेन् । नित्त्वादाद्युदात्तः । उश्मसि । वश कांतौ । अदिप्रभृतिभ्य इति शपो लुक् । इदंतो मसिरितीकारोपजनः ॥

**विभक्तारं हवामहे वसोश्चित्रस्य राधसः । सवितारं नृचक्षसं ॥७॥**

**विऽभक्तारं । हवामहे । वसोः । चित्रस्य । राधसः । सवितारं । नृऽचक्षसं ॥७॥**

वसोर्निवासहेतोश्चित्रस्य सुवर्णरजतादिरूपेण बहुविधस्य राधसो धनस्य विभक्तारं अस्य [illegible]तावद्धनदानमुचितमिति विभागकारिणं नृचक्षसं मनुष्याणां प्रकाशकारिणं सवितारं हवामहे । कौषीतकिन एतस्या ऋचो व्याख्यानरूपे ब्राह्मणे सवितुर्विभागहेतुत्वमेव समामनंति । यदेतद्वसोश्चित्रं राधस्तदेष सविता विभक्ताभ्यः प्रजाभ्यो विभजतीति ॥ विभक्तारं । तृचश्चित्त्वादंतोदात्तत्वं । कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते । हवामहे । ह्वयतेर्बहुलं छंदसीति संप्रसारणं । वसोः । वस निवासे । शृस्वृस्निहीत्यादिना उः । निदि-त्यनुवृत्तेर्नित्त्वादा[illegible]दात्तः । राधसः । असुनंतो नित्त्वादाद्युदात्तः । नृचक्षसं । नॄंश्चष्ट इति नृचक्षाः । तं नृचक्षसं । चक्षेर्बहुलं शिच्च । उ॰ ४. २३२. । इत्यसुन् । शित्त्वादनार्धधातुकत्वेन ख्याञादेशाभावः । कृदुत्तर-पदप्रकृतिस्वरत्वं ॥

**सखाय आ नि षीदत सविता स्तोम्यो नु नः । दाता राधांसि शुंभति ॥८॥**

**सखायः । आ । नि । सीदत । सविता । स्तोम्यः । नु । नः । दाता । राधांसि । शुंभति ॥८॥**

सखिभूता हे ऋत्विज आ नि षीदत । सर्वत्रोपविशत । नोऽस्माकमयं सविता नु क्षिप्रं स्तोम्यः स्तुतियोग्यो राधांसि धनानि दाता प्रदातुमुद्युक्तः । एष सविता शुंभति । शोभते ॥ समानाः संतः ख्यांति प्रकाशंत इति सखायः । ख्या प्रकथने । समाने ख्यश्चोदात्तः । उ॰ ४. १३६. । इतीण्प्रत्ययः । तत्संनियोगेन ङित्त्वं यलोपश्च । ङित्त्वादाकारलोपः । समानस्य च्छंदसीत्यादिना । पा॰ ६. ३. ८४. । समानशब्दस्य सादेशः । [illegible]संनियोगेनो-दात्तत्वं । जसि सख्युरसंबुद्धौ । पा॰ ७. १. ९२. । इति [illegible] । नि षीदत । सदेरप्रतेः । पा॰ ८. ३. ६६. । इति षत्वं । स्तोमेषु प्रतिपाद्यत्वेन भवः स्तोम्यः । भवे छंदसीति यत् । यतोऽनाव इत्याद्युदात्तत्वं । दाता । दानशीलः । ताच्छील्ये तृन् । नित्त्वादाद्युदात्तः । राधांसि । गतं । कर्तृकर्मणोः कृतीति प्राप्तायाः षष्ठ्या न लोकाव्ययेति प्रतिषेधः ॥

अग्निष्टोमे प्रातःसवनेऽग्ने पत्नीरिहा वहेति नेष्टुः प्रस्थितयाज्या । प्रशास्ता ब्राह्मणाच्छंसीति खंडे सूचितं । अग्ने पत्नीरिहा वहोक्षान्नाय वशान्नाय । आ॰ ५. ५. । इति ॥

**अग्ने पत्नीरिहा वह देवानामुशतीरुप । त्वष्टारं सोमपीतये ॥९॥**

**अग्ने । पत्नीः । इह । आ । वह । देवानां । उशतीः । उप । त्वष्टारं । सोमऽपीतये ॥९॥**

हे अग्ने उशतीः कामयमाना देवानां पत्नीरिंद्राण्याद्या इह देवयजनदेशे आ वह । तथा त्वष्टारं देवं सोमपीतये सोमपानार्थमुप समीप आ वह ॥ पत्नीः । उत्यंतः पतिशब्द आद्युदात्तः । पत्युर्नो यज्ञसंयोगे । पा॰ ४. १. ३३. । इति ङीप् । तत्संनियोगेन नकारस्य ङीपः पित्त्वादनुदात्तत्वे पतिस्वर एव । उशतीः । वश कांतौ । लटः शतृ । अदिप्रभृतिभ्यः शप इति शपो लुक् । शतुर्ङित्त्वाद्ग्रहिज्यादिना संप्रसारणं । उगितश्चेति ङीप् । शतुरनुम इति ङीबुदात्तः ॥

आ ग्ना अ॑ग्न इ॒हाव॑से॒ होत्रां॑ यविष्ठ॒ भार॑तीम् । वरू॑त्रीं धि॒षणां॑ वह ॥१०॥

आ । ग्नाः । अ॒ग्ने॒ । इ॒ह । अव॑से । होत्रा॑म् । य॒वि॒ष्ठ॒ । भार॑तीम् । वरू॑त्रीम् । धि॒षणा॑म् । व॒ह॒ ॥१०॥

हे अग्ने अवसेऽस्मानवितुं ग्ना देवपत्नीरिहा वह । तथा हे यविष्ठ युवतमाग्ने होत्रां होमनिष्पादिकामग्नेः पत्नीं भारतीं भरतनामकस्यादित्यस्य पत्नीं वरूत्रीं वरणीयां धिषणां वाग्देवीं चा वह । वाग्वै धिषणेति वाजसनेयकं । भरत आदित्यः । नि॰ ८. १३. । इति यास्केनोक्तत्वात्तस्य पत्नी भारतीत्युच्यते ॥ गम्यंत इति ग्नाः । गम्लृ सृप्लृ गतौ । औणादिको नप्रत्ययः । डित्त्वाट्टिलोपः । प्रत्ययस्वरः । होत्रां । हुयामाश्रुभसिभ्यस्त्रन् । उ॰ ४. १६७. । इति त्रनंतो नित्त्वादाद्युदात्तः । अतिशयेन युवा यविष्ठः । अतिशायने तमबिष्ठनौ । स्थूलदूरेत्यादिना । पा॰ ६. ४. १५६. । यणादिपरस्य लोपः पूर्वस्य च गुणः । भारतीं । शार्ङ्गरवादेराकृतिगणत्वात् ङीनंतो नित्त्वादाद्युदात्तः । वरूत्रीं । ग्रसितस्कभितेत्यादौ । पा॰ ७. २. ३४. । यद्यपि वरूतृशब्दस्तृजंत इत्युक्तं तथाप्यंत इतिकरणस्य प्रदर्शनार्थत्वाद्वरूतृशब्दस्तृनंतोऽपि द्रष्टव्यः । तेन नित्त्वादाद्युदात्तत्वं । शेषनिघातेन ऋकारस्यानुदात्तत्वे उदात्तयणो हल्पूर्वादिति न ङीप उदात्तत्वं । धिषणां । क्युप्रत्ययानुवृत्तौ धृषेर्धिष च संज्ञायां । उ॰ २. ८२. । इति क्युः ॥ ॥५॥

अ॒भि नो॑ दे॒वीरव॑सा म॒हः शर्म॑णा नृ॒पत्नी॑ः । अच्छि॑न्नपत्राः सचंताम् ॥११॥

अ॒भि । नः॒ । दे॒वीः । अव॑सा । म॒हः । शर्म॑णा । नृ॒ऽपत्नी॑ः । अच्छि॑न्नऽपत्राः । स॒च॒न्ता॒म् ॥११॥

देवीर्देव्यो देवपत्न्योऽवसा रक्षणेन महो महता शर्मणा च सुखेन च सह नोऽस्मानभि सचंतां । आभिमुख्येन सेवंतां । कीदृश्यो देव्यः । नृपत्नीर्मनुष्याणां पालयित्र्यः अच्छिन्नपत्रा अच्छिन्नपत्राः । न हि पक्षिरूपाणां देवपत्नीनां पत्राः केनचिच्छिद्यंते ॥ देवीः । पुंयोगादाख्यायां । पा॰ ४. १. ४८. । इति ङीषंतः । प्रत्ययस्वरेणांतोदात्तः । दीर्घाज्जसि चेति प्रतिषेधस्य वा छंदसीति पाक्षिकत्वोक्तेः पूर्वसवर्णदीर्घत्वं । अवसा । अव रक्षणे । असुन् । नित्त्वादाद्युदात्तः । महः । मह पूजायां । क्विप् । सुपां सुलुगिति सुपो भवंति । म॰ ७. १. ३९. । इति तृतीयैकवचनस्य ङसादेशः । साविकाच इति विभक्तेरुदात्तत्वं । नृपत्नीः । समासांतोदात्तत्वे प्राप्ते पत्यावैश्वर्ये इति बहुलमित्युत्तरपदाद्युदात्तत्वं । अच्छिन्नपत्राः । न छिन्नान्यच्छिन्नानि । अव्यये नञ्पूर्वपदप्रकृतिस्वरत्वं । अच्छिन्नानि पत्राणि यासां ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

इ॒हेन्द्रा॒णीमुप॑ ह्वये वरुणा॒नीं स्व॒स्तये॑ । अ॒ग्नायीं॒ सोम॑पीतये ॥१२॥

इ॒ह । इ॒न्द्रा॒णीम् । उप॑ । ह्व॒ये॒ । व॒रु॒णा॒नीम् । स्व॒स्तये॑ । अ॒ग्नायी॑म् । सोम॑ऽपीतये ॥१२॥

इह कर्मण्यस्मिन् स्वस्तयेऽस्माकमविनाशाय सोमपानार्थमागमनाय चेंद्रवरुणाग्नीनां पत्नीराह्वयामि ॥ इंद्राणीं । वरुणानीं । इंद्रवरुणभवशर्वेत्यादिना । पा॰ ४. १. ४९. । पुंयोगे ङीष्प्रत्यय आनुगागमश्च । प्रत्ययस्वरः । अग्नायीं । वृषाकप्यग्निकुसितकुसीदानामुदात्तः । पा॰ ४. १. ३७. । इति ङीप् । तत्संनियोगेनेकारस्यैकार उदात्तः । सोमपीतये । असकृत्पूर्वोक्तं ॥

द्वितीये छंदोमे वैश्वदेवशस्त्रे मही द्यौः पृथिवी च न इति द्यावापृथिवीयं निविद्धानीयमृचः । द्वितीयस्याग्नेर्व इति खंडे सूचितं । मही द्यौः पृथिवी च नो युवाना पितरा पुनः । आ॰ ८. १०. । इति ॥ आग्रयणेष्टौ मही द्यौरित्येषा द्यावापृथिव्यैककपालस्यानुवाक्या । आग्रयणं व्रीहिश्यामाकेति खंडे सूचितं । ये के च

ज्मा महिनो अहिमाया मही द्यौः पृथिवी च नः । आ° २. ९. । इति ॥ अग्निमंथनेऽप्येषा विनियुक्ता । प्रातर्वं श्वदेव्यामिति खंडे सूचितं । अभि त्वा देव सवितर्मही द्यौः पृथिवी च नः । आ° २. १६. । इति ॥ विष्यंदमानं [illegible]वनीयदेशे निनयेत् । विध्यपराध इति खंडे तथैव सूचितं । विष्यंदमानं मही द्यौः पृथिवी च न इत्यंतःपरिधिदेशे निनयेयुः । आ° ३. १०. । इति ॥ आश्विनशस्त्रेऽप्येषा संस्थितेष्वाश्विनायेति खंडे सूचितं । मही द्यौः पृथिवी च नस्ते हि द्यावापृथिवी विश्वशंभुवा । आ° ६. ५. । इति ॥

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षतां । पिपृतां नो भरीमभिः ॥ १३ ॥

मही । द्यौः । पृथिवी । च । नः । इमं । यज्ञं । मिमिक्षतां । पिपृतां । नः । भरीमऽभिः ॥ १३ ॥

मही महती द्यौर्द्युलोकदेवता पृथिवी भूमिदेवता च नोऽस्मदीयमिमं यज्ञं मिमिक्षतां । स्वकीयसारभूतेन रसेन मिमिक्षतां । सेक्तुमिच्छतां । तथा भरीमभिर्भरणैः पोषणैर्नोऽस्मान्पिपृतां । उभे देव्यौ पूरयतां ॥ मही । महच्छब्दादुगितश्चेति ङीप् । अच्छब्दलोपश्छांदसः । बृहन्महतोरुपसंख्यानमिति ङीप उदात्तत्वं । द्यौः । दिव्शब्दः प्रातिपदिकस्वरेणांतोदात्तः । गोतो णित् । पा° ७. १. ९०. । इति ततः परस्य सोर्णिद्वद्भावाद्भवंती वृद्धिरपि [illegible] । पृथिवी । प्रथ प्रख्याने । प्रथेः षिवन्संप्रसारणं च । उ° १. १५०. । इति षिवन्प्रत्ययः । षिद्गौरादिभ्यश्च । पा° ४. १. ४१. । इति ङीष् । प्रत्ययस्वरः । मिमिक्षतां । मिह सेचने । सनि द्विर्भावहलादिशेषौ । ढत्वकत्वषत्वानि । पिपृतां । पॄ पालनपूरणयोः । ह्रस्व इत्येके । शपः श्लुः । अर्तिपिपर्त्योश्च । पा° ७. ४. ७७. । इत्यभ्यासस्याकारस्य इकारः । तिङः प्रत्ययस्वरः । भरीमभिः । डुभृञ् धारणपोषणयोः । हृसृभृधृसृस्तृभ्य ईमन्निनतीमन् । नित्त्वादाद्युदात्तः ॥

तयोरिद्घृतवत्पयो विप्रा रिहंति धीतिभिः । गंधर्वस्य ध्रुवे पदे ॥ १४ ॥

तयोः । इत् । घृतऽवत् । पयः । विप्राः । रिहंति । धीतिऽभिः । गंधर्वस्य । ध्रुवे । पदे ॥ १४ ॥

गंधर्वस्य ध्रुवं पदमंतरिक्षं । तथा च तापनीयशाखायां समाम्नायते । यच्चगंधर्वाप्सरोगणसेवितमंतरिक्षं । नृ° ता° १. २. । इति । तेनांतरिक्षेणोपलक्षित आकाशे वर्तमानयोस्तयोरिद्द्यावापृथिव्योरेव संबंधि पयो जलं घृतवद्घृतसदृशं विप्रा मेधाविनः प्राणिनो धीतिभिः कर्मभी रिहंति । लिहंति । यद्वा । घृतवद्घृतं सारं तेनोपेतं रिहंति ॥ लिहेर्व्यत्ययेन रेफः । गंधर्वस्य । धृञ् धारणे । गवि गन् धृञो व इति वप्रत्ययः । तत्संनियोगेन गोशब्दस्य च गन्नादेशः ॥

स्योना पृथिवीत्येषा महानाम्नीव्रते भूमिस्पर्शने विनियुक्ता । एतद्विदं ब्रह्मचारिणमिति खंडे सूचितं । स्योना पृथिवि भवेति समाप्य । आ° ८. १४. । इति ॥ स्मार्ते हेमंतप्रत्यवरोहणेऽप्येषा जप्या । मार्गशीर्ष्यां प्रत्यवरोहणमिति खंडे सूचितं । तस्मिन्नुपविश्य स्योना पृथिवि भवेति जपित्वा । आ° गृ° २. ३. ६. । इति ॥

स्योना पृथिवि भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥ १५ ॥

स्योना । पृथिवि । भव । अनृक्षरा । निऽवेशनी । यच्छ । नः । शर्म । सऽप्रथः ॥ १५ ॥

हे पृथिवि स्योनत्वादिगुणयुक्ता भव । स्योनशब्दो विस्तीर्णवाची । तथा च वाजसनेयब्राह्मणे स्योनशब्दोपेतं कंचिन्मंत्रमुदाहृत्य व्याख्यातं । इंद्रस्योरुमाविश स्योनः स्योनमिति विस्तीर्णो विस्तीर्णमित्येव तदाहेति । यद्वा । स्योनशब्दः सुखवाची । तथा च यास्कवाक्यमुदाहरिष्यते । अनृक्षरा [illegible] निवेशनी निवासस्थानभूता सप्रथो विस्तारयुक्तं शर्म शरणं नोऽस्मभ्यं यच्छ । हे पृथिवि देहि । तामेतामृचमुदाहृत्य यास्क एवं व्याचष्टे । सुखा नः पृथिवि भवानृक्षरा निवेशन्यृक्षरः कंटक ऋच्छतेः कंटकः कंतपो वा कृंततेर्वा कंटतेर्वा स्याद्गतिकर्मण उद्गततमो भवति यच्छ नः शर्म शरणं सर्वतः पृथु । नि° ९. ३२. । इति ॥ स्योना । षिवु तंतुसंताने । सिवेष्टेर्यो च । उ° ३. ९. । इति नप्रत्ययः । टेश्च यो इत्यादेशः । प्रत्ययस्वरः । स्योना पृथिवीत्यनयोर्भवेत्याख्यातेनैवान्वयो न परस्परं । अतोऽसामर्थ्यैनैव परांगवद्भावाभावादोकारस्य नामंत्रितायुदात्तत्वं ।

अनूचरा । ऋषी गतौ । गच्छत्यंतरित्यृचरः कंटकः । तम्यृषिभ्यां क्सरन् । उ० ३. ७५. । षढोः कः सीति कत्वं । आदेशप्रत्यययोरिति षत्वं । नञा बहुव्रीहिः । तस्मान्नुडचि । पा० ६. ३. ७४. । इति नुडागमः । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । निविशंत्यस्यामिति निवेशनी । करणाधिकरणयोश्चेति ल्युट् । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । यच्छ । दाण् दाने । पाघ्रेत्यादिना यच्छादेशः । द्व्यचोऽतस्तिङ इति दीर्घः । सप्रथः । प्रथ प्रख्याने । असुन् । प्रथसा सह वर्तत इति तेन सहेति तुल्ययोगे । पा० २. २. २८. । इति समासः । वोपसर्जनस्य । पा० ६. ३. ८२. । इति सभावः । क्रत्स्वरः ॥ ॥ ६ ॥

प्रातःसवने सोमातिरेक एकं शस्त्रं शंसनीयं । अतो देवा इत्याद्याः षड्चः । सोमातिरेक इति खंडे सूचितं । महाँ इंद्रो य ओजसातो देवा अवंतु न इत्यैंद्रीभिर्वैष्णवीभिश्च । आ० ६. ७. । इति ॥ आप्तोर्यामेऽच्छावाकातिरिक्तोक्थेऽप्येताः षड्चः स्तोत्रियानुरूपार्थाः । तथा च यस्य पशव इति खंडे सूचितं । अतो देवा अवंतु न इति स्तोत्रियानुरूपौ । आ० ९. ११. । इति ॥ दर्शपूर्णमासयोः प्रायश्चित्तहोमेऽप्याद्ये विनियुक्ते । तथैव वेदं पत्न्यां इति खंडे सूचितं । अतो देवा अवंतु न इति द्वाभ्यां व्याहृतिभिश्च । आ० १. ११. । इति ॥ याज्यानुवाक्ययोर्मध्ये लौकिकभाषणेऽतो देवा इत्येषा जप्या । सूचितं हि । आपद्यतो देवा अवंतु न इति जपेत् । आ० १. ५. । इति ॥

अतो॑ दे॒वा अ॑वंतु नो॒ यतो॒ विष्णु॑र्विच॒क्रमे । पृ॒थि॒व्याः स॒प्त धाम॑भिः ॥१६॥
अतः॑ । दे॒वाः । अ॒वं॒तु॒ । नः॒ । यतः॑ । विष्णुः॑ । वि॒ऽच॒क्र॒मे । पृ॒थि॒व्याः । स॒प्त । धाम॑ऽभिः ॥१६॥

विष्णुः परमेश्वरः सप्त धामभिः सप्तभिर्गायत्र्यादिभिश्छंदोभिः साधनभूतैर्यतः पृथिव्या [illegible]चक्रमे विविधं पादक्रमणं क्रतवान् अतोऽस्मात्पृथिवीप्रदेशान्नोऽस्मान्देवा अवंतु । विष्णोः पृथिव्यादिलोकेषु छंदोभिः साधनैर्जयं तैत्तिरीया आमनंति । विष्णुमुखा वै देवाश्छंदोभिरिमाँल्लोकाननपजय्यमभ्यजयन् । तै० सं० ५. २. १. १. । इति । विष्णोस्त्रिविक्रमावतारे पादत्रयक्रमणस्य पृथिव्युपादानं । पृथिवीप्रदेशाद्रक्षणं नाम भूलोके वर्तमानानां पापनिवारणं ॥ अतः । एतच्छब्दात्पंचम्यास्तसिल् । पा० ५. ३. ७. । इति तसिल् । एतदोऽश् । पा० ५. ३. ५. । इत्यशादेशः । लित्स्वरेणाकार उदात्तः । यतः । तसिलः प्राग्दिशो विभक्तिः । पा० ५. ३. १. । इति विभक्तिसंज्ञायां त्यदाद्यत्वं । लित्स्वरः । विष्णुः । विषेः किच्च । उ० ३. ३९. । इति नुप्रत्ययः । कित्वान्न गुणः । निदित्यनुवृत्तेराद्युदात्तत्वं । विचक्रमे । सुबिति योगविभागाद्विशब्दस्य समासः । समासांतोदात्तत्वं । यद्वृत्तयोगान्न निघातः । सप्त । सुपां सुलुगिति भिसो लुक् । धामभिः । दधातेरातो मनिन्निति मनिन् । नित्स्वरः ॥

वैष्णवोपांशुयाजस्येदं विष्णुरित्येषानुवाक्या । उक्ता देवता इति खंडे सूचितं । इदं विष्णुर्वि चक्रमे त्रिर्देवः पृथिवीमेष एतां । आ० १. ६. । इति ॥ गार्हपत्याहवनीययोर्मध्ये श्वातिक्रमणेऽनयैव श्वपदेषु भस्म प्रक्षिपेत् । विध्यपराध इति खंडे सूचितं । भस्मना शुनः पदं प्रतिवपेदिदं विष्णुर्वि चक्रमे । आ० ३. १०. । इति ॥ आतिथ्यायां प्रधानस्य हविष एषैवानुवाक्या । अथातिथ्येळांतेति खंडे सूचितं । इदं विष्णुर्वि चक्रमे तदस्य प्रियमभि पाथो अश्यां । आ० ४. ५. । इति ॥ उपसत्सु वैष्णवस्यैषैवानुवाक्या । अथोपसदिति खंडे सूचितं । गयस्फानो अमीवहेदं विष्णुर्वि चक्रमे । आ० ४. ८. । इति ॥

इ॒दं विष्णु॒र्वि च॑क्रमे त्रे॒धा नि द॑धे प॒दं । समू॑ळ्हमस्य पांसु॒रे ॥१७॥
इ॒दं । विष्णुः॑ । वि । च॒क्र॒मे॒ । त्रे॒धा । नि । द॒धे॒ । प॒दं । सम्ऽऊ॑ळ्हं । अ॒स्य॒ । पां॒सु॒रे ॥१७॥

विष्णुस्त्रिवि[illegible]मावतारधारीदं प्रतीयमानं सर्वं जगदुद्दिश्य वि चक्रमे । विशेषेण क्रमणं क्रतवान् । तदा त्रेधा त्रिभिः प्रकारैः पदं नि दधे । स्वकीयं पादं प्रक्षिप्तवान् । अस्य विष्णोः पांसुरे धूलियुक्ते पादस्थाने समूळ्हमिदं सर्वं जगत्सम्यगंतर्भूतं । सेयमृगयास्केनैवं व्याख्याता । विष्णुर्विशतेर्वा व्यश्नोतेर्वा । यदिदं किंच तद्विक्रमते विष्णुस्त्रिधा निधत्ते पदं त्रेधाभावाय पृ[illegible] दिवीति शाकपूणिः समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः समूळ्हमस्य पांसुरेऽप्यायनेऽंतरिक्षे पदं न दृश्यतेऽपि वोपमार्थे स्यात् पांसुर इव पदं न

हृष्यत इति पांसवः पादैः सूयंत इति वा पन्नाः शेरत इति वा पंसनीया भवंतीति वा । नि° १२. १९. । इति ॥ त्रेधा । एधाच्च । पा° ५. ३. ४६. । इत्येधाच्प्रत्ययः । चितोऽंतोदात्तः । समूळ्हं । वह प्रापणे । निष्ठेति क्तः । वचिस्वपीत्यादिना । पा° ६. १. १५. । संप्रसारणं । ढत्वधत्वष्टुत्वढलोपदीर्घत्वानि । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । अस्य । इदमोऽन्वादेश इत्यशनुदात्तः । प्रत्ययस्य सुप्स्वरेण । पांसुरे । नगपांसुपांडुभ्यश्चेति वक्तव्यं । का° ५. २. १०७. २. । इति मत्वर्थीयो रः । प्रत्ययस्वरः ॥

उपसदि वैष्णवयागस्य प्रातःकाले याज्या सायंकालेऽनुवाक्या त्रीणि पदेत्येषा । सूत्रितं च । त्रीणि पदा वि चक्रम इति स्विष्टकृदादि लुप्यते । आ° ४. ८. । इति ॥

त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ १८ ॥
त्रीणि । पदा । वि । चक्रमे । विष्णुः । गोपाः । अदाभ्यः । अतः । धर्माणि । धारयन् ॥ १८ ॥

अदाभ्यः केनापि हिंसितुमशक्यो गोपाः सर्वस्य जगतो रक्षको विष्णुः पृथिव्यादिस्थानेष्वत एतेषु त्रीणि पदानि वि चक्रमे । किं कुर्वन् । धर्माण्यग्निहोत्रादीनि धारयन् पोषयन् ॥ पदा । सुपां सुलुगित्यादिना विभक्तेर्डादेशः । तस्य स्थानिवद्भावेनानुदात्तत्वे प्राप्ते उदात्तनिवृत्तिस्वरेणोदात्तत्वं । गोपाः । गोपामृतस्य । ऋग्वे° १. १. ८. । इत्यत्रोक्तं । अदाभ्यः । दभेश्चेति हलोर्ण्यदिति ण्यत् । नञ्समासः । अव्ययपूर्वपदप्रकृतिस्वरत्वं । धारयन् । शपः पित्त्वादनुदात्तत्वं । शतुश्च लसार्वधातुकस्वरेण णिच एव स्वरः शिष्यते ॥

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इंद्रस्य युज्यः सखा ॥ १९ ॥
विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे । इंद्रस्य । युज्यः । सखा ॥ १९ ॥

हे ऋत्विगादयो विष्णोः कर्माणि पालनादीनि पश्यत । यतो यैः कर्मभिर्व्रतानि [illegible] पस्पशे सर्वो यजमानः स्पृष्टवान् । [illegible] । तादृशो विष्णुरिंद्रस्य युज्यो योज्योऽनुकूलः सखा भवति । विष्णोरिंद्रानुकूल्यं त्वष्टा हतपुत्र इत्यनुवाकेऽथ वै तर्हि विष्णुरित्यादिना । तै° सं° २. ४. १२. २. । प्रपंचेन तैत्तिरीया आमनंति ॥ पस्पशे । स्पश बाधनस्पर्शनयोः । लिट् । द्विर्भावे शर्पूर्वाः खयः । पा° ७. ४. ६१. । इति पकारः शिष्यते । सकारो लुप्यते । यद्वृत्तयोगादनिघातः । युज्यः । युजेर्बाहुलकात्क्यप् । कित्त्वाद्गुणाभावः । क्यपः पित्त्वादनुदात्तत्वं । धातुस्वरः ॥

तद्विष्णोः परमं पदं सदा पश्यंति सूरयः । दिवीव चक्षुराततं ॥ २० ॥
तत् । विष्णोः । परमं । पदं । सदा । पश्यंति । सूरयः । दिविऽइव । चक्षुः । आऽततं ॥ २० ॥

सूरयो विद्वांस ऋत्विगादयो विष्णोः संबंधि परममुत्कृष्टं तच्छास्त्रप्रसिद्धं पदं स्वर्गस्थानं शास्त्रदृष्ट्या सर्वदा पश्यंति । तत्र दृष्टांतः । दिवीव । आकाशे यथाततं सर्वतः प्रसृतं [illegible] विशदं पश्यति तद्वत् ॥ सदा । सर्वैकान्येति । पा° ५. ३. १५. । दाप्रत्ययः । सर्वस्य सोऽन्यतरस्यां दि । पा° ५. ३. ६. । इति सर्वशब्दस्य सभावः । व्यत्ययेनाद्युदात्तत्वं । दिवि । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं चेति तदेव शिष्यते । चक्षुः । [illegible] दात्तत्वं । आततं । तनोतेः कर्मणि क्तः । यस्य विभाषेतीट्प्रतिषेधः । अनुदात्तोपदेशेत्यादिना नलोपः । तद्धुत्तरपदप्रकृतिस्वरत्वे प्राप्ते [illegible] इति गतिरुदात्तत्वं ॥

तद्विप्रासो विपन्यवो जागृवांसः समिंधते । विष्णोर्यत्परमं पदं ॥ २१ ॥
तत् । विप्रासः । विपन्यवः । जागृऽवांसः । सं । इंधते । विष्णोः । यत् । परमं । पदं ॥ २१ ॥

पूर्वोक्तं विष्णोर्यत्परमं पदमस्ति तत्पदं विप्रासो मेधाविनः समिंधते । सम्यक् दीपयंति । कीदृशाः । विपन्यवो विशेषेण स्तोतारो जागृवांसः शब्दार्थयोः प्रमादराहित्येन जागरूकाः ॥ विप्रासः । आज्जसेरसुक् ।

विपन्यवः । स्तुत्यर्थस्य पनेर्बाहुलक औणादिको युप्रत्ययः । तत्र प्रत्ययस्वरः । जागृवांसः । जागृ निद्राक्षये । लिटः क्वसुः । क्रादिनियमात्प्राप्त इटो वस्वेकाजाद्घसामिति नियमान्निवृत्तिः ॥ ॥७॥

तीव्रा इति चतुर्विंशत्यृचं षष्ठं सूक्तं । अत्रे[illegible] । ती[illegible]ऐंद्रवायव्यौ मैत्रावरुणमरुत्वतीयवैश्वदेवपौष्णास्तृचाः शेषा आपोऽंत्याध्यर्धामैत्यप्स्वंतः पुरउष्णिक् [illegible]ंत्या एकविंशी प्रतिष्ठेति । ऋषिश्चान्यस्मात् । अनु॰ १२. २. । इति परिभाषयानुवर्तनान्मेधातिथिः काण्व ऋषिः । अप्स्वंतरित्येषा पुरउष्णिक् । प्रथमपादस्य द्वादशाक्षरेणाद्यश्चेत्पुरउष्णिक् । अनु॰ ५. २. । इति लक्षणसद्भावात् । अप्सु मे सोम इत्येषानुष्टुप् । इदमाप इत्याद्यास्तिस्रोऽनुष्टुभः । शिष्टा एकोनविंशतिसंख्याका ऋचो गायत्र्यः । आदौ गायत्रमिति परिभाषितत्वात् । अनु॰ १२. १४. । आद्या वायुदेवताका । ततो द्वे ऋचाविंद्रवायूदेवताके । तत एकस्तृचो मित्रावरुणदेवत्यः । तत उत्तरतृचस्य मरुद्गणविशिष्टेंद्रो देवता । तत एकस्तृचो वैश्वदेवः । तदनंतरभावी पौष्णः । शिष्टा ऋचोऽब्देवताकाः । पयस्वानग्न इत्यर्धर्चयुक्ता सं माग्न इत्येषा त्वग्निदेवताका ॥ सूक्तविनियोगो लिंगादवगंतव्यः ॥ अभिप्लवषडहस्य द्वितीयेऽहनि प्रउगशस्त्रे वायव्यतृचस्य तीव्राः सोमास इत्येषा तृतीया । द्वितीयस्य चतुर्विंशेनेति खंडे सूचितं । तीव्राः सोमास आ गहीत्येका । आ॰ ७. ६. । इति । पृष्ठ्यषडहेऽपि द्वितीयेऽहनि प्रउग एषा ॥

तीव्राः सोमा॑स॒ आ ग॑ह्या॒शीर्वं॑तः सु॒ता इ॒मे । वायो॒ तान्प्रस्थि॑ता॒न्पिब ॥१॥

ती॒व्राः । सोमा॑सः । आ । ग॒हि॒ । आ॒शीःऽवं॑तः । सु॒ताः । इ॒मे । वायो॒ इति॑ । तान् । प्रऽस्थि॑तान् । पिब॒ ॥१॥

हे वायो इमे सोमास ऐंद्रवायवग्रहादिरूपाः सोमाः सुता अभिषुताः । ते च तीव्राः प्रभूतत्वात्तर्पयितुं समर्था आशीर्वंत आशिरयुक्ताः । अतस्त्वमा गहि । अस्मिन्कर्मण्यागच्छ । प्रस्थितानुत्तरवेदिं प्रत्यानीतांस्तान्सोमान्पिब ॥ सोमासः । अर्ति[illegible] मन् । नित्त्वादाद्युदात्तः । आज्जसेरसुक् । गहि । मरुद्भिरग्न आ गहि । ऋ॰ १. १९. २. । इत्यत्रोक्तं । आशीर्वंतः । श्रीञ् पाके । अपस्पृ[illegible]सूत्रे । पा॰ ६. १. ३६. । आङ्पूर्वस्य क्विपि शिरादेशो निपातितः । करणस्यापि श्रयणद्रव्यस्य स्वव्यापारे कर्तृत्वविवक्षया कर्तरि क्विप् न विरुध्यते । आशीरेषामस्तीत्याशीर्वंतः । छंदसीर इति वत्वं । वायो । आमंत्रितायुदात्तत्वं । प्रस्थितान् । प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा व्यत्ययेना[illegible]त्वं ॥

पूर्वोक्त एव शस्त्र उभा देवा दिविस्पृशेति द्वे ऐंद्रवायवतृचस्य प्रथमाद्वितीये । तथा च द्वितीयस्येति खंडे सूचितं । उभा देवा दिविस्पृशेति द्वे । आ॰ ७. ६. । इति ॥

उ॒भा दे॒वा दि॑वि॒स्पृशें॑द्रवा॒यू ह॑वामहे । अ॒स्य सोम॑स्य पी॒तये॑ ॥२॥

उ॒भा । दे॒वा । दि॒वि॒ऽस्पृशा॑ । इं॒द्र॒वा॒यू इति॑ । ह॒वा॒म॒हे॒ । अ॒स्य । सोम॑स्य । पी॒तये॑ ॥२॥

दिविस्पृशा द्युलोकवर्तिनावुभा देवा द्वौ देवाविंद्रवायू हवामहे । आह्वयामः । किमर्थं । अस्य सोमस्य पीतये । असकृद्व्याख्यातं ॥ उभा देवा । सुपां सुलुगित्याकारः । दिविस्पृशा । हृद्युभ्यां ङे[illegible]पसंख्यानं । पा॰ ६. ३. ९. १. । इति सप्तम्या अलुक् । कृ[illegible]त्तरपदप्रकृतिस्वरत्वं । इंद्रवायू । इंद्रश्च वायुश्चेति द्वंद्वः । उभयत्र वायोः प्रतिषेधो वक्तव्यः । पा॰ ६. ३. २६. १. । इत्यानङो निषेधः । देवताद्वंद्वे चेति प्राप्तस्योभयपदप्रकृतिस्वरत्वस्य नोत्तरपदेऽनुदात्तादौ । पा॰ ६. २. १४२. । इति निषेधात्समासांतोदात्तत्वमेव शिष्यते । हवामहे । ह्वेञ् स्पर्धायां शब्दे च । बहुलं छंदसीति संप्रसारणं । संप्रसारणाच्चेति परपूर्वत्वं । शप् । [illegible]वादेशौ । शपः पित्त्वादनुदात्तत्वं । तिङश्च लसार्वधातुकस्वरेण पदस्याद्युदात्तत्वे प्राप्ते तिङ्ङतिङ इत्याष्टमिको निघातः । अस्य । ऊडिदमित्यादिना षष्ठ्या उदात्तत्वं । पीतये । पा पाने । स्थागापापचः । पा॰ ३. ३. ९५. । इति भावे क्तिन् । घुमास्थेतीत्वं । व्यत्ययेनांतोदात्तत्वं ॥

इंद्रवायू मनोजुवा विप्रा हवंत ऊतये । सहस्राक्षा धियस्पती ॥३॥
इंद्रवायू इति । मनःऽजुवा । विप्राः । हवंते । ऊतये । सहस्रऽअक्षा । धियः । पती इति ॥३॥

विप्रा मेधाविन ऋत्विग्यजमाना ऊतये रक्षणार्थमिंद्रवायू हवंते । आह्वयंति । कीदृशौ । मनोजुवा मन इव वेगवन्तरौ सहस्राक्षा सहस्रनयनयुक्तौ । यद्यपींद्र एव सहस्राक्षस्तथापि च्छत्रिन्यायेन वायुरपि तथोच्यते । धियस्पती कर्मणो बुद्धेर्वा पालकौ ॥ मनोजुवा । जवतिर्गतिकर्मा । मनोवज्जवत इति मनोजुवा मन इव वेगयुक्तौ । छदुत्तरपदप्रकृतिस्वरत्वं । सुपां सुलुगित्याकारः । विप्राः । औणादिको रन् । रन्प्रत्ययांत आद्युदात्तः । ऊतये । ऊतियूतीत्यादिना क्तिन उदात्तत्वं । सहस्राक्षा । सहस्रमक्षीणि ययोर्मा । बहुव्रीहौ सक्थ्यक्ष्णोः । पा॰ ५. ४. ११३. । इति षच्समासांतः । बहुव्रीहिस्वरे प्राप्ते समासांतप्रत्ययस्य सति शिष्टत्वाच्चित इत्यंतोदात्तत्वं । धियः । साविकाच इति ङस उदात्तत्वं । षष्ठ्याः पतिपुत्रेति संहितायां विसर्जनीयस्य सकारः । पती । डत्यंत आद्युदात्तः ॥

चतुर्विंशकेऽहनि प्रातःसवने मैत्रावरुणशस्त्रे मित्रं वयं हवामह इति तृचः षडहस्तोत्रियः । चतुर्विंश इति खंडे सूचितं । आ नो मित्रावरुणा मित्रं वयं हवामहे । आ॰ ७. २. । इति ॥ अभिप्लवषडहेऽपि प्रातःसवने मैत्रावरुणस्यायं तृच आवापार्थः । अभिप्लवपृष्ठ्याहानीति खंडे सूचितं । परिशिष्टानावापानुद्धृत्य मित्रं वयं हवामहे । आ॰ ७. ५. । इति ॥ मैत्रावरुणस्य मित्रं वयं हवामह इत्येषा प्रातःसवने प्रस्थितयाज्या । प्रशास्ता ब्राह्मणाच्छंसीत्युपक्रम्येदं ते सौम्यं मधु मित्रं वयं हवामहे । आ॰ ५. ५. । इति सूचितं ॥

मित्रं वयं हवामहे वरुणं सोमपीतये । जज्ञाना पूतदक्षसा ॥४॥
मित्रं । वयं । हवामहे । वरुणं । सोमऽपीतये । जज्ञाना । पूतऽदक्षसा ॥४॥

वयमनुष्ठातारः सोमपीतये सोमपानार्थं मित्रं वरुणं चोभावाह्वयामः । कीदृशावुभौ । जज्ञाना कर्मप्रदेशे प्रादुर्भवंतौ पूतदक्षसा शुद्धबलौ ॥ वरुणं । वृञ् वरणे । कृवृदृदारिभ्य उनन् । उ॰ ३. ५३. । नित्त्वादाद्युदात्तः । सोमपीतये । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं । जज्ञाना । जनी प्रादुर्भावे । छंदसि लिट् । पा॰ ३. २. १०५. । तस्य लिटः कानज्वा । पा॰ ३. २. १०६. । इति कानजादेशः । गमहनेत्यादिना । पा॰ ६. ४. ९८. । उपधालोपः । तस्याचः परस्मिन्निति स्थानिवद्भावाज्जनशब्दस्य द्विर्वचनं । स्तोः श्चुना श्चुः । पा॰ ८. ४. ४०. । इति नकारस्य ञकारः । चित इत्यंतोदात्तत्वं । पूर्ववदाकारः । पूतदक्षसा । पूञ् पवने । निष्ठेति क्तः । श्र्युकः किति । पा॰ ७. २. ११. । इतीट्प्रतिषेधः । पूतं दक्षो ययोस्तौ । बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरत्वं ॥

ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती । ता मित्रावरुणा हुवे ॥५॥
ऋतेन । यौ । ऋतऽवृधौ । ऋतस्य । ज्योतिषः । पती इति । ता । मित्रावरुणा । हुवे ॥५॥

यौ मित्रावरुणावृतेन सत्यवचनेन यजमानानुग्[illegible] ऋतावृधौ । ऋतमवश्यंभावितया सत्यं कर्मफलं तस्य वर्धकौ । ऋतस्य सत्यस्य प्रशस्तस्य ज्योतिषः प्रकाशस्य पती पालकौ । श्रुत्यंतरे मित्रावरुणयोरदितिपुत्रत्वेन श्रुतत्वाद्द्वादशादित्येष्वंतर्भूतत्वेन ज्योतिष्पालकत्वं युक्तं । श्रुत्यंतरे चाष्टौ पुत्रासो अदितेरित्युपक्रम्य मित्रश्च वरुणश्चेत्यादिकमाम्नातं । तै॰ आ॰ १. १३. २–३. । ता मित्रावरुणा तथाविधौ मित्रावरुणौ हुवे । आह्वयामि ॥ ऋतावृधौ । वृधु वृद्धौ । क्विप्चेति क्विप् । अन्येषामपि दृश्यत इति दीर्घः । छदुत्तरपदप्रकृतिस्वरत्वं । ज्योतिषः । द्युत दीप्तौ । द्युतेरिसिन्नादेश्च जः । उ॰ २. १११. । इतीसिन्प्रत्ययः । नित्त्वादाद्युदात्तः । षष्ठ्याः पतिपुत्रेति संहितायां विसर्जनीयस्य सत्वं । मित्रावरुणा । देवताद्वंद्वे चेत्यानङ् । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं । सुपां सुलुगिति पूर्वसवर्णदीर्घ आकारः । हुवे । ह्वेञ् । आत्मनेपदोत्तमपुरुषैकवचने संप्रसारणे परपूर्वत्वे च कृते बहुलं छंदसीति शपो लुक् । टेरेत्वं । गुणे प्राप्ते क्ङिति च । पा॰ १. १. ५. । इति प्रतिषेधः । उवङादेशः । तिङ्ङतिङ इति निघातः ॥ ॥ ८ ॥

वरु॑णः प्रावि॒ता भु॑वन्मि॒त्रो विश्वा॑भिरू॒तिभिः॑ । कर॑तां नः सु॒राध॑सः ॥ ६ ॥

वरु॑णः । प्र॒ऽअ॒वि॒ता । भु॒व॒त् । मि॒त्रः । विश्वा॑भिः । ऊ॒तिऽभिः॑ । कर॑तां । नः॒ । सु॒ऽराध॑सः ॥ ६ ॥

अयं वरुणोऽस्माकं प्राविता भुवत्। प्रकर्षेण रक्षको भवतु। मित्रश्च विश्वाभिरूतिभिः सर्वाभी रक्षाभिः प्राविता भुवत्। तावुभावपि नोऽस्मान्सुराधसः प्रभूतधनयुक्तान्करतां। कुरुतां ॥ अविता। तृचश्चित्त्वादंतोदात्तत्वं। प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते। भुवत्। भू सत्तायां। लेटस्तिप्। लेटोऽडाटावित्यडागमः। इतश्च लोप इतीकारलोपः। बहुलं छंदसीति शपो लुक्। गुणे प्राप्ते भूसुवोस्तिङि। पा॰ ७. ३. ८८.। इति प्रतिषेधः। उवङादेशः। तिङ्ङतिङ इति निघातः। विश्वाभिः। अशिप्रुषीत्यादिना क्वनंतो विश्वशब्द आद्युदात्तः। टाप्सुपोरनुदात्तत्वात्तदेव शिष्यते। ऊतिभिः। ऊतियूतीत्यादिना क्तिन्नुदात्तः। करतां। कृञ् करणे। भौवादिकः। लोटस्तस्। तसस्तां। कर्तरि शप्। गुणो रपरत्वं। शपः पित्त्वादनुदात्तत्वं। तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। सुराधसः। राध साध संसिद्धौ। राध्नोत्यनेनेति राधो धनं। शोभनं राधो येषां ते। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वे प्राप्ते नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं प्राप्तं सोर्मनसी अलोमोषसी। पा॰ ६. २. ११७.। इत्युत्तरपदाद्युदात्तत्वेन बाध्यते ॥

म॒रुत्वं॑तं हवामह॒ इंद्र॒मा सोम॑पीतये । स॒जूर्ग॒णेन॑ तृंपतु ॥ ७ ॥

म॒रुत्वं॑तं । ह॒वा॒म॒हे॒ । इंद्रं॑ । आ । सोम॑ऽपीतये । स॒ऽजूः । ग॒णेन॑ । तृं॒प॒तु॒ ॥ ७ ॥

मरुत्वंतं मरुद्भिर्युक्तमिंद्रं सोमपीतये सोमपानाया हवामहे। आह्वयामः। स चेंद्रो गणेन मरुत्समूहेन सजूः सह तृंपतु। तृप्तो भवतु ॥ मरुत्वंतं। मरुतोऽस्य संतीति मरुत्वान्। झयः। पा॰ ८. २. १०.। इति मतुपो वत्वं। तसौ मत्वर्थे। पा॰ १. ४. १९.। इति भसंज्ञायां पदसंज्ञाया बाधितत्वाज्जश्त्वाभावः। मतुप्सुपौ पित्त्वादनुदात्तौ। ननु ह्रस्वनुड्भ्यां मतुप्। पा॰ ६. १. १७६.। इति मतुप उदात्तत्वेन भवितव्यं स्वरविधौ व्यंजनमविद्यमानवत्। परि॰ ७९.। इति तकारस्याविद्यमानवत्त्वेन ह्रस्वात्परत्वात्। न। ह्रस्वनुड्भ्यामित्यत्र नुड्ग्रहणसामर्थ्यादविद्यमानपरिभाषा नाश्रीयत इति वृत्तावुक्तं। का॰ ६. १. १७६.। अतो मरुच्छब्दस्य स्वर एव शिष्यते। सजूः। जुषी प्रीतिसेवनयोः। संपदादिलक्षणः क्विप्। समाना प्रीतिर्यस्येति बहुव्रीहिः। समानस्य च्छंदसीति सभावः। ससजुषो रुः। पा॰ ८. २. ६६.। इति रुत्वं। स र्वोरुपधायाः। पा॰ ८. २. ७६.। इत्युपधादीर्घः। बहुव्रीहिस्वरे प्राप्ते चिचक्रादीनां छंदसि। पा॰ ६. २. १९९. १.। इत्युत्तरपदांतोदात्तत्वं। तृंपतु। तृप तृम्प तृप्तौ। तुदादिभ्यः शः। शे मुचादीनां। पा॰ ७. १. ५९.। इति नुमागमः ॥

इंद्र॑ज्येष्ठा॒ मरु॑द्गणा॒ देवा॑सः॒ पूष॑रातयः । विश्वे॒ मम॑ श्रुता॒ हवं॑ ॥ ८ ॥

इंद्र॑ऽज्येष्ठाः । मरु॑त्ऽगणाः । देवा॑सः । पूष॑ऽरातयः । विश्वे॑ । मम॑ । श्रु॒त॒ । हवं॑ ॥ ८ ॥

हे देवास इंद्रमरुद्रूपा विश्वे सर्वे यूयं मम हवमाह्वानं श्रुत। शृणुत। कीदृशाः। इंद्रज्येष्ठाः। इंद्रो ज्येष्ठो मुख्यो येषु ते तथाविधा मरुद्गणाः मरुत्समूहरूपाः। पूषरातयः। पूषाख्यो देवो रातिर्दाता येषामिंद्रमरुतां ते पूषरातयः ॥ इंद्रज्येष्ठाः। आमंत्रिताद्युदात्तत्वं। पादादि[illegible]ः। मरुद्गणाः। विभाषितं विशेषवचने बहुवचनं। पा॰ ८. १. ७४.। इति पूर्वस्याविद्यमानवत्त्वादनिघातः। देवासः पूषरातयः। पूर्ववत्। श्रुत। श्रु श्रवणे। लोण्मध्यमबहुवचनं थ। तस्थस्थमिपां। पा॰ ३. ४. १०१.। इति तादेशः। व्यत्ययेन शप्। बहुलं छंदसीति शपो लुक्। सार्वधातुकार्धधातुकयोरिति गुणे प्राप्ते क्ङिति चेति प्रतिषेधः। द्व्यचोऽतस्तिङ इति दीर्घः। हवं। ह्वेञ् स्पर्धायां शब्दे च। भावेऽनुपसर्गस्य। पा॰ ३. ३. ७५.। इत्यप्। संप्रसारणं परपूर्वत्वं गुणावादेशौ। पित्त्वादनुदात्तत्वं। धातुस्वरः शिष्यते ॥

हत वृत्रं सुदानव इंद्रेण सहसा युजा । मा नो दुःशंस ईशत ॥९॥

हत । वृत्रं । सुऽदानवः । इंद्रेण । सहसा । युजा । मा । नः । दुःशंसः । ईशत ॥९॥

हे सुदानवः शोभनदानयुक्ता मरुद्गणाः सहसा बलवता युजा योग्येनेंद्रेण सह वृत्रं शत्रुं हत । नाशयत । दुःशंसो दुष्टेन शंसनेन कीर्तनेन युक्तो वृत्रो नोऽस्मान्प्रति मेशत । समर्थो मा भूत् ॥ हत । हन हिंसागत्योः । लोटस्थ । तस्य त । अदिप्रभृतिभ्यः शप इति शपो लुक् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । सुदानवः । डुदाञ् दाने । दाभाभ्यां नुः । उ॰ ३. ३२. । इत्यौणादिको नुप्रत्ययः । प्रादिसमास आमंत्रितनिघातः । युजा । युजिर् योगे । ऋत्विगित्यादिना क्विन् । साविकाच इति तृतीयैकवचनस्योदात्तत्वं । दुःशंसः । ईषद्दुःसुष्विति खल् । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । ईशत । ईश ऐश्वर्ये । माङि लुङि प्राप्ते छंदसि लुङ्लङ्लिट इति व्यत्ययेन लङ् । तस्य बहुलं छंदसीति शपो लुगभावः । न माङ्योग इत्याडागमाभावः । तिङ्ङतिङ इति निघातः ॥

विश्वान्देवान्हवामहे मरुतः सोमपीतये । उग्रा हि पृश्निमातरः ॥१०॥

विश्वान् । देवान् । हवामहे । मरुतः । सोमऽपीतये । उग्राः । हि । पृश्निऽमातरः ॥१०॥

मरुतो मरुत्संज्ञकान्विश्वान्सर्वान्देवान्सोमपीतये हवामहे । सोमपानार्थमाह्वयामः । ते च मरुत उग्राः शत्रुभिरसह्यबलाः पृश्निमातरः पृश्नेर्नानावर्णयुक्ताया भूमेः पुत्राः । हिशब्दः प्रसिद्ध्यर्थः । सा च प्रसिद्धिः पृश्नेः पुत्राः । ऋक्सं॰ ५. ५८. ५. । इति मंत्रांतरादवगंतव्या ॥ पृश्निमातरः । पृश्निर्माता येषां ते । पृश्निशब्दो घृणिः पृश्निरित्युणादावाद्युदात्तो निपातितः । उ॰ ४. ५२. । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ ॥९॥

जयतामिव तन्यतुर्मरुतामेति धृष्णुया । यच्छुभं याथना नरः ॥११॥

जयतांऽइव । तन्यतुः । मरुतां । एति । धृष्णुऽया । यत् । शुभं । याथन । नरः ॥११॥

मरुतां देवानां तन्यतुः शब्दो धृष्णुया धार्ष्ट्ययुक्तः सन्नेति । गच्छति । केषामिव । जयतां विजययुक्तानां शूराणां भटानामिव । हे नरो नेतारो मरुतो यूयं यदा शुभं शोभनं देवयजनं याथन प्राप्नुथ । तदा त्वदीयः शब्दो गच्छतीति पूर्वत्रान्वयः ॥ तन्यतुः । तनु विस्तारे । ऋतन्यंजीत्यादिना । उ॰ ४. २. । यतुच्प्रत्ययः । धृष्णुया । ञिधृषा प्रागल्भ्ये । त्रसिगृधिधृषिक्षिपेः क्नुः । पा॰ ३. २. १४०. । सुपां सुलुगिति सोर्याजादेशः । चित्स्वादंतोदात्तः । याथन । तप्तनप्तनथनाश्चेति थनादेशः । यच्छब्दयोगान्निघाताभावः ॥

हस्काराद्विद्युतस्पर्यतो जाता अवंतु नः । मरुतो मृळयंतु नः ॥१२॥

हस्कारात् । विऽद्युतः । परि । अतः । जाताः । अवंतु । नः । मरुतः । मृळयंतु । नः ॥१२॥

हस्काराद्दीप्तिकराद्विद्युतो विशेषेण दीप्यमानादतोऽन्तरिक्षात्परि जाताः सर्वत उत्पन्ना मरुतो नोऽस्मानवंतु । रक्षंतु । तथाविधा मरुतो नोऽस्मान्मृळयंतु । सुखयंतु ॥ हस्कारात् । हसे हसने । अत्र तु प्रकाशमात्रे वर्तते । अस्मात्संपदादिलक्षणः क्विप् । अस्मिन्नुपपदे डुकृञ् करण इत्यस्मात्कर्मण्यण् । पा॰ ३. २. १. । इत्यण्प्रत्ययः । तत्पुरुषे तुल्यार्थेत्यादिना पूर्वपदप्रकृतिस्वरत्वे प्राप्ते गतिकारकेत्यादिना कृदुत्तरपदप्रकृतिस्वरत्वं । अतः कृकमीत्यादिना । पा॰ ८. ३. ४६. । विसर्जनीयस्य सत्वं ॥

आ पूषञ्चित्रबर्हिषमाघृणे धरुणं दिवः । आजा नष्टं यथा पशुं ॥१३॥

आ । पूषन् । चित्रऽबर्हिषं । आघृणे । धरुणं । दिवः । आ । अज । नष्टं । यथा । पशुं ॥१३॥

हे पूषन् चित्रबर्हिषं विविधैर्दर्भैर्युक्तं धरुणं यागस्य धारकं सोमं दिव आ द्युलोकादा हरेति शेषः । पूषा

विशेष्यते। आघृणे आगतदीप्तियुक्त। तत्र दृष्टांतः। हे अज गमनशील यथा लोके नष्टं पशुं [illegible] काश्चिदाह [illegible] तद्वत्॥ आघृणे। घृ क्षरणदी[illegible]घृणिः पृश्निरिति निप्रत्ययो निपातितः। ऋवर्णाच्चेति वक्तव्यमिति णत्वं। प्रादिसमासः। आमंत्रितात्युदात्तत्वं। धरुणं। धृञ् धारणे। अस्मात्स्यंताद्धातोरर्जेर्णिलुक्च। उ० ३.५८.। इत्युनन्प्रत्ययः। व्यत्ययेन नित्स्वराभावे प्रत्ययस्वरः। दिवः। ऊडिदमित्यादिना षष्ठ्या उदात्तत्वं। अज। अज गतिक्षेपणयोः॥

पूषा राजानमाघृणिरपगूळ्हं गुहा हितं। अविंदच्चित्रबर्हिषं ॥१४॥

पूषा। राजानं। आघृणिः। अपऽगूळ्हं। गुहा। हितं। अविंदत्। चित्रऽबर्हिषं ॥१४॥

आघृणिः पूषा राजानं [illegible]त्। अलभत। कीदृशं। अपगूळ्हमत्यंतगूढं। तत्र हेतुः। गुहा हितं गुहासदृशे दुर्गमे द्युलोके स्थितं। तथा चित्रबर्हिषं॥ अपगूळ्हं। गुह संवरणे। निष्ठेति कर्मणि क्तः। हो ढः। पा० ८. २. ३१.। इति ढत्वं। झषस्तथोर्धोऽधः। पा० ८. २. ४०.। इति धकारः। ष्टुत्वढलोपदीर्घाः। समासे गतिरनंतर इति गतेः [illegible]। गुहा। सुपां सुलुगिति सप्तम्या लुक्। हितं। निष्ठायां दधातेर्हिः॥

उतो स मह्यमिंदुभिः षड्युक्ताँ अनुसेषिधत्। गोभिर्यवं न चर्कृषत् ॥१५॥

उतो इति। सः। मह्यं। इंदुऽभिः। षट्। युक्तान्। अनुऽसेसिधत्। गोभिः। यवं। न। चर्कृषत् ॥१५॥

उतो अपि च स पूषा मह्यं यजमानायेंदुभिर्यागहेतुभिः सोमैर्युक्तान् षड्वसंतादीनृतूननुसेषिधत्। अनुक्रमेण पुनःपुनर्नयन्वर्तत इति शेषः। तत्र दृष्टांतः। गोभिर्बलीवर्दैर्यवं न चर्कृषत्। नशब्द उपमार्थः। यथा यवमुद्दिश्य भूमिं प्रतिसंवत्सरं पुनःपुनः कृषति तद्वत्॥ मह्यं। ङयि च। पा० ६. १. २१२.। इत्याद्युदात्तत्वं। इंदुभिः। उन्दी क्लेदने। उंदेरिच्चादेः। उ० १. १३.। इत्युप्रत्यय उकारस्येकारादेशश्च। निदित्यनुवृत्तेराद्युदात्तत्वं। युक्तान्। दीर्घादटि समानपाद इति संहितायां नकारस्य रुत्वं। आतोऽटि नित्यमिति सानुनासिक आकारः। अनुसेषिधत्। षिधु गत्यां। धातोरेकाचः। पा० ३. १. २२.। इति यङ्। यङोऽचि च। पा० २. ४. ७४.। इति तस्य लुक्। प्रत्ययलक्षणेन सन्यङोः। पा० ६. १. ९.। इति द्विर्भावः। हलादिशेषः। गुणो यङ्लुकोः। पा० ७. ४. ८२.। इत्यभ्यासस्य गुणः। इणकोः। पा० ८. ३. ५७.। इति षत्वं। सनादित्वाद्धातुसंज्ञायां लटः शतृ। कर्तरि शप्। अदादिवच्चेति वचनात्तस्य लुक्। नाभ्यस्ताच्छतुः। पा० ७. १. ७८.। इति नुम्प्रतिषेधः। प्रत्ययस्वरे प्राप्तेऽभ्यस्तानामादिरित्याद्युदात्तत्वं। गोभिः। साविकाच इति भिस उदात्तत्वे प्राप्ते न गोश्वन्निति प्रतिषेधः। चर्कृषत्। कृष विलेखने। यङ्लुकि द्विर्भावहलादिशेषचर्त्वानि। रुग्रिकौ च लुकि। पा० ७. ४. ९१.। इत्यभ्यासस्य रुगागमः। अस्माद्यङ्लुगंताल्लेटस्तिप्। इतश्च लोपः। लेटोऽडाटावित्यडागमः। अदिप्रभृतिभ्यः शप इति शपो लुक्। लघूपधगुणे प्राप्ते नाभ्यस्तस्याचि पिति। पा० ७. ३. ८७.। इति निषेधः। तिङ्ङतिङ इति निघातः॥ ॥१०॥

[illegible] एकधनासूपानीतासु स्वयमनुगच्छन्नंबय इति द्वे अनुब्रूयात्। तृतीययापो [illegible]धनासु हविर्धानं प्रविष्टासु स्वयमनुप्रविशेत्। तथैव सूचितं। अंबयो यंत्यध्वभिरिति तिस्र उत्तमयानुप्रपद्येत। आ० ५. १.। इति॥

अंबयो यंत्यध्वभिर्जामयो अध्वरीयतां। पृंचतीर्मधुना पयः ॥१६॥

अंबयः। यंति। अध्वऽभिः। जामयः। अध्वरिऽयतां। पृंचतीः। मधुना। पयः ॥१६॥

अध्वरीयतामध्वरमात्मन इच्छतामस्माकमंबयो मातृस्थानीया आपः। तथा च कौषीतकिब्राह्मणे समाम्नायते। अंबयो यंत्यध्वभिरित्यापो वा अंबय इति। ता आपोऽध्वभिर्दे[illegible]। गच्छंति। कीदृश्य आपः। जामयो हितकारिण्यो बंधवः। तथा मधुना माधुर्यरसेन युक्तं पयः पृंचतीर्गवादिषु योजयंत्यः॥ अंबयः। रबि लबि अबि शब्दे। एतस्मादच इः। उ० ४. १३८.। इति प्रकरणे [illegible]। प्रत्ययस्वरः।

अध्वभिः। अदेर्ध च। उ॰ ४. ११५. । इति क्वनिप्। पित्त्वात्प्रत्ययस्यानुदात्तत्वे धातुस्वरः। जामयः। जमु अदने। बाहुलकादिः। अध्वरीयतां। अध्वरशब्दात्सुप आत्मनः क्यजिति क्यच्। क्यचि चेतीत्वं। अपुत्रादीनामिति वक्तव्यं। म॰ ७. ४. ३५. । इति वचनान्न च्छंदस्यपुत्रस्येतीत्वनिषेधाभावः। सर्वे विधयश्छंदसि विकल्प्यंत इति कव्यध्वरपृतनस्य। पा॰ ७. ४. ३९. । इत्यकारलोपोऽपि न भवति। क्यच्प्रत्ययांतधातोर्लटः शतृ। शपः पित्त्वादनुदात्तत्वं। शतुश्च लसार्वधातुकस्वरेण तयोः क्यचा सहैकादेशः। एकादेश उदात्तेनोदात्त इत्यंतोदात्तत्वे सति शतुरनुमो नद्यजादी इति षष्ठ्या उदात्तत्वं। पृंचतीः। पृची संपर्के। लटः शतृ। रुधादिभ्यः श्नम्। श्नसो-रल्लोपः। अनुस्वारपरसवर्णौ। उगितश्चेति ङीप्। वा छंदसीति पूर्वसवर्णदीर्घत्वं। शतुरनुम इति ङीप उदात्तत्वं॥

अमूर्या उप सूर्ये याभिर्वा सूर्यः सह। ता नो हिन्वंत्वध्वरं॥१७॥

अमूः। याः। उप। सूर्ये। याभिः। वा। सूर्यः। सह। ताः। नः। हिन्वंतु। अध्वरं॥१७॥

या अमूरापः सूर्ये उप समीपेनावस्थिताः। आपः सूर्ये समाहिता इति श्रुत्यंतरात्। याश्च वा सूर्यो याभि-रद्भिः सह वर्तते। पूर्वत्रापां प्राधान्यमुत्तरत्र सूर्यस्येति विशेषः। तास्तादृश्य आपो नोऽस्मदीयमध्वरं यागं हिन्वंतु। प्रीणयंतु॥ याभिः। सावेकाच इति विभक्त्युदात्तस्य न गोश्वन्सावर्वर्णेति प्रतिषेधः। शेषा तु प्रक्रिया स्पष्टा॥

अपो देवीरुप ह्वये यत्र गावः पिबंति नः। सिंधुभ्यः कर्त्वं हविः॥१८॥

अपः। देवीः। उप। ह्वये। यत्र। गावः। पिबंति। नः। सिंधुऽभ्यः। कर्त्वं। हविः॥१८॥

नोऽस्मदीया गावो यत्र यास्वप्सु पिबंति पानं कुर्वंति ता अपो देवीरुप ह्वये। आह्वयामि। सिंधुभ्यः स्यंदनशीलाभ्योऽद्भ्यो देवताभ्यो हविः कर्त्वं। अस्माभिः कर्तव्यं॥ अपः। ऊडिदमित्यादिना शस उदात्तत्वं। पिबंति। पाघ्रेत्यादिना पिबादेशः। शपः पित्त्वादनुदात्तत्वं। तिङश्च लसार्वधातुकस्वरेण धातुस्वरेणाद्यु-दात्तत्वं। निपातैर्यद्यदिहंतेत्यादिना निघाताभावः। कर्त्वं। डुकृञ् करणे। कृत्यार्थे तवैकेन्केन्यत्वनः। पा॰ ३. ४. १४. । इति कर्मणि त्वन्प्रत्ययः। गुणः। नित्स्वरेणाद्युदात्तत्वं॥

अप्स्व१ंतरमृतमप्सु भेषजमपामुत प्रशस्तये। देवा भवत वाजिनः॥१९॥

अप्ऽसु। अंतः। अमृतं। अप्ऽसु। भेषजं। अपां। उत। प्रऽशस्तये। देवाः। भवत। वाजिनः॥१९॥

अप्सु जलेष्वंतर्मध्येऽमृतं पीयूषं वर्तते। तस्यास्तद्विकारत्वात्। अमृतं वा आप इति श्रुत्यंतराच्च। तथैवाप्सु भेषजमौषधं वर्तते। क्षुद्रोगनिवर्तकस्यान्नस्याप्कार्यत्वात्। उतापि च तादृशीनामपां देवतानां प्रशस्तये प्रशंसार्थं हे देवा ऋत्विजादयो ब्राह्मणाः। एते वै देवाः प्रत्यक्षं यद्ब्राह्मणा इति श्रुत्यंतरात्। वाजिनो वेगवंतो भवत। शीघ्रं स्तुतिं कुरुतेत्यर्थः॥ अप्सु। ऊडिदमित्यादिना सप्तम्या उदात्तत्वं। संहितायामुदात्तस्वरितयोर्यण स्वरित इति स्वरितत्वं। अमृतं। नञो जरमरमित्रमृताः। पा॰ ६. २. ११६. । इत्युत्तरपदाद्युदात्तत्वं। प्रशस्तये। तादौ च निति। पा॰ ६. २. ५०. । इति गतेः प्रकृतिस्वरत्वं। भवत। आमंत्रितं पूर्वमविद्यमानवदिति पूर्वस्या-मंत्रितस्याविद्यमानवत्त्वेन पादादित्वान्न निघातः॥

कारीर्यामुत्तरस्याज्यभागस्याप्सु म इत्येषानुवाक्या। वर्षकामेष्टिरिति खंडेऽग्नये सधिष्टवाप्सु मे सोमो अब्रवीत्। आ॰ २. १३. । इति सूत्रितं॥

अप्सु मे सोमो अब्रवीदंतर्विश्वानि भेषजा।
अग्निं च विश्वशंभुवमापश्च विश्वभेषजीः॥२०॥

अप्ऽसु । मे । सोमः । अब्रवीत् । अंतः । विश्वानि । भेषजा ।
अग्निं । च । विश्वऽशंभुवं । आपः । च । विश्वऽभेषजीः ॥२०॥

अप्सु जलेष्वंतर्मध्ये विश्वानि भेषजा सर्वाण्यौषधानि संतीति मे मह्यं मंत्रदर्शिने मुनये सोमो देवोऽब्रवीत्। तथा विश्वशंभुवं सर्वस्य जगतः सुखकरमेतन्नामकं चाग्निं चाप्सु वर्तमानं सोमोऽब्रवीत्। तथा च तैत्तिरीया अग्नेस्त्रयो ज्यायांस इत्यनुवाके सोऽपः प्राविशदित्यग्नेरप्सु प्रवेशमामनंति। तै॰ सं॰ २. ६. ६. १.। लतागुल्मवृक्षमूलादीनामौषधानां वृष्टिजन्यत्वेन जलवर्तित्वं प्रसिद्धं। विश्वभेषजीः। विश्वानि भेषजानि यासु तथाविधा अपोऽप्यब्रवीत्॥ भेषजा। सुपां सुलुगित्याकारः। विश्वशंभुवं। भवतेरंतर्भावितण्यर्थात् क्विप्। व्यत्ययेन पूर्वपदप्रकृतिस्वरत्वं। यद्वा। विश्वे सर्वेऽपि व्यापाराः सुखकरा यस्य। बहुव्रीहौ विश्वं संज्ञायां। पा॰ ६. २. १०६.। इति पूर्वपदांतोदात्तत्वं। आपः। कर्मणि शसि प्राप्ते व्यत्ययेन जस्। अप्तृन्नित्यादिनोपधादीर्घः। विश्वभेषजीः। विश्वशंभुरितिवत्॥ ॥११॥

आपः पृणीत भेषजं वरूथं तन्वे३ मम। ज्योक् च सूर्यं दृशे ॥२१॥
आपः। पृणीत। भेषजं। वरूथं। तन्वे। मम। ज्योक्। च। सूर्यं। दृशे ॥२१॥

हे आपो मम तन्वे शरीरार्थं वरूथं [illegible]कं भेषजमौषधं पृणीत। पूरयत। किंच ज्योक् चिरं सूर्यं दृशे द्रष्टुं नीरोगा वयं शक्नुयामेति शेषः॥ पृणीत। पॄ पालनपूरणयोः। लोण्मध्यमबहुवचनं थ। तस्य तस्थस्थमिपामिति तादेशः। क्र्यादिभ्यः श्ना। प्वादीनां ह्रस्व इति ह्रस्वः। ई हल्य[illegible]। ऋवर्णाच्चेति णत्वं। सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति तिङः स्वरः शिष्यते। आप इत्यस्यामंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वे पादादित्वान्निघाताभावः। वरूथं। वृञ् वरणे। जॄवृञ्भ्यामूथन्। उ॰ २. ६.। नित्त्वादाद्युदात्तः। तन्वे। ङिति ह्रस्वश्च। पा॰ १. ४. ६.। इति नदीसंज्ञा पाक्षिकीत्याडागमाभावः। उदात्तयणो हल्पूर्वादिति विभक्त्युदात्तत्वे प्राप्ते व्यत्ययेनोदात्तस्वरितयोरिति स्वरितत्वं। दृशे। दृशे विख्ये च। पा॰ ३. ४. ११.। इति तुमर्थे निपात्यते॥

पशौ मार्जन इदमापः प्र वहतेत्येषा विनियुक्ता। कृतायां वपायामिति खंडे सूचितं। इदमापः प्र वहत। आ॰ ३. ५.। इति॥ एषैवावभृथेष्टौ स्नाने विनियुक्ता। पत्नीसंयाजैश्चरित्वेति खंड इदमापः प्र वहत सुमित्र्या न आप ओषधयः संतु। आ॰ ६. १३.। इति सूचितं॥

इदमापः प्र वहत यत्किं च दुरितं मयि। यद्वाहमभिदुद्रोह यद्वा शेप उतानृतं ॥२२॥
इदं। आपः। प्र। वहत। यत्। किं। च। दुःऽइतं। मयि। यत्। वा। अहं। अभिऽदुद्रोह। यत्। वा। शेपे। उत। अनृतं ॥२२॥

मयि यजमाने यत्किं च [illegible]रितम[illegible]नान्निष्पन्नं। वाथवाहं यजमानोऽभिदुद्रोह सर्वतो बुद्धिपूर्वकं द्रोहं कृतवानस्मि वाथवा शेपे साधुजनं शप्तवानस्मीति यदस्ति। उतापि चानृतमुक्तवानिति यदस्ति। तदिदं सर्वमपराधजातं प्र वहत। मत्तोऽपनीय प्रवाहेणान्यतो नयत॥ मयि। मपर्यंतस्य त्वमावेकवचन इति मादेशे कृतेऽतो गुण इति पररूपे च सति योऽचीति दकारस्य यकारादेशः। एकादेशस्वरेण मकारात्परस्याकारस्योदात्तत्वं। दुद्रोह। द्रुह जिघांसायां। णलि गुणे द्विर्वचनह्रस्वहलादिशेषाः। लितीति प्र[illegible]दात्तत्वं। यद्वृत्तयोगान्निघाताभावः। शेपे। शप आक्रोशे। लिटि व्यत्ययेन तङ्। [illegible]त्तमैकवचनमिट्। टेरेत्वं। अत एकहल्मध्ये। पा॰ ६. ४. १२०.। इत्येत्वाभ्यासलोपौ। प्रत्ययस्वरेणांतोदात्तत्वं। [illegible]र्ववन्निघाताभावः॥

[illegible]नीयोपस्थान आपो अद्यान्वचारिषमित्येषा। मनोतायै संप्रेषित इति खंडे सूचितं। एत्योपतिष्ठंत आपो अद्यान्वचारिषं। आ॰ ३. ६.। इति॥

आपो॑ अ॒द्यान्व॑चारिषं॒ रसे॑न॒ सम॑गस्महि ।
पय॑स्वानग्न॒ आ ग॑हि॒ तं मा॒ सं सृ॑ज॒ वर्च॑सा ॥२३॥
आप॑ः । अ॒द्य । अनु॑ । अ॒चा॒रि॒षं॒ । रसे॑न । सं । अ॒ग॒स्म॒हि॒ ।
पय॑स्वान् । अग्ने॑ । आ । ग॒हि॒ । तं । मा॒ । सं । सृ॒ज॒ । वर्च॑सा ॥२३॥

अद्यास्मिन्दिनेऽवभृथार्थमापोऽन्वचारिषं। जलान्यनुप्रविष्टोऽस्मि। प्रविश्य च रसेन जलसारेण समगस्महि। संगताः स्मः। हे अग्ने पयस्वान् जले वर्तमानत्वेन पयोयुक्तस्त्वमा गहि। अस्मिन्कर्मण्यागच्छ। तं मा तादृशं स्नातं मां वर्चसा तेजसा सं सृज। संयोजय॥ आपः। कर्मणि शसि प्राप्ते व्यत्ययेन जस्। अचारिषं। चर गत्यर्थः। लुङि च्लेः सिच्। आर्धधातुकस्येड्वलादेः। पा॰ ७. २. ३५.। इतीट्। नेटि। पा॰ ७. २. ४.। इति वृद्धिप्रतिषेधे प्राप्ते तदपवादत्वयातो ल्रांतस्य। पा॰ ७. २. २.। इत्युपधाया वृद्धिः। अगस्महि। समो गम्यृच्छीत्यात्मनेपदं। पा॰ १. ३. २९.। च्लेः सिच्। मंत्रे घसेत्यादिना च्लेर्लुगभावश्छांदसः। एकाच उपदेशेऽनुदात्तादितीट्प्रतिषेधः। वा गमः। पा॰ १. २. १३.। इति सिचः कित्त्वादनुदात्तोपदेशेत्यादिनानुनासिकलोपः। गहि। लोटि गमेः सिपो हिः। अपित्त्वेन ङित्त्वादनुदात्तोपदेशेत्यादिनानुनासिकलोपः। अतो हेरिति लुग्न भवति। असिद्धवदत्राभादिति मलोपस्यासिद्धत्वात्॥

सं मा॑ग्ने॒ वर्च॑सा सृज॒ सं प्र॒जया॒ समायु॑षा ।
वि॒द्युर्मे॑ अ॒स्य दे॒वा इन्द्रो॑ वि॒द्यात्स॒ह ऋषि॑भिः ॥२४॥
सं । मा॒ । अ॒ग्ने॒ । वर्च॑सा । सृ॒ज॒ । सं । प्र॒ऽजया॑ । सं । आयु॑षा ।
वि॒द्युः । मे॒ । अ॒स्य । दे॒वाः । इन्द्र॑ः । वि॒द्यात् । स॒ह । ऋषि॑ऽभिः ॥२४॥

हे अग्ने वर्चःप्रजायुर्भिर्मा संयोजय। देवाः सोमपातारोऽस्य मे यजमानस्य विद्युः। अनुष्ठानं जानीयुः। किंच इंद्रश्च ऋषिगणैः सह ममानुष्ठानं विद्यात्। जानीयात्॥ विद्युः। विद ज्ञाने। लिङि झेर्जुस्। पा॰ ३. ४. १०८.। यासुट्। लिङः सलोपः। पा॰ ७. २. ७९.। इति सकारलोपः। उस्यपदांतात्। पा॰ ६. १. ९६.। इति पररूपत्वं। यासुट उदात्तत्वेनैकादेश उकारोऽप्युदात्तः। अस्य। इदमोऽन्वादेश इत्यशनुदात्तः। विभक्तिरपि सुप्त्वेनानुदात्ता। सह ऋषिभिरित्यत्र ऋत्यकः। पा॰ ६. १. १२८.। इति प्रकृतिभावः॥ ॥१२॥ ॥५॥

प्रथममंडलस्य षष्ठेऽनुवाके सप्त सूक्तानि। तत्र कस्य नूनमिति पंचदशर्चं प्रथमं सूक्तं। अजीगर्तपुत्रस्य शुनःशेपस्यार्षं। त्रैष्टुभं। अभि त्वा देवेति तृचो गायत्रः। आद्याया अनिरुक्तत्वात्प्रजापतिर्देवता। अग्नेर्वयमित्यस्याग्निः। अभि त्वा देवेत्यस्य तृचस्य सविता। भगभक्तस्येत्येषा भगदेवताका वा। शेषा वारुण्यः। तथा चानुक्रांतं। कस्य पंचोनाजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातो वारुणं तु त्रैष्टुभमाद्यौ काव्याग्नेय्यौ सावित्रस्तृचो गायत्रोऽस्यांत्या भागी वेति॥ राजसूयेऽभिषेचनीयेऽहनि मरुत्वतीये परिसमाप्ते सत्येतदादिकं सूक्तसप्तकमभिषिक्तस्य पुत्रादिभिः परिवृतस्य राज्ञः पुरस्ताद्धोत्राख्यातव्यं। तथा च सूत्रेऽभिहितं। संस्थिते मरुत्वतीये दक्षिणत आहवनीयस्य [illegible]ऽभिषिक्ताय पुत्रामात्यपरिवृताय राज्ञे शौनःशेपमाचक्षीत। आ॰ ९. ३.। इति। ब्राह्मणं च भवति। तदेतत्परऋक्शतगाथं शौनःशेपमाख्यानं तद्धोता राज्ञेऽभिषिक्तायाचष्टे हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृणाति। ऐ॰ ब्रा॰ ७. १८.। इति॥

कस्य॑ नू॒नं क॑त॒मस्या॒मृता॑नां॒ मना॑महे॒ चारु॑ दे॒वस्य॒ नाम॑ ।
को नो॑ म॒ह्या अदि॑तये॒ पुन॑र्दात्पि॒तरं॑ च दृ॒शेयं॑ मा॒तरं॑ च ॥१॥

कस्य॑। नू॒नं। क॒त॒मस्य॑। अ॒मृता॑नां। मना॑महे। चारु॑। दे॒वस्य॑। नाम॑।
कः। नः॒। म॒ह्यै। अदि॑तये। पुनः॑। दा॒त्। पि॒तर॑ं। च॒। दृ॒शेय॑ं। मा॒तर॑ं। च॒ ॥१॥

कस्येत्यनयर्चा शुनःशेपो यूपे बद्धः कांदिशीकः कं देवमुपधावानीति विचिकित्सति। तथा चाम्नायते। हंताहं देवता उपधावामीति स प्रजापतिमेव प्रथमं देवतानामुपससार। ऐ॰ ब्रा॰ ७. १६.। इति। वयं शुनःशेपनामका अमृतानां देवतानां मध्ये कतमस्य किंजातीयस्य कस्य देवस्य चारु शोभनं नाम मनामहे। उच्चारयामः। को देवो मां मुमूर्षुं पुनरपि मह्यै महत्यै अदितये पृथिव्यै दात्। दद्यात्। तेन दानेनाहममृतः सन् पितरं मातरं च दृशेयं। पश्येयं। को ह वै नाम प्रजापतिरिति श्रुतेः कस्येति शब्दसामान्यादनया प्रजापतिरेवोपस्तुत इति गम्यते॥ कतमस्य। किंशब्दाद्वा बहूनां जातिपरिप्रश्ने डतमच्। पा॰ ५. ३. ९३.। चित इत्यंतोदात्तत्वं। अमृतानां। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वे प्राप्ते नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं। मनामहे। मन ज्ञाने। व्यत्ययेन शप्। पादादित्वादनिघातः। मह्यै। उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं। दात्। गातिस्था। पा॰ २. ४. ७७.। इति सिचो लुक्। बहुलं छंदस्यमाङ्योगेऽपीत्यडागमाभावः। दृशेयं। दृशिर् प्रेक्षणे। आशीर्लिङि मिपोऽम्। दृशेरग्वक्तव्यः। म॰ ३. १. ८६. २.। इत्यक्प्रत्ययः। शपोऽपवादः। क्ङिति चेति लघूपधगुणाभावः। लिङ्याशिष्यङ्। पा॰ ३. १. ८६.। इत्यङि हि सति ऋदृशोऽङि गुणः। पा॰ ७. ४. १६.। इति गुणः स्यात्। यासुट्। सलोपः। अतो येयः। आद्गुणः। यासुटः स्वरेणैकार उदात्तः। मातरं चेत्यत्र चशब्दाद्दृशेयमित्यनुषज्यते। अतस्तदपेक्षयैषा तिङ्विभक्तिः प्रथमेति चवायोगे प्रथमेति न निहन्यते॥

अ॒ग्नेर्व॒यं प्र॑थ॒मस्या॒मृता॑नां॒ मना॑महे॒ चारु॑ दे॒वस्य॒ नाम॑।
स नो॑ म॒ह्या अदि॑तये॒ पुन॑र्दात्पि॒तरं॑ च दृ॒शेयं॑ मा॒तरं॑ च ॥२॥
अ॒ग्नेः। व॒यं। प्र॒थ॒मस्य॑। अ॒मृता॑नां। मना॑महे। चारु॑। दे॒वस्य॑। नाम॑।
सः। नः॒। म॒ह्यै। अदि॑तये। पुनः॑। दा॒त्। पि॒तर॑ं। च॒। दृ॒शेय॑ं। मा॒तर॑ं। च॒ ॥२॥

इत्थं प्रथमयर्चा विचिकित्सां कृत्वा प्रजापतेः सकाशात्तं देवमग्निं निश्चित्यानया तुष्टाव। तथा च श्रूयते। तं प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा। ऐ॰ ब्रा॰ ७. १६.। इति। पूर्ववद्योजना। दाद्दातु दृशेयं पश्यानीत्येवमाशीःपरत्वेन पदद्वयं योज्यं॥

प्रथमे छंदोमे वैश्वदेवशस्त्रे अभि त्वा देव सवितरिति सावित्रस्तृचः सूक्तस्थानीयः। अथ छंदोमा इति खंडेऽभि त्वा देव सवितः प्रेतां यज्ञस्य शंभुवा। आ॰ ८. ९.। इति सूचितं॥ अभि त्वेत्येषाग्निमंथनेऽपि विनियुक्ता। प्रातर्वैश्वदेव्यामिति खंडेऽभि त्वा देव सवितर्मही द्यौः पृथिवी च नः। आ॰ २. १६.। इति सूचितं। श्रूयते च। अभि त्वा देव सवितरिति सावित्रीमन्वाह। ऐ॰ ब्रा॰ १. १६.। इति॥ तथा प्रवर्ग्येऽप्येषा विनियुक्ता। अथोत्तरमिति खंडेऽभि त्वा देव सवितः समी वत्सं न मातृभिः। आ॰ ४. ७.। इति सूचितं॥ तथा ग्रावस्तोत्रेऽपि। एतस्मिन्काले ग्रावस्तुदिति खंडे मध्यमस्वरेणेदं सवनमभि त्वा देव सवितः। आ॰ ५. १२.। इति सूचितं॥

अ॒भि त्वा॑ देव सवित॒रीशा॑नं॒ वार्या॑णां। सदा॑वन्भा॒गमी॑महे ॥३॥
अ॒भि। त्वा॒। दे॒व॒। स॒वि॒त॒रिति॑। ईशा॑नं। वार्या॑णां। सदा॑। अ॒व॒न्। भा॒गं। ई॒म॒हे॒ ॥३॥

अथाग्निना प्रेरितः सन्सवितारमभि त्वेत्यनेन तृचेन प्रार्थयते। तथैव श्रूयते। तमग्निरुवाच सविता वै प्रसवानामीशे तमेवोपधावेति स सवितारमुपससाराभि त्वा देव सवितरित्येतेन तृचेन। ऐ॰ ब्रा॰ ७. १६.। इति। हे सदावन् सदा सर्वदा रक्षक हे सवितर्देव वार्याणां वरणीयानां धनानामीशानं स्वामिनं त्वां प्रति भागं भजनीयं धनमभि सर्वत ईमहे। याचामहे॥ ईशानं। ईश ऐश्वर्ये। लटः शानच्। तास्यनुदात्तेदिति

लसार्वधातुकानुदात्तत्वे धातुस्वरः। वार्याणां। वृङ् संभक्तौ। ऋहलोर्ण्यत्। ईडवंदेत्यादिनाद्युदात्तत्वं। अवन्। आमंत्रितनिघातः। भागं। कर्षात्वत इति घञोऽंत उदात्तः॥

यश्चिद्धि त इत्था भगः शशमानः पुरा निदः। अद्वेषो हस्तयोर्दधे ॥ ४॥
यः। चित्। हि। ते। इत्था। भगः। शशमानः। पुरा। निदः। अद्वेषः। हस्तयोः। दधे ॥ ४॥

हे सवितर्यो भगो भजनीयो धनविशेषस्ते तव हस्तयोर्दधे धृतोऽभूत्तं धनविशेषमीमह इति पूर्वत्रान्वयः। चिच्छब्दः पूजार्थे हिशब्दः प्रसिद्धौ। धनस्य पूज्यत्वं सर्वत्र प्रसिद्धं। तामेव पूज्यत्वप्रसिद्धिं विशदयति। इत्था शशमानोऽनेन प्रकारेण शस्यमानः स्तूयमानः। धनस्तुतिप्रकारं च सर्वे जानंति। ननु स्वकीये धने वैरिभिरपहृते सति वैरिगृहीतं धनं सर्वो लोको निंदति द्वेष्टि च। अतो धनस्तुतिर्न नियतेत्याशंक्याह। निदः पुरा अद्वेषो निंदायाः पूर्वं स्वकीयत्वेन व्यवस्थिते सति तदानीं द्वेषरहितः। तस्मात्स्वकीयत्वाभिप्रायेण स्तूयमानत्वमुक्तमित्यर्थः॥ इत्था। प्रकारवचन इदमस्थमुः। पा॰ ५. ३. २४.। सुपां सुलुगिति व्यत्ययेन विभक्तेर्डादेशः। टिलोप उदात्तनिवृत्तिस्वरेणाकार उदात्तः। शशमानः। शश प्लुतगतौ। इह तु स्तुत्यर्थः। ताच्छील्यवयोवचनेति। पा॰ ३. २. १२९.। ताच्छीलिकश्चानश्। कर्तरि शप्। चित इत्यंतोदात्तत्वं। निदः। णिदि कुत्सायां। संपदादिलक्षणः क्विप्। सावेकाच इति पंचम्या उदात्तत्वं। अद्वेषः। न विद्यते द्वेषोऽस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। दधे। कर्मणि लिट्। तस्यार्धधातुकत्वेनाभ्यस्तानामादिरित्याद्युदात्तो न भवति। प्रत्ययस्वर एव शिष्यते। यद्वृत्तयोगान्निघाताभावः॥

भगभक्तस्य ते वयमुदशेम तवावसा। मूर्धानं राय आरभे ॥ ५॥
भगऽभक्तस्य। ते। वयं। उत्। अशेम। तव। अवसा। मूर्धानं। रायः। आऽरभे ॥ ५॥

हे सवितः ते त्वदीया वयं शुनःशेपनामानो भगभक्तस्य धनेन संयुक्तस्य तवावसा रक्षणेनोदशेम। उत्कर्षेण व्याप्नुमः। किं कर्तुं। रायो धनस्य मूर्धानमुत्कर्षमारभे। प्रारब्धुं। धनिकत्वप्रसिद्ध्या व्याप्ता भूयामेत्यर्थः॥ भगशब्दो वृषादित्वादाद्युदात्तः। तृतीया कर्मणीति पूर्वपद[illegible]। अशेम। अशू व्याप्तौ। लिङि व्यत्ययेन परस्मैपदं। शप्। रायः। ऊडिदमिति षष्ठ्या उदात्तत्वं। आरभे। कृत्यार्थे तवैकेनिति तुमर्थे केन्प्रत्ययः। नित्स्वरेणाद्युदात्तत्वं॥ ॥१३॥

नहि ते क्षत्रं न सहो न मन्युं वयश्चनामी पतयंत आपुः।
नेमा आपो अनिमिषं चरंतीर्न ये वातस्य प्रमिनंत्यभ्वं ॥ ६॥
नहि। ते। क्षत्रं। न। सहः। न। मन्युं। वयः। चन। अमी इति। पतयंतः। आपुः।
न। इमाः। आपः। अनिऽमिषं। चरंतीः। न। ये। वातस्य। प्रऽमिनंति। अभ्वं ॥ ६॥

अथ सवित्रा प्रेरितः शुनःशेप एतदादिसूक्तशेषेणोत्तरेण च सूक्तेन वरुणं तुष्टाव। तथा च श्रूयते। तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि तमेवोपधावेति स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता। ऐ॰ ब्रा॰ ७. १६.। इति। हे वरुण पतयंतः प्रौढे वियत्युत्पतंतोऽमी दृश्यमाना वयश्चन श्येनादयः पक्षिणोऽपि ते क्षत्रं त्वदीयं शरीरबलं न ह्यापुः। नैव प्राप्ताः। त्वत्सदृशं शरीरबलं पक्षिणामपि नास्तीत्यर्थः। तथा सहस्त्वदीयं पराक्रमं तव सामर्थ्यमपि न प्रापुः। तथा मन्युं त्वदीयं कोपमपि न प्रापुः। त्वयि क्रुद्धे सति सोढुमशक्ता इत्यर्थः। अनिमिषं सर्वदा चरंतीः प्रवाहरूपेण गच्छंत्य आपस्त्वदीयं बलं न प्रापुः। वातस्य वायोर्ये गतिविशेषास्त्वदीयमभ्वं वेगं न प्रमिनंति न हिंसंति। अतिक्रमं कर्तुं न शक्ता इत्यर्थः। तेऽपि न प्रापुरिति पूर्वत्रान्वयः॥ पतयंतः। पत गतौ। चुरादिरदंतः। लटः शतृ। शप्। गुणायादेशौ। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे णिचः स्वरः। आपुः। आप्लृ व्याप्तौ। लिट्युसि द्विर्भावहलादिशेषौ। अत आदेः। पा॰ ७.

४. ७०.। इत्यात्वं। अत्र न सहो न मन्युमित्यादिभिरापुरित्यस्य संबंधात्तदपेक्षया प्राथम्याच्चादिलोपे विभाषेति प्रथमा तिङ्विभक्तिर्न निहन्यते। चरंतीः। वा छंदसीति पूर्वसवर्णदीर्घः। प्रमिनंति। मीञ् हिंसायां। क्र्यादिभ्यः श्ना। श्नाभ्यस्तयोरातः। पा॰ ६. ४. ११२.। इत्याकारलोपः। मीनातेर्निगमे। पा॰ ७. ३. ८१.। इति ह्रस्वत्वं। प्रत्ययस्वरः। तिङि चोदात्तवति। पा॰ ८. १. ७१.। इति गतिरनुदात्तः। यद्वृत्तयोगादनिघातः॥

अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः।
नीचीनाः स्थुरुपरि बुध्न एषामस्मे अंतर्निहिताः केतवः स्युः॥७॥

अबुध्ने। राजा। वरुणः। वनस्य। ऊर्ध्वं। स्तूपं। ददते। पूतऽदक्षः।
नीचीनाः। स्थुः। उपरि। बुध्नः। एषां। अस्मे इति। अंतः। निऽहिताः। केतवः।
स्युरिति स्युः॥७॥

पूतदक्षः शुद्धबलो वरुणो राजाबुध्ने मूलरहितेऽंतरिक्षे तिष्ठन्वनस्य वननीयस्य तेजसः स्तूपं संघमूर्ध्वमुपरिदेशे ददते। धारयति। नीचीनाः स्थुः। ऊर्ध्वदेशे वर्तमानस्य वरुणस्य रश्मय इत्यध्याहार्यं। ते ह्यधोमुखास्तिष्ठंति। एषां रश्मीनां बुध्नो मूलमुपरि तिष्ठतीति शेषः। तथा सति केतवः प्रज्ञापकाः प्राणा अस्मे ऽस्मास्वंतर्निहिताः स्थापिताः स्युः। मरणं न भविष्यतीत्यर्थः॥ अबुध्ने। न विद्यते बुध्नो मूलमस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। स्तूपं। स्त्यै शब्दसंघातयोः। स्त्यः संप्रसारणमूच्चेति पप्रत्ययः। तत्संनियोगेन यकारस्य संप्रसारणं परपूर्वत्व ऊकारादेशश्च। निदित्यनुवृत्तेराद्युदात्तत्वं। ददते। भौवादिकः। नीचीनाः। निपूर्वादंचतेर्ऋत्विगित्यादिना क्विन्। अनिदितामिति नलोपः। न्यच्शब्दात्स्वार्थे विभाषांचेरदिक्स्त्रियां। पा॰ ५. ४. ८.। इति खः। आयन्नित्यादिना तस्येनादेशः। आयनादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थं। पा॰ ७. १. २. १.। इति वचनादीकार उदात्तः। अच इत्यकारलोपे चाविति दीर्घत्वं। स्थुः। गातिस्थेत्यादिना। पा॰ २. ४. ७७.। सिचो लुक्। आतः। पा॰ ३. ४. ११०.। इति झेर्जुसादेशः। उस्यपदांतात्। पा॰ ६. १. ९६.। इति पररूपत्वं। बहुलं छंदस्यमाङ्योगेऽपीत्यडागमाभावः। अस्मे। सुपां सुलुगिति सप्तम्याः शेआदेशः। निहिताः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। स्युः। अस्तेर्लिङि श्नसोरल्लोपः॥

उरुं हि राजा वरुणश्चकार सूर्याय पंथामन्वेतवा उं।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित्॥८॥

उरुं। हि। राजा। वरुणः। चकार। सूर्याय। पंथां। अनुऽएतवै। ऊं इति।
अपदे। पादा। प्रतिऽधातवे। अकः। उत। अपऽवक्ता। हृदयऽविधः। चित्॥८॥

वरुणो राजा सूर्याय सूर्यस्य पंथां मार्गमुरुं विस्तीर्णं चकार। हिशब्दः प्रसिद्धौ। उत्तरायणदक्षिणायनमार्गस्य विस्तारः प्रसिद्धः। किमर्थमेवं कृतवानिति तदुच्यते। अन्वेतवा उ। अनुक्रमेणोदयास्तमयौ गंतुमेव। तथापदे पादरहितेऽंतरिक्षे पादा प्रतिधातवे। पादौ प्रक्षेप्तुं। अकः। मार्गं कृतवान्। पूर्वत्र रथस्य मार्गः अत्र पादयोरिति विशेषः। यद्वा। अपदे यूपे बद्धेन मया गंतुमशक्ये भूप्रदेशे पादौ प्रक्षेप्तुमुपायं बंधविमोचनरूपं करोत्वित्यर्थः। उतापि च हृदयाविधश्चिद्धृदयव्यधकस्य शत्रोरप्यपवक्तापवदिता निराकर्ता भवतु॥ चकार। लित्स्वरेणाकार उदात्तः। हि चेति निघातप्रतिषेधः। पंथां। पथिमथ्यृभुक्षामात्। पा॰ ७. १. ८५.। इति द्वितीयायामपि व्यत्ययेनात्वं। पथिन्शब्दस्य पतेस्थ च। उ॰ ४. १२.। इति प्रत्ययांतत्वेनांतोदात्तत्वे प्राप्ते पथिमथोः सर्वनामस्थाने। पा॰ ६. १. १९९.। इत्याद्युदात्तत्वं। अन्वेतवै। अनुपूर्वादेतेस्तुमर्थे सेसेनिति तवैप्रत्ययः। तवै चांतश्च युगपत्। पा॰ ६. २. ५१.। इत्याद्यंतयोरुदात्तत्वं। पादा। सुपां सुलुगित्याकारः। प्रतिधातवे। दधातेस्तुमर्थ इति सूत्रेणैव तवेन्प्रत्ययः। तादौ च निति। पा॰ ६. २. ५०.। इति गतेः प्रकृतिस्वरत्वं। अकः। करोतेश्छंदसि लुङ्लङ्लिट इति लोडर्थे लुङ्। तस्य तिप्। मंत्रे घसेत्यादिना। पा॰ २. ४. ८०.। च्लेर्लुक्। गुणो

रपरत्वं । हल्ङ्याब्भ्यः । पा॰ ६. १. ६८. । इति तिपो लोपः । अडागमः । हृदयाविधः । हृञ् हरणे । वृह्नोः षुग्दुकौ च । उ॰ ४. १००. । इति कयन् । व्यध ताडने । क्विप् । नहिवृतीत्यादिना । पा॰ ६. ३. ११६. । पूर्वपदस्य दीर्घत्वं । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

शतं ते राजन्भिषजः सहस्रमुर्वी गंभीरा सुमतिष्टे अस्तु ।
बाधस्व दूरे निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुग्ध्यस्मत् ॥ ९ ॥
शतं । ते । राजन् । भिषजः । सहस्रं । उर्वी । गभीरा । सुऽमतिः । ते । अस्तु ।
बाधस्व । दूरे । निःऽऋतिं । पराचैः । कृतं । चित् । एनः । प्र । मुमुग्धि । अस्मत् ॥ ९ ॥

हे राजन्वरुण ते तव शतं भिषजो बंधनिवारकाणि शतसंख्याकान्यौषधानि वैद्या वा संति । ते तव सुमतिरस्मदनुग्रहबुद्धिरुर्वी विस्तीर्णा गभीरा गांभीर्योपेता स्थिरास्तु । निर्ऋतिमस्मदनिष्टकारिणीं निर्ऋतिं पापदेवतां पराचैः पराङ्मुखां कृत्वा दूरेऽस्मत्तो व्यवहिते देशे स्थापयित्वा तां बाधस्व । कृतं चिदस्माभिरनुष्ठितमप्येनः पापमस्मत् प्र मुमुग्धि । प्रकर्षेण मुक्तं नष्टं कुरु ॥ सुमतिः । तादौ चेति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते मन्क्तिन्नित्यादिनोत्तरपदांतोदात्तत्वं । संहितायां विसर्जनीयसकारस्य युष्मत्तत्ततक्षुःष्वंतःपादं । पा॰ ८. ३. १०३. । इति षत्वं । बाधस्व । बाधृ विलोडने । शपः पित्त्वादनुदात्तत्वं । तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते । निर्ऋतिं । तादौ चेति गतेः प्रकृतिस्वरत्वं । मुमुग्धि । मुच्लृ मोचने । बहुलं छंदसीति श्लुः । हुझल्भ्यो हेर्धिः । पा॰ ६. ४. १०१. । तस्यापित्त्वेन ङित्त्वाद्गुणाभावः । चोः कुः । पा॰ ८. २. ३०. । इति कुत्वं ॥

अमी य ऋक्षा निहितास उच्चा नक्तं ददृश्रे कुह चिद्दिवेयुः ।
अदब्धानि वरुणस्य व्रतानि विचाकशच्चंद्रमा नक्तमेति ॥ १० ॥
अमी इति । ये । ऋक्षाः । निऽहितासः । उच्चा । नक्तं । ददृश्रे । कुह । चित् । दिवा । ईयुः ।
अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चंद्रमाः । नक्तं । एति ॥ १० ॥

अमी रात्रावस्माभिर्दृश्यमाना ऋक्षाः सप्त ऋषयः । तथा च वाजसनेयिन आमनंति । ऋक्षा इति ह स्म वै पुरा सप्त ऋषीनाचक्षत इति । यद्वा । ऋक्षाः सर्वेऽपि नक्षत्रविशेषाः । ऋक्षाः स्तृभिरिति नक्षत्राणां । नि॰ ३. २०. । इति यास्केनोक्तत्वात् । उच्चा उच्चैरुपरिद्युप्रदेशे निहितासः स्थापिता ये संति ते ऋक्षा नक्तं रात्रौ ददृश्रे । सर्वैरपि दृश्यंते । दिवाहनि कुह चिदीयुः । क्वापि गच्छेयुः । न दृश्यंत इत्यर्थः । वरुणस्य राज्ञो व्रतानि कर्माणि नक्षत्रदर्शनादिरूपाण्यदब्धानि केनाप्यहिंसितानि । किंच वरुणस्याज्ञयैव चंद्रमा नक्तं रात्रौ विचाकशत् विशेषेण दीप्यमान एति । गच्छति ॥ निहितासः । आज्जसेरसुक् । थाथादिस्वरेणोत्तरपदांतोदात्तत्वे प्राप्ते । पा॰ ६. २. १४४. । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । ददृश्रे । दृशेर्लिटि इरयो रे । पा॰ ६. ४. ७६. । इति रेआदेशः । व्यत्ययेनाद्युदात्तत्वं । यद्वृत्तयोगादनिघातः । कुह । वा ह च छंदसि । पा॰ ५. ३. १३. । इति किंशब्दादुत्तरस्य त्रलो हादेशः । कु तिहोः । पा॰ ७. २. १०४. । इति किंशब्दस्य कुआदेशः । स्थानिवद्भावाल्लित्स्वरेणाद्युदात्तत्वं । विचाकशत् । कशेर्दीप्त्यर्थाद्यङ्लुगंताच्छतृप्रत्ययः । अभ्यस्तानामादिरित्याद्युदात्तत्वं । समासे कृत्स्वरः । यद्वा । काशतेर्वा व्यत्ययेनोपधाह्रस्वत्वं । चंद्रमाः । चंद्रे माङो डित् । उ॰ ४. २२७. । इत्यसिप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं ॥ ॥ १४ ॥

एकादशिनस्य वारुणस्य पशोर्वपापुरोडाशयोस्तत्त्वा यामीति द्वे ऋचौ याज्ये । सूत्रितं च । तत्त्वा यामि ब्रह्मणा वंदमान इति द्वे अस्तभ्नाद्द्यां । आ॰ ३. ७. । इति ॥ वरुणप्रघासेषु वारुणस्य हविषो याज्या तत्त्वा यामीत्येषा पंचम्यां पौर्णमास्यामित्यत्र सूत्रितं । इमं मे वरुण श्रुधि तत्त्वा यामि ब्रह्मणा वंदमानः । आ॰ २. १७. । इति ॥

तत्त्वा यामि ब्रह्मणा वंदमानस्तदा शास्ते यजमानो हविर्भिः ।
अहेळमानो वरुणेह बोध्युरुशंस मा न आयुः प्र मोषीः ॥ ११ ॥
तत् । त्वा । यामि । ब्रह्मणा । वंदमानः । तत् । आ । शास्ते । यजमानः । हविःऽभिः ।
अहेळमानः । वरुण । इह । बोधि । उरुऽशंस । मा । नः । आयुः । प्र । मोषीः ॥ ११ ॥

हे वरुण मुमूर्षुरहं त्वां प्रति तदायुर्यामि । याचे । कीदृशः । ब्रह्मणा प्रौढेन स्तोत्रेण वंदमानः स्तुवन् । सर्वत्र यजमानोऽपि हविर्भिस्तदायुरा शास्ते । प्रार्थयते । त्वं चेह कर्मण्यहेळमानोऽनादरमकुर्वन्बोधि । अस्मदपेक्षितं बुध्यस्व । हे उरुशंस बहुभिः स्तुत्य नोऽस्मदीयमायुर्मा प्र मोषीः । प्रमुषितं मा कुरु । सप्तदशसंख्याकेषु याञ्चाकर्मस्वीमहे यामीति पठितं । चाशब्दलोपश्छांदसः ॥ अहेळमानः । हेडृ अनादरे । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपश्च पित्त्वादनुदात्तत्वे सति धातुस्वरः शिष्यते । ततो नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं । बोधि । बुध अवगमने । लोटः सेर्हिः । बहुलं छंदसीति विकरणस्य लुक् । वा छंदसि । पा॰ ३. ४. ८८. । इत्यपित्त्वाभावेन ङित्त्वाभावाल्लघूपधगुणः । हुझल्भ्यो हेर्धिरिति हेर्धिरादेशः । धातोरंत्यलोपश्छांदसः । मोषीः । मुष स्तेये । लोडर्थे छांदसो लुङ् । वदव्रजेति प्राप्तायाः वृद्धेर्नेटि । पा॰ ७. २. ३-४. । इति प्रतिषेधे सति लघूपधगुणः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः ॥

तदिन्नक्तं तद्दिवा मह्यमाहुस्तदयं केतो हृद आ वि चष्टे ।
शुनःशेपो यमह्वद्गृभीतः सो अस्मान्राजा वरुणो मुमोक्तु ॥ १२ ॥
तत् । इत् । नक्तं । तत् । दिवा । मह्यं । आहुः । तत् । अयं । केतः । हृदः । आ । वि । चष्टे ।
शुनःशेपः । यं । अह्वत् । गृभीतः । सः । अस्मान् । राजा । वरुणः । मुमोक्तु ॥ १२ ॥

तदित्तदेव वरुणविषयं स्तोत्रं नक्तं रात्रौ मह्यं शुनःशेपायाहुः । कर्तव्यत्वेनाभिज्ञाः कथयंति । तथा दिवापि तदेवाहुः । हृदो मदीयमनसो निष्पन्नोऽयं केतः प्रज्ञाविशेषोऽपि तदेव कर्तव्यत्वेना वि चष्टे । सर्वतो विशेषेण प्रकाशयति । गृभीतो गृहीतो यूपे बद्धः शुनःशेप एतन्नामको जनो यं वरुणमह्वत् आहूतवान् स वरुणो राजास्मान् शुनःशेपान्मुमोक्तु । बंधान्मुक्तं करोतु ॥ मह्यं । ङयि चेत्याद्युदात्तत्वं । आहुः । ब्रुवः पंचानां । पा॰ ३. ४. ८४. । इति ब्रूञो लटि झेरुसादेशो धातोराहादेशश्च । हृदः । पद्दन्नित्यादिना । पा॰ ६. १. ६३. । हृदयशब्दस्य हृदादेशः । ऊडिदंपदादीति पंचम्या उदात्तत्वं । शुनःशेपः । शुन इव शेपो यस्येति समासे शुनःशेपपुच्छलांगुलेषु संज्ञायां षष्ठ्या अलुग्वक्तव्यः । पा॰ ६. ३. २१. ४. । इत्यलुक् । पूर्वपदप्रकृतिस्वरत्वे प्राप्त उभे वनस्पत्यादिषु । पा॰ ६. २. १४०. । इति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं । अह्वत् । ह्वेञो लुङि लिपिसिचिह्वश्च । पा॰ ३. १. ५३. । इति च्लेरङादेशः । आतो लोप इटि च । पा॰ ६. ४. ६४. । इत्याकारलोपः । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । गृभीतः । हृग्रहोर्भ इति भत्वं । सो अस्मान् । प्रकृत्यांतःपादमिति प्रकृतिभावः । मुमोक्तु । बहुलं छंदसीति विकरणस्य श्लुः ॥

शुनःशेपो ह्यह्वद्गृभीतस्त्रिष्वादित्यं द्रुपदेषु बद्धः ।
अवैनं राजा वरुणः ससृज्याद्विद्वाँ अदब्धो वि मुमोक्तु पाशान् ॥ १३ ॥
शुनःशेपः । हि । अह्वत् । गृभीतः । त्रिषु । आदित्यं । द्रुपदेषु । बद्धः ।
अव । एनं । राजा । वरुणः । ससृज्यात् । विद्वान् । अदब्धः । वि । मुमोक्तु । पाशान् ॥ १३ ॥

गृभीतो बंधनाय गृहीतस्त्रिसंख्याकेषु द्रुपदेषु द्रोः काष्ठस्य यूपस्य पदेषु प्रदेशविशेषेषु बद्धः शुनःशेप आदित्यमदितेः पुत्रं यं वरुणमह्वत् आहूतवान् । हि यस्मादेवं तस्मात्स वरुणो राजैनं शुनःशेपमव ससृज्यात् ।

अवसृष्टं बंधनाद्विमुक्तं करोतु । विमोकप्रकार एव स्पष्टीक्रियते । विद्वान् विमोकप्रकाराभिज्ञः अदब्धः केनाप्यहिंसितो वरुणः पाशान्बंधनरज्जुविशेषान्वि मुमोक्तु । विश्लिष्यैनं मुक्तं करोतु ॥ त्रिषु । षट्त्रिचतुर्भ्यो हलादिः ।पा० ६. १. १७९.। इति विभक्तेरुदात्तत्वं । संहितायामुदात्तस्वरितयोर्यण इति पर आकारः स्वर्यते । ससृज्यात् । सृज विसर्गे । प्रार्थनायां लिङ् । बहुलं छंदसीति विकरणस्य श्लुः । विद्वान् । विद ज्ञाने । विदेः शतुर्वसुः ।पा० ७. १. ३६.। उगिदचामिति नुम् । हल्ङ्यादिसंयोगांतलोपौ । संहितायां दीर्घादटि समानपाद इति नकारस्य रुत्वं । आतोऽटि नित्यमिति सानुनासिक आकारः । अदब्धः । दम्भु दंभे । निष्ठायामनिदितामिति नलोपे झषस्तथोर्धोऽधः ।पा० ८. २. ४०.। इति धत्वं । अव्ययपूर्वपदप्रकृतिस्वरत्वं ॥

अवभृथेऽव ते हेळ इति द्वे ऋचौ वारुणस्य हविषो याज्यानुवाक्ये । पत्नीसंयाजैश्चरित्वेति खंडे सूचितं । अव ते हेळो वरुण नमोभिरिति द्वे ।आ० ६. १३.। इति ॥

अव॑ ते॒ हेळो॑ वरुण॒ नमो॑भि॒रव॑ य॒ज्ञेभि॑रीमहे ह॒विर्भिः॑ ।
क्षय॑न्न॒स्मभ्य॑मसुर प्रचेता॒ राज॒न्नेनां॑सि शिश्रथः कृ॒तानि॑ ॥१४॥
अव॑ । ते॒ । हेळः॑ । व॒रु॒ण॒ । नमः॑ऽभिः । अव॑ । य॒ज्ञेभिः॑ । ई॒म॒हे॒ । ह॒विःऽभिः॑ ।
क्षय॑न् । अ॒स्मभ्य॑म् । अ॒सु॒र॒ । प्र॒चे॒त॒ इति॑ प्रऽचेतः । राज॑न् । एनां॑सि । शि॒श्र॒थः॒ ।
कृ॒तानि॑ ॥१४॥

हे वरुण ते तव हेळः क्रोधं नमोभिर्नमस्कारैरवेमहे । अवनयामः । तथा यज्ञैः सांगानुष्ठानेन पूज्यैर्हविर्भिरवेमहे । वरुणं परितोष्य क्रोधमपनयामः । हे असुरानिष्टक्षेपणशील प्रचेतः प्रकर्षेण प्रज्ञायुक्त राजन् दीप्यमान वरुणास्मभ्यमस्मदर्थं क्षयन्नस्मिन्कर्मणि निवसन्कृतान्यस्माभिरनुष्ठितान्येनांसि पापानि शिश्रथः । श्रथितानि शिथिलानि कुरु ॥ हेळः । असुनो नित्त्वादाद्युदात्तत्वं । यज्ञेभिः । बहुलं छंदसीत्यैसभावः । ईमहे । ईङ् गतौ । विकरणस्य लुक् । क्षयन् । क्षि निवासगत्योः । लटः शतृ । व्यत्ययेन शप् । आमंत्रिताद्युदात्तत्वं । असुर । असेरुरन् ।उ० १. ४३.। आमंत्रितनिघातः । शिश्रथः । श्रथ दौर्बल्ये । चुरादिरदंतः । छांदसे लुङि णिश्रिद्रुस्रुभ्यः ।पा० ३. १. ४८.। इति च्लेश्चङ् । द्विर्भावहलादिशेषौ । अग्लोपित्वात् सन्वद्भावाभावेऽपि ।पा० ७. ४. ९३.। बहुलं छंदसि ।पा० ७. ४. ७८.। इत्यभ्यासस्येत्वं । पूर्ववदडभावः ॥

उदु॑त्त॒मं व॑रुण॒ पाश॑म॒स्मदवा॑ध॒मं वि म॑ध्य॒मं श्र॑थाय ।
अथा॑ व॒यमा॑दित्य व्र॒ते तवाना॑गसो॒ अदि॑तये स्याम ॥१५॥
उत् । उ॒त्ऽत॒मम् । व॒रु॒ण॒ । पाश॑म् । अ॒स्मत् । अव॑ । अ॒ध॒मम् । वि । म॒ध्य॒मम् । श्र॒थ॒य॒ ।
अथ॑ । व॒यम् । आ॒दि॒त्य॒ । व्र॒ते । तव॑ । अना॑गसः । अदि॑तये । स्या॒म॒ ॥१५॥

हे वरुण उत्तममुत्कृष्टं शिरसि बद्धं पाशमस्मदस्मत्त उच्छ्रथाय । उत्कृष्य शिथिलं कुरु । अधमं निकृष्टं पादेऽवस्थितं पाशमव श्रथाय । अधस्तादवकृष्य शिथिलीकुरु । मध्यमं नाभिप्रदेशगतं पाशं वि श्रथाय । वियुज्य शिथिलीकुरु । अथानंतरं हे आदित्य अदितेः पुत्र वरुण वयं शुनःशेपास्तव व्रते त्वदीये कर्मण्यदितये खंडनराहित्यायानागसोऽपराधरहिताः स्याम । भवेम ॥ उत्तमं । तमपः पित्त्वादनुदात्तत्वेनाद्युदात्तत्वे प्राप्ते उत्तमशश्वत्तमौ सर्वत्रेत्युंछादिषु पाठादंतोदात्तत्वं ।पा० ६. १. १६०.। अधमं । अवद्यावमाधमार्वरेफाः कुत्सिते ।उ० ५. ५४.। इत्यवतेरम[illegible] । वस्य धः । श्रथाय । श्रथ दौर्बल्ये । संहितायां छांदसो दीर्घः । तव । युष्मदस्मदोर्ङसीत्याद्युदात्तत्वं । अनागसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । नञ्सुभ्यामिति तु व्यत्ययेन प्रवर्तते । यद्वा । आगसशब्दादस्मायामेधेति ।पा० ५. २. १२१.। मत्वर्थीयो विनिः । तस्य ।विन्मतोर्लुक् ।पा० ५. ३. ६५.। इति लुक् । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं ॥ ॥१५॥

यच्चिद्धित्येकविंशत्यृचं द्वितीयं सूक्तं । तथा चानुक्रांतं । यच्चित्सैकेति । ऋषिश्चान्यस्मादिति परिभाषया शुनःशेप एव ऋषिः । आद्यौ गायत्रमिति परिभाषितत्वाद्गायत्री छंदः । वारुणं त्विति पूर्वोक्तत्वात्तुह्यादिपरिभाषया । अनु° १२. ३. । वरुणो देवता ॥ विनियोग उक्तः शौनःशेपाख्याने ॥ विशेषविनियोगस्तु । आभिप्लवषडह इदं सूक्तं होत्रकशस्त्रे स्तोमनिमित्तमावापार्थं । अभिप्लवपृष्ठ्याहानीति खंडे तथैव सूचितं । यच्चिद्धि ते विश इति वारुणमेतस्य तृचमावपेत मैत्रावरुणः । आ° ७. ५. । इति ॥

**यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतं । मिनीमसि द्यविद्यवि ॥१॥**

**यत् । चित् । हि । ते । विशः । यथा । प्र । देव । वरुण । व्रतं । मिनीमसि । द्यविऽद्यवि ॥१॥**

हे वरुण यथा लोके विशः प्रजाः कदाचित्प्रमादं कुर्वंति तथा वयमपि ते तव संबंधि यच्चिद्धि यदेव किंचिद्व्रतं कर्म द्यवि द्यवि प्रतिदिनं प्र मिनीमसि प्रमादेन हिंसितवंतः । तदपि व्रतं प्रमा[illegible] सांगं कुर्विति शेषः ॥ यथा । लित्स्वरेणाद्युदात्तत्वे प्राप्ते यथेति पादांते । फि° ४. १७. । इति सर्वानुदात्तत्वं । मिनीमसि । मीञ् हिंसायां । इदंतो मसिः । क्र्यादिभ्यः श्ना । मीनातेर्निगमे । पा° ७. ३. ८१. । इति ह्रस्वत्वं । ई हल्यघोरितीकारः । सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वचनात्तिङ एव स्वरः शिष्यते । यद्वृत्तयोगान्निघाताभावः ॥

**मा नो वधाय हत्नवे जिहीळानस्य रीरधः । मा हृणानस्य मन्यवे ॥२॥**

**मा । नः । वधाय । हत्नवे । जिहीळानस्य । रीरधः । मा । हृणानस्य । मन्यवे ॥२॥**

हे वरुण जिहीळानस्यानादरं कृतवतो हत्नवे हंतुः पापिहननशीलस्य तव संबंधिने त्वत्कर्तृकाय वधाय नोऽस्मान्मा रीरधः । संसिद्धान्विषयभूतान्मा कुरु । हृणानस्य हृणीयमानस्य क्रुद्धस्य तव मन्यवे क्रोधाय मा अस्मान् रीरधः ॥ वधाय । हनश्च वधः । पा° ३. ३. ७६. । इत्यबंतो वधशब्दः । उंछादिषु पाठादंतोदात्तः । हत्नवे । हन हिंसागत्योः । कृहनिभ्यां क्नुः । उ° ३. ३०. । इति क्नुप्रत्ययः । धातोर्नकारस्य तकारः । जिहीळानस्य । हेडृ अनादरे । अस्माल्लिटः कानच् । द्विर्भावहलादिशेषह्रस्वचुत्वजश्त्वानि । एकारस्य ईकारादेशश्छांदसः । चित इत्यंतोदात्तत्वं । रीरधः । राध साध संसिद्धौ । चङि णिलोप उपधाह्रस्वत्वं । द्विर्वचनहलादिशेषः । ह्रस्वत्वसन्वद्भावेत्वाभ्यासदीर्घाः । न माङ्योग इत्यडभावः । हृणानस्य । हृणीङ् लज्जायां । अस्माच्छानचि पृषोदरादित्वादभिमतरूपसिद्धिः ॥

**वि मृळीकाय ते मनो रथीरश्वं न संदितं । गीर्भिर्वरुण सीमहि ॥३॥**

**वि । मृळीकाय । ते । मनः । रथीः । अश्वं । न । संऽदितं । गीःऽभिः । वरुण । सीमहि ॥३॥**

हे वरुण [illegible]ळीकायास्मत्सुखाय ते तव मनो गीर्भिः स्तुतिभिर्वि सीमहि । विशेषेण बध्नीमः । प्रसादयाम इत्यर्थः । तत्र दृष्टांतः । रथीः रथस्वामी संदितं सम्यक् खंडितं दूरगमनेन श्रांतमश्वं न अश्वमिव । यथा स्वामी श्रांतमश्वं [illegible]ना प्रसादयति तद्वत् ॥ रथीः । मत्वर्थीय ईकारः । संदितं । दो अवखंडने । निष्ठेति क्तः । द्यतिस्यतिमास्थां । पा° ७. ४. ४०. । इतीकारांतादेशः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । गीर्भिः । साविकाच इति भिस उदात्तत्वं । सीमहि । षिञु तंतुसंताने । व्यत्ययेनात्मनेपदं । बहुलं छंदसीति विकरणस्य लुक् । वलि लोपः । पा° ६. १. ६६. । यद्वा । षिञ् बंधन इत्यस्माद्विकरणस्य लुक् । दीर्घश्छांदसः ॥

**परा हि मे विमन्यवः पतंति वस्यइष्टये । वयो न वसतीरुप ॥४॥**

**परा । हि । मे । विऽमन्यवः । पतंति । वस्यःऽइष्टये । वयः । न । वसतीः । उप ॥४॥**

हे वरुण मे मम शुनःशेपस्य विमन्यवः क्रोधरहिता बुद्धयो वस्यइष्टये वसीयसोऽतिशयेन वसुमतो जीवनस्य प्राप्तये परा पतंति । पराङ्मुखाः पुनरावृत्तिरहिताः प्रसरंति । हिशब्दोऽस्मिन्नर्थे सर्वजनप्रसिद्धिमाह ।

परापतने दृष्टांतः। वयो न। पक्षिणो यथा वसतीर्निवासस्थानान्युप सामीप्येन प्राप्नुवंति तद्वत् ॥ पतंति। पादादित्वान्निघाताभावः। वस्यइष्टये। वसुमच्छब्दाद्विन्मतोर्लुगिति मतुपो लुकि टिलोप ईयसुनो यकारलोपश्छांदसः। वसतीः। शतुरनुम इति ङीप उदात्तत्वं ॥

कदा क्षत्रश्रियं नरमा वरुणं करामहे। मृळीकायोरुचक्षसं ॥५॥
कदा। क्षत्रऽश्रियं। नरं। आ। वरुणं। करामहे। मृळीकाय। उरुऽचक्षसं ॥५॥

मृळीकायास्मत्सुखाय वरुणं कदा कस्मिन्काल आ करामहे। अस्मिन्कर्मण्यागतं करवाम। कीदृशं। क्षत्रश्रियं बलसेविनं नरं नेतारं उरुचक्षसं बहूनां द्रष्टारं ॥ क्षत्रश्रियं। क्षत्राणि श्रयतीति क्षत्रश्रीः। क्विप्। वचीत्यादिना। पा॰ ३. २. १७८. २.। क्विप् दीर्घश्च। कृदुत्तरपदप्रकृतिस्वरत्वं। नरं। ऋदोरबित्यबंत आद्युदात्तः। करामहे। करोतिर्व्यत्ययेन शप्। उरुचक्षसं। चक्षेर्बहुलं शिच्च। उ॰ ४. २३२.। इत्यसुन्। शिद्वद्भावात्ख्याञादेशाभावः॥ ॥१६॥

तदित्समानमाशाते वेनंता न प्र युच्छतः। धृतव्रताय दाशुषे ॥६॥
तत्। इत्। समानं। आशाते इति। वेनंता। न। प्र। युच्छतः। धृतऽव्रताय। दाशुषे ॥६॥

धृतव्रतायानुष्ठितकर्मणे दाशुषे हविर्दत्तवते यजमानाय वेनंतौ कामयमानौ मित्रावरुणाविति शेषः। तावुभौ समानं साधारणं तदिदस्माभिर्दत्तं तदेव हविराशाते। अश्नुवाते। न प्र युच्छतः। कदाचिदपि प्रमादं न कुरुतः ॥ आशाते। अश्नोतेर्लिटि द्विर्भावहलादिशेषौ। अत आदेः। पा॰ ७. ४. ७०.। इत्यात्वं। अश्नोतेश्चेति नुडागमः अश्नोतिस्त्वासनमिति वचनादश्नोतेश्च। पा॰ ७. ४. ७२.। इति नुडभावः। वेनंता। वेनतिः कांतिकर्मा। सुपां सुलुगित्याकारः। प्र युच्छतः। युच्छ प्रमादे। दाशुषे। दाशृ दान इत्यस्माद्दाश्वान् साह्वानिति क्वसुप्रत्ययो निपातितः। वसोः संप्रसारणमिति संप्रसारणं। शासिवसिघसीनां चेति षत्वं ॥

वेदा यो वीनां पदमंतरिक्षेण पतंतां। वेद नावः समुद्रियः ॥७॥
वेद। यः। वीनां। पदं। अंतरिक्षेण। पतंतां। वेद। नावः। समुद्रियः ॥७॥

अंतरिक्षेण पततामाकाशमार्गेण गच्छतां वीनां पक्षिणां पदं यो वरुणो वेद। तथा समुद्रियः समुद्रेऽवस्थितो वरुणो नावो जले गच्छंत्याः पदं वेद जानाति सोऽस्मान्बंधनान्मोचयत्विति शेषः ॥ वेद। विद ज्ञाने। विदो लटो वा। पा॰ ३. ४. ८३.। इति तिपो णल्। लित्स्वरेणाद्युदात्तत्वं। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। वीनां। नामन्यतरस्यामिति नाम उदात्तत्वं। पततां। शपः पित्त्वादनुदात्तत्वं। शतुश्च लसार्वधातुकस्वरेण धातुस्वरः। नावः। सावेकाच इति षष्ठ्या उदात्तत्वं। समुद्रियः। भवार्थे समुद्राभ्राद्घः। पा॰ ४. ४. ११८.। इति घप्रत्ययः ॥

वेद मासो धृतव्रतो द्वादश प्रजावतः। वेदा य उपजायते ॥८॥
वेद। मासः। धृतऽव्रतः। द्वादश। प्रजाऽवतः। वेद। यः। उपऽजायते ॥८॥

धृतव्रतः स्वीकृतकर्मविशेषो यथोक्तमहिमोपेतो वरुणः प्रजावतस्तदा तत्[illegible]द्वादश मासश्चैत्रादीन्फाल्गुनांतान्वेद। जानाति। यस्त्रयोदशोऽधिकमास उपजायते संवत्सरसमीपे स्वयमेवोत्पद्यते तमपि वेद। वाक्यशेषः पूर्ववत् ॥ मासः। पद्दन्नित्यादिना। पा॰ ६. १. ६३.। मासशब्दस्य [illegible]देशः। ऊडिदमित्यादिना शस उदात्तत्वं। द्वादश। द्वौ च दश चेति द्वंद्वः। द्व्यष्टनः संख्यायां। पा॰ ६. ३. ४७.। इत्यात्वं। संख्या। पा॰ ६. २. ३५.। इति सूत्रेण पूर्वपद[illegible]। प्रजावतः। जनी प्रादुर्भावे प्रपूर्वाज्जनसनखनक्रमगमो [illegible]। पा॰ ३. २. ६७.। विड्वनोरित्यात्वं। पा॰ ६. ४. ४१.। कृदुत्तरपदप्रकृतिस्वरत्वं। प्रजा एषां संतीति तदस्यास्त्यस्मिन्निति मतुप्। पा॰ ५. २. ९४.। मादुपधायाः। पा॰ ८. २. ९.। इति मतुपो वत्वं।

उपजायते । जनेः कर्मकर्तरि लट् । कर्मवद्भावादात्मनेपदं यक् । पा० ३. १. ८७. । जनादीनामुपदेश एवात्वं वक्तव्यं । पा० ६. १. १९५. ३. । इति वचनादचः कर्तृयकि । पा० ६. १. १९५. । इत्याद्युदात्तत्वं । तिङि चोदात्तवति । पा० ८. १. ७१. । इत्युपसर्गस्य निघातः । न च तिङ्ङतिङ इति निघातः । यद्वृत्तान्नित्यमिति प्रतिषेधात् ॥

वेद॒ वात॑स्य वर्त॒निमु॒रोर्ऋ॒ष्वस्य॑ बृह॒तः । वेदा॒ ये अ॒ध्यास॑ते ॥९॥

वेद॑ । वात॑स्य । व॒र्त॒नि॑ । उ॒रोः । ऋ॒ष्वस्य॑ । बृ॒ह॒तः । वेद॑ । ये । अ॒धि॒ऽआस॑ते ॥९॥

उरोर्विस्तीर्णस्य ऋष्वस्य [illegible] बृहतो गुणैरधिकस्य वातस्य वायोर्वर्तनिं मार्गं वेद । वरुणो जानाति । ये देवा अध्यासते उपरि तिष्ठंति तानपि वेद । जानाति ॥ वातस्य । असिहसीत्यादिना । उ० ३. ८६. । तन्प्रत्ययांतो वातशब्दो निस्वादाद्युदात्तः । वर्तनिं । वर्ततेऽनेनेति वर्तनिः स्तोत्र इति स्तोत्रवाचकस्य वर्तनिशब्दस्यांतोदात्तत्वसिद्ध्यर्थमुंछादिषु पाठादस्य प्रत्ययस्वरेण मध्योदात्तत्वे प्राप्ते व्यत्ययेनांतोदात्तत्वं । बृहतः । बृहन्महतोरुपसंख्यानमिति ङस उदात्तत्वं । अध्यासते । लसार्वधातुकानुदात्तत्वे सति धातुस्वरः ॥

नि ष॑साद धृ॒तव्र॑तो॒ वरु॑णः प॒स्त्या॒३॒॑स्वा । साम्रा॑ज्याय सु॒क्रतु॑ः ॥१०॥

नि । स॒सा॒द॒ । धृ॒तऽव्र॑तः । वरु॑णः । प॒स्त्या॑सु । आ । सां॑ऽराज्याय । सु॒ऽक्रतु॑ः ॥१०॥

धृतव्रतः पूर्वोक्तो वरुणः पस्त्यासु दैवीषु प्रजास्वा नि षसाद । आगत्य निषण्णवान् । किमर्थं । प्रजानां साम्राज्यसिद्ध्यर्थं सुक्रतुः शोभनकर्मा ॥ नि षसाद । सदेरप्रतेः । पा० ८. ३. ६६. । इति षत्वं । साम्राज्याय । सम्राजो भावः साम्राज्यं । गुणवचनब्राह्मणादिभ्यः । पा० ५. १. १२४. । इति ष्यञ् । ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं । सुक्रतुः । क्रत्वादयश्चेत्युत्तरपदाद्युदात्तत्वं ॥ ॥१७॥

अतो॒ विश्वा॒न्यद्भु॑ता चिकि॒त्वाँ अ॒भि प॑श्यति । कृ॒तानि॒ या च॒ कर्त्वा॑ ॥११॥

अत॑ः । विश्वा॑नि । अद्भु॑ता । चि॒कि॒त्वान् । अ॒भि । प॒श्य॒ति॒ । कृ॒तानि॑ । या । च॒ । कर्त्वा॑ ॥११॥

अतोऽस्माद्वरुणाद्विश्वान्यद्भुता सर्वाण्याश्चर्याणि चिकित्वान् प्रज्ञावानभि पश्यति । सर्वतोऽवलोकयति । या कृतानि यान्याश्चर्याणि पूर्वं वरुणेन संपादितानि । च[illegible] यान्याश्चर्याणि कर्त्वा इतः परं कर्तव्यानि । तानि सर्वाण्यभिपश्यतीति पूर्वत्रान्वयः ॥ अद्भुता । शेश्छंदसि बहुलमिति शेर्लोपः । प्रत्ययलक्षणेन नपुंसकस्य झलचः । पा० ७. १. ७२. । इति नुम् । नलोपः । चिकित्वान् । कित ज्ञाने । लिटः क्वसुः । अभ्यासहलादिशेषचुत्वानि । व[illegible] नियमादिडभावः । रुत्वानुनासिकावुक्तौ संहितायां । पश्यति । पाघ्रेत्यादिना दृशेः पश्यादेशः । कर्त्वा । कृत्यार्थे तवैकेन्केन्यत्वनः । पा० ३. ४. १४. । इति करोतेस्त्वन् । निस्वादाद्युदात्तत्वं । पूर्ववच्छेर्लोपः ॥

स नो॑ वि॒श्वाहा॑ सु॒क्रतु॑रादि॒त्यः सु॒पथा॑ करत् । प्र ण॒ आयूं॑षि तारिषत् ॥१२॥

सः । न॒ः । वि॒श्वाहा॑ । सु॒ऽक्रतु॑ः । आ॒दि॒त्यः । सु॒ऽपथा॑ । क॒र॒त् । प्र । न॒ः । आयूं॑षि ।
ता॒रि॒ष॒त् ॥१२॥

सुक्रतुः शोभनप्रज्ञः स आदित्यो वरुणो विश्वाहा सर्वेष्वहःसु नोऽस्मान् सुपथा शोभनमार्गेण सहितान्करत् । करोतु । किंच नोऽस्माकमायूंषि प्र तारिषत् । प्रवर्धयतु ॥ सुपथा । स्वती पूजायां । पा० २. २. १८.* । इति समासे न पूजनात् । पा० ५. ४. ६९. । इति समासांतप्रतिषेधः । अव्ययपूर्वपदप्रकृतिस्वरे प्राप्ते परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । क्रत्वादयश्चेत्येतन्न भवति अबहुव्रीहित्वात् । बहुव्रीहौ हि तद्विधीयते । आद्युदात्तं द्व्यच्छंदसि । पा० ६. २. ११९. । इत्येतदपि न भवति । पथिन्शब्दस्यांतोदात्तत्वात् । करत् । करोतेर्लेटि व्यत्ययेन शप् । शपो लुकि लेटोऽडाटावित्यडागमः । इतश्च लोप इतीकारलोपः । यद्वा । छांदसे लुङि

छमृदृहृहिभ्यः । पा० ३. १. ५९. । इति च्लेरङ् । ऋदृशोऽङि गुणः । पा० ७. ४. १६. । इति गुणः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । प्र णः । उपसर्गाद्बहुलं । पा० ८. ४. २८. । इति नसो णत्वं । तारिषत् । तारयतेर्लेट्यडागमः । सिब्बहुलं लेटीति सिप् । आदेशप्रत्यययोरिति षत्वं ॥

बिभ्रद्द्रापिं हिरण्ययं वरुणो वस्त निर्णिजं । परि स्पशो नि षेदिरे ॥१३॥

बिभ्रत् । द्रापिं । हिरण्ययं । वरुणः । वस्त । निःऽनिजं । परि । स्पशः । नि । सेदिरे ॥१३॥

हिरण्ययं सुवर्णमयं द्रापिं कवचं बिभ्रद्धारयन्वरुणो निर्णिजं पुष्टं स्वशरीरं वस्त । आच्छादयति । स्पशो हिरण्यस्पर्शिनो रश्मयः परि नि षेदिरे । सर्वतो निषण्णाः ॥ बिभ्रत् । बिभर्तेः शतरि नाभ्यस्ताच्छतुः । पा० ७. १. ७८. । इति नुमभावः । अभ्यस्तानामादिरित्याद्युदात्तत्वं । द्रापिं । द्रा कुत्सायां गतौ । द्रापयतीपुंस्कुत्सितां गतिं प्रापयतीति द्रापिः कवचं । अर्तिह्रीत्यादिना । पा० ७. ३. ३६. । पुगागमः । औणादिक इप्रत्यये णिलोपः । हिरण्ययं । ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छंदसि । पा० ६. ४. १७५. । इति हिरण्यशब्दाद्विकारार्थे विहितस्य मयटो मशब्दलोपो निपातितः । वस्त । वस आच्छादने । लङ्यदादित्वाच्छपो लुक् । पूर्ववदडभावः । निर्णिजं । णिजिर् शौचपोषणयोः । स्पशः । स्पश बाधनस्पर्शनयोः । क्विप्चेति क्विप् । नि षेदिरे । षद्लृ विशरणगत्यवसादनेषु । अस्माद्गत्यर्थात्कर्मणि लिट्येत्वाभ्यासलोपौ । सदेरप्रतेरिति षत्वं ॥

न यं दिप्संति दिप्सवो न द्रुह्वाणो जनानां । न देवमभिमातयः ॥१४॥

न । यं । दिप्संति । दिप्सवः । न । द्रुह्वाणः । जनानां । न । देवं । अभिऽमातयः ॥१४॥

दिप्सवो हिंसितुमिच्छंतो वैरिणो यं वरुणं न दिप्संति भीताः संतो हिंसितुमिच्छां परित्यजंति । जनानां प्राणिनां द्रुह्वाणो द्रोग्धारोऽपि यं वरुणं प्रति न द्रुह्यंति । अभिमातयः पाप्मानः । पाप्मा वा अभिमातिः । तै० सं० २. १. ३. ५. । इति श्रुत्यंतरात् । देवं तं वरुणं न स्पृशंति ॥ दिप्संति । दम्भु दंभे । अस्मात्सनि सनीवंतर्धेत्यादिना । पा० ७. २. ४९. । इडभावः । हलंताच्च । पा० १. २. १०. । इत्यत्र हल्ग्रहणस्य जातिवाचित्वात्सनः किच्वाद्दंभ इच्च । पा० ७. ४. ५६. । इति दकारात्परस्याकारस्येकारः । अनिदितामिति नलोपः । भष्भावाभावश्छांदसः । पा० ८. २. ३७. । अत्र लोपोऽभ्यासस्य । पा० ७. ४. ५८. । इत्यभ्यासलोपः । शपः पित्त्वादनुदात्तत्वं । तिङश्च लसार्वधातुकस्वरेण सनो नित्त्वान्नित्स्वरेणाद्युदात्तत्वं । यद्वृत्तयोगादनिघातः । दिप्सवः । सनंताद्दंभेः सनाशंसभिक्ष उः । पा० ३. २. १६८. । इत्युप्रत्ययः । प्रत्ययस्वरः । द्रुह्वाणः । द्रुह जिघांसायां । अन्येभ्योऽपि दृश्यंत इति क्वनिप् । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वं ॥

उत यो मानुषेष्वा यशश्चक्रे असाम्या । अस्माकमुदरेष्वा ॥१५॥

उत । यः । मानुषेषु । आ । यशः । चक्रे । असामि । आ । अस्माकं । उदरेषु । आ ॥१५॥

उतापि च यो वरुणो मानुषेषु यशोऽन्नमा चक्रे सर्वतः कृतवान् स वरुणः कुर्वन्नप्या सर्वत असामि । संपूर्णं चक्रे न तु न्यूनं कृतवान् । विशेषतोऽस्माकमुदरेष्वा सर्वतश्चक्रे ॥ मानुषेषु । मनोर्जातावञ्यतौ षुक् च । पा० ४. १. १६१. । इत्यञ् । ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं । चक्रे । प्रत्ययस्वरः । असामि । अव्यये नञ्कुनिपातानामिति वक्तव्यं । पा० ६. २. २. ३. । इत्यव्ययपूर्वपदप्रकृतिस्वरत्वं । यशः । अशेर्युट् च । उ० ४. १९०. । इत्यसुन् । उदरेषु । उदि दृणातेरजलौ पूर्वपदांत्यलोपश्च । उ० ५. १९. । इत्यल् । लित्स्वरः । गतिकारकोपपदादित्युत्तरपदप्रकृतिस्वरत्वं ॥ ॥१८॥

परा मे यंति धीतयो गावो न गव्यूतीरनु । इच्छंतीरुरुचक्षसं ॥१६॥

परा । मे । यंति । धीतयः । गावः । न । गव्यूतीः । अनु । इच्छंतीः । उरुऽचक्षसं ॥१६॥

उरुचक्षसं बहुभिर्द्रष्टव्यं वरुणमिच्छंतीर्मे धीतयः शुनःशेपस्य बुद्धयः परा यंति । पराङ्मुखा निवृत्तिर-

हिता गच्छंति । तत्र दृष्टांतः । गावो न । यथा गावो गव्यूतीरनु गोष्ठान्यनुलक्ष्य गच्छंति तद्वत् ॥ गव्यूतीः । गावोऽत्र यूयंत इत्यधिकरणे क्तिन् । गोर्यूतौ छंदसि । पा॰ ६. १. ७९. २. । इत्यवादेशः । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं । यद्वा । यूतिर्यवनं । गवां यवनमत्रेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । इच्छंतीः । इषु इच्छायां । लटः शतृ । तुदादिभ्यः शः । इषुगमियमां छः । पा॰ ७. ३. ७७. । इति छत्वं । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते ॥

**सं नु वोचावहै पुनर्यतो मे मध्वाभृतं । होतेव क्षदसे प्रियं ॥१७॥**

**सं । नु । वोचावहै । पुनः । यतः । मे । मधु । आऽभृतं । होताऽइव । क्षदसे । प्रियं ॥१७॥**

यतो यस्मात्कारणान्मे मज्जीवनार्थं मधुरं हविराभृतं अंजःसवाख्ये कर्मणि संपादितं अतः कारणाद्धोतेव होमकर्तेव त्वमपि प्रियं हविः क्षदसे । अश्नासि । पुनर्हविःस्वीकारादूर्ध्वं तृप्तस्त्वं जीवन्नहं च नु अवश्यं सं वोचावहै । संभूय प्रियवार्त्तां करवावहै ॥ वोचावहै । लोडर्थे छांदसे लुङि ब्रुवो वचिः । अस्यतिवक्तीति च्लेरङादेशः । वच उमित्युमागमे गुणः । व्यत्ययेन टेरैत्वं । यद्वा । लोट एव लुङादेशः । स्थानिवद्भावादैत्वं । आभृतं । हृग्रहोर्भः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं ॥

**दर्शं नु विश्वदर्शतं दर्शं रथमधि क्षमि । एता जुषत मे गिरः ॥१८॥**

**दर्शं । नु । विश्वऽदर्शतं । दर्शं । रथं । अधि । क्षमि । एताः । जुषत । मे । गिरः ॥१८॥**

विश्वदर्शतं [illegible]भूतं वरुणं दर्शं नु । अहं दृष्टवान्खलु । क्षमि क्षमायां भूमौ रथं वरुणसंबंधिनमधि दर्शं । आधिक्येन दृष्टवानस्मि । एता उच्यमाना मे गिरो मदीयाः स्तुतीर्जुषत । वरुणः सेवितवान् ॥ दर्शं । दृशेरिरितो वा । पा॰ ३. १. ५७. । इति च्लेरङादेशः । ऋदृशोऽङि गुणः । पा॰ ७. ४. १६. । इति गुणः । विश्वदर्शतं । दृशिभृमृदृशीत्यादिना । उ॰ ३. १०९. । अतच्प्रत्ययांतो दर्शतशब्दः । मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं । पा॰ ६. २. १०६. २. । यद्वा । विश्वं दर्शनीयमस्येति बहुव्रीहिः । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं । क्षमि । आतो धातोः । पा॰ ६. ४. १४०. । इत्यत्रात इति योगविभागादाकारलोपः ॥

वरुणप्रघासेष्विमं मे वरुणेति वारुणस्य हविषोऽनुवाक्या । पंचम्यां पौर्णमास्यामिति खंडे सूचितं । इमं मे वरुण श्रुधि तत्त्वा यामि ब्रह्मणा वंदमानः । आ॰ २. १७. । इति ॥

**इमं मे वरुण श्रुधी हवमद्या च मृळय । त्वामवस्युरा चके ॥१९॥**

**इमं । मे । वरुण । श्रुधि । हवं । अद्य । च । मृळय । त्वां । अवस्युः । आ । चके ॥१९॥**

हे वरुण मे मदीयमेनं हवमाह्वानं श्रुधि । शृणु । किंच अद्यास्मिन्दिने मृळय । अस्मान्सुखय । अवस्युः रक्षणेच्छुरहं त्वां वरुणमाभिमुख्येन चके । शब्दयामि । स्तौमीत्यर्थः ॥ श्रुधि । श्रु श्रवणे । लोटो हिः । श्रुशृणुपृकृवृभ्यश्छंदसीति हेर्धिरादेशः । बहुलं छंदसीति विकरणस्य लुक् । अन्येषामपि दृश्यत इति संहितायां दीर्घः । अवस्युः । अवस्शब्दात्सुप आत्मनः क्यच् । क्याच्छंदसीत्युप्रत्ययः । आ चके । कै गै शब्दे । अस्माल्लिट्यादेचः । पा॰ ६. १. ४५. । इत्यात्वं । द्विर्भावचुत्वे । आतो लोप इटि च । पा॰ ६. ४. ६४. । इत्याकारलोपः । तिङ्ङतिङ इति निघातः ॥

**त्वं विश्वस्य मेधिर दिवश्च ग्मश्च राजसि । स यामनि प्रति श्रुधि ॥२०॥**

**त्वं । विश्वस्य । मेधिर । दिवः । च । ग्मः । च । राजसि । सः । यामनि । प्रति । श्रुधि ॥२०॥**

हे मेधिर मेधाविन्वरुण त्वं दिवश्च द्युलोकस्यापि ग्मश्च भूलोकस्यापि । एवमात्मकस्य विश्वस्य सर्वस्य जगतो मध्ये राजसि । दीप्यसे । स तादृशस्त्वं यामनि क्षेमप्रापणेऽस्मदीये प्रति श्रुधि । प्रतिश्रवणमाज्ञापनं

कुरु। रक्षिष्यामीति प्रत्युत्तरं देहीत्यर्थः ॥ दिवः। ऊडिदमित्यादिना षष्ठ्या उदात्तत्वं। ग्मः। ग्मेत्येतद्भूनामसु पठितं। आतो धातोरित्यत्रातः इति योगविभागादातो लोप इति प्रतिषेधेऽपि व्यत्ययेनाकारलोपः। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं। यामनि। या प्रापणे। आतो मनिन्क्वनिब्वनिपश्चेति मनिन्। नित्त्वादाद्युदात्तत्वं। श्रुधि। उक्तं ॥

उदु॑त्त॒मं मु॑मुग्धि नो॒ वि पाशं॑ मध्य॒मं चृ॑त। अवा॑ध॒मानि॑ जी॒वसे॑ ॥२१॥

उत्। उ॒त्ऽत॒मं। मु॒मु॒ग्धि॒। नः॒। वि। पाशं॑। म॒ध्य॒मं। चृ॒त॒। अव॑। अ॒ध॒मानि॑। जी॒वसे॑ ॥२१॥

नोऽस्माकमुत्तमं शिरोगतं पाशमुन्मुमुग्धि। उत्कृष्य मोचय। मध्यममुदरगतं पाशं वि चृत। वियुज्य नाशय। जीवसे जीवितुमधमानि मदीयान्पादगतान्पाशानव चृत। अवकृष्य नाशय ॥ उत्तमं। उंछादिषु पाठादंतोदात्तत्वं। मुमुग्धि। मुच्लृ मोचने। बहुलं छंदसीति विकरणस्य श्लुः। द्विर्भावः। हलादिशेषः। हुझल्भ्यो हेर्धिः। पा० ६. ४. १०१.। इति हेर्धिरादेशः। तिङ्ङतिङ इति निघातः। चृत। चृती हिंसाग्रंथनयोः। लोटो हिः। तुदादिभ्यः शः। अतो हेरिति हेर्लुक्। जीवसे। जीव प्राणधारणे। तुमर्थे सेसेनित्यसेप्रत्ययः। प्रत्ययस्वरः ॥ ॥१९॥

वसिष्वेति दशर्चं तृतीयं सूक्तं। अत्रानुक्रम्यते। वसिष्व दशाग्नेयं त्विति। शुनःशेप ऋषिः। गायत्री छंदः। इदमुत्तरं च सूक्तमाग्नेयं ॥ प्रातरनुवाक आग्नेये क्रतौ गायत्रे छंदस्येतदादिसूक्तद्वयमनुवक्तव्यं। तथा च सूचितं। वसिष्वा हीति सूक्तयोरुत्तमामुद्धरेत्। आ० ४. १३.। इति ॥

वसि॑ष्वा॒ हि मि॑येध्य॒ वस्त्रा॑ण्यूर्जां पते। सेमं नो॑ अध्व॒रं य॑ज ॥१॥

वसि॑ष्व। हि। मि॒ये॒ध्य॒। वस्त्रा॑णि। ऊ॒र्जां॒। प॒ते॒। सः। इ॒मं। नः॒। अ॒ध्व॒रं। य॒ज॒ ॥१॥

वरुणेनाभिस्तुतौ प्रेरितः शुनःशेप एतदादिसूक्तद्वयेनाग्निमस्तौत्। तथा चाम्नायते। तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या। ऐ० ब्रा० ७. १६.। इति ॥ हे मियेध्य मेधस्य यज्ञस्य योग्य ऊर्जां पते अन्नानां पालकाग्ने वस्त्राण्याच्छादकानि तेजांसि वसिष्व। आच्छादय। प्रज्वलितस्त्वं [illegible] भवेत्यर्थः। हि यस्मात्प्रज्वलितस्तस्मात्स तादृशस्त्वं नोऽस्मदीयमिममध्वरं यज। निष्पादय ॥ वसिष्व। वस आच्छादने। लोटि थासः से। सवाभ्यां वामौ। छंदस्युभयथेत्यार्धधातुकत्वादार्धधातुकस्येड्वलादेरितीडागमः। लसार्वधातुकानुदात्तत्वे धातुस्वरः। अन्येषामपि दृश्यत इति संहितायां दीर्घः। मियेध्य। मकारैकारयोर्मध्य इयागमश्छांदसः। ऊर्जां पते। सुबामंत्रित इति परांगवद्भावात् षष्ठ्यामंत्रितस्य समुदायस्याष्टमिको निघातः। सेमं। सोऽचि लोपे चेत्पादपूरणमिति सोर्लोपः ॥

नि नो॒ होता॒ वरे॑ण्यः॒ सदा॑ यविष्ठ॒ मन्म॑भिः। अग्ने॑ दि॒वित्म॑ता॒ वचः॑ ॥२॥

नि। नः॒। होता॑। वरे॑ण्यः। सदा॑। य॒वि॒ष्ठ॒। मन्म॑ऽभिः। अग्ने॑। दि॒वित्म॑ता। वचः॑ ॥२॥

सदा यविष्ठ सर्वदा युवतम हे अग्ने वरेण्यो वरणीयस्त्वं नोऽस्माकं होता होमनिष्पादको भूत्वा दिवित्मता दीप्तिमता वचो वचसा स्तूयमानः सन् नि षीदेति शेषः। कीदृशस्त्वं। मन्मभिर्ज्ञापकैस्तेजोभिर्युक्त इति शेषः ॥ यविष्ठ। युवशब्दादिष्ठनि स्थूलदूरेत्यादिना। पा० ६. ४. १५६.। यणादिपरस्य लोपः। पूर्वस्योकारस्य गुणश्च। अवादेशः। आमंत्रितनिघातः। मन्मभिः। मन ज्ञाने। अन्येभ्योऽपि दृश्यंत इति मनिन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं। दिवित्मता। दिवु क्रीडादौ। इक्श्तिपौ धातुनिर्देशे। पा० ३. ३. १०८. २.। [illegible] यः। तेन च धातु[illegible] दिविशब्देन धात्वर्थो दीप्तिर्लक्ष्यते। यद्वा। औणादिको भावे किप्रत्ययः। दिविशब्द[illegible]पि तकारोपजनश्छांदसः। यद्वा। बाहुलकाद्द्विर्भाव इतक। मतुपि तसौ मत्वर्थ इति भत्वाज्जश्त्वाभावः। वचः। सुपां सुलुगिति तृतीयैकवचनस्य लुक् ॥

आ हि ष्मा सूनवे पितापिर्यजत्यापये। सखा सख्ये वरेण्यः ॥ ३ ॥

आ। हि। स्म। सूनवे। पिता। आपिः। यजति। आपये। सखा। सख्ये। वरेण्यः ॥ ३ ॥

हे अग्ने वरेण्यो वरणीयः पितापि पितृस्थानीयस्त्वं सूनवे पुत्रस्थानीयाय मह्यमभीष्टं देहीति शेषः। हि ष्मेति निपातद्वयं सर्वथेत्यमुमर्थमाचष्टे। अभीष्टदाने दृष्टांतद्वयमुच्यते। यथापिर्बंधुरापये बंधव आ यजति हि स्म। सर्वथा ददातीति शेषः। सखा प्रियः सख्ये प्रियायाभीष्टं सर्वथा ददाति तथा त्वमपि देहि ॥ ष्मा सूनवे। निपातस्य चेति दीर्घः। यजतीत्यस्य सखा सख्य इत्यत्राप्यनुषंगात्तदपेक्षयेयं प्रथमेति चादिलोपे विभाषेति न निहन्यते। यद्वा। हि चेति निघातप्रतिषेधः। सख्ये। समाने ख्यस्योदात्त इति सखिशब्द इणप्रत्ययांत आद्युदात्तः। सुपः पित्त्वादनुदात्तत्वे स एव शिष्यते ॥

आ नो बर्ही रिशादसो वरुणो मित्रो अर्यमा। सीदंतु मनुषो यथा ॥ ४ ॥

आ। नः। बर्हिः। रिशादसः। वरुणः। मित्रः। अर्यमा। सीदंतु। मनुषः। यथा ॥ ४ ॥

हे अग्ने वरुणादयो देवास्त्वद्बंधवस्त्वया प्रेरिता रिशादसो हिंसकानदंतो नोऽस्मदीयं बर्हिर्यज्ञमा सीदंतु। तत्र दृष्टांतः। यथा मनुषः प्रजापतेर्यज्ञमासीदंति। तद्वत् ॥ बर्ही रिशादसः। विसर्जनीयस्य रुत्वे कृते रो रि। पा॰ ८. ३. १४.। इति रेफलोपः। ढ्रलोपे पूर्वस्य दीर्घोऽणः। पा॰ ६. ३. १११.। इतीकारस्य दीर्घत्वं। रिशादसः। रिश हिंसायां। रिशंति हिंसंतीति रिशाः शत्रवः। इगुपधज्ञाप्रीकिरः कः। तानदंतीति रिशादसः। सर्वधातुभ्योऽसुन्। कृदुत्तरपदप्रकृतिस्वरत्वं। सीदंतु। षद्लृ विशरणगत्यवसादनेषु। पाघ्रेत्यादिना सीदादेशः। शपः पित्त्वादनुदात्तत्वं। शतुश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। मनुषः। मन ज्ञाने। मन्यते जानातीति मनुः प्रजापतिः। जनेरुसिर्निच्च। उ॰ २. ११६. ११८.। [illegible] बहुलमन्यत्रापि। उ॰ २. १२२.। इत्यौणादिक उसिप्रत्ययः। नित्त्वादाद्युदात्तत्वं। यथा। यथेति पादांते। फि॰ ४. १७.। इति सर्वानुदात्तत्वं ॥

पूर्व्य होतरस्य नो मंदस्व सख्यस्य च। इमा उ षु श्रुधी गिरः ॥ ५ ॥

पूर्व्य। होतः। अस्य। नः। मंदस्व। सख्यस्य। च। इमाः। ऊं इति। सु। श्रुधि। गिरः ॥ ५ ॥

हे पूर्व्य अस्मदादेः पूर्वमुत्पन्न होतर्होमनिष्पादकाग्ने नोऽस्मदीयस्यास्य प्रवर्तमानस्य यज्ञस्य सख्यस्य चास्मदनुग्रहस्य च सिद्ध्यर्थं मंदस्व। त्वं हृष्टो भव। इमा अस्माभिः प्रयुज्यमाना गिर उ षु स्तुतिरूपा वाचो ऽपि श्रुधि। शृणु ॥ पूर्व्य। आमंत्रिताद्युदात्तत्वं। होतरित्यस्य नामंत्रिते समानाधिकरण इति पूर्वस्य विद्यमानत्वादाष्टमिको निघातः। अस्य। ऊडिदमिति षष्ठ्या उदात्तत्वं। मंदस्व। मदि स्तुतिमोदमदस्वप्नकांतिगतिषु। शपः पित्त्वादनुदात्तत्वं। तिङश्च लसार्वधातुकस्वरेण धातुस्वरः। अपादादाविति पर्युदासादाष्टमिकनिघाताभावः। सख्यस्य। सख्युः कर्म सख्यं। सख्युर्यः। पा॰ ५. १. १२६.। इति यप्रत्ययः। यस्येति लोपे प्रत्ययस्वरः। उ षु। सुञः। पा॰ ८. ३. १०७.। इति षत्वं। श्रुधि। श्रु श्रवणे। श्रुशृणुपॄकृवृभ्यश्छंदसीति हेर्धिरादेशः। बहुलं छंदसीति शपो लुक् ॥ ॥ २० ॥

यच्चिद्धि शश्वता तना देवंदेवं यजामहे। त्वे इद्धूयते हविः ॥ ६ ॥

यत्। चित्। हि। शश्वता। तना। देवंऽदेवं। यजामहे। त्वे इति। इत्। हूयते। हविः ॥ ६ ॥

हे अग्ने यच्चिद्धि यद्यपि शश्वता शाश्वतेन नित्येन तना विस्तृतेन हविषा देवं देवमन्यमन्यं वरुणेंद्रादिरूपं नानाविधं देवताविशेषं यजामहे तथापि तद्धविः सर्वं त्वे इत्त्वय्येव हूयते। अतो देवांतरविषयो यागोऽपि त्वदीयैव सेवेत्यर्थः ॥ तना। तनु विस्तारे। क्विब्वचेति क्विप्। यद्वा। पचाद्यच्। सुपां सुलुगिति तृतीयाया आकारः। देवं देवं। नित्यवीप्सयोरिति द्विर्भावः। तस्य परमाम्रेडितमित्युत्तरस्याम्रेडितसंज्ञायामनुदात्तं

चेति सर्वानुदात्तत्वं। यजामहे। निपातैर्यद्यदिहंतेति निघातप्रतिषेधः। त्वे। युष्मच्छब्दात्सप्तम्येकवचनस्य सुपां सुलुगिति शेआदेशः। त्वमावेकवचन इति मपर्यंतस्य त्वादेशः। शेषलोपेऽतो गुण इति पररूपत्वं। शे। पा॰ १. १. १३.। इति प्रगृह्यसंज्ञायां प्लुतप्रगृह्या अचि। पा॰ ६. १. १२५.। इति प्रकृतिभावः। ह्रयते। अकृत्सार्वधातुकयोः। पा॰ ७. ४. २५.। इति दीर्घः॥

प्रियो नो अस्तु विश्पतिर्होता मंद्रो वरेण्यः। प्रियाः स्वग्नयो वयं ॥७॥

प्रियः। नः। अस्तु। विश्पतिः। होता। मंद्रः। वरेण्यः। प्रियाः। सुऽअग्नयः। वयं ॥७॥

विश्पतिर्विशां प्रजानां पालको होता होमनिष्पादको मंद्रो हृष्टो वरेण्यो वरणीयोऽग्निर्नोऽस्माकं प्रियोऽस्तु। वयमपि स्वग्नयः शोभनाग्नियुक्ताः संतस्तव प्रिया भूयास्मेति शेषः॥ विश्पतिः। पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरे प्राप्ते परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। वरेण्यः। वृञ एण्यः। उ॰ ३. ९८.। वृषादित्वादाद्युदात्तत्वं। स्वग्नयः। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं॥

स्वग्नयो हि वार्यं देवासो दधिरे च नः। स्वग्नयो मनामहे ॥८॥

सुऽअग्नयः। हि। वार्यं। देवासः। दधिरे। च। नः। सुऽअग्नयः। मनामहे ॥८॥

स्वग्नयः शोभनाग्नियुक्ता देवासो दीप्यमाना ऋत्विजो नोऽस्मदीयं वार्यं वरणीयं हविर्हि यस्माद्दधिरे धृतवंतः तस्माद्वयं स्वग्नयः शोभनाग्नियुक्ताः संतो मनामहे। त्वां याचामहे॥ वार्यं। वृञ् वरणे। वृङ् संभक्तौ। ऋहलोर्ण्यत्। ईडवंदेत्यादिनाद्युदात्तत्वं। दधिरे। इरेचश्चित्त्वादंतोदात्तत्वं। हि चेति निघातप्रतिषेधः। मनामहे। मन ज्ञाने। व्यत्ययेन शप्॥

अथा न उभयेषाममृत मर्त्यानां। मिथः संतु प्रशस्तयः ॥९॥

अथ। नः। उभयेषां। अमृत। मर्त्यानां। मिथः। संतु। प्रऽशस्तयः ॥९॥

हे अग्ने अमृत मरणरहिताग्ने अथ कर्मानुष्ठानानंतरं मर्त्यानां मनुष्याणां नोऽस्माकमस्मत्स्वामिनस्तव चोभयेषां मिथः परस्परं प्रशस्तयः प्रशंसारूपा वाचः संतु। सम्यगनुष्ठितमिति यजमानविषया प्रशंसा। सम्यगनुगृहीतमित्यग्निविषया॥ अथ। निपातस्य चेति संहितायां दीर्घः। अमृत। अपादादाविति पर्युदासात्षाष्ठिकमाद्युदात्तत्वं। मर्त्यानां। मृङ् प्राणत्यागे। असिहसीत्यादिना तन्प्रत्ययांतो मर्तशब्दः। तस्माद्भवे छंदसि। पा॰ ४. ४. ११०.। इति यत्। यतोऽनाव इत्याद्युदात्तत्वं। संतु। श्नसोरल्लोपः। प्रशस्तयः। तादौ चेति गतेः प्रकृतिस्वरत्वं॥

विश्वेभिरग्ने अग्निभिरिमं यज्ञमिदं वचः। चनो धाः सहसो यहो ॥१०॥

विश्वेभिः। अग्ने। अग्निऽभिः। इमं। यज्ञं। इदं। वचः। चनः। धाः। सहसः। यहो इति ॥१०॥

सहसो बलस्य यहो पुत्र हे देवतारूपाग्ने विश्वेभिरग्निभिः सर्वैराहवनीयादिभिर्युक्त[illegible] यज्ञमिदमस्मदीयं वचः स्तोत्रं च सेवमानस्त्वनोऽन्नं धाः। अस्मभ्यं धेहि॥ विश्वेभिः। बहुलं छंदसीति भिस ऐसादेशाभावः। चनः। चायृ पूजानिशामनयोः। चायेरन्ने ह्रस्वश्च। उ॰ ४. १९९.। इत्यसुन्। तत्संनियोगेन नुडागमश्च। नित्त्वादाद्युदात्तत्वं। धाः। लुङि गातिस्था। पा॰ २. ४. ७७.। इति सिचो लुक्। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। सहसो यहो इति सुबामंत्रित इति परांगवद्भावाद।मंत्रित श्च चेति षष्ठ्यामंत्रितसमुदायो निहन्यते॥ ॥२१॥

अश्वं न त्वेति त्रयोदशर्चं चतुर्थं सूक्तं। पूर्ववदृष्याद्यः। त्रयोदशा नमो महद्भ्य इत्यस्यास्त्रिष्टुप् छंदः।

विश्वे देवा देवता। तथा चानुक्रांतं। अश्वं सप्तोना गायत्रेऽंत्या दैवी त्रिष्टुबिति ॥ प्रातरनुवाकाश्विनशस्त्रयो- रुक्तमावर्जितस्य सूक्तस्य विनियोग उक्तः ॥

**अश्वं न त्वा वारवंतं वंदध्या अग्निं नमोभिः। सम्राजंतमध्वराणां ॥१॥**

**अश्वं। न। त्वा। वारऽवंतं। वंदध्यै। अग्निं। नमःऽभिः। संऽराजंतं। अध्वराणां ॥१॥**

अध्वराणां यज्ञानां सम्राजंतं सम्राट्स्वरूपं स्वामिनमग्निं त्वां नमोभिः स्तुतिभिर्वंदध्यै वंदितुं प्रवृत्ता इति शेषः। अत्र दृष्टांतः। वारवंतं वालयुक्तमश्वं न अश्वमिव। अश्वो यथा वालैर्बाधकान्मशकमक्षिकादीन्परिहरति तथा त्वमपि ज्वालाभिरस्मद्विरोधिनः परिहरसीत्यर्थः॥ वारवंतं। मतुपः पित्वादनुदात्तत्वं। घञो ञित्वा- दाद्युदात्तो वारशब्दः। कर्षात्वत इत्यंतोदात्तत्वं व्यत्ययेन न प्रवर्तते। वंदध्यै। वदि अभिवादनस्तुत्योः। इदितो नुम् धातोरिति नुम्। तुमर्थे सेसेनित्यध्यैप्रत्ययः। प्रत्ययस्वरः। सम्राजंतं। शपः पित्वादनुदात्तत्वं। शतुश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। समासे कृदुत्तरपदप्रकृतिस्वरेण स एव। अध्वराणां। नञ्सुभ्या- मित्युत्तरपदांतोदात्तत्वं॥

**स घा नः सूनुः शवसा पृथुप्रगामा सुशेवः। मीढ्वाँ अस्माकं बभूयात् ॥२॥**

**सः। घ। नः। सूनुः। शवसा। पृथुऽप्रगामा। सुऽशेवः। मीढ्वान्। अस्माकं। बभूयात् ॥२॥**

स घ स एवाग्निर्नोऽस्माकं सुशेवः सुसुखो भवत्विति शेषः। कीदृशः। शवसा बलस्य सूनुः पुत्रः पृथुप्रगामा पृथुप्रगमनः। किंचास्माकं मीढ्वान् कामानां वर्षिता बभूयात्। भवतु॥ घा नः। ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणां ।पा० ६. ३. १३३.। इति दीर्घः। शवसा। सुपां सुपो भवंतीति ङसष्टादेशः। पृथुप्रगामा। प्रकर्षेण गमनं प्रगामः। हलश्चेति घञ्। पृथुः प्रगामा यस्यासौ पृथुप्रगामा। सुपां सुलुगिति पूर्वसवर्ण आकारः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। सुशेवः। इण्शीङ्भ्यां वन् ।उ० १. १५२.। इति शेवशब्दो वन्प्रत्ययांत आद्युदात्तः। ततो बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वे प्राप्ते आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। मीढ्वान्। मिह सेचन इत्यस्मात्क्वसुप्रत्ययांतो दाश्वान् साह्वान् मीढ्वांश्चेति निपातितः। बभूयात्। भवतेश्छांदसस्य लिटस्लिङ् तिङो भवंति ।म० ७. १. ३९.। इति लिङादेशः। यासुट्स्थानिवद्भावादार्धधातुकत्वाच्छ्वभावः। द्विर्वचने भवतेरः। पा० ७. ४. ७३.। इत्यत्वं। तिङ्ङतिङ इति निघातः॥

**स नो दूराच्चासाच्च नि मर्त्यादघायोः। पाहि सदमिद्विश्वायुः ॥३॥**

**सः। नः। दूरात्। च। आसात्। च। नि। मर्त्यात्। अघऽयोः। पाहि। सदं। इत्। विश्वऽआयुः ॥३॥**

हे अग्ने विश्वायुर्व्याप्तगमनः स त्वं दूराच्च दूरेऽपि आसाच्चासन्नदेशेऽपि अघायोरघं पापमनिष्टं कर्तुमि- च्छतो मर्त्यान्मनुष्यादेरिपो नोऽस्मान्सदमित् सर्वदैव नि पाहि। नितरां पालय॥ अघायोः। सुप आत्मनः क्यच्। अश्वाघस्यात् ।पा० ७. ४. ३७.। इत्यात्वं। पाहि। पादादित्वादनिघातः। विश्वायुः। इण् गतावित्य- स्माद्भावे एतेर्णिच्च ।उ० २. ११९.। इत्युसिः। विश्वमयनं गमनं यस्येति बहुव्रीहिः। बहुव्रीहौ विश्वं संज्ञा- यामिति पूर्वपदांतोदात्तत्वं॥

**इममू षु त्वमस्माकं सनिं गायत्रं नव्यांसं। अग्ने देवेषु प्र वोचः ॥४॥**

**इमं। ऊं इति। सु। त्वं। अस्माकं। सनिं। गायत्रं। नव्यांसं। अग्ने। देवेषु। प्र। वोचः ॥४॥**

हे अग्ने त्वमस्माकमस्मत्संबंधिनमिममू षु पुरोदेशेऽनुष्ठीयमानमपि सनिं हविर्दानं नव्यांसं नवतरं गायत्रं स्तुतिरूपं वचोऽपि देवेषु देवानामग्रे प्र वोचः। प्रब्रूहि॥ ऊ षु। निपातस्य चेति संहितायां दीर्घत्वं। सुत्र

इति षत्वं । नव्यांसं । नवशब्दादीयसुनीकारलोपश्छांदसः । ईयसुनो नित्त्वादाद्युदात्तत्वं । वोचः । छंदसि लुङ्लङ्लिट इति लोडर्थे प्रार्थनायां लुङ्यस्यतिवक्तीति च्लेरङादेशः । पा० ३. १. ५२. । वच उम् । पा० ७. ४. २०. ॥

आ नो भज परमेष्वा वाजेषु मध्यमेषु । शिक्षा वस्वो अंतमस्य ॥ ५ ॥

आ । नः । भज । परमेषु । आ । वाजेषु । मध्यमेषु । शिक्ष । वस्वः । अंतमस्य ॥ ५ ॥

हे अग्ने परमेषूत्कृष्टेषु द्युलोकवर्तिषु वाजेष्वन्नेषु नोऽस्माना भज । सर्वतः प्रापय । मध्यमेष्वंतरिक्षलोकवर्तिषु वाजेष्वा भज । अंतमस्यांतिकतमस्य भूलोकस्य संबंधीनि वस्वो वसूनि शिक्ष । देहि ॥ शिक्ष । शिक्ष विद्योपादाने । शपः पित्त्वाद्धातुस्वरः । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । अंतमस्य । अंतिकतमस्य तमे तादेश्च । पा० ६. ४. १४९. ९. । इति तिकशब्दलोपः ॥ ॥ २२ ॥

विभक्तासि चित्रभानो सिंधोरूर्मा उपाक आ । सद्यो दाशुषे क्षरसि ॥ ६ ॥

विऽभक्ता । असि । चित्रभानो इति चित्रऽभानो । सिंधोः । ऊर्मौ । उपाके । आ ।
सद्यः । दाशुषे । क्षरसि ॥ ६ ॥

हे चित्रभानो विचित्ररश्मियुक्ताग्ने विभक्ता विशिष्टस्य धनस्य प्रापयितासि । तत्र दृष्टांत उच्यते । आकार उपमार्थः । यथा सिंधोर्नद्या उपाके समीप ऊर्मावूर्मिं तरंगोपलक्षितं कुल्यादिप्रवाहं विभजंति तद्वत् । दाशुषे हविर्दत्तवते यजमानाय सद्यस्तदानीमेव क्षरसि । कर्मफलभूतां वृष्टिं करोषि ॥ सिंधोः । स्यन्दू प्रस्रवणे । स्यंदेः संप्रसारणं धश्च । उ० १. १२. । इत्युप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तत्वं । ऊर्मिः । अर्तेरूच्च । उ० ४. ४४. । इति मिः । प्रत्ययस्वरः । दाशुषे । धृतव्रताय दाशुषे । ऋग्वे० १. २५. ६. । इत्यत्रोक्तं ॥

यमग्ने पृत्सु मर्त्यमवा वाजेषु यं जुनाः । स यंता शश्वतीरिषः ॥ ७ ॥

यं । अग्ने । पृत्ऽसु । मर्त्यं । अवाः । वाजेषु । यं । जुनाः । सः । यंता । शश्वतीः । इषः ॥ ७ ॥

हे अग्ने पृत्सु संग्रामेषु यं मर्त्यं यजमानमवा अवसि रक्षसि । यं पुरुषं वाजेषु संग्रामेषु जुनाः प्रेरयसि । स नरो यजमानः शश्वतीरिषो नित्यान्यन्नानि यंता । नियंतुं समर्थो भवति ॥ पृत्सु । पदादिषु मांस्पृत्स्नूनामुपसंख्यानं । पा० ६. १. ६३. १. । इति पृतनाशब्दस्य पृदादेशः । सावेकाच इति विभक्तेरुदात्तत्वं । अवाः । आवः । अकाराकारयोर्विपर्ययः । यद्वा । लेट्याडागमः । इतश्चेति सिप इकारस्य लोपः । जुनाः । जू इति गत्यर्थः सौत्रो धातुः । लङः सिप् । क्र्यादिभ्यः श्ना । बहुलं छंदस्यमाङ्योगेऽपीत्यडागमाभावः । यद्वृत्तयोगादनिघातः । यंता । तृनो नित्त्वादाद्युदात्तत्वं । शश्वतीः । उगितश्चेति ङीप् ॥

नकिरस्य सहंत्य पर्येता कयस्य चित् । वाजो अस्ति श्रवाय्यः ॥ ८ ॥

नकिः । अस्य । सहंत्य । परिऽएता । कयस्य । चित् । वाजः । अस्ति । श्रवाय्यः ॥ ८ ॥

हे सहंत्य शत्रूणामभिभवनशीलाग्ने अस्य त्वद्भक्तस्य यजमानस्य कयस्य चित्कस्यापि पर्येता नकिः । आक्रमिता नास्ति । किंचास्य यजमानस्य श्रवाय्यः श्रवणीयो वाजोऽस्ति । बलविशेषोऽस्ति ॥ कयस्य । यकारोपजनश्छांदसः । श्रवाय्यः । श्रुदक्षिस्पृहिगृहिभ्य आय्यः । उ० ३. ९५. । इत्याय्यप्रत्ययः ॥

स वाजं विश्वचर्षणिरर्वद्भिरस्तु तरुता । विप्रेभिरस्तु सनिता ॥ ९ ॥

सः । वाजं । विश्वऽचर्षणिः । अर्वत्ऽभिः । अस्तु । तरुता । विप्रेभिः । अस्तु । सनिता ॥ ९ ॥

विश्वचर्षणिः सर्वैर्मनुष्यैरुपेतः सोऽग्निरर्वद्भिरश्वैर्वाजं संग्रामं तरुता [illegible] । विप्रेभिर्मेधाविभिर्ऋ-

त्विग्भिः सहितस्तुष्टोऽग्निः सनिता फलस्य दातास्तु ॥ विश्वचर्षणिः । विश्वे चर्षणयो यस्य । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं । अर्वद्भिः । ऋ गतौ । अन्येभ्योऽपि दृश्यंत इति वनिप् । भिस्यर्वणस्त्वसावनञः । पा॰ ६. ४. १२७. । इति नकारस्य तृ इत्ययमादेशः । तरुता । तॄ प्लवनतरणयोः । असाद्ग्रसितस्कभितेत्यादौ । पा॰ ७. २. ३४. । तृनंतो निपातितः । निपातनादेवेकारस्योत्वं ॥

अप्तोर्यामे होतुरतिरिक्तोक्थे जराबोध तद्विविड्ढीति स्तोत्रियस्तृचः । यस्य पशवो नोपधरेरन्निति खंडे सूचितं । अतिरिक्तोक्थानि जराबोध तद्विविड्ढि । आ॰ ९. ११. । इति ॥

जरा॑बोध॒ तद्वि॑विड्ढि वि॒शेवि॑शे य॒ज्ञिया॑य । स्तोमं॑ रु॒द्राय॑ दृ॒शीकं॑ ॥१०॥

जरा॑ऽबोध । तत् । वि॒वि॒ड्ढि॒ । वि॒शेऽवि॑शे । य॒ज्ञिया॑य । स्तोमं॑ । रु॒द्राय॑ । दृ॒शीकं॑ ॥ १०॥

हे जराबोध जरया स्तुत्या बोधमानाग्ने विशे विशे तत्तद्यजमानरूपप्रजानुग्रहार्थं यज्ञियाय यज्ञसंबंध्यनुष्ठानसिद्ध्यर्थं तदेव यजनं विविड्ढि । प्रविश । यजमानोऽपि रुद्राय क्रूरायाग्नये तुभ्यं दृशीकं दर्शनीयं समीचीनं स्तोमं स्तोत्रं करोतीति शेषः । अत्र यास्क एवं व्याख्यातवान् । जरा स्तुतिर्जरतेः स्तुतिकर्मणस्तां बोध तया बोधयितरिति वा तद्विविड्ढि तत्कुरु मनुष्यस्य मनुष्यस्य यजनाय स्तोमं रुद्राय दर्शनीयं । नि॰ १०. ८. । इति ॥ जराबोध । जॄष् वयोहानौ । अत्र तु स्तुत्यर्थः । षिद्भिदादिभ्योऽङ् । पा॰ ३. ३. १०४. । इत्यङ्प्रत्ययः । ततष्टाप् । जरया स्तुत्या बोधो यस्यासौ जराबोधः । यद्वा । जरया बोध्यत इति जराबोधः । कर्मणि घञ् । आमंत्रितावुदात्तत्वं । विविड्ढि । विश प्रवेशने । लोटो हि । बहुलं छंदसीति शपः श्लुः । अभ्यासहलादिशेषौ । हुझल्भ्यो हेर्धिरिति हेर्धिरादेशः । षत्वष्टुत्वे । यद्वा । विष्लृ व्याप्तावित्यस्माल्लोण्मध्यमैकवचनेऽभ्यासस्य गुणाभावः । विशे विशे । सावेकाच इति चतुर्थ्या उदात्तत्वं । अनुदात्तं चेत्याम्रेडितानुदात्तत्वं । यज्ञियाय । यज्ञर्त्विग्भ्यां घखञौ । पा॰ ५. १. ७१. । इति घः । दृशीकं । अनिदृशिभ्यां चेति कीकन्प्रत्ययः । नित्त्वादाद्युदात्तः ॥ ॥ २३ ॥

स नो॑ म॒हाँ अ॑निमा॒नो धू॒मके॑तुः पुरु॒श्चं॒द्रः । धि॒ये वाजा॑य हिन्वतु ॥११॥

सः । नः॒ । म॒हान् । अ॒नि॒ऽमा॒नः । धू॒मऽके॑तुः । पु॒रु॒ऽचं॒द्रः । धि॒ये । वाजा॑य । हि॒न्व॒तु॒ ॥११॥

सोऽग्निर्नोऽस्मान्धियै कर्मणे वाजायान्नाय च हिन्वतु । प्रीणयतु । कीदृशः । महान् गुणाधिकः अनिमानो निमानवर्जितः । अपरिच्छिन्न इत्यर्थः । धूमकेतुर्धूमेन ज्ञाप्यमानः पुरुश्चंद्रो बहुदीप्तिः ॥ महाँ अग्नीत्यत्र संहितायां नकारस्य [illegible] । अनिमानः । न विद्यते निमानोऽस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । धूमकेतुः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । पुरुश्चंद्रः । चदि आह्लादने दीप्तौ च । अस्मात्स्फायितंचीत्यादिना कर्तरि रक् । पुरुश्चासौ चंद्रश्चेति समासांतोदात्तत्वं । ह्रस्वाच्चंद्रोत्तरपदे मंत्रे । पा॰ ६. १. १५१. । इति सुट् । तस्य श्चुत्वेन शकारः । धिये । सावेकाच इति चतुर्थ्या उदात्तत्वं । हिन्वतु । हिवि प्रीणनार्थः । इदितो नुम् धातोरिति नुम् ॥

स रे॒वाँ इ॑व वि॒श्पति॒र्दैव्यः॑ के॒तुः शृ॒णोतु नः । उ॒क्थैर॒ग्निर्बृ॒हद्भा॑नुः ॥१२॥

सः । रे॒वान्ऽइ॑व । वि॒श्पतिः॑ । दैव्यः॑ । के॒तुः । शृ॒णो॒तु॒ । नः॒ । उ॒क्थैः । अ॒ग्निः ।
बृ॒हत्ऽभा॑नुः ॥१२॥

सोऽग्निरुक्थैः स्तोत्रैर्युक्तान् नोऽस्मान् शृणोतु । तत्र दृष्टांतः । रेवानिव । यथा लोके धनवान् राजा वंदिनां स्तोत्रं शृणोति तद्वत् । कीदृशः । विश्पतिः प्रजापालको दैव्यो देवानां संबंधी । अग्निर्वै देवानां होता । ऐ॰ ब्रा॰ ३. १४. । इति श्रुत्यंतरात् । केतुर्दूतवज्ज्ञापकः । अग्निर्वै देवानां दूत आसीत् । तै॰ सं॰ २. ५. ८. ५. । इति श्रुतिः । बृहद्भानुः प्रौढरश्मिः ॥ स रेवान् । एतत्तदोः । पा॰ ६. १. १३२. । इति सोर्लोपः । रयेर्मतौ बहुल-

मिति संप्रसारणं । परपूर्वत्वं । आद्गुणः । छंदसीर इति मतुपो वत्वं । अरिशब्दाच्च मतुप उदात्तत्वं वक्तव्यं । पा० ६. १. १७६. १. । इति मतुप उदात्तत्वं । विश्पतिः । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । बृहद्भानुः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

दर्शपूर्णमासयोः सुगादापनात्पूर्वभाविनि जपे नमो महद्भ्य इत्येषा । ब्रह्मौदने प्राशिष्यमाण इति खंडे सूर्यो नो दिवस्पातु नमो महद्भ्यो नमो अर्भकेभ्यः । आ० १. ४. । इति सूचितं ॥

**नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒ नमो॒ युव॑भ्यो॒ नम॑ आशि॒नेभ्यः॑ ।**
**यजा॑म दे॒वान्यदि॑ श॒क्नवा॑म॒ मा ज्याय॑सः॒ शंस॒मा वृ॑क्षि देवाः ॥१३॥**
**नमः॑ । म॒हत्ऽभ्यः॑ । नमः॑ । अ॒र्भ॒केभ्यः॑ । नमः॑ । युव॑ऽभ्यः । नमः॑ । आ॒शि॒नेभ्यः॑ ।**
**यजा॑म । दे॒वान् । यदि॑ । श॒क्नवा॑म । मा । ज्याय॑सः । शंसं॑ । आ । वृ॒क्षि॒ । दे॒वाः॒ ॥१३॥**

अग्निना प्रेरितः शुनःशेपो विश्वान्देवाननया तुष्टाव । तथा चाम्नायते । तमग्निरुवाच विश्वान्नु देवान् स्तुह्यथ त्वोत्स्रक्ष्याम इति स विश्वान्देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा । ऐ० ब्रा० ७. १६. । इति ॥ महांतो गुणैरधिकाः । अर्भका गुणैर्न्यूनाः । युवानस्तरुणाः । आशिना वयसा व्याप्ता वृद्धाः । यथोक्तचतुर्विधदेहयुक्तेभ्यो देवेभ्यो नमोऽस्तु । यदि शक्नवाम कथंचिद्धनादिसंपत्त्या शक्ताश्चेत्तदानीं देवान्यजाम । हे देवा ज्यायसो ज्येष्ठस्य देवताविशेषस्य आ सर्वतः प्रवृत्तं शंसं स्तोत्रं मा वृक्षि । अहं विच्छिन्नं मा कार्षं ॥ आशिनेभ्यः । अशू व्याप्तौ । बहुलमन्यत्रापि । उ० २. ४९. । इत्यौणादिक इनच्प्रत्ययः । चित इत्यंतोदात्तत्वं । यजाम । शपः पित्त्वादनुदात्तत्वं । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः । शक्नवाम । शक्लृ शक्तौ । आडुत्तमस्य पिच्चेति तिङः पिद्वद्भावादनुदात्तत्वे सति विकरणस्वरः । निपातैर्यद्यदिहंतेति निघातप्रतिषेधः । ज्यायसः । प्रशस्यशब्दादीयसुनि ज्य च । पा० ५. ३. ६१. । इति ज्यादेशः । ज्यादादीयसः । पा० ६. ४. १६०. । इतीयसुन ईकारस्यात्वं । नित्त्वादाद्युदात्तत्वं । शंसं । हलश्चेति घञ् । वृक्षि । ओव्रश्चू छेदने । व्यत्ययेनात्मनेपदोत्तमपुरुषैकवचनमिट् । च्लेः सिच् । स्वरतिसूतीत्यादिना इडभावः । स्कोः संयोगाद्योरित्युपधासकारलोपः । व्रश्चादिना षत्वं । षढोः कः सीति कत्वं । आदेशप्रत्यययोरिति षत्वं । न माङ्योग इत्यडभावः ॥ ॥२४॥

यत्र ग्रावेति पंचमं सूक्तं नवर्चं । आदितः षडनुष्टुभः । आयजी [illegible] गायत्र्यः । आदितश्चतसृणामिंद्रो देवता । ततो द्वे उलूखलदेवत्ये । तदनंतरभाविन्यावुलूखलमुसलोभयदेवताके । अंत्याया उच्छिष्टमित्यस्या हरिश्चंद्राधिषवणचर्मसोमानामन्यतमो देवता । तथा च बृहद्देवतायामुक्तं । चर्माधिषवणीयं वा सोमं वांत्या प्रशंसति । बृ० ३. ४११. । इति । तदुक्तमनुक्रमण्यां । यत्र ग्रावा नव षळनुष्टुबादि यच्चिद्ध्यौलूखल्यौ परे मौसल्यौ च प्रजापतेर्हरिश्चंद्रस्यांत्या चर्मप्रशंसा वेति ॥ आद्याश्चतस्रोऽञ्जःसवे होमे विनियुक्ताः । पंचम्याद्यास्तिस्रोऽभिषवे । अंत्या द्रोणकलशे सोमावनयने । तथा च ब्राह्मणं । अथ हैतं शुनःशेपोऽञ्जःसवं ददर्श तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धि त्वं गृहेगृह इत्यथैनं द्रोणकलशमभ्यवनिनायोच्छिष्टं चम्वोर्भरेत्येतयर्चाथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवां चकार । ऐ० ब्रा० ७. १७. । इति ॥

**यत्र॒ ग्रावा॑ पृ॒थुबु॑ध्न ऊ॒र्ध्वो भव॑ति॒ सोत॑वे । उ॒लूख॑लसुताना॒मवेद्विं॑द्र जल्गुलः ॥१॥**
**यत्र॑ । ग्रावा॑ । पृ॒थुऽबु॑ध्नः । ऊ॒र्ध्वः । भव॑ति । सोत॑वे । उ॒लूख॑लऽसुतानां । अव॑ । इत् ।**
**ऊं॒ इति॑ । इं॒द्र॒ । ज॒ल्गु॒लः॒ ॥१॥**

हे इंद्र यत्र यस्मिन्नंजःसवे कर्मणि सोतवेऽभिषवार्थं ग्रावा पाषाणः पृथुबुध्नः स्थूलमूल ऊर्ध्व उन्नतो भवति तस्मिन्कर्मण्युलूखलसुतानामुलूखलेनाभिषुतानां रसमवेत् स्वकीयत्वेनावगत्यैव जल्गुलः । भक्षय ॥ पृथुबुध्नः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । भवति । निपातैर्यद्यदिहंतेति निघातप्रतिषेधः । सोतवे । षुञ् अभिषवे । तुमर्थे सेसेनिति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । उलूखलसुतानां । उलूखलेन सुतानां । तृतीया कर्मणीति

पूर्वपदप्रकृतिस्वरत्वं । जल्गुलः । गल अदने । अस्मद्यङो लुकि लेण्मध्यमैकवचने लेटोऽडाटावित्यडागमः । इतश्च लोप इतीकारलोपः । उपधाया उत्वं च हलादिशेषाभावश्च पृषोदरादित्वात् ॥

यत्र द्वाविव जघनाधिषवण्या कृता । उलूखलसुतानामवेद्विंद्र जल्गुलः ॥२॥

यत्र । द्वौऽइव । जघना । अधिऽसवन्या । कृता । उलूखलऽसुतानां । अव । इत् । ऊं इति । इंद्र । जल्गुलः ॥२॥

यत्र यस्मिन्कर्मण्यधिषवण्या उभे अधिषवणफलके द्वाविव जघना द्वौ जघनप्रदेशाविव । जघनं जंघन्यतेरिति यास्कः । नि० ९. २०. । कृता विस्तीर्णे कृते संपादिते । अन्यत्पूर्ववत् ॥ जघना । हंतेः शरीरावयवे द्वे च । उ० ५. ३२. । इति हन्धातोरच् । द्वित्वं । कर्दमादित्वान्मध्योदात्तः । फि० ३. १०. । सुपां सुलुगित्याकारः । अधिषवण्या । षुञ् अभिषवे । ल्युट् । भवे छंदसीति यत् । उपसर्गात्सुनोतीति षत्वं । तित्स्वरित इति स्वरितः । न च यतोऽनाव इत्याद्युदात्तत्वं । तत्र हि निष्ठा च द्व्यजनात् । पा० ६. १. २०५. । इत्यस्यानुवृत्तेर्द्व्यच्कस्यैव तदिति । कृता । पूर्ववदाकारः ॥

यत्र नार्यपच्यवमुपच्यवं च शिक्षते । उलूखलसुतानामवेद्विंद्र जल्गुलः ॥३॥

यत्र । नारी । अपऽच्यवं । उपऽच्यवं । च । शिक्षते । उलूखलऽसुतानां । अव । इत् । ऊं इति । इंद्र । जल्गुलः ॥३॥

यत्र यस्मिन्कर्मणि नारी पत्न्यपच्यवं शालाया निर्गमनमुपच्यवं च शालाप्राप्तिं च शिक्षते अभ्यासं करोति । अन्यत्पूर्ववत् ॥ अपच्यवं । च्युङ् गतौ । ऋदोरबित्यप् । गुणावादेशौ । थाथादिना । पा० ६. २. १४४. । उत्तरपदांतोदात्तत्वं । एवमुपच्यवं । शिक्षते । शिक्ष विद्योपादाने । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । निपातैर्यद्यदिहंतेति निघातप्रतिषेधः ॥

यत्र मंथां विबध्नते रश्मीन्यमितवा इव । उलूखलसुतानामवेद्विंद्र जल्गुलः ॥४॥

यत्र । मंथां । विऽबध्नते । रश्मीन् । यमितवैऽइव । उलूखलऽसुतानां । अव । इत् । ऊं इति । इंद्र । जल्गुलः ॥४॥

यत्र यस्मिन्कर्मणि मंथामाशिरमथनहेतुं मंथानं विबध्नंति । तत्र दृष्टांतः । रश्मीनश्वबंधनार्थान्प्रग्रहान्यमितवा इव । नियंतुमिव । अन्यत्पूर्ववत् ॥ मंथां । पथिमथ्यृभुक्षामात् । पा० ७. १. ८५. । इति द्वितीयायामपि व्यत्ययेनात्वं । प्रातिपदिकस्वरेणांतोदात्तत्वे प्राप्ते पथिमथोः सर्वनामस्थाने । पा० ६. १. १९९. । इत्याद्युदात्तत्वं । यद्वा । मथ्यतेऽनयेति मंथा । मथि विलोडन इत्यस्माद्धलश्चेति करणे घञ् । ततष्टाप् । ञित्वादाद्युदात्तत्वं । विबध्नते । बन्ध बंधने । क्र्यादिभ्यः श्ना । अनिदितामिति नलोपे श्नाभ्यस्तयोरात इत्याकारलोपः । प्रत्ययस्वरः । तिङि चोदात्तवतीति गतेर्निघातः । यमितवै । यम उपरमे । तुमर्थे सेसेनिति तवैप्रत्ययः । इडागमश्छांदसः । यद्वा । ण्यंतात्तवैप्रत्ययस्येडागमे सति णिलोपश्छांदसः । अंतश्च तवै युगपत् । पा० ६. १. २००. । इत्याद्यंतयोरुदात्तत्वं ॥

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमं वद जयतामिव दुंदुभिः ॥५॥

यत् । चित् । हि । त्वं । गृहेऽगृहे । उलूखलक । युज्यसे । इह । द्युमत्ऽतमं । वद । जयतांऽइव । दुंदुभिः ॥५॥

हे उलूखलक यच्चिद्धि यद्यपि त्वमवघातार्थं गृहे गृहे युज्यसे तथापीह वैदिके कर्मणि तीव्रमुसलप्रहारेण द्युमत्तममतिशयेन दीप्तं प्रभूतध्वनियुक्तं शब्दं वद। तत्र दृष्टांतः। जयतामिव दुंदुभिः। यथा युद्धे जयं प्राप्नुवतां राज्ञां दुंदुभिर्महांतं ध्वनिं करोति तद्वत्। उलूखलशब्दं यास्क एवं व्याख्यातवान्। उलूखलमुरुकरं वोर्ध्वखं वोर्कुरं वोरु मे कुर्वित्यब्रवीत्तदुलूखलमभवदुरुकरं वै तत्तदुलूखलमित्याचक्षते परोक्षेणेति च ब्राह्मणं। नि॰ ९. २०.। इति॥ उलूखलक। अपादादाविति पर्युदासादाष्टमिकनिघाताभावे षाष्ठिकमाद्युदात्तत्वं। युज्यसे। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे यक्स्वरः शिष्यते। न च तिङ्ङतिङ इति निघातः। निपातैर्यद्यदिहंतेति प्रतिषेधात्। द्युमत्तमं। दीव्यतेर्दीप्त्यर्थस्य संपदादिलक्षणः क्विप्। दिव उत्। पा॰ ६. १. १३१.। इत्युत्वं। यणादेशः ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं। ननु दिव उदित्यत्र प्रातिपदिकं गृह्यते न धातुरित्युक्तत्वात्। च्छ्वोरित्यादाविवाचाप्यूठा भवितव्यं। पा॰ ६. ४. १९.। एवं तर्हि दीप्तिमत्स्वर्गवाचकेन दिवप्रातिपदिकेन दीप्तिर्लक्ष्यत इत्युत्वं भविष्यति॥ ॥२५॥

उत स्म॑ ते वनस्पते॒ वातो॒ वि वा॒त्यग्र॒मित्।
अथो॒ इंद्रा॑य॒ पात॑वे सुनु सोम॑मुलूखल ॥६॥
उ॒त। स्म॒। ते॒। व॒न॒स्प॒ते॒। वात॑ः। वि। वा॒ति॒। अग्र॑म्। इत्।
अथो॒ इति॑। इंद्रा॑य। पात॑वे। सु॒नु। सोम॑म्। उ॒लू॒ख॒ल॒ ॥६॥

उतापि च हे वनस्पते उलूखलरूप वृक्ष तेऽग्रमित्तव पुरत एव वातो वि वाति स्म। स्वरोपेतमुसलप्रहारैर्वायुर्विशेषेण प्रसरति खलु। अथो अनंतरं हे उलूखल इंद्रायेंद्रोपकारार्थं पातवे पातुं सोमं सुनु। सोमाभिषवं कुरु॥ वनस्पते। पारस्करादित्वात्सुट्। कार्ये कारणशब्दः। पातवे। पा पाने। तुमर्थे सेसेनिति तवेन्प्रत्ययः। [illegible]त्वादाद्युदात्तत्वं। सुनु। उतश्च प्रत्ययादसंयोगपूर्वादिति हेर्लुक्। विकरणस्वरे णांतोदात्तत्वं। पादादित्वादनिघातः। उलूखल। ऊर्ध्वं खमस्येत्युलूखलः। पृषोदरादिः॥

आ॒य॒जी वा॒ज॒सात॑मा॒ ता ह्यु१॒च्चा वि॒ज॒र्भृ॒तः। हरी॑ इ॒वांधां॑सि॒ बप्स॑ता ॥७॥
आ॒य॒जी इत्या॑ऽय॒जी। वा॒ज॒ऽसात॑मा। ता। हि। उ॒च्चा। वि॒ऽज॒र्भृ॒तः। हरी॑ इ॒वेति॒
हरी॑ऽइव। अंधां॑सि। बप्स॑ता ॥७॥

ये उलूखलमुसले आयजी सर्वतो यज्ञसाधने वाजसातमा अतिशयेनान्नप्रदे ता हि ते खलूच्चा प्रौढध्वनिर्यथा भवति तथा विजर्भृतः। विशेषेण पुनःपुनर्विहारं कुरुतः। तत्र दृष्टांतः। अंधांस्यन्नानि चणकादीनि खाद्यानि बप्सता भक्षयंतौ हरी इव इंद्रस्याश्वाविव। अत्र यास्क एवं व्याचख्यौ। आयजी आयष्टव्ये अन्नानां संभक्तृतमे ते ह्युच्चैर्विह्रियेते हरी इवान्नानि भुंजाने। नि॰ ९. ३६.। इति॥ आयजी। यजेरौणादिकः करणे इप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वं। वाजसातमा। वाजं सनोतीति वाजसाः। षणु दाने। जनसनखनादिना [illegible]। विड्वनोरनुनासिकस्यादित्यात्वं। कृदुत्तरपदप्रकृतिस्वरत्वं। आतिशायनिकस्तमप्। सुपां सुलुगिति [illegible]। विजर्भृतः। हृञ् हरणे। अस्माद्यङ्लुगंतात् [illegible] च्छंदसि [illegible] लुकि। पा॰ ७. ४. ९१.। इति रुगागमः। ततः प्रत्ययलक्षणेन धातुसंज्ञायां लिटि द्विवचनं तस्। अदादिवच्चेति वचनाच्छपो लुक्। गुणे प्राप्ते क्ङिति चेति प्रतिषेधः। हृग्रहोर्भश्छंदसीति भत्वं। प्रत्ययस्वरः। हि चेति निघातप्रतिषेधः। बप्सता। भस भक्षणदीप्त्योः। लटः शतृ। जु[illegible]ः श्लुः। घसिभसोर्हलि च। पा॰ ६. ४. १००.। इत्युपधालोपः। नाभ्यस्ताच्छतुः। पा॰ ७. १. ७८.। इति नुम्प्रतिषेधः। अभ्यस्तानामादिरित्याद्युदात्तत्वं॥

ता नो॑ अ॒द्य व॑न॒स्पती॑ ऋ॒ष्वा[illegible]ष्वेभि॑ः सो॒तृभि॑ः। इंद्रा॑य॒ मधु॑मत्सुतं ॥८॥
ता। न॒ः। अ॒द्य। व॒न॒स्पती॒ इति॑। ऋ॒ष्वौ। ऋ॒ष्वेभि॑ः। सो॒तृऽभि॑ः। इंद्रा॑य। मधु॑
ऽमत्। सु॒तं ॥८॥

अथास्मिन्कर्मणि हे वनस्पती उलूखलमुसलरूपौ तौ युवामृष्वेभिर्दर्शनीयैः सोतृभिरभिषवहेतुभिः सह ऋष्वौ दर्शनीयौ भूत्वेंद्रायेंद्रार्थं मधुमत् माधुर्योपेतं सोमद्रव्यं नोऽस्मदीयं सुतं। अभिषुणुतं ॥ ता। सुपां सुलुगित्याकारः। नो अव। प्रकृत्यांतःपादमिति प्रकृतिभावः। वनस्पती। उभयपदप्रकृतिस्वरे प्राप्त आमंत्रितस्येति सर्वानुदात्तत्वं। प्लुतप्रगृह्या अचि। पा० ६. १. १२५. इति प्रकृतिभावः। सुतं। षुञ् अभिषवे। बहुलं छंदसीति विकरणस्य लुक्। निघातः ॥

उच्छिष्टं चम्वोर्भर सोमं पवित्र आ सृज। नि धेहि गोरधि त्वचि ॥९॥

उत्। शिष्टं। चम्वोः। भर। सोमं। पवित्रे। आ। सृज। नि। धेहि। गोः। अधि। त्वचि ॥९॥

हे ऋत्विग्विशेष हरिश्चंद्र यज्ञमाना वे हे हरिश्चंद्रेति वा चम्वोः सोमस्य भक्षत्वसंपादकयोरधिषवणफलकयोः शिष्टमभिषवराहित्येनावशिष्टं सोममुद्भर। शकटस्योपरि हर। सोममभिषुतं सोमं पवित्रे दशापवित्र आ सृज। आनीय प्रक्षिप। प्रक्षेपे सत्यवशिष्टं सोमं गोस्त्वच्यानडुहे चर्मण्यधि नि धेहि। अध्यारोप्य स्थापय॥ चम्वोः। चमु अदने। चम्यते भक्ष्यतेऽनेति चमूः। कृषिचमीत्यादिना। उ० १. ८२. औणादिक ऊप्रत्ययः। प्रत्ययस्वरः। सप्तमीद्विवचन ओसि उदात्तयणो हल्पूर्वात् स्वरित इति स्वरितत्वं। उदात्तयणो हल्पूर्वादिति व्यत्ययेन न भवति। भर। हृग्रहोर्भः। धेहि। घ्वसोरेद्धावभ्यासलोपश्च। पा० ६. ४. ११९. इत्येत्वाभ्यासलोपौ। निघातः। त्वचि। सावेकाच इति विभक्तेरुदात्तत्वं ॥ ॥२६॥

यच्चिद्धि सत्य सोमपा इति षष्ठं सूक्तं सप्तर्चं शुनःशेपस्यार्षं पांक्तमैंद्रं। अनुक्रमणिका च। यच्चिद्धि सप्त पांक्तमिति ॥ पृष्ठ्यषडहस्य पंचमेऽहनि माध्यंदिने सवने होत्रका यच्चिद्धीति सप्तर्चं सूक्तं त्रींस्तृचान्कृत्वा स्वस्वशस्त्र एकैकं तृचमावपेरन्। चतुर्थेऽहनीति खंडे यच्चिद्धि सत्य सोमपा इत्येकैकमेवमेव। आ० ७. ११. इति सूचितं ॥

यच्चिद्धि सत्य सोमपा अनाशस्ता इव स्मसि।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥१॥

यत्। चित्। हि। सत्य। सोमऽपाः। अनाशस्ताःऽइव। स्मसि।
आ। तु। नः। इंद्र। शंसय। गोषु। अश्वेषु। शुभ्रिषु। सहस्रेषु। तुविऽमघ ॥१॥

विश्वेर्देवैः प्रेरितः शुनःशेप एतदादिकाभिर्द्वाविंशतिसंख्याकाभिर्ऋग्भिरिंद्रं तुष्टाव। तथा च ब्राह्मणं। तं विश्वे देवा ऊचुरिंद्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स इंद्रं तुष्टाव यच्चिद्धि सत्य सोमपा इत्येतेन सूक्तेनोत्तरस्य च पंचदशभिः। ऐ० ब्रा० ७. १६. । इति ॥ हे सोमपाः सोमस्य पातः सत्य सत्यवादिन्निंद्र यच्चिद्धि यद्यपि वयमनाशस्ता इव स्मसि अप्रशस्ता इव भवामः तथापि हे तुवीमघ बहुधनेंद्र त्वं गोष्वश्वेषु शुभ्रिषु शोभनेषु सहस्रेषु सहस्रसंख्याकेषु च निमित्तभूतेषु नोऽस्माना शंसय। सर्वतः प्रशस्यान्कुरु। अस्मद्दोषमनपेक्ष्य गवादीन्प्रयच्छेत्यर्थः ॥ सोमपाः। विजंतः। आमंत्रितनिघातः। अनाशस्ता इव। शंसु स्तुतौ। निष्ठेति भावे क्तः। यस्य विभाषेतीट्प्रतिषेधः। नञो बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। स्मसि। इदंतो मसिः। तू नः। ऋचि तुनुघेत्यादिना दीर्घः। गोषु। सावेकाच इति प्राप्तस्य विभक्त्युदात्तत्वस्य न गोश्वन्सावर्णेति प्रतिषेधः। अश्वेषु। अशूङ् व्याप्तौ। अशुप्रुषिलटीत्यादिना क्वन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं। शुभ्रिषु। शुभ दीप्तौ। अदिशदिभूशुभिभ्यः क्रिन्। उ० ४. ६५. इति क्रिन्प्रत्ययः। व्यत्ययेनांतोदात्तत्वं ॥

शिप्रिन्वाजानां पते शचीवस्तव दंसना।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥२॥

शिप्रिन् । वाजानां । पते । शचीऽवः । तव । दंसना ।
आ । तु । नः । इंद्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ २॥

हे शचीवः शक्तिमन् शिप्रिन् शोभनहनूयुक्त वाजानां पतेऽन्नानां पालक तव दंसना कर्मविशेषोऽनुग्रहरूपः सर्वदा वर्तते । अन्यत्पूर्ववत् ॥ शिप्रिन् । शिप्रे हनू नासिके वा । नि० ६. १७. । इति यास्कः । अत इनिठनाविति मत्वर्थीय इनिः । आमंत्रितायुदात्तत्वं । वाजानां पते । सुबामंत्रित इति परांगवद्भावात् षष्ठ्यामंत्रितसमुदायनिघातः । न चामंत्रितं पूर्वमविद्यमानवदिति शिप्रिन्नित्यस्याविद्यमानवत्त्वेन पदादपरत्वात्पादादित्वाच्च न निघातः । नामंत्रिते समानाधिकरणे सामान्यवचनमित्यविद्यमानवत्त्वप्रतिषेधात । शचीवः । छंदसीर इति मतुपो वत्वं । मतुवसो रुरिति रुत्वे खरवसानयोर्विसर्जनीयः । पा० ८. ३. १५. । पादादित्वादामंत्रितनिघाताभावः ॥

नि ष्वापया मिथूदृशा सस्तामबुध्यमाने ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ३॥
नि । स्वापय । मिथुऽदृशा । सस्तां । अबुध्यमाने इति ।
आ । तु । नः । इंद्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ३॥

मिथूदृशा परस्परं संगतत्वेन दृश्यमाने यमदूत्यौ नि ष्वापय । नितरां सुप्ते कुरु । ते चास्मान्मारयितुमबुध्यमाने सत्यौ सस्तां । निद्रां प्राप्नुतां । अन्यत्पूर्ववत् ॥ नि ष्वापय । सुषामादित्वात् षत्वं । पा० ८. ३. ९८. । अन्येषामपि दृश्यत इति दीर्घः । मिथुनतया युगलरूपेण पश्यत इति मिथूदृशा । क्विन्चेति दृशेः कर्तरि क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं । पूर्ववत्पूर्वपदस्य दीर्घः । सुपां सुलुगिति विभक्तेराकारः । सस्तां । षस स्वप्ने । लोटि तसस्ताम् । अदिप्रभृतिभ्य इति शपो लुक् । प्रत्ययस्वरः । पादादित्वान्निघाताभावः । अबुध्यमाने । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं ॥

ससंतु त्या अरातयो बोधंतु शूर रातयः ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ४॥
ससंतु । त्याः । अरातयः । बोधंतु । शूर । रातयः ।
आ । तु । नः । इंद्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ४॥

त्या अस्माभिरदृश्यमानाः परोक्षास्ता अरातयोऽदानशीलाः शत्रवः ससंतु । निद्रां कुर्वंतु । हे शूर शौर्ययुक्तेंद्र रातयो दानशीला बंधवो बोधंतु । अस्मान्बुध्यंतां । अन्यत्पूर्ववत् ॥ ससंतु । प्रत्ययस्वरः । अरातयः । रा दाने । मंत्रे वृषेत्यादिना भावे क्तिन् । न विद्यते रातिरेष्विति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । नञ्सुभ्यामिति तु सर्वे विधयश्छंदसि विकल्प्यंत इति न भवति । यद्वा । क्तिच्क्तौ च संज्ञायामिति कर्तरि क्तिच् । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं । बोधंतु । पादादित्वात् तिङ्ङतिङ इति निघाताभावः ॥

समिंद्र गर्दभं मृण नुवंतं पापयामुया ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ५॥
सं । इंद्र । गर्दभं । मृण । नुवंतं । पापया । अमुया ।
आ । तु । नः । इंद्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ५॥

हे इंद्र अमुयानयास्माभिः श्रूयमाणया पापया निंदारूपया वाचा नुवंतं स्तुवंतं । अपकीर्तिं प्रकटयंतमित्यर्थः । तादृशं गर्दभं गर्दभसमानवैरिणं सं मृण । सम्यक् मारय । यथा गर्दभः श्रोतुमशक्यं परुषं शब्दं करोति तथा शत्रुरपि । अन्यत्पूर्ववत् ॥ गर्दभं । गर्द गर्द शब्दे । कॄशॄशलिगर्दिभ्योऽभच् । उ० ३. १२२. । चित इत्यंतोदात्तत्वं । मृण । मृण हिंसायां । तौदादिकः । शस्य ङित्त्वाद्गुणाभावः । नुवंतं । णु स्तुतौ । शतर्यदिप्रभृतित्वाच्छपो लुक् । शतुर्ङित्त्वाद्गुणाभाव उवङादेशः । प्रत्ययाद्युदात्तत्वं ॥

पताति कुंडृणाच्या दूरं वातो वनादधि ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ६ ॥
पताति । कुंडृणाच्या । दूरं । वातः । वनात् । अधि ।
आ । तु । नः । इंद्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ६ ॥

वातोऽस्मत्प्रतिकूलो वायुः कुंडृणाच्या कुटिलगत्या स त्वस्मान्परित्यज्य वनादध्यरण्यादप्यधिकं दूरं देशं पताति । पततु । अन्यत्पूर्ववत् ॥ पताति । लेट्याडागमः । कुंडृणाच्या । कुडि दाहे । अस्मात् क्युडंते कुंडनशब्दे डकारात्परस्याकारस्य ऋकारश्छांदसः । ऋवर्णाच्चेति वक्तव्यमिति णत्वं । तदंचतीति कुंडृणाची । ऋत्विगित्यादिना क्विन् । अनिदितामिति नलोपेऽंचतेश्चेति वक्तव्यं । पा० ४. १. ६. २. । इति ङीप् । अचः । पा० ६. ४. १३८. । इत्यकारलोपः । चौ । पा० ६. ३. १३८. । इति पूर्वपदस्य दीर्घत्वं । चौ । पा० ६. १. २२२. । इत्याकारस्योदात्तत्वं ॥

सर्वं परिक्रोशं जहि जंभया कृकदाश्वं ।
आ तू न इंद्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥ ७ ॥
सर्वं । परिऽक्रोशं । जहि । जंभय । कृकदाश्वं ।
आ । तु । नः । इंद्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ७ ॥

परिक्रोशमस्मद्विषये सर्वत आक्रोशकर्तारं सर्वं पुरुषं जहि । मारय । कृकदाश्वमस्मद्विषये हिंसाप्रदं शत्रुं जंभय । मारय । अन्यत्पूर्ववत् ॥ परिक्रोशं । क्रुश आह्वाने । परितः क्रोशयतीति परिक्रोशः । पचाद्यच् । कृदुत्तरपदप्रकृतिस्वरत्वं । जहि । हन हिंसागत्योः । हंतेर्जः । पा० ६. ४. ३६. । इति जादेशः । तस्यासिद्धवदत्राभादित्यसिद्धत्वादतो हेरिति हेर्लुग् न भवति । जंभय । जभि नाशने । चुरादित्वात्स्वार्थिको णिच् । शपः पित्त्वादनुदात्तत्वे णिच एव स्वरः शिष्यते । कृकदाश्वं । कृञ् हिंसायां । कृदाधारार्चिकलिभ्यः कन् । उ० ३. ४०. । इति भावे कन्प्रत्ययः । किदित्यनुवृत्तेर्गुणाभावः । तथा च कृको हिंसा । तां दाशति प्रयच्छतीति कृकदाशुः । बहुलग्रहणाद्दाशतेरपि कृक उपपदे कृके वचः कश्च । उ० १. ६. । इत्युण् । प्रत्ययस्वरेणोदात्तः । द्वितीयायामम्पूर्वत्वे प्राप्ते वा छंदसीति तस्य बाधितत्वाद्यणादेशः । [illegible]योर्यण इति विभक्तेः स्वरितत्वं ॥ ॥ २७ ॥

आ व इंद्रमिति द्वाविंशत्यृचं सप्तमं सूक्तं शुनःशेपस्यार्षं गायत्रं । अस्माकमित्येषा पादनिचृद्गायत्री । त्रयः सप्तकाः पादनिचृत् । अनु० ४. ४. । इत्युक्तत्वात् । शश्वदिंद्र इत्येषा त्रिष्टुप् । आदितः षोडशर्च ऐंद्र्यः । आश्विनावश्वावत्येत्याद्यास्तिस्र आश्विन्यः । कस्त उष इत्याद्यास्तिस्र उषोदेवताकाः । तथा चानुक्रमणिका । आ वो द्व्यधिकास्माकं पादनिचृच्छ[illegible] तृचावाश्विनोषसाविति ॥

आ व इंद्रं क्रिविं यथा वाजयंतः शतक्रतुं । मंहिष्ठं सिंच इंदुभिः ॥ १ ॥
आ । वः । इंद्रं । क्रिविं । यथा । वाजऽयंतः । शतऽक्रतुं । मंहिष्ठं । सिंचे । इंदुऽभिः ॥ १ ॥

वाजयंतोऽन्नमिच्छंतो वयं शुनःशेपा हे ऋत्विग्यजमाना वो युष्माकं संबंधिनमिममिंद्रमिंदुभिः सोमैरा

सिंचे। सर्वतः सिंचामहे। तर्पयामः। कीदृशं। शतक्रतुं शतसंख्याककर्मोपेतं मंहिष्ठमतिशयेन प्रवृद्धं। सेचने दृष्टांतः। यथा येन प्रकारेण क्रिविमवटं जलेन पूरयंति तद्वत्। क्रिविशब्दो वव्रिः काटुरित्यादिषु चतुर्दशसु कूपनामसु क्रिविः कूपः सूद इति पठितं ॥ क्रिविं। कृती छेदने। कृत्यत इति क्रिविः। क्रिविघृष्विच्छविस्थवी त्यादौ। उ॰ ४. ५६.। क्रिन्प्रत्ययांतो निपातितः। अत एव तशब्दलोपः। नित्त्वादाद्युदात्तत्वं। यथा। यथेति पादांते। फि॰ ४. १७.। इति सर्वानुदात्तत्वं। वाजयंतः। वाजमात्मन इच्छंतः। सुप आत्मनः क्यच्। न च्छंदस्य पुत्रस्येतीत्वदीर्घत्वयोर्निषेधः। अश्वाघस्यादिति पुनर्दीर्घविधानाज्ज्ञापकात्। मंहिष्ठं। महि वृद्धौ। अतिशयेन मंहिता मंहिष्ठः। तुश्छंदसि। पा॰ ५. ३. ५९.। इति तृजंतादिष्ठन्प्रत्ययः। तुरिष्ठेमेयःसु। पा॰ ६. ४. १५४.। इति तृलोपः। इष्ठनो नित्त्वादाद्युदात्तत्वं। सिंचे। षिचिर् क्षरणे। व्यत्ययेनैकवचनं। शे मुचादीनामिति नुमागमः ॥

शतं वा यः शुचीनां सहस्रं वा समाशिरां। एदु निम्नं न रीयते ॥ २ ॥

शतं। वा। यः। शुचीनां। सहस्रं। वा। संऽआशिरां। आ। इत्। ऊं इति। निम्नं। न।
रीयते ॥ २ ॥

य इंद्रः शुचीनां शुद्धानां सोमानां शतं वा शतसंख्याकं समूहं वा। समाशिरां समीचीनेनाशिराख्येन श्रपणद्रव्येणोपेतानां सोमानां सहस्रं वा सहस्रसंख्याकं समूहं वा एदु रीयते। आगच्छत्येव। सोऽस्माननुगृह्णात्विति शेषः। सोमप्राप्तौ दृष्टांतः। निम्नं न। यथा निम्नप्रदेशमाप आप्नुवंति तद्वत् ॥ समाशिरां। श्रीञ् पाक इत्यस्य समाङ्पूर्वस्य क्विप्यपस्पृधेथामित्यादावाशीरादेशो निपातितः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। रीयते। रीङ् श्रवणे। दिवादिभ्यः श्यन् ॥

सं यन्मदाय शुष्मिण एना ह्यस्योदरे। समुद्रो न व्यचो दधे ॥ ३ ॥

सं। यत्। मदाय। शुष्मिणे। एना। हि। अस्य। उदरे। समुद्रः। न। व्यचः। दधे ॥ ३ ॥

यत्पूर्वोक्तं शतं सहस्रं वा शुष्मिणे बलवत इंद्रस्य मदाय मदार्थं संगतं भवति। एना ह्यनेनैव शतेन सहस्रेण चास्येंद्रस्योदरे व्यचो व्याप्तिर्दधे। धृता भवति। तत्र दृष्टांतः। समुद्रो न समुद्र इव। यथा समुद्रमध्ये जलं व्याप्तं तद्वत् ॥ एना। सुपां सुलुगिति तृतीयाया डादेशः। व्यचः। व्यचेः कुटादित्वमनसि। का॰ १. २. १. १.। इति ङित्त्वभावस्य प्रतिषिद्धत्वाद्ग्रहिज्येत्यादिना संप्रसारणं न भवति। असुनो नित्त्वादाद्युदात्तत्वं। दधे। दधातेः कर्मण्यभ्यासह्रस्वजश्त्वेषु कृतेष्वातो लोप इटि चेत्याकारलोपः। प्रत्ययस्वरेणांतोदात्तत्वं। हि चेति प्रतिषेधान्निघाताभावः ॥

अयमु ते समतसि कपोत इव गर्भधिं। वचस्तच्चिन्न ओहसे ॥ ४ ॥

अयं। ऊं इति। ते। सं। अतसि। कपोतःऽइव। गर्भऽधिं। वचः। तत्। चित्। नः।
ओहसे ॥ ४ ॥

हे इंद्र अयमु अयमपि दृश्यमानः सोमस्ते त्वदर्थं संपादितः। यं सोमं समतसि सम्यक् सातत्येन प्राप्नोषि। तत्र दृष्टांतः। कपोत इव। यथा कपोताख्यः पक्षी गर्भधिं गर्भधारिणीं कपोतीं प्राप्नोति तद्वत्। तच्चित्तस्मादेव कारणान्नोऽस्मदीयं वच ओहसे। प्राप्नोषि ॥ अतसि। अत सातत्यगमने। कपोत इव। कबेरोतच् पश्च। उ॰ १. ६२.। इत्योतच्। व्यत्ययेन मध्योदात्तः। गर्भधिं। गर्भोऽस्यां धीयत इति गर्भधिः। कर्मण्यधिकरणे च। पा॰ ३. ३. ९३.। इति किप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वं। ओहसे। तुहिर् दुहिर् उहिर् अर्दने। व्यत्ययेनात्मनेपद ॥

स्तोत्रं राधानां पते गिर्वाहो वीर यस्य ते। विभूतिरस्तु सूनृता ॥ ५ ॥

स्तोत्रं। राधानां। पते। गिर्वाहः। वीर। यस्य। ते। विऽभूतिः। अस्तु। सूनृता ॥ ५ ॥

हे इंद्र राधानां पते धनानां पालक गिर्वाहो गीर्भिरुह्यमान वीर शौर्योपेत यस्य ते तव स्तोत्रमीदृशं भवति तस्य तव विभूतिर्लक्ष्मीः सूनृता प्रियसत्यरूपास्तु ॥ स्तोत्रं । दाम्नीशसेति ष्ट्रन् । पा° ३. २. १८२. । पश्चादर्शआद्यच् । अथवा स्तोतुरिदमित्यर्थेऽण् । संज्ञापूर्वको विधिरनित्य इति वृद्धिर्न । राधानां पते । राध्नुवंत्येभिरिति राधानि धनानि । सुबामंत्रित इति परांगवद्भावात्षष्ठ्यामंत्रितसमुदायस्य निघातः । गिर्वाहः । वह प्रापणे । वहिहाधाञ्भ्यश्छंदसीति कारकपूर्वस्यापि वहतेरसुन्प्रत्ययः । गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च । उ° ४. २२६. । इत्युक्तत्वात् । णिदित्यनुवृत्तेरुपधावृद्धिः । पूर्वपदस्य वोरुपधायाः । पा° ८. २. ७६. । इति दीर्घत्वाभावश्छांदसः । षाष्ठिकमामंत्रिताद्युदात्तत्वं । विभूतिः । तादौ च नितीति गतेः प्रकृतिस्वरत्वं ॥ ॥२८॥

ऊर्ध्वस्तिष्ठा न ऊतयेऽस्मिन्वाजे शतक्रतो । समन्येषु ब्रवावहै ॥६॥

ऊर्ध्वः । तिष्ठ । नः । ऊतये । अस्मिन् । वाजे । शतक्रतो इति शतऽक्रतो । सं । अन्येषु । ब्रवावहै ॥६॥

हे शतक्रतो शतसंख्याककर्मोपेत अस्मिन्प्रसक्ते वाजे संग्रामे नोऽस्माकमूतये रक्षणायोर्ध्व उन्नत उत्सुकस्तिष्ठ । भव । त्वं चाहं च मिलित्वान्येषु कार्यांतरेषु सं ब्रवावहै । सम्यक् विचारयावः ॥ तिष्ठ । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । ऊतये । ऊतियूतीत्यादिना क्तिन उदात्तत्वं । अस्मिन् । ऊडिदमित्यादिना सप्तम्या उदात्तत्वं ॥

योगेयोगे तवस्तरं वाजेवाजे हवामहे । सखाय इंद्रमूतये ॥७॥

योगेऽयोगे । तवःऽतरं । वाजेऽवाजे । हवामहे । सखायः । इंद्रं । ऊतये ॥७॥

योगे योगे प्रवेशे प्रवेशे तत्तत्कर्मोपक्रमे वाजे वाजे क[illegible]नि तस्मिंस्तस्मिन्संग्रामे तवस्तरमतिशयेन बलिनमिंद्रमूतये रक्षार्थं सखायः सखिवत्प्रिया वयं हवामहे । आह्वयामः ॥ योगे योगे । युजिर् योगे । हलश्चेति घञ् । चजोः कु घिण्यतोः । पा° ७. ३. ५२. । इति कुत्वं । घञो ञित्त्वादाद्युदात्तत्वं । नित्यवीप्सयोरिति वीप्सायां द्विर्भावे सत्याम्रेडितानुदात्तत्वं । तवस्तरं । तवसः शब्दात्तस्यामेधेति । पा° ५. २. १२१. । मत्वर्थीयो विनिः । तस्य छांदसो लोपः ॥

आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः । वाजेभिरुप नो हवं ॥८॥

आ । घ । गमत् । यदि । श्रवत् । सहस्रिणीभिः । ऊतिऽभिः । वाजेभिः । उप । नः । हवं ॥८॥

यदि श्रवत् यद्ययमिंद्रो नोऽस्मदीयं हवमाह्वानं शृणुयात् तदानीं स्वयमेव सहस्रिणीभिरूतिभिर्बहुभिः पालनैर्वाजेभिरन्नैश्च सहोप समीप आ घ अवश्यमागमत् । आगच्छेत् ॥ घ । ऋचि तुनुघेत्यादिना संहितायां दीर्घः । गमत् । लिङर्थे लेट् । लेटोऽडाटावित्यडागमः । इतश्च लोप इतीकारलोपः । यद्वा । छांदसे लुङि पुषादिद्युताद्यॢदितः परस्मैपदेषु । पा° ३. १. ५५. । इति च्लेरङादेशः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । श्रवत् । श्रु श्रवणे । पूर्ववल्लेट्यडागमः । वाजेभिः । बहुलं छंदसीति भिस ऐसादेशाभावः । हवं । भावेऽनुपसर्गस्येति ह्वयतेरप् संप्रसारणं च । अपः पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वं ॥

अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरं । यं ते पूर्वं पिता हुवे ॥९॥

अनु । प्रत्नस्य । ओकसः । हुवे । तुविऽप्रतिं । नरं । यं । ते । पूर्वं । पिता । हुवे ॥९॥

प्रत्नस्य पुरातनस्यौकसः स्थानस्य स्वर्गरूपस्य सकाशात्तुविप्रतिं बहून्यजमानान्प्रतिगंतारं नरं पु[illegible] हुवे । अनुक्रमेण कर्मस्वाह्वयामि । यं ते त्वामिंद्रं पितास्मदीयो जनकः पूर्वं पुरा स्वकीयानुष्ठानकाले हुवे

आह्वतवान्। तमाह्वयामीति पूर्वत्रान्वयः ॥ ओकसः। नब्विषयस्येत्याद्युदात्तत्वं। हुवे। ह्वेञ् स्पर्धायां शब्दे च। इति बहुलं छंदसीति संप्रसारणं परपूर्वत्वं। गुणे प्राप्ते क्ङिति चेति प्रतिषेधः। उवङादेशः। प्रत्ययस्वरेणांतोदात्तत्वं। पादादित्वादनिघातः। तुविप्रतिं। तुवीनां बहूनां प्रतिगंतारं। अत्र प्रतिशब्दो भीमसेनो भीम इतिवत् प्रतिगंतृशब्दं लक्षयित्वा तद्द्वारा तदर्थं लक्षयति। अतः प्रतिः प्रतिनिधिप्रतिदानयोः। पा० १. ४. ९२.। इतिवत्सत्त्ववचनत्वेनानिपातत्वादनव्ययत्वे पूरणगुणेत्यादिना। पा० २. २. ११.। न षष्ठीसमासनिषेधः। हुवे। ह्वेञो लिटि बहुलं छंदसीति पूर्ववत्संप्रसारणपरपूर्वत्वे। द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यं। का० ६. १. ८. १.। इति द्विर्वचनाभावः। यद्वृत्तयोगादनिघातः ॥

तं त्वा वयं विश्ववारा शास्महे पुरुहूत। सखे वसो जरितृभ्यः ॥१०॥

तं। त्वा। वयं। विश्वऽवार। आ। शास्महे। पुरुऽहूत। सखे। वसो इति। जरितृऽभ्यः ॥१०॥

हे विश्ववार सर्वैर्वरणीय पुरुहूत बहुभिः स्वस्वकर्मण्याहूत सखे सखिवत्प्रिय वसो निवासहेतो इंद्र तं पूर्वोक्तगुणयुक्तं त्वां जरितृभ्यः स्तोतॄणामनुग्रहार्थमा शास्महे। प्रार्थयामहे ॥ आ शास्महे। आङः शासु इच्छायां। अदिप्रभृतिभ्यः शप इति शपो लुक्। वसो। नामंत्रिते समानाधिकरण इति पूर्वस्याविद्यमानवत्त्वनिषेधात्पराङ्गवद्भावे सति शेषनिघातेन वामंत्रितस्य चेति वा सर्वानुदात्तत्वं। जरितृभ्यः। जरतिः स्तुतिकर्मा। तृचश्चित्त्वादंतोदात्तत्वं ॥ ॥२९॥

अस्माकं शिप्रिणीनां सोमपाः सोमपाव्नां। सखे वज्रिन्त्सखीनां ॥११॥

अस्माकं। शिप्रिणीनां। सोमऽपाः। सोमऽपाव्नां। सखे। वज्रिन्। सखीनां ॥११॥

हे सोमपाः सोमस्य पातः सखे सखिवत्प्रिय वज्रिन्वज्रयुक्तेंद्र सखीनां सखिवत्प्रियाणां सोमपाव्नां सोमस्य पातॄणामस्माकं शिप्रिणीनां दीर्घाभ्यां हनूभ्यां नासिकाभ्यां वा युक्तानां गवां समूहस्त्वत्प्रसादादस्त्विति शेषः ॥ शिप्रिणीनां। ऋन्नेभ्यो ङीबिति ङीप्। तस्य पित्त्वादनुदात्तत्वे सति प्रत्ययस्वरः शिष्यते। सोमपाः। आमंत्रितस्य सति शिष्टत्वादामंत्रिताद्युदात्तत्वं। सोमपाव्नां। आतो मनिन्नित्यादिना वनिप्। अल्लोपोऽनः। पा० ६. ४. १३४.। इत्यनोऽकारस्य लोपः ॥

तथा तदस्तु सोमपाः सखे वज्रिन्तथा कृणु। यथा त उश्मसीष्टये ॥१२॥

तथा। तत्। अस्तु। सोमऽपाः। सखे। वज्रिन्। तथा। कृणु। यथा। ते। उश्मसि। इष्टये ॥१२॥

हे सोमपाः सखे वज्रिन् इष्टयेऽभिलषितार्थं ते तवानुग्रहं यथा येन प्रकारेणोश्मसि वयं कामयामहे त्वं तथा कुरु। त्वत्प्रसादात्तदभीष्टं तथास्तु ॥ कृणु। कृवि हिंसाकरणयोश्च। इदित्त्वान्नुम्। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। तत्संनियोगेन वकारस्य चाकारः। अतो लोप इति तस्य लोपः। तस्य स्थानिवद्भावाल्लघूपधगुणाभावः। उतश्च प्रत्ययादसंयोगपूर्वादिति हेर्लुक्। उश्मसि। वश कांतौ। इदंतो मसिः। [illegible] लुक्। ग्रहिज्यादिना संप्रसारणं। प्रत्ययस्वरः। यद्वृत्तयोगादनिघातः। इष्टये। इषु इच्छायां। क्तिनि तितुत्रेत्यादिनेट्प्रतिषेधः। यद्वा। यजतेः क्तिनि वचिस्वपीत्यादिना। पा० ६. १. १५.। संप्रसारणं। व्रश्चादिना षत्वे ष्टुत्वं। पूर्ववन्मन्त्रे वृषेति क्तिन उदात्तत्वं। द्वितीये तु व्यत्ययेन ॥

रेवतीर्नः सधमाद इंद्रे संतु तुविवाजाः। क्षुमंतो याभिर्मदेम ॥१३॥

रेवतीः। नः। सधऽमादे। इंद्रे। संतु। तुविऽवाजाः। क्षुऽमंतः। याभिः। मदेम ॥१३॥

क्षुमंतोऽन्नवंतो वयं याभिर्गोभिः सह मदेम हृष्येम इंद्रे सधमादेऽस्माभिः सह हर्षयुक्ते सति नोऽस्माकं ता

गावो रेवतीः क्षीराज्यादिधनवत्यः तुविवाजाः प्रभूतबलाश्च संतु ॥ रेवतीः । रयिशब्दान्मतुपि रयेर्मतौ बहुलमिति संप्रसारणं परपूर्वत्वं । छंदसीर इति मतुपो वत्वं । वा छंदसीति पूर्वसवर्णदीर्घः । आरेशब्दाच्च मतुप उदात्तत्वं वक्तव्यमिति रेशब्दादुत्तरस्यापि भवतीति पूर्वमेवोक्तं । सधमादे । मद तृप्तियोगे । चौरादिकः । सह मादयतीति सधमादः । पचाद्यच् । सध मादस्थयोश्छंदसि । पा° ६. ३. ९६. । इति सहशब्दस्य सधादेशः । थाथादिनोत्तरपदांतोदात्तत्वे प्राप्ते परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । तुविवाजाः । तु इति सौत्रो धातुर्वृद्ध्यर्थः । अच इरिति इः । संज्ञापूर्वकत्वाद्गुणो न भवति । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । द्युमतः । टुक्षु शब्दे । अस्मात्क्विपि तुगभावश्छांदसः । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं । मदेम । मदी हर्षे । व्यत्ययेन शप् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वं । ततो धातुस्वरः शिष्यते ॥

आ घ त्वावान्त्मनाप्तः स्तोतृभ्यो धृष्णवियानः । ऋणोरक्षं न चक्र्योः ॥१४॥

आ । घ । त्वाऽवान् । त्मना । आप्तः । स्तोतृऽभ्यः । धृष्णो इति । इयानः । ऋणोः । अक्षं । न । चक्र्योः ॥१४॥

हे धृष्णो धार्ष्ट्ययुक्तेंद्र त्वावान् त्वत्सदृशो देवताविशेषस्त्मनाप्तस्त्वदनुग्रहवशात्स्वयमेवाप्तः सन् इयानो ऽस्माभिर्याच्यमानः स्तोतृभ्यः स्तोतॄणामनुग्रहाय तदभीष्टमर्थं घ अवश्यमा ऋणोः । आनीय प्रक्षिपतु । तत्र दृष्टांतः । चक्र्योः रथस्य चक्रयोरक्षं न । यथाक्षं प्रक्षिपंति तद्वत् ॥ त्वावान् । वतुप्प्रकरणे युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानं । पा° ५. २. ३९. १. । इति वतुप् । प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य त्वादेशः । आ सर्वनाम्नः । पा° ६. ३. ९१. । इति दकारस्यात्वं । वतुपः पित्त्वादनुदात्तत्वे प्रातिपदिकस्वरः शिष्यते । त्मना । मंत्रेष्वाङ्यादेरात्मनः । पा° ६. ४. १४१. । इत्याकारलोपः । धृष्णो । ञिधृषा प्रागल्भ्ये । त्रसिगृधिधृषिक्षिपेः क्नुः । पा° ३. २. १४०. । आमंत्रितानुदात्तत्वं । इयानः । ईङ् गतौ । छंदसि लिट् । पा° ३. २. १०५. । तस्य लिटः कानज्वेति कानजादेशः । अचि श्नुधात्वित्यादिना । पा° ६. ४. ७७. । इयङादेशः । द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यमिति वचनादभ्यासो न क्रियते । चित इत्यंतोदात्तत्वं । ऋणोः । ऋण गतौ । लङि व्यत्ययेन तिपः सिपीतश्च । पा° ३. ४. १००. । इतीकारलोपः । तनादिकृञ्भ्य उः । पा° ३. १. ७९. । सार्वधातुकगुणः । बहुलं छंदस्यमाङ्योगेऽपीत्यडागमाभावः । विकरणस्वरेणोदात्तत्वं । अक्षं । अक्षस्यादेवनस्य । फि° २. १२. । इत्याद्युदात्तत्वं । चक्र्योः । चक्रियोः । अकारस्येकारश्छांदसः ॥

आ यद्दुवः शतक्रतवा कामं जरितॄणां । ऋणोरक्षं न शचीभिः ॥१५॥

आ । यत् । दुवः । शतक्रतो इति शतऽक्रतो । आ । कामं । जरितॄणां । ऋणोः । अक्षं । न । शचीभिः ॥१५॥

हे शतक्रतो इंद्र यद्दुवो धनं कामितार्थरूपमा स्तोतृभिराप्तव्यमस्ति तं कामं जरितॄणां स्तोतॄणामनुग्रहाय आ ऋणोः । आनीय प्रक्षिपसि । तत्र दृष्टांतः । शचीभिः कर्मभिः शकटोचितव्यापारविशेषैरक्षं न । यथाक्षं प्रक्षिपंति तद्वत् ॥ शचीभिः । शचीशब्दः शार्ङ्गरवादिङीनंत आद्युदात्तः । पा° ४. १. ७३. ॥ ॥ ३० ॥

शश्वदिंद्रः पोप्रुथद्भिर्जिगाय नानदद्भिः शाश्वसद्भिर्धनानि ।
स नो हिरण्यरथं दंसनावान्त्स नः सनिता सनये स नोऽदात् ॥१६॥

शश्वत् । इंद्रः । पोप्रुथत्ऽभिः । जिगाय । नानदत्ऽभिः । शाश्वसत्ऽभिः । धनानि ।
सः । नः । हिरण्यऽरथं । दंसनाऽवान् । सः । नः । सनिता । सनये । सः । नः । अदात् ॥१६॥

तुष्टेनेंद्रेण दत्तं हिरण्यरथमनया प्रतिजग्राह । तथा च ब्राह्मणं । तस्मा इंद्रः स्तूयमानः प्रीतो मनसा

हिरण्यरथं ददौ तमेतया प्रतीयाय शश्वदिंद्र इति । ऐ० ब्रा० ७. १६. । इति ॥ इंद्रः शश्वत्सर्वदा धनानि वैरिसंबंधीनि जिगाय । जितवान् । अश्वैरिति शेषः । कीदृशैः । पोप्रुथद्भिः घासभक्षणानंतरभाविनमोष्ठशब्दं कुर्वद्भिः नानदद्भिर्नादमास्यगतं हेषाशब्दं कुर्वद्भिः शाश्वसद्भिः पुनःपुनर्भृशं वा श्वसद्भिः । दंसनावान् कर्मवान् सनिता दाता स इंद्रो नोऽस्माकं सनये संभजनार्थं हिरण्यरथं सुवर्णेन निर्मितं रथमदात् । दत्तवान् । स नः स न इति द्विरुक्तिरादरार्था ॥ पोप्रुथद्भिः । प्रोथृ पर्याप्तौ । अस्माद्यङ्लुक्यभ्यासहलादिशेषौ । ह्रस्वः । पा० ७. ४. ५९. । इति ह्रस्वत्वे कृते गुणो यङ्लुकोः । पा० ७. ४. ८२. । इति गुणः । धातोरुपधाया उत्वं छांदसं । अस्माद्यङ्लुगंताच्छतर्यभ्यस्तानामादिरित्याद्युदात्तत्वं । जिगाय । जि जये । लिटो णलि वृद्धिः । द्विर्वचनेऽचीति स्थानिवद्भावाज्जि इत्यस्य द्विर्वचनं । सन्लिटोर्जेः । पा० ७. ३. ५७. । इत्यभ्यासादुत्तरस्य कुत्वं । नानदद्भिः । णद अव्यक्ते शब्दे । पूर्ववद्यङ्लुकि दीर्घोऽकित इत्यभ्यासस्य दीर्घः । पूर्ववदाद्युदात्तत्वं । शाश्वसद्भिः । श्वस प्राणने । अन्यत्सर्वं पूर्ववत् । हिरण्यरथं । समासस्येत्यंतोदात्तत्वं । अदात् । गातिस्थेति सिचो लुक् । दंसनावान् । दंसशब्द अप्नो दंसो वेष इति कर्मनामसु पठितः । दंस एव दंसना । तदस्यास्तीति मतुप् । दस्यतेऽनेनेति दंसना ॥

प्रातरनुवाक आश्विने क्रतौ गायत्रे छंदस्याश्विनाश्वावत्येति तृचः । अथाश्विन इति खंडेऽश्विना यज्वरीरिष आश्विनावश्वावत्या । आ० ४. १५. । इति सूचितं ॥

आश्विनावश्वावत्येषा यातं शवीरया । गोमद्दस्रा हिरण्यवत् ॥ १७ ॥

आ । अश्विनौ । अश्वऽवत्या । इषा । यातं । शवीरया । गोऽमत् । दस्रा । हिरण्यऽवत् ॥ १७ ॥

इंद्रेण प्रेरितः शुनःशेपोऽश्विनौ तुष्टाव । तथा च ब्राह्मणं । तमिंद्र उवाचाश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽश्विनौ तुष्टावात उत्तरेण तृचेन । ऐ० ब्रा० ७. १६. । इति ॥ हे अश्विनौ अश्वावत्या बहुभिरश्वैर्युक्तया शवीरया प्रेर्यमाणयेषान्नेन सह आ यातं । अस्मिन्कर्मण्यागच्छतं । हे दस्रा अश्विनौ युवयोः प्रसादाद्गोमद्बहुभिर्गोभिर्युक्तं हिरण्यवद्बहुना हिरण्येन युक्तमस्मदीयं गृहमस्त्विति शेषः ॥ अश्वावत्या । मंत्रे सोमाश्वेंद्रियविश्वदेवस्य मतौ । पा० ६. ३. १३१. । इति दीर्घत्वं । इषा । सावेकाच इति तृतीयाया उदात्तत्वं । यातं । या प्रापणे । लोटि तसस्तं । अदादित्वाच्छपो लुक् । शवीरया । शु गतौ । कॄशॄपॄकटिपटिशौटिभ्य ईरन् । उ० ४. ३०. । इतीरन्प्रत्ययो बहुलवचनादस्मादपि भवति । नित्त्वादाद्युदात्तत्वं ॥

समानयोजनो हि वाँ रथो दस्रावमर्त्यः । समुद्रे अश्विनेयते ॥ १८ ॥

समानऽयोजनः । हि । वां । रथः । दस्रौ । अमर्त्यः । समुद्रे । अश्विना । ईयते ॥ १८ ॥

हे दस्रावश्विनौ वां युवयोः संबंधी रथः समानयोजनस्तुल्ययोजनः । युवयोर्द्वयोरेकरथारूढत्वादुभयार्थं सकृदेव युज्यते । युक्तः स रथोऽमर्त्यो विनाशरहितः । अप्रतिहतगतिरित्यर्थः । अत एव हे अश्विनौ हि यस्मात्समुद्रेऽतरिक्ष ईयते गच्छति । अंतरिक्षनामसु पठितं समुद्रशब्दं यास्क एवं व्याचख्यौ । समुद्रः कस्मात्समुद्द्रवंत्यस्मादापः समभिद्रवंत्येनमापः संमोदंतेऽस्मिन्भूतानि समुदको भवति समुनत्तीति वा । नि० २. १०. । इति ॥ समानयोजनः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अमर्त्यः । अव्ययपूर्वपदप्रकृतिस्वरत्वं । ईयते । ईङ् गतौ । अनुदात्तोपदेशात्सार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वं । हि चेति निघातप्रतिषेधः ॥

न्य१घ्न्यस्य मूर्धनि चक्रं रथस्य येमथुः । परि द्यामन्यदीयते ॥ १९ ॥

नि । अघ्न्यस्य । मूर्धनि । चक्रं । रथस्य । येमथुः । परि । द्यां । अन्यत् । ईयते ॥ १९ ॥

हे अश्विनौ युवामघ्न्यस्य हंतुं विनाशयितुमशक्यस्य दृढस्य पर्वतस्य मूर्धन्युपरि चक्रं भवदीयरथसंबंध्येकं चक्रं नि येमथुः । नियमितवंतौ । अन्यच्चक्रं परि द्यां द्युलोकस्य परित ईयते । गच्छति ॥ अघ्न्यस्य । अहननमघ्नः ।

घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थं । पा० ३. ३. ५८. ४. । इति हंतेः कप्रत्ययः । अघ्नमर्हत्यघ्न्यः । छंदसि च । पा० ५. १. ६७. । इति यप्रत्ययः । प्रत्ययस्वरेणांतोदात्तत्वं । येमथुः । यम उपरमे । किति लिट्यत एकह्-ल्मध्ये । पा० ६. ४. १२०. । इत्येत्वाभ्यासलोपौ ॥

प्रातरनुवाक आश्विनशस्त्र उषस्ये क्रतौ गायत्रे छंदसि कस्त उष इति तृचः । अथोषस्य इति खंडे कस्त उष इति तिस्रः । आ० ४. १४. । इति सूचितं ॥

कस्त उषः कधप्रिये भुजे मर्तो अमर्त्ये । कं नक्षसे विभावरि ॥२०॥

कः । ते । उषः । कधऽप्रिये । भुजे । मर्तः । अमर्त्ये । कं । नक्षसे । विभाऽवरि ॥२०॥

अश्विभ्यां प्रेरितः शुनःशेप उषसं तुष्टाव । तथा च ब्राह्मणं । तमश्विना ऊचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स उषसं तुष्टावात उत्तरेण तृचेन तस्य ह स्मर्च्यृच्युक्तायां वि पाशो मुमुचे कनीय ऐक्ष्वाकस्योदरं भवत्यु-त्तमस्यामेवर्च्युक्तायां वि पाशो मुमुचेऽगद ऐक्ष्वाक आस । ऐ० ब्रा० ७. १६. । इति ॥ हे कधप्रिये स्तुतिप्रिये अमर्त्ये मरणरहित उष एतच्छब्दाभिधेय उषःकालाभिमानिनि देवते भुजे तव भोगाय मर्तो मनुष्यः को विद्यते । हे विभावरि विशेषप्रभावयुक्त उषो देवि कं पुरुषं नक्षसे । प्राप्नोषि । तवोचितं भोगं दातुं न कोऽपि मनुष्यः समर्थः । अत एव त्वं कमपि पुरुषं भोगापेक्षया न प्राप्नोषि । ईदृशस्तव महिमेत्यर्थः ॥ ते । तेमयावेक-वचनस्य । पा० ८. १. २२. । इति युष्मच्छब्दस्य तेआदेशः सर्वानुदात्तः । कधप्रिये । कथ वाक्यप्रबंधे । चुरादि-रदंतः । णावतो लोपस्य स्थानिवद्भावादुपधावृद्ध्यभावः । चिंतिपूजिकथिकुंबिचर्चश्च । पा० ३. ३. १०५. । इत्यङ्-प्रत्ययः । णेरनिटीति णिलोपः । ततष्टाप् । षष्ठीसमासे ङ्यापोः संज्ञाछंदसोर्बहुलं । पा० ६. ३. ६३. । इति ह्रस्वत्वं । थकारस्य धकारश्छांदसः । आमंत्रितानुदात्तत्वं । भुजे । भुज पालनाभ्यवहारयोः । संपदादिलक्षणः क्विप् । सावेकाच इति विभक्तेरुदात्तत्वं । मर्तः । असिहसीत्यादिना तन्प्रत्ययांत आद्युदात्तः । नक्षसे । णक्ष ष्ट्रक्ष णक्ष गतौ । विभावरि । भा दीप्तौ । विपूर्वादस्मादातो मनिन्क्वनिब्वनिपश्चेति वनिप् । वनो र च । पा० ४. १. ७. । इति ङीप् । तत्संनियोगेन नकारस्य रेफादेशः । अंबार्थनद्योर्ह्रस्वः । पा० ७. ३. १०७. । इति ह्रस्वत्वं ॥

वयं हि ते अमन्मह्यांतादा पराकात् । अश्वे न चित्रे अरुषि ॥२१॥

वयं । हि । ते । अमन्महि । आ । अंतात् । आ । पराकात् । अश्वे । न । चित्रे । अरुषि ॥२१॥

अश्वे व्यापनशीले चित्रे चायनीय अरुषि आरोचमान उषःकालाभिमानिनि देवते तव स्वरूपमांतात्स-मीपपर्यंतमा पराकाद्दूरपर्यंतं वयं मनुष्या नामन्महि । न बोद्धुं समर्थाः । हिशब्दः प्रसिद्धौ । देवतामहिम्नः पारावारयोरज्ञानमस्मासु प्रसिद्धमित्यर्थः ॥ अमन्महि । मन ज्ञाने । बहुलं छंदसीति विकरणस्य श्नो लुक् । [illegible]दुदात्तः । हि चेति निघातप्रतिषेधः । अश्वे । अशू व्याप्तौ । अशिप्रुषिलटि[illegible]ना क्वन्प्र-त्ययः । आमंत्रिताद्युदात्तत्वं ॥

त्वं त्येभिरा गहि वाजेभिर्दुहितर्दिवः । अस्मे रयिं नि धारय ॥२२॥

त्वं । त्येभिः । आ । गहि । वाजेभिः । दुहितः । दिवः । अस्मे इति । रयिं । नि । धारय ॥२२॥

हे दिवो दुहितर्द्युदेवतायाः पुत्रि उषो देवि त्येभिर्वाजेभिस्तैरन्नैः सह त्वमा गहि । अत्रागच्छ । अस्मे अस्मासु रयिं धनं नि धारय । नितरां स्थापय ॥ त्येभिः । बहुलं छंदसीति त्यदशब्दाद्भिस ऐसादेशाभावः । गहि । असकृदुक्तं । दुहितर्दिवः । परस्यापि दिव इत्यस्य दिवो दुहितरित्यन्वये सति पूर्ववत्त्वात्सुबामंत्रित इति परांगवद्भावेन षष्ठ्यामंत्रितकारकवचनस्य सर्वानुदात्तत्वं । यद्वा । कार्यकालं हि संज्ञापरिभाषं । परि० ३. । इति न्यायेन सुबामंत्रित इत्यस्यामंत्रितस्य चेत्याष्टमिकेन योगेनैकवाक्यत्वे सति परत्वात् परांगवद्भावे सति सर्वानुदात्तत्वं । क्वतस्वरयोः षष्ठ्यामंत्रितयोः पश्चाद्भावयो बहुलमिति व्यत्यस्तप्रयोगः । अस्मे । सुपां सुलुगिति सप्तम्याः शेआदेशः ॥ ॥३१॥ ॥६॥

सप्तमेऽनुवाके पंच सूक्तानि । तत्र त्वमग्ने प्रथम इति प्रथमं सूक्तमष्टादशर्चं । आंगिरसो हिरण्यस्तूप ऋषिः । अष्टमीषोडश्यष्टादश्यस्त्रिष्टुभः । शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः । अग्निर्देवता । तथा चानुक्रमणिका । त्वमग्ने द्व्यूना हिरण्यस्तूप आग्नेयं त्रिष्टुबंत्याष्टमीषोळश्यौ चेति ॥ प्रातरनुवाक आग्नेये क्रतावाश्विनशस्त्रे च त्वमग्ने प्रथम इति सूक्तं । अथैतस्या रात्रेरिति खंडे त्वमग्ने प्रथमो अंगिरा ऋषिर्नू चित्सहोजा अमृतो नि तुंदत इति । आ० ४. १३. । इति सूत्रितं ॥ अभिप्लवषडहस्य तृतीयेऽहन्याग्निमारुते शस्त्र इदं सूक्तं जातवेदस्यनिविद्धानीयं । तथा च तृतीयस्य त्र्यर्यमेति खंडे सूत्रितं । त्वमग्ने प्रथमो अंगिरा इत्याग्निमारुतं । आ० ७. ७. । इति ॥ वाजपेय आग्निमारुत एतत्सूक्तं जातवेदस्यं निविद्धानीयं तृतीयेनाभिप्लविकेनोक्तं तृतीयसवनं । आ० ९. ९. । इत्यतिदिष्टत्वात् ॥

त्वमंग्ने प्रथमो अंगिरा ऋषिर्देवो देवानांमभवः शिवः सखा ।
तव व्रते कवयो विद्मनापसोऽजायंत मरुतो भ्राजंदृष्टयः ॥१॥
त्वं । अग्ने । प्रथमः । अंगिराः । ऋषिः । देवः । देवानां । अभवः । शिवः । सखा ।
तव । व्रते । कवयः । विद्मनाऽअपसः । अजायंत । मरुतः । भ्राजत्ऽऋष्टयः ॥१॥

हे अग्ने त्वं प्रथम आद्य आंगिरसानामृषीणां सर्वेषां जनकत्वात् । तादृशोऽगिरोनामक ऋषिरभवः । तथा च ब्राह्मणं । येऽगारा आसंस्तेऽगिरसोऽभवन् । ऐ० ब्रा० ३. ३४. । इति । तथा स्वयं देवो भूत्वा देवानामन्येषां शिवः शोभनः सखाभवः । तव व्रते त्वदीये कर्मणि कवयो मेधाविनो विद्मनापसो ज्ञानेन व्याप्नुवाना ज्ञातकर्माणो वा भ्राजदृष्टयो दीप्यमानायुधा मरुतो मरुत्संज्ञका देवा अजायंत ॥ विद्मनापसः । विद ज्ञाने । विद्मो वेदनं । बहुलग्रहणादौणादिको मक्प्रत्ययः । तदस्यास्तीति पामादिलक्षणो नः । पा० ५. २. १००. । प्रत्ययस्वरेणांतोदात्तत्वं । विद्मनान्यपांसि येषां ते विद्मनापसः । पूर्वपदस्यान्येषामपि दृश्यत इति दृशिग्रहणादवग्रहसमयेऽपि दीर्घत्वं । अजायंत । जनी प्रादुर्भावे । तस्य श्यनि ज्ञाजनोर्जा । पा० ७. ३. ७९. । इति जादेशः । भ्राजदृष्टयः । भ्राजृ दीप्तौ । व्यत्ययेन शतृ । तस्य लसार्वधातुकानुदात्तत्वे धातुस्वरः । ऋषी गतावित्यस्मात् क्तिच्क्तौ च संज्ञायामिति क्तिजंत ऋष्टिशब्दः । ततो बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

त्वमंग्ने प्रथमो अंगिरस्तमः कविर्देवानां परि भूषसि व्रतं ।
विभुर्विश्वंस्मै भुवंनाय मेधिरो द्विमाता शयुः कतिधा चिदायवें ॥२॥
त्वं । अग्ने । प्रथमः । अंगिरःऽतमः । कविः । देवानां । परि । भूषसि । व्रतं ।
विऽभुः । विश्वंस्मै । भुवंनाय । मेधिरः । द्विऽमाता । शयुः । कतिधा । चित् । आयवें ॥२॥

हे अग्ने त्वं प्रथम आद्य अंगिरस्तमोऽतिशयेनांगिरा भूत्वा कविर्मेधावी सन् देवानामन्येषां व्रतं कर्म परि भूषसि । परितोऽलंकरोषि । कीदृशस्त्वं । विश्वस्मै भुवनाय समस्तलोकानुग्रहार्थं विभुर्बहुविधः । आहवनीयाद्यनेकरूपधारीत्यर्थः । मेधिरो मेधावान् द्विमाता द्वयोररण्योरुत्पन्नः । यद्वा । द्वयोर्लोकयोर्निर्माता । आयवे मनुष्यार्थं कतिधा चित् कतिभिः प्रकारैः सर्वत्र शयुः शयानः । तत्तन्मनुष्यगृहेऽवस्थितस्य तव प्रकारा इयंत इति न केनापि ज्ञायत इत्यर्थः ॥ भूषसि । भूष अलंकारे । भौवादिकः । विभुः । विप्रसंभ्यो ड्वसंज्ञायां । पा० ३. २. १८०. । इति विपूर्वाद्भवतेर्डुप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वं । भुवनाय । भूसूधूभ्रस्जिभ्यश्छंदसि । उ० २. ८०. । इति क्युन् । योरनादेशे नित्स्वरेणाद्युदात्तत्वं । मेधिरः । मेधृ संगमे च । अस्माद्बाहुलक इरन्प्रत्ययः । नित्स्वरः । द्विमाता । द्वौ मातरौ यस्यासौ द्विमाता । नद्यृतश्च । पा० ५. ४. १५३. । इति कप्प्रत्ययो न भवति मातृमातृकयोर्भेदेनोपादानान्नद्यृतश्चेति कबपि विभाष्यत इति तस्य मातृशब्दविषये पाक्षिकत्वोक्तिः । त्रिचक्रादित्वादुत्तरपदांतोदात्तत्वं । यद्वा । द्वयोर्माता द्विमाता । समासस्येत्यंतोदात्तत्वं । शयुः । शीङ् स्वप्ने । भृमृशीत्यादिना । उ० १. ७. । उप्रत्ययः । कतिधा । डत्यंतस्य किंशब्दस्य बहुगणवतुडति संख्या । पा० १. १. २३. ।

इति संख्यासंज्ञायां संख्याया विधार्थे धा । पा॰ ५. ३. ४२. । इति धाप्रत्ययः । आयवे । छंदसीणः । उ॰ १. २ । इत्यैतेरुणप्रत्ययः ॥

त्वम॑ग्ने प्रथ॒मो मा॑त॒रिश्व॑न आ॒विर्भ॑व सुक्रतू॒या वि॒वस्व॑ते ।
अरे॑जेतां॒ रोद॑सी होतृ॒वूर्ये॑ऽसघ्नोर्भा॒रमय॑जो म॒हो व॑सो ॥३॥

त्वं । अ॒ग्ने॒ । प्र॒थ॒मः । मा॒त॒रिश्व॑ने । आ॒विः । भ॒व॒ । सु॒क्र॒तु॒ऽया । वि॒वस्व॑ते ।
अरे॑जेतां । रोद॑सी॒ इति॑ । हो॒तृ॒ऽवूर्ये॑ । असघ्नोः । भा॒रं । अय॑जः । म॒हः । व॒सो॒ इति॑ ॥३॥

हे अग्ने त्वं मातरिश्वने प्रथमो मुख्यो भूत्वा वर्तसे । अग्निर्वायुरादित्य इति वाक्यपेक्षया सर्वत्र मुख्यत्वावगमात् । तादृशस्त्वं सुक्रतूया शोभनकर्मेच्छया विवस्वते परिचरते यजमानायाविर्भव । प्रकटो भव । तव सामर्थ्यं दृष्ट्वा रोदसी द्यावापृथिव्यावरेजेतां । अकंपेतां । भ्यसते रेजत इति भयवेपनयोः । नि॰ ३. २१. । इति यास्कः । होतृवूर्ये होतृवरणयुक्ते कर्मणि भारं भरणमसघ्नोः । ऊढवानसि । हे वसो निवासहेतो वह्ने महः पूज्यान्देवानयजः । इष्टवानसि ॥ मातरिश्वने । निर्माणहेतुत्वान्मातांतरिक्षं । तत्र श्वसिति प्राणितीति मातरिश्वा वायुः । श्वन्नुक्षन्नित्यादौ । उ॰ १. १५८. । मातरिश्वन्शब्दः कन्प्रत्ययांतो निपातितः । सुक्रतूया । सुक्रतुमात्मन इच्छति । सुप आत्मनः क्यच् । अकृत्सार्वधातुकयोरिति दीर्घः । पा॰ ७. ४. २५. । क्यजंतस्य धातुसंज्ञायां अ प्रत्ययात् । पा॰ ३. ३. १०२. । इति भावेऽकारप्रत्ययः । ततष्टाप् । सुपां सुलुगिति तृतीयैकवचनस्य डादेशः । टिलोप उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वं । संहितायामन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घः । विवस्वते । विवासतिः परिचरणकर्मा । अस्मात्संपदादिलक्षणः क्विप् । व्यत्ययेनोपधाह्रस्वत्वं । तदस्यास्तीति मतुप् । मादुपधाया इति मतोर्वत्वं । तसौ मत्वर्थ इति भत्वेन पदत्वाभावाद्रुत्वाभावः । मतुपः पित्त्वादनुदात्तत्वं । धातुस्वरः शिष्यते । रोदसी । वा छंदसीति पूर्वसवर्णदीर्घत्वं । होतृवूर्ये । होत्रा व्रियत इति होतृवूर्यो यज्ञः । वृञ् वरणे । बहुलग्रहणादौणादिकः क्यप् । उदोष्ठ्यपूर्वस्येत्युत्वं । हलि चेति दीर्घः । यद्वा । वृञ् वरण इत्यस्मादेतिस्तुशास्वित्यादिना । पा॰ ३. १. १०९. । क्यप् । अनित्यमागमशासनमिति तुगभावः । अकृत्सार्वधातुकयोरिति दीर्घत्वे पूर्ववदुत्वदीर्घौ । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते । असघ्नोः । षघ हिंसायामत्र तु वहनार्थः । स्वादिभ्यः श्नुः । पादादित्वादनिघातः । अयजः । भारमित्यस्य पूर्वपदस्य वाक्यांतरगतत्वात्तदपेक्षयास्य निघातो न भवति । समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः । पा॰ ८. १. १८. ५. । इति वचनात् । महः । मह पूजायां । क्विब्चेति क्विप् । सुपां सुपो भवंतीति शसो ङसादेशः । साविकाच इति तस्योदात्तत्वं । यद्वा । शसि महच्छब्दस्याच्छब्दलोपश्छांदसः । बृहन्महतोरुपसंख्यानमिति शस उदात्तत्वं ॥

त्वम॑ग्ने॒ मन॑वे॒ द्याम॑वाशयः पु॒रूर॑वसे सु॒कृते॑ सु॒कृत्त॑रः ।
श्वा॒त्रेण॒ यत्पि॒त्रोर्मुच्य॑से॒ पर्या त्वा॒ पूर्व॑मनय॒न्नाप॑रं॒ पुन॑ः ॥४॥

त्वं । अ॒ग्ने॒ । मन॑वे । द्यां । अ॒वा॒श॒यः॒ । पु॒रूर॑वसे । सु॒ऽकृते॑ । सु॒कृत्ऽत॑रः ।
श्वा॒त्रेण॑ । यत् । पि॒त्रोः । मुच्य॑से । परि॑ । आ । त्वा॒ । पूर्वं॑ । अ॒न॒य॒न् । आ । अप॑रं । पुन॒रिति॑ ॥४॥

हे अग्ने त्वं मनवे मनोरनुग्रहार्थं द्यां द्युलोकमवाशयः । शब्दितवानसि । पुण्यकर्मभिः साध्यो द्युलोक इति प्रकटितवानसि । सुकृते तव परिचरणं कुर्वते पुरूरवस एतन्नामकस्य राज्ञोऽनुग्रहार्थं सुकृत्तरोऽतिशयेन शोभनफलकार्यभूः । यद्यदा पित्रोररण्योः श्वात्रेण क्षिप्रमथनेन परि मुच्यसे परितो मुक्तो भवसि । उत्पद्यस इत्यर्थः । तदानीं त्वा अरण्योरुत्पन्नं त्वां पूर्वं वेदेः पूर्वदेशमानयन् । आहवनीयत्वेन स्थापितवंतः । पुनः पश्चादपरं पश्चिमदेशमानयन् । गार्हपत्यरूपेण प्रापितवंतः । आहवनीयकर्मानुष्ठानादूर्ध्वं गार्हपत्यरूपेण धारितवंत इत्यर्थः ॥ अवाशयः । वाशृ शब्दे । पुरूरवसे । पुरु रौतीति पुरूरवाः । रु शब्दे । अस्मादौणादिकेऽसुनि पुरसि

च पुरूरवाः। उ॰ ४.२३१। इति पूर्वपदस्य दीर्घो निपात्यते। सुह्रते। सुकर्मपापमंत्रपुण्येषु कृञः। पा॰ ३.२.८९। इति क्विप्। ततस्तुक्। पित्वेः। उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं। मुच्यसे। अदुपदेशाल्लसार्वधातुकानुदात्तत्वं। यद्यपि सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वचनाद्विकरणस्वरः सति शिष्टोऽपि लसार्वधातुकस्वरस्य बाधको न भवति तथापि धातुस्वरं बाधत एव धातुस्वरं आस्वर इत्युक्तत्वात्। अतो यक एव स्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वं ॥

त्वमग्ने वृषभः पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः ।
य आहुतिं परि वेदा वषट्कृतिमेकायुरग्रे विश आविवाससि ॥५॥
त्वं। अग्ने। वृषभः। पुष्टिऽवर्धनः। उद्यतऽस्रुचे। भवसि। श्रवाय्यः।
यः। आऽहुतिं। परि। वेद। वषट्ऽकृतिं। एकऽआयुः। अग्रे। विशः। आऽविवाससि ॥५॥

हे अग्ने त्वं वृषभः कामानां वर्षिता पुष्टिवर्धनो यजमानस्य धनादिपोषाभिवृद्धिहेतुः उद्यतस्रुचे उद्धृतया स्रुचा युक्ताय यजमानाय तदनुग्रहार्थं श्रवाय्यो मंत्रैः श्रवणीयो भवसि। यो यजमानो वषट्कृतिं वषट्कारयुक्तामाहुतिं परि वेद परितो जानाति। समर्पयतीत्यर्थः। एकायुर्मुख्यान्नस्त्वमग्रे प्रथमं तं यजमानं विशस्तदनुकूलाः प्रजा आविवाससि। सर्वतः प्रकाशयसि ॥ पुष्टिवर्धनः। वृधु वृद्धौ। अस्माण्णिजंताल्ल्युः नंद्यादित्वात् ल्युः। लित्स्वरेणोत्तरपदस्याद्युदात्तत्वं। कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। उद्यतस्रुचे। यम उपरमे। अस्मादुत्पूर्वान्निष्ठेति क्तप्रत्यय अनुदात्तोपदेशेत्यादिनानुनासिकलोपः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। उद्यता स्रुग्येनेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। वेद। द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं ॥ ॥३२॥

त्वमग्ने वृजिनवर्तनिं नरं सक्मन्पिपर्षि विदथे विचर्षणे ।
यः शूरसाता परितक्म्ये धने दभ्रेभिश्चित्समृता हंसि भूयसः ॥६॥
त्वं। अग्ने। वृजिनऽवर्तनिं। नरं। सक्मन्। पिपर्षि। विदथे। विऽचर्षणे।
यः। शूरऽसाता। परिऽतक्म्ये। धने। दभ्रेभिः। चित्। संऽऋता। हंसि। भूयसः ॥६॥

हे विचर्षणे विशिष्टद्रष्टरग्ने त्वं वृजिनवर्तनिं विलुप्तमार्गं सदाचाररहितं नरं पुरुषं सक्मन् सचनीये समवेतुं योग्ये विदथे कर्मणि पिपर्षि। पालयसि पूरयसि वा। सत्कर्मानुष्ठानयुक्तं करोषीत्यर्थः। यस्त्वं परितक्म्ये परितो गंतव्ये धने धनवच्छूराणां प्रियतमे शूरसाता शूरैः संभजनीये युद्धे दभ्रेभिश्चिदल्पैरपि शौर्यरहितैः पुरुषैः। दभ्रमर्भकमित्यल्पस्य। नि॰ ३.२०। इति यास्कः। समृता सम्यक् योद्धुं प्राप्ते सति तदनुग्रहार्थं भूयसः प्रौढान्प्रतिपक्षिणः शत्रून् हंसि मारयसि। ईदृशस्तव महिमेत्यर्थः ॥ वृजिनवर्तनिं। वृजिना वर्तनिर्यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। सक्मन्। षच समवाये। अन्येभ्योऽपि दृश्यंत इति मनिन्। नेड्वशि कृतीतीट्प्रतिषेधः। न्यंक्वादित्वात्। पा॰ ७.३.५३। कुत्वं। सुपां सुलुगिति सप्तम्या लुक्। पिपर्षि। पॄ पालनपूरणयोः। सिपि श्लौ द्विर्भावह्रस्वोरदलहलादिशेषाः। अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं। शूरसाता। शु गतौ। शुसिचिमीनां दीर्घश्च। उ॰ २.२५। इति शूरशब्दो रन्प्रत्ययांत आद्युदात्तः। वन षण संभक्तावित्यस्मात् क्तिन्नंतः सातिशब्दः। जनसनखनां सञ्झलोरित्यात्वं। शूराणां सातिः संभजनमत्रेति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। सुपां सुलुगिति सप्तम्या डादेशः। परितक्म्ये। तक हसने। अस्मादौणादिको भावे मक्। तदर्हतीति छंदसि च। पा॰ ५.१.६७। इति यः। प्रादयो गताद्यर्थे प्रथमयेति समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं। दभ्रेभिः। दाभु दंभे। स्फायितंचीत्यादिना रक्। बहुलं छंदसीति भिस ऐसादेशाभावः। समृता। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। पूर्ववदाकारः। हंसि। हंतेः सिपि नश्चापदांतस्य झलि। पा॰ ८.३.२४। इत्यनुस्वारः। यद्वृत्तयोगादनिघातः। भूयसः। बहोर्लोपो भू च बहोः। पा॰ ६.४.१५८। इति बहुशब्दादुत्तरस्येयसुन ईकारलोपो बहोर्भूभावश्च। नित्त्वादाद्युदात्तत्वं ॥

त्वं तम॑ग्ने अमृत॒त्व उ॑त्त॒मे मर्तं॑ दधासि॒ श्रव॑से दि॒वेदि॑वे ।
यस्ता॑तृषा॒ण उ॒भया॑य॒ जन्म॑ने॒ मयः॑ कृ॒णोषि॒ प्रय॒ आ च॑ सू॒रये॑ ॥७॥
त्वं । तं । अ॒ग्ने॒ । अ॒मृ॒त॒ऽत्वे । उ॒त्ऽत॒मे । मर्तं॑ । द॒धा॒सि॒ । श्रव॑से । दि॒वेऽदि॑वे ।
यः । त॒तृ॒षा॒णः । उ॒भया॑य । जन्म॑ने । मयः॑ । कृ॒णोषि॑ । प्रयः॑ । आ । च॒ । सू॒रये॑ ॥७॥

हे अग्ने त्वं तं मर्तं तथाविधं त्वत्सेविनं मनुष्यं दिवे दिवे प्रतिदिनं श्रवसेऽन्नार्थमुत्तमेऽमृतत्व उत्कृष्टे मरणरहिते पदे दधासि । धारयसि । यो यजमान उभयाय जन्मने द्विविधजन्मार्थं । द्विपदां चतुष्पदां लाभायेत्यर्थः । ततृषाणोऽतिशयेन तृष्णायुक्तो भवति तस्मै सूरयेऽभिज्ञाय यजमानाय मयः सुखं । यद्वै सुखं तन्मय इति श्रुत्यंतरात् । प्रयश्चान्नमप्या कृणोषि । सर्वतः करोषि ॥ ततृषाणः । ञितृषा पिपासायां । लिटः कानच् । चित्त्वादंतोदात्तत्वं । संहितायां दीर्घश्छांदसः । कृणोषि । कृवि हिंसाकरणयोश्च । धिन्विकृण्व्योरचे-त्युप्रत्ययः । चादिलोपे विभाषेति निघातप्रतिषेधः ॥

त्वं नो॑ अग्ने स॒नये॒ धना॑नां य॒शसं॑ का॒रुं कृ॑णुहि॒ स्तवा॑नः ।
ऋ॒ध्याम॒ कर्मा॒पसा॒ नवे॑न दे॒वैर्द्या॑वापृथिवी॒ प्राव॑तं नः ॥८॥
त्वं । नः॒ । अ॒ग्ने॒ । स॒नये॑ । धना॑नां । य॒शसं॑ । का॒रुं । कृ॒णु॒हि॒ । स्तवा॑नः ।
ऋ॒ध्याम॑ । कर्म॑ । अ॒पसा॑ । नवे॑न । दे॒वैः । द्या॒वा॒पृ॒थि॒वी॒ इति॑ । प्र । अ॒व॒त॒म् । नः॒ ॥८॥

हे अग्ने स्तवानः स्तूयमानस्त्वं नोऽस्माकं धनानां सनये दानार्थं यशसं यशोयुक्तं कारुं कर्मणां कर्तारं पुत्रं कृणुहि । कुरु । नवेन नूतनेनापसा प्राप्तेन त्वद्दत्तेन पुत्रेण कर्म यागदा[illegible]ऋध्याम । वर्धयाम । हे द्यावा-पृथिवी उभे देवते देवैरन्यैः सह नोऽस्मान्प्रावतं । प्रकर्षेण रक्षतं ॥ यशसं । अर्शआदित्वादच्प्रत्ययः । व्यत्ययेन प्रत्ययात्पूर्वस्योदात्तत्वं । यद्वा । सर्व[illegible]केभ्यः क्विब्वक्तव्यः । म॰ ३. १. ११. ३. । इति यशसशब्दात् क्विप् । तस्य प्रत्ययांतस्य सनाद्यंतत्वाद्धातुसंज्ञायां क्विचेति क्विप्प्रत्ययांतधातोः सति शिष्टत्वाद्धातोरित्यंतोदात्तत्वं । कृणुहि । उतश्च प्रत्ययाच्छंदोवावचनं । पा॰ ६. ४. १०६. १. । इति हेर्लुगभावः । स्तवानः । सम्यानच् स्तुवः । उ॰ २. ८६. । इति बहुलवचनात्केवलस्यापि स्तौतेरानच्प्रत्ययः । वृषादित्वादाद्युदात्तत्वं । ऋध्याम । ऋधु वृद्धौ । बहुलं छंदसीति विकरणस्य लुक् । यासुट उदात्तत्वं । द्यावापृथिवी । दिवो द्यावा । पा॰ ६. ३. २९. । इति द्यावादेशः । आमंत्रितानुदात्तत्वं ॥

त्वं नो॑ अग्ने पि॒त्रोरु॒पस्थ॒ आ दे॒वो दे॒वेष्व॑नवद्य॒ जागृ॑विः ।
त॒नू॒कृद्बो॑धि॒ प्रम॑तिश्च का॒रवे॒ त्वं क॑ल्याण॒ वसु॒ विश्व॒मोपि॑षे ॥९॥
त्वं । नः॒ । अ॒ग्ने॒ । पि॒त्रोः । उ॒पऽस्थे॑ । आ । दे॒वः । दे॒वेषु॑ । अ॒न॒व॒द्य॒ । जागृ॑विः ।
त॒नू॒ऽकृत् । बो॒धि॒ । प्रऽम॑तिः । च॒ । का॒रवे॑ । त्वं । क॒ल्या॒ण॒ । वसु॑ । विश्वं॑ । आ । ऊ॒पि॒षे॒ ॥९॥

हे अनवद्य दोषरहिताग्ने देवेषु सर्वेषु मध्ये जागृविर्जागरूकस्त्वं पित्रोर्मातापितृरूपयोर्द्यावापृथिव्योरुपस्थे समीपस्थाने वर्तमानः सन्नोऽस्माकं तनूकृत् पु[illegible] भूत्वा बोधि । बुध्यस्व । अनुगृहाणेत्यर्थः । तथा कारवे कर्मकर्त्रे यजमानाय प्रमतिश्चानुग्रहरूपप्रकृष्टमतियुक्तश्च भवेति शेषः । हे कल्याण मंगलरूपाग्ने त्वं विश्वं वसु सर्वमपि धनमोपिषे । [illegible]जमानार्थमावपसि ॥ उपस्थे । सुपि स्थः । पा॰ ३. २. ४. । इति तिष्ठतेः कः प्रत्ययः । आतो लोप इटि [illegible]त्याकारलोपः । मरुद्वृधादीनां छंदस्युपसंख्यानं । पा॰ ६. २. १०६. २. । इति पूर्व[illegible] । जागृविः । जागृ निद्राक्षये । जॄशॄस्तॄजागृभ्यः क्विन् । उ॰ ४. ५४. । इति क्विन् । नित्त्वादाद्युदात्तत्वं । बोधि । बुध अवगमने । बहुलं छंदसीति शपो लुक् । वा छंदसीति हेरपित्त्वस्य विकल्पितत्वेन पित्त्वादङित्त्वे सत्यङितश्च

। पा॰ ६. ४. १०३. । इति हेर्धिरादेशः । लघूपधगुणः । धातोरंत्यलोपश्छांदसः । प्रमतिः । मन ज्ञाने । क्तिन्यनुदात्तोपदेशेत्यादिनानुनासिकलोपः । प्रकृष्टा मतिर्यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । ऊपिषे । डुवप् बीजतंतुसंताने । छांदसे लिटि थासः से । वचिस्वपीत्यादिना संप्रसारणपरपूर्वत्वे । द्विर्भावहलादिशेषौ । क्रादिनियमादिट् ॥

त्वमंग्ने प्रमंतिस्त्वं पितासिं नस्त्वं वंयस्कृत्तवं जामयों वयं ।
सं त्वा रायः शतिनः सं संहस्रिणः सुवीरं यंति व्रतपामंदाभ्य ॥ १० ॥
त्वं । अग्ने । प्रऽमंतिः । त्वं । पिता । असि । नः । त्वं । वयःऽकृत् । तवं । जामयः । वयं ।
सं । त्वा । रायः । शतिनः । सं । सहस्रिणः । सुऽवीरं । यंति । व्रतऽपां । अदाभ्य ॥ १० ॥

हे अग्ने त्वं प्रमतिरस्मत्[illegible]तियुक्तोऽसि । तथा त्वं नोऽस्माकं पिता पालकोऽसि । तथा त्वं वयस्कृत् । आयुष्यप्रदोऽसि । वयमनुष्ठातारस्तव जामयो बंधवः । हे अदाभ्य केनाप्यहिंसनीयाग्ने सुवीरं शोभनपुरुषयुक्तं व्रतपां कर्मणः पालकं त्वां शतिनः शतसंख्यायुक्ता रायो धनानि सं यंति । सम्यक् प्राप्नुवंति । तथा सहस्रिणः सहस्रसंख्याका रायः सं यंति ॥ सुवीरं । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वे प्राप्ते वीरवीर्यौ च । पा॰ ६. २. १२०. । इत्युत्तरपदाद्युदात्तत्वं । अदाभ्य । दभिः प्रकृत्यंतरमस्तीति केचिदाहुः । दभेश्चेति वक्तव्यं । पा॰ ३. १. १२४. ३. । इति ण्यत् ॥ ॥ ३३ ॥

त्वामंग्ने प्रथममायुमायवें देवा अंकृण्वन्नहुंषस्य विश्पतिं ।
इळांमकृण्वन्मनुंषस्य शासंनीं पितुर्यत्पुत्रो ममंकस्य जायंते ॥ ११ ॥
त्वां । अग्ने । प्रथमं । आयुं । आयवें । देवाः । अकृण्वन् । नहुंषस्य । विश्पतिं ।
इळां । अकृण्वन् । मनुंषस्य । शासंनीं । पितुः । यत् । पुत्रः । ममंकस्य । जायंते ॥ ११ ॥

हे अग्ने त्वां प्रथमं पुरा देवा आयव आयोर्मनुष्यरूपस्य नहुषस्यैतन्नामकराजविशेषस्यायुं मनुष्यरूपं विश्पतिं सेनापतिमकृण्वन् । कृतवंतः । तथा मनुषस्य मनोरिळामेतन्नामधेयां पुत्रीं शासनीं धर्मोपदेशकर्त्रीमकृण्वन् । कृतवंतः । तथा च तैत्तिरीयैराम्नायते । इडा वै मानवी यज्ञानुकाशिन्यासीत् । तै॰ ब्रा॰ १. १. ४. ४. । इति । वाजसनेयिनोऽप्येवमामनंति । प्रयाजानुयाजानां मध्ये मामवकल्पय मया सर्वानवाप्स्यसि कामानिति सा मनुमन्वशादिति यत् शादिति । यद्यदा ममकस्य मदीयस्य हिरण्यस्तूपसंबंधिनो यः पितांगिरास्तस्य पितुः पुत्रो जायते । तदानीं हे अग्ने त्वमेव पुत्ररूप आसीरिति शेषः ॥ आयवे । षष्ठ्यर्थे चतुर्थी वक्तव्या । म॰ २. ३. ३२. १. । इति चतुर्थी । नहुषस्य । णह बंधने । नहिकलिहन्यर्तिलसिभ्य उषच् । उ॰ ४. ७५. । वृषादित्वादाद्युदात्तत्वं । विश्पतिं । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । मनुषस्य । मनेर्णिदित्युषच् । णित्वादाद्युदात्तत्वं । शासनीं । शिष्यतेऽनयेति शासनी । करणाधिकरणयोश्चेति ल्युट् । टिड्ढाणञित्यादिना । पा॰ ४. १. १५. । ङीप् । लित्स्वरेणाद्युदात्तत्वं । ममकस्य । ममेदमित्यर्थे तस्येदं । पा॰ ४. ३. १२०. । इत्यणि तवकममकावेकवचने । पा॰ ४. ३. ३. । इत्य[illegible]स्य ममकादेशः । संज्ञापूर्वको विधिरनित्य इति वृद्ध्यभावः । व्यत्ययेनाद्युदात्तत्वं ॥

त्वं नों अग्ने तवं देव पायुभिर्मघोनों रक्ष तन्वंश्च वंद्य ।
त्राता तोकस्य तनंये गवांमस्यनिंमेषं रक्षंमाणस्तवं व्रते ॥ १२ ॥
त्वं । नः । अग्ने । तवं । देव । पायुऽभिः । मघोनः । रक्ष । तन्वः । च । वंद्य ।
त्राता । तोकस्य । तनंये । गवां । असि । अनिंऽमेषं । रक्षंमाणः । तवं । व्रते ॥ १२ ॥

हे वंद्य वंदनीयाग्ने देव त्वं तव पायुभिस्त्वदीयैः पालनैर्मघोनो धनयुक्तान्नोऽस्मान् रक्ष। तथा तन्वश्च तनूः पुत्रदेहानपि रक्ष। तोकस्यास्मदीयस्य पुत्रस्य यस्तनयोऽस्मत्पौत्रादिस्तव व्रते त्वदीये कर्मण्यनिमेषं निरंतरं रक्षमाणः सावधानो वर्तते तस्मिन्या गावः संति तासां गवां त्राता रक्षकोऽसि। ईदृशस्य तवास्मद्रक्षणे किमु वक्तव्यमित्यर्थः॥ मघोनः। शसि श्वयुवमघोनामतद्धिते। पा॰ ६. ४. १३३.। इति संप्रसारणं। तन्वः। सुपां सुपो भवंतीति शसो जसादेशः। पूर्वसवर्णदीर्घस्य दीर्घाज्जसि चेति प्रतिषेधः। उदात्तस्वरितयोर्यणः इति स्वरितत्वं। शसि ह्युदात्तयणो हल्पूर्वादिति विभक्त्युदात्तत्वं स्यात्॥

त्वमग्ने यज्यवे पायुरंतरोऽनिषंगाय चतुरक्ष इध्यसे।
यो रातहव्योऽवृकाय धायसे कीरेश्चिन्मंत्रं मनसा वनोषि तं॥१३॥
त्वं। अग्ने। यज्यवे। पायुः। अंतरः। अनिषंगाय। चतुःऽअक्षः। इध्यसे।
यः। रातऽहव्यः। अवृकाय। धायसे। कीरेः। चित्। मंत्रं। मनसा। वनोषि। तं॥१३॥

हे अग्ने त्वं यज्यवे यज्योर्यजमानस्य पायुः पालकः। अंतरः समीपवर्ती सन् अनिषंगाय रक्षोभिरसंबद्धाय यज्ञाय चतुरक्षो दिक्चतुष्टयेऽपींद्रियस्थानीयज्वालायुक्त इध्यसे। दीप्यसे। अवृकायाहिंसकाय धायसे पोषकाय तुभ्यं रातहव्यो दत्तहविष्को यो यजमानोऽस्ति कीरेश्चित्स्तोतुरेव सतस्तस्य संबंधिनं मंत्रं त्वदीयस्तोत्ररूपं मनसा त्वदीयेन चित्तेन वनोषि। याचसि॥ यज्यवे। यजिमनिशुंधीत्यादिना। उ॰ ३. २०.। यजतेर्युप्रत्ययः। पायुः। छवापाजीत्यादिना उण्। आतो युक् चिण्कृतोः। पा॰ ७. ३. ३३.। इति युगागमः। अनिषंगाय। षन्ज संगे। न विद्यते निषंगोऽस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। चतुरक्षः। चत्वार्यक्षीणि ज्वालारूपाणि यस्यासौ चतुरक्षः। बहुव्रीहौ सक्थ्यक्ष्णोः। पा॰ ५. ४. ११३.। इति समासांतः षच्प्रत्ययः। चित इत्यंतोदात्तत्वं। धायसे। वहिहाधाञ्भ्यश्छंदसीत्यसुन्। णिदित्यनुवृत्तेरातो युक् चिण्कृतोरिति युगागमः। कीरेः। कॄत संशब्दने। अस्मादस्यंतादच इरितीप्रत्यये णिलोपे धातोरंत्यलोपश्छांदसः। मंत्रं। मत्रि गुप्तभाषणे। पचाद्यचि वृषादिषु पाठादाद्युदात्तत्वं। वनोषि। वनु याचने। तनादिकृञ्भ्य उः। प्रत्ययस्वरः॥

त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषि तत्।
आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो विदुष्टरः॥१४॥
त्वं। अग्ने। उरुऽशंसाय। वाघते। स्पार्हं। यत्। रेक्णः। परमं। वनोषि। तत्।
आध्रस्य। चित्। प्रऽमतिः। उच्यसे। पिता। प्र। पाकं। शास्सि। प्र। दिशः।
विदुःऽतरः॥१४॥

हे अग्ने त्वमुरुशंसाय बहुभिः स्तोतव्याय वाघते ऋत्विजे तदुपकारार्थं स्पार्हं स्पृहणीयं परममुत्तमं यद्रेक्णो धनमस्ति तद्धनं वनोषि। अनुष्ठाता लभतामिति कामयसे। तथा त्वमाध्रस्य चित् सर्वतो धारणीयस्य पोषणीयस्य दुर्बलस्य यजमानस्यापि प्रमतिः प्रकृष्टबुद्धियुक्तः पिता पालक इत्यभिज्ञैरुच्यसे। तथा विदुष्टरोऽतिशयेनाभिज्ञस्त्वं पाकं शिशुं। पोतः पाकोऽर्भको डिंभः। अम॰ २. ५. ३८.। इत्यभिधानात्। यास्कोऽप्येवमाह। पाकः पक्तव्यो भवति। नि॰ ३. १२.। तथाविधं यजमानं प्र शास्सि। प्रकर्षेणानुशिष्टं करोषि। तथा दिशः प्राच्यादिकाः प्र शास्सि। त्वदीयशासनाभावेऽनुष्ठातॄणां विभ्रमः स्यात्। तथा च श्रूयते। देवा वै देवयजनमध्यवसाय दिशो न प्राजानन्। तै॰ सं॰ ६. १. ५. १.। इति। स भ्रमो दक्षिणादिग्गतोऽग्निना निवर्तते। तदपि तत्रैवाम्नातं। पथ्यां स्वस्तिमयजन् प्राचीमेव तया दिशं प्राजानन्नग्निना दक्षिणेति। ऐतरेयिणापि तथैवाम्नातं। अथो एतं वरमवृणीत मयैव प्राचीं दिशं प्रजानाथाग्निना दक्षिणां। ऐ॰ ब्रा॰ १. ७.। इति॥ उरुशंसाय। शन्सु स्तुतौ। शस्यत इति शंसः। कर्मणि घञ्। ञित्स्वरेणाद्युदात्तत्वं। बहुव्रीहौ प्रकृत्या पूर्वपदं। इति पूर्वपदप्रकृतिस्वरत्वेन

स एव शिष्यते। स्पार्हं। स्पृहासंबंधि। तस्येदमित्यण्। रेक्णः। रिचिर् विरेचने। रिचेर्धने घिच्च। उ० ४. १९८.। इत्यसुन्। चकारात्नुडागमः। चजोः कु घिण्यतोः। पा० ७. ३. ५२.। इति कुत्वं। आधस्य। धे तृप्तौ। आदेच उपदेशेऽशितीत्यात्वं। आतश्चोपसर्गे। पा० ३. १. १३६.। इति कप्रत्ययः। शास्सि। शासु अनुशिष्टौ। अदादित्वाच्छपो लुक्। सिपः पित्त्वादनुदात्तत्वे धातुस्वरः। पाकं च प्रशास्सि दिशश्च प्रशास्सीत्यच चार्थो गम्यते। अतश्चादिलोपे विभाषेति प्रथमा तिङ्विभक्तिर्न निहन्यते। विदुष्टरः। विद्वच्छब्दात्तरप्ययस्मयादीनि छंदसि। पा० १. ४. २०.। इति भसंज्ञायां वसोः संप्रसारणमिति संप्रसारणं परपूर्वत्वं। शासिवसीति षत्वं। तरपः पित्त्वादनुदात्तत्वे वसोः स्वरेणोकार उदात्तः॥

त्वम॑ग्ने प्र॒यत॑दक्षिणं॒ नरं॒ वर्मे॑व स्यू॒तं परि॑ पासि वि॒श्वतः॑।
स्वा॒दु॒क्षद्मा॒ यो व॑स॒तौ स्यो॑न॒कृज्जी॑वया॒जं यज॑ते॒ सोप॒मा दि॒वः॥१५॥
त्वं। अ॒ग्ने॒। प्र॒यत॑ऽदक्षिणं। नरं॑। वर्म॑ऽइव। स्यू॒तं। परि॑। पा॒सि॒। वि॒श्वतः॑।
स्वा॒दु॒ऽक्षद्मा॑। यः। व॒स॒तौ। स्यो॒न॒ऽकृत्। जी॒व॒ऽया॒जं। यज॑ते। सः। उ॒प॒ऽमा। दि॒वः॥१५॥

हे अग्ने त्वं प्रयतदक्षिणं येन यजमानेन ऋत्विग्भ्यो दक्षिणा दत्ता तादृशं नरं पुरुषं यजमानं विश्वतः सर्वतः परि पासि। सम्यक् पालयसि। तत्र दृष्टांतः। स्यूतं निश्छिद्रत्वेन सूचीभिः सम्यक् निष्पादितं वर्मेव। यथा कवचं युद्धे पालयति तद्वत्। स्वादुक्षद्मा स्वादन्नो वसतौ निवासभूते स्वगृहे स्योनकृत् अतिथीनां सुखकारी यो यजमानो जीवयाजं जीवयजनसहितं यज्ञं यद्वा जीवनिष्पाद्यं यजते अनुतिष्ठति स यजमानो दिवः स्वर्गस्योपमा दृष्टांतो भवति। यथा स्वर्गोऽनुष्ठातॄन्सुखयति तथा त्वमप्यृत्विगादीनित्यर्थः॥ स्यूतं। षिवु तंतुसंताने। निष्ठेति क्तः। यस्य विभाषेतीट्प्रतिषेधः। छ्वोः शूडनुनासिके च। पा० ६. ४. १९.। इति वकारस्योठादेशः। स्वादून्क्षदतीति स्वादुक्षद्मा। क्षदतिरत्तिकर्मा। अन्येभ्योऽपि दृश्यंत इति मनिन्। नित्त्वादाद्युदात्तत्वे प्राप्ते उत्तरपदप्रकृतिस्वरत्वं बहुव्रीहौ तु व्यत्ययेन। जीवयाजं। जीवा ऋत्विज इज्यंते दक्षिणाभिः पूज्यंतेऽत्रेत्यधिकरणे घञ्। कुत्वाभावश्छांदसः। यद्वा। जीवैः पशुभिर्याजनं जीवयाजः। याजयतेर्घञ्। णेरनिटीति णिलोपस्याचः परस्मिन्निति स्थानिवद्भावाच्चजोः कु घिण्यतोरिति कुत्वाभावः। थाथादिस्वरेणोत्तरपदांतोदात्तत्वं। सोपमा। सोऽचि लोपे चेत्पादपूरणमिति संहितायां सोर्लोपः। दिवः। ऊडिदमिति विभक्तेरुदात्तत्वं॥ ॥३४॥

इमामग्न इत्यनयानाहिताग्निरार्त्विज्यं कृत्वा स्वाप्यावाकृतिं जुहुयात्। ऋत्विजो वृणीत इति खंडे एषमनाहिताग्निर्गृह्य इमामग्ने शरणिं मीमृषो नः। आ० गृ० १. २३. २३.। इति सूत्रितं॥

इ॒माम॑ग्ने श॒र॒णिं मी॑मृषो न इ॒मम॑ध्वा॒नं यम॑गा॒म दू॒रात्।
आ॒पिः पि॒ता प्रम॑तिः सो॒म्या॒नां॒ भृमि॑रस्यृषि॒कृन्मर्त्या॑नां॥१६॥
इ॒मां। अ॒ग्ने॒। श॒र॒णिं। मी॒मृ॒षः॒। नः॒। इ॒मं। अध्वा॑नं। यं। अगा॑म। दू॒रात्।
आ॒पिः। पि॒ता। प्रऽम॑तिः। सो॒म्या॒नां॑। भृमिः॑। अ॒सि॒। ऋ॒षि॒ऽकृत्। मर्त्या॑नां॥१६॥

हे अग्ने त्वं नोऽस्मत्संबंधिनीमिमामिदानीं संपादितां शरणिं हिंसां व्रतलोपरूपां मीमृषः। क्षमस्व। तथा त्वदीयसेवामग्निहोत्रादिरूपां परित्यज्य दूराद्दूरदेशं यमिममध्वानमगाम वयं गतवंतः। तमपि क्षमस्वेति शेषः। सोम्यानां सोमार्हाणामनुष्ठातॄणां मर्त्यानां त्वमाप्यादिगुणयुक्तोऽसि। आपिः प्रापणीयः पिता पालकः प्रमतिः प्रकृष्टमननयुक्तो भृमिर्भ्रामकः। कर्मनिर्वाहक इत्यर्थः। ऋषिकृत् दर्शनकारी। अनुजिघृक्षया प्रत्यक्षो भवसीत्यर्थः॥ शरणिं। शॄ हिंसायामित्यस्मात् औणादिकोऽनिप्रत्ययः। मीमृषः। मृष तितिक्षायां। अस्माण्णौ

चङि गुणे प्राप्ते नित्यं छंदसि । पा० ७. ४. ८. । इत्युपधकारस्य ऋकारादेशः । णिलोपद्विर्भावहलादिशेषोरदत्वसन्वद्भावेत्वदीर्घत्वानि । तिङ्ङतिङ इति निघातः । अगाम । इण् गतौ । इणो गा लुङि । पा० २. ४. ४५. । इति गादेशः । गातिस्थेति सिचो लुक् । अडागम उदात्तः । भृमिः । भ्रमु अनवस्थाने । भ्रमेः संप्रसारणं च । उ० ४. १२०. । इतीन्प्रत्ययः । संप्रसारणे परपूर्वत्वं । इगुपधात्किदित्यनुवृत्तेः कित्त्वाद्गुणप्रतिषेधः । नित्त्वादाद्युदात्तत्वं ॥

मनुष्वदग्ने अंगिरस्वदंगिरो ययातिवत्सदने पूर्ववच्छुचे ।
अच्छ याह्या वहा दैव्यं जनमा सादय बर्हिषि यक्षि च प्रियं ॥१७॥
मनुष्वत् । अग्ने । अंगिरस्वत् । अंगिरः । ययातिऽवत् । सदने । पूर्वऽवत् । शुचे ।
अच्छ । याहि । आ । वह । दैव्यं । जनं । आ । सादय । बर्हिषि । यक्षि । च । प्रियं ॥१७॥

हे शुचे शुचियुक्तांगिरोऽंगनशील हविरादानाय तत्र तत्र गमनशीलाग्ने अच्छाभिमुख्येन सदने देवयजनदेशे याहि । गच्छ । तत्र चत्वारो दृष्टांताः । मनुष्वत् यथा मनुरनुष्ठानदेशे गच्छति । अंगिरस्वत् यथा चांगिरा गच्छति । ययातिवत् यथा ययातिर्नाम राजा गच्छति । पूर्ववत् अन्ये च पूर्वपुरुषा यथा गच्छंति । यथा मन्वादयो यज्ञे गच्छंति तद्वत् । अथवा मन्वादीनां यज्ञे यथा त्वं गच्छसि तद्वत् । गत्वा च दैव्यं देवतासमूहरूपं जनमा वह । अस्मिन्कर्मण्यानय । आनीय च बर्हिष्यास्तीर्णे दर्भे आ सादय । तान्देवानुपवेशय । उपवेश्य च प्रियमभीष्टं हविर्यक्षि च । देहि ॥ मनुष्वत् । तेन तुल्यमिति प्रथमार्थे वा तत्र तस्येवेति षष्ठ्यर्थे वा वतिः । पा० ५. १. ११५–११६. । अयस्मयादित्वेन भत्वाद्रुत्वाद्यभावः । प्रत्ययस्वरः । एवमंगिरस्वदित्यादिषु । वह । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । यक्षि । लोटि बहुलं छंदसीति शपो लुक् । सेर्ह्यपिच्चेति हेरभावश्छांदसः । षत्वकत्वे ॥

साग्निचयने क्रतावुखासंभरणीयायामिष्टावग्नेर्ब्रह्मण्वतः पुरोनुवाक्यैतेनाग्न इत्येषा । दर्शपूर्णमासाभ्यामिष्ट्वेति खंड एतेनाग्ने ब्रह्मणा वावृधस्व ब्रह्म च ते जातवेदो नमश्च । आ० ४. १. । इति सूचितं ॥

एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।
उत प्र णेष्यभि वस्यो अस्मान्सं नः सृज सुमत्या वाजवत्या ॥१८॥
एतेन । अग्ने । ब्रह्मणा । ववृधस्व । शक्ती । वा । यत् । ते । चकृम । विदा । वा ।
उत । प्र । नेषि । अभि । वस्यः । अस्मान् । सं । नः । सृज । सुऽमत्या । वाजऽवत्या ॥१८॥

हे अग्ने एतेनास्मत्प्रयुक्तेन ब्रह्मणा मंत्रेण ववृधस्व । अभिवृद्धो भव । शक्ती वा विदा वा अस्मदीयशक्त्या चास्मदीयज्ञानेन च ते तव यत्स्तोत्रं चकृम वयं कृतवंतः । एतेन ब्रह्मणेति पूर्वत्रान्वयः । उतापि चास्माननुष्ठातॄन् वस्यो वसुमत्तरत्वलक्षणं श्रेयः प्र णेषि । प्रकर्षेण प्रापय । नोऽस्मान्वाजवत्या प्रभूतान्नयुक्तया सुमत्यानुष्ठानविषयया शोभनबुद्ध्या सं सृज । संयोजय ॥ ववृधस्व । वृधु वृद्धौ । लिट्यडागमः । बहुलं छंदसीति शपः श्लुः । द्विर्भावहलादिशेषोरदत्वानि । अभ्यासस्य संहितायां दीर्घश्छांदसः । शक्ती । सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घत्वं । क्तिनो नित्त्वादाद्युदात्तत्वं । विदा । सावेकाच इति तृतीयाया उदात्तत्वं । नेषि । णीञ् प्रापणे । बहुलं छंदसीति शपो लुक् । उपसर्गादसमास इति णत्वं । सुमत्या । मन्क्तिन्नित्यादिनोत्तरपदांतोदात्तत्वं प्रथमाध्याये प्रपंचितं । ऋक्वि० १. ७. ७. । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं ॥ ॥३५॥

इंद्रस्य नु वीर्याणीति पंचदशर्चं द्वितीयं सूक्तं । आंगिरसो हिरण्यस्तूप ऋषिः । त्रिष्टुप् छंदः । इंद्रो देवता । इंद्रस्य पंचोनेत्यनुक्रमणिका । अग्निष्टोमे माध्यंदिने सवने निष्केवल्यशस्त्र इंद्रस्य नु वीर्याणीति निविद्धानीयं सूक्तं । निष्केवल्यस्येति खंड इंद्रस्य नु वीर्याणीत्येतस्मिन्नैंद्रीं निविदं दध्यात् । आ० ५. १५. । इति ॥ विषुवत्यपि

तस्मिन् शस्त्र एतद्विनियुक्तं। विषुवान्दिवा कीर्त्य इति खंडे सूचितं। इंद्रस्य नु वीर्याणीत्येतस्मिन्नैंद्रीं निविदं शस्त्वा। आ॰ ८. ६.। इति ॥ महाव्रते निष्केवल्येऽप्येतदेव विनियुक्तं। राथंतरो दक्षिणः पक्ष इति खंडे चतस्रः सतीः षड् बृहतीः करोतींद्रस्य नु वीर्याणि प्र वोचं। ऐ॰ आ॰ ५. २. २.। इति ॥

इंद्रस्य नु वीर्याणि प्र वोचं यानि चकार प्रथमानि वज्री।
अहन्नहिमन्वपस्ततर्द प्र वक्षणा अभिनत्पर्वतानां ॥१॥
इंद्रस्य। नु। वीर्याणि। प्र। वोचं। यानि। चकार। प्रथमानि। वज्री।
अहन्। अहिं। अनु। अपः। ततर्द। प्र। वक्षणाः। अभिनत्। पर्वतानां ॥१॥

वज्री वज्रयुक्त इंद्रः प्रथमानि पूर्वसिद्धानि मुख्यानि वा यानि वीर्याणि पराक्रमयुक्तानि कर्माणि चकार तस्येंद्रस्य तानि वीर्याणि नु क्षिप्रं प्रब्रवीमि। कानि वीर्याणीति तदुच्यते। अहिं मेघमहन्। हतवान्। तदेतदेकं वीर्यं। अनु पश्चादपो जलानि ततर्द। हिंसितवान्। भूमौ पातितवानित्यर्थः। इदं द्वितीयं वीर्यं। पर्वतानां संबंधिनीर्वक्षणाः प्रवहणशीला नदीः प्राभिनत्। भिन्नवान्। कूलद्वयकर्षणेन प्रवाहितवानित्यर्थः। इदं तृतीयं वीर्यं। एवमुत्तरत्रापि द्रष्टव्यं ॥ वीर्याणि। शूर वीर विक्रांतौ। ण्यंताद्चो यदिति यत्। णेरनिटीति णिलोपः। तित्स्वरितमिति स्वरितत्वं। यतोऽनाव इत्याद्युदात्तत्वं न भवति। आद्युदात्तत्वे हि सुशब्देन बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्यनेनैवोत्तरपदाद्युदात्तत्वस्य सिद्धत्वाद्वीरवीर्यौ चेति पुनस्तद्विधानमनर्थकं स्यात्। अतोऽवगम्यते यतोऽनाव इत्याद्युदात्तत्वं वीरशब्दे न प्रवर्तत इति। अतः परिशेषात्तित्स्वरितमिति प्रत्ययस्य स्वरितत्वमेव। वोचं। अस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङादेशः। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। चकार। णलि लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं। यद्वृत्तयोगादनिघातः। अहन्। लङीतश्चेतीकारलोपे हल्ङ्याब्भ्य इति तकारलोपः। अहिं। आङ्पूर्वाद्धंतेराङि श्रिहनिभ्यां ह्रस्वश्च। उ॰ ४. १३७.। इतीप्रत्ययः। आङो ह्रस्वत्वं च। चशब्देन वेञो डित् समाने ख्यश्चोदात्त इति डित्त्वं पूर्वपदोदात्तत्वं चानुकृष्यते। ततष्टिलोपे पूर्वपदस्योदात्तत्वं। ततर्द। उतृदिर् हिंसानादरयोः। तिङ्ङतिङ इति निघातः। वक्षणाः। वक्ष रोषे। क्रुधमंडार्थेभ्यश्च। पा॰ ३. २. १५१.। इति युच्। चित्स्वरं बाधित्वा व्यत्ययेन प्रत्ययस्वरः ॥

अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष।
वाश्रा इव धेनवः स्यंदमाना अंजः समुद्रमव जग्मुरापः ॥२॥
अहन्। अहिं। पर्वते। शिश्रियाणं। त्वष्टा। अस्मै। वज्रं। स्वर्यं। ततक्ष।
वाश्राःऽइव। धेनवः। स्यंदमानाः। अंजः। समुद्रं। अव। जग्मुः। आपः ॥२॥

पर्वते शिश्रियाणमाश्रितमहिं मेघमहन्। हतवान्। अस्मा इंद्राय स्वर्यं सुष्ठु प्रेरणीयं यद्वा शब्दनीयं स्तुत्यं त्वष्टा विश्वकर्मा वज्रं ततक्ष। तनूकृतवान्। तेन वज्रेण मेघे भिन्ने सति स्यंदमानाः प्रस्रवणयुक्ता आपः समुद्रमंजः सम्यगव जग्मुः। प्राप्ताः। तत्र दृष्टांतः। वाश्रा वत्सान्प्रति हंभारवोपेता धेनव इव। यथा धेनवः सहसा वत्सगृहे गच्छंति तद्वत् ॥ शिश्रियाणं। श्रिञ् सेवायां। लिटः कानच्। द्विर्भावहलादिशेषेयङादेशाः। चित इत्यंतोदात्तत्वं। स्वर्यं। ऋ गतौ। अस्मात्सुपूर्वादृहलोर्ण्यदिति ण्यत्। संज्ञापूर्वको विधिरनित्य इति वृद्ध्यभावः। यद्वा। स्वृ शब्दोपतापयोरित्यस्मात् ण्यति पूर्ववद्वृद्ध्यभावः। तित्स्वरितमिति स्वरितत्वं। वाश्रंत इति वाश्राः। वाशृ शब्दे। स्फायितंचीत्यादिना रक्। जग्मुः। उसि गमहनेत्युपधालोपः ॥

वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य।
आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनां ॥३॥

वृषऽयमाणः । अवृणीत । सोमं । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य ।
आ । सायकं । मघऽवा । अदत्त । वज्रं । अहन् । एनं । प्रथमऽजां । अहीनां ॥ ३ ॥

वृषायमाणो वृष [illegible]निंद्रः सोममवृणीत । वृतवान् । त्रिकद्रुकेषु । ज्योतिर्गौरायुरित्येतन्नामकास्त्रयो यागास्त्रिकद्रुका उच्यंते । तेषु सुतस्याभिषुतस्य सोमस्यांशमपिबत् । पीतवान् । मघवा धनवानिंद्रः सायकं बंधकं वज्रमादत्त । स्वीकृतवान् । तेन च वज्रेणाहीनां मेघानां मध्ये प्रथमजां प्रथमोत्पन्नं मेघमहन् । हतवान् ॥ वृषायमाणः । वृष इवाचरन् । कर्तुः क्यङ् सलोपश्च । पा॰ ३. १. ११. । इति क्यङ् । अकृत्सार्वधातुकयोरिति दीर्घः । अदुपदेशाद्धातोरंतोदात्तत्वे क्यङंताद्धातोरंतोदात्तत्वं । सायकं । षिञ् बंधने । सिनोतीति सायकः । ण्वुल् । लित्स्वरेणाद्युदात्तत्वं । प्रथमजां । प्रथमं जायत इति प्रथमजाः । जनसनखनक्रमगमो विट् । विड्वनोरित्यात्वं ॥

यदिंद्राहन्प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः ।
आत्सूर्यं जनयन्द्यामुषासं तादीत्ना शत्रुं न किला विवित्से ॥ ४ ॥
यत् । इंद्र । अहन् । प्रथमऽजां । अहीनां । आत् । मायिनां । अमिनाः । प्र । उत । मायाः ।
आत् । सूर्यं । जनयन् । द्यां । उषसं । तादीत्ना । शत्रुं । न । किल । विवित्से ॥ ४ ॥

उतापि च हे इंद्र यद्यदाहीनां मेघानां मध्ये प्रथमजां प्रथमोत्पन्नं मेघमहन् हतवानसि आत् तदनंतरं मायिनां मायोपेतानामसुराणां संबंधिनीर्मायाः प्रामिनाः । प्रकर्षेण नाशितवानसि । अनंतरं सूर्यमुषसमुषःकालं द्यामाकाशं च जनयन् उत्पादयन्ना[illegible]न प्रकाशयन् वर्तसे । तादीत्ना तदानीमावरकांधकाराभावाच्छत्रुं घातकं वैरिणं न विवित्से किल । त्वं न लब्धवान्खलु ॥ अहन् । हंतेर्लङि हल्ड्याब्भ्य इति सिलोपः । अडागम उदात्तः । [illegible]तः । मायिनां । मायाशब्दस्य व्रीह्यादिषु पाठाद्व्रीह्यादिभ्यश्च । पा॰ ५. २. ११६. । इति मत्वर्थीय इनिः । अमिनाः । मीञ् हिंसायां । क्रैयादिकः । मीनातेर्निगमे । पा॰ ७. ३. ८१. । इति ह्रस्वत्वं । तादीत्ना । तद्[illegible]य पृषोदरादित्वाद्वर्णविपर्ययः । किल । निपातस्येति दीर्घत्वं । विवित्से । विद्लृ लाभे । क्रादिनियमात्प्राप्त इट् व्यत्ययेन न भवति ॥

अहन्वृत्रं वृत्रतरं व्यंसमिंद्रो वज्रेण महता वधेन ।
स्कंधांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः ॥ ५ ॥
अहन् । वृत्रं । वृत्रऽतरं । विऽअंसं । इंद्रः । वज्रेण । महता । वधेन ।
स्कंधांसिऽइव । कुलिशेन । विऽवृक्णा । अहिः । शयते । उपऽपृक् । पृथिव्याः ॥ ५ ॥

अयमिंद्रो वज्रेण संपादितो यो महान्वधस्तेन वज्रेण वृत्रतरमतिशयेन [illegible]कारकं । यद्वा । वृत्रैरावरणैः सर्वाञ्छत्रूंस्तरति तं । वृत्रमेतन्नामकमसुरं व्यंसं विगतांसं [illegible]नबाहुर्यथा भवति तथाहन् । हतवान् । अंसच्छेदे दृष्टांतः । कुलिशेन कुठारेण विवृक्णा [illegible]नि स्कंधांसीव । यथा वृक्षस्कंधाश्छिन्ना भवंति तद्वत् । तथा सत्यहिर्वृत्रः पृथिव्या उपर्युपपृक् सामीप्येन संपृक्तः शयते । शयनं करोति । छिन्नकाष्ठवद्भूमौ पततीत्यर्थः ॥ वृत्रतरं । वृतु वर्तने । स्फायितंचीत्यादिना भावे र[illegible] वृत्रशब्दः । वृत्रेणावरणेन सर्वं तरतीति वृत्रतरः । तरतेः पचाद्यच् । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । तरपि तु व्यत्ययेन । व्यंसं । बहुव्रीहौ [illegible]तस्वरत्व उदात्तस्वरितयोर्यण इति स्वरितत्वं । वधेन । हनश्च वध इति भावेऽप् । तत्संनियोगेन धातोर्वधादेशः । स चांतोदात्तः । अंत्यस्याकारस्यातो लोप इति लोप उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वं । विवृक्णा । ओव्रश्चू छेदने । कर्मणि निष्ठा । यस्य विभाषेतीट्प्रतिषेधः । ओदितश्च । पा॰ ८. २. ४५. । इति परत्वान्निष्ठानत्वं । ततो व्रश्चभ्रस्जेति षत्वे प्राप्ते निष्ठादेशः षत्वस्वरप्रत्ययेड्विधिषु

सिद्धो वक्तव्यः । पा॰ ८. २. ६. ७. । इति नलस्य सिद्धत्वेन झल्परत्वाभावात् षत्वं न भवति । कुत्वे तु कर्तव्ये तदसिद्धमेव । पा॰ ८. २. १. । इति चोः कुरिति कुत्वं । शेश्छंदसि बहुलमिति शेर्लोपः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । शयते । बहुलं छंदसीति शपो लुगभावः । पृथिव्याः । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं ॥ ॥ ३६ ॥

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषं ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इंद्रशत्रुः ॥ ६ ॥
अयोद्धाऽइव । दुःऽमदः । आ । हि । जुह्वे । महाऽवीरं । तुविऽबाधं । ऋजीषं ।
न । अतारीत् । अस्य । संऽऋतिं । वधानां । सं । रुजानाः । पिपिषे । इंद्रऽशत्रुः ॥ ६ ॥

दुर्मदो दुष्टमदोपेतो दर्पयुक्तो वृत्रोऽयोद्धेव योद्धृरहित इवेंद्रमा जुह्वे हि । आहूतवान्खलु । कीदृशमिंद्रं । महावीरं गुणैर्महान्भूत्वा शौर्योपेतं तुविबाधं बहूनां बाधकं ऋजीषं शत्रूणामपार्जकं । अस्येदृशस्येंद्रस्य संबंधिनो ये शत्रुवधाः संति तेषां वधानां समृतिं संगमं नातारीत् । पूर्वोक्तो दुर्मदस्तरीतुं नाशक्नोत् । इंद्रशत्रुरिंद्रः शत्रुर्घातको यस्य वृत्रस्य तादृशो वृत्र इंद्रेण हतो नदीषु पतितः सन् रुजाना नदीः सं पिपिषे । सम्यक् पिष्टवान् । सर्वान् लोकानावृण्वतो वृत्रदेहस्य पातेन नदीनां कूलानि तत्रत्यपाषाणादिकं च चूर्णीभूतमित्यर्थः ॥ अयोद्धा इव । न विद्यते योद्धास्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । समासांतविधेरनित्यत्वात् । परि॰ ८४. । नद्यृतश्च । पा॰ ५. ४. १५३. । इति कबभावः । जुह्वे । ह्वेञ् स्पर्धायां शब्दे च । अभ्यस्तस्य च । पा॰ ६. १. ३३. । इति संप्रसारणं । उवङादेशाभावश्छांदसः । यद्वा । छंदस्युभयथेति सार्वधातुकसंज्ञायां हुश्नुवोः सार्वधातुके । पा॰ ६. ४. ८७. । इति यणादेशः । अत्र लक्षणप्रतिपदोक्तपरिभाषा । परि॰ १०५. । लक्ष्यानुरोधान्नाश्रीयते । इतरथा ह्याजुह्वान इत्यादिषु यणादेशो न स्यात् । न चैवं सति सातये हुवे वां । ऋग्वे॰ ६. ६०. १३. । इत्यत्रापि तथा स्यादिति वाच्यं । अनेकाच्त्वाभावात् । अनेकाच इति हि तत्रानुवर्तते । प्रत्ययस्वरेणांतोदात्तत्वं । हि चेति निघातप्रतिषेधः । महावीरं । महांश्चासौ वीरश्च महावीरः । आन्महतः । पा॰ ६. ३. ४६. । इत्यात्वं । तुविबाधं । बाधृ विलोडने । तुवीन्प्रभूतान्बाधत इति तुविबाधः । पचाद्यच् । कृदुत्तरपदप्रकृतिस्वरत्वं । समृतिं । तादौ चेति गतेः प्रकृतिस्वरत्वं । रुजानाः । रुजो भंगे । रुजंति कूलानीति रुजाना नद्यः । रुजाना नद्यो भवंति रुजंति कूलानि । नि॰ ६. ४. । इति यास्कः । व्यत्ययेन शानच् । तुदादिभ्यः शः । गुणाभावश्छांदसः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः । पिपिषे । पिष्लृ संचूर्णने । व्यत्ययेन लिट् । इंद्रशत्रुः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

अपादहस्तो अपृतन्यदिंद्रमास्य वज्रमधि सानौ जघान ।
वृष्णो वध्रिः प्रतिमानं बुभूषन्पुरुत्रा वृत्रो अशयद्व्यस्तः ॥ ७ ॥
अपात् । अहस्तः । अपृतन्यत् । इंद्रं । आ । अस्य । वज्रं । अधि । सानौ । जघान ।
वृष्णः । वध्रिः । प्रतिऽमानं । बुभूषन् । पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ॥ ७ ॥

अपादच्छेण छिन्नत्वात्पादरहितः अहस्तो हस्तरहितो वृत्र इंद्रमुद्दिश्यापृतन्यत् । पृतनां युद्धमैच्छत् । द्वेषाधिक्येन बहुधा विद्धोऽपि युद्धं न परित्यक्तवानित्यर्थः । अस्य हस्तपादहीनस्य वृत्रस्य सानौ पर्वतसानुसदृशे प्रौढस्कंधेऽध्युपरि वज्रमा जघान । इंद्र आभिमुख्येन प्रक्षिप्तवान् । अशक्तस्यापि युद्धेच्छायां दृष्टांतः । वध्रिश्छिन्नमुष्कः पुरुषो वृष्णो रेतःसेचनसमर्थस्य पुरुषांतरस्य प्रतिमानं सादृश्यं बुभूषन् प्राप्तुमिच्छन् यथा न शक्नोति तद्वदयमिति शेषः । स वृत्रः पुरुत्रा बहुष्ववयवेषु व्यस्तो विविधं क्षिप्तस्ताडितः सन् अशयत् । भूमौ पतितवान् ॥ अपात् । बहुव्रीहौ पादशब्दस्यांत्यलोपश्छांदसः । अहस्तः । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । अपृतन्यत् । सुप आत्मनः क्यच् । कव्यध्वरपृतनस्येत्यंत्यलोपः । बुभूषन् । सनि ग्रहगुहोश्च । पा॰ ७.

२. १२.। इतीट्प्रतिषेधः । पुरुत्रा । देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलं । पा० ५. ४. ५६.। इति सप्तम्यर्थे त्राप्रत्ययः । अशयत् । व्यत्ययेन परस्मैपदं । बहुलं छंदसीति शपो लुगभावः । व्यस्तः । असु क्षेपण इत्यस्मात्कर्मणि क्तः । यस्य विभाषेतीट्प्रतिषेधः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । संहितायामुदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं ॥

**न॒दं न भि॒न्नम॑मु॒या शया॑नं॒ मनो॒ रुहा॑णा॒ अति॑ यं॒त्याप॑ः ।**
**याश्चि॑द्वृ॒त्रो म॑हि॒ना प॒र्यति॑ष्ठ॒त्तासा॒महि॑ः पत्सुतः॒शीर्ब॑भूव ॥ ८ ॥**
**न॒दं । न । भि॒न्नं । अ॒मु॒या । शया॑नं । मन॑ः । रुहा॑णाः । अति॑ । यं॒ति॒ । आप॑ः ।**
**याः । चि॒त् । वृ॒त्रः । म॒हि॒ना । प॒रि॒ऽअति॑ष्ठत् । तासा॑ं । अहि॑ः । प॒त्सु॒तः॒ऽशीः । ब॒भू॒व ॥ ८ ॥**

अमुयामुष्यां पृथिव्यां शयानं पतितं मृतं वृत्रमापो जलान्यति यंति । अतिक्रम्य गच्छंति । तत्र दृष्टांतः । भिन्नं बहुधाभिन्नकूलं नदं न सिंधुमिव । यथा वृष्टिकाले प्रभूता आपो नद्याः कूलं भित्त्वातिक्रम्य गच्छंति तद्वत् । कीदृश्य आपः । मनो रुहाणाः । नृणां चित्तमारोहंत्यः । पुरा वृत्रे जीवति सति तेन निरुद्धा मेघस्थिता आपो भूमौ वृष्टा न भवंति । तदानीं नृणां मनः खिद्यते । मृते तु वृत्रे निरोधरहिता आपो वृत्रशरीरमुल्लंघ्य प्रवहंति । तदा वृष्टिलाभेन तु मनुष्यास्तुष्यंतीत्यर्थः । तदेतदुत्तरार्धेन स्पष्टीक्रियते । वृत्रो जीवनदशायां महिना स्वकीयेन महिम्ना याश्चिद्या एव मेघगता अपः पर्यतिष्ठत् परिवृत्य स्थितवान् अहिर्वृत्रो मेघस्तासामपां पत्सुतःशीः पादस्याधःशयानो बभूव । यद्यप्यपां पादो नास्ति तथाप्यद्भिर्वृत्रस्याभिलंघितत्वात्पादस्याधःशयनमुपपद्यते ॥ भिन्नं । रदाभ्यां निष्ठातो नः । पा० ८. २. ४२.। इति नत्वं । अमुया । सुपां सुलुगिति सप्तम्या याजादेशः । शयानं । शीङः सार्वधातुके गुणः । पा० ७. ४. २१.। धातोर्ङित्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । रुहाणाः । रुह बीजजन्मनि प्रादुर्भावे । व्यत्ययेन शानच् । कर्तरि शपि प्राप्ते व्यत्ययेन शः । अनित्यमागमशासनमिति वचनान्मुगभावः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरे प्राप्ते व्यत्ययेन धातुस्वरः । महिना । मह पूजायां । इन्सर्वधातुभ्यः । उ० ४. ११७.। इतीन्प्रत्ययः । व्यत्ययेन विभक्तिरुदात्तत्वं । यद्वा । महिना महिम्ना । महच्छब्दस्य पृथ्वादिषु पाठात्तस्य भाव इत्येतस्मिन्नर्थे पृथ्वादिभ्य इमनिज्वा । पा० ५. १. १२२.। [illegible] । टेरिति टिलोपः । चित इत्यंतोदात्तत्वं । तृतीयैकवचनेऽल्लोपे सत्युदात्तनिवृत्तिस्वरेण तस्योदात्तत्वं । मकारलोपश्छांदसः । पत्सुतःशीः । पादस्याधः शेत इति पत्सुतःशीः । क्विबेति क्विप् । तसि [illegible] पादशब्दस्य पदादेशः । शस्प्रभृतिष्विति प्रभृतिशब्दः प्रकारवचन इति शसा दोषणीत्यत्रापि दोषन्नादेशो भवति । का० ६. १. ६३.। इत्युक्तत्वात् । मध्ये सु इति शब्दोपजनश्छांदसः । यद्वा । पादशब्दस्य सप्तमीबहुवचने पदादेशे कृत इतराभ्योऽपि दृश्यंते । पा० ५. ३. १४.। इति सप्तम्यर्थे तसिल् । लुगभावश्छांदसः ॥

**नी॒चाव॑या अभवद्वृ॒त्रपु॒त्रेंद्रो॑ अस्या॒ अव॒ वध॑र्जभार ।**
**उत्त॑रा॒ सूरध॑रः पु॒त्र आ॑सी॒द्दानु॑ः शये स॒हव॑त्सा॒ न धे॒नुः ॥ ९ ॥**
**नी॒चाऽव॑याः । अ॒भ॒व॒त् । वृ॒त्रऽपु॑त्रा । इंद्र॑ः । अ॒स्याः॒ । अव॑ । वध॑ः । ज॒भा॒र॒ ।**
**उ॒त्ऽत॑रा । सूः । अध॑रः । पु॒त्रः । आसी॑त् । दानु॑ः । श॒ये॒ । स॒हऽव॑त्सा । न । धे॒नुः ॥ ९ ॥**

वृत्रपुत्रा वृत्रः पुत्रो यस्या मातुः सेयं माता वृत्रपुत्रा नीचावया न्यग्भावं प्राप्ता हताभवत् । पुत्रं प्रहाराद्रक्षितुं पुत्रदेहस्योपरि तिरश्ची पतितेत्यर्थः । [illegible]ऽस्या मातुरवाधोभागे वृत्रस्योपरि वधो हननसाधनमायुधं जभार । प्रहृतवान् । तदानीं सूर्मातोत्तरोपरिस्थितासीत् । पुत्रस्त्वधोभागस्थित आसीत् । सा च दानुर्दानवी वृत्रमाता शये । मृता शयनं कृतवती । तत्र दृष्टांतः । [illegible] गौः सहवत्सा न । यथा वत्ससहिता शयनं करोति तद्वत् ॥ नीचावयाः । वेति [illegible] वयो बाहुः । औणादिकोऽसिप्रत्ययः ।

न्यंचौ वयसौ यस्याः सा नीचावयाः । न्यच्शब्दादुत्तरस्या विभक्तेः सुपां सुपो भवंतीति तृतीयैकवचनादेशः । अच इत्यकारलोपे चाविति दीर्घत्वं । अंचेश्छंदस्यसर्वनामस्थानं ।पा० ६. १. १७०.। इति तस्योदात्तत्वं । समासे लुगभावश्छांदसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । यद्वा । नीचौ निकृष्टौ वयसौ यस्याः सा । पूर्वपदस्य दीर्घश्छांदसः । वधः । हन्यतेऽनेनेति वधः । असुनि हंतेर्वधादेशः । नित्त्वादाद्युदात्तत्वं । जभार । हृग्रहोर्भ इति भत्वं । सूः । षूङ् प्राणिगर्भविमोचने । सूते गर्भं विमुंचतीति सूर्माता । क्विब्वेति क्विप् । दानुः । दो अवखंडने । दाभाभ्यां नुः ।उ० ३. ३२.। शये । लटि लोपस्त आत्मनेपदेषु ।पा० ७. १. ४१.। इति तलोपः । शीङः सार्वधातुक इति गुणेऽयादेशः ॥

अतिष्ठंतीनामनिवेशनानां काष्ठानां मध्ये निहितं शरीरं ।
वृत्रस्य निण्यं वि चरंत्यापो दीर्घं तम आशयदिंद्रशत्रुः ॥१०॥
अतिष्ठंतीनां । अनिऽवेशनानां । काष्ठानां । मध्ये । निऽहितं । शरीरं ।
वृत्रस्य । निण्यं । वि । चरंति । आपः । दीर्घं । तमः । आ । अशयत् । इंद्रऽशत्रुः ॥१०॥

वृत्रस्य शरीरमापो वि चरंति । विशेषेणोपर्याक्रम्य प्रवहंति । कीदृशं शरीरं । निण्यं निर्नामधेयं । अप्सु मग्नत्वेन गूढत्वात्तदीयं नाम न केनापि ज्ञायते । एतदेव स्पष्टीक्रियते । काष्ठानामपां मध्ये निहितं निक्षिप्तं । कीदृशानां काष्ठानां । अतिष्ठंतीनां स्थितिरहितानां अनिवेशनानामुपवेशनरहितानां । प्रवहणस्वभावत्वादेतासां मनुष्यवन्न क्वापि स्थितिः संभवति । इंद्रशत्रुर्वृत्रो जलमध्ये शरीरे प्रक्षिप्ते सति दीर्घं तमो दीर्घं निद्रात्मकं मरणं यथा भवति तथा आशयत् । सर्वतः पतितवान् ॥ अतिष्ठंतीनां । अव्ययपूर्वपदप्रकृतिस्वरत्वं । अनिवेशनानां । निविशंतेऽस्मिन्निति निवेशनं स्थानं । करणाधिकरणयोश्चेत्यधिकरणे ल्युट् । तद्रहितानां । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । क्रांत्वा स्थिताः काष्ठाः । पृषोदरादि । निहितं । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं ॥ अत्र यास्कः । अतिष्ठंतीनामनिविशमानानामित्यस्थावराणां काष्ठानां मध्ये निहितं शरीरं मेघः । शरीरं शृणातेः शम्नातेर्वा । वृत्रस्य निण्यं निर्णामं विचरंति विजानंत्याप इति दीर्घं द्राघतेस्तमस्तनोतेराशयदाशेतेरिंद्रशत्रुरिंद्रोऽस्य शमयिता वा शातयिता वा तस्मादिंद्रशत्रुः । तत्को वृत्रो मेघ इति नैरुक्तास्त्वाष्ट्रोऽसुर इत्यैतिहासिकाः ।नि० २. १६.। इति ॥ ॥३७॥

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥११॥
दासऽपत्नीः । अहिऽगोपाः । अतिष्ठन् । निऽरुद्धाः । आपः । पणिनाऽइव । गावः ।
अपां । बिलं । अपिऽहितं । यत् । आसीत् । वृत्रं । जघन्वान् । अप । तत् । ववार ॥११॥

दासपत्नीः । दासो विश्वोपक्षपणहेतुर्वृत्रः पतिः स्वामी यासामपां ता दासपत्नीः । अत एवाहिगोपाः । अहिर्वृत्रो गोपा रक्षको यासां ताः । गोपनं नाम स्वच्छंदेन यथा न प्रवहंति तथा निरोधनं । एतदेव स्पष्टीक्रियते । आपो निरुद्धा अतिष्ठन्निति । तत्र दृष्टांतः । पणिनेव गावः । पणिनामकोऽसुरो गा अपहृत्य बिले स्थापयित्वा बिलद्वारमाच्छाद्य यथा निरुद्धवांस्तथेत्यर्थः । अपां यद्बिलं प्रवहणद्वारं पिहितं वृत्रेण निरुद्धमासीत् तद्बिलं प्रवहणद्वारं वृत्रं जघन्वान्हतवानिंद्रोऽप ववार । अपवृतमकरोत् । वृत्रकृतमपां निरोधं परिहृतवान् । अत्र यास्कः । दासपत्नीर्दासाधिपत्न्यो दासो दस्यतेरुपदासयति कर्माण्यहिगोपा अतिष्ठन्नहिना गुप्ताः । अहिरयनादेत्यंतरिक्षेऽयमपीतरोऽहिरेतस्मादेव निर्ह्रसितोपसर्ग आहंतीति । निरुद्धा आपः पणिनेव गावः । पणिर्वणिग्भवति पणिः पणनाद्वणिक् पण्यं नेनेक्ति । अपां बिलमपिहितं यदासीत् । बिलं भरं भवति बिभर्तेर्वृत्रं जघ्निवानपववार तद्वृत्रो वृणोतेर्वा वर्ततेर्वा वर्धतेर्वा यदवृणोत्तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्तत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते । यदवर्धत तद्वृत्रस्य वृत्रत्वमिति विज्ञायते ।नि० २. १७.। इति ॥

दासपत्नीः। दसु उपक्षये। दासयतीति दासो वृत्रः। पचाद्यच्। चित इत्यंतोदात्तत्वं। दासः पतिर्यासां विभाषा सपूर्वस्य। पा° ४. १. ३४.। इति ङीप्। तत्संनियोगेनेकारस्य नकारः। बहुव्रीहौ पूर्वपद[illegible]। यद्वा। दासस्य पालयित्र्यः। पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वं। अहिगोपाः। गुपू रक्षणे। गोपायतीति गोपाः। आयादय आर्धधातुके वा। पा° ३. १. ३१.। इत्यायप्रत्ययः। ततः क्विप्। अतो लोपः। वेरपृक्तलोपाद्वलि लोपो बलीयानिति पूर्वं यकारलोपः। पा° ६. १. ६६–६७.। न चाचः परस्मिन्नित्यतो लोपस्य स्थानिवत्त्वं। न पदांतद्विर्वचनेति प्रतिषेधात्। अहिर्गोपा यासां। पूर्ववत्स्वरः। निरुद्धाः। रुधिर् आवरणे। झषस्तथोर्धोऽधः। पा° ८. २. ४०.। इति निष्ठातकारस्य धकारः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। जघन्वान्। हंतेर्लिटः क्वसुः। अभ्यासाच्च। पा° ७. ३. ५५.। इत्यभ्यासादुत्तरस्य हकारस्य कुत्वं। क्रादिनियमप्राप्तस्येटो विभाषा गमहनेत्यादिना। पा° ७. २. ६८.। विकल्पविधानादभावः। संहितायां नकारस्य रुत्वानुनासिकावुक्तौ ॥

अश्व्यो वारो अभवस्तदिंद्र सृके यत्त्वा प्रत्यहन्देव एकः।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिंधून् ॥१२॥
अश्व्यः। वारः। अभवः। तत्। इंद्र। सृके। यत्। त्वा। प्रतिऽअहन्। देवः। एकः।
अजयः। गाः। अजयः। शूर। सोमं। अव। असृजः। सर्तवे। सप्त। सिंधून् ॥१२॥

सृके वज्रे। सृको वृक इति वज्रनामसु पठितत्वात्। देवो दीप्यमानः सर्वायुधकुशल एकोऽद्वितीयो वृत्रो यद्यदा त्वा त्वां प्रत्यहन् प्रतिकूलत्वेन प्रहृतवान् तत्तदानीं त्वमश्व्यो वारोऽश्वसंबंधी वालोऽभवः। यथाश्वस्य वालोऽनायासेन मक्षिकादीन्निवारयति तद्वद्वृत्रमगणयित्वा निराकृतवानित्यर्थः। किंच गाः पणिनापहृतास्त्वमजयः। जितवान्। हे शूर शौर्ययुक्तेंद्र सोममजयः। जितवान्। तथा च तैत्तिरीयाः त्वष्टा हतपुत्र इत्यस्मिन्नुपाख्याने समामनंति। स यज्ञवेशसं कृत्वा प्रासहा सोममपिबत्। तै° सं° २. ४. १२. १.। इति। सप्त सिंधून् इमं मे गंगे। ऋग्वे° १०. ७५. ५.। इत्यस्यामृच्याम्नाता गंगाद्याः सप्तसंख्याका नदीः सर्तवे सर्तुं प्रवाहरूपेण गंतुमवासृजः। त्यक्तवान्। वृत्रकृतं प्रवा[illegible] निराकृतवानित्यर्थः॥ अश्व्यः। अश्वे भवः। भवे छंदसीति यत्। यतोऽनाव इत्याद्युदात्तत्वं। वारयति दंशमशकानिति वारः। पचाद्यच्। कपिलकादित्वाल्लत्वविकल्पः। म° ८. २. १८.। वृषादित्वादाद्युदात्तत्वं। प्रत्यहन्। यद्वृत्तान्नित्यमिति निघातप्रतिषेधः। तिङि चोदात्तवतीति गतेरनुदात्तत्वं। अजयः। गा इत्यस्य वाक्यांतरगतत्वात्तदपेक्षयास्य तिङ्ङतिङ इति निघातो न भवति। समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः। पा° १. १. १८. ५.। इति वचनात्। सर्तवे। तुमर्थे सेसेनिति तवेन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं ॥

नास्मै विद्युन्न तन्यतुः सिषेध न यां मिहमकिरद्ध्रादुनिं च।
इंद्रश्च यद्युयुधाते अहिश्चोतापरीभ्यो मघवा वि जिग्ये ॥१३॥
न। अस्मै। विऽद्युत्। न। तन्यतुः। सिसेध। न। यां। मिहं। अकिरत्। ह्रादुनिं। च।
इंद्रः। च। यत्। युयुधाते इति। अहिः। च। उत। अपरीभ्यः। मघऽवा। वि। जिग्ये ॥१३॥

इंद्रं निषेद्धुं वृत्रो यान्विद्युदादीन्मायया निर्मितवान् ते सर्वेऽप्येनं निषेद्धुमशक्ताः। सोऽयमर्थोऽनेन मंत्रेणोच्यते। अस्मै इंद्रार्थं निर्मिता विद्युन्न सिषेध। इंद्रं न प्राप्नोत्। तथा तन्यतुर्गर्जनं यां मिहं सेचनं यां वृष्टिमकिरत् वृत्रो विक्षिप्तवान् सापि वृष्टिर्न सिषेध। ह्रादुनिं चाशनिमपि यां वृत्रः प्रयुक्तवान् सापि न सिषेध। इंद्रश्चाहिश्चेंद्रवृत्रावुभावपि यद्यदा युयुधाते युद्धं कृतवंतौ। तदानीं विद्युदादयो न प्राप्ता इति पूर्वत्रान्वयः। उतापि च मघवा धनवानिंद्रोऽपरीभ्योऽपराभ्योऽन्यासामपि वृत्रनिर्मितानां मायानां सका-

शादि जिग्ये। विशेषेण जितवान् ॥ सिषेध। षिधु गत्यां। मिहं। मिह सेचने। मेहति सिंचतीति मिट् वृष्टिः। क्षिपेति क्षिप्। अकिरत्। कॄ विक्षेपे। तुदादिभ्यः शः। ऋत इद्धातोरितीत्वं। अडागम उदात्तः। यद्वृत्तयोगादनिघातः। युयुधाते। युध संप्रहारे। लिटि प्रत्ययस्वरः। जिग्ये। सन्लिटोर्जेः। पा॰ ७. ३. ५७.। इत्यभ्यासादुत्तरस्य जकारस्य कुत्वं ॥

अहे॑र्यातारं॒ कम॑पश्य इंद्र हृ॒दि यत्ते॑ ज॒घ्नुषो॑ भीरग॑च्छत्।
नव॑ च॒ यन्न॑व॒तिं च॒ स्रवं॑तीः श्ये॒नो न भी॒तो अत॑रो॒ रजां॑सि ॥१४॥
अहेः॑। या॒तारं॑। कं। अ॒प॒श्य॒। इं॒द्र॒। हृ॒दि। यत्। ते॒। ज॒घ्नुषः॑। भीः। अग॑च्छत्।
नव॑। च॒। यत्। न॒व॒तिं। च॒। स्रवं॑तीः। श्ये॒नः। न। भी॒तः। अत॑रः। रजां॑सि ॥१४॥

हे इंद्र जघ्नुषो वृत्रं हतवतस्तव हृदि चित्ते यद्यदि भीरगच्छत् न हतवानस्मीति बुद्ध्या भयं प्राप्नुयात् तर्ह्यहेर्वृत्रस्य यातारं हंतारं कमपश्यः। त्वत्तोऽन्यं कं पुरुषं दृष्टवानसि। तादृशस्य पुरुषांतरस्याभावात्मा भूत्तव भयमित्यर्थः। यद्यस्मात्कारणात्त्वं नव च नवतिं च स्रवंतीरेकोनशतसंख्याकाः प्रवहंतीर्नदीः प्राप्य रजांसि तत्रत्यान्युदकान्यतरः। तीर्णवानसि। तत्र दृष्टांतः। श्येनो न। [illegible] बलवान्पक्षीव दूरगमनात्तव भयमासीदिति गम्यते। तच्चयं मा भूदित्यभिप्रायः। तस्य दूरगमनं ब्राह्मणे समाम्नातं। इंद्रो वै वृत्रं हत्वा नास्तृषीति मन्यमानः पराः परावतोऽगच्छत्। ऐ॰ ब्रा॰ ३. १५.। इति। तैत्तिर[illegible]। इंद्रो वृत्रं हत्वा परां परावतमगच्छदपराधमिति मन्यमानः। तै॰ ब्रा॰ १. ६. ७. ४.। इति ॥ हृदि। पद्दन्नित्यादिना हृदयशब्दस्य हृदादेशः। ऊडिदमित्यादिना विभक्तिरुदात्तत्वं। जघ्नुषः। हंतेर्लिटः क्वसुः। षष्ठ्येकवचने वसोः संप्रसारणमिति संप्रसारणपरपूर्वत्वे। शासिवसिघसीनां चेति षत्वं। न च षत्वतुकोरसिद्धः। पा॰ ६. १. ८६.। इत्येकादेश[illegible]सिद्धत्वात् षत्वं न प्राप्नुयादिति वाच्यं संप्रसारणङीट्सु प्रतिषेधो वक्तव्यः। का॰ ६. १. ८६. १.। इत्यसिद्धवद्भावस्य प्रतिषिद्धत्वात्। [illegible]उपधालोपः। न चासिद्धवदत्रा भादिति संप्रसारणस्यासिद्धवद्भावः। भिन्नाश्रयत्वात्। संप्रसारणं हि षष्ठ्येकवचने उपधालोपस्तु वसाविति भिन्नाश्रयत्वं। स्रवंतीः। स्रु गतौ। शप्श्यनोर्नित्यं। पा॰ ७. १. ८१.। इति नुमागमः। शपः पित्त्वात्[illegible]। शतुश्च लसार्वधातुकस्वरेणाद्युदात्तत्वं। अतरः। यद्वृत्तयोगादनिघातः ॥

इंद्रो॑ या॒तोऽव॑सितस्य॒ राजा॒ शम॑स्य च शृं॒गिणो॒ वज्र॑बाहुः।
सेदु॒ राजा॑ क्षयति चर्ष॒णीना॑म॒रान्न ने॒मिः परि॒ ता ब॑भूव ॥१५॥
इंद्रः॑। या॒तः। अव॑ऽसितस्य। राजा॑। शम॑स्य। च॒। शृं॒गिणः॑। वज्र॑ऽबाहुः।
सः। इत्। ऊं॒ इति॑। राजा॑। क्ष॒य॒ति॒। च॒र्ष॒णी॒नां। अ॒रान्। न। ने॒मिः। परि॑। ता।
ब॒भू॒व॒ ॥१५॥

वज्रबाहुरिंद्रः शत्रौ हते सति निःसपत्नो भूत्वा यातो गच्छतो जंगमस्यावसितस्यैकत्रैव स्थितस्य स्थावरस्य शमस्य शांतस्य शृंगराहित्येन प्रहरणादावप्रवृत्तस्याश्वगर्दभादेः शृंगिणः शृंगोपेतस्योग्रस्य महिषबलीवर्दादेश्च राजाभूत्। सेदु स एवेंद्रश्चर्षणीनां मनुष्याणां राजा भूत्वा क्षयति। निवसति। ता तानि [illegible] जंगमादीनि सर्वाणि परि बभूव। व्याप्तवान्। तत्र दृष्टांतः। अरान्न नेमिः। यथा रथचक्रस्य परितो वर्तमाना नेमिररान्नाभौ कीलितान्काष्ठविशेषान्व्याप्नोति तद्वत् ॥ यातः। या प्रापणे। याति गच्छतीति यात्। लटः शतृ। सावेकाच इति वि[illegible]। सः। सोऽचि लोपे चेदिति संहितायां सोर्लोपः। ता। शेश्छंदसि बहुलमिति शेर्लोपः। बभूव। भवतेर्लिटो णलि भवतेरः। पा॰ ७. ४. ७३.। इत्यभ्यासस्यात्वं। कृताकृतप्रसंगितया वुगागमस्य नित्यत्वाद्वृद्धेः पूर्वं वुगागमः। यद्वा। इंधिभवतिभ्यां च। पा॰ १. २. ६.। इति लिटः

...भावः। न चासिद्धवदत्रा भादिति ...शंकनीयः। वुग्युटावुवङ्यणोः सिद्धौ भवतः। पा॰ ६. ४. २२. १४.। इति तस्य सिद्धत्वात्। तिङ्ङतिङ इति निघातः॥ ॥३८॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके द्वितीयोऽध्यायः समाप्तः॥

---

॥ श्रीगणेशाय नमः॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं॥

अथ तृतीयाध्याय आरभ्यते। त्वमग्ने प्रथम इति सप्तमानुवाके पंच सूक्तानि। तत्रैतायामेति तृतीयं सूक्तं पंचदशर्चं। ऋषिश्चान्यस्मादिति परिभाषयांगिरसो हिरण्यस्तूप ऋषिः। अनुक्तत्वादिंद्रो देवता। त्रिष्टुप् छंदः। एतेत्यनुक्रमणिका॥ गोसववीवधयोर्निष्केवल्य एतायामेति सूक्तं विनियुक्तं। तथा च सूचितमतिमूर्तिना वक्ष्यमाण इति खंडे। गोसववीवधौ पशुकाम इंद्र सोममेतायामेति मध्यंदिनः। आ॰ ९. ८.। इति॥

एतायामोप गव्यंत इंद्रमस्माकं सु प्रमतिं वावृधाति।
अनामृणः कुविदादस्य रायो गवां केतं परमावर्जते नः॥१॥
आ। इत। अयाम। उप। गव्यंतः। इंद्रं। अस्माकं। सु। प्रऽमतिं। ववृधाति।
अनामृणः। कुवित्। आत्। अस्य। रायः। गवां। केतं। परं। आऽवर्जते। नः॥१॥

देवाः परस्परमेवं कथयंति। हे देवा गव्यंतः पणिनामकेनासुरेणापहृता अस्मदीया गाः प्राप्तुमिच्छंतो यूयमेत। आगच्छत। युष्माभिः सहिता वयमिंद्रं गवानयनकर्मसुपायाम। प्राप्नवाम। स चेंद्रोऽनामृणो ऽहिंसकस्तितः सन्नस्माकं देवानां प्रमतिं गोलाभेन हर्षयित्वा प्रकृष्टां बुद्धिं सु ववृधाति। सुष्ठु वर्धयति। आद-नंतरं स इंद्रोऽस्य रायो धनस्य गवां गोरूपस्य संबंधि परं केतमुत्कृष्टं ज्ञानं नोऽस्माकं कुविदावर्जते। अधिकं प्रापयति॥ इत। इण् गतौ। अदादित्वाच्छपो लुक्। अयाम। एतेर्लोडुत्तमबहुवचन आडुत्तमस्य पिच्चेत्याडा-गमः। पिद्वद्भावात्सार्वधातुकलक्षणे गुणेऽयादेशः। न चेणो यण्। पा॰ ६. ४. ८१.। इति यणादेशः। मध्येऽप-वादाः पूर्वान्विधीन्बाधंते। परि॰ ६०.। इति ...त्वात्। अतः परत्वाद्गुणेन यणादेशो बाध्यते। पिद्वद्भावात्प्रत्ययस्यानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वं। गव्यंतः। गा आत्मन इच्छंतः। सुप आत्मनः क्यजिति गोशब्दात्कर्मणः क्यच्। वांतो यि प्रत्यये। पा॰ ६. १. ७९.। इत्यवादेशः। प्रत्ययांताद्धातोर्लटः शतृ। तस्यादुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। प्रमतिं। मन्यतेः क्तिन्यनुदात्तोपदेशेत्यादिनानुनासिकलोपः। तादौ चेति गतेः प्रकृतिस्वरत्वं। ववृधाति। वृधु वृद्धौ। लेट्याडागमः। बहुलं छंदसीति शपः श्लुः। संहिता-यामभ्यासस्य दीर्घश्छांदसः। अनामृणः। मृण हिंसायां। मृणंति हिंसंतीति मृणाः। इगुपधलक्षणः कः। न संत्यामृणा अस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। अस्य रायः। ऊडिदमित्युभयत्र विभक्तेरुदा-त्तत्वं। गवां। साविकाच इति प्राप्तस्य विभक्त्युदात्तस्य न गोश्वन्साववर्णेति प्रतिषेधः। केतं। कित ज्ञाने। घञंत आद्युदात्तः। आवर्जते। वृजी वर्जने। अदादित्वाच्छपो लुकि प्राप्ते बहुलं छंदसीति तदभावः। शपः पित्त्वादनुदात्तत्वं। तिङश्च लसार्वधातुकत्वेन धातुस्वरः। तिङि चोदात्तवतीति गतेरनुदात्तत्वं। कुवियोगा-न्निपातैर्यद्यदिहंतेत्यादिना निघातप्रतिषेधः॥

उपेदहं धनदामप्रतीतं जुष्टां न श्येनो वसतिं पतामि ।
इंद्रं नमस्यन्नुपमेभिरर्कैर्यः स्तोतृभ्यो हव्यो अस्ति यामन् ॥ २ ॥
उप । इत् । अहं । धनऽदां । अप्रतिऽइतं । जुष्टां । न । श्येनः । वसतिं । पतामि ।
इंद्रं । नमस्यन् । उपऽमेभिः । अर्कैः । यः । स्तोतृऽभ्यः । हव्यः । अस्ति । यामन् ॥ २ ॥

य इंद्रः स्तोतृभ्यः स्तोतॄणामनुष्ठातॄणामनुग्रहार्थं यामन् तदीयशत्रुभिः सह प्रवृत्ते युद्धे हव्योऽस्ति तैराह्वातव्यो भवति तमिंद्रमहमनुष्ठातोपेत्पतामि । उपाप्नोम्येव । किं कुर्वन् । उपमेभिरुपमानभूतानीयैरुत्तमैरर्कैः स्तोत्रैः सह नमस्यन् पूजयन् । कीदृशमिंद्रं । धनदां धनप्रदं अप्रतीतमप्रतिगतं । बलिभिरतिरस्कृतमित्यर्थः । इंद्रप्राप्तौ दृष्टांतः । जुष्टां पूर्वैः सेवितां वसतिं स्वकीयनीडरूपां निवासभूमिं श्येनो न । यथा श्येननामको वेगवान्पक्षी स्वकीयस्थानं प्रत्यादरेण धावति तद्वदहमिंद्रं त्वरया प्राप्नोमि ॥ धनदां । धनं ददातीति धनदाः । आतो मनिन्नित्यादिना विच् । अप्रतीतं । शत्रुभिर्न प्रतिगतं । अव्ययपूर्वपदप्रकृतिस्वरत्वं । जुष्टां । जुषी प्रीतिसेवनयोः । श्वीदितो निष्ठायां । पा० ७. २. १४. । इतीट्प्रतिषेधः । नित्यं मंत्रे । पा० ६. १. २१०. । इत्याद्युदात्तत्वं । पतामि । लेट्याडागमः । नमस्यन् । नमस्शब्दात्पूजार्थे नमोवरिवः । पा० ३. १. १९. । इति क्यच् । प्रत्ययस्वरः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वेकादेशस्वरेणोदात्तत्वं । उपमीयंत एभिरित्युपमाः । माङ् माने । घञर्थे कविधानं । पा० ३. ३. ५८. ४. । इति कः । बहुलं छंदसीति भिस ऐसादेशाभावः । कृदुत्तरपदप्रकृतिस्वरत्वं । हव्यः । ह्वेञो बहुलं छंदसीति संप्रसारणं । अचो यदिति यत् । गुणो धातोस्तन्निमित्तस्यैव । पा० ६. १. ८०. । इत्यवादेशः । यतोऽनाव इत्याद्युदात्तत्वं । यामन् । या प्रापणे । मनिनो नित्त्वादाद्युदात्तत्वं । सुपां सुलुगिति सप्तम्या लुक् ॥

नि सर्वसेन इषुधीँरसक्त समर्यो गा अजति यस्य वष्टि ।
चोष्कूयमाण इंद्र भूरि वामं मा पणिर्भूरस्मदधि प्रवृद्ध ॥ ३ ॥
नि । सर्वऽसेनः । इषुऽधीन् । असक्त । सं । अर्यः । गाः । अजति । यस्य । वष्टि ।
चोष्कूयमाणः । इंद्र । भूरि । वामं । मा । पणिः । भूः । अस्मत् । अधि । प्रऽवृद्ध ॥ ३ ॥

सर्वसेनः कृत्स्नसेनायुक्त इषुधीन्बाणानामाधारभूतान्निषंगान्यसक्त । नितरां पृष्ठभागे संयोजितवान् । अर्यः स्वामिरूप इंद्रो यस्य देवस्य वष्टि असुरेणापहृता गाः प्रदातुं कामयते तस्य देवस्य गृहे ता गाः समजति । सम्यक् प्रापयति । हे प्रवृद्ध प्रकृष्टवृद्धियुक्तेंद्र भूरि वामं प्रभूतं गोरूपं धनं चोष्कूयमाणोऽस्मभ्यं प्रयच्छन् अस्मदध्यस्मासु पणिर्मा भूः । व्यवहारी मा भूयाः । गवां मूल्यं मा याचस्वेत्यर्थः ॥ सर्वसेनः । इनेन सह वर्तत इति सेना । वोपसर्जनस्येति सभावः । सर्वा सरणशीला सेना यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । प्रत्ययलक्षणेनाप्ययं स्वर इष्यते । का० ६. १. १९१. । इति वचनात्प्रत्ययलक्षणेन सर्वस्य सुपि । पा० ६. १. १९१. । इति सर्वशब्द आद्युदात्तः । इषुधीन् । इषव एषु धीयंत इतीषुधयः । कर्मण्यधिकरणे च । पा० ३. ३. ९३. । इति किप्रत्ययः । संहितायां दीर्घादटीत्यादिना नकारस्य रुत्वं । अत्रानुनासिकः पूर्वस्य तु वा । पा० ८. ३. २. । इति पूर्वस्वरोऽनुनासिकः । असक्त । षच समवाये । बहुलं छंदसीति शपो लुक् । अर्यः । अर्यः स्वामिवैश्ययोः । पा० ३. १. १०३. । इति यत्प्रत्ययांतो निपातितः । अर्यस्य स्वाम्याख्या चेत् । फि० १. १८. । इत्यंतोदात्तत्वं । अजति । अज गतिक्षेपणयोः । वष्टि । वश कांतौ । अदादित्वाच्छपो लुक् । व्रश्चादिषत्वे ष्टुत्वं । चोष्कूयमाणः । स्कुञ् आप्रवणे । धातोरेकाच इति यङ् । अकृत्सार्वधातुकयोर्दीर्घः । द्विर्वचने शर्पूर्वाः खयः । पा० ७. ४. ६१. । इति ककारः शिष्यते । सकारो लुप्यते । कुहोश्चुरिति चुत्वे गुणो यङ्लुकोरिति गुणः । सुषामादित्वात् षत्वं । यङंताल्लटः शानच् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । भूः । गातिस्थेति सिचो लुक् ॥

वधीर्हि दस्युं धनिनं घनेनँ एकश्चरन्नुपशाकेभिरिंद्र ।
धनोरधि विषुणक्ते व्यायन्नयज्वानः सनकाः प्रेतिमीयुः ॥ ४ ॥
वधीः । हि । दस्युं । धनिनं । घनेनं । एकः । चरन् । उपऽशाकेभिः । इंद्र ।
धनोः । अधि । विषुणक् । ते । वि । आयन् । अयज्वानः । सनकाः । प्रऽइतिं । ईयुः ॥ ४ ॥

हे इंद्र धनिनं बहुधनोपेतं दस्युं चोरं वृत्रं घनेन कठिनेन वज्रेण वधीर्हि । त्वं हतवान्खलु । धनित्वं वाजसनेयिनोऽपि स्पष्टमामनंति । वृत्रस्यांतः सर्वे देवाः सर्वाश्च विद्याः सर्वाणि हवींषि चासन्निति । उपशाकेभिः समीपवर्तिभिः शक्तियुक्तैर्मरुद्भिः सहितो भूत्वैकश्चरन् । प्रहर्तुं स्वयमेक एव गच्छन् । यद्यपि मरुतः समीपे वर्तंते तथापि ते प्रोत्साहयंत्येव न तु वृत्रं प्रहरंति । प्रहर्ता तु स्वयमेक एव । तथा च ब्राह्मणे समाम्नातं । मरुतो हैनं नाजहुः प्रहर भगवो वीरयस्वेत्येवैनमेतां वाचं वदंत उपातिष्ठंत । ऐ॰ ब्रा॰ ३. २०. । इति । धनोरधि इंद्रसंबंधिनो धनुष उपरि विषुणक् विविधं नाशमुद्दिश्य यद्वा विष्वक् सर्वतस्ते वृत्रानुचरा व्यायन् । विविधमागच्छन् । आगत्य चायज्वानो यज्वविरोधिनः संतः सनका एतन्नामका वृत्रानुचराः प्रेतिमीयुः । मरणं प्राप्ताः ॥ वधीः । हन हिंसागत्योः । लुङि च । पा॰ २. ४. ४३. । इति वधादेशः । स चादंतः । तस्यातो लोप इति लोपे सति स्थानिवद्भावादतो हलादेः । पा॰ ७. २. ७. । इति वृद्ध्यभावः । इट ईटि । पा॰ ८. २. २८. । इति सिचो लोपः । आगमानुदात्तत्वे धात्वकारस्योदात्तत्वं । घनेनँ एकः । ईषा अक्षादिषु छंदसि प्रकृतिभावमात्रं वक्तव्यं । पा॰ ६. १. १२७. २. । इति संहितायां प्रकृतिभावः । अनुनासिकश्छांदसः । उपशाकेभिः । उपशक्तं कुर्वंतीत्युपशाकाः । शक्ॢ शक्तौ । अस्माड्डितुमस्यंतात्पचाद्यच् । थाथादिस्वरेणोत्तरपदांतोदात्तत्वं । विषुणक् । विषुपूर्वान्नशेः संपदादिलक्षणः क्विप् । नशेर्वा । पा॰ ८. २. ६३. । इति कुत्वं । यद्वा । विषुपूर्वस्यांचतेर्नुडागमः । सनका इत्यसुराणां नाम । षणु दाने । सन्वंति ददतीति सना दातारः । पचाद्यच् । सनान्कायंति शब्दयंतीति सनकाः । आतोऽनुपसर्गे कः । आतो लोप इटि चेत्याकारलोपः । कृदुत्तरपदप्रकृतिस्वरत्वं । प्रेतिं । तादौ च निती‍ति गतेः प्रकृतिस्वरत्वं । ईयुः । एतेर्लुसिपरत्वादिणो यणिति यणादेशे द्विर्वचनेऽचीति स्थानिवद्भावादिकारस्य द्विर्वचनं । दीर्घ इणः किति । पा॰ ७. ४. ६९. । इत्यभ्यासस्य दीर्घत्वं ॥

परा चिच्छीर्षा ववृजुस्त इंद्रायज्वानो यज्वभिः स्पर्धमानाः ।
प्र यद्दिवो हरिवः स्थातरुग्र निरव्रताँ अधमो रोदस्योः ॥ ५ ॥
परा । चित् । शीर्षा । ववृजुः । ते । इंद्र । अयज्वानः । यज्वऽभिः । स्पर्धमानाः ।
प्र । यत् । दिवः । हरिऽवः । स्थातः । उग्र । निः । अव्रतान् । अधमः । रोदस्योः ॥ ५ ॥

हे इंद्र ते वृत्रानुचराः शीर्षा स्वकीयानि शिरांसि परा चित् पराङ्मुखान्येव कृत्वा ववृजुः । गतवंतः । कीदृशास्ते । अयज्वानः स्वयं यागरहिताः प्रत्युत यज्वभिर्यागानुष्ठातृभिः सह स्पर्धमानाः । हे हरिवो हरिनामकाश्वयुक्त स्थातः स्थितियुक्त युद्धे पलायनरहित उग्र शौर्ययुक्तेंद्र यद्यदा दिवोऽंतरिक्षाद्रोदस्योर्द्यावापृथिव्योः सकाशाच्चाव्रतान्[illegible]नुचरान्निरधमो निःशेषेण धमनं कृतवानसि । तदानीं त्वदीयमुखवायुना नुन्नाः संतो ववृजुरिति पूर्वत्रान्वयः ॥ शीर्षा । शेश्छंदसि बहुलमिति शेर्लोपः । ववृजुः । वृजी वर्जने । असंयोगाल्लिट् कित् । पा॰ १. २. ५. । इति कित्वाद्गुणाभावः । अयज्वानः । यजतेः सुयजोर्ङ्वनिप् । पा॰ ३. २. १०३. । इति भूते ङ्वनिप्प्रत्ययस्य पित्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वं । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं । दिवः । ऊडिदमिति विभक्तेरुदात्तत्वं । हरिवः । हरी अस्य स्त इति हरिवान् । छंदसीर इति मतुपो वत्वं । संबुद्धौ मतुवसोरिति रुत्वं । अव्रतान् । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । दीर्घादटीति संहितायां नकारस्य रुत्वं । आतोऽटि नित्यमिति सानुनासिक आकारः । अधमः । ध्मा शब्दाग्निसंयोगयोः । लङि सिपि शपि पाघ्रेत्यादिना धमादेशः ॥  ॥ १ ॥

अयुयुत्सन्ननवद्यस्य सेनामयातयंत क्षितयो नवंग्वाः ।
वृषायुधो न वध्रयो निरंष्टाः प्रवद्भिरिंद्राच्चितयंत आयन् ॥ ६ ॥
अयुयुत्सन् । अनवद्यस्यं । सेनां । अयातयंत । क्षितयः । नवंऽग्वाः ।
वृषऽयुधः । न । वध्रयः । निःऽअंष्टाः । प्रवत्ऽभिः । इंद्रात् । चितयंतः । आयन् ॥ ६ ॥

अनवद्यस्य गर्हणीय[illegible]रहितस्येंद्रस्य सेनां प्रत्ययुयुत्सन् । वृत्रस्यानुचरा योद्धुमैच्छन् । तदानीं नवग्वा नवनीयगतयः स्तोतव्यचरित्राः । यद्वा । अंगिरसां सत्रमासीनानां मध्ये ये नवभिर्मासैरवाप्तफला उत्थितास्तेषां नवग्वा इति संज्ञा । नवग्वासः सुतसोमास इंद्रं । ऋग्वे॰ ५. २९. १२. । इत्यादिषु तथाभिहितत्वात् । क्षितयो मनुष्या अंगिरःप्रभृतयः । क्षितयः कृष्टय इति तन्नामसु पाठात् । अयातयंत । युद्धार्थमिंद्रं नानाविधैर्मंत्रैः प्रोत्साहितवंतः । इंद्रे योद्धुं गते सति निरष्टास्तेनेंद्रेण निराकृता वृत्रानुचराश्चितयंतः स्वकीयामशक्तिं ज्ञापयंत इंद्रादिंद्रस्य सकाशात्प्रवद्भिः प्रवणैः पलायितुं सुशकैर्मार्गैरायन् । दूरे गतवंतः । तत्र दृष्टांतः । वृषायुधो वृषेण सेचनसमर्थेन पुंस्त्वयुक्तेन शूरेण सह युद्धं कुर्वंतो वध्रयो न नपुंसका इव । निसर्गपंडो वध्रिश्चेत्यादिस्मृतिषु प्रयोगात् । ते यथा प्रबलेन दूरे निराकृता भवंति तद्वत् ॥ अयुयुत्सन् । युध संप्रहारे । सनि इकंताच्च । पा॰ १. २. १०. । इति सनः कित्त्वाद्गुणाभावः । एकाच उपदेशेऽनुदात्तात् । पा॰ ७. २. १०. । इतीट्प्रतिषेधः । व्यत्ययेन परस्मैपदं । सेनां । इनेन सह वर्तत इति सेना वोपसर्जनस्येति सहशब्दस्य सभावः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अयातयंत । यती प्रयत्ने । हेतुमति चेति णिच् । क्षितयः । क्षि निवासगत्योः । क्षियंति गच्छंतीति क्षितयो मनुष्याः । क्तिच्क्तौ च संज्ञायामिति क्तिच् । नवग्वाः । नवभिर्मासैर्गच्छंतीति नवग्वाः । गमेरौणादिको ड्वप्रत्ययः । यद्वा । क्विपि गमः क्वौ । पा॰ ६. ४. ४०. । [illegible]लोप ऊ च गमादीनामिति वक्तव्यं । पा॰ ६. ४. ४०. २. । इत्यकारस्य ऊकारः । जस्योः सुपि । पा॰ ६. ४. ८३. । इति यणादेशः । दीर्घश्छांदसः । वृषायुधः । क्विब्वेति क्विप् । क्विब्वेत्यत्र सोपपदेभ्यो निरुपपदेभ्यः । का॰ ३. २. ७६. । इत्युक्तत्वाद्व सोपपदेभ्यः क्विप् । अन्येषामपि दृश्यत इति पूर्वपदस्य संहितायां दीर्घः । निरष्टाः । अशू व्याप्तौ । भावे निष्ठा । यस्य विभाषेतीट्प्रतिषेधः । व्रश्चादिना षत्वे ष्टुत्वं । निसा च बहुव्रीहौ पू[illegible]स्वरत्वं । यद्वा । निरस्ता इत्यत्र सकारस्य षत्वं छांदसं । तदानीमस्ता [illegible] निष्ठेति गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । प्रवद्भिः । वन षण संभक्तौ । अस्मात्प्रपूर्वात् क्विप् । गमादीनामिति वक्तव्यं । पा॰ ६. ४. ४०. १. । इत्यनुनासिकलोपः । ततस्तुक् । कृदुत्तरपदप्रकृतिस्वरत्वं । चितयंतः । चिती संज्ञाने । अस्माण्ण्यंताल्लटः शतृ । शप् । अनित्यमागमशासनमिति वचनाल्लघूपधगुणाभावः ॥

त्वमेतान्रुदतो जक्षतश्चायोधयो रजंस इंद्र पारे ।
अवादहो दिव आ दस्युमुच्चा प्र सुन्वतः स्तुवतः शंसमावः ॥ ७ ॥
त्वं । एतान् । रुदतः । जक्षतः । च । अयोधयः । रजंसः । इंद्र । पारे ।
अवं । अदहः । दिवः । आ । दस्युं । उच्चा । प्र । सुन्वतः । स्तुवतः । शंसं । आवः ॥ ७ ॥

हे इंद्र त्वं रुदतो रोदनं कुर्वतो जक्षतो भक्षणं हसनं वा कुर्वतश्चैतान् द्विविधानपि वृत्रानु[illegible] पारेऽंतरिक्षस्य परभागे । रजःशब्दोऽंतरिक्षवाची लोका रजांस्युच्यंते । नि॰ ४. १९. । इत्युक्तत्वात् । अयोधयः । युद्धमकारोः । युद्धेन मारितवानित्यर्थः । दस्युमुपक्षयितारं वृत्रं दिव आ द्युलोकादानीयोच्चोत्कर्षेणावादहः । दग्धवानसि । वृत्रं सपरिवारं विनाश्य तत ऊर्ध्वं सुन्वतः सोमाभिषवं कुर्वतः स्तुवतः स्तोत्रं कुर्वतो यजमानस्य शंसं स्तुतिं प्रावः । प्रकर्षेण रक्षितवानसि ॥ रुदतः । रुदिर् अश्रुविमोचने । लटः शतृ । अदादित्वाच्छपो लुक् । प्रत्ययस्वरेणांतोदात्तत्वं । शतुरनुम इति शस उदात्तत्वं । जक्षतः । जक्ष भक्षहसनयोः । पूर्ववच्छपो लुक् । जक्षित्यादयः षट् । पा॰ ६. १. ६. । इत्यभ्यस्तसंज्ञा । अतोऽभ्यस्तानामादिरित्याद्युदात्तत्वं । सुन्वतः । सुनोतेः

शतरि स्वादिभ्यः श्नुः। हुश्नुवोरित्यादिना यणादेशः। शतुरनुम इति विभक्तेरुदात्तत्वं। स्तुवतः। ष्टुञ् स्तुतौ। अदादित्वाच्छपो लुक्। उवङादेशः। पूर्ववत्स्वरः॥

चक्राणासः परीणहं पृथिव्या हिरण्येन मणिना शुंभमानाः।
न हिन्वानासस्तितिरुस्त इंद्रं परि स्पशो अदधात्सूर्येण ॥८॥
चक्राणासः। परिऽनहं। पृथिव्याः। हिरण्येन। मणिना। शुंभमानाः।
न। हिन्वानासः। तितिरुः। ते। इंद्रं। परि। स्पशः। अदधात्। सूर्येण ॥८॥

ये वृत्रानुचराः पृथिव्या भूमेः परीणहमाच्छादनं सर्वतो व्याप्तिं चक्राणासः कुर्वाणा हिरण्येन हिरण्ययुक्तेन मणिना कंठबाह्वादिगतेन मण्याद्याभरणेन शुंभमानाः शोभमाना हिन्वानासो वर्धमानाः संतो वर्तंते ते तथाविधा वृत्रानुचरा इंद्रं युद्धायोद्यंतं न तितिरुः। जेतुं न समर्था आसन्। तदानीं स इंद्रः स्पशो बाधकान्वृत्रानुचरान् सूर्येणादित्येन पर्यदधात्। परिहितान् व्यवहितानकरोत्। तथा च ब्राह्मणं। आदित्यो ह्येवोद्यन् पुरस्ताद्रक्षांस्यपहंतीति॥ चक्राणासः। करोतेश्छंदसि लिडिति वर्तमाने लिटः कानच्। ततोऽसुक्। चित इत्यंतोदात्तत्वं। परीणहं। परिणहनं परीणत्। परिपूर्वान्नह्यतेर्भावे क्विपि नहिवृतीत्यादिना। पा० ६. ३. ११६.। पूर्वपदस्य दीर्घः। पृथिव्याः। उदात्तयण इति विभक्तेरुदात्तत्वं। हिन्वानासः। हि गतौ वृद्धौ च। ताच्छीलिकश्चानश्। तितिरुः। तिरतिर्गत्यर्थः॥

परि यदिंद्र रोदसी उभे अबुभोजीर्महिना विश्वतः सीं।
अमन्यमानाँ अभि मन्यमानैर्निर्ब्रह्मभिरधमो दस्युमिंद्र ॥९॥
परि। यत्। इंद्र। रोदसी इति। उभे इति। अबुभोजीः। महिना। विश्वतः। सीं।
अमन्यमानान्। अभि। मन्यमानैः। निः। ब्रह्मऽभिः। अधमः। दस्युं। इंद्र ॥९॥

हे इंद्र यद्यदा रोदसी उभे द्युलोकभूलोकावुभौ महिना त्वदीयेन महिम्ना विश्वतः सीं सर्वतः परिगृह्य पर्यबुभोजीः परितो भुक्तवानसि तदानीं त्वममन्यमानान् मंत्रार्थमनुध्यातुमशक्तानपि केवलपाठकान्यजमानानभि मन्यमानैरस्मदीया एते यजमाना रक्षणीया इत्यभिमानं कुर्वद्भिर्ब्रह्मभिर्मंत्रैर्दस्युं चोरं वृत्रादिरूपमसुरं निरधमः। निःसारितवानसि। धमतिर्गतिकर्मा। नि० ६. २.। इति यास्कः॥ अबुभोजीः। भुज पालनाभ्यवहारयोः। लङि सिपि बहुलं छंदसि। पा० २. ४. ७६.। इति विकरणस्य श्लुः। बहुलं छंदसि। पा० ७. ३. ९७.। इतीडागमः। अडुदात्तः। यद्वृत्तयोगादनिघातः। महिना। महिम्ना। महच्छब्दात्पृथ्वादिलक्षणे भावे इमनिच्। टेरिति टिलोपः। तृतीयैकवचनेऽल्लोपे सत्युदात्तनिवृत्तिस्वरेणोदात्तत्वं। मलोपश्छांदसः। अमन्यमानान्। मन्यंते जानंतीति मन्यमानाः। मन ज्ञाने। दिवादिभ्यः श्यन्। श्यनो नित्त्वादाद्युदात्तत्वं। समासेऽव्ययपूर्वपद[illegible]स्वरत्वं। संहितायां [illegible]वृत्तौ॥

न ये दिवः पृथिव्या अंतमापुर्न मायाभिर्धनदां पर्यभूवन्।
युजं वज्रं वृषभश्चक्र इंद्रो निर्ज्योतिषा तमसो गा अदुक्षत् ॥१०॥
न। ये। दिवः। पृथिव्याः। अंतं। आपुः। न। मायाभिः। धनऽदां। परिऽअभूवन्।
युजं। वज्रं। वृषभः। चक्रे। इंद्रः। निः। ज्योतिषा। तमसः। गाः। अधुक्षत् ॥१०॥

ये जलविशेषा दिवो द्युलोकात्पृथिव्या अंतं भूमेः स्थानं नापुर्न प्राप्ताः। मेघरूपमापन्नेन वृत्रेण निरुद्धत्वात्। अत एव भूमिप्राप्त्यभावाद्धनदां धनप्रदां भूमिं मायाभिः सस्योपकारादिभिः कर्मभिर्न पर्यभूवन्-

परितो न व्याप्ताः । जलपानसस्याभिवृद्ध्याद्युपकारं न चक्रुरित्यर्थः । तदानीमयमिंद्रो मेघभेदनाय वज्रं युजं स्वहस्तयुक्तं चक्रे । ततो ज्योतिषा द्योतमानेन वज्रेण तमस अंधकाररूपान्मेघान्ना गमनशीलान्युदकानि निरधुक्षत् । निःशेषेण दुग्धवान् । मेघं भित्त्वा जलं वृष्टवानित्यर्थः ॥ दिवः । ऊडिदमिति षष्ठ्या उदात्तत्वं । आपुः । आप्लृ व्याप्तौ । लिट्युसि रूपं । यद्वृत्तयोगादनिघातः । पर्यभूवन् । अत्रापि यच्छब्दस्यानुषंगान्निघाताभावः । युजं । युजिर् योगे । ऋत्विगित्यादिना क्विन् । अनित्यमागमशासनमिति वचनान्नुमभावः । अधुक्षत । दुह प्रपूरणे । लुङि शल इगुपधादनिटः क्सः । पा० ३. १. ४५. । इति च्लेः क्सादेशः । दादेर्धातोर्घः । पा० ८. २. ३२. । इति घत्वं । एकाचो बश इत्यादिना । पा० ८. ३. ३७. । भष्भावः । संहितायां भष्भावाभावश्छांदसः ॥ ॥२॥

अनु स्वधामक्षरन्नापो अस्यावर्धत मध्य आ नाव्यानां ।
सध्रीचीनेन मनसा तमिंद्र ओजिष्ठेन हन्मनाहन्नभि द्यून् ॥११॥
अनु । स्वधां । अक्षरन् । आपः । अस्य । अवर्धत । मध्ये । आ । नाव्यानां ।
सध्रीचीनेन । मनसा । तं । इंद्रः । ओजिष्ठेन । हन्मना । अहन् । अभि । द्यून् ॥११॥

आपो जलान्यस्येंद्रस्य स्वधामन्नं व्रीह्यादिरूपमनुलक्ष्याक्षरन् । मेघाद्वृष्टा अभवन् । तदानीमयं वृत्रो नाव्यानां नावा तरणयोग्यानां बह्वीनामपां मध्ये आ समंतादवर्धत । वृद्धिं प्राप्तः । प्रभूतजले वर्तमानोऽपि न ममार किंत्वभिवृद्ध एव । तदानीमिंद्रः सध्रीचीनेन सहगच्छता मनसा युक्तं तं वृत्रमोजिष्ठेनातिबलयुक्तेन हन्मना हननसाधनेन वज्रेणाभि द्यून् कतिचिद्दिवसानभिलक्ष्याहन् । तेषु दिवसेषु हतवान् । जलमध्ये पतितस्यापि वृत्रस्य मनो यत्रेंद्रस्तिष्ठति तत्रैव सह गच्छति तादृशमभिप्राय स हतवानित्यर्थः ॥ अक्षरन् । क्षर संचलने । नाव्यानां । नावा तार्याणां । नौवयोधर्मेत्यादिना । पा० ४. ४. ९१. । यत् । वांतो यि प्रत्यये । पा० ६. १. ७९. । इत्यावादेशः । अनाव इति पर्युदासात् । पा० ६. १. २१३. । तित्स्वरितमिति प्रत्ययस्वरितत्वं । सध्रीचीनेन । सहांचतीति सध्र्यङ् । सहस्य सध्रिः । पा० ६. ३. ९५. । इति सध्र्यादेशः । विभाषांचेरदिक्स्त्रियां । पा० ५. ४. ८. । इति स्वार्थे खप्रत्ययः । तस्यायन्नित्यादिना ईनादेशः । अच इत्यकारलोपे चाविति दीर्घत्वं । खादेशस्योपदेशिवद्वचनादीकार उदात्तः । ओजिष्ठेन । ओजोऽस्यास्तीत्योजस्वी । अस्मायामेधेति विनिः । तत आतिशायनिक इष्ठन् । विन्मतोर्लुगिति विनो लुक् । टेरिति टिलोपः । नित्त्वादाद्युदात्तत्वं । हन्मना । हन्यतेऽनेनेति हन्म । अन्येभ्योऽपि दृश्यंत इति दृशिग्रहणात्करणेऽपि मनिन् । नित्त्वादाद्युदात्तत्वं । तृतीयैकवचनेऽल्लोपे प्राप्ते न संयोगाद्वमंतात् । पा० ६. ४. १३७. । इति प्रतिषेधः ॥

न्याविध्यदिलीबिशस्य दृळ्हा वि शृंगिणमभिनच्छुष्णमिंद्रः ।
यावत्तरो मघवन्यावदोजो वज्रेण शत्रुमवधीः पृतन्युं ॥१२॥
नि । अविध्यत् । इलीबिशस्य । दृळ्हा । वि । शृंगिणं । अभिनत् । शुष्णं । इंद्रः ।
यावत् । तरः । मघऽवन् । यावत् । ओजः । वज्रेण । शत्रुं । अवधीः । पृतन्युं ॥१२॥

इलीबिशस्य इलाया भूमेर्बिले शयानस्य वृत्रस्य संबंधीनि । इलाबिलशयस्येति यास्कः । नि० ६. १९. । दृळ्हा दृंहितान्यसुरेण निरुद्धानि प्रभूतान्युदकानींद्रो न्यविध्यत् । नितरां विद्धवान् । यद्वा । दृळ्हानि प्रबलानि सैन्यानि नितरां विद्धवान् । तत ऊर्ध्वं शृंगिणं गो[illegible]रायुधैरुपेतं शुष्णं जगतः शोषकं वृत्रं व्यभिनत् । विविधं ताडितवान् । हे मघवन् धनयुक्तेंद्र तव यावत्तरो यावान्वेगोऽस्ति यावदोजो यावद्बलमस्ति तेन सर्वेण युक्तस्त्वं पृतन्युं पृतनां युद्धमिच्छंतं शत्रुं वृत्रं वज्रेणावधीः । हतवानसि ॥ अविध्यत् । व्यध ताडने । ग्रहिज्येत्यादिना संप्रसारणं । तिङ्ङतिङ इति निघात उदात्तस्वरितयोर्यण इति सं[illegible]डागमस्य स्वरितत्वं । इलीबिशस्य । पृषोदरादित्वादभिमतरूपस्वरसिद्धिः । दृळ्हा । दृंहेर्निष्ठायां दृढः स्थूलब-

त्वयोः । पा॰ ७. २. २०. । इति निपात्यते । शेश्छंदसि बहुलमिति शेर्लोपः । अभिनत् । भिदिर् विदारणे । लङि रुधादिभ्यः श्नम् । इतश्चेतीकारलोपे हल्ङ्याब्भ्य इति तिलोपः । शुष्णं । शुष शोषणे । शोषयतीति शुष्णः । तृषिशुषिरसिभ्यः किच्च । उ॰ ३. १२. । इति नप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तत्वं । अवधीः । लुङि चेति हंतेर्वधादेशः । पृतन्युं । पृतनाशब्दात्क्यचि कव्यध्वरपृतनस्येत्यंत्यलोपः । क्याच्छंदसीत्युप्रत्ययः ॥

अभि सिध्मो अजिगादस्य शत्रून्वि तिग्मेन वृषभेणा पुरोऽभेत् ।
सं वज्रेणासृजद्वृत्रमिंद्रः प्र स्वां मतिमतिरच्छाशदानः ॥ १३ ॥

अभि । सिध्मः । अजिगात् । अस्य । शत्रून् । वि । तिग्मेन । वृषभेण । पुरः । अभेत् ।
सं । वज्रेण । असृजत् । वृत्रं । इंद्रः । प्र । स्वां । मतिं । अतिरत् । शाशदानः ॥ १३ ॥

अस्येंद्रस्य सिध्मः साधको वज्रः शत्रूनभि इंद्रवैरिणोऽभिलक्ष्याजिगात् । गतवान् । जिगातिर्गतिकर्मा । गाति जिगातीति गतिकर्मसु पाठात् । स चेंद्रस्तिग्मेन तीक्ष्णेन वृषभेण श्रेष्ठेनायुधेन तेन वज्रेण पुरो वृत्रस्य पुराणि व्यभेत् । विविधं भिन्नवान् । ततः स इंद्रो वज्रेण स्वकीयेन वृत्रं समसृजत् । संयोजितवान् । संयोज्य च शाशदानो वृत्रं हिंसन् स्वां मतिं स्वकीयां हर्षोपेतां बुद्धिं प्रातिरत् । प्रकर्षेण वर्धितवान् ॥ सिध्मः । षिधु संराद्धौ । अस्मादौणादिको मक् । कित्त्वादगुणः । प्रत्ययस्वरः । अजिगात् । गा स्तुतौ । अत्र तु गत्यर्थः । जुहोत्यादित्वात् श्लुः । द्विर्भावे बहुलं छंदसीत्यभ्यासस्येत्वं । तिग्मेन । युजिरुचितिजां कुश्च । उ॰ १. १४५. । इति मक् । कुत्वं । वृषभेण । ऋषिवृषिभ्यां कित् । उ॰ ३. १२३. । इत्यनेनाभच् । अभेत् । भिदिर् विदारणे । श्नमि प्राप्ते व्यत्ययेन शप् । तस्य बहुलं छंदसीति लुक् । लघूपधगुणे हल्ङ्याब्भ्य इति लोपः । यद्वा । लुङि च्लेर्लुक् । अतिरत् । प्रपूर्वस्तिरतिर्वर्धनार्थः । यद्वा । तरतेर्व्यत्ययेन शः । ऋत इद्धातोरितीत्वं । शाशदानः । शद्लृ शातने । अस्माद्यङंताच्छानच् । तस्य च्छंदस्युभयथेत्यार्धधातुकत्वादतोलोपयलोपौ । सार्वधातुकत्वादभ्यस्तानामादिरित्याद्युदात्तत्वं ॥

आवः कुत्समिंद्र यस्मिञ्चाकन्प्रावो युध्यंतं वृषभं दशद्युं ।
शफच्युतो रेणुर्नक्षत द्यामुच्छ्वैत्रेयो नृषाह्याय तस्थौ ॥ १४ ॥

आवः । कुत्सं । इंद्र । यस्मिन् । चाकन् । प्र । आवः । युध्यंतं । वृषभं । दशऽद्युं ।
शफऽच्युतः । रेणुः । नक्षत । द्यां । उत् । श्वैत्रेयः । नृऽसह्याय । तस्थौ ॥ १४ ॥

हे इंद्र कुत्समेतन्नामकं गोत्रप्रवर्तकमृषिमावः । रक्षितवानसि । यस्मिन्कुत्से चाकन् स्तुतिं कामयमानो वर्तसे । तं कुत्समिति पूर्वत्रान्वयः । तथा दशद्युमेतन्नामकं दशसु दिक्षु दीप्यमानमृषिं प्रावः । प्रकर्षेण रक्षितवानसि । कीदृशं । युध्यंतं स्वकीयैः शत्रुभिः सह युद्धं कुर्वंतं वृषभं गुणैः श्रेष्ठं । शफच्युतस्त्वदीयाश्वस्य शफात्पतितो रेणुर्धूलिर्द्यां द्युलोकं नक्षत । प्राप्नोति । श्वैत्रेयः श्वित्राख्याया योषितः पुत्रः पुरा शत्रुभयाज्जले मग्नः सन् त्वदनुग्रहान्नृसह्याय नृभिः पुरुषैः सोढव्यायोत्तस्थौ । जलादुत्थितवान् ॥ चाकन् । चक तृप्तौ । अस्माद्यंताच्छतृ । छंदस्युभयथेत्यार्धधातु[illegible]ः शबभावश्च । प्रत्ययस्वरेणांतोदात्तत्वं । यद्वा । कमु कांतावित्यस्माद्यङ्लुगंताल्लङि सिप्यभ्यासस्य नुमभावश्छांदसः । दीर्घोऽकित इति दीर्घत्वं । सिलोपे मो नो धातोः । पा॰ ८. २. ६४. । इति मकारस्य नकारः । धातुस्वरः । यद्[illegible]न्निघातः । युध्यंतं । व्यत्ययेन परस्मैपदं । दशद्युं । दीव्यतेः प्रकाशार्थात्संपदादिलक्षणः क्विप् । छ्वोः शूडित्यूट् । दशसु दिक्षु द्युर्यस्यासौ दशद्युः । छांदसं ह्रस्वत्वं । यद्वा । द्युशब्दोऽहर्नामसु पठितः । तेन प्रवृत्तिनिमित्तभूतः प्रकाशो लक्ष्यते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । शफच्युतः । शफेन च्युतः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । नक्षत । नक्ष गतौ । व्यत्ययेनात्मनेपदं । श्वैत्रेयः । श्वित्राया अपत्यं । स्त्रीभ्यो ढक् । पा॰ ४. १. १२०. । नृसह्याय । [illegible] । पा॰ ३. १. ९९. ।

इति कर्मणि यत्। यतोऽनाव इत्याद्युदात्तत्वं। समासे कृदुत्तरपदप्रकृतिस्वरत्वं। पूर्वपदात्। पा० ८. ३. १०६.। इति षत्वं। संहितायां दीर्घश्छांदसः॥

आवः शमं वृषभं तुग्र्यासु क्षेत्रजेषे मघवञ्छ्वित्र्यं गां।
ज्योक् चिदत्र तस्थिवांसो अक्रञ्छत्रूयतामधरा वेदनाकः ॥१५॥

आवः। शमं। वृषभं। तुग्र्यासु। क्षेत्रऽजेषे। मघऽवन्। श्वित्र्यं। गां।
ज्योक्। चित्। अत्र। तस्थिऽवांसः। अक्रन्। शत्रुऽयतां। अधरा। वेदना। अकरित्यकः ॥१५॥

हे मघवन् धनवन्निंद्र श्वित्र्यं श्वित्रायाः पुत्रं पूर्वोक्तं पुरुषमावः। रक्षितवानसि। किमर्थं। क्षेत्रजेषे शत्रुभिः सह युद्धवेलायां क्षेत्रप्राप्त्यर्थं। कीदृशं। शमं त्वदीयपरिपालनेन चित्तव्याकुलतां परित्यज्य शांतं वृषभं गुणैः श्रेष्ठं तुग्र्यासु गां जलेषु गतं। मग्नमित्यर्थः। तुग्र्या बुर्बुरमित्युदकनामसु पठितत्वात्। अत्रास्माभिः सह युद्धे ज्योक् चित् चिरकालमपि तस्थिवांसोऽवस्थिताः संतोऽक्रन्। ये वैरिणः शत्रुत्वमकुर्वन्। शत्रूयतां शत्रूनात्मन इच्छतां तेषामधरा वेदना निकृष्टानि दुःखानि त्वमकः। कुरु॥ तुग्रशब्दोऽंतरिक्षवचनः। तत्र भवास्तुग्रियाः। तुग्राद्घन्। पा० ४. ४. ११५.। इति घन्। तस्येयादेशः। इकारलोपश्छांदसः। नित्वादाद्युदात्तत्वं। क्षेत्रजेषे। जेषृ णेषृ एषृ प्रेषृ गतौ। अस्मात्संपदादिलक्षणः क्विप्। क्षेत्रस्य जेट् क्षेत्रजेट्। समासांतोदात्तत्वं। अंतोदात्तादुत्तरपदादित्यादिना। पा० ६. १. १६९.। विभक्तेरुदात्तत्वं। श्वित्र्यं। श्वित्रायां भवः। भवे छंदसीति यत्। यतोऽनाव इत्याद्युदात्तत्वं। तस्थिवांसः। तिष्ठतेः क्वसुः। वस्वेकाजाद्घसा[illegible]मितीडागमः। अक्रन्। करोतेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुक्। शत्रूयतां। शत्रूनात्मन इच्छंतीति शत्रूयंतः। सुप आत्मनः क्यजिति क्यच्। तदंताच्छतृ। तस्य लसार्वधातुकानुदात्तत्व एकादेशस्वरेणोदात्तत्वं। तस्य च पूर्वत्रासिद्धत्वं नेष्यते। पा० ८. २. ६. १.। इत्युक्तत्वाच्छत्रंतमंतोदात्तत्वमिति शतुरनुमो नद्यजादी इति विभक्तेरुदात्तत्वं। अधरा वेदनेत्युभयत्र शेश्छंदसि बहुलमिति शेर्लोपः। अकः। करोतेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुक्। गुणः॥ ॥३॥

त्रिश्चिन्नो अद्येति चतुर्थं सूक्तं द्वादशर्चं। ऋषिश्चान्यस्मादृषेरिति परिभाषयांगिरसो हिरण्यस्तूप ऋषिः। अश्विनौ देवता। त्रि त्रो चक्रेति नवमी आ नो अश्विनेति द्वादशी च त्रिष्टुभौ। शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः। त्रिश्चिद्द्वादशाश्विनं नवम्यंत्ये त्रिष्टुभावित्यनुक्रमणिका॥ प्रातरनुवाक आश्विने क्रतौ जागते छंदसीदं सूक्तं। अथाश्विन इति खंडे सूत्रितं। त्रिश्चिन्नो अद्येके द्यावापृथिवी इति जागतं। आ० ४. १५.। इति॥ आश्विने शस्त्रेऽप्येतत्सूक्तं प्रातरनुवाकन्यायेन। आ० ६. ५.। इत्यतिदिष्टत्वात्॥

त्रिश्चिन्नो अद्या भवतं नवेदसा विभुर्वां याम उत रातिरश्विना।
युवोर्हि यंत्रं हिम्येव वाससोऽभ्यायंसेन्या भवतं मनीषिभिः ॥१॥

त्रिः। चित्। नः। अद्य। भवतं। नवेदसा। विऽभुः। वां। यामः। उत। रातिः। अश्विना।
युवोः। हि। यंत्रं। हिम्याऽइव। वाससः। अभिऽआयंसेन्या। भवतं। मनीषिऽभिः ॥१॥

हे नवेदसाश्विना मेधाविनावश्विदेवौ। नवेदा इति मेधाविनाम नवेदाः कविर्मनीषीति तन्नामसु पठितत्वात्। तादृशौ युवां त्रिश्चित् त्रिवारमप्यद्यास्मिन्कर्मणि नोऽस्मदर्थं भवतं। आगतौ भवतं। अत्र त्रिरिति वचनं सवनत्रयापेक्षं। आदरातिशयद्योतनार्थं वा। त्रिषत्या हि देवा इति श्रुत्यंतरात्। वां युवयोर्यामो गमनसाधनभूतो रथो विभुर्व्याप्तः। उतापि च रातिर्दानं विभुरिति शेषः। युवोर्युवयोरुभयोर्यंत्रं हि परस्परनियमरूपः संबंधविशेषोऽस्ति खलु। तत्र दृष्टांतः। वाससः सूर्यरश्म्याच्छादन[illegible]स्य वासरस्य हिम्येव।

हिमयुक्तया रात्र्येव। यथा रात्र्या सह दिवसस्य संबंधः कदाचिदपि नापैति तद्वत्। युवामुभौ मनीषिभिर्मेधाविभिर्ऋत्विग्भिः। मनीषीति मेधाविनाम मनीषी मंधातेति तन्नामसु पठितत्वात्। अभ्यायंसेन्याभितो नियंतव्यौ अनुग्रहवशात्तदधीनौ भवतं॥ अद्य। निपातस्य चेति संहितायां दीर्घः। नवेदसा। विपरीतं न वित्त इति नवेदसौ। विद ज्ञान इत्यस्मात् [illegible]ऽसुन्। नञ्समासे नभ्राण्नपादित्यादिना नकारस्य प्रकृतिभावः। सुपां सुलु[illegible]। आमंत्रितनिघातः। यामः। यायते गम्यतेऽनेनेति यामो रथः। अर्तिस्तुस्वित्यादिना मन्। नित्त्वादाद्युदात्तत्वं। यद्वा। यम उपरम इत्यस्मात्कर्मणि घञ्। वृषादिषु पाठादाद्युदात्तत्वं। रातिः। रा दान इत्यस्माद्भावे क्तिन्। मंत्रे वृषेत्यादिना तस्योदात्तत्वं। युवोः। सुपां सुपो भवंतीति षष्ठीद्विवचनस्य षष्ठीद्विवचनादेशः। अत आदेश[illegible]ऽचि। पा॰ ७. २. ८९.। इति यत्वं न भवति। शेषे लोप इति टिलोप उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्तत्वं। अंत्यलोपपक्षे लेकादेशस्वरेण। हिम्या इव। हिमेति रात्रिनाम ऊधः पयो हिमेति तन्नामसु पठितत्वात्। हन्तेर्हि च। उ॰ १. १४६.। इति मक्। हंति पद्मानीति हिमं। अर्शआद्यच्। हिमा रात्रिः। तत उत्तरस्य तृतीयैकवचनस्य सुपां सुलुगिति ड्यादेशः। ततष्टिलोप उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वं। वाससः। वस आच्छादने। वासयति प्रकाशेनाच्छादयतीत्यहर्वासः। अभ्यायंसेन्या। अभ्याङित्युपसर्गद्वयोपपदष्टावम उपरम इत्यस्मा[illegible]ः सेन्यप्रत्ययः। सुपां सुलुगित्याकारः॥

त्रयः पवयो मधुवाहने रथे सोमस्य वेनामनु विश्व इद्विदुः।
त्रयः स्कंभासः स्कभितास आरभे त्रिर्नक्तं याथस्त्रिर्वश्विना दिवा॥२॥
त्रयः। पवयः। मधुऽवाहने। रथे। सोमस्य। वेनां। अनु। विश्वे। इत्। विदुः।
त्रयः। स्कंभासः। स्कभितासः। आऽरभे। त्रिः। नक्तं। याथः। त्रिः। ऊं इति। अश्विना। दिवा॥२॥

मधुवाहने मधुरद्रव्याणां नानावि[illegible] वहनेन युक्तेऽश्विनोः संबंधिनि रथे पवयो वज्रसमाना दृढाश्चक्रविशेषास्त्र[illegible]काः संति। इत् इत्थं चक्रत्रयसद्भावप्रकारं विश्वे सर्वे देवाः सोमस्य चंद्रस्य वेनां कमनीयां भार्यामभिलक्ष्य याचायां विदुः। जानंति। यदा सोमस्य वेनया सह विवाहस्तदानीं नानाविधखाद्ययुक्तं चक्रत्रयोपेतं प्रौढं रथमारुह्याश्विनौ गच्छत इति सर्वे देवा जानंतीत्यर्थः। तस्य रथस्योपरि स्कंभासः स्तंभविशेषास्त्रयस्त्रिसंख्याकाः स्कभितासः। स्थापिताः। किमर्थं। आरभे। आरब्धुं। अवलंबितुं। यदा रथस्त्वरया याति तदानीं पतनभीतिनिवृत्त्यर्थं हस्तालंबनभूताः स्तंभा इत्यर्थः। हे अश्विना युवां तादृशेन रथेन नक्तं रात्रौ त्रिर्यथः। त्रिवारं गच्छथः। तथा दिवा दिवसेऽपि त्रिर्याथः। रात्रावहनि च रथमारुह्य पुनःपुनः क्रीडथ इत्यर्थः॥ मधुवाहने। मधु वाह्यतेऽनेनेति मधुवाहनः। करणे ल्युट्। विदुः। वेत्तेर्लटि विदो लटो वेति झेरुसादेशः। स्कंभासः। ष्टभि स्कभि गतिप्रतिबंधे। स्कंभंते प्रतिबद्धा भवंतीति स्कंभाः। पचाद्यच्। स्कभितासः। स्कम्भुः सौत्रो धातुः। अस्मान्निष्ठायां यस्य विभा[illegible] प्राप्ते यसितस्कभितेत्यादिनेडागमो निपातितः। आरभे। रभ राभस्ये। अस्मादाङ्पूर्वात्संपदादिलक्षणो भावे क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वं॥

समाने अहन्त्रिरवद्यगोहना त्रिरद्य यज्ञं मधुना मिमिक्षतं।
त्रिर्वाजवतीरिषो अश्विना युवं दोषा अस्मभ्यमुषसश्च पिन्वतं॥३॥
समाने। अहन्। त्रिः। अवद्यऽगोहना। त्रिः। अद्य। यज्ञं। मधुना। मिमिक्षतं।
त्रिः। वाजऽवतीः। इषः। अश्विना। युवं। दोषाः। अस्मभ्यं। उषसः। च। पिन्वतं॥३

हे अश्विना अश्विनौ देवौ युवं युवामुभौ समानेऽहन्नेकस्मिन्ननुष्ठानदिने त्रिरवद्यगोहना त्रिवारमनुष्ठा

गतानां दोषाणां [illegible]णौ भवतं। अद्यास्मिन्दिने यज्ञं यज्ञगतं हविर्मधुना मधुररसेन त्रिर्मिमिक्षतं। त्रिवारं सिंचतं। किंच दोषा उषसश्च रात्रीर्दिवसांश्च रात्रिषु दिवसेषु नैरंतर्येण वाजवतीर्बलकारिणीरिषो ऽन्नान्यस्मभ्यं पिन्वतं। सिंचतं। प्रयच्छतमित्यर्थः ॥ अहन्। सुपां सुलुगिति सप्तम्या लुक्। अवद्यगोहना। गुह संवरणे। अवद्यस्य गूहयितारौ। नंद्यादित्वाल्ल्युः। ऊदुपधाया गोहः। पा॰ ६. ४. ८९.। इति प्राप्तस्य ऊत्वस्याभावश्छांदसः। मिमिक्षतं। मिह सेचने। सन्येकाच उपदेशेऽनुदात्तादितीट्प्रतिषेधः। हलंताच्चेति सनः किच्वाल्लघूपधगुणाभावः। द्विर्भावहलादिशेषौ। ढत्वकत्वषत्वानि। वाजवतीः। उगितश्चेति ङीप्। पिन्वतं। पिवि मिवि णिवि सेचने। इदित्त्वान्नुम्। कर्तरि शप्॥

त्रिर्वर्तिर्यातं त्रिरनुव्रते जने त्रिः सुप्राव्ये त्रेधेव शिक्षतं।
त्रिर्नांद्यं वहतमश्विना युवं त्रिः पृक्षो अस्मे अक्षरेव पिन्वतं ॥ ४ ॥
त्रिः। वर्तिः। यातं। त्रिः। अनुऽव्रते। जने। त्रिः। सुप्रऽअव्ये। त्रेधाऽइव। शिक्षतं।
त्रिः। नांद्यं। वहतं। अश्विना। युवं। त्रिः। पृक्षः। अस्मे इति। अक्षराऽइव। पिन्वतं ॥ ४ ॥

हे अश्विना युवं त्रिर्वर्तिर्यातं। अस्मदीयवर्तनसाधनं गृहं त्रिर्यातं। त्रिवारं प्राप्नुतं। तथानुव्रतेऽस्मदनुकूलव्यापारयुक्ते जने त्रिर्यातं। त्रिवारं तदनुग्रहाय गच्छतं। त्रिः सुप्राव्ये त्रिवारं सुष्ठु प्रकर्षेण भवद्भ्यां रक्षणीये प्रवर्तमानानस्मान् त्रेधेव त्रिभिरेव प्रकारैः शिक्षतं। पुनःपुनरनुष्ठानमुपदेष्टव्यमित्यर्थः। तथा नांद्यं नंदनीयं संतोषकरं फलं त्रिर्वहतं। प्रापयतं। अस्मे अस्मासु पृक्षोऽन्नं त्रिः पिन्वतं। त्रिवारं प्रयच्छतं। तत्र दृष्टांतः। अक्षरेव। अक्षराण्युदकानि अक्षरा स्रोतस्तृप्तिरिति तन्नामसु पाठात्। तानि पर्जन्यो यथा प्रयच्छति तद्वत् ॥ वर्तिः। वर्ततेऽत्रेति वर्तिर्गृहं। हृपिषिरुहिवृतीत्यादिना। उ॰ ४. ११८.। इप्रत्ययः। सुपां सुलुगिति द्वितीयैकवचनस्य सुआदेशः। सुप्राव्ये। उपसर्गद्वयोपसृष्टादवतेः कर्मणि ण्यत्। संज्ञापूर्वको विधिरनित्य इति वृद्ध्यभावः। तित्स्वरितमिति स्वरितत्वं। शिक्षतं। शिक्ष विद्योपादाने। नांद्यं। ण्यदंतः। पृक्षः। पृची संपर्के। असुनि सुडागमः। अस्मे। सुपां सुलुगिति शेआदेशः। अक्षरा इव। अश्नुवते व्याप्नुवंतीत्यक्षराण्युदकानि। औणादिकः क्सरप्रत्ययः। शेर्लोपः ॥

त्रिर्नो रयिं वहतमश्विना युवं त्रिर्देवताता त्रिरुतावतं धियः।
त्रिः सौभगत्वं त्रिरुत श्रवांसि नस्त्रिष्ठं वां सूरे दुहिता रुहद्रथं ॥ ५ ॥
त्रिः। नः। रयिं। वहतं। अश्विना। युवं। त्रिः। देवऽताता। त्रिः। उत। अवतं। धियः।
त्रिः। सौभगऽत्वं। त्रिः। उत। श्रवांसि। नः। त्रिऽस्थं। वां। सूरे। दुहिता। आ।
रुहत्। रथं ॥ ५ ॥

हे अश्विना युवं नोऽस्मान्रयिं धनं त्रिर्वहतं। त्रिवारं प्रापयतं। देवताता देवतातौ देवैर्युक्ते कर्मणि त्रिस्त्रिवारमागच्छतमिति शेषः। उतापि च धियोऽस्मद्बुद्धीस्त्रिस्त्रिवारं रक्षतं। सौभगत्वं सौभाग्यं त्रिर्वहतमिति शेषः। उतापि च श्रवांस्यन्नानि नोऽस्मभ्यं त्रिर्वहतं। वां युवयोः संबंधिनं त्रिष्ठं चक्रत्रयेऽवस्थितं रथं सूरे सूर्यस्य दुहिता पुत्री। दुहिता दुर्हिता दूरे हिता। नि॰ ३. ४.। इति यास्कः। आरूढवती ॥ देवताता। सर्वदे[illegible]। पा॰ ४. ४. १४२.। इति स्वार्थिकस्तातिल्प्रत्ययः। तेन देवतातिशब्देन देवसंबद्धो यज्ञो लक्ष्यते। देवताता मख इति तन्नामसु पठितत्वात्। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। सुपां सुलुगिति सप्तम्या डादेशः। त्रिष्ठं। त्रिषु चक्रेषु तिष्ठतीति त्रिष्ठः। सुपि स्थः। पा॰ ३. २. ४.। इति कः। अंबांबेत्यादिना। पा॰ ८. ३. ९७.। सकारस्य षत्वं। सूरे। षू प्रेरणे। सुसूधागृधिभ्यः क्रन्। उ॰ ४. २५.। इति क्रन्। नित्त्वादाद्युदात्तः। विभक्तिव्यत्ययः। आ रुहत्। कृमृदृरुहिभ्यश्छंदसि। पा॰ ३. १. ५९.। इति च्लेरङादेशः ॥

त्रिर्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः ।
ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती ॥ ६ ॥
त्रिः । नः । अश्विना । दिव्यानि । भेषजा । त्रिः । पार्थिवानि । त्रिः । ऊं इति । दत्तं । अत्ऽभ्यः ।
ओमानं । शंऽयोः । ममकाय । सूनवे । त्रिऽधातु । शर्म । वहतं । शुभः । पती इति ॥ ६ ॥

हे अश्विना नोऽस्मभ्यं दिव्यानि द्युलोकवर्तीनि भेषजा औषधानि त्रिर्दत्तं । तथा पार्थिवानि । पृथिव्यामुत्पन्नान्यौषधानि त्रिर्दत्तं । अद्भ्य उ अंतरिक्षसकाशादप्यौषधानि त्रिर्दत्तं । आप इत्यंतरिक्षनाम आपः पृथिवी भूरिति तन्नामसु पाठात् । शंयोरेतन्नामकस्य बृहस्पतिपुत्रस्य । ते शंयुं बार्हस्पत्यमब्रुवन् । तै° सं° २. ६. १०. १. । इति ब्राह्मणांतरात् । तस्य संबंधिनमोमानं सुखविशेषं ममकाय सूनवे मदीयाय पुत्राय दत्तं । हे शुभस्पती शोभनस्यौषधजातस्य पालकौ युवां त्रिधातु वातपित्तश्लेष्मधातुत्रयशमनविषयं सुखं वहतं । प्रापयतं ॥ दिव्यानि । द्युप्रागपागुदक्प्रतीचो यत् इति । दंडादित्वाद्यप्रत्ययः । पा° ५. १. ६६. । भेषजा । भिषज् चिकित्सायां । पुंसि संज्ञायामिति घः । शंयोः । शमु उपशमे । क्विप् । शम् । यु अमिश्रणे । अस्माड्डिच् । कृदुत्तरपदप्रकृतिस्वरः । त्रिधातु । सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् । उ° १. ७०. । अद्भ्यः । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । ओमानं । अवतेरन्येभ्योऽपि दृश्यंत इति मनिन् । ज्वरत्वरेत्यादिनाकारवकारयोरूठ् । सार्वधातुकार्धधातुकयोरिति गुणः । यदि ज्वरत्वरेत्यत्रानुनासिके च । पा° ६. ४. १९. । इति नानुवर्तते तर्हि पूर्वेणैव सूत्रेण वकारस्य ऊडादेशो भविष्यति । शुभस्पती । शुभ दीप्तौ । संपदादिलक्षणः क्विप् । षष्ठ्याः पतिपुत्रेति संहितायां विसर्जनीयस्य सत्वं । सुबामंत्रित इति परांगवद्भावात् षष्ठ्यामंत्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वं ॥ ॥ ४ ॥

त्रिर्नो अश्विना यजता दिवेदिवे परि त्रिधातु पृथिवीमशायतं ।
तिस्रो नासत्या रथ्या परावत आत्मेव वातः स्वसराणि गच्छतं ॥ ७ ॥
त्रिः । नः । अश्विना । यजता । दिवेऽदिवे । परि । त्रिऽधातु । पृथिवीं । अशायतं ।
तिस्रः । नासत्या । रथ्या । पराऽवतः । आत्माऽइव । वातः । स्वसराणि । गच्छतं ॥ ७ ॥

हे अश्विना दिवे दिवे प्रतिदिनं । दिवेदिवे द्यविद्यवीत्यहर्नामसु पठितत्वात् । यजता यष्टव्यौ युवां नोऽस्मदीयां पृथिवीं वेदिरूपां भूमिं परि सर्वतः प्राप्य त्रिधातु कक्ष्यात्रययुक्त आस्तीर्णे बर्हिषि त्रिस्त्रिवारमशायतं । शयनं कुरुतं । हे रथ्या रथ्यौ रथस्वामिनौ तिस्रस्त्रिसंख्याका ऐष्टिकपाशुकसौमिकरूपा वेदीर्गच्छतं । तत्र दृष्टांतः । स्वसराणि शरीराण्यात्मेव वातः । यथा प्राणिनामात्मभूतः प्राणवायुस्तदीयानि शरीराणि गच्छति तद्वत् ॥ यजता । यजतेर्भृमृदृशीत्यादिना । उ° ३. ११०. । अतच् । चित इत्यंतोदात्तत्वं । त्रिधातु । त्रेधा धीयते निधीयत इति त्रिधातु । सितनिगमीत्यादिना धाञस्तुन् । नित्त्वादाद्युदात्तत्वं । समासे कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते । सुपां सुलुगिति सप्तम्या लुक् । अशायतं । अदादित्वाच्छपो लुक् । अशयातामित्यस्य ह्रस्वदीर्घयोर्व्यत्यासः । नासत्या । सत्सु साधू सत्यौ । न सत्यावसत्यौ । न असत्यौ नासत्यौ । सत्यावेव नासत्यावित्यौर्णवाभ इति यास्कः । नि° ६. १३. । नभ्राण्नपादित्यादिना नञः प्रकृतिभावः । रथ्या । रथार्हौ स्वामिनावित्यर्थः । छंदसि च । पा° ५. १. ६७. । इति यप्रत्ययः । स्वसराणि । सरंति गच्छंतीति सरा इंद्रियाणि । स्वकीयाः सरा येषां शरीराणां । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

त्रिरश्विना सिंधुभिः सप्तमातृभिस्त्रय आहावास्त्रेधा हविष्कृतं ।
तिस्रः पृथिवीरुपरि प्रवा दिवो नाकं रक्षेथे द्युभिरक्तुभिर्हितं ॥ ८ ॥

त्रिः । अश्विना । सिंधुऽभिः । सप्तमातृऽभिः । त्रयः । आऽहावाः । त्रेधा । हविः । कृतं ।
तिस्रः । पृथिवीः । उपरि । प्रवा । दिवः । नाकं । रक्षेथे इति । द्युऽभिः । अक्तुऽभिः ।
हितं ॥ ८ ॥

हे अश्विना सप्तमातृभिः । इमं मे गंगे । ऋग्वे॰ १०.७५.५. । इत्यादिमंत्रोक्ताः सप्तसंख्याका गंगाद्या नद्यो मातर उत्पादिका येषां जलविशेषाणां ते सप्तमातरः । तैः सिंधुभिः स्यंदनस्वभावैर्जलैर्वसतीवरीनामभिस्त्रिः सोमाभिषवः कृत इति शेषः । तथा चान्यत्र ब्राह्मणे समाम्नातं । अष्टौ कृत्वोऽभिषुणोति एकादश कृत्वो द्वितीयं द्वादश कृत्वस्तृतीयमिति । तै॰ सं॰ ६.४.५.१. । आहावा यथोक्तजलयुक्तस्य सोमस्याधारभूताः कूपस-दृश[illegible] द्रोणकलशा धवनीयपूतभृदाख्या निष्पन्ना इति शेषः । तेषु त्रिषु पात्रविशेषेषु त्रेधा त्रिभिः प्रकारैः सवनत्रयगतैर्हविष्कृतं । सोमाख्यं हविः संपादितं द्रव्यं वर्तत इति शेषः । तिस्रः पृथिवीरुपरि त्रिभ्यः पृथिव्यादिलोकेभ्य ऊर्ध्वं प्रवा प्रवंतौ गच्छंतौ युवां दिवो नाकं द्युलोकसंबंधिनमादित्यं रक्षेथे । कीदृशं नाकं । द्युभिरहोभिरक्तुभी रात्रिभिश्च हितं स्थापितं । अहनि सूर्य उदेति रात्रावस्तं गच्छतीत्येवमहोरात्राभ्यां सूर्यो व्यवस्थाप्यत इत्यर्थः ॥ सप्तमातृभिः । बहुव्रीहिस्वरः । आहावाः । निपानमाहावः । पा॰ ३.३.७४. । इत्याङ्-पूर्वाद्ध्वयतेरप्प्रत्ययः संप्रसारणं वृद्धिश्च निपातनात् । थाथादिनोत्तरपदांतोदात्तत्वं । प्रवा । प्रुङ् प्लुङ् गतौ । प्रवेते गच्छत इति प्रवौ । पचाद्यच् । सुपां सुलुगित्याकारः । नाकं । नास्मिन्नकमस्तीति नाकः । नभ्राण्नपादि-त्यादिना नञः प्रकृतिभावः । द्युभिः । ऊडिदमित्यादिना प्राप्तस्य विभक्त्युदात्तस्य दिवो झल् । पा॰ ६.१.१८३. । इति प्रतिषेधः ॥

क्व१ त्री चक्रा त्रिवृतो रथस्य क्व१ त्रयो वंधुरो ये सनीळाः ।
कदा योगो वाजिनो रासभस्य येन यज्ञं नासत्योपयाथः ॥ ९ ॥
क्व । त्री । चक्रा । त्रिऽवृतः । रथस्य । क्व । त्रयः । वंधुरः । ये । सऽनीळाः ।
कदा । योगः । वाजिनः । रासभस्य । येन । यज्ञं । नासत्या । उपऽयाथः ॥ ९ ॥

हे नासत्यावश्विनौ त्रिवृतस्त्रिसंख्याकैरश्रिभिरुपेतस्य भवदीयस्य रथस्य । ईषाद्वयं पूर्वभागे संयुज्यते । सेयमेकाश्रिः । पृष्ठभागे वियुज्यते । तत्र कोणद्वयं संपद्यते । ईदृशस्य रथस्य संबंधीनि त्री चक्रा त्रीणि चक्राणि क्व । कुत्र स्थितानीत्यस्माभिर्न दृश्यते । ये काष्ठविशेषाः सनीळाः । नीळं गृहसदृशं रथस्योपर्युपवेशस्थानं । तेन सह वर्तंत इति सनीळास्ते काष्ठविशेषा वंधुरो नीडबंधनाधारभूतास्त्रयोऽत्रेण सहिते द्वे ईषे इत्येवं त्रिसंख्याकाः क्व । कुत्र स्थिता इत्यस्माभिर्न ज्ञायते । वाजिनो बलवतो रासभस्य भवदीयाश्वस्थानीयस्य गर्दभस्य योगो रथे योजनं कदा । कस्मिन्काले निष्पन्नमित्यस्माभिर्न दृश्यते । येन चक्रत्रयनीडकाष्ठत्रयरासभयोजनसहितेन रथेन यज्ञमस्मदीयं यागस्थानमुपयाथो युवां प्राप्नुथः । तादृशस्य रथस्येति पूर्वत्रान्वयः ॥ त्री चक्रा । उभयत्रापि शेश्छंदसि बहुलमिति शेर्लोपः । वंधुरः । बंधेरौणादिक उरप्रत्ययः । वत्वं छांदसं । सनीळाः । वोपसर्जनस्येति सभावः ॥

आ नासत्या गच्छतं हूयते हविर्मध्वः पिबतं मधुपेभिरासभिः ।
युवोर्हि पूर्वं सवितोषसो रथमृताय चित्रं घृतवंतमिष्यति ॥ १० ॥
आ । नासत्या । गच्छतं । हूयते । हविः । मध्वः । पिबतं । मधुऽपेभिः । आसऽभिः ।
युवोः । हि । पूर्वं । सविता । उषसः । रथं । ऋताय । चित्रं । घृतऽवंतं । इष्यति ॥ १० ॥

हे [illegible] कर्मणा गच्छतं । अत्रास्माभिर्हविर्हूयते । युवां च मधुपेभिर्मधु [illegible]-भिर्भवदीयैरास्यैर्मध्वो मधुरद्रव्याणि हवींषि पिबतं । सविता सूर्य उषसः पूर्वमुषःकालात्पुरा युवयोरश्विनोः

संबंधिनं रथमृतायास्मद्यज्ञार्थमिष्यति हि। प्रेरयति खलु। कीदृशं। चित्रं पूर्वोक्तैश्चक्रत्रयादिभिर्विचित्रं घृतवंतमक्षांजनसाधनेन घृतेनोपेतं॥ गच्छतं। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वं। धातुस्वरः। अत्र गच्छतं पिबतं चेति चार्थप्रतीतेश्चादिलोपे विभाषेति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः। हूयते। लसार्वधातुकानुदात्तत्वे यकः स्वरः। मध्वः। लिंगव्यत्ययः शसि यणादेशश्छांदसः। मधुपेभिः। मधु पिबंतीति मधुपानि। आतोऽनुपसर्गे क इति कप्रत्ययः। आसभिः। पद्दन्नित्यादिनास्यशब्दस्यासनादेशः। युवोः। युवोर्हि यं[illegible]। इष्यति। इष गतौ। श्यनो नित्त्वादाद्युदात्तत्वं। हि चेति निघातप्रतिषेधः॥

आ नासत्या त्रिभिरेकादशैरिह देवेभिर्यातं मधुपेयमश्विना।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा॥११॥
आ। नासत्या। त्रिऽभिः। एकादशैः। इह। देवेभिः। यातं। मधुऽपेयं। अश्विना।
प्र। आयुः। तारिष्टं। निः। रपांसि। मृक्षतं। सेधतं। द्वेषः। भवतं। सचाऽभुवा॥११॥

हे नासत्या असत्येनानृतेन रहितावश्विना अश्विदेवौ युवां त्रिभिरेकादशैः ये देवासो दिव्येकादश स्थ। ऋग्वे॰ १. १३९. ११.। इत्यादिमंत्रप्रतिपादितैस्त्रिसंख्याकैरेकादशात्मकवर्गत्रयगतैर्देवैः सह मधुपेयं सोमात्मकं मधुरद्रव्यपानमभिलक्ष्येहास्मिन्देवयजनदेश आ यातं। आगच्छतं। आयुरस्मदीयमायुष्यं प्र तारिष्टं। प्रवर्धयतं। रपांस्यस्मदीयानि पापानि निर्मृक्षतं। निःशेषेण शोधयतं। द्वेषो द्वेषकर्तॄन् सेधतं। प्रतिषेधतं। सचाभुवा अस्माभिः सहावस्थितौ भवतं॥ त्रिभिः। षट्त्रिचतुर्भ्य इति विभक्तेरुदात्तत्वं। एकादशैः। एकादशानां पूरणैः। तस्य पूरणे। पा॰ ५. २. ४८.। इति डट्। मधुपेयं। पा पाने। अचो यदिति कर्मणि यत्। ईद्यति। पा॰ ६. ४. ६५.। इत्याकारस्य ईकारादेशः। यतोऽनाव इत्याद्युदात्तत्वं। मधु च तत्पेयमिति समासे कृदुत्तरपदप्रकृतिस्वरत्वं। तारिष्टं। तॄ प्लवनतरणयोः। छांदसे प्रार्थनायां लुङि च्लेः सिच्। इडागमः। वॄतो वा। पा॰ ७. २. ३८.। इति प्राप्तस्येटो दीर्घस्य सिचि च परस्मैपदेषु। पा॰ ७. २. ४०.। इति प्रतिषेधः। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। अत्र तारिष्टं मृक्षतं चेति चशब्दार्थप्रतीतेस्तस्य चाप्रयोगाच्चादिलोपे विभाषेति निघातप्रतिषेधः। आदिः सिचोऽन्यतरस्यां। पा॰ ६. १. १८७.। इत्याद्युदात्तत्वं। मृक्षतं। मृश आमर्शने। छंदसि लुङ्लङ्लिट इति लोडर्थे लुङ्। शल इगुपधादनिटः क्सः। पा॰ ३. १. ४५.। इति क्सादेशः। एकाच उपदेशेऽनुदात्तादितीट्प्रतिषेधः। षत्वकुत्वे। पूर्ववदडभावः। सेधतं। षिधु गत्यां। अत्र केवलोऽपि षिधिः प्रतिपूर्वस्यार्थे वर्तते। प्रार्थनायां लोट्। शपः पित्त्वादनुदात्तत्वं। तिङश्च लसार्वधातुकस्वरेण धातुस्वरः। पादादित्वात्तिङः परत्वाद्वा निघाताभावः। द्वेषः। अन्येभ्योऽपि दृश्यंत इति कर्तरि विच्। भवतं। द्वेष इत्यस्य वाक्यांतरगतत्वात्तदपेक्षयास्य निघातो न भवति। समानवाक्ये च निघातयुष्मदस्मदादेशा वक्तव्याः। पा॰ ८. १. १८. ५.। इति वचनात्। सचाभुवा। सचेत्ययं निपातः सहशब्दसमानार्थः। तथा च यास्कः। सचा सहेत्यर्थ इति। नि॰ ५. ५.। सचा भवत इति सचाभुवौ। क्विप्। ओः सुपि। पा॰ ६. ४. ८३.। इति यणादेशस्य न भूसुधियोः। पा॰ ६. ४. ८५.। इति प्रतिषेधः। सुपां सुलुगिति विभक्तेराकारः॥

आ नो अश्विना त्रिवृता रथेनार्वाचं रयिं वहतं सुवीरं।
शृण्वंता वामवसे जोहवीमि वृधे च नो भवतं वाजसातौ॥१२॥
आ। नः। अश्विना। त्रिऽवृता। रथेन। अर्वाचं। रयिं। वहतं। सुऽवीरं।
शृण्वंता। वां। अवसे। जोहवीमि। वृधे। च। नः। भवतं। वाजऽसातौ॥१२॥

हे अश्विना त्रिवृता रथेन [illegible]त्वात् त्रिषु लोकेषु वर्तमानेन रथेन सह नोऽस्माकमर्वाचमभिमुखं सुवीरं शोभनैर्वीरैः पुत्रभृत्यादिभिरुपेतं रयिं धनमा वहतं। आनीय प्रापयतं। शृण्वंतास्मदीयस्तुतिं शृण्वंतौ वां युवामवसेऽस्मद्रक्षणार्थं जोहवीमि। आह्वयामि। नोऽस्माकं वाजसातौ संग्रामे। वाजसातौ महाधन इति

संग्रामनामसु पाठात्। वृधे वर्धनाय च भवतं ॥ सुवीरं। शोभना वीरा यस्येति बहुव्रीहौ वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं। शृण्वंता। श्रु श्रवणे। शतरि श्रुवः शृ च। पा० ३. १. ७४.। इति श्रुः शृभावश्च। हुश्नुवोः सार्वधातुक इति यणादेशः। सुपां सुलुगित्याकारः। जोहवीमि। ह्वेञ् स्पर्धायां शब्दे च। यङ्लुक्यभ्यस्तस्य च। पा० ६. १. ३३.। इति कृतसंप्रसारणादस्माल्लडुत्तमैकवचने यङो वा। पा० ७. ३. ९४.। इतीडागमः। वृधे। वृधु वृद्धावित्यस्मात्संपदादिलक्षणो भावे क्विप्। वाजसातौ। षणु दाने। क्तिनि तितुत्रेत्यादिना इट्प्रतिषेधः। जनसनेत्यादिना आत्वं। वाजानां सातिर्यस्मिन्निति पूर्वपदप्रकृतिस्वरत्वं ॥ ॥ ५ ॥

ह्वयाम्यग्निमित्येकादशर्चं पंचमं सूक्तं। हिरण्यस्तूप ऋषिः। आद्या नवमी च जगतीच्छंदस्के। शिष्टास्त्रिष्टुभः। कृत्स्नस्य सूक्तस्य सविता देवता। आद्याया ह्वयाम्यग्निमित्यस्या अग्निमित्रावरुणरात्रिसवित्राख्या लिंगोक्तदेवताः। तथा चानुक्रांतं। ह्वयाम्येकादश सावित्रं नवमी जगत्याद्या च लिंगोक्तदैवतपादास्त्रय इति ॥ अभिप्लवषडहस्य चतुर्थेऽहनि वैश्वदेवशस्त्र इदं सूक्तं सावित्रं निविद्धानं। तृतीयस्य त्र्यर्यमेति खंडे सूत्रितं। ह्वयाम्यग्निमस्य मे द्यावापृथिवी इति तिस्रः। आ० ७. ७.। इति ॥

ह्वयाम्यग्निं प्रथमं स्वस्तये ह्वयामि मित्रावरुणाविहावसे।
ह्वयामि रात्रीं जगतो निवेशनीं ह्वयामि देवं सवितारमूतये ॥ १ ॥
ह्वयामि। अग्निं। प्रथमं। स्वस्तये। ह्वयामि। मित्रावरुणौ। इह। अवसे।
ह्वयामि। रात्रीं। जगतः। निऽवेशनीं। ह्वयामि। देवं। सवितारं। ऊतये ॥ १ ॥

स्वस्तयेऽस्माकमविनाशाय। स्वस्तीत्यविनाशनाम। नि० ३. २१.। इति यास्कः। प्रथममादावग्निं ह्वयामि। इहास्मिन्कर्मण्यवसेऽस्मद्रक्षणाय मित्रावरुणौ ह्वयामि। जगतो जंगमस्य प्राणिजातस्य निवेशनीमुपवेशनहेतुभूतां रात्रीं रात्रिदेवतां ह्वयामि। जंगमाः सर्वे प्राणिनो दिवसे स्वस्वव्यापारान्कृत्वा स्वस्वगृहे रात्रावुपविशंतीति प्रसिद्धं। ऊतयेऽस्मद्रक्षणार्थं सवितारं देवं ह्वयामि ॥ मित्रावरुणौ। देवताद्वंद्वे चेति पूर्वपदस्यानङादेशः। देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं। रात्रीं। रात्रेश्चाजसौ। पा० ४. १. ३१.। इति ङीप्। निवेशनीं। निविशंत्यस्यामिति निवेशनी। करणाधिकरणयोश्चेति ल्युट्। टिड्ढाणञित्यादिना। पा० ४. १. १५.। ङीप्। ऊतये। अवतेः क्तिनि ज्वरत्वरेत्यादिना वकारस्योपधायाश्च ऊट्। ऊतियूतीत्यादिना क्तिन उदात्तत्वं ॥

आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥ २ ॥
आ। कृष्णेन। रजसा। वर्तमानः। निऽवेशयन्। अमृतं। मर्त्यं। च।
हिरण्ययेन। सविता। रथेन। आ। देवः। याति। भुवनानि। पश्यन् ॥ २ ॥

सविता सूर्यः कृष्णेन रजसा कृष्णवर्णेन लोकेन। कृष्णं कृष्यतेर्निकृष्टो वर्णः। नि० २. २०.। इति यास्कः। लोका रजांस्युच्यंते। नि० ४. १९.। इति च। अंतरिक्षलोको हि सूर्यागमनात्पुरा कृष्णवर्णो भवति। तेनांतरिक्षमार्गेण वर्तमानः पुनःपुनरागच्छन् अमृतं देवं मर्त्यं मनुष्यं च निवेशयन् स्वस्वस्थानेऽवस्थापयन्। यद्वा। अमृतं मरणरहितं प्राणं मर्त्यं मरणसहितं शरीरं च निवेशयन्। तथा चारण्यककांडे अमर्त्यो मर्त्येना सयोनिरित्येतस्य मंत्रभागस्य व्याख्यानरूपे ब्राह्मणे यथोक्तोऽर्थोऽवगम्यते। मर्त्यानि हीमानि शरीराणि अमृतैषा देवता। ऐ० आ० २. १. ८.। इति। यथोक्तगुणोपेतः सविता देवो भुवनानि सर्वान् लोकान्पश्यन् अवेक्षमाणः। प्रकाशयन्नित्यर्थः। हिरण्ययेन सुवर्णनिर्मितेन रथेना याति। अस्मत्समीपमागच्छति ॥ अमृतं। मृतं मरणं नास्त्यस्येति बहुव्रीहौ नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं। मर्त्यं। मर्ते भवं। भवे छंदसीति यत्। यतोऽनाव इत्याद्युदात्तत्वं। हिरण्ययेन। ऋत्व्यवास्त्व्येत्यादिना। पा० ६. ४. १७५.। मयटो मकारलोपो

निपातितः। यस्येति लोपे प्रत्ययस्वरः। भुवनानि। भू सत्तायां। भूधूभ्रस्जिभ्यश्छंदसि। उ° २. [illegible]। इति क्युन्प्रत्ययः। योरनादेशे उवङादेशः। नित्त्वादाद्युदात्तत्वं॥

याति॑ दे॒वः प्र॒वता॒ यात्यु॒द्वता॒ याति॑ शु॒भ्राभ्यां॑ यज॒तो हरि॑भ्यां।
आ दे॒वो या॑ति सवि॒ता प॑रा॒वतोऽप॒ विश्वा॑ दुरि॒ता बाध॑मानः॥३॥
याति॑। दे॒वः। प्र॒ऽवता॑। याति॑। उ॒त्ऽवता॑। याति॑। शु॒भ्राभ्यां॑। य॒ज॒तः। हरि॑ऽभ्यां।
आ। दे॒वः। या॒ति॒। स॒वि॒ता। प॒रा॒ऽवतः॑। अप॑। विश्वा॑। दुः॒ऽइ॒ता। बाध॑मानः॥३॥

देवो दीप्यमानः सविता प्रवता प्रवणवता मार्गेण याति। गच्छति। तथोद्वतोत्कृष्टेनोर्ध्वदेशयुक्तेन मार्गेण याति। उदयानंतरं आ मध्याह्नमूर्ध्वो मार्गः। तत उपरि आ सायं प्रवणो मार्ग इति विवेकः। तथा यजतो यष्टव्यः स देवः शुभ्राभ्यां श्वेताभ्यां हरिभ्यामश्वाभ्यां याति। देवयजनदेशे गच्छति। सविता देवो विश्वा दुरिता सर्वाणि पापान्यप बाधमानो विनाशयन् परावतो दूरदेशात्। परावत इति दूरनामसु [illegible]। तादृशाद्द्युलोकादा याति। यागदेश आगच्छति॥ प्रवता। वन षण संभक्तौ। अस्मात्प्रपूर्वात्क्विप्। गमादीनामिति वक्तव्यं। पा° ६. ४. ४०. १.। इत्यनुनासिकलोपः। ततस्तुक्। कृदुत्तरपदप्रकृतिस्वरत्वं। उद्वता। उत्पूर्वाद्वनतेः पूर्ववत्प्रक्रिया। यजतः। भृमृदृशीत्यादिना। उ° ३. ११०.। यजतेः कर्मण्यतच्प्रत्ययः। विश्वा दुरिता। उभयत्र शेश्छंदसि बहुलमिति शेर्लोपः॥

अ॒भीवृ॑तं॒ कृश॑नैर्वि॒श्वरू॑पं॒ हिर॑ण्यशम्यं यज॒तो बृ॒हंतं॑।
आस्था॒द्रथं॑ सवि॒ता चि॒त्रभा॑नुः कृ॒ष्णा रजां॑सि॒ तवि॑षीं॒ दधा॑नः॥४॥
अ॒भिऽवृ॑तं। कृश॑नैः। वि॒श्वऽरू॑पं। हिर॑ण्यऽशम्यं। य॒ज॒तः। बृ॒हंतं॑।
आ। अ॒स्था॒त्। रथं॑। स॒वि॒ता। चि॒त्रऽभा॑नुः। कृ॒ष्णा। रजां॑सि। तवि॑षीं। दधा॑नः॥४॥

सविता रथमास्थात्। आस्थितवान्। आरूढवानित्यर्थः। कीदृशं। अभीवृतं अभितो वर्तमानं। तथा कृशनैर्विश्वरूपं सुवर्णेन नानारूपं। कृशनं लोहमिति सुवर्णनामसु पाठात्। क्वचित्सुवर्णनिर्मितगजपंक्तिः क्वचिदश्वपंक्तिः क्वचिन्मनुष्यपंक्तिरित्येवं बहुरूपत्वं। हिरण्यशम्यं। अश्वानां स्कंधेषु रथयोजनवेलायां नियंतुं प्रक्षेप्यमाणाः शंकवः शम्याः। ताः सुवर्णमय्यो रथे वर्तंते। बृहंतं प्रौढं। कीदृशः सविता। यजतो यष्टव्यः चित्रभानुर्विविध[illegible]युक्तः कृष्णा रजांस्यंधकारयुक्ततया कृष्णवर्णान् लोकानुद्दिश्य तमोनिवारणार्थं तविषीं बलं स्वकीयं प्रकाशरूपं दधानः॥ अभीवृतं। अभितो वर्तत इत्यभीवृत्। वृतु वर्तने। क्विपि नहिवृतीत्यादिना। पा° ६. ३. ११६.। पूर्वपदस्य दीर्घत्वं। विश्वरूपं। विश्वानि रूपाणि यस्यासौ विश्वरूपः। बहुव्रीहौ विश्वं संज्ञायामिति व्यत्ययेनासंज्ञायामपि पूर्वपदांतोदात्तत्वं। हिरण्यशम्यं। हर्य गतिकांत्योः। हर्यतेः कन्यन् हिर च। उ° ५. ४४.। इति कन्यन्प्रत्ययो धातोर्हिरादेशश्च। नित्त्वादाद्युदात्तत्वं। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। आस्थात्। तिष्ठतेर्लुङि गातिस्थेति सिचो लुक्। कृष्णा। कृषेर्वर्णे। उ° ३. ४.। इति नक्प्रत्ययः। शेश्छंदसि बहुलमिति शेर्लोपः। तविषीं। तवतिः सौत्रो धातुः। तवेर्णिद्वा। उ° १. ४९.। इति टिषच्। टित्त्वाट्टिड्ढाणञित्यादिना ङीप्। व्यत्ययेनाद्युदात्तत्वं वृषादित्वाद्द्रष्टव्यं। दधानः। शानच्यभ्यस्तानामादिरित्याद्युदात्तत्वं॥

वि जना॑ञ्छ्या॒वाः शि॑ति॒पादो॑ अख्य॒न्रथं॒ हिर॑ण्यप्रउगं॒ वहं॑तः।
शश्व॒द्विशः॑ सवि॒तुर्दैव्य॑स्यो॒पस्थे॒ विश्वा॒ भुव॑नानि तस्थुः॥५॥
वि। जना॑न्। श्या॒वाः। शि॒ति॒ऽपादः॑। अ॒ख्य॒न्। रथं॑। हिर॑ण्यऽप्रउगं। वहं॑तः।
शश्व॑त्। विशः॑। स॒वि॒तुः। दैव्य॑स्य। उ॒पऽस्थे॑। विश्वा॑। भुव॑नानि। त॒स्थुः॥५॥

श्यावा एतन्नामकाः सूर्यस्याश्वाः । श्यावाः सवितुरिति निघंटावुक्तत्वात् । ते च शितिपादः श्वेतैः पादैरुपेता हिरण्यप्रउगं । रथस्य मुखमीषयोरग्रं युगबंधनस्थानं प्रउगमित्युच्यते । तच्चात्र सुवर्णमयं । तद्युक्तं रथं वहंतो जनान्प्राणिनो व्यख्यन् । विशेषेण प्रकाशितवंत इत्यर्थः । शश्वत् सर्वदा विशः प्रजा दैव्यस्येतरदेवसंबंधिनः सवितुः प्रेरकस्य सूर्यस्योपस्थे समीपस्थाने तस्थुः । स्थितवत्यः । न केवलं प्रजाः किं तर्हि विश्वा भुवनानि सर्वे च लोकाः प्रकाशाय सूर्यसमीपे तस्थुः ॥ शितिपादः । शितयः श्वेतवर्णाः पादा येषां ते शितिपादाः । सुपां सुलुगिति जसः सुआदेशः । यद्वा । शितिः श्वेतवर्णः स्फाटिकादिः । स इव पादो येषां ते । पादस्य लोपोऽहस्त्यादिभ्यः । पा॰ ५. ४. १३८. । इति समासांतपादशब्दस्यांत्यलोपः । उपमानादिति हि तत्रानुवर्तते । पादशब्दस्य वृषादित्वादाद्युदात्तत्वं । तस्य बहुव्रीहौ समासे शितेर्नित्याबह्वज्बहुव्रीहावभसत् । पा॰ ६. २. १३८. । इत्युत्तरपदप्रकृतिस्वरत्वं । अख्यन् । ख्यातेर्लुङ्य[illegible]ना च्लेरङादेशः । [illegible] । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । वहंतः । शपः पित्त्वादनुदात्तत्वं । शतुश्च लसार्वधातुकस्वरेण धातुस्वरः । दैव्यस्य । तस्येदमित्यर्थे देवाद्यञञौ । पा॰ ४. १. ८५. ३. । इति देवशब्दात्प्राग्दीव्यतीयो यञ् । तद्धितेष्वचामादेरित्यादिवृद्धिः । ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं । उपस्थे । आतश्चोपसर्ग इति कः । आतो लोप इटि चेत्याकारलोपः । गतिकारकोपपदात्कृदुत्तरपदप्रकृतिस्वर इत्यादि । मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं ॥

तिस्रो द्यावः सवितुर्द्वा उपस्थाँ एका यमस्य भुवने विराषाट् ।
आणिं न रथ्यममृताधि तस्थुरिह ब्रवीतु य उ तच्चिकेतत् ॥ ६॥
तिस्रः । द्यावः । सवितुः । द्वौ । उपऽस्था । एका । यमस्य । भुवने । विराषाट् ।
आणिं । न । रथ्यं । अमृता । अधि । तस्थुः । इह । ब्रवीतु । यः । ऊं इति । तत् ।
चिकेतत् ॥ ६॥

द्यावः स्वर्गोपलक्षिताः प्रकाशमाना लोकास्तिस्रस्त्रिसंख्याकाः संति । तत्र द्वौ लोकौ सवितुः सूर्यस्योपस्था समीपस्थाने वर्तेते । द्युलोकभूलोकयोः सूर्येण प्रकाशितत्वात् । एका मध्यमा भूमिरंतरिक्षलोको यमस्य भुवने पितृपतेर्गृहे विराषाट् । विरान् गंतॄन्सहते । प्रेताः पुरुषा अंतरिक्षमार्गेण यमलोके गच्छंतीत्यर्थः । अमृतामृतानि चंद्रनक्षत्रादीनि ज्योतींषि जलानि वाधि तस्थुः । सवितारमधिगम्य स्थितानि । तत्र दृष्टांतः । रथ्यमाणिं न । रथाद्बहिरक्षच्छिद्रे प्रक्षिप्तः कीलविशेष आणिरित्युच्यते । रथसंबंधिनमाणिमधिगम्य यथा रथस्तिष्ठति तद्वत् । यस्तु मानवस्तत्सवितृरूपं चिकेतत् जानाति स मानव इहास्मिन्विषये ब्रवीतु । कथयतु । केनापि वक्तुमशक्यः सवितुर्महिमेत्यर्थः ॥ तिस्रः । तिसृभ्यो जसः । पा॰ ६. १. १६६. । इति विभक्तेरुदात्तत्वं । द्वौ । संहितायामावादेशे लोपः शाकल्यस्येति वकारलोपः । उपस्था । आङ्याजयारां चोपसंख्यानं । म॰ ७. १. ३९. १. । इति सप्तम्या आङादेशः । आङोऽनुनासिकश्छंदसि । पा॰ ६. १. १२६. । इति प्रकृतिभावः । विराषाट् । वृञ् वरणे । घञर्थे कविधानं । पा॰ ३. ३. ५८. ४. । इति कर्मणि कः । बहुलं छंदसि । पा॰ ७. १. १०३. । इतीत्वं । तथा सति वूर्यंत इति विरा इत्युक्तं भवति । तान्सहत इति विराषाट् । छंदसि सहः । पा॰ ३. २. ६३. । इति सहेर्ण्विः । सहेः साडः । पा॰ ८. ३. ५६. । इति षत्वं । अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घः । रथ्यं । रथस्येदं रथ्यं । रथाद्यत् । पा॰ ४. ३. १२१. । इति यत् । यतोऽनाव इत्याद्युदात्तत्वं । अमृता । शेश्छंदसि बहुलमिति शेर्लोपः । चिकेतत् । कित ज्ञाने । लेट्यडागमः । इतश्च लोप इतीकारलोपः । जुहोत्यादित्वात् श्लुः । लघूपधगुणः । अनुदात्ते च । पा॰ ६. १. १९०. । इत्यभ्यस्तस्याद्युदात्तत्वं । यद्वृत्तयोगादनिघातः ॥ ॥ ६ ॥

वि सुपर्णो अंतरिक्षाण्यख्यद्गभीरवेपा असुरः सुनीथः ।
क्वे३दानीं सूर्यः कश्चिकेत कतमां द्यां रश्मिरस्या ततान ॥ ७॥
वि । सुऽपर्णः । अंतरिक्षाणि । अख्यत् । गभीरऽवेपाः । असुरः । सुऽनीथः ।
क्व । इदानीं । सूर्यः । कः । चिकेत । कतमां । द्यां । रश्मिः । अस्य । आ । ततान ॥ ७॥

सुपर्णः शोभनपतनः सूर्यस्य रश्मिः । सुपर्णा इति पंचदश रश्मिनामानीति तन्नामसु पठितत्वात् । अंतरिक्षाण्यंतरिक्षोपलक्षितानि लोकत्रयस्थानानि व्यख्यत् । विशेषेण ख्यापितवान् [illegible] । कीदृशो रश्मिः । गभीरवेपा गंभीरकंपनः । रश्मेः प्रकंपनं चलनं केनापि द्रष्टुमशक्यमित्यर्थः । असुरः सर्वेषां प्राणदः । तथा चान्यत्राम्नायते । सर्वेषां भूतानां प्राणानादायोदेतीति । सुनीथः सुनयनः शोभनप्रापणः । मार्गप्रकाशनेनाभीष्टदेशं प्रापयतीत्यर्थः । तादृशरश्मियुक्तः सूर्य इदानीं रात्रौ क्व कुत्र वर्तते । तदेतद्रहस्यं कश्चिकेत । को जानाति । न कोऽपीत्यर्थः । अस्य सूर्यस्य रश्मिः कतमां द्यामा ततान । कं द्युलोकं रात्रौ व्याप्तवान् । एतदपि को जानाति ॥ सुपर्णः । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । गभीरवेपाः । टुवेपृ कंपने । असुन् । गभीरं वेपो यस्य । पूर्वपदप्रकृतिस्वरत्वं । असुरः । असु क्षेपणे । अस्यति शत्रूनित्यसुरः । असेरुरन् । उ० १.४३. । नित्त्वादाद्युदात्तत्वं । यद्वा । असून्प्राणान्राति ददातीत्यसुरः । आतोऽनुपसर्गे क इति कप्रत्ययः । सुनीथः । णीञ् प्रापणे । हनिकुषिनीरमिकाशिभ्यः क्थन् । उ० २.२. । इति क्थन् । प्रादिसमासे थाथादिनोत्तरपदांतोदात्तत्वं । इदानीं । इदंशब्दात्सप्तम्यर्थे दानीं च । पा० ५.३.१८. । इति दानींप्रत्ययः । इदम इशितीदंशब्दस्येशादेशः । प्रत्ययाद्युदात्तत्वं । सूर्यः । षू प्रेरणे । सुवतीति सूर्यः । राजसूयसूर्येत्यादिना रुडागमसहितः क्यप्रत्ययो निपातितः । प्रत्ययस्यानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वं । चिकेत । कित ज्ञाने । लिट् । कतमां । किंजातीयां । वा बहूनां जातिपरिप्रश्ने डतमच् । पा० ५.३.९३. । इति किंशब्दात् डतमच् । डित्त्वाट्टिलोपः । चित इत्यंतोदात्तत्वं ॥

अष्टौ व्यख्यत्ककुभः पृथिव्यास्त्री धन्व योजना सप्त सिंधून् ।
हिरण्याक्षः सविता देव आगाद्दधद्रत्ना दाशुषे वार्याणि ॥ ८ ॥
अष्टौ । वि । अख्यत् । ककुभः । पृथिव्याः । त्री । धन्व । योजना । सप्त । सिंधून् ।
हिरण्यऽअक्षः । सविता । देवः । आ । अगात् । दधत् । रत्ना । दाशुषे । वार्याणि ॥ ८ ॥

पृथिव्याः संबंधिनीरष्टौ ककुभः प्राच्याद्याश्चतस्रो दिश आग्नेय्याद्याश्चतस्रो विदिश इत्येवमष्टौ दिशो व्यख्यत् । सविता प्रकाशितवान् । तथा योजना प्राणिनः स्वस्वभोगेन योजयितॄन्धन्व अंतरिक्षोपलक्षितान् त्री त्रिसंख्याकान्पृथिव्यादिलोकान् सप्त सिंधून् गंगादिनदीः समुद्रान्वा सविता व्यख्यत् । हिरण्याक्षः । हितरमणीयचक्षुर्युक्तो हिरण्मयाक्षो वा सविता देव आगात् । इहागच्छतु । किं कुर्वन् । दाशुषे हविर्दत्तवते यजमानाय वार्याणि वरणीयानि रत्नानि दधत् । प्रयच्छन् ॥ अख्यत् । ख्यातेर्लुङ्यस्यतिवक्तीत्यादिना च्लेरङादेशः । त्री । शेश्छंदसि बहुलमिति शेर्लोपः । धन्व । रिवि रवि धवि गत्यर्थाः । इदितो नुम् धातोरिति नुम् । अस्मात्कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिव इति कनिन् । सुपां सुलुगिति विभक्तेर्लुक् । नलोपः । प्रत्ययस्य नित्त्वादाद्युदात्तत्वं । योजना । योजयंति प्राणिन उपभोगेनेति योजनानि । [illegible]णो ल्युः । णेरनिटीति णिलोपः । पूर्ववच्छेर्लोपः । हिरण्याक्षः । हिरण्मयान्यक्षीणि यस्यासौ हिरण्याक्षः । बहुव्रीहौ सक्थ्यक्ष्णोः । पा० ५.४.११३. । इति समासांतः षच्प्रत्ययः । अगात् । एतेर्लुङीणो गा लुङि । पा० २.४.४५. । इति गादेशः । गातिस्थेति सिचो लुक् । दधत् । शतरि नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः । श्नाभ्यस्तयोरात इत्याकारलोपः । अभ्यस्तानामादिरित्याद्युदात्तत्वं । दाशुषे । दाश्वान्साह्वानित्यादिना क्वसुप्रत्ययांतो निपातितः । चतुर्थ्येकवचने वसोः संप्रसारणमिति संप्रसारणं । परपूर्वत्वं । शासिवसिघसीनां चेति षत्वं । वार्याणि । वृङ् संभक्तौ । ऋहलोर्ण्यत् । ईडवंदेत्यादिनाद्युदात्तत्वं ॥

हिरण्यपाणिः सविता विचर्षणिरुभे द्यावापृथिवी अंतरीयते ।
अपामीवां बाधते वेति सूर्यमभि कृष्णेन रजसा द्यामृणोति ॥ ९ ॥
हिरण्यऽपाणिः । सविता । विऽचर्षणिः । उभे इति । द्यावापृथिवी इति । अंतः । ईयते ।
अप । अमीवां । बाधते । वेति । सूर्यं । अभि । कृष्णेन । रजसा । द्यां । ऋणोति ॥ ९ ॥

[illegible]रण्यपाणिः सुवर्णमयहस्तयुक्तः। यद्वा। यजमानेभ्यो दातुं हिरण्यं हस्ते धृतवान्। विचर्षणिर्विविधदर्शनयुक्तः। विचर्षणिः पश्यत्यर्थः। विचर्षणिर्विश्वचर्षणिरिति तन्नामसु पाठात्। सविता देव उभे द्यावापृथिवी अंतः उभयोर्लोकयोर्मध्य ईयते। गच्छति। अमीवां रोगादिबाधामप बाधते। सम्यग्निराकरोति। तथा सूर्यं वेति। गच्छति। यद्यपि सवितृसूर्ययोरेकदेवतात्वं तथापि मूर्तिभेदेन गंतृगंतव्यभावः। कृष्णेन तमसः कर्षकेण निवर्तकेन रजसा तेजसा द्यामाकाशमभ्यृणोति। सर्वतो व्याप्नोति ॥ द्यावापृथिवी। दिवसश्च पृथिव्यां।पा॰ ६. ३. ३०.। इति चशब्दाद्दिव्शब्दस्य द्यावादेशः। देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं। नोत्तरपदेऽनुदात्तादौ।पा॰ ६. २. १४२.। इति न निषेधः। अपृथिवीरुद्रपूषमंथिष्विति पर्युदस्तत्वात्। ईयते। ईङ् गतौ। तिङ्ङतिङ इति निघातः। बाधते। बाधते च वेति चेति समुच्चयार्थप्रतीतेश्चशब्दस्याप्रयोगाच्चादिलोपे विभाषेति निघातप्रतिषेधः। वेति। वी गतिप्रजनकांत्यसनखादनेषु। [illegible] लुक्। तिपः पित्त्वादनुदात्तत्वे धातुस्वरः। यद्यप्येषा द्वितीया तथापि तिङः परत्वान्निघाताभावः। ऋणोति। ऋणु गतौ। तनादित्वादुः। तनादिषु करोतेरेव गुणो न[illegible]पिशलिमतेन गुणाभावः ॥

हिरण्यहस्तो असुरः सुनीथः सुमृळीकः स्ववाँ यात्वर्वाङ्।
अपसेधन्रक्षसो यातुधानानस्थाद्देवः प्रतिदोषं गृणानः ॥१०॥
हिरण्यऽहस्तः। असुरः। सुऽनीथः। सुऽमृळीकः। स्वऽवान्। यातु। अर्वाङ्।
अपऽसेधन्। रक्षसः। यातुऽधानान्। अस्थात्। देवः। प्रतिऽदोषं। गृणानः ॥१०॥

हिरण्यहस्तोऽसुरः प्राणदाता सुनीथः सुष्ठु नेता। प्रशस्य इत्यर्थः। सुनीथः पाक इति प्रशस्यनामसु पाठात्। सुमृळीकः सुष्ठु सुखयिता स्ववान् धनवान् अर्वाङ् अभिमुखः कर्मदेशे गच्छतु। किंचायं देवः प्रतिदोषं प्रतिरात्रि गृणानः स्तूयमानोऽस्थात्। स्थितवान्। किं कुर्वन्। रक्षसो बाधकत्वेन रक्षणनिमित्तभूतान्। रक्षो रक्षितव्यमस्मादिति यास्कः। नि॰ ४. १८.। यातुधानानसुरानपसेधन् निराकुर्वन् ॥ हिरण्यहस्तादयो गताः। सुमृळीकः। सुष्ठु मृळीकं सुखं यस्यासौ तथोक्तः। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। स्ववान्। स्वमस्यास्तीति स्ववान्। मादुपधाया इति वत्वं। संहितायां नकारस्य दीर्घादटि समानपाद इति रुत्वं। आतोऽटि नित्यमिति सानुनासिक आकारः। रोर्यत्वं। यलोपश्च। अपसेधन्। षिधु गत्यां। शपः पित्त्वादनुदात्तत्वं। शतुश्च लसार्वधातुकस्वरेण कृदुत्तरपदप्रकृतिस्वरत्वं। रक्षसः। रक्ष पालन इत्यस्मादपादान औणादिकोऽसिप्रत्ययः। यद्वा। रक्षंत्यनेनेति रक्षो बलं। करणेऽसुन्। तदेषामस्तीति रक्षस्विनः। मत्वर्थप्रत्ययलोपश्छांदसः। प्रत्ययस्वरः। यातुधानान्। यत निकारोपसंस्कारयोः। तस्माण्ण्यंतादौणादिको भाव उप्रत्ययः। यातवो यातना एषु धीयंत इति यातुधानाः। अधिकरणे ल्युट्। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। अस्थात्। गातिस्थेति सिचो लुक्। प्रतिदोषं। दोषां दोषां। प्रति वीप्सालक्षणे यथार्थे। अव्ययीभावः। गृणानः। गॄ शब्दे। कर्मणि लटः शानच्। व्यत्ययेन श्ना। प्वादीनां ह्रस्व इति ह्रस्वत्वं। चित इत्यंतोदात्तत्वं ॥

ये ते पंथाः सवितः पूर्व्यासोऽरेणवः सुकृता अंतरिक्षे।
तेभिर्नो अद्य पथिभिः सुगेभी रक्षा च नो अधि च ब्रूहि देव ॥११॥
ये। ते। पंथाः। सवितरिति। पूर्व्यासः। अरेणवः। सुऽकृताः। अंतरिक्षे।
तेभिः। नः। अद्य। पथिऽभिः। सुऽगेभिः। रक्ष। च। नः। अधि। च। ब्रूहि। देव ॥११॥

हे सवितः ते तव पंथा मार्गाः पूर्व्यासः पूर्वसिद्धा अरेणवो धूलिरहिता अंतरिक्षे सुकृताः सुष्ठु संपादिताः। सुगेभिः सुष्ठु गंतुं शक्यैस्तेभिः पथिभिस्तैर्मार्गैरागत्याद्यास्मिन्दिने नोऽस्मान्रक्ष च। पालनमपि कुरु। तथा हे देव नोऽस्माननुष्ठातॄनधि ब्रूहि च। देवानामग्रेऽधिकत्वेन कथय च ॥ पंथाः। सुपां सुलुगिति जसः सुः। पथिमथोः सर्वनामस्थान इत्याद्युदात्तत्वं। पूर्व्यासः। पूर्वैः कृताः पूर्व्याः। पूर्वैः कृतमिनियौ च।पा॰ ४.४.१३३.। इति यः।

प्रत्ययस्वरः। असुगागमः। अरेणवः। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। सुष्ठताः। कर्मणि क्तः। गतिरनंतर इति गतिः प्रकृतिस्वरत्वं। सुगेभिः। सुष्ठु गच्छंत्येष्विति सुगाः। सुदुरोरधिकरणे। पा॰ ३. २. ४८. ३.। इति गमेर्डप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वं। रक्ष। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः॥ ॥७॥ ॥७॥

अष्टमेऽनुवाकेऽष्टौ सूक्तानि। तत्र प्र वो यह्वमिति विंशत्यृचं प्रथमं सूक्तं। घोरपुत्रः कण्व ऋषिः। अयुजो बृहत्यः। तृतीयपादस्य द्वादशाक्षरत्वात्। युजः सतोबृहत्यः। प्रथमतृतीययोः पादयोर्द्वादशाक्षरत्वात्। अग्निर्देवता। ऊर्ध्व ऊ ष्वित्यादिके यूपदेवत्ये। तथा चानुक्रांतं। प्र वो विंशतिः कण्वो घौर आग्नेयं प्रागाथमूर्ध्व ऊ षु यौप्याविति। ननूर्ध्व ऊ ष्वित्यादिकयोरप्यग्निर्देवतात्वेन भवितव्यमाग्नेये क्रतावनयोरनुद्धारात्। तथा हि सूत्रे एना वो अग्निं प्र वो यह्वं। आ॰ ४. १३.। इति [illegible]माग्नेयमिति गम्यते। यद्येते अन्यदेवत्ये स्यातां वसिष्वा हीति सूक्तयोरुत्तमामुद्धरेत्। आ॰ ४. १३.। इतिवदुद्धारं ब्रूयात्। न च ब्रूते। अतः कथं यौप्याविति। नैष दोषः। यूपाधिष्ठानस्याग्नेः स्तूयमानत्वादनयोरप्यग्निर्देवतेत्याग्नेये क्रतावुद्धारो न कृतः। अधिष्ठानप्राधान्यविवक्षया यौप्यावित्येतदपि न विरुध्यते॥ प्रातरनुवाक आग्नेये क्रतौ बार्हते छंदसि प्र वो यह्वमिति सूक्तं। अथैतस्या रात्रेर्विवासकाल इति खंडे सूचितं। एना वो अग्निं प्र वो यह्वमिति॥

प्र वो॑ य॒ह्वं पु॑रू॒णां वि॒शां दे॑वय॒तीना॑म्।
अ॒ग्निं सू॒क्तेभि॒र्वचो॑भिरीमहे॒ यं सी॒मिद॒न्य ईळ॑ते ॥१॥
प्र। वः॒। य॒ह्वं। पु॒रू॒णां। वि॒शां। दे॒व॒ऽय॒तीना॑म्।
अ॒ग्निं। सु॒ऽउ॒क्तेभिः॑। वचः॑ऽभिः। ई॒म॒हे॒। यं। सी॒म्। इत्। अ॒न्ये। ईळ॑ते ॥१॥

हे ऋत्विग्यजमानाः देवयतीनां देवान्कामयमानानां पुरूणां बहूनां विशां प्रजारूपाणां वो युष्माकमनुग्रहाय यह्वं महांतं। यह्वो ववक्षिथ इति महन्नामसु पाठात्। अग्निं सूक्तेभिर्वचोभिः सूक्तरूपैर्वाक्यैः प्रेमहे। प्रकर्षेण याचामहे। ईमहे यामीति याच्ञाकर्मसु पाठात्। अन्य इदन्येऽप्यृषयो यमग्निं सीं सर्वत ईळते स्तुवंति। तमग्निमिति पूर्वत्रान्वयः॥ पुरूणां। नामन्यतरस्यामिति नाम उदात्तत्वं। विशां। सावेकाचः इति विभक्तेरुदात्तत्वं। देवयतीनां। देवानात्मन इच्छंत्यो देवयंत्यः। सुप आत्मनः क्यच्। न च्छंदस्यपुत्रस्येतीत्वस्येव दीर्घस्यापि प्रतिषेधः। अश्वाघस्यादिति पुनरात्वविधानाज्ज्ञापकात्। क्यजंताल्लटः शतृ। कर्तरि शप्। शपः पित्त्वादनुदात्तत्वं। शतुश्च लसार्वधातुकस्वरेण क्यचा सहैकादेश एकादेश उदात्तेनोदात्त इति शतुरुदात्तत्वं। उगितश्चेति ङीप्। अनित्यमागमशासनमिति वचनान्नुमभावः। एकादेशस्वरस्य पूर्वत्रासिद्धत्वं नेष्यत इति वचनात्। पा॰ ८. २. ६. १.। शतुरुदात्तत्वं सिद्धमेवेति शतुरनुम इति नद्या उदात्तत्वं। सूक्तेभिः। वक्तेः क्तिच्क्तौ च संज्ञायामिति क्तः। थाथादिनोत्तरपदांतोदात्तत्वं। ईळते। ईड स्तुतौ। अदादित्वाच्छपो लुक्। अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। यद्वृत्तयोगादनिघातः॥

जना॑सो अ॒ग्निं द॑धिरे सहो॒वृधं॑ ह॒विष्म॑न्तो विधेम ते।
स त्वं नो॑ अ॒द्य सु॒मना॑ इ॒हावि॒ता भवा॒ वाजे॑षु सन्त्य ॥२॥
जना॑सः। अ॒ग्निं। द॒धि॒रे॒। स॒हः॒ऽवृधं॑। ह॒विष्म॑न्तः। वि॒धे॒म॒। ते॒।
सः। त्वं। नः॒। अ॒द्य। सु॒ऽमनाः॑। इ॒ह। अ॒वि॒ता। भव॑। वाजे॑षु। स॒न्त्य॒ ॥२॥

जनासोऽनुष्ठातारो जनाः सहोवृधं बलस्य वर्धयितारमग्निं दधिरे। धृतवंतः। हविष्मंतो हविर्युक्ता वयं हे अग्ने ते त्वां विधेम। परिचरेम। विधतिः परिचरणकर्मा। विधेम सपर्यतीति परिचरणकर्मसु पठितत्वात्। वाजेष्वन्नेषु संत्य दानशील हे अग्ने स त्वमद्यास्मिन्दिन इह कर्मणि नोऽस्मान्प्रति सुमनाः शोभनमनस्कोऽविता रक्षिता भव॥ सहोवृधं। वृधु वृद्धौ। अस्मादंतर्भावितण्यर्थात्क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वं। हविष्मंतः। तसौ मत्वर्थ इति भत्वेन पदत्वाभावाद्रुत्वाद्यभावः। विधेम। विध विधाने। तुदादित्वाच्छः। सुमनाः।

शोभनं मनो यस्यासौ सुमनाः । सोर्मनसी अलोमोषसी । पा० ६. २. ११७. । इत्युत्तरपदाद्युदात्तत्वं । भव । पादादित्वात्तिङ्ङतिङ इति निघाताभावः । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । संत्य । षणु दाने । क्तिचि तितुत्रेत्यादिना इट्प्रतिषेधः । न क्तिचि दीर्घश्च । पा० ६. ४. ३९. । इत्यनुनासिकलोपदीर्घयोर्निषेधः । संतिर्दाता । तत्र भवः संत्यः । भवे छंदसीति यत् ॥

प्र त्वा॑ दू॒तं वृ॑णीमहे॒ होता॑रं वि॒श्ववे॑दसं ।
म॒हस्ते॑ स॒तो वि च॑रंत्य॒र्चयो॑ दि॒वि स्पृ॑शंति भा॒नवः॑ ॥३॥
प्र । त्वा॒ । दू॒तं । वृ॒णी॒म॒हे॒ । होता॑रं । वि॒श्वऽवे॑दसं ।
म॒हः । ते॒ । स॒तः । वि । च॒रं॒ति॒ । अ॒र्चयः॑ । दि॒वि । स्पृ॒शं॒ति॒ । भा॒नवः॑ ॥३॥

हे अग्ने होतारं होमनिष्पादकमाह्वातारं वा विश्ववेदसं सर्वज्ञं दूतं देवानां दूत्ये प्रवृत्तं । अग्निर्वै देवानां दूत आसीदिति श्रुत्यंतरात् । तादृशं त्वां प्र वृणीमहे । प्रकर्षेण वरणं कुर्मः । महो महतः सतो नित्यं वर्तमानस्य ते तवार्चयो दीप्तयो वि चरंति । विविधं प्रचरंति । भानवस्त्वदीया रश्मयो दिवि द्युलोके स्पृशंति । तत्रत्यान्प्राणिनः प्रकाशयंतीत्यर्थः ॥ विश्ववेदसं । विश्वानि वेत्तीति विश्ववेदाः । असुन् । मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं । यद्वा । वेद इति धननाम । विश्वं वेदो धनं यस्य । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं । महः । मह पूजायां । क्विबेति क्विप् । सावेकाच इति ङस उदात्तत्वं । यद्वा । महच्छब्दे ऽच्छब्दलोपश्छांदसः । सतः । अस्तेः शतरि श्नसोरल्लोप इत्यकारलोपः । शतुरनुम इति विभक्तेरुदात्तत्वं । दिवि । ऊडिदमिति विभक्तेरुदात्तत्वं ॥

दे॒वास॑स्त्वा॒ वरु॑णो मि॒त्रो अ॑र्य॒मा सं दू॒तं प्र॒त्नमिं॑धते ।
विश्वं॒ सो अ॑ग्ने जयति॒ त्वया॒ धनं॒ यस्ते॑ द॒दाश॒ मर्त्यः॑ ॥४॥
दे॒वासः॑ । त्वा॒ । वरु॑णः । मि॒त्रः । अ॒र्य॒मा । सं । दू॒तं । प्र॒त्नं । इं॒ध॒ते॒ ।
विश्वं॑ । सः । अ॒ग्ने॒ । ज॒य॒ति॒ । त्वया॑ । धनं॑ । यः । ते॒ । द॒दाश॑ । मर्त्यः॑ ॥४॥

हे अग्ने वरुणादयस्त्रयो देवासो देवाः प्रत्नं पुरातनं दूतं त्वां समिंधते । सम्यग्दीपयंति । यो मर्त्यो मनुष्यो यजमानस्ते तुभ्यं ददाश हविर्दत्तवान् स यजमानस्त्वया सहायभूतेन विश्वं सर्वं धनं जयति ॥ अर्यमा । अर्यान्निमीत इत्यर्यमा । श्वन्नुक्षन्नित्यादिना । उ० १. १५८. । कनिन्प्रत्ययांतो निपातितः । इंधते । ञिइन्धी दीप्तौ । अस्माल्लटि झस्यादादेशे श्नम् । श्नान्नलोपः । पा० ६. ४. २३. । श्नसोरल्लोप इत्यकारलोपः । ददाश । दाशृ दाने । लिटि णलि लित्स्वरेण प्रत्ययात्पूर्वस्याकारस्योदात्तत्वं । यद्वृत्तयोगादनिघातः ॥

मं॒द्रो होता॑ गृ॒हप॑तिरग्ने॑ दू॒तो वि॒शाम॑सि ।
त्वे विश्वा॒ संग॑तानि व्र॒ता ध्रु॒वा यानि॑ दे॒वा अकृ॑ण्वत ॥५॥
मं॒द्रः । होता॑ । गृ॒हऽप॑तिः । अग्ने॑ । दू॒तः । वि॒शां । अ॒सि॒ ।
त्वे इति॑ । विश्वा॑ । संऽग॑तानि । व्र॒ता । ध्रु॒वा । यानि॑ । दे॒वाः । अकृ॑ण्वत ॥५॥

हे अग्ने त्वं मंद्रो हर्षहेतुर्होता देवानामाह्वाता विशां यजमानरूपाणां प्रजानां गृहपतिर्गृहस्य पालको दूतो देवदूतोऽसि । त्वे त्वयि विश्वा व्रता सर्वाणि कर्माणि संगतानि । व्रतं कर्वरमिति कर्मनामसु व्रतशब्दः पठितः । पृथिव्यादयो देवा ध्रुवा स्थिराणि यानि कर्माण्यकृण्वत कृतवंतः । पृथिवी धारयति पर्जन्यो वर्षति सूर्यः प्रकाशयति । तान्येतानि त्वयि संगतानीति पूर्वत्रान्वयः ॥ गृहपतिः । पत्यावैश्वर्य इति पूर्वपदप्रकृति-

स्वरत्वं । त्वे । सुपां सुलुगिति सप्तम्येकवचनस्य शेआदेशः । त्वमावेकवचन इति मपर्यंतस्य त्वादेशः । शेषे लोप इति टिलोपपक्ष उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं । अंत्यलोपपक्षे त्वेकादेशस्वरेण । संगतानि । गमेः कर्मणि निष्ठायामेकाचः । पा॰ ७. २. १०. । इतीट्प्रतिषेधः । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । व्रता ध्रुवेत्युभयत्र शेर्लोपः । अक्षण्वत । क्षवि हिंसाकरणयोश्च । व्यत्ययेनात्मनेपदं । इदित्वान्नुम् । धिन्विकृण्व्योरच्चेत्युप्रत्ययः ॥ ॥ ८ ॥

त्वे इ॒दग्ने॑ सु॒भगे॑ यविष्ठ्य॒ विश्व॒मा हू॑यते ह॒विः ।
स त्वं नो॑ अ॒द्य सु॒मना॑ उ॒ताप॒रं यक्षि॑ दे॒वान्त्सु॒वीर्या॑ ॥ ९ ॥
त्वे इति॑ । इ॒त् । अ॒ग्ने॒ । सु॒ऽभगे॑ । य॒वि॒ष्ठ्य॒ । विश्व॑ । आ । हू॒यते॒ । ह॒विः ।
सः । त्वं । नः॒ । अ॒द्य । सु॒ऽमनाः॑ । उ॒त । अ॒प॒रं । यक्षि॑ । दे॒वान् । सु॒ऽवीर्या॑ ॥ ९ ॥

हे यविष्ठ्य युवतमाग्ने सुभगे सौभाग्ययुक्ते त्वे इत् त्वय्येव विश्वं सर्वं हविरा हूयते । सर्वतः प्रक्षिप्यते । स त्वं नोऽस्मान्प्रति सुमनाः शोभनमनस्को भूत्वाद्यास्मिन्दिन उतापि चापरं श्वोऽपरं श्व इत्यादिकमुत्तरं कालं सर्वस्मिन्नपि काले नैरंतर्येण सुवीर्या शोभनवीर्योपेतान्देवान्यक्षि । यज ॥ सुभगे । शोभनो भगो यस्येति बहुव्रीहावाद्युदात्तत्वं । द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं । यविष्ठ्य । युवशब्दादिष्ठन् । स्थूलदूरेत्यादिना । पा॰ ६. ४. १५६. । यणादेः परस्य लोपः पूर्वस्य च गुणः । छांदसो यकारोपजनः । यक्षि । बहुलं छंदसीति शपो लुक् । सुवीर्या । शोभनं वीर्यं येषां । वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं । सुपां सुलुगिति विभक्तेराकारः ॥

अभिष्टवे सायंकालीन उत्तरस्मिन्पटले तं घेमित्था नमस्विन इत्येषा विनियुक्ता । अथोत्तरमिति खंडे सूचितं । प्रागाथीं पूर्वाह्णे काण्वीमपराह्णे । आ॰ ४. ७. । इति ॥

तं घे॑मि॒त्था न॑म॒स्विन॒ उप॑ स्व॒राज॑मासते ।
होत्रा॑भिर॒ग्निं मनु॑षः॒ समिं॑धते तिति॒र्वांसो॒ अति॒ स्रिधः॑ ॥ १० ॥
तं । घ॒ । ई॒म् । इ॒त्था । न॒म॒स्विनः॑ । उप॑ । स्व॒ऽराज॑ । आ॒स॒ते॒ ।
होत्रा॑भिः । अ॒ग्निं । मनु॑षः । सं । इं॒ध॒ते॒ । ति॒ति॒र्वांसः॑ । अति॑ । स्रिधः॑ ॥ १० ॥

हे अग्ने नमस्विनोऽन्नयुक्ता नमस्कारयुक्ता वा । नम आयुः सूनृतेत्यन्ननामसु पाठान्नमःशब्दस्यान्नवाचित्वं । तादृशा यजमानाः स्वराजं स्वतो दीप्यमानं तं घें तमेव पूर्वोक्तसर्वगुणविशिष्टं त्वामित्थानेन प्रकारेण हविःप्रदानादिरूपेणोपासते । मनुषो मनुष्या यजमाना होत्राभिः सप्तभिर्वषट्कर्तृभिः । सप्त होत्राः प्राचीर्वषट्कुर्वंतीति श्रुत्यंतरात् । अग्निं त्वा समिंधते । सम्यग्दीपयंति । कीदृशा मनुष्याः । स्रिधः शत्रूनति तितिर्वांसोऽतिशयेन तरंतः ॥ नमस्विनः । अस्मायामेधेति मत्वर्थीयो विनिः । स्वराजं । स्वभासा राजत इति स्वराट् । सत्सूद्विषेति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं । आसते । आस उपवेशने । अदादित्वाच्छपो लुक् । तितिर्वांसः । तॄ प्लवनतरणयोः । छंदसि लिडिति वर्तमाने लिट् । तस्य क्वसुश्चेति क्वसुः । वस्वेकाजाद्घसामिति नियमादिडभावः । ऋत इद्धातोरितीत्वं । ऋच्छत्यॄतां । पा॰ ७. ४. ११. । इति गुणो हलि च । पा॰ ८. २. ७७. । इति दीर्घत्वं च न भवति । संज्ञापूर्वको विधिरनित्य इति तयोरनित्यत्वात् । यद्वा । तिरतिः प्रकृत्यंतरं द्रष्टव्यं । स्रिधः । स्रिधु शोषणे । क्विप्चेति क्विप् ॥

घ्नंतो॑ वृ॒त्रम॑तर॒न्रोद॑सी अ॒प उ॒रु क्षया॑य चक्रिरे ।
भुव॒त्कण्वे॒ वृषा॑ द्यु॒म्न्याहु॑तः॒ क्रंद॒दश्वो॒ गवि॑ष्टिषु ॥ ११ ॥

घ्नंतः । वृत्रं । अतरन् । रोदसी इति । अपः । उरु । क्षयाय । चक्रिरे ।
भुवत् । कण्वे । वृषा । द्युम्नी । आऽहुतः । क्रंदत् । अश्वः । गोऽइष्टिषु ॥ ८ ॥

हे अग्ने घ्नंतस्त्वत्सहायेनेतरे देवाः प्रहरंतो वृत्रमतरन् । तीर्णवंतः । तदनंतरं रोदसी द्यावापृथिव्यावपो ऽंतरिक्षं च क्षयाय प्राणिनां निवासार्थमुरु विस्तारो यथा भवति तथा चक्रिरे । अप्शब्दो ऽंतरिक्षवाची । आपः पृथिवीति तन्नामसु पठितत्वात् । भवांस्तु कण्वे कण्वनामके महर्षौ वृषा कामानां वर्षिता द्युम्नी धनवान् आहुतः सर्वतो होमयुक्तश्च भुवत् । भवतु । तत्र दृष्टांतः । गविष्टिषु गोविषयेच्छायुक्तेषु संग्रामेष्वश्वः क्रंदत् शब्दं कुर्वन्यथाभीष्टप्रापकस्तथेति शेषः ॥ घ्नंतः । हंतेः शतरि गमहनेत्यादिनोपधालोपः । हो हंतेर्ञ्णिन्नेषु । पा॰ ७. ३. ५४. । इति घत्वं । अपः । ऊडिदमिति शस उदात्तत्वं । क्षयाय । क्षि निवासगत्योः । क्षियंति निवसंत्यस्मिन्निति क्षयो निवासस्थानं । पुंसि संज्ञायां घः प्रायेणेति घः । क्षयो निवासे । पा॰ ६. १. २०१. । इत्याद्युदात्तत्वं । भुवत् । भवतेर्लेट्यडागमः । इतश्च लोप इतीकारलोपः । बहुलं छंदसीति शपो लुक् । भूसुवोस्तिङि । पा॰ ७. ३. ८८. । इति गुणप्रतिषेधः । अडागमस्यानुदात्तत्वे धातुस्वरः । आहुतः । आह्वयत इत्याहुतः । हु दानादनयोः । कर्मणि क्तः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । क्रंदत् । कदि क्रदि क्लदि आह्वाने । शतरि नुमभावश्छांदसः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । गविष्टिषु । इषु इच्छायां । एषणमिष्टिः । गवामिष्टिर्येषु संग्रामेषु बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

प्रवर्ग्ये महावीरे खरे संसाद्यमाने सं सीदस्व महाँ असीत्येषा । सुष्टोदकमिति खंडे सूचितं । सं सीदस्व महाँ असीति संसाद्यमाने । आ॰ ४. ६. । इति ॥

सं सीदस्व महाँ असि शोचस्व देववीतमः ।
वि धूममग्ने अरुषं मियेध्य सृज प्रशस्त दर्शतं ॥ ९ ॥
सं । सीदस्व । महान् । असि । शोचस्व । देवऽवीतमः ।
वि । धूमं । अग्ने । अरुषं । मियेध्य । सृज । प्रऽशस्त । दर्शतं ॥ ९ ॥

हे अग्ने सं सीदस्व । बर्हिष्युपविश । महानसि । गुणाधिको भवसि । देववीतमो ऽतिशयेन देवान्कामयमानः शोचस्व । दीप्यस्व । हे मियेध्य मेधार्ह प्रशस्त उत्कृष्टाग्ने अरुषं गमनशीलं दर्शतं दर्शनीयं धूमं वि सृज । विशेषेण संपादय ॥ सीदस्व । षद्लृ विशरणगत्यवसादनेषु । व्यत्ययेनात्मनेपदं । प्रार्थनायां लोटि शपि पाघ्रेत्यादिना सीदादेशः । महान् । संहितायां नकाराकारयोः ‹ ‹ ‹ ॥ ‹ ‹ ‹ ॥ ‹ ‹ ‹ ‹ ‹ ›…॥सेकावृत्तौ । शोचस्व । शुच दीप्तौ । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । तिङः परत्वान्निघाताभावः । देववीतमः । वी गतिप्रजनकांत्यशनखादनेषु । देवान्वेति गच्छतीति देववीः । क्विब्वेति क्विप् । अतिशयेन देववीर्देववीतमः । तमपः पित्त्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वं । अरुषं । अरोषणं । रिष रुष हिंसायां । घञर्थे कविधानमिति भावे कप्रत्ययः । नास्ति रुषो ऽस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । मियेध्य । छंदसि चेत्यर्हार्थे यप्रत्ययः । मकारात्पर इयागमश्छांदसः । सृज । सृज विसर्गे । तुदादित्वाच्छः । विकरणस्वरः । पादादित्वादनिघातः । दर्शतं । भृमृदृशीत्यादिना दृशेः कर्मण्यतच्प्रत्ययः ॥

यं त्वा देवासो मनवे दधुरिह यजिष्ठं हव्यवाहन ।
यं कण्वो मेध्यातिथिर्धनस्पृतं यं वृषा यमुपस्तुतः ॥ १० ॥
यं । त्वा । देवासः । मनवे । दधुः । इह । यजिष्ठं । हव्यऽवाहन ।
यं । कण्वः । मेध्यऽअतिथिः । धनऽस्पृतं । यं । वृषा । यं । उपऽस्तुतः ॥ १० ॥

हे हव्यवाहन हविषो वाहकाग्ने मनवे मनोरनुग्रहाय देवासः सर्वे देवा याजिष्ठमति ।येन पूज्यं यष्टृतमं

वा यं त्वामिह देवयजनदेशे दधुः धृतवंतः। मेध्यातिथिर्मेधार्हैरतिथिभिर्युक्तः कण्व एतन्नामको महर्षिर्यं त्वां धनस्पृतं धनेन [illegible] कृत्वा दध इति शेषः। तथा वृषेंद्रो यं त्वां दधे। तथोपस्तुतोऽन्योऽपि स्तोता यजमानो यं त्वां दधे। स त्वं सं सीदस्वेति पूर्वत्रान्वयः॥ दधुः। लिट्युसि कित्त्व आतो लोप इटि चेत्याकारलोपः। प्रत्ययस्वरः। यजिष्ठं। यष्टृशब्दात्तुश्छंदसि। पा० ५. ३. ५९.। इत्यनु[illegible]ायनिक इष्ठन्। तुरिष्ठेमेयःसु। पा० ६. ४. १५४.। इति तृलोपः। नित्त्वादाद्युदात्तत्वं। हव्यवाहन। हव्यं वहतीति हव्यवाहनः। हव्येऽनंतःपादं। पा० ३. २. ६६.। इति वहतेर्ञ्युट्। मेध्यातिथिः। मेध्या अतिथयो यस्येति बहुव्रीहौ पूर्वपदप्र[illegible]। धनस्पृतं। धनैरस्मान्स्पृणोति प्रीणयतीति धनस्पृत्। स्पृ प्रीतिबलयोः। क्विबिति क्विप्। तनस्तुक्। कृदुत्तरपदप्रकृतिस्वरत्वं। उपस्तुतः। क्तिच्क्तौ च संज्ञायामिति कर्तरि क्तः। थाथादिनोत्तरपदांतोदात्तत्वं॥ ॥१०॥

यम॒ग्निं मेध्या॑तिथि॒ः कण्व॑ ई॒ध ऋ॒तादधि॑।
तस्य॒ प्रेषो॑ दीदियु॒स्तमि॒मा ऋ॒चस्तम॒ग्निं व॑र्धयामसि ॥११॥
यं। अ॒ग्निं। मेध्य॑ऽअतिथिः। कण्वः॑। ई॒धे। ऋ॒तात्। अधि॑।
तस्य॑। प्र। इषः॑। दी॒दि॒युः॒। तं। इ॒माः। ऋ॒चः॑। तं। अ॒ग्निं। व॒र्धया॒म॒सि॒ ॥११॥

मेध्यातिथिर्यागयोग्या अतिथय ऋत्विग्रूपा यस्य तादृशः कण्व ऋषिर्ऋतादधि [illegible]ध्याहृत्य यमग्निमीधे दीप्तवान् तस्याग्नेरिषो गमनस्वभावा रश्मयः प्र दीदियुः। प्रकर्षेण दीप्यंते। तथा तमग्निमिमा अस्माभिः प्रयुज्यमाना ऋचो वर्धयंतीति शेषः। वयमपि तमग्निं वर्धयामसि। स्तोत्रैर्वर्धयामः॥ ईधे। ञिइन्धी दीप्तौ। इंधिभवतिभ्यां च। पा० १. २. ६.। इति लिटः कित्त्वादनिदितामिति नकारलोपः। द्विर्भावहलादिशेषयोः कृतयोः सवर्णदीर्घः। प्रत्ययस्वरः। [illegible]निघातः। इषः। इष गतौ। इष्यंति गच्छंतीतीषो रश्मयः। दीदियुः। दीदेतिश्छांदसो धातुर्दीप्तिकर्मा। लिट्युसीयङादेशः। एरनेकाच इति यणादेशाभावश्छांदसः। वर्धयामसि। इदंतो मसिरिति मस इकारागमः॥

रा॒यस्पू॒र्धि स्व॑धा॒वोऽस्ति॒ हि तेऽग्ने॑ दे॒वेष्वाप्यं॑।
त्वं वाज॑स्य॒ श्रुत्य॑स्य राजसि॒ स नो॑ मृळ म॒हाँ अ॑सि ॥१२॥
रा॒यः। पू॒र्धि। स्व॒धा॒ऽवः॒। अस्ति॑। हि। ते॒। अग्ने॑। दे॒वेषु॑। आप्यं॑।
त्वं। वाज॑स्य। श्रुत्य॑स्य। रा॒ज॒सि॒। सः। नः॒। मृ॒ळ॒। म॒हान्। अ॒सि॒ ॥१२॥

हे स्वधावोऽन्नवन्नग्ने। स्वधा अर्क इति तन्नामसु पाठात्। अस्माकं रायो धनानि पूर्धि। पूरय देहि वा। पूर्धि पूरय देहीति वा। नि० ४. ३.। इति यास्कः। हे अग्ने ते तव देवेष्वाप्यं प्रापणीयं सख्यमस्ति हि। विद्यते खलु। त्वं श्रुत्यस्य श्रवणीयस्य वाजस्यान्नस्य राजसि। ईश्वरो भवसि। स त्वं नोऽस्मान्मृळ। सुखय। महान् गुणैरधिकोऽसि॥ रायः। ऊडिदमिति विभक्तेरुदात्तत्वं। पूर्धि। पॄ पालनपूरणयोः। श्रुशृणुपॄकृवृभ्यश्छंदसीति हेर्धिरादेशः। बहुलं छंदसीति शपो लुक्। [illegible] ङित्त्वाद्गुणाभाव उदोष्ठ्यपूर्वस्य। पा० ७. १. १०२.। इत्युत्वं। हलि चेति दीर्घः। स्वधावः। संबुद्धौ मतुवसोरिति रुत्वं। आप्यं। अदुपधत्वाभावेऽपि व्यत्ययेन पोरदुपधात्। पा० ३. १. ९८.। इति कर्मणि यत्। यतोऽनाव इत्याद्युदात्तत्वं। यद्वा। ण्यति छांदसमाद्युदात्तत्वं। श्रुत्यस्य। श्रु श्रवणे। औणादिकः क्यप्। तुगागमः। यद्वा। श्रुतिशब्दा[illegible]वे छंदसीति यत्। मृळ। मृड सुखने। शस्य ङित्त्वाल्लघूपधगुणाभावः॥

यूपोच्छ्रयण ऊर्ध्व ऊ षु ण ऊतय इति द्वे। पशाविष्टिरिति खंडे सूचितं। ऊर्ध्व ऊ षु ण ऊतय इति द्वे। आ० ३. १.। इति॥ एते एवाभिष्टवेऽपि विनियुक्ते। अथे[illegible] खंडे सूचितं। सखे सखायमभ्या ववृत्स्वोर्ध्व ऊ षु ण ऊतय इति द्वे। आ० ४. ७.। इति॥

ऊर्ध्व ऊ षु णं ऊतये तिष्ठा देवो न सविता ।
ऊर्ध्वो वाजस्य सनिता यदंजिभिर्वाघद्भिर्विह्वयामहे ॥ १३ ॥
ऊर्ध्वः । ऊं इति । सु । नः । ऊतये । तिष्ठ । देवः । न । सविता ।
ऊर्ध्वः । वाजस्य । सनिता । यत् । अंजिऽभिः । वाघत्ऽभिः । विऽह्वयामहे ॥ १३ ॥

हे यूप यद्वा यूपात्मकदारुनिष्ठाग्ने नोऽस्माकमूतये रक्षणायोर्ध्व उन्नतस्तिष्ठ । तत्र दृष्टांतः । सविता देवो न । यथा सूर्यो देव उन्नतस्तिष्ठति तद्वत् । ऊर्ध्व उन्नतः सन् वाजस्यान्नस्य सनिता दाता भविष्यसि । यस्मात्कारणादंजिभिराज्येन यूपमंजद्भिर्वाघद्भिर्यज्ञं वहद्भिर्ऋत्विग्भिः सह विह्वयामहे अन्नदानाय त्वां विशेषेणाह्वयामः । तस्मादन्नस्य दाता भवेति पूर्वत्रान्वयः ॥ ऊ षु णः । इकः सुञि । पा० ६. ३. १३४. । इति संहितायां दीर्घः । सुञः । पा० ८. ३. १०७. । इति षत्वं । नश्च धातुस्थोरुषुभ्यः । पा० ८. ४. २७. । इति णत्वं । ऊतये । अवतेः क्तिनि ज्वरत्वरेत्यादिना ऊट् । ऊतियूतीत्यादिना क्तिन्नुदात्तत्वं । तिष्ठ । शपि पाघ्रेत्यादिना तिष्ठादेशः । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । वाजस्य । क्रियाग्रहणं कर्तव्यं । पा० १. ४. ३२. १. । इति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । सनिता । षणु दाने । लुटि तासिः । वलादिलक्षण इट् । पा० ७. २. ३५. । तिपो डादेशः । पा० २. ४. ८५. । टिलोपः । तासि प्रत्ययस्वरेण तिबादेशस्योदात्तत्वे प्राप्ते तास्यनुदात्तेदिति तस्यानुदात्तत्वं । धातुस्वरः । न लुट् । पा० ८. १. २९. । इति निघातप्रतिषेधः । अंजिभिः । अञ्जू व्यक्तिम्रक्षणगतिषु । खनिकष्यंजीत्यादिना । उ० ४. १३९. । इप्रत्ययः । विह्वयामहे । निसमुपविभ्यो ह्वः । पा० १. ३. ३०. । इत्यकर्त्रभिप्रायेऽप्यात्मनेपदं । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । तिङि चोदात्तवतीति गतेरनुदात्तत्वं । यद्वृत्तयोगादनिघातः ॥

ऊर्ध्वो नः पाह्यंहसो नि केतुना विश्वं समत्रिणं दह ।
कृधी न ऊर्ध्वाञ्चरथाय जीवसे विदा देवेषु नो दुवः ॥ १४ ॥
ऊर्ध्वः । नः । पाहि । अंहसः । नि । केतुना । विश्वं । सं । अत्रिणं । दह ।
कृधि । नः । ऊर्ध्वान् । चरथाय । जीवसे । विदाः । देवेषु । नः । दुवः ॥ १४ ॥

हे यूप यद्वा तन्निष्ठाग्ने ऊर्ध्व उन्नतः सन् नोऽस्मान्केतुना ज्ञानेनांहसः पापान्नि पाहि । नितरां पालय । विश्वमत्रिणं सर्वमत्तारं भक्षकं राक्षसं सं दह । सम्यग्भस्मीकुरु । नोऽस्मानूर्ध्वानुन्नतान्कृधि । कुरु । किमर्थं । चरथाय लोके चरणाय जीवसे जीवनाय च नोऽस्माकं दुवो धनं हविःस्वरूपं देवेषु विदाः । लंभय ॥ अत्रिणं । अद भक्षणे । अदेस्त्रिनि च । उ० ४. ६८. । इत्यौणादिकस्त्रिनिप्रत्ययः । यद्वा । अदस्तस्त्रायंत इत्यत्राः । आतोऽनुपसर्गे क इति कः । अतो मत्वर्थीय इनिः । कृधि । श्रुशृणुपॄकृवृभ्यश्छंदसीति हेर्धिरादेशः । बहुलं छंदसीति विकरणस्य लुक् । अन्येषामपि दृश्यत इति संहितायां दीर्घः । ऊर्ध्वान् । उभयथर्क्षु । पा० ८. ३. ८. । इति विकल्पविधानान्नश्छव्यप्रशान् । पा० ८. ३. ७. । इति नकारस्य रुत्वाभावः । चरथाय । चरेरौणादिको भावेऽथप्रत्ययः । जीवसे । जीव प्राणधारणे । तुमर्थे सेसेनित्यसेप्रत्ययः । विदाः । विदॢ लाभे । अस्मादंतर्भावितण्यर्थाल्लेटि सिपि लेटोऽडाटावित्याडागमः । तुदादित्वाच्छः । शे मुचादीनामिति नुम् न भवति । अनित्यमागमशासनमिति वचनेन तस्यानित्यत्वात् । इतश्च लोप इतीकारलोपः । आगमानुदात्तत्वे विकरणस्वरः ॥

पाहि नो अग्ने रक्षसः पाहि धूर्तेरराव्णः ।
पाहि रीषत उत वा जिघांसतो बृहद्भानो यविष्ठ्य ॥ १५ ॥

पाहि। नः। अग्ने। रक्षसः। पाहि। धूर्तेः। अराव्णः।
पाहि। रिषतः। उत। वा। जिघांसतः। बृहद्भानो इति बृहत्ऽभानो। यविष्ठ्य ॥ १५ ॥

हे अग्ने हे बृहद्भानो बृहंतो भानवो यस्य तादृश हे यविष्ठ्य युवत्तम हे अग्ने नोऽस्मान्रक्षसो बाधकाद्ब्रा-क्षसादेः पाहि। पालय। तथा अराव्णो धनादीनामदातृरूपाद्धूर्तेर्हिंसकात्पाहि। तथा रिषतो हिंसकाद्व्या-घ्रादेः सकाशात्पाहि। उत वा अथवा जिघांसतो हंतुमिच्छतः शत्रोः सकाशात्पाहि ॥ धूर्तेः। धुर्वी हिंसार्थः। क्तिच्क्तौ च संज्ञायामिति कर्तरि क्तिच्। तितुत्रेत्यादिनेट्प्रतिषेधः। राल्लोपः। पा॰ ६. ४. २१.। इति वकार-लोपः। हलि चेति दीर्घत्वं। अराव्णः। रा दाने। आतो मनिन्निन्नित्यादिना वनिप्। नञ्समासेऽव्ययपूर्वपदप्र-कृतिस्वरत्वं। पंचम्येकवचनेऽल्लोपोऽन इत्यनोऽकारस्य लोपः। रिषतः। रिष हिंसायां। लटः शतृ। बहुलं छंदसीति शपो लुक्। प्रत्ययस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वं। जिघांसतः। हंतेरिच्छार्थे सन्यज्झनगमां सनि। पा॰ ६. ४. १६.। इत्युपधादीर्घत्वं। अभ्यासाच्च। पा॰ ७. ३. ५५.। इत्यभ्यासादुत्तरस्य हकारस्य घत्वं। सन्यत इतीत्वं। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे सनो नित्त्वान्नित्स्वरेण पदस्याद्युदात्तत्वं। बृहद्भानो। आमंत्रितस्य चेति षाष्ठिकमाद्युदात्तत्वं। पादादित्वादाष्टमिकनिघाताभावः। यविष्ठ्य। स्थूलदूरेत्यादिना यणादिपरस्य लोपः। पूर्वस्य च गुणः। यकारोपजनश्छांदसः ॥ ॥ १० ॥

घनेव विष्वग्वि जह्यराव्णस्तपुर्जंभ यो अस्मध्रुक्।
यो मर्त्यः शिशीते अत्यक्तुभिर्मा नः स रिपुरीशत ॥ १६ ॥
घनाऽइव। विष्वक्। वि। जहि। अराव्णः। तपुःऽजंभ। यः। अस्मऽध्रुक्।
यः। मर्त्यः। शिशीते। अति। अक्तुऽभिः। मा। नः। सः। रिपुः। ईशत ॥ १६ ॥

हे तपुर्जंभ [illegible] अराव्णोऽस्मभ्यं देयस्य धनस्यादातॄन्वैरिणो विष्वक् सर्वतो वि जहि। विशेषेण मारय। तत्र दृष्टांतः। घनेव। यथा कठिनेन [illegible]ादिना भांडादिभंगं करोति तद्वत्। यो ऽन्योऽपि रिपुरस्मध्रुक् अस्मद्विषयद्रोहकारी भर्त्सनादिना बाधते। यश्चान्यो मर्त्यो मनुष्यः शत्रुरक्तुभिरायुधं-रति शिशीते तनूकरोति। अस्मान्प्रहरतीत्यर्थः। स रिपुर्भर्त्सनप्रहारकारी द्विविधोऽपि शत्रुर्नोऽस्मान्प्रति मेशत। ईश्वरः शक्तो मा भूत् ॥ घनाऽइव। सुपां सुलुगिति तृतीयाया डादेशः। जहि। हंतेर्लोटि हौ हंतेर्जः। पा॰ ६. ४. ३६.। इति जादेशः। तस्यासिद्धत्वाड्डेर्लुगभावः। तपुर्जंभ। तप संतापे। औणादिकः करण उसि-न्प्रत्ययांतस्तपुस्शब्दो नित्त्वादाद्युदात्तः। जभि नाशने। जंभ्यंते शत्रव एभिरिति जंभान्यायुधानि। करणे घञ्। तपूंषीव जंभानि यस्यासौ तपुर्जंभः। आमंत्रिताद्युदात्तत्वं। अस्मध्रुक्। द्रुहि जिघांसायां। सत्सूद्विषेत्या-दिना क्विप्। वा द्रुहमुहष्णुहष्णिहां। पा॰ ८. २. ३३.। इति हकारस्य घत्वं। भष्भावः। शिशीते। शो तनूक-रणे। व्यत्ययेनात्मनेपदं। बहुलं छंदसीति विकरणस्य श्लुः। आदेच इत्यात्वं। ततो द्विर्वचने बहुलं छंदसि। पा॰ ७. ४. ७८.। इत्यभ्यासस्येत्वं। ई हल्यघोरितीत्वं। व्यत्ययेनाद्युदात्तत्वं। यद्वृत्तयोगादनिघातः। ईशत। लङि बहुलं छंदसीति शपो लुगभावः। न माङ्योग इत्यडागमाभावः ॥

अग्निर्वव्ने सुवीर्यमग्निः कण्वाय सौभगं।
अग्निः प्रावन्मित्रोत मेध्यातिथिमग्निः साता उपस्तुतं ॥ १७ ॥
अग्निः। वव्ने। सुऽवीर्यं। अग्निः। कण्वाय। सौभगं।
अग्निः। प्र। आवत्। मित्रा। उत। मेध्यऽअतिथिं। अग्निः। सातौ। उपऽस्तुतं ॥ १७ ॥

अग्निर्देवः सुवीर्यं शोभनवीर्योपेतं धनमुद्दिश्य वव्ने। याचितः। सोऽग्निः कण्वाय महर्षये सौभगं शोभनधनादिरूपं भाग्यं प्रायच्छदिति शेषः। तथाग्निर्मित्रास्मन्मित्राणि प्रावत्। प्रकर्षेण रक्षितवान्। उतापि च मेध्यातिथिं मेधयोग्यैरतिथिभिरुपेतमृषिं प्रावत्। तथो[illegible]पि स्तोतारं यजमानं सातौ ध[illegible]निमित्तं प्रावदिति शेषः॥ वव्ने। वनु याचने। कर्मणि लिट्। न शसददवादिगुणानां। पा० ६. ४. १२६.। इत्येत्वाभ्यासलोपयोः प्रतिषेधः। उपधालोपश्छांदसः। सौभगं। सुभगान्मंत्र इत्युद्गात्रादिषु पाठात्तस्य भाव इत्येतस्मिन्नर्थेऽञ्। पा० ५. १. १२९.। ञित्वादाद्युदात्तत्वं। मित्रा। शेश्छंदसि बहुलमिति शेर्लोपः। उपस्तुतं। क्तिच्क्तौ च संज्ञायामिति स्तौतेः कर्तरि क्तः। थाथादिनोत्तरपदांतोदात्तत्वं॥

अ॒ग्निना॑ तु॒र्वशं॒ यदुं॑ परा॒वत॑ उ॒ग्रादे॑वं हवामहे।
अ॒ग्निर्न॑यन्नव॑वास्त्वं बृ॒हद्र॑थं तु॒र्वीतिं॒ दस्य॑वे॒ सहः॑ ॥१८॥
अ॒ग्निना॑। तु॒र्वशं॑। यदुं॑। प॒रा॒ऽवतः॑। उ॒ग्रऽदे॑वं। ह॒वा॒म॒हे॒।
अ॒ग्निः। न॒य॒त्। नव॑ऽवास्त्वं। बृ॒हत्ऽर॑थं। तु॒र्वीतिं॑। दस्य॑वे। सहः॑ ॥१८॥

अग्निना सहावस्थितान् तुर्वशनामकं यदुनामकमुग्रदेवनामकं च राजर्षीन्परावतो दूरदेशाद्धवामहे। आह्वयामः। स चाग्निर्नववास्तुनामकं बृहद्रथनामकं तुर्वीतिनामकं च राजर्षीन्नयत्। इहानयतु। कीदृशोऽग्निः। दस्यवे सहः अस्मदुपद्रवहेतोश्चोरस्याभिभविता॥ नयत्। णीञ् प्रापणे। लेट्यडागमः। इतश्च लोप इतीकारलोपः। नववास्त्वं। नवं वास्तु यस्यासौ नववास्तुः। वा छंदसीत्यनुवृत्तेरमि पूर्वत्वाभावे यणादेशः। बृहद्रथं। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥

नि त्वाम॑ग्ने॒ मनु॑र्दधे॒ ज्योति॒र्जना॑य॒ शश्व॑ते।
दी॒देथ॒ कण्व॑ ऋ॒तजा॑त उ॒क्षि॒तो यं नम॒स्यंति॑ कृ॒ष्टयः॑ ॥१९॥
नि। त्वां। अ॒ग्ने॒। मनुः॑। द॒धे॒। ज्योतिः॑। जना॑य। शश्व॑ते।
दी॒देथ॑। कण्वे॑। ऋ॒तऽजा॑तः। उ॒क्षि॒तः। यं। न॒म॒स्यंति॑। कृ॒ष्टयः॑ ॥१९॥

हे अग्ने ज्योतिः प्रकाशरूपं त्वां शश्वते बहुविधाय जनाय मनुः प्रजापतिर्नि दधे। देवयजनदेशे स्थापितवान्। हे अग्ने त्वमृतजात ऋतेन यज्ञेन निमित्तभूतेनोत्पन्न उक्षितो हविर्भिस्तर्पितः सन् कण्व एतन्नामके महर्षौ दीदेथ। दीप्तवानसि। यमग्निं कृष्टयो मनुष्याः। कृष्टयश्चर्षणय इति मनुष्यनामसु पठितत्वात्। नमस्यंति नमस्कुर्वंति। स त्वमिति पूर्वत्रान्वयः॥ दीदेथ। दीदेतिश्छांदसो दीप्तिकर्मा। थलि [illegible] छंदसि वेति वक्तव्यं। का० ६. १. ८. १.। इति द्विर्वचनाभावः। [illegible] लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं। ऋतजातः। ऋते जन्यत इत्यृतजातः। श्वीदितो निष्ठायामितीट्[illegible]। जनसनेत्यादिनात्वं। तृतीयापूर्वपदप्रकृतिस्वरत्वं। नमस्यंति। नमोवरिवः। पा० ३. १. १९.। इति पूजार्थे क्यच्। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे क्यजंतधातुस्वरः। कृष्टयः। कृष विलेखने। क्तिच्क्तौ च संज्ञायामिति क्तिच्॥

त्वे॒षासो॑ अ॒ग्नेरम॑वंतो अ॒र्चयो॑ भी॒मासो॒ न प्रती॑तये।
र॒क्ष॒स्विनः॒ सद॒मिद्या॑तु॒माव॑तो॒ विश्वं॒ सम॒त्रिणं॑ दह ॥२०॥
त्वे॒षासः॑। अ॒ग्नेः। अम॑ऽवंतः। अ॒र्चयः॑। भी॒मासः॑। न। प्रति॑ऽइतये।
र॒क्ष॒स्विनः॑। सद॑म्। इत्। या॒तु॒ऽमाव॑तः। विश्वं॑। सं। अ॒त्रिणं॑। द॒ह॒ ॥२०॥

अग्नेरर्चयो ज्वालास्त्वेषासो दीप्ता अमवंतो बलवंतो भीमासो भयंकराः। अतः प्रतीतयेऽस्माभिः प्रत्येतुं न शक्या इति शेषः। हे अग्ने रक्षस्विनो बलवतो यातुमावतो यातुधानानसुरान् सदमित् सर्वदैव सं दह। सम्यग्भस्मीकुरु। तथा विश्वं सर्वमत्रिणं भक्षकमस्मद्बाधकं शत्रुं सं दह ॥ त्वेषासः। त्विष दीप्तौ। पचाद्यच्। चित इत्यंतोदात्तत्वं। अमवंतः। अम रोगे। अमति शत्रून्नुजतीत्यमो बलं। पचाद्यच्। वृषादित्वादाद्युदात्तत्वं। तदेषामस्तीत्यमवंतः। प्रतीतये। तादौ च निति कृत्यतौ इति गतेः प्रकृतिस्वरत्वं। रक्षस्विनः। रक्षंत्यनेनेति रक्षो बलं। करणेऽसुन्। अस्मायामेधेति मत्वर्थीयो विनिः। यातुमावतः। यातवो यातनाः। तान्मिमते निर्मिमत इति राक्षसव्यापारा यातुमाः। आतोऽनुपसर्गे क इति कः। तदेषामस्तीति मतुप्। मतौ बह्वचोऽनजिरादीनां। पा० ६. ३. ११९.। इति दीर्घत्वं। संज्ञायां। पा० ८. २. ११.। इति वत्वं। मतुपः पित्त्वादनुदात्तत्वे कृदुत्तरपद-प्रकृतिस्वरत्वं। अत्रिणं। अदेस्त्रिनि चेति कर्तरि त्रिनिप्रत्ययः॥ ॥११॥

क्रीळं व इति द्वितीयं सूक्तं पंचदशर्चं। अत्रेयमनुक्रमणिका। क्रीळं पंचोना मारुतं हि गायत्रं त्विति। ऋषिश्चान्यस्मादृषेरवाविशिष्ट इति परिभाषया घोरपुत्रः कण्व ऋषिः। इदमुत्तरं च गायत्रीच्छंदस्के। इदमादिसूक्तत्रयं मरुद्देवताकं। तुहिहवेति परिभाषितत्वात्॥ व्यूळ्हे द्वितीये छंदोम आग्निमारुतशस्त्र एतत्सूक्तं निविद्धानीयं। द्वितीयस्याग्निं वो देवमिति खंडे सूचितं। क्रीळं वः शर्धोऽग्ने मृळेत्याग्निमारुतं। आ० ८. १०.। इति॥ ब्राह्मणं च। क्रीळं वः शर्धो मारुतमिति। ऐ० ब्रा० ५. १९.। मरुद्भ्यः क्रीडिभ्यः पुरोडाशं सप्तकपालमि-त्यस्यामिष्टौ क्रीळं व इत्येषा प्रधानस्यानुवाक्या। तथा तत इति खंडे सूचितं। क्रीळं वः शर्धो मारुतमत्यासो न ये मरुतः स्वंचः। आ० २. १८.। इति॥

क्रीळं वः शर्धो मारुतमनर्वाणं रथेशुभं। कण्वा अभि प्र गायत ॥१॥

क्रीळं। वः। शर्धः। मारुतं। अनर्वाणं। रथेऽशुभं। कण्वाः। अभि। प्र। गायत ॥१॥

हे कण्वाः कण्वगोत्रोत्पन्ना महर्षयः। यद्वा। मेधाविन ऋत्विजः। वो युष्मदर्थं मारुतं मरुत्समूहरूपं शर्धो बलमभि प्र गायत। अभितः प्रकर्षेण स्तुध्वं। कीदृशं शर्धः। क्रीळं विहरणशीलं अनर्वाणं भ्रातृव्यरहितं। अत एव श्रुत्यंतरब्राह्मणेन मंत्रांतरमेव व्याख्यातं। अनर्वा प्रेहीत्याह भ्रातृव्यो वा अर्वा भ्रातृव्यापनुत्त्या इति। रथेशुभं स्वकीये रथेऽवस्थाय शोभमानं॥ क्रीळं। क्रीडृ विहारे। पचाद्यच्। शर्धः। शृधु प्रसहने। शर्धय-त्यनेन शत्रूनिति शर्धो बलं। असुन्। नित्त्वादाद्युदात्तत्वं। मारुतं। मरुतां संबंधि। तस्येदमित्यण्। व्यत्ययेना-द्युदात्तत्वं। यद्वा। समूहार्थेऽनुदात्तादेरञ्। पा० ४. २. ४४.। इत्यनुदात्तादिलक्षणोऽञ्प्रत्ययः। अनर्वाणं। व्यत्ययेन पुंल्लिंगता। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। रथेशुभं। शुभ दीप्तौ। रथे शोभत इति रथेशुप्। क्विबिति क्विप्। तत्पुरुषे कृति बहुलमित्यलुक्। कृदुत्तरपदप्रकृतिस्वरत्वं। गायत। कै गै रै शब्दे। तिङ्ङतिङ इति निघातः॥

ये पृषतीभिर्ऋष्टिभिः साकं वाशीभिरंजिभिः। अजायंत स्वभानवः ॥२॥

ये। पृषतीभिः। ऋष्टिऽभिः। साकं। वाशीभिः। अंजिऽभिः। अजायंत। स्वऽभानवः ॥२॥

ये मरुतः पृषत्यादिभिः साकं स्वभानवः स्वकीयदीप्तियुक्ता अजायंत इति संपन्नाः। पृषत्यो बिंदुयुक्ता मृग्यो मरुद्वाहनभूताः। पृषत्यो मरुतामिति निघंटावुक्तत्वात्। ऋष्टय आयुधानि। वाश्यः शब्दविशेषाः परकीयसेनाभीतिहेतवः। वाशी वाणीति वाङ्नामसु पठितत्वात्। अंजयोऽलंकरणानि। तान् सुम इति शेषः॥ अजायंत। जनी प्रादुर्भावे। श्नि ज्ञाजनोर्जा। पा० ७. ३. ७९.। इति जादेशः। अडागम उदात्तः। स्वभा-नवः। स्वकीया भानवो येषां। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥

इहेव शृण्व एषां कशा हस्तेषु यद्वदान्। नि यामंश्चित्रमृंजते ॥३॥

इहऽइव। शृण्वे। एषां। कशाः। हस्तेषु। यत्। वदान्। नि। यामन्। चित्रं। ऋंजते ॥३॥

एषां मरुतां हस्तेषु स्थिताः कशाः स्वस्ववाहनताडनहेतवो यद्वदान् यद्वदंति यं ध्वनिं कुर्वंति तं ध्वनिमिहैवात्रैव स्थित्वा शृण्वे। शृणोमि। स ध्वनिविशेषो यामन् संग्रामे चित्रं विविधं शौर्यं न्यृंजते। नितरामलंकरोति। ऋंजतिः प्रसाधनकर्मेति यास्कः। नि॰ ६. २१.॥ शृण्वे। श्रु श्रवणे। व्यत्ययेनात्मनेपदं। श्रुवः शृ चेति श्नुः। हुश्नुवोः सार्वधातुक इति यणादेशः। वदान्। वद व्यक्तायां वाचि। लेट्याडागमः। इतश्च लोप इतीकारलोपे संयोगांतलोपः। आगमानुदात्तत्वे धातुस्वरः शिष्यते। यद्वृत्तयोगादनिघातः। यामन्। सुपां सुलुगिति सप्तम्या लुक्। न ङिसंबुद्ध्योः। पा॰ ८. २. ८.। इति नलोपप्रतिषेधः। ऋंजते। ऋजि भृजी भर्जने। अत्र प्रसाधनार्थः॥

प्र वः शर्धाय घृष्वये त्वेषद्युम्नाय शुष्मिणे। देवत्तं ब्रह्म गायत ॥४॥
प्र। वः। शर्धाय। घृष्वये। त्वेषऽद्युम्नाय। शुष्मिणे। देवत्तं। ब्रह्म। गायत ॥४॥

हे ऋत्विजः वो युष्माकं संबंधिने शर्धाय प्रसहनशीलाय घृष्वये शत्रुघर्षणयुक्ताय त्वेषद्युम्नाय दीप्यमानयशसे। द्युम्नं द्योततेर्यशो वान्नं वेति यास्कः। नि॰ ५. ५.। शुष्मिणे बलवते। शुष्मं शुष्णमिति बलनामसु पाठात्। एवंभूताय मरुद्गणाय ब्रह्म हविर्लक्षणमन्नमुद्दिश्य प्र गायत। स्तुध्वं। कीदृशं ब्रह्म। देवत्तं देवैर्दत्तं देवतानुग्रहाल्लब्धं॥ शर्धाय। शृधु प्रसहने। शर्धयत्यभिभवतीति शर्धो बलं। पचाद्यच्। वृषादित्वादाद्युदात्तत्वं। घृष्वये। घृष संघर्षे। छविघृष्वीत्यादिना। उ॰ ४. ५६.। क्विन्प्रत्ययांतो निपातितः। त्वेषद्युम्नाय। त्विष दीप्तौ। पचाद्यच्। त्वेषं दीप्तं द्युम्नं यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। देवत्तं। देवैर्दत्तं। छांदसो वर्णलोपः। उक्तं च। द्वौ चापरौ वर्णविकारनाशौ। का॰ ६. ३. १०९.। इति। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं॥

प्र शंसा गोष्वघ्न्यं क्रीळं यच्छर्धो मारुतं। जंभे रसस्य वावृधे ॥५॥
प्र। शंस। गोषु। अघ्न्यं। क्रीळं। यत्। शर्धः। मारुतं। जंभे। रसस्य। ववृधे ॥५॥

गोषु मरुन्मातृभूतपृश्निप्रभृतिषु धेनुष्ववस्थितं। पृश्न्यै वै पयसो मरुतो जाताः। तै॰ सं॰ २. २. ११. ४.। इति श्रुत्यंतरात्। अघ्न्यमहंतव्यं क्रीळं विहारोपेतं मारुतं मरुत्संबंधि शर्धः प्रसहनशीलं तेजो यदस्ति तत्प्र शंस। हे ऋत्विक्समूह स्तुहि। रसस्य गोक्षीररूपस्य संबंधि तत्तेजो जंभे मुख उदरे वा ववृधे। वृद्धमभूत्॥ शंस। शन्सु स्तुतौ। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। गोषु। साविकाच इति प्राप्तस्य विभक्त्युदात्तस्य न गोश्वन्साववर्णेति प्रतिषेधः। अघ्न्यं। घ्नो हननं। घञर्थे कविधानं। पा॰ ३. ३. ५८. ४.। इति कः। गमहनेत्यादिनोपधालोपः। हो हंतेः। पा॰ ७. ३. ५४.। इति घत्वं। तदर्हतीति घ्न्यं। छंदसि चेति यः। न घ्न्यमघ्न्यं। अव्ययपूर्वपदप्रकृतिस्वरत्वं। क्रीळादयो गताः। जंभे। जभि नाशने। जंभ्यते भक्ष्यतेऽनेनेति जंभमास्यं। करणे घञ्। ववृधे। वृधु वृद्धौ। लिट्। छांदसं संहितायामभ्यासदीर्घत्वं॥ ॥१२॥

को वो वर्षिष्ठ आ नरो दिवश्च ग्मश्च धूतयः। यत्सीमंतं न धूनुथ ॥६॥
कः। वः। वर्षिष्ठः। आ। नरः। दिवः। च। ग्मः। च। धूतयः। यत्। सीं। अंतं। न। धूनुथ ॥६॥

दिवश्च द्युलोकस्यापि ग्मश्च भूलोकस्यापि। गौर्ग्मेति भूनामसु पठितत्वात्। धूतयः कंपनकारिणो हे नरो नेतारो मरुतो वो युष्माकं मध्य आ समंताद्वर्षिष्ठो वृद्धतमः कः। यद्यस्मात्कारणात्सीं सर्वतोऽतं न वृक्षाग्रमिव धूनुथ चालयथ। तस्मात्कारणात्कंपयितॄणां युष्माकं मध्ये कः प्रबल इति प्रश्नः॥ वर्षिष्ठः। वृद्धशब्दादिष्ठनि प्रियस्थिरेत्यादिना वर्षादेशः। नित्त्वादाद्युदात्तः। ग्मः। ग्माशब्दात् षष्ठ्येकवचन आतो धातोरित्यत्र आत इति योगविभागः कर्तव्यः। का॰ ६. ४. १४०.। इत्युक्तत्वादाकारलोपः। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं। धूतयः। धूञ् कंपने। क्तिच्क्तौ च संज्ञायामिति क्तिच्। तितुत्रेत्यादिनेट्प्रतिषेधः। आमंत्रितस्य चेति

सर्वानुदात्तत्वं । धूनुथ । स्वादिभ्यः श्नुः । सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वचनात्सति शिष्टोऽपि विकरणस्वरो लसार्वधातुकस्वरं न बाधते । अतस्तिङ एव स्वरः । यद्वृत्तयोगादनिघातः ॥

नि वो यामाय मानुषो दध्र उग्राय मन्यवे । जिहीत पर्वतो गिरिः ॥७॥

नि । वः । यामाय । मानुषः । दध्रे । उग्राय । मन्यवे । जिहीत । पर्वतः । गिरिः ॥७॥

हे मरुतो वो युष्माकं यामाय गमनार्थं मानुषो गृहस्वामी कश्चिन्मनुजो नि दध्रे । गृहदार्ढ्यार्थं दृढं स्तंभं निक्षिप्तवान् । भवदीयगमनेन चालितं गृहं पतिष्यतीति भीत्या तन्निवारणाय दृढस्तंभप्रक्षेपः । कीदृशाय यामाय । उग्राय तीव्राय मन्यवे चा[illegible]मन्यमानाय । युज्यते हि भवद्गमनाद्भीतिः । यतो भवद्गत्या चालितः पर्वतो बहुविधपर्वयुक्तो गिरिः शिखरी जिहीत गच्छेत् ॥ मानुषः । मनोर्जातावञ्यतौ षुक् च । पा॰ ४. १. १६१. । इति मनुशब्दादपत्यार्थेऽञ् षुगागमश्च । ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं । दध्रे । धृञ् अवस्थान इत्यस्य लिटि कित्त्वाद्गुणाभावे सति यणादेशः । प्रत्ययस्वरः । पादादित्वान्न निघातः । जिहीत । ओहाङ् गतौ । लिङि जुहोत्यादित्वाच्छपः श्लुः । भृञामित् । पा॰ ७. ४. ७६. । इत्यभ्यासस्येत्वं । श्नाभ्यस्तयोरात इत्याकारलोपः । पर्ववान् पर्वतः । मत्वर्थीयस्तप्रत्ययः ॥

येषामज्मेषु पृथिवी जुजुर्वाँ इव विश्पतिः । भिया यामेषु रेजते ॥८॥

येषां । अज्मेषु । पृथिवी । जुजुर्वान्ऽइव । विश्पतिः । भिया । यामेषु । रेजते ॥८॥

हे मरुतो येषां युष्माकं यामेषु गमनेष्वज्मेषु क्षेपकेषु सत्सु पृथिवी भूमिः रेजते कंपते । तत्र दृष्टांतः । जुजुर्वाँ इव विश्पतिः । यथा वयोहानि[illegible] जीर्णः प्रजापालको राजा वैरिभयात्कंपते तद्वत् ॥ अज्मेषु । अज [illegible]ोः । बहुलग्रहणादौणादिको मन् । अजेर्व्यघञपोः । पा॰ २. ४. ५६. । इति वीभावो न भवति । वलादावार्धधातुके विकल्प इष्यते । का॰ २. ४. ५६. २. । इति वचनात् । नित्त्वादाद्युदात्तत्वं । जुजुर्वान् । जॄष् वयोहानौ । लिटः क्वसुः । बहुलं छंदसि । पा॰ ७. १. १०३. । इत्युत्वं । अभ्यासहलादिशेषौ । वस्वेकाजाद्घसामिति नियमादिडागमाभावः । ऋच्छत्यॄतां । पा॰ ७. ४. ११. । इति गुणो हलि चेति दीर्घत्वं च संज्ञापूर्वको विधिरनित्य इति वचनान्न भवति । विशां पतिर्विश्पतिः । पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरे प्राप्ते परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । भिया । सावेकाच इति विभक्तेरुदात्तत्वं । यामेषु । यम उपरमे । भावे घञ् । कर्षात्वतो घञ इत्यंतोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वं । रेजते । रेजृ कंपने । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः ॥

स्थिरं हि जानमेषां वयो मातुर्निरेतवे । यत्सीमनु द्विता शवः ॥९॥

स्थिरं । हि । जानं । एषां । वयः । मातुः । निःऽएतवे । यत् । सीं । अनु । द्विता । शवः ॥९॥

एषां मरुतां जानं जन्मस्थानमाकाशं स्थिरं हि । चलनरहितं खलु । मातुर्मरुतां जननीस्थानीयादाकाशाद्वयः पक्षिणो निरेतवे निर्गंतुं समर्था भवंतीति शेषः । तादृशादाकाशाद्भवज्जन्मेति मरुतां स्तुतिः । यद्यस्मात्कारणाच्छवो भवदीयं बलमनुक्रमेण सीं सर्वतो द्विता द्वित्वेन द्यावापृथिव्योर्विभज्य वर्तते । अतो भवदीयं जानं स्थिरं हीति पूर्वत्रान्वयः ॥ जानं । जन्यतेऽस्मिन्निति जानमंतरिक्षं । अधिकरणे घञ् । एषां । इदमोऽन्वादेश इत्यशादेशोऽनुदात्तः । विभक्तिश्च सुप्त्वादनुदात्ता । न चो[illegible]ना विभक्त्युदात्तत्वं । अंतोदात्तादिदंशब्दात्तस्य विधानात् । निरेतवे । इण् गतौ । तुमर्थे सेसेनिति तवेन्प्रत्ययः । तादौ चेति गतेः प्रकृतिस्वरत्वं ॥

उदु त्ये सूनवो गिरः काष्ठा अज्मेष्वत्नत । वाश्रा अभिज्ञु यातवे ॥१०॥

उत् । ऊं इति । त्ये । सूनवः । गिरः । काष्ठाः । अज्मेषु । अत्नत । वाश्राः । अभिऽज्ञु । यातवे ॥१०॥

त्ये पूर्वप्रकृता गिरः सूनवो वाच उत्पादका मरुतः। वायवो हि ताल्वोष्ठादिषु संचरंतो वाचमुत्पादयंति। अज्मेषु स्वकीयेषु गमनेषु सत्सु काष्ठा अपः। आपोऽपि काष्ठा उच्यंते क्रांत्वा स्थिता भवंति। नि० २. १५.। इति यास्कः। उदु उत्कर्षेणैवात्नत। अतनिषत। विस्तारितवंतः। उदकं विस्तार्य तत्पानार्थं वाश्रा हंभारवोपेता गा अभिज्ञु जान्वाभिमुख्यं यथा भवति तथा यातवे गंतुं प्रेरितवंत इति शेषः॥ सूनवः। षू प्रेरणे। सुवः कित्। उ० ३. ३५.। इति नुप्रत्ययः। कित्त्वाद्गुणाभावः। अत्नत। तनु विस्तारे। लङि झस्यादादेशे बहुलं छंदसीति विकरणस्य लुक्। तनिपत्योश्छंदसि। पा० ६. ४. ९९.। इत्युपधालोपः। अडागमः। अभिज्ञु। अभिगते जानुनी यस्य तदभिज्ञु। प्रसंभ्यां जानुनोर्ज्ञुः। पा० ५. ४. १२९.। इति व्यत्ययेनाभिपूर्वस्यापि जानुशब्दस्य ज्ञुशब्दादेशः समासांतः। यातवे। तुमर्थे सेसेनिति तवेन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं॥ ॥१३॥

त्यं चि॑द्घा दी॒र्घं पृ॒थुं मि॒हो नपा॑तममृ॑ध्रं। प्र च्या॑वयंति॒ याम॑भिः ॥११॥

त्यं। चि॒त्। घ॒। दी॒र्घं। पृ॒थुं। मि॒हः। नपा॑तं। अमृ॑ध्रं। प्र। च्य॒व॒यं॒ति॒। याम॑ऽभिः ॥११॥

त्यं चिद्घ प्रसिद्धो यो मेघस्तमपि मेघं यामभिः स्वकीयगमनैः प्र च्यावयंति। मरुतः प्रकर्षेण गमयंति। कीदृशं। दीर्घमायामोपेतं पृथुं तिर्यग्विस्तृतं मिहो नपातं सेचनीयस्य जलस्य न पातयितारं। वृष्टिमकुर्वंतमित्यर्थः। अमृध्रं केनाप्यहिंस्यं॥ घ। ऋचि तुनुघेत्यादिना दीर्घः। मिहः। मिह सेचने। मेहति सिंचतीति मिट् वृष्टिः। क्विचिति क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं। नपातं। न पातयतीति नपात्। नभ्राण्नपादित्यादिना नञः प्रकृतिभावः। अव्ययपूर्वपदप्रकृतिस्वरत्वं। अमृध्रं। मृधु मृधु उंदने। मर्धत्युदकेनोनत्तीति मृध्रः। बहुलवचनादौणादिको रक्प्रत्ययः। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं। यद्वा। संग्रामवाचिना मृधशब्देन हिंसा लक्ष्यते। मत्वर्थीयो रः। पूर्ववत्स्वरसमासौ। च्यावयंति। च्युङ् गतौ। णिचि वृद्ध्यावादेशौ। पदकाले ह्रस्वश्छांदसः॥

मरु॑तो॒ यद्ध॑ वो॒ बलं॒ जनाँ॑ अचुच्यवीतन। गि॒रीँरचुच्यवीतन ॥१२॥

मरु॑तः। यत्। ह॒। व॒ः। बलं॑। जना॑न्। अ॒चु॒च्य॒वी॒त॒न॒। गि॒रीन्। अ॒चु॒च्य॒वी॒त॒न॒ ॥१२॥

हे मरुतो यद्ध यस्मादेव कारणाद्वो युष्माकं बलमस्ति अस्मादेव कारणाज्जनान्प्राणिनोऽचुच्यवीतन। स्वस्वव्यापारेषु प्रेरयत। तथा गिरीन्मेघान् अचुच्यवीतन। प्रेरयत॥ मरुतः। आमंत्रितायुदात्तत्वं। अचुच्यवीतन। च्यवतेर्लुङि व्यत्ययेन परस्मैपदं। तप्तनप्तनथनाश्चेति तस्य तनबादेशः। बहुलं छंदसीति शपः श्लुः। बहुलं छंदसि। पा० ७. ३. ९७.। इतीडागमः। गुणावादेशौ। तिङ्ङतिङ इति निघातः। गिरीन्। दीर्घादटि समानपाद इति संहितायां नकारस्य रुत्वं। अत्रानुनासिक इतीकारस्यानुनासिकः॥

यद्ध॒ यांति॑ म॒रुतः॒ सं ह॑ ब्रुवतेऽध्व॒न्ना। शृ॒णोति॒ कश्चि॑देषां ॥१३॥

यत्। ह॒। यांति॑। म॒रुतः॑। सं। ह॒। ब्रु॒व॒ते॒। अध्व॑न्। आ। शृ॒णोति॑। कः। चि॒त्। ए॒षां॒ ॥१३॥

यद्ध यदा खलु मरुतो यांति गच्छंति तदानीमध्वन्ना मार्गे सर्वतः सं ब्रुवते ह। संभूय ध्वनिमव्यक्तं कुर्वंति। एषां मरुतां संबंधिनं शब्दं कश्चित् यः कोऽपि शृणोति॥ यांति। या प्रापणे। अदादित्वाच्छपो लुक्। झोऽंत इत्यंतादेशस्योपदेशिवद्भावादंतोऽवत इत्याद्युदात्तत्वं। धातुना सहैकादेश [illegible]। यद्वृत्तयोगादनिघातः। ब्रुवते। ब्रूञ् व्यक्तायां वाचि। झस्यादादेशे कृते परत्वात्प्राप्तस्य गुणस्य ङित्त्वेन बाधितत्वादुवङादेशः। अध्वन्। सुपां सुलुगिति सप्तम्या लुक्। शृणोति। तिपः पित्त्वादनुदात्तत्वे विकरणस्वरः॥

प्र या॑त॒ शीभ॑माशुभिः॒ संति॒ कण्वे॑षु वो॒ दुवः॑। तत्रो॒ षु मा॑दयाध्वै ॥१४॥

प्र। या॒त॒। शीभं॑। आ॒शु॒ऽभिः॑। संति॑। कण्वे॑षु। व॒ः। दुवः॑। तत्रो॒ इति॑। सु। मा॒द॒या॒ध्वै॒ ॥१४॥

हे मरुत आशुभिर्वेगवद्भिः स्वकीयैर्वाहनैः शीभं शीघ्रं। शीभं तृषु तूयमिति चिप्रनामसु पाठात्। प्र यात। प्रकर्षेण कर्मभूमिं गच्छत। कण्वेषु मेधाविष्वनुष्ठातृषु वो युष्माकं दुवो दुवांसि परिचरणानि संति। तत्रो षु तेष्वेव परिचारकेषु कण्वेषु मादयाध्वै। तृप्ता भवत ॥ आशुभिः। अशू व्याप्तौ। कृवापाजीत्यादिना उण्। प्रत्ययस्वरः। संति। श्नसोरल्लोप इत्यकारलोपः। मादयाध्वै। मद तृप्तियोगे। चुरादिः। आकुस्मीय आत्मनेपदी। लेट्याडागमः। टेरेत्वं। वैतोऽन्यत्र। पा॰ ३. ४. ९६.। इत्यैकारस्यैकारादेशः ॥

अस्ति हि ष्मा मदाय वः स्मसि ष्मा वयमेषां। विश्वं चिदायुर्जीवसे ॥१५॥
अस्ति। हि। स्म। मदाय। वः। स्मसि। स्म। वयं। एषां। विश्वं। चित्। आयुः। जीवसे ॥१५॥

हे मरुतो वो युष्माकं मदाय तृप्तयेऽस्ति हि ष्म। अस्माभिः प्रयुज्यमानं हविर्वो विद्यते खलु। एषां युष्माकं भृत्यभूता वयं स्मसि ष्म। विद्यामहे खलु। जीवसे जीवितुं विश्वं चिदायुः सर्वमप्यायुः प्रयच्छतेति शेषः ॥ स्म। निपातस्य चेति संहितायां दीर्घः। स्मसि। इदंतो मसिः। जीवसे। तुमर्थे सेसेनित्यसेप्रत्ययः ॥ ॥१४॥

कद्ध नूनमिति पंचदशर्चं तृतीयं सूक्तं। घोरपुत्रः कण्व ऋषिः। ऋ[illegible]दिति परिभाषितत्वात्। पूर्वसूक्ते मारुतं हीत्युक्तत्वादिदमपि मरुद्देवताकं। गायत्रं [illegible]यत्रीच्छंदस्कं। कद्धेत्यनुक्रमणिका ॥ विनियोगो लैंगिकः ॥

कद्ध नूनं कधप्रियः पिता पुत्रं न हस्तयोः। दधिध्वे वृक्तबर्हिषः ॥१॥
कत्। ह। नूनं। कधऽप्रियः। पिता। पुत्रं। न। हस्तयोः। दधिध्वे। वृक्तऽबर्हिषः ॥१॥

हे मरुतः कद्ध कदा खलु नूनमवश्यं हस्तयोर्दधिध्वे। यूयमस्मान्हस्ते धारयथ। तत्र दृष्टांतः। पिता पुत्रं न हस्तयोः। यथा लोके पिता हस्तयोः स्वकीयं पुत्रं धारयति तद्वत्। कीदृशा मरुतः। कधप्रियः स्तुतिप्रीताः वृक्तबर्हिषः। वृक्तं छिन्नं बर्हिर्दर्भो येषां मरुतां यजमानाय ते मरुतस्तथाविधाः ॥ कत्। कदा। द्वौ चापरौ वर्णविकारनाशौ। का॰ ६. ३. १०९.। इत्युक्तत्वादाकारलोपः। कधप्रियः। कथा स्तुतिः। तया प्रीणंतीति कधप्रियः। प्रीञ् प्रीतौ। क्विप्। पूर्वपदस्य ड्यापोः संज्ञाच्छंदसोर्बहुलं। पा॰ ६. ३. ६३.। इति ह्रस्वत्वं। धकारश्छांदसः। आमंत्रितनिघातः। दधिध्वे। दधातेश्छंदसि लु[illegible] इति वर्तमाने लिट्। क्रादिनियमादिट्। प्रत्ययस्वरः। वृक्तबर्हिषः। आमंत्रितनिघातः ॥

क्व नूनं कद्वो अर्थं गंता दिवो न पृथिव्याः। क्व वो गावो न रण्यंति ॥२॥
क्व। नूनं। कत्। वः। अर्थं। गंत। दिवः। न। पृथिव्याः। क्व। वः। गावः। न। रण्यंति ॥२॥

हे मरुतो नूनमिदानीं क्व। यूयं कुत्र स्थिताः। कत् कदा वो युष्माकमर्थमरणं देवयजनदेशे गमनं। विलंबं मा कुरुतेत्यर्थः। दिवो गंत। द्युलोकाद्गच्छत। पृथिव्या न गंत। भूलोकान्मा गच्छत। वो युष्मान् क्व रण्यंति। देवयजनरूपायाः पृथिव्या अन्यत्र कुत्र शब्दयंति। यजमानाः स्तुवंति। तत्र दृष्टांतः। गावो न। यथा गावो रणंति। शब्दयंति तद्वत् ॥ क्व। किं[illegible]तात्किमोऽत्। पा॰ ५. ३. १२.। इत्यत्प्रत्ययः। क्वाति। पा॰ ७. २. १०५.। इति किमः क्वादेशः। तित्स्वरित इति स्वरितत्वं। अर्थं। ऋ गतौ। उषिकुषिगार्तिभ्यस्थन्। उ॰ २. ४.। इति भावे थन्। नित्त्वादाद्युदात्तत्वं। गंत। गमेर्लोटि बहुलं छंदसीति शपो लुक्। थादेशस्य तस्य तप्तनप्तनथनाश्चेति तबादेशः। अत एव ङित्त्वाभावादनुदात्तोपदेशेत्यादिनानुनासिकलोपो न भवति। प्रत्ययस्य पित्त्वादनु[illegible]त्वे धातुस्वरः। द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं। दिवः। ऊडिदमिति विभक्तेरुदात्तत्वं। पृथिव्याः। उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं। रण्यंति। रणतिः शब्दार्थः। व्यत्ययेन श्यन् ॥

क्व॑ वः सु॒म्ना नव्यां॑सि॒ मरु॑त॒ः क्व॑ सुवि॒ता । क्वो॒३ विश्वा॑नि॒ सौभ॑गा ॥३॥

क्व॑ । व॒ः । सु॒म्ना । नव्यां॑सि । मरु॑तः । क्व॑ । सु॒वि॒ता । क्वो॒३ इति॑ । विश्वा॑नि । सौभ॑गा ॥३॥

हे मरुतो वो युष्माकं संबंधीनि नव्यांसि नवतराणि सुम्ना प्रजापशुरूपाणि धनानि । प्रजा वै पशवः सुम्नं । तै॰ सं॰ ५. ४. ६. ६. । इति श्रुत्यंतरात् । क्व कुत्र वर्तंते । तथा सुविता शोभनानि प्राप्याणि मणिमुक्तादीनि भवदीयानि क्व कुत्र वर्तंते । विश्वानि सर्वाणि सौभगा सौभाग्यरूपाणि गजाश्वादीनि क्वो कुत्र वा वर्तंते । भवदीयैः सुम्नादिभिः सर्वैः सहागंतव्यमित्यर्थः ॥ सुम्ना । शेश्छंदसि बहुलमिति शेर्लोपः । नव्यांसि । नवशब्दादीयसुनीकारलोपश्छांदसः । सुविता । सुष्ठु इतानि सुवितानि । तन्वादीनां छंदसि बहुलमुपसंख्यानं । पा॰ ६. ४. ७७. १. । इत्युवङादेशः । सौभगा । सुभगान्मंत्र इति तस्य भाव इत्यर्थेऽञ् । पूर्ववच्छेर्लोपः ॥

यद्यू॒यं पृ॑श्निमातरो॒ मर्ता॑स॒ः स्यात॑न । स्तो॒ता वो॑ अ॒मृत॑ः स्यात् ॥४॥

यत् । यू॒यं । पृ॒श्नि॒ऽमा॒त॒रः । मर्ता॑सः । स्यात॑न । स्तो॒ता । व॒ः । अ॒मृत॑ः । स्या॒त् ॥४॥

हे पृश्निनामकधेनुपुत्रा मरुतो यूयं यद्यपि मर्तासो मनुष्याः स्यातन भवेत तथापि वो युष्माकं स्तोता यजमानोऽमृतः स्यात् । देवो भवेत् ॥ पृश्निमातरः । पृश्निर्माता येषां ते । समासांतविधेरनित्यत्वान्नद्युतश्च । पा॰ ५. ४. १५३. । इति कबभावः । मर्तासः । असिहसीत्यादिना म्रियतेस्तन्प्रत्ययः । आज्जसेरसुक् । स्यातन । अस्तेर्लिङि तस्य तप्तनप्तनथनाश्चेति तनादेशः । यासुट उदात्तत्वं । अमृतः । नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं ॥

मा वो॑ मृ॒गो न यव॑से जरि॒ता भू॒दजो॑ष्यः । प॒था य॒मस्य॑ गा॒दुप॑ ॥५॥

मा । व॒ः । मृ॒गः । न । यव॑से । ज॒रि॒ता । भू॒त् । अजो॑ष्यः । प॒था । य॒मस्य॑ । गा॒त् । उप॑ ॥५॥

हे मरुतो वो युष्माकं जरिता स्तोताजोष्योऽसेव्यो मा भूत् । तत्र दृष्टांतः । मृगो न यवसे । यथा तृणे भक्षणीये मृगः कदाचिदप्यसेव्यो न भवति किंतु सर्वदा तृणं भक्षयति तद्वत् । किंच स स्तोता यमस्य पथा यमलोकसंबंधिमार्गेण मोप गात् । मा गच्छतु । तस्य मरणं मा भूदित्यर्थः ॥ जरिता । जॄष् वयोहानौ । स्तुतिकर्मेति यास्कः । नि॰ १०. ८. । तृचीडागमः । चित्त्वादंतोदात्तत्वं । भूत् । लुङि गातिस्थेति सिचो लुक् । न माङ्योग इत्यडभावः । अजोष्यः । जुषी प्रीतिसेवनयोः । ऋहलोर्ण्यदिति कर्मणि ण्यत् । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं । पथा । तृतीयैकवचने भस्य टेर्लोपः । पा॰ ७. १. ८८. । इति टिलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं । गात् । एतेर्लुङीणो गा लुङीति गादेशः । गातिस्थेति सिचो लुक् । पूर्ववदडभावः ॥ ॥१५॥

मो षु ण॒ः परा॑परा॒ निर्ऋ॑तिर्दु॒र्हणा॑ वधीत् । प॒दी॒ष्ट तृष्ण॑या स॒ह ॥६॥

मो इति॑ । सु । न॒ः । परा॑ऽपरा । निःऽऋ॑तिः । दु॒ःऽहना॑ । व॒धी॒त् । प॒दी॒ष्ट । तृष्ण॑या । स॒ह ॥६॥

हे मरुतो नोऽस्मान् निर्ऋतिः रक्षोजातिदेवता मो षु वधीत् । सर्वथा वधं मा कार्षीत् । कीदृशी । परापरा उत्कृष्टादप्युत्कृष्टा । [illegible] । अत एव दुर्हणा केनापि हंतुं दुःशक्या । सा निर्ऋतिस्तृष्णया सह पदीष्ट । पततु । अस्मदीया तृष्णा बाधिका निर्ऋतिश्च विनश्यत्वित्यर्थः ॥ मो षु णः । सुञ इति षत्वं । नश्च धातुस्थोरुषुभ्य इति णत्वं । दुर्हणा । ईषद्दुःसुष्वित्यादिना हंतेः कर्मणि खल् । लित्स्वरेण प्रत्ययात्पूर्वं ओदात्तत्वं । वधीत् । लुङि हंतेर्लुङि च । पा॰ २. ४. ४३. । इति वधादेशः । सिचीडागमः । वधादेशस्यादंतत्वादेकाच उपदेश इतीट्प्रतिषेधो न भवति । अतो लोपे सति तस्य स्थानिवत्त्वादतो हलादेः । पा॰ ७. २. ७. । इति वृद्ध्यभावः । इट ईटि । पा॰ ८. २. २८. । इति सिचो लोपः । पदीष्ट । पद गतौ । आशीर्लिङि छंदस्युभ-

यथेति सार्वधातुकत्वात्सलोपः। आर्धधातुकत्वात्सुडागमः। प्रत्ययस्वरः। तृष्णया। ञितृषा पिपासायां। तृषिशुषिरसिभ्यः कित्। उ॰ ३. १२.। इति नप्रत्ययः। निदित्यनुवृत्तेराद्युदात्तत्वं॥

सत्यं त्वेषा अमवन्तो धन्वञ्चिदा रुद्रियासः। मिहं कृण्वन्त्यवातां॥ ७॥

सत्यं। त्वेषाः। अमऽवन्तः। धन्वन्। चित्। आ। रुद्रियासः। मिहं। कृण्वन्ति। अवातां॥ ७॥

धन्वन् चित् मरुदेशेऽपि रुद्रियासो रुद्रेण पालितत्वात्तदीया मरुत आ सर्वतोऽवातां वायुरहितां मिहं वृष्टिं कुर्वंति। तदेतत्सत्यं। कीदृशा रुद्रियासः। त्वेषा दीप्ता अमवंतो बलवंतः। मरुतां रुद्रपालनमाख्यानेषु प्रसिद्धं॥ धन्वन्। रिवि रवि धवि गत्यर्थाः। इदित्वान्नुम्। कनिन्युवृषितक्षीत्यादिना कनिन्। नित्त्वादाद्युदात्तत्वं। सुपां सुलुगिति सप्तम्या लुक्। रुद्रियासः। रुद्रस्येमे रुद्रियाः। तस्येदमित्यर्थे घः। आज्जसेरसुक्। मिहं। मिह सेचने। क्विबिति क्विप्। कृण्वंति। कृवि हिंसाकरणयोश्च। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। तत्संनियोगेन वकारस्य चाकारादेशः। अतो लोपेन लुप्तस्य स्थानिवद्भावाल्लघूपधगुणाभावः॥

कारीर्यां मारुतं सप्तकपालमित्यस्य हविषो वाश्रेव विद्युदित्येषानुवाक्या। वर्षकामेष्टिरिति खंडे सूचितं। वाश्रेव विद्युन्मिमाति पर्वतश्चिन्महि वृद्धो बिभाय। आ॰ २. १३.। इति॥

वाश्रेव विद्युन्मिमाति वत्सं न माता सिषक्ति। यदेषां वृष्टिरसर्जि॥ ८॥

वाश्राऽइव। विऽद्युत्। मिमाति। वत्सं। न। माता। सिसक्ति। यत्। एषां। वृष्टिः। असर्जि॥ ८॥

वाश्रेव शब्दयुक्ता प्रसुतस्तनवती धेनुरिव विद्युन्मेघस्था दृश्यमाना सती मिमाति। शब्दं करोति। विद्युद्वेलायां हि मेघगर्जनं प्रसिद्धं। माता धेनुर्वत्सं न वत्समिव सिषक्ति। इयं विद्युन्मरुतः सेवते। सिषक्तिः सेवनार्थः। सिषक्तु सचत इति सेवमानस्य। नि॰ ३. २१.। इति यास्केनोक्तत्वात्। यद्यस्मात्कारणादेषां मरुतां संबंधिनी वृष्टिरसर्जि गर्जनसहिते विद्युत्काले वृष्टा भवति। तस्माद्विद्युतो मरुत्सेवनमुपपन्नं॥ वाश्रेव। वाशृ शब्दे। स्फायितंचीत्यादिना रक्। मिमाति। माङ् माने शब्दे च। व्यत्ययेन परस्मैपदं। जुहोत्यादित्वात् श्लुः। भृञामित्। पा॰ ७. ४. ७६.। इत्यभ्यासस्येत्वं। सिषक्ति। षच समवाये। लटि बहुलं छंदसीति शपः श्लुः। बहुलं छंदसीत्यभ्यासस्येत्वं। असर्जि। सृज विसर्गे। कर्मणि लुङ्। चिण् भावकर्मणोः। पा॰ ३. १. ६६.। इति चिण्। चिणो लुक्। पा॰ ६. ४. १०४.। इति तशब्दस्य लुक्। गुणः। अडागम उदात्तः। यद्वृत्तयोगान्निघातः॥

दिवा चित्तमः कृण्वन्ति पर्जन्येनोदवाहेन। यत्पृथिवीं व्युन्दन्ति॥ ९॥

दिवा। चित्। तमः। कृण्वन्ति। पर्जन्येन। उदऽवाहेन। यत्। पृथिवीं। विऽउन्दन्ति॥ ९॥

ते मरुत उदवाहेनोदकधारिणा पर्जन्येन मेघेन सूर्यमाच्छाद्य दिवा चिदहन्यपि तमः कृण्वंति। अंधकारं कुर्वंति। यद्यदा पृथिवीं भूमिं व्युंदंति विशेषेण क्लेदयंति। तदानीमतिवृष्टिकाले तमः कुर्वंतीति पूर्वेणान्वयः॥ उदवाहेन। उदकानि वहतीत्युदवाहः। कर्मण्यण्। मेघविशेषस्येयं संज्ञा। उदकस्योदः संज्ञायां। पा॰ ६. ३. ५७.। इत्युदकशब्दस्योदभावः। कृदुत्तरपदप्रकृतिस्वरत्वं। व्युंदंति। उन्दी क्लेदने। रुधादित्वात् श्नम्। श्नान्नलोपः। पा॰ ६. ४. २३.। इति नलोपः। यद्वृत्तयोगान्निघातः॥

अध स्वनान्मरुतां विश्वमा सद्म पार्थिवं। अरेजन्त प्र मानुषाः॥ १०॥

अध। स्वनात्। मरुतां। विश्वं। आ। सद्म। पार्थिवं। अरेजन्त। प्र। मानुषाः॥ १०॥

मरुतां संबंधिनः स्वनाद्ध ध्वनेर्गर्जनरूपादनंतरं पार्थिवं पृथिवीसंबंधि विश्वं सद्म सर्वं गृहमा समंतादरेजतेति शेषः। तथा मानुषा गृहवर्तिनो मनुष्या अपि प्ररेजंत। प्रकर्षेण कंपितवंतः॥ अध। छांदसं धत्वं। सद्म। षद्लृ विशरणगत्यवसादनेषु। अन्येभ्योऽपि दृश्यंत इति मनिन्। पार्थिवं। पृथिव्याः संबंधि। पृथिव्या ञाञौ। पा॰ ४.१.८५.२.। इति प्राग्दीव्यतीयोऽञ्प्रत्ययः। ञित्वादाद्युदात्तत्वं। अरेजंत। रेजृ कंपने॥ ॥१६॥

मरुतो वीळुपाणिभिश्चित्रा रोधस्वतीरनु। यातेमखिद्रयामभिः॥११॥

मरुतः। वीळुपाणिऽभिः। चित्राः। रोधस्वतीः। अनु। यात। ईं। अखिद्रयामऽभिः॥११॥

हे मरुतो यूयं वीळुपाणिभिर्दृढहस्तैः सहिताः संतो रोधस्वतीरनु कूलयुक्ता नदीरनुलक्ष्याखिद्रयामभिरच्छिन्नगमनैर्यातं। गच्छतैव॥ मरुतः। आमंत्रितायुदात्तत्वं। वीळुपाणिभिः। वीड्विति बलनाम। वीळु च्यौत्नमिति तन्नामसु पाठात्। तेन च तद्वाल्लँक्ष्यते। वीळवश्च ते पाणयश्च। समासस्यांतोदात्तत्वं। रोधस्वतीः। रुधिर् आवरणे। रुणद्धि स्रोत इति रोधः कूलं। रोधः कूलं निरुणद्धि स्रोतः। नि॰ ६.१.। इत्युक्तत्वात्। असुनो नित्त्वादाद्युदात्तत्वं। तद्युक्ता रोधस्वत्यः। मादुपधाया इति मतुपो वत्वं। उगितश्चेति ङीप्। मतुब्ङीपोः पित्त्वादनुदात्तत्वेऽसुनः स्वर एव शिष्यते। यात। या प्रापणे। अदादित्वाच्छपो लुक्। ईं। चादयोऽनुदात्ता इत्यनुदात्तत्वं। गुण एकादेश उदात्तेनोदात्त इत्युदात्तत्वं। अखिद्रयामभिः। खिद दैन्ये। स्फायितंचीत्यादिना रक्। खिद्रं यांतीति खिद्रयामानः। न खिद्रयामानोऽखिद्रयामानः। तैः। अव्ययपूर्वपदप्रकृतिस्वरत्वं॥

स्थिरा वः संतु नेमयो रथा अश्वास एषां। सुसंस्कृता अभीशवः॥१२॥

स्थिराः। वः। संतु। नेमयः। रथाः। अश्वासः। एषां। सुऽसंस्कृताः। अभीशवः॥१२॥

हे मरुत एषां वो युष्माकं नेमयो रथचक्रवलयाः स्थिराः संतु। तथा रथा अश्वासोऽश्वाश्च स्थिराः संतु। अभीशवोऽंगुलयः। अभीशवो दीधितय इति तन्नामसु पाठात्। सुसंस्कृता अश्वबंधनरज्जुपरिग्रहणे स्वलंकृताः सावधानाः संतु॥ सुसंस्कृताः। संपूर्वात्करोतेः कर्मणि क्तः। संपर्युपेभ्यः। पा॰ ६.१.१३७.। इति सुट्। पुनः सुशब्देन प्रादिसमासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं। अभीशवः। अभिपूर्वादश्नोतेः कृवापाजीत्यादिनोण्। वर्णव्यत्ययेनाकारस्येकारः। उक्तं च। वर्णागमो वर्णविपर्ययश्च। का॰ ६.३.१०९.। इति। अभीशवोऽभ्यश्नुवते कर्माणीति निरुक्तं। नि॰ ३.९.॥

अच्छा वदा तना गिरा जरायै ब्रह्मणस्पतिं। अग्निं मित्रं न दर्शतं॥१३॥

अच्छ। वद। तना। गिरा। जरायै। ब्रह्मणः। पतिं। अग्निं। मित्रं। न। दर्शतं॥१३॥

हे ऋत्विक्समूह तना तनया देवतास्वरूपं प्रकाशयंत्या गिरा वाचा ब्रह्मणस्पतिं मंत्रस्य हविर्लक्षणस्यान्नस्य वा पालकं मरुद्गणमग्निं दर्शतं दर्शनीयं मित्रं न मित्रमपि जरायै स्तोतुमच्छाभिमुख्येन वद। ब्रूहि॥ अच्छ। निपातस्य चेति संहितायां दीर्घत्वं। वद। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। तना। तनु विस्तारे। तनोति देवतामाहात्म्यं विस्तारयतीति तना। पचाद्यच्। वृषादित्वादाद्युदात्तत्वं। तृतीयाया डादेशः। गिरा। सावेकाच इति विभक्तेरुदात्तत्वं। ब्रह्मणः। षष्ठ्याः पतिपुत्रेति संहितायां सत्वं॥

मिमीहि श्लोकमास्ये पर्जन्य इव ततनः। गाय गायत्रमुक्थ्यं॥१४॥

मिमीहि। श्लोकं। आस्ये। पर्जन्यःऽइव। ततनः। गाय। गायत्रं। उक्थ्यं॥१४॥

हे ऋत्विक्समूह आस्ये स्वकीयमुखे श्लोकं स्तोत्रं मिमीहि। निर्मितं कुरु। तं च श्लोकं ततनः। विस्तारय।

तत्र दृष्टांतः। पर्जन्य इव। यथा मेघो वृष्टिं विस्तारयति तद्वत्। उक्थ्यं शस्त्रयोग्यं गायत्रं गायत्रीच्छंदस्कं सूक्तं गाय। पठ ॥ मिमीहि। माङ् माने। जौहोत्यादिकः। व्यत्ययेन परस्मैपदं। भृञामिदित्यभ्यासस्येत्वं। आस्ये। असु क्षेपणे। अस्यते क्षिप्यतेऽस्मिन्नित्यास्यं। ऋहलोर्ण्यत्। बहुलं। पा० ३. ३. ११३.। इत्यधिकारे ण्यत्। तित्स्वरितमिति स्वरितत्वं। ततनः। तनु विस्तारे। लेटि सिपि बहुलं छंदसीति विकरणस्य श्लुः। लेटोऽडाटावित्यडागमः। इतश्च लोप इतीकारलोपः। गायत्रं। गायत्र्याः संबंधि तस्येदमित्यण्। यद्वा। गायतस्त्रायत इति गायत्रं। आतोऽनुपसर्गे कः ॥

वंदस्व मारुतं गणं त्वेषं पनस्युमर्किणं। अस्मे वृद्धा असन्निह ॥ १५ ॥

वंदस्व। मारुतं। गणं। त्वेषं। पनस्युं। अर्किणं। अस्मे इति। वृद्धाः। असन्। इह ॥ १५ ॥

हे ऋत्विक्संघ मारुतं मरुत्संबंधिनं गणं समूहं वंदस्व। नमस्कुरु स्तुहि वा। कीदृशं गणं। त्वेषं दीप्तं पनस्युं स्तुतियोग्यं अर्किणमर्चनोपेतं। अस्मे अस्माकमिहास्मिन्कर्मणि वृद्धा असन्। मरुतः प्रवृद्धा भवंतु ॥ वंदस्व। वदि अभिवादनस्तुत्योः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। पनस्युं। पन चेति स्तुत्यर्थो धातुः। असुन्। पनः स्तोत्रमात्मन इच्छतीति पनस्युः। सुप आत्मनः क्यच्। क्याच्छंदसीत्युप्रत्ययः। अर्किणं। ऋच स्तुतौ। पुंसि संज्ञायामिति घः। अर्कोऽस्यास्तीत्यर्की। अत इनिठनौ। असन्। बहुलं छंदसीति शपो लुगभावः। इतश्च लोप इतीकारलोपः। तिङ्ङतिङ इति निघातः॥ ॥ १७ ॥

प्र यदित्थेति दशर्चं चतुर्थं सूक्तं। घोरपुत्रस्य कण्वस्यार्षं। मरुद्देवताकं। युजः सतोबृहत्यः। अयुजो बृहत्यः। प्र यद्दश प्रागाथं त्वित्यनुक्रमणिका ॥ गतो विनियोगः ॥

प्र यदित्था परावतः शोचिर्न मानमस्यथ।

कस्य क्रत्वा मरुतः कस्य वर्पसा कं याथ कं ह धूतयः ॥ १ ॥

प्र। यत्। इत्था। पराऽवतः। शोचिः। न। मानं। अस्यथ।

कस्य। क्रत्वा। मरुतः। कस्य। वर्पसा। कं। याथ। कं। ह। धूतयः ॥ १ ॥

हे धूतयः स्थावरादीनां कंपनकारिणो मरुतो यद्यदा मानं मननीयं युष्मद्बलं परावतो दूरात्। आरे परावत इति दूरनामसु पाठात्। इत्थास्मादंतरिक्षात्प्रास्यथ भूमौ प्रक्षिपथ। तत्र दृष्टांतः। शोचिर्न तेज इव। यथा सूर्यस्य तेजोऽंतरिक्षाद्भूमौ प्रक्षिप्यते तद्वत्। तदानीं यूयं कस्य यजमानस्य क्रत्वा क्रतुना संगच्छध्व इति शेषः। तथा कस्य यजमानस्य वर्पसा स्तोत्रेण संगच्छध्वे। कं यजमानमुद्दिश्य याथ। देवयजनदेशं गच्छथ। कं ह कं खलु यजमानमनुगृह्णीथेति शेषः ॥ इत्था। था हेतौ च च्छंदसि। पा० ५. ३. २६.। इतीदंशब्दात्प्रकारवचने थाप्रत्ययः। यदि तत्रेदंशब्दस्य नानुवृत्तिस्तर्हि थमुप्रत्ययांतादिदंशब्दादुत्तरस्या विभक्तेर्व्यत्ययेन सुपां सुलुगिति डादेशः। प्रथमपक्षे प्रत्ययस्वरः। द्वितीयपक्षे तूदात्तनिवृत्तिस्वरः। अस्यथ। असु क्षेपणे। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वं। [illegible] क्रत्वा। जसादिषु च्छंदसि वावचनं। पा० ७. ३. १०९. १.। इति नाभावस्य विकल्पितत्वादभावः। वर्पसा। वृङ् संभक्तौ। वृङ्शीङ्भ्यां रूपस्वांगयोः पुक्च। उ० ४. २००.। इत्यसुन् तत्संनियोगेन पुगागमश्च। नित्त्वादाद्युदात्तत्वं। अत्र रूपाभिधायिना वर्पसशब्देन देवतास्वरूपप्रकाशकं स्तोत्रं लक्ष्यते क्रतुना साहचर्यात् ॥

स्थिरा वः संत्वायुधा पराणुदे वीळू उत प्रतिष्कभे।

युष्माकमस्तु तविषी पनीयसी मा मर्त्यस्य मायिनः ॥ २ ॥

स्थिरा। वः। संतु। आयुधा। पराऽनुदे। वीळु। उत। प्रतिऽस्कभे।

युष्माकं। अस्तु। तविषी। पनीयसी। मा। मर्त्यस्य। मायिनः ॥ २ ॥

हे मरुतो व आयुधा युष्माकमायुधानि पराणुदे शत्रूणामपनोदनाय स्थिरा संतु । स्थिराणि भवंतु । उतापि च प्रतिष्कभे शत्रूणां प्रतिबंधाय वीळु संतु । दृढानि संतु । युष्माकं तविषी बलं पनीयसी अतिशयेन स्तोतव्यं भवतु । मायिनोऽस्मासु छद्मचारिणो मर्त्यस्य मनुष्यस्य शत्रोर्मा । बलं मा भवतु ॥ स्थिरा । आयुधा । उभयत्र शेश्छंदसि बहुलमिति शेर्लोपः । पराणुदे । णुद प्रेरणे । संपदादिलक्षणः क्विप् । उपसर्गादसमासेऽपि । पा॰ ८. ४. १४. । इति णत्वं । कृदुत्तरपदप्रकृतिस्वरत्वं । वीळु । सुपां सुलुगिति विभक्तेर्लुक् । ईषाअक्षादित्वात्प्रकृतिभावः । पा॰ ६. १. १२७. २. । प्रतिष्कभे । स्कम्भुः सौत्रो धातुः । संपदादिलक्षणो भावे क्विप् । अनिदितामिति नलोपः । पनीयसी । पनतिः स्तुत्यर्थः । अस्मादौणादिकः कर्मण्यसुन् । तत ईयसुनि टेरिति टिलोपः । उगितश्चेति ङीप् । ईयसुनो नित्वादाद्युदात्तत्वं । मायिनः । मायाशब्दस्य व्रीह्यादिषु पाठात् व्रीह्यादिभ्यश्चेति मत्वर्थीय इनिः ॥

परा॑ ह॒ यत्स्थि॒रं ह॒थ नरो॑ व॒र्तय॑था गु॒रु ।
वि या॑थन व॒निनः॑ पृथि॒व्या व्याशाः॒ पर्व॑तानां ॥३॥
परा॑ । ह॒ । यत् । स्थि॒रं । ह॒थ । नरः॑ । व॒र्तय॑थ । गु॒रु ।
वि । या॒थ॒न । व॒निनः॑ । पृ॒थि॒व्याः । वि । आशाः॑ । पर्व॑तानां ॥३॥

हे नरो नेतारो मरुतो यद्यदा स्थिरं वस्तु परा हथ वृक्षादिकं पराहतं भग्नं कुरुथ । गुरु पाषाणादिकं गुरुत्वोपेतं वर्तयथ प्रेरयथ । तदानीं पृथिव्याः संबंधिनो वनिनो वनवतो वृक्षान्वि याथन । वियुज्य मध्ये गच्छथ । अरण्यगतानां निबिडानां वृक्षाणां मध्ये यस्य कस्यापि वृक्षस्य भग्नत्वादितरवृक्षाणां परस्परवियोगेन प्रौढो मार्गो भवति । तथा पर्वतानामाशाः पर्वतपार्श्वदिशो वि याथन । वियुज्य गच्छथ ॥ हथ । हन हिंसागत्योः । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । यद्वृत्तयोगादनिघातः । नरः । पादादित्वादामंत्रितनिघाताभावः । वर्तयथ । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे णिचः स्वर एव शिष्यते । यच्छब्दानुषंगान्निघाताभावः । याथन । तप्तनप्तनथनाश्चेति थनादेशः ॥

न॒हि वः॒ शत्रु॑र्विवि॒दे अधि॒ द्यवि॒ न भूम्यां॑ रिशादसः ।
यु॒ष्माक॑मस्तु॒ तवि॑षी॒ तना॑ यु॒जा रुद्रा॑सो॒ नू चि॑दा॒धृषे॑ ॥४॥
न॒हि । वः॒ । शत्रुः॑ । वि॒वि॒दे । अधि॑ । द्यवि॑ । न । भूम्या॑ं । रि॒शा॒द॒सः॒ ।
यु॒ष्माकं॑ । अ॒स्तु॒ । तवि॑षी । तना॑ । यु॒जा । रुद्रा॑सः । नु । चि॒त् । आ॒ऽधृषे॑ ॥४॥

हे रिशादसः शत्रुहिंसका मरुतोऽधि द्यवि द्युलोकस्योपरि वो युष्माकं शत्रुर्नहि विविदे । न च बभूव । तथा भूम्यामपि शत्रुर्न बभूव । हे रुद्रासो रुद्रपुत्रा मरुतो युष्माकमेकोनपंचाशत्संख्यानां भवतां युजा योगेन परस्परैकमत्येनाधृषे वैरिणां सर्वतो धर्षणाय तविषी बलं नू चित् क्षिप्रमेव तनास्तु । विस्तृता भवतु ॥ विविदे । विद सत्तायां । लिटि प्रत्ययस्वरः । द्यवि नहि विविदे भूम्यां च न विविद इति चशब्दार्थप्रतीतेश्चादिलोपे विभाषेति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः । प्राथम्यं चानुषक्तक्रियापेक्षया । रिशादसः । रिश हिंसायां । रिशंति हिंसंतीति रिशाः । इगुपधलक्षणः कः । तानदंतीति रिशादसः । असुन् । आमंत्रितनिघातः । युजा । युजिर् योगे । ऋत्विगित्यादिना क्विन् । सावेकाच इति विभक्तिरुदात्तत्वं । रुद्रासः । रुद्रशब्देन तत्संबंधिनो मरुतो लक्ष्यंते । आज्जसेरसुक् । नू चित् । ऋचि तुनुघेत्यादिना दीर्घः । आधृषे । ञिधृषा प्रागल्भ्ये । संपदादिलक्षणो भावे क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

प्र वे॑पयंति॒ पर्व॑ता॒न्वि वि॑ंचंति॒ वन॒स्पती॑न् ।
प्रो आ॑रत मरुतो दु॒र्मदा॑ इव॒ देवा॑सः॒ सर्व॑या वि॒शा ॥५॥

प्र । वेपयंति । पर्वतान् । वि । विंचंति । वनस्पतीन् ।
प्रो इति । आरत । मरुतः । दुर्मदाःऽइव । देवासः । सर्वया । विशा ॥५॥

पर्वतान् मेरुहिमवदादीन् प्र वेपयंति । मरुतः प्रकर्षेण कंपयंति । वनस्पतीन् वटाश्वत्थादीन्वि विंचंति । परस्परवियुक्तान्कुर्वंति । हे मरुतो देवासो देवाः सर्वया विशा प्रजया सहिता यूयं प्रो आरत । प्रकर्षेणैव सर्वतो गच्छत । तत्र दृष्टांतः । दुर्मदा इव । यथा मदोन्मत्ताः स्वेच्छया सर्वतः क्रीडंति तद्वत् ॥ वेपयंति । टुवेपृ कंपने । वेपमानान्प्रयुंजते । हेतुमति णिच् । विंचंति । विचिर् पृथग्भावे । रुधादित्वात् श्नम् । श्नसोरल्लोप इत्यकारलोपः । वनस्पतीन् । वनानां पतयो वनस्पतयः । पारस्करादित्वात्सुट् । वनपतिशब्दावाद्युदात्तौ । उभे वनस्पत्यादिषु युगपदिति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं । आरत । ऋ गतौ । लङि मध्यमबहुवचने बहुलं छंदसीति शपो लुगभावः । यद्वा लुङ् । सर्तिशास्त्यर्तिभ्यश्च । पा० ३. १. ५६. । इत्यङ् । आडजादीनामित्याडागमः । आटश्च । पा० ६. १. ९०. । इति वृद्धिः । देवासः । आमंत्रितायुदात्तत्वं । सर्वया । सर्वस्य सुपि । पा० ६. १. १९१. । इत्याद्युदात्तत्वं । विशा । सावेकाच इति विभक्तिरुदात्तत्वं ॥ ॥१८॥

उपो रथेषु पृषतीरयुग्ध्वं प्रष्टिर्वहति रोहितः ।
आ वो यामाय पृथिवी चिदश्रोदबीभयंत मानुषाः ॥६॥
उपो इति । रथेषु । पृषतीः । अयुग्ध्वं । प्रष्टिः । वहति । रोहितः ।
आ । वः । यामाय । पृथिवी । चित् । अश्रोत् । अबीभयंत । मानुषाः ॥६॥

हे मरुतो रथेषु भवदीयेषु पृषतीर्विंदुयुक्ता मृगीरुपो सामीप्येनैवायुग्ध्वं । योजितवंतः । प्रष्टिरेतत्संज्ञको वाहनत्रयमध्यवर्ती युगविशेषो रोहितो मृगावांतरजातिर्लोहितवर्णो वहति । रथं नयति । वो युष्माकं यामाय गमनाय पृथिवी चित् अंतरिक्षमप्याश्रोत् । आभिमुख्येनाशृणोत् । अनुजानातीत्यर्थः । पृथिवीत्यंतरिक्षनाम । पृथिवी भूः स्वयंभ्विति तन्नामसु पाठात् । मानुषा भूलोकवर्तिनः पुरुषा अबीभयंत । स्वयं भीताः संतोऽन्येषामपि भीतिमुत्पादितवंतः ॥ उपो इति निपातद्वयसमुदायात्मकमन्यन्निपातांतरं । ओत् । पा० १. १. १५. । इति प्रगृह्यत्वं । अयुग्ध्वं । लुङि झलो झलि । पा० ८. २. २६. । इति सकारस्य लोपः । चोः कुरिति कुत्वं । रोहितः । रुहे रश्च लो वा । उ० ३. ९४. । इतीतन्प्रत्ययांतः । निन्वादाद्युदात्तः । यामाय । यमेर्भावे घञ् । कर्षात्वत इत्यंतोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वं । अश्रोत् । श्रु श्रवणे । बहुलं छंदसीति विकरणस्य लुक् । अबीभयंत । ञिभी भये । अस्माण्ण्यंताल्लुङि भीस्म्योर्हेतुभये । पा० १. ३. ६८. । इत्यात्मनेपदं । बिभेतेर्हेतुभये । पा० ६. १. ५६. । इत्यात्वस्य विकल्पितत्वात्पक्षे भियो हेतुभये षुक् । पा० ७. ३. ४०. । इति षुक् प्राप्नोति । तन्न क्रियते । आगमानुशासनस्यानित्यत्वात् । णौ चङ्युपधाह्रस्वत्वादि । पा० ७. ४. १. ॥

आ वो मक्षू तनाय कं रुद्रा अवो वृणीमहे ।
गंता नूनं नोऽवसा यथा पुरेत्था कण्वाय बिभ्युषे ॥७॥
आ । वः । मक्षु । तनाय । कं । रुद्राः । अवः । वृणीमहे ।
गंत । नूनं । नः । अवसा । यथा । पुरा । इत्था । कण्वाय । बिभ्युषे ॥७॥

हे रुद्रा रुद्रपुत्रा मरुतः तनाय कं अस्मदीयपुत्रार्थं मक्षु शीघ्रं वो युष्मदीयमवो रक्षणमा वृणीमहे । सर्वतः प्रार्थयामहे । मक्ष्विति क्षिप्रनाम । नु मक्ष्विति तन्नामसु पठितत्वात् । पुरा पूर्वस्मिन्काले कर्मांतरेषु नोऽवसास्मदीयरक्षणेन निमित्तेन यूयं यथा प्राप्तवंतः । इत्थानेन प्रकारेण बिभ्युषे भीतियुक्ताय कण्वाय मेधाविने यजमानाय तदनुग्रहार्थं नूनं क्षिप्रं गंत । प्राप्नुत ॥ मक्षु । ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणामिति दीर्घः । तनाय । तनोतीति तनः । पचाद्यच् । वृषादित्वादाद्युदात्तत्वं । यद्वा । तनयशब्देऽय् इत्यस्य लोप-

श्छांदसः। कमित्येतत्पादांते प्रयुज्यमानं पादपूरणं। शिशिरं जीवनाय कमितिवत्। उक्तं च। अथापि पादपूरणाः कमीमिद्विति। रुद्राः। रोदयंतीति रुद्राः। रोदेर्णिलुक्च। उ० २.२२.। इति रक्प्रत्ययः। आमंत्रिताद्युदात्तत्वं। पादादित्वान्निघाताभावः। गंत। लोटि बहुलं छंदसीति शपो लुक्। तप्तनबित्यादिना तबादेशः। अतः पित्त्वादनुनासिकलोपाभावः। बिभ्युषे। बिभेतेर्लिटः क्वसुः। वस्वेकाजाद्घसामिति नियमादिडभावः। चतुर्थ्येकवचने वसोः संप्रसारणमिति संप्रसारणं। परपूर्वत्वं। शासिवसिघसीनां चेति षत्वं॥

युष्मेषितो मरुतो मर्त्येषित आ यो नो अभ्व ईषते।
वि तं युयोत शवसा व्योजसा वि युष्माकाभिरूतिभिः॥८॥
युष्माऽइषितः। मरुतः। मर्त्यऽइषितः। आ। यः। नः। अभ्वः। ईषते।
वि। तं। युयोत। शवसा। वि। ओजसा। वि। युष्माकाभिः। ऊतिऽभिः॥८॥

हे मरुतो यो यः कश्चिदभ्वः शत्रुर्युष्मेषितो युष्माभिः प्रेषितो मर्त्येषितो मारकैरन्यैर्वा प्रेषितः सन् नोऽस्मान्प्रति आ ईषते आभिमुख्येन प्राप्नोति तं शत्रुं शवसान्नेन वि युयोत। विभक्तं कुरुत। तथौजसा बलेन वि युयोत। युष्माकाभिरूतिभिर्युष्मत्संबंधिभी रक्षणैश्च वि युयोत॥ युष्मेषितः। युष्माभिरिषितः। सुब्लुकि प्रत्ययलक्षणेन युष्मदस्मदोरनादेश इत्यात्वं। न च न लुमतांगस्येति प्रतिषेधः। इकोऽचि विभक्तौ। पा० ७.१.७३.। इत्यत्राजग्रहणेन तस्य पाक्षिकत्वोक्तेः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। मर्त्येषितः। पूर्ववत्। अभ्वः। आभवतीत्यभ्वः शत्रुः। पृषोदरादित्वादभिमतरूपस्वरसिद्धिः। ईषते। ईष गतिहिंसादर्शनेषु। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। युयोत। यु मिश्रणामिश्रणयोः। लोण्मध्यमबहुवचने बहुलं छंदसीति शपः श्लुः। तप्तनप्तनथनाश्चेति तबादेशः। पित्त्वाद्गुणः। युष्माकाभिः। युष्मत्संबंधिनीभिः। तस्मिन्नणि च युष्माकास्माकौ। पा० ४.३.२.। इति युष्मच्छब्दस्य युष्माकादेशः। ङीब्वृद्धी छांदसत्वान्न क्रियेते। ऊतिभिः। अवतेः क्तिनि ज्वरत्वरेत्यादिना ऊठ्। ऊतियूतीत्यादिना क्तिन उदात्तत्वं॥

असामि हि प्रयज्यवः कण्वं दद प्रचेतसः।
असामिभिर्मरुत आ नं ऊतिभिर्गंता वृष्टिं न विद्युतः॥९॥
असामि। हि। प्रऽयज्यवः। कण्वं। दद। प्रऽचेतसः।
असामिऽभिः। मरुतः। आ। नः। ऊतिऽभिः। गंत। वृष्टिं। न। विऽद्युतः॥९॥

असामि हि संपूर्णमेव यथा भवति तथा प्रयज्यवः प्रकर्षेण यष्टव्याः प्रचेतसः प्रकृष्टज्ञानयुक्ता हे मरुतः कण्वं मेधाविनं यजमानमेतन्नामकमृषिं वा दद। धारयत। हि यस्माद्यूयं कण्वनामकमृषिं धारितवंतस्तस्मात्कारणादसामिभिरूतिभिः संपूर्णै रक्षणैर्नोऽस्मान् प्रत्या गंत। आगच्छत। तत्र दृष्टांतः। वृष्टिं न विद्युतः। यथा विद्युतो वृष्टिं गच्छंति तद्वत्॥ असामि। साम्यर्धं। न सामि असामि। अव्ययपूर्वपदप्रकृतिस्वरत्वं। प्रयज्यवः। प्रकर्षेण यष्टव्याः। यजिमनिशुंधिदसिजनिभ्यो युः। उ० ३.२०.। इति कर्मणि युप्रत्ययः। आमंत्रितनिघातः। दद। डुदाञ् दाने। लोण्मध्यमबहुवचनस्य तिङां तिङो भवंतीति लङात्मनेपदप्रथमपुरुषबहुवचनादेशः। श्लौ द्विर्भावे सति श्नाभ्यस्तयोरात इत्याकारलोपः। लोपस्त आत्मनेपदेषु। पा० ७.१.४१.। इति तलोपः। अतो गुण इति परपूर्वत्वं। छंदस्युभयथेत्यार्धधातुकत्वादभ्यस्तानामादिरित्याद्युदात्तत्वं न भवति किंतु प्रत्ययस्वर एव। हि चेति निघातप्रतिषेधः। प्रचेतसः। प्रकृष्टं चेतो येषां। आमंत्रितनिघातः। गंत। गमेर्लोण्मध्यमबहुवचनस्य तस्य तबादेशः। बहुलं छंदसीति शपो लुक्। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। पादादित्वान्निघाताभावः। द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं। विद्युतः। विद्योतत इति विद्युत्। भ्राजभासेत्यादिना। पा० ३.२.१७७.। क्विप्॥

असाम्योजो बिभृथा सुदानवोऽसामि धूतयः शवः।
ऋषिद्विषे मरुतः परिमन्यव इषुं न सृजत द्विषं ॥१०॥
असामि। ओजः। बिभृथ। सुऽदानवः। असामि। धूतयः। शवः।
ऋषिऽद्विषे। मरुतः। परिऽमन्यवे। इषुं। न। सृजत। द्विषं ॥१०॥

हे सुदानवः शोभनदानोपेता मरुतः असामि संपूर्णमोजो बलं बिभृथ। धारयथ। हे धूतयः कंपनकारिणो मरुतः असामि संपूर्णं शवो बलं। परिमन्यवे कोपपरिवृताय ऋषिद्विषे ऋषीणां द्वेषं कुर्वते शत्रवे तद्विनाशार्थं द्विषं द्वेषकारिणं हंतारं सृजत। तत्र दृष्टांतः। इषुं न। यथा शत्रोरुपरि बाणं मुंचंति तद्वत्। अत्र निरुक्तं। असामि सामिप्रतिषिद्धं सामि स्यतेः। असाम्योजो बिभृथा सुदानवः। असुसमाप्तं बलं बिभृथ कल्याणदानाः। नि० ६.२३.। इति ॥ बिभृथ। डुभृञ् धारणपोषणयोः। जुहोत्यादित्वात् श्लुः। भृञामिदित्यभ्यासस्येत्वं। ऋषिद्विषे। ऋषीन् द्वेष्टीति ऋषिद्विट्। सत्सूद्विषेत्यादिना क्विप्। परिमन्यवे। मन्युना परिवृतः परिमन्युः। प्रादिसमासे परेरभितोभाविमंडलं। पा० ६.२.१८२.। इत्युत्तरपदांतोदात्तत्वं। इषुं। इषु गतौ। इष्यति गच्छतीतीषुः। इषेः किच्च। उ० १.१४.। इत्युप्रत्ययः। धान्ये निदित्यनुवृत्तेर्नित्त्वादाद्युदात्तत्वं। सृजत। सृज विसर्गे। विकरणस्य ङित्त्वाद्गुणाभावः। द्विषं। क्विप्चेति क्विप्॥ ॥१९॥

उत्तिष्ठेत्यष्टर्चं पंचमं सूक्तं कण्वस्यार्षं बार्हतं। युजः सतोबृहत्यः। अयुजो बृहत्यः। ब्रह्मणस्पतिर्देवताकं। अनुक्रम्यते च। उत्तिष्ठाष्टौ ब्राह्मणस्पत्यमिति॥ सूक्तविनियोगो लैंगिकः॥ चतुर्विंशेऽहनि मरुत्वतीये प्रास्तताद्ब्राह्मणस्पत्यात्प्रगाथात्पूर्वमुत्तिष्ठ ब्रह्मणस्पत इत्ययं प्रगाथः। मरुत्वतीय इति खंडे सूचितं। प्रैतु ब्रह्मणस्पतिरुत्तिष्ठ ब्रह्मणस्पत इति ब्राह्मणस्पत्यावावपते पूर्वौ नित्यात्। आ० ७.३.। इति॥ आद्या तु प्रवर्ग्येऽप्यभिष्टवे विनियुक्ता। उत्तिष्ठ ब्रह्मणस्पत इत्येतामुक्त्वावतिष्ठते। आ० ४.७.। इति सूचितत्वात्॥

उत्तिष्ठ ब्रह्मणस्पते देवयंतस्त्वेमहे।
उप प्र यंतु मरुतः सुदानव इंद्र प्राशूर्भवा सचा ॥१॥
उत्। तिष्ठ। ब्रह्मणः। पते। देवऽयंतः। त्वा। ईमहे।
उप। प्र। यंतु। मरुतः। सुऽदानवः। इंद्र। प्राशूः। भव। सचा ॥१॥

हे ब्रह्मणस्पते एतन्नामक देव उत्तिष्ठ। अस्मदनुग्रहाय त्वदीयनिवासादुत्थानं कुरु। देवयंतो देवान् कामयमाना वयं त्वा त्वामीमहे। याचामहे। सुदानवः शोभनदानयुक्ता मरुत उप प्र यंतु। समीपे प्रकर्षेण गच्छंतु। हे इंद्र त्वं सचा ब्रह्मणस्पतिना सह प्राशूः सोमस्य प्राशको भव। यद्वा। वृत्रस्य हिंसको भव॥ उत्तिष्ठ। ऊर्ध्वकर्मत्वादात्मनेपदाभावः। पा० १.३.२४.। ब्रह्मणस्पते। सुबामंत्रित इति परांगवद्भावात् षष्ठ्यामंत्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वं। देवयंतः। देवानात्मन इच्छंतः। सुप आत्मनः क्यच्। न च्छंदस्यपुत्रस्येतीत्वस्येव दीर्घस्यापि निषेधः। अश्वाघस्यादिति पुनरात्वविधानसामर्थ्यात्। ईमह इत्यादयो गताः। प्राशूः। शॄ हिंसायां। प्रकर्षेण समंतात् शृणाति हिनस्तीति प्राशूः। बहुलं छंदसीत्युत्वं। र्वोरुपधाया दीर्घः। कृदुत्तरपदप्रकृतिस्वरत्वं। भव। द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं॥

त्वामिद्धि सहसस्पुत्र मर्त्य उपब्रूते धने हिते।
सुवीर्यं मरुत आ स्वश्व्यं दधीत यो व आचके ॥२॥
त्वां। इत्। हि। सहसः। पुत्र। मर्त्यः। उपऽब्रूते। धने। हिते।
सुऽवीर्यं। मरुतः। आ। सुऽअश्व्यं। दधीत। यः। वः। आऽचके ॥२॥

हे सहसस्पुत्र बलस्य बहुपालक ब्रह्मणस्पते। पुत्रः पुरु त्रायते निपरणाद्वेति निरुक्तं। नि० २. ११.। मर्त्यो मनुष्यो हिते शत्रुषु प्रक्षिप्ते धने निमित्तभूते सति त्वामित् त्वामेवोपब्रूते हि। समीपं प्राप्य स्तौति खलु। तद्धन-संपादनाय प्रार्थयत इत्यर्थः। हे मरुतो यो धनार्थी मर्त्यो वो युष्मान् ब्रह्मणस्पतिसहितानाचक्रे स्तौति स मर्त्यः स्वश्व्यं शोभनाश्वयुक्तं सुवीर्यं शोभनवीर्ययुक्तं च धनं दधीत। धारयेत्॥ सहसस्पुत्र। ब्रह्मणस्पत इतिवत् षष्ठ्याः पतिपुत्रेति विसर्जनीयस्य सत्वं। उपब्रूते। हि चेति निघातप्रतिषेधः। तिङि चोदात्तवतीति गतेरनुदात्तत्वं। हिते। निष्ठायां दधातेर्हिरिति हिरादेशः। सुवीर्यं। शोभनं वीर्यं यस्येति बहुव्रीहौ वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं। स्वश्व्यं। अश्वानां समूहोऽश्वीयं। केशाश्वाभ्यां यञ्छावन्यतरस्यां। पा० ४. २. ४८.। इति समूहार्थे छप्रत्ययः। छस्य ईयादेशः। शोभनमश्वीयं यस्य तत् स्वश्व्यं। ईकारलोपश्छांदसः। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। दधीत। सीयुटः सकारलोपे सत्यभ्यस्तानामादिरित्याद्युदात्तत्वं। पादादित्वान्निघाताभावः। आचक्रे। कै गै रै शब्दे। आदेच इत्यात्वं। लिटि द्विर्वचनेऽभ्यासस्य ह्रस्वचुत्वे। आतो लोप इटि चेत्याकारलोपः। प्रत्ययस्वरः। यद्वृत्तयोगादनिघातः॥

चतुर्विंशेऽहनि मरुत्वतीय उत्तिष्ठ ब्रह्मणस्पत इत्यस्मात्प्रगाथात्पूर्वं प्रैतु ब्रह्मणस्पतिरित्ययं प्रगाथो विनियुक्तः। सूत्रं तूत्तिष्ठ ब्रह्मणस्पत इत्यत्रैवोदाहृतं॥ महावीरमादाय शालां प्रतिगच्छत्सु प्रैतु ब्रह्मणस्पति-रित्येतां पठन् होतानुगच्छेत्। सूत्रं च। प्रैतु ब्रह्मणस्पतिरित्यनुव्रजेत्। आ० ४. ७.। इति॥ एषैवाग्नीषोमीयप्र-णयनेऽपि विनियुक्ता। सूचितं च। प्रैतु ब्रह्मणस्पतिर्होता देवो अमर्त्यः। आ० ४. १०.। इति॥

प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता।
अच्छा वीरं नर्यं पंक्तिराधसं देवा यज्ञं नयंतु नः॥३॥
प्र। एतु। ब्रह्मणः। पतिः। प्र। देवी। एतु। सूनृता।
अच्छ। वीरं। नर्यं। पंक्तिऽराधसं। देवाः। यज्ञं। नयंतु। नः॥३॥

ब्रह्मणस्पतिर्देवः प्रैतु। अस्मान्प्राप्नोतु। सूनृता देवी प्रियसत्यरूपा वाग्देवता प्रैतु। अस्मान्प्राप्नोतु। देवा ब्रह्मणस्पत्यादयो देवता वीरं शत्रुं निःशेषेण दूरे प्रेरयंतु। तं नर्यं मनुष्येभ्यो हितं पंक्तिराधसं ब्राह्मणोक्तहवि-ष्पंक्त्यादिभिः समृद्धं यज्ञं प्रति नोऽस्मान् अच्छाभिमुख्येन नयंतु॥ प्रैतु। एङि पररूपं। पा० ६. १. ९४.। इति पररूपे प्राप्त एत्येधत्यूठ्सु। पा० ६. १. ८९.। इति वृद्धिः। देव्येत्वित्यत्रोदात्तस्वरितयोर्यणः स्वरितोऽनुदात्त-स्येति स्वरितत्वं। नर्यं। नरेभ्यो हितं। प्राक्क्रीतीय उगवादिलक्षणो यत्प्रत्ययो द्रष्टव्यः। पा० ५. १. २.। पंक्तिराधसं। पंक्तिभी राध्नोति पंक्तिराधाः। गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं च। उ० ४. २२६.। इत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च। यज्ञं। यजयाचेत्यादिना यजतेर्नङ्॥

यो वाघते ददाति सूनरं वसु स धत्ते अक्षिति श्रवः।
तस्मा इळां सुवीरामा यजामहे सुप्रतूर्तिमनेहसं॥४॥
यः। वाघते। ददाति। सूनरं। वसु। सः। धत्ते। अक्षिति। श्रवः।
तस्मै। इळां। सुऽवीरां। आ। यजामहे। सुऽप्रतूर्तिं। अनेहसं॥४॥

यो यजमानो वाघते ऋत्विजे सूनरं सुष्ठु नेतव्यं वसु धनं ददाति स यजमानो ब्रह्मणस्पतेः [illegible]क्षिति क्षयरहितं श्रवोऽन्नं धत्ते। धारयति। तस्मै तादृशयजमानायेळामेतन्नामधेयां मनोः पुत्रीं। इळा वै मानवी यज्ञानुकाशिन्यासीदिति श्रुत्यंतरात्। आ यजामहे। वयमृत्विजः सर्वतो यजामः। [illegible]ळां। सुवीरां शोभनैर्वीरैर्भटैर्युक्तां सुप्रतूर्तिं सुष्ठु प्रकर्षेण हिंसाकारिणीं अनेहसं केनाप्यहिंस्यां॥ ददाति। अनुदात्ते चेत्यभ्य-स्तस्याद्युदात्तत्वं। यद्वृत्तयोगादनिघातः। सूनरं। सुखेन नीयत इति सूनरं। ईषद्दुःसुष्विति खल्। निपातस्य चेत्युपसर्गस्य दीर्घत्वं। अक्षिति। क्षयो नास्त्यस्येत्यक्षिति। बहुव्रीहौ [illegible]। नञ्सुभ्यामिति तु

सर्वे विधयश्छंदसि विकल्प्यंत इति वचनान्न प्रवर्तते। श्रवः। श्रूयत इति श्रवः। श्रु श्रवणे। असुनो नित्त्वादाद्युदात्तत्वं। सुवीरां। शोभना वीरा यस्याः सा सुवीरा। तां। वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं। सुप्रतूर्तिं। तुर्वी हिंसार्थः। प्रपूर्वादस्माद्भावे क्तिन्। शोभना प्रतूर्तिः शत्रूणां हिंसनं यस्याः सा। तां। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। क्रत्वादिर्वा द्रष्टव्यः। अनेहसं। न हन्यत इत्यनेहाः। नञि हन एह च। उ० ४. २२३.। इत्यसुन्प्रत्ययो धातोरेहादेशश्च। नलोपो नञः। पा० ६. ३. ७३.। इति नकारस्य लोपः। तस्मान्नुडचि। पा० ६. ३. ७४.। इति नुट्॥

अग्निष्टोमे मरुत्वतीयशस्त्र इंद्रनिवहप्रगाथानंतरं प्र नूनमिति प्रगाथः। मरुत्वतीयेनेति खंडे सूत्रितं। प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यः। आ० ५. १४.। इति॥

प्र नूनं ब्रह्मणस्पतिर्मंत्रं वदत्युक्थ्यं।
यस्मिन्निंद्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे॥५॥
प्र। नूनं। ब्रह्मणः। पतिः। मंत्रं। वदति। उक्थ्यं।
यस्मिन्। इंद्रः। वरुणः। मित्रः। अर्यमा। देवाः। ओकांसि। चक्रिरे॥५॥

ब्रह्मणस्पतिर्देव उक्थ्यं शस्त्रयोग्यं मंत्रं नूनमवश्यं प्र वदति। होतृमुखे स्थितः सन् प्रब्रूते। यस्मिन्मंत्र इंद्रादयश्च सर्वे देवा ओकांसि स्थानानि चक्रिरे। तादृशं सर्वदेवप्रतिपादकं मंत्रमिति पूर्वत्रान्वयः॥ मंत्रं। मत्रि गुप्तभाषणे। पचाद्यच्। वृषादिषु पाठादाद्युदात्तत्वं। उक्थ्यं। उक्थार्हं। छंदसि चेत्यर्हार्थे यप्रत्ययः। यद्वा। भवे छंदसीति यत्। सर्वे विधयश्छंदसि विकल्प्यंत इति वचनाद्यतोऽनाव इत्याद्युदात्तत्वाभावे व्यत्ययेन तित्स्वरितमिति स्वरितत्वं। ओकांसि। उच समवाये। समवयंत्यत्रेत्यधिकरण औणादिकोऽसुन्। बहुलग्रहणात् कुत्वं द्रष्टव्यमित्योक उचः के। पा० ७. ३. ६४.। इत्यत्र वृत्तावित्युक्तं। चक्रिरे। इरेचश्चित्त्वादंतोदात्तत्वं। यद्वृत्तयोगादनिघातः॥ ॥२०॥

तमिद्वोचेमा विदथेषु शंभुवं मंत्रं देवा अनेहसं।
इमां च वाचं प्रतिहर्यथा नरो विश्वेद्वामा वो अश्नवत्॥६॥
तं। इत्। वोचेम। विदथेषु। शंऽभुवं। मंत्रं। देवाः। अनेहसं।
इमां। च। वाचं। प्रतिऽहर्यथ। नरः। विश्वा। इत्। वामा। वः। अश्नवत्॥६॥

हे देवा ब्रह्मणस्पतिप्रभृतयस्तमित् तमेवेंद्रादिसर्वदेवताप्रतिपादकं मंत्रं विदथेषु यज्ञेषु वोचेम। वयमृत्विजो ब्रवाम। कीदृशं। शंभुवं सुखस्य भावयितारं अनेहसमहिंसनीयं दोषरहितं। हे नरो नेतारो देवा इमामस्माभिरुच्यमानां मंत्ररूपां वाचं प्रतिहर्यथ च। यूयं कामयध्वे चेत्। तर्हि विश्वेत् सर्वापि वामा वननीया वाक् वो युष्मानश्नवत्। व्याप्नुयात्॥ वोचेम। वच परिभाषणे। आशीर्लिङि लिङ्याशिष्यङित्यङ्। वच उमित्युमागमः। छंदस्युभयथेति सार्वधातुकत्वाल्लिङः सलोपोऽनंत्यस्येति यासुटः सकारस्य लोपः। अतो येय इतीयादेशः। आद्गुणः। तिङ्ङतिङ इति निघातः। विदथेषु। विद ज्ञाने। विद्यते फलसाधनत्वेन ज्ञायत इति विदथो यज्ञः। रुविदिभ्यां कित्। उ० ३. ११६.। इत्यथप्रत्ययः। शंभुवं। भवतेरंतर्भावितण्यर्थात् क्विबेति क्विप्। ओः सुपि। पा० ६. ४. ८३.। इति यणादेशस्य न भूसुधियोः। पा० ६. ४. ८५.। इति प्रतिषेधः। मंत्रादयो गताः। प्रतिहर्यथ। हर्य गतिकांत्योः। शपः पित्त्वादनुदात्तत्वं। तिङश्च लसार्वधातुकस्वरेण धातुस्वरेणाद्युदात्तत्वं। इमां चेत्यत्र चशब्दश्चेदर्थः। चणिति निपातांतरं न च समुच्चयाद्यर्थः। तेन निपातैर्यद्यदिहंतकुविन्नेच्चेच्चण्। पा० ८. १. ३०.। इति निघातप्रतिषेधः। अश्नवत्। अशू व्याप्तौ। लेट्यडागमः। व्यत्ययेन परस्मैपदं। इतश्च लोप इतीकारलोपः। इयङुवङ्भ्यां गुणवृद्धी भवतो विप्रतिषेधेन। का० ६. ४. ७७.। इति गुणः॥

को देवयंतमश्नवज्जनं को वृक्तबर्हिषं ।
प्रप्र दाश्वान्पस्त्याभिरस्थितांतर्वावत्क्षयं दधे ॥ ७ ॥
कः । देवऽयंतं । अश्नवत् । जनं । कः । वृक्तऽबर्हिषं ।
प्रऽप्र । दाश्वान् । पस्त्याभिः । अस्थित । अंतःऽवावंत् । क्षयं । दधे ॥ ७ ॥

देवयंतं देवान्कामयमानं जनं कोऽश्नवत् । ब्रह्मणस्पतिव्यतिरिक्तः को नाम देवो व्याप्नुयात् । तथा वृक्तबर्हिषमनुष्ठानाय छिन्नबर्हिषं यजमानं को नामान्यो देवोऽश्नवत् । दाश्वान् हविर्दत्तवान्यजमानः पस्त्याभिर्मनुष्यैर्ऋत्विग्भिः सह प्रप्रास्थित । देवयजनदेशं प्रति प्रस्थितवान् । अंतर्वावत् अंतःस्थितबहुधनोपेतं । यद्वा । अंतःस्थितपुत्रपौत्रादिप्रयुक्तबहुविधवागुपेतं क्षयं निवासस्थानं गृहं दधे । धृतवान् भवति ॥ देवयंतमित्यादयो गताः । प्रप्र । प्रसमुपोदः पादपूरणे । पा० ८. १. ६. । इति प्रशब्दस्य द्विर्भावः । अनुदात्तं चेत्याम्रेडितानुदात्तत्वं । अस्थित । ष्ठा गतिनिवृत्तौ । लुङि समवप्रविभ्यः स्थः । पा० १. ३. २२. । इत्यात्मनेपदं । स्थाघ्वोरिच्च । पा० १. २. १७. । इति धातुसिचोरित् । किच्चे ह्रस्वादंगात् । पा० ८. २. २७. । इति सलोपः । अंतर्वावत् । वा गतिगंधनयोः अंतर्वाति गच्छंतीत्यंतर्वाः पुत्रपश्वादयः । आतो मनिन्नित्यादिना विच् । तदस्यास्तीति मतुप् । मतुपः पित्त्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वं । यद्वा । वावदीतेः क्विप् । क्षयं । क्षियंति निवसंत्यस्मिन्निति क्षयः । पुंसि संज्ञायामित्यधिकरणे घः । क्षयो निवास इत्याद्युदात्तत्वं ॥

उप क्षत्रं पृंचीत हंति राजभिर्भये चित्सुक्षितिं दधे ।
नास्य वर्ता न तरुता महाधने नार्भे अस्ति वज्रिणः ॥ ८ ॥
उप । क्षत्रं । पृंचीत । हंति । राजऽभिः । भये । चित् । सुऽक्षितिं । दधे ।
न । अस्य । वर्ता । न । तरुता । महाऽधने । न । अर्भे । अस्ति । वज्रिणः ॥ ८ ॥

ब्रह्मणस्पतिर्देवः क्षत्रं बलमुप पृंचीत । स्वात्मनि संपृक्तं कुर्यात् । ततो राजभिर्वरुणादिभिः सह हंति । शत्रून्मारयति । भये चित् भीतिहेतौ युद्धेऽपि सुक्षितिं दधे । सुष्ठु निवासस्थैर्यं धारयति । न तु पलायते । वज्रिणो वज्राद्यायुधवतोऽस्य ब्रह्मणस्पतेर्महाधने प्रभूतधननिमित्ते युद्धे वर्ता प्रवर्तयितान्यः कोऽपि नास्ति । स्वयमेव प्रवर्तत इत्यर्थः । महाधन इति संग्रामनाम । महाधने समीक इति तन्नामसु पाठात् । तथा तरुता तरणस्योल्लंघनस्य कर्तान्यः कोऽपि नास्ति । तथैवार्भे स्वल्पे युद्धेऽप्यन्यः प्रवर्तयिता नास्ति ॥ पृंचीत । पृची संपर्के । लिङि रुधादित्वात् श्नम् । श्नसोरल्लोप इत्यकारलोपः । प्रत्ययस्वरः । क्षत्रं पृंचीत राजभिर्हंति चेति समुच्चयलक्षणस्य चार्थस्य दर्शनाच्चादिलोपे विभाषेति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः । हंतीत्येषा द्वितीयापि तिङः परत्वान्न निहन्यते । सुक्षितिं । शोभना क्षितिः सुक्षितिः । मन्क्तिन्नित्यादिनोत्तरपदांतोदात्तत्वं । वर्ता । वर्ततेर्वृणोतेर्वा तृच्यागमानुशासनस्यानित्यत्वादिड्भावः । तरुता । तॄ प्लवनतरणयोः । ग्रसितस्कभितेत्यादिना तृच्युडागमो निपातितः । चित इत्यंतोदात्तत्वं । महाधने । महच्च तद्धनं च महाधनं । आन्महतः । पा० ६. ३. ४६. । इत्यात्वं । तेन शब्देन तद्धेतुभूतः संग्रामो लक्ष्यते । अर्भे । ऋ गतौ । अर्तिगृभ्यां भन् । उ० ३. १५२. । इति भन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं ॥ ॥ २१ ॥

यं रक्षंतीति नवर्चं षष्ठं सूक्तं । तचानुक्रमणं । यं रक्षंति नव गायत्र्यस्तासां मध्ये तृच आदित्येभ्यो गायत्रं हीति । घोरपुत्रः कण्व ऋषिः । इदमादित्रीणि सूक्तानि गायत्राणि । आद्यंततृचयोर्वरुणमित्रार्यमणो देवताः । मध्यमतृचस्य सुगः पंथा इत्यस्यादित्या देवताः ॥ गतो विनियोगः ॥

यं रक्षंति प्रचेतसो वरुणो मित्रो अर्यमा । नू चित्स दभ्यते जनः ॥ १ ॥
यं । रक्षंति । प्रऽचेतसः । वरुणः । मित्रः । अर्यमा । नु । चित् । सः । दभ्यते । जनः ॥ १ ॥

प्रचेतसः प्रकृष्टज्ञानयुक्ता वरुणादयो देवा यं यजमानं रक्षंति स जनो यजमानो नू चित् चिप्रमेव दभ्यते। दभ्नोति। शत्रून् हिनस्ति॥ प्रचेतसः। प्रकृष्टं चेतो येषां। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। नू चित्। ऋचि तुनुघेत्यादिना दीर्घः। दभ्यते। दन्भु दंभे। व्यत्ययेन श्यन् आत्मनेपदं च॥

यं बाहुतेव पिप्रति पांति मर्त्यं रिषः। अरिष्टः सर्व एधते॥२॥

यं। बाहुताऽइव। पिप्रति। पांति। मर्त्यं। रिषः। अरिष्टः। सर्वः। एधते॥२॥

यं यजमानं पिप्रति वरुणादयो देवा धनैः पूरयंति। तत्र दृष्टांतः। बाहुतेव। स्वकीयो बाहुवर्यो ऽपेक्षितं धनमानीय यथा पूरयति तद्वत्। तथा यं मर्त्यं मनुष्यं यजमानं रिषो हिंसकात् पांति रक्षंति स सर्वो यजमानोऽरिष्टः केनाप्यहिंसितः सन् एधते। वर्धते॥ बाहुतेव। बाहुता बाहुत्वं। भाववाचिनानेन शब्देन बाहवस्तदाश्रया लक्ष्यंते। यद्वा। समूहार्थे तल्प्रत्ययो द्रष्टव्यः। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। पिप्रति। पॄ पालनपूरणयोः। पृ इत्येके। जुहोत्यादित्वात् श्लुः। अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं। अभ्यस्तानामादिरित्याद्युदात्तत्वं। पांति। तिङः परत्वात्पादादित्वाद्वा निघाताभावः। रिषः। रिष हिंसायां। क्विप्चेति क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं। अरिष्टः। रिष हिंसायां। एकाच इतीट्प्रतिषेधः। व्रश्चादिना षत्वं। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं॥

वि दुर्गा वि द्विषः पुरो घ्नंति राजान एषां। नयंति दुरिता तिरः॥३॥

वि। दुःऽगा। वि। द्विषः। पुरः। घ्नंति। राजानः। एषां। नयंति। दुःऽइता। तिरः॥३॥

राजानो वरुणादय एषां स्वकीययजमानानां पुरः पुरस्तात् दुर्गा गंतुं दुःशकानि शत्रुनगराणि वि घ्नंति। विशेषेण नाशयंति। तथा द्विषः शत्रूनपि वि घ्नंति। तथा दुरिता यजमानसंबंधीनि दुरितानि तिरो नयंति। विनाशं प्रापयंति॥ दुर्गा। दुःखेन गच्छंत्यत्रेति दुर्गाणि। सुदुरोरधिकरणे। पा० ३. २. ४८. ३.। इति गमेर्डप्रत्ययः। शेश्छंदसि बहुलमिति शेर्लोपः। पुरः। कालवाचिनः पूर्वशब्दात् सप्तम्यर्थे पूर्वाधरावराणां। पा० ५. ३. ३९.। इत्यसिप्रत्ययः तत्संनियोगेन पूर्वशब्दस्य पुरादेशश्च। प्रत्ययस्वरः। घ्नंति। हंतेर्लट्यदादित्वाच्छपो लुक्। गमहनेत्यादिनोपधालोपः। हो हंतेः। पा० ७. ३. ५४.। इति घत्वं। अंतादेशस्योपदेशवचनादाद्युदात्तत्वं। पादादित्वादनिघातः॥

सुगः पंथा अनृक्षर आदित्यास ऋतं यते। नात्रावखादो अस्ति वः॥४॥

सुऽगः। पंथाः। अनृक्षरः। आदित्यासः। ऋतं। यते। न। अत्र। अवऽखादः। अस्ति। वः॥४॥

हे आदित्यास ऋतं यते यज्ञं गच्छते भवत्समूहाय पंथा मार्गः सुगः सुष्ठु गंतुं शक्यः अनृक्षरः कंटकरहितश्च। अत्रास्मिन्कर्मणि वो युष्माकमवखादोऽवमंतव्यः खादो जुगुप्सितहविर्विशेषो नास्ति। तस्मादिहागंतव्यमित्यर्थः॥ सुगः। सुदुरोरधिकरण इति गमेर्डप्रत्ययः। पंथाः। पथिमथोः सर्वनामस्थान इत्याद्युदात्तत्वं। अनृक्षरः। ऋषी गतौ। ऋषंत्यंतर्गच्छंतीत्यृक्षराः कंटकाः। तन्यृषिभ्यां क्सरन्। उ० ३. ७५.। इति क्सरन्प्रत्ययः। कित्वाद्गुणाभावः। कलषत्वे। यास्कस्त्वाह। ऋचरः कंटक ऋच्छतेः। नि० ९. ३२.। इति। न विद्यंते ऋक्षरा अस्मिन्नित्यनृक्षरः। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। आदित्यासः। अदितेः पुत्रा आदित्याः। दित्यदित्यादित्यत्यादिना। पा० ४. १. ८५.। ण्यप्रत्ययः। आज्जसेरसुक्। आमंत्रिताद्युदात्तत्वं। पादादित्वादाष्टमिकनिघाताभावः। यते। इण् गतौ। लटः शतृ। अदादित्वाच्छपो लुक्। इणो यण्। पा० ६. ४. ८१.। इति यणादेशः। शतुरनुम इति विभक्तेरुदात्तत्वं। अवखादः। खादृ भक्षणे। भावे घञ्। अवमतः खादोऽवखादः। थाथादिनोत्तरपदांतोदात्तत्वं॥

यं यज्ञं नयथा नर आदित्या ऋजुना पथा । प्र वः स धीतये नशत् ॥५॥
यं । यज्ञं । नयथ । नरः । आदित्याः । ऋजुना । पथा । प्र । वः । सः । धीतये । नशत् ॥५॥

हे नरो नेतार आदित्या यं यज्ञमृजुना पथाविकलेन मार्गेण नयथ पारं प्रापयथ स यज्ञो वो धीतये युष्मत्पानायोपभोगाय प्र णशत् । प्राप्नोतु ॥ नयथ । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः । अन्येषामपि दृश्यत इति संहितायां दीर्घत्वं । पथा । तृतीयैकवचने भस्य टेर्लोपः । पा० ७.१. ८८. । इति टिलोपः । अनुदात्तस्य च यत्रोदात्तलोप इति विभक्तिरुदात्तत्वं । धीतये । धेट् पाने । आदेच इत्यात्वं । क्तिचि घुमास्थेतीत्वं । नशत् । नशतिर्गत्यर्थः । लेट्यडागमः । इतश्च लोप इतीकारलोपः ॥ ॥ २२ ॥

स रत्नं मर्त्यो वसु विश्वं तोकमुत त्मना । अच्छा गच्छत्यस्तृतः ॥६॥
सः । रत्नं । मर्त्यः । वसु । विश्वं । तोकं । उत । त्मना । अच्छ । गच्छति । अस्तृतः ॥६॥

हे आदित्याः स तादृशो भवद्भिरनुगृहीतो मर्त्यो मनुष्यो यजमानोऽस्तृतः केनाप्यहिंसितः सन् रत्नं रमणीयं विश्वं वसु सर्वं धनमच्छाभिमुख्येन गच्छति । प्राप्नोति । उतापि च त्मना आत्मना स्वेन सदृशं तोकमपत्यं गच्छति ॥ त्मना । मंत्रेष्वाङ्यादेरात्मनः । पा० ६.४.१४१. । इत्याकारलोपः । अच्छ । निपातस्य चेति दीर्घत्वं । अस्तृतः । स्तृञ् हिंसायां । न स्तृतोऽस्तृतः । अव्ययपूर्वपदप्रकृतिस्वरत्वं ॥

कथा राधाम सखायः स्तोमं मित्रस्यार्यम्णः । महि प्सरो वरुणस्य ॥७॥
कथा । राधाम । सखायः । स्तोमं । मित्रस्य । अर्यम्णः । महि । प्सरः । वरुणस्य ॥७॥

हे सखायः सखिभूता ऋत्विजो मित्रादीनां त्रयाणां महि महत् प्सरो रूपं । अतस्तदनुरूपं स्तोमं स्तोत्रं कथा केन प्रकारेण राधाम । साधयामः ॥ कथा । था हेतौ च च्छंदसि । पा० ५.३.२६. । इति किंशब्दात्प्रकारवचनेषु प्राग्दिशो विभक्तिरिति विभक्तिसंज्ञायां किमः कः । पा० ७.२.१०३. । इति कादेशः । प्रत्ययस्वरः । राधाम । राध साध संसिद्धौ । लेटि बहुलं छंदसीति विकरणस्य लुक् । तिङ्ङतिङ इति निघातः । स्तोमं । ष्टुञ् स्तुतौ । अर्तिस्तुस्वित्यादिना भावे मन् । नित्त्वादाद्युदात्तत्वं । अर्यम्णः । षष्ठ्येकवचनेऽल्लोपोऽन इत्यकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्तत्वं । महि । मह पूजायां । औणादिक इन्प्रत्ययः । प्सरः । प्सा भक्षणे । प्साति भक्षयतीति प्सरो रूपं । औणादिको डरप्रत्ययः ॥

मा वो घ्नंतं मा शपंतं प्रति वोचे देवयंतं । सुम्नैरिद्व आ विवासे ॥८॥
मा । वः । घ्नंतं । मा । शपंतं । प्रति । वोचे । देवऽयंतं । सुम्नैः । इत् । वः । आ ।
विवासे ॥८॥

हे मित्रादयो देवा देवयंतं देवान्कामयमानं यजमानं यः शत्रुर्हंति घ्नंतं तादृशं शत्रुं वो युष्मभ्यं मा प्रति वोचे । दुरुक्तकथनभीत्याहं न कथयामि । तथा यजमानं यः शत्रुः शपति तमपि शपंतं मा प्रति वोचे । भवद्भिरेव विचार्य शिक्षणीय इत्यर्थः । अहं तु सुम्नैरित् धनैरेव वो युष्माना विवासे । सर्वतः परिचरामि ॥ घ्नंतं । हंतीति घ्नन् । गमहनेत्यादिनोपधालोपः । हो हंतेरिति कुत्वं प्रत्ययस्वरः । शपंतं । शप आक्रोशे । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । वोचे । ब्रूञ् व्यक्तायां वाचि । माङि लुङीति ब्रुवो वचिः । पा० २.४. ५३. । इति वचिः । अस्यतिवक्तीत्यादिना च्लेरङादेशः । वच उमित्युमागमः । न माङ्योग इत्यडभावः । देवयंतं । सुप आत्मनः क्यच् । न च्छंदस्यपुत्रस्येतीत्वप्रतिषेधः । सुम्नैः । म्ना अभ्यासे । सुष्ठु म्नायतेऽभ्यस्यत इति सुम्नं । आतश्चोपसर्ग इति कप्रत्ययः । आतो लोप इटि चेत्याकारलोपः । विवासे । विवासतिः परिचरणकर्मा ॥

चतुरश्चिद्ददमानाद्बिभीयादा निधातोः । न दुरुक्ताय स्पृहयेत् ॥९॥
चतुरः । चित् । ददमानात् । बिभीयात् । आ । निऽधातोः । न । दुःऽउक्ताय । स्पृहयेत् ॥९॥

घ्नंतं शपंतं च मा प्रतिवोच इति यदुक्तं तत्रोपपत्तिरुच्यते। दुरुक्ताय न स्पृहयेत्। दुष्टं वाक्यं न कामयेत् किंतु दुरुक्ताद्बिभीयात्। तत्रावशिष्टो मंत्रभागः सर्वोऽपि दृष्टांतः। चिदित्युपमार्थे वर्तते। अक्षद्यूतं कुर्वतोरुभयोर्मध्ये यः पुमान् चतुरश्चतुःसंख्याकान्कपर्दकान्ददमानाद्ददतो हस्ते धारयतः पुरुषात् आ निधातोः कपर्दकनिपातपर्यंतं बिभीयात् अस्य जयो भविष्यति। न भविष्यतीत्यन्यो भीतिं प्राप्नुयात्। अत्र यथा भयं तथा दुरुक्ताद्भेतव्यमिति धर्मरहस्यं। तस्मादहं घ्नंतं शपंतं मा प्रतिवोच इत्यभिप्रायः। अत्र निरुक्तं। चतुरोऽक्षान्धारयत इति तद्यथा कितवाद्बिभीयादेवमेव दुरुक्ताद्बिभीयान्न दुरुक्ताय स्पृहयेत्। नि॰ ३. १६.। इति ॥ चतुरः। चतुरः शसि। पा॰ ६. १. १६७.। इति विभक्तेः पूर्वस्योदात्तत्वं। ददमानात्। दद दाने। अत्र धारणार्थः। शपः पित्वादनुदात्तत्वं। अदुपदेशाल्लसार्वधातुकानुदात्तत्वेन शानजनुदात्तः। धातुस्वर एव शिष्यते। बिभीयात्। ञिभी भये। लिङि जुहोत्यादित्वाच्छपः श्लुः। यासुट उदात्तत्वं। पादादित्वान्निघाताभावः। निधातोः। निपूर्वाद्दधातेः सितनिगमीत्यादिना। उ॰ १. ७०.। भावे तुन्प्रत्ययः। व्यत्ययेनाद्युदात्तत्वं। तादौ चेति गतिस्वरो न भवति। अताविति पर्युदस्तत्वात्। दुरुक्ताय। स्पृहेरीप्सितः। पा॰ १. ४. ३६.। इति संप्रदानसंज्ञायां चतुर्थी संप्रदाने। पा॰ २. ३. १३.। इति चतुर्थी। स्पृहयेत्। स्पृह ईप्सायां। चुरादिरदंतः। अतो लोपस्य स्थानिवद्भावाल्लघूपधगुणाभावः ॥ ॥२३॥

सं पूषन्निति दशर्चं सप्तमं सूक्तं काण्वं गायत्रं पूषदेवताकं। सं पूषन्दश पौष्णमित्यनुक्रांतं ॥ स्मार्ते महांतमध्वानमेष्यन्निदं सूक्तं जपेत्। सं पूषन्नध्वन इति महांतमध्वानमेष्यन् प्रतिभयं वा। आ॰ गृ॰ ३. ७. १०.। इति सूचितत्वात्। तत्र जपेदित्यनुवर्तते ॥

सं पूषन्नध्वनस्तिर व्यंहो विमुचो नपात्। सक्ष्वा देव प्र णस्पुरः ॥१॥
सं। पूषन्। अध्वनः। तिर। वि। अंहः। विऽमुचः। नपात्। सक्ष्व। देव। प्र। नः। पुरः ॥१॥

हे पूषन् जगत्पोषक पृथिव्यभिमानि देव अध्वनो मार्गात्सं तिर। अस्मानभीष्टस्थानं सम्यक् प्रापय। अंहो विघ्नहेतुं पाप्मानं वि तिर। विनाशय। पूषा विशेष्यते। विमुचो नपात् जलविमोचकहेतोर्मेघस्य पुत्र। नपादिति पुत्रनाम। नपात्प्रजेति तन्नामसु पाठात्। श्रुत्यंतरेऽद्भ्यः पृथिवीति जलाद्भूम्युत्पत्तिः श्रूयते। तथान्यत्राप्युदकसारत्वं पृथिव्याः श्रूयते। तद्यदपां सार आसीत्तत्समहन्यत सा पृथिव्यभवदिति। मेघस्य जलधारित्वादुदकपुत्र एव मेघपुत्रो भवति। न च पृथिव्या मेघपुत्रत्वे पूष्णः किमायातमिति वाच्यं। पृथिव्या एव पूषत्वात्। तथा च श्रुत्यंतरे कस्यचिन्मंत्रस्य ब्राह्मणमेवमाम्नायते। पूषाध्वनः पात्वित्याहेयं वै पूषेति। तन्निर्वचनं चान्यत्रैवमाम्नायते। इयं वै पूषेयं हीदं सर्वं पुष्यति यदिदं किं च। शत॰ ब्रा॰ १४. ४. २. २५.। इति। हे देव पूषन् नः पुरोऽस्माकं पुरतः प्र सक्ष्व। प्रसक्तो भव। पुरतो गच्छेत्यर्थः॥ विमुचो नपात्। उदकं विमुंचतीति विमुक् मेघः। क्विप्चेति क्विप्। न पातयति कुलमिति नपात् पुत्रः। नञ्पूर्वात् पातयतेः क्विप्। नभ्राण्नपादित्यादिना नञः प्रकृतिभावः। सुबामंत्रित इति परांगवद्भावात् षष्ठ्यामंत्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वं। सक्ष्व। षच सेवने। अनुदात्तेत्त्वादात्मनेपदं। लोटि बहुलं छंदसीति शपो लुक्। तास्यनुदात्तेदिति लसार्वधातुकानुदात्तत्वे धातुस्वरः। प्र णः। उपसर्गाद्बहुलमिति नसो णत्वं। पुरः। उक्तं ॥

यो नः पूषन्नघो वृको दुःशेव आदिदेशति। अप स्म तं पथो जहि ॥२॥
यः। नः। पूषन्। अघः। वृकः। दुःऽशेवः। आऽदिदेशति। अप। स्म। तं। पथः। जहि ॥२॥

हे पूषन् यः प्रतिपन्थी नोऽस्मानादिदेशति अनेन मार्गेण गंतव्यमित्येवमाज्ञापयति । कीदृशः । अघ आहंता वृकोऽस्मदीयस्य धनस्यादाता । अपहर्तेत्यर्थः । दुःशेवः सेवितुं दुःशको दुष्टसुखो वा । तं तादृशं प्रतिपन्थिनं पथो मार्गादप जहि स्म । अवश्यमपाकुरु ॥ वृकः । वृक वृक आदाने । वर्कत इति वृकः । इगुपधलक्षणः कः । वृषादित्वादाद्युदात्तत्वं । दुःशेवः । दुष्टं शेवं यस्यासौ दुःशेवः । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । यद्वा । दुःखेन सेव्यत इति दुःशेवः । वर्णव्यत्ययेन सकारस्य शकारः । ईषद्दुःसुष्विति खल् । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं । कृदुत्तरपदप्रकृतिस्वरत्वं । आदिदेशति । दिश अतिसर्जने । लिट्यडागमः । बहुलं छंदसीति शपः श्लुः । बहुलं छंदसीति वक्तव्यं । पा० ७. ३. ८७. २. । इति वचनान्नाभ्यस्तस्याचीति लघूपधगुणप्रतिषेधाभावः । पथः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं ॥

अप त्यं परिपंथिनं मुषीवाणं हुरश्चितं । दूरमधि स्रुतेरज ॥ ३ ॥

अप । त्यं । परिऽपंथिनं । मुषीवाणं । हुरःऽचितं । दूरं । अधि । स्रुतेः । अज ॥ ३ ॥

त्यं तादृशं पूर्वोक्तगुणयुक्तं स्रुतेर्मार्गादधि दूरमत्यंतदूरदेशं प्रति अपाज । अपगमय । कीदृशं । परिपंथिनं मार्गप्रतिबंधकं मुषीवाणं तस्कररूपं । मुषीवेति तस्करस्य नाम । मुषीवान् मलिम्लुच इति तन्नामसु पाठात् । हुरश्चितं कौटिल्यानां संचेतारं ॥ परिपंथिनं । छंदसि परिपंथिपरिपरिणौ पर्यवस्थातरि । पा० ५. २. ८९. । इति शत्रावभिधेय इनिप्रत्ययांतो निपातितः । मुषीवाणं । मुष स्तेये । मोषणं मुषिः । औणादिको भावे किप्रत्ययः । मुषिं वनति संभजत इति मुषीवा । वन षण संभक्तौ । अन्येभ्योऽपि दृश्यंत इति विच्प्रत्ययः । सर्वनामस्थाने चासंबुद्धौ । पा० ६. ४. ८. । इति दीर्घः । अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घत्वं । हुरश्चितं । हुर्छा कौटिल्ये । संपदादिलक्षणो भावे क्विप् । राल्लोप इति छकारलोपः । हुरश्चिनोतीति हुरश्चित् । चिनोतेः क्विपि तुगागमः । तत्पुरुषे कृति बहुलमित्यलुक् । कृदुत्तरपदप्रकृतिस्वरत्वं । स्रुतेः । स्रु गतौ । क्तिच्क्तौ च संज्ञायामिति क्तिच् । चित इत्यंतोदात्तत्वं । अज । अज गतिक्षेपणयोः ॥

त्वं तस्यं द्वयाविनोऽघशंसस्य कस्यं चित् । पदाभि तिष्ठ तपुंषिं ॥ ४ ॥

त्वं । तस्यं । द्वयाविनः । अघऽशंसस्य । कस्यं । चित् । पदा । अभि । तिष्ठ । तपुंषिं ॥ ४ ॥

हे पूषन् त्वं तस्य चोरस्य तपुषिं परसंतापकं देहं पदाभि तिष्ठ । भवदीयेन पादेनाक्रम्य तिष्ठ । कीदृशस्य । द्वयाविनः प्रत्यक्षापहारः परोक्षापहारश्चेति यद्द्वयं तद्युक्तस्य अघशंसस्य अस्मास्वघमनिष्टं शंसतः । अघशंस इति तस्करनाम । मलिम्लुचोऽघशंसो वृक इति तन्नामसु पाठात् । कस्य चिदनिर्दिष्टविशेषस्य कस्यापि ॥ द्वयाविनः । द्वयमस्यास्तीति द्वयावी । बहुलं छंदसीति मत्वर्थीयो विनिः । अन्येषामपि दृश्यत इति दीर्घत्वं । अघशंसस्य । अघे पापे शंसो मनस्यभिलाषो यस्य सोऽयमघशंसः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । तपुषिं । तापयत्यनेनान्यमिति तपुषिः । [illegible] उषिन्प्रत्ययः । बहुलवचनादिकारस्य नेत्संज्ञा । नित्त्वादाद्युदात्तत्वं ॥

आ तत्ते दस्र मंतुमः पूषन्नवो वृणीमहे । येन पितॄनचोदयः ॥ ५ ॥

आ । तत् । ते । दस्र । मंतुऽमः । पूषन् । अवः । वृणीमहे । येन । पितॄन् । अचोदयः ॥ ५ ॥

हे मंतुमो ज्ञानवन् दस्र दर्शनीय यद्वा [illegible]रिन् पूषन् ते त्वदीयं तदवस्तादृशं रक्षणमा वृणीमहे । सर्वतः प्रार्थयामहे । येन रक्षणेन पितॄन् अंगिरःप्रभृतीन्पितृदेहानचोदयः प्रे[illegible] । तद्रक्षणमिति पूर्वत्रान्वयः ॥ दस्र । दसि दंसनदर्शनयोः । स्फायितंचीत्यादिना रक् । आगमानुशासनस्या[illegible]मभावः । यद्वा । दसु उपक्षय इत्यस्मादंतर्भावितण्यर्थात्पूर्ववद्रक् । मंतुमः । मन ज्ञाने । कमिमनिजनीत्यादिना । उ० १. ७३. । भावे तुप्रत्ययः । मंतुर्ज्ञानमस्यास्तीति मंतुमान् । संबुद्धौ मतुवसो रुरिति रुत्वं । अचोदयः । चुद संचोदने । [illegible] ॥ ॥ २४ ॥

अधा नो विश्वसौभग हिरण्यवाशीमत्तम। धनानि सुषणा कृधि ॥६॥

अध। नः। विश्वऽसौभग। हिरण्यवाशीमत्ऽतम। धनानि। सुऽसना। कृधि ॥६॥

हे विश्वसौभग कृत्स्नधनयुक्त यद्वा कृत्स्नसौभाग्ययुक्त हिरण्यवाशीमत्तमातिशयेन सुवर्णमयायुधवन् पूषन् अध पूर्वोक्तास्मदीयप्रार्थनानंतरं नोऽस्माकं धनानि सुवर्णमणिमुक्तादीनि सुषणा सुष्ठु दानयुक्तानि कृधि। कुरु ॥ अध। अथशब्दे धत्वं छांदसं। निपातस्य चेति संहितायां दीर्घत्वं। विश्वसौभग। सुभगान्मंत्र इत्युद्गात्रा-दिषु पाठाद्भाविऽञ् । पा° ५. १. १२९.। हृद्भगसिंध्वंते पूर्वपदस्य च । पा° ७. ३. १९.। इत्युत्तरपदवृद्धौ प्राप्तायां सत्यां सर्वविधीनां छंदसि विकल्पितत्वादुत्तरपदवृद्धिर्न भवतीति वृत्तावुक्तं । विश्वानि सौभगानि यस्यासौ विश्वसौभगः। [illegible]। हिरण्यवाशीमत्तम । हिरण्मयी वाशी । तदेषामस्तीति हिरण्यवाशीमंतः। अतिशयेन हिरण्यवाशीमान् हिरण्यवाशीमत्तमः । आमंत्रितनिघातः। सुषणा । वन षण संभक्तौ । सुखेन संभज्यंत इति सुषणानि। ईषद्दुःसुष्विति खल्। शेश्छंदसीति शेर्लोपः। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। कृदुत्त-रपदप्रकृतिस्वरत्वं । कृधि । डुकृञ् करणे । श्रुशृणुपॄकृवृभ्यश्छंदसीति हेर्धिरादेशः । बहुलं छंदसीति विकरणस्य लुक् ॥

अति नः सश्चतो नय सुगा नः सुपथा कृणु। पूषन्निह क्रतुं विदः ॥७॥

अति। नः। सश्चतः। नय। सुऽगा। नः। सुऽपथा। कृणु। पूषन्। इह। क्रतुं। विदः ॥७॥

सश्चतोऽस्मद्बाधनाय प्राप्नुवतः शत्रून्नोऽति अस्मानतिक्रम्य नय। अन्यत्र प्रापय। नोऽस्मान् सुगा सुष्ठु गंतुं शक्येन सुपथा शोभनमार्गेण कृणु। गंतॄन्कुरु। हे पूषन् इहाध्वनि क्रतुं प्रज्ञानमस्मद्रक्षणरूपं विदः। जानीहि॥ सश्चतः। ग्लुन्च षस्ज गतावित्यत्र सश्चिमप्येके पठंतीति धातुवृत्तावुक्तं। अस्माल्लटः शतृ। बहुलं छंदसीति शपो लुक्। प्रत्ययस्वरेण शतुरुदात्तत्वं। शतुरनुम इति विभक्त्युदात्ताभावश्छांदसः। सुगा। सुष्ठु गच्छंत्यत्रेति सुगः। सुदुरोरधिकरण इति गमेर्डप्रत्ययः। सुपां सुलुगिति तृतीयाया आकारः। सुपथा। शोभनेन पथा। न पूजनात्। पा° ५. ४. ६९.। इति [illegible]धः। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। कृत्वादय-श्चेत्युत्तरपदाद्युदात्तत्वं न भवति। अबहुव्रीहित्वात्। तत्र हि बहुव्रीहाविति वर्तते। कृणु। कृवि हिंसाकर-णयोः। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। उतश्च प्रत्ययादिति हेर्लुक्। विदः। विद ज्ञाने। लेट्यडागमः। इतश्च लोप इतीकारलोपः॥

अभि सूयवसं नय न नवज्वारो अध्वने। पूषन्निह क्रतुं विदः ॥८॥

अभि। सुऽयवसं। नय। न। नवऽज्वारः। अध्वने। पूषन्। इह। क्रतुं। विदः ॥८॥

हे पूषन् सुयवसं शोभनतृणोपलक्षितं सर्वौषधियुक्तं देशमभि नय । अस्मानभितः प्रापय । अध्वने मार्गाय नवज्वारो नूतनः संतापो न भवत्विति शेषः। मार्गे गच्छतामस्माकमिदानींतनः क्लेशः कोऽपि मा भूदित्यर्थः। गतार्थमन्यत् ॥ सूयवसं। शोभनं यवसं यस्मिन्देशे स सूयवसो देशः। निपातस्य चेति पूर्वपदस्य दीर्घत्वं। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। कृत्वादिर्वा द्रष्टव्यः। नवज्वारः। ज्वर रोगे। भावे घञ्। नवश्चासौ ज्वारो नवज्वारः। थाथादिनोत्तरपदांतोदात्तत्वं ॥

शग्धि पूर्धि प्र यंसि च शिशीहि प्रास्युदरं। पूषन्निह क्रतुं विदः ॥९॥

शग्धि। पूर्धि। प्र। यंसि। च। शिशीहि। प्रासि। उदरं। पूषन्। इह। क्रतुं। विदः ॥९॥

हे पूषन् शग्धि। अस्माननुग्रहीतुं शक्तो भव। पूर्धि। अस्मद्गृहं धनेन पूरय। किंच प्र यंसि। अन्यदप्यपेक्षितं वस्तु प्रयच्छ। शिशीहि। अस्मान्सर्वेषु मध्ये तीक्ष्णीकुरु। तेजस्विनः कुर्वित्यर्थः। उदरमस्मदीयं प्रासि। मृष्टान्नेन सोमरसेन वा पूरय। अन्यत्पूर्ववत्॥ शग्धि। शक्लृ शक्तौ। लोटो हिः। बहुलं छंदसीति विकरणस्य

लुक्। हुझल्भ्यो हेर्धिरिति धिरादेशः। हेरपित्त्वात्प्रत्ययस्वरेणोदात्तत्वं। पूर्धि। पॄ पालनपूरणयोः। श्रुशृणु-पॄकृवृभ्यश्छंदसीति हेर्धिरादेशः। पूर्ववद्विकरणस्य लुक्। उदोष्ठ्यपूर्वस्येत्युत्वं। हलि चेति दीर्घः। तिङः परत्वा-न्निघाताभावः। यंसि। यम उपरमे। लोडर्थे लटि पूर्ववद्विकरणस्य लुक्। निघातः। शिशीहि। शो तनूकरणे। लोटि बहुलं छंदसीत्यभ्यासस्येत्वं। ई हल्यघोरितीत्वं। प्रत्ययस्वरः। प्रासि। प्रा पूरणे। अदादित्वाच्छपो लुक्। सिपः पित्त्वादनुदात्तत्वे धातुस्वरः॥

न पूषणं मेथामसि सूक्तैरभि गृणीमसि। वसूनि दस्ममीमहे॥१०॥

न। पूषणं। मेथामसि। सुऽउक्तैः। अभि। गृणीमसि। वसूनि। दस्मं। ईमहे॥१०॥

पूषणं देवं न मेथामसि। वयं न तु निंदामः। किंतु सूक्तैर्वेदगतैरभि गृणीमसि। सर्वत्र स्तुमः। दस्मं दर्शनीयं पूषणं प्रति वसूनि धनानीमहे। याचामहे॥ मेथामसि। मेथृ मेधाहिंसनयोः। लटीदंतो मसिरिति मस इकारागमः। सूक्तैः। सुष्ठु स्तुवते देवताः प्रकाशयंतीति सूक्तानि। क्तिच्क्तौ च संज्ञायामिति कर्तरि क्तः। वचिस्वपीत्यादिना संप्रसारणं। थाथादिस्वरः। यद्वा। कर्मणि निष्ठा। सूपमानात् क्तः। पा॰ ६. २. १४५। इत्युत्तरपदांतोदात्तत्वं। गृणीमसि। गॄ शब्दे। प्वादीनां ह्रस्व इति ह्रस्वत्वं। इदंतो मसिः। दस्मं। इषियुधींधिदसिश्याधूसूभ्यो मक्। उ॰ १. १४४। इति मक्प्रत्ययः॥ ॥२५॥

कद्रुद्रायेति नवर्चमष्टमं सूक्तं। अत्रानुक्रम्यते। कद्रुद्राय नव रौद्रं तृतीया मैत्रावरुणी चांत्यस्तृचः सौम्योऽत्यानुष्टुबिति। घोरपुत्रः कण्व ऋषिः। गायत्री छंदः। यास्ते प्रजा इत्यंत्यानुष्टुप्। रुद्रो देवता। यथा नो मित्र इत्येषा मित्रावरुणदेवताका च। अस्मे सोमेत्यादिरंत्यस्तृचस्तु सौम्य एव॥ सर्वेषु रुद्रदेवताकेषु कर्मस्वनेन सूक्तेन दिगुपस्थानं कर्तव्यं। तथा च सूचितं। कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वन इति सर्वरुद्रयज्ञेषु दिशामुपस्थानं। आ॰ गृ॰ ४. ८. २१। इति॥

कद्रुद्राय प्रचेतसे मीळ्हुष्टमाय तव्यसे। वोचेम शंतमं हृदे॥१॥

कत्। रुद्राय। प्रऽचेतसे। मीळ्हुःऽतमाय। तव्यसे। वोचेम। शंऽतमं। हृदे॥१॥

कत् कदा रुद्रायैतन्नामकाय देवाय शंतममतिशयेन सुखकरं स्तोत्रं वोचेम। पठेम। कीदृशाय। प्रचेतसे प्रकृष्टज्ञानयुक्ताय मीळ्हुष्टमाय सेक्तृतमाय। अभीष्टकामवर्षयेत्यर्थः। तव्यसेऽतिशयेन प्रवृद्धाय हृदेऽस्मदीय-हृन्निष्ठाय॥ कत्। कदा। अंत्यलोपश्छांदसः। रुद्राय। रोदयति सर्वमंतकाल इति रुद्रः। रोदेर्णिलुक्च। उ॰ २. २२। इति रक्प्रत्ययः। प्रचेतसे। चिती संज्ञाने। प्रकृष्टं चेततीति प्रचेताः। गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च। मीळ्हुष्टमाय। अतिशयेन मीढ्वान् मीळ्हुष्टमः। दाश्वान् साह्वान् मीढ्वांश्चेति क्वसुप्रत्ययांतो निपातितः। तमप्यवस्याद्दित्वेन भत्वाद्वसोः संप्रसारणमिति संप्रसारणं। शासिवसिघसीनां चेति षत्वं। तव्यसे। तवतिर्वृद्ध्यर्थः। सौत्रो धातुः। अतिशयेन तविता तवीयान्। तुश्छंद-सीतीयसुन्प्रत्ययः। तुरिष्ठेमेयःस्विति तृलोपः। ईयसुन ईकारलोपश्छांदसः। नित्त्वादाद्युदात्तत्वं। वोचेम। वच परिभाषणे। लिङ्याशिष्यङ्। वच उमित्युमागमः। यासुटः स्वरेणैकार उदात्तः। हृदे। पद्दन्नित्यादिना हृदयशब्दस्य हृदादेशः। ऊडिदमित्यादिना विभक्तिरुदात्तत्वं॥

यथा नो अदितिः करत्पश्वे नृभ्यो यथा गवे। यथा तोकाय रुद्रियं॥२॥

यथा। नः। अदितिः। करत्। पश्वे। नृऽभ्यः। यथा। गवे। यथा। तोकाय। रुद्रियं॥२॥

अदितिर्भूमिर्नोऽस्माकं रुद्रियं रुद्रसंबंधि भेषजं यथा येन प्रकारेण सिध्यति करत्। तथा करोतु। किंच यथा येन प्रकारेण पश्वेऽस्मदीयाश्वमहिषादिपशवे नृभ्योऽस्मदीयपुरुषेभ्यो विशेषेण गवे गोजातये हितं रुद्रियं सिध्यति तथा करोतु। किंच तोकायास्मदीयापत्याय रुद्रियं यथा सिध्यति तथा करोतु। भेषजस्य रुद्रसंबंधित्वं मंत्रांतरे समाम्नातं। या ते रुद्र शिवा तनूः शिवा विश्वाहभेषजी शिवा रुद्रस्य भेषजी। तै॰ सं॰

४. ५. १०. १.। इति। गवादिविषयभेषजं चान्यत्र स्पष्टमाम्नातं। भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजं सुभेषजं। तै° सं° १. ८. ६. १.। इति॥ करत्। डुकृञ् करणे। लङि व्यत्ययेन शप्। यद्वा। लेट्यडागमः। इतश्च लोप इतीकारलोपः। यद्वा। लुङि कृमृदृरुहिभ्यश्छंदसीति च्लेरङादेशः। ऋदृशोऽङि गुण इति गुणः। आद्ययोः पक्षयोः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः। तृतीये तु व्यत्ययेन। यद्वृत्तयोगादनिघातः। पश्वे। संज्ञापूर्वकस्य विधेरनित्यत्वात् घेर्ङितीति। पा° ७. ३. १११.। इति गुणाभावः। यणादेशः। नृभ्यः। नृ चान्यतरस्यां। पा° ६. १. १८४.। इति विभक्त्युदात्तत्वाभावः। गवे। साविकाच इति प्राप्तस्य विभक्त्युदात्तस्य न गोश्वन्साववर्णेति प्रतिषेधः। रुद्रियं। रुद्रशब्दात्तस्येदमित्यर्थे घप्रत्ययः॥

यथा नो मित्रो वरुणो यथा रुद्रश्चिकेतति। यथा विश्वे सजोषसः॥३॥

यथा। नः। मित्रः। वरुणः। यथा। रुद्रः। चिकेतति। यथा। विश्वे। सऽजोषसः॥३॥

मित्रो वरुणश्च नोऽस्मान्यथा येन प्रकारेण चिकेतति अनुग्राह्यत्वेन जानाति। रुद्रोऽपि यथा चिकेतति। सजोषसः समानप्रीतयो विश्वे सर्वे देवा यथा चिकेतंति। तथा भवत्विति शेषः। यद्वा। यथाशब्दोपेतमंत्रद्वयस्य तथा कदा वोचेमेति पूर्वत्रान्वयः॥ चिकेतति। कित ज्ञाने। लेट्यडागमः। नाभ्यस्तस्येति। पा° ७. ३. ८७.। गुणनिषेधो न भवति। बहुलं छंदसीति वक्तव्यमिति वचनात्। सार्वधातुकत्वाच्चाभ्यस्तानामादिरित्याद्युदात्तत्वं। सजोषसः। जुषी प्रीतिसेवनयोः। समानं जुषंतीति सजोषसः। समानस्य च्छंदसीति सभावः। असुनो नित्त्वादुत्तरपदस्याद्युदात्तत्वं। तदेव कृदुत्तरपदप्रकृतिस्वरत्वेन शिष्यते॥

गाथपतिं मेधपतिं रुद्रं जलाषभेषजं। तच्छंयोः सुम्नमीमहे॥४॥

गाथऽपतिं। मेधऽपतिं। रुद्रं। जलाषऽभेषजं। तत्। शंऽयोः। सुम्नं। ईमहे॥४॥

रुद्रमभिलक्ष्य वयं शंयोर्बृहस्पतिपुत्रस्य संबंधि तत्प्रसिद्धं सर्वप्रजाभ्यो हितं सुम्नं सुखमीमहे। याचामहे। कीदृशं रुद्रं। गाथपतिं स्तुतिपालकं मेधपतिं यज्ञपालकं जलाषभेषजं सुखरूपौषधोपेतं। यद्वा। उदकरूपौषधोपेतं। उदकं हि रुद्रनामाभिमंत्रितं सदौषधं भवति॥ गाथपतिं। गाथेति वाङ्नाम। गाथा गण इति तन्नामसु पठितत्वात्। वाग्रूपायाः स्तुतेः पतिर्गाथपतिः। कै गै रै शब्दे। आदेच इत्यात्वं। उषिकुषिगार्तिभ्यस्थन्निति थन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं। ङ्यापोः संज्ञाच्छंदसोर्बहुलमिति पूर्वपदस्य ह्रस्वत्वं। पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरे प्राप्ते मरुद्वृधादीनां छंदस्युपसंख्यानमिति पूर्वपदांतोदात्तत्वं। मेधपतिं। पूर्ववत्। जलाषभेषजं। जनी प्रादुर्भावे। जायंत इति जाः। अन्येष्वपि दृश्यते। पा° ३. २. १०१.। इति दृ[illegible] डप्रत्ययः। लाषः। लष कांतौ। कांतिरभिलाषः। भावे घञ्। जानां लाषो य[illegible]ज्जलाषं सुखं। जलाषरूपं भेषजं यस्मिन्रुद्रे स जलाषभेषजः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। शंयोः। कंशंभ्यां। पा° ५. २. १३८.। इति मत्वर्थीयो युस्प्रत्ययः। सिति च। पा° १. ४. १६.। इति पदसंज्ञायामनुस्वारपरसवर्णौ। प्रत्ययस्वरः॥

यः शुक्र इव सूर्यो हिरण्यमिव रोचते। श्रेष्ठो देवानां वसुः॥५॥

यः। शुक्रःऽइव। सूर्यः। हिरण्यंऽइव। रोचते। श्रेष्ठः। देवानां। वसुः॥५॥

यो रुद्रः सूर्य इव शुक्रः सूर्यवद्दीप्तिमान् हिरण्यमिव रोचते। यथा सर्वेषां प्राणिनां हिरण्यं प्रीतिकरं भवति तथा रुद्रोऽपि। स च देवानां सर्वेषां मध्ये श्रेष्ठो वसुर्निवासहेतुश्च॥ रोचते। रुच दीप्तावभिप्रीत्यां च। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। श्रेष्ठः। प्रशस्यतरः। प्रशस्यशब्दादिष्ठनि प्रशस्यस्य श्रः। पा° ५. ३. ६०.। इति आदेशः। नित्त्वादाद्युदात्तत्वं। वसुः। वासयति सर्वमिति वसुः। वस निवासे। अंतर्भावितण्यर्थात् शृस्वृस्निहि[illegible]प्रत्ययः। निदित्यनुवृत्तेराद्युदात्तत्वं॥ ॥२६॥

आग्निमारुते शं नः करतीति धाय्या। अथ यथेतमिति खंडे सूचितं। वैश्वानराय पृथुपाजसे शं नः करत्यर्वते। आ° ५. २०.। इति॥

शं नः करत्यर्वते सुगं मेषाय मेष्ये । नृभ्यो नारिभ्यो गवे ॥ ६ ॥

शं । नः । करति । अर्वते । सुऽगं । मेषाय । मेष्ये । नृऽभ्यः । नारिऽभ्यः । गवे ॥ ६ ॥

नोऽस्माकं संबंधिभ्योऽर्वदादिभ्यः सुगं सुष्ठु गम्यं शं सुखं करति । देवः करोति । अर्वतेऽश्वाय । अर्वन्शब्दोऽश्वनाम । अर्वा वाजीति तन्नामसु पाठात् । मेषाय मेषजातिपुरुषाय मेष्ये तज्जातीयस्त्रियै नृभ्यः पुरुषेभ्यो नारिभ्यः स्त्रीभ्यो गवे गोजातये ॥ करति । डुकृञ् करणे । व्यत्ययेन शप् । अर्वते । अर्ति गच्छतीत्यर्वा । अन्येभ्योऽपि दृश्यंत इति वनिप् । चतुर्थ्येकवचनेऽर्वणस्त्रसावनञ इति नकारस्य तृआदेशः । वनिप्सुपौ पित्त्वादनुदात्तौ । धातुस्वरः । मेषाय । मिष स्पर्धायां । पचाद्यच् देवसेनमेषादयः पचादिषु द्रष्टव्या इति वचनात् । मेष्यै । जातेरस्त्रीविषयादयोपधात् । पा॰ ४. १. ६३. । इति ङीष्प्रत्ययः । प्रत्ययस्वरः । चतुर्थ्येकवचन आगमानुशासनस्यानित्यत्वादाडागमाभावः । उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति स्वरितत्वं । उदात्तयणो हल्पूर्वादिति तु न भवति सर्वे विधयश्छंदसि विकल्प्यंत इति वचनात् । नृभ्यः । सावेकाच इति प्राप्तस्य विभक्त्युदात्तत्वस्य नृ चान्यतरस्यामिति प्रतिषेधः । नारिभ्यः । नृनरयोर्वृद्धिश्च । पा॰ ४. १. ७३. । इति शार्ङ्गरवादिषु पाठात् ङीन्प्रत्ययः । नित्त्वादाद्युदात्तः । गवे । न गोश्वन्साववर्णेति विभक्त्युदात्तस्य प्रतिषेधः ॥

अस्मे सोम श्रियमधि नि धेहि शतस्य नृणां । महि श्रवस्तुविनृम्णं ॥ ७ ॥

अस्मे इति । सोम । श्रियं । अधि । नि । धेहि । शतस्य । नृणां । महि । श्रवः । तुविऽनृम्णं ॥ ७ ॥

हे सोम देव नृणां पुरुषाणां शतस्य पर्याप्तां श्रियमस्मे अस्मास्वधि नि धेहि । आधिक्येन स्थापय । तथा महि महत् तुविनृम्णं प्रभूतबलयुक्तं श्रवोऽन्नमधि नि धेहि ॥ अस्मे । सुपां सुलुगिति सप्तम्याः शेआदेशः । नृणां । नृ च । पा॰ ६. ४. ६. । इति दीर्घप्रतिषेधः । नामन्यतरस्यामिति नाम उदात्तत्वं । महीत्यादयो गताः ॥

मा नः सोमपरिबाधो मारातयो जुहुरंत । आ न इंदो वाजे भज ॥ ८ ॥

मा । नः । सोमऽपरिबाधः । मा । अरातयः । जुहुरंत । आ । नः । इंदो इति । वाजे । भज ॥ ८ ॥

सोमपरिबाधः सोमस्य परितो बाधका यागरहिता नोऽस्मान् मा जुहुरंत । मा हिंसंतु । तथारातयः शत्रवो मा जुहुरंत । हे इंदो सोम वाजे बलविषयेऽन्नविषये वा नोऽस्माना भज । सर्वतः सेवस्व ॥ सोमपरिबाधः । सोमं परिबाधंते ये ते तादृशाः । क्विब्वेति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं । अरातयः । रा दाने । कृत्यल्युटो बहुलमिति बहुलवचनात्कर्तरि क्तिन् । यद्वा । क्तिच्क्तौ च संज्ञायामिति क्तिच् । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं । जुहुरंत । हृ प्रसह्यकरणे । व्यत्ययेनात्मनेपदं । लङि जुहोत्यादित्वात् श्लुः । बहुलं छंदसीति बहुलवचनादिकारस्याप्युत्वं । द्विर्भावहलादिशेषौ । सर्वे विधयश्छंदसि विकल्प्यंत इति वचनाददभ्यस्तात् । पा॰ ७. १. ४. । इत्यदादेशाभावे सति झोऽंत इत्यंतादेशः । न माङ्योग इत्यडभावः ॥

यास्ते प्रजा अमृतस्य परस्मिन्धामन्नृतस्य ।

मूर्धा नाभा सोम वेन आभूषंतीः सोम वेदः ॥ ९ ॥

याः । ते । प्रऽजाः । अमृतस्य । परस्मिन् । धामन् । ऋतस्य ।

मूर्धा । नाभा । सोम । वेनः । आऽभूषंतीः । सोम । वेदः ॥ ९ ॥

हे सोम ते तव संबंधिन्यो याः प्रजाः संति स्तोत्रं वा कुर्वंति ताः प्रजाः मूर्धा शिरःस्थानीयस्त्वं नाभा

संनहनयुक्ते यज्ञगृहे वेनः । कामयस्व । कीदृशस्य ते । अमृतस्य मरणरहितस्य परस्मिन्धामन्नुत्तस्य उत्तमे स्थाने प्राप्तस्य । हे सोम आभूषंतीः सर्वतस्त्वामलंकुर्वतीः प्रजाः वेदः । जानीहि ॥ धामन् । सुपां सुलुगिति सप्तम्या लुक् । नाभा । णह बंधने । नहो भश्च ।उ॰ ४. १२५.। इति कर्मणीञ्प्रत्ययः । ञित्त्वादाद्युदात्तत्वं । सुपां सुलुगिति सप्तम्या डादेशः। वेनः। वेनतिः कांतिकर्मा । लेटि सिप्यडागमः । तिङ्ङतिङ इति निघातः । आभूषंतीः । भूष अलंकारे । भौवादिकः । शपः पित्त्वादनुदात्तत्वं । शतुश्च लसार्वधातुकस्वरेण धातुस्वरेणाद्युदात्तत्वं । समासे कृदुत्तरपदप्रकृतिस्वरत्वं । वेदः । विद् ज्ञाने । लेटि सिप्यडागमः ॥ ॥२७॥ ॥८॥

नवमेऽनुवाके सप्त सूक्तानि । तत्राग्ने विवस्वदिति चतुर्दशर्चं प्रथमं सूक्तं । अत्रानुक्रमणिका । अग्ने षळूना प्रस्कण्वः काण्व आग्नेयं तु प्रागाथमाद्यो द्वृचोऽश्व्युषसां चेति । कण्वपुत्रः प्रस्कण्व ऋषिः । अत्र द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः । प्रथमातृतीयाद्या अयुजो बृहत्यः । कृत्स्नं सूक्तमाग्नेयमुत्तरं च । आद्ये द्वे अश्विदेवताके उषोदेवताके च ॥ प्रातरनुवाक आग्नेये क्रतौ बार्हते छंदस्याश्विनशस्त्रे चेदं सूक्तं । अथैतस्या रात्रेरिति खंडे सूचितं । अग्ने विवस्वतसखायस्त्वा । आ॰ ४. १३.। इति ॥ वाजपेये आग्निमारुत आद्यः प्रगाथोऽनुरूपः । वाजपेयेनेति खंडे सूचितं । चित्रवतीषु चेत् सुवीरस्त्वं नश्चित्र ऊत्याग्ने विवस्वदुषस इत्यग्निष्टोमसाम्नः स्तोत्रियानुरूपौ । आ॰ ९. ९.। इति ॥ पर्यायव्युष्टावाश्विनशस्त्रस्यायमेव प्रगाथः स्तोत्रियः । यदि पर्यायानभिव्युच्छेदिति खंड आश्विनार्थैकस्तोत्रियोऽग्ने विवस्वदुषसः । आ॰ ६. ६.। इति सूचितं ॥

अग्ने विवस्वदुषसश्चित्रं राधो अमर्त्य ।
आ दाशुषे जातवेदो वहा त्वमद्या देवाँ उषर्बुधः ॥१॥
अग्ने । विवस्वत् । उषसः । चित्रं । राधः । अमर्त्य ।
आ । दाशुषे । जातऽवेदः । वह । त्वं । अद्य । देवान् । उषःऽबुधः ॥१॥

हे अग्ने त्वमुषस उषोदेवतायाः सकाशाद्राधो धनं दाशुषे हविर्दत्तवते यजमानाया वह । आनीय प्रापय । सोऽग्निर्विशिष्यते । अमर्त्य मरणरहित जातवेदो जातानां वेदितः । तमेतं शब्दं यास्को व्याचष्टे । जातवेदाः कस्मात् । जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविंदतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणं । तस्मात्सर्वानृतून्पशवोऽग्निमभिसर्पंतीति च । नि॰ ७. १९.। इति । कीदृशं राधः । विवस्वत् विशिष्टनिवासोपेतं चित्रं नानाविधं। किंच अद्यास्मिन्दिन उषर्बुध उषःकाले प्रबुद्धान्देवाना वह ॥ विवस्वत् । विवासनं विवः । तद्युक्तं । वस निवासे । विपूर्वाद्दंतर्भावितण्यर्थात्संपदादिलक्षणे भावे क्विप् । तदस्यास्तीति मतुप् । मादुपधाया इति वत्वं । तसौ मत्वर्थ इति भत्वेन पदत्वाभावाद्रुत्वाद्यभावः । वृषादित्वादाद्युदात्तत्वं । राधः । राध साध संसिद्धौ । राध्नोत्यनेनेति राधो धनं । करणेऽसुन् । नित्त्वादाद्युदात्तत्वं । दाशुषे । दाशृ दाने । दाश्वान् साह्वानिति क्वसुप्रत्ययांतो निपातितः । चतुर्थ्येकवचने वसोः संप्रसारणमिति संप्रसारणं । शासिवसीति षत्वं । जातवेदः । जातानि वेत्तीति जातवेदाः । गतिकारकोपपदात् पूर्वपदप्रकृतिस्वरत्वं चेत्यसुन् । यद्वा । वेद इति धननाम । जातं धनं यस्य स तादृशः । आमंत्रितनिघातः । वह । द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं । देवान् । दीर्घादटि समानपाद इति संहितायां नकारस्य रुत्वं । आतोऽटि नित्यमिति अनुनासिक आकारः । उषर्बुधः । उषसि बुध्यंत इत्युषर्बुधः । बुध अवगमने । क्विप्चेति क्विप् । रो रुत्वाभावश्छांदसः । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

जुष्टो हि दूतो असि हव्यवाहनोऽग्ने रथीरध्वराणां ।
सजूरश्विभ्यामुषसा सुवीर्यमस्मे धेहि श्रवो बृहत् ॥२॥
जुष्टः । हि । दूतः । असि । हव्यऽवाहनः । अग्ने । रथीः । अध्वराणां ।
सऽजूः । अश्विऽभ्यां । उषसा । सुऽवीर्यं । अस्मे इति । धेहि । श्रवः । बृहत् ॥२॥

हे अग्ने त्वं जुष्टत्वादिविशेषगुणयुक्तोऽसि। जुष्टः सेवितो दूतो देवानां वार्त्ताहारो हव्यवाहनो हविषो वोढा अध्वराणां क्रतूनां रथीः रथस्थानीयः। तथा च मंत्रांतरं ब्राह्मणेनैव व्याख्यातं। रथीरध्वराणामित्याहैष हि देवरथ इति। ब्राह्मणांतरं च। रथीरध्वराणामित्याह रथो ह वा एष भूतो देवेभ्यो हव्यं वहतीति। तादृशस्त्वमश्विभ्यां देवताभ्यामुषसा देवतया च सजूः सहितो भूत्वा सुवीर्यं शोभनवीर्योपेतं बृहत् प्रभूतं श्रवोऽन्नमस्मे धेहि। अस्मासु प्रक्षिप॥ जुष्टः। जुषी प्रीतिसेवनयोः। नित्यं मंत्र इत्याद्युदात्तत्वं। असि। सिपि तासस्त्योर्लोपः। पा॰ ७. ४. ५०.। इति सलोपः। हि चेति निघातप्रतिषेधः। हव्यवाहनः। हव्यं वहतीति हव्यवाहनः। हव्येऽनंतःपादं। पा॰ ३. २. ६६.। इति ञ्युट्। योरनादेशः। ञित्यादाद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वं। अग्ने। पादादित्वादाष्टमिकनिघाताभावः। रथीः। रथशब्दात्स्वार्थिक ईकारप्रत्ययः। अध्वराणां। ध्वरो नास्त्येष्विति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। सुवीर्यं। वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं। अस्मे। सुपां सुलुगिति सप्तम्याः शेआदेशः॥

अ॒द्या दू॒तं वृ॑णीमहे॒ वसु॑म॒ग्निं पु॑रुप्रि॒यं।
धू॒मके॑तुं॒ भाऋ॑जीकं॒ व्यु॑ष्टिषु य॒ज्ञाना॑मध्वर॒श्रियं॑ ॥३॥
अ॒द्य। दू॒तं। वृ॒णी॒म॒हे॒। वसुं॑। अ॒ग्निं। पु॒रु॒ऽप्रि॒यं।
धू॒मऽके॑तुं। भाःऽऋ॑जीकं। विऽउ॑ष्टिषु। य॒ज्ञानां॑। अ॒ध्व॒र॒ऽश्रियं॑ ॥३॥

अद्यास्मिन्दिनेऽग्निं वृणीमहे। प्रार्थयामहे। कीदृशं। दूतं वार्त्ताहारं वसुं निवासहेतुं पुरुप्रियं बहूनां प्रियं धूमकेतुं धूमरूपध्वजयुक्तं भाऋजीकं प्रसिद्धभासालंकृतं। भाऋजीकः प्रसिद्धभाः। नि॰ ६. ४.। इति यास्कवचनं। व्युष्टिषूषःकालेषु यज्ञानां यजमानानामध्वरश्रियं यागसेविनं॥ अद्य। निपातस्य चेति दीर्घत्वं। पुरूणां प्रियः पुरुप्रियः। समासस्येत्यंतोदात्तत्वं। धूमकेतुं। इषियुधींधीत्यादिना। उ॰ १. १४४.। धूमशब्दो मक्प्रत्ययांतोऽंतोदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। भाऋजीकं। ऋज गतिस्थानार्जनोपार्जनेषु। ऋजेश्च। उ॰ ४. २२.। इतीकन्प्रत्ययः। कित्त्वस्यानुवर्तनाद्गुणाभावः। भासः प्रकाशस्य ऋजीकः प्रार्जयिता। आद्युदात्तप्रकरणे दिवोदासादीनां छंदस्युपसंख्यानं। पा॰ ६. २. ९१. १.। इति पूर्वपदाद्युदात्तत्वं। यद्वा। भासोऽर्जनं यस्मिन्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। व्युष्टिषु। उछी विवासे। विवासो वर्जनं। विशेषेणोच्छ्यंते तमसा वर्ज्यंत इति व्युष्टय उषःकालाः। कर्मणि क्तिन्। तितुत्रेत्यादिनेट्प्रतिषेधः। व्रश्चादिना षत्वे ष्टुत्वं। तादौ चेति पूर्वपदप्रकृतिस्वरत्वं। यणादेश उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं। अध्वरश्रियं। अध्वरं श्रयत इत्यध्वरश्रीः। क्विब्वचीत्यादिना। उ॰ २. ५७.। क्विप्प्रत्ययः। तत्संनियोगेन संप्रसारणाभावो दीर्घश्च। द्वितीयैकवचनेऽचि श्नुधात्वित्यादिनेयङादेशः॥

श्रेष्ठं॒ यवि॑ष्ठ॒मति॑थिं॒ स्वा॑हुतं॒ जुष्टं॒ जना॑य दा॒शुषे॑।
दे॒वाँ अच्छा॒ यात॑वे जा॒तवे॑दसम॒ग्निमी॑ळे॒ व्यु॑ष्टिषु ॥४॥
श्रेष्ठं॑। यवि॑ष्ठं। अति॑थिं। सुऽआ॑हुतं। जुष्टं॑। जना॑य। दा॒शुषे॑।
दे॒वान्। अच्छ॑। यात॑वे। जा॒तऽवे॑दसं। अ॒ग्निं। ई॒ळे॒। विऽउ॑ष्टिषु ॥४॥

व्युष्टिषूषःकालेषु देवान् इतरान्सर्वदेवानच्छाभिमुख्येन यातवे गंतुमग्निं देवमीळे। स्तौमि। कीदृशं। श्रेष्ठमतिशयेन प्रशस्तं यविष्ठं युवतमं अतिथिं सततगमनक्षमं स्वाहुतं सुष्ठु आ समंताद्धोमाधिकरणं दाशुषे हविर्दत्तवते जनाय यजमानाय जुष्टं प्रीतं जातवेदसं जातानां वेदितारं॥ यविष्ठं। युवशब्दादिष्ठनि स्थूलदूरेत्यादिना यणादेः परस्य लोपः। पूर्वस्य च गुणः। अवादेशः। नित्त्वादाद्युदात्तत्वं। अतिथिं। अत सातत्यगमने। ऋतन्यंजीत्यादिना। उ॰ ४. २.। इथिन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं। स्वाहुतं। हु दानादनयोः। आहूयतेऽस्मिन्नित्याहुतः। सुः पूजायां। पा॰ १. ४. ९४.। इति सुशब्दस्य कर्मप्रवचनीयसंज्ञायां सत्यां पूजायां

। पा॰ २. २. १८.*। इति समासः। अव्ययपूर्वपदप्रकृतिस्वरत्वं। न च गतिकारकोपपदात्कृदिति गतेः प्रकृतिस्वरत्वं। अस्य सुशब्दस्य गतिसंज्ञाया बाधितत्वात्॥

स्तविष्यामि त्वामहं विश्वस्यामृत भोजन।
अग्ने त्रातारममृतं मियेध्य यजिष्ठं हव्यवाहन ॥५॥
स्तविष्यामि। त्वां। अहं। विश्वस्य। अमृत। भोजन।
अग्ने। त्रातारं। अमृतं। मियेध्य। यजिष्ठं। हव्यऽवाहन ॥५॥

हे अमृत मरणरहित विश्वस्य भोजन कृत्स्नस्य जगतः पालक हव्यवाहन हविषो वोढः मियेध्य यज्ञार्ह एवंविध हे अग्ने विश्वस्य त्रातारं सर्वस्य जगतो रक्षकममृतं मरणरहितं यजिष्ठमतिशयेन यष्टारं त्वामहमनुष्ठाता स्तविष्यामि। स्तुतिकरिष्यामि॥ स्तविष्यामि। ष्टुञ् स्तुतौ। व्यत्ययेनेडागमः। आगमानुदात्तत्वे प्रत्ययस्वरः। भोजन। कर्मफलं भोजयतीति भोजनः। नंद्यादिलक्षणो ल्युः। त्रातारं। त्रैङ् पालने। आदेच इत्यात्वं। तृच्येकाच उपदेश इतीट्प्रतिषेधः। अमृतं। नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं। मियेध्य। इयागमश्छांदसः। यजिष्ठं। यष्टृशब्दात्तुश्छंदसीतीष्ठन्प्रत्ययः। तुरिष्ठेमेयःस्विति तृलोपः॥ ॥२८॥

सुशंसो बोधि गृणते यविष्ठ्य मधुजिह्वः स्वाहुतः।
प्रस्कण्वस्य प्रतिरन्नायुर्जीवसे नमस्या दैव्यं जनं ॥६॥
सुऽशंसः। बोधि। गृणते। यविष्ठ्य। मधुऽजिह्वः। सुऽआहुतः।
प्रस्कण्वस्य। प्रऽतिरन्। आयुः। जीवसे। नमस्य। दैव्यं। जनं ॥६॥

हे यविष्ठ्य युवतमाग्ने त्वं गृणते स्तुवते यजमानार्थं सुशंसः सुष्ठु शंसनीयो मधुजिह्वो मादयितृज्वालः स्वाहुतः सुष्ठु आभिमुख्येन हुतः सन् बोधि। अस्मदभिप्रायं बुध्यस्व। किंच प्रस्कण्वस्यैतन्नामकस्य कण्वपुत्रस्य महर्षेः। प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवः। नि॰ ३. १७.। इति यास्कवचनात्। तस्य जीवसे दीर्घमायुः प्रतिरन् प्रकर्षेण वर्धयन्दैव्यं देवसंबंधिनं जनं नमस्य। पूजय॥ सुशंसः। शंसु स्तुतौ। भावे घञ्। शोभनः शंसो यस्यासौ सुशंसः। आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। बोधि। बुध अवगमने। लोटो हिः। बहुलं छंदसीति विकरणस्य लुक्। हुझल्भ्यो हेर्धिरिति हेर्धिरादेशः। वा छंदसीत्यपित्त्वस्य विकल्पितत्वाल्लघूपधगुणः। धातोरंत्यलोपश्छांदसः। गृणते। गॄ शब्दे। लटः शतृ। क्र्यादिभ्यः श्ना। श्नाभ्यस्तयोरात इत्याकारलोपः। शतुरनुम इति विभक्तेरुदात्तत्वं। यविष्ठ्य। गतं। प्रस्कण्वस्य। प्रभूतिरुत्पत्तिः कण्वाद्यस्य स प्रस्कण्वः। प्रस्कण्वहरिश्चंद्रावृषी। पा॰ ६. १. १५३.। इति सुडागमो निपातितः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। प्रतिरन्। प्रपूर्वस्तिरतिर्वर्धनार्थः। नमस्य। नमोवरिवश्चित्रङः क्यजिति पूजार्थे क्यच्। प्रत्ययस्वरः। अन्येषामपि दृश्यत इति संहितायां दीर्घत्वं। दैव्यं। देवाद्यञञौ। पा॰ ४. १. ८५. ३.। इति तस्येदमित्यर्थे प्राग्दीव्यतीयो यञ्प्रत्ययः॥

होतारं विश्ववेदसं सं हि त्वा विश इंधते।
स आ वह पुरुहूत प्रचेतसोऽग्ने देवाँ इह द्रवत् ॥७॥
होतारं। विश्वऽवेदसं। सं। हि। त्वा। विशः। इंधते।
सः। आ। वह। पुरुऽहूत। प्रऽचेतसः। अग्ने। देवान्। इह। द्रवत् ॥७॥

होतारं होमनिष्पादकं विश्ववेदसं सर्वज्ञं त्वामग्निं विशः प्रजाः समिंधते हि। सम्यग्दीपयंति खलु। हे

पुरुहूत बहुभिराहूताग्ने स त्वं प्रचेतसः प्रकृष्टज्ञानयुक्तान्देवानिह कर्मणि द्रवत् क्षिप्रमा वह । आभिमुख्येन प्रापय । द्रवदिति क्षिप्रनाम । द्रवदोषमिति तन्नामसु पाठात् ॥ विश्ववेदसं । विश्वानि वेत्तीति विश्ववेदाः । असुन् । मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं । यद्वा । वेद इति धननाम । विश्वानि वेदांसि यस्यासौ विश्ववेदाः । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं । इंधते । ञिइन्धी दीप्तौ । श्नसोरल्लोप इत्यकारलोपः । श्नान्नलोपः । पा० ६. ४. २३. । प्रत्ययस्वरः । हि चेति निघातप्रतिषेधः ॥

सवितारमुषसमश्विना भगमग्निं व्युष्टिषु क्षपः ।
कण्वासस्त्वा सुतसोमास इंधते हव्यवाहं स्वध्वर ॥ ८ ॥
सवितारं । उषसं । अश्विना । भगं । अग्निं । विऽउष्टिषु । क्षपः ।
कण्वासः । त्वा । सुतऽसोमासः । इंधते । हव्यऽवाहं । सुऽअध्वर ॥ ८ ॥

हे स्वध्वर शोभनयागयुक्ताग्ने व्युष्टिषूषःकालेषु क्षपो ऽन्नमाहुतिरूपमभिलक्ष्य सवित्रादीन्देवानावहेत्यनुवर्तते । स्वध्वरेत्याहवनीयाग्नेः संबोधनं । अग्निमिति हविष उद्देश्यं देवतांतरमुच्यते । सुतसोमासो ऽभिषुतसोमाः कण्वासो मेधाविन ऋत्विजो हव्यवाहं हविषः प्रापकमाहवनीयं त्वामिंधते । दीपयंति ॥ व्युष्टिषु । उच्छी विवासे । विवासो वर्जनं । व्युच्छ्यते तमसा वर्ज्यत इति व्युष्टिरुषःकालः । कर्मणि क्तिनि तादौ च नितीति गतेः प्रकृतिस्वरत्वं । संहितायामुदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं । क्षपः । क्षपेति रात्रिनाम । ङस्यातो धातोः । पा० ६. ४. १४०. । इत्यत्रातं इति योगविभागादाकारलोपः । सुतसोमासः । सुतः सोमो यैः । निष्ठेति पूर्वनिपातः । पा० २. २. ३६. । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । हव्यवाहं । हव्यं वहतीति हव्यवाट् । वहश्चेति ण्विप्रत्ययः ॥

पतिर्ह्यध्वराणामग्ने दूतो विशामसि ।
उषर्बुध आ वह सोमपीतये देवाँ अद्य स्वर्दृशः ॥ ९ ॥
पतिः । हि । अध्वराणां । अग्ने । दूतः । विशां । असि ।
उषःऽबुधः । आ । वह । सोमऽपीतये । देवान् । अद्य । स्वःऽदृशः ॥ ९ ॥

हे अग्ने विशां प्रजानां संबंधिनो ये ऽध्वरा यागास्तेषां पतिः पालकस्त्वं दूतो ऽसि हि । देवानां वार्त्ताहारो भवसि खलु । उषर्बुध उषःकाले प्रबुद्धान् स्वर्दृशः सूर्यदर्शिनो देवानद्यास्मिन्दिने सोमपीतये सोमपानार्थमा वह । आभिमुख्येन प्रापय ॥ असि । हि चेति निघातप्रतिषेधः । सोमपीतये । पा पाने । स्थागापापचो भाव इति भावे क्तिन् । घुमास्थेतीत्वं । सोमस्य पीतिः । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं । स्वर्दृशः । सुष्ठ्वर्तिं गच्छतीति स्वरादित्यः । अन्येभ्यो ऽपि दृश्यंत इति विच् । तं पश्यंतीति स्वर्दृशः । क्विन्चेति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

अग्ने पूर्वा अनूषसो विभावसो दीदेथ विश्वदर्शतः ।
असि ग्रामेष्ववि‍ता पुरोहितो ऽसि यज्ञेषु मानुषः ॥ १० ॥
अग्ने । पूर्वाः । अनु । उषसः । विभावसो इति विभाऽवसो । दीदेथ । विश्वऽदर्शतः ।
असि । ग्रामेषु । अविता । पुरःऽहितः । असि । यज्ञेषु । मानुषः ॥ १० ॥

हे विभावसो विशिष्टप्रकाशनरूपधनवन्नग्ने विश्वदर्शतः सर्वैर्दर्शनीयस्त्वं पूर्वा उषसो ऽनु अतीतानुषःकालाननुलक्ष्य दीदेथ । दीप्तवानसि । तादृशस्त्वं ग्रामेषु जननिवासस्थानेष्ववितासि । रक्षको भवसि । यज्ञेष्वनुष्ठेयकर्मसु पुरोहितो वेदेः पूर्वस्यां दिश्यवस्थितो मानुषो ऽसि । ऋत्विग्यजमानानां मनुष्याणां हितो ऽसि ॥

दीदेथ। दीदेतिश्छांदसो दीप्तिकर्मा। आगमानुशासनस्यानित्यत्वादिडभावः। द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यं। का॰ ६. १. ८. १.। इति वचनाद्द्विर्वचनाभावः। विश्वदर्शतः। विश्वैर्दर्शनीयः। भृमृदृशीत्यादिना दृशे-रतच्। मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं। पा॰ ६. २. १०६. २.। पुरोहितः। पूर्वाधरावराणामसि पुरधवश्चै-षामित्यसिप्रत्ययांतः पुरस्शब्दः। तद्धितश्चासर्वविभक्तिरित्यव्ययत्वात् पुरोऽव्ययं। पा॰ १. ४. ६७.। इति गति-संज्ञायां सत्यां गतिसमासे गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्वं॥ ॥२९॥

नि त्वा॑ य॒ज्ञस्य॒ साध॑नमग्ने॒ होता॑रमृ॒त्विजं॑।
म॒नु॒ष्वद्दे॑व धीमहि॒ प्रचे॑तसं जी॒रं दू॒तमम॑र्त्यं॥ ११॥
नि। त्वा॒। य॒ज्ञस्य॑। साध॑नं। अग्ने॑। होता॑रं। ऋ॒त्विजं॑।
म॒नु॒ष्वत्। दे॒व॒। धी॒म॒हि॒। प्रऽचे॑तसं। जी॒रं। दू॒तं। अम॑र्त्यं॥ ११॥

हे अग्ने देव मनुष्वत् यथा मनुर्यागदेशे निदधाति तद्वद्वयं त्वां नि धीमहि। अत्र स्थापयामः। कीदृशं। यज्ञस्य साधनं यज्ञनिष्पादकं होतारमृत्विजं ऋतौ वसंतादिके यष्टारं प्रचेतसं प्रकृष्टज्ञानयुक्तं जीरं शत्रूणां वयोहानिकरं दूतं देवानां दूतस्थानीयं अमर्त्यं मरणरहितं॥ मनुष्वत्। औणादिकोसिप्रत्ययांतो मनुस्शब्दः। तेन तुल्यं क्रिया चेद्वतिः। पा॰ ५. १. ११५.। इति वतिप्रत्ययः। अयस्मयादित्वेन भत्वाद्रुत्वाद्यभावः। धीमहि। डुधाञ् धारणपोषणयोः। लिङ्यभ्यासलोपश्छांदसः। जीरं। जु इति सौत्रो धातुः। जोरी च। उ॰ २. २३.। इति रक्प्रत्ययः। कात्यायनस्त्वाह। रकि ज्यः संप्रसारणे जीर इति॥

यद्दे॒वानां॑ मित्रमहः पु॒रोहि॑तो॒ऽन्त॑रो॒ यासि॑ दू॒त्यं॑।
सिंधो॑रिव॒ प्रस्व॑नितास ऊ॒र्मयो॒ऽग्नेर्भ्रा॑जंते अ॒र्चयः॑॥ १२॥
यत्। दे॒वानां॑। मि॒त्र॒ऽम॒हः॒। पु॒रःऽहि॑तः। अंत॑रः। यासि॑। दू॒त्यं॑।
सिंधोः॑ऽइव। प्रऽस्व॑नितासः। ऊ॒र्मयः॑। अ॒ग्नेः। भ्रा॒जं॒ते॒। अ॒र्चयः॑॥ १२॥

हे मित्रमहो मित्राणां पूजकाग्ने यद्यदा पुरोहितस्त्वं वेदेः पूर्वस्यां दिशि स्थापितोऽंतरो देवयजनमध्ये वर्तमानः सन् देवानां दूत्यं दूतकर्म यासि प्राप्नोषि तदानीमग्नेस्तवार्चयो दीप्तयो भ्राजंते। दीप्यंते। तत्र दृष्टांतः। सिंधोरिव यथा समुद्रस्य प्रस्वनितासः प्रकृष्टध्वनियुक्ता ऊर्मयस्तरंगा भ्राजंते तद्वत्॥ मित्रमहः। मह पूजायां। मित्रैर्ऋत्विग्भिर्मह्यते पूज्यत इति मित्रमहाः। औणादिकोऽसुन्। यासि। यद्वृत्तयोगात् निघातः। दूत्यं। दूतस्य कर्म दूत्यं। दूतस्य भागकर्मणी। पा॰ ४. ४. १२०.। इति यत्प्रत्ययः। सर्वे विधयश्छंदसि विकल्प्यंत इति वचनाद्यतोऽनाव इत्याद्युदात्तत्वाभावे तित्स्वरितमिति स्वरितत्वं। [illegible]। स्वनु स्वन ध्वन शब्दे। भावे निष्ठा। प्रकृष्टं स्वनितं येषां ते प्रस्वनिताः। असुगागमः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। ऊर्मयः। अर्तेरूच्च। उ॰ ४. ४४.। इति मिप्रत्ययः॥

श्रु॒धि श्रु॑त्कर्ण॒ वह्नि॑भिर्दे॒वैर॑ग्ने स॒याव॑भिः।
आ सी॑दंतु ब॒र्हिषि॑ मि॒त्रो अ॑र्य॒मा प्रा॑त॒र्यावा॑णो अध्व॒रं॥ १३॥
श्रु॒धि। श्रु॑त्ऽक॒र्ण॒। वह्नि॑ऽभिः। दे॒वैः। अग्ने॑। स॒याव॑ऽभिः।
आ। सी॒दं॒तु॒। ब॒र्हिषि॑। मि॒त्रः। अ॒र्य॒मा। प्रा॒तः॒ऽयावा॑नः। अ॒ध्व॒रं॥ १३॥

हे श्रुत्कर्ण श्रवणसमर्थाभ्यां कर्णाभ्यां युक्ताग्ने श्रुधि। अस्मदीयं वचनं शृणु। यो मित्रो देवो यश्चार्यमा ये चान्ये प्रातर्यावाणः प्रातःकाले देवयजनं गच्छंतो देवास्तैः सर्वैः सयावभिराहवनीयाग्निना त्वया समानगति-

भिरन्यैर्वह्निभिर्देवैः सहाध्वरं क्रतुमुद्दिश्य बर्हिषि दर्भे आ सीदंतु । उपविशंतु ॥ श्रुधि । श्रु श्रवणे । श्रुशृणुपृकृवृभ्य इत्यादिना हेर्धिरादेशः । बहुलं छंदसीति विकरणस्य लुक् । श्रुत्कर्णाः । शृणोतीति श्रुत् । क्विपि तुगागमः । श्रुतौ कर्णौ यस्यासौ श्रुत्कर्णः । वह्निभिः । वह प्रापणे । वह्निश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् इति निप्रत्ययः । नित्त्वादाद्युदात्तत्वं । सयावभिः । समानं यांतीति सयावानः । या प्रापणे । आतो मनिन्निति वनिप् । कृदुत्तरपदप्रकृतिस्वरत्वं । प्रातर्यावाणः । पूर्ववत् । प्रातिपदिकांतनुम्विभक्तिषु च । पा॰ ८. ४. ११. । इति णत्वं ॥

शृण्वंतु स्तोमं मरुतः सुदानवोऽग्निजिह्वा ऋतावृधः ।
पिबंतु सोमं वरुणो धृतव्रतोऽश्विभ्यामुषसा सजूः ॥१४॥
शृण्वंतु । स्तोमं । मरुतः । सुऽदानवः । अग्निऽजिह्वाः । ऋतऽवृधः ।
पिबंतु । सोमं । वरुणः । धृतऽव्रतः । अश्विऽभ्यां । उषसा । सऽजूः ॥१४॥

मरुतो देवाः स्तोममस्मदीयं स्तोत्रं शृण्वंतु । कीदृशाः । सुदानवः सुष्ठु फलस्य दातारः अग्निजिह्वा अग्निर्जिह्वास्थानीयो मुख्यो येषु मरुत्सु तादृशाः ऋतावृधः सत्यस्य यज्ञस्य वा वर्धकाः । तथा धृतव्रतो गृहीतकर्मा वरुणो देवोऽश्विभ्यां देवाभ्यामुषसा देवतया सजूः सह सोमं पिबतु ॥ सुदानवः । डुदाञ् दाने । दाभाभ्यां नुः । उ॰ ३. ३२. । इति भावे नुप्रत्ययः । दानुशब्द आद्युदात्तः । शोभनं दानु येषां । आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं । अग्निजिह्वाः । अग्नेर्जिह्वायामवस्थिता हविर्भाज इत्यर्थः । तात्स्थ्यात ताच्छब्द्यं । अग्निर्जिह्वास्थानीयो येषां ते । छांदसमंतोदात्तत्वं । ऋतावृधः । ऋतस्य सत्यस्य यज्ञस्य वा वर्धयितारः । वृधेरंतर्भावितण्यर्थात् क्विच्चेति क्विप् । अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घत्वं ॥ ॥ ३० ॥

त्वमग्ने वसूनिति द्व्यृचं द्वितीयं सूक्तं । अत्रानुक्रमणिका । त्वमग्ने द्व्यृचानुष्टुभमर्धर्चोऽन्त्यो दैव इति । प्रस्कण्व ऋषिः । आनुष्टुभं छंदः । इदं सूक्तमग्निदेवताकं । पूर्वर्चाग्नेयं लिंगोक्तत्वात् । अयं सोम इत्यर्धर्चो देवदेवत्यः ॥ प्रातरनुवाक आग्नेये क्रतावाश्विनशस्त्रे चैतत्सूक्तं । अथैतस्या रात्रेरिति खंडे सूचितं । त्वमग्ने वसूंस्त्वं हि चैतवत् । आ॰ ४. १३. । इति ॥ तथा गर्गत्रिरात्रस्यांत्येऽहन्येतत्सूक्तमाज्यशस्त्रं । आंगिरसं स्वर्गकाम इति खंडे सूचितं । वारवंतीयमुत्तमे त्वमग्ने वसूँरिति चाज्यं । आ॰ १०. २. । इति ॥

त्वमंग्ने वसूँरिह रुद्राँ आदित्याँ उत । यजा स्वध्वरं जनं मनुजातं घृतप्रुषं ॥१॥
त्वं । अग्ने । वसून् । इह । रुद्रान् । आदित्यान् । उत । यज । सुऽअध्वरं । जनं ।
मनुऽजातं । घृतऽप्रुषं ॥१॥

हे अग्ने त्वमिह कर्मणि वस्वादीन्यज । उतापि च जनमन्यमपि देवताकं प्राणिनं यज । कीदृशं । स्वध्वरं शोभनयागयुक्तं मनुजातं मनुना प्रजापतिनोत्पादितं घृतप्रुषमुदकस्य सेक्तारं ॥ यज । द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं । स्वध्वरं । शोभनोऽध्वरो यस्यासौ स्वध्वरः । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । मनुजातं । जनेरंतर्भावितण्यर्थात्कर्मणि क्तः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । घृतप्रुषं । प्रुष प्लुष स्नेहनसेचनपूरणेषु । घृतेनोदकेन प्रुष्णाति पूरयतीति घृतप्रुट् । क्विच्चेति क्विप् ॥

श्रुष्टीवानो हि दाशुषे देवा अग्ने विचेतसः ।
तान्रोहिदश्व गिर्वणस्त्रयस्त्रिंशतमा वह ॥२॥
श्रुष्टीऽवानः । हि । दाशुषे । देवाः । अग्ने । विऽचेतसः ।
तान् । रोहित्ऽअश्व । गिर्वणः । त्रयःऽत्रिंशतं । आ । वह ॥२॥

हे अग्ने विचेतसो विशिष्टप्रज्ञाना देवा दाशुषे हविर्दत्तवते यजमानाय श्रुष्टीवानो हि । श्रुष्टिः फलस्य

दानं। तद्भाजः खलु। हे रोहिदश्व रोहिन्नामकैरश्वैरुपेत गिर्वणो गीर्भिः स्तुतिभिर्वननीयाग्ने। गिर्वणा देवो भवति गीर्भिरेनं वनयंति। नि० ६. १४.। इति यास्कः। त्रयस्त्रिंशतमनया संख्यया संख्यातांस्तान्देवाना वह। इहानय॥ श्रुष्टीवानः। श्रुष्टिः प्रेरणार्थः। भावे क्तिच्। श्रुष्टिं वनंति संभजंत इति श्रुष्टीवानः। अन्येभ्योऽपि दृश्यंत इति विच्। छांदसं दीर्घत्वं। विचेतसः। विशिष्टं चेतो येषां ते। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। गिर्वणः। गीर्भिर्वननीयो गिर्वणाः। वनतेरसुन्। पूर्वपदस्य ह्रस्वत्वं छांदसं। त्रयश्च त्रिंशच्च त्रयस्त्रिंशत्। त्रेस्त्रयः। पा० ६. ३. ४८.। इति त्रिशब्दस्य त्रयसादेशः। संख्या। पा० ६. २. ३५.। इति पूर्वपदप्रकृतिस्वरत्वं॥

प्रियमेधवदत्रिवज्जातवेदो विरूपवत्। अंगिरस्वन्महिव्रत प्रस्कण्वस्य श्रुधी हवं॥३॥

प्रियमेधऽवत्। अत्रिऽवत्। जातऽवेदः। विरूपऽवत्। अंगिरस्वत्। महिऽव्रत। प्रस्कण्वस्य। श्रुधि। हवं॥३॥

हे महिव्रत प्रभूतकर्मन् जातवेदोऽग्ने प्रस्कण्वस्य कण्वपुत्रस्य महर्षेर्हवमाह्वानं श्रुधि। शृणु। तत्र चत्वारो दृष्टांताः। प्रियमेधात्रिविरूपांगिरोनामका एतेषामाह्वानं यथा शृणोषि तद्वत्। अत्र निरुक्तं। प्रियमेधः प्रिया अस्य मेधा यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानं। प्रस्कण्वः कण्वस्य पुत्रः कण्वप्रभवो यथा प्राग्रमिति। विरूपो नानारूपो महिव्रतो महाव्रत इति च। नि० ३. १७.॥ प्रियमेधवत्। प्रियमेधस्येव। तत्र तस्येव। पा० ५. १. ११६.। इति षष्ठ्यर्थे वतिः। एवमत्रिवदित्यादावपि। प्रस्कण्वादयो गताः॥

महिकेरव ऊतये प्रियमेधा अहूषत। राजंतमध्वराणामग्निं शुक्रेण शोचिषा॥४॥

महिऽकेरवः। ऊतये। प्रियऽमेधाः। अहूषत। राजंतं। अध्वराणां। अग्निं। शुक्रेण। शोचिषा॥४॥

महिकेरवः प्रौढकर्माणः प्रियमेधाः प्रियेण यज्ञेनोपेता ऋषय ऊतये रक्षार्थमग्निमह्वषत। आहूतवंतः। कीदृशं। अध्वराणां यज्ञानां मध्ये शुक्रेण शोचिषा शुक्लेन प्रकाशेन राजंतं दीप्यमानं॥ महिकेरवः। मह पूजायां। औणादिक इन्प्रत्ययः। डुकृञ् करणे। कृवापाजीत्युण्। महयो महांतः कारवो येषां ते तथोक्ताः। आकारस्यैकारादेशश्छांदसः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। प्रियमेधाः। प्रियो मेधो येषां ते। अह्वषत। ह्वेञ् स्पर्धायां शब्दे च। लुङि सिचि बहुलं छंदसीति संप्रसारणं। परपूर्वत्वं। हल इति दीर्घत्वं। आदेशप्रत्ययोरिति षत्वं॥

घृताहवन संत्येमा उ षु श्रुधी गिरः। याभिः कण्वस्य सूनवो हवंतेऽवसे त्वा॥५॥

घृतऽआहवन। संत्य। इमाः। ऊं इति। सु। श्रुधि। गिरः। याभिः। कण्वस्य। सूनवः। हवंते। अवसे। त्वा॥५॥

हे घृताहवन घृतेनाहूयमान संत्य फलप्रदाग्ने इमा उ गिरोऽस्माभिः प्रयुज्यमाना अपि स्तोत्ररूपा वाचः सु श्रुधि। सुष्ठु शृणु। कण्वस्य महर्षेः सूनवः पुत्रा याभिर्गीर्भिरवसे रक्षार्थं त्वा हवंते त्वामाह्वयंति॥ घृताहवन। घृतेनाहूयतेऽस्मिन्निति घृताहवनः। अधिकरणे ल्युट्। आमंत्रिताद्युदात्तत्वं। श्रुधि। श्रुशृणुपॄकृवृभ्यश्छंदसीति हेर्धिरादेशः। बहुलं छंदसीति विकरणस्य लुक्॥ ॥३१॥

अश्वमेधे पौष्णामिष्टौ स्विष्टकृतोऽनुवाक्या त्वां चित्रश्रवस्तमेत्येषा। सर्वान्कामानाप्स्यन्निति खंडे सूत्रितं। त्वां चित्रश्रवस्तम यद्वाहिष्ठं तदग्नये। आ० १०. ६.। इति॥

त्वां चित्रश्रवस्तम हवंते विक्षु जंतवः। शोचिष्केशं पुरुप्रियाग्ने हव्याय वोळ्हवे॥६॥

त्वां। चित्रश्रवःऽतम। हवंते। विक्षु। जंतवः। शोचिःऽकेशं। पुरुऽप्रिय। अग्ने। हव्याय। वोळ्हवे॥६॥

हे चित्रश्रवस्तमातिशयेन विविधहवीरूपान्नयुक्त पुरुप्रिय बहूनां यजमानानां प्रीतिकराग्ने त्वां हव्याय वोळ्हवे हविर्वोढुं विक्षु जंतवः प्रजासूत्पन्ना यजमाना हवंते। आह्वयंति। कीदृशं। शोचिष्केशं दीप्तिरूपकेशोपेतं। तथा च वाजसनेयिन आमनंति। शोचंत इव ह्येतस्य समिद्धस्य रश्मयः केशा इति॥ चित्रश्रवस्तम। श्रव इत्यन्ननाम। चित्रं श्रवो यस्यासौ चित्रश्रवाः। अतिशयेन चित्रश्रवाश्चित्रश्रवस्तमः। आमंत्रितानुदात्तत्वं। शोचिष्केशं। शुच दीप्तौ। अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः। उ० २. १०९.। इतीसिः। प्रत्ययस्वरः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। हव्याय। हवनक्रियया प्राप्यत्वात् क्रियाग्रहणं कर्तव्यमिति संप्रदानत्वाच्चतुर्थी। वोळ्हवे। वह प्रापणे। तुमर्थे सेसेनिति तवेन्प्रत्ययः। ढलधत्वष्टुत्वढलोपेषु कृतेषु सहिवहोरोदवर्णस्य। पा० ६. ३. ११२.। इत्यकारस्यौकारः। नित्त्वादाद्युदात्तत्वं॥

नि त्वा होतारमृत्विजं दधिरे वसुवित्तमं।
श्रुत्कर्णं सप्रथस्तमं विप्रा अग्ने दिविष्टिषु॥७॥
नि। त्वा। होतारं। ऋत्विजं। दधिरे। वसुवित्ऽतमं।
श्रुत्ऽकर्णं। सप्रथःऽतमं। विप्राः। अग्ने। दिविष्टिषु॥७॥

हे अग्ने विप्रा मेधाविनो दिविष्टिषु यागेषु त्वां नि दधिरे। स्थापितवंतः। कीदृशं। होतारमाह्वातारं ऋत्विजमृतुषु यजनशीलं वसुवित्तममतिशयेन धनस्य लंभयितारं श्रुत्कर्णं श्रवणयोग्यकर्णोपेतं सप्रथस्तममतिशयेन प्रख्यातं॥ दधिरे। इरेचश्चित्त्वादंतोदात्तत्वं। पादादित्वान्निघाताभावः। दिविष्टिषु। इष्टय एषणानि। दिवः स्वर्गस्यैषणानि येषु यागेषु ते दिविष्टयः। सर्वे विधयश्छंदसि विकल्प्यंत इति वचनाद्दिव उत्। पा० ६. १. १३१.। इत्युत्वं न क्रियते। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥

आ त्वा विप्रा अचुच्यवुः सुतसोमा अभि प्रयः।
बृहद्भा बिभ्रतो हविरग्ने मर्ताय दाशुषे॥८॥
आ। त्वा। विप्राः। अचुच्यवुः। सुतऽसोमाः। अभि। प्रयः।
बृहत्। भाः। बिभ्रतः। हविः। अग्ने। मर्ताय। दाशुषे॥८॥

हे अग्ने सुतसोमा अभिषुतसोमयुक्ता विप्रा मेधाविन ऋत्विजः प्रयोऽभि हविर्लक्षणमन्नमभिलक्ष्य त्वा आचुच्यवुः। त्वामागमयंति। कीदृशं त्वां। बृहन्महांतं भा भासमानं। कीदृशा विप्राः। दाशुषे मर्ताय हविष्प्रदस्य यजमानस्य संबंधि हविर्बिभ्रतो धारयंतः॥ अचुच्यवुः। च्युङ् गतौ। अस्मादंतर्भावितण्यर्थात् लङि व्यत्ययेन परस्मैपदं। बहुलं छंदसीति शपः श्लुः। सिजभ्यस्तविदिभ्यश्च। पा० ३. ४. १०९.। इति झेर्जुसादेशः। जुसि च। पा० ७. ३. ८३.। इति गुणः। बृहत्। भाः। उभयत्र सुपां सुलुगिति विभक्तेर्लुक्। बिभ्रतः। डुभृञ् धारणपोषणयोः। शतरि नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः। अभ्यस्तानामादिरित्याद्युदात्तत्वं। मर्ताय दाशुषे। उभयत्र षष्ठ्यर्थे चतुर्थी वक्तव्या। पा० २. ३. ६२. १.। इति चतुर्थी॥

प्रातर्याव्णः सहस्कृत सोमपेयाय संत्य। इहाद्य दैव्यं जनं बर्हिरा सादया वसो॥९॥
प्रातःऽयाव्नः। सहःऽकृत। सोमऽपेयाय। संत्य। इह। अद्य। दैव्यं। जनं। बर्हिः।
आ। सादय। वसो इति॥९॥

हे सहस्कृत बलेन मथित संत्य फलदातर्वसो निवासहेतुभूताग्ने इह देवयजनदेशेऽद्यास्मिन्दिने सोमपेयाय सोमपानार्थं प्रातर्याव्णः प्रातरागच्छतो देवान् दैव्यं जनमन्यमपि देवताजनं बर्हिरा सादय। यज्ञं प्रापय॥ प्रातर्याव्णः। अल्लोपोऽन इत्यकारलोपः। सहस्कृत। सहतेऽभिभवत्यनेनेति सहो बलं। तेन क्रियत इति सहस्कृतः। ओजःसहोऽंभस्तमसस्तृतीयायाः। पा० ६. ३. ३.। इत्यलुगभावश्छांदसः॥

अर्वांचं दैव्यं जनमग्ने यक्ष्व सहूतिभिः ।
अयं सोमः सुदानवस्तं पात तिरोअह्न्यं ॥१०॥
अर्वांचं । दैव्यं । जनं । अग्ने । यक्ष्व । सहूतिऽभिः ।
अयं । सोमः । सुऽदानवः । तं । पात । तिरःऽअह्न्यं ॥१०॥

हे अग्ने अर्वांचमभिमुखं दैव्यं जनं देवतारूपं प्राणिनं सहूतिभिः समानाह्वानैर्देवांतरैः सह यक्ष्व । यज । हे सुदानवः सुष्ठु फलदातारो देवाः अयं सोमो युष्मदर्थं सोमः पुरतो वर्तते । तं सोमं पात । पिबत । कीदृशं । तिरोअह्न्यमेतन्नामकं । पूर्वस्मिन्नह्न्यभिषुतो यः सोम उत्तरेऽहनि हूयते तस्यैतन्नामधेयं ॥ दैव्यं । [illegible]विति प्राग्दीव्यतीयो यञ् । यक्ष्व । लोटि बहुलं छंदसीति शपो लुक् । प्रत्ययस्वराभावश्छांदसः । अग्न इत्यस्य पादादौ वर्तमानस्यामंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वात् तिङ्ङतिङ इति निघाताभावः । सहूतिभिः । समानाहूतिराह्वानं येषां ते सहूतयः । समानस्य च्छंदसीति सभावः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । पात । पा पाने । बहुलं छंदसीति शपो लुक् । तिरोअह्न्यं । अहनि भवमह्न्यं । भवे छंदसीति यत् । नस्तद्धित इति टिलोपो न भवति अह्नष्टखोरेव । पा० ६. ४. १४५. । इति नियमात् । भसंज्ञायामल्लोपोऽन इत्यकारलोपः । ये चाभावकर्मणोः । पा० ६. ४. १६८. । इति प्रकृतिभावस्तु सर्वविधीनां छंदसि विकल्पितत्वान्न क्रियते । तिरोहितोऽह्न्यस्तिरोअह्न्यः । प्रकृत्यांतःपादमिति प्रकृतिभावः । अव्ययपूर्वपदप्रकृतिस्वरत्वं ॥ ॥३२॥

एषो उषा इति पंचदशर्चं तृतीयं सूक्तं प्रस्कण्वस्यार्षं । इदमुत्तरं चाश्विनं गायत्रीच्छंदस्कं । अत्रानुक्रमणिका । एषो पंचोनाश्विनं तु गायत्रमिति ॥ प्रातरनुवाक आश्विने क्रतौ गायत्रीच्छंदस्याश्विनशस्त्रे चेदं सूक्तं । अथाश्विन एषो उषाः । आ० ४. १५. । इति सूत्रितं ॥

एषो उषा अपूर्व्या व्युच्छति प्रिया दिवः । स्तुषे वामश्विना बृहत् ॥१॥
एषो इति । उषाः । अपूर्व्या । वि । उच्छति । प्रिया । दिवः । स्तुषे । वां ।
अश्विना । बृहत् ॥१॥

एषो एषैवास्माभिः परिदृश्यमाना प्रिया सर्वेषां प्रीतिहेतुरपूर्व्या पूर्व्येषु मध्यरात्रादिकालेषु विद्यमाना न भवति किंत्विदानींतन्युषा उषोदेवता दिवो द्युलोकस्य सकाशादागत्य व्युच्छति । तमो वर्जयति । हे अश्विनौ वां युवां बृहत्प्रभूतं यथा भवति तथा स्तुषे । स्तौमि ॥ स्तुषे । ष्टुञ् स्तुतौ । तिङां तिङो भवंतीत्युत्तमैकवचनस्य मध्यमैकवचनादेशः । यद्वा । लेट्युत्तमैकवचने सिब्बहुलं लेटीति सिप् ॥

या दस्रा सिंधुमातरा मनोतरा रयीणां । धिया देवा वसुविदा ॥२॥
या । दस्रा । सिंधुऽमातरा । मनोतरा । रयीणां । धिया । देवा । वसुऽविदा ॥२॥

या देवा यावुभावश्विनौ वक्ष्यमाणगुणयुक्तौ तौ स्तुष इति पूर्वत्रान्वयः । कीदृशौ । दस्रा दस्रौ दर्शनीयौ सिंधुमातरा समुद्रमातृकौ । यद्यपि सूर्याचंद्रमसाविव समुद्रजौ तथाप्यश्विनोः केषांचिन्मते तद्रूपत्वात्तथात्वं । रयीणां धनानां मनोतरा मनसा [illegible] धिया कर्मणा वसुविदा निवासस्थानस्य लंभयितारौ ॥ मनोतरा । मनसा तरत इति मनोतरौ । तरतेरंतर्भावितण्यर्थात् ऋदोरबित्यप् । पूर्वपदांतस्य सकारस्य रुत्वे सति च्छांदसमुत्वं । रयीणां । नामन्यतरस्यामिति नाम उदात्तत्वं । धिया । सावेकाच इति विभक्तेरुदात्तत्वं । वसुविदा । वसूनि निवासस्थानानि विंदेते इति वसुविदौ । क्विब्वेति क्विप् ॥

वच्यंते वां ककुहासो जूर्णायामधि विष्टपि । यद्वां रथो विभिष्पतात् ॥३॥
वच्यंते । वां । ककुहासः । जूर्णायां । अधि । विष्टपि । यत् । वां । रथः । विऽभिः ।
पतात् ॥३॥

हे अश्विनौ वां युवयोः संबंधी रथो जूर्णायां नानाशास्त्रैः स्तुतायामधि विष्टपि स्वर्गलोके यद्यदा विभिरश्वैः पतात् पतति गच्छति तदानीं वां युवयोः ककुहासः स्तुतयो वच्यंते। अस्माभिरुच्यंते ॥ वच्यंते। ब्रवीतेर्यकि ब्रुवो वचिः। पा॰ २. ४. ५३.। इति वच्यादेशः। वचिस्वपीत्यादिना संप्रसारणं। संप्रसारणाच्चेत्यत्र वा छंदसीत्यनुवृत्तेः परपूर्वत्वस्य पाक्षिकत्वाद्यणादेशः। प्रत्ययस्वरः। ककुहासः। ककुभं शृंगे विद्धः प्रधाने चेत्यभिधानात् प्राधान्याभिधायिना ककुप्शब्देन तत्प्रतिपादिकाः स्तुतयो लक्ष्यंते। हत्वं छांदसं। आज्जसेरसुगित्यसुक्। जूर्णायां। जॄष् वयोहानौ। अत्र स्तुत्यर्थो धातूनामनेकार्थत्वात्। निष्ठायां श्र्युकः किततीतीट्प्रतिषेधः। बहुलं छंदसीत्युत्वं। हलि चेति दीर्घः। रदाभ्यामिति निष्ठानत्वं। पा॰ ८. २. ४२.। प्रत्ययस्वरः। विभिः। वी गत्यादौ। वियंति गच्छंतीति वयोऽश्वाः। औणादिको डिप्रत्ययः। पतात्। पत्लृ गतौ। लेट्याडागमः। इतश्च लोप इतीकारलोपः ॥

ह॒विषा॑ जा॒रो अ॒पां पि॑पर्ति॒ पपु॑रिर्नरा। पि॒ता कुट॑स्य चर्ष॒णिः ॥ ४॥
ह॒विषा॑। जा॒रः। अ॒पां। पि॑पर्ति। पपु॑रिः। न॒रा। पि॒ता। कुट॑स्य। च॒र्ष॒णिः ॥ ४॥

हे अश्विनौ देवौ अपां जारः स्वकीयतापेनोदकानां जरयिता सूर्यो हविषास्मद्दत्तेन पिपर्ति। देवान्पूरयति। उदिते सूर्ये हविःप्रदानात्सूर्यस्य पूरकत्वं द्रष्टव्यं। अतः सूर्योदयकाले युवाभ्यामागंतव्यमित्यर्थः। कीदृशो जारः। पपुरिरुक्तक्रमेण पूरणस्वभावः पिता पालकः कुटस्य चर्षणिः कर्मणो द्रष्टा। अत्र निरुक्तं। हविषापां जरयिता पिपर्ति पपुरिरिति पृणातिनिगमौ वा प्रीणातिनिगमौ वा पिता कृतस्य कर्मणश्चायितादित्यः। नि॰ ५. २४.। इति ॥ जारः। जरयतीति जार आदित्यः। दारजारौ कर्तरि णिलुक्च। पा॰ ३. ३. २०. ४.। इति घञंतो निपातितः। कर्षात्वत इत्यंतोदात्तत्वं। अपां। ऊडिदमिति विभक्तेरुदात्तत्वं। पिपर्ति। पॄ पालनपूरणयोः। तिपि जुहोत्यादित्वाच्छपः श्लुः। अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं। अनुदात्ते चेत्यभ्यस्तस्याद्युदात्तत्वं। पपुरिः। आदृगमहनेति किन्प्रत्ययः। लिड्वद्भावात्कित्त्वे सिद्धेऽपि पुनः कित्करणसामर्थ्यादृच्छत्यॄतां। पा॰ ७. ४. ११.। इति गुणाभावः। उदोष्ठ्यपूर्वस्येत्युत्वं। नित्त्वादाद्युदात्तत्वं ॥

आ॒दा॒रो वां॑ मती॒नां नास॑त्या मतवचसा। पा॒तं सोम॑स्य धृष्णु॒या ॥ ५॥
आ॒ऽदा॒रः। वां॒। म॒ती॒नां। नास॑त्या। म॒त॒ऽव॒च॒सा॒। पा॒तं। सोम॑स्य। धृ॒ष्णु॒ऽया ॥ ५॥

हे मतवचसाभिमतस्तोत्रौ नासत्याश्विनौ वां युवयोर्मतीनां बुद्धीनामादारः प्रेरको यः सोमोऽस्ति सोमस्य तं सोमं पातं। युवां पिबतं। कीदृशं सोमं। धृष्णुया धर्षणशीलं। मदकरत्वेन तीव्रमित्यर्थः ॥ आदारः। दृङ् आदरे। आदारयतीत्यादारः। दारजारौ कर्तरि णिलुक्चेति घञ्प्रत्ययः। थाथादिनोत्तरपदांतोदात्तत्वं। मतीनां। नामन्यतरस्यामिति नाम उदात्तत्वं। मतवचसा। मतमभिमतं स्तोत्ररूपं वचो ययोस्तौ। सुपां सुलुगिति विभक्तेराकारः। पातं। पा पाने। बहुलं छंदसीति शपो लुकि सति पाघ्रेत्यादिना पिबादेशो न भवति। सोमस्य। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। धृष्णुया। सुपां सुलुगिति विभक्तेर्याजादेशः ॥ ॥ ३३॥

या नः॒ पीप॑रदश्विना॒ ज्योति॑ष्मती॒ तम॑स्तिरः। ताम॒स्मे रा॑साथा॒मिषं॑ ॥ ६॥
या। नः॒। पीप॑रत्। अ॒श्वि॒ना॒। ज्योति॑ष्मती। तमः॑। ति॒रः। तां। अ॒स्मे इति॑। रा॒सा॒थां॒। इषं॑ ॥ ६॥

हे अश्विना ज्योतिष्मती रसवीर्यादिरूपज्योतिर्युक्ता येऽन्नं नोऽस्मान्पीपरत् पारयेत् तृप्तिं प्रापयेत्। किं कृत्वा। तमो दारिद्र्यरूपमंधकारं तिरोऽंतर्हितं विनष्टं कृत्वा। तामिषं तादृशमन्नमस्मे अस्मभ्यं रासाथां। युवां दत्तं ॥ पीपरत्। पॄ पालनपूरणयोः। ण्यंताल्लुङि चङि णिलोपः। उपधाह्रस्वत्वद्विर्भावहलादिशेषसन्वद्भावेत्वदीर्घाः। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। चङ्यन्यतरस्यां। पा॰ ६. १. २१८.। इत्युपोत्तमस्य

धात्वकारस्योदात्तत्वे प्राप्ते व्यत्ययेनाभ्यासस्योदात्तत्वं । यद्वृत्तान्नित्यमिति निघातप्रतिषेधः । अस्मे । सुपां सुलुगिति चतुर्थीबहुवचनस्य शेआदेशः । रासाथां । रा दाने । छांदसे प्रार्थनायां लुङि व्यत्ययेनात्मनेपदं । च्लेः सिच् । एकाच इतीट्प्रतिषेधः । पूर्ववदडभावः । तिङ्ङतिङ इति निघातः ॥

आ नो॑ ना॒वा म॑ती॒नां या॒तं पा॒राय॒ गंत॑वे । यु॒ञ्जाथा॑मश्विना॒ रथं॑ ॥७॥

आ । नः॒ । ना॒वा । म॒ती॒नां । या॒तं । पा॒राय॑ । गंत॑वे । यु॒ञ्जाथां॑ । अ॒श्वि॒ना॒ । रथं॑ ॥७॥

हे अश्विना मतीनां स्तुतीनां पाराय गंतवे पारं गंतुं नावा नौरूपेण गमनसाधनेन नोऽस्मान्प्रत्या यातं। समुद्रमध्यादागच्छतं । भूमावागंतुं रथं भवदीयं युंजाथां । साश्वं कुरुतं ॥ नावा । साविकाच इति विभक्तिरुदात्तत्वं । गंतवे । तुमर्थे सेसेनिति तवेन्प्रत्ययः । निन्त्वादाद्युदात्तत्वं । युंजाथां । युजिर् योगे । लोण्याथामि रुधादित्वाच्छ्नम् । श्नसोरल्लोप इत्यकारलोपः । प्रत्ययस्वरः ॥

अ॒रित्रं॑ वां दि॒वस्पृ॒थु ती॒र्थे सिंधू॑नां॒ रथः॑ । धि॒या यु॑युज्र॒ इंद॑वः ॥८॥

अ॒रित्रं॑ । वां॒ । दि॒वः । पृ॒थु । ती॒र्थे । सिंधू॑नां । रथः॑ । धि॒या । यु॒यु॒ज्रे॒ । इंद॑वः ॥८॥

हे अश्विनौ वां युवयोर्दिवस्पृथु द्युलोकादपि विस्तीर्णमरित्रं गमनसाधनं नौरूपं सिंधूनां समुद्राणां तीर्थेऽवतरणप्रदेशे विद्यत इति शेषः । रथश्च भूमौ गंतुं विद्यते । इंदवः सोमा धिया भवद्विषयेण कर्मणा युयुज्रे । युक्ता बभूवुः ॥ अरित्रं । ऋ गतौ । अर्तिलूधूसूखनसहचर इत्रः । पा॰ ३. २. १८४. । इति करण इत्रप्रत्ययः । प्रत्ययस्वरः । दिवः । ऊडिदमिति विभक्तिरुदात्तत्वं । तीर्थे । तॄ प्लवनतरणयोः । पातॄतुदिवचिरिचिसिचिभ्यस्थक् । उ॰ २. ७. । इति थक् । ऋत इद्धातोरितीत्वं । हलि चेति दीर्घः । युयुज्रे । लिटीरयो रे । पा॰ ६. ४. ७६. । इतीरेचो रेआदेशः ॥

दि॒वस्क॑ण्वास॒ इंद॑वो॒ वसु॒ सिंधू॑नां प॒दे । स्वं व॒व्रिं कुह॑ धित्सथः ॥९॥

दि॒वः । क॒ण्वा॒सः॒ । इंद॑वः । वसु॑ । सिंधू॑नां । प॒दे । स्वं । व॒व्रिं । कुह॑ । धि॒त्स॒थः॒ ॥९॥

हे कण्वासः कण्वपुत्राः । यद्वा । मेधाविन ऋत्विजः । अश्विनावित्थं पृच्छतेति शेषः । कथमिति तदुच्यते । दिवो द्युलोकसकाशादिंदवः सूर्यरश्मयः प्रादुर्भूताः । सिंधूनामपां वृष्टिरूपाणां स्यंदनस्वभावानां पदे स्थानेऽंतरिक्षे वसु अस्मदादिनिवासहेतुभूतमुषःकालीनं ज्योतिराविर्भूतमिति शेषः । अस्मिन्नवसरे युवां स्वं वव्रिं स्वकीयं रूपं कुह धित्सथः । कुत्र स्थापयितुमिच्छथः । अत्रागत्य प्रदर्शनीयमिति तात्पर्यार्थः ॥ कुह । वा ह च छंदसि । पा॰ ५. ३. १३. । इति किंशब्दात्सप्तम्यर्थे हप्रत्ययः । कु तिहोः । पा॰ ७. २. १०४. । इति किमः कुः । धित्सथः । डुधाञ् धारणपोषणयोः । सनि मीमाघुरभलभशकपतपदामच इस् । पा॰ ७. ४. ५४. । इत्याकारस्य इसादेशः । अत्र लोपोऽभ्यासस्य । पा॰ ७. ४. ५८. । इत्यभ्यासलोपः । सः स्यार्धधातुके । पा॰ ७. ४. ४९. । इति सकारस्य तकारः ॥

अभू॑दु भा उ॑ अं॒शवे॒ हिर॑ण्यं॒ प्रति॒ सूर्यः॑ । व्य॑ख्यज्जि॒ह्वयासि॑तः ॥१०॥

अभू॑त् । ऊं इति॑ । भाः । ऊं इति॑ । अं॒शवे॑ । हिर॑ण्यं । प्रति॑ । सूर्यः॑ । वि । अ॒ख्य॒त् । जि॒ह्वया॑ । असि॑तः ॥१०॥

भा उ सूर्यस्य दीप्तिस्त्वंशव उषःकालीनरश्मिसिद्ध्यर्थमभूदु । प्रादुर्भूतैव । सूर्यश्च हिरण्यं प्रति स्वकीयोदयेन हिरण्यसदृशोऽभूत् । अपिशासितः स्वकीयदीप्तिः सूर्यप्रवेशेन स्वयं कृष्णो भूत्वा जिह्वया स्वकीयया ज्वालया व्यख्यत् । प्रकाशितवान् । तस्मादयमश्विनोर्युवयोरागमनकाल इत्यर्थः ॥ अभूत् । भूसुवोस्तिङीति गुणप्रतिषेधः । हिरण्यं प्रति । प्रतिः प्रतिनिधिप्रतिदानयोः । पा॰ १. ४. ९२. । इति प्रतेः कर्मप्रवचनीयत्वं । कर्मप्रवचनीययुक्ते

द्वितीया ।पा॰२.३.८.। इति द्वितीया । अख्यत् । चक्षिङ् व्यक्तायां वाचि । लुङि चक्षिङः ख्याञिति ख्यादेशः ॥ ॥३४॥

अभूदु पारमेतवे पंथा ऋतस्य साधुया । अदर्शि वि स्रुतिर्दिवः ॥११॥
अभूत् । ऊं इति । पारं । एतवे । पंथाः । ऋतस्य । साधुऽया । अदर्शि । वि । स्रुतिः । दिवः ॥११॥

ऋतस्य सूर्यस्य पारमेतवे रात्रेः पारभूतमुदयाद्रिं गंतुं पंथा मार्गः साधुया समीचीनोऽभूदु । निष्पन्न एव । दिवो द्योतनात्मकस्य सूर्यस्य स्रुतिः प्रसृता दीप्तिर्व्यदर्शि । विशेषेण दृष्टा । तस्मादश्विनौ युवाभ्यामागंतव्यं ॥ एतवे । इण् गतौ । तुमर्थे सेसेनिति तवेन्प्रत्ययः । साधुया । सुपां सुलुगिति विभक्तेर्याजादेशः । अदर्शि । कर्मणि लुङि च्लेश्चिणादेशः । चिणो लुक् ।पा॰६.४.१०४.। इति तशब्दस्य लुक् । स्रुतिः । स्रु गतौ । क्तिच्क्तौ च संज्ञायामिति क्तिच् ॥

तत्तदिदश्विनोरवो जरिता प्रति भूषति । मदे सोमस्य पिप्रतोः ॥१२॥
तत्ऽतत् । इत् । अश्विनोः । अवः । जरिता । प्रति । भूषति । मदे । सोमस्य । पिप्रतोः ॥१२॥

जरिता स्तोताश्विनोः संबंधि तत्तदित् पुनःपुनः कृतं सर्वमप्यवोऽस्मद्विषयं रक्षणं प्रति भूषति । प्रत्येकमलंकरोति । तदा तदा प्रशंसतीत्यर्थः । कीदृशयोरश्विनोः । मदे हर्षे निमित्तभूते सति सोमस्य पिप्रतोः सोमं पूरयतोः ॥ भूषति । भूष अलंकारे । भौवादिकः । पिप्रतोः । पॄ पालनपूरणयोः । पृ इत्येके । अस्माल्लटः शतृ । जुहोत्यादित्वाच्छपः श्लुः । द्विर्भावोरदत्वहलादिशेषाः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं । शतुर्ङित्त्वाद्गुणाभावे यणादेशः । अभ्यस्तानामादिरित्याद्युदात्तत्वं ॥

वावसाना विवस्वति सोमस्य पीत्या गिरा । मनुष्वच्छंभू आ गतं ॥१३॥
ववसाना । विवस्वति । सोमस्य । पीत्या । गिरा । मनुष्वत् । शंभू इति शंऽभू । आ । गतं ॥१३॥

हे शंभू सुखस्य भावयितारावश्विनौ मनुष्वत् मनाविव विवस्वति परिचरणवति यजमाने ववसाना निवासशीलौ युवां सोमस्य पीत्या सोमस्य पाननिमित्तं गिरा स्तुतिनिमित्तं चा गतं । आगच्छतं ॥ ववसाना । वस निवासे । ताच्छील्यवयोवचनेति ताच्छीलिकश्चानश् ।पा॰३.२.१२९.। बहुलं छंदसीति शपः श्लुः । अन्येषामपि दृश्यत इति संहितायामभ्यासस्य दीर्घत्वं । सुपां सुलुगिति विभक्तेराकारः । चित इत्यंतोदात्तत्वं । पीत्या । पा पाने । स्थागापापचो भाव इति भावे क्तिन् । घुमास्थेतीत्वं । व्यत्ययेनांतोदात्तत्वं । तृतीयैकवचने यणादेश उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं । मनुष्वत् । मन ज्ञाने । मन्यते जानातीति मनुः । बहुलवचनादौणादिक उसिप्रत्ययः । तत्र तस्येवेति सप्तम्यर्थे वतिः । प्रत्ययस्वरः । गतं । गमेर्लोटि बहुलं छंदसीति शपो लुक् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥

युवोरुषा अनु श्रियं परिज्मनोरुपाचरत् । ऋता वनथो अक्तुभिः ॥१४॥
युवोः । उषाः । अनु । श्रियं । परिऽज्मनोः । उपऽआचरत् । ऋता । वनथः । अक्तुऽभिः ॥१४॥

हे अश्विनौ परिज्मनोः परितो गंत्रोर्युवोर्युवयोरुभयोः श्रियमनु आगमनरूपां शोभामनुलक्ष्योषा उपा-

चरत्। उषःकालदेवतेहागच्छतु। युवयोरागतयोः सतोः पश्चादागतेत्यर्थः। युवां चाक्तुभी रात्रिभिर्रुताता यज्ञगतानि हवींषि वनथः। कामयेथे। संभजेथे॥ युवोः। युष्मच्छब्दात् षष्ठीद्विवचनस्य सुपां सुपो भवंतीति षष्ठीद्विवचनादेशः। अत आदेशविषयत्वाद्योऽचीति यत्वाभावः। शेषे लोपः। परिज्मनोः। परितोऽजतो गच्छत इति परिज्मानौ। श्वन्नुक्षन्नित्यादिनाजतेर्मनिन्प्रत्ययांतो निपातितः। ऋता। शेश्छंदसीति शेर्लोपः। वनथः। वन षण संभक्तौ। तिङ्ङतिङ इति निघातः॥

प्रवर्ग्ये पौर्वाह्णिके घर्मस्य हविषो द्वितीया याज्योभा पिबतमित्येषा। अथोत्तरमिति खंडे सूचितं। उभा पिबतमश्विनेति चोभाभ्यामनवानं। आ॰ ४. ७.। इति॥ आश्विनशस्त्रेऽप्येषा द्वितीया याज्या। सूचितं च। प्र वामंधांसि मद्यान्यस्थुरुभा पिबतमश्विनेति याज्ये। आ॰ ६. ५.। इति॥

उभा पिबतमश्विनोभा नः शर्म यच्छतं। अविद्रियाभिरूतिभिः॥१५॥
उभा। पिबतं। अश्विना। उभा। नः। शर्म। यच्छतं। अविद्रियाभिः। ऊतिऽभिः॥१५॥

हे अश्विना उभा युवामुभौ पिबतं। सोमपानं कुरुतं। तत ऊर्ध्वमुभा युवामुभावविद्रियाभिः प्रशस्ताभिरूतिभी रक्षाभिर्नोऽस्मभ्यं शर्म सुखं यच्छतं॥ पिबतं। पा पाने। लोटि शपि पाघ्रेत्यादिना पिबादेशः। अंगवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्येति। म॰ ७. ३. ७८. २. परि॰ ९२.। वचनाल्लघूपधगुणाभावः। यद्वा। आद्युदात्तोऽदंतः पिबादेशः। तिङ्ङतिङ इति निघातः। यच्छतं। दाण् दाने। लोटि शपि पाघ्रेत्यादिना यच्छादेशः। अविद्रियाभिः। द्रा कुत्सायां गतौ। विपूर्वादस्माद्भाव औणादिकः किः। आतो लोप इटि चेत्याकारलोपः। विद्रिर्निंदा। तद्विरोधिन्यविद्रिः स्तुतिः। तां यांतीत्यविद्रियाः। अन्येभ्योऽपि दृश्यंत इति विच्। कृदुत्तरपदप्रकृतिस्वरत्वं।. ऊतिभिः। अवतेः क्तिनि ज्वरत्वरेत्यादिनोट्। ऊतियूतीत्यादिना क्तिन उदात्तत्वं॥ ॥३५॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके तृतीयोऽध्यायः समाप्तः॥

---

॥ श्रीगणेशाय नमः॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं॥

अथ प्रथमाष्टके चतुर्थोऽध्याय आरभ्यते। अयं वामिति नवमानुवाकस्य चतुर्थं सूक्तं दशर्चं। अत्रानुक्रांतं। अयं दश प्रागाथं त्विति। ऋषिश्चान्यस्मादृषेरिति परिभाषितत्वात्कण्वपुत्रः प्रस्कण्व ऋषिः। तथा पूर्वं चाश्विनं त्वित्युक्तत्वात्तुह्यादिपरिभाषयेदमपि सूक्तमश्विदेवताकं। अनयैव परिभाषयेदमुत्तरं च प्रागाथं। अतः प्रथमातृतीयाद्या अयुजो बृहत्यः। द्वितीयाचतुर्थ्याद्या युजः सतोबृहत्यः॥ प्रातरनुवाक आश्विने क्रतौ बार्हते छंदस्येतत्सूक्तं। अथाश्विन इति खंडे सूचितं। इमा उ वामयं वां। आ॰ ४. १५.। इति॥ आश्विनशस्त्रेऽप्येतत्सूक्तं प्रातरनुवाकन्यायेन। आ॰ ६. ५.। इत्यतिदिष्टत्वात्॥

अयं वां मधुमत्तमः सुतः सोम ऋतावृधा।
तमश्विना पिबतं तिरोअह्न्यं धत्तं रत्नानि दाशुषे॥१॥

यन्नासत्या परावति यद्वा स्थो अधि तुर्वशे ।
अतो रथेन सुवृता न आ गतं साकं सूर्यस्य रश्मिभिः ॥ ७ ॥
यत् । नासत्या । पराऽवति । यत् । वा । स्थः । अधि । तुर्वशे ।
अतः । रथेन । सुऽवृता । नः । आ । गतं । साकं । सूर्यस्य । रश्मिऽभिः ॥ ७ ॥

हे नासत्यासत्यरहितावश्विनौ यद्यदि युवां परावति दूरदेशे स्थो वर्तेथे । यद्वा अथवाधि तुर्वशेऽधिके समीपे स्थः । अतोऽस्माद्दूरात्समीपाद्वा सूर्यस्य रश्मिभिः साकं सूर्योदयकाले सुवृता शोभनवर्तनयुक्तेन रथेन नोऽस्मान् प्रत्या गतं । आगच्छतं ॥ नासत्या । सत्सु भवौ सत्यौ । न सत्यावसत्यौ । न असत्यौ नासत्यौ । नभ्राण्नपादित्यादिना नञः प्रकृतिभावः । स्थः । अस भुवि । श्नसोरल्लोप इत्यकारलोपः । [illegible]नि-घातः । गतं । गमेर्लोटि बहुलं छंदसीति शपो लुक् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥

अर्वाञ्चा वां सप्तयोऽध्वरश्रियो वहंतु सवनेदुप ।
इषं पृंचंता सुकृते सुदानव आ बर्हिः सीदतं नरा ॥ ८ ॥
अर्वाञ्चा । वां । सप्तयः । अध्वरऽश्रियः । वहंतु । सवना । इत् । उप ।
इषं । पृंचंता । सुऽकृते । सुऽदानवे । आ । बर्हिः । सीदतं । नरा ॥ ८ ॥

हे अश्विनौ अध्वरश्रियो यागसेविनः सप्तयोऽश्वाः सवनेदुपास्मदनुष्ठेयानि त्रीणि सवनान्येवोपलक्ष्यार्वाञ्चाभिमुखौ वां युवां वहंतु । प्रापयंतु । हे नराश्विनौ सुकृते सुष्ठु कर्मकारिणे सुदानवे शोभनदानयुक्ताय यजमानायेषमन्नं पृंचंता संयोजयंतौ युवां बर्हिरा सीदतं । दर्भं प्राप्नुतं ॥ अर्वाञ्चा । सुपां सुलुगिति विभक्तेराकारः । अध्वरश्रियः । अध्वरं श्रयंतीत्यध्वरश्रियः । क्विब्वचिप्रच्छीत्यादिना । उ० २. ५७. । क्विब्दीर्घश्च । वहंतु । वह प्रापणे । शपः पित्त्वादनुदात्तत्वं । तिङश्च लसार्वधातुकस्वरेण धातुस्वरेणाद्युदात्तत्वं । पादादित्वान्निघाताभावः । सवना । षुञ् अभिषवे । अभिषूयते सोम एष्विति सवनानि । अधिकरणे ल्युट् । योरनादेशः । गुणावादेशौ । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । शेश्छंदसि बहुलमिति शेर्लोपः । पृंचंता । पृची संपर्के । शतरि रुधादित्वात् श्नम् । श्नसोरल्लोप इत्यकारलोपः । प्रत्ययस्वरः । सुकृते । सुकर्मपापेत्यादिना । पा० ३. २. ८९. । करोतेर्भूते काले क्विप् । ह्रस्वस्य पिति । पा० ६. १. ७१. । इति तुक् । सुदानवे । शोभनं दानु दानं यस्यासौ सुदानुः । दानुशब्दो नुप्रत्ययांत आद्युदात्तः । आद्युदात्तं द्व्यच्छंदसीति बहुव्रीहावुत्तरपदाद्युदात्तत्वं । सीदतं । षद्लृ विशरणगत्यवसादनेषु ॥

तेन नासत्या गतं रथेन सूर्यत्वचा ।
येन शश्वदूहथुर्दाशुषे वसु मध्वः सोमस्य पीतये ॥ ९ ॥
तेन । नासत्या । आ । गतं । रथेन । सूर्यऽत्वचा ।
येन । शश्वत् । ऊहथुः । दाशुषे । वसु । मध्वः । सोमस्य । पीतये ॥ ९ ॥

हे नासत्या सूर्यत्वचा सूर्यसंवृतेन सूर्यरश्मिसदृशेन वा तेन प्रसिद्धेन रथेना गतं । आगच्छतं । दाशुषे हविर्दत्तवते यजमानाय वसु धनं शश्वत् सर्वदा येन रथेनोहथुः प्रापितवंतौ । तेन रथेनेति पूर्वत्रान्वयः । किमर्थमागमनमिति तदुच्यते । मध्वो मधुरस्य सोमस्य पीतये सोमपानार्थं ॥ सूर्यत्वचा । त्वच संवरणे । त्वचति संवृणोतीति त्वग्रश्मिः । सूर्यस्य त्वगिव त्वग्यस्य । सप्तम्युपमानेत्यादिना । पा० २. २. २४. १२. । बहुव्रीहिरुत्तरपदलोपश्च । सूर्यशब्दः षू प्रेरणे इत्यस्मात् क्यपि राजसूयसूर्येत्यादिना रुडागमसहितो निपातितः । ततः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तः । स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण शिष्यते । ऊहथुः । वह

प्रापणे। लिय्संयोगाल्लिट् कित्। पा० १. २. ५.। इति लिटः कित्त्वे वचिस्वपीत्यादिना संप्रसारणं। अभ्यासह-लादिशेषौ सवर्णदीर्घः। प्रत्ययस्वरः। यद्वृत्तयोगादनिघातः॥

उक्थेभिर्वागवसे पुरूवसू अर्कैश्च नि ह्वयामहे।
शश्वत्कण्वानां सदसि प्रिये हि कं सोमं पपथुरश्विना ॥१०॥
उक्थेभिः। अर्वाक्। अवसे। पुरुवसू इति पुरुऽवसू। अर्कैः। च। नि। ह्वयामहे।
शश्वत्। कण्वानां। सदसि। प्रिये। हि। कं। सोमं। पपथुः। अश्विना ॥१०॥

पुरूवसू प्रभूतधनावश्विनाववसेऽस्मद्रक्षणार्थमुक्थेभिरुक्थैः शस्त्रैरर्कैश्चार्चनसाधनैः स्तोत्रैश्चार्वागस्मदाभि-मुख्येन नि ह्वयामहे। नितरामाह्वयामः। हे अश्विना कण्वानां कण्वपुत्राणां मेधाविनां वा प्रिये सदसि यज्ञ-स्थाने शश्वत्सर्वदा सोमं पपथुर्हि कं। युवां पीतवंतौ खलु॥ उक्थेभिः। बहुलं छंदसीति भिस ऐसादेशाभावः। बहुवचने झल्येदित्येत्वं। अर्कैः। ऋच स्तुतौ। पुंसि संज्ञायां घः प्रायेणेति करणे घः। चजोः कु घिण्यतो-रिति कुत्वं। नि ह्वयामहे। निसमुपविभ्यो ह्वः। पा० १. ३. ३०.। इत्यात्मनेपदं। सदसि। सीदंत्यस्मिन्निति सदः। असुनो नित्त्वादाद्युदात्तत्वं। पपथुः। पा पाने। लिय्यातो लोप इटि चेत्याकारलोपः। प्रत्ययस्वरः। हि चेति निघातप्रतिषेधः॥ ॥२॥

सह वामेनेति षोडशर्चं पंचमं सूक्तं। प्रस्कण्व ऋषिः। बार्हतत्वादयुजो बृहत्यो युजः सतोबृहत्यः। उषा देवता। सह षोळशोषस्यं त्वित्यनुक्रमणिका॥ प्रातरनुवाक उषस्ये क्रतौ बार्हते छंदसीदं सूक्तं। अथोषस्य इति खंडे सूचितं। प्रत्यु अदर्शि सह वामेनेति बार्हतं। आ० ४. १४.। इति॥ तथाश्विनशस्त्रेऽप्येतत्सूक्तं। प्रात-रनुवाकन्यायेन। आ० ६. ५.। इत्यतिदिष्टत्वात्॥

सह वामेन न उषो व्युच्छा दुहितर्दिवः।
सह द्युम्नेन बृहता विभावरि राया देवि दास्वती ॥१॥
सह। वामेन। नः। उषः। वि। उच्छ। दुहितः। दिवः।
सह। द्युम्नेन। बृहता। विभाऽवरि। राया। देवि। दास्वती ॥१॥

हे दुहितर्दिवो द्युदेवतायाः पुत्रि उष उषःकालदेवते नोऽस्मदर्थं वामेन धनेन सह व्युच्छ। प्रभातं कुरु। हे विभावर्युषोदेवते बृहता प्रभूतेन द्युम्नेनान्नेन सह व्युच्छ। हे देवि त्वं दास्वती दानयुक्ता सती राया पशुल-क्षणेन धनेन सह व्युच्छ॥ उच्छ। उछी विवासे। दुहितर्दिवः। सुबामंत्रिते परांगवत्स्वर इत्यत्र परमपि च्छंदसि। पा० २. १. २. ६.। इति वचनात् दिव इत्यस्य पूर्वांगवद्भावे सत्यामंत्रितस्य चेति षष्ठ्यामंत्रितसमुदाय-स्याष्टमिकं सर्वानुदात्तत्वं। बृहता। बृहन्महतोरुपसंख्यानमिति विभक्तेरुदात्तत्वं। विभावरि। भा दीप्तौ। आतो मनिन्नित्यादिना वनिप्। वनो र चेति ङीप्। तत्संनियोगेन नकारस्य रेफादेशः। संबुद्धौ ह्रस्वत्वं। दास्वती। डुदाञ् दाने। भावेऽसुन्प्रत्ययः। तदस्यास्ति। पा० ५. २. ९४.। इति दास्वती। मादुपधाया इति मतुपो वत्वं। उगितश्चेति ङीप्॥

अश्वावतीर्गोमतीर्विश्वसुविदो भूरि च्यवंत वस्तवे।
उदीरय प्रति मा सूनृता उषश्चोद राधो मघोनां ॥२॥
अश्वऽवतीः। गोऽमतीः। विश्वऽसुविदः। भूरि। च्यवंत। वस्तवे।
उत्। ईरय। प्रति। मा। सूनृताः। उषः। चोद। राधः। मघोनां ॥२॥

अश्वावतीर्बह्वश्वोपेता गोमतीर्बहुभिर्गोभिर्युक्ता विश्वसुविदः कृत्स्नस्य धनस्य सुष्ठु लंभयित्र्य उषोदेवता

[illegible] प्रजानां निवासाय भूरि प्रभूतं यथा भवति तथा च्यवंत । प्राप्ताः । हे उषोदेवते मां प्रति मामुद्दिश्य सूनृताः प्रियहितवाच उदीरय । ब्रूहि । मघोनां धनवतां संबंधि राधो धनं चोद । अस्मदर्थं प्रेरय ॥ अश्वावतीः । मंत्रे सोमाश्वेंद्रियविश्वदेव्यस्य मतौ ।पा० ६. ३. १३१.। इति पूर्वपदस्य दीर्घत्वं । वा छंदसीति पूर्वसवर्णदीर्घविधेरस्य वार्त्तिकस्योक्तेः पूर्वसवर्णदीर्घत्वं । च्यवंत । च्युङ् गतौ । लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । वस्तवे । वस निवासे । तुमर्थे सेसेनिति तवेन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । ईरय । ईर गतौ कंपने च । हेतुमति णिच् । चोद । चुद संचोदने । चौरादिकः । लोटि छंदस्युभयथेति शप आर्धधातुकत्वात् णेरनिटीति णिलोपः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । पादादित्वान्निघाताभावः । मघोनां । षष्ठीबहुवचने श्वयुवमघोनामतद्धिते ।पा० ६. ४. १३३.। इति संप्रसारणं ॥

उवासोषा उच्छाच्च नु देवी जीरा रथानां ।
ये अस्या आचरणेषु दध्रिरे समुद्रे न श्रवस्यवः ॥३॥
उवास । उषाः । उच्छात् । च । नु । देवी । जीरा । रथानां ।
ये । अस्याः । आऽचरणेषु । दध्रिरे । समुद्रे । न । श्रवस्यवः ॥३॥

उषा देव्युवास । पुरा निवासमकरोत् । प्रभातं कृतवतीत्यर्थः । च नु अद्याप्युच्छात् । व्युच्छति । प्रभातं करोति । कीदृशी देवी । रथानां जीरा प्रेरयित्री । उषःकाले हि रथाः प्रेर्यंते । अस्या उषस आचरणेष्वागमनेषु ये रथाः दध्रिरे धृताः सज्जीकृता भवंति । तेषां रथानामिति पूर्वत्रान्वयः । रथप्रेरणे दृष्टांतः । श्रवस्यवो धनकामाः समुद्रे न । यथा समुद्रमध्ये नावः सज्जीकृत्य प्रेरयंति तद्वत् ॥ उवास । वस निवासे । णलि लिट्यभ्यासस्योभयेषां ।पा० ६. १. १७.। इत्यभ्यासस्य संप्रसारणं । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं । उच्छात् । लेट्याडागमः । इतश्च लोप इतीकारलोपः । तुदादित्वाच्छप्रत्ययः । आगमानुदात्तत्वे प्रत्ययस्वरः । उषा इत्यस्य वाक्यांतरगतत्वात्तदपेक्षयास्य निघातो न भवति । समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः ।पा० ८. १. १८. ५.। इति वचनात् । जीरा । जु इति गत्यर्थः सौत्रो धातुः । जोरी च ।उ० २. २३.। इति रक्प्रत्ययः । अस्याः । इदमोऽन्वादेश इत्यशादेशोऽनुदात्तः । विभक्तिरपि सुप्त्वादनुदात्तेति सर्वानुदात्तत्वं । आचरणेषु । चर गत्यर्थः । ल्युट् ।पा० ३. ३. ११५.। इति भावे ल्युट् । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं । कृदुत्तरपदप्रकृतिस्वरत्वं । दध्रिरे । धृङ् अवस्थाने । लिटः कित्त्वाद्गुणाभावे यणादेशः । चित्त्वादंतोदात्तत्वं । यच्छब्दयोगादनिघातः । श्रवस्यवः । श्रूयत इति श्रवो धनं । असुन् । तदात्मन इच्छंतीति श्रवस्यवः । सुप आत्मनः क्यच् । क्याच्छंदसीत्युप्रत्ययः ॥

उषो ये ते प्र यामेषु युंजते मनो दानाय सूरयः ।
अत्राह तत्कण्व एषां कण्वतमो नाम गृणाति नृणां ॥४॥
उषः । ये । ते । प्र । यामेषु । युंजते । मनः । दानाय । सूरयः ।
अत्र । अह । तत् । कण्वः । एषां । कण्वऽतमः । नाम । गृणाति । नृणां ॥४॥

हे उषस्ते तव यामेषु गमनेषु सत्सु ये सूरयो विद्वांसो दानाभिज्ञा दानाय धनादिदानार्थं मनः स्वकीयं प्र युंजते प्रेरयंति । दानशीला उदाराः प्रभवः प्रातःकाले दातुमिच्छंतीत्यर्थः । एषां दातुमिच्छतां नृणां तन्नाम दानविषये लोकप्रसिद्धं नाम कण्वतमोऽतिशयेन मेधावी कण्वो महर्षिरत्राह अत्रैवोषःकाले गृणाति । उच्चारयति । यो दातुमिच्छति यस्य नामग्रहणेन दातारं प्रशंसति तावुभावप्युषःकाल एव तथा कुरुत इत्युषसः स्तुतिः ॥ गृणाति । गॄ शब्दे । क्र्यादिकः । प्वादीनां ह्रस्व इति ह्रस्वत्वं । नृणां । नामि नृ च ।पा० ६. ४. ६.। इति दीर्घप्रतिषेधः । नृ चान्यतरस्यां ।पा० ६. १. १८४.। इति विभक्तेरुदात्तत्वं ॥

आ घा योषेव सूनर्युषा याति प्रभुंजती ।
जरयंती वृजनं पद्वदीयत उत्पातयति पक्षिणः ॥ ५ ॥
आ । घ । योषाऽइव । सूनरी । उषाः । याति । प्रऽभुंजती ।
जरयंती । वृजनं । पत्ऽवत् । ईयते । उत् । पातयति । पक्षिणः ॥ ५ ॥

उषा देवी प्रभुंजती प्रकर्षेण सर्वं पालयंत्या याति घ । प्रतिदिनमागच्छति खलु । तत्र दृष्टांतः । सूनरी सुष्ठु गृहकृत्यस्य नेत्री योषेव गृहिणीव । कीदृश्युषाः । वृजनं गमनशीलं जंगमं प्राणिजातं जरयंती जरां प्रापयंती । असकृदुषस्यावृत्तायां वयोहान्या प्राणिनो जीर्णा भवंति । किंच उषःकाले पद्वत् पादयुक्तं प्राणिजातमीयते । निद्रां परित्यज्य स्वस्वकृत्यार्थं गच्छति । किंच इयमुषाः पक्षिण उत्पातयति । पक्षिणो ह्युषःकाले समुत्थाय तत्र तत्र व्रजंति ॥ घ । ऋचि तुनुघेत्यादिना संहितायां दीर्घः । सुष्ठु नयतीति सूनरी । नॄ नये । अच इरितीप्रत्ययः । गतिसमासे कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं । परि॰ २८. । इति वचनात्कृदिकारादक्तिनः । पा॰ ४. १. ४५.* । इति ङीष् । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । निपातस्य चेति पूर्वपदस्य दीर्घः । प्रभुंजती । भुज पालनाभ्यवहारयोः । लटः शतृ । रुधादित्वाच्छ्नम् । श्नसोरल्लोप इत्यकारलोपः । उगितश्चेति ङीप् । शतुरनुम इति नद्या उदात्तत्वं । वृजनं । वृजी वर्जने । वर्ज्यत इति वृजनं प्राणिजातं । कॄपॄवृजिमंदिनिधाञ्भ्यः क्युः । उ॰ २. ८१. । इति क्युप्रत्ययः । कित्त्वाल्लघूपधगुणाभावः । योरनादेशे प्रत्ययस्वरः । पद्वत् । पत् पादः । तदस्यास्तीति पद्वत् । झय इति मतुपो वत्वं । व्यत्ययेन मतुप उदात्तत्वं । न च स्वरविधौ व्यंजनमविद्यमानवत् । परि॰ ७९. । इति व्यंजनस्याविद्यमानवत्त्वे सति ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वमिति वाच्यं । ह्रस्वादित्येव सिद्धे पुनर्नुड्ग्रहणसामर्थ्यादेषा परिभाषा नाश्रीयत इति वृत्तावुक्तं । का॰ ६. १. १७६. । इतरथा हि मरुत्वानित्यत्रापि मतुप उदात्तत्वं स्यात् ॥　॥ ३ ॥

वि या सृजति समनं व्य१र्थिनः पदं न वेत्योदती ।
वयो नकिष्टे पप्तिवांस आसते व्युष्टौ वाजिनीवति ॥ ६ ॥
वि । या । सृजति । समनं । वि । अर्थिनः । पदं । न । वेति । ओदती ।
वयः । नकिः । ते । पप्तिऽवांसः । आसते । विऽउष्टौ । वाजिनीऽवति ॥ ६ ॥

या देवता समनं समीचीनचेष्टावंतं पुरुषं वि सृजति प्रेरयति । गृहारामादिचेष्टाकुशलान्पुरुषानुषःकालः शयनादुत्थाप्य स्वस्वव्यापारे प्रेरयतीति प्रसिद्धं । किंच उषा अर्थिनो याचकान्वि सृजति । तेऽपि ह्युषःकाले समुत्थाय स्वकीयदातृगृहे गच्छंति । ओदत्युषोदेवता पदं स्थानं न वेति । न कामयते । उषःकालः शीघ्रं गच्छतीत्यर्थः । हे वाजिनीवत्युषोदेवते ते व्युष्टौ त्वदीये प्रभातकाले पप्तिवांसः पतनयुक्ता वयः पक्षिणो नकिरासते । न तिष्ठंति । किंतु स्वस्वनीडाद्विनिर्गत्य गच्छंतीत्यर्थः ॥ सृजति । सृज विसर्गे । तुदादित्वाच्छः । तस्य ङित्त्वाल्लघूपधगुणाभावः । प्रत्ययस्य पित्त्वादनुदात्तत्वे विकरणस्वरः । यद्वृत्तयोगादनिघातः । ओदती । उन्दी क्लेदने । उनत्ति सर्वं नीहारेणेत्योदत्युषाः । शतरि व्यत्ययेन शप् । व्यत्ययेनानुनासिकलोपे लघूपधगुणः । उगितश्चेति ङीप् । आगमानुशासनस्यानित्यत्वान्नुमभावः । शपः पित्त्वादनुदात्तत्वं । शतुरदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरेणाद्युदात्तत्वं । न च शतुरनुम इति नद्या उदात्तत्वं । अंतोदात्तात्छतुः परस्यास्तद्विधानात् । नकिष्टे । युष्मत्तत्ततक्षुःष्वंतःपादमिति षत्वं । पप्तिवांसः । पत्लृ गतौ । लिटः क्वसुः । क्रादिनियमात्प्राप्त इट् वस्वेकाजाद्घसामिति नियमान्न प्राप्नोति । तत्क्रियते सर्वविधीनां छंदसि विकल्पितत्वात् । तनिपत्योश्छंदसि । पा॰ ६. ४. ९९. । इत्युपधालोपः । द्विर्वचनेऽचीति स्थानिवद्भावाद्द्विर्भावः । प्रत्ययस्वरः । वाजिनीवति । वाजोऽन्नमस्या अस्तीति वाजिनी क्रिया । मत्वर्थीय इनिः । ऋन्नेभ्य इति ङीप् । तादृशी क्रिया यस्याः सा । तदस्यास्तीति मतुप् । संज्ञायामिति मतुपो वत्वं ॥

एषायुक्त परावतः सूर्यस्योदयनादधि ।
शतं रथेभिः सुभगोषा इयं वि यात्यभि मानुषान् ॥ ७ ॥
एषा । अयुक्त । पराऽवतः । सूर्यस्य । उत्ऽअयनात् । अधि ।
शतं । रथेभिः । सुऽभगा । उषाः । इयं । वि । याति । अभि । मानुषान् ॥ ७ ॥

एषोषोदेवी शतमयुक्त । स्वकीयानां रथानां शतं योजितवती । सुभगा सौभाग्ययुक्तेयमुषाः परावतो दूरस्थात् सूर्यस्योदयनादधि सूर्योदयस्थानादधिकाद्युलोकान्मानुषानभि मनुष्यानुद्दिश्य रथेभिः शतसंख्याकैर्युक्तै रथैर्वि याति । विशेषेण गच्छति ॥ अयुक्त । लुङि झलो झलि । पा॰ ८. २. २६. । इति सिचो लोपः । उदयनात् । उदेत्यस्मिन्नित्युदयनं । इण् गतौ । अधिकरणे ल्युट् । कृदुत्तरपदप्रकृतिस्वरत्वं । सुभगा । शोभनो भगो यस्याः सा । आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं । मानुषान् । मनोः पुत्रा मानुषाः । मनोर्जातावञ्यतौ षुक् चेत्यञ् षुगागमश्च । ञित्वादाद्युदात्तत्वं ॥

विश्वमस्या नानाम चक्षसे जगज्ज्योतिष्कृणोति सूनरी ।
अप द्वेषो मघोनी दुहिता दिव उषा उच्छदप स्रिधः ॥ ८ ॥
विश्वं । अस्याः । ननाम । चक्षसे । जगत् । ज्योतिः । कृणोति । सूनरी ।
अप । द्वेषः । मघोनी । दुहिता । दिवः । उषाः । उच्छत् । अप । स्रिधः ॥ ८ ॥

विश्वं सर्वं जगत् जंगमं प्राणिजातमस्या उषसश्चक्षसे प्रकाशाय ननाम । प्रह्वीभवति । रात्रौ तमसि निमग्नाः सर्वे जनास्तन्निवारयित्रीमुषसमुपलभ्य नमस्कुर्वंतीत्यर्थः । कुतः । यस्मादेषा सूनरी सुष्ठु नेत्री अभिमतफलस्य प्रापयित्र्युषा ज्योतिष्कृणोति सर्वं प्रकाशयति । किंच मघोनी मघवती धनवती दिवो दुहिता द्युलोकसकाशादुत्पन्नोषा द्वेषो द्वेष्टॄनपोच्छत् । अपवर्जयति । तथा स्रिधः शोषयितॄनपोच्छत् । अपवर्जयति । तस्मादिष्टप्राप्त्यनिष्टपरिहारहेतुभूतामुषोदेवतां विश्वं जगन्नमस्करोतीत्यर्थः ॥ अस्याः । इदमोऽन्वादेश इत्यशादेशोऽनुदात्तः । विभक्तिश्च सुप्त्वादनुदात्तेति सर्वानुदात्तत्वं । ननाम । संहितायामन्येषामपि दृश्यत इत्यभ्यासस्य दीर्घत्वं । तुजादित्वे हि तूतुजान इत्यादाविव पदकालेऽपि दीर्घः श्रूयते । ज्योतिः । इणः ष इत्यनुवृत्ताविसुसोः सामर्थ्ये । पा॰ ८. ३. ४४. । इति विसर्जनीयस्य षत्वं । द्वेषः । द्विष अप्रीतौ । अन्येभ्योऽपि दृश्यंत इति विच् । लघूपधगुणः । मघोनी । मघं वनति संभजत इति मघोनी । श्वन्नुक्षन्नित्यादिना मघवञ्शब्दः कनिन्प्रत्ययांतो निपातितः । स्त्रियामृन्नेभ्यो ङीबिति ङीप् । भसंज्ञायां श्वयुवमघोनामतद्धित इति संप्रसारणं । उच्छत् । उछी विवासे । विवासो वर्जनं । छंदसि लुङ्लङ्लिट इति वर्तमाने लङ् । बहुलं छंदस्यमाङ्योगेऽपीत्यडागमाभावः । स्रिधः । स्रिधु शोषणे । क्विच्चेति क्विप् ॥

उष आ भाहि भानुना चंद्रेण दुहितर्दिवः ।
आवहंती भूर्यस्मभ्यं सौभगं व्युच्छंती दिविष्टिषु ॥ ९ ॥
उषः । आ । भाहि । भानुना । चंद्रेण । दुहितः । दिवः ।
आऽवहंती । भूरि । अस्मभ्यं । सौभगं । विऽउच्छंती । दिविष्टिषु ॥ ९ ॥

हे दिवो दुहितर्द्युलोकस्य पुत्रि उष उषोदेवते चंद्रेण सर्वेषामाह्लादकेन भानुना प्रकाशेन आ समंताद्भाहि । प्रकाशस्व । किं कुर्वती । दिविष्टिषु दिवसेषु भूरि प्रभूतं सौभगं सौभाग्यमस्मभ्यमावहंती संपादयंती । तथा व्युच्छंती तमांसि वर्जयंती ॥ उषः । पाष्ठिकमामंत्रितायुदात्तत्वं । दुहितर्दिवः । परमपि च्छंदसीति दिव इत्यस्य परस्य षष्ठ्यंतस्य पूर्वामंत्रितांगवद्भावे सति षष्ठ्यामंत्रितसमुदायस्याष्टमिकं सर्वानुदात्तत्वं । आवहंती ।

ङीप्ङापौ [illegible]दात्तौ। शतुश्चादुपदेशाल्लसार्वधातुकस्वरेणानुदात्तत्वं। अतो धातुस्वरः शिष्यते। समासे कृदुत्तरपदप्रकृतिस्वरत्वं। भूरि। प्रभवति न विनश्यतीति भूरि। अदिशदिभूशुभिभ्यः क्रिन्। उ० ४. ६५.। इति क्रिन्। नित्वादाद्युदात्तत्वं। सुभगस्य भावः सौभगं। सुभगान्मंच इत्युद्गात्रादिषु पाठादञ्प्रत्ययः। हृद्भगसिंध्वंते पूर्वपदस्य चेत्युभयपदवृद्धौ प्राप्तायां सर्वे विधयश्छंदसि विकल्प्यंत इति वचनाद्चोत्तरपदवृद्धिर्न भवतीति वृत्तावुक्तं। का० ७. ३. १९.। व्युच्छंती। उछी विवासे। विवासो वर्जनं। तौदादिकः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः। दिविष्टिषु। दिव्शब्देन दिविष्ठ आदित्यो लक्ष्यते। तस्येष्टय एषणानि गमनानि येषु दिवसेषु ते दिविष्टयः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥

विश्व॑स्य॒ हि प्राण॑नं॒ जीव॑नं॒ त्वे वि यदु॒च्छसि॑ सूनरि।
सा नो॒ रथे॑न बृह॒ता वि॑भावरि॒ श्रु॒धि चि॑त्रामघे॒ हवं॑ ॥१०॥
विश्व॑स्य। हि। प्राण॑नं। जीव॑नं। त्वे इति॑। वि। यत्। उ॒च्छसि॑। सू॒न॒रि॒।
सा। नः॒। रथे॑न। बृ॒ह॒ता। वि॒भा॒ऽव॒रि॒। श्रु॒धि। चि॒त्र॒ऽम॒घे॒। हवं॑ ॥१०॥

हे सूनरि उषोदेवि विश्वस्य सर्वस्य प्राणिजातस्य प्राणनं चेष्टनं जीवनं प्राणधारणं च त्वे हि त्वय्येव वर्तते। यद्यस्मात्त्वं व्युच्छसि तमो वर्जयसि। हे विभावरि विशिष्टप्रकाशयुक्ते सा तादृशी त्वं नोऽस्मान्प्रति बृहता प्रौढेन रथेनायाहीति शेषः। तथा हे चित्रामघे विचित्रधनयुक्त उषोदेवि नोऽस्मदीयं हवमाह्वानं श्रुधि। शृणु॥ प्राणनं। अन चेष्टायां। ल्युट्चेति भावे ल्युट्। योरनादेशः। समासेऽनितेः। पा० ८. ४. १९.। इत्युपसर्गस्थाद्रकारान्निमित्तादुत्तरस्य नकारस्य णत्वं। नन्वनितेरितीटा निर्देशात्कथमन चेष्टायामित्यस्य णत्वं। तर्हि जीवनस्य पृथगुपादानात्तेनैव धातुना चेष्टा लक्ष्यते। समासे कृदुत्तरपदप्रकृतिस्वरत्वं। संहितायामेकादेशस्वरेणैकादेशस्योदात्तत्वं। त्वे। सुपां सुलुगिति सप्तम्याः शेआदेशः। उच्छसि। उछी विवासे। तौदादिकः। सिपः पित्वादनुदात्तत्वे विकरणस्वरः। निपातैर्यद्यदिहंतेति निघातप्रतिषेधः। सूनरि। सुष्ठु नयतीति सूनरी। नॄ नय इत्यस्मादच इरित्यौणादिक इप्रत्ययः। गतिसमासे कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात् कृदिकारादक्तिन इति ङीष्। निपातस्य चेति पूर्वपदस्य दीर्घत्वं। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वे प्राप्त आमंत्रितस्य चेत्याष्टमिको निघातः। विभावरि। विशिष्टा भा यस्याः सा। छंदसीवनिपौ। पा० ५. २. १०९. २.। इति मत्वर्थीयो वनिप्। वनो र चेति ङीप् तत्संनियोगेन नकारस्य रेफादेशश्च। श्रुधि। श्रुशृणुपॄकृवृभ्यश्छंदसीति हेर्धिरादेशः। बहुलं छंदसीति विकरणस्य लुक्। हेरपित्त्वेन प्रत्ययस्वरेणांतोदात्तत्वं। पादादित्वान्निघाताभावः। मघमिति धननाम। चित्रं मघं यस्याः सा चित्रमघा। अन्येषामपि दृश्यत इति संहितायां पूर्वपदस्य दीर्घत्वं। हवं। ह्वेञ् स्पर्धायां शब्दे च। भावेऽनुपसर्गस्येत्यप्प्रत्ययः। तत्संनियोगेन संप्रसारणं च॥ ॥४॥

उषो॒ वाजं॒ हि वंस्व॒ यश्चि॒त्रो मानु॑षे॒ जने॑।
तेना व॑ह सु॒कृतो॑ अध्व॒राँ उप॒ ये त्वा॑ गृ॒णंति॒ वह्न॑यः ॥११॥
उष॑ः। वाजं॑। हि। वंस्व॑। यः। चि॒त्रः। मानु॑षे। जने॑।
तेन॑। आ। व॒ह॒। सु॒ऽकृत॑ः। अ॒ध्व॒रान्। उप॑। ये। त्वा॒। गृ॒णंति॑। वह्न॑यः ॥११॥

हे उषो वाजं ह[illegible] हि श्रुतिषु प्रसिद्धं वंस्व। याचस्व। स्वीकुर्वित्यर्थः। यो वाजश्चित्रश्चायनीयो मानुषे मनुष्ये जने जाते यजमाने वर्तते। तं वाजमिति पूर्वत्रान्वयः। तेन कारणेन सुकृतः सुष्ठु कृतवतो यजमानानध्वरान् हिं[illegible] यागानुपा वह। प्रापय। ये यजमाना वह्नयो यज्ञनिर्वाहकास्त्वा त्वां गृणंति स्तुवंति। तान् सुकृत इति पूर्वेण संबंधः। एतदुक्तं भवति। यजमानैः प्रत्तं हविः स्वीकृत्य पुनरपि तेषां यज्ञं संपादयेति॥ वाजं। वज व्रज गतौ। कर्मणि घञ्। अजिव्रज्योश्च। पा० ७. ३. ६०.। इत्यत्र चशब्दस्यानुक्तस-

मुख्यार्थत्वाद्राजो वाज्यमित्यत्रापि कुत्वाभाव इति वृत्तावुक्तत्वात्कुत्वाभावः। कर्षात्वत इत्यंतोदात्तत्वे प्राप्ते वृषादित्वादाद्युदात्तत्वं। वंस्व। वनु याचने। अत्र याचनवाचिना धातुना तदुत्तरभावी स्वीकारो लक्ष्यते। बहुलं छंदसीति विकरणस्य लुक्। अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। हि चेति निघातप्रतिषेधः। सुकृतः। सुकर्मपापेत्यादिना करोतेर्भूतार्थे क्विप्। तुगागमः। कृदुत्तरपदप्रकृतिस्वरत्वं। अध्वरान्। ध्वरो हिंसा नास्त्यस्मिन्निति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। अध्वरानित्यस्येप्सिततमत्वात्कर्तुरीप्सिततमं। पा० १. ४. ४९.। इति कर्मसंज्ञा। सुकृत इत्यस्य त्वकथितं च। पा० १. ४. ५१.। इति। नीवह्योर्हरतेश्च। म० १. ४. ५१.। इति द्विकर्मकेषु वहतेः परिगणितत्वात्। अध्वरानित्यत्र नकारस्य संहितायां दीर्घादटीति रुत्वं। आतोऽटि नित्यमिति पूर्वस्याकारस्य सानुनासिकता। गृणंति। गॄ शब्दे। क्र्यादिभ्यः श्ना। प्वादीनां ह्रस्व इति ह्रस्वत्वं। श्नाभ्यस्तयोरात इत्याकारलोपः। प्रत्ययस्वरः। यद्वृत्तयोगादनिघातः॥

विश्वा॑न्दे॒वाँ आ व॑ह॒ सोम॑पीतये॒ऽन्तरि॑क्षादुष॒स्त्वं ।
सास्मासु॑ धा॒ गोम॒दश्वा॑वदु॒क्थ्य१॒॑मुषो॒ वाजं॑ सु॒वीर्यं॑ ॥१२॥
विश्वा॑न् । दे॒वान् । आ । व॒ह॒ । सोम॑ऽपीतये । अ॒न्तरि॑क्षात् । उ॒षः॒ । त्वं ।
सा । अ॒स्मासु॑ । धाः॒ । गोऽम॑त् । अश्व॑ऽवत् । उ॒क्थ्यं॑ । उषः॑ । वाजं॑ । सु॒ऽवीर्यं॑ ॥१२॥

हे उषस्त्वं सोमपीतये सोमपानायांतरिक्षादंतरिक्षलोकाद्विश्वान्सर्वान्देवाना वह। अस्मदीयं देवयजनदेशं प्रापय। हे उषः सा तादृशी त्वं गोमत् गोमंतं बहुभिर्गोभिर्युक्तमश्वावदश्वैरुपेतमुक्थ्यं प्रशस्यं सुवीर्यं शोभनवीर्योपेतं वाजमन्नमस्मासु धाः। निधेहि। स्थापयेत्यर्थः॥ धाः। दधातेश्छंदसि लुङ्लङ्लिट इति प्रार्थनायां लुङ्। गातिस्थेति सिचो लुक्। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। गोमत्। अश्वावत्। मंत्रे सोमाश्वेंद्रियेति मतुपि दीर्घत्वं। उभयत्र सुपां सुलुगिति विभक्तेर्लुक्। उक्थ्यं। उक्थं स्तोत्रं। तत्र भवमुक्थ्यं। भवे छंदसीति यत्। सर्वे विधयश्छंदसि विकल्प्यंत इति यतोऽनाव इत्याद्युदात्तत्वाभावे तित्स्वरितमिति स्वरितत्वं। उषः। आमंत्रिताद्युदात्तत्वं। पादादित्वान्निघाताभावः। सुवीर्यं। शोभनं वीर्यं यस्य। वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं॥

यस्या॑ रु॒शंतो॑ अ॒र्चयः॒ प्रति॑ भ॒द्रा अदृ॑क्षत ।
सा नो॑ र॒यिं वि॒श्ववा॑रं सु॒पेश॑समु॒षा द॑दातु॒ सुग्म्यं॑ ॥१३॥
यस्याः॑ । रु॒शंतः॑ । अ॒र्चयः॑ । प्रति॑ । भ॒द्राः । अदृ॑क्षत ।
सा । नः॒ । र॒यिं । वि॒श्वऽवा॑रं । सु॒ऽपेश॑सं । उ॒षाः । द॒दा॒तु॒ । सुग्म्यं॑ ॥१३॥

यस्या उषसोऽर्चयः प्रकाशा रुशंतः शत्रून्हिंसंतो भद्राः कल्याणाः प्रत्यदृक्षत प्रतिदृश्यंते सा तथाभूतोषा नोऽस्मभ्यं रयिं ददातु। कीदृशं रयिं। विश्ववारं विश्वस्य वारकं। यद्वा। विश्वैर्वरणीयं। सुपेशसं। पेश इति रूपनाम। शोभनरूपोपेतं सुग्म्यं सुष्ठु गंतव्यं। यद्वा। सुग्म्यमिति सुखनाम। तद्धेतुत्वात्ताच्छब्द्यं॥ रुशंतः। रुश रिश हिंसायां। शतरि तुदादित्वाच्छः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे सति शिष्टत्वाद्विकरणस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वं। अदृक्षत। दृशेः कर्मणि लुङि झस्यादादेशः। च्लेः सिच्। न दृशः। पा० ३. १. ४७.। इति क्सप्रतिषेधः। एकाच इतीट्प्रतिषेधः। लिङ्सिचावात्मनेपदेषु। पा० १. २. ११.। इति सिचः कित्त्वाल्लघूपधगुणाभावः। सृजिदृशोर्झल्यमकिति। पा० ६. १. ५८.। इत्यमागमाभावश्च। केत्वं॰ । षत्वकत्वषत्वानि। अडागम उदात्तः। यद्वृत्तयोगादनिघातः। विश्ववारं। विश्वं वृणोतीति विश्ववारः। वृञ् वरणे। कर्मण्यण्। यद्वा। विश्वैर्व्रियत इति विश्ववारः। कर्मणि घञ्। मद्वृधादित्वात्पूर्वपदांतोदात्तत्वं। सुग्म्यं। सुष्ठु गंतव्यः सुग्मः। गमेर्घञर्थे कविधानमिति कप्रत्ययः। गमहनेत्यादिनोपधालोपः। तत्र भवं सुग्म्यं। भवे छंदसीति यत्। यतोऽनाव इत्याद्युदात्तत्वं॥

ये चिद्धि त्वामृषयः पूर्वं ऊतये जुहूरेऽवसे महि ।
सा नः स्तोमाँ अभि गृणीहि राधसोषः शुक्रेण शोचिषा ॥१४॥
ये । चित् । हि । त्वां । ऋषयः । पूर्वे । ऊतये । जुहूरे । अवसे । महि ।
सा । नः । स्तोमान् । अभि । गृणीहि । राधसा । उषः । शुक्रेण । शोचिषा ॥१४॥

हे महि महिते पूजनीये वोषोदेवते त्वां ये चिद्धि ये खलु प्रसिद्धाः पूर्वे चिरंतना ऋषयो मंत्रद्रष्टार ऊतये रक्षणाय। अव इत्यन्ननाम। अवसेऽन्नाय च जुहूरे जुह्विरे आहूतवंतः। सूक्तरूपैर्मंत्रैः स्तुतवंत इत्यर्थः। हे उषः सा तादृशी त्वं राधसास्माभिर्दत्तेन हविर्लक्षणेन धनेन शुक्रेण शोचिषा दीप्तेन तमो निवारयितुं समर्थेन तेजसा चोपलक्षिता सती तेषामृषीणामिव नोऽस्माकं स्तोमानभि स्तुतीरभिलक्ष्य गृणीहि। सम्यक् स्तुतमिति शब्दय। अस्मदीयाभिः स्तुतिभिः संतुष्टा भवेत्यर्थः॥ ऊतये। अवतेः क्तिनि ज्वरत्वरेत्यादिना वकारस्योपधायाश्चोट्। ऊतियूतीत्यादिना क्तिन्नुदात्तो निपातितः। जुहूरे। ह्वेञ् स्पर्धायां शब्दे च। लिट्यभ्यस्तस्य चेति द्विर्वचनात्पूर्वमेवाभ्यस्तकारणभूतस्य ह्वयतेः संप्रसारणं। अभ्यस्तस्य यो ह्वयतिः कश्चाभ्यस्तस्य ह्वयतिः यस्तस्य कारणं।का० ६.१.३३.। इति व्याख्यातत्वात्। परपूर्वत्वे हल इति दीर्घत्वं। द्विर्वचनादीनि। इरयो र इतीरिचो रेआदेशः। चित इत्यंतोदात्तत्वं। यद्वृत्तयोगादनिघातः। तत्र हि पंचमीनिर्देशेऽपि व्यवहितेऽपि कार्यं भवतीत्युक्तं।का० ८.१.६६.। महि। मह पूजायां। औणादिक इप्रत्ययः। कृदिकारादक्तिन इति ङीष्। संबुद्धावंबार्थेति ह्रस्वत्वं।पा० ७.३.१०७.। स्तोमान्। संहितायां नकारस्य रुत्वाद्युक्तं। नित्त्वादाद्युदात्तत्वं। गृणीहि। गॄ शब्दे। क्र्यादिकः। श्निति प्वादीनां ह्रस्व इति ह्रस्वत्वं। राधसा। राध्नोत्यनेनेति राधः। असुनो नित्त्वादाद्युदात्तत्वं। उषः। पादादित्वादाष्टमिकनिघाताभावे षाष्ठिकमामंत्रिताद्युदात्तत्वं॥

उषो यदद्य भानुना वि द्वारावृणवो दिवः ।
प्र नो यच्छतादवृकं पृथु छर्दिः प्र देवि गोमतीरिषः ॥१५॥
उषः । यत् । अद्य । भानुना । वि । द्वारौ । ऋणवः । दिवः ।
प्र । नः । यच्छतात् । अवृकं । पृथु । छर्दिः । प्र । देवि । गोऽमतीः । इषः ॥१५॥

हे उषस्त्व[illegible]तसमये यद्यस्माद्भानुना प्रकाशेन दिवोऽंतरिक्षस्य द्वारौ द्वारभूतौ पूर्वापरदिग्भागावंधकारेणाच्छादितौ व्यृणवः विश्लिष्य प्राप्नोषि तस्मात्त्वं नोऽस्मभ्यं छर्दिस्तेजस्वि गृहं प्र यच्छतात्। देहि। कीदृशं छर्दिः। अवृकं हिंसकरहितं पृथु विस्तीर्णं। अपि च हे देवि देवनशीले गोमतीर्बहुभिर्गोभिर्युक्ता इषोऽन्नानि। प्रेत्युपसर्गस्यावृत्तेर्यच्छतादित्यनुषज्यते। प्र यच्छतात्। देहि। त्वदागमनस्यास्मद्रक्षणार्थत्वादस्मदभीष्टं गृहादिकं प्रयच्छेत्यर्थः। छर्दिरिति गृहनाम। छर्दिश्छदिरिति तन्नामसु पाठात्॥ ऋणवः। ऋणु गतौ। छांदसे लङि सिपि तनादित्वादुप्रत्ययः। ततो व्यत्ययेन शपि गुणावादेशौ। शपः पित्त्वादनुदात्तत्व उप्रत्ययस्वरः शिष्यते। यद्वृत्तयोगादनिघातः। दिवः। ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। प्र नः। उपसर्गाद्बहुलमिति बहुलवचनान्नसो णत्वाभावः। यच्छतात्। दाण दाने। शपि पाघ्रेत्यादिना यच्छादेशः। अवृकं। नास्ति वृकोऽस्मिन्निति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। पृथु। प्रथ प्रख्याने। प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च।उ० १.२९.। इति कुप्रत्ययः संप्रसारणं च। छर्दिरिति गृहनाम। उछृदिर् दीप्तिदेवनयोः। अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः।उ० २.१०९.। इतीसिप्रत्ययः। लघूपधगुणः। प्रत्ययस्वरः॥

सं नो राया बृहता विश्वपेशसा मिमिक्ष्वा समिळाभिरा ।
सं द्युम्नेन विश्वतुरोषो महि सं वाजैर्वाजिनीवति ॥१६॥

सं । नः । राया । बृहता । विश्वऽपेशसा । मिमिक्ष्व । सं । इळाभिः । आ ।
सं । द्युम्नेन । विश्वऽतुरा । उषः । महि । सं । वाजैः । वाजिनीऽवति ॥ १६ ॥

हे उषो नोऽस्मान्राया धनेन सं मिमिक्ष्व । संसिंच । संयोजयेत्यर्थः । कीदृशेन धनेन । बृहता प्रभूतेन विश्वपेशसा । पेश इति रूपनाम । बहुविधरूपयुक्तेन । तथेळाभिरा गोभिश्चास्मान्सं मिमिक्ष्व । इळेति गोनाम । इळा जगतीति तन्नामसु पाठात् । आकारः समुच्चये पदांते वर्तमानत्वात् । उक्तं च । एतस्मिन्नेवार्थे देवेभ्यश्च पितृभ्य एत्याकारः । नि॰ १. ४. । इति । किंच हे महि महनीय उषोदेवते द्युम्नेन यशसा सं मिमिक्ष्व । द्युम्नं द्योततेर्यशो वान्नं वेति यास्कः । नि॰ ५. ५. । कीदृशेन द्युम्नेन । विश्वतुरा सर्वेषां शत्रूणां हिंसकेन । तथा हे वाजिनीवति अन्नसाधनभूतक्रियायुक्ते वाजैरन्नैरस्मान्सं मिमिक्ष्व । अन्नं वै वाजः । शत॰ ब्रा॰ ९. ३. ४. १. । इति श्रुत्यंतरात् ॥ राया । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । बृहता । बृहन्महतोरुपसंख्यानमिति विभक्तिरुदात्ता । विश्वपेशसा । विश्वानि पेशांसि यस्यासौ विश्वपेशाः । बहुव्रीहौ विश्वं संज्ञायामिति व्यत्ययेनासंज्ञायामपि पूर्वपदांतोदात्तत्वं । यद्वा । मरुद्वृधादिर्द्रष्टव्यः । मिमिक्ष्व । मिह सेचने । व्यत्ययेनात्मनेपदं । लोटि बहुलं छंदसीति शपः श्लुः । द्विर्भावहलादिशेषौ । ढत्वकत्वषत्वानि । प्रत्ययस्वरस्य सति शिष्टत्वात्स एव शिष्यते । पूर्वपदस्यासमानवाक्यस्थत्वात्तिङ्ङतिङ इति निघातो न भवति । समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या इति वचनात् । विश्वतुरा । तूर्वतीति तूः । तुर्वी हिंसार्थः । क्विपेति क्विप् । राल्लोप इति वलोपः । विश्वेषां तूर्विश्वतूः । समासस्येत्यंतोदात्तत्वं । वाजिनीवति । वाजोऽन्नमस्या अस्तीति वाजिनी क्रिया । तादृशी क्रिया यस्याः सा तथोक्ता ॥ ॥ ५ ॥

उषो भद्रेभिरिति चतुर्ऋचं षष्ठं सूक्तं । अत्रानुक्रम्यते । उषश्चतुष्कमानुष्टुभं त्विति । कण्वपुत्रः प्रस्कण्व ऋषिः । तुह्यादिपरिभाषयेदमुत्तरं चानुष्टुभं । पूर्वचोषस्यं त्वित्युक्तत्वादिदमपि सूक्तमुषस्यं ॥ प्रातरनुवाकस्योषस्ये क्रतावानुष्टुभे छंदस्येतत्सूक्तं । सूत्र्यते हि । उषो भद्रेभिरित्यानुष्टुभं । आ॰ ४. १४. । इति ॥ आश्विनशस्त्रेऽप्येतत्सूक्तं । प्रातरनुवाकन्यायेन । आ॰ ६. ५. । इत्यतिदेशात् ॥

उषो भद्रेभिरा गहि दिवश्चिद्रोचनादधि । वहंत्वरुणप्सव उप त्वा सोमिनो गृहं ॥ १ ॥
उषः । भद्रेभिः । आ । गहि । दिवः । चित् । रोचनात् । अधि । वहंतु । अरुणऽप्सवः ।
उप । त्वा । सोमिनः । गृहं ॥ १ ॥

हे उष उषोदेवते भद्रेभिर्भंदनीयैः शोभनैर्मार्गैर्दिवोऽंतरिक्षलोकात् रोचनाद्रोचमानाद्दीप्यमानात् । अधिरुपर्यर्थः । उपरिवर्तमानात् । चिदिति पूजितार्थः । पूजितादेवंविधादंतरिक्षलोकादा गहि । आगच्छ । हे उषः अरुणप्सवोऽरुणवर्णा गावः सोमिनः सोमयुक्तस्य यजमानस्य गृहं देवयजनरूपं यज्ञगृहं त्वा त्वामुप वहंतु । प्रापयंतु ॥ गहि । गमेर्लोटि बहुलं छंदसीति शपो लुक् । हेरपित्त्वेन ङित्त्वेऽनुदात्तोपदेशेत्यादिनानुनासिकलोपः । अतो हेरिति लुग्न भवति । असिद्धवदत्रा भादित्यनुनासिकलोपस्यासिद्धत्वात् । रोचनात् । रुच दीप्तौ । अनुदात्तेतश्च हलादेरिति युच् । योरनादेशे चित इत्यंतोदात्तत्वं । अरुणप्सवः । प्सा भक्षणे । प्सांति भक्षयंति स्तनं पिबंतीति प्सवो वत्साः । औणादिकः कुप्रत्ययः । आतो लोप इटि चेत्याकारलोपः । अरुणाः प्सवो यासां तास्तथोक्ताः । अत्र वत्सानामारुण्यप्रतिपादनान्मातॄणामपि तथात्वं गम्यते । पैतृकमश्वा अनुहरंते मातृकं गावोऽनुहरंते । म॰ १. ३. २१. ५. । इति गोनर्दीयः । तासां चोषोवाहनत्वं निघंटावुक्तं । अरुण्यो गाव उषसामिति । अरुणशब्दोऽर्तेश्च । उ॰ ३. ६०. । इत्युनन्प्रत्ययांतः । तृणाख्यायां चित् । उ॰ ३. ५९. । इत्यतश्चिदित्यनुवृत्तेरंतोदात्तः । स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन शिष्यते ॥

सुपेशसं सुखं रथं यमध्यस्था उषस्त्वं । तेना सुश्रवसं जनं प्रावाद्य दुहितर्दिवः ॥ २ ॥
सुऽपेशसं । सुऽखं । रथं । यं । अधिऽअस्थाः । उषः । त्वं । तेन । सुऽश्रवसं । जनं ।
प्र । अव । अद्य । दुहितः । दिवः ॥ २ ॥

हे उषस्त्वं यं रथमध्यस्थाः अधितिष्ठसि । कीदृशं रथं । सुपेशसं शोभनावयवं शोभनरूपयुक्तं वा । पेश इति रूपनामेति यास्कः । नि॰ ८. ११. । यद्वा । शोभनहिरण्ययुक्तं । पेशः इत्यन्नमिति तन्नामसु पाठात् । सुखं शोभनेन खेनाकाशेन युक्तं । विस्तृतमित्यर्थः । यद्वा । सुखहेतुभूतं । अथवा सुखमिति क्रियाविशेषणं । सुखं यथा भवति तथेत्यर्थः । हे दिवो दुहितर्द्युलोकसकाशादुत्पन्न उषोदेवते तेन रथेनाद्यास्मिन्काले सुश्रवसं शोभनहविर्युक्तं जनं यजमानं प्राव । प्रकर्षेण गच्छ ॥ सुपेशसं । पिश अवयवे । अस्मादसुन्प्रत्ययः । नित्त्वादाद्युदात्तः पेशःशब्दः । शोभनं पेशो यस्यासौ सुपेशाः । आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं । अध्यस्थाः । तिष्ठतेश्छंदसि लुङ्लङ्लिट इति वर्तमाने लुङि गातिस्थेति सिचो लुक् । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । तिङि चोदात्तवतीति गतेरनुदात्तत्वं । तेन । अन्येषामपि दृश्यत इति संहितायां दीर्घः । सुश्रवसं । श्रव इत्यन्ननाम । श्रूयत इति सतः । नि॰ १०. ३. । इति यास्कः । सुपेशसमितिवदुत्तरपदाद्युदात्तत्वं । अव । अव रक्षणगतिप्रीतितृप्तीत्युक्तत्वादत्रावतिर्गत्यर्थः । दुहितर्दिवः । परमपि च्छंदसीति षष्ठ्यंतस्य पूर्वामंत्रितांगवद्भावे सति पदद्वयसमुदायस्याष्टमिकं सर्वानुदात्तत्वं ॥

वयश्चित्ते पतत्रिणो द्विपच्चतुष्पदर्जुनि । उषः प्रारन्नृतूँरनु दिवो अंतेभ्यस्परि ॥३॥

वयः । चित् । ते । पतत्रिणः । द्विऽपत् । चतुःऽपत् । अर्जुनि । उषः । प्र । आरन् ।
ऋतून् । अनु । दिवः । अंतेभ्यः । परि ॥३॥

हे अर्जुनि शुभ्रवर्णे उष उषोदेवते ते तव ऋतूँरनु गमनान्यनुलक्ष्य द्विपत् द्विपात् मनुष्यादिकं चतुष्पत् गवादिकं तथा पतत्रिणः पतत्रवंतः पक्षोपेता वयश्चित् पक्षिणश्च दिवोऽंतेभ्य आकाशप्रांतेभ्यः पर्युपरि प्रारन् । प्रकर्षेण गच्छंति । रात्रावंधकारेणाभिभूताः सर्वे प्राणिनस्त्वदागमानंतरं चेष्टावंतो भवंतीत्यर्थः ॥ पतत्रिणः । पत्लृ गतौ । पतत्यनेनेति पतत्रं । अमिनक्षीत्यादिना । उ॰ ३. १०५. । अत्रन्प्रत्ययः । ततो मत्वर्थीय इनिः । द्विपत् । द्वौ पादावस्येति संख्यासुपूर्वस्य । पा॰ ५. ४. १४०. । इति पादशब्दस्यांत्यलोपः समासांतः । अयस्याद्रित्वेन भत्वात् पादः पत् । पा॰ ६. ४. १३०. । इति पद्भावः । द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहौ । पा॰ ६. २. १९७. । इत्युत्तरपदांतोदात्तत्वं । चतुष्पत् । चत्वारः पादा अस्य । स्वरव्यतिरिक्तं पूर्ववत् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । इणः ष इत्यनुवृत्ताविदुदुपधस्य चाप्रत्ययस्य । पा॰ ८. ३. ४१. । इति विसर्जनीयस्य षत्वं । न च परत्वेनास्य विद्धत्वात् कुप्वोः ≍क≍पौ च । पा॰ ८. ३. ३७. । इत्युपध्मानीयादेशः शंकनीयः । येननाप्राप्तिन्यायेन तस्यापवादत्वात् । अपवादस्तु परमपि पूर्वं बाधत एवेति वृत्तावुक्तं । आरन् । ऋ गतौ । छंदसि लुङ्लङ्लिट इति वर्तमाने लुङि सर्तिशास्त्यर्तिभ्यश्चेति च्लेरङादेशः । ऋदृशोऽङि गुण इति गुणः । आडागमः । ऋतून् । ऋ गतौ । अस्मादौणादिको भावे कुप्रत्ययः । अनु । अनुर्लक्षणे । पा॰ १. ४. ८४. । इत्यनोः कर्मप्रवचनीयत्वं । कर्मप्रवचनीययुक्ते । पा॰ २. ३. ८. । इति द्वितीया । संहितायां दीर्घादटि समानपाद इति नकारस्य रुत्वं । अत्रानुनासिकः पूर्वस्य तु वेति रोः पूर्वस्य वर्णस्य सानुनासिकत्वं । दिवः । ऊडिदमिति विभक्तिरुदात्ता । अंतेभ्यः । पंचम्याः परावध्यर्थ इति विसर्जनीयस्य सत्वं ॥

व्युच्छंती हि रश्मिभिर्विश्वमाभासि रोचनं ।
तां त्वामुषर्वसूयवो गीर्भिः कण्वा अहूषत ॥४॥

विऽउच्छंती । हि । रश्मिऽभिः । विश्वं । आऽभासि । रोचनं ।
तां । त्वां । उषः । वसुऽयवः । गीःऽभिः । कण्वाः । अहूषत ॥४॥

हे उषो व्युच्छंती तमो वर्जयंती त्वं रश्मिभिः स्वकीयैस्तेजोभिर्विश्वं सर्वं भूतजातं रोचनं रोचमानं प्रकाशयुक्तं यथा भवति तथाभासि । आ समंतात् प्रकाशसे । हि यस्मादेवं तस्मात्तां तादृशीं त्वां वसूयवो वसुकामाः कण्वा मेधाविन ऋत्विजः कण्वगोत्रोत्पन्ना वा महर्षयो गीर्भिः स्तुतिलक्षणैर्वचोभिरहूषत । स्तुतवंत इत्यर्थः । कण्व इति मेधाविनाम । कण्व ऋभुरिति तन्नामसु पाठात् ॥ आभासि । भा दीप्तौ । अदादित्वाच्छपो लुक् । सिपः पित्त्वादनुदात्तत्वे धातुस्वरः । हि चेति निघातप्रतिषेधः । तिङि चोदात्तवतीति गतेरनुदात्तत्वं ।

रोचनं । रुच दीप्तौ । अनुदात्तेतश्च हलादेरिति युच् । चित इत्यंतोदात्तत्वं । वसूयवः । वसु धनमात्मन इच्छंतः । सुप आत्मनः क्यच् । अकृत्सार्वधातुकयोरिति दीर्घः । क्याच्छंदसीत्युप्रत्ययः । गीर्भिः । सावेकाच इति विभक्तिरुदात्तत्वं । कण्वाः । कण शब्दार्थः । अशिप्रुषिलटिकणीत्यादिना क्वन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । अहूषत । ह्वेञो लुङि ह्वः संप्रसारणमित्यनुवृत्तौ बहुलं छंदसीति संप्रसारणं । परपूर्वत्वे हल इति दीर्घत्वं । च्लेः सिच् । एकाच इतीट्प्रतिषेधः । संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः ॥ ॥ ६ ॥

उदु त्यमिति त्रयोदशर्चं सप्तमं सूक्तं प्रस्कण्वस्यार्षं सूर्यदेवत्यं । आद्यो नव गायत्र्यः शिष्टाश्चतस्रोऽनुष्टुभ इत्युक्तं । तथा चानुक्रांतं । उदु त्यं सप्तोना सौर्यं नवाद्या गायत्र्य इति ॥ आश्विनशस्त्रे सौर्ये क्रतावुदु त्यमित्याद्यो नवर्चः शंसनीयाः । संस्थितेष्वाश्विनायेति खंडे सूचितं । सूर्यो नो दिव उदु त्यं जातवेदसमिति नव । आ॰ ६.५. । इति ॥

उदु त्यं जातवेदसं देवं वहंति केतवः । दृशे विश्वाय सूर्यं ॥ १ ॥
उत् । ऊं इति । त्यं । जातऽवेदसं । देवं । वहंति । केतवः । दृशे । विश्वाय । सूर्यं ॥ १ ॥

केतवः प्रज्ञापकाः सूर्याश्वा यद्वा सूर्यरश्मयः सूर्यं सर्वस्य प्रेरकमादित्यमुदु वहंति । ऊर्ध्वं वहंति । उ इति पादपूरणः । उक्तं च । मिताक्षरेष्वनर्थकाः कमीमिद्विति । नि॰ १.९. । किमर्थं । विश्वाय विश्वस्मै भुवनाय दृशे द्रष्टुं । यथा सर्वे जनाः सूर्यं पश्यंति तथोर्ध्वं वहंतीत्यर्थः । कीदृशं सूर्यं । त्यं प्रसिद्धं जातवेदसं जातानां प्राणिनां वेदितारं जातप्रज्ञं जातधनं वा देवं द्योतमानं । अत्र निरुक्तं । उद्वहंति तं जातवेदसं देवमश्वाः केतवो रश्मयो वा सर्वेषां भूतानां संदर्शनाय सूर्यं । नि॰ १२.१५. । इति ॥ जातवेदसं । जातानि वेत्तीति जातवेदाः । गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च । दृशे । दृशे विख्ये च । पा॰ ३.४.११. । इति तुमर्थे निपातितः । सूर्यं । राजसूयसूर्येत्यादिना षू प्रेरण इत्यस्मात् क्यपि रुडागमसहितो निपातितः । अतः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरेणाद्युदात्तत्वं ॥

अप त्ये तायवो यथा नक्षत्रा यंत्यक्तुभिः । सूराय विश्वचक्षसे ॥ २ ॥
अप । त्ये । तायवः । यथा । नक्षत्रा । यंति । अक्तुऽभिः । सूराय । विश्वऽचक्षसे ॥ २ ॥

त्ये तायवो यथा प्रसिद्धास्तस्करा इव नक्षत्रा नक्षत्राणि देवगृहरूपाणि । देवगृहा वै नक्षत्राणि । तै॰ ब्रा॰ १.५.२.६. । इति श्रुत्यंतरात् । यद्वा । इह लोके कर्मानुष्ठाय ये स्वर्गं प्राप्नुवंति ते नक्षत्ररूपेण दृश्यंते । तथा च श्रूयते । यो वा इह यजतेऽमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वं । तै॰ ब्रा॰ १.५.२.५. । इति । यद्वा । तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यंते । सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणि । तै॰ सं॰ ५.४.१.३. । इत्याम्नानात् । यास्कस्त्वाह । नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि क्षत्राणीति च ब्राह्मणं । नि॰ ३.२०. । इति । तथाविधानि नक्षत्राण्यक्तुभी रात्रिभिः सहाप यंति । अपगच्छंति । विश्वचक्षसे विश्वस्य सर्वस्य प्रकाशकस्य सूराय सूर्यस्यागमनं दृष्ट्वेति शेषः । तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य आगमिष्यतीति भीत्या पलायंत इत्यर्थः । तायुरिति स्तेननाम । तायुस्तस्कर इति तन्नामसु पाठात् । अक्तुरिति रात्रिनाम । शर्वर्यक्तुरिति तत्र पाठात् ॥ यथा । यथेति पादांत इति सर्वानुदात्तत्वं । नक्षत्रा । नक्ष गतौ । अमिनक्षियजिवंधिपतिभ्योऽत्रन् । उ॰ ३.१०५. । इत्यत्रन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । नभ्राण्नपादित्यत्र वृत्तौ त्वेवमुक्तं । न क्षरति न क्षीयत इति वा नक्षत्रं । क्षीयतेः क्षरतेर्वा नक्षत्रमिति निपात्यत इति । शेश्छंदसि बहुलमिति शेर्लोपः । यंति । इण् गतौ । इणो यणिति यणादेशः । सूराय विश्वचक्षसे । विश्वं चष्टे प्रकाशयतीति विश्वचक्षाः । चक्षेर्बहुलं शिच्च । उ॰ ४.२३२. । इत्यसुन्प्रत्ययः । शित्त्वेन सार्वधातुकत्वात् ख्याञादेशाभावः । उभयत्र षष्ठ्यर्थे चतुर्थी वक्तव्या । म॰ २.३.६२.१. । इति चतुर्थी ॥

अदृश्रमस्य केतवो वि रश्मयो जनाँ अनु । भ्राजंतो अग्नयो यथा ॥ ३ ॥
अदृश्रं । अस्य । केतवः । वि । रश्मयः । जनान् । अनु । भ्राजंतः । अग्नयः । यथा ॥ ३ ॥

अस्य सूर्यस्य केतवः प्रज्ञापका रश्मयो दीप्तयो जनाननु व्यदृश्रं । जातान्सर्वाननुक्रमेण प्रेक्षंते । सर्वं जगत्प्रकाशयंतीत्यर्थः । तत्र दृष्टांतः । भ्राजंतो दीप्यमाना अग्नयो यथा अग्नय इव ॥ अदृश्रं । दृशिर् प्रेक्षणे । वर्तमाने लुङ् । इरितो वा । पा० ३. १. ५७. । इति च्लेरङादेशः । रुडित्यनुवृत्तौ बहुलं छंदसि । पा० ७. १. ८. । इति रुडागमः । अत एव बहुलवचनादृदृशोऽङि गुण इति गुणाभाव इत्युक्तं । तिङां तिङो भवंतीति प्रथमपुरुषबहुवचनस्योत्तमपुरुषैकवचनादेशः । प्रथमपुरुषांत एव शाखांतरे श्रूयते । अदृश्रन्नस्य केतवः । अथ० १३. २. १८. । इति । जनानित्यस्य नकारस्य संहितायां रुत्वयत्वादि पूर्ववत् । भ्राजंतः । शपः पित्वादनुदात्तत्वं । शतुश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते ॥

चातुर्मास्येषु शुनासीर्ये पर्वण्यस्ति सौर्य एककपालः । तस्य तरणिरित्येषानुवाक्या । तथा च सूचितं । तरणिर्विश्वदर्शतश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्याः । आ० २. २०. । इति ॥ तथातिमूर्तिनाम्न्येकाहे कृष्णपक्षे सौरीष्टिः कर्तव्या । तस्यामप्येषानुवाक्या । अतिमूर्तिनेति खंडे सूचितं । नवो नवो भवति जायमानस्तरणिर्विश्वदर्शतः । आ० ९. ८. । इति ॥

**त॒रणि॑र्वि॒श्वद॑र्शतो ज्योति॒ष्कृद॑सि सूर्य । विश्व॒मा भा॑सि रोच॒नं ॥ ४ ॥**

**त॒रणिः॑ । वि॒श्वऽद॑र्शतः । ज्यो॒तिः॒ऽकृत् । अ॒सि॒ । सू॒र्य॒ । विश्वं॑ । आ । भा॒सि॒ । रो॒च॒नं ॥ ४ ॥**

हे सूर्य त्वं तरणिस्तरिता अन्येन गंतुमशक्यस्य महतोऽध्वनो गंतासि । तथा च स्मर्यते । योजनानां सहस्रे द्वे द्वे शते द्वे च योजने । एकेन निमिषार्धेन क्रममाण नमोऽस्तु त इति । यद्वा । उपासकानां रोगात्तारयितासि । आरोग्यं भास्करादिच्छेदिति स्मरणात् । तथा विश्वदर्शतो विश्वैः सर्वैः प्राणिभिर्दर्शनीयः । आदित्यदर्शनस्य चंडालादिदर्शनजनितपापनिर्हरणहेतुत्वात् । तथा चापस्तंबः । दर्शने ज्योतिषां दर्शनमिति । यद्वा । विश्वं सकलं भूतजातं दर्शतं द्रष्टव्यं प्रकाश्यं येन स तथोक्तः । तथा ज्योतिष्कृत् ज्योतिषः प्रकाशस्य कर्ता । सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः । यद्वा । चंद्रादीनां रात्रौ प्रकाशयिता । रात्रौ ह्यम्मयेषु चंद्रादिबिंबेषु सूर्यकिरणाः प्रतिफलिताः संतोऽंधकारं निवारयंति यथा द्वारस्थदर्पणोपरि निपतिताः सूर्यरश्मयो गृहांतर्गतं तमो निवारयंति तद्वदित्यर्थः । यस्मादेवं तस्माद्विश्वं व्याप्तं रोचनं रोचमानमंतरिक्षमा समंताद्भासि । प्रकाशयसि ॥ यद्वा । हे सूर्य अंतर्यामितया सर्वस्य प्रेरक परमात्मन् तरणिः संसाराब्धेस्तारकोऽसि । यस्मात्त्वं विश्वदर्शतो विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः । साक्षात्कर्तव्य इत्यर्थः । अधिष्ठानसाक्षात्कारे ह्यारोपितं निवर्तते । ज्योतिष्कृत् ज्योतिषः सूर्यादेः कर्ता । तथा चाम्नायते । चंद्रमा मनसो जातश्चक्षोः सूर्यो अजायत । तै० आ० ३. १२. ६. । इति । ईदृशस्त्वं चिद्रूपतया विश्वं सर्वं दृश्यजातं रोचनं रोचमानं दीप्यमानं यथा भवति तथा भासि । प्रकाशयसि । चैतन्यस्फुरणे हि सर्वं जगद्भासते । तथा चाम्नायते । तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति । क० उ० ५. १५. । इति ॥ तरणिः । तॄ प्लवनतरणयोः । अस्मादंतर्भावितण्यर्थादर्तिसृधृधम्यश्यवितॄभ्योऽनिरित्यनिप्रत्ययः । प्रत्ययाद्युदात्तत्वं । ज्योतिः करोतीति ज्योतिष्कृत् । क्विब्चेति क्विप् । नित्यं समासेऽनुत्तरपदस्थस्येति विसर्जनीयस्य षत्वं । भासि । भा दीप्तौ । अंतर्भावितण्यर्थाज्जुहोत्यादित्वाच्छपो लुक् ॥

**प्र॒त्यङ् दे॒वानां॒ विशः॑ प्र॒त्यङ्ङुदे॑षि॒ मानु॑षान् । प्र॒त्यङ्विश्वं॒ स्व॑र्दृ॒शे ॥ ५ ॥**

**प्र॒त्यङ् । दे॒वानां॑ । विशः॑ । प्र॒त्यङ् । उत् । ए॒षि॒ । मानु॑षान् । प्र॒त्यङ् । विश्वं॑ । स्वः॑ । दृ॒शे ॥ ५ ॥**

हे सूर्य त्वं देवानां विशो मरुन्नामकान्देवान् । मरुतो वै देवानां विशः । तै० सं० २. २. ५. ७. । इति श्रुत्यंतरात् । तान्मरुत्संज्ञकान्देवान् प्रत्यङ्ङुदेषि । तान्प्रतिगच्छन्नुदयं प्राप्नोषि । तेषामभिमुखं यथा भवति तथेत्यर्थः । तथा मानुषान्मनुष्यान् प्रत्यङ्ङुदेषि । तेऽपि यथास्मदभिमुख एव सूर्य उदेतीति मन्यंते । तथा विश्वं व्याप्तं स्वः स्वर्लोकं दृशे द्रष्टुं प्रत्यङ्ङुदेषि । यथा स्वर्लोकवासिनो जनाः स्वस्याभिमुख्येन पश्यंति तथोदेषीत्यर्थः । एतदुक्तं भवति । लोकत्रयवर्तिनो जनाः सर्वेऽपि स्वस्याभिमुख्येन सूर्यं पश्यंतीति । तथा चाम्नायते । तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति ॥ प्रत्यङ् । प्रत्यंचतीति प्रत्यङ् । अन्चु गतिपूजनयोः ।

ऋत्विगित्यादिना क्विन्। अनिदितामिति नलोपः। उगिदचामिति नुम्। हल्ङ्याब्भ्यादिसंयोगांतलोपौ। संयोगांतलोपस्यासिद्धत्वादुपधादीर्घनलोपयोरभावः। क्विन्प्रत्ययस्य कुः। पा॰ ८. २. ६२.। इति कुत्वं। अनिगंतोऽंचतौ। पा॰ ६. २. ५२.। इत्यनिगंत इति पर्युदासात्पूर्वपदप्रकृतिस्वराभावे हृकुत्तरपदप्रकृतिस्वरत्वं। एषि। इण् गतौ। सिप्यदादित्वाच्छपो लुक्। आदेशप्रत्यययोरिति षत्वं। स्वः। सुपूर्वादर्तेर्विच्। गुणे यणादेशः। न्यङ्स्वरौ स्वरितौ चेति स्वरितत्वं। दृशे। दृशिर् प्रेक्षण इत्यस्माद्दृशे विख्ये चेति तुमर्थे निपातितः॥ ॥ ७॥

येना पावक चक्षसा भुरण्यंतं जनाँ अनु। त्वं वरुण पश्यसि ॥ ६॥

येन। पावक। चक्षसा। भुरण्यंतं। जनान्। अनु। त्वं। वरुण। पश्यसि ॥ ६॥

हे पावक सर्वस्य शोधक वरुण अनिष्टनिवारक सूर्य त्वं जनान् जातान्प्राणिनो भुरण्यंतं धारयंतं पोषयंतं वेमं लोकं येन चक्षसा प्रकाशेनानु पश्यसि अनुक्रमेण प्रकाशयसि। तं प्रकाशं स्तुम इति शेषः। यद्वा। उत्तरस्यामृचि संबंधः। तेन चक्षसा व्येषीति। तथा च यास्केनोक्तं। तत्ते वयं स्तुम इति वाक्यशेषोऽपि वोत्तरस्यामन्वयस्तेन व्येषि। नि॰ १२. २२.। इति॥ भुरण्यंतं। भुरण धारणपोषणयोः। कंड्वादित्वाद्यक्। ततः शतरि कर्तरि शप्। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते। वरुण। वृञ् वरणे। अस्मादंतर्भावितण्यर्थात्कृवृदारिभ्य उनन्। उ॰ ३. ५३.। इत्युनन्प्रत्ययः। अत्र वरुणशब्देनादित्य एवोच्यते। तथा चान्यत्राम्नातं। तस्मै मित्रश्च वरुणश्चाजायेतामिति। मित्रश्च वरुणश्च धाता चार्यमा च। तै॰ आ॰ १. १३. ३.। इति च॥

वि द्यामेषि रजस्पृथ्वहा मिमानो अक्तुभिः। पश्यञ्जन्मानि सूर्य ॥ ७॥

वि। द्यां। एषि। रजः। पृथु। अहा। मिमानः। अक्तुऽभिः। पश्यन्। जन्मानि। सूर्य ॥ ७॥

हे सूर्य त्वं पृथु विस्तीर्णं रजो लोकं। लोका रजांस्युच्यंत इति यास्कः। नि॰ ४. १९.। कं लोकं। द्यामंतरिक्षलोकं। व्येषि। विशेषेण गच्छसि। किं कुर्वन्। अहाहान्यक्तुभी रात्रिभिः सह मिमान उत्पादयन्। आदित्यगत्यधीनत्वादहोरात्रविभागस्य। तथा जन्मानि जननवंति भूतजातानि पश्यन् प्रकाशयन्॥ रजस्पृथ्वित्यत्र छंदसि वाम्रेडितयोः। पा॰ ८. ३. ४९.। इति विसर्जनीयस्य सत्वं। अहा। शेश्छंदसि बहुलमिति शेर्लोपः। मिमानः। माङ् माने। जौहोत्यादिकः। शानचि श्लौ द्विर्भावे भृञामिदित्यभ्यासस्येत्वं। श्नाभ्यस्तयोरात इत्याकारलोपः। अभ्यस्तानामादिरित्यभ्यस्तस्याद्युदात्तत्वं। जन्मानि। जनी प्रादुर्भावे। अन्येभ्योऽपि दृश्यंत इति मनिन्। नित्त्वादाद्युदात्तत्वं॥

सप्त त्वा हरितो रथे वहंति देव सूर्य। शोचिष्केशं विचक्षण ॥ ८॥

सप्त। त्वा। हरितः। रथे। वहंति। देव। सूर्य। शोचिःऽकेशं। विऽचक्षण ॥ ८॥

हे सूर्य देव द्योतमान विचक्षण सर्वस्य प्रकाशयितः सप्त सप्तसंख्याका हरितोऽश्वा रसहरणशीला रश्मयो वा त्वा त्वां वहंति। प्रापयंति। कीदृशं। रथेऽवस्थितमिति शेषः। तथा शोचिष्केशं। शोचींषि तेजांसीव यस्मिन्केशा इव दृश्यंते स तथोक्तः। तं। हरित इत्यादित्याश्वानां संज्ञा हरित आदित्यस्येति निघंटावुक्तत्वात्॥ शोचिष्केशं। शुच दीप्तौ। अर्चिशुचिहुसृपीत्यादिनेसिप्रत्ययांतोऽंतोदात्तः। स एव बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन शिष्यते। नित्यं समासेऽनुत्तरपदस्थस्येति विसर्जनीयस्य षत्वं॥

अयुक्त सप्त शुंध्युवः सूरो रथस्य नप्त्यः। ताभिर्याति स्वयुक्तिभिः ॥ ९॥

अयुक्त। सप्त। शुंध्युवः। सूरः। रथस्य। नप्त्यः। ताभिः। याति। स्वयुक्तिऽभिः ॥ ९॥

सूरः सर्वस्य प्रेरकः सूर्यः शुंध्युवः शोधिका अश्वस्त्रियः तादृशीः सप्त सप्तसंख्याका अयुक्त। स्वरथे योजितवान्। कीदृश्यः। रथस्य नप्त्यो न पातयित्र्यः। याभिर्युक्ताभी रथो याति न पतति तादृशीभिरित्यर्थः।

एवंभूताभिस्ताभिरश्वस्त्रीभिः स्वयुक्तिभिः स्वकीययोजनेन रथे संबद्धाभिर्याति। यज्ञगृहं प्रत्यागच्छति। अतस्तस्मै हविर्दातव्यमिति वाक्यशेषः॥ अयुक्त। युजिर् योगे। स्वरितेत्त्वात्कर्त्रभिप्राय आत्मनेपदं। लुङि च्लेः सिच्। एकाच इतीट्प्रतिषेधः। लिङ्सिचावात्मनेपदेषु। पा० १.२.११.। इति सिचः कित्त्वाल्लघूपधगुणाभावः। झलो झलीति सिचः सकारलोपः। चोः कुरिति कुत्वं। शुंध्युवः। शुन्ध विशुद्धौ। यजिमनिशुंधिदसिजनिभ्यो युः। उ० ३.२०.। इति युप्रत्ययः। शसि तन्वादीनां छंदसि बहुलमुपसंख्यानं। पा० ६.४.७७.१.। इत्युवङादेशः। सूरः। षू प्रेरणे। सुसूधागृधिभ्यः क्रन्। उ० २.२४.। इति क्रन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं। नप्त्यः। न पातयतीत्यर्थे नप्तृनेष्ट्र। उ० २.९६.। इत्यादिनोणादिषु नप्तृशब्दस्तृजंतो निपातितः। ऋन्नेभ्यो ङीबिति ङीप्। यणादेश उदात्तयणो हल्पूर्वादिति ङीप उदात्तत्वं। सुपां सुपो भवंतीति शसो जसादेशः। ततो यणादेश उदात्तस्वरितयोर्यण इति स्वरितत्वं। रेफलोपश्छांदसः। उक्तं च। द्वौ चापरौ वर्णविकारनाशौ। का० ६.३.१०९.। इति। शाखांतरे तु नप्त्य इत्येव पठ्यते। स्वयुक्तिभिः। स्वकीयाः सूर्यसंबंधिन्यो युक्तयो योजनानि यासां। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥

अवभृथेष्टौ होत्रका जलान्निष्क्रम्योद्वयं तमसस्परीति मंत्रं ब्रूयुः। तथा च पत्नीसंयाजैश्चरित्वेति खंडे सूचितं। उद्वयं तमसस्परीत्युदेत्य। आ० ६.१३.। इति॥

**उद्वयं तमसस्परि ज्योतिष्पश्यंत उत्तरं। देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तमं॥१०॥**

**उत्। वयं। तमसः। परि। ज्योतिः। पश्यंतः। उत्ऽतरं। देवं। देवऽत्रा। सूर्यं। अगन्म। ज्योतिः। उत्ऽतमं॥१०॥**

वयमनुष्ठातारस्तमसस्परि तमस उपरि रात्रेरूर्ध्वं वर्तमानं तमसः पापात्पर्युपरि वर्तमानं वा। पापरहितमित्यर्थः। तथा चाम्नायते। उद्वयं तमसस्परीत्याह पाप्मा वै तमः पाप्मानमेवास्मादप हंति। तै० सं० ५.१.८.६.। इति। ज्योतिस्तेजस्विनमुत्तरमुद्गततरमुत्कृष्टतरं वा देवत्रा देवेषु मध्ये देवं दानादिगुणयुक्तं सूर्यं पश्यंतः स्तुतिभिर्हविर्भिश्चोपासीनाः संत उत्तममुत्कृष्टतमं ज्योतिः सूर्यरूपमगन्म। प्राप्नवाम। तथा च श्रूयते। अगन्म ज्योतिरुत्तममित्याहासौ वा आदित्यो ज्योतिरुत्तममादित्यस्यैव सायुज्यं गच्छतीति। युक्तं चैतत्। तं यथा यथोपासते तदेव भवंतीति श्रुत्यंतरात्॥ तमसस्परि। पंचम्याः परावध्यर्थ इति विसर्जनीयस्य सत्वं। ज्योतिष्पश्यंतः। इसुसोः सामर्थ्ये। पा० ८.३.४४.। इति विसर्जनीयस्य षत्वं। व्यपेक्षालक्षणं सामर्थ्यं तत्रांगीक्रियते। देवत्रा। देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलं। पा० ५.४.५६.। इति सप्तम्यर्थे त्राप्रत्ययः। प्रत्ययस्वरः। अगन्म। छंदसि लुङ्लङ्लिट इति प्रार्थनायां लङि बहुलं छंदसीति शपो लुक्। म्वोश्च। पा० ८.२.६५.। इति धातोर्मकारस्य नकारः। अडागम उदात्तः। पादादित्वान्निघाताभावः। उत्तमं। तमपः पित्त्वादनुदात्तत्वे प्राप्त उत्तमशश्वत्तमौ सर्वत्रेत्युंछादिषु पाठादंतोदात्तत्वं॥

उद्यन्नित्ययं तृचो रोगशांत्यर्थः। तथा चानुक्रमणामुक्तं। अंत्यस्तृचो रोगघ्न उपनिषदिति। युक्तं चैतत्। यस्मादनेन तृचेन त्वग्दोषशांतये प्रस्कण्वः सूर्यमस्तौत् तेन तृचेन स्तुतः सूर्यस्तमृषिं रोगान्निरगमयत् तस्मादिदानीमपि रोगशांतयेऽनेन तृचेन सूर्य उपासनीयः। तदुक्तं शौनकेन। उद्यन्नवेति मंत्रोऽयं सौरः पापप्रणाशनः। रोगघ्नश्च विषघ्नश्च भुक्तिमुक्तिफलप्रद इति॥

**उद्यन्नद्य मित्रमह आरोहन्नुत्तरां दिवं। हृद्रोगं मम सूर्य हरिमाणं च नाशय॥११॥**

**उत्ऽयन्। अद्य। मित्रऽमहः। आऽरोहन्। उत्ऽतरां। दिवं। हृत्ऽरोगं। मम। सूर्य। हरिमाणं। च। नाशय॥११॥**

हे सूर्य सर्वस्य प्रेरक मित्रमहः सर्वेषामनुकूलदीप्तियुक्त [illegible] उद्यन् उदयं गच्छन् उत्तरामुन्नततरां दिवमंतरिक्षमारोहन् आभिमुख्येन प्राप्नुवन्। यद्वा। दिवमंतरिक्षमुत्तरामारोहन् उत्कर्षेण प्राप्नुवन्। एवंविधस्त्वं मम हृद्रोगं हृदयगतमांतरं रोगं हरिमाणं शरीरगतकांतिहरणशीलं बाह्यं रोगं। यद्वा।

शरीरगतं हरिद्वर्णं रोगप्राप्तं वैवर्ण्यमित्यर्थः। तदुभयमपि नाशय। मां स्तोतारमुभयविधाद्रोगान्मोचयेत्यर्थः॥ मित्रमहः। मित्रमनुकूलं महस्तेजो यस्यासौ। आमंत्रितनिघातः। उत्तरां। उदित्यनेनोपसर्गेण स्वसंसृष्टधात्वर्थो लक्ष्यते। तस्मादातिशायनिकस्तरप्रत्ययः। प्रथमपक्षेऽंतरिक्षविशेषणत्वेन द्रव्यप्रकर्षप्रतीतिराम् न भवति। द्वितीये त्वारोहणक्रियायाः प्रकर्षो गम्यत इति किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे। पा° ५. ४. ११.। इति आमुः। प्रथमपक्षे टाप्तरपोः पित्त्वादनुदात्तत्व उपसर्गस्वर एव शिष्यते। द्वितीये त्वाम्प्रत्ययस्य सति शिष्टत्वात्तस्यैव स्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वं। वृषादिर्वा द्रष्टव्यः। स ह्याकृतिगणः। हृद्रोगं। वा शोकष्यञ्रोगेषु। पा° ६. ३. ५१.। इति हृदयशब्दस्य हृदादेशः। मम। युष्मदस्मदोर्ङसीत्याद्युदात्तत्वं। हरिमाणं। हृञ् हरणे। जनिहृभ्यामिमनिन्। उ° ४. १४८.। इत्यौणादिक इमनिन्प्रत्ययः। व्यत्ययेनांतोदात्तत्वं। यद्वा। हरिच्छब्दस्य वर्ण[illegible]दृढादिभ्यः ष्यञ् च। पा° ५. १. १२३.। इति चकारादिमनिन्प्रत्ययः। इष्टेमेयःस्वित्यनुवृत्तौ टेरिति टिलोपः॥

शुकेषु मे हरिमाणं रोपणाकासु दध्मसि।
अथो हारिद्रवेषु मे हरिमाणं नि दध्मसि ॥१२॥
शुकेषु। मे। हरिमाणं। रोपणाकासु। दध्मसि।
अथो इति। हारिद्रवेषु। मे। हरिमाणं। नि। दध्मसि ॥१२॥

मे मदीयं हरिमाणं शरीरगतं हरिद्वर्णस्य भावं शुकेषु तादृशं वर्णं कामयमानेषु पक्षिषु तथा रोपणाकासु शारिकासु पक्षिविशेषेषु दध्मसि। स्थापयामः। अथो अपि च हारिद्रवेषु हरितालद्रुमेषु तादृग्वर्णवत्सु मे मदीयं हरिमाणं नि दध्मसि। निदधीमहि। स च हरिमा तत्रैव सुखेनास्तामस्मान्मा बाधिष्टेत्यर्थः॥ दध्मसि। इदंतो मसिरिति मस इकारागमः॥

उदगादयमादित्यो विश्वेन सहसा सह। द्विषंतं मह्यं रंधयन्मो अहं द्विषते रधं ॥१३॥
उत्। अगात्। अयं। आदित्यः। विश्वेन। सहसा। सह। द्विषंतं। मह्यं। रंधयन्।
मो इति। अहं। द्विषते। रधं ॥१३॥

अयं पुरोवर्त्यादित्योऽदितेः पुत्रः सूर्यो विश्वेन सहसा सर्वेण बलेन सहोदगात्। उदयं प्राप्तवान्। किं कुर्वन्। मह्यं द्विषंतं रंधयन्। ममोपद्रवकारिणं हिंसन्। अपि चाहं द्विषतेऽनिष्टकारिणे रोगाय मो रधं। नैव हिंसां करोमि। सूर्य एव [illegible]कारिणं रोगं विनाशयत्वित्यर्थः॥ अगात्। एतेर्लुङीणो गा लुङीति गादेशः। गातिस्थेति सिचो लुक्। आदित्यः। दित्यदित्यादित्येत्यपत्यार्थे प्राग्दीव्यतीयो ण्यप्रत्ययः। रंधयन्। रध हिंसासंराद्ध्योः। ण्यंताल्लटः शतृ। रधिजभोरचि। पा° ७. १. ६१.। इति णौ धातोर्नुमागमः। मो। मा उ [illegible] मैवेत्यस्यार्थे। ओत्। पा° १. १. १५.। इति प्रगृह्यत्वे प्लुतप्रगृह्या अचीति प्रकृतिभावः। द्विषते। शतुरनुम इति विभक्तेरुदात्तत्वं। रधं। रधेर्लुङि पुषादित्वात् च्लेरङादेशः। रधिजभोरचीति धातोर्नुम्। अनिदितामित्यनुषंगलोपः। न माङ्योग इत्यडभावः॥ ॥८॥ ॥९॥

दशमेऽनुवाके सप्त सूक्तानि। तत्राभि त्वमिति पंचदशर्चं प्रथमं सूक्तं। [illegible]ति। आंगिरा इंद्रसदृशं पुत्रमात्मनः कामयमानो देवता उपासां चक्रे। तस्य सव्याख्येन पुत्ररूपेणेंद्र एव स्वयं जज्ञे जगति मत्तुल्यः कश्चिन्मा भूदिति। स सव्य आंगिरसोऽस्य सूक्तस्य ऋषिः। चतुर्द[illegible] त्रिष्टुभौ। [illegible] सूक्तस्य शिष्टा जगत्य इति प[illegible]शिष्टास्त्रयोदशर्चो जगत्यः। इंद्रो देवता। तदेतत्सर्वमनुक्रमण्यामुक्तं। अभि त्वं पंचोना सव्यो ह्यंगिर[illegible] इंद्रतुल्यं पु[illegible]ध्यायतसव्य इतींद्र एवास्य पुत्रोऽजायतेति॥ अतिरात्रे प्रथमे रात्रिपर्याये होतुः शस्त्र इदं सूक्तं शंसनीयं। अतिरात्रे पर्यायाणामिति खंडे सूचितं। अभि त्वं मेषमध्वर्यवो भरतेंद्राय सोममिति याज्या। आ° ६. ४.। इति॥ नवाहस्य च मध्यभूते विषुवत्संज्ञकेऽहन्यपि

निष्केवल्य इदं सूक्तं शंसनीयं। तथा च सूचितं। यस्तिग्मशृंगोऽभि त्यं मेषमिंद्रस्य नु वीर्याणीत्येतस्मिन्नैंद्रीं निविदं शस्त्वा। आ० ८. ६.। इति॥

अभि त्यं मेषं पुरुहूतमृग्मियमिंद्रं गीर्भिर्मदता वस्वो अर्णवं।
यस्य द्यावो न विचरंति मानुषा भुजे मंहिष्ठमभि विप्रमर्चत॥१॥
अभि। त्यं। मेषं। पुरुऽहूतं। ऋग्मियं। इंद्रं। गीःऽभिः। मदत। वस्वः। अर्णवं।
यस्यं। द्यावः। न। विऽचरंति। मानुषा। भुजे। मंहिष्ठं। अभि। विप्रं। अर्चत॥१॥

त्यं प्रसिद्धं मेषं शत्रुभिः स्पर्धमानं। यद्वा। कण्वपुत्रं मेधातिथिं यजमानमिंद्रो मेषरूपेणागत्य तदीयं सोमं पपौ। स ऋषिस्तं मेष इत्यवोचत्। अत इदानीमपि मेष इतींद्रोऽभिधीयते। मेधातिथेर्मेषेति सुब्रह्मण्यमंत्रैकदेशस्य व्याख्यानरूपं ब्राह्मणमेवमाम्नायते। मेधातिथिं हि काण्वायनिं मेषो भूत्वाजहारेति। आगत्य सोममपहृतवानित्यर्थः। पुरुहूतं पुरुभिर्यजमानैराहूतं ऋग्मियमृग्भिर्विक्रियमाणं। स्तूयमानमित्यर्थः। स्तुत्या हि देवता विक्रियते। यद्वा। ऋग्भिर्मीयते शब्द्यत इति ऋग्मीः। तं। वस्वो अर्णवं धनानामावासभूमिं एवंगुणविशिष्टमिंद्रं हे स्तोतारो गीर्भिः स्तुतिभिरभि मदत। आभिमुख्येन हर्षं प्रापयत। यस्येंद्रस्य कर्माणि मानुषा मनुष्याणां हितानि विचरंति विशेषेण वर्तंते। तत्र दृष्टांतः। द्यावो न। यथा सूर्यरश्मयः सर्वेषां हितकराः। भुजे भोगाय मंहिष्ठमतिशयेन प्रवृद्धं विप्रं मेधाविनं तथाविधमिंद्रमभ्यर्चत। अभिपूजयत॥ मेषं। मिष स्पर्धायां। इगुपधलक्षणे के प्राप्ते देवसेनमेषादयः पचादिषु द्रष्टव्या इति वचनादच्प्रत्ययः। ऋग्मियं। तस्य विकार इत्यर्थ एकाचो नित्यं मयटमिच्छंति। का० ४. ३. १४४.। इति मयट्प्रत्ययः। अकारस्येकारश्छांदसः। प्रत्ययस्वरः। यद्वा। माङ् माने शब्दे च। ऋग्भिर्मीयत इति ऋग्मीः। क्विपि वलि लोपात्पूर्वमेव परत्वात् घुमास्थेतीत्वं। अचि श्नुधात्वित्यादिनेयङादेशः। कृदुत्तरपदप्रकृतिस्वरत्वं। मदत। मदी हर्षे। हेतुमति णिच्। मदी हर्षग्लपनयोरिति घटादिषु पाठात् हर्षार्थे वर्तमानस्य घटादयो मितः। धा० १९. १.। इति मित्त्वे सति मितां ह्रस्वः। पा० ६. ४. ९२.। इति ह्रस्वत्वं। लोण्मध्यमपुरुषबहुवचने शपि छंदस्युभयथेत्यार्धधातुकत्वात् णेरनिटीति णिलोपः। तच्छब्दस्य सार्वधातुकमपिदिति ङित्त्वे ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणामिति दीर्घः। वस्वः। उक्तागमानुशासनस्यानित्यत्वान्नुमभावः। जसादिषु छंदसि वावचनं। पा० ७. ३. १०९. १.। इति वचनात् घेर्ङितीति। पा० ७. ३. १११.। इति गुणाभावे यणादेशः। अर्णवं। अर्ण [illegible]र्णव: समुद्रः। अर्णसो लोपश्च। का० ५. २. १०९. ३.। इति मत्वर्थीयो वप्रत्ययः सलोपश्च। तेन शब्देन जलाश्रयवाचिनाश्रयमात्रं लक्ष्यते। प्रत्ययस्वरः। विचरंति। चर गत्यर्थः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। तिङि चोदात्तवतीति गतिरनुदात्ता। यद्वृत्तयोगादनिघातः। मानुषा। शेश्छंदसि बहुलमिति शेर्लोपः। भुजे। भुज पालनाभ्यवहारयोः। संपदादिलक्षणो भावे क्विप्। सावेकाच इति विभक्तिरुदात्तत्वं। मंहिष्ठं। महि वहि वृद्धौ। [illegible] मंहिता मंहिष्ठः। तुश्छंदसीतीष्ठन्प्रत्ययः। तुरिष्ठेमेयःस्विति तृलोपः। नित्त्वादाद्युदात्तत्वं। अर्चत। अर्च पूजायां। भौवादिकः॥

अभीमवन्वन्स्वभिष्टिमूतयोंऽतरिक्षप्रां तविषीभिरावृतं।
इंद्रं दक्षास ऋभवो मदच्युतं शतक्रतुं जवनी सूनृतारुहत्॥२॥
अभि। ईं। अवन्वन्। सुऽअभिष्टिं। ऊतयः। अंतरिक्षऽप्रां। तविषीभिः। आऽवृतं।
इंद्रं। दक्षासः। ऋभवः। मदऽच्युतं। शतऽक्रतुं। जवनी। सूनृता। आ। अरुहत्॥२॥

ऊतयोऽवितारो रक्षितारो दक्षासो दक्षयितारः प्रवर्धयितार ऋभवः। उरु भातीति नैरुक्तव्युत्पत्त्या ऋभवोऽत्र मरुत उच्यंते। एवंभूता मरुत इंद्रमभीमवन्वन्। आभिमुख्येन खल्वभजंत। वृत्रेण सह युध्यमानमिंद्रं सर्वे देवाः पर्यत्यजन्। मरुतस्तु तथा न पर्यत्याक्षुः। तथा चाम्नायते। विश्वे देवा अजहुर्ये सखायः।

मरुद्भिरिंद्र सख्यं ते अस्तु । ऋग्वे॰ ८. ९६. ७. । इति । ब्राह्मणेऽप्याम्नातं । मरुतो हैनं नाजहुः । ऐ॰ ब्रा॰ ३. २०. । इति । कीदृशमिंद्रं । स्वभिष्टिं शोभनाभ्येषणवंतं । शोभनाभिगमनमित्यर्थः । अंतरिक्षप्रां । अंतरिक्षं द्युलोकं स्वतेजसा प्राति पूरयतीत्यंतरिक्षप्राः । द्वादशस्वादित्येष्विंद्रस्य विद्यमानत्वात् । शाखांतरेऽपि श्रूयते । तस्या इंद्रश्च विवस्वाँश्चाजायेतां । तै॰ ब्रा॰ १. १. ९. ३. । इति । इंद्रश्च विवस्वांश्चेत्येते इति च । तविषीभिरावृतं । तविषीति बलनाम । तविषी शुष्ममिति तन्नामसु पाठात् । बलैरावृतं । अतिबलिनमित्यर्थः । अत एव मदच्युतं शत्रूणां मदस्य गर्वस्य च्यावयितारं । किंच शतक्रतुं शतसंख्यानां क्रतूनामाहर्तारं बहुविधकर्माणं वा । पूर्वोक्तं तमिंद्रं जवनी वृत्रवधं प्रति प्रेरयित्री सूनृता तैर्मरुद्भिः प्रयुक्ता प्रहर भगवो जहि वीरयस्व । ऐ॰ ब्रा॰ ३. २०. । इति ब्राह्मणोक्तरूपा प्रियसत्यात्मिका वागप्यारुहत् । आरूढवती । वृत्रवधं प्रति सापि वागिंद्रस्योत्साहकारिण्यभूदित्यर्थः ॥ अवन्वन् । वन षण संभक्तौ । लङि शपि प्राप्ते व्यत्ययेनोप्रत्ययः । स्वभिष्टिं । इष गतौ । भावे क्तिन्प्रत्ययः । तितुत्रेत्यादिनेट्प्रतिषेधः । एमनादित्वात्पररूपत्वं । पा॰ ६. १. ९४. ६. । शोभना अभिष्टयो यस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । ऊतयः । अवतेः कृत्यल्युटो बहुलमिति कर्तरि क्तिन्प्रत्ययः । यद्वा । क्तिच्क्तौ च संज्ञायामिति क्तिच् । ज्वरत्वरेत्यादिनोठ् । चित इत्यंतोदात्तत्वं । अंतरिक्षप्रां । प्रा पूरणे । अंतरिक्षं प्राति पूरयतीत्यंतरिक्षप्राः । आतो मनिन्निति चशब्दाद्विच् । आवृतं । वृञ् वरणे । आव्रियत इत्यावृतः । कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । दक्षासः । दक्ष वृद्धौ । दक्षंत एभिरिति दक्षाः । करणे घञ् । ञित्वादाद्युदात्तत्वं । आज्जसेरसुक् । मदच्युतं । च्युङ् गतौ । अंतर्भावितण्यर्थात् क्विब्वचीति क्विप् । ह्रस्वस्य पिति कृतीति तुक् । शतक्रतुं । शतं क्रतवो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । जवनी । जु इति सौत्रो धातुः । करणे ल्युट् । टिड्ढाणञित्यादिना ङीप् । लित्स्वरेण जकारात्परस्योदात्तत्वं । अरुहत् । रुहेर्लुङि कृमृदृरुहिभ्यश्छंदसीति च्लेरङादेशः ॥

त्वं गोत्रमंगिरोभ्योऽवृणोरपोतात्रये शतदुरेषु गातुवित् ।
ससेन चिद्विमदायावहो वस्वाजावद्रिं वावसानस्य नर्तयन् ॥ ३ ॥
त्वं । गोत्रं । अंगिरःऽभ्यः । अवृणोः । अप । उत । अत्रये । शतऽदुरेषु । गातुऽवित् ।
ससेन । चित् । विऽमदाय । अवहः । वसु । आजौ । अद्रिं । ववसानस्य । नर्तयन् ॥ ३ ॥

हे इंद्र त्वं गोत्रमव्यक्तशब्दवंतं वृष्ट्युदकस्यावरकं मेघमंगिरोभ्योऽ[illegible]पावृणोः । अपवरणं कृतवानसि । वृष्टेरावरकं मेघं वज्रेणोद्घाट्य वर्षणं कृतवानसीत्यर्थः । यद्वा । गोत्रं गोसमूहं पणिभिरपहृतं गुहासु निहितमंगिरोभ्य ऋषिभ्योऽपावृणोः । गुहाद्वारोद्घाटनेन प्राकाशयः । उतापि चात्रये महर्षये । कीदृशाय । शतदुरेषु शतद्वारेषु यंत्रेष्वसुरैः पीडार्थं प्रक्षिप्ताय । गातुवित् मार्गस्य लंभयिताभूः । तथा विमदाय चित् विमदनाम्ने महर्षयेऽपि ससेनान्नेन युक्तं वसु धनमवहः । प्रापितवान् । तथाजौ संग्रामे जयार्थं ववसानस्य निवसतो वर्तमानस्यान्यस्यापि स्तोतुरद्रिं वज्रं नर्तयन् रक्षणं कृतवानसीति शेषः । अतस्तव महिमा केन वर्णयितुं शक्यत इति भावः ॥ गोत्रं । गुङ् अव्यक्ते शब्दे । औणादिकस्त्रप्रत्ययः । यद्वा । खलगोरथादित्यनुवृत्ताविनित्रकट्यचश्च । पा॰ ४. २. ५१. । इति समूहार्थे त्रप्रत्ययः । शतदुरेषु । शतं दुरा द्वाराण्येषां । दृ इत्येके । द्रियंते संव्रियंत इति दुराः । घञर्थे कविधानमिति कप्रत्ययः । छांदसं संप्रसारणं परपूर्वत्वं । तत्र यो ह्युभयोः स्थाने भवति स लभतेऽन्यतरेणापि व्यपदेशमित्युरण् रपरः । पा॰ १. १. ५१. । इति रपरं भवति । यद्वा । द्वारशब्दस्यैव छांदसं संप्रसारणं द्रष्टव्यं । गातुवित् । गाङ् गतौ । अस्मात्कमिमनिजनिभागापायाहिभ्यश्च । उ॰ १. ७३. । इति तुप्रत्ययः । तं वेदयति लंभयतीति गातुवित् । विद्लृ लाभे । अंतर्भावितण्यर्थात् क्विप् । कृदुत्तरपद[illegible] । ससेन । ससमित्यन्ननाम । ससं नम आयुरिति तन्नामसु पाठात् । आजिरिति संग्रामनाम । आहव आजाविति तत्र पाठात् । अद्रिं । अत्ति भक्षयति वैरिणमित्यद्रिर्वज्रः । अदिशदिभूशुभिभ्यः क्रिन्निति क्रिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । यास्कस्त्वेवमद्रिशब्दं व्याचख्यौ । अद्रिरादृणात्यनेनापि वात्तेः स्यात् । नि॰ ४. ४. । इति । ववसानस्य । वस निवासे । कर्तरि ताच्छीलिकश्चानश् । बहुलं छंदसीति शपः श्लुः । द्विर्भावहलादिशेषौ । चित्त्वादंतोदात्तत्वं ॥

त्वमपामपिधानावृणोरपाधारयः पर्वते दानुमद्वसु ।
वृत्रं यदिंद्र शवसावधीरहिमादित्सूर्यं दिव्यारोहयो दृशे ॥४॥

त्वं । अपां । अपिऽधाना । अवृणोः । अप । अधारयः । पर्वते । दानुऽमत् । वसु ।
वृत्रं । यत् । इंद्र । शवसा । अवधीः । अहिं । आत् । इत् । सूर्यं । दिवि । आ ।
अरोहयः । दृशे ॥४॥

हे इंद्र त्वमपामुदकानामपिधानापिधानान्याच्छादकान्मेघानपावृणोः । अपावरीष्ठाः । तथा पर्वते पर्ववति पूरयितव्यप्रदेशयुक्ते स्वकीयनिवासस्थाने दानुमत् दानुमतो हिंसायुक्तस्य । यद्वा । दनुरसुरमाता सैव दानुः । तद्वतः । तादृशस्य वृत्रादेर्वसु धनमधारयः । शत्रूञ्जित्वा तदीयं धनमपहृत्य स्वगृहे न्यचिक्षिप इत्यर्थः । यद्वा । दानुमदिति वसुविशेषणं । शोभनदानयुक्तमित्यर्थः । हे इंद्र त्वं यद्यदा शवसा बलेन वृत्रं त्रयाणां लोकानामावरीतारं । तथा च शाखांतरे समाम्नातं । यदिमान् लोकानवृणोत्तद्वृत्रस्य वृत्रत्वं । तै० सं० २. ४. १२. २. । इति । अहिं आ समंताद्धंतारं । तथा च वाजसनेयिनः समामनंति । सोऽग्नीषोमावभिसंबभूव सर्वां विद्यां सर्वं यशः सर्वमन्नाद्यं सर्वां श्रियं स यत्सर्वमेतत्समभवत्तस्मादहिरिति । एवंभूतमसुरमवधीः । वधं प्रापितः । आदित् अनंतरमेव दिवि द्युलोके दृशे द्रष्टुं सूर्यमारोहयः । वृत्रेणावृतं सूर्यं तस्माद्वृत्रादमूमुच इत्यर्थः ॥ अपां । ऊडिदमित्यादिना विभक्तिरुदात्तत्वं । अपिधाना । अपिधीयत आच्छाद्यत एभिरित्यपिधानानि । करणे ल्युट् । लितीति प्रत्ययात्पूर्वस्य धात्वाकारस्योदात्तत्वं । तत एकादेशस्वरः । कृदुत्तरपदप्रकृतिस्वरत्वं । सुपां सुलुगिति विभक्तेः पूर्वसवर्णदीर्घत्वं । अधारयः । पादादित्वान्निघाताभावः । पर्वते । पर्ववान् पर्वतः । पर्व पुनः पृणातेः प्रीणातेर्वा । नि० १. २०. । इति यास्कः । दानुमत् । दो अवखंडन इत्यस्माद्वा दाण् दान इत्यस्माद्वा दाभाभ्यां नुरित्यौणादिको नुप्रत्ययः । असुरविशेषणत्वे सुपां सुलुगिति षष्ठ्या लुक् ॥

त्वं मायाभिरप मायिनोऽधमः स्वधाभिर्ये अधि शुप्तावजुह्वत ।
त्वं पिप्रोर्नृमणः प्रारुजः पुरः प्र ऋजिश्वानं दस्युहत्येष्वाविथ ॥५॥

त्वं । मायाभिः । अप । मायिनः । अधमः । स्वधाभिः । ये । अधि । शुप्तौ । अजुह्वत ।
त्वं । पिप्रोः । नृऽमनः । प्र । अरुजः । पुरः । प्र । ऋजिश्वानं । दस्युऽहत्येषु । आविथ ॥५॥

हे इंद्र त्वं मायाभिर्जयोपायज्ञानैः । मायेति ज्ञाननाम । शची मायेति तन्नामसु पाठात् । यद्वा । मायाभिर्लोकप्रसिद्धैः कपटैः । मायिन उक्तलक्षणमायोपेतान्वृत्रादीनसुरानपाधमः । अपाजीगमः । धमतिर्गतिकर्मेति यास्कः । नि० ६. २. । येऽसुराः स्वधाभिर्हविर्लक्षणैरन्नैः शुप्तावधि शोभमाने स्वकीये मुख एवाजुह्वत अहौषुः नाग्नौ । तानसुरानिति पूर्वेण संबंधः । तथा च कौषीतकिभिराम्नायते । असुरा वा आत्मन्नजुहवुरुद्वातेऽग्नौ ते पराभवन्निति । वाजसनेयिभिरप्याम्नातं । देवाश्च ह वा असुराश्चास्पर्धंत ततो हासुरा अभिमानेन कस्मै च न जुहुम इति स्वेष्वेवास्येषु जुह्वतश्चेरुस्ते पराबभूवुरिति । तथा हे नृमणो नृषु यजमानेषु रक्षितव्येष्वनुग्रहबुद्धियुक्त त्वं पिप्रोः पूरयितुरेतन्नाम्नोऽसुरस्य पुरः पुराणि निवासस्थानानि प्रारुजः । प्राभांक्षीः । एवं कृत्वा तेनासुरेणोपद्रुतमृजिश्वानमृजुगमनमेतत्संज्ञकं स्तोतारं दस्युहत्येषु दस्यूनामुपक्षपयितॄणां हननेन युक्तेषु संग्रामेषु । यद्वा । दस्यूनां हनने निमित्तभूतेषु । प्राविथ । प्रकर्षेण ररक्षिथ ॥ मायिनः । मायाशब्दस्य व्रीह्यादिषु पाठात् व्रीह्यादिभ्यश्चेति मत्वर्थीय इनिः । शुप्तौ । शुभ दीप्तौ । कर्मणि क्तिन् । तितुत्रेत्यादिनेट्प्रतिषेधः । झषस्तथोरिति धत्वाभावश्छांदसः । खरि च । पा० ८. ४. ५५. । इति चर्त्वं । अजुह्वत । जुहोतेर्लङि व्यत्ययेनात्मनेपदं । अदभ्यस्तात् । पा० ७. १. ४. । इति झस्यादादेशः । हुश्नुवोः सार्वधातुक इति यणादेशः । पिप्रोः । पॄ पालनपूरणयोः । पॄभिदिव्यधीत्यादिना । उ० १. २४. । कुप्रत्ययः । उदोष्ठ्यपूर्वस्येत्यत्र बहुलं छंदसीत्युक्तत्वादुत्वाभावः । छांदसं द्विर्वचनं । अभ्यासस्योरदत्वहलादिःशेषाः । अर्तिपिपर्त्योश्च बहुलं छंदसीत्यभ्यास-

स्त्वं । यत्वादेशः । नृमणः । नृषु मनो यस्य । छंदस्यृदवग्रहात् । पा० ८. ४. २६. । इति णत्वं । अरुजः । रुजो भंगे । शस्य ङित्त्वाद्गुणाभावः । ऋजिश्वानं । ऋज्वश्नुते प्राप्नोतीत्यृजिश्वा । पृषोदरादिः । दस्युहत्येषु । हन हिंसागत्योः । हनस्त च । पा० ३. १. १०८. । इति भावे क्यप्प्रत्ययस्तकारश्चांतादेशः । दस्यूनां हत्या येषु संग्रामेषु । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । तत्पुरुषपक्षे तु कृदुत्तरपदप्रकृतिस्वरत्वं । आविथ । अव रक्षणे ॥ ॥ ९ ॥

त्वं कुत्सं॑ शुष्ण॒हत्ये॑ष्वावि॒थारं॑धयोऽतिथि॒ग्वाय॒ शंब॑रं ।
म॒हांतं॑ चिदर्बु॒दं नि क्र॑मीः प॒दा स॒नादे॒व द॑स्यु॒हत्या॑य जज्ञिषे ॥ ६ ॥
त्वं । कुत्सं॑ । शु॒ष्ण॒ऽहत्ये॑षु । आ॒वि॒थ॒ । अरं॑धयः । अ॒ति॒थि॒ऽग्वाय॑ । शंब॑रं ।
म॒हांतं॑ । चि॒त् । अ॒र्बु॒दं । नि । क्र॒मीः॒ । प॒दा । स॒नात् । ए॒व । द॒स्यु॒ऽहत्या॑य । ज॒ज्ञि॒षे॒ ॥ ६ ॥

हे इंद्र त्वं कुत्सं कुत्ससंज्ञकमृषिं शुष्णहत्येषु । शुष्णः शोषयिता । एतन्नाम्नोऽसुरस्य हननयुक्तेषु संग्रामेष्वाविथ । ररक्षिथ । तथातिथिग्वायातिथिभिर्गंतव्याय दिवोदासाय शंबरमेतन्नामानमसुरमरंधयः । हिंसां प्रापितः । तथा महांतं चित् अतिप्रवृद्धमप्यर्बुदमेतत्संज्ञकमसुरं पदा पादेन नि क्रमीः । नितरामाक्रमिताभूः । यस्मादेवं तस्मात्सनादेव चिरकालादेवारभ्य दस्युहत्यायोपक्षपयितॄणां हननाय जज्ञिषे । सर्वदा त्वं दस्युहननशीलो भवसीत्यर्थः ॥ अरंधयः । रध हिंसासंराद्ध्योः । रधिजभोरचि । पा० ७. १. ६१. । इति धातोर्नुम् । अतिथिग्वाय । गमेरौणादिको ड्वप्रत्ययः । क्रमीः । क्रमु पादविक्षेपे । ह्म्यंतक्षण । पा० ७. २. ५. । इति वृद्धिप्रतिषेधः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । पदा । सावेकाचः इति वोडिदंपदादीति वा विभक्तेरुदात्तत्वं । जज्ञिषे । जनी प्रादुर्भावे । लिटि गमहनेत्यादिनोपधालोपः ॥

त्वे विश्वा॑ तवि॒षी स॒ध्र्य॑ग्घि॒ता तव॒ राधः॑ सोमपी॒थाय॑ हर्षते ।
तव॒ वज्र॑श्चिकिते बा॒ह्वोर्हि॒तो वृ॒श्चा शत्रो॒रव॒ विश्वा॑नि॒ वृष्ण्या॑ ॥ ७ ॥
त्वे इति॑ । विश्वा॑ । त॒वि॒षी । स॒ध्र्य॑क् । हि॒ता । तव॑ । राधः॑ । सो॒म॒ऽपी॒थाय॑ । ह॒र्ष॒ते॒ ।
तव॑ । वज्रः॑ । चि॒कि॒ते॒ । बा॒ह्वोः । हि॒तः । वृ॒श्च । शत्रोः॑ । अव॑ । विश्वा॑नि । वृष्ण्या॑ ॥ ७ ॥

हे इंद्र त्वे त्वयि विश्वा तविषी सर्वं बलं सध्र्यक् सध्रीचीनं अपराङ्मुखं यथा भवति तथा हिता निहितं । तथा तव राधो मनः सोमपीथाय सोमपानाय हर्षते । हृष्यति । किंच तव बाह्वोर्हस्तयोर्हितोऽवस्थितो वज्रश्चिकिते । अस्माभिर्ज्ञायते । अतः शत्रोः शातयितुर्वैरिणो विश्वानि सर्वाणि वृष्ण्या वृष्ण्यानि वीर्याण्यव वृश्च । छेदनं कुरु ॥ सहांचतीति सध्र्यक् । अंचतेर्ऋत्विगित्यादिना क्विन् । अनिदितामिति नलोपः । समासे सहस्य सध्रिरिति सहशब्दस्य सध्र्यादेशः । चोः कुरिति कुत्वं । [illegible] प्राप्तेऽद्रिसध्र्योरंतोदात्तत्वनिपातनं कृत्स्वरनिवृत्त्यर्थं । पा० ६. ३. ९५. १. । इति वचनात्सध्र्यादेशोऽंतोदात्तः । तस्य यणादेश उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं । राधः । राध्नोति समृद्धो भवत्यनेन । राधोऽत्र मन उच्यते । असुनो नित्त्वादाद्युदात्तत्वं । सोमपीथाय । पा पाने । पातॄतुदि[illegible] थकप्रत्ययः । घुमास्थेतीत्वं । हर्षते । हृष तुष्टौ । श्यनि प्राप्ते व्यत्ययेन शप् । आत्मनेपदं च । चिकिते । कित ज्ञाने । छंदसि लुङ्लङ्लिट इति वर्तमाने कर्मणि लिट् । बाह्वोः । उदात्तयण इति विभक्तेरुदात्तत्वं । वृश्च । ओव्रश्चू छेदने । तौदादिकः । ग्रहिज्यादिना संप्रसारणं । विकरणस्वरः । संहितायां द्व्यचोऽतस्तिङ इति दीर्घत्वं । वृष्ण्या । वृष सेचने । औणादिको नक्प्रत्ययः । तत्र भवानि वृष्ण्यानि । भवे छंदसीति यत् । यतोऽनाव इत्याद्युदात्तत्वं । शेश्छंदसीति शेर्लोपः ॥

वि जा॑नीह्यार्या॒न्ये च॒ दस्य॑वो ब॒र्हिष्म॑ते रंधया॒ शास॑दव्र॒तान् ।
शाकी॑ भव॒ यज॑मानस्य चोदि॒ता विश्वेत्ता ते॑ सध॒मादे॑षु चाकन ॥ ८ ॥

वि । जानीहि । आर्यान् । ये । च । दस्यवः । बर्हिष्मते । रंधय । शासत् । अव्रतान् ।
शाकी । भव । यजमानस्य । चोदिता । विश्वा । इत् । ता । ते । सधऽमादेषु । चाकन ॥८॥

हे इंद्र त्वमार्यान्विदुषोऽनुष्ठातॄन्वि जानीहि । विशेषेण बुध्यस्व । ये च दस्यवस्तेषामनुष्ठातॄणामुपक्षपयितारः शत्रवस्तानपि वि जानीहीति शेषः । ज्ञात्वा च बर्हिष्मते बर्हिषा यज्ञेन युक्ताय यजमानायाव्रतान् । व्रतमिति कर्मनाम । कर्मविरोधिनस्तान्दस्यून् रंधय । हिंसां प्रापय । यद्वा । यजमानस्य वशं गमय । रध्यतिर्वशगमने । नि॰ ६. ३२. । इति यास्कः । किं कुर्वन् । शासत् दुष्टानामनुशासनं निग्रहं कुर्वन् । अतः शाकी शक्तियुक्तस्त्वं यजमानस्य चोदिता प्रेरको भव । यज्ञविघातकानसुरांस्तिरस्कृत्य यज्ञान्यजमानैः सम्यगनुष्ठापयेति भावः । अहमपि स्तोता ते तव ता तानि पूर्वोक्तानि कर्माणि विश्वेत् सर्वाण्येव सधमादेषु सहमदनयुक्तेषु यज्ञेषु स्तोतुं चाकन । कामये ॥ जानीहि । ज्ञा अवबोधने । क्र्यादिकः । ज्ञाजनोर्जेति जादेशः । अत्र ज्ञी गतौ वृत् । धा॰ ३१. ३२. । इति वृत्करणं ल्वादिपरिसमाप्त्यर्थमेव न प्वादिपरिसमाप्त्यर्थमिति येषां दर्शनं तेषां प्वादीनां ह्रस्व इति ह्रस्वत्वेन भवितव्यं । मैवं । ज्ञाजनोर्जेति दीर्घोच्चारणसामर्थ्यात् । जनी प्रादुर्भाव इत्यस्य तु दीर्घोच्चारणमंतरेणाप्यतो दीर्घो यञि । पा॰ ७. ३. १०१. । इत्यनेनैव दीर्घः सिध्यति । तस्माद्दीर्घोच्चारणवैयर्थ्यप्रसंगाद्च ह्रस्वो न भवतीति सिद्धं । बर्हिष्मते । तसौ मत्वर्थ इति भत्वात् रुत्वजश्त्वयोरभावः । रंधय । रध हिंसासंराद्ध्योः । शासत् । शासु अनुशिष्टौ । शतर्यदादिवत्वात् लुक् । जक्षित्यादयः षट् । पा॰ ६. १. ६. । इत्यभ्यस्तसंज्ञायां नाभ्यस्ताच्छतुरिति नुमप्रतिषेधः । अभ्यस्तानामादिरित्याद्युदात्तत्वं । शाकी । शक्लृ शक्तौ । भावे घञ् । ततो मत्वर्थीय इनिः । व्यत्ययेनाद्युदात्तत्वं । यद्वा । वृषादिर्द्रष्टव्यः । विश्वा ता । उभयत्र शेश्छंदसीति शेर्लोपः । सधमादेषु । सह माद्यंत्येष्विति सधमादा यज्ञाः । अधिकरणे घञ्प्रत्ययः । ननु मदोऽनुपसर्ग इत्यप्प्रत्ययेन भवितव्यं । मैवं । व्यधजपोरनुपसर्गे । पा॰ ३. ३. ६१. । इत्यत्रैव मद इति वक्तव्ये यन्मदोऽनुपसर्ग इति पृथगुपादानं तद्घञपि पक्षे यथा स्यादिति न्यासकारेण प्रत्यपादीत्यस्माभिर्धातुवृत्तावुक्तं । सधमादस्थयोश्छंदसीति सहशब्दस्य सधादेशः । चाकन । कन दीप्तिकांतिगतिषु । अत्र कांत्यर्थः । छंदसि लुङ्लङ्लिट इति वर्तमाने लिट् । णलुत्तमो वा । पा॰ ७. १. ९१. । इति णित्वस्य विकल्पनाद्वृद्ध्यभावः । तुजादित्वादभ्यासस्य दीर्घत्वं ॥

अनुव्रताय रंधयन्नपव्रतानाभूभिरिंद्रः श्नथयन्ननाभुवः ।
वृद्धस्य चिद्वर्धतो द्यामिनक्षतः स्तवानो वम्रो वि जघान संदिहः ॥९॥
अनुऽव्रताय । रंधयन् । अपऽव्रतान् । आऽभूभिः । इंद्रः । श्नथयन् । अनाभुवः ।
वृद्धस्य । चित् । वर्धतः । द्यां । इनक्षतः । स्तवानः । वम्रः । वि । जघान । संऽदिहः ॥९॥

य इंद्रोऽनुव्रतायानुकूलकर्मणे यजमानायापव्रतानपगतकर्मणो यजमानान् रंधयन्हिंसयन्वशीकुर्वन्वा तथाभूभिः । आभिमुख्येन भवंतीत्याभुवः स्तोतारः । तैरनाभुवस्तद्विपरीतान् श्नथयन्हिंसयन्वर्तते । वृद्धस्य चिद्वर्धतः पूर्वं वृद्धस्यापि पुनर्वर्धमानस्य द्यामिनक्षतः स्वर्गं व्याप्नुवतस्तस्येंद्रस्य स्तवानः स्तुतिं कुर्वाणो वम्रः स्तुत्युच्चिरणशील एतत्संज्ञक ऋषिः संदिहः सम्यगुपचिता वल्मीकवपा वि जघान । इंद्रेण परिहृतांतरायः सन्पृथिव्याः सारभूतं वल्मीकवपालक्षणं यज्ञसंभारमाहार्षीदित्यर्थः । तथा च शाखांतरे समाम्नातं । यद्वल्मीकवपासंभारो भवति ऊर्जमेव रसं पृथिव्या अवरुंधे । तै॰ ब्रा॰ १. १. ३. ४. । इति ॥ अनुव्रताय । अनुकूलं व्रतं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । श्नथयन् । श्नथ हिंसायां । णिचि घटादित्वान्मित्त्वे मितां ह्रस्व इति ह्रस्वत्वं । वर्धतः । व्यत्ययेन परस्मैपदं । इनक्षतः । नक्ष गतौ । इकारोपजनश्छांदसः । यद्वा । इनक्षतिर्गत्यर्थः । प्रकृत्यंतरमन्वेष्टव्यं । स्तवानः । सन्यानच् स्तुवः । उ॰ २. ८९. । इति स्तौतेर्बहुलवचनान्निरुपपदादप्यानच्प्रत्ययः । व्यत्ययेनाद्युदात्तत्वं । जघान । अभ्यासाच्चेत्यभ्यासादुत्तरस्य हंतेर्हकारस्य कुत्वं । संदिहः । दिह उपचये । इगुपधज्ञाप्रीकिरः कः इत्यत्र क्रियायाः बहुलमिति बहुलवचनात्कर्मणि क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

तक्षद्यत्त उशना सहसा सहो वि रोदसी मज्मना बाधते शवः ।
आ त्वा वातस्य नृमणो मनोयुज आ पूर्यमाणमवहन्नभि श्रवः ॥१०॥

तक्षत् । यत् । ते । उशना । सहसा । सहः । वि । रोदसी इति । मज्मना । बाधते । शवः ।
आ । त्वा । वातस्य । नृऽमनः । मनःऽयुजः । आ । पूर्यमाणं । अवहन् । अभि ।
श्रवः ॥१०॥

हे इंद्र यद्यदोशना काव्यः सहसात्मीयेन बलेन ते सहस्त्वदीयं बलं तक्षत् तनूकृतवान् । सम्यक् तीक्ष्णमकार्षीदित्यर्थः । तदा शवस्त्वदीयं बलं मज्मना सर्वस्य शोधकेन स्वतैक्ष्ण्येन रोदसी द्यावापृथिव्यौ वि बाधते । ते बिभीत इत्यर्थः । तथा चान्यत्राम्नातं । यस्य शुष्माद्रोदसी अभ्यसेतां । ऋग्वे॰ २. १२. १. । इति । यद्वा । रोदसी यस्माद्वृत्रादेर्बिभीतस्तं बाधत इत्यर्थः । हे नृमणो नृषु रक्षितव्येषु यजमानेष्वनुग्रहबुद्धियुक्तेंद्र आ पूर्यमाणं पूर्वोक्तेन बलेना समंतात्पूर्यमाणं त्वा त्वां मनोयुजो मनोव्यापारमात्रेण युक्ता वातस्य वायोः संबंधिनः । तद्वद्वेगेन गच्छंत इत्यर्थः । एवंभूता अश्वाः श्रवोऽभि हविर्लक्षणमन्नमभिलक्ष्यावहन् । आभिमुख्येन प्रापयंतु ॥ तक्षत् । तक्षू त्वक्षू तनूकरणे । लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । उशना । वश कांतौ । वशेः कनसिः । उ॰ ४. २३८. । इति कनस् । ग्रहिज्येत्यादिना संप्रसारणं । ऋदुशनस्पुरुदंशोऽनेहसां च । पा॰ ७. १. ९४. । इत्यनङादेशः । सर्वनामस्थाने च । पा॰ ६. ४. ८. । इत्युपधादीर्घत्वं । हल्ङ्याब्भ्य इति नलोपौ । मज्मना । टुमस्जो शुद्धौ । औणादिको मनिप्रत्ययः । नृमणः । छंदस्यृदवग्रहादिति णत्वं । अवहन् । छंदसि लुङ्लङ्लिट इति प्रार्थनायां लङ् ॥ ॥१०॥

मंदिष्ट यदुशने काव्ये सचाँ इंद्रो वंकू वंकुतराधि तिष्ठति ।
उग्रो ययिं निरपः स्रोतसासृजद्वि शुष्णस्य दृंहिता ऐरयत्पुरः ॥११॥

मंदिष्ट । यत् । उशने । काव्ये । सचा । इंद्रः । वंकू इति । वंकुऽतरा । अधि । तिष्ठति ।
उग्रः । ययिं । निः । अपः । स्रोतसा । असृजत् । वि । शुष्णस्य । दृंहिताः । ऐरयत् ।
पुरः ॥११॥

यद्यदेंद्र उशने कामयमाने काव्ये सचा सह मंदिष्ट स्तुतोऽभूत् तदानीं वंकू वंकुतरातिशयेन कुटिलं गच्छंतावश्वावधि तिष्ठति । रथे संयोज्य तमारोहतीत्यर्थः । यद्वा । वंकुतरातिशयेन वक्रं गच्छति रथे वंकू वक्रगमनशीलावश्वौ संयोज्येति योजनीयं । उग्र उद्गूर्णबलादृश इंद्रो ययिं गमनयुक्तान्मेघात् स्रोतसा प्रवाहरूपेणापो निरसृजत् । जलानि निरगमयत् । तथा शुष्णस्य सर्वस्य शोषयितुरसुरस्य दृंहिताः प्रवृद्धाः पुरो नगराणि निवासस्थानानि व्यैरयत् । विविधं प्रेरितवान् ॥ मंदिष्ट । मदि स्तुतिमोदमदस्वप्नकांतिगतिषु । लुङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । उशने । वशेरौणादिकः क्युप्रत्ययः । ग्रहिज्यादिना संप्रसारणं । योरनादेशः । सचा । षच समवाये । संपदादिलक्षणो भावे क्विप् । आङ्याजयारां चोपसंख्यानं । म॰ ७. १. ३९. १. । इति विभक्तेराङादेशः । संहितायां आङोऽनुनासिकश्छंदसि । पा॰ ६. १ १२६. । इति तस्य सानुनासिकत्वं । वंकू । वन्चु गतौ । औणादिक उप्रत्ययः । बहुलवचनात्कुत्वं । वंकुतरा । अतिशयेन वंकू वंकुतरा । सुपां सुलुगिति विभक्तेराकारः । अत्र गतिसामान्यवाचिना गतिविशेषो लक्ष्यते । ययिं । या प्रापणे । आदृगमहनजन इति किप्रत्ययः । लिड्वद्भावात् द्विर्वचनहृस्वत्वे । आतो लोप इटि चेत्याकारलोपः । प्रत्ययस्वरः । सुपां सुपो भवंतीति पंचम्या अमादेशः । दृंहिताः । दृहि वृद्धौ । इदित्त्वान्नुम् । ऐरयत् । ईर प्रेरणे । [illegible] । लङ्याडागमः । आटश्च । पा॰ ६. १. ९०. । इति वृद्धिः ॥

आ स्मा रथं वृषपाणेषु तिष्ठसि शार्यातस्य प्रभृता येषु मंदसे ।
इंद्र यथा सुतसोमेषु चाकनोऽनर्वाणं श्लोकमा रोहसे दिवि ॥१२॥
आ । स्म । रथं । वृषऽपानेषु । तिष्ठसि । शार्यातस्य । प्रऽभृताः । येषु । मंदसे ।
इंद्र । यथा । सुतऽसोमेषु । चाकनः । अनर्वाणं । श्लोकं । आ । रोहसे । दिवि ॥१२॥

अत्र कौषीतकिन इतिहासमाचष्टे । शार्यातनाम्नो राजर्षेर्यज्ञे भृगुगोत्रोत्पन्नश्च्यवनो महर्षिराश्विनं ग्रहमगृह्णात् । इंद्रस्तं दृष्ट्वा क्रुद्धोऽभूत् । तमिंद्रमनुनीय पुनः सोमं तस्मै प्रादादिति । अयमर्थोऽस्यां प्रतिपाद्यते । हे इंद्र त्वं वृषपाणेषु । वृष्णः सेचनसमर्थस्य सोमस्य पानानि वृषपाणानि । तेषु निमित्तभूतेषु रथमा तिष्ठसि स्म । स्वयमेव रथमारुह्य गच्छसि । न त्वन्यः कश्चित्प्रवर्तयितेति भावः । एवं च सति येषु सोमेषु त्वं मंदसे हर्षं प्राप्नोषि तादृशाः सोमाः शार्यातस्यैतन्नाम्नो राजर्षेः संबंधिनः प्रभृताः । प्रकर्षेण संपादिताः । अभिषवादिसंस्कारैः संस्कृता इत्यर्थः । अतः सुतसोमेष्वभिषुतसोमयुक्तेष्वन्यदीयेषु यज्ञेषु यथा चाकनः यथा कामयसे एवमस्यापि शार्यातस्य सोमान्कामयस्व । तथा सति दिवि द्युलोकेऽनर्वाणं गमनरहितं स्थिरं श्लोकं स्तोत्रलक्षणं वचो यशो वा आ रोहसे । प्राप्नोषि । यद्वा । इमं यजमानं दिवि द्युलोक उक्तलक्षणं यशः प्रापयसि ॥ स्म । निपातस्य चेति दीर्घत्वं । वृषपाणेषु । पा पाने । भावे ल्युट् । वा भावकरणयोः । पा० ८.४.१०. । इति पूर्वपदस्थान्निमित्तादुत्तरस्य पानशब्दनकारस्य णत्वं । प्रभृताः । भृञ् भरणे । कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । मंदसे । मदि स्तुतिमोदमदस्वप्नकांतिगतिषु । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । चाकनः । कन दीप्तिकांतिगतिषु । अत्र कांत्यर्थः । कांतिश्चाभिलाषः । लेटि सिप्यडागमः । बहुलं छंदसीति शपः श्लुः । तुजादित्वादभ्यासस्य दीर्घत्वं । सर्वे विधयश्छंदसि विकल्प्यंत इत्यभ्यस्तस्याद्युदात्तत्वाभावे धातोरिति धात्वंतस्योदात्तत्वं । अनर्वाणं । अंतेरन्येभ्योऽपि दृश्यंत इति दृशिग्रहणाद्भावे वनिप् । नञो बहुव्रीहावन्यर्वणस्त्रसावनञ इति पर्युदासात्तृआदेशाभावे सर्वनामस्थाने चेत्युपधादीर्घत्वं । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । श्लोकं । श्लोकृ संघाते । श्लोक्यत इति श्लोकः । कर्मणि घञ् । ञित्वादाद्युदात्तत्वं । रोहसे । रुहेर्व्यत्ययेनात्मनेपदं ॥

अददा अर्भां महते वचस्यवे कक्षीवते वृचयामिंद्र सुन्वते ।
मेनाभवो वृषणश्वस्य सुक्रतो विश्वेत्ता ते सवनेषु प्रवाच्या ॥१३॥
अददाः । अर्भां । महते । वचस्यवे । कक्षीवते । वृचयां । इंद्र । सुन्वते ।
मेना । अभवः । वृषणश्वस्य । सुक्रतो इति सुऽक्रतो । विश्वा । इत् । ता । ते ।
सवनेषु । प्रऽवाच्या ॥१३॥

अत्रेयमाख्यायिका । अंगराजः कस्मिंश्चिद्दिवसे स्वकीयाभिर्योषिद्भिः सह गंगायां जलक्रीडां चक्रे । तस्मिन्समये दीर्घतमा नाम ऋषिः स्वभार्यया पुत्रभृत्यादिभिश्च दुर्बलत्वात्किमपि कुर्वन्न शक्नोतीति द्वेषेण गंगामध्ये प्रचिक्षिपे । स च ऋषिः केनचित्प्लवेनांगराजस्य क्रीडादेशं प्रति समाजगाम । स च राजा सर्वज्ञं तमृषिमवगत्य प्लवादवतार्यैवमवोचत् । हे भगवन् मम पुत्रो नास्ति । एषा महिषी । अस्यां कंचित्पुत्रमुत्पादयेति । स च तथेत्यब्रवीत् । सा महिषी तु राजानं प्रति तथेत्युक्त्वायं वृद्धतरो जुगुप्सितो मम योग्यो न भवतीति बुद्ध्या स्वकीयामुशिक्संज्ञां दासीं प्राहैषीत् । तेन च सर्वज्ञेन ऋषिणा मंत्रपूतेन वारिणाभ्युक्षिता सती सैव ऋषिपत्नी बभूव । तस्यामुत्पन्नः कक्षीवान्नाम ऋषिः । स एव राज्ञः पुत्रोऽभूत् । स च बहुविधेन राजसूयादिनेजे । तस्मै राज्ञे तत्कृतैर्यज्ञैः परितुष्ट इंद्रो वृचयाख्यां तरुणीं योषितं प्रादात् । अयमर्थः पूर्वार्धे प्रतिपाद्यते ॥ हे इंद्र त्वं महते प्रवृद्धाय वचस्यवे त्वदीयस्तोत्रलक्षणं वच आत्मन इच्छते सुन्वते त्वद्देवताकेषु यज्ञेषु सोमाभिषवं कुर्वते कक्षीवत एतन्नाम्ने राज्ञे वृचयां वृचयाख्यामर्भामल्पां । युवतिमित्यर्थः । एवंभूतां स्त्रियमददाः । तथा

सुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा हे इंद्र त्वं वृषणश्वस्यैतदाख्यस्य राज्ञो मेनाभवः। मेना नाम कन्यकाभूः। तथा च शाट्यायनिभिः सुब्रह्मण्यामंत्रैकदेशव्याख्यानरूपं ब्राह्मणमेवमाम्नायते। वृषणश्वस्य मेन इति वृषणश्वस्य मेना भूत्वा मघवा कुल उवासेति। तां च प्राप्तयौवनां स्वयमेवेंद्रश्चकमे। तथा च तांडिभिराम्नातं। वृषणश्वस्य मेना नाम दुहितास। तामिंद्रश्चकम इति। अत उक्तरूपाणि यानि कर्माणि त्वया कृतानि ते ता त्वदीयानि तानि विश्वेत् सर्वाण्येव सवनेषु यज्ञेषु प्रवाच्या। प्रकर्षेण वक्तव्यानि। स्तुतिभिः स्तोतव्यानीत्यर्थः॥ महते। बृहन्महतोरुपसंख्यानमिति विभक्तिरुदात्तत्वं। वचस्यवे। सुप आत्मनः क्यच्। क्याच्छंदसीत्युप्रत्ययः। कक्षीवते। अश्वबंधनहेतवो रज्जवः कक्ष्याः। कक्षीवान् कक्ष्यावान्। नि० ६.१०.। इति यास्कः। आसंदीवदष्ठीवच्चक्रीवत्कक्षीवत्। पा० ८.२.१२.। इति संप्रसारणं मतुपो वत्वं संज्ञायां निपात्यते। मेनेति स्त्रीनाम। मेना ग्ना इति पाठात्। मन ज्ञाने। मन्यते गृहकृत्यं जानातीति मेना। पचाद्यच्। नशिमन्योरलिट्येत्वं वक्तव्यं। पा० ६.४.१२०.५.। इत्येत्वं। वृषादिर्द्रष्टव्यः। मेना मानयंत्येना इति यास्कः। नि० ३.२१.। सवनेषु। सवनमिति यज्ञनाम। सूयतेऽभिषूयत एष्वित्यधिकरणे ल्युट्। प्रवाच्या। वच परिभाषणे। ण्यति यजयाचरुचप्रवचर्चश्च। पा० ७.३.६६.। इति कुत्वाभावः। तित्स्वरिते प्राप्ते व्यत्ययेनाद्युदात्तत्वं। यद्वा। वाचयतेरचो यदिति यत्। यतोऽनाव इत्याद्युदात्तत्वं। कृदुत्तरपदप्रकृतिस्वरत्वं॥

इंद्रो अश्रायि सुध्यो निरेके पज्रेषु स्तोमो दुर्यो न यूपः।
अश्वयुर्गव्यू रथयुर्वसूयुरिंद्र इद्रायः क्षयति प्रयंता॥१४॥
इंद्रः। अश्रायि। सुऽध्यः। निरेके। पज्रेषु। स्तोमः। दुर्यः। न। यूपः।
अश्वऽयुः। गव्युः। रथऽयुः। वसुऽयुः। इंद्रः। इत्। रायः। क्षयति। प्रऽयंता॥१४॥

इंद्रो देवः सुध्यः शोभनकर्मणो यजमानान् शोभनप्रज्ञान्वा निरेके नैर्धन्ये निमित्तभूते सति तान्रक्षितुमश्रायि। असेविष्ट। पज्रेषु। पज्रा इत्यंगिरसामाख्या। तथा च शाट्यायनिभिराम्नातं। पज्रा वा अंगिरसः पशुकामास्तपोऽतप्यंतेति। येषु यजमानेष्वंगिरःसु स्तोमः स्तोत्रं निश्चलं तिष्ठति दुर्यो न यूपो द्वारि निखाता स्थूणेव। तान्सुध्य इति पूर्वेणान्वयः। तस्मादिदानीमपि रायः प्रयंता धनस्य प्रदातेंद्र इत् इंद्र एव यजमानानां दातुमश्वयुरश्वानिच्छन् तथा गव्युर्गा इच्छन् रथयू रथानिच्छन् वसूयुरेवमन्यदपि यद्धनमस्ति तदपीच्छन्क्षयति। वर्तते॥ अश्रायि। श्रिञ् सेवायां। कर्तरि लुङि व्यत्ययेन च्लेश्चिणादेशः। सुध्यः। धीरिति कर्मनाम। शोभना धीर्येषां। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। शसि छंदस्युभयथा। पा० ६.४.८६.। इति यणादेशः। उदात्तस्वरितयोर्यण इति स्वरितत्वं। निरेके। नितरां रेचनं निरेकः। रिचिर् विरेचने। भावे घञ्। थाथादिनोत्तरपदांतोदात्तत्वं। दुर्यः। दुरे भवो दुर्यः। भवे छंदसीति यत्। यतोऽनाव इत्याद्युदात्तत्वं। यूपः। यु मिश्रणे। यूयते युज्यतेऽस्मिन्निति यूपः। कुसुभ्यां च। उ० ३.२७.। इति पप्रत्ययः। दीर्घ इत्यनुवृत्तेर्दीर्घत्वं। अश्वयुः। यजमानेभ्योऽश्वानिच्छन्। छंदसि परेच्छायां। का० ३.१.८.२.। इति क्यच्। न च्छंदस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः। अश्वाघस्यादित्यात्वं तु च्छांदसत्वान्न भवति। क्याच्छंदसीत्युप्रत्ययः। एवमुत्तरत्रापि। एतावांस्तु विशेषः। गव्युरित्यत्र वांतो यि प्रत्यय इत्यवादेशः। यास्कस्त्वेवं व्याचष्टे। इदंयुरिदं कामयमानोऽथापि तद्वदर्थे भाष्यते। वसूयुरिंद्रो वसुमानित्यर्थः। अश्वयुर्गव्यू रथयुर्वसूयुरित्यपि निगमो भवति। नि० ६.३१.। इति। क्षयति। क्षि क्षये। भौवादिकः। प्रयंता। यम उपरमे। तृन्येकाच इतीट्प्रतिषेधः। चित इत्यंतोदात्तत्वं। कृदुत्तरपदप्रकृतिस्वरत्वं॥

इदं नमो वृषभाय स्वराजे सत्यशुष्माय तवसेऽवाचि।
अस्मिन्निंद्र वृजने सर्ववीराः स्मत्सूरिभिस्तव शर्मन्स्याम॥१५॥
इदं। नमः। वृषभाय। स्वऽराजे। सत्यऽशुष्माय। तवसे। अवाचि।
अस्मिन्। इंद्र। वृजने। सर्वऽवीराः। स्मत्। सूरिऽभिः। तव। शर्मन्। स्याम॥१५॥

इदं पुरोवर्ति नमः स्तुतिलक्षणं वचो हे इंद्र तुभ्यमवाचि। अस्माभिः प्रायोजि। कीदृशाय। वृषभाय वर्षणशीलाय स्वराजे स्वकीयेन तेजसा राजमानाय सत्यशुष्माय। शुष्ममिति बलनाम शत्रूणां शोषकत्वात्। अवितथबलयुक्ताय। तवसेऽत्यंतं प्रवृद्धाय। यस्मादेवं तस्मादस्मिन्वृजने वर्जनवति संग्रामे सर्ववीराः। विशेषेणेरयंत्यमित्रानिति वीरा भटाः। तादृशैः सर्वैर्भटैरुपेता वयं। स्मदिति निपातः सुशब्दार्थः। तव स्मत् शर्मन् त्वया दत्ते शोभने गृहे सूरिभिर्विद्वद्भिः पुत्रादिभिः सह स्याम। भवेम। निवसेमेत्यर्थः। यद्वा। त्वत्संबंधिनि शोभने यज्ञगृहे सूरिभिर्विद्वद्भिर्ऋत्विग्भिः सह स्याम। शर्मेति गृहनाम। शर्म वर्मेति पठितत्वात्॥ स्वराजे। राजृ दीप्तौ। सत्सूद्विषेति क्विप्। सत्यशुष्माय। सत्यं शुष्मं बलं यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। तवसे। तवतिः सौत्रो धातुः। अस्मादौणादिकोऽसिप्रत्ययः। वृजने। वृजी वर्जने। कॄपॄवृजिमंदिनिधाञ्भ्यः क्युः। उ॰ २. ८१। इति क्युः प्रत्ययः। शर्मन्। सुपां सुलुगिति सप्तम्या लुक्। न ङिसंबुद्ध्योः। पा॰ ८. २. ८। इति नलोपप्रतिषेधः। स्याम। नश्च। पा॰ ८. ३. ३०। इति संहितायां सकारस्य धुडागमः। खरि चेति चर्त्वं। चयो द्वितीयाः शरि पौष्करसादेः। पा॰ ८. ४. ४८. ३। इति तकारस्य थकारः॥ ॥११॥

त्यं सु मेषमिति पंचदशर्चं द्वितीयं सूक्तं सव्यस्यार्षमैंद्रं। त्रयोदशी पंचदशी त्रिष्टुभौ शिष्टा जगत्यः। तथा चानुक्रांतं। त्यं सु त्रयोदश्यंत्ये त्रिष्टुभाविति॥ गवामयनस्य मध्यमेऽहनि विषुवत्संज्ञके मरुत्वतीयशस्त्र इदं सूक्तं। विषुवान्दिवाकीर्त्य इति खंडे सूचितं। त्यं सु मेषं कथा शुभेति च मरुत्वतीयं। आ॰ ८. ६। इति॥

**त्यं सु मे॒षं म॑हया स्व॒र्विदं॑ श॒तं यस्य॑ सु॒भ्वः॑ सा॒कमीर॑ते।**
**अत्यं॒ न वाजं॑ हवन॒स्यदं॒ रथ॒मेंद्रं॑ ववृत्या॒मव॑से सुवृ॒क्तिभिः॑॥१॥**
**त्यं। सु। मे॒षं। म॒हय॒। स्वः॒ऽविदं॑। श॒तं। यस्य॑। सु॒ऽभ्वः॑। सा॒कं। ईर॑ते।**
**अत्यं॑। न। वाजं॑। ह॒व॒न॒ऽस्यदं॑। रथं॑। आ। इंद्रं॑। व॒वृ॒त्यां॒। अव॑से। सु॒वृ॒क्तिऽभिः॑॥१॥**

त्यं तं प्रसिद्धं मेषं शत्रुभिः सह स्पर्धमानं स्वर्विदं। स्वरादित्यो द्यौर्वा। तस्य वेदितारं लब्धारं वा। यद्वा। स्वः सुष्ठरणीयं धनं। तस्य लंभयितारं। एवंगुणविशिष्टमिंद्रं हे अध्वर्यो सु महय। सम्यक् पूजय। यस्येंद्रस्य शतं शतसंख्याकाः सुभ्वः स्तोतारः साकं सहैव युगपदेवेरते स्तुतौ प्रवर्तंते। यद्वा। यस्येंद्रस्य रथं शतं सुभ्वः शतसंख्याका अश्वाः साकं सहेरते गमयंति। तमिंद्रमवसेऽस्मद्रक्षणाय सुवृक्तिभिः सुष्ठावर्जकैः स्तोत्रैः रथमा ववृत्यां। रथं प्रत्यावर्तयामि। कीदृशं रथं। हवनस्यदं हवनमाह्वानं यागं वा प्रति वेगेन गच्छंतं। वेगगमने दृष्टांतः। अत्यं न वाजं गमनसाधनमश्वमिव॥ महय। मह पूजायां। चुरादिरदंतः। संहितायामन्येषामपि दृश्यत इति दीर्घत्वं। सुभ्वः। सुष्ठु भवंतीति सुभ्वः स्तोतारः। क्विचेति क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वं। जसः सुपीति यणादेशस्य न भूसुधियोरिति प्रतिषेधे प्राप्ते छंदस्युभयथा। पा॰ ६. ४. ८६। इत्युभयथाभावाद्यणादेशः। उदात्तस्वरितयोर्यण इति परस्य जसोऽनुदात्तस्य स्वरितत्वं। ईरते। ईर गतौ कंपने च। अदादित्वाच्छपो लुक्। झस्यादादेशः। टेरेत्वं। अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते। यद्वृत्तयोगादनिघातः। तत्र हि पंचमीनिर्देशेऽपि व्यवहितेऽपि कार्यमिष्यते। का॰ ८. १. ६६। इत्युक्तं। अत्यं। अत्य इत्यश्वनाम। अत्यो हय इति पाठात्। वाजं। वाज्यते गम्यतेऽनेनेति वाजः। वज व्रज गतौ। करणे घञ्। अजिव्रज्योश्च। पा॰ ७. ३. ६०। इत्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वाद्वाजो वाज्यमित्यत्रापि कुत्वाभाव इत्युक्तं। हवनस्यदं। स्यन्दू प्रस्रवणे। स्यदो जवे। पा॰ ६. ४ २८। इति वेगे गम्यमाने घञंतो निपातितः। अत एव नलोपो वृद्ध्यभावश्च। न च न धातुलोप आर्धधातुके। पा॰ १. १. ४। इति वृद्धेः प्रतिषेधः। इग्लक्षणा हि वृद्धिस्तत्र प्रतिषिध्यते। न चेयमिग्लक्षणा। घञो ञित्त्वादुत्तरपदस्याद्युदात्तत्वं। कृदुत्तरपदप्रकृतिस्वरत्वेन तदेव शिष्यते। ववृत्यां। वृतु वर्तने। लिङि व्यत्ययेन परस्मैपदं। बहुलं छंदसीति शपः श्लुः। द्विर्वचनादि। यासुटो ङित्त्वाल्लघूपधगुणाभावः। तिङ्ङतिङ इति निघातः॥

**स पर्व॑तो॒ न ध॒रुणे॒ष्वच्यु॑तः स॒हस्र॑मूति॒स्तवि॑षीषु वावृधे।**
**इंद्रो॒ यद्वृ॒त्रमव॑धीन्नदी॒वृत॑मु॒ब्जन्नर्णां॑सि॒ जर्हृ॑षाणो॒ अंध॑सा॥२॥**

सः । पर्वतः । न । धरुणेषु । अच्युतः । सहस्रंऽऊतिः । तविषीषु । ववृधे ।
इंद्रः । यत् । वृत्रं । अवधीत् । नदीऽवृतं । उब्जन् । अर्णांसि । जर्हृषाणः । अंधसा ॥ २ ॥

अंधसा सोमलक्षणेनान्नेन जर्हृषाणोऽत्यर्थं हृष्यन्निंद्रो यद्यदा वृत्रं त्रयाणां लोकानामावरीतारमसुरमवधीत् हतवान् । कीदृशं वृत्रं । नदीवृतं । नदनान्नद्य आपः । तासामावरीतारं । किं कुर्वन्निंद्रः । अर्णांसि जलान्युब्जन् अधःपातयन् । तदानीं स इंद्रः पर्वतो न पर्ववान् शिलोच्चय इव धरुणेषु सर्वस्य धारकेषूदकेषु मध्येऽच्युतस्खलनराहित्येन स्थितः सहस्रमूतिर्बहुविधरक्षणवान् तविषीषु बलेषु वावृधे । प्रवृद्धो बभूव ॥ धरुणेषु । धारयतेर्णिलुक्चेत्युनप्रत्ययः । प्रत्ययस्वरः । सहस्रमूतिः । सहस्रमूतयो यस्यासौ । लुगभावश्छांदसः । ववृधे । संहितायामभ्यासस्यान्येषामपि दृश्यत इति दीर्घत्वं । नदीवृतं । नदीं वृणोतीति नदीवृत् । क्विप् । तुगागमः । उब्जन् । उब्ज आर्जवे । विकरणस्वरः । अर्णांसि । उदके नुट् च । उ॰ ४. १९६. । इत्यर्तेरसुन्प्रत्ययस्तत्संनियोगेन नुडागमश्च । नित्त्वादाद्युदात्तत्वं । जर्हृषाणः । हृष तुष्टौ । यङ्लुगंताद्व्यत्ययेन शानच् । अभ्यस्तानामादिरित्याद्युदात्तत्वं । यद्वा । यङंतादेव शानचि बहुलं छंदसीति शपो लुक् । छंदस्युभयथेति शानच् । आर्धधातुकत्वादतोलोपयलोपौ । सार्वधातुकत्वाच्चाभ्यस्तस्याद्युदात्तत्वं । अंधसा । अद्यत इत्यंधः । अदेर्नुम् धश्च । उ॰ ४. २०५. । इत्यसुन् धातोर्नुमागमो धकारांतादेशश्च । नित्त्वादाद्युदात्तत्वं ॥

स हि द्वरो द्वरिषु वव्र ऊधनि चंद्रबुध्नो मदवृद्धो मनीषिभिः ।
इंद्रं तमह्वे स्वपस्यया धिया मंहिष्ठरातिं स हि पप्रिरंधसः ॥ ३ ॥
सः । हि । द्वरः । द्वरिषु । वव्रः । ऊधनि । चंद्रऽबुध्नः । मदऽवृद्धः । मनीषिऽभिः ।
इंद्रं । तं । अह्वे । सुऽअपस्यया । धिया । मंहिष्ठऽरातिं । सः । हि । पप्रिः । अंधसः ॥ ३ ॥

स पूर्वोक्तगुणविशिष्ट इंद्रो द्वरिष्वावरीतृषु शत्रुषु द्वरो हि अतिशयेनावरीता खलु । शत्रुजयशील इत्यर्थः । यस्मादूधन्युद्धृतजलवत्यंतरिक्षे वव्रः संभक्तो व्याप्य वर्तते । अत एव चंद्रबुध्नः सर्वासां प्रजानामाह्लादकमूलः । अंतरिक्षस्य सर्वाह्लादकत्वात् । मदवृद्धः । माद्यंत्येभिरिति मदाः सोमाः । तैर्वर्धितः । एवंभूतो य इंद्रो मंहिष्ठरातिं प्रवृद्धधनं प्रवृद्धदानं वा तमिंद्रं मनीषिभिर्मनस ईषितृभिः प्राज्ञैर्ऋत्विग्भिः सह स्वपस्यया धिया शोभनकर्मयोग्यया बुद्ध्याह्वे । आह्वयामि । हि यस्मात्स इंद्रोऽंधसोऽन्नस्यास्मदपेक्षितस्य पप्रिः पूरयिता ॥ द्वरः । द्वृ इत्येके । द्वरत्यावृणोतीति द्वरः । पचाद्यच् । चित्स्वरेणांतोदात्तत्वं । द्वरिषु । अच इरिति कर्तरीप्रत्ययः । वव्रः । वृङ् संभक्तौ । व्रियते संभज्यत इति वव्रः । घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थं । पा॰ ३. ३. ५८. ४. । इति परिगणनस्योपलक्षणार्थत्वात् कर्मणि कप्रत्ययः । द्विर्भावश्छांदसः । ऊधनि । उत् ऊर्ध्वं ध्रियतेऽस्मिन् जलमित्यूधः । सप्तम्येकवचनेऽस्थिदधिसक्थ्यक्ष्णामनङुदात्तश्छंदस्यपि दृश्यते । पा॰ ७. १. ७६. । इति दृशिग्रहणादूधस्शब्दस्याप्यनङादेशः । यद्वा । ऊधसोऽनङ् । पा॰ ५. ४. १३१. । इति समासे विधीयमानोऽनङादेशश्छांदसत्वात्केवलादपि भवति । चंद्रबुध्नः । चदि आह्लादने दीप्तौ च । [illegible] । स्फायितंचीत्यादिना रक् । प्रत्ययस्वरेणांतोदात्तत्वं । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । मदवृद्धः । मदी हर्षे । मदोऽनुपसर्ग इति करणेऽप् । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । अह्वे । ह्वेञ् स्पर्धायां शब्दे च । छंदसि लुङ्लङ्लिट इति वर्तमाने लुङ्यात्मनेपदेष्वन्यतरस्यां । पा॰ ३. १. ५४. । इति च्लेरङादेशः । आतो लोप इटि चेत्याकारलोपः । गुणः । स्वपस्यया । अप इति कर्मनाम । शोभनमपः स्वपः । तदर्हतीति स्वपस्यः । छंदसि चेति यप्रत्ययः । मंहिष्ठरातिं । महि वृद्धौ । अतिशयेन मंहित्री मंहिष्ठा । तुश्छंदसीतीष्ठन्प्रत्ययः । तुरिष्ठेमेयःस्विति तृलोपः । नित्त्वादाद्युदात्तत्वं । मंहिष्ठा रातिर्यस्य । स्त्रियाः पुंवत् । पा॰ ६. ३. ३४. । इति पुंवद्भावाद्ध्रस्वत्वं । बहुव्रीहौ प्रकृत्येति पूर्वपदप्रकृतिस्वरत्वं । पप्रिः । पॄ पालनपूरणयोः । आदृगमहनजन इति किन्प्रत्ययः । उदोष्ठ्यपूर्वस्येत्युत्वस्य बहुलं छंदसीति वचनादभावे यणादेशः । लिड्वद्भावाद्द्विर्वचनेऽचीति स्थानिवद्भावे सति द्विर्भावोरदत्वहलादिशेषाः । नित्त्वादाद्युदात्तत्वं ॥

आ यं पृणंति दिवि सद्मबर्हिषः समुद्रं न सुभ्वः स्वा अभिष्टयः ।
तं वृत्रहत्ये अनु तस्थुरूतयः शुष्मा इंद्रमवाता अहुतप्सवः ॥४॥
आ । यं । पृणंति । दिवि । सद्मऽबर्हिषः । समुद्रं । न । सुऽभ्वः । स्वाः । अभिष्टयः ।
तं । वृत्रऽहत्ये । अनु । तस्थुः । ऊतयः । शुष्माः । इंद्रं । अवाताः । अहुतऽप्सवः ॥४॥

सद्म सदनं स्थानं बर्हिःशब्दोपलक्षितो यज्ञो येषां सोमानां ते सोमा दिवि स्वर्गलोकेऽवस्थितं यमिंद्रमा पृणंति आ समंतात्पूरयंति । तत्र दृष्टांतः । सुष्ठु भवंतीति सुभ्वो नद्यः समुद्रं न । यथा नद्यः समुद्रं पूरयंति तद्वदित्यर्थः । कीदृश्यो नद्यः । स्वाः । समुद्रस्य स्वभूताः । तथा चाम्नायते । समुद्राय वयुनाय सिंधूनां पतये नमः । तै० सं० ४. ६. २. ६. । इति । अभिष्टय आभिमुख्येन गमनवत्य ऊतयोऽवितारो मरुतो वृत्रहत्ये वृत्रहनने निमित्तभूते सति तमिंद्रमनु तस्थुः । अनुलक्ष्य स्थिता बभूवुः । कीदृशा मरुतः । शुष्माः शत्रूणां शोषयितारः अवाताः । वांति प्रातिकूल्येन गच्छंतीति वाताः शत्रवः । तद्रहिताः । अहुतप्सवोऽकुटिलरूपाः । शोभनावयवा इत्यर्थः ॥ पृणंति । पॄ पालनपूरणयोः । क्रैयादिकः । प्वादीनां ह्रस्व इति ह्रस्वत्वं । श्नाभ्यस्तयोरात इत्याकारलोपः । प्रत्ययस्वरः । यद्वृत्तयोगादनिघातः । सद्मबर्हिषः । षद्लृ विशरणगत्यवसादनेषु । सीदंत्यस्मिन्निति सद्म । औणादिकोऽधिकरणे मनिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते । सुभ्वः । भवतेः क्विब्वेति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं । जस्योः सुपीति यणादेशस्य न भूसुधियोरिति प्रतिषेधे प्राप्ते छंदस्युभयथेति यणादेशः । उदात्तस्वरितयोर्यण इत्यनुदात्तस्य जसः स्वरितत्वं । अभिष्टयः । इष्टय एषणानि । उपसर्गाश्चाभिवर्जमिति वचनादभिरंतोदात्तः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव शिष्यते । एमनादित्वात्पररूपत्वं । वृत्रहत्ये । हनस्त चेति हंतेर्भावे क्यप् तकारांतादेशश्च । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । अहुतप्सवः । ह्रु कौटिल्ये । अस्मान्निष्ठायां ह्रु ह्वरेश्छंदसि । पा० ७. २. ३१. । इति ह्रुआदेशः । प्सा भक्षण इत्यस्मादौणादिको डुप्रत्ययः । न ह्रुतप्सवोऽह्रुतप्सवः । अव्ययपूर्वपदप्रकृतिस्वरत्वं ॥

अभि स्ववृष्टिं मदे अस्य युध्यतो रघ्वीरिव प्रवणे सस्रुरूतयः ।
इंद्रो यद्वज्री धृषमाणो अंधसा भिनद्वलस्य परिधींरिव त्रितः ॥५॥
अभि । स्वऽवृष्टिं । मदे । अस्य । युध्यतः । रघ्वीःऽइव । प्रवणे । सस्रुः । ऊतयः ।
इंद्रः । यत् । वज्री । धृषमाणः । अंधसा । भिनत् । वलस्य । परिधीन्ऽइव । त्रितः ॥५॥

ऊतयो मरुतो मदे सोमपानेन हर्षे सत्यस्येंद्रस्य युध्यतो वृत्रेण सह युध्यमानस्य पुरतः स्ववृष्टिं स्वभूतवृष्टिमंतं वृत्रमभि आभिमुख्येन सस्रुः । जग्मुः । रघ्वीरिव प्रवणे । यथा गमनस्वभावा आपो निम्नदेशे गच्छंति । यद्यदांधसा सोमलक्षणेनान्नेन पीतेन धृषमाणः प्रगल्भः सन्वज्री वज्रवानिंद्रो वलस्य संवृण्वत एतत्संज्ञकमसुरं भिनत् व्यदारयत् । अवधीदित्यर्थः । तत्र दृष्टांतः । त्रितः परिधीनिव । देवानां हविर्लेपनिमार्जनार्थमग्नेः सकाशादप्स्वेकतो द्वितस्त्रित इति त्रयः पुरुषा जज्ञिरे । तथा च तैत्तिरीयैः समाम्नातं । सोऽंगारेणापः अभ्यपातयत् । तत एकतोऽजायत । स द्वितीयमभ्यपातयत् । ततो द्वितोऽजायत । स तृतीयमभ्यपातयत् । ततस्त्रितोऽजायत । तै० ब्रा० ३. २. ८. १०. । इति । तत्रोदकपानार्थं प्रवृत्तस्य कूपे पतितस्य प्रतिरोधायासुरैः परिधयः परिधायकाः कूपस्याच्छादकाः स्थापिताः । तान्यथा स अभिनत् तद्वत् ॥ स्ववृष्टिं । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । युध्यतः । युध संप्रहारे । दैवादिकः । व्यत्ययेन शतृ । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वं । रघ्वीः । रघि गत्यर्थः । रंघिबंह्योर्नलोपश्च । उ० १. ३०. । इत्युप्रत्ययः । वोतो गुणवचनादिति ङीष् । जसि वा छंदसीति पूर्वसवर्णदीर्घत्वं । ङीष्स्वरः शिष्यते । धृषमाणः । ञिधृषा प्रागल्भ्ये । श्नुप्रत्यये प्राप्ते व्यत्ययेन श आत्मनेपदं च । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते । भिनत् । लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । विकरणस्वरः । यद्वृत्तयोगादनिघातः । वलस्य । वल संवरणे । वलति

संवृणोति सर्वमिति वलः। पचाद्यच्। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। परिधीन। परिधीयंत इति परिधयः। उपसर्गे घोः किः। पा॰ ३. ३. ९२.। इति दधातेः कर्मणि किप्रत्ययः। आतो लोप इटि चेत्याकारलोपः। कृदुत्तरपदप्रकृतिस्वरत्वं॥ ॥१२॥

परीं घृणा चरति तित्विषे शवोऽपो वृत्वी रजसो बुध्नमाशयत्।
वृत्रस्य यत्प्रवणे दुर्गृभिश्वनो निजघंथ हन्वोरिंद्र तन्यतुं॥६॥
परि। ईं। घृणा। चरति। तित्विषे। शवः। अपः। वृत्वी। रजसः। बुध्नं। आ। अशयत्।
वृत्रस्य। यत्। प्रवणे। दुःऽगृभिश्वनः। निऽजघंथ। हन्वोः। इंद्र। तन्यतुं॥६॥

यो वृत्रोऽपो वृत्वी उदकान्यावृत्य रजसो बुध्नमंतरिक्षस्योपरिप्रदेशमाशयत आश्रित्याशेत तस्य वृत्रस्य प्रवणे प्रकर्षेण वननीयेऽंतरिक्षे वर्तमानस्य दुर्गृभिश्वनो दुर्ग्रहव्यापनस्य। तस्य हि व्यापनं न केनापि ग्रहीतुं शक्यते। स इमान् लोकानावृणोदिति श्रुतेः। एवंभूतस्य वृत्रस्य हन्वोर्मुखपार्श्वयोर्हे इंद्र यद्यदा तन्यतुं प्रहारं विस्तारयंतं यद्वा शब्दकारिणं वज्रं। तृतीयार्थे द्वितीया। तन्यतुना वज्रेण निजघंथ नितरां प्रजहर्थ तदानीमीमेनं त्वामिंद्रं घृणा शत्रुजयलक्षणा दीप्तिः परि चरति। परितो व्याप्नोति। त्वदीयं शवो बलं च तित्विषे। प्रदिदीपे॥ तित्विषे। त्विष दीप्तौ। लिटि प्रत्ययस्वरः। तिङ्परत्वान्निघाताभावः। वृत्वी। वृञ् वरणे। स्नात्व्यादयश्च। पा॰ ७. १. ४९.। इत्यादिग्रहणात् क्त्वाप्रत्ययस्येकारः। रजसः। रञ्ज रागे। रजंत्यस्मिन् गंधर्वादय इति रजोऽंतरिक्षं। असुनि रजकरजनरजःसूपसंख्यानं। का॰ ६. ४. २४. ४.। इति नलोपः। नित्त्वादाद्युदात्तत्वं। अशयत्। शीङो व्यत्ययेन परस्मैपदं। बहुलं छंदसीति शपो लुगभावः। दुर्गृभिश्वनः। ग्रह उपादानेऽश्रु व्याप्तावित्यनयोर्दुःशब्द उपपदे पृषोदरादित्वादभिमतरूपस्वरसिद्धिः। निजघंथ। हन हिंसागत्योः। लिटि थलि क्रादिनियमात्प्राप्तस्येट उपदेशेऽत्वतः। पा॰ ७. २. ६२.। इति निषेधः। अभ्यासाच्चेत्यभ्यासादुत्तरस्य हकारस्य घत्वं। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। तिङि चोदात्तवतीति गतेर्निघातः। यद्वृत्तयोगान्निघाताभावः। तन्यतुं। तनु विस्तारे। अस्मादृतन्यंजीत्यादिना। उ॰ ४. २.। यतुच्। यद्वा। स्तन शब्दे इत्यस्माद्बहुलवचनाद्यतुच्प्रत्यये सकारलोपः॥

हृदं न हि त्वा न्यृषंत्यूर्मयो ब्रह्माणींद्र तव यानि वर्धना।
त्वष्टा चित्ते युज्यं वावृधे शवस्ततक्ष वज्रमभिभूत्योजसं॥७॥
हृदं। न। हि। त्वा। निऽऋषंति। ऊर्मयः। ब्रह्माणि। इंद्र। तव। यानि। वर्धना।
त्वष्टा। चित्। ते। युज्यं। ववृधे। शवः। ततक्ष। वज्रं। अभिभूतिऽओजसं॥७॥

हे इंद्र यानि ब्रह्माणि स्तोत्रशस्त्ररूपाणि मंत्रजातानि तव वर्धना वर्धयितॄणि तानि त्वा त्वां न्यृषंति हि। नितरां प्राप्नुवंत्येव। तत्र दृष्टांतः। ऊर्मयो जलप्रवाहा हृदं न। यथा जलाशयं प्राप्नुवंति तद्वत्। त्वष्टा चित् स त्वष्टा च देवस्ते तव युज्यं योग्यं शवो बलं ववृधे। प्रावर्धयत्। अपि चाभिभूत्योजसं शत्रूणामभिभवितृणा ओजसा बलेन युक्तं वज्रं ततक्ष। तीक्ष्णीचकार॥ न्यृषंति। ऋषी गतौ। तौदादिकः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः। हि चेति निघातप्रतिषेधः। ऊर्मयः। ऋ गतौ। ऋच्छंति गच्छंतीत्यूर्मयः। अर्तेरूच्च। उ॰ ४. ४४.। इति मिप्रत्ययः। गुणे सत्यकारस्योकारादेशश्च। प्रत्ययस्वरः। वर्धना। वृधु वृद्धौ। वर्धंत एभिरिति वर्धना। करणे ल्युट्। शेश्छंदसीति शेर्लोपः। ततक्ष। तक्षू त्वक्षू तनूकरणे। लिटि णलि लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं। पादादित्वान्निघाताभावः। अभिभूत्योजसं। अभिभूयतेऽनेनेत्यभिभूति। करणे क्तिन्। तादौ च नितीति गतेः प्रकृतिस्वरत्वं। अभिभूत्योजो यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥

जघन्वाँ उ हरिभिः संभृतक्रतविंद्र वृत्रं मनुषे गातुयन्नपः ।
अयच्छथा बाह्वोर्वज्रमायसमधारयो दिव्या सूर्यं दृशे ॥ ८ ॥
जघन्वान् । ऊं इति । हरिऽभिः । संभृतक्रतो इति संभृतऽक्रतो । इंद्र । वृत्रं । मनुषे ।
गातुऽयन् । अपः ।
अयच्छथाः । बाह्वोः । वज्रं । आयसं । अधारयः । दिवि । आ । सूर्यं । दृशे ॥ ८ ॥

हे संभृतक्रतो संपादितकर्मन् संपादितप्रज्ञ वेंद्र मनुषे जनाय गातुयन् गातुं मार्गमिच्छन् वृत्रं लोकानामावरकमसुरं हरिभिरश्वैर्युक्तस्त्वं जघन्वान् उ । हतवान् खलु । तदनंतरमपो वृष्ट्युदकानि प्रावर्तय इत्यध्याहारः । बाह्वोस्त्वदीययोर्हस्तयोरायसमयोमयं वज्रमयच्छथाः । अग्रहीः । आकारः समुच्चयार्थः । सूर्यं च दिवि द्युलोके दृशे द्रष्टुं सर्वेषामस्माकं दर्शनायाधारयः । स्थापयां चकृषे ॥ जघन्वान् । हंतेर्लिटः क्वसुः । विभाषा गमहनविदविशां । पा० ७. २. ६८. । इतीडागमस्य विकल्पोक्तेरभावः । गातुयन् । गातुमिच्छसि । छंदसि परेच्छायामपीति क्यच् । का० ३. १. ८. २. । न च्छंदस्यपुत्रस्येति दीर्घप्रतिषेधः । क्यजंताच्छतर्यदुपदेशाल्लसार्वधातुकानुदात्तत्वे क्यच एव स्वरः शिष्यते । बाह्वोः । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं ॥

बृहत्स्वश्चंद्रममवद्यदुक्थ्य१मकृण्वत भियसा रोहणं दिवः ।
यन्मानुषप्रधना इंद्रमूतयः स्वर्नृषाचो मरुतोऽमदन्ननु ॥ ९ ॥
बृहत् । स्वऽचंद्रं । अमऽवत् । यत् । उक्थ्यं । अकृण्वत । भियसा । रोहणं । दिवः ।
यत् । मानुषऽप्रधनाः । इंद्रं । ऊतयः । स्वः । नृऽसाचः । मरुतः । अमदन् । अनु ॥ ९ ॥

बृहत् बृहत्साम स्तोतारो यजमाना भियसा वृत्रभयेन यद्यदोक्थ्यमुकथार्हं स्तोत्रयोग्यमकृण्वत अकुर्वन् । कीदृशं बृहत्साम । स्वश्चंद्रं स्वकीयेन चंद्रेणाह्लादकेन तेजसा युक्तं अमवत् । अमति शत्रून् गच्छत्यनेनेत्यमो बलं । तद्युक्तं । दिवः स्वर्गस्य रोहणमारोहणहेतुभूतं । एवंविधेन स्तोत्रेण वृत्राद्भीता इंद्रमस्तोषतेत्यर्थः । यद्यदा मानुषप्रधनाः । प्र[illegible]न्धनानि भवंतीति नैरुक्तव्युत्पत्त्या प्रधनमिति संग्रामनाम । नि० ९. २३. । मनुष्यहितसंग्रामा ऊतयः स्वर्द्युलोकस्य रक्षितारो मरुतो नृषाचः प्राणरूपेण नॄन्सेवमाना भूत्वेंद्रमपि तेनैव रूपेणान्वमदन् आनुपूर्व्येण हर्षं प्रापयन् । तदानीं स इंद्रो वृत्रवधं प्रत्युद्युक्तो बभूवेति शेषः ॥ स्वश्चंद्रं । स्वकीयं चंद्रं यस्य । ह्रस्वाच्चंद्रोत्तरपदे मंत्रे । पा० ६. १. १५१. । इति सुट् । श्चुत्वेन शकारः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । भियसा । भीशब्दस्य तृतीयैकवचने छांदसोऽसुगागमः । तस्योदात्तत्वं च । नृषाचः । षच समवाये । अयं सेवनार्थ इति यास्कः । वहश्च । पा० ३. २. ६४. । इत्यत्र चशब्दस्यानुक्तसमुच्चयार्थत्वादस्मादपि ण्विप्रत्ययः । अमदन् । मदी हर्षे णिचि मदी हर्षग्लपनयोरिति घटादिषु पाठान्मित्त्वे सति मितां ह्रस्व इति ह्रस्वत्वं । लङि च्छंदस्युभयथेति शप आर्धधातुकत्वात् णेरनिटीति णिलोपः ॥

द्यौश्चिदस्यामवाँ अहेः स्वनादयोयवीद्भियसा वज्र इंद्र ते ।
वृत्रस्य यद्बद्बधानस्य रोदसी मदे सुतस्य शवसाभिनच्छिरः ॥ १० ॥
द्यौः । चित् । अस्य । अमऽवान् । अहेः । स्वनात् । अयोयवीत् । भियसा । वज्रः । इंद्र । ते ।
वृत्रस्य । यत् । बद्बधानस्य । रोदसी इति । मदे । सुतस्य । शवसा । अभिनत् । शिरः ॥ १० ॥

[illegible]त् द्युलोकोऽप्यस्याहेर्वृत्रस्य स्वनाच्छब्दाद्भियसा भयेनायोयवीत् । अत्यर्थं पृथग्भूत आसीत् । अकंपतेत्यर्थः । हे इंद्र ते तव सुतस्याभिषवादिभिः संस्कृतस्य सोमस्य पानेन मदे हर्षे जाते सति

त्वदीयो वज्रो रोदसी द्यावापृथिव्यौ बद्बधानस्य बाधनशीलस्य वृत्रस्य शिरो यद्यदा शवसा बलेनाभिनत् अच्छिनत्। तदानीं द्युलोको भयराहित्येन निश्चलो बभूवेति शेषः॥ अयोयवीत्। यु मिश्रणामिश्रणयोः। अस्माद्यङ्लुगंताल्लङि यङो वा। पा॰ ७. ३. ९४.। इत्यपृक्तप्रत्ययस्येडागमः। अडागम उदात्तः। बद्बधानस्य। बाधृ विलोडने। ताच्छीलिके चानशि बहुलं छंदसीति शपः श्लुः। हलादिशेषाभावो धातोर्ह्रस्वत्वं च छांदसत्वात्। चित इत्यंतोदात्तत्वं॥ ॥१३॥

यदि॒न्न्विं॑द्र पृथि॒वी दश॑भुजि॒रहा॑नि॒ विश्वा॑ त॒तनं॑त कृ॒ष्टयः॑।
अत्राह॑ ते मघव॒न्विश्रु॑तं॒ सहो॒ द्यामनु॒ शव॑सा ब॒र्हणा॑ भुवत्॥११॥
यत्। इत्। नु। इं॒द्र। पृ॒थि॒वी। दश॑ऽभुजिः। अहा॑नि। विश्वा॑। त॒तनं॑त। कृ॒ष्टयः॑।
अत्र॑। अह॑। ते॒। म॒घ॒ऽव॒न्। वि॑ऽश्रुतं॑। सहः॑। द्यां। अनु॑। शव॑सा। ब॒र्हणा॑। भु॒व॒त्॥११॥

यदिन्नु यदा खलु पृथिवी दशभुजिर्दशगुणिता भवेत्। यदि वा कृष्टयः सर्वे मनुष्या विश्वा सर्वाण्यहानि ततनंत विस्तारयेयुः। हे मघवन् धनवन्निंद्र अत्राह अत्रैव पूर्वोक्तेष्वेव देशकालकर्तृकेषु ते त्वदीयं सहो वृत्रवधादिकारणं बलं विश्रुतं विख्यातं प्रसिद्धं। शवसा त्वदीयेन बलेन कृता बर्हणा वृत्रादेर्वधरूपा क्रिया द्यामनु भुवत्। अनुभवति। यथा द्यौर्महती तथा त्वत्कृतं वृत्रादेर्हिंसनमपि महदिति भावः॥ ततनंत। तनु विस्तारे। [illegible]त्मनेपदं। लिङर्थे लङ्युप्रत्यये प्राप्ते व्यत्ययेन शप्। छांदसो द्विर्भावः। यद्वा। बहुलं छंदसीत्युप्रत्ययस्य श्लौ सति पुनरपि व्यत्ययेन शप्। शपः पित्त्वादनुदात्तत्वं। तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। यद्वृत्तयोगादनिघातः। विश्रुतं। श्रु श्रवणे। कर्मणि निष्ठा। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। बर्हणा। बर्ह बल्ह परिभाषणहिंसादानेषु। अस्मादौणादिकः क्युप्रत्ययः। बवयोरभेद इति वकारस्य बत्वं। प्रत्ययस्वरः। निबर्हयतीति वधकर्मसु पठितं च। भुवत्। भू सत्तायां। लेट्यडागमः। इतश्च लोप इतीकारलोपः। बहुलं छंदसीति शपो लुक्। भूसुवोस्तिङीति गुणप्रतिषेध उवङादेशः॥

त्वम॒स्य पा॒रे रज॑सो॒ व्यो॑मनः॒ स्वभू॑त्योजा॒ अव॑से धृषन्मनः।
च॒कृ॒षे भूमिं॑ प्रति॒मान॒मोज॑सो॒ऽपः स्वः॑ परि॒भूरे॒ष्या दिवं॑॥१२॥
त्वं। अ॒स्य। पा॒रे। रज॑सः। वि॑ऽओमनः। स्वभू॑तिऽओजाः। अव॑से। धृ॒ष॒त्ऽम॒नः।
च॒कृ॒षे। भूमिं॑। प्र॒ति॒ऽमानं॑। ओज॑सः। अ॒पः। स्व१॒रिति॑ स्वः॑। प॒रि॒ऽभूः। ए॒षि॒।
आ। दिवं॑॥१२॥

हे धृषन्मनः शत्रूणां धर्षकमनोयुक्तेंद्र अस्यास्माभिः परिदृश्यमानस्य व्योमनो व्या[illegible] रजसो लोकस्य पारे उपरिप्रदेशे वर्तमानः स्वभूत्योजाः स्वभूतबलस्त्वमवसेऽस्मद्रक्षणार्थं भूमिं भूलोकं चकृषे। कृतवानसि। किंच ओजसो बलवतां बलस्य प्रतिमानं प्रतिनिधिरभूः। तथा स्वः सुष्ठुरणीयं गंतव्यं। आप इत्यंतरिक्षनाम। अपोऽंतरिक्षलोकं आ दिवं द्युलोकं च परिभूः परिग्रहीता। परिपूर्वो भवतिः परिग्रहणार्थः। एषि। प्राप्नोषि॥ अस्य। ऊडिदमिति विभक्तेरुदात्तत्वं। व्योमनः। अवतिर्गत्यर्थः। अव रक्षणगतिकांतीत्यभिधानात्। विशेषेण गच्छति व्याप्नोतीति व्योम। यद्वा। वृ[illegible] विशेषेण प्राणिनोऽवति रक्षतीति व्योम। अन्येभ्योऽपि दृश्यंत इति मनिन्। [illegible]या वकारस्य चोट्। गुणः। दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं। यद्वा। भावे मनिन्। विविधमोम रक्षणं यस्मिन्। बहुव्रीहौ [illegible]र्वपदप्रकृतिस्वरत्वं। यणादेश उ[illegible] इति परस्यानुदात्तस्य स्वरितत्वं। स्वः। सुपूर्वादर्तेरन्येभ्योऽपि दृश्यंत इति विच्। अव्ययादाप्सुपः। पा॰ २. ४. ८२.। इति सुपो लुक्। न्यङ्स्वरौ स्वरितौ। फि॰ ४. ६.। इति स्वरितत्वं॥

भूनाम्न्येकाहे मरुत्वतीयशस्त्रे निविद्धानीयात्सूक्तात्पुरा त्वं भुवः प्रतिमानमित्येषा शंसनीया । तथैवासूत्रयत् । शस्यमुक्तं बृहस्पतिसवेन त्वं भुवः प्रतिमानं पृथिव्याः । आ॰ ९. ५. । इति ॥

त्वं भुवः प्रतिमानं पृथिव्या ऋष्ववीरस्य बृहतः पतिर्भूः ।
विश्वमाप्रा अंतरिक्षं महित्वा सत्यमद्धा नकिरन्यस्त्वावान् ॥ १३ ॥
त्वं । भुवः । प्रतिऽमानं । पृथिव्याः । ऋष्वऽवीरस्य । बृहतः । पतिः । भूः ।
विश्वं । आ । अप्राः । अंतरिक्षं । महिऽत्वा । सत्यं । अद्धा । नकिः । अन्यः । त्वाऽवान् ॥ १३ ॥

हे इंद्र त्वं पृथिव्याः प्रथिताया विस्तीर्णाया भूमेः प्रतिमानं भुवः । प्रतिनिधिर्भवसि । यथा भूर्लोको महानचिंत्यशक्तिः । एवं त्वमपीत्यर्थः । तथा ऋष्ववीरस्य । वीरयंति विक्रांता भवंतीति वीरा देवाः । ऋष्वा दर्शनीया वीरा यस्य स तथोक्तः । तस्य बृहतो बृंहितस्य प्रवृद्धस्य स्वर्गलोकस्य पतिर्भूः । पालयितासि । तथांतरिक्षमंतरा क्षांतं द्यावापृथिव्योर्मध्ये वर्तमानमाकाशं विश्वं सर्वमपि महित्वा महत्त्वेन सत्यमाप्राः । निश्चयेन आ समंतादपूरयः । अतस्त्वावान् त्वत्सदृशोऽन्यः कश्चिन्नकिरस्ति । नास्तीति । यदेतत्तदद्धा सत्यमेव ॥ भुवः । भवतेर्लेटि सिप्यडागमः । उवङादेशः । पृथिव्याः । उदात्तयणो हल्पूर्वादिति विभक्तिरुदात्ता । बृहतः । बृहन्महतोरुपसंख्यानमिति विभक्तेरुदात्तत्वं । भूः । छांदसे वर्तमाने लुङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । अप्राः । प्रा पूरणे । आदादिकः । लङ्यडागमः । महित्वा । सुपां सुलुगिति तृतीयाया डादेशः । त्वावान् । वतुप्प्रकरणे युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानं । पा॰ ५. २. ३९. १. । इति सादृश्यार्थे वतुप् । प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य त्वादेशः । आ सर्वनाम्न इत्यात्वं । प्रत्ययस्य पित्त्वादनुदात्तत्वे प्रातिपदिकस्वर एव शिष्यते ॥

न यस्य द्यावापृथिवी अनु व्यचो न सिंधवो रजसो अंतमानशः ।
नोत स्ववृष्टिं मदे अस्य युध्यत एको अन्यच्चकृषे विश्वमानुषक् ॥ १४ ॥
न । यस्य । द्यावापृथिवी इति । अनु । व्यचः । न । सिंधवः । रजसः । अंतं । आनशुः ।
न । उत । स्वऽवृष्टिं । मदे । अस्य । युध्यतः । एकः । अन्यत् । चकृषे । विश्वं । आनुषक् ॥ १४ ॥

यस्येंद्रस्य व्यचो व्यापनं द्यावापृथिवी द्यावापृथिव्यौ [illegible] प्राप्तुमसमर्थे बभूवतुः । तथा रजसो ऽंतरिक्षलोकस्योपरि सिंधवः स्यंदनशीला आपो यस्येंद्रस्य तेजसोऽंतमवसानं नानशुः न प्रापुः । उतापि च सोमपानेन मदे हर्षे सति स्ववृष्टिं [illegible] वृत्रादिं युध्यतो युध्यमानस्यास्येंद्रस्य बलस्यांतं वृत्रादयो न प्रापुः । अतो हे इंद्र एकस्त्वमन्यत्त्वव्यतिरिक्तं विश्वं सर्वं भूतजातमानुषक् आनुषक्तं चकृषे । [illegible] भूतजातं त्वदधीनमभूदिति भावः ॥ द्यावापृथिवी । द्यौश्च पृथिवी च दिवो द्यावा । पा॰ ६. ३. २९. । इति द्यावादेश आद्युदात्तो निपातितः । पृथिवीशब्दः [illegible]श्चेति ङीषंतोऽंतोदात्तः । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं । अपृथिवीरुद्रपूषमंथिष्विति पर्युदासान्नोत्तरपदेऽनुद[illegible] निषेधाभावः । व्यचः । व्यचेः [illegible]टादित्वमनसि । का॰ १. २. १. १. । इति वचनात् ङित्वाभावे संप्रसारणाभावः । आनशुः । अश्नोतेर्व्यत्ययेन परस्मैपदं । अत आदेरित्यभ्यासस्यात्वं । अश्नोतेश्चेति नुडागमः ॥

आर्चन्नत्र मरुतः सस्मिन्नाजौ विश्वे देवासो अमदन्ननु त्वा ।
वृत्रस्य यद्भृष्टिमता वधेन नि त्वमिंद्र प्रत्यानं जघंथ ॥ १५ ॥
आर्चन् । अत्र । मरुतः । सस्मिन् । आजौ । विश्वे । देवासः । अमदन् । अनु । त्वा ।
वृत्रस्य । यत् । भृष्टिऽमता । वधेन । नि । त्वं । इंद्र । प्रति । आनं । जघंथ ॥ १५ ॥

हे इंद्र त्वां मरुतोऽत्रास्मिन्संग्राम आर्चन्। प्रहर भगवो जहि वीरयस्व। ऐ० ब्रा० ३. २०.। इत्यनेन वचनेनापूजयन्। सस्मिन् तस्मिन् यद्वा सर्वस्मिन्नाजौ संग्रामे विश्वे देवासस्ते सर्वे दानादिगुणयुक्ता मरुतस्त्वा त्वामन्वमदन्। अनुक्रमेण हर्षं प्रापयन्। यद्वा। त्वदीयमदानंतरं तेऽपि मदं प्राप्ताः। हे इंद्र त्वं यद्यदा भृष्टिमता। भ्रंशयति शत्रूनिति भृष्टिरश्रिः। तद्वता वधेन हननसाधनेन वज्रेण। अश्रिमत्त्वं च वज्रस्य ब्राह्मणे समाम्नातं। वज्रो वा एष यद्यूपः सोऽष्टाश्रिः कर्तव्योऽष्टाश्रिर्वै वज्रः। ऐ० ब्रा० २. १.। इति। तेन वज्रेण वृत्रस्यानं प्रति आननं मुखं प्रति यद्वा श्वासहेतु घ्राणं प्रति नि जघंथ। नितरां प्राहार्षीः॥ आर्चन्। अर्च पूजायां। भौवादिकः। आडागम उदात्तः। सस्मिन्। तदोः सः सौ। पा० ७. २. १०६.। इति विधीयमानं सत्वं व्यत्ययेन सप्तम्यामपि द्रष्टव्यं। यद्वा। सर्वस्मिन्नित्यत्र वर्णलोपो द्रष्टव्यः। देवासः। आज्जसेरसुक्। आनं। आननं। वर्णलोपश्छांदसः। यद्वा। अन प्राणने। अन्यतेऽनेनेत्यानं घ्राणं। करणे घञ्। कर्षात्वत इत्यंतोदात्तत्वं। जघंथ। हन हिंसागत्योः। थल्युपदेशेऽत्वत इतीट्प्रतिषेधः। अभ्यासाच्चेत्यभ्यासादुत्तरस्य हकारस्य घत्वं। लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं॥ ॥१४॥

न्यू ष्वित्येकादशर्चं तृतीयं सूक्तं। दशम्येकादश्यौ त्रिष्टुभौ। शिष्टा नव जगत्यः। सव्य ऋषिः। इंद्रो देवता। तथा चानुक्रांतं। न्यू ष्वेकादशांत्ये त्रिष्टुभाविति॥ अतिरात्रे प्रथमे पर्याये ब्राह्मणाच्छंसिनः शस्त्र एतत्सूक्तं। तथा चासूत्रयदाचार्यः। न्यू षु वाचमप्सु धूतस्य हरिवः पिबेहेति याज्या। आ० ६. ४.। इति॥

न्यू३ षु वाचं प्र महे भरामहे गिर इंद्राय सदने विवस्वतः।
नू चिद्धि रत्नं ससतामिवाविदन्न दुष्टुतिर्द्रविणोदेषु शस्यते॥१॥
नि। ऊं इति। सु। वाचं। प्र। महे। भरामहे। गिरः। इंद्राय। सदने। विवस्वतः।
नु। चित्। हि। रत्नं। ससतांऽइव। अविदत्। न। दुःऽस्तुतिः। द्रविणःऽदेषु।
शस्यते॥१॥

महे महत इंद्राय सु वाचं शोभनां स्तुतिं नि प्र भरामहे। नितरां प्रयुंज्महे। उ इति पादपूरणः। यतो विवस्वतः परिचरतो यजमानस्य सदने यज्ञगृह इंद्राय गिरः स्तुतयः क्रियंते। हि यस्मात्स इंद्रो नु चित् क्षिप्रमेव रत्नं रमणीयमसुराणां धनमविदत् विंदति। तत्र दृष्टांतः। ससतामिव। यथा स्वपतां पुरुषाणां धनं चोरः क्षिप्रं लभते तद्वत्। अतोऽस्मभ्यं धनं दातुं शक्त इति भावः। द्रविणोदेषु धनस्य दातृषु पुरुषेषु दुष्टु[illegible]चीना स्तुतिर्न शस्यते। नाभिधीयते। अतः सुवाचं प्र भरामह इति पूर्वेण संबंधः॥ न्यू षु इत्यस्योदात्तस्वरितयोर्यण इति स्वरितत्वं। तत्रोदात्तपरत्वात्संहितायां कंप्यते। इकः सुञि। पा० ६. ३. १३४.। इति दीर्घत्वं। सुञ इति षत्वं। महे। मह पूजायामित्यस्मात् क्विपेति क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं। यद्वा। महच्छब्दस्याच्छब्दलोपश्छांदसः। नू चित्। ऋचि तुनुघेत्यादिना दीर्घः। ससतामिव। षस स्वप्ने। अस्माच्छतंतादंतोदात्तात्परस्या विभक्तेः शतुरनुम इत्युदात्तत्वं। इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च। पा० २. १. ४. २.। इति समासः। अविदत्। विदॢ लाभे। छंदसि लुङ्लङ्लिट इति वर्तमाने लुङि पुषादिद्युताद्ॢदितः परस्मैपदेष्विति च्लेरङादेशः। अडागम उदात्तः। हि चेति निघातप्रतिषेधः। द्रविणोदेषु। द्रविणानि धनानि ददातीति द्रविणोदाः। द्रु गतावित्यस्मात् द्रुदक्षिभ्यामिनन्। उ० २. ५०.। इतीनन्प्रत्ययांतो द्रविणशब्दः। तस्मिन्कर्मण्युपपद आतोऽनुपसर्गे क इति कः। पूर्वपदस्य सुगागमश्छांदसः। कृदुत्तरपदप्रकृतिस्वरत्वं। शस्यते। शंसु स्तुतौ। यक्यनिदितामिति नलोपः॥

दुरो अश्वस्य दुर इंद्र गोरसि दुरो यवस्य वसुन इनस्पतिः।
शिक्षानरः प्रदिवो अ[illegible]ः सखा सखिभ्यस्तमिदं गृणीमसि॥२॥

दुरः । अश्वस्य । दुरः । इंद्र । गोः । असि । दुरः । यवस्य । वसुनः । इनः । पतिः ।
शिक्षाऽनरः । प्रऽदिवः । अकामऽकर्शनः । सखा । सखिऽभ्यः । तं । इदं ।
गृणीमसि ॥२॥

हे इंद्र त्वमश्वस्य दुरो दातासि । तथा गोः पश्वादेर्दुरो दातासि । तथा यवस्य यवादेर्धान्यजातस्य दुरो दातासि । वसुनो निवासहेतोर्धनस्येनः स्वामी पतिः सर्वेषां पालयिता शिक्षानरः । शिक्षतिर्दानकर्मा । शिक्षाया दानस्य नेतासि । प्रदिवः पुराणः । प्रगता दिवो दिवसा यस्मिन्स तथोक्तः । अकामकर्शनः । कामान्कर्शयति नाशयतीति कामकर्शनः । न कामकर्शनोऽकामकर्शनः । अव्ययपूर्वपदप्रकृतिस्वरत्वं । हविर्दत्तवतां यजमानानां कामानभिमतफलप्रदानेन पूरयतीत्यर्थः । सखिभ्यः समानख्यानेभ्य ऋत्विग्भ्यः सखा सखिवदत्यंतं प्रियः । एवंभूतो य इंद्रस्तं प्रतीदं स्तोत्रलक्षणं वचो गृणीमसि । ब्रूमहे ॥ दुरः । डुदाञ् दाने । मंदिवाशिमथिचतिचंक्यंकिभ्य उरच् । उ० १. ३९. । इति विधीयमान उरच्प्रत्ययो बहुलवचनादस्मादपि भवति । अत एवाकारलोपः । शिक्षानरः । शिक्ष विद्योपादाने । गुरोश्च हलः । पा० ३. ३. १०३. । इत्यकारप्रत्ययः । ततष्टाप् । षष्ठीसमासः । समासस्येत्यंतोदात्तत्वं । गृणीमसि । गॄ शब्दे । क्रैयादिकः । प्वादीनां ह्रस्व इति ह्रस्वत्वं । इदंतो मसिरिति मसेरिकारः ॥

शचीव इंद्र पुरुकृद्द्युमत्तम तवेदिदमभितश्चेकिते वसु ।
अतः संगृभ्याभिभूत आ भर मा त्वायतो जरितुः काममूनयीः ॥३॥
शचीऽवः । इंद्र । पुरुऽकृत् । द्युमत्ऽतम । तव । इत् । इदं । अभितः । चेकिते । वसु ।
अतः । संऽगृभ्य । अभिऽभूते । आ । भर । मा । त्वाऽयतः । जरितुः । कामं । ऊनयीः ॥३॥

शचीवः । शचीति प्रज्ञानाम । हे इंद्र शचीवः प्रज्ञावन् पुरुकृत् प्रभूतस्य वृत्रवधादेः कर्तः द्युमत्तमातिशयेन दीप्तिमन् अभितः सर्वत्र वर्तमानं वसु धनं यदस्ति तदिदं तवेत् तवैव स्वभूतमिति चेकिते । भृशमस्माभिर्ज्ञायते । अतः कारणाद्धनं संगृभ्य सम्यक् गृहीत्वाभिभूते शत्रूणामभिभवितरा भर । अस्मभ्यमाहर । देहीत्यर्थः । त्वायतस्त्वामात्मन इच्छतो जरितुः स्तोतुः काममभिलाषं मोनयीः । परिहीनं मा कार्षीः । पूरयेत्यर्थः ॥ शचीवः । मतुवसो रुरिति रुत्वं । षाष्ठिकमामंत्रिताद्युदात्तत्वं । इतरेष्वाष्टमिकं सर्वानुदात्तत्वं । न चामंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वं । नामंत्रिते समानाधिकरण इति निषेधात् । चेकिते । कित ज्ञाने । अस्माद्यङंताद्वर्तमाने लिट्यमंत्रे । पा० ३. १. ३५. । इति निषेधादाम्प्रत्ययाभावे सति लिट आर्धधातुकत्वादतोलोपयलोपौ । संगृभ्य आभरेत्युभयत्र हृग्रहोर्भश्छंदसि । पा० ८. २. ३२. १. । इति भत्वं । त्वायतः । त्वामात्मन इच्छति । सुप आत्मनः क्यच् । प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य त्वादेशः । छांदसमात्वं । क्यजंताल्लटः शतृ । तस्यादुपदेशाल्लसार्वधातुकस्वरेणानुदात्तस्यैकादेशस्वरेणोदात्तत्वं । एकादेशस्वरोऽंतरंगः सिद्धो भवतीति वक्तव्यं । पा० ८. २. ६. १. । इति वचनात्तस्य सिद्धत्वे सति शतुरनुम इत्यजादिविभक्तेरुदात्तत्वं । कामं । कमु कांतावित्यस्माद्भावे घञ् । कर्षात्वत इत्यंतोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वं । ऊनयीः । ऊन परिहाणे । चुरादिः । लुङि णिश्रिद्रुस्रुभ्यः । पा० ३. १. ४८. । इति च्लेश्चङादेशस्य नोनयतिध्वनयतीत्यादिना । पा० ३. १. ५१. । प्रतिषेधः । ह्म्यंतक्षणेति । पा० ७. २. ५. । सिचि वृद्धिप्रतिषेधः ॥

एभिर्द्युभिः सुमना एभिरिंदुभिर्निरुंधानो अमतिं गोभिरश्विना ।
इंद्रेण दस्युं दरयंत इंदुभिर्युतद्वेषसः समिषा रभेमहि ॥४॥
एभिः । द्युऽभिः । सुऽमनाः । एभिः । इंदुऽभिः । निऽरुंधानः । अमतिं । गोभिः । अश्विना ।
इंद्रेण । दस्युं । दरयंतः । इंदुऽभिः । युतऽद्वेषसः । सं । इषा । रभेमहि ॥४॥

हे इंद्र एभिरस्माभिर्दत्तैर्द्युभिर्दीप्तैश्चरुपुरोडाशादिभिः एभिरिंदुभिः पुरोवर्तिभिस्तुभ्यं दत्तैः सोमैश्च प्रीतस्त्वमस्माकममतिं दारिद्र्यं गोभिस्त्वया दत्तैः पशुभिरश्विनाश्वयुक्तेन धनेन च निरुंधानो निवर्तयन्सुमनाः शोभनमना भव। वयमिंदुभिरस्माभिर्दत्तैः सोमैः प्रीतेनेंद्रेण दस्युमुपक्षपयितारं शत्रुं दरयंतो हिंसंतोऽत एव युतद्वेषसः पृथग्भूतशत्रुका भूत्वैषेंद्रदत्तेनान्नेन सं रभेमहि। संरब्धा भवेम। संगच्छेमहीत्यर्थः॥ सुमनाः। शोभनं मनो यस्य। सोर्मनसी अलोमोषसी इत्युत्तरपदाद्युदात्तत्वं। निरुंधानः। रुधिर् आवरणे। स्वरितेत्त्वादात्मनेपदं। श्नसोरल्लोप इत्यकारलोपः। चित इत्यंतोदात्तत्वं। थाथादिनोत्तरपदप्रकृतिस्वरत्वं। अमतिं। मंतव्या मतिरैश्वर्यं। न मतिरमतिः। अव्ययपूर्वपदप्रकृतिस्वरत्वं। न लोकाव्ययेति षष्ठीप्रतिषेधः। अश्विना। अश्वोऽस्यास्तीत्यश्वि धनं। मत्वर्थीय इनिः॥

सर्मिंद्र राया समिषा रभेमहि सं वाजेभिः पुरुश्चंद्रैरभिद्युभिः।
सं देव्या प्रमत्या वीरशुष्मया गोअग्रयाश्वावत्या रभेमहि॥५॥
सं। इंद्र। राया। सं। इषा। रभेमहि। सं। वाजेभिः। पुरुऽचंद्रैः। अभिद्युऽभिः।
सं। देव्या। प्रऽमत्या। वीरऽशुष्मया। गोऽअग्रया। अश्वऽवत्या। रभेमहि॥५॥

हे इंद्र राया धनेन वयं सं रभेमहि। संगच्छेमहि। तथेषान्नेन सं रभेमहि। तथा वाजेभिर्बलैः सं रभेमहि। कीदृशैर्वाजैः। पुरुश्चंद्रैः पुरूणां बहूनामाल्हादकैः अभिद्युभिरभितो दीप्यमानैः। किंच देव्या द्योतमानया प्रमत्या त्वदीयया प्रकृष्टबुद्ध्या सं रभेमहि। कीदृश्या। वीरशुष्मया। वीरं विशेषेण शत्रूणां क्षेपणसमर्थं शुष्मं बलं यस्याः सा तथोक्ता। गोअग्रया। स्तोतृभ्यो दानार्थमग्रे प्रमुखत एव गावो यस्याः सा तथोक्ता। अश्वावत्याश्वैरुपेतया॥ राया। ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। पुरुश्चंद्रैः। ह्रस्वाच्चंद्रोत्तरपदे मंत्र इति सुट्। श्चुत्वेन शकारः। समासस्वरः। अभिद्युभिः। अभिगता द्यौर्दीप्तिर्येषां। अत्र दिव्शब्दो दीप्तिं लक्षयति। अव्ययपूर्वपदप्रकृतिस्वरत्वं। देव्या। उदात्तयण इति विभक्तेरुदात्तत्वं। प्रमत्या। तादौ च निति कृत्यतौ इति गतेः प्रकृतिस्वरत्वं। उत्तरयोर्बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। सर्वत्र विभाषा गोः। पा॰ ६. १. १२२। इति गोअग्रयेत्यत्र प्रकृतिभावः। अश्वावत्या। मंत्रे सोमाश्वेंद्रियेति मतुपि दीर्घत्वं॥ ॥१५॥

ते त्वा मदा अमदन्तानि वृष्ण्या ते सोमासो वृत्रहत्येषु सत्पते।
यत्कारवे दश वृत्राण्यप्रति बर्हिष्मते नि सहस्राणि बर्हयः॥६॥
ते। त्वा। मदाः। अमदन्। तानि। वृष्ण्या। ते। सोमासः। वृत्रऽहत्येषु। सत्ऽपते।
यत्। कारवे। दश। वृत्राणि। अप्रति। बर्हिष्मते। नि। सहस्राणि। बर्हयः॥६॥

हे सत्पते सतां पालयितरिंद्र वृत्रहत्येषु वृत्रहननेषु निमित्तभूतेषु सत्सु ते पूर्वोक्ता मदा मादका मरुतस्त्वा त्वाममदन्। अमदयन्। हर्षं प्रापयन्। तानि पूर्वोक्तानि वृष्ण्या वृष्णः सेचनसमर्थस्य तव संबंधीनि चरुपुरोडाशादीनि हवींषि त्वाममदन्। ते सोमासः प्रसिद्धाः सोमाश्च त्वाममदन्। यद्यदा कारवे स्तुतिकर्त्रे बर्हिष्मते यज्ञवते यजमानाय दश सहस्राण्यपरिमितानि वृत्राण्यावरकाण्युपद्रवजातान्यप्रति शत्रुभिरप्रतिगतस्त्वं नि बर्हयः न्यवधीः। तदानीमिति पूर्वेण संबंधः॥ वृष्ण्या। शेश्छंदसि बहुलमिति शेर्लोपः। बर्हयः। बर्हयतिर्हिंसाकर्मा। लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। शपः पित्त्वादनुदात्तत्वे णिच एव स्वरः शिष्यते। यद्वृत्तयोगादनिघातः॥

युधा युधमुप घेदेषि धृष्णुया पुरा पुरं समिदं हंस्योजसा।
नम्या यदिंद्र सख्या परावति निबर्हयो नमुचिं नाम मायिनं॥७॥

युधा। युधं। उप। घ। इत्। एषि। धृष्णुऽया। पुरा। पुरं। सं। इदं। हंसि। ओजसा।
नम्या। यत्। इंद्र। सख्या। पराऽवति। निऽबर्हयः। नमुचिं। नाम। मायिनं ॥ ७ ॥

हे इंद्र धृष्णुया शत्रूणां धर्षकस्त्वं युधा युद्धेन संबद्धं युधं युद्धमुप घेदेषि। उपैव गच्छसि। सर्वदा युद्धशीलो भवसीत्यर्थः। घेति पादपूरणः। शत्रूणामसुराणां पुरा पुरेण नगरेण सहेदं पुरोवर्ति पुरं शत्रुनगरमोजसा बलेन सं हंसि। सम्यग्विनाशयसि। शत्रूणां पुराण्यभैत्सीरित्यर्थः। हे इंद्र त्वं नम्या शत्रुषु नमनशीलेन सख्या सहायभूतेन वज्रेण परावति दूरदेशे नमुचिं नामानया संज्ञया प्रसिद्धं मायिनं मायाविनमसुरं यद्यस्मान्निबर्हयः नितरामहिंसीः। अतस्त्वमेवं स्तूयस इत्यर्थः॥ युधा। युध संप्रहारे। संपदादिलक्षणो भावे क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं। एषि। इण् गतौ। अदादित्वाच्छपो लुक्। धृष्णुया। ञिधृषा प्रागल्भ्ये। त्रसिगृधिधृषिक्षिपेः क्नुरिति क्नुप्रत्ययः। कित्वाद्गुणाभावः। सुपां सुलुगिति सोर्याजादेशः। चित इत्यंतोदात्तत्वं। पुरा। पॄ पालनपूरणयोः। पूरयति राज्ञामभिमतानीति। क्विब्वेति क्विप्। उदोष्ठ्यपूर्वस्येत्युत्वं। सावेकाच इति विभक्तिरुदात्ता। हंसि। हंतेर्लटि सिप्यदादि[illegible] लुकि नश्चापदांतस्य झलि। पा० ८. ३. २४.। इत्यनुस्वारः। नम्या। णमु प्रह्वत्वे। औणादिक इन्प्रत्ययः। सुपां सुलुगिति तृतीयाया ड्यादेशः। टिलोपः। सख्या। शेषो घ्यसखि। पा० १. ४. ७.। इति घिसंज्ञाप्रतिषेधान्नाभावाभावे यणादेशः। नमुचिं। इंद्रेण सह युद्धं न मुंचतीति नमुचिः। औणादिकः किप्रत्ययः। नभ्राण्नपादित्यादिना नञः प्रकृतिभावः। नञ् न गतिर्न च कारकमिति कृदुत्तरपदप्रकृतिस्वरत्वाभावेऽव्ययपूर्वपदप्रकृतिस्वरत्वं। मायिनं। मायाशब्दस्य व्रीह्यादिषु पाठात् मत्वर्थीय इनिः॥

त्वं करंजमुत पर्णयं वधीस्तेजिष्ठयातिथिग्वस्य वर्तनी।
त्वं शता वंगृदस्याभिनत्पुरोऽनानुदः परिषूता ऋजिश्वना ॥ ८ ॥
त्वं। करंजं। उत। पर्णयं। वधीः। तेजिष्ठया। अतिथिऽग्वस्य। वर्तनी।
त्वं। शता। वंगृदस्य। अभिनत्। पुरः। अननुऽदः। परिऽसूताः। ऋजिश्वना ॥ ८ ॥

हे इंद्र त्वं करंजमेतत्संज्ञकमसुरमुतापि च पर्णयमेतन्नामानमसुरं चातिथिग्वस्यैतत्संज्ञस्य राज्ञः प्रयोजनाय तेजिष्ठयातिशयेन [illegible] वर्तनी वर्तन्या शत्रुप्रेरणकुशलया शक्त्या वधीः। हतवानसि। तथाननुदः। अनु पश्चाद्द्यति खंडयतीत्यनुदोऽनुचरः। तादृशोऽनुचररहित एक एव [illegible] राज्ञा परिषूताः परितोऽवष्टब्धाः शता शतानि शतसंख्याका वंगृदस्यैतत्संज्ञकस्यासुरस्य पुरः पुराणि नगराण्यभिनत्। बिभिदिषे॥ वधीः। हंतेर्लुङि सिपि लुङि चेति वधादेशः। तस्यादंतत्वाद्वृद्ध्यभावः। पा० ७. ३. ३५.। अत एवानेकाच्त्वादिट्प्रतिषेधाभावः। पा० ७. २. १०.। इट ईटीति सिचो लोपः। तेजिष्ठया। तेजस्शब्दादस्मायामेधेति मत्वर्थीयो विनिः। तस्मादातिशायनिक इष्ठनि विन्मतोर्लुगिति विनो लुक्। टेरिति टिलोपः। नित्त्वादाद्युदात्तत्वं। वर्तनी। वृत्यते प्रेर्यतेऽनयेति वर्तनी। करणे ल्युट्। टित्त्वात्। पा० ४. १. १५.। ङीप्। सुपां सुलुगिति विभक्तेः पूर्वसवर्णदीर्घत्वं। व्यत्ययेनांतोदात्तत्वं। अभिनत्। भिदिर् विदारणे। लङि सिपि रुधादित्वात् श्नम्। इतश्चेतीकारलोपः। हल्ङ्याब्भ्य इति सकारलोपः। अननुदः। दो अवखंडने। आदेच इत्यात्वं। आतश्चोपसर्ग इति कप्रत्ययः। नास्त्यनुदोऽस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। संहितायां दीर्घश्छांदसः। परिषूताः। षू प्रेरणे। कर्मणि निष्ठा। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं॥

त्वमेताञ्जनराज्ञो द्विर्दशाबंधुना सुश्रवसोपजग्मुषः।
षष्टिं सहस्रा नवतिं नव श्रुतो नि चक्रेण रथ्या दुष्पदावृणक् ॥ ९ ॥
त्वं। एतान्। जनऽराज्ञः। द्विः। दश। अबंधुना। सुऽश्रवसा। उपऽजग्मुषः।
षष्टिं। सहस्रा। नवतिं। नव। श्रुतः। नि। चक्रेण। रथ्या। दुःऽपदा। अवृणक् ॥ ९ ॥

हे इंद्र अतो विश्रुतः प्रख्यातस्त्वं द्विर्दश विंशतिसंख्याकानबंधुना बंधुरहितेन सहायरहितेन सुश्रवसे तत्संज्ञकेन राज्ञा युद्धार्थमुपजग्मुष उपगतवत एतानेवंविधान् जनराज्ञो जनपदानामधिपतीन्। षष्टिमित्यादिना तेषां राज्ञामनुचरसंख्योच्यते। षष्टिं सहस्रा सहस्राणां षष्टिं नवतिं नव नवसंख्योत्तरां नवतिं। तान्राज्ञ ईदृक्संख्याकाननुचरांश्च रथ्या रथसंबंधिना दुष्पदा दुष्प्रपदनेन। शत्रुभिः प्राप्तुमशक्येनेत्यर्थः। ईदृशेन चक्रेण न्यवृणक्। न्यवर्जयः। त्वां स्तुवतः सुश्रवसो जयार्थं त्वमागत्य तदीयान् शत्रूनजैषीरित्यर्थः॥ जनराज्ञः। समासांतविधेरनित्यत्वाट्टच्प्रत्ययाभावः। पा० ५. ४. ९१. परि० ८४। राजन्शब्दो राजृ दीप्तावित्यस्मात्कनिन्प्रत्ययांत आद्युदात्तः। कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। अबंधुना। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। सुश्रवसा। शोभनं श्रवोऽन्नं यस्य। आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। उपजग्मुषः। गमेर्लिटः क्वसुः। शसि भसंज्ञायां वसोः संप्रसारणमिति संप्रसारणं। परपूर्वत्वं। गमहनेत्यादिनोपधालोपः। शासिवसिघसीनां चेति षत्वं। कृदुत्तरपदप्रकृतिस्वरत्वेन क्वसोरेव स्वरः शिष्यते। रथ्या। रथस्येदं रथ्यं। रथाद्यत्। पा० ४. ३. १२१। इति यत्। यतोऽनाव इत्याद्युदात्तत्वं। सुपां सुलुगिति विभक्तेराकारः। दुष्पदा। पद गतौ। ईषद्दुःसुष्विति खल्। लितीति प्रत्ययात्पूर्वस्योदात्तत्वं। पूर्ववद्विभक्तेराकारः। अवृणक्। वृजी वर्जने। रौधादिकः। लङि मध्यमैकवचने हल्ङ्याब्भ्य इति सिपो लोपः। चोः कुरिति कुत्वं॥

त्वमा॑विथ सु॒श्रव॑सं॒ तवो॒तिभि॒स्तव॒ त्राम॑भिरिंद्र॒ तूर्व॑याणं।
त्वम॑स्मै॒ कुत्स॑मतिथि॒ग्वमा॒युं म॒हे राज्ञे॒ यूने॑ अरंधनायः ॥१०॥
त्वं। आ॒वि॒थ॒। सु॒ऽश्रव॑सं। तव॑। ऊ॒तिऽभिः॑। तव॑। त्राम॑ऽभिः। इं॒द्र॒। तूर्व॑याणं।
त्वं। अ॒स्मै॒। कुत्सं॑। अ॒ति॒थि॒ऽग्वं। आ॒युं। म॒हे। राज्ञे॑। यूने॑। अ॒रं॒ध॒ना॒यः॒ ॥१०॥

हे इंद्र त्वं तवोतिभिस्त्वदीयैः पालनैः सुश्रवसं पूर्वोक्तं राजानमाविथ। ररक्षिथ। तथा तूर्वयाणमेतन्नामानं राजानं तव त्रामभिस्त्वदीयैस्त्रायकैः पालकैर्बलैराविथेति शेषः। किंच त्वं महे महते यूने तरुणायास्मै सुश्रवसे राज्ञे कुत्सादींस्त्रीन्राज्ञोऽरंधनायः। वशमनयः। रध्यतिर्वशगमने। नि० ६. ३२। इति यास्कः॥ त्रामभिः। त्रैङ् पालने। आदेच इत्यात्वं। आतो मनिन्निति मनिन्। नित्त्वादाद्युदात्तत्वं। अरंधनायः। रंधनं वशीकरणं करोति रंधनयति। तत्करोति। पा० ३. १. २६. ५। इति णिच्। इष्ठवण्णौ प्रातिपदिकस्य। पा० ६. ४. १५५. १। इतीष्ठवद्भावाट्टिलोपः। लङि सिपि दीर्घश्छांदसः॥

य उ॒दृ॒चींद्र दे॒वगो॑पाः॒ सखा॑यस्ते शि॒वत॑मा असाम।
त्वां स्तो॑षाम॒ त्वया॑ सु॒वीरा॒ द्राघी॑य॒ आयुः॑ प्रत॒रं दधा॑नाः ॥११॥
ये। उ॒त्ऽऋ॒चि। इं॒द्र॒। दे॒वऽगो॑पाः। सखा॑यः। ते॒। शि॒वऽत॑माः। अ॒सा॒म॒।
त्वां। स्तो॒षा॒म॒। त्वया॑। सु॒ऽवीराः॑। द्राघी॑यः। आयुः॑। प्र॒ऽत॒रं। दधा॑नाः ॥११॥

हे इंद्र ये वयमुदृच्युदर्के यज्ञसमाप्तौ वर्तमाना देवगोपा देवैः पालितास्ते तव सखायः सखिवदत्यंतं प्रिया अत एव शिवतमा असाम अतिशयेन कल्याणा अभूम ते वयं यज्ञसमाप्त्युत्तरकालमपि त्वां स्तोषाम। स्तवाम। अस्माभिः स्तुतेन त्वया सुवीराः शोभनपुत्रवंतः संतो द्राघीयोऽतिशयेन दीर्घमायुर्जीवनं प्रतरं प्रकृष्टतरं यथा भवति तथा दधाना धारयंतो भूयास्म॥ देवगोपाः। देवा गोपा येषां। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। असाम। अस भुवि। लुङर्थे लोण्याडुत्तमस्य पिच्चेति पिद्वद्भावात्पिच्च ङिन्नेति ङित्त्वाभावे श्नसोरल्लोप इत्यकारलोपाभावः। पित्त्वादेव तिङोऽनुदात्तत्वे धातुस्वरः शिष्यते। स्तोषाम। स्तौतेर्लोटि सिब्बहुलं लेटीति बहुलग्रहणात् लोट्यपि सिप्। तस्य पित्त्वाद्गुणः। सुवीराः। वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं। द्राघीयः। दीर्घशब्दादीयसुनि प्रियस्थिरेत्यादिना। पा० ६. ४. १५७। द्राघादेशः। नित्त्वादाद्युदात्तत्वं। प्रतरं। प्रशब्दात्तरप्यमु च च्छंदसि। पा० ५. ४. १२। इत्यद्रव्यप्रकर्षेऽमुप्रत्ययः। प्रत्ययस्वरेणांतोदात्तत्वं। दधानाः। दधातेः शानच्यभ्यस्तानामादिरित्याद्युदात्तत्वं॥ ॥१६॥

मा न इत्येकादशर्चं चतुर्थं सूक्तं। षष्ठ्यष्टमीनवम्येकादश्यस्त्रिष्टुभः। शिष्टाः सप्त जगत्यः। सव्य ऋषिः। इंद्रो देवता। तथा चानुक्रांतं। मा नोऽंत्या त्रिष्टुप् षष्ठ्यष्टमी नवमी चेति ॥ अतिरात्रे प्रथमे पर्यायेऽच्छावाकशस्त्र इदं सूक्तं। तथा च सूत्रितं। मा नो अस्मिन्मघवन्निंद्र पिब तुभ्यं सुतो मदायेति याज्या। आ° ६. ४.। इति ॥

मा नो अस्मिन्मघवन्पृत्स्वंहसि नहि ते अंतः शवसः परीणशे।
अक्रंदयो नद्यो३ रोरुवद्वना कथा न क्षोणीर्भियसा समारत ॥१॥
मा। नः। अस्मिन्। मघऽवन्। पृत्ऽसु। अंहसि। नहि। ते। अंतः। शवसः। परिऽनशे।
अक्रंदयः। नद्यः। रोरुवत्। वना। कथा। न। क्षोणीः। भियसा। सं। आरत ॥१॥

हे मघवन् धनवन्निंद्र अस्मिन्परिदृश्यमानेऽंहसि पापे पृत्सु पृतनासु पापफलभूतेषु संग्रामेषु च नोऽस्मान्मा प्रक्षैप्सीरिति शेषः। यस्मात्ते तव शवसो बलस्यांतोऽवसानं परीणशे परितो व्याप्तुं नहि शक्यते। सर्वोऽपि जनस्त्वदीयं बलमतिक्रमितुं न शक्नोतीत्यर्थः। तस्मात्त्वमंतरिक्षे वर्तमानो रोरुवत् अत्यर्थं शब्दं कुर्वन् नद्यो नदीर्वना तत्संबंधीन्युदकानि चाक्रंदयः। शब्दयसि। क्षोणीः क्षोण्यः। क्षोणीति पृथिवीनाम। तदुपलक्षितास्त्रयो लोका भियसा त्वद्भयेन कथा कथं न समारत। न संगच्छंते। त्वदीयं बलमवलोक्य त्रयोऽपि लोका बिभ्यतीति भावः ॥ पृत्सु। पदादिषु मांस्पृत्स्नूनामुपसंख्यानं। पा° ३. १. ६३. १.। इति पृतनाशब्दस्य पृद्भावः। परीणशे। नशतिर्व्याप्तिकर्मा। कृत्यार्थे तवैकेनिति केन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं। निपातस्य चेति पूर्वपदस्य दीर्घत्वं। नद्यः। द्वितीयार्थे प्रथमा। रोरुवत्। रु शब्दे। यङ्लुगंताल्लटः शतृ। अदादिवच्चेति वचनाच्छपो लुक्। शतुर्ङित्त्वाद्गुणाभाव उवङादेशः। नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः। अभ्यस्तानामादिरित्याद्युदात्तत्वं। कथा। था हेतौ च छंदसीति किंशब्दात्प्रकारवचने थाप्रत्ययः। तस्य विभक्तिसंज्ञायां किमः कः। पा° ७. २. १०३.। इति कादेशः। आरत। ऋ गतौ। समो गम्यृच्छीत्यात्मनेपदं। छांदसे वर्तमाने लङ्। बहुलं छंदसीति शपो लुक्। झस्यादादेशः। आडागमो वृद्धिश्च ॥

अर्चा शक्राय शाकिने शचीवते शृण्वंतमिंद्रं महयन्नभि ष्टुहि।
यो धृष्णुना शवसा रोदसी उभे वृषा वृषत्वा वृषभो न्यृंजते ॥२॥
अर्च। शक्राय। शाकिने। शचीऽवते। शृण्वंतं। इंद्रं। महयन्। अभि। स्तुहि।
यः। धृष्णुना। शवसा। रोदसी इति। उभे इति। वृषा। वृषऽत्वा। वृषभः।
निऽऋंजते ॥२॥

हे अध्वर्यो शाकिने शक्तियुक्ताय शचीवते प्रज्ञावते शक्रायेंद्रायार्च। एवंविधमिंद्रं पूजय। किंच स्तुतीः शृण्वंतं समीचीनेयं स्तुतिरिति जानंतं तमिंद्रं महयन्पूजयन्नभि ष्टुहि। आभिमुख्येन तस्य स्तोत्रं कुरु। य इंद्रो धृष्णुना शत्रूणां धर्षकेण शवसा बलेनोभे रोदसी द्यावापृथिव्यौ न्यृंजते नितरां प्रसाधयति। ऋंजतिः प्रसाधनकर्मा। नि° ६. २१.। इति यास्कः। स इंद्रो वृषा सेचनसमर्थो वृषत्वा वृषत्वेनानेनैव सेचनसामर्थ्येन वृषभो वर्षिता कामानां यद्वा वृष्ट्युदकानां ॥ अर्च। शपः पित्त्वादनुदात्तत्वे धातुस्वरः। द्व्यचोऽतस्तिङ इति दीर्घत्वं। शाकिने। शक्तिः शाकः। शक्लृ शक्तौ। भावे घञ्। मत्वर्थीय इनिः। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी। अभि ष्टुहि। स्तौतेरदादित्वाच्छपो लुक्। उपसर्गात्सुनोतीति षत्वं। ष्टुना ष्टुरिति ष्टुत्वं। वृषत्वा। सुपां सुलुगिति विभक्तेराकारः। न्यृंजते। ऋजि भृजी भर्जने। इदित्त्वान्नुम्। शपि प्राप्ते व्यत्ययेन शः ॥

अर्चा दिवे बृहते शूष्यं१ वचः स्वक्षत्रं यस्य धृषतो धृषन्मनः ।
बृहच्छ्रवा असुरो बर्हणा कृतः पुरो हरिभ्यां वृषभो रथो हि षः ॥३॥
अर्च । दिवे । बृहते । शूष्यं । वचः । स्वऽक्षत्रं । यस्य । धृषतः । धृषत् । मनः ।
बृहत्ऽश्रवाः । असुरः । बर्हणा । कृतः । पुरः । हरिऽभ्यां । वृषभः । रथः । हि । सः ॥३॥

हे स्तोतः दिवे दीप्ताय बृहते महत इंद्राय शूष्यं । शूषमिति सुखनाम । तत्र साधु शूष्यं । तादृशं स्तुतिलक्षणं वचोऽर्च । उच्चारय । यस्येंद्रस्य धृषतः शत्रून्धर्षयतः स्वक्षत्रं स्वभूतबलवन्मनो धृषत् धृष्टं भवति । हि षः स हि स खल्विंद्रो बृहच्छ्रवाः प्रभूतयशा असुरः शत्रूणां निरसिता । यद्वा । असुः प्राणो बलं वा । तद्वान् । रो मत्वर्थीयः । अथवा । असवः प्राणाः । तेन चापो लक्ष्यंते । प्राणा वा आप इति श्रुतेः । तान्राति ददातीत्यसुरः । बर्हणा शत्रूणां निबर्हयिता हरिभ्यामश्वाभ्यां पुरस्कृतः पूजितः वृषभः कामानां वर्षिता रथो रंहणशीलः ॥ शूष्यं । तत्र साधुरिति यत् । सर्वे विधयश्छंदसि विकल्प्यंत इति यतोऽनाव इत्याद्युदात्तत्वाभावे तित्स्वरित इति स्वरितत्वं । धृषतः । ञिधृषा प्रागल्भ्ये । व्यत्ययेन शः । शतुरनुम इति विभक्तेरुदात्तत्वं । बृहच्छ्रवाः । बृहच्छ्रवो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । असुरः । असु क्षेपणे । असेरुरन् । उ॰ १. ४३. । इत्युरन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । बर्हणा । सुपां सुलुगिति विभक्तेराकारः । पुरः । पूर्वाधरेत्यादिनासिप्रत्ययांतोऽंतोदात्तः ॥

त्वं दिवो बृहतः सानु कोपयोऽव त्मना धृषता शंबरं भिनत् ।
यन्मायिनो व्रंदिनो मंदिना धृषच्छितां गभस्तिमशनिं पृतन्यसि ॥४॥
त्वं । दिवः । बृहतः । सानु । कोपयः । अव । त्मना । धृषता । शंबरं । भिनत् ।
यत् । मायिनः । व्रंदिनः । मंदिना । धृषत् । शितां । गभस्तिं । अशनिं । पृतन्यसि ॥४॥

हे इंद्र त्वं बृहतो महतो दिवो द्युलोकस्य सानु समुच्छ्रितमुपरिप्रदेशं कोपयः । अकंपयः । धृषता शत्रूणां धर्षयित्रा त्मनात्मना स्वयमेव शंबरमेतत्संज्ञमसुरमवाभिनत् । अवधीः । यद्यदा व्रंदिनः शत्रूञ्जेतुं मृदुभावं प्राप्तान् । यद्वा । वृंदं समूहः । असुरसमूहवतः । मायिनो मायाविनोऽसुरान्मंदिना हृष्टेन धृषत् धृषता प्रागल्भ्यं प्राप्नुवता मनसा युक्तस्त्वं शितां तीक्ष्णीकृतां गभस्तिं हस्तेन गृहीतां । यद्वा । गभस्तिरिति रश्मिनाम । तद्वतीमशनिं वज्रं पृतन्यसि । तानसुराञ्जेतुं पृतनारूपेणेच्छसि । तान्प्रति प्रेरयसीत्यर्थः । तदानीं बृहतो दिवः सानु कोपय इति पूर्वेणान्वयः ॥ कोपयः । कुप कोपे । ण्यंताल्लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । त्मना । मंत्रेष्वाङ्यादेरात्मन इत्याकारलोपः । धृषत् । सुपां सुलुगिति तृतीयाया लुक् । शितां । शो तनूकरणे । निष्ठायां शाच्छोरन्यतरस्यां । पा॰ ७. ४. ४१. । इतीकारादेशः । पृतन्यसि । पृतनाशब्दात्सुप आत्मनः क्यच् । कव्यध्वरपृतनस्येत्यंतलोपः । प्रत्ययस्वरः ॥

नि यद्वृणक्षि श्वसनस्य मूर्धनि शुष्णस्य चिद्व्रंदिनो रोरुवद्वना ।
प्राचीनेन मनसा बर्हणावता यदद्या चित्कृणवः कस्त्वा परि ॥५॥
नि । यत् । वृणक्षि । श्वसनस्य । मूर्धनि । शुष्णस्य । चित् । व्रंदिनः । रोरुवत् । वना ।
प्राचीनेन । मनसा । बर्हणाऽवता । यत् । अद्य । चित् । कृणवः । कः । त्वा । परि ॥५॥

हे इंद्र त्वं रोरुवत् मेघैरत्यर्थं शब्दयन् श्वसनस्य । अंतरिक्षे श्वसितीति श्वसनो वायुः । तस्य व्रंदिनः स्वकिरणैराम्रफलादीन्मृदुभावं प्रापयतः शुष्णस्य चित् रसानां शोषयितुरादित्यस्यापि मूर्ध[illegible]न्द्रो वना वनान्युदकानि यद्यस्मान्नि वृणक्षि आवर्जयसि । प्रापयसीत्यर्थः । वायुना सू[illegible] सृष्टा आपः सूर्यस्योपरि

पुनरवस्थाप्यंते । तदेवावस्थापनमिंद्रः करोतीत्युपचर्यते । प्राचीनेन प्रकर्षेण गंत्रा । अपराङ्मुखेनेत्यर्थः । बर्हणावता । निबर्हयतीति वधकर्मसु पाठाद्बर्हणा शत्रूणां हिंसा । तद्वता । एवंभूतेन मनसा युक्तस्त्वं यद्यस्माद्द्या चिद्द्यापि क्ष्णवः । घर्मकाले सूर्यस्योपरि भौमाम्रसानवस्थापयसि वर्षासु च वर्षयसीति । यस्मादेतत्कुरुषे तस्मात्कारणात्त्वा त्वां पर्युपरि को वर्तते । न कोऽपीत्यर्थः । अतस्त्वमेव सर्वाधिक इति भावः ॥ वृणक्षि । वृजी वर्जने । रौधादिकः । सिपः पित्त्वादनुदात्तत्वे विकरणस्वरः । यद्वृत्तयोगादनिघातः । प्राचीनेन । प्रपूर्वादंचतेर्ऋत्विगित्यादिना क्विन् । अनिदितामिति नलोपः । विभाषांचेरदिक्स्त्रियामिति स्वार्थे खः । खस्येनादेशः । अच इत्यकारलोपे चाविति दीर्घत्वं । खप्रत्ययस्य सति शिष्टत्वात्तदादेशस्योपदेशिवद्भावेनेकार उदात्तः । अद्या चित् । निपातस्य चेति दीर्घत्वं । क्ष्णवः । क्षवि हिंसाकरणयोश्च । इदित्त्वान्नुम् । लेटि सिप्यडागमः । धिन्विकृण्व्योरच्चेत्युप्रत्ययः । वकारस्याकारादेशश्च । तस्यातो लोपे सति स्थानिवद्भावाल्लघूपधगुणाभावः । गुणावादेशौ । आगमानुदात्तत्वे विकरणस्वरः । अत्र निरुक्तं । क्रंदी क्रंदतेर्मृदूभावकर्मणः । निवृणक्षि यच्छ्वसनस्य मूर्धनि शब्दकारिणः शुष्णस्यादित्यस्य च शोषयितृ रोरूयमाणो वनानीति वा धनानीति वा । नि० ५. १६. । इति । धनानीति पक्षे मेघस्य धनानीति व्याख्येयं ॥ ॥ १७ ॥

त्वमा॑विथ॒ नर्यं॑ तु॒र्वशं॒ यदुं॒ त्वं तु॒र्वीतिं॑ व॒य्यं॑ शतक्रतो ।
त्वं रथ॒मेत॑शं॒ कृत्व्ये॒ धने॒ त्वं पुरो॑ नव॒तिं॑ दंभयो॒ नव॑ ॥ ६ ॥
त्वं । आ॒वि॒थ॒ । नर्यं॑ । तु॒र्वशं॑ । यदुं॑ । त्वं । तु॒र्वीतिं॑ । व॒य्यं॑ । श॒त॒क्र॒तो॒ इति॑ शतऽक्रतो । त्वं । रथं॑ । एत॑शं । कृत्व्ये॑ । धने॑ । त्वं । पुरः॑ । न॒व॒तिं । द॒भयः॑ । नव॑ ॥ ६ ॥

हे इंद्र त्वं नर्यादींस्त्रीन्राज्ञ आविथ । ररक्षिथ । तथा हे शतक्रतो बहुविधकर्मन् बहुविधप्रज्ञ वा त्वं वय्यं वय्यकुलजं तुर्वीतिनामानं राजानमाविथेत्येव । अपि च त्वं रथं रंहणस्वभावमेतत्संज्ञमृषिमेतशमेतत्संज्ञकं धने धननिमित्ते संग्रामे कृत्व्ये कर्तव्ये सत्याविथेति शेषः । यद्वा । पूर्वोक्तानां राज्ञां रथं । एतश इत्यश्वनाम । एतशमश्वं च ररक्षिथेति योज्यं । तथा त्वं शंबरस्य नवतिं नव नवोत्तरनवतिसंख्याकाः पुरः पुराणि दंभयः । व्यनीनशः ॥ एतशं । एति गच्छतीत्येतशः । इण् गतौ । इणस्तशन्तशसुनौ । उ० ३. १४९. । इति तशन्प्रत्ययः । गुणः । कृत्व्ये । कर्तव्य इत्यस्य शब्दस्य वर्णविकारः पृषोदरादित्वात् ॥

स घा॒ राजा॒ सत्प॑तिः शूशुव॒ज्जनो॑ रा॒तह॑व्यः॒ प्रति॒ यः शास॒मिन्व॑ति ।
उ॒क्था वा॒ यो अ॑भिगृ॒णाति॒ राध॑सा॒ दानु॑रस्मा॒ उप॑रा पिन्वते दि॒वः ॥ ७ ॥
सः । घ॒ । राजा॑ । सत्ऽप॑तिः । शू॒शु॒व॒त् । जनः॑ । रा॒तऽह॑व्यः । प्रति॑ । यः । शासं॑ । इन्व॑ति । उ॒क्था । वा॒ । यः॑ । अ॒भि॒ऽगृ॒णाति॑ । राध॑सा । दानुः॑ । अ॒स्मै॒ । उप॑रा । पि॒न्व॒ते॒ । दि॒वः ॥ ७ ॥

स घ स खलु जनो जातो राजा राजमानः सत्पतिः सतां पालयिता यजमानः शूशुवत् । आत्मानं वर्धयति । य इंद्रं प्रति रातहव्यो दत्तहविष्कः सन् शासमिंद्रकर्तृकमनुशासनं यद्वा तस्य स्तुतिमिन्वति व्याप्नोति । उक्था वोक्थानि शस्त्राणि वा यः स्तोता राधसा [illegible] सहाभिगृणाति तस्याभिमुखीकरणाय शंसति । अस्मै स्तोत्रे दानुरभिमतफलप्रदातेंद्र उपरोपरान्मेघान् । उपर इति मेघनाम । स च यास्केनैवं निरुक्तः । उपर उपलो मेघो भवत्युपरमंतेऽस्मिन्नभ्राण्युपरता आप इति वा । नि० २. २१. । इति । तान्मेघान्दिवः सकाशात्पिन्वते । सेचयति । दोग्धीति यावत् ॥ घ । ऋचि तुनुघेत्यादिना दीर्घः । सत्पतिः । सतां पतिः सत्पतिः । पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वं । शूशुवत् । टुओश्वि गतिवृद्ध्योः । ण्यंताद्वर्तमाने लुङि चङ्यङादेशे संप्रसारणं संप्रसारणाश्रयं च बलीयः । म० ६. १. १७. २. । इत्यंतरंगमपि वृद्ध्यादिकं बाधित्वा णौ च संश्चङोः । पा० ६. १. ३१. । इति संप्रसारणं । संज्ञापूर्वकस्य विधेरनित्यत्वाद्वृद्ध्यभावे द्विर्वचनादि । उवङादेशः । रातहव्यः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । शासं । शासु अनुशिष्टावित्यस्माद्भावे घञि कर्षात्वत इत्यंतोदात्तत्वे

प्राप्ते व्यत्ययेनाद्युदात्तत्वं । वृषादिर्वा द्रष्टव्यः । स ह्याकृतिगण इत्युक्तं । यद्वा । शन्मु स्तुतावित्यस्माद्धञि व्यत्ययेन नलोपः । इन्वति । इवि व्याप्तौ । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः । अभिगृणाति । गॄ शब्दे । क्रैयादिकः । प्वादीनां ह्रस्व इति ह्रस्वत्वं । तिपः पित्त्वादनुदात्तत्वे विकरणस्वरः । पूर्ववन्निघाताभावः । उपरा । सुपां सुलुगिति शसः पूर्वसवर्णदीर्घत्वं । पिन्वते । पिवि मिवि णिवि सेचने । व्यत्ययेनात्मनेपदं ॥

असमं क्षत्रमसमा मनीषा प्र सोमपा अपसा संतु नेमे ।
ये त इंद्र ददुषो वर्धयंति महि क्षत्रं स्थविरं वृष्ण्यं च ॥ ८ ॥
असमं । क्षत्रं । असमा । मनीषा । प्र । सोमऽपाः । अपसा । संतु । नेमे ।
ये । ते । इंद्र । ददुषः । वर्धयंति । महि । क्षत्रं । स्थविरं । वृष्ण्यं । च ॥ ८ ॥

इंद्रस्य क्षत्रं बलमसमं । न केनचित्समं । सर्वाधिकमित्यर्थः । तथा मनीषा बुद्धिश्चासमा । न कस्यापि बुद्ध्या समाना । सर्वं वस्तु विषयीकरोतीत्यर्थः । नेम इति सर्वनामशब्द एतच्छब्दसमानार्थः । नेम एते सोमपाः सोमस्य पातारो यजमाना अपसा कर्मणा प्र संतु । प्रवृद्धा भवंतु । हे इंद्र ते तव ददुषो हविर्दत्तवंतो ये त्वदीयं महि महत् क्षत्रं बलं स्थविरं स्थूलं प्रवृद्धं वृष्ण्यं वृषत्वं पुंस्त्वं च वर्धयंति प्रवृद्धं कुर्वंति । यद्वा । ददुषो यजमानेभ्यो यागफलं दत्तवतस्तवेति योजनीयं ॥ नेमे । सर्वनामत्वाज्जसः शीभावे गुणः । पा० ७. १. १७. । त्वसमसिमनेमेत्यनुच्चानि । फि० ४. १०. । इति सर्वानुदात्तत्वे प्राप्ते व्यत्ययेनाद्युदात्तत्वं । ददुषः । ददातेर्लिटः क्वसुः । जसो व्यत्ययेन शसादेशः । संप्रसारणं संप्रसारणाश्रयं च बलीय इतीडागमात्पूर्वमेव संप्रसारणं । शासिवसिघसीनां चेति षत्वं । प्रत्ययस्वरः । महि । महेरौणादिक इन्प्रत्ययः । स्थविरं । अजिरशिशिरेत्यादिना । उ० १. ५४. । तिष्ठतेः किरच्प्रत्ययांतो निपातितः ॥

तुभ्येदेते बहुला अद्रिदुग्धाश्चमूषदश्चमसा इंद्रपानाः ।
व्यश्नुहि तर्पया काममेषामथा मनो वसुदेयाय कृष्व ॥ ९ ॥
तुभ्यं । इत् । एते । बहुलाः । अद्रिऽदुग्धाः । चमूऽसदः । चमसाः । इंद्रऽपानाः ।
वि । अश्नुहि । तर्पय । कामं । एषां । अथ । मनः । वसुऽदेयाय । कृष्व ॥ ९ ॥

हे इंद्र तुभ्येत् तुभ्यमेव चमसाः । चम्यंते भक्ष्यंत इति चमसाः सोमाः । एते सोमास्त्वदर्थं संपादिताः । कीदृशा इत्याह । बहुलाः प्रभूता अद्रिदुग्धा अद्रिभिर्ग्रावभिरभिषुताः चमूषदश्चमूषु चमसेष्ववस्थिता इंद्रपाना इंद्रस्य पानेन सुखकराः । अतस्त्वं ताम्व्यश्नुहि । व्याप्नुहि । व्याप्य चैषां त्वदीयानामिंद्रियाणां काममभिलाषं तैस्तर्पय । पूरयेति यावत् । अथानंतरं वसुदेयायास्मभ्यमभिमतधनप्रदानाय त्वदीयं मनः कृष्व । कुरुष्व ॥ तुभ्य । छांदसो मलोपः । अद्रिदुग्धाः । दुहेः कर्मणि निष्ठा । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । चमूषदः । चमु अदने । चमंत्यनेनेति चमूः । कृषिचमितनीत्यादिना । उ० १. ८२. । औणादिक ऊप्रत्ययः । चमूषु सीदंतीति चमूषदः । सत्सूद्विषेत्यादिना क्विप् । पूर्वपदात् । पा० ८. ३. १०६. । इति षत्वं । कृदुत्तरपदप्रकृतिस्वरत्वं । इंद्रपानाः । कर्मणि च येन संस्पर्शात् । पा० ३. ३. ११६. । इति पिबतेः कर्मणि ल्युट् । अश्नुहि । व्यत्ययेन परस्मैपदं । वसुदेयाय । डुदाञ् दाने । अचो यदिति भावे यत् । ईद्यति । पा० ६. ४. ६५. । इतीकारादेशः । गुणः । यतोऽनाव इत्याद्युदात्तत्वं । कृदुत्तरपदप्रकृतिस्वरत्वं । कृष्व । डुकृञ् करणे । बहुलं छंदसीति विकरणस्य लुक् ॥

अपामतिष्ठद्धरुणह्वरं तमोऽंतर्वृत्रस्य जठरेषु पर्वतः ।
अभीमिंद्रो नद्यो वव्रिणा हिता विश्वा अनुष्ठाः प्रवणेषु जिघ्नते ॥ १० ॥

अपां । अतिष्ठत् । धरुणऽह्वरं । तमः । अंतः । वृत्रस्यं । जठरेषु । पर्वतः ।
अभि । ई । इंद्रः । नद्यः । वव्रिणा । हिताः । विश्वाः । अनुऽस्थाः । प्रवणेषु । जिघ्नते ॥१०॥

अपां वृष्ट्युदकानां धरुणह्वरं । धरुणशब्दो धारावचनः । धारानिरोधकं तमोऽंधकारमतिष्ठत् । अयमेवार्थः स्पष्टीक्रियते । वृत्रस्य लोकत्रयावरितुरसुरस्य जठरेषूदरप्रदेशेष्वंतर्मध्ये पर्वतः पर्ववान्मेघोऽभूत् । अतस्तमोरूपेण वृत्रेण मेघस्यावृतत्वाद्वृष्ट्युदकमप्यावृतमित्युच्यते । ईमिमाः पूर्वोक्ता नद्यो नदीरपः । नदनान्नद्य इति व्युत्पत्त्या नदीशब्देनाप उच्यंते । वव्रिणावरकेण वृत्रेण हिताः पिहिता विश्वा व्यापिनीरनुष्ठा अनुक्रमेण तिष्ठंतीः । एवंविधा अप इंद्रः प्रवणेषु निम्नेषु भूप्रदेशेष्वभि जिघ्नते । अभिगमयति ॥ वव्रिणा । वृञ् वरणे इत्यस्मादादृगमहनजन इति किप्रत्ययः । लिङ्वद्भावाद्द्विर्भावादि । यणादेशः । प्रत्ययस्वरः । अनुष्ठाः । आतश्चोपसर्गे इति तिष्ठतेः कप्रत्ययः । उपसर्गात्सुनोतीति षत्वं । जिघ्नते । हंतेर्गत्यर्थाद्व्यत्ययेनात्मनेपदं । बहुलं छंदसीति शपः श्लुः । अर्तिपिपर्त्योश्च बहुलं छंदसीत्यभ्यासस्येत्वं ॥

स शेवृधमधि धा द्युम्नमस्मे महि क्षत्रं जनाषाळिंद्र तव्यं ।
रक्षा च नो मघोनः पाहि सूरीन्राये च नः स्वपत्या इषे धाः ॥११॥
सः । शेऽवृधं । अधि । धाः । द्युम्नं । अस्मे इति । महि । क्षत्रं । जनाषाट् । इंद्र । तव्यं ।
रक्षं । च । नः । मघोनः । पाहि । सूरीन् । राये । च । नः । सुऽअपत्यै । इषे । धाः ॥११॥

हे इंद्र स त्वमस्मे अस्मासु द्युम्नं यशोऽधि धाः । अधिनिधेहि । कीदृशमित्याह । शेवृधं । शं शमनं । रोगाणां शमने सति यद्वर्धते तादृशं । तथा महि महत् जनाषाट् शत्रुजनानामभिभवितृ तव्यं प्रवृद्धं क्षत्रं बलं चाधि धा इति शेषः । किंच हे इंद्र नोऽस्मान्मघोनो धनवतः कृत्वा रक्ष । पालय । सूरीन् विदुषो ऽन्यानपि पाहि । पालय । तथा राये धनाय च स्वपत्यै शोभनपुत्रयुक्तायैषेऽन्नाय च नोऽस्मान्धाः । धेहि । स्थापय ॥ धाः । छंदसि लुङ्लङ्लिट इति प्रार्थनायां लुङि गातिस्थेति सिचो लुक् । बहुलं छंदस्यमाङ्योगे ऽपीत्यडभावः । अस्मे । सुपां सुलुगित्यस्मच्छब्दात्सप्तम्याः शेआदेशः । जनाषाट् । जनान् सहत इति जनाषाट् । छंदसि सहः । पा० ३. २. ६३. । इति ण्विः । अत उपधाया इति वृद्धिः । सहेः साडः सः । पा० ८. ३. ५६. । इति षत्वं । अन्येषामपि दृश्यत इति पूर्वपददीर्घः । तव्यं । तवतिर्वृद्ध्यर्थः । सौत्रो धातुः । अचो यदिति यत् । गुणे धातोस्तन्निमित्तस्यैव । पा० ६. १. ८०. । इत्यवादेशः । यतोऽनाव इत्याद्युदात्तत्वं । रक्ष । रक्ष पालने । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । द्व्यचोऽतस्तिङ इति दीर्घत्वं । मघोनः । श्वयुवमघोनामतद्धित इति शसि संप्रसारणं । पाहि । [illegible]पो लुक् । हेरपित्त्वात्तस्यैव स्वरः शिष्यते । मघोन इत्यस्य वाक्यांतरगतत्वान्निघाताभावः । स्वपत्यै । शोभनान्यपत्यानि यस्याः सा तथोक्ता । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । जसादिषु च्छंदसि वावचनमिति याडापः । पा० ७. ३. ११३. । इति याडागमाभावे वृद्धिरेचि । पा० ६. १. ८८. । इति वृद्धिः ॥ ॥१८॥

दिवश्चिदस्येत्यष्टर्चं पंचमं सूक्तं सव्यस्यार्षमैंद्रं जागतं । तथा चानुक्रांतं । दिवश्चिदष्टौ जागतं हीति । हीत्यभिधानात्तुह्यादिपरिभाषयोत्तरे द्वे च सूक्ते जागते ॥ अतिरात्रे प्रथमे पर्याये मैत्रावरुणशस्त्र इदं सूक्तं । सूचितं च । दिवश्चिदस्येति पर्यासः स नो नव्येभिरिति च । आ० ६. ४. । इति ॥ विषुवति निष्केवल्येऽप्येतत्सूक्तं । सूचितं च । शंसेदेवोत्तराणि षड्दिवश्चिदस्य । आ० ८. ६. । इति ॥ समूळ्हस्य दशरात्रस्य द्वितीये छंदोमेऽपि निष्केवल्य एतत्सूचितं । त्वं महाँ इंद्र यो ह दिवश्चिदस्य त्वं महाँ इंद्र तुभ्यमिति निष्केवल्यं । आ० ८. ७. । इति ॥

दिवश्चिदस्य वरिमा वि पप्रथ इंद्रं न मह्ना पृथिवी चन प्रति ।
भीमस्तुविष्माञ्चर्षणिभ्य आतपः शिशीते वज्रं तेजसे न वंसगः ॥१॥

दिवः । चित् । अस्य । वरिमा । वि । पप्रथे । इंद्रं । न । मह्ना । पृथिवी । चन । प्रति ।
भीमः । तुविष्मान् । चर्षणिऽभ्यः । आऽतपः । शिशीते । वज्रं । तेजसे । न । वंसगः ॥१॥

अस्येंद्रस्य वरिमोरुत्वं प्राभवं दिवश्चित् द्युलोकादपि वि पप्रथे । विस्तीर्णं बभूव । पृथिवी चन पृथिव्यपि च मह्ना महिम्ना महत्त्वेनेंद्रं न प्रति भवति । भूमिरपींद्रस्य प्रतिनिधिर्न भवति । ततोऽपि स गरीयानित्यर्थः । भीमः शत्रूणां भयंकरस्तुविष्मान् प्रज्ञावान् बलवान्वा चर्षणिभ्यो मनुष्येभ्यः स्तोतृभ्यस्तेषामर्थाय शत्रूणामातप आ समंतात्तापकारी । एवंविधः स इंद्रो वज्रं वर्जनशीलमायुधं तेजसे तैक्ष्ण्याय शिशीते । तनूकरोति । तीक्ष्णीकरोति । तत्र दृष्टांतः । वंसगो न । वननीयगतिमान्वृषभो यथा स्वशृंगे युद्धार्थं तीक्ष्णीकरोति तद्वत् ॥ दिवः । ऊडिदमिति विभक्तिरुदात्तत्वं । वरिमा । उरुशब्दात् पृथ्वादिलक्षण इमनिच् । प्रियस्थिरेत्यादिनोरुशब्दस्य वरादेशः । पप्रथे । प्रथ प्रख्याने । मह्ना । महिम्ना । वर्णलोपश्छांदसः । यद्वा । महेरौणादिकः कनिप्रत्ययः । प्रत्ययस्वरेणांतोदात्तः । तृतीयैकवचनेऽल्लोपोऽन इत्यकारलोपः । उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्तत्वं । प्रति । प्रतिः प्रतिनिधिप्रतिदानयोरिति प्रतिनिधौ कर्मप्रवचनीयत्वं । कर्मप्रवचनीययुक्ते । पा० २. ३. ८. । इतींद्रशब्दाद्द्वितीया । प्रतिनिधिप्रतिदाने च यस्मात् । पा० २. ३. ११. । इति पंचमी तु छांदसत्वान्न भवति । भीमः । ञिभी भय इत्यस्माद्भियः षुग्वा । उ० १. १४७. । इति मक्प्रत्ययः । भीमो बिभ्यत्यस्मादिति यास्कः । नि० १. २०. । आतपः । तपतीति तपः । पचाद्यच् । थाथादिनोत्तरपदांतोदात्तत्वं । शिशीते । शो तनूकरणे । व्यत्ययेनात्मनेपदं । बहुलं छंदसीति विकरणस्य श्लुः । बहुलं छंदसीत्यभ्यासस्येत्वं । ई हल्यघोरितीत्वं । अनजादावपि लसार्वधातुके व्यत्ययेनाभ्यस्तस्याद्युदात्तत्वं । पा० ६. १. १८९. । वंसगः । वन षण संभक्तावित्यस्मात्कर्मण्यौणादिकः सप्रत्ययः । वंसं वननीयं गच्छतीति वंसगः । डोऽन्यत्रापि दृश्यते । पा० ३. २. ४८.* । इति गमेर्डप्रत्ययः । दिवोदासादित्वात्पूर्वपदाद्युदात्तत्वं ॥

सो अर्णवो न नद्यः समुद्रियः प्रति गृभ्णाति विश्रिता वरीमभिः ।
इंद्रः सोमस्य पीतये वृषायते सनात्स युध्म ओजसा पनस्यते ॥२॥
सः । अर्णवः । न । नद्यः । समुद्रियः । प्रति । गृभ्णाति । विऽश्रिताः । वरीमऽभिः ।
इंद्रः । सोमस्य । पीतये । वृषऽयते । सनात् । सः । युध्मः । ओजसा । पनस्यते ॥२॥

स इंद्रः समुद्रियः । समुद्रवंत्यस्मादाप इति समुद्रमंतरिक्षं । तत्र भवः समुद्रियः । एवंभूतः सन् वरीमभिः स्वकीयैः संवरणैर्यद्वोरुत्वैर्विश्रिता व्याप्ता नद्यो नदीः शब्दकारिणीर्वृत्रेणावृता अपोऽर्णवो न समुद्र इव प्रति गृभ्णाति । स्वीकरोत्य ववर्षेति भावः । स चेंद्रः सोमस्य पीतये पानाय वृषायते । वृष इवाचरति । हर्षयुक्तो वर्तत इत्यर्थः । तथा स इंद्रो युध्मो योद्धा सनाच्चिरादेव यद्वा सनातन ओजसा बलकृतेन वृत्रवधादिरूपेण कर्मणा पनस्यते । पनः स्तोत्रमिच्छति ॥ अर्णवः । अर्णसो लोपश्च । का० ५. २. १०९. ३. । इति मत्वर्थीयो वप्रत्ययः सलोपश्च । प्रत्ययस्वरः । नद्यः । नद अव्यक्ते शब्द इत्यस्मात्कर्तरि पचाद्यच् । चित इत्यंतोदात्तत्वं । नदट् । पा० ३. १. १३४.* । इति टित्त्वेन पाठात् टिड्ढाणञिति ङीप् । यस्येति लोप उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वं । जसि यणादेश उदात्तस्वरितयोर्यण इति स्वरितत्वं । द्वितीयार्थे प्रथमा । अनया व्युत्पत्त्या नद्य इत्याप उच्यंते । तथा च श्रूयते । अहावनदता हते तस्मादा नद्यो नाम स्थ ता वो नामानि सिंधवः । अथ० ३. १३. १. । इति । समुद्रियः । समुद्राभ्राद्घः । पा० ४. ४. ११८. । इति भवार्थे घप्रत्ययः । घस्येयादेशः । तस्योपदेशिवद्वचनादाद्युदात्तत्वं । गृभ्णाति । हृग्रहोर्भ इति भत्वं । विश्रिताः । श्रिञ् सेवायां । कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । वरीमभिः । वृञ् वरण इत्यस्मादौणादिक ईमनिन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । यद्वा । उरुशब्दादिमनिचि दीर्घ आद्युदात्तत्वं च छांदसत्वात् । वृषायते । कर्तुः क्यङ् सलोपश्च । पा० ३. १. ११. । इत्याचारार्थे क्यङ् । ङित्वा[illegible]त्मनेपदं । अकृत्सार्वधातुकयोरिति दीर्घः । युध्मः । युध संप्रहार इत्यस्मादिषियुधींधिदसिश्याधूसूभ्यो मगिति मक् । पनस्यते । पन स्तुतौ । पननं पनः । तदिच्छति पनस्यति । व्यत्ययेनात्मनेपदं ॥

त्वं तमिंद्र पर्वतं न भोजसे महो नृम्णस्य धर्मणामिरज्यसि ।
प्र वीर्येण देवतातिं चेकिते विश्वस्मा उग्रः कर्मणे पुरोहितः ॥ ३ ॥
त्वं । तं । इंद्र । पर्वतं । न । भोजसे । महः । नृम्णस्य । धर्मणां । इरज्यसि ।
प्र । वीर्येण । देवता । अति । चेकिते । विश्वस्मै । उग्रः । कर्मणे । पुरःऽहितः ॥ ३ ॥

हे इंद्र त्वं भोजसे भोजनाय पर्वतं पर्ववंतं मेघं नाकार्षीः । न हि हतो भुंक्ते । इंद्रो हि वर्षणार्थं मेघं वज्रेण हंति । तथा महो महतो नृम्णस्य धनस्य धर्मणां धारयितॄणां कुबेरादीनामिरज्यसि । ईशिषे । इरज्यतिरैश्वर्यकर्मा । स इंद्रो देवता वीर्येणात्यतिशयित इति प्र चेकिते । प्रकर्षेणास्माभिर्ज्ञातो बभूव । स चोग्र उद्गूर्ण इंद्रो विश्वस्मै सर्वस्मै वृत्रवधादिरूपाय कर्मणे देवैः पुरोहितः । पुरस्तादवस्थापितः ॥ धर्मणां । धृञ् धारणे । अन्येभ्योऽपि दृश्यंत इति कर्तरि मनिन् । नित्त्वादाद्युदात्तत्वं । इरज्यसि । इरज् ईर्ष्यायां । ऐश्वर्य इत्येके । कंड्वादित्वाद्यक् । वीर्येण । शूर वीर विक्रांतौ । चुरादिः । अचो यदिति यत् । णिलोपः । बहुव्रीहौ वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वविधानसामर्थ्याद्यतोऽनाव इत्याद्युदात्तत्वाभावे तित्स्वरित इति स्वरितत्वं । तस्मिन्हि सत्याद्युदात्तं द्व्यच्छंदसीत्यनेनैव सिद्धत्वात् पुनर्वीर्यग्रहणमनर्थकं स्यादित्युक्तं । देवता । देव एव देवता । देवात्तल् । पा॰ ५. ४. २७. । इति स्वार्थे तल्प्रत्ययः । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । चेकिते । कित ज्ञाने । अस्माद्यङंताच्चेकित्यतेः कर्मणि लिट्यतोलोपयलोपौ । पुरोहितः । पुरस्शब्दस्यासिप्रत्ययांतस्य तद्धितश्चासर्वविभक्तिरित्यव्ययत्वेन पुरोऽव्ययमिति गतिसंज्ञायां गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्वं ॥

स इद्वने नमस्युभिर्वचस्यते चारु जनेषु प्रब्रुवाण इंद्रियं ।
वृषा छंदुर्भवति हर्यतो वृषा क्षेमेण धेनां मघवा यदिन्वति ॥ ४ ॥
सः । इत् । वने । नमस्युऽभिः । वचस्यते । चारु । जनेषु । प्रऽब्रुवाणः । इंद्रियं ।
वृषा । छंदुः । भवति । हर्यतः । वृषा । क्षेमेण । धेनां । मघऽवा । यत् । इन्वति ॥ ४ ॥

स इत् स एवेंद्रो वनेऽरण्ये नमस्युभिर्नमसा स्तोत्रेण पूजयितृभिर्ऋषिभिर्वचस्यते । वच इच्छन् क्रियते । स्तूयत इत्यर्थः । यद्वा । वचः स्तोत्रमात्मन इच्छति । स चेंद्र आत्मीयेषु जनेष्विंद्रियं स्ववीर्यं प्रब्रुवाणः प्रकटयन् चारु वर्तते । किंच स वृषा कामानां वर्षको हर्यतः प्रेप्सावतो यियक्षतश्छंदुरुपच्छंदयिता भवति । यियक्षतां पुरुषाणां यागे रुचिमुत्पादयतीति भावः । वृषा हविषां वर्षयिता । हविष्प्रदातेत्यर्थः । मघवा धनवान् । एवंभूतो यजमानः क्षेमेणेंद्रकृतेन रक्षणेन युक्तः सन् यद्यदा धेनां स्तुतिलक्षणां वाचमिन्वति प्रेरयति । तदानीं छंदुर्भवतीति पूर्वेणान्वयः । यद्वा । मघवा वृषेंद्रः क्षेमेण क्षेमकरेण मनसा धेनां यजमानैः कृतां स्तुतिं यत्[illegible]ति व्याप्नोति । तस्मादिति योज्यं ॥ नमस्युभिः । नमोवरिव इति पूजार्थे क्यच् । क्याच्छंदसीत्युप्रत्ययः । वचस्यते । वच इच्छति वचस्यति । तं वचस्यंतं कुर्वंति मुनयो वचस्ययंति । वचस्ययतेः कर्मणि यक्यतोलोपयलोपौ । यद्वा । वचस्यतेर्व्यत्ययेनात्मनेपदं । प्रब्रुवाणः । ब्रूञ् व्यक्तायां वाचि । लटः शानच् । अदादित्वाच्छपो लुक् । शानचो ङित्त्वाद्गुणाभाव उवङ् । चित्स्वरेणांतोदात्तः । इंद्रियं । इंद्रस्य लिंगमिंद्रियं । इंद्रियमिंद्रलिंगमिंद्रदृष्टमिंद्रसृष्टमिंद्रजुष्टमिंद्रदत्तमिति वा । पा॰ ५. २. ९३. । इति लिंगादिष्वर्थेष्विंद्रशब्दात् घच्प्रत्ययो निपात्यते । अतोऽंतोदात्तत्वं । इन्वति । इवि व्याप्तौ । शपः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः ॥

स इन्महानि समिथानि मज्मना कृणोति युध्म ओजसा जनेभ्यः ।
अधा चन श्रद्दधति त्विषीमत इंद्राय वज्रं निघनिघ्नते वधं ॥ ५ ॥

सः। इत्। महानि। संऽइथानि। मज्मना। कृणोति। युध्मः। ओजसा। जनेभ्यः।
अध। चन। श्रत्। दधति। त्विषिऽमते। इंद्राय। वज्रं। निऽघनिघ्नते। वधं ॥ ५ ॥

स इत् स एवेंद्रो युध्मो योद्धा महानि समिथानि महतः संग्रामान्मज्मना सर्वस्य शोधकेनौजसा बलेन कृणोति। करोति। किमर्थं। जनेभ्यः स्तोतृजनार्थं। यदेंद्रो वधं हननसाधनं वज्रमायुधं मेघेषु निघनिघ्नते निहंति अधा चन अनंतरमेव त्विषीमते दीप्तिमत इंद्राय सर्वे जनाः श्रद्दधति। श्रदिति सत्यनाम। इंद्रो बलवानिति यदुच्यते तत्सत्यमेवेति सर्वे प्रतिपद्यंते ॥ महानि। महांतीत्यस्य तकारलोपश्छांदसः। यद्वा। मह्यंते पूज्यंत इति महानि प्रवृद्धानि। घञर्थे कविधानमिति कः। प्रत्ययस्वरः। समिथानि। इण् गतौ। संयंति संगच्छंतेऽस्मिन्वीरा इति समिथानि संग्रामाः। समीणः। उ० २. ११.। इति थक्प्रत्ययः। कित्त्वाद्गुणाभावः। थाथादिनोत्तरपदांतोदात्तत्वं। मज्मना। टुमस्जो शुद्धौ। मनिप्रत्ययः। झलां जश् झशि। पा० ८. ४. ५३.। इति सकारस्य जश्त्वं दकारः। ततश्चुत्वं जकारः। प्रत्ययस्वरः। अध। छांदसं धत्वं। निपातस्य चेति सांहितिको दीर्घः। त्विषीमते। त्विष दीप्तौ। इन्सर्वधातुभ्य इतीन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं। मतुपः पित्त्वादनुदात्तत्वे तदेव शिष्यते। अन्येषामपि दृश्यत इति सांहितिको दीर्घः। निघनिघ्नते। हंतेर्व्यत्ययेनात्मनेपदं बहुवचनं च। बहुलं छंदसीति शपः श्लुः। गमहनेत्यादिनोपधालोपः। अभ्यासस्य घत्वं निगागमश्च आगनीगंतीति च। पा० ७. ४. ६५.। इतीतिचशब्दः प्रकारार्थ इत्युक्तत्वाद्दाधर्त्यादावेतद्द्रष्टव्यं ॥ ॥ १९ ॥

स हि श्रवस्युः सदनानि कृत्रिमा क्ष्मया वृधान ओजसा विनाशयन्।
ज्योतींषि कृण्वन्नवृकाणि यज्यवेऽव सुक्रतुः सर्तवा अपः सृजत् ॥ ६ ॥

सः। हि। श्रवस्युः। सदनानि। कृत्रिमा। क्ष्मया। वृधानः। ओजसा। विऽनाशयन्।
ज्योतींषि। कृण्वन्। अवृकाणि। यज्यवे। अव। सुऽक्रतुः। सर्तवै। अपः। सृजत् ॥ ६ ॥

श्रवस्युरन्नं यशो वात्मन इच्छन् कृत्रिमा कृत्रिमाणि क्रियया निर्वृत्तानि सदनान्यसुरपुराण्योजसा बलेन विनाशयन् क्ष्मया भूम्या समानं वृधानो वर्धनशीलः। यद्वा। क्ष्मयेत्योजोविशेषणं। शत्रूणामभिभवित्रा बलेनेत्यर्थः। ज्योतींषि सूर्यादीनि वृत्रेणावृतान्यवृकाणि वृकेणावरकेण तेन रहितानि कृण्वन् कुर्वन् सुक्रतुः शोभनकर्मसहित एवंविधः स खल्विंद्रो यज्यवे यष्ट्रे यजमानाय तदर्थं सर्तवै सरणायापो वृ[illegible]न्यवासृजत्। वृष्टिं कृतवानित्यर्थः ॥ कृत्रिमा। डुकृञ् करणे। ड्वितः क्त्रिः। पा० ३. ३. ८८.। इति भावे क्त्रिप्रत्ययः। क्त्रेर्मम्नित्यं। पा० ४. ४. २०.। इति निर्वृत्तार्थे मप्। तस्य पित्त्वादनुदात्तत्वे क्त्रिप्रत्ययस्वर एव शिष्यते। शेश्छंदसि बहुलमिति शेर्लोपः। क्ष्मया। क्षमूष् सहने। क्षमते प्राणिजातकृतमुपद्रवमिति क्षमा। षिद्भिदादिभ्योऽङ्। पा० ३. ३. १०४.। इत्यङ्प्रत्ययः। ततष्टाप्। व्यत्ययेन धातोरुपधालोपः। छांदसं विभक्त्युदात्तत्वं। यद्वा। अयं धातुरभिभवार्थः। षह अभिभव इति सहनस्याभिभवार्थत्वात्। [illegible] मनिन्। व्यत्ययेन स्त्रीलिंगता। मनः। पा० ४. १. ११.। इति ङीपो निषेधे डाबुभाभ्यामन्यतरस्यां। पा० ४. १. १३.। इति डाप्। टिलोपः। वृधानः। ताच्छीलिकश्चानश्। बहुलं छंदसीति शपो लुक्। चित इत्यंतोदात्तत्वं। अवृकाणि। वृञ् वरणे। सृवृभूशुषिमुषिभ्यः कित्। उ० ३. ४१.। इति कन्प्रत्ययः। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। यज्यवे। यजिमनिशुंधिदसिजनिभ्यो युरिति युप्रत्ययः। वृषादेराकृतिगणत्वादाद्युदात्तत्वं। सुक्रतुः। बहुव्रीहौ क्रत्वादयश्चेत्युत्तरपदाद्युदात्तत्वं। सर्तवै। सृ गतौ। कृत्यार्थे तवैकेनिति भावे तवैप्रत्ययः। गुणः। अंतश्च तवै युगपत्। पा० ६. १. २००.। इत्याद्यंतयोर्युगपदुदात्तत्वं। अपः। [illegible] शस उदात्तत्वं। सृजत्। लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः ॥

दानाय मनः सोमपावन्नस्तु तेऽर्वाञ्चा हरी वंदनश्रुदा कृधि।
यमिष्ठासः सारथयो य इंद्र ते न त्वा केता आ दभ्नुवंति भूर्णयः ॥ ७ ॥

दानाय। मनः। सोमऽपावन्। अस्तु। ते। अर्वाचा। हरी इति। वंदनऽश्रुत्। आ। कृधि।
यमिष्ठासः। सारथयः। ये। इंद्र। ते। न। त्वा। केताः। आ। दभ्नुवंति। भूर्णयः ॥ ७॥

हे सोमपावन् सोमस्य पातरिंद्र ते त्वदीयं मनो दानायास्मदभिमतफलप्रदानायास्तु। भवतु। हे वंदनश्रुत् वंदनानां स्तुतीनां श्रोतः हरी त्वदीयावश्वावर्वाचास्मद्यज्ञाभिमुखावा कृधि। आभिमुख्येन कुरु। हे इंद्र ते तव स्वभूता ये सारथयः संति ते यमिष्ठासोऽतिशयेन यंतारः। अश्वनियमनकुशला इत्यर्थः। यस्मादेवं तस्मात्केताः प्रातिकूल्यज्ञातारो भूर्णयः स्वकीयायुधादीनां भर्तारः। यद्वा। भीतास्तीक्ष्णाः शत्रवस्त्वा त्वां ना दभ्नुवंति। न हिंसंति ॥ सोमपावन्। आतो मनिन्निति वनिप्। असंबुद्धाविति पर्युदासाद्दीर्घाभावः। अर्वाचा। सुपां सुलुगिति विभक्तेराकारः। वंदनश्रुत्। वदि अभिवादनस्तुत्योः। इदित्त्वान्नुम्। भावे ल्युट्। तेषां श्रोता। श्रु श्रवणे। क्विपि तुगागमः। यमिष्ठासः। यंतुः शब्दात्तुश्छंदसीतीष्ठन्प्रत्ययः। तुरिष्ठेमेयःस्विति तृलोपः। नित्त्वादाद्युदात्तत्वं। आज्जसेरसुगित्यसुक्। केताः। कित ज्ञाने। चिकेततीति प्रतिकूलं जानंतीति केताः। पचाद्यच्। वृषादेराकृतिगणत्वादाद्युदात्तत्वं। यद्वा। प्रतिकूलतया ज्ञायंत इति केताः। कर्मणि घञ्। ञित्त्वादाद्युदात्तत्वं। दभ्नुवंति। दन्भु दंभे। स्वादित्वाच्छ्नुः। तस्य ङित्त्वादनिदितामिति नलोपः। संयोगपूर्वत्वेन हुश्नुवोरिति यणादेशाभावेऽचि श्नुधात्वित्यादिनेत्युवङादेशः। भूर्णयः। भृञ् भरणे। घृणिः पृश्निरित्यादौ। उ॰ ४. ५२.। अत्र निप्रत्ययांतो निपात्यते। ऋत उत्वं दीर्घश्च। यद्वा। भृ भय इत्यस्मात्कृत्यल्युटो बहुलमिति कर्तरि क्तिन्युदोष्ठ्यपूर्वस्येत्युत्वं। हलि चेति दीर्घः। ऋकारल्वादिभ्यः क्तिन्निष्ठावद्भवति। पा॰ ८. २. ४४. १.। इति निष्ठावद्भावान्नत्वं। नित्त्वादाद्युदात्तत्वं ॥

अप्रक्षितं वसु बिभर्षि हस्तयोरषाळ्हं सहस्तन्वि श्रुतो दधे।
आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इंद्र भूरयः ॥ ८॥
अप्रऽक्षितं। वसु। बिभर्षि। हस्तयोः। अषाळ्हं। सहः। तन्वि। श्रुतः। दधे।
आऽवृतासः। अवतासः। न। कर्तृऽभिः। तनूषु। ते। क्रतवः। इंद्र। भूरयः ॥ ८॥

हे इंद्र त्वमप्रक्षितं प्रक्षयरहितं वसु धनं हस्तयोर्बिभर्षि। स्तोतृभ्यो दातुं धारयसि। तथा श्रुतः प्रख्यातो भवान् तन्व्यात्मीये शरीरेऽषाळ्हं शत्रुभिरनभिभूतं सहो बलं दधे। धारयति। त्वदीयास्तनवः कर्तृभिर्वृत्रादेरसुरस्य वधं कुर्वद्भिर्बलकृतैः कर्मभिरावृतास आवृताः। बलकृतानि सर्वाणि कर्माण्येतस्य शरीरमावृत्यावतिष्ठंते। तत्र दृष्टांतः। अवतासो न। अवत इति कूपनाम। यथा कूपा जलोद्धरणाय प्रवृत्तैः प्राणिभिराव्रियंते तद्वत्। यस्मादेवं तस्मात् हे इंद्र ते तव शरीरेषु क्रतवः कर्माणि भूरयो बहूनि विद्यंते ॥ अप्रक्षितं। क्षि क्षय इत्यस्माद्भावे निष्ठा। अण्यदर्थे। पा॰ ६. ४. ६०.। इति पर्युदासाद्दीर्घाभावः। अत एव क्षियो दीर्घादिति निष्ठानत्वाभावः। प्रकृष्टं क्षितं यस्य तत्प्रक्षितं। न प्रक्षितमप्रक्षितं। अव्ययपूर्वपदप्रकृतिस्वरत्वं। बिभर्षि। डुभृञ् धारणपोषणयोः। लटि सिपि शपः श्लुः। भृञामिदित्यभ्यासस्येत्वं। अषाळ्हं। षह अभिभव इत्यस्मान्निष्ठायां तकारादौ प्रत्यये तीषसह। पा॰ ७. २. ४८.। इतीटो विकल्पितत्वात् यस्य विभाषेतीट्प्रतिषेधः। ढत्वधत्वष्टुत्वढलोपेषु सहिवहोरोदवर्णस्येत्योत्वे प्राप्ते साढ्यै साढ्वा साढेति निगमे। पा॰ ६. ३. ११३.। इति निपातनादात्वं। यदुक्तं साढेति तृजंतमेतदिति तदुपलक्षणार्थं द्रष्टव्यं। तन्वि। जसादिषु च्छंदसि वावचनमिति अत्र घेः। पा॰ ७. ३. ११९.। इत्यत्वौत्वयोरभावे यणादेशः। उदात्तस्वरितयोर्यण इति विभक्तेः स्वरितत्वं। उदात्तयणो हल्पूर्वादित्युदात्तत्वं तु छांदसत्वान्न प्रवर्तते ॥ ॥ २० ॥

एष प्र पूर्वीरिति षडृचं षष्ठं सूक्तं सव्यस्यार्षमैंद्रं जागतमित्युक्तं। अनुक्रांतं च। एष प्र षळिति ॥ विषुवति निष्केवल्य एतत्सूक्तं शंसनीयं। विषुवान्दिवाकीर्त्य इति खंडे सूत्रितं। एष प्र पूर्वीर्वृषामदः प्र मंहिष्ठाय। आ॰ ८. ६.। इति ॥

एष प्र पूर्वीरव तस्य चम्रिषोऽत्यो न योषामुदयंस्त भुर्वणिः ।
दक्षं महे पाययते हिरण्ययं रथमावृत्या हरियोगमृभ्वसं ॥ १ ॥
एषः । प्र । पूर्वीः । अव । तस्य । चम्रिषः । अत्यः । न । योषां । उत् । अयंस्त । भुर्वणिः ।
दक्षं । महे । पाययते । हिरण्ययं । रथं । आऽवृत्य । हरिऽयोगं । ऋभ्वसं ॥ १ ॥

भुर्वणिरत्तैष इंद्रस्तस्य यजमानस्य पूर्वीः प्रभूताश्चम्रिषश्चमूषु चमसेष्ववस्थिताः सोमलक्षणा इषः प्रावोदयंस्त । प्रकर्षेण पानार्थमुद्धरति । तत्र दृष्टांतः । अत्यो न योषां । यथाश्वो वडवां क्रीडार्थमुपयच्छति । स चेंद्रो हिरण्ययं सुवर्णमयं हरियोगं हरिभ्यां युक्तमृभ्वसमुरु भासमानं रथमावृत्यावस्थाप्य महे महते वृत्रवधादिरूपाय कर्मणे दक्षं प्रवृद्धमात्मानं सोमं पाययते । पानं कारयति ॥ पूर्वीः । पॄ पालनपूरणयोः । पॄभिदिव्यधीत्यादिना । उ॰ १. २४. । कुप्रत्ययः । उदोष्ठ्यपूर्वस्येत्युत्वं । पुरुशब्दाद्वोतो गुणवचनादिति ङीष् । यणादेशः । हलि चेति दीर्घत्वं । प्रत्ययस्वरः । चम्रिषः । चमु अदन इत्यस्मात्कृषिचमितनिधनीत्यादिना । उ॰ १. ८२. । ऊप्रत्ययांतश्चमूशब्दः । तस्यां वर्तमाना इषश्चम्विषः । वकारस्य रेफश्छांदसः । कृदुत्तरपदप्रकृतिस्वरत्वं । अयंस्त । छांदसे वर्तमाने लुङि व्यत्ययेनात्मनेपदं । एकाच इतीट्प्रतिषेधः । भुर्वणिः । भुर्वतिरत्तिकर्मेति यास्कः । नि॰ ९. २३. । धातुपाठे तु भर्व हिंसायामिति पठ्यते । अस्मादौणादिकोऽनिप्रत्ययः । अकारस्योकारश्छांदसः । पाययते । पा पाने । शाच्छासाह्वाव्यावेपां युक् । पा॰ ७. ३. ३७. । इति हेतुमति णिचि युगागमः । णिचश्च । पा॰ १. ३. ७४. । इत्यात्मनेपदं । हिरण्ययं । ऋत्व्यवास्त्व्येत्यादिना हिरण्यशब्दादुत्तरस्य मयटो मशब्दलोपो निपात्यते । हरियोगं । हर्योर्योगो योजनं यस्मिन् । हरिशब्द इन्प्रत्ययांत आद्युदात्तः । स एव बहुव्रीहिस्वरेण शिष्यते । ऋभ्वसं । उरुभासमित्यस्य पृषोदरादित्वादृभ्वसादेशः ॥

तं गूर्तयो नेमन्निषः परीणसः समुद्रं न संचरणे सनिष्यवः ।
पतिं दक्षस्य विदथस्य नू सहो गिरिं न वेना अधि रोह तेजसा ॥ २ ॥
तं । गूर्तयः । नेमन्ऽइषः । परीणसः । समुद्रं । न । संऽचरणे । सनिष्यवः ।
पतिं । दक्षस्य । विदथस्य । नु । सहः । गिरिं । न । वेनाः । अधि । रोह । तेजसा ॥ २ ॥

गूर्तयः स्तोतारो नेमन्निषो नमस्कारपूर्वं गच्छंतः । यद्वा । नीतहविष्काः परीणसः परितो व्याप्नुवंतः । एवंगुणविशिष्टा यजमानास्तमिंद्रं स्तुतिभिरधिरोहंति । स्तुवत इत्यर्थः । तत्र दृष्टांतः । सनिष्यवः सनिं धनमात्मन इच्छंतो वणिजो धनार्थं संचरणे संचारे निमित्तभूते सति समुद्रं न । यथा नावा समुद्रमधिरोहंति एवं स्तोतारोऽपि स्वाभिमतधनलाभायेंद्रं स्तुवंतीति भावः । हे स्तोतस्त्वं च दक्षस्य प्रवृद्धस्य विदथस्य यज्ञस्य पतिं पालयितारं सहः सहस्वंतं बलवंतमिंद्रं तेजसा देवताप्रकाशकेन स्तोत्रेण नु क्षिप्रमधि रोह । स्तुहीति यावत् । तत्र दृष्टांतः । वेनाः कांताः स्त्रियो गिरिं न । यथा पर्वतं स्वाभिमतपुष्पोपचयार्थमधिरोहंति ॥ गूर्तयः । गॄ शब्दे । गृणंति स्तुवंतीति गूर्तयः । क्तिच्क्तौ चेति कर्तरि क्तिच् । बहुलं छंदसीत्युत्वं । हलि चेति दीर्घः । चित इत्यंतोदात्तत्वं । नेमन्निषः । णमु प्रह्वत्वे इत्यस्माच्छतरि व्यत्ययेनैत्वं । तकारस्य नकारादेशश्च । नमंत इष्यंतींद्रं प्राप्नुवंतीति नेमन्निषः । इषु गतावित्यस्मात् क्विब्चेति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं । यद्वा । णीञ् प्रापण इत्यस्मादर्तिस्तुसुस्वित्यादिना मन्प्रत्ययः । बहुलवचनान्नकारस्येत्संज्ञाभावः । नीताः प्रत्ता इषो येषां । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । परीणसः । णस कौटिल्ये इत्ययं धातुर्गत्यर्थो धातूनामनेकार्थत्वात् । परितो नसंति गच्छंतीति परिणसः । क्विब्चेति क्विप् । निपातस्य चेति पूर्वपदस्य दीर्घत्वं । उपसर्गादसमासेऽपीति णत्वं । व्यत्ययेनाद्युदात्तत्वं । यद्वा । नशतिर्गतिकर्मा । अस्मात्पूर्ववत् क्विपि शकारस्य सकारः । सनिष्यवः । षणु दान इत्यस्मादिन्सर्वधातुभ्य इति कर्मणीन्प्रत्ययः । सनिमात्मन इच्छंतीति क्यचि सर्वप्रातिपदिकेभ्यो लालसायामसुग्वक्तव्यः सुगागमोऽपि वक्तव्यः । का॰ ७. १. ५१. ३. । इति सुक् । क्याच्छंदसीत्युप्रत्ययः । नु । ऋचि तुनुघेति सांहितिको दीर्घः । सहः । अस्मादुत्तरस्य मतुपश्छांदसो लुक् ॥

स तुर्वणिर्महाँ अरेणु पौंस्ये गिरेर्भृष्टिर्न भ्राजते तुजा शवः ।
येन शुष्णं मायिनमायसो मदे दुध्र आभूषु रामयन्नि दामनि ॥ ३ ॥
सः । तुर्वणिः । महान् । अरेणु । पौंस्ये । गिरेः । भृष्टिः । न । भ्राजते । तुजा । शवः ।
येन । शुष्णं । मायिनं । आयसः । मदे । दुध्रः । आभूषु । रमयत् । नि । दामनि ॥ ३ ॥

स इंद्रस्तुर्वणिः शत्रूणां हिंसिता चिप्रकारी वा । तुर्वणिस्तूर्णवनिरिति यास्कः । नि० ६. १४. । तूर्णसंभजन इति तस्यार्थः । महान्प्रवृद्धश्च भवति । तस्येंद्रस्य शवो बलं पौंस्ये वीरैः पुरुषैः कर्तव्ये संग्रामेऽरेणवनवद्यं तुजा शत्रूणां हिंसकं सत् भ्राजते । दीप्यते । तत्र दृष्टांतः । गिरेः पर्वतस्य भृष्टिर्न शृंगमिव । तद्यथोन्नतं सद्दीप्यते तद्वत् । आयसोऽयोमयकवचयुक्तदेहो दुध्रो दुष्टानां शत्रूणां धर्तावस्थापयिता एवंभूत इंद्रो मदे सोमपानेन हर्षे सति येन बलेन शुष्णं सर्वस्य शोषकमसुरं मायिनं मायाविनमाभूषु कारागृहेषु दामनि बंधके निगडे नि रमयत् न्यवासयत् । तद्बलमिति पूर्वेणान्वयः ॥ तुर्वणिः । तुर्वी हिंसार्थः । अस्मादौणादिकोऽनिप्रत्ययः । अरेणु । रेणुवदाच्छादकत्वाद्रेणुशब्देनावद्यमुच्यते । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । तुजा । तुज हिंसायां । इगुपधलक्षणः कः । सुपां सुलुगिति विभक्तेराकारः । दुध्रः । दुष्टान् ध्रियतेऽवस्थापयतीति दुध्रः । धृञ् अवस्थान इत्यस्मादंतर्भावितण्यर्थान्मूलविभुजादित्वात्कप्रत्ययः । पा० ३. २. ५. २. । यणादेशः । रेफलोपश्छांदसः । रमयत् । अमंतत्वान्मित्त्वे मितां ह्रस्व इति ह्रस्वत्वं । छांदसः संहितायां दीर्घः ॥

देवी यदि तविषी त्वावृधोतय इंद्रं सिषक्त्युषसं न सूर्यः ।
यो धृष्णुना शवसा बाधते तम इयर्ति रेणुं बृहदर्हरिष्वणिः ॥ ४ ॥
देवी । यदि । तविषी । त्वाऽवृधा । ऊतये । इंद्रं । सिसक्ति । उषसं । न । सूर्यः ।
यः । धृष्णुना । शवसा । बाधते । तमः । इयर्ति । रेणुं । बृहत् । अर्हरिऽस्वनिः ॥ ४ ॥

य इंद्रो धृष्णुना धर्षकेण शवसा बलेन तमस्तमोरूपं वृत्रादिमसुरं बाधते हिनस्ति ऊतये रक्षणाय त्वावृधा त्वया स्तोत्रा वर्धितं तमिंद्रं देवी तविषी द्योतमानं बलं यदि यदा सिषक्ति संभवैति । सेवत इति यास्कः । सूर्य उषसं न यथोषोदेवतां सेवते । नित्यं तत्संबद्धो भवतीत्यर्थः । तदानीमर्हरिष्वणिः । गच्छंतो हरंतीत्यर्हरयः शत्रवः । तेषां व्यथोत्पादनेन स्वनयिता शब्दयितेंद्रो रेणुं रेषणं हिंसनं बृहत्प्रभूतमियर्ति । शत्रून् गमयति ॥ त्वावृधा । त्वया वर्धत इति त्वावृत् । क्विञ्चेति क्विप् । प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य त्वादेशः । छांदसं दकारस्यात्वं । सुपां सुलुगिति द्वितीयाया आकारः । सिषक्ति । षच समवाये । बहुलं छंदसीति शपः श्लुः । बहुलं छंदसीत्यभ्यासस्येत्वं । इयर्ति । ऋ सृ गतौ । जौहोत्यादिकः । अस्मादंतर्भावितण्यर्थाल्लट् । शपश्लुद्विर्भावोर[illegible]हलादिः शेषः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं । अभ्यासस्यासवर्णे । पा० ६. ४. ७८. । [illegible]ः । अनुदात्ते चेत्यभ्यासस्याद्युदात्तत्वं । पूर्वपदस्य वाक्यांतरगतत्वेन पदादपरत्वान्निघाताभावः । रेणुं । री गतिरेषणयोः । अस्मादौणादिको णुप्रत्ययः । अर्हरिष्वणिः । अर्तेरन्येभ्योऽपि दृश्यंत इति विच् । अरो गच्छंतश्चेमे हरयश्चेत्यर्हरयः । तेषां स्वनयिता । स्तमु स्वन ध्वन शब्दे । अस्मात्र्यंतादौणादिक इन्प्रत्ययः । णेरनिटीति णिलोपः । घटादित्वान्मित्त्वे मितां ह्रस्व इति ह्रस्वत्वं । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

वि यत्तिरो धरुणमच्युतं रजोऽतिष्ठिपो दिव आतासु बर्हणा ।
स्वर्मीळ्हे यन्मद इंद्र हर्ष्याहन्वृत्रं निरपामौब्जो अर्णवं ॥ ५ ॥
वि । यत् । तिरः । धरुणं । अच्युतं । रजः । अतिस्थिपः । दिवः । आतासु । बर्हणा ।
स्वःऽमीळ्हे । यत् । मदे । इंद्र । हर्ष्या । अहन् । वृत्रं । निः । अपां । औब्जः । अर्णवं ॥ ५ ॥

यद्यदा तिरो वृत्रेण तिरोहितं धरुणं सर्वस्य प्राणिजातस्य धारकमच्युतं विनाशरहितं रज उदकं दिवो द्युलोकादातासु। आता इति दिङ्नाम। आतासु विस्तृतासु दिक्षु हे इंद्र बर्हणा हंता त्वं व्यतिष्ठिपो विविधं स्थापयां चकृषे। तथा यद्यदा स्वर्मीळ्हे। मीळ्हमिति धननाम। स्वः सुष्ठु गंतव्यं मीळ्हं धनं यस्मिन् तस्मिन्संग्रामे मदे तव सोमपानेन हर्षे सति हर्ष्या हृष्टया शक्त्या वृत्रमावरकमसुरमहन् त्वमवधीः। तदानीमपां पूर्णमर्णवं मेघं निरौब्जः। वर्षणाभिमुखमधोमुखमकार्षीः। वृष्टेरावरकं वृत्रं हत्वा वृष्टिजलेन भूमिं न्यसैक्षीरिति तात्पर्यार्थः॥ अतिष्ठिपः। तिष्ठतेर्ण्यंताल्लुङि च्लेश्चङादेशः। णिलोपः। तिष्ठतेरित्। पा० ७. ४. ५.। इत्युपधाया इत्वं। चङि। पा० ६. १. ११.। इति द्विर्वचने शर्पूर्वाः खय इति थकारः शिष्यते। चर्त्वेन तकारः। अडागम उदात्तः। यद्वृत्तयोगादनिघातः। बर्हणा। सुपां सुलुगिति सोराकारः। स्वर्मीळ्हे। मिह सेचने। निष्ठा। हो ढः। पा० ८. २. ३१.। इति ढत्वं। झषस्तथोर्धोऽध इति तकारस्य धत्वं। तस्य ष्टुत्वे ढो ढे लोपः। पा० ८. ३. १३.। इति ढलोपः। ढ्रलोपे पूर्वस्य। पा० ६. ३. १११.। इति दीर्घत्वं। स्वरित्येतत् न्यङ्स्वरौ स्वरिताविति स्वर्यते। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते। अहन्। हंतेर्लङि मध्यमैकवचने हल्ङ्याब्भ्य इति सेर्लोपः। यद्वृत्तयोगादनिघातः। औब्जः। उब्ज आर्जवे। लङ्याडागमो वृद्धिश्च॥

त्वं दि॒वो ध॒रुणं॑ धिष॒ ओज॑सा पृथि॒व्या इं॑द्र॒ सद॑नेषु॒ माहि॑नः।
त्वं सु॒तस्य॒ मदे॑ अरिणा अ॒पो वि वृ॒त्रस्य॑ स॒मया॑ पा॒ष्यारु॑जः॥ ६॥
त्वं। दि॒वः। ध॒रुणं॑। धि॒षे॒। ओज॑सा। पृ॒थि॒व्याः। इं॒द्र॒। सद॑नेषु। माहि॑नः।
त्वं। सु॒तस्य॑। मदे॑। अ॒रि॒णाः॒। अ॒पः। वि। वृ॒त्रस्य॑। स॒मया॑। पा॒ष्या॑। अ॒रु॒जः॒॥ ६॥

हे इंद्र माहिनः प्रवृद्धस्त्वं दिवो द्युलोकात्पृथिव्याः सदनेषु प्रदेशेष्वोजसा बलेन धरुणं सर्वस्य जगतो धारकं वृष्टिजलं धिषे। दधिषे। स्थापयसि। यस्मात्त्वं सुतस्य सोमस्य पानेन मदे हर्षे सत्यपो जलान्यरिणा मेघान्निरगमयः वृत्रस्यावरकं वृत्रं च समया धृष्टया पाष्या शिलया यद्वा शक्त्या व्यरुजो विशेषेणाभांक्षीः॥ धिषे। दधातेश्छांदसो वर्तमाने लिट्। द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यं। का० ६. १. ८. १.। इति वचनाद्विर्वचनाभावः। क्रादिनियमादिडागम आतो लोप इटि चेत्याकारलोपः। माहिनः। महेरिनण् च। उ० २. ५६.। इति मह पूजायामित्यस्मादौणादिक इनणप्रत्ययः। अत उपधाया इति वृद्धिः। अरिणाः। री गतिरेषणयोः। क्रैयादिकः। लङि सिपि प्वादीनां ह्रस्व इति ह्रस्वत्वं। समया। षम ष्टम वैक्लव्ये। समतीति समा। पचाद्यच्। चित इत्यंतोदात्तत्वं। पाष्या। पिषॢ संचूर्णने इत्यस्मादौणादिक इन्प्रत्ययः। बहुलवचनादुपधाया आकारः। कृदिकारादक्तिनः। पा० ४. १. ४५.*। इति ङीष्। प्रत्ययस्वरेणांतोदात्तः। तृतीयैकवचने यणादेशे सत्युदात्तस्वरितयोर्यण इति स्वरितत्वं। अरुजः। रुजो भंगे। तौदादिकः। शस्य ङित्त्वाद्गुणाभावः॥ ॥ २१॥

प्र मंहिष्ठायेति षड़ृचं सप्तमं सूक्तं सव्यस्यार्षमैंद्रं जागतं। तथा चानुक्रांतं। प्र मंहिष्ठायेति॥ विषुवति निष्केवल्य इदं सूक्तं शंसनीयं। सूचितं च। प्र मंहिष्ठाय त्यमू ष्वितीह तार्क्ष्यमंततः। आ० ८. ६.। इति॥ उकथ्यसंस्थे क्रतौ तृतीयसवने ब्राह्मणाच्छंसिशस्त्रेऽप्येतत्सूक्तं। सूचितं च। सर्वाः ककुभः प्र मंहिष्ठायोद्प्रुतः। आ० ६. १.। इति॥

प्र मंहि॑ष्ठाय बृह॒ते बृ॒हद्र॑ये स॒त्यशु॑ष्माय त॒वसे॑ म॒तिं भ॑रे।
अ॒पामि॑व प्रव॒णे यस्य॑ दु॒र्धरं॒ राधो॑ वि॒श्वायु॒ शव॑से॒ अपा॑वृतं॥ १॥
प्र। मंहि॑ष्ठाय। बृ॒ह॒ते। बृ॒हत्ऽर॑ये। स॒त्यऽशु॑ष्माय। त॒वसे॑। म॒तिं। भ॒रे॒।
अ॒पांऽइ॑व। प्र॒व॒णे। यस्य॑। दुः॒ऽधरं॑। राधः॑। वि॒श्वऽआ॑यु। शव॑से। अप॑ऽवृतं॥ १॥

मंहिष्ठाय। मंहतिर्दानकर्मेति यास्कः। नि० १. ७.। दातृतमाय बृहते गुणैर्महते बृहद्रये महाधनाय सत्य-

शुष्मायाऽवितथबलाय तवस आकारतः प्रवृद्धाय एवंगुणविशिष्टायेंद्राय मतिं मननीयां स्तुतिं प्र भरे। प्रकर्षेण संपादयामि। यस्येंद्रस्य बलं दुर्धरमन्यैर्धर्तुमशक्यं। तत्र दृष्टांतः। प्रवणे निम्नप्रदेशेऽपामिव। यथा जलानां वेगः केनाप्यवस्थापयितुं न शक्यते तद्वत्। तथा राधो धनं विश्वायु सर्वेषु व्याप्तं शवसे स्तोतॄणां बलाय येनेंद्रेणापावृतं अपगतावरणं क्रियते। तस्येंद्रस्येति पूर्वेण संबंधः॥ मंहिष्ठाय। अतिशयेन मंहिता मंहिष्ठः। तुश्छंदसीतीष्ठन्प्रत्ययः। तुरिष्ठेमेयःस्विति तृलोपः। बृहते। बृहन्महतोरुपसंख्यानमिति विभक्तेरुदात्तत्वं। उत्तरयोर्बहुव्रीहिस्वरः। मतिं। मंत्रे वृषेत्यादिना क्तिन्नुदात्तत्वं। अनुदात्तोपदेशेत्यादिनानुनासिकलोपः। दुर्धरं। धृञ् धारणे। ईषद्दुःसुष्विति कर्मणि खल्। विश्वायु। विश्वस्मिन्सर्वस्मिन्नायु गमनं यस्य तद्विश्वायु। एतेश्छंदसीणः। उ० १. २.। इत्युण्प्रत्ययः। बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं। अपावृतं। कर्मणि निष्ठा। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं॥

अधं ते विश्वमनुं हासदिष्टय आपो निम्नेव सवना हविष्मतः।
यत्पर्वते न समशीत हर्यत इंद्रस्य वज्रः श्नथिता हिरण्ययः॥२॥
अधं। ते। विश्वं। अनुं। ह। असत्। इष्टये। आपः। निम्नाऽइव। सवना। हविष्मतः।
यत्। पर्वते। न। संऽअशीत। हर्यतः। इंद्रस्य। वज्रः। श्नथिता। हिरण्ययः॥२॥

अध हानंतरमेव हे इंद्र विश्वं सर्वमिदं जगत्ते तव संबंधिन इष्टये यागायान्वसत्। अन्वभवत्। यद्वा। इष्टये हविरादिभिस्तव प्राप्तय इति योज्यं। हविष्मतो यजमानस्य सवना सवनानि यज्ञजातानि निम्नेव निम्नानि भूस्थलान्याप इव त्वां संभजंत इति शेषः। हर्यतः शत्रुवधं प्रेप्सत इंद्रस्य। हर्यतिः प्रेप्साकर्मेति यास्कः। नि० ७. १७.। यद्वा। हर्यतः शोभनः। हिरण्ययो हिरण्मयः श्नथिता शत्रूणां हिंसनशीलो वज्रः पर्वते पर्ववति शिलोच्चये वृत्रे वा यद्यदा न समशीत संसुप्तो नाभवत्। किंतु जागरितः सन्नवधीदित्यर्थः। यदेंद्रेण प्रेरितो वज्रोऽप्रतिहतः सन्वृत्रमवधीत्तदाप्रभृत्येव तं यष्टुं सर्वे यजमानाः प्रावर्तिषतेति भावः॥ अध। छांदसं धत्वं। असत्। अस्तेर्लङि बहुलं छंदसीति शपो लुगभावः। इष्टये। यजतेर्भावे क्तिनि वचिस्वपीत्यादिना संप्रसारणं। व्रश्चादिना षत्वं। व्यत्ययेनांतोदात्तत्वं। यद्वा। इष गतावित्यस्माद्भावे क्तिनि मंत्रे वृषेषेति तस्योदात्तत्वं। निम्नेव सवना। शेश्छंदसीति शेर्लोपः। समशीत। शीङ् स्वप्ने। लङि संज्ञापूर्वकस्य विधेरनित्यत्वात् शीङः सार्वधातुके। पा० ७.४.२१.। इति गुणाभावः। हर्यतः। हर्य गतिकांत्योः। भृमृदृशीत्यादिनातच्प्रत्ययः। श्नथिता। श्नथ क्नथ क्रथ हिंसार्थाः। ताच्छीलिकस्तृन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं॥

अस्मै भीमाय नमसा समध्वर उषो न शुभ्र आ भरा पनीयसे।
यस्य धाम श्रवसे नामेंद्रियं ज्योतिरकारि हरितो नायसे॥३॥
अस्मै। भीमायं। नमसा। सं। अध्वरे। उषः। न। शुभ्रे। आ। भर। पनीयसे।
यस्यं। धामं। श्रवसे। नामं। इंद्रियं। ज्योतिः। अकारि। हरितः। न। अयसे॥३॥

हे उष उषोदेवते शुभ्रे शोभने त्वं भीमाय शत्रूणां भयंकराय पनीयसेऽतिशयेन स्तोतव्यायास्मा इंद्रायाध्वरे हिंसारहितेऽस्मिन्यागे। नेति संप्रत्यर्थे। तथा च यास्कः। अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोग इहेव निधेहि। नि० ७. ३१.। इति। संप्रतीदानीं नमसा नमो हविर्लक्षणमन्नं समा भर। सम्यक् संपादय। धाम सर्वस्य धारकं नाम स्तोतृषु नमनशीलं प्रसिद्धं वेंद्रियमिंद्रत्वस्य परमैश्वर्यस्य लिंगं यस्येंद्रस्यैवंविधं ज्योतिः श्रवसेऽन्नाय हविर्लक्षणान्नलाभार्थमयस इतस्ततो गमनायाकारि क्रियते हरितो न। यथाश्वान्सादिनः स्वाभिलषितदेशं गमयंति तद्वदिंद्रोऽपि स्वाभिमतहविर्लाभाय स्वकीयं तेजो गमयतीति भावः॥ उषः। पादादित्वान्निघाताभावः। शुभ्रे। शुभ दीप्तौ। स्फायितंचीत्यादिना रक्। भर। हृग्रहोर्भ इति भत्वं। द्व्यचोऽतस्तिङ इति दीर्घः। पनीयसे। पनतेः स्तुत्यर्थाद्बहुलवचनात्कर्मण्यसुन्। तस्मादातिशायनिक ईयसुनि टेरिति टिलोपः।

अकारि। छंदसि लुङ्लङ्लिट इति वर्तमाने कर्मणि लुङ्। यद्वृत्तयोगादनिघातः। अडागम उदात्तः। अयसे। अय गतावित्यस्मान्नावेऽसुन्॥

इमे तं इंद्र ते वयं पुरुष्टुत ये त्वारभ्य चरामसि प्रभूवसो।
नहि त्वदन्यो गिर्वणो गिरः सघत्क्षोणीरिव प्रति नो हर्य तद्वचः॥४॥
इमे। ते। इंद्र। ते। वयं। पुरुऽस्तुत। ये। त्वा। आऽरभ्य। चरामसि। प्रभुवसो इति प्रभुऽवसो।
नहि। त्वत्। अन्यः। गिर्वणः। गिरः। सघत्। क्षोणीःऽइव। प्रति। नः। हर्य। तत्। वचः॥४॥

हे इंद्र प्रभूवसो प्रभूतधन अत एव पुरुष्टुत पुरुभिर्बहुभिर्यजमानैः स्तुत ये च वयं त्वा त्वामारभ्याश्रयतयावलंब्य चरामसि चरामो यागे वर्तामहे त इमे वयं ते तव स्वभूताः। हे गिर्वणो गीर्भिर्वननीयेंद्र त्वदन्यस्त्वत्तोऽन्यः कश्चिदपि गिरः स्तुतीर्नहि सघत्। न हि प्राप्नोति। अतस्त्वं नोऽस्माकं तत्स्तुतिलक्षणं वचः प्रति हर्य। कामयस्व। क्षोणीरिव। यथा क्षोणी पृथिवी स्वकीयानि भूतजातानि कामयते॥ चरामसि। इदंतो मसिः। शपः पित्त्वादनुदात्तत्वे धातुस्वरः। यद्वृत्तयोगादनिघातः। सघत्। षघ हिंसायां। अत्र प्राप्त्यर्थो धातूनामनेकार्थत्वात्। लेट्यडागमः। बहुलं छंदसीति विकरणस्य लुक्। [illegible]भावः। क्षोणीरिव। हल्ङ्याब्भ्य इति सुलोपाभावश्छांदसः॥

भूरि त इंद्र वीर्यं१ तव स्मस्यस्य स्तोतुर्मघवन्काममा पृण।
अनु ते द्यौर्बृहती वीर्यं मम इयं च ते पृथिवी नेम ओजसे॥५॥
भूरि। ते। इंद्र। वीर्यं। तव। स्मसि। अस्य। स्तोतुः। मघऽवन्। कामं। आ। पृण।
अनु। ते। द्यौः। बृहती। वीर्यं। ममे। इयं। च। ते। पृथिवी। नेमे। ओजसे॥५॥

हे इंद्र ते तव वीर्यं सामर्थ्यं भूरि बहु। न केनाप्यवच्छेत्तुं शक्यते। तादृशस्य तव वयं स्मसि। स्वभूता भवामः। हे मघवन्नस्य स्तोतुः त्वां स्तुवतो यजमानस्य काममभिलाषमा पृण। आपूरय। बृहती द्यौर्महान् द्युलोकोऽपि ते तव वीर्यमनु ममे। अन्वमंस्त। इंद्रेण सहावस्थानादियं चेयमपि पृथिवी ते तवौजसे बलाय नेमे। प्रह्वीबभूव। त्वद्बलान्नीता सत्यध एव वर्तत इति भावः॥ स्मसि। अस भुवि। लटि श्नसोरल्लोप इत्यकारलोपः। इदंतो मसिः। पृण। पृण प्रीणने। अत्र प्रीतिहेतुतया पूरणं लक्ष्यते। तुदा[illegible]यः। तस्य ङित्त्वाद्गुणाभावः। ममे। माङ् माने शब्दे च। ङित्त्वादात्मनेपदं। लिट्यातो लोप इटि चेत्याकारलोपः। नेमे। णमु प्रह्वत्वे। लिट्यत एकहल्मध्य इत्येत्वाभ्यासलोपौ। तिङ्ङतिङ इति निघातः॥

त्वं तमिंद्र पर्वतं महामुरुं वज्रेण वज्रिन्पर्वशश्चकर्तिथ।
अवासृजो निवृताः सर्तवा अपः सत्रा विश्वं दधिषे केवलं सहः॥६॥
त्वं। तं। इंद्र। पर्वतं। महां। उरुं। वज्रेण। वज्रिन्। पर्वऽशः। चकर्तिथ।
अव। असृजः। निऽवृताः। सर्तवे। अपः। सत्रा। विश्वं। दधिषे। केवलं। सहः॥६॥

हे वज्रिन्वज्रवन्निंद्र त्वं तं प्रसिद्धं महामायामतो महांतमुरुं विस्तीर्णं पर्वतं पर्ववंतं मेघं वृत्रासुरं वा वज्रेणायुधेन पर्वशः पर्वणि पर्वणि चकर्तिथ। शकलीचकर्षे। तेन मेघेन निवृता आवृता अपः सर्तवे सरणाय गमनाय अवासृजः। अवाङ्मुखमस्राक्षीः। अतस्त्वमेव केवलं विश्वं व्याप्तं सहो बलं दधिषे। धारयसि। नान्यः कश्चिदिति। यदेतत्तत्सत्रा सत्यमेव। सत्रेति सत्यनाम। सत्रेत्थेति तन्नामसु पाठात्॥ महां। महांतं।

नकारतकारयोर्लोपश्छांदसः । चकर्तिथ । कृती छेदने । लिटि थल्यभ्यासस्योरदत्वहलादिःशेषचुत्वानि । सर्तवै । कृत्यार्थे तवैकेनिति भावे तवैप्रत्ययः । कृन्मेजंतः । पा० १. १. ३९. । इत्यव्ययत्वेऽव्ययादाप्सुप इति सुपो लुक् । अंतश्च तवै युगपदित्यंतयोर्युगपदुदात्तत्वं । दधिषे । लिटि क्रादिनियमादिट् ॥ ॥२२॥ ॥१०॥

एकादशानुवाके सप्त सूक्तानि । तत्र नू चिदिति नवर्चं प्रथमं सूक्तं गौतमस्य नोधस आर्षमाग्नेयं । आद्याः पंच जगत्यः । शिष्टाश्चतस्रस्त्रिष्टुभः । तथा चानुक्रांतं । नू चिन्नव नोधा गौतम आग्नेयं हि चतुस्त्रिष्टुबंतमिति । हीति वचनादुत्तरे च द्वे सूक्ते अग्निदेवताके ॥ अग्निष्टवषडहस्य पंचमेऽहन्याग्निमारुत इदं जातवेदस्यं निविद्धानं । तृतीयस्येति खंडे सूचितं । पृक्षस्य वृष्णो वृष्णे शर्धाय नू चित्सहोजा इत्याग्निमारुतं । आ० ७. ७. । इति ॥ प्रातरनुवाकस्याग्नेये क्रतावाश्विनशस्त्रे च जागते छंदस्यादितः पंचर्चः । सूचितं च । त्वमग्ने प्रथमो अंगिरा नू चित्सहोजा अमृतो नि तुंदत इति पंच । आ० ४. १३. । इति ॥

नू चित्सहोजा अमृतो नि तुंदते होता यद्दूतो अभवद्विवस्वतः ।
वि साधिष्ठेभिः पथिभी रजो मम आ देवताता हविषा विवासति ॥१॥
नु । चित् । सहःऽजाः । अमृतः । नि । तुंदते । होता । यत् । दूतः । अभवत् । विवस्वतः ।
वि । साधिष्ठेभिः । पथिऽभिः । रजः । ममे । आ । देवऽताता । हविषा । विवासति ॥१॥

सहोजाः सहसा बलेन जातः । अग्निर्हि बलेन मथ्यमानोऽरण्योः सकाशाज्जायते । अमृतो मरणरहितः । एवंभूतोऽग्निर्नू चित् क्षिप्रमेव नि तुंदते । नितरां व्यथयति । उत्पन्नमात्रस्याग्नेः स्प्रष्टुमशक्यत्वात् । यद्वा । निर्गच्छति । तुंदतिर्गत्यर्थः सौत्रो धातुः । यद्यदा होता देवानामाह्वाता होमनिष्पादको वायमग्निर्विवस्वतः परिचरतो यजमानस्य देवान्प्रति हविर्वहनाय दूतोऽभवत् हविर्वहने नियुक्तो भवति तदानीं साधिष्ठेभिः समीचीनैः पथिभिर्मार्गैर्गच्छन् रजोऽतरिक्षलोकं वि ममे । निर्ममे । पूर्वं विद्यमानमप्यंतरिक्षमसत्कल्पमभूत् । इदानीं तस्य तेजसा प्रकाशमानं सदुत्पन्नमिव दृश्यते । किंच । देवतातेति यज्ञनाम । देवताता देवताती यज्ञे हविषा चरुपुरोडाशादिलक्षणेन देवाना विवासति । परिचरति ॥ अमृतः । मृतं मरणमस्य नास्तीति बहुव्रीहौ नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं । तुंदते । तुद व्यथने । स्वरितेत्त्वादात्मनेपदं । नकारोपजनश्छांदसः । साधिष्ठेभिः । बाढशब्दादातिशायनिक इष्ठन्यंतिकबाढयोर्नेदसाधौ । पा० ५. ३. ६३. । इति साधादेशः । बहुलं छंदसीति भिस ऐसभावः । नित्त्वादाद्युदात्तत्वं । देवताता । सर्वदेवात्तातिल् । पा० ४. ४. १४२. । इति स्वार्थिकस्तातिल्प्रत्ययः । तेन च तत्संबंधी यज्ञो लक्ष्यते । यद्वा । देवताता आ विवासतीति योज्यं । सुपां सुलुगिति विभक्तेर्डादेशः । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं ॥

आ स्वमद्म युवमानो अजरस्तृष्वविष्यन्नतसेषु तिष्ठति ।
अत्यो न पृष्ठं प्रुषितस्य रोचते दिवो न सानु स्तनयन्नचिक्रदत् ॥२॥
आ । स्वं । अद्म । युवमानः । अजरः । तृषु । अविष्यन् । अतसेषु । तिष्ठति ।
अत्यः । न । पृष्ठं । प्रुषितस्य । रोचते । दिवः । न । सानु । स्तनयन् । अचिक्रदत् ॥२॥

अजरो जरारहितोऽयमग्निः स्वं स्वकीयमद्मादनीयं तृणगुल्मादिकं युवमानः स्वकीयज्वालया संमिश्रयन् तदनंतरं चाविष्यन् भक्षयंश्च । अविष्यन्नित्येतदत्तिकर्मसु पठितं । एवंभूतोऽग्निस्तृषु क्षिप्रमेवातसेषु प्रभूतेषु काष्ठेष्वा तिष्ठति । आरोहति । अत्रातसशब्दः काष्ठवाची । अतसं न शुष्कं । ऋग्वे० ४. ४. ४. । इति दर्शनात् । प्रुषितस्य दग्धुमितस्ततः प्रवृत्तस्याग्नेः पृष्ठमुपर्यवस्थितं ज्वालाजालमत्यो न रोचते । यथा सततगमनशीलोऽश्व इतस्ततो गच्छन् शोभते तद्वदग्नेर्ज्वालापि सर्वत्र गच्छंती शोभत इति भावः । तदानीं दिवो द्युलोकस्य संबंधि सानु समुच्छ्रितमभ्रं स्तनयन्न शब्दयन्निवाचिक्रदत् । गंभीरं शब्दमात्मानमचीकरत् ॥ युवमानः । यु मिश्रणे । व्यत्ययेनात्मनेपदं । शपि प्राप्ते व्यत्ययेन शः । तस्य बहुलं छंदसीति लुगभावः । अदुपदेशाल्लसार्वधातुकानु-

दात्तत्वे विकरणस्वर एव शिष्यते। अजरः। बहुव्रीहौ नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं। अचिक्रदत्। कदि क्रदि क्लदि आह्वाने रोदने च। अस्माण्ण्यंताल्लुङि चङ्ङ्यागमानुशासनस्यानित्यत्वान्नुमभावः। द्विर्भावहलादिशेषसन्वद्भावित्वानि ॥

क्राणा रुद्रेभिर्वसुभिः पुरोहितो होता निषत्तो रयिषाळमर्त्यः।
रथो न विक्ष्वृंजसान आयुषु व्यानुषग्वार्या देव ऋण्वति ॥ ३ ॥
क्राणा। रुद्रेभिः। वसुऽभिः। पुरःऽहितः। होता। निऽसत्तः। रयिषाट्। अमर्त्यः।
रथः। न। विक्षु। ऋंजसानः। आयुषु। वि। आनुषक्। वार्या। देवः। ऋण्वति ॥ ३ ॥

क्राणा हविर्वहनं कुर्वाणो रुद्रेभी रुद्रैर्वसुभिश्च पुरोहितः पुरस्कृतो होता देवानामाह्वाता निषत्तो हविःस्वीकरणाय देवयजने निषण्णो रयिषाट् रयीणां शत्रुधनानामभिभविताऽमर्त्यो मरणरहितः। एवंभूतो देवो द्योतमानोऽग्निर्विक्षु प्रजासु लौकिकजनेषु रथो न रथ इवायुषु यजमानलक्षणेषु मनुष्येष्वृंजसानः स्तूयमानो वार्या वार्याणि संभजनीयानि धनान्यानुषक् आनुषक्तं यथा भवति तथा व्यृण्वति। विशेषेण प्रापयति। यद्वा। वार्याणि वरणीयानि हवींषि स्वयं प्राप्नोति ॥ क्राणा। करोतेः शानचि बहुलं छंदसीति विकरणस्य लुक्। शानचो ङित्त्वाद्गुणाभावे यणादेशः। चित इत्यंतोदात्तत्वं। सुपां सुलुगिति सोः पूर्वसवर्णदीर्घत्वं। निषत्तः। षद्लृ विशरणगत्यवसादनेषु। अस्मात्कर्मणि निष्ठा। नसत्तनिषत्तेत्यादिना। पा० ८. २. ६१.। निष्ठानत्वाभावो निपातितः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। रयिषाट्। षह अभिभवे। छंदसि सहः। पा० ३. २. ६३.। इति ण्विः। सहेः साडः सः। पा० ८. ३. ५६.। इति षत्वं। ऋंजसानः। ऋंजतिः स्तुतिकर्मा। असानजित्यनुवृत्तावृंजिवृधिमंदिसहिभ्यः कित्। उ० २. ८७.। इति कर्मण्यसानच्प्रत्ययः। चित इत्यंतोदात्तत्वं। आयुषु। आयव इति मनुष्यनाम। इण् गतावित्यस्माच्छंदसीण इत्युण्प्रत्ययः। वृद्ध्यायादेशौ। वार्या। वृङ् संभक्तौ। ऋहलोर्ण्यत्। तित्स्वरितेति प्राप्ते ईडवंदवृशंसदुहां ण्यत इत्याद्युदात्तत्वं। शेश्छंदसीति शेर्लोपः। ऋण्वति। रिवि गतौ। व्यत्ययेन संप्रसारणं। इदित्त्वान्नुम्। कर्तरि शप् ॥

वि वातजूतो अतसेषु तिष्ठते वृथा जुहूभिः सृण्या तुविष्वणिः।
तृषु यदग्ने वनिनो वृषायसे कृष्णं त एम रुशदूर्मे अजर ॥ ४ ॥
वि। वातऽजूतः। अतसेषु। तिष्ठते। वृथा। जुहूभिः। सृण्या। तुविऽस्वनिः।
तृषु। यत्। अग्ने। वनिनः। वृषऽयसे। कृष्णं। ते। एम। रुशत्ऽऊर्मे। अजर ॥ ४ ॥

वातजूतो वायुना प्रेरितस्तुविष्वणिर्महास्वनः एवंभूतोऽग्निर्जुहूभिः स्वकीयाभिर्जिह्वाभिः सृण्या सरणशीलेन तेजःसमूहेन च युक्तः सन्। वृथेत्यनायासवचनः। वृथानायासेनैवातसेषून्नतेषु वृक्षेषु वि तिष्ठते। विशेषेण तिष्ठति। हे अग्ने यद्यदा वनिनो वनसंबंधान्वृक्षान्दग्धुं वृषायसे वृषवदाचरसि। दहसीत्यर्थः। हे रुशदूर्मे दीप्तज्वाल अजर जरारहिताग्ने ते तवैम गमनमार्गः कृष्णं कृष्णवर्णो भवति ॥ वातजूतः। जू इति सौत्रो धातुः। वातेन जूतो वातजूतः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। वि तिष्ठते। समवप्रविभ्यः स्थ इत्यात्मनेपदं। जुहूभिः। हु दानादनयोः। ह्वयत आस्विति जुहूः। हुवः श्लुवच्च। उ० २. ६०.। इति क्विप्। चकाराद्दीर्घः। श्लुवद्भावाद्द्विर्भावादि। धातोरित्यंतोदात्तत्वं। सृण्या। सृ गतौ। सरतीति सृणिः। सृवृषिभ्यां कित्। उ० ४. ४९.। इति निप्रत्ययः। एम। एत्यनेनेत्येम मार्गः। इण् गतावित्यस्मात्करणे औणादिको मनिन्। नित्त्वादाद्युदात्तत्वं ॥

तपुर्जंभो वन आ वातचोदितो यूथे न साह्वाँ अव वाति वंसगः।
अभिव्रजन्नक्षितं पाजसा रजः स्थातुश्चरथं भयते पतत्रिणः ॥ ५ ॥

तपुःऽजंभः । वने । आ । वातऽचोदितः । यूथे । न । सह्वान् । अव । वाति । वंसंगः ।
अभिऽव्रजन् । अक्षितं । पाजसा । रजः । स्थातुः । चरथं । भयते । पतत्रिणः ॥ ५ ॥

तपुर्जंभः । तपूंषि ज्वाला एव जंभा आयुधानि मुखानि वा यस्य स तथोक्तः । वातचोदितो वायुना प्रेरितः । एवंभूतोऽग्निर्यूथे ज्वालासमूहे सत्यक्षितमक्षीणं रज आर्द्रवृक्षांतर्गतमुदकं पाजसा तेजोबलेनाभिव्रजन् आभिमुख्येन गच्छन्वनेऽरण्ये साह्वान् सर्वमभिभवन् आ आभिमुख्येनाव वाति । व्याप्नोति । तत्र दृष्टांतः । वंसगो न । यथा वननीयगतिर्वृषो गोयूथे सर्वमभिभवन्वर्तते तद्वत् । यस्मादेवं तस्मात्पतत्रिणः पतनवतोऽग्नेः सकाशात्स्थातुः स्थावरं चरथं च जंगमं च भयते । बिभेति ॥ साह्वान् । दाश्वान्साह्वानिति क्वसुप्रत्ययांतो निपातितः । दीर्घादटि समानपाद इति संहितायां नकारस्य रुत्वं । आतोऽटि नित्यमिति सानुनासिक आकारः । यत्वलोपौ । ह्रस्वत्वं छांदसं । स्थातुः । कमिमनिजनीत्यादिना । उ० १. ७३. । विहितस्तुप्रत्ययो बहुलवचनात्तिष्ठतेरपि भवति । यद्वा । स्थातुरनंतरं चरथं भयते । प्रथमं स्थातृ स्थावरं बिभेति पश्चाच्चरथमित्यर्थः । चरथं । चर गत्यर्थः । अस्मादौणादिकोऽथप्रत्ययः । भयते । ञिभी भये । व्यत्ययेनात्मनेपदं । बहुलं छंदसीति श्लोरभावः । गुणावादेशौ ॥ ॥ २३ ॥

दधुष्ट्वा भृगवो मानुषेष्वा रयिं न चारुं सुहवं जनेभ्यः ।
होतारमग्ने अतिथिं वरेण्यं मित्रं न शेवं दिव्याय जन्मने ॥ ६ ॥
दधुः । त्वा । भृगवः । मानुषेषु । आ । रयिं । न । चारुं । सुऽहवं । जनेभ्यः ।
होतारं । अग्ने । अतिथिं । वरेण्यं । मित्रं । न । शेवं । दिव्याय । जन्मने ॥ ६ ॥

हे अग्ने त्वा त्वां मानुषेषु मनुष्येषु मध्ये भृगव एतत्संज्ञा महर्षयो दिव्याय जन्मने देवत्वप्राप्तये चारुं रयिं न शोभनं धनमिवा दधुः । आधानसंभारेषु मंत्रैः स्थापनेन समस्कुर्वन् । कीदृशं त्वां । जनेभ्यः सुहवं यजमानार्थमाह्वातुं सुशकं होतारं देवानामाह्वातारं अतिथिमतिथिवत्पूज्यं । यद्वा । देवयजनदेशेषु सततं गंतारं । वरेण्यं वरणीयं मित्रं न शेवं । यथा सखा सुखकरो भवति तद्वत् सुखकरमित्यर्थः ॥ दधुः । लिट्युस्यातो लोप इटि चेत्याकारलोपः । युष्मत्तत्ततक्षुःष्वंतःपादमिति विसर्जनीयस्य षत्वं । सुहवं । ह्वयतेरीषद्दुःसुष्विति खल् । बहुलं छंदसीति संप्रसारणं । परपूर्वत्वं । गुणावादेशौ । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

होतारं सप्त जुह्वो३ यजिष्ठं यं वाघतो वृणते अध्वरेषु ।
अग्निं विश्वेषामरतिं वसूनां सपर्यामि प्रयसा यामि रत्नं ॥ ७ ॥
होतारं । सप्त । जुह्वः । यजिष्ठं । यं । वाघतः । वृणते । अध्वरेषु ।
अग्निं । विश्वेषां । अरतिं । वसूनां । सपर्यामि । प्रयसा । यामि । रत्नं ॥ ७ ॥

सप्त सप्तसंख्याका जुह्वो होतारो वाघत ऋत्विजोऽध्वरेषु यागेषु यजिष्ठं यष्टृतमं होतारं देवानामाह्वातारं यमग्निं वृणते संभजंते विश्वेषां सर्वेषां वसूनामरतिं प्रापयितारं तमग्निं प्रयसा हविर्लक्षणेनान्नेन सपर्यामि । परिचरामि । रत्नं रमणीयं कर्मफलं च यामि । याचामि ॥ वृणते । वृङ् संभक्तौ । क्रैयादिकः । प्रत्ययस्वरः । अरतिं । ऋ गतिप्रापणयोः । अस्मादौणादिको वहिवस्यर्तिभ्यश्चित् । उ० ४. ६०. । इत्यतिप्रत्ययः । चित्त्वादंतोदात्तत्वं । सपर्यामि । सपर्यतिः परिचरणकर्मा । सपर पूजायामिति धातुः कंड्वादिः । यतो यक एव स्वरः शिष्यते । पादादित्वान्निघाताभावः । यामि । याचामीत्यस्य वर्णलोपश्छांदसः ॥

अच्छिद्रा सूनो सहसो नो अद्य स्तोतृभ्यो मित्रमहः शर्म यच्छ ।
अग्ने गृणंतमंहस उरुष्योर्जो नपात्पूर्भिरायसीभिः ॥ ८ ॥
अच्छिद्रा । सूनो इति । सहसः । नः । अद्य । स्तोतृऽभ्यः । मित्रऽमहः । शर्म । यच्छ ।
अग्ने । गृणंतं । अंहसः । उरुष्य । ऊर्जः । नपात् । पूःऽभिः । आयसीभिः ॥ ८ ॥

हे सहसः सूनो बलस्य पुत्र । बलेन हि मथ्यमानोऽग्निर्जायते । मित्रमहोऽनुकूलदीप्तिमन्नग्ने नोऽस्मभ्यं स्तोतृभ्योऽद्यास्मिन्कर्मण्यच्छिद्राच्छेद्यानि शर्म शर्माणि सुखानि यच्छ । देहि । किंच हे ऊर्जो नपात् अन्नस्य पुत्र । भुक्तेनान्नेन जठराग्नेः प्रवर्धनादग्नेरन्नपुत्रत्वं । एवंविधाग्ने गृणंतं त्वां स्तुवंतमायसीभिर्व्याप्तैः । यद्वा । अयोवद्दृढतरैः । पूर्भिः पालनैरंहसः पापादुरुष्य । रक्ष । उरुष्यती रक्षाकर्मा । नि० ५. २३. । इति यास्कः ॥ अच्छिद्रा । शेश्छंदसीति शेर्लोपः । सूनो सहसः । परमपि च्छंदसीति परस्य षष्ठ्यंतस्य पूर्वामंत्रितांगवद्भावे सति पदद्वयस[illegible]स्याष्टमिकं सर्वानुदात्तत्वं । शर्म । सुपां सुलुगिति विभक्तेर्लुक् । ऊर्जो नपात् । न पातयतीति नपात् । नभ्राण्नपादिति नञः प्रकृतिभावः । सुबामंत्रित इति षष्ठ्यंतस्य परांगवद्भावे सति पादादित्वादाष्टमिकनिघाताभावे षाष्ठिकमामंत्रिताद्युदात्तत्वं । पूर्भिः । पॄ पालनपूरण[illegible]णो भावे क्विप् । उत्वदीर्घौ । सावेकाच इति विभक्तेरुदात्तत्वं ॥

भवा वरूथं गृणते विभावो भवा मघवन्मघवद्भ्यः शर्म ।
उरुष्याग्ने अंहसो गृणंतं प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ९ ॥
भव । वरूथं । गृणते । विभाऽवः । भव । मघऽवन् । मघवत्ऽभ्यः । शर्म ।
उरुष्य । अग्ने । अंहसः । गृणंतं । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ ९ ॥

हे विभावो विशिष्टप्रकाशाग्ने गृणते त्वां स्तुवते यजमानाय । वरूथमिति गृहनाम । वरूथमनिष्टनिवारकं गृहं भव । हे मघवन् धनवन्नग्ने मघवद्भ्यो हविर्लक्षणधनयुक्तेभ्यो यजमानेभ्यः शर्म सुखं यथा भवति तथा भव । हे अग्ने गृणंतं स्तुवंतमंहसः पापकारिणः शत्रोरुरुष्य । रक्ष । धियावसुः कर्मणा बुद्ध्या वा प्राप्तधनोऽग्निः प्रातरिदानीमिव परेद्युरपि मक्षु शीघ्रं जगम्यात् । आगच्छतु ॥ वरूथं । वृञ् वरणे । जॄवृञ्भ्यामूथन् । उ० २. ६. । इत्यूथन्प्रत्ययः । [illegible]दात्तत्वं । गृणते । शतुरनुम इति विभक्तेरुदात्तत्वं । विभावः । विशिष्टा भा विभाः । आतो मनिन्निति विच् । तदस्यास्तीति मतुप् । मादुपधाया इति मतुपो वत्वं । मतुवसो रुरिति नकारस्य रुत्वं । मघवद्भ्यः । मघवा बहुलं । पा० ६. ४. १२८. । इति मघवन्शब्दस्य तृआदेशः । स च नानुबंधकृतमनेकाल्त्वं । परि० ६. म० १. १. ५५. । इति वचनात् अलोऽंत्यस्य । पा० १. १. ५२. । इत्यंत्यस्य भवात । मक्षु । ऋचि तुनुघमक्षिति दीर्घः । धियावसुः । बहुव्रीहौ पूर्व[illegible] । पूर्वपदस्य सावेकाच इति विभक्तिरुदात्ता । लुगभावश्छांदसः । जगम्यात् । गम्लृ सृप्लृ गतौ । लिङि बहुलं छंदसीति शपः श्लुः ॥ ॥ २४ ॥

वया इदिति सप्तर्चं द्वितीयं सूक्तं नोधस आर्षं त्रैष्टुभं । वैश्वानरगुणकोऽग्निर्देवता । तथा चानुक्रांतं । वया इत्सप्त वैश्वानरीयमिति ॥ सू[illegible] लिंगादवगंतव्यः ॥

वया इदग्ने अग्नयस्ते अन्ये त्वे विश्वे अमृता मादयंते ।
वैश्वानर नाभिरसि क्षितीनां स्थूणेव जनाँ उपमिद्ययंथ ॥ १ ॥
वयाः । इत् । अग्ने । अग्नयः । ते । अन्ये । त्वे इति । विश्वे । अमृताः । मादयंते ।
वैश्वानर । नाभिः । असि । क्षितीनां । स्थूणाऽइव । जनान् । उपऽमित् । ययंथ ॥ १ ॥

वयाः शाखा वेतेर्वातायना भवंतीति यास्कः । नि॰ १. ४. । हे अग्ने येऽन्येऽग्नय. संति ते सर्वेऽपि ते तव वया इत् शाखा एव । ततस्त्वत्तोऽन्ये न संतीति भावः । किंच त्वे त्वयि सति विश्वे सर्वेऽमृता अमरणधर्माणो देवा मादयंते । हृष्यंति । न हि त्वद्व्यतिरेकेण तैर्जीवितुं शक्यते । हे वैश्वानर विश्वेषां नराणां जाठररूपेण संबंधिन्नग्ने क्षितीनां मनुष्याणां नाभिः संनद्धासि । अवस्थापको भवसि । अतस्त्वमुपमिदु[illegible] सन् । यद्वा । उपमिदित्येतद्दृष्टांतविशेषणं । जनान्ययंथ । अधारयः । तत्र दृष्टांतः । उपमिदुपनिखाता स्थूणेव । वंशधारणार्थं निखातः स्तंभो यथा गृहोपरिस्थं वंशं धारयति तद्वत् ॥ वैश्वानर । विश्वे चेमे नरा विश्वानराः । नरे संज्ञायां । पा॰ ६. ३. १२९. । इति पूर्वपदस्य दीर्घः । तत्संबंधी वैश्वानरः । तस्येदमित्यण् । नाभिः । नह्यो भश्च । उ॰ ४. १२५. । इतीञ्प्रत्ययो भकारश्चांतादेशः । ञित्त्वादाद्युदात्तत्वं । असि । तासस्त्योर्लोप इति सलोपः । क्षितीनां । क्षि निवासगत्योः । अस्मात् क्तिच्क्तौ च संज्ञायामिति क्तिच् । अंतोदात्तात्क्षितिशब्दादुत्तरस्य नामो नामन्यतरस्यामित्युदात्तत्वं । उपमित् । डुमिञ् प्रक्षेपणे । अस्मादुपपूर्वात् [illegible] क्विप् । तुगागमः । ययंथ । यम उपरमे । लिटि थलि क्रादिनियमादिटि प्राप्त उपदेशेऽत्वतः । पा॰ ७. २. ६२. । इति प्रतिषेधः ॥

[illegible]ते मूर्धा दिवो नाभिरग्निः पृथिव्या इति वैकल्पिकोऽनुरूपस्तृचः । विषुवान्दिवाकीर्त्य इति खंडे सूत्रितं । मूर्धानं दिवो अरतिं पृथिव्या मूर्धा दिवो नाभिरग्निः पृथिव्या इति वा । आ॰ ८. ६. । इति ॥

मूर्धा दिवो नाभिरग्निः पृथिव्या अथाभवदरती रोदस्योः ।
तं त्वा देवासोऽजनयंत देवं वैश्वानर ज्योतिरिदार्याय ॥ २ ॥
मूर्धा । दिवः । नाभिः । अग्निः । पृथिव्याः । अथ । अभवत् । अरतिः । रोदस्योः ।
तं । त्वा । देवासः । अजनयंत । देवं । वैश्वानर । ज्योतिः । इत् । आर्याय ॥ २ ॥

अयमग्निर्दिवो द्युलोकस्य मूर्धा शिरोवत्प्रधानभूतो भवति । पृथिव्या भूमेश्च नाभिः संनाहकः । रक्षक इत्यर्थः । अथानंतरं रोदस्योर्द्यावापृथिव्योरयमरतिरधिपतिरभवत् । हे वैश्वानर तं तादृशं देवं दानादिगुणयुक्तं त्वा त्वां देवासः सर्वे देवा आर्याय विदुषे मनवे यजमानाय वा ज्योतिरित् ज्योतीरूपमेवाजनयंत । उदपादयन् ॥ मूर्तमस्मिन्धीयत इति मूर्धा । नि॰ ७. २७. । श्वन्नुक्षन्नित्यादौ निपातनाद्रूपसिद्धिः । पृथिव्याः । पृथिवीशब्दः षिद्गौरादिभ्यश्चेति ङीष्प्रत्ययांतोऽंतोदात्तः । अजनयंत । जनीजॄष्क्नसुरंजोऽमंताश्च । धा॰ १९. ६३-६७. । इति मित्त्वान्मितां ह्रस्व इति ह्रस्वत्वं ॥

आ सूर्ये न रश्मयो ध्रुवासो वैश्वानरे दधिरेऽग्ना वसूनि ।
या पर्वतेष्वोषधीष्वप्सु या मानुषेष्वसि तस्य राजा ॥ ३ ॥
आ । सूर्ये । न । रश्मयः । ध्रुवासः । वैश्वानरे । दधिरे । अग्ना । वसूनि ।
या । पर्वतेषु । ओषधीषु । अप्ऽसु । या । मानुषेषु । असि । तस्य । राजा ॥ ३ ॥

अग्ना वैश्वानरेऽग्नौ वसूनि धनान्या दधिरे । आहितानि स्थापितानि बभूवुः । तत्र दृष्टांतः । ध्रुवासो निश्चला रश्मयः किरणाः सूर्ये न यथा सूर्य आधीयंते तद्वत् । अतस्त्वं पर्वतादिषु यानि धनानि विद्यंते तस्य धनजातस्य राजासि । अधिपतिर्भवसि ॥ अग्ना । सुपां सुलुगिति विभक्तेर्डादेशः । या । शेश्छंदसि बहुलमिति शेर्लोपः । ओषधीषु । उष दाहे । ओषः पाकः । भावे घञ् । ञित्त्वादाद्युदात्तत्वं । ओष आसु धीयत इत्योषधयः । कर्मण्यधिकरणे चेति किप्रत्ययः । दासीभारादिषु प[illegible]त्वं । सप्तमीबहुवचन ओषधेश्च विभक्तावप्रथमायां । पा॰ ६. ३. १३२. । इति दीर्घः । अप्सु । ऊडिदमिति विभक्तेरुदात्तत्वं ॥

बृहती इव सूनवे रोदसी गिरो होता मनुष्योऽ न दक्षः ।
स्वर्वते सत्यशुष्माय पूर्वीर्वैश्वानराय नृतमाय यह्वीः ॥४॥
बृहती इवेति बृहतीऽइव । सूनवे । रोदसी इति । गिरः । होता । मनुष्यः । न । दक्षः ।
स्वःऽवते । सत्यऽशुष्माय । पूर्वीः । वैश्वानराय । नृऽतमाय । यह्वीः ॥४॥

रोदसी द्यावापृथिव्यौ सूनवे स्वपुत्राय वैश्वानराय बृहती इव प्रभूते इवाभूतां । वैश्वानरस्य द्यावापृथिव्योः पुत्रत्वं मंत्रांतरे स्पष्टमवगम्यते । उभा पितरा महयन्नजायताग्निर्द्यावापृथिवी भूरिरेतसा । ऋग्वे॰ ३.३.११. । इति । महतो वैश्वानरस्यावस्थानाय द्यावापृथिव्यौ विस्तृते जाते इत्यर्थः । किंचायं होता दक्षः समर्थः पूर्वीर्बहुविधा यह्वीर्महतीर्गिरः स्तुतीर्वैश्वानरायाग्नये प्रायुंक्तेति शेषः । कीदृशाय । स्वर्वते शोभनगमनयुक्ताय सत्यशुष्मायावितथबलाय नृतमायातिशयेन सर्वेषां नेत्रे । तत्र दृष्टांतः । मनुष्यो न । यथा मनुष्यो लौकिको वंदी दातारं प्रभुं बहुविधया स्तुत्या स्तौति तद्वत् ॥ मनुष्यः । मनोर्जातावञ्यतौ षुक्चेति जातौ गम्यमानायां मनुशब्दाद्यत् षुगागमश्च । तित्स्वरित इति स्वरितत्वं । यतोऽनाव इत्याद्युदात्तत्वं न भवति । तत्र हि द्व्यजित्यनुवर्तते । स्वर्वते । सुपूर्वादर्तेर्भावे विच् । ततो मतुप् । मादुपधाया इति वत्वं ॥

दिवश्चित्ते बृहतो जातवेदो वैश्वानर प्र रिरिचे महित्वं ।
राजा कृष्टीनामसि मानुषीणां युधा देवेभ्यो वरिवश्चकर्थ ॥५॥
दिवः । चित् । ते । बृहतः । जातऽवेदः । वैश्वानर । प्र । रिरिचे । महिऽत्वं ।
राजा । कृष्टीनां । असि । मानुषीणां । युधा । देवेभ्यः । वरिवः । चकर्थ ॥५॥

हे जातवेदो जातानां वेदितर्वैश्वानराग्ने ते तव महित्वं माहात्म्यं बृहतो महतो दिवश्चित् द्युलोकादपि प्र रिरिचे । प्रववृधे । किंच त्वं मानुषीणां मनोर्जातानां कृष्टीनां प्रजानां राजासि । अधिपतिर्भवसि । तथा वरिवोऽसुरैरपहृतं धनं युधा युद्धेन देवेभ्यश्चकर्थ । देवाधीनमकार्षीः ॥ वैश्वानर । पादादित्वादाष्टमिकनिघाताभावः । रिरिचे । रिचिर् विरेचने । अत्रोपसर्गवशात्तद्विपरीत आधिक्ये वर्तते । कृष्टीनां । नामन्यतरस्यामिति नाम उदात्तत्वं । मानुषीणां । मानुषशब्दो मनोर्जातावञ्यतौ षुक्चेत्यंतः । जातिलक्षणे ङीषि प्राप्ते तदपवादतया शार्ङ्गरवाद्यञ इति ङीन् । नित्त्वादाद्युदात्तत्वं । ङ्याश्छंदसि बहुलं । पा॰ ६.१.१७८. । इति बहुलवचनान्नाम उदात्तत्वाभावः । युधा । युध संप्रहार इत्यस्मात्संपदादिलक्षणो भावे क्विप् । वरिव इति धननाम । नाब्विषयस्येत्याद्युदात्तत्वं ॥

प्र नू महित्वं वृषभस्य वोचं यं पूरवो वृत्रहणं सचंते ।
वैश्वानरो दस्युमग्निर्जघन्वाँ अधूनोत्काष्ठा अव शंबरं भेत् ॥६॥
प्र । नु । महिऽत्वं । वृषभस्य । वोचं । यं । पूरवः । वृत्रऽहनं । सचंते ।
वैश्वानरः । दस्युं । अग्निः । जघन्वान् । अधूनोत् । काष्ठाः । अव । शंबरं । भेत् ॥६॥

अत्र वैश्वानरशब्देन मध्यमस्थानस्थो वैद्युतोऽग्निरभिधीयते । पूरव इति मनुष्यनाम । पूरवो मनुष्या वृत्रहणमावरकस्य मेघस्य हंतारं यं वैश्वानरं सचंते वर्षार्थिनः सेवंते तस्य वृषभस्यापां वर्षितुर्वैश्वानरस्य महित्वं माहात्म्यं नु क्षिप्रं प्र वोचं । प्रब्रवीमि । किं तदित्यत आह । अयं वैश्वानरोऽग्निर्दस्युं रसानां कर्मणां वोपक्षपयितारं राक्षसादिकं जघन्वान् । हतवान् । तथा काष्ठा अपो वृष्ट्युदकान्यधूनोत् । अधोमुखान्यपातयत् । शंबरं तं निरोधकारिणं मेघमव भेत् । अवाभिनत् ॥ वोचं । छंदसि लुङ्लङ्लिट इति वर्तमाने लुङ् । अस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङादेशः । वच उमित्युमागमः । गुणः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । जघन्वान् । हंतेर्लिटः

ह्रासुः। अभ्यासाच्चेत्यभ्यासादुत्तरस्य हकारस्य घत्वं। विभाषा गमहनेति [illegible]भावः। भेत्। भिदिर् विदारणे। लङि बहुलं छंदसीति विकरणस्य लुक्। हल्ङ्याब्भ्य इति तकारस्य लोपः। पूर्ववद्डभावः॥ अत्र निरुक्तं। प्र ब्रवीमि तन्महित्वं महाभाग्यं वृषभस्य वर्षितुरपां यं पूरवः पूरयितव्या मनुष्या वृत्रहणं मेघहनं सचंते सेवंते वर्षकामा दस्युर्दस्यतेः क्षयार्थादुपदस्यंत्यस्मिन्रसा [illegible] कर्माणि तमग्निर्वैश्वानरो घ्नन्नपः काष्ठा अभिनच्छंबरं मेघं। नि० ७. २३.। इति॥ अत्रेदं चिंतनीयं। कोऽसौ वैश्वानर इति। तत्र केचिदाहुः। मध्यमस्थानस्थो वायुरिंद्रो वा वैश्वानरः। तस्य हि वर्षकर्मणा संस्तव उपपद्यते। न त्वग्नेः पृथिवीस्थानत्वादिति। अन्ये त्वेवं मन्यंते। द्युस्थानः सूर्यो वैश्वानर इति। युक्तिं चाहुः। प्रातःसवनादीनि त्रीणि सवनानि [illegible]नि। तत्र तृतीयसवनं प्राप्तो यजमानः स्वर्गं प्राप्त इति पृथिव्याः प्रच्युतो भवेत्। तत्प्रच्युतिपरिहाराया[illegible]तेऽतिमे शस्त्रे होता स्वर्गाद्भूमिं प्रत्यवरोहति। कथमिति तदुच्यते। इतरशस्त्रवत्। स्तोत्रियतृचेन प्रारंभमुक्त्वा द्युस्थानसंबंधिना वैश्वानरीयेण सूक्तेन शस्त्रं प्रारभते। ततो मध्यमस्थानसंबंधिनं रुद्रं मरुतश्च प्रति तद्देवत्य[illegible]पाठेनावरोहति। तत्र पृथिवीस्थानमग्निं। यद्यत्र वैश्वानरः सूर्यो न स्यात् तदानीमवरोहो नोपपद्यते। तदेतन्मतद्वयमप्यनुपपन्नं। अयमेवाग्निर्वैश्वानरः। कुतः वैश्वानरशब्दनिर्वचनानुरोधात्। विश्वेषां नराणां लोकांतरं प्रति नेतृतया संबंधी वैश्वानरः। तथा चाम्नातं। वैश्वानर पुत्रः पित्रे लोककृज्जातवेदो वहेमं सुकृतां यत्र लोका इति। यद्वा। विश्वे सर्वे नरा एनमग्निं यस्मादौ प्रणयंतीति तत्संबंधाद्वैश्वानरः। यद्वा। विश्वान् सर्वान्प्राणिनः प्रसृतो गच्छत इति विश्वानरौ मध्यमोत्तमौ। ऋ गतावित्यस्मात्पचाद्यच्। लुगभावश्छांदसः। ताभ्या[illegible]त्पन्नत्वादयमग्निर्वैश्वानरः। वैद्युतोऽग्निर्हि मध्यमसकाशाज्जायते। [illegible]व पार्थिवोऽग्निः संपद्यते। आदित्यसकाशादपि घर्मकाले सूर्यकांतादिमणिष्वग्नेरुत्पत्तिः प्रसिद्धा। तस्मान्नामनिर्वचनानुरोधेना[illegible] इत्येतदुपपन्नं। अस्यापि वर्षकर्मणा स्तुतिः संभवति। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः। मनु० ३. ७६.। इति स्मरणात्। प्रत्यवरोहोऽपि न कर्तव्यः। तृतीयसवनस्य भक्तस्वर्गत्वात्। एतत्सर्वं यास्केन वैश्वानरः कस्मादित्यादिना बहुधा प्रपंचितं। नि० ७. २१.। अत्र यदनुक्तं तत्सर्वं तत्रैवानुसंधेयं॥

वैश्वानरो महिम्ना विश्वकृष्टिर्भरद्वाजेषु यजतो विभावा।
शातवनेये शतिनीभिरग्निः पुरुणीथे जरते सूनृतावान्॥ ७॥

वैश्वानरः। महिम्ना। विश्वऽकृष्टिः। भरत्ऽवाजेषु। यजतः। विभाऽवा।
शातऽवनेये। शतिनीभिः। अग्निः। पुरुऽनीथे। जरते। सूनृताऽवान्॥ ७॥

वैश्वानरोऽग्निर्महिम्ना महत्त्वेन विश्वकृष्टिः। कृष्टिरिति मनुष्यनाम। विश्वे सर्वे मनुष्या यस्य स्वभूताः स तथोक्तः। भरद्वाजेषु [illegible]ष्टिकरहविर्लक्षणान्नवत्सु यागेषु। यद्वा। एतत्संज्ञेष्वृषिषु। यजतो यष्टव्यो विभावा विशेषेण प्रकाशयिता [illegible]नृतावान्। सूनृता प्रिया सत्या वाक्। तद्युक्तः। एवंभूतोऽग्निः शातवनेये। शतसंख्याकान् क्रतूल्वनति संभजत इति शतवनिः। तस्य पुत्रः शातवनेयः। तस्मिन् पुरुणीथे बहूनां नेतर्येतत्सं[illegible]के राजनि च शतिनीभिर्बहुभिः स्तुतिभिर्जरते। स्तूयते॥ भरद्वाजेषु। भरंति पोषयंति भोक्तृनिति भरंतः। तादृशा वाजा येषु। बहुव्रीहौ [illegible]र्वपदप्रकृतिस्वरत्वे प्राप्ते महद्बृधादित्वात्पूर्वपदांतोदात्तत्वं। यजतः। भृमृदृ[illegible]यजिपर्वपच्यमितमिनमिहर्येभ्योऽतच्। उ० ३. ११०.। इति यजतेरतच्प्रत्ययः। विभावा। भा दीप्तौ। आतो मनिन्क्वनिप्वनिपश्चेति वनिप्। तस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। शातवनेये। इन्सर्वधातुभ्य इतीन्प्रत्ययः शतवनिशब्दः। इतश्चानिञः। पा० ४. १. १२२.। इति ढक्। कित इत्यंतोदात्तत्वं। शतिनीभिः। शतशब्दान्मत्वर्थीय इनिः। ऋन्नेभ्य इति ङीप्। पुरुणीथे। पूर्वपदात्संज्ञायामगः। पा० ८. ४. ३.। इति णत्वं। जरते। व्यत्ययेन कर्मणि कर्तृप्रत्ययः॥ ॥ २५॥

वह्निमिति पंचर्चं तृतीयं सूक्तं नोधस आर्षं त्रैष्टुभमाग्नेयं। अनुक्रांतं च। वह्निं पंचेति॥ प्रातर[illegible]वाकस्याग्नेये क्रतौ त्रैष्टुभे छंदसीदं सूक्तमाश्विने शस्त्रे च। तथा च सूत्रितं। वह्निं यशसमुप प्र जिन्वन्निति त्रीणि। आ० ४. १३.। इति॥

वह्निं यशसं विदथस्य केतुं सुप्राव्यं दूतं सद्योअर्थं ।
द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद्भृगवे मातरिश्वा ॥ १ ॥
वह्निं । यशसं । विदथस्य । केतुं । सुप्रऽअव्यं । दूतं । सद्यःऽअर्थं ।
द्विऽजन्मानं । रयिंऽइव । प्रऽशस्तं । रातिं । भरत् । भृगवे । मातरिश्वा ॥ १ ॥

वह्निं हविषां वोढारं यशसं यशस्विनं विदथस्य केतुं यज्ञस्य प्रकाशयितारं सुप्राव्यं सुष्ठु प्रकर्षेण रक्षितारं दूतं देवैर्हविर्वहनलक्षणे दूत्ये नियुक्तं सद्योअर्थं यदा हवींषि जुह्वति सद्यस्तदानीमेव हविर्भिः सह देवान्गंतारं । यद्वा । सद्योऽर्थमरणं गमनं यस्य तं । द्विजन्मानं [illegible]योर्वा जायमानं रयिमिव धनमिव प्रशस्तं प्रख्यातं । एवंभूतमग्निं मातरिश्वा वायुर्भृगव एतत्संज्ञकाय महर्षये रातिं भरत् । मित्रमहरत् । अकरोदित्यर्थः । रातिना संभाषेत्यत्र । आप॰ गृ॰ १२. १४. । रातिर्मित्रमिति कपर्दिनोक्तं । रातिः पुत्र इत्येके । एतदर्थप्रतिपादकं मंत्रांतरं च भवति । रातिं भृगूणामुशिजं कविक्रतुं । ऋग्वे॰ ३. २. ४. । इति ॥ वह्निं । वहिश्रियुश्रुग्लाहात्वरिभ्यो निदिति वहतेर्निप्रत्ययः । निद्वद्भावादाद्युदात्तत्वं । यशसं । यशस्शब्दादुत्तरस्य विनो लुक् । व्यत्ययेनांतोदात्तत्वं । यद्वा । अर्श[illegible] । स्वरः पूर्ववत् । सुप्राव्यं । सुष्ठु प्रकर्षेणावति रक्षतीति सुप्रावीः । उपसर्गद्वयोप[illegible]तृतंत्रिभ्य ईः । उ॰ ३. १५८. । इतीकारप्रत्ययः । वा छंदसीत्यमि पूर्व इत्यस्य विकल्पे सति यणादेशः । उदात्तस्वरितयोर्यण इति स्वरितत्वं । सद्योअर्थं । उषिकुषिगार्तिभ्यस्थन्नित्यर्तेः कर्तरि थन्प्रत्ययः । सद्य एवार्थो गंता सद्योअर्थः । अव्ययपूर्वपदप्रकृतिस्वरत्वं । यदि त्वव्यये नञ्कुनिपातानामिति वक्तव्यं । पा॰ ६. २. २. ३. । इत्यव्ययग्रहणेन त्रितयं गृह्येत तर्हि बहुव्रीहिस्वरो भविष्यति । [illegible] । सर्वनिर्म[illegible] । श्वसितिरत्र गतिकर्मा । मातर्यंतरिक्षे श्वसिति गच्छतीति मातरिश्वा । श्वन्नुक्षन्नित्यादौ निपातनाद्रूपसिद्धिः । यद्वा । मातर्यंतरिक्षे श्वाश्वसति गच्छतीति मातरिश्वा । अस गतिदीप्त्यादानेष्वित्य[illegible]को ड्वन्प्रत्ययः । एतच्च यास्केनोक्तं । नि॰ ७. २६. ॥

अस्य शासुरुभयासः सचंते हविष्मंत उशिजो ये च मर्ताः ।
दिवश्चित्पूर्वो न्यसादि होतापृच्छ्यो विश्पतिर्विक्षु वेधाः ॥ २ ॥
अस्य । शासुः । उभयासः । सचंते । हविष्मंतः । उशिजः । ये । च । मर्ताः ।
दिवः । चित् । पूर्वः । नि । असादि । होता । आऽपृच्छ्यः । विश्पतिः । विक्षु । वेधाः ॥ २ ॥

शासुः शासितुरस्याग्नेरुभयास उभयेऽपि देवा मनुष्याश्च । यद्वा । स्तुतिभिः स्तोतारो यष्टृभिर्यजमानाश्चेममग्निं शासितारं सचंते । सेवंते । उशिजः कामयमाना देवा हविष्मंतो हविषा युक्ता ये च मर्ता मरणधर्माणो यजमानाः । यद्वा । उशिज इति मेधाविनाम । उशिजो मेधाविनः स्तोतारो हविष्मंतो हविर्युक्ता मर्ता यजमानाः । किंचायं होता [illegible]ऽग्निर्दिवश्चित् आदित्यादपि पूर्वं उषःसु वर्तमानो भूत्वाग्निहोत्रहोमार्थं विक्षु यजमानेषु न्यसादि । अध्वर्युणाग्न्यायतने न्यधायि । स्थाप्यते । कीदृशो होता । आपृच्छ्य आप्रष्टव्यः । पूज्य इत्यर्थः । विश्पतिर्विशां प्रजानां पालयिता वेधा विधाताभिमतफलस्य कर्ता ॥ शासुः । शासु अनुशिष्टौ । तृंतृचौ शंसिशसिशासिक्षदादिभ्यः संज्ञायां चानिटौ । उ॰ २. ९४. । इति तृन् । इडागमाभावश्च । षष्ठ्येकवचने तकारलोपश्छांदसः । नित्त्वादाद्युदात्तत्वं । उशिजः । वशः कित् । उ॰ २. ७१. । इति वष्टेरिजिप्रत्ययः । ग्रहिज्यादिना संप्रसारणं । मर्ताः । मृङ् प्राणत्यागे । असिहसिमृग्रिण्वामीत्यादिना तन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । आपृच्छ्यः । प्रछ ज्ञीप्सायां । आङ्पूर्वादस्माच्छंदसि निष्टर्क्येत्यादौ । पा॰ ३. १. १२३. । क्यप्प्रत्ययो निपातितः । ग्रहिज्यादिना संप्रसारणं । क्यपः [illegible] धातुस्वरः शिष्यते । विश्पतिः । पत्यावैश्वर्य इति पूर्व[illegible] प्राप्ते परादिश्छंदसि बहुलमित्युत्तरपदा[illegible]दात्तत्वं ॥

तं नव्यसी हृद आ जायमानमस्मत्सुकीर्तिर्मधुजिह्वमश्याः ।
यमृत्विजो वृजने मानुषासः प्रयस्वंत आयवो जीजनंत ॥ ३ ॥
तं । नव्यसी । हृदः । आ । जायमानं । अस्मत् । सुऽकीर्तिः । मधुऽजिह्वं । अश्याः ।
यं । ऋत्विजः । वृजने । मानुषासः । प्रयस्वंतः । आयवः । जीजनंत ॥ ३ ॥

नव्यसी नवतरा सुकीर्तिः सुष्ठु कीर्तयित्र्यस्मत् अस्माकं स्तुतिर्हृदो हृदयाख्यात्प्राणाज्जायमानमुत्पद्यमानं। अग्निर्हि वायोरुत्पद्यते वायुश्च प्राण एव । यः प्राणः स वायुरित्याम्नानात् । मधुजिह्वं मादयितृज्वालं । एवंभूतं [illegible] । आभिमुख्येन व्याप्नोतु । वृजने संग्रामे प्राप्ते सत्यायवो मनुष्या यमग्निं जीजनंत यज्ञार्थमुदपादयन् । कीदृशा मनुष्याः । ऋत्विज ऋतौ काले यष्टारो मानुषासो मनोः पुत्राः प्रयस्वंतो हविर्लक्षणान्नोपेताः ॥ नव्यसी । नवीयसीत्यत्रेकारलोपश्छांदसः । हृदः । अत्र हृदयशब्देन तत्स्थः प्राणो लक्ष्यते । पद्दन्नित्यादिना हृदयशब्दस्य हृदादेशः । जायमानं । जनी प्रादुर्भावे । ज्ञाजनोर्जेति जादेशः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वं । अस्मत् । सुपां सुलुगिति विभक्तेर्लुक् । अश्याः । अशू व्याप्तौ । लिङि बहुलं छंदसीति विकरणस्य लुक् । व्यत्ययेन परस्मैपदमध्यमौ । जीजनंत । जनी प्रादुर्भावे । ण्यंतात्लुङि [illegible] । द्विर्भावहलादिशेषः । सन्वल्लघुनीत्यत्वदीर्घौ । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे चङ एव स्वरे प्राप्ते व्यत्ययेनाभ्यस्तस्याद्युदात्तत्वं ॥

उशिक्पावको वसुर्मानुषेषु वरेण्यो होताधायि विक्षु ।
दमूना गृहपतिर्दम आँ अग्निर्भुवद्रयिपती रयीणां ॥ ४ ॥
उशिक् । पावकः । वसुः । मानुषेषु । वरेण्यः । होता । अधायि । विक्षु ।
दमूनाः । गृहऽपतिः । दमे । आ । अग्निः । भुवत् । रयिऽपतिः । रयीणां ॥ ४ ॥

उशिक् कामयमानः पावकः शोधको वसुर्निवासयिता वरेण्यो वरणशीलः एवंभूतो होताग्निर्विक्षु यज्ञगृहं प्रविष्टेषु मानुषेषु यजमानेष्वधायि । स्थाप्यते । स [illegible] रक्षसां दमनकरेण मनसा युक्तो गृहपतिर्गृहाणां पालयिता च सन्दमे यज्ञगृहे रयिपतिर्धनाधिपतिरा भुवत् । आ समंताद्भवति । न केवलमेकस्य रयेरपि तु सर्वेषामित्या[illegible]यीणामिति । यद्वा । रयीणां मध्य उत्कृष्टं यद्धनं तस्य पतिरित्यर्थः ॥ अधायि । छंदसि लुङ्लङ्लिट इति वर्तमाने कर्मणि लुङि च्लेश्चिणादेश आतो युक् चिण्कृतोरिति युगागमः । दमयति राक्षसादिकमिति दमूनाः । दम उपशमे । दमेरूनसिः । उ० ४. २३४. । इत्यौणादिक ऊनसिप्रत्ययः । यास्कस्त्वाह । दमूना दममना वा दानमना वा दांतमना वापि वा दम इति गृहनाम तन्मनाः स्यात् । नि० ४. ४. । इति । दम आँ अग्निः । आङोऽनुना[illegible] सानुनासिकत्वं । [illegible] । भुवत् । लिघ्यडागमः । इतश्च लोप इतीकारलोपः । रयिपतिः । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । रयीणां । नामन्यतरस्यामिति नाम उदात्तत्वं ॥

तं त्वा वयं पतिमग्ने रयीणां प्र शंसामो मतिभिर्गोतमासः ।
आशुं न वाजंभरं मर्जयंतः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ५ ॥
तं । त्वा । वयं । पतिं । अग्ने । रयीणां । प्र । शंसामः । मतिऽभिः । गोतमासः ।
आशुं । न । वाजंऽभरं । मर्जयंतः । प्रातः । मक्षु । धियाऽवसुः । ज[illegible] ॥ ५ ॥

गोतमासो गोतमगोत्रोत्पन्ना वयं । नोधसः स्तोतुरेकत्वेऽप्यात्मनि पूजार्थं बहुवचनं । हे अग्ने रयीणां

धनानां पतिं रचितारं तादृशं त्वा त्वां मतिभिर्मननीयैः स्तोत्रैः प्र शंसामः। प्रकर्षेण स्तुमः। किं कुर्वंतः। वाजंभरं वाजस्य हविर्लक्षणान्नस्य भर्तारं त्वां मर्जयंतो मार्जयंतः। तत्र दृष्टांतः। आशुं न अश्वमिव। यथाश्वमारोक्ष्यंतः पुरुषास्तस्य वहनप्रदेशं हस्तैर्निमृजंति तद्वद्यमप्यग्नेर्हविर्वहनप्रदेशं निमृजंत इत्यर्थः। तथा चाग्निसंमार्जनप्रकरणे वाजसनेयिभिराम्नातं। अथ मध्ये तूष्णीमेव त्रिः संमार्ष्टि यथा युक्त्वा प्रेहि वहेति प्रवेदेवमेतदग्निं युक्त्वोपचिपति प्रेहि देवेभ्यो हव्यं वहेति : धियावसुः कर्मणा बुद्ध्या वा प्राप्तधनः सोऽग्निः प्रातः श्वोभूतस्याह्नः प्रातःकाले मक्षु शीघ्रं जगम्यात्। आगच्छतु ॥ मतिभिः। मन ज्ञान इत्यस्मात्कर्मणि क्तिन्। मंत्रे वृषेषेत्यादिना तस्योदात्तत्वं। वाजंभरं। अग्नेरेषा वैदिकी संज्ञा। संज्ञायां भृतॄवृजीति। पा॰ ३. २. ४६.। वाजशब्दे कर्मण्युपपदे खच्प्रत्ययः। अरुर्द्विषदजंतस्य मुम्। पा॰ ६. ३. ६७.। इति मुमागमः। चित इत्यंतोदात्तत्वं। मर्जयंतः। संज्ञापूर्वकस्य विधे[illegible] मृजेर्वृद्धिः। पा॰ ७. २. ११४.। इति वृद्ध्यभावः। अदुपदेशात्सार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते। जगम्यात्। लिङि बहुलं छंदसीति शपः श्लुः ॥ ॥ २६ ॥

अस्मा इदु प्र तवस इति षोडशर्चं चतुर्थं सूक्तं। नोधस आर्षमैंद्रं त्रैष्टुभं। अनुक्रांतं च। अस्मा इदु षोळशेति। अस्य सूक्तस्य नोधा द्रष्टेत्येतद्ब्राह्मणे समाम्नायते। अस्मा इदु प्र तवसे तुरायेति नोधास्य एते प्रातःसवने। ऐ॰ ब्रा॰ ६. १८.। इति ॥ [illegible]सु चतुर्[illegible]ष्वहःसु माध्यंदिने सवने ब्राह्मणाच्छंसिशस्त्रे ब्रह्मणा ते ब्रह्मयुजेत्यस्या आरंभणीयाया ऊर्ध्वमहीनसूक्तसंज्ञमेतच्छंसनीयं। तथा च सूचितं। अस्मा इदु प्र तवसे शासद्[illegible]हीनसूक्ते। आ॰ ७. ४.। इति। ब्राह्मणं च भवति। त एते प्रातःसवने षळह[illegible] माध्यंदिनेऽहीनसूक्तानि शंसंतीति ॥

अस्मा इदु प्र तवसे तुराय प्रयो न हर्मि स्तोमं माहिनाय।
ऋचीषमायाध्रिगव ओहमिंद्राय ब्रह्माणि राततमा ॥ १ ॥
अस्मै। इत्। ऊं इति। प्र। तवसे। तुराय। प्रयः। न। हर्मि। स्तोमं। माहिनाय।
ऋचीषमाय। अध्रिऽगवे। ओहं। इंद्राय। ब्रह्माणि। रातऽतमा ॥ १ ॥

इदु इति निपातद्वयं पादपूरणे। अथापि पादपूरणाः कमीमिद्विति यास्कः। यद्वा। अवधारणार्थे। तवसे प्रवृद्धाय तुराय त्वरमाणाय। यद्वा। तुर्विणे शत्रूणां हिंसित्रे। माहिनाय गुणैर्महते ऋचीषमाय ऋचा समाय। यादृशी स्तुतिः क्रियते तत्समायेत्यर्थः। अध्रिगवेऽधृतगमनाय। अप्रतिहत[illegible]र्थः। तथा च यास्कः। अधृतगमनकर्मवानिंद्रोऽप्यध्रिगुरुच्यते। नि॰ ५. ११.। इति। एवंभूतायास्मा इंद्राय स्तोमं स्तोत्रं प्र हर्मि। प्रहरामि। करोमीत्यर्थः। तत्र दृष्टांतः। प्रयो न। प्रय इत्यन्ननाम। यथा बुभुक्षिताय पुरुषाय कश्चिदन्नं प्रहरति। कीदृशं स्तोमं। ओहं वहनीयं प्रापणीयं वा। अत्यंतोत्कृष्टमित्यर्थः। न केवलं स्तोमं किंतर्हि ब्रह्माणि हविर्लक्षणान्यन्नानि। कीदृशानि। राततमा पूर्वैर्यजमा[illegible] दत्तानि। इंद्रं स्तुत्या हविषा च परिचरेमेति भावः ॥ तुराय। तुर त्वरणे। इगुपधलक्षणः कः। यद्वा। तुर्वी हिंसार्थः। तुर्वतीति तुरः। पचाद्यचि छांदसो वलोपः। हर्मि। हृञ् हरणे। बहुलं छंदसीति शपो लुक्। माहिनाय। मह पूजायां[illegible] च। उ॰ २. ५६.। इतीनण्प्रत्ययः। उपधावृद्धिश्च। ऋचीषमाय। ऋचीषम ऋचा समः। नि॰ ६. २३.। इति यास्कः। तृतीया तत्कृतेति समासः। पा॰ २. १. ३०.। तृतीया[illegible] प्रकृतिस्वरत्वं। पृषोदरादित्वादीकारोपजनः। सुषामादित्वात् षत्वं। केचिदाहुः। ऋच स्तुतावित्यस्मादि[illegible]पधात्किदितीप्रत्ययः। कृदिकारादक्तिन इति ङीष्। ऋची स्तुतिः। तया समः। पूर्ववत् षत्वं। अस्मिन्पक्षे तृतीयापूर्वपदप्रकृतिस्वरत्वे सति ङीष उदात्तत्वेन भवितव्यं। तथा च न दृश्यते। तस्मात्स्वरश्चिंतनीयः। यद्वा। दिवोदासादि द्रष्टव्यः। अध्रिगवे। अधृतोऽन्येनानिवारितो गौर्गमनं यस्य स तथोक्तः। गोस्त्रियोरुपसर्जनस्य। पा॰ १. २. ४८.। इति ह्रस्वत्वं। पृषोदरादित्वादधृतशब्दस्याध्रिभावः। ओहं। वहतेः कर्मणि घञि छांदसं संप्रसारणं। यद्वा। तुहिर् दुहिर् उहिर् अर्दन [illegible] इतेः पूर्ववद्घञ्। राततमा। रा दान इत्यस्मान्निष्ठांत[illegible]प्। शेश्छंदसीति शेर्लोपः ॥

अस्मा इदु प्रयइव प्र यंसि भराम्यांगूषं बाधे सुवृक्ति ।
इंद्राय हृदा मनसा मनीषा प्रत्नाय पत्ये धियो मर्जयंत ॥२॥

अस्मै । इत् । ऊं इति । प्रयःऽइव । प्र । यंसि । भरामि । आंगूषं । बाधे । सुऽवृक्ति ।
इंद्राय । हृदा । मनसा । मनीषा । प्रत्नाय । पत्ये । धियः । मर्जयंत ॥२॥

अस्मा इदु अस्मा एवेंद्राय । प्रय इत्यन्ननाम । प्रय इवान्नमिव प्र यंसि । प्रयच्छामि । तदेव स्पष्टीक्रियते । बाधे शत्रूणां बाधनाय समर्थं सुवृक्ति सुष्ठावर्जकमांगूषं स्तोत्ररूपमाघोषं भरामि । संपादयामि । अन्येऽपि स्तोतारः प्रत्नाय पुराणाय पत्ये स्वामिन इंद्राय हृदा हृदयेन मनसा तदंतर्वर्तिनांतःकरणेन मनीषा मनीषया तज्जन्येन ज्ञानेन च धियः स्तुतीः कर्माणि वा मर्जयंत । मार्जयंति । संस्कुर्वंति ॥ प्र यंसि । यम उपरम इत्यस्माल्लटि पुरुषव्यत्ययः । बहुलं छंदसीति शपो लुक् । आंगूषं । आंगूषः स्तोम आघोषः । नि॰ ५. ११. । इति यास्कः । आङ्पूर्वाद्घुषेर्घञि पृषोदरादित्वाद्घो इत्यस्य गूआदेशः । आङो ङकारस्य लोपाभावश्च । थाथादिनोत्तरपदांतोदात्तत्वं । बाधे । बाधृ विलोडन इत्यस्मात्कृत्यार्थे तवैकेनिति भावे केन्प्रत्ययः । एजंतत्वादव्ययत्वेन सुपो लुक् । मनीषा । सुपां सुलुगिति तृतीयाया डादेशः । पत्ये । पतिः समास एव । पा॰ १. ४. ८. । इति घिसंज्ञायाः समासविषयत्वात् घेर्ङितीति गुणाभावे यणादेशः ॥

अस्मा इदु त्यमुपमं स्वर्षां भराम्यांगूषमास्येन ।
मंहिष्ठमच्छोक्तिभिर्मतीनां सुवृक्तिभिः सूरिं वावृधध्यै ॥३॥

अस्मै । इत् । ऊं इति । त्यं । उपऽमं । स्वःऽसां । भरामि । आंगूषं । आस्येन ।
मंहिष्ठं । अच्छोक्तिऽभिः । मतीनां । सुवृक्तिऽभिः । सूरिं । ववृधध्यै ॥३॥

अस्मा इदु अस्मा एवेंद्राय त्यं तं प्रसिद्धमुपममुपमानहेतुभूतं स्वर्षां सुष्ठरणीयस्य धनस्य दातारं सूरिं विपश्चितमिंद्रं ववृधध्यै वर्धयितुं सुवृक्तिभिः सुष्ठावर्जकैः । समर्थैरित्यर्थः । मतीनां स्तुतीनां संबंधिभिरच्छोक्तिभिः स्वच्छैर्वचोभिर्मंहिष्ठमतिशयेन प्रवृद्धमेवंलक्षणमांगूषमाघोषमास्येन मुखेन भरामि । करोमीत्यर्थः ॥ उपमं । उपमीयतेऽनेनेत्युपमः । घञर्थे कविधानमिति करणे कप्रत्ययः । आतो लोप इटि चेत्याकारलोपः । स्वर्षां । सुपूर्वादर्तेर्विजंतः स्वर्शब्दः । षणु दाने । जनसनखनक्रमगमो विट् । विड्वनोरनुनासिकस्यादित्यात्वं । सनोतेरनः । पा॰ ८. ३. १०८. । इति षत्वं । भरामि । पादादित्वान्निघाताभावः । अच्छोक्तिभिः । अच्छा उक्तयो येषां । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । मतीनां । नामन्यतरस्यामिति नाम उदात्तत्वं । ववृधध्यै । वृधु वृद्धावित्यस्मादंतर्भावितण्यर्थात्तुमर्थे सेसेनिति कध्यैप्रत्ययः । कित्त्वाद्गुणाभावः । द्विर्भावश्छांदसः । यद्वा । यङ्लुगंतादस्मिन्प्रत्यय आगमानुशासनस्यानित्यत्वाद्रीगाद्यभावः । अन्येषामपि दृश्यत इति सांहितिकमभ्यासस्य दीर्घत्वं । प्रत्ययाद्युदात्तत्वं ॥

अस्मा इदु स्तोमं सं हिनोमि रथं न तष्टेव तत्सिनाय ।
गिरश्च गिर्वाहसे सुवृक्तींद्राय विश्वमिन्वं मेधिराय ॥४॥

अस्मै । इत् । ऊं इति । स्तोमं । सं । हिनोमि । रथं । न । तष्टाऽइव । तत्ऽसिनाय ।
गिरः । च । गिर्वाहसे । सुऽवृक्ति । इंद्राय । विश्वंऽइन्वं । मेधिराय ॥४॥

अस्मा एवेंद्राय स्तोमं शस्त्ररूपं स्तोत्रं सं हिनोमि । प्रेरयामि । तत्र दृष्टांतः । तत्सिनाय । सिनमित्यन्ननाम । सिनमन्नं भवति सिनाति भूतानीति यास्कः । नि॰ ५. ५. । तेन रथेन सिनमन्नं यस्य स तथोक्तः । तस्मै रथस्वामिने तष्टेव तष्टा तक्षको रथनिर्माता रथं न । यथा रथं प्रेरयति तद्वत् । इवेत्येतत्पादपूरणं । तथा

गिर्वाहसे गीर्भिः स्तुतिभिरुह्यमानायेंद्राय गिरश्च शस्त्रसंबंधिनीः केवला ऋचश्च सुवृक्ति शोभनमावर्जनं यथा भवति तथा प्रेरयामि । तथा मेधिराय मेधाविन इंद्राय विश्वमिन्वं विश्वव्यापकं विश्वैर्व्याप्तं सर्वोत्कृष्टं हविश्च सं हिनोमीत्यनुषंगः ॥ हिनोमि । हि गतौ वृद्धौ च । स्वादित्वात् श्नुः । तष्टेव । तक्षू त्वक्षू तनूकरणे । ताच्छीलिकस्तृन् । ऊदित्त्वात्पक्ष इडभावः । स्कोः संयोगाद्योरंते चेति ककारलोपः । नित्त्वादाद्युदात्तत्वं । तत्सिनाय । सिनशब्दः षिञ् बंधन इत्यस्मादिणिषिन्दीङुष्यविभ्यो नक् । उ° ३. २. । इति नक्प्रत्ययांतः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । गिर्वाहसे । वहिहाधाञ्भ्यश्छंदसीति वहतेः केवलाद्विहितोऽसुन्प्रत्ययो गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेति वचनात्कारकपूर्वस्यापि भवति पूर्वपदप्रकृतिस्वरत्वं च । णिदित्यनुवृत्तेरुपधावृद्धिः । हलि चेति दीर्घाभावश्छांदसः । विश्वमिन्वं । इवि व्याप्तौ । विश्वमिन्वति व्याप्नोतीति विश्वमिन्वं । पचाद्यच् । लुगभावश्छांदसः । यद्वा । खच्प्रत्ययो बहुलवचनादस्मादपि धातोर्द्रष्टव्यः । मेधिराय । मेधा अस्यास्तीति मेधिरः । मेधारथाभ्यामिरनिरचौ वक्तव्यौ । पा° ५. २. १०९. ३. । इति मत्वर्थीय इरन् । नित्त्वादाद्युदात्तत्वं ॥

अस्मा इदु सप्तिमिव श्रवस्येंद्रायार्कं जुह्वा३ समंजे ।
वीरं दानौकसं वंदध्यै पुरां गूर्तश्रवसं दर्माणं ॥५॥
अस्मै । इत् । ऊं इति । सप्तिंऽइव । श्रवस्या । इंद्राय । अर्कं । जुह्वा । सं । अंजे ।
वीरं । दानऽओकसं । वंदध्यै । पुरां । गूर्तऽश्रवसं । दर्माणं ॥५॥

अस्मा एवेंद्रायार्कं स्तुतिरूपं मंत्रं श्रवस्या श्रवस्ययान्नेच्छया । अन्नलाभार्थमित्यर्थः । जुह्वाह्वानसाधनेन वागिंद्रियेण समंजे । समक्तं करोमि । एकीकरोमीत्यर्थः । तत्र दृष्टांतः । सप्तिमिव । यथान्नलाभाय गंतुकामः पुमानश्वं रथेनैकीकरोति तद्वत् । एकीकृत्य च वीरं शत्रुक्षेपणकुशलं दानौकसं दानानामेकनिलयं गूर्तश्रवसं प्रशस्यान्नं पुरामसुरपुराणां दर्माणं विदारयितारं । एवंगुणविशिष्टमिंद्रं वंदध्यै वंदितुं स्तोतुं प्रवृत्तोऽस्मीति शेषः ॥ सप्तिमिव । षप समवाये । समवैति रथेनैकीभवतीति सप्तिरश्वः । वसस्तिप् । उ° ४. १७९. । इति विधीयमानस्तिप्प्रत्ययो बहुलवचनादस्मादपि धातोर्भवति । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः । इवेन समास उक्तः । श्रवस्या । श्रवश्शब्दात्सुप आत्मनः क्यच् । क्यजंताद्धातोर्भावे अ प्रत्ययात् । पा° ३. ३. १०२. । इत्यकारप्रत्ययः । ततष्टाप् । सुपां सुलुगिति तृतीयाया डादेशः । उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वं । अर्कं । ऋच स्तुतौ । ऋच्यते स्तूयतेऽनेनेत्यर्को मंत्रः । पुंसि संज्ञायां घः प्रायेणेति करणे घप्रत्ययः । चजोः कु घिण्यतोरिति कुत्वं । लघूपधगुणः । प्रत्ययस्वरः । जुह्वा । बहुलं छंदसीति कृतसंप्रसारणस्य ह्वेञो हुवः श्नुवच्च । उ° २. ६०. । इति क्विप् । धातोर्दीर्घश्च । धातुस्वरेणांतोदात्तत्वं । तृतीयैकवचन उदात्तस्वरितयोर्यण इति स्वरितत्वं । उदात्तयणो हल्पूर्वादित्यस्य विभक्त्युदात्तत्वस्य नोङ्धात्वोः । पा° ६. १. १७५. । इति प्रतिषेधः । अंजे । अन्जू व्यक्तिम्रक्षणकांतिगतिषु । व्यत्ययेनात्मनेपदं । वंदध्यै । वदि अभिवादनस्तुत्योः । तुमर्थे सेसेनिति कध्यैप्रत्ययः । गूर्तश्रवसं । गॄ शब्दे । निष्ठायां श्र्युकः कितीतीट्प्रतिषेधः । बहुलं छंदसीत्युत्वं । हलि चेति दीर्घः । नसत्तनिषत्तेत्यादौ । पा° ८. २. ६१. । निपातनान्निष्ठानत्वाभावः । गूर्तं श्रवो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । दर्माणं । दॄ विदारणे । अन्येभ्योऽपि दृश्यंत इति मनिन् । नेड्वशि कृतीतीट्प्रतिषेधः । व्यत्ययेन प्रत्ययाद्युदात्तत्वं । यद्वा । औणादिको मनिप्रत्ययो द्रष्टव्यः ॥ ॥२७॥

अस्मा इदु त्वष्टा तक्षद्वज्रं स्वपस्तमं स्वर्यं१ रणाय ।
वृत्रस्य चिद्विदद्येन मर्म तुजन्नीशानस्तुजता कियेधाः ॥६॥
अस्मै । इत् । ऊं इति । त्वष्टा । तक्षत् । वज्रं । स्वपःऽतमं । स्वर्यं । रणाय ।
वृत्रस्य । चित् । विदत् । येन । मर्म । तुजन् । ईशानः । तुजता । कियेधाः ॥६॥

त्वष्टा विश्वकर्मास्मा इदु अस्मा एवेंद्राय वज्रं वर्जकमायुधं रणाय युद्धार्थं तक्षत् । तीक्ष्णमकरोत् । कीदृशं

वज्रं । स्वपस्तममतिशयेन शोभनकर्माणं स्वर्यं सुष्ठु शत्रुषु प्रेर्यं यद्वा स्तुत्यं । तुजन् शत्रून्हिंसन् ईशान ऐश्वर्यवान् कियेधा बलवान् एवंगुणविशिष्ट इंद्रो वृत्रस्य चित् आवरकस्यासुरस्य मर्म मर्मस्थानं तुजता हिंसता येन वज्रेण विदत् । प्राहार्षीदित्यर्थः ॥ स्वपस्तमं । शोभनमपः कर्म यस्यासौ । अतिशयेन स्वपाः स्वपस्तमः । तमपः पित्त्वादनुदात्तत्वं । सोर्मनसी अलोमोषसी इत्युत्तरपदाद्युदात्तत्वं । स्वर्यं । स्वर्यं ततच । ऋग्वे॰ १. ३२. २. इत्यत्रोक्तं । विदत् । विद्लृ लाभे । लृदित्त्वात् च्लेरङादेशः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । यद्वृत्तयोगादनिघातः । तुजन् । तुज हिंसायां । शपि प्राप्ते व्यत्ययेन शः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः । ईशानः । ईश ऐश्वर्ये । शानच्यदादित्वाच्छपो लुक् । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । तुजता । शतुरनुम इति विभक्तेरुदात्तत्वं । कियेधाः । अत्र निरुक्तं । कियेधाः कियद्धा इति वा क्रममाणधा इति वेति । नि॰ ६. २०. । अस्यायमभिप्रायः । कियत् किंपरिमाणमित्यस्य बलस्य । तादृशं बलं दधाति धारयतीति कियद्धाः । यः कोऽप्यस्य बलस्येयत्तां न जानातीत्यर्थः । यद्वा । क्रममाणमाक्रममाणं परेषां बलं धारयति निवारयतीति क्रममाणधाः । उभयत्रापि पृषोदरादित्वात्पूर्वपदस्य कियेभावः । दधातेर्विच् ॥

अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चार्वन्ना ।
मुषायद्विष्णुः पचतं सहीयान्विध्यद्वराहं तिरो अद्रिमस्ता ॥ ७ ॥
अस्य । इत् । ऊं इति । मातुः । सवनेषु । सद्यः । महः । पितुं । पपिऽवान् । चारु । अन्ना ।
मुषायत् । विष्णुः । पचतं । सहीयान् । विध्यत् । वराहं । तिरः । अद्रिं । अस्ता ॥ ७ ॥

इदु इत्येतन्निपातद्वयं पादपूरणं । यद्वावधारणार्थं । मातुर्वृष्टिद्वारेण सकलस्य जगतो निर्मातुर्महो महतोऽस्य यज्ञस्य सवनेष्ववयवभूतेषु प्रातःसवनादिषु त्रिषु सवनेषु पितुं सोमलक्षणमन्नं सद्यः पपिवान् । यदाग्नौ हूयते तदानीमेव पानं कृतवानित्यर्थः । तथा चार्वन्ना चारूणि शोभनानि धानाकरंभादिहविर्लक्षणान्यन्नानि भक्षितवानिति शेषः । किंच विष्णुः सर्वस्य जगतो व्यापकः पचतं परिपक्वमसुराणां धनं यदस्ति तन्मुषायत् अपहरन् सहीयान् अतिशयेन शत्रूणामभिभवितादिमस्ताद्रिर्वज्रस्य क्षेपकः । एवंभूत इंद्रस्तिरः । सत इति प्राप्तस्य । नि॰ ३. २०. । इति यास्कः । तिरः प्राप्तः सन् वराहं मेघं विध्यत् । अताडयत् । यद्वा । विष्णुः सुत्यादिवसात्मको यज्ञः । यज्ञो देवेभ्यो निलाय विष्णुरूपं कृत्वेत्याम्नानात् । स विष्णुः पचतं परिपक्वमसुरधनं यत्तन्मुषायत् । अचूचुरत् । तदनंतरं दीक्षोपसदात्मनां दुर्गरूपाणां सप्तानामह्नां परस्तादासीत् । अद्रिमस्ता सहीयानिंद्रो दुर्गाण्यतीत्य तिरः प्राप्तः सन् [illegible]देवसरूपं तं यज्ञं विध्यत् । तथा च तैत्तिरीयकं । वराहोऽयं वाममोषः सप्तानां गिरीणां परस्ताद्वित्तं वेद्यमसुराणां बिभर्तीति । स दर्भपुंजीलमुद्वृह्य सप्त गिरीन्भित्त्वा तमहन्निति च । तै॰ सं॰ ६. २. ४. २–३. ॥ महः । महतः । अच्छब्दलोपश्छांदसः । यद्वा । मह इत्येतत्पितुविशेषणं । महः प्रशस्तं पितुमित्यर्थः । पपिवान् । पिबतेर्लिटः क्वसुः । वस्वेकाजाद्घसामिति इडागमः । आतो लोप इटि चेत्याकारलोपः । प्रत्ययस्वरः । चारु । सुपां सुलुगिति विभक्तेर्लुक् । मुषायत् । मुष स्तेये । घञर्थे कविधानमिति भावे कप्रत्ययः । मुषमात्मन इच्छति । सुप आत्मनः क्यच् । न छंदस्यपुत्रस्येतीत्वदीर्घयोरपि प्रतिषेधे व्यत्ययेन दीर्घः । अस्मात्क्यजंताल्लटः शतृ । आगमानुशासनस्यानित्यत्वान्नुमभावः । द्वितीयपक्षे तु क्यजंताल्लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । अत्र स्तेयेच्छया तदुत्तरभाविनी क्रिया लक्ष्यते । पचतं । भृमृदृशीत्यादिना पचतेरतच्प्रत्ययः । चित्त्वादंतोदात्तत्वं । विध्यत् । व्यध ताडने । लङि दिवादित्वात् श्यन् । तस्य ङित्त्वाद्ग्रहिज्यादिना संप्रसारणं । श्यनो नित्त्वादाद्युदात्तत्वं । पादादित्वान्निघाताभावः । वराहं । वरमुदकमाहारो यस्य । यद्वा । वरमाहरतीति वराहारः सन् पृषोदरादित्वाद्वराह इत्युच्यते । अत्र निरुक्तं । वराहो मेघो भवति वराहारः । वरमाहारमाहार्षीरिति च ब्राह्मणमिति । नि॰ ५. ४. । यज्ञपक्षे तु वरं च तदहो वराहः । राजाहःसखिभ्यः । पा॰ ५. ४. ९१. । इति समासांतष्टच्प्रत्ययः । चित्त्वादंतोदात्तत्वं । अस्ता । असु क्षेपण इत्यस्मात्साधुकारिणि तृन् । पा॰ ३. २. १३५. । इडभावश्छांदसः । न लोकाव्ययेति षष्ठीप्रतिषेधः ॥

अस्मा इदु ग्नाश्चिद्देवपत्नीरिंद्रायार्कमहिहत्य ऊवुः ।
परि द्यावापृथिवी जभ्र उर्वी नास्य ते महिमानं परि ष्टः ॥ ८ ॥
अस्मै । इत् । ऊं इति । ग्नाः । चित् । देवऽपत्नीः । इंद्राय । अर्कं । अहिऽहत्ये । ऊवुरित्यूवुः ।
परि । द्यावापृथिवी इति । जभ्रे । उर्वी इति । न । अस्य । ते इति । महिमानं । परि ।
स्त इति स्तः ॥ ८ ॥

अस्मा एवेंद्रायाहिहत्येऽहेर्वृत्रस्य हनने निमित्तभूते सति माश्चित् गमनस्वभावा अपि स्थिता देवपत्नी-र्देवानां पालयित्र्यो गायत्र्याद्या देवता अर्कमर्चनसाधनं स्तोत्रमूवुः । समतन्वत । चक्रुरित्यर्थः । स चेंद्र उर्वी विस्तृते द्यावापृथिवी द्यावापृथिव्यौ परि जभ्रे । स्वतेजसा परिजहार । अतिचक्रामेत्यर्थः ॥ ऊवुः । वेञ् तंतुसंताने । लिटि वेञो वयिः । पा॰ २. ४. ४१. । लिटः कित्त्वाद्यजादित्वेन संप्रसारणे क्रियमाणे यकारस्य लिटि वयो यः । पा॰ ६. १. ३८. । इति प्रतिषेधाद्वकारस्य संप्रसारणं परपूर्वत्वं द्विर्वचनादि । वश्चास्यान्य-तरस्यां किति । पा॰ ६. १. ३९. । इति यकारस्य वकारादेशः । जभ्रे । हृञ् हरणे । लिटि ञित्त्वात्कर्त्रभिप्राय आत्मनेपदं । हृग्रहोर्भ इति भत्वं । उर्वी । उरुशब्दाद्वोतो गुणवचनादिति ङीष् । वा छंदसीति पूर्वसवर्ण-दीर्घत्वं ॥

अस्येदेव प्र रिरिचे महित्वं दिवस्पृथिव्याः पर्यंतरिक्षात् ।
स्वराळिंद्रो दम आ विश्वगूर्तः स्वरिरमत्रो ववक्षे रणाय ॥ ९ ॥
अस्य । इत् । एव । प्र । रिरिचे । महिऽत्वं । दिवः । पृथिव्याः । परि । अंतरिक्षात् ।
स्वऽराट् । इंद्रः । दमे । आ । विश्वऽगूर्तः । सुऽअरिः । अमत्रः । ववक्षे । रणाय ॥ ९ ॥

अस्येदेव । इदिति पादपूरणः । अस्यैवेंद्रस्य महित्वं माहात्म्यं प्र रिरिचे । अतिरिच्यते । अधिकं भव-तीत्यर्थः । अत्रोपसर्गो धात्वर्थस्य निवृत्तिमाचष्टे । यथा प्रस्मरणं प्रस्थानमिति । कुतः सकाशात्प्ररिरिच इत्यत आह । दिवो द्युलोकात् पृथिव्या भूलोकात् अंतरिक्षात् द्यावापृथिव्योर्मध्ये वर्तमानादंतरिक्षलोकाच्च । पर्युप-र्यर्थः । त्रीँल्लोकानतीत्योपरि प्ररिरिच इत्यर्थः । दमे दमयितव्ये विषये स्वराट् स्वेनैव तेजसा राजमानो विश्वगूर्तो विश्वस्मिन्सर्वस्मिन्कार्य उद्गूर्णः समर्थः । यद्वा । विश्वं सर्वमायुधं गूर्तमुद्यतं यस्य स तथोक्तः । स्वरिः शोभनशत्रुकः । शोभने शत्रौ हंतव्ये सति हंता वीर्यवत्तम इति गम्यते । यथाकवारिं दिव्यं शासमिंद्रं । ऋग्वे॰ ३. ४७. ५. । इति । अकुत्सितारिमिति हि तस्यार्थः । अमत्रो युद्धादिषु गमनकुशलः । मात्रयेयत्तया रहितो वा । अमत्रोऽमात्रो महान्भवत्यभ्यमितो वेति यास्कः । नि॰ ६. २३. । एवंभूत इंद्रो रणाय रणं युद्धमा ववक्षे । आवहति । मेघान्प्रापयति । मेघैः परस्परयुद्धं कारयित्वा वृष्टिं चकारेति भावः । यद्वा । युद्धाय स्वकीया-न्भटान् गमयति ॥ अस्य । ऊडिदमिति विभक्तेरुदात्तत्वं । रिरिचे । रिचिर् विरेचने । छंदसि लुङ्लङ्लिट इति वर्तमाने कर्मणि लिट् । पृथिव्याः । उदात्तयण इति विभक्तेरुदात्तत्वं । स्वराट् । राजृ दीप्तावित्यस्मात्स-त्सूद्विषेति क्विप् । व्रश्चादिना षत्वे जश्त्वं । दमे । दम उपशम इत्यस्मात्कर्मणि घञि नोदात्तोपदेशस्य मांत-स्यानाचमेः । पा॰ ७. ३. ३४. । इति वृद्धिप्रतिषेधः । घञो ञित्त्वादाद्युदात्तत्वं । विश्वगूर्तः । गॄ निगरणे । अस्मान्निष्ठायां श्र्युकः कितीतीट्प्रतिषेधः । बहुलं छंदसीत्युत्वं । हलि चेति दीर्घः । यद्वा । गूरी उद्यमे । अस्मान्निष्ठा । नसत्तनिषत्तेत्यादौ निपातनान्निष्ठानत्वाभावः । तत्पुरुषपक्षे मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं । बहुव्रीहिपक्षे तु बहुव्रीहौ विश्वं संज्ञायामित्यसंज्ञायामपि पूर्वपदांतोदात्तत्वं । अमत्रः । अम गत्यादिषु । अमिनक्षियजिबंधीत्यादिनौणादिकोऽत्रन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । ववक्षे । वहेर्लेटि सिब्बहुलं लेटीति सिप् । बहुलं छंदसीति शपः श्लुः । ढत्वषत्वकत्वानि । लोपस्त आत्मनेपदेष्विति तलोपः । रणाय । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी । यद्वा । गत्यर्थकर्मणि । पा॰ २. ३. १२. । इति चतुर्थी ॥

अस्येदेव शवसा शुषंतं वि वृश्चद्वज्रेण वृत्रमिंद्रः ।
गा न व्राणा अवनीरमुंचदभि श्रवो दावने सचेताः ॥१०॥
अस्य । इत् । एव । शवसा । शुषंतं । वि । वृश्चत् । वज्रेण । वृत्रं । इंद्रः ।
गाः । न । व्राणाः । अवनीः । अमुंचत् । अभि । श्रवः । दावने । सऽचेताः ॥१०॥

अस्यैवेंद्रस्य शवसा बलेन शुषंतं शुष्यंतं वृत्रमिंद्रो वज्रेण वि वृश्चत् । व्यच्छिनत् । तथा गा न चौरैरपहृता गाव इव व्राणा वृत्रेणावृता अवनी रक्षणहेतुभूता अपोऽमुंचत् । अवर्षीत् । तथा दावने हविर्दात्रे यजमानाय सचेतास्तेन यजमानेन समानचित्तः सन् श्रवः कर्मफलभूतमन्नमभ्याभिमुख्येन ददातीति शेषः ॥ शुषंतं । शुष शोषणे । श्नि प्राप्ते व्यत्ययेन शः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वर एव शिष्यते । व्राणाः । वृञ् वरणे । कर्मणि लटः शानचि बहुलं छंदसीति यको लुक् । शानचो ङित्वाद्गुणाभावे यणादेशः । अवनीः । अवतेः करणेऽर्तिसृधृधमीत्यादिना । उ० २. १०३. । अनिप्रत्ययः । प्रत्ययाद्युदात्तत्वं । दावने । आतो मनिन्निति वनिप् । चतुर्थ्येकवचनेऽल्लोपाभावश्छांदसः ॥ ॥ २८ ॥

अस्येदु त्वेषसा रंत सिंधवः परि यद्वज्रेण सीमयच्छत् ।
ईशानकृद्दाशुषे दशस्यन्तुर्वीतये गाधं तुर्वणिः कः ॥११॥
अस्य । इत् । ऊं इति । त्वेषसा । रंत । सिंधवः । परि । यत् । वज्रेण । सीं । अयच्छत् ।
ईशानऽकृत् । दाशुषे । दशस्यन् । तुर्वीतये । गाधं । तुर्वणिः । करिति कः ॥११॥

अस्यैवेंद्रस्य त्वेषसा दीप्तेन बलेन सिंधवः समुद्राः । यद्वा । गंगाद्याः सप्त नद्यो रंत । स्वे स्वे स्थाने रमंते । यद्यस्मादयमिंद्रो वज्रेण सीमेनान्सिंधून्वज्रेण पर्ययच्छत् परितो नियमितवान् । अपि च ईशानकृत् वृत्रादिशत्रुवधेनात्मानमैश्वर्यवंतं कुर्वन्निंद्रो दाशुषे हविर्दत्तवते यजमानाय फलं दशस्यन् प्रयच्छन् तुर्वणिस्तूर्णसंभजनः । तुर्वणिस्तूर्णवनिरिति यास्कः । नि० ६. १४. । यद्वा । तुर्विता शत्रूणां हिंसिता । एवंभूत इंद्रस्तुर्वीतय एतत्संज्ञायोदके निमग्नाय ऋषये गाधमवस्थानयोग्यं धिष्ण्यप्रदेशं कः । अकार्षीत् ॥ रंत । रमु क्रीडायां । छांदसे लङि बहुवचने बहुलं छंदसीति शपो लुक् । धातोरंत्यलोपश्छांदसः । अयच्छत् । यम उपरमे । इषुगमियमां छ इति छत्वं । कः । करोतेर्लुङि मंत्रे घसह्वरणशेत्यादिना । पा० २. ४. ८०. । च्लेर्लुक् । गुणः । हल्ङ्याब्भ्यो इत्यादिना तलोपः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः ॥

अस्मा इदु प्र भरा तूतुंजानो वृत्राय वज्रमीशानः कियेधाः ।
गोर्न पर्व वि रदा तिरश्चेष्यन्नर्णांस्यपां चरध्यै ॥१२॥
अस्मै । इत् । ऊं इति । प्र । भर । तूतुंजानः । वृत्राय । वज्रं । ईशानः । कियेधाः ।
गोः । न । पर्व । वि । रद । तिरश्चा । इष्यन् । अर्णांसि । अपां । चरध्यै ॥१२॥

तूतुजान इति क्षिप्रनाम । तूतुजानस्त्वरमाणः । यद्वा । शत्रून्हिंसन् । ईशान ईश्वरः सर्वेषां कियेधाः कियतोऽनवधृतप्रमाणस्य बलस्य धाता । यद्वा । क्रममाणं शत्रुबलं दधात्यवस्थापयतीति कियेधाः । हे इंद्र एवंभूतस्त्वमस्मै वृत्राय वज्रं प्र भर । इमं वृत्रं वज्रेण प्रहरेत्यर्थः । प्रहृत्य चार्णांसि वृष्टिजलानीष्यन् तस्माद्वृत्रान्निर्गमयंस्त्वमपां चरध्यै तासामपां चरणाय भूप्रदेशं प्रति गमनाय तस्य वृत्रस्य मेघरूपस्य पर्व पर्वाण्यवयवसंधीन् तिरश्चा तिर्यगवस्थितेन वज्रेण वि रद । विलिख । छिंद्धीत्यर्थः । तत्र दृष्टांतः । गोर्न । यथा मांसस्य विकर्तारो लौकिकाः पुरुषाः पशोरवयवानितस्ततो विभजंति तद्वत् । अत्र निरुक्तं । अस्मै प्रहर तूर्णं त्वरमाणो वृत्राय वज्रमीशानः कियेधाः कियद्धा इति वा क्रममाणधा इति वा गोरिव पर्वाणि विरद मेघस्ये-

ष्यन्नर्णांस्यपां चरणाय । नि° ६. २०.। इति ॥ भर । हृग्रहोर्भ इति भत्वं । द्व्यचोऽतस्तिङ इति सांहितिको दीर्घः । तूतुजानः । तुज हिंसायां । कानचि तुजादीनां दीर्घोऽभ्यासस्येत्यभ्यासस्य दीर्घत्वं । छंदस्युभयथेति कानचः सार्वधातुकत्वे सत्यभ्यस्तानामादिरित्याद्युदात्तत्वं । क्रियेधाः । तुजता क्रियेधा इत्यत्रोक्तं । रद् । रद विलेखने । तिङ्ङतिङ इति निघातः । तिरश्चा । तिरोऽंचतीति तिर्यङ् । ऋत्विगित्यादिना क्विन् । अनिदितामिति नलोपः । तृतीयैकवचने भसंज्ञायामच इत्यकारलोपः । श्चुत्वेन सकारस्य शकारः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं । इष्यन् । इष गतावित्यस्मादंतर्भावितण्यर्थाच्छतरि दिवादिभ्यः श्यन् । तस्य नित्त्वादाद्युदात्तत्वं । चरध्यै । तुमर्थे सेसेनिति चरतेरध्यैप्रत्ययः ॥

अस्येदु प्र ब्रूहि पूर्व्याणि तुरस्य कर्माणि नव्य उक्थैः ।
युधे यदिष्णान आयुधान्यृघायमाणो निरिणाति शत्रून् ॥ १३ ॥
अस्य । इत् । ऊं इति । प्र । ब्रूहि । पूर्व्याणि । तुरस्य । कर्माणि । नव्यः । उक्थैः ।
युधे । यत् । इष्णानः । आयुधानि । ऋघायमाणः । निऽरिणाति । शत्रून् ॥ १३ ॥

उक्थैः शस्त्रैर्नव्यः स्तुत्यो य इंद्र अस्येदु अस्यैव तुरस्य युद्धार्थं त्वरमाणस्येंद्रस्य पूर्व्याणि पुराणानि कर्माण्येतत्कृतानि बलकर्माणि हे स्तोतः प्र ब्रूहि । प्रशंस । यद्यदा युधे योधनायायुधानि वज्रादीनीष्णान आभीक्ष्ण्येन प्रेरयन् शत्रूनृघायमाणो हिंसन्निंद्रो निरिणाति अभिमुखं गच्छति । तदानीं प्र ब्रूहीति पूर्वेण संबंधः । पूर्व्यमिति पुराणनाम । पूर्व्यमह्नायेति पुराणनामसु पाठात् ॥ तुरस्य । तुर त्वरणे । इगुपधलक्षणः कः । नव्यः । णु स्तुतौ । अचो यदिति यत् । गुणः । धातोस्तन्निमित्तस्यैवेत्यवादेशः । इष्णानः । इष आभीक्ष्ण्ये । क्रैयादिकः । व्यत्ययेनात्मनेपदं । शानचश्चित्त्वादंतोदात्तत्वं । ऋघायमाणः । नहि त्वा रोदसी उभे ऋघायमाणं । ऋग्वे° १. १०. ८.। इत्यत्र व्युत्पादितं । निरिणाति । री गतिरेषणयोः । क्र्यादिभ्यः श्ना । प्वादीनां ह्रस्व इति ह्रस्वत्वं । तिपः पित्त्वादनुदात्तत्वे विकरणस्वरः शिष्यते । तिङि चोदात्तवतीति गतेर्निघातः । यद्वृत्तयोगात्तिङ्ङतिङ इति निघाताभावः ॥

अस्येदु भिया गिरयश्च दृळ्हा द्यावा च भूमा जनुषस्तुजेते ।
उपो वेनस्य जोगुवान ओणिं सद्यो भुवद्वीर्याय नोधाः ॥ १४ ॥
अस्य । इत् । ऊं इति । भिया । गिरयः । च । दृळ्हाः । द्यावा । च । भूम । जनुषः । तुजेते इति ।
उपो इति । वेनस्य । जोगुवानः । ओणिं । सद्यः । भुवत् । वीर्याय । नोधाः ॥ १४ ॥

अस्यैवेंद्रस्य भिया पक्षच्छेदभयेन गिरयः पर्वता अपि दृळ्हाः । निश्चलाः स्वस्वदेशेऽवतिष्ठंते । जनुषः प्रादुर्भूतादस्मादेवेंद्राद्भीत्या द्यावा भूमा च द्यावापृथिव्यावपि तुजेते । तुजिर्हिंसार्थोऽप्यत्र कंपने द्रष्टव्यः । कंपेते इत्यर्थः । किंच वेनस्य कांतस्यास्यौणिं दुःखस्यापनायकं रक्षणमुपो जोगुवानोऽनेकैः सूक्तैः पुनःपुनरुपशब्दयन् । उपश्लोकयन्नित्यर्थः । एवंभूतो नोधा ऋषिः सद्यस्तदानीमेव वीर्याय भुवत् । वीर्यवानभवत् ॥ द्यावा च भूमा । द्यावा भूमेत्यनयोर्मध्ये चशब्दस्य पाठश्छांदसः । दिवो द्यावेति दिव्शब्दस्य द्यावादेशः । सुपां सुलुगिति विभक्तेर्डादेशः । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं । पदद्वयप्रसिद्धिरपि सांप्रदायिकी । जनुषः । जनी प्रादुर्भावे । जनेरुसिः । उ° २. ११६.। इत्यौणादिक उसिप्रत्ययः । जोगुवानः । गुङ् अव्यक्ते शब्दे । अस्माद्यङ्लु[illegible] शानच् । अदादिवच्चेति वचनाच्छपो लुक् । उवङादेशः । अभ्यस्तानामादिरित्या[illegible]दात्तत्वं । ओणिं । ओणृ अपनयने । अस्मादौणादिक इप्रत्ययः । भुवत् । भवतेर्लेट्यडागमः । बहुलं छंदसीति शपो लुक् । भूसुवोस्तिङीति गुणप्रतिषेधः । नोधाः । नोधा ऋषिर्भवति नवनं दधातीति यास्कः । नि° ४. १६.। तस्माद्धाञोऽसुन् नवशब्दस्य नोभावश्च ॥

अस्मा इदु त्यदनु दाय्येषामेको यद्वव्ने भूरेरीशानः ।
प्रैतशं सूर्ये पस्पृधानं सौवश्व्ये सुष्विमावदिंद्रः ॥ १५ ॥
अस्मै । इत् । ऊं इति । त्यत् । अनु । दायि । एषां । एकः । यत् । वव्ने । भूरेः । ईशानः ।
प्र । एतशं । सूर्ये । पस्पृधानं । सौवश्व्ये । सुस्विं । आवत् । इंद्रः ॥ १५ ॥

एक एक एव शत्रूञ्जेतुं समर्थो भूरेर्बहुविधस्य धनस्येशानः स्वामी यत्स्तोत्रं वव्ने ययाचे एषां स्तोतॄणां संबंधि । यद्वा । विभक्तिव्यत्ययः । एतैस्त्यत् तत्प्रसिद्धं स्तोत्रमस्मा इंद्रायानु दायि । अकारीत्यर्थः ॥ उत्तरार्ध-[illegible]यिका । स्वश्वो नाम कश्चिद्राजा । स च पुत्रकामः सूर्यमुपासां चक्रे । तस्य च सूर्य एव पुत्रो बभूव । तेन सहैतशनाम्नो महर्षेर्युद्धं जातमिति तदेतदिहोच्यते ॥ अयमिंद्रः सौवश्व्ये स्वश्वपुत्रे सूर्ये पस्पृधानं स्पर्धमानं सुष्विं सोमानामभिषोतारमेतशमेतत्संज्ञकमृषिं प्रावत् । प्ररक्षत् ॥ दायि । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । वव्ने । वनु याचने । लिटि व्यत्ययेनोपधालोपः । पस्पृधानं । स्पर्ध संघर्षे । अस्माल्लिटः कानच् । द्विर्वचने शर्पूर्वाः खय इति पकारः शिष्यते । धात्वकारस्य लोपो रेफस्य संप्रसारणं च पृषोदरादित्वात् । चित्त्वादंतोदात्तत्वं । सौवश्व्ये । स्वश्व इति जनपदशब्दः क्षत्रिये संज्ञात्वेन वर्तते । वा नामधेयस्य वृद्धसंज्ञा वक्तव्या । पा० १. १. ७३. ५. । इति वृद्धसंज्ञायां वृद्धेत्कोसलाजादाञ्ञ्यङ् । पा० ४. १. १७१. । इत्यपत्यार्थे ञ्यङ्प्रत्ययः । न य्वाभ्यां पदांताभ्यां । पा० ७. ३. ३. । इति वृद्धेः प्रतिषेध ऐजागमश्च । [illegible]नुदात्तत्वं । सुष्विं । षुञ् अभिषवे । उत्सर्गश्छंदसि । पा० ३. २. १७१. २. । इत्यस्मात्किन्प्रत्ययः । लिड्वद्भावात् द्विर्भावः । यणादेशः । उवङादेशाभावश्छांदसः ॥

एवा तें हारियोजना सुवृक्तींद्र ब्रह्माणि गोतंमासो अक्रन् ।
ऐषु विश्वपेशसं धियं धाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ १६ ॥
एव । ते । हारिऽयोजन । सुऽवृक्ति । इंद्र । ब्रह्माणि । गोतमासः । अक्रन् ।
आ । एषु । विश्वऽपेशसं । धियं । धाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ १६ ॥

हर्योरश्वयोर्योजनं यस्मिन्रथे स तथोक्तः । तस्य स्वामित्वेन संबंधी हारियोजनः । हे हारियोजनेंद्र गोतमासो गोतमगोत्रोत्पन्ना ऋषयः सुवृक्ति सुष्ठ्वावर्जकान्यभिमुखीकरणकुशलानि ब्रह्माणि स्तुतिरूपाणि मंत्रजातानि ते तवैवाक्रन् । अकृषत । एषु स्तोतृषु विश्वपेशसं बहुविधरूपयुक्तं धियं धाः । धिया लभ्यत्वाद्धीर्धनमुच्यते । यद्वा । धीशब्दः कर्मवचनः । पश्वादिबहुविधरूपं धनमग्निष्टोमादिकं बहुविधरूपं कर्म वा आ धाः । धेहि । स्थापय । प्रातरिदानीमिव परेद्युरपि प्रातःकाले धियावसुर्बुद्ध्या कर्मणा वा प्राप्तधन इंद्रो मक्षु शीघ्रं जगम्यात् । अस्मद्रक्षणार्थमागच्छतु ॥ एव । निपातस्य चेति संहितायां दीर्घः । सुवृक्ति । सुपां सुलुगिति शसो लुक् । अक्रन् । करोतेर्लुङि मंत्रे घसह्वरेत्यादिना च्लेर्लुक् । अंतादेशः । तस्य ङित्त्वाद्गुणाभावे यणादेशः । इतश्चेतीकारलोपे संयोगांतलोपे चाडागमः । धाः । छंदसि लुङ्लङ्लिट इति लोडर्थे लुङि गातिस्थेति सिचो लुक् । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः ॥ ॥ २९ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणामात्येन विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके चतुर्थोऽध्यायः समाप्तः ॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथ पंचमाध्याय आरभ्यते। प्रथमे मंडल एकादशेऽनुवाके चत्वारि सूक्तानि गतानि। प्र मन्महे इत्येतत्त्रयोदशर्चं पंचमं सूक्तं। अत्रानुक्रम्यते। प्र सप्तोनेति। अनिरुक्ता संख्या विंशतिः। अनु॰ १२. ४.। इत्युक्तत्वात्प्र सप्तोनेत्युक्ते त्रयोदशेत्युक्तं भवति। ऋषिश्चान्यस्मादिति परिभाषया नोधा ऋषिः। अनादेशपरिभाषया त्रिष्टुप् छंदः। इंद्रो देवता॥ गतः सामान्यविनियोगः। विशेषविनियोगस्तु लिंगादवगंतव्यः॥

**प्र मंन्महे शवसानायं शूषमांगूषं गिर्वंणसे अंगिरस्वत्।**
**सुवृक्तिभिः स्तुवत ऋग्मियायार्चामार्कं नरे विश्रुंताय ॥१॥**
**प्र। मन्महे। शवसानायं। शूषं। आंगूषं। गिर्वंणसे। अंगिरस्वत्।**
**सुवृक्तिऽभिः। स्तुवते। ऋग्मियायं। अर्चाम। अर्कं। नरें। विऽश्रुंताय ॥१॥**

शवसानाय। शव इति बलनाम। तदिवाचरते। यथा बलं शत्रून्हंति तथा शत्रूणां हंतेत्यर्थः। गिर्वणसे। गीर्भिः स्तुतिलक्षणैर्वचोभिः संभजनीयाय। गिर्वणा देवो भवति गीर्भिरेनं वनयंति। नि॰ ६. १४.। इति यास्कः। एवंभूतायेंद्राय। शूषमिति सुखनाम। शूषं सुखहेतुभूतं। आंगूषः स्तोम आघोषः। नि॰ ५. ११.। इति यास्कः। आंगूषं स्तोत्रमंगिरस्वत् अंगिरस इव प्र मन्महे। वयं स्तोतारः प्रकर्षेणावगच्छामः। अवगत्य च सुवृक्तिभिः सुष्ठावर्जकैः स्तुत्याभिमुखीकरणसमर्थैः स्तोत्रैः स्तुवते स्तोत्रं कुर्वते ऋषये य इंद्र ऋग्मियोऽर्चनीयो भवति। यद्वा। कर्मणि कर्तृप्रत्ययः। ऋषिणा स्तूयमानायेत्यर्थः। नरे सर्वेषां नेत्रे। यद्वा। नरे यजमाने। विश्रुताय यष्टव्यतया विशेषेण प्रख्याताय। एवंभूताय तस्मा अर्कं मंत्ररूपं स्तोत्रं। अर्को मंत्रो भवति यदेनेनार्चंति। नि॰ ५. ४.। इति यास्कः। अर्चाम। पूजयाम। उच्चारयामेत्यर्थः॥ मन्महे। मनु अवबोधने। तनादित्वादुप्रत्ययः। लोपश्चास्यान्यतरस्यां म्वोः। पा॰ ६. ४. १०७.। इति मकारादौ प्रत्यय उकारलोपः। शवसानाय। शव इवाचरति शवस्यति। अस्माल्लटः शानच्। बहुलं छंदसीति शपो लुक्। शानचश्छंदस्युभयथेत्यार्धधातुकत्वादतोलोपयलोपौ। चित इत्यंतोदात्तत्वं। ननु क्यङो ङित्वात्तास्यनुदात्तेदिति शानचोऽनुदात्तेन भवितव्यं। एवं तर्हि ताच्छीलिकश्चानश्। तस्य सार्वधातुकत्वेऽपि लसार्वधातुकत्वाभावाच्चितः स्वर एव शिष्यते। शूषं। शूष प्रसवे। पचाद्यच्। आंगूषं। आङ्पूर्वाद्घुषेः पचाद्यचि घो इत्यस्य गूआदेशः पृषोदरादित्वात्। आङो ङकारस्येत्संज्ञाभावश्छांदसः। चित्स्वरेणोत्तरपदस्यांतोदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वं। घञि वा थाथादिनोत्तरपदांतोदात्तत्वं। गिर्वणसे। गॄ शब्दे। संपदादिलक्षणो भावे क्विप्। ऋत इद्धातोरितीत्वं। गीर्भिर्वन्यते संभज्यत इति गिर्वणाः। औणादिकः कर्मण्यसुन्। संज्ञापूर्वकस्य विधेरनित्यत्वाद्वलि चेति दीर्घाभावः। गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेति वचनात्पूर्वपदप्रकृतिस्वरत्वं। अंगिरस्वत्। तेन तुल्यमिति वतिः। नभोऽंगिरोमनुषां वत्युपसंख्यानं। पा॰ १. ४. १८. ३.। इति भसंज्ञायां रुत्वाद्यभावः। प्रत्ययस्वरः। सुवृक्तिभिः। वृजी वर्जने। भावे क्तिन्। तितुत्रेतीट्प्रतिषेधः। शोभनमावर्जनं येषां। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। ननु क्तिनंतस्योत्तरपदस्याद्युदात्तत्वादाद्युदात्तं द्व्यच्छंदसीति वचनादुत्तरपदाद्युदात्तत्वं प्राप्नोति। एवं तर्हि तत्पुरुषोऽस्तु। शो[illegible] भवत्येभिरिति सुवृक्तयः स्तोत्राणि। करणे क्तिन्। तादौ च नितीति गतेः प्रकृतिस्वरत्वे प्राप्ते मन्क्तिन्नित्यादिना कारकादुत्तरस्य क्तिनो विहितमुत्तरपदांतोदात्तत्वमकारकादपि व्यत्ययेन भवति। स्तुवते। शतुरनुम इति विभक्तेरुदात्तत्वं। ऋग्मियाय। एकाचो नित्यं मयटमिच्छंति। का॰ ४. ३. १४४.। इति ऋक्शब्दाद्विकारार्थे मयट्। स्वादिष्वसर्वनामस्थाने। पा॰ १. ४. १७.। इति पदसंज्ञायां कुत्वजश्त्वे। व्यत्ययेनेत्वं। यद्वा। ऋच स्तुतावित्यस्माद्भावे मक्। बहुलवचनात्कुत्वं जश्त्वं च। ऋग्मं स्तुतिमर्हतीति ऋग्मियः। अर्हार्थे घच्। चित इत्यंतोदात्तत्वं। अर्चाम। अर्च पूजायां।

भौवादिकः । शपः पित्त्वादनुदात्तत्वं । तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । अर्कं । अर्च्यतेऽनेनेत्यर्कः । पुंसि संज्ञायां घः प्रायेणेति घप्रत्ययः । चजोः कु घिण्यतोरिति कुत्वं । नरे । नृशब्दाच्चतुर्थ्येकवचने गुणश्छांदसः । विश्रुताय । श्रु श्रवणे । कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं ॥

प्र वो॑ म॒हे महि॒ नमो॑ भरध्वमांगू॒ष्यं॑ शवसा॒नाय॒ साम॑ ।
येना॑ नः॒ पूर्वे॑ पि॒तरः॑ पद॒ज्ञा अर्चं॑तो॒ अंगि॑रसो॒ गा अवि॑दन् ॥२॥
प्र । वः॒ । म॒हे । महि॑ । नमः॑ । भ॒र॒ध्व॒म् । आं॒गू॒ष्यं॑ । श॒व॒सा॒नाय॑ । साम॑ ।
येन॑ । नः॒ । पूर्वे॑ । पि॒तरः॑ । प॒द॒ऽज्ञाः । अर्चं॑तः । अंगि॑रसः । गाः । अवि॑दन् ॥२॥

हे ऋत्विजो वो यूयं महे महते शवसानाय बलमिवाचरते । अतिबलायेत्यर्थः । उत्तरवाक्ये यच्छब्दश्रुतेस्तच्छब्दाध्याहारः । एवंभूताय तस्मा इंद्राय महि महत्प्रौढं नमः स्तोत्रं प्र भरध्वं । प्रकर्षेण संपादयत । किं तत्स्तोत्रमित्याह । आंगूष्यं साम आघोषयोग्यं रथंतरादि साम । तन्निष्पाद्यतामित्यर्थः । अभि त्वा शूरेत्यादिष्वृक्षु यद्गानं तस्य सामेत्याख्या । तथा चोक्तं । गीतिषु सामाख्येति । येनेंद्रेण नोऽस्माकं पितरः पितृविशेषाः पूर्वे पूर्वपुरुषा अंगिरसः पणिनाम्नासुरेणापहृतानां गवां पदज्ञा मार्गज्ञाः संतोऽत एवार्चंतस्तं पूजयंतो गा अविंदन् । अलभंत ॥ वः । प्रथमार्थे द्वितीया । पदज्ञाः । पदानि जानंतीति । आतोऽनुपसर्गे क इति कः । आतो लोप इटि चेत्याकारलोपः । अविंदन् । विद्लृ लाभे । शे मुचादीनामिति नुमागमः ॥

इंद्र॒स्यांगि॑रसां चे॒ष्टौ वि॒दत्स॒रमा॒ तन॑याय धा॒सिं ।
बृह॒स्पति॑र्भि॒नदद्रिं॑ वि॒दद्गाः समु॒स्रिया॑भिर्वावशंत॒ नरः॑ ॥३॥
इंद्र॑स्य । अंगि॑रसां । च॒ । इ॒ष्टौ । वि॒दत् । स॒रमा॑ । तन॑याय । धा॒सिं ।
बृह॒स्पतिः॑ । भि॒नत् । अद्रिं॑ । वि॒दत् । गाः । सं । उ॒स्रिया॑भिः । वा॒व॒शं॒त॒ । नरः॑ ॥३॥

अत्रेदमाख्यानं । सरमा नाम देवशुनी । पणिभिर्गोष्वपहृतासु तदन्वेषणाय तां सरमामिंद्रः प्राहैषीत् । यथा लोके व्याधो वनांतर्गतमृगान्वेषणाय श्वानं विसृजति तद्वत् । सा च [illegible] । हे इंद्र अस्मदीयाय शिशवे तद्गोसंबंधि क्षीराद्यन्नं यदि प्रयच्छसि तर्हि गमिष्यामीति । स तथेत्यब्रवीत् । तथा च शाट्यायनकं । अन्नादिनीं ते सरमे प्रजां करोमि या नो गा अन्वविंद इति । ततो गत्वा गवां स्थानमज्ञासीत् । ज्ञात्वा चास्मै न्यवेदयत् । तथा निवेदितासु गोषु तमसुरं हत्वा ता गाः स इंद्रोऽलभतेति । अयमर्थोऽस्यां प्रतिपाद्यते ॥ इंद्रस्यांगिरसामृषीणां चेष्टौ प्रेषणे सति सरमा देवशुनी तनयाय स्वपुत्राय धासिमन्नं विदत् । अविंदत् । धासिरित्यन्ननाम । धासिरिरिति तन्नामसु पाठात् । तथा गोषु निवेदितासु बृहस्पतिर्बृहतां देवानामधिपतिरिंद्रोऽद्रिमत्तारमसुरं भिनत् । अवधीत् । तेनापहृता गा विदत् । अलभत । ततो नरो नेतारो देवा उस्रियाभिर्गोभिः सह । उस्रियेति गोनाम । सं वावशंत । भृशं हर्षशब्दमकुर्वन् । यद्वा । गोभिः साधनभूताभिस्तदीयं क्षीरा[illegible]दिकमकामयंत । समगच्छंतेत्यर्थः ॥ इष्टौ । इष गतावित्य[illegible]वि क्तिनि मंत्रे वृषेत्यादिना क्तिन उदात्तत्वं । विदत् । विद्लृ लाभे । लुङि लृदित्त्वादङ् । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । अङ एव स्वरः शिष्यते । प[illegible]घाताभावः । सरमा । सरमा सरणात् । नि० ११. २४. । इति यास्कः । सर्तेरौणादिकोऽमप्रत्ययः । धासिं । धेट् पाने । धीयते पीयत इति धासिः । औणादिकः सिप्रत्ययः । यद्वा । दधातेः पोषणार्थात् सिप्रत्ययः । बृहस्पतिः । तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च । पा० ६. १. १५७.* । इति सुडागमस्तलोपश्च । बृहच्छब्दोऽंतोदात्तः । तस्य केचिदाद्युदात्तत्वं वर्णयंतीत्युक्तं । पतिशब्दो डतिप्रत्ययांत आद्युदात्तः । अत उभे वनस्पत्यादिष्विति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं । उस्रियाभिः । निवसत्यस्यां क्षीरादिकमित्युस्रा गौः । वस निवास इत्यस्मात् [illegible]धिकरणे रक् । वचिस्वपीत्यादिना संप्रसारणं । उस्राशब्दात्स्वार्थे पु[illegible]न घप्रत्यय इति निघंटुभाष्यं । घस्येयादेशः । प्रत्ययस्वरः । वावशंत ।

वाशृ शब्दे। अस्मादचङ्ताल्लङि झस्यांतादेशे सति तस्य छंदस्युभयथेत्यार्धधातुकत्वादतोलोपयलोपौ। व्यत्ययेन धातोर्ह्रस्वत्वं। यद्वा। वश कांतावित्यस्माद्यङि न वशः। पा० ६.१.२०.। इति संप्रसारणे प्रतिषिद्धे पूर्ववत्प्रक्रिया॥

स सुष्टुभा स स्तुभा सप्त विप्रैः स्वरेणाद्रिं स्वर्यो३ नवग्वैः।
सरण्युभिः फलिगमिंद्र शक्र वलं रवेण दरयो दशग्वैः॥ ४॥
सः। सुऽस्तुभा। सः। स्तुभा। सप्त। विप्रैः। स्वरेण। अद्रिं। स्वर्यः। नवऽग्वैः।
सरण्युऽभिः। फलिऽगं। इंद्र। शक्र। वलं। रवेण। दरयः। दशऽग्वैः॥ ४॥

अंगिरसो द्विविधाः। सत्रयागमनुतिष्ठंतो ये नवभिर्मासैः समाप्य गतास्ते नवग्वाः। नवग्वा नवनीतगतय इति यास्को व्याचख्यौ। नि० ११.१९.। ये तु दशभिर्मासैः समाप्य जग्मुस्ते दशग्वाः। तादृशैरुभयविधैर्विप्रैर्मेधाविभिः सरण्युभिः सरणं शोभनं गतिमिच्छद्भिः सप्त सप्तसंख्याकैः। सप्त ह्यत्र मेधातिथिप्रभृतयोऽंगिरसो दृश्यंते। एवंभूतैरंगिरोभिः सुष्टुभा शोभनस्तोभयुक्तेन स्वरेणोदात्तादिअव्यस्वरोपेतेन। यद्वा। मंद्रमध्यमादिस्वरेण स्तुभा स्तोत्रेण स्वर्यः सुष्ठु प्राप्यः। यद्वा। शब्दनीयः। स्तुत्य इत्यर्थः। हे शक्र शक्तिमन्निंद्र एवंभूतः स त्वमद्रिमादरणीयं। वज्रेण छेत्तव्यमित्यर्थः। फलिगं। प्रतिफलं प्रतिबिंबं। तदस्मिन्नस्तीति फलि स्वच्छमुदकं। तन्नच्छत्याधारत्वेनेति फलिगः। यद्वा। व्रीह्यादि फलं। तदस्मिन्नस्ति भवतीति फलि वृष्टिजलं। तन्नच्छतीति फलिगः। एवभूतं वलं मेघं रवेणात्मीयेन शब्देन दरयः। अभाययः। त्वदीयशब्दश्रवणमात्रेण मेघो बिभेतीत्यर्थः। यद्वा। अद्रिः पर्वतः। अयतेऽस्मिन्पटलादिकमिति। फलिगो मेघः। फलिग उपल इति तन्नामसु पाठात्। वलोऽसुरः। देवा वै वले गाः पर्यपश्यन्। ऐ० ब्रा० ६.२४.। इत्यादावसुरे प्रयुक्तत्वात्। एते त्रयोऽपि त्वदीयशब्दश्रवणमात्रेणाबिभयुरित्यर्थः॥ स इत्येकः पादपूरणः। सुष्टुभा। स्तोभतिः स्तुतिकर्मा। संपदादिलक्षणो भावे क्विप्। शोभनः स्तुप् स्तोभो यस्य। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। उपसर्गात्सुनोतीति षत्वं। स्तुभा। करणभूतस्यापि स्तोत्रस्य स्वव्यापारे कर्तृत्वात् स्तोभति स्तौतीति क्विप्चेति कर्तरि क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं। सप्त। सुपां सुलुगिति भिसो लुक्। स्वर्यः। स्वृ शब्दोपतापयोः। ऋहलोर्ण्यदिति ण्यत्। वृद्ध्यभावश्छांदसः। तित्स्वरित इति स्वरितत्वं। नवग्वैः। नवशब्द उपपदे गमेर्भावे क्विपि गमः क्वावित्यनुनासिकलोप ऊ च गमादीनामिति वक्तव्यं। पा० ६.४.४०.२.। इत्यूकारांतादेशः। नवभिर्गूर्गमनं येषां ते नवग्वाः। अकारोपजनश्छांदसः। यद्वा। गमेर्भावे ड्वप्रत्ययः। पूर्ववद्बहुव्रीहिः। बहुव्रीहौ पूर्वपदप्र[illegible]। सरण्युभिः। सरणमात्मन इच्छंतः सरण्यवः। क्यच्यंत्यलोपश्छांदसः। क्याच्छंदसीत्युः। फलिगं। फल्युदकं गच्छतीति फलिगः। डोऽन्यत्रापि दृश्यते। पा० ३.२.४८.*। इति गमेर्डः। वलं। वृणोतीति वलः। पचाद्यच्। कपिलकादित्वाल्लत्वं। म० ८.२.१८.। दरयः। दॄ विदारणे। वृद्धौ कृतायां दॄ भय इति घटादिषु पाठान्मित्त्वे मितां ह्रस्व इति ह्रस्वत्वं॥

गृणानो अंगिरोभिर्दस्म वि वरुषसा सूर्येण गोभिरंधः।
वि भूम्या अप्रथय इंद्र सानु दिवो रज उपरमस्तभायः॥ ५॥
गृणानः। अंगिरःऽभिः। दस्म। वि। वः। उषसा। सूर्येण। गोभिः। अंधः।
वि। भूम्याः। अप्रथयः। इंद्र। सानु। दिवः। रजः। उपरं। अस्तभायः॥ ५॥

हे दस्म दर्शनीय श[illegible]वैद्र त्वमंगिरोभिर्ऋषिभिर्गृणानः स्तूयमानः सन् उषसा सूर्येण च सह गोभिः किरणैरंधोऽधकारं वि वः। व्यवृणोः। व्यनाशय इत्यर्थः। तथा हे इंद्र त्वं भूम्याः पृथिव्याः सानु समुच्छ्रितप्रदेशं व्यप्रथयः। विशेषेण विस्तीर्णमकरोः। विषमामिमां समीकृतवानित्यर्थः। तथा दिवोऽंतरिक्षस्य रजो रजसो लोकस्योपरमुप्तं मूलप्रदेशमस्तभायः। अस्तभ्नाः। यथांता[illegible] मूलं दृढं भवति

तथाकार्षीरित्यर्थः ॥ गृणानः । कर्मणि लटः शानचि यकि प्राप्ते व्यत्ययेन श्ना । प्वादीनां ह्रस्व इति ह्रस्वत्वं । चित्स्वरेणांतोदात्तत्वं । दस्म । दसु उपक्षये । इषियुधींधिदसीत्यादिना मक् । वः । वृञ् वरणे । लुङि सिपि मंत्रे घसेत्यादिना च्लेर्लुक् । गुणे हल्ङ्याब्भ्य इति सलोपः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । अंधः । तमोऽप्यंध उच्यते नास्मिन्ध्यानं भवति । नि° ५. १. । इति यास्कः । रजः । लोका रजांस्युच्यंत इत्युक्तत्वाद्रजः-शब्दो लोकवचनः । सुपां सुलुगिति षष्ठ्या लुक् । अस्तभायः । लङि स्तंभुस्तुंभ्वित्यादिना । पा° ३. १. ८२. । श्नाप्रत्ययः । छंदसि शायजपि । पा° ३. १. ८४. । इत्यहावपि व्यत्ययेन श्नाप्रत्ययस्य शायजादेशः । अनिदिता-मिति नलोपः । अडागमः ॥ ॥ १ ॥

प्रवर्ग्येऽभिष्टवे तदु प्रयक्षतममित्येषा । अथोत्तरमित्यत्र सूचितं । तदु प्रयक्षतममस्य कर्मात्मन्वन्नभो दुह्यते घृतं पयः । आ° ४. ७. । इति ॥

तदु प्रयक्षतममस्य कर्म दस्मस्य चारुतममस्ति दंसः ।
उपह्वरे यदुपरा अपिन्वन्मध्वर्णसो नद्य१श्चतस्रः ॥ ६ ॥
तत् । ऊं इति । प्रयक्षऽतमं । अस्य । कर्म । दस्मस्य । चारुऽतमं । अस्ति । दंसः ।
उपऽह्वरे । यत् । उपराः । अपिन्वत् । मधुऽअर्णसः । नद्यः । चतस्रः ॥ ६ ॥

दस्मस्य दर्शनीयस्यास्येंद्रस्य तदु तदेव कर्म प्रयक्षतमं । अतिशयेन पूज्यं । दंस इति कर्मनाम । दंसस्तदेव कर्म चारुतमं । अतिशयेन शोभनं । किं तदित्यत आह । अयमिंद्र उपह्वरे उपह्वर्तव्ये गंतव्ये पृथिव्याः संबंधिनि समीपदेश उपरा उप्ताः स्थापिता मध्वर्णसो मधुरोदकास्चतस्रो नद्यः प्रधानभूता गंगादिनदीरपिन्वत् । असिंचदिति । यदेतत्कर्म तदन्येन कर्तुमशक्यत्वात्पूज्यमित्यर्थः ॥ प्रयक्षतमं । यक्ष पूजायां । यक्ष्यत इति यक्षः । अतिशयेन यक्षो यक्षतमः । पुनः प्रादिसमासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं । दंसः । दसि दंसनदर्शनयोः । चुरा-दिरात्मनेपदी । दंस्यते कर्तव्यतया दृश्यत इति दंसः कर्म । औणादिकः कर्मण्यसुन् । उपह्वरे । ह्वृ कौटिल्ये । [illegible] गतिवाचिनात्र गतिमात्रं लक्ष्यते । उपह्वरंति [illegible] इत्युपह्वरो भूप्रदेशः । पुंसि संज्ञायां घः प्रायेणेत्यधिकरणे घप्रत्ययः । गुणः । कृदुत्तरपदप्रकृतिस्वरत्वं । अपिन्वत् । पिवि सेचने । भौवादिकः । चतस्रः । शस् । त्रिचतुरोः स्त्रियां तिसृचतसृ इति चतुर्शब्दस्य चतसृादेश आद्युदात्तो निपातितः । पूर्वस-वर्णदीर्घे प्राप्तेऽचि र ऋत इति रेफादेशः । पा° ७. २. ९९–१००. । चतुर[illegible]स्याद्युदात्तत्वात्स्थानिवद्भावेन चतस्रादेशस्याद्युदात्तत्वे सिद्धेऽपि पुनराद्युदात्तनिपातनसामर्थ्याद्यणादेशस्य वा पूर्वविधौ स्थानिवद्भावाच्चतुरः शसीत्यंतोदात्तत्वस्याभावः । न च न पदांतेति स्थानिवद्भावप्रतिषेधः । स्वरदीर्घयलोपेषु लोपाजादेश एव न स्थानिवत् अन्यत्तु स्थानिवदेव । म° १. १. ५८. । इति नियमात् ॥

द्विता वि वव्रे सनजा सनीळे अयास्यः स्तवमानेभिरर्कैः ।
भगो न मेने परमे व्योमन्नधारयद्रोदसी सुदंसाः ॥ ७ ॥
द्विता । वि । वव्रे । सनऽजा । सनीळे इति सऽनीळे । अयास्यः । स्तवमानेभिः । अर्कैः ।
भगः । न । मेने इति । परमे । विऽओमन् । अधारयत् । रोदसी इति । सुऽदंसाः ॥ ७ ॥

अयास्यः । यासः प्रयत्नः । तत्साध्यो यास्यः । न यास्योऽयास्यः । युद्धरूपैः प्रयत्नैः सा[illegible] इत्यर्थः । कथं साध्यत इत्यत आह । स्तवमानेभिः स्तोत्रं कुर्वद्भिः पुरुषैरर्कैः स्तुतिरूपैर्मंत्रैः स्तूयमानः सन्निंद्रः सुसाध्यो भवति । यद्वा । अयास्यः पंचवृत्तिर्मुख्यप्राणः । स ह्यास्यान्मुखादयते गच्छति निष्क्रामति । तदुपास-कोऽप्यंगिरा उपचारादयास्य उच्यते । तथा च छंदोगैराम्नातं । तं हायास्य उद्गीथमुपासां चक्र एतमु एवा-यास्यं मन्यंत आस्याद्यदयते तेन । छां° उ° १. २. १२. । इति । अथवा । अयमास्ये मुखे वर्तत इत्ययास्यः । तथा च वाजसनेयकं । ते होचुः क्व नु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽंतरिति । शत° ब्रा° १४. ४. १. ९. । इति ।

पूर्ववदुपासकोऽप्ययास्यः। तेन ऋषिणा स्तवमानैर्[illegible]भिधानलक्षणां स्तुतिं कुर्वद्भिरर्कैर्मंत्रैः करणभूतैः स्तूयमानः सन् सनजा। सनेति निपातो नित्यार्थः। नित्यजाते। सर्वदा विद्यमानस्वभावे इत्यर्थः। प्रथमभावविकारवाचिना जनिना द्वितीयो भावविकारः सत्ता लक्ष्यते। यथौत्पत्तिकस्तु शब्दस्यार्थेन संबंध इत्यौत्पत्तिकमिति नित्यं ब्रूम इति हि तद्भाष्यं। सनीळे समानं नीळमोको निवासस्थानं ययोस्ते। संलये इत्यर्थः। एवंविधे द्यावापृथिव्यौ द्विता द्विधा वि वव्रे। विवृते अकरोत्। भेदेनास्थापयदित्यर्थः। मेने मननीये परम उत्कृष्टे व्योमन् विविधरक्षणे नभसि वर्तमानो भगो न सूर्य इव सुदंसाः शोभनकर्मेंद्रो रोदसी द्यावापृथिव्यावधारयत्। अपोषयत्। यद्वा। मेनेति स्त्रीनाम। तथा च यास्कः। मेना ग्ना इति स्त्रीणां मेना मानयंत्येना इति। नि० ३.२१.। स्त्रीरूपमापन्ने रोदसी इंद्रोऽपुष्यदित्यर्थः॥ द्विता। द्विधेत्यस्य धकारस्य तकारश्छांदसः। सनजा। जनी प्रादुर्भावे। अन्यभ्योऽपि दृश्यत इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात् केवलादपि जनेर्डप्रत्ययः। सना नित्यं जो जननं ययोस्ते सनजे। पूर्वपदस्य ह्रस्वश्छांदसः। एवमादित्वादंतोदात्तत्वं। तदेव बहुव्रीहिस्वरेण शिष्यते। सुपां सुलुगिति विभक्तेराकारः। अयास्यः। यसु प्रयत्ने। यासः प्रयत्नः। तत्र भवो यास्यः। भवे छंदसीति यत्। न यास्योऽयास्यः। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। श्रुत्युक्तनिर्वचने तु पृषोदरादित्वादभिमत[illegible]क्षरसिद्धिः। मेने। सप्तम्येकवचनस्य सुपां सुलुगिति शेआदेशः। शे। पा० १.१.१३.। इति प्रगृह्यत्वं। यद्वा। मन्यत इति मेना। पचाद्यच्। नशिमन्योरलिट्येत्वं वक्तव्यं। पा० ६.४.१२०.५.। इत्येत्वं। ततष्टाप्। द्विवचन ईदूदेद्द्विवचनं। पा० १.१.११.। इति प्रगृह्यत्वं। सुदंसाः। दंस इति कर्मवाची। असुन्प्रत्ययांत आद्युदात्तः। बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं॥

सना॒द्दिवं॒ परि॒ भूमा॒ विरू॑पे पुन॒र्भुवा॑ युव॒ती स्वेभि॒रेवैः॑।

कृ॒ष्णेभि॑र॒क्तोषा रुश॑द्भि॒र्वपु॑र्भि॒रा च॑रतो अ॒न्यान्या॑ ॥८॥

स॒नात्। दिव॑म्। परि॑। भूम॑। विरू॑पे॒ इति॒ विऽरू॑पे। पुनः॒ऽभुवा॑। यु॒व॒ती इति॑। स्वेभिः॑। एवैः॑।

कृ॒ष्णेभिः॑। अ॒क्ता। उ॒षाः। रुश॑त्ऽभिः। वपुः॑ऽभिः। आ। च॒र॒तः॒। अ॒न्याऽअ॑न्या ॥८॥

विरूपे शुक्लकृष्णतया विषमरूपे पुनर्भुवा पुनःपुनः प्रतिदिवं संजायमाने युवती तरुण्यौ। रात्र्युषसोः सर्वदैकरूप्यादेवंभूते रात्र्युषसौ दिवं द्युलोकं भूम भूमिं च सनाच्चिरकालादारभ्य स्वेभिरेवैः स्वकीयैर्गमनैः परि चरतः। पर्यावर्तेते। अयमेवार्थः [illegible]। अक्ता रात्रिः कृष्णेभिरंधकाररूपैर्वर्णैरुपलक्षिता उषाश्च रुश[illegible]पुर्भिः स्वशरीरभूतैस्तेजोभिरुपलक्षिता अन्यान्या पर[illegible] चरतः। आवर्तेते। हे इंद्र एतत्सर्वं त्वयैव कार्यते त्वदधीनत्वात्सर्वासां देवतानामित्यर्थः॥ भूम। सुपां सुलुगिति द्वितीयाया डादेशः। छांदसो ह्रस्वः। एवैः। इण् गतौ। इणशीङ्भ्यां वन्। उ० १.१५२.। इति भावे वन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं। अक्ता। नक्तेति रात्रिनाम। नलोपश्छांदसः। वपुर्भिः। अर्तिपृवपीत्यादिना। उ० २.११८.। उस्। नित्त्वादाद्युदात्तः। अन्यान्या। कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलं। म० ८.१.१२.११.। इति द्विर्भावे तस्य परमाम्रेडितमित्याम्रेडितसंज्ञायामनुदात्तं चेत्याम्रेडितस्यानुदात्तत्वं॥

सने॑मि स॒ख्यं स्व॑प॒स्यमा॑नः सू॒नुर्दा॑धार॒ शव॑सा सु॒दंसाः॑।

आ॒मासु॑ चिद्दधिषे प॒क्वम॒न्तः पयः॑ कृ॒ष्णासु॒ रुश॒द्रोहि॑णीषु ॥९॥

सने॑मि। स॒ख्यम्। सु॒ऽअ॒प॒स्यमा॑नः। सू॒नुः। दा॒धा॒र॒। शव॑सा। सु॒ऽदंसाः॑।

आ॒मासु॑। चि॒त्। द॒धि॒षे॒। प॒क्वम्। अ॒न्तरिति॑। पयः॑। कृ॒ष्णासु॑। रुश॑त्। रोहि॑णीषु ॥९॥

स्वपस्यमानः। स्वपः शोभनं कर्म। तदिवाचरन् शवसा शवसो बलस्य सूनुः पुत्रः। अ[illegible] नित्यर्थः। सुदंसाः शोभनयागादिकर्मयुक्तः। एवंभूत इंद्रः सख्यं यजमानानां सखित्वं सनेमि पुराणं दाधार। धारयति।

पोषयतीत्यर्थः । सनेमीति पुराणनाम । प्रवयाः सनेमीति पाठात् । किंचामासु चित् आर्द्रास्वपरिपक्कासु गोषु चांतर्मध्ये पक्कं परिपक्कं पयो दधिषे । धारयसि । तथा कृष्णासु कृष्णवर्णासु रोहिणीषु लोहितवर्णासु च गोषु तद्विपरीतं रुशद्दीप्यमानं श्वेतवर्णं पयो दधिषे ॥ सख्यं । सख्युर्भावः सख्यं । सख्युर्य इति यः । प्रत्ययस्वरः । दाधार । धृञ् धारणे । तुजादित्वादभ्यासस्य दीर्घत्वं । पक्कं । पचो वः । पा॰ ८. २. ५२. । इति निष्ठातकारस्य वत्वं । रोहिणीषु । रुह बीजजन्मनि प्रादुर्भावे । रुहे रश्च लो वा । उ॰ ३. ९४. । इतीतन्प्रत्ययांतो रोहितशब्द आद्युदात्तो वर्णवाची । वर्णादनुदात्तात्तोपधात्तो नः । पा॰ ४. १. ३९. । इति ङीप् । तत्संनियोगेन तकारस्य नकारादेशश्च । ङीपः पित्त्वादनुदात्तत्वे प्रातिपदिकस्वर एव शिष्यते ॥

सनात्सनीळा अवनीरवाता व्रता रक्षंते अमृताः सहोभिः ।
पुरु सहस्रा जनयो न पत्नीर्दुवस्यंति स्वसारो अह्रयाणं ॥ १० ॥

सनात् । सऽनीळाः । अवनीः । अवाताः । व्रता । रक्षंते । अमृताः । सहःऽभिः ।
पुरु । सहस्रा । जनयः । न । पत्नीः । दुवस्यंति । स्वसारः । अह्रयाणं ॥ १० ॥

सनाच्चिरकालादारभ्य सनीळाः समाननिवासस्थाना अवाताः । वातं गमनं । तद्रहिताः । एकपाश्र्वव-स्थानात् । अवनय इत्यंगुलिनाम । एवंभूता अवनीरंगुलयः पुरु पुरूणि बहूनि सहस्रासंख्यातानि व्रता व्रतानींद्रसंबंधीनि कर्माण्यमृताः पुनःपुनःकरणेऽप्यालस्यरहिताः सत्यः सहोभिरात्मीयैर्बलैः रक्षंते । पालयंति । अपि च स्वसारः स्वयमेव सरंत्योऽंगुलयः पत्नीः पालयित्र्योऽह्रयाणं लज्जारहितं । प्रगल्भमित्यर्थः । यद्वा । अह्रीतयानं प्रशस्तगमनमिंद्रं । जनयो न । जनय इति देवानां पत्न्य उच्यंते । देवानां वै पत्नीर्जनय इति श्रुतेः । ता इव दुवस्यंति । परिचरंति । अंजलिबंधनेनेंद्रं प्रीणयंतीत्यर्थः ॥ अवनीः । अवनयोऽंगुलयो भवंत्यवंति कर्माणि । नि॰ ३. ९. । इति यास्कः । सुपां सुलुगिति जसः पूर्वसवर्णदीर्घत्वं । अवाताः । वा गति-गंधनयोः । असिहसीत्यादिना भावे तन्प्रत्ययः । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । व्रता । शेश्छंदसि बहुलमिति शेर्लोपः । दुवस्यंति । दुवस्यतिः परिचरणकर्मा । कंड्वादिः । अतो यक एव स्वरः शिष्यते । पा[illegible]भावः । अह्रयाणं । ह्री लज्जायां । बहुलं छंदसीति श्लोरभावः । व्यत्ययेन शानच् । मुगभावश्छांदसः । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं । यद्वा । बहुलं छंदसीति शपो लुकि च्छंदस्युभयथेति शानच आर्धधातुकत्वेन ङित्त्वाभावे गुणायादेशौ । पूर्ववत्समासस्वरौ । यास्कस्त्वेवं व्याख्यत् । अह्रयाणोऽह्रीतयानः । नि॰ ५. १५. । इति ॥ ॥ २ ॥

सनायुवो नमसा नव्यो अर्कैर्वसूयवो मतयो दस्म दद्रुः ।
पतिं न पत्नीरुशतीरुशंतं स्पृशंति त्वा शवसावन्मनीषाः ॥ ११ ॥

सनाऽयुवः । नमसा । नव्यः । अर्कैः । वसुऽयवः । मतयः । दस्म । दद्रुः ।
पतिं । न । पत्नीः । उशतीः । उशंतं । स्पृशंति । त्वा । शवसाऽवन् । मनीषाः ॥ ११ ॥

हे दस्म दर्शनीयेंद्र अर्कैः शस्त्ररूपैर्मंत्रैर्नमसा नमस्कारेण यस्त्वं नव्यः स्तुत्यो भवसि । सनायुवः सनातन-मग्निहोत्रादि नित्यं कर्मात्मन इच्छंतो वसूयवो वसु धनमात्मन इच्छंतो धनकामा वा मतयो मेधाविनस्त्वां दद्रुः । बहुना प्रयासेन जग्मुः । हे शवसावन् बलवन्निंद्र तैः प्रयुक्ता मनीषाः स्तुतयस्त्वा त्वां स्पृशंति । प्राप्नुवंति । तत्र दृष्टांतः । उशतीरुशत्यः कामयमानाः पत्नीः पत्न्य उशंतं कामयमानं पतिं न । यथा पतिं संभजंते तद्वत् ॥ सनायुवः । सनेत्येतदव्ययं नित्यत्वमाचष्टे । तेन च तद्वान् लक्ष्यते । सना सनातनं कर्मात्मन इच्छंतीति सनायुवः । क्याच्छंदसीत्युप्रत्ययः । जसि वर्णव्यत्ययेनोत्वं । मतयः । मन ज्ञाने । मन्यंत इति मतयः स्तोतारः । क्तिच्क्तौ च संज्ञायामिति क्तिच् । न क्तिचि दीर्घश्चेति निषेधे प्राप्ते बाहुलकादनुदात्तोपदेशेत्या-दिनानुनासिकलोपः । चित्त्वादंतोदात्तत्वं । दद्रुः । द्रा कुत्सायां गतौ । लिट्युस्यातो लोप इटि चेत्याकार-

लोपः । उशतीः । वश कांतौ । लटः शतृ । अदादित्वाच्छपो लुक् । शतुर्ङित्त्वाद्ग्रहिज्यादिना संप्रसारणं । उगितश्चेति ङीप् । शतुरनुम इति नद्या उदात्तत्वं । वा छंदसीति पूर्वसवर्णदीर्घः । शवसावन् । मतुप्याकारोपजनश्छांदसः । यद्वा । मत्वर्थीय आवनिप् ॥

सनादेव तव रायो गभस्तौ न क्षीयंते नोप दस्यंति दस्म ।
द्युमाँ असि क्रतुमाँ इंद्र धीरः शिक्षा शचीवस्तव नः शचीभिः ॥१२॥
सनात् । एव । तव । रायः । गभस्तौ । न । क्षीयंते । न । उप । दस्यंति । दस्म ।
द्युऽमान् । असि । क्रतुऽमान् । इंद्र । धीरः । शिक्ष । शचीऽवः । तव । नः । शचीभिः ॥१२॥

हे दस्म दर्शनीयेंद्र । गभस्तिरिति बाहुनाम । तव गभस्तौ हस्ते सनादेव चिरकालादारभ्य स्थितानि रायो धनानि न क्षीयंते । न विनश्यंति । नोप दस्यंति च । स्तोतृभ्यो दत्तेऽपि त्वद्धस्तगतं धनमुपक्षयं न प्राप्नोति । अपि तु वर्धते । हे इंद्र धीरो बुद्धिमान् धृष्टो वा त्वं द्युमान् दीप्तिमानसि । तथा क्रतुमान् लोकरक्षणहेतुभूतकर्मयुक्तोऽसि । हे शचीवः कर्मवन्निंद्र तव शचीभिस्त्वदीयैः कर्मभिर्नोऽस्मभ्यं धनं शिक्ष । देहि । शिक्षतिर्दानकर्मा ॥ क्षीयंते । क्षीञ् हिंसायां । अस्मात्कर्मकर्तरि कर्मवद्भावाद्यगात्मनेपदे । यत्कारणं चाश्रयमापे यथा स्यादिति कर्तृवद्भावादचः कर्तृयकि । पा॰ ६. १. १९५. । इत्याद्युदात्तत्वं । चादिलोपे विभाषेति निघातप्रतिषेधः । शचीवः । शच्यस्यास्तीति शचीवान् । छंदसीर इति मतुपो वत्वं । संबुद्धौ मतुवसो रुरिति नकारस्य रुत्वं ॥

सनायते गोतम इंद्र नव्यमतक्षद्ब्रह्म हरियोजनाय ।
सुनीथाय नः शवसान नोधाः प्रातर्मक्षू धियावसुर्जगम्यात् ॥१३॥
सनाऽयते । गोतमः । इंद्र । नव्यं । अतक्षत् । ब्रह्म । हरिऽयोजनाय ।
सुऽनीथाय । नः । शवसान । नोधाः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥१३॥

स इंद्रः सनायते । नित्य इवाचरति । सर्वेषामाद्यो भवति । हे शवसान बलवन्निंद्र ह[illegible] । हरी अश्वौ रथे योजयतीति हरियोजनः । सुनीथाय सुष्ठु नेत्रे । एवंभूताय तस्मै तुभ्यं गोतमो गोतमस्य ऋषेः पुत्रो नोधा ऋषिर्नव्यं नूतनं ब्रह्मेतत्सूक्तरूपं स्तोत्रं नोऽस्मदर्थमतक्षत् । अकरोत् । अतोऽस्माभिरनेन स्तोत्रेण स्तुतः सन्धिया बुद्ध्या कर्मणा वा प्राप्तवसुरिंद्रः प्रातःकाले मक्षु शीघ्रं जगम्यात् । आगच्छतु ॥ सनायते । सनेति निपातो नित्यशब्दसमानार्थः । तस्मादाचारार्थे क्यङ्प्रत्ययः । सुनीथाय । णीञ् प्रापण इत्यस्मादौणादिकस्थक्प्रत्ययः । थाथादिस्वरः ॥ ॥३॥

त्वं महानिति नवर्चं षष्ठं सूक्तं । नोधस आर्षं त्रैष्टुभमैंद्रं । अनुक्रम्यते च । त्वं नवेति ॥ समूळ्हे दशरात्रे द्वितीये छंदोमे मरुत्वतीये शस्त्र एतत्सूक्तं । विश्वजितोऽग्निं नर इति खंडे सूचितं । तां सु ते कीर्तिं त्वं महाँ इंद्र यो ह । आ॰ ८. ७. । इति ॥

त्वं महाँ इंद्र यो ह शुष्मैर्द्यावा जज्ञानः पृथिवी अमे धाः ।
यद्ध ते विश्वा गिरयश्चिदभ्वा भिया दृळ्हासः किरणा नैजन् ॥१॥
त्वं । महान् । इंद्र । यः । ह । शुष्मैः । द्यावा । जज्ञानः । पृथिवी इति । अमे । धाः ।
यत् । ह । ते । विश्वा । गिरयः । चित् । अभ्वा । भिया । दृळ्हासः । किरणाः । न । ऐजन् ॥१॥

हे इंद्र त्वं महान् गुणैः सर्वाधिको भवसि। यो ह यः खलु त्वममेऽसुरकृते भये सति जज्ञानस्तदानीमेव प्रादुर्भूतः सन् शुष्मैः शत्रूणां शोषकैरात्मीयैर्बलैर्द्यावापृथिवी द्यावापृथिव्यौ धाः। अधारयः। तादृशान्भया-दमूमुच इत्यर्थः। किंच। यद्ध ते यस्य खलु तव संबंधिन्या भिया भीत्या विश्वा विश्वानि व्याप्तानि यानि भूतजातानि गिरयश्चित् ये च शिलोच्चयाः। अभ्वा। महन्नामैतत्। अन्यान्यपि महांति यानि संति। तेऽपि सर्वे दृळ्हासो दृढा अरेजन्। अकंपिषत। तत्र दृष्टांतः। किरणा न। यथा सूर्यरश्मय इतस्ततो नभसि कंपंते तद्वत्॥ जज्ञानः। जनी प्रादुर्भावे। लिटः कानच्। गमहनेत्यादिनोपधालोपः। स्थानिवद्भावाद्द्विर्भावादि। चित इत्यंतोदात्तत्वं। द्यावापृथिवी इत्यस्य समस्तपदस्य मध्ये जज्ञान इत्यस्य पाठश्छांदसः। यत्। सुपां सुलुगिति षष्ठ्या लुक्। अभ्वा। आ समंताद्भवंति सद्भावं प्राप्नुवंतीत्यभ्वा महांतः। आङ्पूर्वाद्भवतेरौणादिको ड्वन्प्रत्ययः। उपसर्गस्य ह्रस्वत्वं च। यद्वा। नञ्पूर्वाद्भवतेः प्राप्त्यर्थान्नञि भुवो डिदिति क्वन्प्रत्ययः। महांतो हि प्राप्तुं न शक्यंते। शेश्छंदसि बहुलमिति शेर्लोपः। किरणाः। कीर्यंते विक्षिप्यंत इति किरणाः। कॄ विक्षेपे। कॄपॄवृजिमंदिनिधाञ्भ्यः क्युः। उ० २. ८१.। इति क्युप्रत्ययः। योरनादेशे प्रत्ययाद्युदात्तत्वं। ऋत इद्धातोरि-तीत्वं। ऐजन्। एजृ कंपने। लङ्याडागमः। स चोदात्तः। वृद्धिश्च॥

**आ यद्धरी इंद्र विव्रता वेरा ते वज्रं जरिता बाह्वोर्धात्।**
**येनाविहर्यतक्रतो अमित्रान्पुर इष्णासि पुरुहूत पूर्वीः॥२॥**
**आ। यत्। हरी इति। इंद्र। विऽव्रता। वेः। आ। ते। वज्रं। जरिता। बाह्वोः। धात्।**
**येन। अविहर्यतक्रतो इत्यविहर्यतऽक्रतो। अमित्रान्। पुरः। इष्णासि। पुरुऽहूत। पूर्वीः॥२॥**

हे इंद्र त्वं यद्यदा विव्रता विविधकर्माणौ हरी त्वदीयावश्वावा वेः रथ आगमयसि। रथे योजयसीत्यर्थः। तदानीं ते तव बाह्वोर्हस्तयोर्जरिता स्तोता वज्रमा धात्। स्तोत्रेण स्थापयति। स्तोत्रा स्तुतिं प्रयत्नमंतरेण वज्रं त्वद्धस्ते दृश्यत इत्यर्थः। हे अविहर्यतक्रतो प्रेप्सितकर्मन्निंद्र अमित्रान् शत्रून्येन वज्रेणेष्णासि अभिगच्छसि। हे पुरुहूत पुरुभिर्बहुभिर्यजमानैराहूत त्वं पूर्वीर्बह्वीः पुरोऽसुरपुराणि भेत्तुमभिगच्छसीत्यर्थः॥ विव्रता। व्रतमिति कर्मनाम। विविधं व्रतं ययोस्तौ। सुपां सुलुगिति पूर्वसवर्णदीर्घत्वं। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। वेः। वी गतिप्रजनकांत्यशनखादनेषु। अंतर्भावितण्यर्थाच्छांदसे लङि सिप्यदादित्वाच्छपो लुक्। बहुलं छंदस्यमाङ्योगे ऽपीत्यडभावः। धात्। दधातेश्छांदसे लुङि गातिस्थेति सिचो लुक्। पूर्ववदडभावः। अविहर्यतक्रतो। हर्यतिः प्रेप्साकर्मेति यास्कः। नि० ७. १७.। हर्य गतिकांत्योः। कांतिरभिलाषः। विहर्यतोऽनभिलषितः। अविहर्यतो ऽभिलषित इत्यर्थः। तादृशः क्रतुः कर्म यस्य स तथोक्तः। अमित्रान्। न संति मित्राण्येष्विति बहुव्रीहौ नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं। इष्णासि। इष आभीक्ष्ण्ये। अत्र गत्यर्थः। क्र्यादिभ्यः श्ना। सिपः पित्त्वादनुदात्तत्वे तस्यैव स्वरः शिष्यते। यद्वृत्तयोगादनिघातः॥

**त्वं सत्य इंद्र धृष्णुरेतान्त्वमृभुक्षा नर्यस्त्वं षाट्।**
**त्वं शुष्णं वृजने पृक्ष आणौ यूने कुत्साय द्युमते सचाहन्॥३॥**
**त्वं। सत्यः। इंद्र। धृष्णुः। एतान्। त्वं। ऋभुक्षाः। नर्यः। त्वं। षाट्।**
**त्वं। शुष्णं। वृजने। पृक्षे। आणौ। यूने। कुत्साय। द्युऽमते। सचा। अहन्॥३॥**

हे इंद्र त्वं सत्यः सत्सु भवः। सर्वोत्कृष्ट इत्यर्थः। एतान् शत्रूनभिगत. सन् धृष्णुस्तेषां धर्षयिता तिरस्कर्ता। किंच त्वमृभुक्षा ऋभूणामधिपतिः। तेषु कृतनिवासो वा। यद्वा। महन्नामैतत्। महान्प्रवृद्धोऽसि। नर्यो नृभ्यो हितः। तथा त्वं षाट् शत्रूणामभिभविता। हंतेत्यर्थः। किंच। वृजन इत्यादीनि त्रीणि संग्रामनामानि। अत्र पूर्वे विशेषणे। वृजने वर्जनयुक्ते। संग्रामे हि वीराः पुरुषा वर्ज्यंते हिंस्यंते। पृक्षे संपर्चनीये वीर्यैर्योद्धुं प्राप्तव्ये।

एवंविध आणौ संग्रामे द्युमति दीप्तिमति यूने तरुणाय कुत्साय सचा त्वं सहायो भूत्वा शुष्णं शोषयितारमेतत्संज्ञमसुरमहन्। अवधीः॥ ऋभुक्षाः। ऋभुरिति मेधाविनाम। उरु विस्तीर्णं भाति। यद्वा। ऋतेन यज्ञेन भाति भवतीति वा ऋभुः। उरुशब्दे ऋतशब्दे वोपपदे भातेर्भवतेर्वा मृगय्वादयश्च। उ० १.३८.। इति कुप्रत्ययः पूर्वपदस्य ऋभावश्च निपात्यते। चयतिरैश्वर्यकर्मा। तेषामीष्ट इत्यृभुक्षाः। यद्वा। क्षि निवासगत्योः। तेषु निवसतीति पतेश्च। उ० ४.१२.। इति विधीयमान इनिप्रत्ययो बहुलवचनादस्मादपि भवति। टिलोपश्च। सौ पथिमथ्यृभुक्षामात्। पा० ७.१.८५.। इत्यात्वं। प्रत्ययस्वरः। षाट्। सह अभिभवे। छंदसि सह इति केवलादपि ण्विः। षत्वं छांदसं। द्युमति। द्यौर्दीप्तिरस्मिन्नस्तीति द्युमान्। स्वादिष्वसर्वनामस्थान इति पदसंज्ञायां दिव उदित्युत्वं। ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं॥

त्वं ह॒ त्यदि॑न्द्र॒ चोदीः॒ सखा॑ वृ॒त्रं यद्व॑ज्रिन्वृषकर्मन्नु॒भ्नाः।
यद्ध॑ शूर वृषमणः परा॒चैर्वि दस्यूँ॒र्योना॒वकृ॑तो वृथा॒षाट्॥४॥
त्वं। ह॒। त्यत्। इ॒न्द्र॒। चोदीः॑। सखा॑। वृ॒त्रं। यत्। व॒ज्रि॒न्। वृ॒ष॒ऽक॒र्म॒न्। उ॒भ्नाः।
यत्। ह॒। शू॒र॒। वृ॒ष॒ऽम॒नः॒। प॒रा॒चैः। वि। दस्यू॑न्। योनौ॑। अकृ॑तः। वृ॒था॒षाट्॥४॥

हे इंद्र त्वं ह त्वं खलु सखा कुत्सस्य सहायः सन् त्यत्तत्प्रसिद्धं धनं जयलक्षणं यशो वा चोदीः। प्रेरितवान्। अकार्षीरित्यर्थः। हे वृषकर्मन् वृष्ट्युदकसेचनरूपकर्मोपेत वज्रिन् वज्रवन्निंद्र वृत्रं सर्वस्य धनस्यावरीतारं कुत्सस्य शत्रुं यद्यदोभ्नाः अतुभ्नाः अहिंसीः। अपि च हे शूर शत्रूणां प्रेरक वृषमणः कामाभिवर्षकमनस्केंद्र वृथाषाट् अनायासेन शत्रूणामभिभविता त्वं यद्ध यदा खलु योनौ वीरैर्मिश्रणीये संग्रामे दस्यून्कुत्सस्योपक्षयितॄनन्यान् शत्रून्पराचैः परागमनैर्व्यक्षतः पराङ्मुखा यथा भवंति तथा व्यच्छिनः। तदानीं कुत्सः सर्वं यशः प्राप्नोदित्यर्थः॥ चोदीः। चुद प्रेरणे। लुङि नेटीति सिचि वृद्धिप्रतिषेधः। उभ्नाः। णभ तुभ हिंसायां। क्रैयादिकः। लङि सिपि तलोपश्छांदसः। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। पराचैरित्येतदव्ययं। नीचैरुच्चैरितिवदिति भट्टभास्करमिश्रः। पराचैः परांचनैरिति निरुक्तं। नि० ११.२५.। दस्यून्। दीर्घादटि समानपाद इति नकारस्य रुत्वं। अत्रानुनासिकः पूर्वस्य तु वेत्यूकारस्य सानुनासिकता। अकृतः। कृती छेदने लङि सिपि तुदादिभ्यः शः। आगमानुशासनस्यानित्यत्वात् शे मुचादीनामिति नुमागमस्याभावः शस्य ङित्त्वाद्गुणाभावः॥

त्वं ह॒ त्यदि॑न्द्रारिषण्यन्दृ॒ळ्हस्य॑ चि॒न्मर्ता॑नामजु॑ष्टौ।
व्य१॒॑स्मदा काष्ठा॒ अर्व॑ते वर्घ॒नेव॑ वज्रिञ्छ्नथिह्य॒मित्रा॑न्॥५॥
त्वं। ह॒। त्यत्। इ॒न्द्र॒। अरि॑षण्यन्। दृ॒ळ्हस्य॑। चि॒त्। मर्ता॑नां। अजु॑ष्टौ।
वि। अ॒स्मत्। आ। काष्ठाः॑। अर्व॑ते। वः॒। घ॒नाऽइ॑व। व॒ज्रि॒न्। श्न॒थि॒हि॒। अ॒मित्रा॑न्॥५॥

हे इंद्र त्वं ह त्वं खलु त्यत् तस्य दृळ्हस्य चित् दृढस्य कस्यचिदप्यरिषण्यन् रेषणमनिच्छन् एवंस्वभावो भवसि। देवतात्वेनानुग्राहकत्वात्। तथापि मर्तानां स्तोतॄणामस्माकं शत्रुभिरजुष्टावप्रीतौ सत्यामस्मदर्वतेऽस्मदीयायाश्वाय गंतुं काष्ठा दिश आ समंतात् वि वः। विवृताः कुरु। यथा सर्वासु दिक्ष्वस्मदीया अश्वाः प्रतिरोधमंतरेण गच्छंति तथा कुर्वित्यर्थः। किंच तत्रत्यानमित्रान् हे वज्रिन्वज्रवन्निंद्र घनेव घनेन कठिनेन पर्वतेनेव वज्रेण श्नथिहि। श्नथय। जहीत्यर्थः। यद्वा। मर्तानां मनुष्याणां मध्ये यस्मिन्कस्मिंश्चित्त्वय्यप्रीतौ सत्यां तस्य शत्रोर्दृढस्याप्यरिषण्यन् रेषणं हिंसनमनिच्छन्वर्तसे। यस्मिंस्तु कुत्सादौ प्रीतिरस्ति तस्य शत्रुवधं चकर्षे। अतस्तव प्रियाणामस्माकमर्वत इत्यादि पूर्ववत्॥ त्यत्। सुपां सुलुगिति षष्ठ्या लुक्। अरिषण्यन्। रिष्टशब्दात् क्यचि दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति। पा० ७.४.३६.। इति रिषणभावो निपात्यते। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं। अस्मत्। पूर्ववत् षष्ठ्या लुक्। अर्वते। अर्वणस्त्रसावनञ इति नकारस्य तकारादेशः। वनि-

सुपौ पित्त्वादनुदात्तौ। परिशेषाद्धातुस्वरः। घनेव। मूर्तौ घनः। पा० ३. ३. ७७.। इति काठिन्ये गम्यमाने हंतेरप्प्रत्ययांतो निपात्यते। अथिहि। अथ हिंसार्थः। णयंताल्लोटि बहुलं छंदसीति शपो लुक्॥ ॥४॥

त्वां ह त्यदिंद्रार्णसातौ स्वर्मीळ्हे नर आजा हवंते।
तव स्वधाव इयमा समर्य ऊतिर्वाजेष्वतसाय्या भूत् ॥६॥
त्वां। ह। त्यत्। इंद्र। अर्णऽसातौ। स्वःऽमीळ्हे। नरः। आजा। हवंते।
तव। स्वधाऽवः। इयं। आ। सऽमर्ये। ऊतिः। वाजेषु। अतसाय्या। भूत् ॥६॥

हे इंद्र अर्णसातावर्णानां गंतॄणां युद्धे प्रवृत्तानां पुरुषाणां सातिर्लाभो यस्मिन् स्वर्मीळ्हे। मीळ्हमिति धननाम। सुष्ठुरणीयं धनं यस्मिन्। एवंभूत आजा आजौ संग्रामे त्यत्तं प्रसिद्धं त्वामेव नरो योद्धुकामाः पुरुषाः सहायार्थं हवंते। आह्वयंति। यद्वा। अर्णस उदकस्य सातिर्लाभो यस्मिन्वृत्रादियुद्धे तस्मिन्नित्यर्थः। वृष्टिनिरोधकेन वृत्रेण सह वर्षणार्थं तव यद्युद्धं तत्र स्तोतारस्त्वां प्रोत्साहयंतीति भावः। यस्मादेवं तस्मात् हे स्वधावो हे अन्नवन् बलवन्विंद्र समर्ये संग्रामे तव संबंधिनीयमूतिस्त्वदीयमिदं रक्षणं आ अस्मदाभिमुख्येन भूत्। भवतु। वाजेषु संग्रामेषु यैषोतिरतसाय्या योद्धृभिः प्राप्तव्या भवति॥ त्यत्। सुपां सुलुगिति द्वितीयाया लुक्। अर्णसातौ। ऋ गतौ। बहुलवचनादौणादिको नप्रत्ययः। षणु दान इत्यस्माद्भावे क्तिनि जनसनख-नामित्यनुनासिकस्यात्वं। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। यद्वा। उदके नुट्च। उ० ४. १९६.। इत्यर्तेरसुन्प्रत्ययो नुडागमश्च। पीवोपवसनादीनां छंदसि लोपो वक्तव्यः। म० ६. ३. १०९. ६.। इति सलोपः। नित्त्वादाद्युदात्तत्वं। पूर्ववद्बहुव्रीहिस्वरः। स्वर्मीळ्हे। स्वरशब्दो न्यङ्स्वरौ स्वरिताविति स्वरितः। बहुव्रीहिस्वरेण स एव शिष्यते। आजा। सुपां सुलुगिति सप्तम्या डादेशः। स्वधावः। मतुवसो रुरिति मतुपो रुत्वं। अतसाय्या। अत सातत्यगमने। औणादिकः साय्यप्रत्ययः। तस्याडागमश्च। आगमानुदात्तत्वे प्रत्ययाद्युदात्तत्वं। भूत्। छंदसि लुङ्लङ्लिट इति प्रार्थनायां लुङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः॥

त्वं ह त्यदिंद्र सप्त युध्यन्पुरो वज्रिन्पुरुकुत्साय दर्दः।
बर्हिर्न यत्सुदासे वृथा वर्गंहो राजन्वरिवः पूरवे कः ॥७॥
त्वं। ह। त्यत्। इंद्र। सप्त। युध्यन्। पुरः। वज्रिन्। पुरुऽकुत्साय। दर्दरिति दर्दः।
बर्हिः। न। यत्। सुऽदासे। वृथा। वर्क्। अंहोः। राजन्। वरिवः। पूरवे।
करिति कः ॥७॥

हे वज्रिन् वज्रवन्निंद्र पुरुकुत्सायैतत्संज्ञाय ऋषये युध्यन् तदीयशत्रुभिः सह युद्धं कुर्वाणस्त्वमेव त्यत् ताः सप्त पुरः तदीयानि सप्तसंख्यानि नगराणि दर्दः। व्यदारयः। अभैत्सीरित्यर्थः। अपि च सुदास एतत्संज्ञाय राज्ञेऽंहोरेतत्संज्ञस्यासुरस्य संबंधि यद्धनमस्ति तद्वृथानायासेन बर्हिर्न बर्हिरिव वर्क्। अवृणक्। अच्छिन इत्यर्थः। तदनंतरं पूरवे त्वां हविषा पूरयते तस्मै सुदासे हे राजन् स्वामिन्निंद्र वरिवो धनं कः। अकार्षीः॥ त्यत्। सुपां सुलुगिति विभक्तेर्लुक्। दर्दः। दॄ विदारणे। अस्माद्यङ्लुगंताल्लङि सिप्यदादिवच्चेति वचनाच्छपो लुक्। हल्ङ्याब्भ्य इति सलोपः। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। सुदासे। शोभनं ददातीति सुदाः। असुन्। सुदाः कल्याणदानः। नि० २. २४.। इति यास्कः। वर्क्। वृजी वर्जने। लङि सिपि बहुलं छंदसीति विकरणस्य लुक्। लघूपधगुणे पूर्ववत्सलोपः। अडभावश्च। चोः कुरिति कुत्वं। कः। डुकृञ् करणे। लुङि सिपि मंत्रे घसेति च्लेर्लुक्। पूर्ववत्सलोपाडभावौ॥

त्वं त्यां न इंद्र देव चित्रामिषमापो न पीपयः परिज्मन्।
यया शूर प्रत्यस्मभ्यं यंसि त्मनमूर्जं न विश्वध क्षरध्यै ॥८॥

त्वं । त्यां । नः । इंद्र । देव । चित्रां । इषं । आपः । न । पीपयः । परिऽज्मन् ।
यया । शूर । प्रति । अस्मभ्यं । यंसि । त्मनं । ऊर्जं । न । विश्वध । क्षरध्यै ॥ ८ ॥

हे देव द्योतमानेंद्र त्वं नोऽस्माकं चित्रां चायनीयां त्यां तामिषमन्नं परिज्मन् परितो व्याप्तायां भूमौ पीपयः । प्रावर्धयः । यथा सर्वा भूमिरन्नेन परिपूर्णा भवति तथा कुर्वित्यर्थः । तत्र दृष्टांतः । आपो न । यथापो वृष्ट्युदकानि भूम्यां वर्षणेन प्रवर्धयसि तद्वत् । यद्वा । भूमौ वर्तमानानस्मान्यथापः पाययसि तद्वच्चित्रामिषमपि पाययेति भावः । हे शूरेंद्र ययेषा त्मनमात्मानं जीवमस्मभ्यं प्रति यंसि । प्रयच्छसि । तत्र दृष्टांतः । विश्वध विश्वतः सर्वतः क्षरध्यै क्षरितुमूर्जं न उदकमिव । यथास्मभ्यं बहुलमुदकं प्रयच्छसि तद्वत्प्राणधारणरूपं जीवनमपि प्रयच्छसीति भावः ॥ आपः । शसि प्राप्ते व्यत्ययेन जस् । अप्तृन्नित्यादिना दीर्घः । पीपयः । स्फायी ओप्यायी वृद्धौ । ण्यंताच्छांदसे लुङि प्यायः पी । पा० ६. १. २८. । इति व्यत्ययेन पीभावः । णिश्रिद्रुस्रुभ्य इति च्लेश्चङादेशः । णिलोपादीनि । यद्वा । पीङ् पान इत्यस्माल्लुङि चङि पूर्ववत् । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । परिज्मन् । जमतिर्गतिकर्मा । अज गतिक्षेपणयोः । आभ्यां परिपूर्वाभ्यां श्वन्नुक्षन्नित्यादौ कनिन्प्रत्ययांतो निपातितः । सुपां सुलुगिति सप्तम्या लुक् । यंसि । यम उपरमे । बहुलं छंदसीति शपो लुक् । त्मनं । आङोऽन्यत्रापि च्छंदसि दृश्यते । का० ६. ४. १४१. १. । इत्यात्मन आकारलोपः । संज्ञापूर्वकस्य विधेरनित्यत्वादुपधादीर्घाभावः । विश्वध । विश्वशब्दात्तसिलः सकारलोपो धत्वं च पृषोदरादित्वात् । क्षरध्यै । क्षर संचलने । तुमर्थे सेसेनित्यध्यैन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं ॥

अकारि त इंद्र गोतमेभिर्ब्रह्माण्योक्ता नमसा हरिभ्यां ।
सुपेशसं वाजमा भरा नः प्रातर्मक्षू धियावसुर्जगम्यात् ॥ ९ ॥
अकारि । ते । इंद्र । गोतमेभिः । ब्रह्माणि । आऽउक्ता । नमसा । हरिऽभ्यां ।
सुऽपेशसं । वाजं । आ । भर । नः । प्रातः । मक्षु । धियाऽवसुः । जगम्यात् ॥ ९ ॥

हे इंद्र ते तव गोतमेभिर्गोतमैरेतत्संज्ञैर्ऋषिभिरकारि । स्तोत्रं कृतमित्यर्थः । एतदेव स्पष्टीकरोति । ब्रह्माणि मंत्रजातानि नमसा हविर्लक्षणेनान्नेन सह हरिभ्यामश्वाभ्यां युक्ताय तुभ्यमोक्ता । आभिमुख्येनोक्तानि । यद्वा । मर्यादायामाकारः । यथाशास्त्रं प्रयुक्तानि । स त्वं सुपेशसं । पेश इति रूपनाम । बहुविधरूपयुक्तं वाजमन्नं नोऽस्मभ्यमा भर । आहर । देहीति यावत् । धिया बुद्ध्या कर्मणा वा प्राप्तधन इंद्रः प्रातःकालेऽस्मद्रक्षणार्थं जगम्यात् । आगच्छतु ॥ ओक्ता । शेश्छंदसि बहुलमिति शेर्लोपः । सुपेशसं । पिश अवयवे । असुन् । बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं । भर । हृग्रहोर्भ इति भत्वं । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः ॥ ॥ ५ ॥

वृष्णे शर्धायेति पंचदशर्चं सप्तमं सूक्तं । नोधस आर्षं मारुतं । अंत्या त्रिष्टुप् । शिष्टाश्चतुर्दश जगत्यः । तथा चानुक्रांतं । वृष्णे पंचोना मारुतं त्रिष्टुबंतमिति ॥ चातुर्विंशिकेऽहन्याग्निमारुत इदं मारुतं निविद्धानीयं । सूत्रितं च । पृक्षस्य वृष्णो वृष्णे शर्धाय यज्ञेन वर्धतेत्याग्निमारुतं । आ० ७. ४. । इति ॥ आभिप्लविके पंचमेऽहन्यप्येतदाग्निमारुते मारुतनिविद्धानं । सूत्रितं च । पृक्षस्य वृष्णो वृष्णे शर्धाय नु चित्सहोजा इत्याग्निमारुतं । आ० ७. ७. । इति ॥

वृष्णे शर्धाय सुमखाय वेधसे नोधः सुवृक्तिं प्र भरा मरुद्भ्यः ।
अपो न धीरो मनसा सुहस्त्यो गिरः समंजे विदथेष्वाभुवः ॥ १ ॥
वृष्णे । शर्धाय । सुऽमखाय । वेधसे । नोधः । सुऽवृक्तिं । प्र । भर । मरुत्ऽभ्यः ।
अपः । न । धीरः । मनसा । सुऽहस्त्यः । गिरः । सं । अंजे । विदथेषु । आऽभुवः ॥ १ ॥

अत्र पूर्वार्धेन स्तुतौ नोधाः प्रेर्यते । हे नोधो वृष्णे कामानां वर्षित्रे सुमखाय शोभनयज्ञाय वेधसे पुष्पफलादीनां कर्त्रे । वायौ सति हि पुष्पाणि फलानि चोत्पद्यंते । एवंविधाय मरुद्भ्यः । विभक्तिव्यत्ययः । मरुतां मितराविणां शर्धाय समूहाय सुवृक्तिं सुष्ठावर्जकं सुष्ठु प्रवृत्तं वा स्तोत्रं प्र भर । प्रेरय । स्तुहीति यावत् । स्तुतौ प्रेरितो नोधा आह । धीरो धीमान् सुहस्त्यः शोभनांगुलियुक्तः । कृतांजलिरित्यर्थः । एवंभूतोऽहं मनसा गिरः स्तुतिलक्षणा वाचः समंजे । सम्यग्व्यक्ताः करोमि । या गिरो विदथेषु यज्ञेष्वाभुवः । आङ् मर्यादायां । यथाशास्त्रं प्रयुक्ता भवंतीत्याभुवः । देवताभिमुखीकरणाय समर्थाः । यज्ञयोग्यैः स्तोत्रैर्मनःपूर्वकं मरुद्गणं स्तौमीति भावः । तत्र दृष्टांतः । अपो न । यथा पर्जन्यो युगपदेव बहुषु प्रदेशेषु बहुशो जलानि वर्षति तद्वत् ॥ वृष्णे । वृषु सेचने । कनिन्युवृषितक्षीत्यादिना कनिन्प्रत्ययः । कित्त्वाद्गुणाभावो नित्त्वादाद्युदात्तत्वं । चतुर्थ्येकवचनेऽल्लोपोऽन इत्यकारलोपः । शर्धाय । शृधु प्रसहने । शर्ध्यते प्रसह्यतेऽनेन पर्वतादिकमिति शर्धो मरुत्संघः । करणे घञ् । ञित्त्वादाद्युदात्तत्वं । सुमखाय । शोभनो मखो यस्य । नञ्सुभ्यामिति प्राप्ते व्यत्ययेन पूर्वपदप्रकृतिस्वरत्वं । नोधः । पादादित्वात् षाष्ठिकमामंत्रिताद्युदात्तत्वं । सुहस्त्यः । हस्ते भवा हस्त्याः । भवे छंदसीति यत् । यतोऽनाव इत्याद्युदात्तत्वं । ततः सुशब्देन बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं ॥

ते ज॑ज्ञिरे दि॒व ऋ॒ष्वास॑ उ॒क्षणो॑ रु॒द्रस्य॒ मर्या॒ असु॑रा अ॒रे॒पसः॑ ।
पा॒व॒कासः॒ शुच॑यः॒ सूर्या॑ इव॒ सत्वा॑नो॒ न द्र॒प्सिनो॑ घो॒रव॑र्पसः ॥२॥
ते । ज॒ज्ञि॒रे॒ । दि॒वः । ऋ॒ष्वासः॑ । उ॒क्षणः॑ । रु॒द्रस्य॑ । मर्याः॑ । असु॑राः । अ॒रे॒पसः॑ ।
पा॒व॒कासः॑ । शुच॑यः । सूर्याः॑ऽइव । सत्वा॑नः । न । द्र॒प्सिनः॑ । घो॒रऽव॑र्पसः ॥२॥

ते मरुतो दिवोऽंतरिक्षाज्जज्ञिरे । प्रादुर्बभूवुः । कीदृशाः । ऋष्वासो दर्शनीयाः उक्षणः सेक्तारः । युवान इत्यर्थः । रुद्रस्य मर्याः । मर्यशब्दो मनुष्यवाचीह मरुतां मर्त्यत्वासंभवात्पुत्रा इत्यस्मिन्नर्थे पर्यवस्यति । मरुतां रुद्रपुत्रत्वं च मंत्रांतरे स्पष्टं । आ ते पितर्मरुतां सुम्नमेतु । ऋग्वे॰ २. ३३. १ । इति । असुराः शत्रूणां निरसितारः अरेपसः । रेप इति पापनाम । पापरहिताः पावकासः सर्वेषां शोधकाः सूर्या इव शुचयो दीप्ताः सत्वानो न यथा परमेश्वरस्य भूतगणा अतिशयेन बलपराक्रमाः । तत्सदृशा इत्यर्थः । सत्वान इति भूतगणा उच्यंते । अथो ये अस्य सत्वानः । तै॰ सं॰ ४. ५. १. ३. । इत्यादौ तथा दर्शनात् । द्रप्सिनो वृष्ट्युदकबिंदुभिर्युक्ताः । मरुतः सृष्टां वृष्टिं नयंतीति श्रुतेः । तै॰ सं॰ २. ४. १०. २. । घोरवर्पसः । वर्प इति रूपनाम । घोररूपाः । शत्रूणां भयंकररूपा इत्यर्थः । यद्वा । सत्वानो न घोरवर्पसः । यथा भूतगणा भयंकररूपास्तद्वदेतेऽपीत्यर्थः ॥ ऋष्वासः । ऋषी गतौ । गत्यर्था बुद्ध्यर्था इत्यत्र ज्ञानार्थः । सर्वनिघृष्वेत्यादौ । उ॰ १. १५३. । वप्रत्ययांतो निपातितः । आज्जसेरसुक् । उक्षणः । वा षपूर्वस्य निगम इत्युपधादीर्घाभावः । अरेपसः । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । सत्वानः । षद्लृ विशरणगत्यवसादनेषु । प्र ईरसद्योस्तुट् । उ॰ ४. ११६. । इति विधीयमानः क्वनिप्प्रत्ययो बहुलवचनात्केवलादपि भवति । प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते ॥

युवा॑नो रु॒द्रा अ॒जरा॑ अभो॒ग्घनो॑ ववक्षु॒रध्रि॑गावः॒ पर्व॑ता इव ।
दृ॒ळ्हा चि॒द्विश्वा॒ भुव॑नानि॒ पार्थि॑वा॒ प्र च्या॑वयंति दि॒व्यानि॑ म॒ज्मना॑ ॥३॥
युवा॑नः । रु॒द्राः । अ॒जराः॑ । अ॒भो॒क्ऽहनः॑ । व॒व॒क्षुः॒ । अध्रि॑ऽगावः । पर्व॑ताःऽइव ।
दृ॒ळ्हा । चि॒त् । विश्वा॑ । भुव॑नानि । पार्थि॑वा । प्र । च्य॒व॒यं॒ति॒ । दि॒व्यानि॑ । म॒ज्मना॑ ॥३॥

युवानस्तरुणा रुद्रा रुद्रपुत्रा अजरा जरारहिता अभोग्घनो ये देवान्हविर्भिर्न भोजयंति तेषां हंतारः अध्रिगावोऽधृतगमनाः परैरप्रतिहतगतयः पर्वता इव दृढांगाः एवंभूता मरुतो ववक्षुः । स्तोतॄणामभिमतं

प्रापयितुमिच्छंति । अपि च विश्वा सर्वाणि भुवनानि सद्भावं प्राप्तानि पार्थिवा पृथिव्यां भवानि दिव्यानि दिवि भवानि च वसूनि दृळ्हा चित् दृढान्यपि मज्मना । मज्मनेति बलनाम । मज्मना शोधकेन बलेन प्र च्यावयंति । प्रचालयंति ॥ अभोगघनः । भोजयंतीति भोजः । न भोजोऽभोजः । तेषां हंतारः । बहुलं छंदसीति हंतेः क्विप् । झयो होऽन्यतरस्यां । पा० ८. ४. ६२. । इति हकारस्य घत्वं । इन्हन्पूषार्यम्णां शौ । पा० ६. ४. १२. । इति नियमाद्दीर्घाभावः । ववक्षुः । वह प्रापणे । अस्मादिच्छासन्येकाच इतीट्प्रतिषेधः । द्विर्भावः । ढत्वकत्वषत्वानि । सन्यत इतीत्वाभावश्छांदसः । लिट्युस्यमंत्रे । पा० ३. १. ३५. । इति निषेधादाम्प्रत्ययाभावेऽतो लोप इत्यकारलोपः । प्रत्ययस्वरः । पादादित्वान्निघाताभावः ॥

चित्रैरंजिभिर्वपुषे व्यंजते वक्षःसु रुक्माँ अधि येतिरे शुभे ।
अंसेष्वेषां नि मिमृक्षुर्ऋष्टयः साकं जज्ञिरे स्वधया दिवो नरः ॥ ४ ॥
चित्रैः । अंजिऽभिः । वपुषे । वि । अंजते । वक्षःऽसु । रुक्मान् । अधि । येतिरे । शुभे ।
अंसेषु । एषां । नि । मिमृक्षुः । ऋष्टयः । साकं । जज्ञिरे । स्वधया । दिवः । नरः ॥ ४ ॥

वपुरिति रूपनाम । वपुषे रूपाय शोभार्थं मरुतश्चित्रैर्नानाविधैरंजिभी रूपाभिव्यंजनसमर्थैराभरणैः स्वशरीराणि व्यंजते । व्यक्तं कुर्वंति । अलंकुर्वंतीत्यर्थः । वक्षःसु भुजांतरेषु रुक्मान् रोचमानान्हारानधि येतिरे । उपरि चक्रिरे । किमर्थं । शुभे शोभार्थं । अपि चैषां मरुतामंसेष्वृष्टय आयुधानि नि मिमृक्षुः । निमृष्टाः स्थिता बभूवुः । तैरायुधैः सहिता नरो नेतारो मरुतो दिवोऽंतरिक्षात्स्वधया स्वकीयेन बलेन साकं सह जज्ञिरे । प्रादुर्बभूवुः ॥ येतिरे । यती प्रयत्ने । लिट्यत एकहल्मध्य इत्येत्वाभ्यासलोपौ । शुभे । शुभ दीप्तौ । संपदादिलक्षणो भावे क्विप् । साविकाच इति चतुर्थ्या उदात्तत्वं । मिमृक्षुः । मृजूष् शुद्धौ । सन्यूदित्त्वादिडभावः । हलंताच्चेति सनः कित्त्वाद्गुणाभावः । द्विर्वचनादि । सन्यत इतीत्वं । लिट्युस्यतो लोप इत्यकारलोपः । जज्ञिरे । जनी प्रादुर्भावे । लिटि गमहनेत्यादिनोपधालोपः ॥

ईशानकृतो धुनयो रिशादसो वातान्विद्युतस्तविषीभिरक्रत ।
दुहंत्यूधर्दिव्यानि धूतयो भूमिं पिन्वंति पयसा परिज्रयः ॥ ५ ॥
ईशानऽकृतः । धुनयः । रिशादसः । वातान् । विऽद्युतः । तविषीभिः । अक्रत ।
दुहंति । ऊधः । दिव्यानि । धूतयः । भूमिं । पिन्वंति । पयसा । परिऽज्रयः ॥ ५ ॥

ईशानकृतः स्तोतारमीशानं धनाधिपतिं कुर्वाणा धुनयो मेघादीनां कंपयितारो रिशादसो रिशानां हिंसकानामत्तारः । यद्वा । रिशतां हिंसतामसितारो निरसितारः । एवंभूता मरुतस्तविषीभिरात्मीयैर्बलैर्वातान् पुरो वातादीन् विद्युतो विद्योतमानास्तडितश्चाक्रत । कुर्वंति । कृत्वा च परिज्रयः परितो गंतारो धूतयः कंपयितारो मरुतो दिव्यानि दिविभवान्यूधरूधःस्थानीयान्यभ्राणि दुहंति । रिक्तीकुर्वंति । जलरहितानि कुर्वंतीत्यर्थः । तदनंतरं भूमिं पयसा मेघान्निर्गतेनोदकेन जलेन पिन्वंति । सिंचंति ॥ रिशादसः । रिश हिंसायां । इगुपधलक्षणः कः । रिशंति हिंसंतीति रिशाः शत्रवः । तानदंतीति रिशादसः । असुन् । नित्त्वादाद्युदात्तत्वं । कृदुत्तरपदप्रकृतिस्वरत्वं । यद्वा । रिशच्छब्दाच्छत्रंतादसु क्षेपण इत्यस्मात् क्विप् । व्यत्ययेन पूर्वपदस्योपधादीर्घः । अंतोदात्तत्वं च । अक्रत । करोतेश्छांदसो वर्तमाने लुङ् । मंत्रे घसेति च्लेर्लुक् । ऊधः । सुपां सुलुगिति विभक्तेर्लुक् ॥ ॥ ६ ॥

मरुत्वतीयशस्त्रे पिन्वंत्यप इत्येषा धाय्या । सूत्रितं च । अग्निर्नेता त्वं सोम क्रतुभिः पिन्वंत्यप इति धाय्याः । आ० ५. १४. । इति ॥

पिन्वंत्यपो मरुतः सुदानवः पयो घृतवद्विदथेष्वाभुवः ।
अत्यं न मिहे वि नयंति वाजिनमुत्सं दुहंति स्तनयंतमक्षितं ॥ ६ ॥

पिन्वंति। अपः। मरुतः। सुऽदानवः। पयः। घृतऽवत्। विदथेषु। आऽभुवः।
अत्यं। न। मिहे। वि। नयंति। वाजिनं। उत्सं। दुहंति। स्तनयंतं। अक्षितं ॥ ६॥

सुदानवः शोभनदाना मरुतः पयः क्षीरवत् सारवतीरपः पिन्वंति। सिंचंति। आभुवः। आभवंतीत्याभुव ऋत्विजः। ते विदथेषु यज्ञेषु घृतवत्। यथा घृतं सिंचंत्येवं मरुतोऽपि वृष्टिं कुर्वंतीति भावः। तत्र हेतुमाह। अत्यं न यथाश्वं सादिनो विनयंति युद्धार्थं शिक्षंत्येवं मरुतो वाजिनं वेगवंतं मेघं मिहे वर्षणाय वि नयंति। स्वाधीनं कुर्वंतीति भावः। विनीय च स्तनयंतं गर्जंतमक्षितमक्षीणमुत्सं। उत्सवंत्यस्मादाप इत्युत्सो मेघः। तं दुहंति। रिक्तीकुर्वंति ॥ सुदानवः। नुप्रत्ययांतो दानुशब्द आद्युदात्तः। बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। मिहे। मिह सेचने। संपदादिलक्षणो भावे क्विप्। सावेकाच इति विभक्तिरुदात्ता। स्तनयंतं। स्तन शब्दे। चुरादिरदंतः। अतो लोपस्य स्थानिवद्भावाद्वृद्ध्याद्यभावः॥

महिषासो मायिनश्चित्रभानवो गिरयो न स्वतवसो रघुष्यदः।
मृगा इव हस्तिनः खादथा वना यदारुणीषु तविषीरयुग्ध्वं ॥ ७॥
महिषासः। मायिनः। चित्रऽभानवः। गिरयः। न। स्वऽतवसः। रघुऽस्यदः।
मृगाःऽइव। हस्तिनः। खादथ। वना। यत्। आरुणीषु। तविषीः। अयुग्ध्वं ॥ ७॥

महिष इति महन्नाम। महिषासो महांतः। मायेति ज्ञाननाम। मायिनः प्राज्ञाश्चित्रभानवः शोभनदीप्तयो गिरयो न स्वतवसः पर्वता इव स्वकीयेन बलेन युक्ता रघुष्यदः शीघ्रगमना हे मरुत एवंभूतगुणविशिष्टा यूयं हस्तिनो हस्तवंतो मृगा इव गजा इव वना वनानि वृक्षजातानि खादथ। भक्षयथ। प्रभंक्थेति यावत्। यद्यस्मादारुणीष्वरुणवर्णासु वडवासु तविषीर्बलान्ययुग्ध्वं संयोजितवंतः। तस्माद्भवतामिव वाहनस्यापि प्रबलत्वात्तत्संयुक्ता भवंतः सर्वं भंजंतीत्यर्थः॥ रघुष्यदः। स्यन्दू प्रस्रवणे। रघु शीघ्रं स्यंदंते गच्छंतीति रघुष्यदः। क्विप्चेति क्विप्। अनिदितामिति नलोपः। वालमूललघ्वलमिति लत्वविकल्पः। म॰ ८. २. १८.। कृदुत्तरपदप्रकृतिस्वरत्वं। खादथ। खादृ भक्षणे। अयुग्ध्वं। युजिर् योगे। लुङि च्लेः सिच्। एकाच इतीट्प्रतिषेधः। धि च। पा॰ ८. २. २५.। इति सकारलोपः। चोः कुरिति कुत्वं। अडागम उदात्तः। यद्वृत्तयोगादनिघातः॥

सिंहा इव नानदति प्रचेतसः पिशा इव सुपिशो विश्ववेदसः।
क्षपो जिन्वंतः पृषतीभिर्ऋष्टिभिः समित्सबाधः शवसाहिमन्यवः ॥ ८॥
सिंहाःऽइव। नानदति। प्रऽचेतसः। पिशाःऽइव। सुऽपिशः। विश्वऽवेदसः।
क्षपः। जिन्वंतः। पृषतीभिः। ऋष्टिऽभिः। सं। इत्। सऽबाधः। शवसा।
अहिऽमन्यवः ॥ ८॥

प्रचेतसः प्रकृष्टज्ञाना मरुतः सिंहा इव नानदति। भृशं शब्दं कुर्वंति। यथा सिंहा गिरिगह्वरेषु गंभीरं शब्दं कुर्वंति एवं मरुत्स्वप्यागतेषु गंभीरः शब्द उत्पद्यत इति भावः। तथा सुपिशः शोभनावयवाः शोभनालंकारा वा। तत्र दृष्टांतः। पिशा इव। पिश इति रुरुनाम। यथा रुरवः स्वशरीरगतैः श्वेतबिंदुभिरलंकृतास्तद्वत्। विश्ववेदसः सर्वज्ञाः क्षपः शत्रूणां क्षपयितारो जिन्वंतः स्तोतॄन्प्रीणयंतः शवसा बलेनाहिमन्यव आहननशीलमन्युयुक्ताः। यद्विषयः कोपो जायते तस्य हनने समर्था इत्यर्थः। यद्वा। मननं ज्ञानं मन्युः। अहीनज्ञानाः। उत्कृष्टबुद्धय इत्यर्थः। एवंभूता मरुतः पृषतीभिः। पृषत्य इति मरुतां वाहनस्याख्या। पृषत्यः श्वेतबिंदुका मृग्य इत्यैतिहासिकाः। नानावर्णा मेघमाला इति नैरुक्ताः। ताभिर्ऋष्टिभिरायुधैश्च सहिताः संतः सबाधः शत्रुभिर्बाधितान्यजमानान् समित् समानमेव युगपदेव रक्षितुमागच्छंतीति शेषः॥ नानदति।

नद अव्यक्ते शब्दे। अस्माद्यङ्लुगंताल्लट्। पिशा इव। पिश अवयवे। इगुपधलक्षणः कः। सुपिशः। सुपूर्वात्पिश अवयव इत्यस्मात् क्विप्चेति क्विप्। पृषतीभिः। पृषु सेचने। वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च। उ॰ २. ८४। इति शतृवद्भावादुगितश्चेति ङीप्। अत एव शतुरनुम इति नद्या उदात्तत्वे प्राप्ते बृहन्महतोरुपसंख्यानमिति नियमात्तस्याभावः॥

रोदसी आ वदता गणश्रियो नृषाचः शूराः शवसाहिमन्यवः।
आ वंधुरेष्वमतिर्न दर्शता विद्युन्न तस्थौ मरुतो रथेषु वः॥९॥

रोदसी इति। आ। वदत। गणऽश्रियः। नृऽसाचः। शूराः। शवसा। अहिऽमन्यवः।
आ। वंधुरेषु। अमतिः। न। दर्शता। विऽद्युत्। न। तस्थौ। मरुतः। रथेषु। वः॥९॥

हे गणश्रियो गणशः श्रयमाणाः सप्तगणरूपेणावस्थिता नृषाचो नॄन् यजमानान्हविःस्वीकरणाय सेवमानाः शूराः शौर्योपेता एवंभूता हे मरुतः शवसा बलेनाहिमन्यव आहननस्वभावकोपयुक्ताः संतो रोदसी द्यावापृथिव्यावा वदत। आ समंताच्छब्दयत। युष्मदागमने सति भवदीयशब्देन द्यावापृथिव्यौ पूर्णे कुरुतेति भावः। किंच हे मरुतो वो युष्माकं तेजो वंधुरेषु। बंधककाष्ठानिर्मितं सारथेः स्थानं वंधुरमित्युच्यते। तद्युक्तेषु रथेष्वा तस्थौ। आतिष्ठति। अवस्थितं सत्सर्वैर्दृश्यते। तत्र दृष्टांतद्वयमुच्यते। अमतिर्न। अमतिरिति रूपनाम। यथा निर्मलं रूपं सर्वैर्दृश्यते। दर्शता विद्युन्न। यथा वा दर्शनीया विद्युन्मेघस्था सर्वैर्दृश्यते। एवं रथे स्थितानां युष्माकं ज्योतिरपि सर्वैर्दृश्यत इत्यर्थः॥ वदत। ऋचि तुनुघेत्यादिना दीर्घः। नृषाचः। पादादित्वादामंत्रितग्रद्युदात्तत्वं। अमतिः। अम गत्यादिषु। अमेरतिः। उ॰ ४. ५९। इत्यौणादिकोऽतिप्रत्ययः। प्रत्ययाद्युदात्तत्वं। दर्शता। भृमृदृशीत्यादिनातच्प्रत्ययः। चित्त्वादंतोदात्तत्वं॥

विश्ववेदसो रयिभिः समोकसः संमिश्लासस्तविषीभिर्विरप्शिनः।
अस्तार इषुं दधिरे गभस्त्योरनंतशुष्मा वृषखादयो नरः॥१०॥

विश्वऽवेदसः। रयिऽभिः। संऽओकसः। संऽमिश्लासः। तविषीभिः। विऽरप्शिनः।
अस्तारः। इषुं। दधिरे। गभस्त्योः। अनंतऽशुष्माः। वृषऽखादयः। नरः॥१०॥

विश्ववेदसः सर्वज्ञा रयिभिर्धनैः समोकसः समाननिवासाः समवेता वा। धनाधिपतय इत्यर्थः। तविषीभिर्बलैः संमिश्लासः संमिश्राः। संयुक्ता इत्यर्थः। विरप्शिनः। महन्नामैतत्। महांतः। अस्तारः शत्रूणां निरसितारः अनंतशुष्मा अनवच्छिन्नबलाः वृषखादयः। वृषेंद्रः खादिरायुधस्थानीयो येषां ते तथोक्ताः। यद्वा। वृषा सोमः खादिः खाद्यः पेयो येषां ते। नरो नेतारः। एवंभूता मरुतः। गभस्तिरिति बाहुनाम। गभस्त्योर्बाह्वोरिषुं दधिरे। शत्रूणां निरसनाय धनुर्बाणादिकमायुधं धारयंति॥ समोकसः। उच समवाये। असुनि बहुलवचनात्कुत्वमित्योक उचः के। पा॰ ७. ३. ६४। इत्यत्रोक्तं। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। संमिश्लासः। कपिलकादित्वाल्लत्वं। विरप्शिनः। रप लप व्यक्तायां वाचि। विपूर्वादस्माद्बहुलवचनात् शकप्रत्ययः। विविधं शब्दं रपंतीति विरप्शाः स्तोतारः। त एषां संतीति विरप्शिनः। यद्वा। विविधं रपणं विरप्शं। तदेषामस्तीति। मरुतो हि विविधं शब्दं कुर्वंते। इनिप्रत्ययस्वरः। अस्तारः। ताच्छीलिकस्तृन्। इडभावश्छांदसः। नित्त्वादाद्युदात्तत्वं। अनंतशुष्माः। नास्त्यंतोऽस्येत्यनंतः। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। अनंतः शुष्मो बलं येषां। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। वृषखादयः। खादृ भक्षणे। औणादिक इन्प्रत्ययः। वृषन्शब्दः कनिन्प्रत्ययांत आद्युदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥ ॥७॥

हिरण्ययेभिः पविभिः पयोवृध उज्जिघ्नंत आपथ्यो३ न पर्वतान्।
मखा अयासः स्वसृतो ध्रुवच्युतो दुध्रकृतो मरुतो भ्राजदृष्टयः॥११॥

हिरण्ययेभिः। पविऽभिः। पयःऽवृधः। उत्। जिघ्नंते। आऽपथ्यः। न। पर्वतान्।
मखाः। अयासः। स्वऽसृतः। ध्रुवऽच्युतः। दुध्रऽकृतः। मरुतः। भ्राजत्ऽऋष्टयः ॥११॥

मरुतो हिरण्ययेभिः सुवर्णमयैः। यद्वा। हिततरमणीयैः पविभिः रथानां चक्रैः पर्वतान्पर्ववतो मेघान् यद्वा शिलोच्चयानुज्जिघ्नंते। ऊर्ध्वं गमयंति। स्थानात्प्रच्यावयंतीत्यर्थः। तत्र दृष्टांतः। पथ्यो न। यथा पथि गच्छन्रथो मार्गे आस्थितं तृणवृक्षादिकं चूर्णीकृत्योर्ध्वं नयति गमयति। यद्वा। यथा संयुक्ता गजा मार्गस्थितं वृक्षादिकं भग्नं कुर्वंति। कीदृशा मरुतः। पयोवृधः पयसो वृष्ट्युदकस्य वर्धयितारः। यद्वा। पृश्नेः पयसा वर्धमानाः। पृश्न्यै वै पयसो मरुतो जाताः। तै० सं० २. २. ११. ४. इति श्रूयते। मखाः। मख इति यज्ञनाम। तद्वंतः। अयासो देवयजनदेशं प्रति गंतारः स्वसृतः शत्रून्प्रति स्वयमेव सरंतो गच्छंतः ध्रुवच्युतो ध्रुवाणां निश्चलानां पर्वतादीनामपि च्यावयितारः दुध्रकृतो दुध्रं दुष्टानां धारयितारमात्मानं कुर्वाणाः। यद्वा। दुर्धरमन्यैर्धर्तुमशक्यमात्मानं कुर्वाणाः। भ्राजदृष्टयः। दीप्यमानायुधाः॥ उज्जिघ्नंते। हंतेर्व्यत्ययेनात्मनेपदं। बहुलं छंदसीति शपः श्लुः। बहुलं छंदसीत्यभ्यासस्येत्वं। गमहनेत्यादिनोपधालोपः। हो हंतेरिति घत्वं। व्यत्ययेनांतादेशः। पथ्यः। पथि भवः। भवे छंदसीति यत्। नस्तद्धिते। पा० ६. ४. १४४. इति टिलोपः। व्यत्ययेनांतस्वरितत्वं। यद्वा। छंदसीवनिपाविति मत्वर्थीय ईकारः। उदात्तस्वरितयोर्यण इति विभक्तेः स्वरितत्वं। अयासः। अय पय गतौ। अयंत इत्ययाः। पचाद्यच्। आज्जसेरसुक्। दुध्रकृतः। अत्र दुःशब्देन दुष्टा लक्ष्यंते। धृञ् धारणे। दुष्टान् धारयतीति दुध्रः। मूलविभुजादित्वात्। पा० ३. २. ५. २. कप्रत्ययः। यद्वा। ईषद्दुःसुष्विति दुःशब्द उपपदे कर्मणि खल्। गुणाभावश्छांदसः। तं कुर्वंतीति दुध्रकृतः। करोतेः क्विचेति क्विप्। रेफलोपश्छांदसः॥

घृषुं पावकं वनिनं विचर्षणिं रुद्रस्य सूनुं हवसा गृणीमसि।
रजस्तुरं तवसं मारुतं गणमृजीषिणं वृषणं सश्चत श्रिये ॥१२॥
घृषुं। पावकं। वनिनं। विऽचर्षणिं। रुद्रस्य। सूनुं। हवसा। गृणीमसि।
रजःऽतुरं। तवसं। मारुतं। गणं। ऋजीषिणं। वृषणं। सश्चत। श्रिये ॥१२॥

घृषुं शत्रूणां बलस्य घर्षकं विनाशयितारं पावकं सर्वेषां शोधकं वनिनं। वनमित्युदकनाम। उदकवंतं। वृष्टिप्रदमित्यर्थः। विचर्षणिं विशेषेण सर्वस्य द्रष्टारं रुद्रस्य महादेवस्य सूनुं पुत्रभूतं। एवंविधं मरुतां समूहं हवसाह्वानसाधनेन स्तोत्रेण गृणीमसि। शब्दयामः। स्तुम इत्यर्थः। हे ऋत्विग्यजमानाः यूयमपि श्रिय ऐश्वर्याय धनार्थं मारुतं गणं मरुतां संघं सश्चत। प्राप्नुत। कीदृशं। रजस्तुरं पार्थिवस्य पांसोस्त्वरयितारं। प्रेरकमित्यर्थः। तवसं प्रवृद्धं ऋजीषिणं। तृतीयसवने हि मरुतः स्तूयंते तत्र च ऋजीषमभिषुण्वंतीति ऋजीषसंबंधः श्रुतः। अतस्तद्वंतं वृषणं कामानां वर्षितारं॥ हवसा ह्वेञोऽसिप्रत्यये बहुलं छंदसीति संप्रसारणं। गृणीमसि। गॄ शब्दे। इदंतो मसिः। प्वादीनां ह्रस्व इति ह्रस्वत्वं। रजस्तुरं। रजांसि तुतोर्तीति रजस्तूः। तुर त्वरणे। क्विचेति क्विप्। वृषणं। वा षपूर्वस्य निगम इति दीर्घाभावः। सश्चत। ग्लुन्च षस्ज गतावित्यत्र सश्चिमप्येक इति धातुवृत्तावुक्तं। गतिकर्मसु च सश्चतीति पठितं। श्रिये। साविकाच इति विभक्तेरुदात्तत्वं॥

प्र नू स मर्तः शवसा जनाँ अति तस्थौ व ऊती मरुतो यमावत।
अर्वद्भिर्वाजं भरते धना नृभिरापृच्छ्यं क्रतुमा क्षेति पुष्यति ॥१३॥
प्र। नु। सः। मर्तः। शवसा। जनान्। अति। तस्थौ। वः। ऊती। मरुतः। यं। आवत।
अर्वत्ऽभिः। वाजं। भरते। धना। नृऽभिः। आऽपृच्छ्यं। क्रतुं। आ। क्षेति। पुष्यति॥१३॥

स मर्तो मनुष्यः शवसा बलेन जनान् जातानन्यान्पुरुषानति अतीत्य नु चिप्रं तस्थौ। प्रतिष्ठितो भवति। हे मरुतो वो युष्माकमूती ऊत्या रक्षणेन यं पुरुषमावत अरक्षत। अपि च स पुरुषोऽर्वद्भिरश्वैः साधनभूतै-

वाजमन्नं नृभिः स्वकीयैर्मनुष्यैर्धना धनानि च भरते। संपादयति। तथापृच्छ्यमाप्रष्टव्यं शोभनं क्रतुमग्निष्टोमादिकर्मा चेति। आप्नोति। पुष्यति। प्रजया पशुभिः पुष्टो भवति च ॥ ऊती। तृतीयायाः पूर्वसवर्णदीर्घत्वं। नृभिः। नृ चान्यतरस्यामिति विभक्त्युदात्तत्वप्रतिषेधः। आपृच्छ्यं। छंदसि निष्टर्क्येत्यादावाङ्पूर्वात्पृच्छतेः क्यप्प्रत्ययांतो निपात्यते। ग्रहिज्यादिना संप्रसारणं। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। कृदुत्तरपदप्रकृतिस्वरत्वं। चेति। चि निवासगत्योः। बहुलं छंदसीति विकरणस्य लुक्। पुष्यति। पुष पुष्टौ। दिवादित्वात् श्यन्। नित्त्वादाद्युदात्तत्वं। तिङः परत्वान्निघाताभावः॥

चर्कृत्यं मरुतः पृत्सु दुष्टरं द्युमंतं शुष्मं मघवत्सु धत्तन।
धनस्पृतमुक्थ्यं विश्वचर्षणिं तोकं पुष्येम तनयं शतं हिमाः ॥१४॥
चर्कृत्यं। मरुतः। पृत्ऽसु। दुस्तरं। द्युऽमंतं। शुष्मं। मघवत्ऽसु। धत्तन।
धनऽस्पृतं। उक्थ्यं। विश्वऽचर्षणिं। तोकं। पुष्येम। तनयं। शतं। हिमाः ॥१४॥

हे मरुतो मघवत्सु हविर्लक्षणधनयुक्तेषु यजमानेषु पुत्रं धत्तन। स्थापयत। दत्तेति यावत्। कीदृशं पुत्रं। चर्कृत्यं कार्येषु पुनःपुनः पुरस्कर्तव्यं। सर्वकर्मकुशलमित्यर्थः। पृत्सु संग्रामेषु दुष्टरं दुःखेन तरितव्यं। अजेयमित्यर्थः। द्युमंतं दीप्तिमंतं शुष्मं शत्रूणां शोषकं बलवंतं धनस्पृतं धनानां स्प्रष्टारं धनैः प्रीतं वा उक्थ्यं। उक्थं स्तोत्रं। तदर्हं। प्रशस्यमित्यर्थः। विश्वचर्षणिं विशेषेण द्रष्टारं सर्वज्ञं। एवंविधं तोकं पुत्रं तनयं पौत्रं च शतं हिमा हेमंतर्तूपलक्षितान् शतं संवत्सरान् जीवंतः संतः पुष्येम। पोषयेम। अत्र हिमशब्देन तद्युक्ता हेमंतर्तवो भिधीयंते। तथा च ब्राह्मणमेवमाम्नायते। शतं हिमा इत्याह शतं त्वा हेमंतानि धिषीयेति वावैतदाहेति॥ चर्कृत्यं। प्रकृतिग्रहणे यङ्लुगंतस्यापि ग्रहणं। परि० ९३. ९.। इति न्यायेन करोतेर्यङ्लुगंताद्विभाषा कृवृषोः। पा० ३. १. १२०.। इति क्यप्। तुगागमः। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। पृत्सु। पदादिषु मांस्पृत्स्नूनामुपसंख्यानं। पा० ६. १. ६३. १.। इति पृतनाशब्दस्य पृदादेशः। दुष्टरं। तॄ प्लवनतरणयोः। ईषद्दुःसुष्विति खल्। सुषामादेराकृतिगणत्वात् षत्वं। लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं। धत्तन। तप्तनप्तनथनाश्चेति तस्य तनादेशः॥

ऐकादशिनस्य मारुतस्य पशोर्वपायागस्य नू ष्ठिरमित्येषा याज्या। सूत्रितं च। शुची वो हव्या मरुतः शुचीनां नू ष्ठिरं मरुतो वीरवंतं। आ० ३. ७.। इति॥

नू ष्ठिरं मरुतो वीरवंतमृतीषाहं रयिमस्मासु धत्त।
सहस्रिणं शतिनं शूशुवांसं प्रातर्मक्षू धियावसुर्जगम्यात् ॥१५॥
नु। स्थिरं। मरुतः। वीरऽवंतं। ऋतिऽसहं। रयिं। अस्मासु। धत्त।
सहस्रिणं। शतिनं। शूशुऽवांसं। प्रातः। मक्षु। धियाऽवसुः। जगम्यात् ॥१५॥

हे मरुतः स्थिरं स्थास्नुं वीरवंतं वीरैः पुत्रैस्तद्वंतं। यद्वा। वीर्योपेतं। ऋतीषाहं गंतॄणां शत्रूणामभिभवितारं एवंविधं रयिं पुत्रलक्षणं धनमस्मासु धत्त। स्थापयत। सहस्रिणं शतिनमेतत्संख्याकधनवंतं अत एव शूशुवांसं प्रवृद्धं। अपि चास्माकं रक्षणाय धिया बुद्ध्या कर्मणा वा प्राप्तधनो मरुद्गणः प्रातःकाले जगम्यात्। आगच्छतु॥ नू ष्ठिरं। ऋचि तुनुघेति दीर्घः। पूर्वपदादिति षत्वं। ऋतीषाहं। ऋ गतौ। कर्तरि क्तिच्। षह अभिभवे। छंदसि सह इति ण्विप्रत्ययः। अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घत्वं। सुषामादित्वात् षत्वं। शूशुवांसं। टुओश्वि गतिवृद्ध्योः। लिटः क्वसुः। विभाषा श्वेः। पा० ६. १. ३०.। इति संप्रसारणं। द्विर्वचने तुजादित्वादभ्यासस्य दीर्घत्वं। वस्वेकाजाद्घसामिति नियमादिडभावः। प्रत्ययस्वरः॥ ॥८॥ ॥११॥

द्वादशेऽनुवाके नव सूक्तानि। तत्र पश्वेत्यादीनि षट् सूक्तानि द्वैपदानि। तेष्वध्ययनसमये द्विपदे द्वे ऋचौ चतुष्पदामेकैकामृचं कृत्वा समाम्नायते। अयुक्संख्यासु तु यात्यातिरिच्यते सा तथैवाम्नायते। प्राचे-

णार्थोऽपि द्वयोर्द्विपदयोरेक एव। प्रयोगे तु ताः पृथक् पृथक् शंसनीयाः। सूत्र्यते हि। पश्वा न तायुमिति द्वैपदं। आ० ८. १२.। इति ॥ तत्र पश्वेति दशर्चं प्रथमं सूक्तं। अत्रानुक्रम्यते। पश्वा दश पराशरः शाक्त्यो द्वैपदं तदिति। शक्तिपुत्रः पराशर ऋषिः। तत्पुत्रत्वं च स्मर्यते। वसिष्ठस्य सुतः शक्तिः शक्तेः पुत्रः पराशर इति। द्विपदा विराट् छंदः। विंशतिका द्विपदा विराजः। अनु० १२. ८.। इति हि तल्लक्षणं। अग्निर्देवता। परमाग्नेयमैंद्रादिति परिभाषितं। पश्वा न तायुमित्यारभ्येत्या हीत्यतः प्राक् यत्सूक्तजातं तत्सर्वमाग्नेयमिति तस्यार्थः। द्वैपदं तदित्युक्तत्वादिदमादीनि षट् सूक्तानि तुह्यादिपरिभाषया द्वैपदानि ॥ दशमेऽहनि वैश्वदेवशस्त्रे वैश्वदेवसूक्तात्पूर्वमेतद्द्वैपदं सूक्तं शंसनीयं। सूत्रमुदाहृतं ॥

पश्वा न तायुं गुहा चतंतं नमो युजानं नमो वहंतं।
सजोषा धीराः पदैरनु ग्मन्नुप त्वा सीदन्विश्वे यजत्राः ॥ १ ॥ २ ॥
पश्वा। न। तायुं। गुहा। चतंतं। नमः। युजानं। नमः। वहंतं।
सऽजोषाः। धीराः। पदैः। अनु। ग्मन्। उप। त्वा। सीदन्। विश्वे। यजत्राः ॥ १ ॥ २ ॥

धीरा मेधाविनो देवाः सजोषाः समानप्रीतयः संतो हे अग्ने त्वां पदैर्मार्गे पादकृतैर्लांछनैरनु ग्मन्। अन्वगमन्। कीदृशं। पश्वापहृतेन पशुना सह वर्तमानं तायुं न। तायुरिति स्तेननाम। यथा स्तेनः परकीयं पश्वादिधनमपहृत्य दुष्प्रवेशे गिरिगह्वरे वर्तते तद्वद्गुहा चतंतं अप्रूपायां गुहायां गच्छंतं वर्तमानं। चततिर्गतिकर्मा। तथा च तैत्तिरीयैरग्नेरप्सु प्रवेशः समाम्नायते। स निलायत सोऽपः प्राविशत्। तै० सं० २. ६. ६. १.। इति। यद्वा। अश्वत्थगुहायां वर्तमानं। श्रूयते च। अग्निर्देवेभ्यो निलायत। अश्वो रूपं कृत्वा सोऽश्वत्थे संवत्सरमतिष्ठदिति। तथा नमो युजानं हविर्लक्षणमन्नमात्मना संयुजानं नमो वहंतं देवेभ्यः प्रत्तं हविर्वहंतं। यजत्रा यजनीया विश्वे सर्वे देवा हे अग्ने त्वा त्वामुप सीदन्। समीपं प्राप्नुवन्। ददृशुरित्यर्थः ॥ पश्वा। तृतीयैकवचनस्य जसादिषु छंदसि वावचनमिति नाभावाभावः। उदात्तयण इति विभक्तेरुदात्तत्वं। गुहा। भिदादिषु पाठादङ्प्रत्ययांतः। वृषादिषु पाठादाद्युदात्तत्वं। सुपां सुलुगिति सप्तम्या लुक्। युजानं। शानचि बहुलं छंदसीति विकरणस्य लुक्। सजोषाः। जुषी प्रीतिसेवनयोः। समानं जुषंत इति सजोषसः। समानस्य छंदसीति सभावः। कृदुत्तरपदप्रकृतिस्वरत्वं। सुपां सुलुगिति जसः सुः। ग्मन्। गमेर्लुङि मंत्रे घसेति च्लेर्लुक्। गमहनेत्यादिनोपधालोपः। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। यजत्राः। अमिनक्षीत्यादिनात्रन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं ॥

ऋतस्य देवा अनु व्रता गुर्भुवत्परिष्टिर्द्यौर्न भूम।
वर्धंतीमापः पन्वा सुशिश्विमृतस्य योना गर्भे सुजातं ॥ ३ ॥ ४ ॥
ऋतस्य। देवाः। अनु। व्रता। गुः। भुवत्। परिष्टिः। द्यौः। न। भूम।
वर्धंति। ईं। आपः। पन्वा। सुऽशिश्विं। ऋतस्य। योना। गर्भे। सुऽजातं ॥ ३ ॥ ४ ॥

उक्त एवार्थः स्पष्टीक्रियते। देवा ऋतस्य गतस्य पलायितस्याग्नेर्व्रता व्रतानि कर्माणि गमनावस्थानशयनादिरूपाण्यनु गुः। अन्विष्टुमगमन्। तदनंतरं परिष्टिः परितः सर्वतोऽन्वेषणं भुवत्। अभवत्। भूम भूमिरप्यग्नेरन्वेष्टृभिर्देवैर्द्यौर्न स्वर्ग इवाभूत्। इंद्रादयः सर्वे देवा अग्नेर्गवेषणाय भूलोकं प्राप्ता इत्यर्थः। आपोऽब्देवता ईमेनमुदके प्रविष्टमग्निं वर्धंति। प्रवर्धयंति। यथा देवा न पश्यंति तथाच्छादयंतीत्यर्थः। कीदृशं। पन्वा स्तोत्रेण सुशिश्विं सुष्ठु प्रवर्धितं। ऋतस्य योना। योनिरित्युदकनाम। ऋतस्य यज्ञस्यान्नस्य वा कारणभूते जले गर्भे गर्भस्थाने मध्ये सुजातं सुष्ठु प्रादुर्भूतं। एवमप्सु वर्तमानमग्निं देवेभ्यो मत्स्यः प्रावोचत्। तदनंतरं देवास्तमज्ञासिषुरिति भावः। तथा च तैत्तिरीयकं। स निलायत सोऽपः प्राविशत्तं देवताः प्रैषमैच्छन् तं मत्स्यः प्राब्रवीदिति ॥ व्रता। शेश्छंदसि बहुलमिति शेर्लोपः। गुः। इण् गतौ। इणो गा लुङीति गादेशः। गाति-

स्येति सिचो लुक्। आत इति झेर्जुस्। उस्यपदांतादिति पररूपत्वं। परिष्टिः। इषु इच्छायां। क्तिनि तितुत्रे-तीट्प्रतिषेधः। शकंध्वादित्वात्पररूपत्वं। पा॰ ६. १. ९४. ४.। तादौ च नितीति गतेः प्रकृतिस्वरत्वं। भूम। सुपां सुलुगिति सोर्डादेशः। ह्रस्वश्छांदसः। वर्धंति। छंदस्युभयथेति शप आर्धधातुकत्वाण्णेरनिटीति णिलोपः। शपः पित्त्वादनुदात्तत्वं। तिङश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। पन्वा। पन स्तुतौ। औणादिको भाव उप्रत्ययः। सुशिश्विं। टुओश्वि गतिवृद्ध्योः। आदृगमहनजन इत्यत्रोत्सर्गश्छंदसि। पा॰ ३. २. १७१. २.। इति वचनात्किप्रत्ययः। वचिस्वपीत्यादिना संप्रसारणं। लिड्वद्भावाद्द्विर्भावे बहुलं छंदसीत्युकारस्येत्वं। छांदसो यणादेशः। सुः पूजायां। पा॰ १. ४. ९४.। इति सोः कर्मप्रवचनीयत्वं। स्वती पूजायां। पा॰ २. २. १८.*। इति प्रादिसमासः। अव्ययपूर्वपदप्रकृतिस्वरत्वं॥

पुष्टिर्न रण्वा क्षितिर्न पृथ्वी गिरिर्न भुज्म क्षोदो न शंभु।
अत्यो नाज्मन्त्सर्गप्रतक्तः सिंधुर्न क्षोदः क ईं वराते ॥५॥६॥
पुष्टिः। न। रण्वा। क्षितिः। न। पृथ्वी। गिरिः। न। भुज्म। क्षोदः। न। शंऽभु।
अत्यः। न। अज्मन्। सर्गऽप्रतक्तः। सिंधुः। न। क्षोदः। कः। ईं। वराते ॥५॥६॥

रण्वा रमणीया सर्वेषां हृद्या पुष्टिर्न अभिमतफलानामभिवृद्धिरिवाग्निः सर्वेषां रमणीयः। ऐहिकामुष्मिकसकलव्यवहारस्याग्न्यधीनत्वात्। यद्वा। पुष्टिरिव रण्वा गंतव्यः शब्दनीयः स्तुत्यो वा। यथा पुष्टिः प्राप्यते तद्वदग्निर्यज्ञे हविर्भिः प्राप्यत इति भावः। पृथ्वी विस्तीर्णा क्षितिर्न भूमिरिवाग्निरपि विस्तीर्णः सर्वेषु भूतेषु जाठररूपेणावस्थानात्। गिरिर्न पर्वत इव भुज्म सर्वेषां भोजयिता। यथा गिरौ विद्यमानं फलमूलादिकमाहृत्य सर्वे भुंजते तद्वदग्नावपि पचंतः सर्वे भुंजते। यद्वा। अग्नावाहुतिं हुत्वा यजमानाः स्वर्गफलं भुंजते। अथवा गिरिर्यथा दुर्भिक्षे सर्वान्प्राणिनो भुनक्ति स्वकीयमूलफलादिदानेन पालयति। तद्वदयमपि पापादनुष्ठातॄन्प्रमुंचति। तथा चाम्नायते। अग्निर्मा तस्मादेनसः प्र मुंचत्विति। शंभु सुखकरं क्षोदो न उदकमिव। यथोदकं सुखं करोति तद्वदग्निः सर्वेषां सुखकारीत्यर्थः। अज्मन्। संग्रामनामैतत्। अज्मनि संग्रामेऽत्यो न सततगमनशीलो जात्यश्व इव सर्गप्रतक्तः सर्गेण विसर्जनेन प्रगमितः। यथा सादिना प्रेषितो जात्यश्वो हंतव्यसमीपमाशु गच्छति तद्वदग्निरपि स्तोतृभिः प्रेषितः सन् शत्रून्हंतुं शीघ्रं गच्छतीति भावः। अपि च सिंधुर्न क्षोदः। स्यंदनशीलमुदकमिवायमपि शीघ्रगामी। यथा निम्नप्रदेशाभिमुखो जलप्रवाहो दुर्निवारः। तद्वद्दग्धव्याभिमुखोऽग्निरपीत्यर्थः। अतो यस्मादेनं [illegible] को वराते। को वारयेत्। कोऽपि वारयितुं न शक्नोतीत्यर्थः॥ रण्वा। रविर्गत्यर्थः। रण्व्यते प्राप्यत इति रण्वः। कृत्यल्युटो बहुलमिति बहुलवचनात्कर्मणि पचाद्यच्। भुज्म। भुज पालनाभ्यवहारयोः। इषियुधींधीति विधीयमानो मक् बहुलवचनादस्मादपि भवति। सुपां सुलुगिति सोर्लुक्। अज्मन्। अज गतिक्षेपणयोः। मनिनि वलादावार्धधातुके विकल्प इष्यते। का॰ २. ४. ५६. २.। इति वचनाद्वीभावाभावः। सुपां सुलुगिति सप्तम्या लुक्। सर्गप्रतक्तः। सृज विसर्गे इत्यस्माद्घञंतः सर्गशब्द आद्युदात्तः। तक्नु गतौ। अस्मादंतर्भावितण्यर्थान्निष्ठायां यस्य विभाषेतीट्प्रतिषेधः। अनिदितामिति नलोपः। सर्गेण प्रतक्तः। तृतीया कर्मणीति पूर्वप[illegible]। वराते। वृञ् वरणे। अंतर्भावितण्यर्थाल्लेटि लेटोऽडाटावित्याडागमः। व्यत्ययेन शप्। वैतोऽन्यत्र। पा॰ ३. ४. ९६.। इत्यैत्वस्य वि[illegible]भावः॥

जामिः सिंधूनां भ्रातेव स्वस्रामिभ्यान्न राजा वनान्यत्ति।
यद्वातजूतो वना व्यस्थादग्निर्ह दाति रोमा पृथिव्याः ॥७॥८॥
जामिः। सिंधूनां। भ्राताऽइव। स्वस्रां। इभ्यान्। न। राजा। वनानि। अत्ति।
यत्। वातऽजूतः। वना। वि। अस्थात्। अग्निः। ह। दाति। रोम। पृथिव्याः ॥७॥८॥

सिंधूनां स्यंदनशी[illegible]र्बंधुः। तासामुत्पादकत्वात्। तथा चाम्नातं। अग्नेराप इति।

यद्वा। देवेभ्यः पलायितोऽप्सु वर्तमानः सन् तासामपां बंधुर्बभूवेत्यर्थः। तत्र दृष्टांतः। स्वस्रां स्वसॄणां भ्रातेव। यथा भ्रातातिशयेन हितकरो भवति तद्वत्। तादृशोऽग्निर्वनानि महांत्यरण्यान्यत्ति। भक्षयति। दहतीत्यर्थः। तत्र निदर्शनं। राजेभ्यान्न। भियं यंतीति नैरुक्तव्युत्पत्त्येभ्याः शत्रवः। तान्यथा समूलं हिनस्ति तद्वत्। यद्वा। इभ्या धनिनः। तान्यथा धनमपहरन्राजा हिनस्ति तद्वदित्यर्थः। अपि च यद्यदा वातजूतो वातेन प्रेरितः सन्वना वनान्यरण्यानि व्यस्थात् उक्तप्रकारेण विविधमातिष्ठति दग्धुं प्रवर्तते तदानीमग्निर्हासावग्निरेव पृथिव्या भूमेः संबंधीनि रोमौषधिरूपाणि रोमाणि दाति। छिनत्ति। भूम्यामोषधिवनस्पतिजातं यदस्ति तत्सर्वं दहतीति भावः॥ स्वस्रां। आमो नुडभावश्छांदसः। अस्थात्। लुङि गातिस्थेति सिचो लुक्। दाति। दाप् लवने। अदादित्वाच्छपो लुक्॥

श्वसित्यप्सु हंसो न सीदन् क्रत्वा चेतिष्ठो विशामुषर्भुत्।
सोमो न वेधा ऋतप्रजातः पशुर्न शिश्वा विभुर्दूरेभाः॥ ९॥ १०॥
श्वसिति। अप्ऽसु। हंसः। न। सीदन्। क्रत्वा। चेतिष्ठः। विशां। उषःऽभुत्।
सोमः। न। वेधाः। ऋतऽप्रजातः। पशुः। न। शिश्वा। विऽभुः। दूरेऽभाः॥ ९॥ १०॥

अयमग्निर्देवेभ्यः पलायितः सन्नप्सूदकेषु श्वसिति। प्राणिति। निगूढो वर्तत इत्यर्थः। तत्र दृष्टांतः। हंसो न सीदन्। उदकमध्य उपविशन्हंस इव। कीदृशोऽग्निः। क्रत्वा क्रतुना ज्ञानहेतुनात्मीयेन प्रकाशेन विशां प्रजानां चेतिष्ठोऽतिशयेन चेतयिता ज्ञापयिता। रात्रौ हि सर्वे जना अंधकारावृतं सर्वमग्नेः [illegible]। उषर्भुत् उषस्युषःकालेऽग्निहोत्रादौ प्रबुद्धः सोमो न वेधाः सोम इव विधाता स्रष्टा। सोमो यथा सकलमोषधिरूपं भोग्यजातं सृजति। सोमो वा ओषधीनां राजा। तै० सं० ६. १. ९. १.। इति श्रुतेः। तथा सकलं भोक्तृजातं सृजति। अग्नेरेव भोक्तृरूपेणावस्थानात्। तथा च तैत्तिरीयकं। अग्निरन्नादोऽन्नपतिरिति। वाजसनेयकेऽपि भोक्तृभोग्ययोरग्नीषोमात्मकत्वमाम्नातं। एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नाद इति। ऋतप्रजातः। ऋतमित्युदकनाम। ऋतादुदकात्प्रादुर्भूतः पशुर्न शिश्वा। उदकमध्ये वर्तमानोऽग्निः शयानः पशुरिव तनूकृतः संकुचितगात्रोऽभूत्। ततः प्रादुर्भूतः सन्विभुः प्रभूतः संपन्नः। यद्वा। शिश्वा शिशुना गर्भस्थेन वत्सेन सहिता गौरिव विभुः प्रभूतावयवो जात इत्यर्थः। दूरेभाः। दूरे विप्रकृष्टदेशेऽपि भाः प्रकाशो यस्य स तथोक्तः। एवंभूतोऽग्निरप्सु श्वसितीति पूर्वेण संबंधः॥ श्वसिति। श्वस प्राणने। अदादित्वाच्छपो लुक्। रुदादिभ्यः सार्वधातुके। पा० ७. २. ७६.। इतीडागमः। तिपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। क्रत्वा। जसादिषु छंदसि वावचनमिति नाभावाभावः। उषसि बुध्यत इत्युषर्भुत्। बुध अवगमने। क्विब्वेति क्विप्। एकाचो बश इति भष्भावः। अहरादीनां पत्यादिषूपसंख्यानं। म० ८. २. ७०.। इति सकारस्य रेफादेशः। शिश्वा। शो तनूकरणे। आदेच इत्यात्वं। शः कित्सन्वच्च। उ० १. २१.। इत्युप्रत्ययः। सन्वद्भावाद्द्विर्भावेत्वे। अत एव नित्त्वादाद्युदात्तत्वं। किद्वद्भावादातो लोप इटि चेत्याकारलोपः। प्रथमपक्षे सुपां सुलुगिति सोराकारः। द्वितीये तु पूर्ववन्नाभावाभावः। दूरेभाः। तत्पुरुषे कृति बहुलमिति बहुव्रीहावपि बहुलवचनादलुक्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥ ॥ ९॥

रयिरिति दशर्चं द्वैपदमध्ययनतः पंचर्चं द्वितीयं सूक्तं पराशरस्यार्षमाग्नेयं। अनुक्रांतं च। रयिरिति॥ विनियोगो लैंगिकः॥

रयिर्न चित्रा सूरो न संदृगायुर्न प्राणो नित्यो न सूनुः।
तक्वा न भूर्णिर्वना सिषक्ति पयो न धेनुः शुचिर्विभावा॥ १॥ २॥
रयिः। न। चित्रा। सूरः। न। संऽदृक्। आयुः। न। प्राणः। नित्यः। न। सूनुः।
तक्वा। न। भूर्णिः। वना। सिसक्ति। पयः। न। धेनुः। शुचिः। विभाऽवा॥ १॥ २॥

अयमग्नी रयिर्न धनमिव चित्रा चायनीयो विचित्ररूपो वा सूरो न सूर्य इव संदृक् संद्रष्टा सर्वेषां वस्तूनां दर्शयिता आयुर्न प्राण आयुर्मुखे संचरन् प्राणः प्रश्वसन्वायुरिव प्रियतमः। यद्वा। यथा प्राणवायुरायुर्जीवनमवस्थापयति। तथा चाम्नायते। यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुरिति। एवमग्निरपि जाठररूपेणायुषोऽवस्थापयिता। नित्यो न सूनुर्नित्यो ध्रुवः पुत्र इव प्रियकारी। यथौरसः पुत्रः पितुर्हितमेवाचरति तद्वदयमपि हितस्य स्वर्गस्य प्रापयिता। तथा चाम्नायते। पुत्रः पित्रे लोककृज्जातवेदः। तै० ब्रा० ३.७.७.१०.। इति। तक्वा न गतिमानश्व इव भूर्णिर्भर्ता। यथाश्व उपर्यारूढं पुरुषं बिभर्ति धारयति पोषयति वा तद्वदयमपीत्यर्थः। पयो न धेनुः पय इव प्रीणयिता शुचिर्दीप्तः विभावा विशिष्टप्रकाशयुक्तः। एवंगुणविशिष्टोऽग्निर्वना वनान्यरण्यानि सिषक्ति। दग्धुं समवैति। सेवते वा॥ चित्रा। सुपां सुलुगिति सोः पूर्वसवर्णदीर्घत्वं। नित्यः। नेर्ध्रुवे। म० ४.२.१०४.। इति त्यप्। प्रत्ययस्य पित्त्वादनुदात्तत्व उपसर्गस्वर एव शिष्यते। तक्वा। तक हसने। गतिकर्मसु पठितत्वादत्र गत्यर्थः। तकति गच्छतीति तक्वा। अन्येभ्योऽपि दृश्यंत इति वनिप्। भूर्णिः। घृणिः पृश्निरित्यादौ भरतेर्निप्रत्ययांतो निपातितः॥

दाधार क्षेममोको न रण्वो यवो न पक्वो जेता जनानां।
ऋषिर्न स्तुभ्वा विक्षु प्रशस्तो वाजी न प्रीतो वयो दधाति॥३॥४॥
दाधार। क्षेमं। ओकः। न। रण्वः। यवः। न। पक्वः। जेता। जनानां।
ऋषिः। न। स्तुभ्वा। विक्षु। प्रऽशस्तः। वाजी। न। प्रीतः। वयः। दधाति॥३॥४॥

अयमग्निः क्षेमं लब्धस्य धनस्य रक्षणं दाधार। धारयति। स्तोतृभ्यो दत्तस्य धनस्य रक्षणं कर्तुं शक्नोतीति भावः। ओको न निवासस्थानं गृहमिव रण्वो रमणीयः। यद्वा। गंतव्यः। गृहवत्सर्वैः प्राप्यत इत्यर्थः। यवो न यव इव पक्वः। यथा पक्वो यव उपभोगयोग्यो भवति तद्वदग्निरपि पाकादिकार्यहेतुतयोपभोग्य इत्यर्थः। जनानां जेता शत्रुजनानां मध्येऽभिभविता ऋषिर्न मंत्रद्रष्टा ऋषिरिव स्तुभ्वा देवानां स्तोता विक्षु यजमानलक्षणेषु मनुष्येषु प्रशस्तः प्रख्यातः वाजी न अश्व इव प्रीतो हर्षयुक्तः। यथाश्वो हर्षयुक्तो युद्धाभिमुखं गच्छति तद्वदयमपि देवानां हविर्वहने हर्षयुक्तो भवतीत्यर्थः। एवंभूतोऽग्निर्वयोऽन्नं दधाति। दधातु। अस्मभ्यं ददात्वित्यर्थः। वय इत्यन्ननाम। वयः चन्नेति तन्नामसु पाठात्॥ दाधार। तुजादीनामित्यभ्यासस्य दीर्घत्वं। क्षेमं। क्षियति निवसत्यनेनेति क्षेमः। अर्तिस्तुस्वित्यादिना मन्। नित्त्वादाद्युदात्तत्वं। रण्वः। रवि धवि गत्यर्थाः। अस्मात्कर्मणि कप्रत्ययः। इदित्त्वान्नुम्। जेता। तृनंत आद्युदात्तः। जनानां। यतश्च निर्धारणं। पा० २.३.४१.। इति निर्धारणे षष्ठी। नेयं कर्मणि षष्ठीति न लोकाव्ययनिष्ठेति षष्ठीप्रतिषेधो न भवति। स्तुभ्वा। स्तोभतिः स्तुतिकर्मा। अन्येभ्योऽपि दृश्यंत इति क्वनिप्॥

दुरोकशोचिः क्रतुर्न नित्यो जायेव योनावरं विश्वस्मै।
चित्रो यदभ्राट्छ्वेतो न विक्षु रथो न रुक्मी त्वेषः समत्सु॥५॥६॥
दुरोकऽशोचिः। क्रतुः। न। नित्यः। जायाऽइव। योनौ। अरं। विश्वस्मै।
चित्रः। यत्। अभ्राट्। श्वेतः। न। विक्षु। रथः। न। रुक्मी। त्वेषः। समत्ऽसु॥५॥६॥

दुरोकशोचिर्दुःसहतेजाः क्रतुर्न नित्यः। क्रतुः कर्मणां कर्ता। स इव ध्रुवः। यथा स कर्मसु ध्रुवोऽप्रमत्तः सन् जागर्ति तद्वदयमप्यग्निः कर्मसु रक्षसां दहने ध्रुवो जागर्तीत्यर्थः। योनौ गृहे वर्तमाना जायेव योषिदिव अग्निहोत्रादिगृहे वर्तमानो वह्निर्विश्वस्मै सर्वस्मै यष्टृजनायारमलं भूषणं भवति। यथा जायया गृहमलंकृतं भवति तद्वदग्निना यज्ञगृहमप्यलंकृतं सदृश्यत इत्यर्थः। चित्रश्चायनीयो विचित्रदीप्तिर्वा यद्यदायमग्निरभ्राट् भ्राजते तदानीं श्वेतो न शुभ्रवर्ण आदित्य इव भवति। रात्रौ ह्यहनि सूर्य इवाग्निः प्रकाशको भवति। विक्षु प्रजासु रथो न रथ इव रुक्मी सुवर्णवद्रोचमानदीप्तिः त्वेषः समत्सु संग्रामेषु त्वेषो दीप्तः। एवंभूतोऽग्निर्यद्-

भ्राडिति पूर्वेणान्वयः ॥ दुरोकशोचिः । उच समवाये । ईषद्दुःसुष्विति कृच्छ्रार्थे खल् । बहुलवचनात्कुत्वं । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं । दुरोकं शोचिस्तेजो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अरं । वालमूलेत्यादिना । म० ८. २. १८. । लकारस्य रेफादेशः । अभ्राट् । भ्राजृ दीप्तौ । लङि व्यत्ययेन परस्मैपदं । बहुलं छंदसीति शपो लुक् । व्रश्चादिषत्वे जश्त्वं । अडागम उदात्तः । यद्वृत्तयोगादनिघातः । समत्सु । समानं माद्यंत्येष्विति समदः संग्रामाः । औणादिकोऽधिकरणे क्विप् । समानस्य च्छंदसीति सभावः । यद्वा । सम्यगत्ति भक्षयति वीरानिति समत् । संपूर्वादत्तेः क्विबेति क्विप् ॥

सेनेव सृष्टामं दधात्यस्तुर्न दिद्युत्त्वेषप्रतीका ।
यमो ह जातो यमो जनित्वं जारः कनीनां पतिर्जनीनां ॥७॥८॥
सेनाऽइव । सृष्टा । अमं । दधाति । अस्तुः । न । दिद्युत् । त्वेषऽप्रतीका ।
यमः । ह । जातः । यमः । जनिऽत्वं । जारः । कनीनां । पतिः । जनीनां ॥७॥८॥

सृष्टा प्रेरिता सेनेव स्वामिना सह वर्तमाना भटसंहतिरिवायमग्निरमं शत्रूणां भयं दधाति । विदधाति । करोतीत्यर्थः । यद्वा । सृष्टा सेनेवामं बलं दधाति । सा यथा बलवती तद्वदग्निरपि बलवानित्यर्थः । निदर्शनांतरमुच्यते । दिद्युदिति वज्रनाम । तेन चात्रेषुर्लक्ष्यते । त्वेषप्रतीका दीप्तमुखास्तुर्न दिद्युत् चेप्तुः संबंधिनीषुरिव । सा यथा भीषयते तद्वदग्निरपि राक्षसादीन् भीषयत इत्यर्थः । अत्र निरुक्तं । सेनेव सृष्टा भयं वा बलं वा दधात्यस्तुरिव दिद्युत्त्वेषप्रतीकेत्यादि । नि० १०. २१. । यच्छति ददाति स्तोतृभ्यः कामानिति यमोऽग्निरुच्यते । यद्वा । इंद्राग्न्योर्युगपदुत्पन्नत्वादग्नेर्यमत्वं । अस्मिन्नर्थे यास्केन मंत्रब्राह्मणे दर्शिते । यमो ह जात इंद्रेण सह संगतः । यमाविहेह मातरेत्यपि निगमो भवतीति । यो जात उत्पन्नो भूतसंघो यच्च जनित्वं जनयितव्यमुत्पत्स्यमानं भूतजातं तदुभयमपि यमो ह अग्निरेव । सर्वेषां भावानामाहुतिद्वाराग्न्यधीनत्वात् । कनीनां कन्यकानां जारो जरयिता । यतो विवाहसमय अग्नौ लाजादिद्रव्यहोमे सति तासां कन्यात्वं निवर्तते । अतो [illegible] । तथा जनीनां जायानां कृतविवाहानां पतिर्भर्ता । तथा चाख्यायते । अनुपजातपुरुषसंभोगेच्छावस्थां स्त्रियं सोमो लेभे । स च सोम ईषदुपजातभोगेच्छां तां विश्वावसवे गंधर्वाय प्रादात् । स च गंधर्वो विवाहसमयेऽग्नये प्रददौ । अग्निश्च मनुजाय भर्त्रे धनपुत्रैः सहितामिमां प्रायच्छदिति । इममर्थं काचिदृक् स्पष्टं ब्रूते । सोमो ददद्गंधर्वाय गंधर्वो ददद्ग्नये । रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमां । ऋग्वे० १०. ८५. ४१. । इति । यास्कस्त्वाह । तृतीयो अग्निष्टे पतिरित्यपि निगमो भवति । नि० १०. २१. । इति । यद्वा । जनीनां पालयिता यतोऽयमनुष्ठितैर्यागैः फलं प्रयच्छति ॥ सेनेव । इनेन सह वर्तत इति सेना । वोपसर्जनस्येति सभावः । बहुव्रीहिस्वरः । जनित्वं । जनी प्रादुर्भावे । कृत्यार्थे तवैकेनिति कर्मणि त्वन्प्रत्ययः । इडागमः । नित्त्वादाद्युदात्तत्वं । जारः । जरयतीति जारः । दारजारौ कर्तरि णिलुक् । पा० ३. ३. २०. ४. । इति निपात्यते । कनीनां । कन्याशब्दात् षष्ठ्येकवचने बहुलं छंदसीति बहुलग्रहणात्संप्रसारणं । परपूर्वत्वं । जनीनां । जन्यंत आस्विति जनयः स्त्रियः । इन्सर्वधातुभ्य इतीन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं ॥

तं वश्चराथा वयं वसत्यास्तं न गावो नक्षंत इद्धं ।
सिंधुर्न क्षोदः प्र नीचीरैनोन्नवंत गावः स्व१र्दृशीके ॥९॥१०॥
तं । वः । चराथा । वयं । वसत्या । अस्तं । न । गावः । नक्षंते । इद्धं ।
सिंधुः । न । क्षोदः । प्र । नीचीः । ऐनोत् । नवंत । गावः । स्वः । दृशीके ॥९॥१०॥

व इति व्यत्ययेन बहुवचनं । हे अग्ने तं त्वां चराथा । चरतीति चरथः पशुः । तत्प्रभवैर्हृदयादिभिः साध्याहुतिरपि चरथेत्युच्यते । उपचारात्कार्ये [illegible] । चराथा चरथया पशुप्रभवहृदयादिसाधनयाहुत्या । वसत्या । वसति निवसतीति स्थावरो व्रीह्यादिर्वसतिः । पूर्ववत्तत्साध्याहुतिर्लक्ष्यते । वसत्या पुरो-

डाशावाडुत्या च वयमिदं प्रदीप्तममिं नचंते । व्याप्नुयाम । पुरुषव्यत्ययः । तत्र दृष्टांतः । अस्तं न गावः । अस्तमिति गृहनाम । यथा गावो गृहं व्याप्नुवंति तद्वत् । अत्र यास्कः । तं वस्नराथा चरंत्या पश्वाडुत्या वसत्या च निवसंत्यौषधाडुत्यास्तं यथा गाव आप्नुवंति तथाप्नुयाम । नि० १०. २१. । इति । अयमग्निः सिंधुर्न क्षोदः स्यंदनशीलमुदकमिव नीचीर्नितरामंचतीरितस्ततो नितरामुन्नच्छंतीर्ज्वालाः प्रैनोत् । प्रेरयति । यथा जलप्रवाहो निम्नदेशे शीघ्रं गच्छति तद्वदग्नेर्ज्वाला दग्धव्यं प्रति गच्छंतीति भावः । स्वर्नभसि वर्तमाने दृशीके दर्शनीये तस्मिन्नग्नौ गावो गमनस्वभावा रश्मयो नवंत । संगच्छंते । नवतिर्गतिकर्मा ॥ चराथा । चरेरौणादिकोऽथकप्रत्ययः । दीर्घश्छांदसः । सुपां सुलुगिति विभक्तेराकारः । वसत्या । वहिवस्यर्तिभ्यश्चित् । उ० ४. ६०. । इत्यतिप्रत्ययः । उदात्तयण इति विभक्तेरुदात्तत्वं । अस्तं । अस्यतेऽस्मिन्सर्वमित्यस्तं गृहं । असिहसीत्यादिना तन् । तितुत्रेतीट्प्रतिषेधः । नित्त्वादाद्युदात्तत्वं । नचंते । नक्षतिर्व्याप्तिकर्मा । नक्ष गतौ । व्यत्ययेनात्मनेपदं । चादिलोपे विभाषेति निघाताभावः । नीचीः । निपूर्वादंचतेश्चोपसंख्यानं । पा० ४. १. ६. २. । इति ङीप् । अच इत्यकारलोपे चाविति दीर्घत्वं । न्यधी च । पा० ६. २. ५३. । इति गतेः प्रकृतिस्वरत्वं । ऐनोत् । इण् गतौ । अंतर्भावितण्यर्थाच्छंदसि लुङ्लङ्लिट इति वर्तमाने लङि व्यत्ययेन श्नुः । आडागमो वृद्धिश्च । दृशीके । दृशिर् प्रेक्षणे । अनिदृशिभ्यां चेति कीकन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं ॥ ॥ १० ॥

वनेष्विति द्वैपदं दशर्चमध्ययनतः पंचर्चं तृतीयं सूक्तं पराशरस्यार्षमाग्नेयं । वनेष्वित्यनुक्रांतं ॥ विनियोगो लैंगिकः ॥

वनेषु जायुर्मर्तेषु मित्रो वृणीते श्रुष्टिं राजेवाजुर्यं ।
क्षेमो न साधुः क्रतुर्न भद्रो भुवत्स्वाधीर्होता हव्यवाट् ॥ १ ॥ २ ॥
वनेषु । जायुः । मर्तेषु । मित्रः । वृणीते । श्रुष्टिं । राजाऽइव । अजुर्यं ।
क्षेमः । न । साधुः । क्रतुः । न । भद्रः । भुवत् । सुऽआधीः । होता । हव्यऽवाट् ॥ १ ॥ २ ॥

वनेषु जायुररण्येषु जायमानो मर्तेषु मनुष्येषु मित्रः सखा सोऽयमग्निः श्रुष्टिं । श्रु आशु अश्नुते कर्माणि व्याप्नोतीति श्रुष्टिर्यजमानः । क्षिप्रेण कर्मणामनुष्ठातेत्यर्थः । तथा च यास्कः । श्रुष्टीति क्षिप्रनामाशु अष्टीति । नि० ६. १२. । एवंभूतं यजमानं वृणीते । संभजते । अनेन प्रत्तं हविः स्वीकृत्य रक्षतीति भावः । तत्र दृष्टांतः । राजेवाजुर्यं । अजुर्यं जरारहितं दृढांगं सर्वकार्येषु शक्तमित्यर्थः । एवंभूतं पुरुषं यथा राजा वृणीते तद्वत् । क्षेमो न रक्षक इव साधुः साधयिता क्रतुर्न । क्रतुः कर्मणां कर्ता । स इव भद्रो भजनीयः कल्याणो वा होता देवानामाह्वाता हव्यवाट् हव्यवाहनो नाम देवानामग्निः । तथा चाम्नायते । त्रयो वा अग्नयो हव्यवाहनो देवानां कव्यवाहनः पितॄणां सहरक्षा असुराणां । तै० सं० २. ५. ८. ६. । इति । एवंभूतोऽग्निः स्वाधीः शोभनकर्मा शोभनाध्यानो वा भुवत् । भवतु ॥ जायुः । जि जये । कृवापाजीत्युण् । अजुर्यं । जॄष् वयोहानौ । भावे क्यप् । वृद्धौ कृतायामाकारस्य व्यत्ययेनोकारः । जुर्यं जरा नास्त्यस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । भुवत् । भवतेर्लेट्यडागमः । बहुलं छंदसीति [illegible] लुक् । भूसुवोस्तिङीति गुणप्रतिषेधः ॥

हस्ते दधानो नृम्णा विश्वान्यमे देवान्धाद्गुहा निषीदन् ।
विदंतीमत्र नरो धियंधा हृदा यत्तष्टान्मंत्राँ अशंसन् ॥ ३ ॥ ४ ॥
हस्ते । दधानः । नृम्णा । विश्वानि । अमे । देवान् । धात् । गुहा । निऽसीदन् ।
विदंति । ईं । अत्र । नरः । धियंऽधाः । हृदा । यत् । तष्टान् । मंत्रान् । अशंसन् ॥ ३ ॥ ४ ॥

विश्वानि सर्वाणि नृम्णा नृम्णानि हविर्लक्षणानि धनानि हस्ते स्वकीये बाहौ दधानो धारयन्नयमग्निर्गुहा गुहायामप्सु मध्येऽश्वत्थादौ वा संवृतप्रदेशे निषीदन् निगूढो वर्तमानः सन्नमे भये देवान्धात् । अधापयत् । अग्नौ हविर्भिः सह पलायिते सति सर्वे देवा अभैषुरित्यर्थः । नरो नेतारो धियंधाः कर्मणां बुद्धीनां

वा धारयितारो देवा अत्रास्मिन्काल ईमेनमग्निं विदंति। जानंति। यद्यदा हृदा हृदयावस्थितया बुद्ध्या तष्टान्निर्मितानग्निस्तुतिपरान्मंत्रानशंसन् अस्तुवन्। अवोचन्नित्यर्थः ॥ निषीदन्। सदेरप्रतेरिति षत्वं। विदंति। विद ज्ञाने। अदादित्वाच्छपो लुक्। प्रत्ययस्वरः। धियंधाः। आतोऽनुपसर्गे क इति कः। तत्पुरुषे कृति बहुलमिति बहुलवचनाद्द्वितीयाया अप्यलुक्। तष्टान्। तक्षू त्वक्षू तनूकरणे। निष्ठा। यस्य विभाषेतीट्प्रतिषेधः। स्कोः संयोगाद्योरिति कलोपः ॥

अजो न क्षां दाधार पृथिवीं तस्तंभ द्यां मंत्रेभिः सत्यैः।
प्रिया पदानि पश्वो नि पाहि विश्वायुरग्ने गुहा गुहं गाः ॥५॥६॥
अजः। न। क्षां। दाधार। पृथिवीं। तस्तंभ। द्यां। मंत्रेभिः। सत्यैः।
प्रिया। पदानि। पश्वः। नि। पाहि। विश्वऽआयुः। अग्ने। गुहा। गुहं। गाः ॥५॥६॥

अजो न। अजति गच्छतीत्यजः सूर्यः। यद्वा। न जायत इत्यजः। जन्मरहित इत्यर्थः। स इव। क्षेति पृथिवीनाम। क्षां भूमिं दाधार। अयमग्निः प्रकाशकत्वेन धारयति। पृथिवीत्यंतरिक्षनाम। पृथिवीमंतरिक्षं च धारयतीत्येव। द्यां द्युलोकं सत्यैरवितथार्थैर्मंत्रेभिर्मंत्रैस्तस्तंभ। स्तभ्नाति। यथाधो न पतति उपर्येव तिष्ठति तथा करोतीत्यर्थः। मंत्रैर्दिवो धारणं तैत्तिरीये समाम्नातं। देवा वा आदित्यस्य सुवर्गस्य लोकस्य पराचो ऽतिपाताद्बिभयुः। तं छंदोभिरदृंहन्धृत्या इति। यद्वा। सत्यैर्मंत्रैः स्तूयमानोऽग्निर्द्यां तस्तंभेति। हे अग्ने विश्वायुः विश्वं सर्वमायुरन्नं यस्य स त्वं पश्वः पशोः प्रिया प्रियाणि पदानि शोभनतृणोदकोपेतानि स्थानानि नि पाहि। नितरां पालय। मा धाक्षीरित्यर्थः। तर्हि कुत्र निवसामीति चेत् तत्राह। गुहा गुहाया अपि गुहं गुहां गवां संचारायोग्यस्थानं गाः। गच्छ। तत्रैव निवसेत्यर्थः ॥ पश्वः। जसादिषु छंदसि वावचनमिति घेर्ङितीति गुणाभावे यणादेशः। उदात्तयण इति विभक्तेरुदात्तत्वं। गुहा। सुपां सुलुगिति पंचम्या आजादेशः। चित्त्वादंतोदात्तत्वं। गुहं। व्यत्ययेन ह्रस्वत्वं। गाः। छांदसो लुङ्। इणो गा लुङीति गादेशः ॥

य ईं चिकेत गुहा भवंतमा यः ससाद धारामृतस्य।
वि ये चृतंत्यृता सपंत आदिद्वसूनि प्र ववाचास्मै ॥७॥८॥
यः। ईं। चिकेत। गुहा। भवंतं। आ। यः। ससाद। धारां। ऋतस्य।
वि। ये। चृतंति। ऋता। सपंतः। आत्। इत्। वसूनि। प्र। ववाच। अस्मै ॥७॥८॥

यः पुमान् ईमेनं गुहा भवंतं गुहायां संतमग्निं चिकेत जानाति। यश्च ऋतस्य सत्यस्य यज्ञस्य वा धारां धारयितारमेनमग्निमा ससाद आसीदति। उपास्त इत्यर्थः। ये च ऋता ऋतानि सत्यानि यज्ञान्वा सपंतः समवयंतः स्पृशंतो वा पुरुषा एतमग्निं वि चृतंति अग्निमुद्दिश्य स्तुतीर्ग्रथ्नंति। कुर्वंतीत्यर्थः। आदित् स्तुत्यनंतरमेवास्मै सर्वस्मै स्तोतृजनाय वसूनि धनानि प्र ववाच। प्रकथयति ॥ चिकेत। कित ज्ञाने। लिटि णलि लित्स्वरः। चृतंति। चृती हिंसाग्रंथनयोः। तौदादिकः। लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते। ववाच। लिटि ब्रुवो वचिः। लिट्यभ्यासस्योभयेषां। पा० ६. १. १७.। इत्यभ्यासस्य संप्रसारणं। [illegible] परपूर्वत्वस्य वा छंदसि। पा० ६. १. १०६.। इति विकल्पनाद्यणादेशः ॥

वि यो वीरुत्सु रोधन्महित्वोत प्रजा उत प्रसूष्वंतः।
चित्तिरपां दमे विश्वायुः सद्मेव धीराः संमाय चक्रुः ॥९॥१०॥
वि। यः। वीरुत्ऽसु। रोधत्। महिऽत्वा। उत। प्रऽजाः। उत। प्रऽसूषु। अंतरिति।
चित्तिः। अपां। दमे। विश्वऽआयुः। सद्मऽइव। धीराः। संऽमाय। चक्रुः ॥९॥१०॥

योऽग्निर्वीरुत्स्वोषधीषु महित्वा यानि महत्त्वानि संति तानि वि रोधत् विरुणद्धि विशेषेणावृणोति नावशेषयति। उतापि च प्रजाः प्रकर्षेणोत्पन्नाः पुष्पफलादिलक्षणाः प्रसूषूत्पादयित्रीषु मातृस्थानीयास्वोषधीष्वंतर्मध्ये विरुणद्धीत्येव। द्वितीय उतशब्दः पादपूरणः। तथा चित्तिश्चेतयिता ज्ञापयितापां दमे जलानां मध्यभूते गृहे विश्वायुः सर्वान्नो योऽग्निर्वर्तत इति शेषः। तमग्निं धीरा मेधाविनः संमाय संमाननं पूजनं कृत्वा। स्तुतिभिः स्तुत्वेत्यर्थः। चक्रुः। कर्माणि कुर्वंति। तत्र दृष्टांतः। सद्मेव। यथा सद्नं गृहं प्रथमतः संपूज्य पश्चात्तत्र कर्माण्याचरंति तद्वत्॥ वीरुत्सु। विपूर्वाद्रोहतेः क्विप्। न्यङ्क्वादिषु वीरुध्। पा० ७. ३. ५३.*। इति पठितत्वादुपसर्गस्य दीर्घो धकारश्चांतादेशः। उक्तं च। वीरुध ओषधयो भवंति। नि० ६. ३.। रोधत्। रुधिर आवरणे। लेट्यडागमः। इतश्च लोप इतीकारलोपः। संमाय। माङ् माने शब्दे च। समासेऽनञ्पूर्वे क्त्वो ल्यप्। पा० ७. १. ३७.। न ल्यपि। पा० ६. ४. ६९.। इतीत्वप्रतिषेधः॥ ॥११॥

श्रीणन्निति द्विपदं दशर्चं चतुर्थं सूक्तं। तत्राध्ययनतः पंचर्चं। ऋष्याद्याः पूर्ववत्॥ विनियोगो लैंगिकः॥

श्रीणन्नुप स्थाद्दिवं भुरण्युः स्थातुश्चरथमक्तून्व्यूर्णोत्।
परि यदेषामेको विश्वेषां भुवद्देवो देवानां महित्वा॥१॥२॥
श्रीणन्। उप। स्थात्। दिवं। भुरण्युः। स्थातुः। चरथं। अक्तून्। वि। ऊर्णोत्।
परि। यत्। एषां। एकः। विश्वेषां। भुवत्। देवः। देवानां। महिऽत्वा॥१॥२॥

भुरण्युर्हविषां भर्ता धारयिता पयःप्रभृतिना श्रयणद्रव्येण सोममिव तैर्हविर्भिः श्रीणन् मिश्रयन्दिवमुप स्थात्। उपतिष्ठति। प्राप्नोतीत्यर्थः। स्थातुः स्थावरं चरथं जंगमं तदुभयात्मकं जगदक्तून् सर्वा रात्रीश्च व्यूर्णोत्। स्वतेजसा विशेषेणाच्छादयति। हविर्वहनं कुर्वन्सर्वमपि जगत्स्वभासा प्रकाशयतीति भावः। विश्वेषां सर्वेषां देवानां दानादिगुणयुक्तानामिंद्रादीनां मध्ये देवो द्योतमान एक एवायमग्निरेषां पूर्वोक्तानां स्थावरादीनां महित्वा महत्त्वानि माहात्म्यानि यद्यस्मात्परि भुवत् परिभवति परिगृह्णाति परितो व्याप्य वर्तते। परिपूर्वो भवतिः परिग्रहार्थः। यद्वा। एषां विश्वेषां स्थावरादीनां मध्ये वर्तमानोऽयं देवोऽग्निर्देवानां महत्त्वानि यद्यदा परि भुवत् परितो व्याप्नोति। तदानीमिति पूर्वत्रान्वयः॥ ऊर्णोत्। ऊर्णुञ् आच्छादने। ऊर्णोतेर्विभाषा। पा० ७. २. ६.। इति वृद्धिविकल्पः॥

आदित्ते विश्वे क्रतुं जुषंत शुष्काद्यद्देव जीवो जनिष्ठाः।
भजंत विश्वे देवत्वं नाम ऋतं सपंतो अमृतमेवैः॥३॥४॥
आत्। इत्। ते। विश्वे। क्रतुं। जुषंत। शुष्कात्। यत्। देव। जीवः। जनिष्ठाः।
भजंत। विश्वे। देवऽत्वं। नाम। ऋतं। सपंतः। अमृतं। एवैः॥३॥४॥

हे देव द्योतमानाग्ने जीवो जीवन्प्रज्वलन् शुष्कान्नीरसादरणिरूपात्काष्ठाद्यद्यदा जनिष्ठाः प्रादुर्भवसि मथनेनोत्पद्यसे आदित् अनंतरमेव विश्वे सर्वे यजमानास्ते तुभ्यं क्रतुं कर्म जुषंत। सेवंते। अनुतिष्ठंति। तथानुष्ठाय च विश्वे ते सर्वे नाम नामकमृतमवितथं देवत्वं देवतात्वं भजंत। भजंते। प्राप्नुवंति। किं कुर्वंतः। अमृतममरणं त्वामेवैस्त्वां गंतृभिः स्तोत्रैः सपंतः समवयंतः। प्राप्नुवंत इत्यर्थः॥ जुषंतेत्यादीनि त्रीण्याख्यातानि छंदसि लुङ्लङ्लिट इति वर्तमानार्थानि। एवैः। यंति स्तोतव्याभिमुख्येन गच्छंतीत्येवानि स्तोत्राणि। इण्शीङ्भ्यां वन्। उ० १. १५२.॥

ऋतस्य प्रेषा ऋतस्य धीतिर्विश्वायुर्विश्वे अपांसि चक्रुः।
यस्तुभ्यं दाशाद्यो वा ते शिक्षात्तस्मै चिकित्वान्रयिं दयस्व॥५॥६॥

ऋतस्य । प्रेषाः । ऋतस्य । धीतिः । विश्वऽआयुः । विश्वे । अपांसि । चक्रुः ।
यः । तुभ्यं । दाशात् । यः । वा । ते । शिक्षात् । तस्मै । चिकित्वान् । रयिं । दयस्व ॥५॥६॥

ऋतस्य गतस्य देवयजनं प्राप्तस्याग्नेः प्रेषाः प्रकर्षेणेष्यमाणाः स्तुतयः क्रियंते । धीतिः । धीयते सोमः पीयतेऽस्मिन्निति धीतिर्यागः । सोऽपि ऋतस्य देवयजनदेशं प्राप्तस्याग्नेरेव क्रियते । अतः सोऽग्निर्विश्वायुः । विश्वं सर्वमायुरन्नं यस्य स तथाविधो भवति । अपि चास्मै विश्वे सर्वे यजमाना अपांसि दर्शपूर्णमासादीनि कर्माणि चक्रुः । कुर्वंति । हे अग्ने तुभ्यं यो दाशात् चरुपुरोडाशादीनि हवींषि ददाति । यो वान्योऽपि यो यजमानस्ते शिक्षात् त्वदीयं कर्म कर्तुं शक्तो भूयासमितीच्छति । उभयविधाय तस्मै यजमानाय चिकित्वान् तत्कृतमनुष्ठानं जानंस्त्वं रयिं दयस्व । धनं देहि ॥ दाशात् । दाशृ दाने । लेट्याडागमः । शिक्षात् । शक्लृ शक्तौ । इच्छार्थे सन् । सनि मीमाघुरभलभशकपतपदामच इस् । पा० ७. ४. ५४. । अत्र लोपोऽभ्यासस्येत्यभ्यासलोपः । स्कोः संयोगाद्योरिति सकारलोपः । पूर्ववल्लेट्याडागमः । चिकित्वान् । कित ज्ञाने । लिटः क्वसुः । दयस्व । दय दानगतिरक्षणहिंसादानेषु ॥

होता निषत्तो मनोरपत्ये स चिन्न्वासां पती रयीणां ।
इच्छंत रेतो मिथस्तनूषु सं जानत स्वैर्दक्षैरमूराः ॥७॥८॥
होता । निऽसत्तः । मनोः । अपत्ये । सः । चित् । नु । आसां । पतिः । रयीणां ।
इच्छंत । रेतः । मिथः । तनूषु । सं । जानत । स्वैः । दक्षैः । अमूराः ॥७॥८॥

हे अग्ने त्वं मनोरपत्ये यजमानस्वरूपायां प्रजायां होता देवानामाह्वाता सन् निषत्तो निषण्णः । मानव्यो हि प्रजाः । तै० सं० ५. १. ५. ६. । इति हि ब्राह्मणं । स चिन्नु स एव त्वमासां प्रजानां रयीणां गवादीनां धनानामपि पतिः स्वामी । अतस्ताः प्रजास्तनूष्वात्मीयेषु शरीरेषु मिथः संसृष्टमेकीभूतं पुत्ररूपेण परिणतं रेतो वीर्यमिच्छंत । ऐच्छन् । त्वदनुग्रहेण पुत्रमलभंतेति यावत् । लब्धपुत्राश्च ताः प्रजा अमूरा अमूढाः सत्यः स्वैः स्वकीयैर्दक्षैः समर्थैः पुत्रैः सह सं जानत । सम्यगवगच्छंति । चिरकालं जीवंतीत्यर्थः । यद्वा । दक्षशब्दः प्राणवाची । प्राणो वै दक्षोऽपानः क्रतुरिति श्रुतेः । स्वैर्दक्षैः स्वकीयैः प्राणैरमूराः संगतास्त्वयैव सर्वं जानंति ॥ इच्छंत । व्यत्ययेनात्मनेपदं । जानत । छांदसो लङ् । झस्यादादेशे श्नाभ्यस्तयोरात इत्याकारलोपः । अमूराः । मूरा अमूरेत्यत्र यास्क एवं व्याचख्यौ । मूढा वयं स्मोऽमूढस्त्वमसि । नि० ६. ८. । इति । अतोऽत्राप्यमूरशब्देनामूढत्वमुच्यते । वर्णव्यापत्त्या ढकारस्य रेफः । यद्वा । मुर्छा मोहसमुच्छ्राययोः । अस्मात्संपदादिलक्षणे भावे क्विप् । राल्लोप इति छलोपः । रो मत्वर्थीयः । न मूरा अमूराः । अथवा । अम गत्यादिषु । अस्मादौणादिक ऊरन्प्रत्ययः ॥

पितुर्न पुत्राः क्रतुं जुषंत श्रोषन्ये अस्य शासं तुरासः ।
वि राय और्णोद्दुरः पुरुक्षुः पिपेश नाकं स्तृभिर्दमूनाः ॥९॥१०॥
पितुः । न । पुत्राः । क्रतुं । जुषंत । श्रोषन् । ये । अस्य । शासं । तुरासः ।
वि । रायः । और्णोत् । दुरः । पुरुऽक्षुः । पिपेश । नाकं । स्तृभिः । दमूनाः ॥९॥१०॥

अस्याग्नेः शासं शासनं तुरासस्त्वरमाणाः संतो ये यजमानाः श्रोषन् शृण्वंति ते सर्वे तेनानुशिष्टं क्रतुं कर्म जुषंत । सेवंते । तत्र दृष्टांतः । पितुर्न पुत्राः । यथा पुत्राः पुरु बहुलं त्रायकाः पुन्नाम्नो नरकाद्वा रक्षकास्तनयाः पितुराज्ञां कुर्वंति तद्वत् । पुत्रः पुरु त्रायते निपरणाद्वा पुन्नरकं ततस्त्रायत इति वा । नि० २. ११. । इति यास्कः । पुरुक्षुः । क्षु इत्यन्ननाम । बह्वन्नः सोऽग्निरेषां यजमानानां दुरो द्वाराणि यज्ञस्य द्वारभूतानि रायो धनानि व्यौर्णोत् । विवृणोति । प्रकाशयति । ददातीति यावत् । अपि च दमूना दमे

यज्ञगृहे मनो यस्य सोऽग्निः। नास्मिन्नकं दुःखमस्तीति नाको द्युलोकः। तं। स्तृभिरिति नक्षत्रनाम। स्तृभिर्नक्षत्रैः पिपिश। अवयवीचकार। नक्षत्रैर्युक्तमकरोदित्यर्थः॥ ओषन्। उष दाहे। लेट्यडागमः। सिब्बहुलं लेटीति सिप्। बहुलं छंदसीति विकरणस्य लुक्। इतश्च लोप इतीकारलोपः। संयोगांतस्य लोपः। पिपिश। पिश अवयवे॥ ॥१२॥

शुक्र इति द्विपदं दशर्चमध्ययनतः पंचर्चं पंचमं सूक्तं पराशरस्यार्षमाग्नेयं। शुक्र इत्यनुक्रांतं॥ विनियोगो लैंगिकः॥

शुक्रः शुशुक्वाँ उषो न जारः पप्रा समीची दिवो न ज्योतिः।
परि प्रजातः क्रत्वा बभूथ भुवो देवानां पिता पुत्रः सन्॥१॥२॥
शुक्रः। शुशुक्वान्। उषः। न। जारः। पप्राः। समीची इति संऽईची। दिवः। न। ज्योतिः।
परि। प्रऽजातः। क्रत्वा। बभूथ। भुवः। देवानां। पिता। पुत्रः। सन्॥१॥२॥

शुक्रः शुभ्रवर्णोऽयमग्निरुषो न जार उषसो जरयिता सूर्य इव शुशुक्वान् शोचयिता सर्वस्य प्रकाशयिता भवति। तथा समीची संगते द्यावापृथिव्यौ दिवो न ज्योतिर्द्योतमानस्य सूर्यस्य ज्योतिरिव पप्रा। स्वतेजसा पूरयिता। हे अग्ने अतस्त्वं प्रजातः प्रादुर्भूतः सन् क्रत्वा कर्मणा यद्वा ज्ञानहेतुना प्रकाशेनोक्तप्रकारेण सर्वं जगत्परि बभूथ। परितो व्याप्नोषि। दीव्यंतीति देवा ऋत्विजः। तेषां पुत्रः सन् पुन्नाम्नो नरकात्त्रायकः सन् पिता भुवः। पालयिता भवसि। यद्वा। देवानामिंद्रादीनामेव पुत्रः सन् पुत्र इव दूतो भूत्वा पिता हविर्भिः पालयिता भवसि॥ शुशुक्वान्। शुच दीप्तौ। लिटः क्वसुः। व्यत्ययेन कुत्वं। पप्रा। पॄ पालनपूरणयोरित्यस्मादादृगमहनजन इति किप्रत्ययः। सुपां सुलुगिति सोर्डादेशः। समीची। संपूर्वादंचतेर्ऋत्विगित्यादिना क्विन्। समः समि। पा॰ ६.३.९३.। इति सम्यादेशः। अंचतेश्चेति वक्तव्यमिति ङीप्। अच इत्यकारलोपे चाविति दीर्घत्वं। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वं। वा छंदसीति पूर्वसवर्णदीर्घत्वं। यदि तु संऽईची इति पदविभागः क्रियते तर्हीदूदेत्। पा॰ ६.४.१३९.। इति विधीयमानमीत्वं सम उत्तरस्यापि द्रष्टव्यं। बभूथ। बभूथा ततंथ। पा॰ ७.२.६४.। इति निपातनादिडभावः॥

वेधा अदृप्तो अग्निर्विजानन्नूधर्न गोनां स्वाद्मा पितूनां।
जने न शेव आहूर्यः सन्मध्ये निषत्तो रण्वो दुरोणे॥३॥४॥
वेधाः। अदृप्तः। अग्निः। विऽजानन्। ऊधः। न। गोनां। स्वाद्म। पितूनां।
जने। न। शेवः। आऽहूर्यः। सन्। मध्ये। निऽसत्तः। रण्वः। दुरोणे॥३॥४॥

वेधाः। मेधाविनामैतत्। मेधावी। यद्वा। विधाता सर्वस्य कर्ता। अदृप्तो दर्परहितो विजानन् कर्तव्याकर्तव्यविभागं जानन्नग्निर्गोनां गवामूधर्न गोसंबंधिपयस आश्रयभूतं स्थानमिव पितूनामन्नानां स्वाद्म स्वादयिता रसयिता। यथा गोरूधः पयःप्रदानेन सर्वाण्यन्नानि स्वादूनि करोति तद्वदग्निरपि सम्यक्पाकेन सर्वाण्यन्नानि स्वादूनि करोतीत्यर्थः। अपि चैवंभूतोऽग्निर्जने न शेवो जनपदे लोकसुखकरः पुरुष इव मध्ये यज्ञेषु मध्य आहूर्य आह्वातव्यः सन् दुरोणे यज्ञगृहे निषत्तो निषण्णो रण्वो रमयिता स्तुत्यो वा भवति॥ गोनां। गोः पादांते। पा॰ ७.१.५७.। इत्यपादांतेऽपि नुट्। स्वाद्म। स्वाद आस्वादने। अंतर्भावितण्यर्थाद्न्येभ्योऽपि दृश्यंत इति मनिन्। सुपां सुलुगिति सोर्लुक्। पितूनां। नामन्यतरस्यामिति नाम उदात्तत्वं। आहूर्यः। आङ्पूर्वात् ह्वयतेरचो यदिति यत्। बहुलं छंदसीति संप्रसारणं। हल इति दीर्घः। रेफोपजनश्छांदसः। यतोऽनाव इत्याद्युदात्तत्वं॥

पुत्रो न जातो रण्वो दुरोणे वाजी न प्रीतो विशो वि तारीत्।
विशो यदह्वे नृभिः सनीळा अग्निर्देवत्वा विश्वान्यश्याः ॥ ५॥ ६॥
पुत्रः। न। जातः। रण्वः। दुरोणे। वाजी। न। प्रीतः। विशः। वि। तारीत्।
विशः। यत्। अह्वे। नृऽभिः। सऽनीळाः। अग्निः। देवऽत्वा। विश्वानि। अश्याः॥ ५॥ ६॥

पुत्रो न पुत्र इव जातः प्रादुर्भूतोऽग्निर्दुरोणे गृहे रण्वो रमयिता भवति। वाजी न अश्व इव प्रीतो हर्षयुक्तः सन्विशः संग्रामे वर्तमानाः शत्रुभूताः प्रजा वि तारीत्। विशेषेण तरति। अतिक्रामति। अपि च नृभिर्ऋत्विग्लक्षणैर्मनुष्यैः सहितोऽहं सनीळाः समाननिवासस्थाना विशो दैवीः प्रजा यद्यदाह्वे आह्वयामि तदानोमयमग्निर्विश्वानि सर्वाणि देवत्वा देवत्वान्यश्याः। अश्नुते। प्राप्नोति। स्वयमेव तत्तद्देवतारूपो भवतीत्यर्थः। तथा च मंत्रांतरमाम्नास्यते। त्वमग्ने वरुणो जायसे यत्त्वं मित्रो भवसि यत्समिद्ध इत्यादि। ऋग्वे॰ ५. ३. १.॥ अश्याः। अशू व्याप्तौ। लिङि व्यत्ययेन परस्मैपदमध्यमौ। बहुलं छंदसीति विकरणस्य लुक्॥

नकिष्ट एता व्रता मिनंति नृभ्यो यदेभ्यः श्रुष्टिं चकर्थ।
तत्तु ते दंसो यदहन्त्समानैर्नृभिर्यद्युक्तो विवे रपांसि ॥ ७॥ ८॥
नकिः। ते। एता। व्रता। मिनंति। नृऽभ्यः। यत्। एभ्यः। श्रुष्टिं। चकर्थ।
तत्। तु। ते। दंसः। यत्। अहन्। समानैः। नृऽभिः। यत्। युक्तः। विवेः। रपांसि॥ ७॥ ८॥

हे अग्ने ते तव संबंधीन्येता व्रता एतानि परिदृश्यमानानि दर्शपूर्णमासादीनि कर्माणि नकिर्मिनंति। राक्षसादयो बाधका न हिंसंति। यद्यस्मात्त्वमेभ्यः कर्मसु वर्तमानेभ्यो नृभ्यो यज्ञस्य नेतृभ्यो यजमानेभ्यः श्रुष्टिं। श्रु आश्वश्नुते व्याप्नोतीति श्रुष्टिर्यज्ञफलरूपं सुखं। तच्चकर्थ कृतवानसि। सति हि तव व्रतानां बाधक एतन्नोपपद्यते। अतोऽवगम्यते तव व्रतानां हिंसका न संतीति। हे अग्ने ते त्वदीयं तत्तु दंसस्तदेव कर्म यद्यदि राक्षसादिरहन् हंति नाशयति तदानीं समानैः सप्तगणरूपेण सदृशैर्नृभिर्नेतृभिर्मरुद्भिः युक्तस्त्वं रपांसि बाधकानि राक्षसादीनि यद्यस्मात्त्वं विवेः गमयसि पलायनं प्रापयसि। तस्मात्तव व्रतानि न हिंसंतीति योज्यं॥ मिनंति। मीञ् हिंसायां। क्रैयादिकः। प्वादीनां ह्रस्व इति ह्रस्वत्वं। विवेः। छंदसि लुङ्लङ्लिट इति वर्तमाने लङ्। वी गत्यादिषु। सिप्यदादित्वाच्छपो लुकि प्राप्ते बहुलं छंदसीति शपः श्लुः॥

उषो न जारो विभावोस्रः संज्ञातरूपश्चिकेतदस्मै।
त्मना वहंतो दुरो व्यृण्वन्नवंत विश्वे स्व१र्दृशीके ॥ ९॥ १०॥
उषः। न। जारः। विभाऽवा। उस्रः। संज्ञातऽरूपः। चिकेतत्। अस्मै।
त्मना। वहंतः। दुरः। वि। ऋण्वन्। नवंत। विश्वे। स्वः। दृशीके॥ ९॥ १०॥

उषो न जार उषसो जरयितादित्य इव विभावा विशिष्टप्रकाशयुक्त उस्रो निवासयिता संज्ञातरूपः सर्वैः प्राणिभिरवगतस्वरूपः। देवतांतरवदप्रत्यक्षो न भवतीत्यर्थः। एवंभूतोऽग्निरस्मै यजमानाय चिकेतत्। जानातु। अभिमतफलं ददात्वित्यर्थः। यद्वा। विभक्तिव्यत्ययः। अस्य इदं सूक्तरूपं स्तोत्रं चिकेतत्। जानातु। तथास्य रश्मयस्त्मनात्मनैव स्वयमेव वहंतो हविर्वहनं कुर्वंतो दुरो यज्ञगृहद्वाराणि व्यृण्वन्। विशेषेण गच्छंति। व्याप्नुवंतीत्यर्थः। तदनंतरं दृशीके दर्शनीये स्वर्नभसि विश्वे सर्वे ते रश्मयो नवंत। गच्छंति। नवतिर्गतिकर्मा। देवान्प्राप्नुवंतीत्यर्थः॥ उस्रः। वस निवासे। स्फायितंचीत्यादिना रक्। यजादित्वात्संप्रसारणं। चिकेतत्। कित ज्ञाने। जौहोत्यादिकः। लेट्यडागमः। बहुलं छंदसीति वक्तव्यं। का॰ ७. ३. ८७. १.। इति वचनान्नाभ्यस्तस्याचि पितीति लघूपधगुणप्रतिषेधाभावः। अभ्यस्तानामादिरित्याद्युदात्तत्वं। ऋण्वन्। इवि

रिवि रवि धवि गत्यर्थाः। इदित्त्वान्नुम्। छांदसो लङ्। व्यत्ययेन रेफस्य संप्रसारणं। यद्वा। ऋणु गतौ। तनोत्यादिः॥ ॥१३॥

वनेमेति द्विपदमेकादशर्चमध्ययनतः षडृचं षष्ठं सूक्तं। ऋष्याद्याः पूर्ववत्। अनुक्रांतं च। वनेमैकादशेति॥ विनियोगो लैंगिकः॥

वनेम पूर्वीरर्यो मनीषा अग्निः सुशोको विश्वान्यश्याः।
आ दैव्यानि व्रता चिकित्वाना मानुषस्य जनस्य जन्म॥१॥२॥
वनेम। पूर्वीः। अर्यः। मनीषा। अग्निः। सुऽशोकः। विश्वानि। अश्याः।
आ। दैव्यानि। व्रता। चिकित्वान्। आ। मानुषस्य। जनस्य। जन्म॥१॥२॥

पूर्वीः प्रभूता इषोऽन्नानि वनेम। संभजेमहि। अग्निस्तादृशान्यन्नानि ददात्वित्यर्थः। मनीषा मनीषया बुद्ध्यार्यो गंतव्यः प्राप्तव्यः। यद्वा। मनीषयार्यः स्वामी। सुशोकः शोभनदीप्तिः। एवंभूतोऽग्निर्विश्वानि सर्वाणि कर्माण्यश्याः। अश्नुते। व्याप्नोति। किं कुर्वन्। दैव्यानि देवेषु भवानि व्रता व्रतानि कर्माणि चिकित्वान् आ समंताज्जानन्। तथा मानुषस्य जनस्य मनुष्यजातस्य जन्मोत्पत्तिरूपं कर्म चिकित्वान् आभिमुख्येन जानन्। द्यावापृथिव्योः संबधीनि यानि कर्माणि तानि सर्वाण्यवगच्छन् अवगत्य व्याप्नोतीत्यर्थः॥ वनेम। वन षण संभक्तौ। शपि प्राप्ते व्यत्ययेन शः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः शिष्यते। पूर्वीः। पुरुशब्दाद्वोतो गुणवचनादिति ङीष्। हलि चेति दीर्घः। मनीषा। ईषाअक्षादित्वात्प्रकृतिभावः। पा॰ ६. १. १२७. २.। सुशोकः। शुच दीप्तौ। भावे घञ्। चजोः कु घिण्यतोरिति कुत्वं। शोभनः शोको यस्य। आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। अश्याः। देवता विश्वान्यश्याः। ऋग्वे॰ १. ६९. ६.। इतिवत्। चिकित्वान। कित ज्ञाने। लिटः क्वसुः॥

गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथां।
अद्रौ चिदस्मा अंतर्दुरोणे विशां न विश्वो अमृतः स्वाधीः॥३॥४॥
गर्भः। यः। अपां। गर्भः। वनानां। गर्भः। च। स्थातां। गर्भः। चरथां।
अद्रौ। चित्। अस्मै। अंतः। दुरोणे। विशां। न। विश्वः। अमृतः। सुऽआधीः॥३॥४॥

योऽग्निरपां गर्भो गर्भवदंतर्वर्ती अपांनपात्संज्ञः। यश्च वनानामरण्यानां गर्भो दावाग्निरूपेण तन्मध्ये वर्तते। यश्च स्थातां स्थावराणां काष्ठादीनां गर्भोऽंतरवस्थाता। चरथां चरणवतां जंगमानां गर्भो जाठररूपेण देहमध्येऽवतिष्ठते। एवंभूतायास्मा अग्नये दुरोणे दुस्तर्यगृहेऽद्रौ चित् पर्वतेऽप्यंतर्मध्ये हविः प्रयच्छंतीति शेषः। सोऽयममृतोऽमरणधर्माग्निः स्वाधीः शोभनकर्मयुक्तः शोभनाध्यानो वा। अस्माकं भवत्विति शेषः। तत्र दृष्टांतः। विश्वो निवेशयिता सुखेनावस्थापयिता राजा विशां न। प्रजानां यथा रक्षणरूपशोभनकर्मयुक्तो भवति तद्वत्॥ स्थातां। तिष्ठतेः क्विपि च्छांदसस्तुक्। यद्वा। औणादिकस्तुप्रत्ययः। आम्यंत्यलोपश्छांदसः। चरथां। शीङ्शपिरुगमि। उ॰ ३. ११३.। इति विधीयमानोऽथप्रत्ययो बहुलवचनाच्चरेरपि द्रष्टव्यः। आगमानुशासनस्यानित्यत्वादामो नुडभावे सवर्णदीर्घः। विश्वः। विश प्रवेशने। अस्मादंतर्भावितण्यर्थादश्निमुषीत्यादिना क्वन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं॥

स हि क्षपावाँ अग्नी रयीणां दाशद्यो अस्मा अरं सूक्तैः।
एता चिकित्वो भूमा नि पाहि देवानां जन्म मर्तांश्च विद्वान्॥५॥६॥

सः। हि। क्षपाऽवान्। अग्निः। रयीणां। दाशत्। यः। अस्मै। अरं। सुऽउक्तैः।
एता। चिकित्वः। भूमं। नि। पाहि। देवानां। जन्म। मर्तान्। च। विद्वान् ॥५॥६॥

स ह्यग्निः क्षपावान्। क्षपेति रात्रिनाम। रात्रिमान्। आग्नेयी वै रात्रिः। तै॰ ब्रा॰ २.१.२.७.। इति श्रुतेः। रात्रेरग्निसंबंधोऽप्यग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति हूयमानत्वात्। तै॰ ब्रा॰ २.१.२.१०.। यद्वा। राक्षसादीनां क्षपणेन नाशनेन युक्तः। एवंभूतोऽग्निः स्तोत्रे यजमानाय रयीणां धनानि दाशत्। दाशति। प्रयच्छति। यो यजमानोऽस्मा अग्नये सूक्तैः सुष्टूक्तैर्यथाशास्त्रं प्रयुक्तैर्मंत्रैररमलं पर्याप्तं स्तोत्रं करोति तस्मा इत्यर्थः। हे चिकित्वः। चिकित्वांश्चेतनावान्। नि॰ २.११.। इति यास्कः। हे चेतनावन् सर्वज्ञाग्ने त्वं देवानामिंद्रादीनां जन्म जन्मानि मर्तान्मनुष्यांश्च विद्वान् जानन्नेतानि भूम भूम्युपलक्षितानि भूतजातानि नि पाहि। नितरां पालय। यतस्त्वं देवमनुष्यादीन्सर्वान् जानासि अत एवमुच्यत इत्यर्थः॥ रयीणां। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। दाशत्। दाशृ दाने। लेट्यडागमः। अरं। वालमूलेत्यादिना लत्वविकल्पः। सूक्तैः। सूपमानात् क्तः। पा॰ ६.२.१४५.। इत्युत्तरपदांतोदात्तत्वं। चिकित्वः। मतुवसो रुरिति नकारस्य रुत्वं। भूम। सुपां सुलुगिति भूमिशब्दादुत्तरस्या द्वितीयाया डादेशः। पदकाले ह्रस्वश्छांदसः॥

वर्धान्यं पूर्वीः क्षपो विरूपाः स्थातुश्च रथमृतप्रवीतं।
अराधि होता स्व१र्निषत्तः कृण्वन्विश्वान्यपांसि सत्या ॥७॥८॥
वर्धान्। यं। पूर्वीः। क्षपः। विऽरूपाः। स्थातुः। च। रथं। ऋतऽप्रवीतं।
अराधि। होता। स्वः। निऽसत्तः। कृण्वन्। विश्वानि। अपांसि। सत्या ॥७॥८॥

पूर्वीर्बह्व्य उषसः क्षपो निशाश्च विरूपाः शुक्लकृष्णतया विविधरूपाः सत्यो यमग्निं वर्धान् वर्धयंति। तथा स्थातुः स्थावरं वृक्षादिकं रथं रममाणं जंगमं मनुष्यादिकं च ऋतप्रवीतमृतेनोदकेन सत्येन यज्ञेन वा प्रकर्षेण वेष्टितं यमग्निं वर्धयंति। सोऽग्निः स्वः सुष्ठरणीये देवयजने निषत्तो निषण्ण उपविष्टः सन् होता देवानामाह्वाताराधि। संसिद्धोऽभूत्। यद्वा। ऋत्विग्भिरराधि। आराधित इत्यर्थः। किं कुर्वन्। विश्वानि सर्वाणि सत्या सत्सु यजमानेषु भवानि यद्वा सत्यफलान्यपांसि कर्माणि कृण्वन् कुर्वन्॥ वर्धान्। वृधेर्ण्यंताल्लेट्याडागमः। छंदस्युभयथेति शप आर्धधातुकत्वात् णिलोपः। इतश्च लोप इतीकारलोपे संयोगांतलोपः। ऋतप्रवीतं। व्येञ् संवरणे। अस्मात्कर्मणि निष्ठा। वचिस्वपीत्यादिना संप्रसारणं। हल इति दीर्घः। थाथादिना उत्तरपदांतोदात्तत्वे प्राप्ते गतिकारकपूर्वस्य ग्रहणात्तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। अराधि। राध साध संसिद्धौ। कर्तरि लुङि व्यत्ययेन च्लेश्चिण्॥

गोषु प्रशस्तिं वनेषु धिषे भरंत विश्वे बलिं स्वर्णः।
वि त्वा नरः पुरुत्रा सपर्यन्पितुर्न जिव्रेर्वि वेदो भरंत ॥९॥१०॥
गोषु। प्रऽशस्तिं। वनेषु। धिषे। भरंत। विश्वे। बलिं। स्वः। नः।
वि। त्वा। नरः। पुरुऽत्रा। सपर्यन्। पितुः। न। जिव्रेः। वि। वेदः। भरंत ॥९॥१०॥

हे अग्ने त्वं वनेषु वननीयेषु संभजनीयेषु गोष्वश्वादीयेषु पशुषु प्रशस्तिं प्रशंसां धिषे। दधिषे। स्थापयसि। अस्माकं प्रशस्ता गवादिपशवो भवंत्वित्यर्थः। विश्वे सर्वे जना नोऽस्मभ्यं स्वः सुष्ठरणीयं बलिमुपायनरूपं धनं भरंत। आहरंतु। हे अग्ने त्वा त्वां नरो मनुष्याः पुरुत्रा बहुषु देवयजनदेशेषु वि सपर्यन्। विविधं पूजयंति। पूजयित्वा च वेदो धनं वि भरंत। त्वत्तो विशेषेण हरंति। गृह्णंतीत्यर्थः। तत्र दृष्टांतः। जिव्रेर्जीर्णाद्वृद्धात्पितुर्न पितुरिव। यथा पुत्रा वृद्धात्पितुः सकाशाद्धनं हरंति तद्वत्॥ धिषे। छांदसो वर्तमाने लिट्। द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यं। का॰ ६.१.८.१.। इति द्विर्वचनाभावः। भरंत। हृञ् हरणे। केवलोऽपि सोपसर्गार्थो द्रष्टव्यः। छांदसो लङ्। हृग्रहोर्भ इति भत्वं। पुरुत्रा। देवमनुष्यपुरुषपुरुमर्त्येत्यादिना सप्तम्यर्थे

त्राप्रत्ययः। जिव्रिः। जॄष् वयोहानौ। जॄभृस्तृजागृभ्यः क्विन्। उ॰ ४. ५४.। ऋत इद्धातोरितीत्वं। उणादयो ऽव्युत्पन्नानि प्रातिपदिकानीति जिव्रिः किर्योर्गिर्योरित्येवमादिषु दीर्घो न भवति। का॰ ८. २. ७८.। इत्युक्तत्वात् हलि चेति दीर्घस्याभावः। रेफवकारयोर्विपर्ययः। उक्तं च। वर्णागमो वर्णविपर्ययश्च। का॰ ६. ३. १०९.। इति। नित्त्वादाद्युदात्तत्वं। वेद इति धननाम। विद्यते लभ्यत इति वेदः। विद्लृ लाभे। कर्मण्यसुन्॥

द्विपदास्वयुक्संख्यासु यांत्यातिरिच्यते सा तथैव पठितव्येत्युक्तं। उत्तरा तादृशी द्विपदा॥

साधुर्न गृध्नुरस्तेव शूरो यातेव भीमस्त्वेषः समत्सु ॥११॥

साधुः। न। गृध्नुः। अस्ताऽइव। शूरः। याताऽइव। भीमः। त्वेषः। समत्ऽसु ॥११॥

अयमग्निः साधुर्न साधक इव गृध्नुर्गृहीता। यथा साधकः साध्यफलमाशु गृह्णाति तद्वदग्निरपि सर्वं स्वीकरोतीत्यर्थः। तथायमग्निरस्तेव शूरः। यथेषूणां क्षेप्ता धानुष्कः शत्रून्प्रेरयति तद्वदग्निरपि दहन् सर्वं प्राणिजातं प्रेरयति। तथा यातेव भीमः। याता यातयिता हिंसको भीमः सर्वेषां भयंकरो भवति। तद्वदग्निरपि दृष्टमात्रेण सर्वेषां भयमुत्पादयति। अत एवंविधोऽग्निः समत्सु संग्रामेषु त्वेषो दीप्तः सन् अस्माकं सहायो भवत्वित्यर्थः॥ गृध्नुः। गृधु अभिकांक्षायां। त्रसिगृधिधृषिक्षिपेः क्नुः। शूरः। शु गतौ। अंतर्भावितण्यर्थादस्मात् शुषिचिमीनां दीर्घश्च। उ॰ २. २५.। इति क्रन्॥ ॥१४॥

उप प्रेति दशर्चं सप्तमं सूक्तं। अत्रानुक्रम्यते। उप प्र दशेति। ऋषिश्चान्यस्मादिति परिभाषया शक्तिपुत्रः पराशर ऋषिः। अनादेशपरिभाषया त्रिष्टुप्। परमाग्नेयमैंद्रादिति परिभाषितत्वादग्निर्देवता॥ प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छंदसीदमादीनि त्रीणि सूक्तानि। अथैतस्या इति खंडे तथैव सूत्रितं। उप प्र जिन्वन्निति त्रीणि का त उपेतिरिति सूक्ते। आ॰ ४. १३.। इति॥ आश्विनशस्त्रेऽपि प्रातरनुवाकातिदेशादिदमादीनि त्रीणि सूक्तानि। तथैव सूत्र्यते। एतयाग्नेयं गायत्रमुपसंतनुयात् प्रातरनुवाकन्यायेन। आ॰ ६. ५.। इति॥

उप प्र जिन्वन्नुशतीरुशंतं पतिं न नित्यं जनयः सनीळाः।

स्वसारः श्यावीमरुषीमजुष्रञ्चित्रमुच्छंतीमुषसं न गावः ॥१॥

उप। प्र। जिन्वन्। उशतीः। उशंतं। पतिं। न। नित्यं। जनयः। सऽनीळाः।

स्वसारः। श्यावीं। अरुषीं। अजुष्रन्। चित्रं। उच्छंतीं। उषसं। न। गावः ॥१॥

उशतीरुशत्यः कामयमानाः सनीळाः। नीळो निवासस्थानं। समाननिवासस्थानाः। एकपाण्यवस्थानात्। स्वसार इत्यंगुलिनाम। एवंभूता अंगुलय उशंतं कामयमानमग्निं जनयो जाया नित्यमसाधारणं पतिं न भर्तारमिवोप प्र जिन्वन्। उपेत्य हवि[illegible] प्रीणयंति। प्रीणयित्वा च चित्रं चायनीयं पूजनीयं तमग्निमंजलिबंधनेनाजुष्रन्। असेवंत। तत्र दृष्टांतः। श्यावीं श्याववर्णां रात्रिसंबंधात्कृष्णां सत उच्छंतीं सूर्यकिरणसंबंधात्तमो वर्जयंतीं अत एवारुषीमारोचमानां यद्वा शुभ्ररूपयुक्तामुषसं न उषोदेवतां गावो रश्मयो यथा सेवंते तद्वत्। यथा रश्मय उषसा नित्यसंबद्धा एवं सर्वेषु यज्ञेष्वग्निपरिचरणेनांगुलयो नित्यसंबद्धा इति तात्पर्यार्थः॥ जिन्वन्। जिवि प्रीणनार्थः। इदित्त्वान्नुम्। लेट्यडागमः। उशतीः। वा छंदसीति पूर्वसवर्णदीर्घत्वं। शतुरनुम इति नद्या उदात्तत्वं। स्वसारः। असु क्षेपण इत्यस्मात्सुञ्यसेर्ऋन्। उ॰ २. ९७.। इति ऋन्। न षट्स्वस्रादिभ्यः। पा॰ ४. १. १०.। इति ङीप्प्रतिषेधः। नित्त्वादाद्युदात्तत्वं। अरुषीं। अरुषमिति रूपनाम। ऋ गतौ। ऋहनिभ्यामुषच्। उ॰ ४. ७३.। छंदसीवनिपाविति मत्वर्थीय ईकारः। व्यत्ययेनाद्युदात्तत्वं। अजुष्रन्। जुषी प्रीतिसेवनयोः। तौदादिकः। लङि व्यत्ययेन परस्मैपदं। रुडित्यनुवृत्तौ बहुलं छंदसीत्यंतादेशस्य रुडागमः॥

वीळु चिद्दृळ्हा पितरो न उक्थैरद्रिं रुजन्नंगिरसो रवेण।

चक्रुर्दिवो बृहतो गातुमस्मे अहः स्वर्विविदुः केतुमुस्राः ॥२॥

वीळु । चित् । दृळ्हा । पितरः । नः । उक्थैः । अद्रिं । रुजन् । अंगिरसः । रवेण ।
चक्रुः । दिवः । बृहतः । गातुं । अस्मे इति । अहः । स्वः । विविदुः । केतुं । उस्राः ॥ २ ॥

नोऽस्माकं पितरोऽंगिरस एतत्संज्ञा ऋषय उक्थैः शस्त्रैरग्निं स्तुत्वा वीळु चिद्दृळ्हा। वीळ्विति बलनाम। बलवंतं दृढांगमप्यद्रिमत्तारं पणिनामानमसुरं रवेण स्तुतिशब्दमात्रेणैव रुजन्। अभंजन्। तैः स्तुतोऽग्निस्त-मसुरं हतवानित्यर्थः। किंच बृहतो महतो दिवो द्युलोकस्य गातुं मार्गमस्मे अस्माकं चक्रुः। कृतवंतः। आवर-कस्यासुरस्याग्निना हतत्वात्। मार्गं कृत्वा च स्वः सुष्ठ्वरणीयमसुरराहित्येन सुखेन प्राप्यमहर्दिवसं विविदुः। अजानन् लब्धवंतो वा। तथा केतुमह्नां केतयितारं ज्ञापयितारमादित्यमुस्राः पणिनापहृता गाश्च विविदुरि-त्यनुषंगः॥ वीळु। सुपां सुलुगिति विभक्तेर्लुक्। दृळ्हा। दृढः स्थूलबलयोः। पा० ७.२.२०। इति निपातितः। सुपां सुलुगिति डादेशः। रुजन्। रुजो भंगे। तौदादिकः। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। विविदुः। विद ज्ञाने विद्लृ लाभ इति वा। लिट्युसि रूपं॥

दधन्नृतं धनयन्नस्य धीतिमादिदर्यो दिधिष्वोऽ३ विभृत्राः ।
अतृष्यंतीरपसो यंत्यच्छा देवाञ्जन्म प्रयसा वर्धयंतीः ॥ ३ ॥
दधन् । ऋतं । धनयन् । अस्य । धीतिं । आत् । इत् । अर्यः । दिधिष्वः । विऽभृत्राः ।
अतृष्यंतीः । अपसः । यंति । अच्छ । देवान् । जन्म । प्रयसा । वर्धयंतीः ॥ ३ ॥

ऋतं देवयजनदेशं प्राप्तमग्निमंगिरसो महर्षयो दधन्। गार्हपत्यादिरूपेणाधारयन्। धारयित्वा चास्या-ग्नेर्धीतिं कर्माग्निहोत्रादिलक्षणं धनयन्। धनमकुर्वन्। यथा पुरुषा धनं संपादयंति तद्वदग्निदेवत्यं कर्मान्व-तिष्ठन्नित्यर्थः। आदित् अंगिरसामनुष्ठानानंतरमेवार्योऽर्या धनस्य स्वामिन्यो दिधिष्वस्तेन धनेन दिधिष्वो ऽग्नीनां धारणं कुर्वत्यः। कृताग्न्याधाना इत्यर्थः। विभृत्रा आहितानग्नीनग्निहोत्रादिकर्मणि विहरंत्योऽतृष्यंती-र्विषयांतरतृष्णारहिता अत एवापसोऽपसा कर्मणा युक्ता एवंभूता यजमानलक्षणाः प्रजाः प्रयसा हविर्लक्ष-णेनान्नेन देवानिंद्रादीञ्जन्म जातान्मनुष्यांश्च वर्धयंतीर्वर्धयंत्यः सत्य एनमग्निमच्छाभिमुख्येन यंति। प्राप्नुवंति। परिचरंतीति यावत्॥ दधन्। दध धारणे। लङि व्यत्ययेन परस्मैपदं। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। धनयन्। धनशब्दात्तत्करोतीति णिच्। इष्ठवणौ प्रातिपदिकस्येतीष्ठवद्भावाट्टिलोपः। लङि पूर्ववत्। अर्यः। अर्यः स्वामिवैश्ययोः। पा० ३.१.१०३। इति निपातितः। लिंगवचनव्यत्ययौ। अर्यः स्वाम्याख्या चेत्। फि० १.१८। इत्यंतोदात्तत्वं। दिधिष्वः। डुधाञ् धारणपोषणयोः षो अंतकर्मणीत्याभ्यामंदूदृंभूजंबूकफेलूकर्कंधू-दिधिषूः। उ० १.९५। इति कूप्रत्ययांतो निपातितः। प्रत्ययस्वरः। उदात्तस्वरितयोर्यण इति जसः स्वरितत्वं। विभृत्राः। हृञ् हरणे। विपूर्वादस्मादौणादिकः क्त्रप्रत्ययः। हृग्रहोर्भ इति भत्वं। अतृष्यंतीः। ञितृषा पिपा-सायां। जसि वा छंदसीति पूर्वसवर्णदीर्घस्य विकल्पितत्वात्पूर्वसवर्णदीर्घः। अव्ययपूर्वपदप्रकृतिस्वरत्वं। अपसः। अपसशब्दादुत्पन्नस्य मत्वर्थीयस्य विनो बहुलं छंदसीति बहुलवचनाल्लुक्। पा० ५.२.१२२। विनंतस्य चिलिंगत्वेन नञ्विषयत्वाभावात्प्रातिपदिकस्वरेणांतोदात्तत्वं। जन्म। जायंत इति जन्मानो मनुष्याः। अन्येभ्यो ऽपि दृश्यंत इति मनिन्। सुपां सुलुगिति शसो लुक्॥

मथीद्यदीं विभृतो मातरिश्वा गृहेगृहे श्येतो जेन्यो भूत् ।
आदीं राज्ञे न सहीयसे सचा सन्ना दूत्यं१ भृगवाणो विवाय ॥ ४ ॥
मथीत् । यत् । ईं । विऽभृतः । मातरिश्वा । गृहेऽगृहे । श्येतः । जेन्यः । भूत् ।
आत् । ईं । राज्ञे । न । सहीयसे । सचा । सन् । आ । दूत्यं । भृगवाणः । विवाय ॥ ४ ॥

मातरिश्वा व्यानवृत्तिरूपेणावस्थितो मुख्यप्राण ईमेनमग्निं यद्यदा मथीत् अमथ्नात् । अग्नेर्मंथनस्य व्यानवायुसाध्यत्वमथ यः प्राणापानयोः संधिः स व्यान इत्युपक्रम्य छंदोगैराम्नातं । अतो यान्यन्यानि वीर्यवंति कर्माणि यथाग्नेर्मंथनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोति ।छां॰ उ॰ १. ३. ३–५.। इति । मंत्रांतरं च भवति । आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः ।ऋग्वे॰ १. ९३. ६.। इति । कीदृशो मातरिश्वा । विभृतः प्राणिषु प्राणापानादिपंचवृत्तिरूपेण विहृतो विभज्य स्थितः । तदपि प्राणसंवादे तैरेवाम्नातं । तानरिष्टः प्राण उवाच । मा मोहमापद्यथाहमेवैतत् पंचधात्मानं प्रविभज्यैतत् बाणमवष्टभ्य विधारयामीति । मंथनेनोत्पन्नोऽयमग्निः श्वितः शुभ्रवर्णो भूत्वा गृहे गृहे सर्वस्मिन्यज्ञगृहे यद्वा जेन्यः प्रादुर्भूतो भूत् । यद्वा । रक्षसां जेन्यो जेताभिभविता भूत् । तथा च तैत्तिरीयकं । देवासुराः संयत्ता आसन् ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवता इति तेऽग्निमेव वरूथं कृत्वासुरानभ्यभवन् ।तै॰ सं॰ ६. २. २. ६.। इति । ऐतरेयिणोऽप्यामनंति । ते देवाः प्रतिबुध्याग्निं पुरस्तात्प्रातःसवने पर्यौहंस्तेऽग्निनैव पुरस्तात्प्रातःसवनेऽसुररक्षांस्यपाघ्नत । ऐ॰ ब्रा॰ ६. ४.। इति । आत् यज्ञगृहे प्रादुर्भावानंतरमीमेनमग्निं भृगवाणः । भृगुर्ऋषिः । स इवाचरन्यजमानो दूत्यं दूतस्य कर्म विवाय । शास्त्रमर्यादया प्रापयामास । तत्र दृष्टांतः । सचा सन् । सखा भवन्नन्यो राजा सहीयसेऽभिभवित्रे प्रबलाय राज्ञे न । यथा राज्ञे स्वपुरुषं दूतकर्म प्रापयति तद्वत् ॥ मथीत् । मथे विलोडने । लुङि ह्म्यंतक्षणेति वृद्धिप्रतिषेधः । जेन्यः । जनी प्रादुर्भावे । अस्मादौणादिक एन्यप्रत्ययष्टिलोपश्चेति भट्टभास्करमिश्रः । यद्वा । जि जय इत्यस्मात्कृत्यल्युटो बहुलमिति बहुलवचनात्कर्तर्यचो यदिति यत् । तस्य नुडागमश्च । यतोऽनाव इत्याद्युदात्तत्वं । दूत्यं । दूतस्य कर्म दूत्यं । दूतस्य भागकर्मणी इति यत् । तित्स्वरित इति स्वरितत्वं । यतोऽनाव इत्याद्युदात्तत्वं त्वनित्यमिति वीरवीर्यौ चेत्यत्र ज्ञापितं । भृगवाणः । भृगुरिवाचरन् । सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यः ।म॰ ३. १. ११. ३.। इति वचनात् क्विप् । तदंताल्लटो व्यत्ययेन शानच् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे प्रत्ययांतधातोरंतोदात्तत्वे प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तत्वं । विवाय । वी गत्यादिषु । अस्मादंतर्भावितण्यर्थाल्लिट् ॥

म॒हे यत्पि॒त्र ईं॒ रसं॑ दि॒वे कर॒व त्स॑रत्पृश॒न्य॑श्चिकि॒त्वान् ।
सृ॒जदस्ता॑ धृष॒ता दि॒द्युम॑स्मै॒ स्वायां॑ दे॒वो दु॑हि॒तरि॒ त्विषिं॑ धात् ॥५॥
म॒हे । यत् । पि॒त्रे । ईं॒ । रस॑म् । दि॒वे । कः । अव॑ । त्स॒र॒त् । पृ॒श॒न्यः॑ । चि॒कि॒त्वान् ।
सृ॒जत् । अस्ता॑ । धृ॒ष॒ता । दि॒द्युं॑ । अ॒स्मै॒ । स्वाया॑म् । दे॒वः । दु॒हि॒तरि॑ । त्विषि॑म् । धा॒त् ॥५॥

महे महते पित्रे पालयित्रे दिवे द्योतमानाय देवगणायेमिमं रसं पृथिव्याः सारभूतं हविर्यद्यदा यजमानः कः करोति तदानीं पृशन्यः स्पर्शनकुशलो राक्षसादिश्चिकित्वान् हवींषि वहंतं हे अग्ने त्वां जानन् अव त्सरत् । त्वद्भयात्पलायते । अस्तेषुक्षेपणशीलोऽग्निर्धृषता धर्षकेण धनुषास्मै पलायमानाय राक्षसाद्ये दिद्युं दीप्यमानं बाणं सृजत् । विसृजति । देवो दीप्यमान उषःकालं प्राप्तोऽग्निः स्वायां स्वकीयायां दुहितरि दुहितृवत्समनंतरभाविन्यामुषसि त्विषिं स्वकीयां दीप्तिं धात् । स्थापयति । उषःकाले हि सूर्यकिरणाः प्रादुर्भवंति । तैः स्वकीयं प्रकाशमेकीकरोति । तथा च तैत्तिरीयकं । उद्यंतं वावादित्यमग्निरनुसमारोहति तस्माद्धूम एवाग्नेर्दिवा ददृशे ।तै॰ ब्रा॰ २. १. २. १०.। इति । अत उषसि दीप्तिं निदधातीत्युच्यते ॥ कः । करोतेर्लुङि मंत्रे घसेत्यादिना च्लेर्लुक् । त्सरत् । त्सर छद्मगतौ । लेट्यडागमः । इतश्चेतीकारलोपः । पृशन्यः । स्पृश संस्पर्शने । कृपृवृजीति ।उ॰ २. ८१.। विधीयमानः क्युप्रत्ययो बहुलवचनादस्मादपि भवति । स्पृशनं स्पर्शः । तत्र साधुरिति यत् । सलोपश्छांदसः । तित्स्वरितमिति स्वरितत्वं । दिद्युं । दिद्युदिति वज्रनाम । अंत्यलोपश्छांदसः । धात् । छांदसो वर्तमाने लुङ् ॥ ॥१५॥

स्व आ यस्तुभ्यं॒ दम॒ आ वि॒भाति॒ नमो॑ वा॒ दाशा॑दुश॒तो अनु॒ द्यून् ।
वर्धो॑ अग्ने॒ वयो॑ अस्य द्वि॒बर्हा॒ यास॑द्रा॒या स॒रथं॒ यं जु॒नासि॑ ॥६॥

स्वे। आ। यः। तुभ्यं। दमे। आ। विऽभाति। नमः। वा। दाशात्। उशतः। अनु। द्यून्। वर्धो इति। अग्ने। वयः। अस्य। द्विऽबर्हाः। यासत्। राया। सऽरथं। यं। जुनासि॥६॥

हे अग्ने तुभ्यं त्वां स्वे दमे स्वकीये यज्ञगृहे यो यजमानः। एक आकारो मर्यादायां। यथाशास्त्रमा विभाति आ समंतात्समिदादिभिः काष्ठैः प्रज्वलयति। अनु द्यून् अनुदिवसमुशतः कामयमानाय तुभ्यं नमो वा दाशात् हविर्लक्षणमन्नं वा दद्यात्। अस्य यजमानस्य हे अग्ने द्विबर्हा द्वयोर्मध्यमोत्तमस्थानयोर्वृंहितो वर्धितस्त्वं वयोऽन्नं वर्धो। वर्धयैव। सरथं रथेन सहितं युयुत्सुं यं पुरुषं जुनासि युद्धे प्रेरयसि स पुरुषो राया धनेन यासत्। संगच्छते॥ तुभ्यं। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी। दाशात्। दाशृ दाने। लेट्याडागमः। उशतः। शतुरनुम इति विभक्तिरुदात्तत्वं। चतुर्थ्यर्थे बहुलं छंदसीति षष्ठी। अनु द्यून्। द्युरित्यहर्नाम। लक्षणेऽनोः कर्मप्रवचनीयत्वं। कर्मप्रवचनीययुक्त इति द्वितीया। वर्धो। वर्ध उ। वृधेर्ण्यंताल्लोटि छंदस्युभयथेति शप आर्धधातुकत्वात्सेरनिटीति णिलोपः। शपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। उञा सहैकादेश उञः। पा॰ १.१.१७.। इति प्रगृह्यत्वं। यासत्। या प्रापणे। सिब्बहुलं लेटीति सिप्। लेटोऽडाटावित्यडागमः। जुनासि। जु इति गत्यर्थः सौत्रो धातुः। शपि प्राप्ते व्यत्ययेन श्ना॥

अग्निं विश्वा अभि पृक्षः सचंते समुद्रं न स्रवतः सप्त यह्वीः।
न जामिभिर्वि चिकिते वयो नो विदा देवेषु प्रमतिं चिकित्वान्॥७॥

अग्निं। विश्वाः। अभि। पृक्षः। सचंते। समुद्रं। न। स्रवतः। सप्त। यह्वीः।
न। जामिऽभिः। वि। चिकिते। वयः। नः। विदाः। देवेषु। प्रऽमतिं। चिकित्वान्॥७॥

विश्वाः पृक्षश्चरुपुरोडाशादीनि सर्वाण्यन्नान्यग्निमंगनादिगुणयुक्तमेनमभि सचंते। आभिमुख्येन समवयंति। प्राप्नुवंति। तत्र दृष्टांतः। स्रवतः समुद्रं न। यथा स्रवंत्यो नद्यः समुद्रमभिगच्छंति तद्वत्। कीदृश्यो नद्यः। सप्त सप्तसंख्याकाः। इमं मे गंग इत्यस्यामृचि सप्त हि नद्यः प्राधान्येन श्रूयंते। यह्वीः। महन्नामैतत्। महत्यः। जमंत्येकस्मिन्पात्रे सह भुंजत इति जामयो ज्ञातयः। तैर्नोऽस्मदीयं वयोऽन्नं न वि चिकिते। न ज्ञायते। तेभ्यो दातुमस्माकमन्नं प्रभूतं नास्तीति भावः। अतो हे अग्ने त्वं देवेषु। दीव्यंतीति देवा धनपतयः। तेषु प्रमतिं प्रकर्षेण मननीयं धनं चिकित्वानवगच्छन्विदाः। अस्मभ्यं लंभय। यद्वा। प्रमतिं प्रकृष्टं स्तोत्रं देवेषु विदाः। वेदय। ज्ञापय॥ पृक्षः। अन्ननामैतत्। पृची संपर्क इत्यस्मादौणादिकः कर्मणि क्विप् धातोः षुगागमश्च। यद्वा। असुनि सुपां सुलुगिति जसो लुक्। स्रवतः। स्रु गतौ। स्रवणं स्रवः। तत्कुर्वंति। सर्वप्रातिपदिकेभ्यः क्विब्वक्तव्य इति क्विप्। एतदंताद्धातोः क्विचेति क्विप्। ह्रस्वस्य पितीति तुक्। क्विबंताद्धातोः सति शिष्टत्वाद्धातुस्वरेणांतोदात्तत्वं। यह्वीः। पिप्पल्यादिभ्यश्चेति गौरादिषु पठितत्वात्तस्य चाकृतिगणत्वाद्वापि ङीष्। पा॰ ४.१. ४१.*। वा छंदसीति पूर्वसवर्णदीर्घत्वं। चिकिते। छांदसो वर्तमाने कर्मणि लिट्। विदाः। विद्लृ लाभे। अंतर्भावितण्यर्थाल्लेट्याडागमः। तुदादित्वाच्छः। आगमानुशासनस्यानित्यत्वान्नुमभावः। [illegible] शिष्यते। यद्वा। विदेर्ज्ञानार्थस्य लेटि व्यत्ययेन शः॥

आ यदिषे नृपतिं तेज आनट् शुचि रेतो निषिक्तं द्यौरभीके।
अग्निः शर्धमनवद्यं युवानं स्वाध्यं जनयत्सूदयच्च॥८॥

आ। यत्। इषे। नृऽपतिं। तेजः। आनट्। शुचि। रेतः। निऽसिक्तं। द्यौः। अभीके।
अग्निः। शर्धं। अनवद्यं। युवानं। सुऽआध्यं। जनयत्। सूदयत्। च॥८॥

अग्नेर्यत्तेजो नृपतिं नृणामृत्विजां पालकं यजमानमानट् जाठररूपेण आ समंताद्व्याप्नोत्। किमर्थं। इष अन्नाय। कीदृशं। शुचि शुद्धं दीप्तं। तेन तेजसा परिपक्कमन्नं रसरूपं रेतो वीर्यमभीकेऽभ्यक्तेऽभिगते

ऽभिप्राप्ते गर्भस्थाने निषिक्तं नितरां सिक्तमग्निर्वक्ष्यमाणगुणविशिष्टपुत्ररूपेण जनयत्। जनयतु। शर्धं बलवंत-म[illegible]हेतं युवानं तरुणं। जरारहितमित्यर्थः। स्वाध्यं शोभनकर्माणं शोभनप्रज्ञं वोत्पन्नं पुत्रं सूदयच्च। यागादिकर्मसु प्रेरयतु च। यद्वा। रेत इत्युदकनाम। निषिक्तं मेघेन वृष्टमुदकमिषेऽन्नाय सस्यादिनिष्पत्तये ऽग्नेर्यत्तेज आनट् व्याप्नोत्। वृष्ट्युदकेन भौमाग्नेः संयोगे सति हि सस्यान्युत्पद्यंते। कीदृशं तेजः। नृपतिं नृणां रक्षकं शुचि दीप्तं। तादृशेन तेजसा युक्तो द्यौर्दीप्तोऽग्निरभीक आसन्नकाल एव शर्धादिगुणविशिष्टं पुत्रं जनयतु तं च प्रेरयतु यज्ञादौ ॥ इषे। सावेकाच इति विभक्तेरुदात्तत्वं। नृपतिं। परादिश्छंदसि बहुल-मित्युत्तरपदाद्युदात्तत्वं। आनट्। अशू व्याप्तौ। लङि व्यत्ययेन परस्मैपदश्नमौ। आडागमः। व्रश्चादिषत्वे ष्टुत्वं। निषिक्तं। षिचिर् क्षरणे। कर्मणि निष्ठा। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। उपसर्गात्सुनोतीति षत्वं। अभीके। अभिपूर्वादंचतेः पचाद्यचि पृषोदरादित्वाद्रूपसिद्धिः। यद्वा। इण् गतावित्यस्मादौणादिकः ककप्रत्ययः। उभयथापि दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं। स्वाध्यं। एरनेकाच इति यणादेशः। उदात्त-स्वरितयोर्यण इति स्वरितत्वं। जनयत्। जनेर्ण्यंतालेंट्यडागमः। सूदयत्। षूद क्षरणे। पूर्ववल्लेंट्यडागमः॥

मनो न योऽध्वंनः सद्य एत्येकः सत्रा सूरो वस्वं ईशे।
राजाना मित्रावरुणा सुपाणी गोषु प्रियममृतं रक्षमाणा ॥९॥
मनः। न। यः। अध्वंनः। सद्यः। एति। एकः। सत्रा। सूरः। वस्वः। ईशे।
राजाना। मित्रावरुणा। सुपाणी इति सुऽपाणी। गोषु। प्रियं। अमृतं। रक्षमाणा ॥९॥

यः सूरः सूर्य एक एकाक्यसहायः सन्नध्वनो दिव्यान्मार्गान्सद्य एति आशु गच्छति। असहायत्वं च श्रूयते। सूर्य एकाकी चरतीत्याह। असौ वा आदित्य एकाकी चरतीति। तै॰ ब्रा॰ ३. ९. ५. ४.। शीघ्रगमनं च स्मर्यते। योजनानां सहस्रे द्वे द्वे शते द्वे च योजने। एकेन निमिषार्धेन क्रममाण नमोऽस्तु त इति। शीघ्रगमने दृष्टांतः। मनो न। यथा मनः शीघ्रं गच्छति तद्वत्। स च सूरो वस्वो धनस्य सत्रा सहैव युगपदेवेशे। ईष्टे। यो हि शीघ्रं गच्छति स बहुदेशेष्ववस्थितानि धनानि प्राप्नोति। तथा राजाना राजमानौ सुपाणी शोभनबाहू मित्रावरुणा मित्रावरुणावस्मदीयासु गोषु प्रियं सर्वेषां प्रीतिकरममृतममृतवत्स्वादुभूतं पयो रक्षमाणा रक्षंतौ वर्तेते। हे अग्ने तत्तद्रूपेण त्वमेवैवं वर्तस इति भावः॥ वस्वः। लिंगव्यत्ययः। जसादिषु छंदसि वावचनमिति घेर्ङितीति गुणाभावे यणादेशः। ईशे। ईश ऐश्वर्ये। लोपस्त आत्मनेपदेष्विति तलोपः। मित्रा-वरुणा। देवताद्वंद्वे चेति पूर्वपदस्यानङादेशः। देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं॥

मा नो अग्ने सख्या पित्र्याणि प्र मर्षिष्ठा अभि विदुष्कविः सन्।
नभो न रूपं जरिमा मिनाति पुरा तस्या अभिशस्तेरधीहि ॥१०॥
मा। नः। अग्ने। सख्या। पित्र्याणि। प्र। मर्षिष्ठाः। अभि। विदुः। कविः। सन्।
नभः। न। रूपं। जरिमा। मिनाति। पुरा। तस्याः। अभिऽशस्तेः। अधि। इहि ॥१०॥

हे अग्ने पित्र्याणि पितरं वसिष्ठमुपक्र[illegible] सख्या [illegible] मा प्र मर्षिष्ठाः। मा विनाशय। अत्र मृष्यतेरुपसर्गवशादर्थांतरे वृत्तिः। यतस्त्वं कविः क्रांतदर्शी सन् अभ्याभिमुख्येन विदुः सर्वं विद्वान्। नभो न रूपं। यथांतरिक्षं रूपवंतः सूर्यरश्मय आच्छादयंति तद्वदाच्छादयति। जरिमा जरा मिनाति। मां सूक्तद्रष्टारं हिनस्ति। अभिशस्तेर्हिंसाहितोस्तस्या जराया पुराधीहि। मां बुध्यस्व। सा यथा न प्राप्नोति तथा कुरु। अमृतत्वं प्रयच्छेति यावत्॥ सख्या। सख्युर्भावः सख्यं। सख्युर्य इति यः। पित्र्याणि। पितृभ्य आगतानि। पितुर्यच्च। पा॰ ४. ३. ७९.। इति यत्प्रत्ययः। रीङृतः। पा॰ ७. ४. २७.। इति रीङादेशः। यस्येति चेतीकार-लोपः। यतोऽनाव इत्याद्युदात्तत्वं। मर्षिष्ठाः। मृष तितिक्षायां। प्रार्थनायां छांदसो लुङ्। न माङ्योग

इत्यडभावः । विदुः । विद ज्ञाने । बहुलमन्यत्रापीत्युसिप्रत्ययः । अत एव बहुलवचनाद्गुणाभावः । छंदसि वाप्राम्रेडितयोः । पा° ८. ३. ४९. । इति विसर्जनीयस्य षत्वं । नभः । नहेर्दिवि भश्च । उ° ४. २१०. । इत्यसुन् । जरिमा । जॄष् वयोहानौ । औणादिको भाव इमनिच्प्रत्ययः । मिनाति । मीञ् हिंसायां । प्वादीनां ह्रस्व इति ह्रस्वत्वं । अभिशस्तिः । अभिशस्यते हिंस्यतेऽनयेत्यभिशस्तिः । करणे क्तिन् । तादौ चेति गतेः प्रकृतिस्वरत्वं । अधीहि । इक् स्मरणे । लोप्यदादित्वाच्छपो लुक् । हेरपित्त्वेन ङित्त्वाद्गुणाभावः ॥ ॥ १६ ॥

नि काव्येति दशर्चमष्टमं सूक्तं त्रैष्टुभमाग्नेयं पराशरस्यार्षं । अनुक्रांतं च । नि काव्येति ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

नि काव्या॑ वे॒धसः॒ शश्व॑तस्क॒र्हस्ते॒ दधा॑नो॒ नर्या॑ पु॒रूणि॑ ।
अ॒ग्निर्भु॑वद्रयि॒पती॑ रयी॒णां स॒त्रा च॑क्रा॒णो अ॒मृता॑नि॒ विश्वा॑ ॥ १ ॥
नि । काव्या॑ । वे॒धसः॑ । शश्व॑तः । क॒रिति॑ क॒: । हस्ते॑ । दधा॑नः । नर्या॑ । पु॒रूणि॑ ।
अ॒ग्निः । भु॒व॒त् । र॒यि॒ऽपतिः॑ । र॒यी॒णां । स॒त्रा । च॒क्रा॒णः । अ॒मृता॑नि । विश्वा॑ ॥ १ ॥

शश्वतः शाश्वतस्य नित्यस्य वेधसो विधातुर्ब्रह्मणः संबंधीनि काव्या काव्यानि मंत्ररूपाणि स्तोत्राण्ययमग्निर्नि कः । नियमेन स्वात्माभिमुखं करोति । किं कुर्वन् । नर्या नृभ्यो हितानि नृषु साधूनि वा पुरूणि बहूनि धनानि हस्ते दधानो हस्ते धारयन् । ईदृग्भूतमग्निमवलोक्य सर्वे जनाः स्तुवंतीति भावः । स्तोतृभ्यो धनेषु दत्तेष्वप्यग्नेर्धनं न क्षीयत इत्याह । अग्निरिति । अयमग्नी रयीणां रयिपतिर्भुवत् । धनानां मध्ये यानि धनान्युत्कृष्टानि तेषां स्वामी भवति । किं कुर्वन् । विश्वा विश्वानि सर्वाण्यमृतानि । हिरण्यनामैतत् । अमृतं हिरण्यं । अथ° ५. २८. ११. । इति श्रुतेः । सर्वाणि हिरण्यानि स्तोतृभ्यः सत्रा सहैव चक्राणः कुर्वन् । युगपत्प्रयच्छन्नित्यर्थः ॥ कः । करोतेश्छांदसो लुङ् । मंत्रे घसेति च्लेर्लुक् । हल्ङ्याब्भ्य इति तकारलोपः । नर्या । नरशब्दाद्धितार्थे गवादिलक्षणो यत्प्रत्ययो द्रष्टव्यः । पा° ५. १. २. । यद्वा । तत्र साधुरिति यत् । चक्राणः । करोतेर्लटः शानच् । बहुलं छंदसीति विकरणस्य श्लुः । नन्वेवं सत्यभ्यस्तानामादिरित्याद्युदात्तत्वं प्राप्नोति । एवं । तर्हि लिटः कानजस्तु । तस्यार्धधातुकत्वेनाभ्यस्ताद्युदात्तत्वाभावे चित्स्वर एव शिष्यते ॥

अ॒स्मे व॒त्सं परि॒ षंतं॒ न विं॑दन्नि॒च्छंतो॒ विश्वे॑ अ॒मृता॒ अमू॑राः ।
श्र॒म॒युवः॑ पद॒व्यो॑ धियं॒धास्त॒स्थुः प॒दे प॑र॒मे चार्व॒ग्नेः ॥ २ ॥
अ॒स्मे इति॑ । व॒त्सं । परि॑ । संतं॑ । न । वि॒द॒न् । इ॒च्छंतः॑ । विश्वे॑ । अ॒मृताः॑ । अमू॑राः ।
श्र॒म॒ऽयुवः॑ । प॒द॒ऽव्यः॑ । धि॒यं॒ऽधाः । त॒स्थुः । प॒दे । प॒र॒मे । चारु॑ । अ॒ग्नेः ॥ २ ॥

अस्मे अस्माकं वत्सं वत्सवदत्यंतं प्रियं । यद्वा । वत्सः पुत्रः पश्चादुत्पन्नत्वात् । तद्वदग्नेरप्य[illegible] पुत्रः । तथा चाम्नायते । ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेदः । तै° ब्रा° ३. ७. ७. १०. । इति । परि षंतं परितः सर्वत्र वर्तमानं । देवेभ्यो निर्गत्याश्वत्थवेण्वादिषु निलीनं संतमित्यर्थः । एवंविधमग्निमिच्छंतो विश्वेऽमृताः सर्वेऽमरणधर्माणो देवा अमूरा अमूढा महांतस्य न विंदन् । तमग्निं नालभंत । अलभमानाश्च ते श्रमयुवो हव्यवाहनस्याभावेन हविषामभावात्तज्जन्येन श्रमेण क्लेशेनैकीभूताः तस्याग्नेरन्वेषणाय पदव्यः पादैर्गच्छंतः धियंधा धियामग्नेः शयनासनस्थानादिलक्षणानां कर्मणां धारयितारः । एवंविधाः संतश्चारु चारुणि शोभनेऽग्नेः परम उत्तमेंऽत्ये पदे । यत्र ह्यग्निर्निलीनो वर्तते तत्रेत्यर्थः । तस्मिन्पदे तस्थुः । स्थितवंतः । बहुविधेन प्रयासेनाग्निं ददृशुरित्यर्थः ॥ परि षंतं । उपसर्गप्रादुर्भ्यामस्तिर्यच्परः । पा° ८. ३. ८७. । इति षत्वं । श्रमयुवः । यु मिश्रणे । श्रमेण यूयंत इति श्रमयुवः । क्विब्वचिप्रच्छीत्यादिना । उ° २. ५७. । विधीयमानौ क्विब्दी[illegible]पि धातोर्भवतः । तन्वादि[illegible]वङ् । पदव्यः । वी गत्यादिषु । पादेन वियंति गच्छंतीति

पद्वः। क्विपेति क्विप्। धियंधाः। आतोऽनुपसर्गे क इति कः। तत्पुरुषे कृति बहुलमिति बहुलवचनाद्द्वितीयाया अलुक्। तस्थुः। पादादित्वान्निघाताभावः। चारु। सुपां सुलुगिति सप्तम्या लुक्॥

तिस्रो यद॑ग्ने श॒रद॒स्त्वामिच्छुचिं॑ घृ॒तेन॒ शुच॑यः सप॒र्यान्।
नामा॑नि चिद्दधिरे य॒ज्ञिया॒न्यसू॑दयंत त॒न्वः᳡ सु॒जा॑ताः॥३॥
ति॒स्रः। यत्। अ॒ग्ने॒। श॒रदः॑। त्वां। इत्। शुचिं॑। घृ॒तेन॑। शुच॑यः। स॒प॒र्यान्।
नामा॑नि। चित्। द॒धि॒रे॒। य॒ज्ञिया॑नि। असू॑दयंत। त॒न्वः॑। सु॒ऽजा॑ताः॥३॥

शुचयः शोधयितारो दीप्ता वा मरुतो हे अग्ने शुचिं शुद्धं दीप्यमानं वा त्वामिद्देवेभ्यो निर्गतं त्वामेवोद्दिश्य तिस्रः शरदस्त्रीन् संवत्सरान्घृतेनाज्येन यद्यदा सपर्यान् पूजां कुर्युः तदानीं त्वमाविरभूः। तदनंतरं ते मरुतस्त्वयानुगृहीताः संतो यज्ञियानि यज्ञार्हाणि यज्ञे प्रयोक्तुं योग्यानि नामानि चित् नामान्यपि दधिरे। अधारयन्। नामानि च तैत्तिरीयके समाम्नायंते। ईदृक् चान्यादृक् च तादृङ् च प्रतिदृङ् च मितश्च संमितश्च सभराः। तै॰ सं॰ ४. ६. ५. ५.। इत्यादीनि। एतैश्चाग्निचयने मारुताः सप्तकपाला हूयंते। नामानि धारयित्वा च सुजाताः पूर्वं रूपं परित्यज्य शोभनममृतत्वं प्राप्ताः संतस्तन्वः स्वकीयानि शरीराण्यसूदयंत। स्वर्गं प्रापितवंतः॥ तिस्रः। शसि त्रिचतुरोः स्त्रियां तिसृचतसृ इति पूर्वसवर्णदीर्घत्वे प्राप्तेऽचि र ऋत इति रेफादेशः। त्रिशब्दः फिषः। फि॰ १. १.। इत्यंतोदात्तः। तिस्रादेशस्यापि स्थानिवद्भावेनांतोदात्तत्व उदात्तयणो हल्पूर्वादिति शस उदात्तत्वं। शरदः। शॄ हिंसायां। शीर्यंतेऽस्यामोषधय इति शरत्संवत्सरः। शृदृभसोऽदिः। उ॰ १. १२९.। इत्यदिप्रत्ययः। उभयत्र कालाध्वनोरत्यंतसंयोगे। पा॰ २. ३. ५.। इति द्वितीया। सपर्यान्। सपर पूजायां। कंड्वादिः। लेट्याडागमः। इतश्च लोप इतीकारलोपः। यज्ञियानि। यज्ञर्त्विग्भ्यां घखञावित्यर्हार्थे घप्रत्ययः॥

आ रोद॑सी बृह॒ती वेवि॑दानाः॒ प्र रु॒द्रिया॑ जभ्रिरे य॒ज्ञिया॑सः।
वि॒दन्मर्तो॑ ने॒मधि॑ता चिकि॒त्वान॒ग्निं प॒दे प॑र॒मे त॑स्थि॒वांस॑म्॥४॥
आ। रोद॑सी॒ इति॑। बृ॒ह॒ती इति॑। वेवि॑दानाः। प्र। रु॒द्रिया॑। ज॒भ्रि॒रे॒। य॒ज्ञिया॑सः।
वि॒दत्। मर्तः॑। ने॒मऽधि॑ता। चि॒कि॒त्वान्। अ॒ग्निं। प॒दे। प॒र॒मे। त॒स्थि॒ऽवांस॑म्॥४॥

बृहती महत्यौ रोदसी द्यावापृथिव्यावा वेविदाना अत्यर्थं ज्ञापयंतः। कुचामिर्वर्तत इति परस्परं वदंतो द्यावापृथिव्योर्मध्ये वर्तमाना इत्यर्थः। यद्वा। महत्योर्द्यावापृथिव्योर्मध्य आ वेविदाना अग्निमुपलभमानाः। एवंभूता यज्ञियासो यज्ञार्हा देवा रुद्रियाः। रुद्रोऽग्निः। देवानामसुरैः सह युद्धसमये तैर्देवैः स्थापितं धनमपहृत्य गतवंतमग्निं देवा आगत्यासिसकाशाद्बलेन तद्धनमगृह्णन्। तदानीं सोऽग्निररोदीत्। तस्माद्रुद्र इत्याख्यायते। तथा च तैत्तिरीयकं। तस्मिन्देवासुराः संयत्ता आसन् तेनापाक्रामत् तद्देवा विजित्यावरुरुत्समाना अन्वायन् तदस्य सहसादित्संत सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं। तै॰ सं॰ १. ५. १. १.। इति। तस्य रुद्रस्यार्हाणि स्तोत्राणि प्र जभ्रिरे। प्रजह्निरे। चक्रुरित्यर्थः। नेमधिता। नेमशब्दोऽर्धवचनः। तथा च यास्कः। त्वो नेम इत्यर्धस्य। नि॰ ३. २०.। इति। सर्वेषां देवानामर्धभागेन धीयते धार्यत इति नेमधित इंद्रः। सर्वे देवा एकोऽर्धः। इंद्र एक एवापरोऽर्ध इति यावत्। तथा च तैत्तिरीयकं। यत्सर्वेषामर्धमिंद्रः प्रति तस्मादिंद्रो देवतानां भूयिष्ठभाक्तमः। तै॰ सं॰ ५. ४. ८. ३.। इति। तेनेंद्रेण सहितो मर्तो मरुद्गणः परम उत्तमेऽस्थे पदे स्थानेऽस्मत्यादौ तस्थिवांसं स्थितवंतमग्निं चिकित्वान् जानन् विदत्। अलभत॥ वेविदानाः। विदेर्ज्ञानार्थाल्लाभार्थाद्वा यङंताल्लटः शानच्। बहुलं छंदसीति शपो लुक्। छंदस्युभयथेति शानच आर्धधातुकत्वाद्यलोपणि-लोपौ। अभ्यस्तानामादिरित्याद्युदात्तत्वं। विदत्। विद्लृ लाभे। लुङि लृदित्वात् च्लेरङादेशः। नेमधिता। दधातेः कर्मणि निष्ठा। सुधित वसुधित नेमधित। पा॰ ७. ४. ४५.। इति धिभावो निपात्यते। तृतीया कर्म-

णीति पूर्वपदप्रकृतिस्वरत्वं। सुपां सुलुगिति तृतीयाया आकारः। तस्थिवांसं। तिष्ठतेर्लिटः क्वसुः। वस्वेका-जाद्घसामितीडागमः॥

घर्माभिष्टवे संजानाना इत्येषा। अथोत्तरमिति खंडे सूचितं। संजानाना उप सीदन्नभिज्ञु दशभिर्विवस्वतः। आ० ४.७.। इति॥

संजानाना उप सीदन्नभिज्ञु पत्नीवंतो नमस्यं नमस्यन्।
रिरिक्वांसस्तन्वः कृण्वत स्वाः सखा सख्युर्निमिषि रक्षमाणाः॥५॥
संऽजानानाः। उप। सीदन्। अभिऽज्ञु। पत्नीऽवंतः। नमस्यं। नमस्यन्निति नमस्यन्।
रिरिक्वांसः। तन्वः। कृण्वत। स्वाः। सखा। सख्युः। निऽमिषि। रक्षमाणाः॥५॥

हे अग्ने त्वां संजानानाः सम्यग्जानंतो देवा उप सीदन्। उपसीदंति। प्राप्नुवंति। उपसत्तिं कृत्वा च पत्नीवंतः सपत्नीकाः संतो नमस्यं नमस्कारार्हमभिज्ञु आभिमुख्येनावस्थितजानुयुक्तं त्वां नमस्यन्। अपूजयन्। पूजयित्वा च सख्युर्मित्रस्य तव निमिषि दर्शने निमित्तभूते सति रक्षमाणास्त्वया परिरक्ष्यमाणाः सखा सखायो देवाः स्वास्तन्वः स्वकीयानि शरीराणि रिरिक्वांसोऽनशनादिरूपेण दीक्षानियमेन रिक्तीकुर्वंतः शोषयंतः कृण्वत। यागानकुर्वन्। देवा वै यज्ञमतन्वत। ऐ० ब्रा० २.११.। इति श्रुतेः॥ नमस्यन्। नमोवरिवश्चित्रङ इति पूजार्थे क्यच्। लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। रिरिक्वांसः। रिचिर् विरेचने। लिटः क्वसुः। निमिषि। मिष स्पर्धायां। अत्रोपसर्गवशाद्दर्शनार्थः। संपदादिलक्षणो भावे क्विप्। रक्षमाणाः। कर्मणि लटः शानच्। यकि प्राप्ते व्यत्ययेन शप्॥ ॥१७॥

त्रिः सप्त यद्गुह्यानि त्वे इत्पदाविदन्निहिता यज्ञियासः।
तेभी रक्षंते अमृतं सजोषाः पशूंश्च स्थातॄञ्चरथं च पाहि॥६॥
त्रिः। सप्त। यत्। गुह्यानि। त्वे इति। इत्। पदा। अविदन्। निऽहिता। यज्ञियासः।
तेभिः। रक्षंते। अमृतं। सऽजोषाः। पशून्। च। स्थातॄन्। चरथं। च। पाहि॥६॥

त्रिः सप्त एकविंशतिसंख्याकानि गुह्यानि रहस्यानि वेदैकसमधिगम्यानि यद्यानि पदा पदानि। पद्यते गम्यते स्वर्ग एभिरिति व्युत्पत्त्या पदशब्देनात्र यज्ञा उच्यंते। ते चैकविंशतिसंख्याकाः। औपासनहोमवैश्वदेवादयः सप्त पाकयज्ञाः। अग्न्याधेयदर्शपूर्णमासादयः सप्त हविर्यज्ञाः। अग्निष्टोमात्यग्निष्टोमादयः सप्त सोमयज्ञाः। एवमेकविंशतिसंख्याकानि यज्ञलक्षणानि पदानि हे अग्ने त्वे इत् त्वय्येव निहिता स्थापितानि। तेषां सर्वेषां त्वत्प्रधानत्वात्। न ह्यग्निमंतरेण यागा अनुष्ठातुं शक्यंते। यज्ञियासो यज्ञार्हा अर्थित्वसामर्थ्यवैदुष्यादिभिरधिकारहेतुभिर्युक्ताः। तथा चोक्तं। अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तः कर्मण्यधिकारीति। एवंविधलक्षणोपेता यजमानास्तानि पदान्यविदन्। अलभंत। लब्ध्वा च तेभिर्यज्ञलक्षणैः पदैरमृतममरणधर्माणं त्वां रक्षंते। पालयंति। यजंतीत्यर्थः। सजोषास्त्वैर्यजमानैः समानप्रीतिस्त्वं पशून् गवाश्वादिपशूंश्च स्थातॄन् व्रीह्यादिस्थावराणि चरथं पशुव्यतिरिक्तमन्यच्चत्प्राणिजातमस्ति तच्च पाहि। रक्ष। तेषु हि रक्षितेषु त्वदीया यागाः कर्तुं शक्यंते नान्यथा। अतस्त्वमेवमुच्यस इत्यर्थः॥ यत्। सुपां सुलुगिति विभक्तेर्लुक्। गुह्यानि। गुहायां भवानि। भवे छंदसीति यत्। यतोऽनाव इत्याद्युदात्तत्वं। त्वे। सुपां सुलुगिति सप्तम्याः शेआदेशः। अविदन्। विद्लृ लाभे। लुङि लृदित्त्वादङ्। पशून् स्थातॄन्। उभयथर्क्षु। पा० ८.३.८.। इत्युभयथाभावान्नकारस्य रुत्वाभावः॥

विद्वाँ अग्ने वयुनानि क्षितीनां व्यानुषक्छुरुधो जीवसे धाः।
अंतर्विद्वाँ अध्वनो देवयानानतंद्रो दूतो अभवो हविर्वाट्॥७॥

विद्वान् । अग्ने । वयुनानि । क्षितीनां । वि । आनुषक् । शुरुधः । जीवसे । धाः ।
अंतःऽविद्वान् । अध्वनः । देवऽयानान् । अतंद्रः । दूतः । अभवः । हविःऽवाट् ॥ ७ ॥

हे अग्ने वयुनानि । ज्ञाननामैतत् इह तु ज्ञातव्ये वर्तते । सर्वाणि ज्ञातव्यानि विद्वान् जानंस्त्वं क्षितीनां यजमानलक्षणानां प्रजानां जीवसे जीवितुं शुरुधः क्षुद्रूपस्य शोकस्य रोधयित्रीरिषोऽन्नान्यानुषक् अनुषक्तं संततं यथा भवति तथा वि धाः । विधेहि । कुर्वित्यर्थः । एवं यजमानानन्नसमृद्धान्कृत्वानंतरं हविर्वाट् तैर्देवेभ्यः प्रत्तं हविर्वहन्दूतोऽभवः । देवानां दूतो भवसि । कीदृशस्त्वं । अंतर्विद्वान् द्यावापृथिव्योर्मध्ये जानन् । किं जानन् । अध्वनो मार्गान् । कीदृशान् । देवयानान् । देवा यैर्मार्गैर्यांति गच्छंति ताञ्जानन्नित्यर्थः । अतंद्रः पुनर्हविर्वहनेऽप्यनलसः ॥ वयुनानि । अज गतिक्षेपणयोः । अजियमिशीङ्भ्यश्च । उ॰ ३. ६१. । इति कर्मण्युन-प्रत्ययः । अजेर्व्यघञपोः । पा॰ २. ४. ५६. । इति वीभावः । क्षितीनां । क्षियंति निवसंतीति क्षितयो मनुष्याः । क्तिच्क्तौ च संज्ञायामिति कर्तरि क्तिच् । अंतोदात्ताद्ध्रस्वांतात्क्षितिशब्दादुत्तरस्य नामो नामन्यतरस्यामित्युदात्तत्वं । शुरुधः । शुचं रुंधंतीति शुरुधः । क्विबेति क्विप् । पूर्वपदस्यांत्यलोपः पृषोदरादित्वात् ॥

स्वाध्यो दिव आ सप्त यह्वी रायो दुरो व्यृतज्ञा अजानन् ।
विदद्गव्यं सरमा दृळ्हमूर्वं येना नु कं मानुषी भोजते विट् ॥ ८ ॥
सुऽआध्यः । दिवः । आ । सप्त । यह्वीः । रायः । दुरः । वि । ऋतऽज्ञाः । अजानन् ।
विदत् । गव्यं । सरमा । दृळ्हं । ऊर्वं । येन । नु । कं । मानुषी । भोजते । विट् ॥ ८ ॥

स्वाध्यः शोभनकर्मयुक्ता यह्वीर्यह्व्यो महत्यः सप्त गंगाद्याः सप्त नद्यो दिवो द्युलोकादागत्य भूम्यां प्रवहंतीति शेषः । हे अग्ने ईदृग्विधा नद्यस्त्वया स्थापिताः । अग्नौ होमे सति हि तेन तृप्तः सूर्यो वृष्टिं करोति । तस्मिन्नर्थे स्मृतिः पूर्वमुदाहृता । अतो वृष्टिद्वाराग्निरेव नदीः करोतीत्युच्यते । तथा ऋतज्ञा ऋतं यज्ञं जानंतोऽंगिरसो रायो वलनाम्नासुरेणापहृतस्य गोरूपस्य धनस्य दुरो द्वाराणि गमनमार्गानजानन् । त्वया ज्ञातवंतः । त्वत्साध्येन यागेन प्रीत इंद्रो गवामन्वेषणाय सरमां नाम देवशुनीं प्रेषितवान् । सा च सरमा गवां स्थानमवगत्येंद्रस्य न्यवेदयत् । इंद्रश्च तानंगिरसो गाः प्रापयत् । अत एतत्सर्वं त्वमेव कृतवान् । अंगिरोभ्यः सकाशाद्गव्यं गवि भवं दृळ्हं स्थूलं । बहुलमित्यर्थः । एवंविधं [illegible] सरमा देवशुनी विदत् । अलभत । कमित्येतत्पादपूरणं । येन नु येन हि गव्येन मानुषी विट् मनोः संबंधिनी प्रजा भोजते इदानीं भुंक्ते । तद्गव्यमपि परंपरयाग्निरेव करोति ॥ स्वाध्यः । सुआङ्पूर्वाद्धीशब्दाज्जस्येरनेकाच इति यणादेशः । यह्वीः । वा छंदसीति पूर्वसवर्णदीर्घत्वं । गव्यं । सर्वत्र गोरजादिप्रत्ययप्रसंगे यद्वक्तव्यमिति भावार्थे यत् । ऊर्वं । उर्वी हिंसार्थः । ऊर्वति क्षुधं हिनस्तीत्यूर्वमन्नं । पचाद्यच् । भोजते । भुज पालनाभ्यवहारयोः । शमि प्राप्ते व्यत्ययेन शप् ॥

आ ये विश्वा स्वपत्यानि तस्थुः कृण्वानासो अमृतत्वाय गातुं ।
मह्ना महद्भिः पृथिवी वि तस्थे माता पुत्रैरदितिर्धायसे वेः ॥ ९ ॥
आ । ये । विश्वा । सुऽअपत्यानि । तस्थुः । कृण्वानासः । अमृतऽत्वाय । गातुं ।
मह्ना । महत्ऽभिः । पृथिवी । वि । तस्थे । माता । पुत्रैः । अदितिः । धायसे ।
वेरिति वेः ॥ ९ ॥

य आदित्या अमृतत्वायामरणत्वसिद्धये गातुं मार्गमुपायं कृण्वानासः कुर्वाणाः संतो विश्वा विश्वानि सर्वाणि स्वपत्यानि शोभनान्यपतनहेतुभूतानि चतुर्दशरात्रषट्त्रिंशद्रात्रादित्यानामयनादीनि कर्माण्या तस्थुः

आश्रितवंतः। कृतवंत इत्यर्थः। तथा च तैत्तिरीयकं। आदित्या अकामयंत सुवर्गं लोकमियामेतीति। त एतं षट्त्रिंशद्रात्रमपश्यन् तमाहरन् तेनायजंतेति च। तै॰ सं॰ ७. ४. ६. १.। महद्भिरनुष्ठानेन महानुभावैस्तैः पुत्रैः सहिता माता जनयित्र्यदितिः पृथिवी धायसे सर्वस्य जगतो धारणाय मह्ना स्वकीयेन महत्त्वेन वि तस्थे। विशेषेण तिष्ठति। हे अग्ने यतस्त्वं वेः आदित्यैरनुष्ठितेषु यागेषु चरुपुरोडाशादीनि हवींष्यभक्षयः। अत एतत्सर्वं जातमित्यर्थः॥ कृण्वानासः। कृवि हिंसाकरणयोश्च। व्यत्ययेनात्मनेपदं। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। तत्संनियोगेनाकारांतादेशश्च। तस्यातो लोपे सति स्थानिवद्भावाद्गुणाभावः। शानचश्चित्त्वादंतोदात्तत्वं। आज्जसेरसुक्। मह्ना। महिम्नेत्यस्य वर्णलोपश्छांदसः। धायसे। वहिहाधाञ्भ्यश्छंदसीति दधातेर्भावेऽसुन्। णिदित्यनुवृत्तेरातो युक् चिण्कृतोरिति युक्। वेः। वी गतिप्रजनकांत्यशनखादनेषु। लङि सिप्यदादित्वाच्छपो लुक्। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। धायस इत्यस्य वाक्यांतरगतत्वादस्य निघाताभावः॥

अधि श्रियं नि दधुश्चारुमस्मिन्दिवो यदक्षी अमृता अकृण्वन्।
अध क्षरंति सिंधवो न सृष्टाः प्र नीचीरग्ने अरुषीरजानन्॥१०॥
अधि। श्रियं। नि। दधुः। चारुं। अस्मिन्। दिवः। यत्। अक्षी इति। अमृताः। अकृण्वन्।
अध। क्षरंति। सिंधवः। न। सृष्टाः। प्र। नीचीः। अग्ने। अरुषीः। अजानन्॥१०॥

अस्मिन्नग्नौ चारुं शोभनां श्रियं परिस्तरणपरिषेचनादिरूपां यज्ञसंपदमधि नि दधुः। यजमानाः स्थापितवंतः। निधाय च यद्यदा वी यज्ञस्याज्यभागलक्षणे चक्षुषी अकृण्वन् कुर्वंति। चक्षुषी वा एते यज्ञस्य यदाज्यभागौ। तै॰ सं॰ २. ६. २. १.। इति श्रुतेः। तदानीं दिवो द्युलोकादमृता अमरणधर्माणो देवा यागसमयो जात इत्यवगम्यागच्छंतीति शेषः। अधाज्यभागानंतरं सृष्टा अग्नेरुत्पन्नाः सिंधवो न शीघ्रं गच्छंत्यो नद्य इव नीचीर्नितरां सर्वासु दिक्षु गच्छंतीररुषीरारोचमानाः। यद्वा। निर्मलरूपाः। हे अग्ने एवंभूतास्त्वदीया ज्वालाः क्षरंति। संचलंति। सर्वासु दिक्षु गच्छंतीत्यर्थः। आगता देवाश्च प्राजानन्। अस्माकं होमायेदृश्यो ज्वाला उत्पन्ना इति हृष्टाः संतः प्रकर्षेण जानंति॥ अक्षी। परत्वान्नुमं बाधित्वा ई च द्विवचने। पा॰ ७. १. ७७.। इत्यक्षिशब्दस्येकारांतादेशः। स चोदात्तः। ईत्वे कृते सकृद्गतपरिभाषया। परि॰ ४०.। पुनर्नुम् न भवति। सवर्णदीर्घः। नीचीः। निपूर्वादंचतेर्ऋत्विगित्यादिना क्विन्। अनिदितामिति नलोपः। अंचतेश्चोपसंख्यानमिति ङीप्। अच इत्यकारलोपे चाविति दीर्घत्वं। न्यधी च। पा॰ ६. २. ५३.। इति गतेः प्रकृतिस्वरत्वं। अरुषीः। अरुषमिति रूपनाम। ऋहनिभ्यामुषजित्यर्तेरुषच्। छंदसीवनिपाविति मत्वर्थीय ईकारः॥ ॥१८॥

रयिर्नेति दशर्चं नवमं सूक्तं पराशरस्यार्षं त्रैष्टुभमाग्नेयं। अनुक्रांतं च। रयिर्नेति॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः॥

रयिर्न यः पितृवित्तो वयोधाः सुप्रणीतिश्चिकितुषो न शासुः।
स्योनशीरतिथिर्न प्रीणानो होतेव सद्म विधतो वि तारीत्॥१॥
रयिः। न। यः। पितृऽवित्तः। वयःऽधाः। सुऽप्रनीतिः। चिकितुषः। न। शासुः।
स्योनऽशीः। अतिथिः। न। प्रीणानः। होताऽइव। सद्म। विधतः। वि। तारीत्॥१॥

पितृवित्तः पितुः सकाशाल्लब्धो रयिर्धनमिव योऽग्निर्वयोधा अन्नस्य दाता। यथा पैतृकं धनं विश्रंभेण व्यवह्रियमाणं सदन्नप्रदं भवति तद्वदग्निरपि सर्वेषु यज्ञेषु विश्रंभेण व्यवहृतः सन् अन्नप्रदो भवतीत्यर्थः। चिकितुषो न विदुषो धर्मशास्त्राभिज्ञस्य शासुः शासनमिव सुप्रणीतिः सुखेन प्रणेतव्यः। यथा विद्वच्छासनं सर्वेष्वनुष्ठेयेषु तत्तत्संशयनिर्णयाय नीयते तद्वदग्निरपि सर्वेषु यज्ञेषु प्रणीयते। यश्च स्योनशीः सुखप्रदे गार्हपत्यायतनादौ शयानोऽतिथिर्न सुखासन उपवेशितोऽर्घपाद्यादिभिः सत्कृतोऽतिथिरिव प्रीणानो हविर्भिस्त-

र्पणीयः सोऽग्निर्विधतः परिचरतो यजमानस्य सद्म गृहं वि तारीत्। प्रवर्धयति ददाति वा। तत्र दृष्टांतः। होतेव। होता होमकर्ताध्वर्युस्तत्तत्कर्मकरणेन फलैर्यजमानस्य गृहं यथा वर्धयति तद्वत्॥ पितुवित्तः। विद्लृ लाभे। कर्मणि निष्ठा। यस्य विभाषेतीट्प्रतिषेधः। विभाषा गमहनविदविशामिति क्वसावस्य धातोरिटो विकल्पितत्वात् तत्रापि विशिसाहचर्यात्तौदादिक एव विदिर्गृह्यत इत्युक्तं। का० ७. २. ६८.। वित्तो भोगप्रत्ययोः। पा० ८. २. ५८.। इति निष्ठानत्वाभावो निपातितः। वयोधाः। डुधाञ् धारणपोषणयोः। आतो मनिन्निति विच्। सुप्रणीतिः। प्रणीयत इति प्रणीतिः। कर्मणि क्तिन्। तादौ चेति गतेः प्रकृतिस्वरत्वं। पुनः सुशब्देन समासे कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणात्कृदुत्तरपदप्रकृतिस्वरत्वं। चिकितुषः। लिटः क्वसुः। षष्ठ्येकवचने वसोः संप्रसारणमिति संप्रसारणं। शासिवसिघसीनां चेति षत्वं। शासुः। शासु अनुशिष्टौ। शृस्वृस्निहीत्यादिना विधीयमान उप्रत्ययो बहुलवचनादस्मादपि द्रष्टव्यः। तत्र निदित्यनुवृत्तेराद्युदात्तत्वं। स्योनशीः। स्योनमिति सुखनाम। स्योने सुखकरे गार्हपत्यादिस्थाने शेत इति स्योनशीः। क्विचेति क्विप्। प्रीणानः। प्रीञ् तर्पणे। कर्मणि शानचि व्यत्ययेन श्ना। विधतः। विध विधाने। विधतिः परिचरणकर्मेति नैरुक्ताः। तुदादित्वाच्छप्रत्ययः। शतुरनुम इति विभक्तिरुदात्तत्वं॥

दे॒वो न यः स॑वि॒ता स॒त्यम॑न्मा॒ क्रत्वा॑ नि॒पाति॑ वृ॒जना॑नि॒ विश्वा॑।
पु॒रु॒प्र॒श॒स्तो अ॒मति॒र्न स॒त्य आ॒त्मेव॒ शेवो॑ दिधि॒षाय्यो॑ भूत्॥२॥
दे॒वः। न। यः। स॒वि॒ता। स॒त्यऽम॑न्मा। क्रत्वा॑। नि॒ऽपाति॑। वृ॒जना॑नि। विश्वा॑।
पु॒रु॒ऽप्र॒श॒स्तः। अ॒मतिः॑। न। स॒त्यः। आ॒त्माऽइ॑व। शेवः॑। दि॒धि॒षाय्यः॑। भूत्॥२॥

देवो न सविता द्योतमानः सर्वस्य प्रेरकः सूर्य इव योऽग्निः सत्यमन्मा सत्यज्ञानो यथार्थदर्शी सोऽग्निः क्रत्वात्मीयेन कर्मणा विश्वा वृजनानि। विभक्तिव्यत्ययः। सर्वेभ्यः संग्रामेभ्यो निपाति नितरां पालयति। वर्ज्यंते हिंस्यंतेऽस्मिन्निति वृजनं संग्रामः। अपि च पुरुप्रशस्तः पुरुभिर्यजमानैः स्तुतोऽग्निरमतिर्न। रूपनामैतत्। रूपमिव सत्यो बाधरहितः। रूप्यत इति रूपं स्वरूपं। यथा पृथिव्यादेः स्वरूपमागमापायिषु विशेषेषु सत्स्वपि स्वयमेकरूपेण नित्यं भवति तद्वदग्निरप्युच्चावचेषु सर्वेषु कर्मसु स्वयमेक एव व्याप्य वर्तते। सोऽग्निः शेवः सुखकरः। तत्र दृष्टांतः। आत्मेव। परमप्रेमास्पदतया निरतिशयानंदस्वरूप आत्मा यथा सर्वान्सुखयति। एतस्यैवानंदस्यान्यानि भूतानि मात्रामुपजीवंति। एष ह्येवानंदं यातीति च श्रवणात्। तद्वदग्निरपि स्वर्गादिफलहेतुतया सुखयति। एवंभूतोऽग्निर्दिधिषाय्यो भूत्। सर्वैर्यजमानैर्धारणीयो भवति। परित्यागे हि वीरहत्यालक्षणो दोषो भवति। तथा च तैत्तिरीयकं। वीरहा वा एष देवानां योऽग्निमुद्वासयते। तै० सं० १. ५. २. १.। इति॥ सत्यमन्मा। मननं मन्म। मन ज्ञाने। अन्येभ्योऽपि दृश्यंत इति मनिन्। सत्यमवितथं मन्म यस्य। बहुव्रीहिस्वरः। वृजनानि। वृजी वर्जने। कॄपॄवृजीत्यादिना क्युप्रत्ययः। पुरुप्रशस्तः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते प्रवृद्धादीनां च। पा० ६. २. १४७.। इत्युत्तरपदांतोदात्तत्वं। स ह्याकृतिगण इत्युक्तं। अमतिः। अम गत्यादिषु। अमेरतिः। दिधिषाय्यः। दधातेर्दिधिषाय्यः। उ० ३. ९७.। इति साय्यप्रत्ययांतो निपात्यते॥

दे॒वो न यः पृ॑थि॒वीं वि॒श्वधा॑या उप॒क्षेति॑ हि॒तमि॑त्रो॒ न राजा॑।
पु॒रः॒सदः॑ शर्म॒सदो॒ न वी॒रा अ॑नव॒द्या पति॑जुष्टेव॒ नारी॑॥३॥
दे॒वः। न। यः। पृ॒थि॒वीम्। वि॒श्वऽधा॑याः। उ॒प॒ऽक्षेति॑। हि॒तऽमि॑त्रः। न। राजा॑।
पु॒रः॒ऽसदः॑। श॒र्म॒ऽसदः॑। न। वी॒राः। अ॒न॒व॒द्या। पति॑ऽजुष्टाऽइव। नारी॑॥३॥

देवो न द्योतमानः सूर्य इव योऽग्निर्विश्वधायाः सर्वस्य जगतो धर्ता। यथा सूर्यो वृष्ट्यादिप्रदानेन सर्वं जगद्बत्ते एवमग्निरपि यज्ञादिसाधनेन कृत्स्नस्य जगतो धारयिता। सोऽग्निः पृथिवीं पृथिव्यामुपक्षेति। सर्वेषां

प्रियः सन्यज्ञगृहादौ निवसति। तत्र दृष्टांतः। हितमित्रो न राजा। हितान्यनुकूलानि मित्राणि यस्य तादृशो राजा यथा सुखेन निवसति तद्वत्। यथा सर्वजनमित्रो राजा एवमग्निरपि सर्वजनमित्र इत्यर्थः। न ह्यग्निं कश्चन द्वेष्टि। यस्याग्नेः पुरःसदः पुरस्तात्सीदंत उपविशंतः पुरुषाः शर्मसदो न वीराः पितृगृहे वर्तमानाः पुत्रा इव वर्तंते। पिता पुत्रानिवाग्निः स्वस्य परिचारकान्रक्षतीति भावः। सोऽयमग्निरतिशयेन शुद्धः कर्मयोग्यो भवति। तत्र दृष्टांतः। अनवद्यानिंदिता पतिजुष्टेव नारी स्वपतिना सेविता स्वीकृता योषिदिव। सा यथा पातिव्रत्येन शुद्धा सती सर्वकर्मयोग्या भवति एवमग्निरपि॥ विश्वधायाः। गतिकारकयोरपि पूर्वपदप्रकृति-स्वरत्वं चेति वचनात्कारकपूर्वादपि दधातेर्वहिहाधाञ्भ्यश्छंदसीत्यसुन्। णिदित्यनुवृत्तेरातो युक् चिण्कृतो-रिति युक्। मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं। उपक्षेति। क्षि निवासगत्योः। बहुलं छंदसीति विकरणस्य लुक्। अनवद्या। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। पतिजुष्टेव। तृतीया कर्मणीति पूर्वपदप्रकृति-स्वरत्वं। नारी। नृनरयोर्वृद्धिश्च। पा० ४. १. ७३.*। इति शार्ङ्गरवादिषु पाठात् ङीनंत आद्युदात्तः॥

तं त्वा नरो दम आ नित्यमिद्धमग्ने सचंत क्षितिषु ध्रुवासु।
अधि द्युम्नं नि दधुर्भूर्यस्मिन्भवा विश्वायुर्धरुणो रयीणां॥ ४॥
तं। त्वा। नरः। दमे। आ। नित्यं। इद्धं। अग्ने। सचंत। क्षितिषु। ध्रुवासु।
अधि। द्युम्नं। नि। दधुः। भूरि। अस्मिन्। भव। विश्वऽआयुः। धरुणः। रयीणां॥ ४॥

हे अग्ने तं त्वा पूर्वोक्तगुणविशिष्टं त्वां नरो यज्ञस्य नेतारो यजमाना ध्रुवासु क्षितिषु निश्चलासु चलनर-हितासु भूमिषु। निरुपद्रवेषु ग्रामेष्वित्यर्थः। दमे स्वकीये यज्ञगृहे नित्यमिद्ध[illegible]तं समिद्भिः प्रज्वलितं कृत्वा आ सचंत। आभिमुख्येन सेवंते। किंचास्मिन्नग्नौ द्युम्नं हविर्लक्षणमन्नं भूरि चरुपुरोडाशादिरूपेण बहुविधमधि नि दधुः। स्थापितवंतः। एवंगुणविशिष्टो योऽग्निः स त्वं विश्वायुरुक्तप्रकारेण सर्वान्नो भूत्वा रयीणां धनानां धरुणो धारयिता भव। अस्मभ्यं दातुं धनानि धारयेत्यर्थः॥ सचंत। षच समवाये। छांदसो वर्तमाने लङ्। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। भव। द्व्यचोऽतस्तिङ इति संहितायां दीर्घः। धरुणः। धारेर्णि-लुक्चेत्युनप्रत्ययः॥

वि पृक्षो अग्ने मघवानो अश्युर्वि सूरयो ददतो विश्वमायुः।
सनेम वाजं समिथेष्वर्यो भागं देवेषु श्रवसे दधानाः॥ ५॥
वि। पृक्षः। अग्ने। मघऽवानः। अश्युः। वि। सूरयः। ददतः। विश्वं। आयुः।
सनेम। वाजं। संऽइथेषु। अर्यः। भागं। देवेषु। श्रवसे। दधानाः॥ ५॥

हे अग्ने मघवानो हविर्लक्षणेन धनेन युक्ता यजमानाः पृक्षोऽन्नानि व्यश्युः। व्याप्नुवंतु। त्वयानुगृहीताः सर्वाण्यन्नानि लभंतां। ये च सूरयो विद्वांसस्त्वां स्तुवंति। ददतो ये च तुभ्यं हवींषि ददतः प्रयच्छंतो वर्तंते ते सर्वे विश्वमायुः सर्वं जीवितं व्यश्युः। व्याप्नुवंतु। वयं च समिथेषु संग्रामेष्वर्योऽरेः शत्रोः संबंधिनं वाजमन्नं सनेम। त्वदनुग्रहात्संभजेमहि। तदनंतरं देवेषु [illegible]द्रादिषु श्रवसे यशसे तदर्थं भागं हविर्भागं दधानाः स्थापयंतो भूयास्मेति शेषः॥ अश्युः। अशू व्याप्तौ। व्यत्ययेन परस्मैपदं। बहुलं छंदसीति विकरणस्य लुक्। ददतः। नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः। अभ्यस्तानामादिरित्याद्युदात्तत्वं। सनेम। वन षण संभक्तौ। व्यत्ययेन शः। अर्यः। अरिशब्दात्षष्ठ्येकवचने जसादिषु छंदसि वावचनमिति घेर्ङितीति गुणाभावे यणादेशः। अरिशब्द अच [illegible]यांतोऽंतोदात्तः। उदात्तयण इति विभक्तेरुदात्तत्वं। भागं। कर्षात्वत इत्यंतोदात्तत्वं॥ ॥ १९॥

ऋतस्य हि धेनवो वावशानाः स्मदूध्नीः पीपयंत द्युभक्ताः ।
परावतः सुमतिं भिक्षमाणा वि सिंधवः समया सस्रुरद्रिं ॥ ६ ॥
ऋतस्य । हि । धेनवः । वावशानाः । स्मत्ऽऊध्नीः । पीपयंत । द्युऽभक्ताः ।
पराऽवतः । सुऽमतिं । भिक्षमाणाः । वि । सिंधवः । समया । सस्रुः । अद्रिं ॥ ६ ॥

ऋतस्य हि ऋतं देवयजनदेशं प्राप्तमग्निमेव धेनवोऽग्निहोत्रादिहविषां दोग्ध्र्यो गावः पीपयंत । क्षीरादिलक्षणं गव्यमपाययन् । कीदृश्यो गावः । वावशाना अग्निं पुनःपुनः कामयमानाः स्मदूध्नीः । स्मच्छब्दो नित्यशब्दसमानार्थः । नित्यमूधसा युक्ताः । सर्वदा पयसः प्रदात्र्य इत्यर्थः । द्युभक्ता दिवा प्रकाशेन संभक्ताः संश्लिष्टाः । तेजस्विन्य इत्यर्थः । अपि च सिंधवः स्यंदनशीला नद्यः सुमतिमस्मादग्नेः शोभनामनुग्रहात्मिकां बुद्धिं भिक्षमाणा याचमानाः सत्योऽद्रिं समयाद्रेः पर्वतस्य समीपे परावतो दूरदेशाद्वि सस्रुः । विशेषेण गच्छंति प्रवहंति । अग्नये दातव्यानां हविषां निष्पत्तये प्रवहंतीत्यर्थः ॥ ऋतस्य । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । वावशानाः । वश कांतौ । यङंताच्छानच् । न वशः । पा० ६. १. २०. । इति संप्रसारणप्रतिषेधः । बहुलं छंदसीति शपो लुक् । छंदस्युभयथेति शानच आर्धधातुकत्वादतोलोपयलोपौ । अत एव लसार्वधातुकानुदात्तत्वाभावे चित्स्वर एव शिष्यते । स्मदूध्नीः । स्मत् नित्यान्यूधांसि यासां । ऊधसोऽनङ् । पा० ५. ४. १३१. । इत्यनङादेशः समासांतः । संख्याव्ययादेर्ङीप् । पा० ४. १. २६. । इति ङीप् । भसंज्ञायामल्लोपोऽन इत्यल्लोपः । ङीपः पित्त्वादनुदात्तत्वे बहुव्रीहिस्वर एव शिष्यते । पीपयंत । पा पाने । अस्माद्धेतुमति णिच् । शाच्छासाह्वेति युक् । ण्यंताल्लुङि च्लेश्चङादेशादि । चङ्यन्यतरस्यामिति चङः पूर्वस्योदात्तत्वं । हि चेति निघातप्रतिषेधः । परावतः । परागतात् । दूरं हि परागतं भवति । अस्मिन्धात्वर्थे गम्यमान उपसर्गाच्छंदसि धात्वर्थे । पा० ५. १. ११८. । इति वतिः ॥

त्वे अग्ने सुमतिं भिक्षमाणा दिवि श्रवो दधिरे यज्ञियासः ।
नक्ता च चक्रुरुषसा विरूपे कृष्णं च वर्णमरुणं च सं धुः ॥ ७ ॥
त्वे इति । अग्ने । सुऽमतिं । भिक्षमाणाः । दिवि । श्रवः । दधिरे । यज्ञियासः ।
नक्ता । च । चक्रुः । उषसा । विरूपे इति विऽरूपे । कृष्णं । च । वर्णं । अरुणं । च ।
सं । धुरिति धुः ॥ ७ ॥

हे अग्ने सुमतिं शोभनामनुग्रहात्मिकां बुद्धिं भिक्षमाणा याचमाना यज्ञियासो यज्ञार्हाः सर्वे देवा दिवि द्योतमाने त्वे त्वयि श्रवो हविर्लक्षणमन्नं दधिरे । अस्थापयन् । अग्निर्देवानामन्नाद इति श्रुतेः । तदनंतरं तादृशे हवि[illegible] विरूपे विविधरूपे उषसोषःकालोपलक्षितमहर्नक्ता च नक्तं रात्रिं च चक्रुः । अकुर्वन् । एतदेव स्पष्टयति । कृष्णं च वर्णं रात्र्यां श्यामलवर्णमंधकारमह्न्यरुणमारोचनं श्वेतवर्णं तेजश्च सं धुः । सम्यक् स्थापितवंतः ॥ त्वे । सुपां सुलुगिति सप्तम्याः शेआदेशः । नक्ता । तेनैव द्वितीयाया डादेशः । उषसा । तेनैव विभक्तेराकारः । धुः । डुधाञ् धारणपोषणयोः । लुङि गातिस्थेति सिचो लुक् । आत इति झेर्जुसादेशः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः ॥

यान्राये मर्तान्सुषूदो अग्ने ते स्याम मघवानो वयं च ।
छायेव विश्वं भुवनं सिसक्ष्यापप्रिवान्रोदसी अंतरिक्षं ॥ ८ ॥
यान् । राये । मर्तान् । सुसूदः । अग्ने । ते । स्याम । मघऽवानः । वयं । च ।
छायाऽइव । विश्वं । भुवनं । सिसक्षि । आपप्रिऽवान् । रोदसी इति । अंतरिक्षं ॥ ८ ॥

यान्मर्तान्मनुष्यानस्मात्राये धनाय सुषूदः अग्निहोत्रादिकर्मसु प्रेरयसि ते तादृशा वयं च मघवानो धनिनः स्याम । भवेम । रोदसी द्यावापृथिव्यावंतरिक्षं चापप्रिवान् स्वतेजसा वृष्ट्युदकेन वापूरितवांस्त्वं च विश्वं भुवनं सर्वं जगत् सिसक्षि । सेवसे । अनुगृह्य सर्वं रक्षसीत्यर्थः । तत्र दृष्टांतः । छायेव । यथा छत्रादेश्छाया-यातपादिजनितं क्लेशं निवार्य रक्षति तद्वत् ॥ राये । ऊडिदमिति विभक्तेरुदात्तत्वं । सुषूदः । षूद प्रेरणे । लेट्यडागमः । बहुलं छंदसीति शपः श्लुः । अभ्यस्तानामादिरित्याद्युदात्तत्वं । यद्वृत्तान्नित्यमिति निघातप्रतिषेधः । सिसक्षि । षच समवाये । बहुलं छंदसीति शपः श्लु । इदित्यनुवृत्तौ बहुलं छंदसीत्यभ्यासस्येत्वं । आपप्रिवान् । प्रा पूरणे । लिटः क्वसुः । वस्वेकाजाद्घसामितीडागमः । आतो लोप इटि चेत्याकारलोपः । द्विर्वचनेऽचीति स्थानिवद्भावात् द्विर्भावादि ॥

अर्वद्भिरग्ने अर्वतो नृभिर्नॄन्वीरैर्वीरान्वनुयामा त्वोताः ।
ईशानासः पितृवित्तस्य रायो वि सूरयः शतहिमा नो अश्युः ॥९॥
अर्वत्ऽभिः । अग्ने । अर्वतः । नृऽभिः । नॄन् । वीरैः । वीरान् । वनुयाम । त्वाऽऊताः ।
ईशानासः । पितृऽवित्तस्य । रायः । वि । सूरयः । शतऽहिमाः । नः । अश्युः ॥९॥

हे अग्ने त्वोतास्त्वया रक्षिताः संतो वयमर्वद्भिरस्मदीयैरश्वैरर्वतः शत्रुसंबंधिनोऽश्वान्नृभिरस्मदीयैर्भटैर्नॄन् शत्रोर्भटान् । वीर्याज्जायंत इति वीराः पुत्राः । तैर्वीरान् शत्रुपुत्रांश्च वनुयाम । हन्याम । वनुष्यतिर्हंतिकर्मानवगतसंस्कारो भवति । नि० ५. २. । इति यास्कः । पितृवित्तस्य पित्रादिपरंपरया लब्धस्य रायो धनस्येशानासः स्वामिनः सूरयो विद्वांसो नोऽस्माकं पुत्राः शतहिमाः शतं संवत्सरान् जीवंतः संतो व्यश्युः । विशेषेण भुंजतां । अस्मदीयानां पुत्राणामारोग्यं दीर्घमायुश्च भवत्वित्यर्थः ॥ त्वोताः । त्वयोताः । प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य त्वादेशः । व्यत्ययेनात्वं । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । शतहिमाः । अत्र हिमशब्देन तद्वान्हेमंतो लक्ष्यते । ब्राह्मणं च भवति । शतं हिमा इत्याह शतं त्वा हेमंतानि धिषीयेति वावैतदाहेति । शतं हिमाः शतं हेमंतर्तवो येषां ते शतसंवत्सरजीविन इत्यर्थः । अश्युः । अश भोजने । बहुलं छंदसीति विकरणस्य लुक् ॥

एता ते अग्न उचथानि वेधो जुष्टानि संतु मनसे हृदे च ।
शकेम रायः सुधुरो यमं तेऽधि श्रवो देवभक्तं दधानाः ॥१०॥
एता । ते । अग्ने । उचथानि । वेधः । जुष्टानि । संतु । मनसे । हृदे । च ।
शकेम । रायः । सुऽधुरः । यमं । ते । अधि । श्रवः । देवऽभक्तं । दधानाः ॥१०॥

हे वेधः । मेधाविनामैतत् । मेधाविन्नग्ने एता[illegible]भिः प्रयुक्तानि स्तोत्राणि ते तव मनसे मनोवृत्तये हृदे तद्वृत्तिमतेऽंतःकरणाय च जुष्टानि संतु । प्रियाणि भवंतु । ते तव संबंधिनः सुधुरः सुष्ठु निर्वाहकस्य । यद्वा । शोभनं धूर्वति दारिद्र्यं हिनस्तीति सुधूः । तादृशस्य रायो धनस्य यमं नियमनं कर्तुं शकेम । शक्ता भूयास्म । किं कुर्वंतः । देवभक्तं देवैः संभजनीयं श्रवो हविर्लक्षणमन्नमधि दधानाः । अग्नेरुपरि धारयंतः । अग्नौ हविर्भिर्होमं कुर्वंत इत्यर्थः ॥ उचथानि । वच परिभाषणे । ववदिभ्यां कित् । उ० ३. ११६. । इति विधीयमानोऽथप्रत्ययः कित्त्वं च ब[illegible]पि भवति । वच्यादिना संप्रसारणं । जुष्टानि । जुष्टार्पिते च छंदसि नित्यं मंत्रे । पा० ६. १. २०९–२१०. । इत्याद्युदात्तत्वं । हृदे । पद्दन्नित्यादिना हृदयशब्दस्य हृदादेशः । शकेम । शक्लृ शक्तौ । लिङ्याशिष्यङ् । सुधुरः । धुर्वी हिंसार्थः । क्विब्वेति क्विप् । राल्लोप इति वकारलोपः । न पूजनादिति समासांतप्रतिषेधः । देवैर्भक्तं देवभक्तं । तृतीया कर्मणीति [illegible]र्वपदप्रकृतिस्वरत्वं ॥ ॥२०॥ ॥१२॥

त्रयोदशानुवाक एकादश सूक्तानि । तत्रोपप्रयंत इति नवर्चं प्रथमं सूक्तं । [illegible] । उपप्रयंतो नव गोतमो राहूगणो गायत्रं त्विति । अस्यायमर्थः । रहूगणनामा कश्चिदृषिः । तस्य पुत्रो गोतमोऽस्य सूक्तस्य ऋषिः । गायत्रं त्वित्युक्तत्वादिदमुत्तरं च गायत्रीच्छंदस्कं । परमाग्नेयमैंद्रादिति परिभाषितत्वादग्निर्देवता ॥

प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छंदस्येतदादिके द्वे सूक्ते। सूचितं च। आपो रेवतीः क्षयथा हि वस्व उपप्रयंत इति सूक्ते।आ० ४.१३.। इति॥ आश्विनशस्त्रेऽप्येते सूक्ते प्रातरनुवाकन्यायेन।आ० ६.५.। इत्यतिदेशात्॥ पृष्ठ्यषडहस्य प्रथमेऽहन्येतदेव सूक्तमाज्यशस्त्रं। सूचितं च। उपप्रयंत इति तु प्रथमेऽहन्याज्यं।आ० ७.१०.। इति॥

उपप्रयंतो अध्वरं मंत्रं वोचेमाग्नये। आरे अस्मे च शृण्वते ॥१॥

उपऽप्रयंतः। अध्वरं। मंत्रं। वोचेम। अग्नये। आरे। अस्मे इति। च। शृण्वते ॥१॥

अध्वरं हिंसाप्रत्यवायरहितमग्निष्टोमादियज्ञमुपप्रयंत उपेत्य प्रकर्षेण यंतो गच्छंतः। प्राप्त्यविच्छेदेन सम्यगनुतिष्ठंत इत्यर्थः। तादृशा वयमग्नयेऽंगनादिगुणयुक्ताय देवाय मंत्रं मननसाधनमेतत्सूक्तरूपं स्तोत्रं वोचेम। वक्तारो भूयास्मेत्याशास्महे। कीदृशायाग्नये। आरेऽस्मे च शृण्वते। चशब्दोऽप्यर्थ आरेशब्दात्परो द्रष्टव्यः। आरे च दूरेऽपि स्थितास्माकं स्तुतीः शृण्वते। अस्मासु प्रीत्यतिशयेन सर्वत्र प्रवर्तमानोऽपिरस्मदीयमेव स्तोत्रं शृणोतीति भावः॥ वोचेम। ब्रुवो वचिः। लिङ्याशिष्यङ्। वच उमित्युमागमः। शृण्वते। शतुरनुम इति विभक्तेरुदात्तत्वं॥

यः स्नीहितीषु पूर्व्यः संजग्मानासु कृष्टिषु। अरक्षद्दाशुषे गयं ॥२॥

यः। स्नीहितीषु। पूर्व्यः। संऽजग्मानासु। कृष्टिषु। अरक्षत्। दाशुषे। गयं ॥२॥

पूर्व्यश्चिरंतनो योऽग्निः स्नीहितीषु वधकारिणीषु कृष्टिषु शत्रुभूतासु प्रजासु संजग्मानासु संगतासु सतीषु दाशुषे हवींषि दत्तवते यजमानाय गयं धनमरक्षत्। रक्षति। तस्मै मंत्रं वोचेमेति पूर्वेण संबंधः॥ स्नीहितीषु। ष्णिह स्नेहने। चुरादिः। स्नेहयतीति वधकर्मसु पठितः। स्नेह्यंते हिंस्यंते प्रजा आभिरिति स्नेहितयः। करणे क्तिन्। तितुत्रेष्वग्रहादीनामिति वक्तव्यमिति वचनान्निगृहीतिर्निपठितिरितिवदिडागमः।म० ७.२.९.१.। व्यत्ययेनैकारस्येकारादेशः। क्तिनो दीर्घस्य। नित्त्वादाद्युदात्तत्वं। संजग्मानासु। समो गम्यृच्छीत्यात्मनेपदं। लिटः कानच्। गमहनेत्यादिनोपधालोपः। अरक्षत्। छंदसि लुङ्लङ्लिट इति वर्तमाने लङ्॥

अग्निमंथने जातायानुब्रूहीत्युक्त उत ब्रुवंत्वित्येषानुवचनीया। प्रातर्वैश्वदेव्यामिति खंडे सूचितं। शिष्टेनोत्तरासुत ब्रुवंतु जंतवः।आ० २.१६.। इति॥ तथा साकमेधेषु मरुद्भ्यः क्रीडिभ्यः पुरोडाशमित्यस्यामिष्टावेषैव प्रथमाज्यभागानुवाक्या। सूचितं च। मरुद्भ्यः क्रीडिभ्य उत्तरोत ब्रुवंतु जंतवः।आ० २.१८.। इति॥

उत ब्रुवंतु जंतव उदग्निर्वृत्रहाजनि। धनंजयो रणेरणे ॥३॥

उत। ब्रुवंतु। जंतवः। उत्। अग्निः। वृत्रऽहा। अजनि। धनंऽजयः। रणेऽरणे ॥३॥

अग्निरुदजनि। अरण्योः सकाशादुत्पन्नः। उतानंतरं जंतवो जाताः सर्व ऋत्विजो ब्रुवंतु। तमग्निं स्तुवंतु। कीदृशोऽग्निः। वृत्रहा वृत्राणामावरकाणां शत्रूणां हंता रणे रणे सर्वेषु संग्रामेषु धनंजयः शत्रुधनानां जेता॥ धनंजयः। संज्ञायां भृतृवृजीति।पा० ३.२.४६.। खच्। अरुर्द्विषदजंतस्य।पा० ६.३.६७.। इति मुम्। चित्स्वरेणांतोदात्तत्वं। रणे रणे। रण शब्दार्थः। रणंति कुंदुभयोऽस्मिन्निति रणः संग्रामः। घञर्थे कविधानमिति कप्रत्ययः।संख्यानं।पा० ३.३.५८.३.। इत्यप्। नित्यवीप्सयोरिति द्विर्वचनं। आम्रेडितानुदात्तत्वं॥

यस्य दूतो असि क्षये वेषि हव्यानि वीतये। दस्मत्कृणोष्यध्वरं ॥४॥

यस्य। दूतः। असि। क्षये। वेषि। हव्यानि। वीतये। दस्मत्। कृणोषि। अध्वरं ॥४॥

हे अग्ने यस्य यजमानस्य क्षये देवयजनलक्षणे गृहे देवानां दूतस्त्वमसि भवसि। यस्य च हव्यानि चरुपुरोडाशादीनि हवींषि वीतये देवानां भक्षणाय वेषि गमयसि। यस्य चाध्वरं यज्ञं दस्मत् सर्वैर्दर्शनीयं कृणोषि करोषि। तामित्युत्तरया संबंधः॥ वेषि। वी गत्यादिषु। अंतर्भावितण्यर्थात्लट्। अदादित्वा-

च्छपो लुक्। पादादित्वान्निघाताभावः। दस्मत्। दसि दंसनदर्शनयोः। इषियुधींधीत्यादिना मक्। दस्ममित्यत्र मकारस्य वर्णव्यापत्त्या तकारः। क्षणोषि। क्षवि हिंसाकरणयोश्च। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। तत्संनियोगेन वकारस्याकारः। तस्यातो लोपे सति स्थानिवद्भावाल्लघूपधगुणाभावः। [illegible]ताभावः॥

तमित्सुहव्यमंगिरः सुदेवं सहसो यहो। जना आहुः सुबर्हिषं ॥५॥

तं। इत्। सुऽहव्यं। अंगिरः। सुऽदेवं। सहसः। यहो इति। जनाः। आहुः। सुऽबर्हिषं ॥५॥

हे सहसो यहो बलस्य पुत्र अंगिरोऽंगनादिगुणयुक्ताग्ने यो यजमानः पूर्वमुक्तस्तमित् तमेव यजमानं सुहव्यं शोभनहविष्कं सुदेवं शोभनदैवतं सुबर्हिषं। बर्हिरिति यज्ञनाम। शोभनयज्ञं च जनाः सर्वे मनुष्या आहुः। कथयंति॥ सुहव्यमित्यादिषु नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। सहसो यहो। सुबामंत्रित इति परांगवद्भावात्षष्ठ्यामंत्रितसमुदायस्याष्टमिकमामंत्रितानुदात्तत्वं॥ ॥२१॥

आ च वहासि ताँ इह देवाँ उप प्रशस्तये। हव्या सुश्चंद्र वीतये ॥६॥

आ। च। वहासि। तान्। इह। देवान्। उप। प्रऽशस्तये। हव्या। सुऽचंद्र। वीतये ॥६॥

हे सुश्चंद्र शोभनाह्लादनाग्ने तान्देवानिहास्मिन्कर्मण्युपास्मत्समीपं प्रशस्तये स्तुतय आ वहासि च। आवह प्रापय च। आगतेभ्यस्तेभ्यो हव्या हव्यानि चरुपुरोडाशादीनि हवींषि वीतये भक्षणाय प्रापयेत्यर्थः॥ वहासि। वह प्रापणे। लेट्याडागमः। प्रशस्तये। शंसु स्तुतौ। भावे क्तिन्। तितुत्रेतीट्प्रतिषेधः। अनिदितामिति नलोपः। तादौ चेति गतेः प्रकृतिस्वरत्वं। सुश्चंद्र। ह्रस्वाच्चंद्रोत्तरपदे मंत्र इति सुट्॥

न योरुपब्दिरश्व्यः शृण्वे रथस्य कच्चन। यदग्ने यासि दूत्यं ॥७॥

न। योः। उपब्दिः। अश्व्यः। शृण्वे। रथस्य। कत्। चन। यत्। अग्ने। यासि। दूत्यं ॥७॥

हे अग्ने यद्यदा दूत्यं देवानां दूतत्वं यासि प्राप्नोषि कच्चन कदाचन तदानीं सर्वदापि योर्गच्छतस्तव रथस्याश्व्योऽश्वैरुत्पादित उपब्दिः श्रवणार्हः शब्दो न शृण्वे। न श्रूयते। रथस्य श[illegible]भिः शब्दो नोपलभ्यत इत्यर्थः॥ योः। या प्रापणे इत्यस्मात् यो द्वे च। उ० १. २२.। इत्यौणादिकः कुप्रत्ययः। बहुलवचनाद्द्विर्भावाभावः। उपब्दिरित्येतत् श्रोतुमर्हस्य शब्दस्याख्या। तथा च तैत्तिरीयाणां प्रातिशाख्यं सशब्दमुपब्दिमत्। तै० प्रा० २३. ९.। इति। शृण्वे। श्रु श्रवणे। कर्मणि लटि श्रुवः शृ चेति व्यत्ययेन श्नुः शृभावश्च। लोपस्त आत्मनेपदेष्विति तलोपः। हुश्नुवोः सार्वधातुक इति यणादेशः॥

त्वोतो वाज्यह्रयोऽभि पूर्वस्मादपरः। प्र दाश्वाँ अग्ने अस्थात् ॥८॥

त्वाऽऊतः। वाजी। अह्रयः। अभि। पूर्वस्मात्। अपरः। प्र। दाश्वान्। अग्ने। अस्थात् ॥८॥

यः पुरुषः पूर्वस्मात् स्वस्मादधिकारादपरो निकृष्टो भवति हे अग्ने स इदानीं दाश्वान् तुभ्यं हवींषि दाता सन् त्वोतस्त्वयोतो रक्षितो [illegible] अह्रयो लज्जारहितः एवंभूतः सन् अभि प्रास्थात्। ऐश्वर्यमभिप्राप्य प्रतितिष्ठति। सर्वोत्कृष्टो भवतीत्यर्थः॥ अह्रयः। ह्री लज्जायां। जिह्रेतीति ह्रयः। न ह्रयोऽह्रयः। अव्ययपूर्वपदप्रकृतिस्वरत्वं। दाश्वान्। दाशृ दाने। दाश्वान् साह्वानिति क्वसुप्रत्ययांतो निपातितः॥

उत द्युमत्सुवीर्यं बृहदग्ने विवाससि । देवेभ्यो देव दाशुषे ॥ ९ ॥

उत । द्युऽमत् । सुऽवीर्यं । बृहत् । अग्ने । विवाससि । देवेभ्यः । देव । दाशुषे ॥ ९ ॥

उतापि च हे देव द्योतमानाग्ने देवेभ्यो दाशुषे चरुपुरोडाशादीनि हवींषि दत्तवते तस्मै यजमानाय बृहत्प्रौढं धनं विवाससि । गमयितुमिच्छसि । प्रापयसीति यावत् । कीदृशं । द्युमदतिशयेन दीप्तं सुवीर्यं शोभनवीर्योपेतं ॥ सुवीर्यं । वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं । विवाससि । वा गतिगंधनयोः । सनि द्विर्भावे सन्यत इतीत्वं । दाशुषे । चतुर्थ्येकवचने वसोः संप्रसारणमिति संप्रसारणं । शासिवसिघसीनां चेति षत्वं ॥ ॥ २२ ॥

जुषस्वेति पंचर्चं द्वितीयं सूक्तं । अनुक्रांतं च । जुषस्व पंचेति । ऋष्याद्याः पूर्ववत् ॥ प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तः सूक्तविनियोगः ॥ पशौ स्तोकानुवचन आद्या विनियुक्ता । सूचितं च । प्रेषितः स्तोकेभ्योऽन्वाह जुषस्व सप्रथस्तमं । आ० ३. ४. । इति ॥

जुषस्व सप्रथस्तमं वचो देवप्सरस्तमं । हव्या जुह्वान आसनि ॥ १ ॥

जुषस्व । सप्रथःऽतमं । वचः । देवप्सरःऽतमं । हव्या । जुह्वानः । आसनि ॥ १ ॥

हे अग्ने सप्रथस्तममतिशयेन विस्तीर्णं वचः स्तोत्रलक्षणमस्मदीयं वचनं जुषस्व । सेवस्व । कीदृशं । देवप्सरस्तमं देवानां प्रीणयितृतमं । किं कुर्वन् । आसनि तवास्ये हव्या हव्यानि स्तोकलक्षणानि हवींषि जुह्वानः प्रक्षिपन् । इमानि स्तोकलक्षणानि हवींषि वृथा मा भुवन् तत्सर्वं त्वदीयेन मुखेन स्वीकुर्वित्यर्थः ॥ देवप्सरस्तमं । प्सृ प्रीतिबलयोः । देवान् प्सृणोति प्रीणयतीति देवप्सराः । गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च । सकारपकारयोः स्थानविपर्ययः । अतिशयेन देवप्सरा देवप्सरस्तमः । जुह्वानः । जुहोतेर्व्यत्ययेन शानच् । अभ्यस्तानामादिरित्याद्युदात्तत्वं । आसनि । पद्दन्नित्यादिनास्यशब्दस्यासन्नादेशः ॥

अथा ते अंगिरस्तमाग्ने वेधस्तम प्रियं । वोचेम ब्रह्म सानसि ॥ २ ॥

अथ । ते । अंगिरःऽतम । अग्ने । वेधःऽतम । प्रियं । वोचेम । ब्रह्म । सानसि ॥ २ ॥

हे अंगिरस्तमातिशयेनांगनादिगुणयुक्त । यद्वा । अंगिरसां वरिष्ठ । वेधस्तम । वेधा इति मेधाविनाम । अतिशयेन मेधाविन्नग्ने । अथानंतरं ते तुभ्यं सानसि संभजनीयं प्रियं प्रीतिकरं ब्रह्म स्तोत्रं वोचेम । वक्तारो भूयास्म ॥ वोचेम । लिङ्याशिष्यङ् । वच उमित्युमागमः । सानसि । वन षण संभक्तौ । सानसिधर्णसीत्यादावसिच्प्रत्ययांतो निपात्यते ॥

कस्ते जामिर्जनानामग्ने को दाश्वध्वरः । को ह कस्मिन्नसि श्रितः ॥ ३ ॥

कः । ते । जामिः । जनानां । अग्ने । कः । दाशुऽअध्वरः । कः । ह । कस्मिन् । असि । श्रितः ॥ ३ ॥

हे अग्ने जनानां मनुष्याणां मध्ये ते तव को जामिः को बंधुः । त्वं सर्वैर्गुणैरधिकोऽसि । तवानुरूपो बंधुर्नास्तीति भावः । को दाश्वध्वरः । दाशुर्दत्तोऽध्वरो यज्ञो येन स तथोक्तः । त्वां यष्टुमपि समर्थः कोऽपि नास्तीत्यर्थः । को ह त्वं कथंभूतस्त्वं । ईदृग्रूप इति सर्वैर्न ज्ञायस इत्यर्थः । कस्मिन् स्थाने श्रित आश्रितोऽसि । वर्तसे । तत्स्थानमपि न केनचित् ज्ञायते । अतस्त्वमस्माभिर्मांसदृष्टिभिः कथमुपलब्धव्य इत्यभिः प्रशस्यते ॥ दाश्वध्वरः । दाशृ दाने । उणादयो बहुलमिति बहुलवचनात्कर्मण्युप्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । यणादेश उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्येति स्वरितत्वं ॥

त्वं जामिर्जनानामग्ने मित्रो असि प्रियः । सखा सखिभ्य ईड्यः ॥४॥
त्वं । जामिः । जनानां । अग्ने । मित्रः । असि । प्रियः । सखा । सखिऽभ्यः । ईड्यः ॥४॥

हे अग्ने त्वमुक्तप्रकारेणाचिंत्यरूपोऽप्यनुग्रहीतृतया सर्वेषां जनानां जामिर्बंधुरसि । तथा प्रियः प्रीणयिता त्वं यजमानानां मित्रः प्रमीतेस्त्रायकोऽसि । ईड्यः स्तुतिभिः स्तुत्यस्त्वं सखिभ्यः समानख्यानेभ्य ऋत्विग्भ्यः सखा सखिवद्यंतं प्रियोऽसि ॥ जामिः । जमु अदने । जमंति सहैकस्मिन्पात्रेऽदंतीति जामयो बंधवः । जनिघसिभ्यामिण् । उ० ४. १२९. । इति विधीयमान इण् बहुलवचनादस्मादपि द्रष्टव्यः । ईड्यः । ईड स्तुतौ । ईडवंदवृशंसदुहां ण्यत इत्याद्युदात्तत्वं ॥

यजा नो मित्रावरुणा यजा देवाँ ऋतं बृहत् । अग्ने यक्षि स्वं दमं ॥५॥
यज । नः । मित्रावरुणा । यज । देवान् । ऋतं । बृहत् । अग्ने । यक्षि । स्वं । दमं ॥५॥

हे अग्ने नोऽस्मदर्थं मित्रावरुणा एतत्संज्ञौ देवौ यज । हविषा पूजय । तथा देवानिंद्रादीन्यज । पूजय । ऋतं सत्यं यथार्थफलं यज्ञं च यजेत्येव । तदर्थं बृहत् प्रौढं स्वं स्वकीयं दमं यज्ञगृहं यक्षि । यज । संगच्छस्व । त्वय्यंतर्विद्यमाने सति हि यज्ञगृहं पूज्यते ॥ यज । द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं । देवान् । दीर्घादटि समानपाद इति संहितायां नकारस्य रुत्वं । आतोऽटि नित्यमित्यनुनासिक आकारः । यत्वलोपौ । यक्षि । यजेर्बहुलं छंदसीति शपो लुक् ॥ ॥२३॥

का त इति पंचर्चं तृतीयं सूक्तं । का त इत्यनुक्रांतं । राहूगणो गोतम ऋषिः । त्रिष्टुप् छंदः । अग्निर्देवता ॥ प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छंदसीदमादिके द्वे सूक्ते । सूत्रितं च । उप प्र जिन्वन्निति त्रीणि का त उपेतिरिति सूक्ते । आ० ४. १३. । इति ॥ आश्विनशस्त्रेऽप्येते प्रातरनुवाकातिदेशात् ॥

का त उपेतिर्मनसो वराय भुवदग्ने शंतमा का मनीषा ।
को वा यज्ञैः परि दक्षं त आप केन वा ते मनसा दाशेम ॥१॥
का । ते । उपऽइतिः । मनसः । वराय । भुवत् । अग्ने । शंऽतमा । का । मनीषा ।
कः । वा । यज्ञैः । परि । दक्षं । ते । आप । केन । वा । ते । मनसा । दाशेम ॥१॥

हे अग्ने ते तव मनसो वराय निवारणायास्मास्ववस्थापनाय कोपेतिर्भुवत् । कीदृशमुपगमनं भवेत् । न काप्यस्ति । तवोचितमुपगमनं वयं कर्तुं न शक्नुम इति भावः । मनीषा स्तुतिः शंतमा तवातिशयेन सुखकरी का कीदृशी भवेत् । तवोचिता स्तुतिरपि नास्तीत्यर्थः । को वा यजमानो यज्ञैस्तव संबंधिभिर्यागैर्दक्षं वृद्धिं बलं वा पर्याप । पर्याप्नोत् । न कोऽपीत्यर्थः । तवोचितान्यागाननुष्ठाय तैः फलं प्राप्यत इत्येतदपि दुर्घटमेवेति भावः । उपगमनादिकं तावदास्तां । तस्य सर्वस्य साधनभूतं मन एवास्माकं दुर्लभमित्याह । केनेति । हे अग्ने ते तुभ्यं केन मनसा कीदृश्या बुद्ध्या दाशेम । हवींषि प्रयच्छाम । तवोपगमनाद्यनुरूपं मनोऽस्माकं नोत्पद्यत इत्यर्थः ॥ उपेतिः । तादौ चेति गतेः प्रकृतिस्वरत्वं । वराय । वृञ् वरणे । अस्मादंतर्भावितण्यर्थाद्ग्रहवृदृनिश्चिगमश्च । पा० ३. ३. ५८. । इत्यप् । तस्य पित्त्वादनुदात्तत्वे धातुस्वरः । भुवत् । लेट्यडागमः । बहुलं छंदसीति शपो लुक् । भूसुवोस्तिङीति गुणप्रतिषेधः । दक्षं । दक्ष वृद्धौ । भावे करणे वा घञ् । ञित्त्वादाद्युदात्तत्वं ॥

एह्यग्न इह होता नि षीदादब्धः सु पुरएता भवा नः ।
अवतां त्वा रोदसी विश्वमिन्वे यजा महे सौमनसाय देवान् ॥२॥

आ। इहि। अग्ने। इह। होता। नि। सीद। अदब्धः। सु। पुरःऽएता। भव। नः।
अवतां। त्वा। रोदसी इति। विश्वमिन्वे इति विश्वंऽइन्वे। यज। महे। सौमनसाय।
देवान् ॥ २ ॥

हे अग्ने एहि। आगच्छ। इहास्मिन्यज्ञे होता देवानामाह्वाता सन्नि षीद। उपविश। नोऽस्माकं पुरएता पुरतो गंता सु भव। सुष्ठु भव। यस्मात्त्वमदब्धो राक्षसादिभिरहिंस्योऽसि। तादृशं त्वां विश्वमिन्वे सर्वं व्याप्नुवत्यौ रोदसी द्यावापृथिव्यौ त्वा त्वामवतां। रक्षतां। आगत्योपविश्य च द्यावापृथिवीभ्यां रक्षितश्च सन् महे महते सौमनसाय सौमनस्याय देवान्दानादिगुणयुक्तानिंद्रादीन्यज। हविर्भिः पूजय ॥ नि षीद। सदेरप्रतेरिति षत्वं। सौमनसाय। सुमनसो भावः सौमनसं। तस्येदमिति संबंधसामान्य इत्यण्प्रत्ययः। स चात्र भावलक्षणे संबंधविशेषे पर्यवस्यति। यद्वा। हायनांतयुवादिभ्योऽण्। पा० ५. १. १३०.। इति भावेऽण्। युवादिष्वस्य पाठो द्रष्टव्यः ॥

प्र सु विश्वान्रक्षसो धक्ष्यग्ने भवा यज्ञानामभिशस्तिपावा।
अथा वह सोमपतिं हरिभ्यामातिथ्यमस्मै चकृमा सुदाव्ने ॥ ३ ॥
प्र। सु। विश्वान्। रक्षसः। धक्षि। अग्ने। भव। यज्ञानां। अभिशस्तिऽपावा।
अथ। आ। वह। सोमऽपतिं। हरिऽभ्यां। आतिथ्यं। अस्मै। चकृम। सुऽदाव्ने ॥ ३ ॥

हे अग्ने विश्वान्सर्वान्रक्षसो राक्षसान्प्र सु धक्षि। प्रकर्षेण दह। दग्ध्वा च यज्ञानामस्माभिरनुष्ठेयानां यागानामभिशस्तिपावाभिशस्तेर्हिंसायाः पाता रक्षिता भव। अथानंतरं सोमपतिं सर्वेषां सोमानां पालकमिंद्रं हरिभ्यां तदीयाश्वाभ्यामा वह। अस्मद्यज्ञं प्रापय। आगतायास्मै सुदाव्ने शोभनस्य फलस्य दात्र इंद्रायातिथ्यमतिथ्यर्हं सत्कारं चकृम। कुर्मः ॥ धक्षि। दह भस्मीकरणे। बहुलं छंदसीति शपो लुक्। ढत्वभष्भावकत्वषत्वानि। अभिशस्तिपावा। शसु हिंसायां। अस्मादभिपूर्वाद्भावे क्तिन्। अभिशस्तेः पातीत्यभिशस्तिपावा। पा रक्षणे। आतो मनिन्निति वनिप्। सोमपतिं। पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वं। सुदाव्ने। पूर्ववद्ददातेर्वनिप्। अल्लोपोऽन इत्यकारलोपः ॥

प्रजावता वचसा वह्निरासा च हुवे नि च सत्सीह देवैः।
वेषि होत्रमुत पोत्रं यजत्र बोधि प्रयंतर्जनितर्वसूनां ॥ ४ ॥
प्रजाऽवता। वचसा। वह्निः। आसा। आ। च। हुवे। नि। च। सत्सि। इह। देवैः।
वेषि। होत्रं। उत। पोत्रं। यजत्र। बोधि। प्रऽयंतः। जनितः। वसूनां ॥ ४ ॥

प्रजावता यजमानेभ्यो दातव्यापत्यादिफलोपेतेन वचसा स्तोत्रेण स्तुतः सन् योऽग्निरासास्यस्थानीयया ज्वालया वह्निर्देवेभ्यो हविषां वोढा तमग्निमा च हुवे। आह्वयामि। आहूतः सन् त्वमिहास्मिन्कर्मणि देवैरन्यैः सह नि सत्सि च। निषीद च। निषद्य च हे यजत्र यजनीयाग्ने होत्रं होत्रा क्रियमाणं कर्म उतापि च पोत्रं पोत्रा कृतं कर्म च वेषि। कामयस्व। वसूनां धनानां प्रयंतः प्रकर्षेण नियंतः वसून्यस्मदायत्तानि कुर्वन् [illegible]द्वारा सर्वस्य जनयितरग्ने बोधि। अस्मान्बोधय ॥ आसा। प[illegible]शब्दस्यासन्नादेशः। सुपां सुलुगिति तृतीयाया डादेशः। टिलोप उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं। हुवे। ह्वेञो लटि बहुलं छंदसीति संप्रसारणं। बहुलं छंदसीति शपो लुक्। चवायोगे प्रथमेति निघातप्रतिषेधः। बोधि। बुध अवगमने। अस्माण्णयंताच्छंदस्युभयथेति हेरार्धधातुकत्वात्तस्य णेरनिटीति णिलोपः। हुझल्भ्यो हेर्धिः। धातोरंत्यलोपश्छांदसः। हेरपित्त्वात्तस्यैव स्वरः शिष्यते ॥

एकादशिनस्थामेयस्य पशोर्यथा विप्रस्येत्येषा पशुपुरोडाशस्य याज्या। सूचितं च प्रदानानामिति खंडे। यथा विप्रस्य मनुषो हविर्भिः प्र कारवो मनना वच्यमानाः। आ॰ ३. ७.। इति॥

यथा विप्रस्य मनुषो हविर्भिर्देवाँ अयजः कविभिः कविः सन्।
एवा होतः सत्यतर त्वमद्याग्ने मंद्रया जुह्वा यजस्व॥५॥
यथा। विप्रस्य। मनुषः। हविःऽभिः। देवान्। अयजः। कविऽभिः। कविः। सन्।
एव। होतरिति। सत्यऽतर। त्वं। अद्य। अग्ने। मंद्रया। जुह्वा। यजस्व॥५॥

कविः क्रांतदर्शी सन्कविभिर्मेधाविभिर्ऋत्विग्भिः सह विप्रस्य मेधाविनो मनुषो मनोर्यज्ञे हविर्भिश्चरुपुरोडाशादिभिर्हे अग्ने यथा देवानयजः एवमेव होतर्होमनिष्पादक सत्यतरातिशयेन सत्तु साधो अग्ने त्वमद्यास्मिन्यज्ञे मंद्रया हर्षयित्र्या जुह्वा होमसाधनभूतया स्रुचा यजस्व। देवान्हविर्भिः पूजय॥ मनुषः। मन ज्ञाने। ब-लमन्यत्रापीति मनेरुसिन्प्रत्ययः॥ ॥२४॥

कथेति पंचर्चं चतुर्थं सूक्तं त्रैष्टुभं गोतमस्यार्षमाग्नेयं। अनुक्रांतं च। कथेति॥ प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तः सूक्तविनियोगः॥

कथा दाशेमाग्नये कास्मै देवजुष्टोच्यते भामिने गीः।
यो मर्त्येष्वमृत ऋतावा होता यजिष्ठ इत्कृणोति देवान्॥१॥
कथा। दाशेम। अग्नये। का। अस्मै। देवऽजुष्टा। उच्यते। भामिने। गीः।
यः। मर्त्येषु। अमृतः। ऋतऽवा। होता। यजिष्ठः। इत्। कृणोति। देवान्॥१॥

अस्मा अग्नये कथा दाशेम। कथं हवींषि ददाम। अग्नेरनुरूपं यज्ञं कर्तुमशक्ता वयमित्यर्थः। अथवास्मै भामिने तेजस्विनेऽग्नये देवजुष्टा सर्वैर्देवैः सेवितव्या गीर्वाक् स्तुतिरपि का कीदृश्युच्यते। तादृशीं स्तुतिमपि कर्तुं न शक्ता इत्यर्थः। अमृतो मरणरहित ऋतावा ऋतवान् सत्यवान्यज्ञवान् वा होता देवानामाह्वाता होमनिष्पादको वा यजिष्ठोऽतिशयेन यष्टा एवंभूतो योऽग्निर्मर्त्येषु मरणधर्मस्वस्मासु वर्तमानः सन्देवानित्कृणोति हविर्भिर्युक्तान्करोत्येव। तादृशायाग्नये कथा दाशेमेति पूर्वेणान्वयः॥ कथा। था हेतौ च च्छंदसीति थाप्रत्ययः। भामिने। भा दीप्तौ। अर्तिस्तुस्वित्यादिना मन्प्रत्ययः। ततो मत्वर्थीय इनिः। ऋतावा। छंदसीवनिपाविति मत्वर्थीयो वनिप्। अन्येषामपि दृश्यत इति दीर्घत्वं॥

यो अध्वरेषु शंतम ऋतावा होता तमू नमोभिरा कृणुध्वं।
अग्निर्यद्वेर्मर्ताय देवान्त्स चा बोधाति मनसा यजाति॥२॥
यः। अध्वरेषु। शंऽतमः। ऋतऽवा। होता। तं। ऊं इति। नमःऽभिः। आ। कृणुध्वं।
अग्निः। यत्। वेः। मर्ताय। देवान्। सः। च। बोधाति। मनसा। यजाति॥२॥

योऽग्निरध्वरेषु यागेषु शंतमोऽतिशयेन सुखकारी ऋतावा सत्यवान्। यथार्थदर्शीत्यर्थः। होता देवानामाह्वाता भवति हे ऋत्विग्यजमाना यूयं तमु तमेवाग्निं नमोभिः स्तोत्रैरा कृणुध्वं। अभिमुखीकुरुत। यद्यदायमग्निर्मर्ताय मनुष्याय यजमानार्थं देवान्वेः वेति गच्छति तदानीं सोऽग्निर्यष्टव्यान्सर्वान्देवान्बोधाति च। जानाति च। ज्ञात्वा च मनसा नमसा तान्यजाति। हविर्भिः पूजयति। अतस्तमेवाग्निमा कृणुध्वमिति योज्यं॥ वेः। वी गत्यादिषु। छंदसि लुङ्लङ्लिट इति वर्तमाने लङ्। तिङां तिङो भवंतीति प्रथमपुरुषैकवचनस्य मध्यमपुरुषैकवचनादेशः। बोधाति। बुध अवगमने। लेट्याडागमः। शपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। चवायोगे प्रथमेति निघातप्रतिषेधः। मनसा। मकारनकारयोः स्थानविपर्ययः॥

स हि क्रतुः स मर्यः स साधुर्मित्रो न भूदद्भुतस्य रथीः ।
तं मेधेषु प्रथमं देवयंतीर्विश उप ब्रुवते दस्ममारीः ॥३॥
सः । हि । क्रतुः । सः । मर्यः । सः । साधुः । मित्रः । न । भूत् । अद्भुतस्य । रथीः ।
तं । मेधेषु । प्रथमं । देवऽयंतीः । विशः । उप । ब्रुवते । दस्मं । आरीः ॥३॥

स ह्यग्निः क्रतुः कर्मणां कर्ता । स एव मर्यो मारयिता विश्वस्योपसंहर्ता साधुः साधयितोत्पादयितापि स एवाद्भुतस्याभूतस्यालब्धस्य धनस्य रथी रंहयिता प्रापयिता भूत् । भवति । तत्र दृष्टांतः । मित्रो न । यथा सखा धनानि प्रापयति तद्वत् । एवंभूतो योऽग्निस्तमेव मेधेषु यज्ञेषु देवयंतीर्देवयंत्यो देवानात्मन इच्छंत्यो विशः प्रजाः प्रथममुप ब्रुवते । स्तुतिभिरुपेत्य प्रधानभूत इति कथयंति । कीदृश्यो विशः । दस्मं दर्शनीयं तमग्निमारीर्गच्छंत्यः । भजंत्य इत्यर्थः ॥ मर्यः । मृङ् प्राणत्यागे । अस्मादंतर्भावितण्यर्थाच्छंदसि निष्टर्क्येत्यादौ निपातनाद्यत् । कृत्यल्युटो बहुलमिति बहुलवचनात्कर्तरि द्रष्टव्यः । यतोऽनाव इत्याद्युदात्तत्वं । देवयंतीः । वा छंदसीति पूर्वसवर्णदीर्घत्वं । आरीः । ऋ गतौ । जनिघसिभ्यामिण् । उ॰ ४. १२९. । इति बहुलग्रहणादस्मादपीण्प्रत्ययः । कृदिकारादक्तिन इति ङीष् । वा छंदसीति पूर्वसवर्णदीर्घत्वं । व्यत्ययेनाद्युदात्तत्वं ॥

स नो नृणां नृतमो रिशादा अग्निर्गिरोऽवसा वेतु धीतिं ।
तना च ये मघवानः शविष्ठा वाजप्रसूता इषयंत मन्म ॥४॥
सः । नः । नृणां । नृऽतमः । रिशादाः । अग्निः । गिरः । अवसा । वेतु । धीतिं ।
तना । च । ये । मघऽवानः । शविष्ठाः । वाजऽप्रसूताः । इषयंत । मन्म ॥४॥

नृणां यज्ञस्य नेतॄणां मध्ये नृतमोऽतिशयेन नेता रिशादा रिशानां शत्रूणामत्ता भक्षयिता । यद्वा । रिशतां हिंसतामसिता निरसिता । एवंविधः सोऽग्निर्नोऽस्माकं गिरः स्तुतीरवसा हविर्लक्षणेनान्नेन युक्तां धीतिं कर्म च वेतु । कामयतां । अपि च ये यजमानास्तना । धननामैतत् । विस्तृतेन धनेन मघवानो धनवंतः शविष्ठा अतिशयेन बलिनश्च संतो वाजप्रसूताः प्रसूतं प्रेरितं वाजो हविर्लक्षणमन्नं यैस्तादृशा भूत्वा मन्मामेर्मननरूपं स्तोत्रमिषयंत एषयंति ऋत्विग्भिः कारयितुमिच्छंति । तेषामपि स्तुतिमग्निः कामयतामिति भावः ॥ नृणां । नृ चेत्युभयथाभावाद्दीर्घाभावः । नामन्यतरस्यामिति नाम उदात्तत्वं । तना । तनु विस्तारे । पचाद्यच् । तृतीयैकवचनस्य सुपां सुलुगित्याकारः । वृषादेराकृतिगणत्वादाद्युदात्तत्वं । शविष्ठाः । शव इति बलनाम । अस्मायामेधेति मत्वर्थीयो विनिः । तत आतिशायनिक इष्ठन् । विन्मतोर्लुगिति विनो लुक् । टेरिति टिलोपः । इष्ठनो नित्त्वादाद्युदात्तत्वं । इषयंत । इषु इच्छायां । अस्मात्ण्यंताच्छांदसो लङ् । संज्ञापूर्वकस्य विधेरनित्यत्वाण्णौ लघूपधगुणाभावः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते ॥

एवाग्निर्गोतमेभिर्ऋतावा विप्रेभिरस्तोष्ट जातवेदाः ।
स एषु द्युम्नं पीपयत्स वाजं स पुष्टिं याति जोषमा चिकित्वान् ॥५॥
एव । अग्निः । गोतमेभिः । ऋतऽवा । विप्रेभिः । अस्तोष्ट । जातऽवेदाः ।
सः । एषु । द्युम्नं । पीपयत् । सः । वाजं । सः । पुष्टिं । याति । जोषं । आ । चिकित्वान् ॥५॥

ऋतावा ऋतवान्यज्ञवान् जातवेदा जातधनो जातप्रज्ञो वायमग्निर्विप्रेभिर्मेधाविभिर्गोतमेभिर्गोतमैर्ऋषिभिरेवमुक्तेन प्रकारेणास्तोष्ट । स्तुतोऽभूत् । स्तुतश्च सोऽग्निरेषु गोतमेषु द्युम्नं द्योतमानं सोमं पीपयत् । अपिबत् । यद्वा । तानृषीनपाययत् । तथा सोऽग्निर्वाजं हविर्लक्षणमन्नं पीपयदित्येव । एवं सोमलक्षणं चरुपुरोडाशादिलक्षणं हविश्च स्वीकृत्य सोऽग्निर्जोषमस्माभिः कृतं सेवनमा चिकित्वान् आ समंताज्जानन् पुष्टिं

याति। पोषं प्राप्नोतु। यद्वा। अस्माकं धनानि पोषं प्रापयतु ॥ गोतमेभिः। ऋष्यंधकवृष्णिकुरुभ्यश्च। पा॰ ४. १. ११४.। इति विहितस्याणोऽत्रिभृगुकुत्सवसिष्ठगोतमांगिरोभ्यश्च। पा॰ २. ४. ६५.। इति बहुषु लुक्। अस्तोष्ट। स्तौतेः कर्मणि लुङि चिणभावश्छांदसः। पीपयत्। पा पाने। ण्यंताल्लुङि च्लेश्चङादि। जोषं। जुषी प्रीतिसेवनयोः। भावे घञ्। ञित्त्वादाद्युदात्तत्वं॥ ॥२५॥

अभि त्वेति पंचर्चं पंचमं सूक्तं गोतमस्यार्षमाग्नेयं गायत्रं। तथा चानुक्रांतं। अभि त्वा गायत्रं त्विति ॥ विनियोगो लैंगिकः ॥

अभि त्वा गोतमा गिरा जातवेदो विचर्षणे। द्युम्नैरभि प्र णोनुमः ॥१॥
अभि। त्वा। गोतमाः। गिरा। जातऽवेदः। विऽचर्षणे। द्युम्नैः। अभि। प्र। नोनुमः ॥१॥

हे जातवेदो जातानां वेदितर्विचर्षणे विशेषेण सर्वस्य द्रष्टः एवंभूताग्ने त्वा त्वां गोतमा अस्य सूक्तस्य द्रष्टा गोतम ऋषिः। ऋषेरेकत्वेऽपि पूजार्थं बहुवचनं। गिरा स्तोत्रलक्षणया वाचाभ्याभिमुख्येनास्तौदिति शेषः। तद्वद्वयमपि त्वां द्युम्नैस्त्वदीयगुणप्रकाशकैर्मंत्रैरभि प्र णोनुमः। आभिमुख्येन पुनःपुनः स्तुमः ॥ नोनुमः। णु स्तुतौ। अस्माद्यङ्लुगंताल्लट्। उपसर्गादसमासेऽपीति णत्वं ॥

तमु त्वा गोतमो गिरा रायस्कामो दुवस्यति। द्युम्नैरभि प्र णोनुमः ॥२॥
तं। ऊं इति। त्वा। गोतमः। गिरा। रायःऽकामः। दुवस्यति। द्युम्नैः। अभि। प्र। नोनुमः ॥२॥

रायस्कामो धनकामो गोतमो यमग्निं गिरा स्तुत्वा दुवस्यति परिचरति तमु तमेव त्वां द्युम्नैर्द्योतमानैः स्तोत्रैराभिमुख्येन पुनःपुनः स्तुमः ॥ रायस्कामः। रायो धनानि कामयत इति रायस्कामः। कर्मण्यण्। तत्पुरुषे कृति बहुलमिति बहुलवचनादलुक्। ऊडिदमित्यादिना पूर्वपदस्य विभक्तिरुदात्तत्वं। दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं। अतः [illegible]कुंभेति। पा॰ ८. ३. ४६.। विसर्जनीयस्य सत्वं। दुवस्यति। दुवस उपतापे परिचरणे च। कंड्वादिः ॥

तमु त्वा वाजसातममंगिरस्वद्धवामहे। द्युम्नैरभि प्र णोनुमः ॥३॥
तं। ऊं इति। त्वा। वाजऽसातमं। अंगिरस्वत्। हवामहे। द्युम्नैः। अभि। प्र। नोनुमः ॥३॥

हे अग्ने वाजसातमं [illegible]शयेन सनितारं दातारं तमेव त्वा त्वामंगिरस्वत्। अंगिरस इव हवामहे। आह्वयामः। शिष्टं गतं ॥ वाजसातमं। षणु दाने। जनसनखनक्रमगमो विट्। विड्वनोरनुनासिकस्यादित्यात्वं। अतिशयेन वाजसा वाजसातमः। तमपः पित्त्वादनुदात्तत्वे कृदुत्तरपदप्रकृतिस्वर एव शिष्यते। अंगिरस्वत्। तेन तुल्यमिति वतिः। नभोऽंगिरोमनुषां वत्युपसंख्यानं। पा॰ १. ४. १८. ३.। इति भत्वेन पदत्वाभावाद्रुत्वाद्यभावः ॥

तमु त्वा वृत्रहंतमं यो दस्यूँरवधूनुषे। द्युम्नैरभि प्र णोनुमः ॥४॥
तं। ऊं इति। त्वा। वृत्रहन्ऽतमं। यः। दस्यून्। अवऽधूनुषे। द्युम्नैः। अभि। प्र। नोनुमः ॥४॥

हे अग्ने दस्यून् उपक्षपयितॄन् राक्षसादीन्यस्त्वमवधूनुषे अवचालयसि स्थानात्प्रच्यावयसि वृत्रहंतमं वृत्राणां पाप्मानामतिशयेन हंतारं तमु त्वा तमेव त्वां द्युम्नैरित्यादि पूर्ववत् ॥ वृत्रहंतमं । अतिशयेन वृत्रहा वृत्रहंतमः । पदसंज्ञायां नलोपे नाह्नस्य । पा॰ ८. २. १७. । इति तमपो नुट् । दस्यून् । दीर्घादटि समानपाद इति नकारस्य रुत्वं । अत्रानुनासिकः पूर्वस्य तु वेत्यूकारः सानुनासिकः ॥

अवोचाम रहूगणा अग्नये मधुमद्वचः । द्युम्नैरभि प्र णोनुमः ॥५॥

अवोचाम । रहूगणाः । अग्नये । मधुऽमत् । वचः । द्युम्नैः । अभि । प्र । नोनुमः ॥५॥

ऋषिः कृतं स्तोत्रम[illegible]ते । रहूगणा रहूगणस्य पुत्रा वयं गोतमा अग्नये अंगनादिगुणयुक्ताय देवाय मधुमद्वचो माधुर्योपेतं वचनमवोचाम । प्रावादिष्म । तद्वचनरूपैर्द्युम्नैर्द्योतमानैः स्तोत्रैः पुनःपुनरग्निं वयमभि प्र णोनुमः । आभिमुख्येन प्रकर्षेण स्तुमः ॥ ॥२६॥

हिरण्यकेश इति द्वादशर्चं षष्ठं सूक्तं । रहूगणपुत्रस्य गोतमस्यार्षं । अत्रानुक्रम्यते । हिरण्यकेशो द्वादशाद्यौ तृचौ त्रैष्टुभौष्णिहौ पूर्वोऽग्नये वा मध्यमायेति । पूर्वत्र गायत्रं त्वित्युक्तत्वादिदमपि गायत्रं सूक्तं । एतावांस्तु विशेषः । आद्यस्तृचस्त्रैष्टुभः । द्वितीयस्त्वौष्णिहः । प्रथमतृचस्य मध्यमस्थानो वैद्युतोऽग्निः शुद्धाग्निर्वा देवता । शिष्टा नवर्चः केवलाग्निदेवताकाः ॥ प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छंदस्याश्विनशस्त्रे चाद्यस्तृचः । सूत्रितं च । हिरण्यकेश इति तिस्रोऽपश्यमस्य महत इति सूक्ते । आ॰ ४. १३. । इति ॥ कारीर्यामग्नेर्धामच्छदो हिरण्यकेश इति द्वे ऋचौ याज्यानुवाक्ये । सूत्रितं च । हिरण्यकेशो रजसो विसार इति द्वे त्वं त्या चिदच्युता धामन्ते विश्वं भुवनमधि श्रितमिति वा । आ॰ २. १३. । इति ॥

हिरण्यकेशो रजसो विसारेऽहिर्धुनिर्वात इव ध्रजीमान् ।
शुचिभ्राजा उषसो नवेदा यशस्वतीरपस्युवो न सत्याः ॥१॥

हिरण्यऽकेशः । रजसः । विऽसारे । अहिः । धुनिः । वातःऽइव । ध्रजीमान् ।
शुचिऽभ्राजाः । उषसः । नवेदाः । यशस्वतीः । अपस्युवः । न । सत्याः ॥१॥

हिरण्यकेशो हितरमणीयाः केशस्थानीया ज्वाला यस्य स तथोक्तः सुवर्णवद्रोचमानज्वालो वा अहिरागत्य हंता मेघानां धुनिस्तेषां कंपयिता वात इव वायुरिव ध्रजीमान् शीघ्रगतियुक्तः एवंभूतो वैद्युतोऽग्नी रजस उदकस्य विसारे विसरणे मेघान्निर्गमने निमित्तभूते सति शुचिभ्राजाः शोभनदीप्तिः सन् मेघाज्जलानि निर्गमयितुं जानाति । उषस उषोदेवता नवेदाः । न विदंति इति नवेदाः । मेघादुदकस्य निःसारणमग्निरेव जानाति उषसस्तु न जानंतीत्यर्थः । अज्ञाने दृष्टांतः । यशस्वतीरन्नयुक्ता अन्नवत्योऽपस्युवोऽपः कर्मात्मन इच्छंत्यः सत्या अवितथारंभा न । एवंभूताः प्रजा इव । अत्रोषसामज्ञानेनाग्निः प्रशस्यते न तु ता निंद्यंते । न हि निंदा निंद्यं निंदितुं अपि तु स्तुत्यं स्तोतुमिति न्यायात् ॥ ध्रजीमान् । ध्रज गतौ । इन्सर्वधातुभ्य इति भाव इन्प्रत्ययः । ततो मतुप् । तस्य पित्त्वादनुदात्तत्व इनो नित्त्वात्प्रातिपदिकस्याद्युदात्तत्वं । नवेदाः । नञ्पूर्वाद्विदेः पचाद्यच् । नभ्राण्नपादित्यादिना नञः प्रकृतिभावः । अपस्युवः । अपस्शब्दात्सुप आत्मनः क्यच् । क्याच्छंदसीत्युप्रत्ययः । तन्वादीनां छंदसि बहुलमुपसंख्यानं । पा॰ ६. ४. ७७. १. । इत्युवङ् ॥

आ ते सुपर्णा अमिनंताँ एवैः कृष्णो नोनाव वृषभो यदीदं ।
शिवाभिर्न स्मयमानाभिरागात्पतंति मिहः स्तनयंत्यभ्रा ॥२॥

आ । ते । सुऽपर्णाः । अमिनंत । एवैः । कृष्णः । नोनाव । वृषभः । यदि । इदं ।
शिवाभिः । न । स्मयमानाभिः । आ । अगात् । पतंति । मिहः । स्तनयंति । अभ्रा ॥२॥

हे अग्ने ते तव सुपर्णाः शोभनपतना रश्मय एवैर्गंतृभिर्मरुद्भिः सहामिनंत । आ समंतान्मेघं हिंसंति । वर्षणार्थं ताडयंति । प्रहतश्च कृष्णः कृष्णवर्णो वृषभो वर्षिता मेघो नोनाव । भृशं शब्दमकरोत् । यदि यदेद-मीदृशं कर्म तदानीं शिवाभिर्न सुखकारिणीभिः स्मयमानाभिर्हसनवतीभिः कांताभिरिव शुभ्रवर्णाभिः फेनयु-क्ताभिरद्भिर्विद्युद्भिर्वा सहागात् । वैद्युताग्निप्रेरितः पर्जन्य आगच्छति । तदनंतरं मिह आपः पतंति । दिवः सकाशात्प्रवृष्टा भवंति । अभ्राभ्राण्यद्भिः पूर्णा मेघाः स्तनयंति । इतस्ततः शब्दं कुर्वंति ॥ अमिनंत । मीञ् हिंसायां । क्रैयादिकः । व्यत्ययेनांतादेशः । ईषाअक्षादित्वात्प्रकृतिभावः । अणोऽप्रगृह्यस्य । पा० ८. ४. ५७. । इति वैकल्पिकमवसाने विधीयमानमनुनासिकत्वं व्यत्ययेनात्र संहितायामपि द्रष्टव्यं । नोनाव । नौतेर्यङ्लुगं-ताल्लिट्यमंत्रे । पा० ३. १. ३५. । इति निषेधादाम्प्रत्ययाभावः । स्मयमानाभिः । ष्मिङ् ईषद्धसने । शपः पित्त्वा-दनुदात्तत्वं । शानचो लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । स्तनयंति । स्तन शब्दे । चुरादिरदंतः । पतंति स्तनयंतीत्यनयोः पादादित्वाद्वाक्यादित्वाच्च निघाताभावः ॥

यदीमृतस्य पयसा पियानो नयन्नृतस्य पथिभी रजिष्ठैः ।
अर्यमा मित्रो वरुणः परिज्मा त्वचं पृंचंत्युपरस्य योनौ ॥ ३ ॥

यत् । ईं । ऋतस्य । पयसा । पियानः । नयन् । ऋतस्य । पथिऽभिः । रजिष्ठैः ।
अर्यमा । मित्रः । वरुणः । परिऽज्मा । त्वचं । पृंचंति । उपरस्य । योनौ ॥ ३ ॥

यदीं यदायमग्निर्ऋतस्योदकस्य पयसा पयोवत्सारभूतेन रसेन पियानो जगदाप्यायनं कुर्वन् आप्यायितं च जगदृतस्योदकस्य संबंधिभी रजिष्ठैर्ऋजुतमैः पथिभिर्मार्गैः स्नानपानादिभिर्नयन् प्रापयन्वर्तते तदानीमर्यमा मित्रो वरुणश्च परिज्मा परितो गंता मरुद्गणश्चोपरस्य मेघस्य योनौ वृष्ट्युदकोत्पत्तिस्थाने त्वचं पृंचंति । वृष्ट्युदकस्याच्छादकं प्रदेशं स्वकीयैरायुधैः संयोजयंति । उद्घाटयंतीति यावत् ॥ पियानः । स्फायी ओप्यायी वृद्धौ । बहुलं छंदसीति शपो लुक् । धातोर्व्यत्ययेन पीभावः । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते । रजिष्ठैः । ऋजुशब्दादिष्ठनि विभाषर्जोश्छंदसि । पा० ६. ४. १६२. । इत्यृकारस्य रत्वं । टेरिति टिलोपः । पृंचंति । पृची संपर्के । रौधादिकः ॥

प्रातरनुवाकस्याग्नेये क्रतावौष्णिहे छंदस्याश्विनशस्त्रे चाग्ने वाजस्येत्याद्यास्तिस्र ऋचः । सूत्रितं च । अग्ने वाजस्येति तिस्रः पुरु त्वा त्वामग्ने । आ० ४. १३. । इति ॥

अग्ने वाजस्य गोमत ईशानः सहसो यहो । अस्मे धेहि जातवेदो महि श्रवः ॥ ४ ॥

अग्ने । वाजस्य । गोऽमतः । ईशानः । सहसः । यहो इति । अस्मे इति । धेहि ।
जातऽवेदः । महि । श्रवः ॥ ४ ॥

हे सहसो यहो बलस्य पुत्राग्ने गोमतो बहुभिर्गोभिर्युक्तस्य वाजस्यान्नस्येशान ईश्वरस्त्वमसि । अतोऽस्मे अस्मासु हे जातवेदो जातधन जातानां वेदितर्वाग्ने महि प्रभूतं श्रवोऽन्नं धेहि । स्थापय ॥ सहसो यहो । परां-गवद्भावादामंत्रितस्य चेति षष्ठ्यामंत्रितसमुदायो निहन्यते । अस्मे । सुपां सुलुगिति सप्तम्याः शेआदेशः ॥

स इंधानो वसुष्कविरग्निरीळेन्यो गिरा । रेवदस्मभ्यं पुर्वणीक दीदिहि ॥ ५ ॥

सः । इधानः । वसुः । कविः । अग्निः । ईळेन्यः । गिरा । रेवत् । अस्मभ्यं । पुरु-
ऽअनीक । दीदिहि ॥ ५ ॥

सोऽग्निरिधानो दीपनशीलो वसुर्निवासयिता सर्वेषां कविः क्रांतदर्शनो मेधावी वा गिरा स्तोत्ररूपया वाचेळेन्यः स्तोतव्यो भवति । हे पुर्वणीक । अनीकं मुखं । पुरुभिर्बह्वीभि नीकस्थानीयाभिर्ज्वालाभिर्युक्ताग्ने

अस्मभ्यं रेवद्धनयुक्तमन्नं यथा भवति तथा दीदिहि। दीप्यस्व ॥ इधानः। ञिइन्धी दीप्तौ। ताच्छीलिकश्चानश्। बहुलं छंदसीति शपो लुक्। ईळेन्यः। ईड स्तुतौ। औणादिक एन्यप्रत्ययः। रेवत्। रयेर्मतौ बहुलमिति संप्रसारणं। छंदसीर इति मतुपो वत्वं। रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यं। का॰ ६. १. १७६. १.। इति मतुप उदात्तत्वं। दीदिहि। दीदेतिश्छांदसो दीप्तिकर्मा ॥

क्षपो राजन्नुत त्मनाग्ने वस्तोरुतोषसः। स तिग्मजंभ रक्षसो दह प्रति ॥ ६॥

क्षपः। राजन्। उत। त्मना। अग्ने। वस्तोः। उत। उषसः। सः। तिग्मऽजंभ। रक्षसः। दह। प्रति ॥ ६॥

हे राजन् राजनशीलाग्ने क्षपः। क्षपय। राक्षसादीन् स्वकीयैः पुरुषैर्बाधस्व। उतापि च त्मना न केवलमन्यैरेवात्मना च तान्बाधस्व। कदेति चेत् उच्यते। वस्तोः सर्वाण्यहानि उतापि चोषस उषःकालोपलक्षिता रात्रीः। अत्यंतसंयोगे द्वितीया। सर्वेष्वहःसु सर्वासु रात्रिषु चेत्यर्थः। हे तिग्मजंभ तीक्ष्णमुखाग्ने रक्षसो राक्षसानुक्तप्रकारेण क्षपयित्वा स एव त्वं प्रति दह। प्रत्येकं दह। न किंचिद्दग्धव्यमित्युदास्वित्यर्थः ॥ क्षपः। क्षप क्षांत्यां। लोडर्थे छांदसो लङ्। छंदस्युभयथेति शप आर्धधातुकत्वाद्सेरनिटीति णिलोपः। उदात्तनिवृत्तिस्वरेण शप उदात्तत्वं। त्मना। मंत्रेष्वाङ्यादेरात्मन इत्याकारलोपः। रक्षसः। रक्ष पालने। रक्षितव्यमस्मादिति रक्षः। भीमादित्वात्। पा॰ ३. ४. ७४.। अपादानेऽसिप्रत्ययः। क्षरतेर्वा ण्यंताद्सिप्रत्यये णिलोपो वर्णविपर्ययश्च। अस्य च रक्षःशब्दस्यासिप्रत्ययांतत्वात्प्रत्ययस्वर एव शिष्यते ॥ ॥ २७॥

प्रातरनुवाकस्याग्नेये क्रतौ गायत्रे छंदस्यवा नो अग्न इत्याद्याः षड्टचः। सूत्रितं च। अवा नो अग्न इति षळग्निमीळेऽग्निं दूतं। आ॰ ४. १३.। इति ॥ आश्विनशस्त्रे चैताः शंसनीयाः प्रातरनुवाकातिदेशात् ॥

अवा नो अग्न ऊतिभिर्गायत्रस्य प्रभर्मणि। विश्वासु धीषु वंद्य ॥ ७॥

अव। नः। अग्ने। ऊतिऽभिः। गायत्रस्य। प्रऽभर्मणि। विश्वासु। धीषु। वंद्य ॥ ७॥

विश्वासु धीषु सर्वेषु कर्मसु वंद्य स्तुत्य हे अग्ने गायत्रस्य गायत्रसाम्नो गायत्रीछंदस्कस्य सूक्तस्य वा प्रभर्मणि प्रभरणे संपादने निमित्तभूते सति नोऽस्मानूतिभिस्त्वदीयैः पालनैरव। रक्ष ॥ अव। द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं ॥

आ नो अग्ने रयिं भर सत्रासाहं वरेण्यं। विश्वासु पृत्सु दुष्टरं ॥ ८॥

आ। नः। अग्ने। रयिं। भर। सत्राऽसहं। वरेण्यं। विश्वासु। पृत्ऽसु। दुस्तरं ॥ ८॥

हे अग्ने रयिं धनं नोऽस्मभ्यमा भर। प्रयच्छ। कीदृशं। सत्रासाहं सत्रा सह युगपदेव दारिद्र्यस्य नाशकं वरेण्यं सर्वैर्वरणीयं विश्वासु पृत्सु सर्वेषु संग्रामेषु दुष्टरं शत्रुभिस्तरीतुमशक्यं ॥ सत्रासाहं। छंदसि सह इति ण्विः। वरेण्यं। वृञ एण्यः। पृत्सु। पदादिषु मांस्पृत्स्नूनामुपसंख्यानमिति पृतनाशब्दस्य पृद्भावः। साविकाच इति विभक्तेरुदात्तत्वं ॥

आयुष्कामेष्ट्यां प्रथमस्याज्यभागस्यानुवाक्या आ नो अग्न इति। सूत्रितं च। आयुष्कामेष्ट्यां जीवातुमंतावा नो अग्ने सुचेतुना। आ॰ २. १०.। इति ॥ महापितृयज्ञेऽप्येषैव प्रथमाज्यभागानुवाक्या। सूत्रितं च। जीवातुमंतौ सव्योत्तर्युपस्थाः। आ॰ २. १९.। इति ॥

आ नो अग्ने सुचेतुना रयिं विश्वायुपोषसं। मार्डीकं धेहि जीवसे ॥ ९॥

आ। नः। अग्ने। सुऽचेतुना। रयिं। विश्वायुऽपोषसं। मार्डीकं। धेहि। जीवसे ॥ ९॥

हे अग्ने नोऽस्माकं जीवसे जीवनाय सुचेतुना शोभनेन ज्ञानेन युक्तं रयिं धनमा धेहि। आस्थापय।

कीदृशं । मार्द्वीकं । मृद्वीकं सुखं । तद्धेतुभूतं । विश्वायुपोषसं सर्वस्मिन्नायुषि देहादेः पोषकं । यावज्जीवमस्मदुपभोगपर्याप्तमित्यर्थः ॥ सुचेतुना । चिती संज्ञाने । औणादिक उप्रत्ययः । कृदुत्तरपदप्रकृतिस्वरत्वं । विश्वायुपोषसं । विश्वमायुर्यस्मिन् शरीरादौ तद्विश्वायु । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं । तत्पुष्णातीति विश्वायुपोषाः । गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च । सकारलोपश्छांदसः । दीर्घायुत्वाय वर्चस इति यथा ॥

प्र पूतास्तिग्मशोचिषे वाचो गोतमाग्नये । भरस्व सुम्नयुर्गिरः ॥१०॥

प्र । पूताः । तिग्मऽशोचिषे । वाचः । गोतम । अग्नये । भरस्व । सुम्नऽयुः । गिरः ॥१०॥

हे गोतम सूक्तद्रष्टः सुम्नयुः सुम्नं धनमात्मन इच्छंस्त्वं तिग्मशोचिषे तीक्ष्णज्वालायाग्नये पूताः शुद्धा वाचोऽग्नेर्गुणान् सम्यगभिदधतीर्गिरः स्तुतीः प्र भरस्व । प्रकर्षेण संपादय ॥ तिग्मशोचिषे । तिज निशाने । युजिरुचितिजां कुत्वं च । उ० १. १४५. । इति मक् । तिग्मानि शोचींषि यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । सुम्नयुः । सुम्न[illegible] न च्छंदस्यपुत्रस्येतीत्वदीर्घयोः प्रतिषेधः । क्याच्छंदसीत्युप्रत्ययः ॥

यो नो अग्नेऽभिदासत्यंति दूरे पदीष्ट सः । अस्माकमिद्वृधे भव ॥११॥

यः । नः । अग्ने । अभिऽदासति । अंति । दूरे । पदीष्ट । सः । अस्माकं । इत् । वृधे । भव ॥११॥

हे अग्ने नोऽस्मान् अंत्यंतिके समीपे दूरे विप्रकृष्टदेशेऽवस्थितः सन् यः शत्रुरभिदासति उपक्षपयति स शत्रुः पदीष्ट । पततु । नश्यतु । त्वं चास्माकमित् अस्माकमेव वृधे वर्धनाय भव ॥ अभिदासति । दसु उपक्षये । [illegible]ताल्लाटे च्छंदस्युभयथेति शप आर्धधातुकत्वात्सेरनिटीति णिलोपः । अंति । कादिलोपो बहुलमिति वक्तव्यमित्यंतिकशब्दस्य ककारलोपः । वृधे । वृधु वृद्धौ । संपदादिलक्षणो भावे क्विप् । सावेकाच इति विभक्तेरुदात्तत्वं ॥

सहस्राक्षो विचर्षणिरग्नी रक्षांसि सेधति । होता गृणीत उक्थ्यः ॥१२॥

सहस्रऽअक्षः । विऽचर्षणिः । अग्निः । रक्षांसि । सेधति । होता । गृणीते । उक्थ्यः ॥१२॥

सहस्राक्षोऽसंख्यातज्वालो विचर्षणिर्विशेषेण सर्वस्य द्रष्टायमग्नी रक्षांसि सेधति । प्रतिषेधति । यद्वा निर्गमयति । स चाग्निरुक्थ्य उक्थैः शस्त्रैरस्माभिः स्तूयमानः सन् होता देवानामाह्वाता भूत्वा गृणीते । तान्स्तौति ॥ सहस्राक्षः । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् समासांतः । सति शिष्टत्वात्तस्यैव स्वरः शिष्यते । सेधति । षिधु गत्यां । अत्र केवलोऽपि सोपसर्गार्थो द्रष्टव्यः । गृणीते । गॄ शब्दे । प्वादीनां ह्रस्व इति ह्रस्वत्वं ॥ ॥२८॥

इत्थेति षोडशर्चं सप्तमं सूक्तं गोतमस्यार्षमैंद्रं पंक्तिच्छंदस्कं । अनुक्रांतं च । इत्था षोळशैंद्रं पांक्तं हि । हिशब्दप्रयोगात्तुह्यादिपरिभाषयेदमुत्तरे च द्वे पंक्तिच्छंदस्के ॥ पृष्ठ्यषडहस्य पंचमेऽहनि मरुत्वतीय इदं सूक्तं । सूचितं च । अवितासीत्था हींद्र पिब तुभ्यमिति मरुत्वतीयं । आ० ७. १२. । इति ॥ चतुर्विंशेऽहन्यच्छावाकस्यावस्तृचो वैकल्पिकोऽनुरूपः । होत्रकाणामिति खंडे सूचितं । इत्था हि सोम इन्मद उभे यदिंद्र रोदसी । आ० ७. ४. । इति ॥ महाव्रते निष्केवल्यस्य दक्षिणपक्ष इत्था हीत्येका । तथैव पंचमारण्यके सूचितं । इत्था हि सोम इन्मद इति पंक्तिः । ऐ० आ० ५. २. २. । इति ॥

इत्था हि सोम इन्मदे ब्रह्मा चकार वर्धनं ।
शविष्ठ वज्रिन्नोजसा पृथिव्या निः शशा अहिमर्चन्ननु स्वराज्यं ॥१॥

इत्था । हि । सोमे॑ । इत् । मदे॑ । ब्रह्मा॑ । च॒कार॑ । वर्ध॑नं ।
शवि॑ष्ठ । व॒ज्रि॒न् । ओज॑सा । पृ॒थि॒व्याः । निः । श॒शाः॒ । अहिं॑ । अर्च॑न् । अनु॑ ।
स्व॒ऽराज्यं॑ ॥१॥

हे शविष्ठातिशयेन बलवन् वज्रिन्वज्रवन्निंद्र इत्था हि इत्थमेव अनेन शास्त्रोक्तप्रकारेणैव मदे मदकरे हर्षकरे सोमे त्वया पीते सति ब्रह्मा ब्राह्मणः स्तोता वर्धनं तव वृद्धिकरं स्तोत्रं चकार । अनेन सूक्तेन कृतवान् । इदिति तत्पादपूरणं । अतस्त्वमोजसा बलेन पृथिव्याः सकाशादहिमागत्य हंतारं वृत्रं निः शशाः । निःशेषेणाशाः । मा बाधस्वेति शासनं कृत्वा पृथिव्याः सकाशान्निरगमय इत्यर्थः । किं कुर्वन् । स्वराज्यं स्वस्य राज्यं राजत्वमन्वनुलक्ष्यार्चन् पूजयन् । स्वस्य स्वामित्वं प्रकटयन्नित्यर्थः ॥ शशाः । शासु अनुशिष्टौ । लङि लुङि प्राप्ते बहुलं छंदसीति शपः श्लुः । स्वराज्यं । राज्ञो भावः कर्म वा राज्यं । पत्यंतपुरोहितादिभ्यो यक् । पा॰ ५. १. १२८. । इति यक् । तत्र हि राजास इति पठ्यते । स्वस्य राज्यं स्वराज्यं । अकर्मधारये राज्यं । पा॰ ६. २. १३०. । इत्युत्तरपदाद्युदात्तत्वं ॥

स त्वा॑मद॒द्वृषा॒ मदः॒ सोमः॑ श्ये॒नाभृ॑तः सु॒तः ।
येना॑ वृ॒त्रं निर॒द्भ्यो ज॒घन्थ॑ वज्रि॒न्नोज॒सार्च॒न्ननु॑ स्व॒राज्यं॑ ॥२॥
सः । त्वा॒ । अ॒म॒द॒त् । वृषा॑ । मदः॑ । सोमः॑ । श्ये॒नऽआ॑भृतः । सु॒तः ।
येन॑ । वृ॒त्रं । निः । अ॒त्ऽभ्यः । ज॒घन्थ॑ । व॒ज्रि॒न् । ओज॑सा । अर्च॑न् । अनु॑ । स्व॒ऽराज्यं॑ ॥२॥

हे इंद्र त्वा त्वां स सोमोऽमदत् । अमदयत् । हर्षं प्रापयत् । कीदृशः सोमः । वृषा सेचनस्वभावो मदो मदकरो हर्षकारी श्येनाभृतः श्येनरूपमापन्नया पक्ष्याकारया गायत्र्या दिवः सकाशादाहृतः सुतोऽभिषुतः । हे वज्रिन् वज्रवन्निंद्र येन पीतेन सोमेनौजसा बलकरेणाद्भ्योऽंतरिक्षसकाशाद्वृत्रं निर्जघंथ [illegible] । अन्यत्पूर्ववत् ॥ अमदत् । मदी हर्षे । अस्माण्णिचि मदी हर्ष[illegible] घटादिषु पाठात् मित्त्वे सति मितां ह्रस्व इति ह्रस्वत्वं । लङि छंदस्युभयथेति शप आर्धधातुकत्वाण्णेरनिटीति णिलोपः । अद्भ्यः । आप इत्यंतरिक्षनाम । अपो भि । पा॰ ७. ४. ४८. । इति पकारस्य तत्वं । जघंथ । क्रादिनियमप्राप्तस्येट उपदेशेऽत्वत इति प्रतिषेधः । अभ्यासाच्चेति हकारस्य घत्वं । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । यद्वृत्तयोगादनिघातः ॥

प्रेह्य॒भीहि॑ धृष्णु॒हि न ते॒ वज्रो॒ नि यं॑सते ।
इंद्र॑ नृ॒म्णं हि ते॒ शवो॒ हनो॑ वृ॒त्रं जया॑ अ॒पोऽर्च॒न्ननु॑ स्व॒राज्यं॑ ॥३॥
प्र । इ॒हि॒ । अ॒भि । इ॒हि॒ । धृ॒ष्णु॒हि॒ । न । ते॒ । वज्रः॑ । नि । यं॒स॒ते॒ ।
इंद्र॑ । नृ॒म्णं । हि । ते॒ । शवः॑ । हनः॑ । वृ॒त्रं । जयाः॑ । अ॒पः । अर्च॑न् । अनु॑ । स्व॒ऽराज्यं॑ ॥३॥

हे इंद्र प्रेहि । प्रकर्षेण गच्छ । अभीहि । हंतव्यान् शत्रूनाभिमुख्येन प्राप्नुहि । प्राप्य च धृष्णुहि । तान् शत्रूनभिभव । ते तव वज्रो न नि यंसते । शत्रुभिर्न नियम्यते । अप्रतिहतगतिरित्यर्थः । तथा ते शवस्त्वदीयं बलं नृम्णं नृणां पुरुषाणां नामकमभिभावकं हि यस्मादेवं तस्माद्वृत्रमसुरं मेघं वा हनः । जहि । ततोऽनंतरं तेन निरुद्धा अप उदकानि जयाः । वृत्रं हत्वा तेनावृतमुदकं लभस्वेत्यर्थः । अन्यत्समानं ॥ यंसते । यमेः कर्मणि लेटि सिब्बहुलमिति सिप् । लेटोऽडाटावित्यडागमः । हनः । लोडर्थे छांदसो लङ् । बहुलं छंदसीति शपो लुगभावः । शपः पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । पूर्वपदस्यासमानवाक्यस्थत्वान्निघाताभावः । जयाः । जयतेर्लेट्याडागमः । पूर्ववत्स्वरः ॥

निरिंद्र भूम्या अधि वृत्रं जघंथ निर्दिवः ।
सृजा मरुत्वतीरव जीवधन्या इमा अपोऽर्चन्ननु स्वराज्यं ॥४॥
निः । इंद्र । भूम्याः । अधि । वृत्रं । जघंथ । निः । दिवः ।
सृज । मरुत्वतीः । अव । जीवऽधन्याः । इमाः । अपः । अर्चन् । अनु । स्वऽराज्यं ॥४॥

हे इंद्र भूम्या अधि भूलोकस्योपरि वृत्रं निर्जघंथ । निःशेषेण हतवानसि । तथा दिवो द्युलोकान्निर्जघंथ । हत्वा चेमा अपो वृष्ट्युदकान्यव सृज । अधः पातय । कीदृशीरपः । मरुत्वतीर्मरुद्भिः संयुक्ता जीवधन्या जीवाः प्राणिनो धन्यास्तृप्ता याभिस्ताः । अन्यत्समानं ॥

इंद्रो वृत्रस्य दोधतः सानुं वज्रेण हीळितः ।
अभिक्रम्याव जिघ्नतेऽपः सर्माय चोदयन्नर्चन्ननु स्वराज्यं ॥५॥
इंद्रः । वृत्रस्य । दोधतः । सानुं । वज्रेण । हीळितः ।
अभिऽक्रम्य । अव । जिघ्नते । अपः । सर्माय । चोदयन् । अर्चन् । अनु । स्वऽराज्यं ॥५॥

हीळितः क्रुद्ध इंद्रोऽभिक्रम्याभिमुख्येन गत्वा दोधतो भृशं कंपमानस्य वृत्रस्य सानुं समुच्छ्रितं हनुप्रदेशं वज्रेणाव जिघ्नते । प्रहरति । किं कुर्वन् । अपो वृष्ट्युदकानि सर्माय सरणाय निर्गमनाय चोदयन् प्रेरयन् ॥ दोधतः । धूञ् कंपने । अस्माद्यङ्लुगंताच्छतर्येत्यलोपश्छांदसः । अभ्यस्तानामादिरित्याद्युदात्तत्वं । हीळितः । हेडृ होडृ अनादरे । हेळत इत्येतत् क्रुध्यतिकर्मसु पठितं । अस्मान्निष्ठायां वर्णव्यापत्त्येकारः । जिघ्नते । हंतेर्लेटि व्यत्ययेनात्मनेपदं बहुवचनं च । बहुलं छंदसीति शपः श्लुः । इदित्यनुवृत्तौ बहुलं छंदसीत्यभ्यासस्येत्वं । गमहनेत्यादिनोपधालोपः । सर्माय । सृ गतौ । अर्तिस्तुस्वित्यादिना भावे मन्प्रत्ययः । निन्त्वादाद्युदात्तत्वं ॥ ॥२९॥

अधि सानौ नि जिघ्नते वज्रेण शतपर्वणा ।
मंदान इंद्रो अंधसः सखिभ्यो गातुमिच्छत्यर्चन्ननु स्वराज्यं ॥६॥
अधि । सानौ । नि । जिघ्नते । वज्रेण । शतऽपर्वणा ।
मंदानः । इंद्रः । अंधसः । सखिऽभ्यः । गातुं । इच्छति । अर्चन् । अनु । स्वऽराज्यं ॥६॥

इंद्रः शतपर्वणा शतसंख्याकधाराभिर्युक्तेन वज्रेण सानावधि नि जिघ्नते । अधिः सप्तम्यर्थानुवादी । समुच्छ्रिते वृत्रस्य कपोलादौ स्थाने नितरां हिनस्ति । स चेंद्रो मंदानो मंदमानः स्तूयमानः सन् सखिभ्यः समानख्यानेभ्यः स्तोतृभ्योऽंधसोऽन्नस्य गातुं मार्गमुपायमिच्छति । अन्यत्पूर्ववत् ॥ मंदानः । मदि स्तुतौ । कर्मणि शानचि यक् । छंदस्युभयथेति शानच आर्धधातुकत्वादतोलोपयलोपौ । अनुदात्तेतः परत्वात् शानचो लसार्वधातुकानुदात्तत्वे सति यक एवोदात्तत्वं । अनुदात्ते शानचि तस्य यको लोपे सत्युदात्तनिवृत्तिस्वरेण शानच उदात्तत्वं प्राप्नोति । एवं तर्हि शानच आर्धधातुकत्वादेव लसार्वधातुकानुदात्तत्वाभावे चित्स्वर एवावशिष्यते ॥

इंद्र तुभ्यमिदद्रिवोऽनुत्तं वज्रिन्वीर्यं ।
यद्ध त्यं मायिनं मृगं तमु त्वं माययावधीरर्चन्ननु स्वराज्यं ॥७॥
इंद्र । तुभ्यं । इत् । अद्रिऽवः । अनुत्तं । वज्रिन् । वीर्यं ।
यत् । ह । त्यं । मायिनं । मृगं । तं । ऊं इति । त्वं । मायया । अवधीः । अर्चन् । अनु ।
स्वऽराज्यं ॥७॥

अद्रिरिति मेघनाम। हे अद्रिवो वाहनरूपमेघयुक्त वज्रिन् वज्रवन्निंद्र तुभ्यमित्। षष्ठ्यर्थे चतुर्थी। तवैव वीर्यं सामर्थ्यमनुत्तं शत्रुभिरतिरस्कृतं। यद्ध यस्मात् खलु मायिनं मायाविनं त्वं तं प्रसिद्धं वंचयितारं। लोकोपद्रवकारिणमित्यर्थः। मृगं मृगरूपमापन्नं तं वृत्रं त्वमपि माययैवावधीः। हतवानसि ॥ अनुत्तं। नसत्तनिषत्तेति निपातनान्निष्ठानत्वाभावः। अवधीः। हंतेर्लुङि चेति वधादेशः। स चादंतः। तस्यातो लोपे सति स्थानिवद्भावात्सिचि वृद्ध्यभावः॥

वि ते वज्रा॑सो अस्थिरन्नव॒तिं ना॒व्या३॒॑ अनु॑।
म॒हत्त॑ इंद्र वी॒र्यं॑ बा॒ह्वोस्ते॒ बलं॑ हि॒तमर्च॒न्ननु॑ स्व॒राज्यं॑ ॥८॥
वि। ते॒। वज्रा॑सः। अ॒स्थि॒र॒न्। न॒व॒तिं। ना॒व्याः॑। अनु॑।
म॒हत्। ते॒। इं॒द्र॒। वी॒र्यं॑। बा॒ह्वोः। ते॒। बलं॑। हि॒तं। अर्च॑न्। अनु॑। स्व॒ऽराज्यं॑ ॥८॥

हे इंद्र ते तव वज्रासो वज्रा[illegible]आनि नाव्या नावा तार्या नवतिं नवतिसंख्याका वृत्रेण निरुद्धा नदीरनूपलक्ष्य व्यस्थिरन्। विविधमस्थिषत। सर्वत्र व्याप्य वर्तमानं वृत्रं हंतुं तव वज्र एकोऽप्यनेक इवासीदित्यर्थः। किंच इंद्र ते तव वीर्यं महत् प्रभूतं। [illegible]मित्यर्थः। तथा ते बाह्वोस्त्वदीययोर्हस्तयोर्बलं हितं निहितं। त्वदीयौ बाहू अप्यतिशयेन बलिनावित्यर्थः। अन्यत्पूर्ववत्॥ अस्थिरन्। तिष्ठतेर्लुङि समवप्रविभ्यः स्थ इत्यात्मनेपदं। मंत्रे घसेति च्लेर्लुक्। स्थाघ्वोरिच्च। पा॰ १. २. १७.। इतीत्वं। व्यत्ययेन झस्य रनादेशः। नाव्याः। नौवयोधर्मेत्यादिना। पा॰ ४. ४. ९१.। यत्। यतोऽनाव इति [illegible]स्वरित इति स्वरितत्वं। बाह्वोः। उदात्तयण इति विभक्त्युदात्तत्वं॥

स॒हस्रं॑ सा॒कम॑र्चत॒ परि॑ ष्टोभत विंश॒तिः।
श॒तैन॒मन्व॑नोनवु॒रिंद्रा॑य ब्र॒ह्मोद्य॑तम॒र्च॒न्ननु॑ स्व॒राज्यं॑ ॥९॥
स॒हस्रं॑। सा॒कं। अ॒र्च॒त॒। परि॑। स्तो॒भ॒त॒। विं॒श॒तिः।
श॒ता। ए॒नं॒। अनु॑। अ॒नो॒न॒वुः॒। इंद्रा॑य। ब्रह्म॑। उत्ऽय॑तं। अर्च॑न्। अनु॑। स्व॒ऽराज्यं॑ ॥९॥

सहस्रं सहस्रसंख्याका मनुष्याः साकमर्चत। एनमिंद्रं युगपदेवापूजयन्। तथा विंशतिः। षोडशर्त्विजो यजमानः पत्नी च सदस्यः शमिता चेति विं[illegible]। तेषां या [illegible] सा परि ष्टोभत। परितः सर्वतोऽस्तौत्। तथा च शता शतसंख्याका ऋषय एनमिंद्रमन्वनोनवुः। पुनःपुनरस्तुवन्। अस्मा एवेंद्राय ब्रह्म [illegible]द्यतं। दातुमूर्ध्वं धृतं। अत एवंविध इंद्रो वृत्रमहन्नित्यर्थः। अन्यत्पूर्ववत्॥ परि ष्टोभत। स्तोभतिः स्तुतिकर्मा। उपसर्गात्सुनोतीति षत्वं। अनोनवुः। णु स्तुतौ। अस्माद्यङ्लुगंताल्लुङि सिजभ्यस्तविदिभ्यश्चेति झेर्जुसादेशः। उद्यतं। यम उपरमे। उत्पूर्वादस्मात्कर्मणि निष्ठा। अनुदात्तोपदेशेत्यादिनानुनासिकलोपः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं॥

इंद्रो॑ वृ॒त्रस्य॒ तवि॑षीं॒ निर॑ह॒न्त्सह॑सा॒ सहः॑।
म॒हत्तद॑स्य॒ पौंस्यं॑ वृ॒त्रं ज॑घ॒न्वाँ अ॑सृज॒दर्च॒न्ननु॑ स्व॒राज्यं॑ ॥१०॥
इंद्रः॑। वृ॒त्रस्य॑। तवि॑षीं। निः। अ॒ह॒न्। सह॑सा। सहः॑।
म॒हत्। तत्। अ॒स्य॒। पौंस्यं॑। वृ॒त्रं। ज॒घ॒न्वान्। अ॒सृ॒ज॒त्। अर्च॑न्। अनु॑। स्व॒ऽराज्यं॑ ॥१०॥

इंद्रो वृत्रस्यासुरस्य तविषीं बलं स्वकीयेन बलेन निरहन्। हतवान्। सहसा सहनेनाभिभवसाधनेनायुधेन सहोऽभिभवसाधनं वृत्रायुधं निरहन्। अस्येंद्रस्य तत्पौंस्यं बलं महत् अतिप्रौढं। यस्मादयं वृत्रं जघन्वान्हत-

वान् हत्वा च तन्निरुद्धा अपोऽसृजत् तस्माद्वृत्रान्निरगमयत्। अन्यत्पूर्ववत् ॥ पौंस्यं। पुंस अभिवर्धने। चुरादिः। अचो यदिति यत्। यतोऽनाव इत्याद्युदात्तत्वं। जघन्वान्। हंतेर्लिटः क्वसुः। विभाषा गमहनविदेतीटो विकल्पादभावः। अभ्यासाच्चेत्यभ्यासादुत्तरस्य हंतेर्हकारस्य घत्वं ॥ ॥३०॥

इमे चित्तव मन्यवे वेपेते भियसा मही।
यदिंद्र वज्रिन्नोजसा वृत्रं मरुत्वाँ अवधीरर्चन्ननु स्वराज्यं ॥११॥
इमे इति। चित्। तव। मन्यवे। वेपेते इति। भियसा। मही इति।
यत्। इंद्र। वज्रिन्। ओजसा। वृत्रं। मरुत्वान्। अवधीः। अर्चन्। अनु। स्वऽराज्यं ॥११॥

मही महत्याविमे द्यावापृथिव्यावपि हे इंद्र तव मन्यवे त्वदीयकोपाद्भियसा भीत्या वेपेते। कंपेते। हे वज्रिन्वज्रवन्निंद्र मरुत्वान्मरुद्भिर्युक्तस्त्वमोजसा बलेन यद्यदा वृत्रमवधीः। तदानीं द्यावापृथिव्यावपि भयेनाकंपिषातामित्यर्थः ॥ वेपेते। टुवेपृ कंपने। भियसा। ञिभी भये। औणादिकः [illegible] ॥

न वेपसा न तन्यतेंद्रं वृत्रो वि बीभयत्।
अभ्येनं वज्र आयसः सहस्रभृष्टिरायतार्चन्ननु स्वराज्यं ॥१२॥
न। वेपसा। न। तन्यता। इंद्रं। वृत्रः। वि। बीभयत्।
अभि। एनं। वज्रः। आयसः। सहस्रऽभृष्टिः। आयत। अर्चन्। अनु। स्वऽराज्यं ॥१२॥

वृत्र इंद्रं वेपसा स्वकीयेन वेपनेन कंपनेन न वि बीभयत्। भीतं नाकरोत्। तथा तन्यता स्वकीयेन घोरेण गर्जनशब्देन न वि बीभयत्। अपि च इंद्रेण विसृष्ट आयसोऽयोमयः सहस्रभृष्टिरनेकाभिर्धाराभिर्युक्तो वज्र एनं वृत्रमभ्यायत। हंतुमाभिमुख्येनागच्छत्। अन्यत्पूर्ववत् ॥ तन्यता। स्तन शब्दे। ऋतन्यंजीत्यादिना तनोतेर्विधीयमानो यतुच् बहुलवचनादस्मादपि भवति। अत एव सलोपश्च। सुपां सुलुगिति तृतीयाया डादेशः। उदात्तनिवृत्तिस्वरेण तस्योदात्तत्वं। बीभयत्। ञिभी भये। हेतुमति णिच्। अत्र वेपस्तन्यतुभ्यां भयं न हेतोर्वृत्रादिति हेतुभयाभावाद्बिभेतेर्हेतुभये। पा० ६.१.५६.। इत्यात्वाभावः। ण्यंताल्लुङि च्लेश्चङादि। आयत। अय पय गतौ। भौवादिः [illegible] ॥

यद्वृत्रं तव चाशनिं वज्रेण समयोधयः।
अहिमिंद्र जिघांसतो दिवि ते बद्बधे शवोऽर्चन्ननु स्वराज्यं ॥१३॥
यत्। वृत्रं। तव। च। अशनिं। वज्रेण। संऽअयोधयः।
अहिं। इंद्र। जिघांसतः। दिवि। ते। बद्बधे। शवः। अर्चन्। अनु। स्वऽराज्यं ॥१३॥

हे इंद्र यद्यदा वृत्रं तव हननार्थं तेन [illegible] च त्वं वज्रेण समयोधयः सम्यक् प्राहार्षीः तदानीमहिमागत्य हंतारं वृत्रं जिघांसतो हंतुमिच्छतस्ते तव शवो बलं दिवि बद्बधे। बद्धमनुस्यूतं व्याप्तमासीत्। शिष्टं पूर्ववत् ॥ जिघांसतः। [illegible]र्थे सन्यज्झनगमां सनि। पा० ६.४.१६.। इत्युपधादीर्घत्वं। बद्बधे। बध बंधने। कर्मणि लिटि व्यत्ययेन हलादिशेषाभावः ॥

अभिष्टने ते अद्रिवो यत्स्था जगच्च रेजते।
त्वष्टा चित्तव मन्यव इंद्र वेविज्यते भियार्चन्ननु स्वराज्यं ॥१४॥

अभिऽस्तने । ते । अद्रिऽवः । यत् । स्थाः । जगत् । च । रेजते ।
त्वष्टा । चित् । तव । मन्यवे । इंद्र । वेविज्यते । भिया । अर्चन् । अनु । स्वऽराज्यं ॥ १४ ॥

हे अद्रिवो वज्रवन्निंद्र ते तवाभिष्टने सिंहनादे सति स्थाः स्थावरं जगज्जंगमं च यदस्ति तदुभयं रेजते । कंपते । त्वष्टा चित् वज्रनिर्माता त्वष्टा च तव मन्यवे त्वदीयाय कोपाय भिया भीत्या वेविज्यते । भृशं कंपते । अन्यत्समानं ॥ स्थाः । तिष्ठतेः क्विप्चेति क्विप् । वेविज्यते । ओविजी भयचलनयोः । अस्मात्क्रियासमभिहारे यङ् । सन्यङोरिति द्विर्भावः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे यङ एव स्वरः शिष्यते । इंद्रेत्यस्य पादादौ वर्तमानस्यामंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वे सत्यस्य पादादित्वादपादादाविति पर्युदासान्निघाताभावः ॥

नहि नु यादधीमसींद्रं को वीर्या परः ।
तस्मिन्नृम्णमुत क्रतुं देवा ओजांसि सं दधुरर्चन्ननु स्वराज्यं ॥ १५ ॥
नहि । नु । यात् । अधिऽइमसि । इंद्रं । कः । वीर्या । परः ।
तस्मिन् । नृम्णं । उत । क्रतुं । देवाः । ओजांसि । सं । दधुः । अर्चन् । अनु ।
स्वऽराज्यं ॥ १५ ॥

यात् यांतं सर्वत्र व्याप्य वर्तमानमिंद्रं नहि न्वधीमसि । वयं न ह्यवगच्छामः । यतो वयमल्पाः । पर इत्येतत्सकारांतमव्ययं वैदूर्यमाचष्टे । परो दिवा पर एना । ऋग्वे॰ १०. ८२. ५. । इति यथा । परः परस्तादतिदूरे मनुष्यैरनवगाह्ये स्थाने वीर्या वीर्येण सामर्थ्येन वर्तमानमिंद्रं को मनुष्यो जानीयात् । न कोऽपीत्यर्थः । कस्मादिति चेत् अत्राह । तस्मिन्निति । यस्मात्तस्मिन्निंद्रे देवा नृम्णं धनं उतापि च क्रतुं वीर्यकर्मौजांसि बलानि च सं दधुः स्थापयां चक्रुः । तस्मादित्यर्थः ॥ यात् । या प्रापणे । अस्माल्लटः शतृ । सुपां सुलुगिति द्वितीयाया लुक् । अधीमसि । इण् गतौ । इदंतो मसिः । वीर्या । सुपां सुलुगिति तृतीयाया आकारः ॥

यामथर्वा मनुष्पिता दध्यङ् धियमत्नत ।
तस्मिन्ब्रह्माणि पूर्वथेंद्र उक्था समग्मतार्चन्ननु स्वराज्यं ॥ १६ ॥
यां । अथर्वा । मनुः । पिता । दध्यङ् । धियं । अत्नत ।
तस्मिन् । ब्रह्माणि । पूर्वऽथा । इंद्रे । उक्था । सं । अग्मत । अर्चन् । अनु ।
स्वऽराज्यं ॥ १६ ॥

अथर्वैतत्संज्ञक ऋषिः पिता सर्वासां प्रजानां पितृभूतो मनुश्च दध्यङ् अथर्वणः पुत्र एतत्संज्ञक ऋषिश्च यां धियमत्नत यत्कर्मातन्वत अकुर्वन् तस्मिन्कर्मणि यानि ब्रह्माणि हविर्लक्षणान्यन्नान्युक्था शस्त्ररूपाणि स्तोत्राणि च यानि संति तानि सर्वाणि तस्मिन्निंद्रे समग्मत । समगच्छंत । तत्र दृष्टांतः । पूर्वथा पूर्वेषामन्येषां वसिष्ठादीनां यज्ञेषु यथा हवींषि स्तोत्राणि चेंद्रेण संगच्छंते तद्वत् । य इंद्रः स्वराज्यं स्वस्य राज्यत्वमन्वर्चन् अनुपूजयन् । वृत्रवधादिरूपेण कर्मणा स्वकीयमधिपतित्वं प्रकटयन्नित्यर्थः ॥ अत्नत । तनु विस्तारे । बहुलं छंदसीति विकरणस्य लुक् । तनिपत्योश्छंदसीत्युपधालोपः । पूर्वथा । प्रत्नपूर्वविश्वेमात्थाल् छंदसि । पा॰ ५. ३. १११. । इतीवार्थे पूर्वशब्दात्थाल्प्रत्ययः । लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं । उक्था । शेश्छंदसि बहुलमिति

श्लेर्लोपः । समगमत । समो गम्यृच्छिभ्यामित्यात्मनेपदं । लुङि मंत्रे घसेति च्लेर्लुक् । गमहनेत्यादिनोपधाया लोपः ॥ ॥ ३१ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके पंचमोऽध्यायः समाप्तः ॥

---

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥
दृष्टतथ्याः पंचमोऽयमध्यायो व्याकृतः पुरा । धीमता सायणार्येण षष्ठोऽध्यायोऽथ वर्ण्यते ॥

प्रथमे मंडले त्रयोदशानुवाके सप्त सूक्तानि व्याख्यातानि । इंद्रो मदायेति नवर्चमष्टमं सूक्तं । अत्रानुक्रम्यते । इंद्रो नवेति । ऋषिश्चान्यस्मादृषेः । अनु० १२. २. । इति परिभाषया रहूगणपुत्रस्य गोतमस्यानुवृत्तेरस्य सूक्तस्य स ऋषिः । पूर्वसूक्ते पांक्तं हीत्युक्तत्वात्तुह्यादिपरिभाषयेदमुत्तरं च सूक्तं पांक्तं । अनादेशपरिभाषयेंद्रो देवता ॥ पृष्ठ्यस्य पंचमेऽहनि निष्केवल्यशस्त्र इदं सूक्तं । सूचितं च । प्रेदं ब्रह्मेंद्रो मदाय सचा मदास इति निष्केवल्यं । आ० ७. १२. । इति ॥ आरंभणीये चातुर्विंशिकेऽहनि माध्यंदिने सवने ब्राह्मणाच्छंसिनः शस्त्र इंद्रो मदायेत्या-द्यस्तृचो वैकल्पिकः स्तोत्रियः । होत्रकाणामिति खंडे सूचितं । इंद्रो मदाय वावृधे मदे मदे हि नो ददिः । आ० ७. ४. । इति ॥ महाव्रते निष्केवल्य उत्तरपक्ष इंद्रो मदायेत्येका शंसनीया । तथैव पंचमारण्यके सूचितं । इंद्रो मदाय वावृध इति पंक्तिः सूददोहाः । ऐ० आ० ५. २. २. । इति ॥

इंद्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
तमिन्महत्स्वाजिषूतेमर्भे हवामहे स वाजेषु प्र नोऽविषत् ॥ १ ॥
इंद्रः । मदाय । ववृधे । शवसे । वृत्रऽहा । नृऽभिः ।
तं । इत् । महत्ऽसु । आजिषु । उत । ईं । अर्भे । हवामहे । स । वाजेषु । प्र । नः ।
अविषत् ॥ १ ॥

वृत्रहा वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्यासुरस्य वा हंता । यद्वा । आवरकाणां शत्रूणां हंतेंद्रो मदाय हर्षार्थं शवसे । बलनामैतत् । बलार्थं च नृभिर्यज्ञस्य नेतृभिर्ऋत्विग्भिर्ववृधे । स्तोत्रशस्त्ररूपाभिः स्तुतिभिः प्रवर्धितो बभूव । स्तुत्या हि देवता प्राप्तबला सती प्रवर्धते । तमित्तमेवेंद्रं महत्सु प्रभूतेष्वाजिषु संग्रामेषु हवामहे । अस्माकं रक्षणायाह्वयामहे । उतापि चेमेनमर्भेऽल्पे संग्रामे हवामहे । अस्माभिराहूतः स चेंद्रो वाजेषु संग्रामेषु नोऽस्मान् प्राविषत् । प्रावतु । प्रकर्षेण रक्षतु ॥ ववृधे । वृधेः कर्मणि लिट् । संहितायामभ्यासस्यान्येषामपि दृश्यत इति दीर्घत्वं । तुजादित्वे हि तूतुजान इतिवत्पदकाले दीर्घः श्रूयेत । नृभिः । सावेकाच इति प्राप्तस्य विभक्त्युदात्तत्वस्य नृ चान्यतरस्यामिति प्रतिषेधः । हवामहे । ह्वयतेर्लटि ह्वः इत्यनुवृत्तौ बहुलं छंदसीति संप्रसारणं । शपि गुणावादेशौ । अविषत् । अव रक्षणे । लेट्यडागमः । इतश्च लोप इतीकारलोपः । सिब्बहुलं लेटीति सिप् । तस्यार्धधातुकत्वादलादिलक्षण इट् ॥

असि हि वीर सेन्योऽसि भूरि परादृदिः ।
असि दभ्रस्य चिद्वृधो यजमानाय शिक्षसि सुन्वते भूरि ते वसु ॥ २ ॥

असि । हि । वीर । सेन्यः । असि । भूरि । पराऽददिः ।
असि । दभ्रस्य । चित् । वृधः । यजमानाय । शिक्षसि । सुन्वते । भूरि । ते । वसु ॥ २ ॥

हे वीर शत्रुक्षेपणकुशलेंद्र त्वं सेन्योऽसि । सेनार्हो भवसि । त्वमेकोऽपि सेनासदृशो भवसीत्यर्थः । हि यस्मादेवं तस्माद्भूरि प्रभूतं शत्रूणां धनं परादुदिः परादाता शत्रूणां पराङ्मुखं यथा भवति तथा आदातासि । भवसि । दभ्रस्य चित् । अल्पनामैतत् । अल्पस्यापि तव स्तोतुर्वृधो वर्धयितासि । तथा यजमानाय यागं कुर्वते सुन्वते सोमाभिषवं कुर्वते पुरुषाय शिक्षसि । अपेक्षितं धनं ददासि । शिक्षतिर्दानकर्मा । यस्मात्ते तव वसु धनं भूरि बहुलमक्षयं धनं विद्यते । तस्माद्ददासीति भावः ॥ परादुदिः । डुदाञ् दाने । आदृगमहनजन इति किप्रत्ययः । लिड्वद्भावाद्द्विर्वचने ह्रस्वत्वं । आतो लोप इटि चेत्याकारलोपः । वृधः । वृधेरंतर्भावितण्यर्थादिगुपधलक्षणः कः । सुन्वते । शतुरनुम इति विभक्तेरुदात्तत्वं ॥

यदुदीरत आजयो धृष्णवे धीयते धना ।
युक्ष्वा मदच्युता हरी कं हनः कं वसौ दधोऽस्माँ इंद्र वसौ दधः ॥ ३ ॥
यत् । उत्ऽईरते । आजयः । धृष्णवे । धीयते । धना ।
युक्ष्व । मदऽच्युता । हरी इति । कं । हनः । कं । वसौ । दधः । अस्मान् । इंद्र । वसौ । दधः ॥ ३ ॥

अत्रेदमाख्यानं । रहूगणपुत्रो गोतमः कुरुसृंजयानां राज्ञां पुरोहित आसीत् । तेषां राज्ञां परैः सह युद्धे सति स ऋषिरनेन सूक्तेनेंद्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामासेति । तस्य च तत्पुरोहितत्वं वाजसनेयिभिराम्नातं । गोतमो ह वै राहूगण उभयेषां कुरुसृंजयानां पुरोहित आसीदिति ॥ यद्यदाजयः संग्रामा उदीरते उद्गच्छंति उत्पद्यंते तदानीं धना धनं धृष्णवे यो धृष्णुर्धर्षयिता शत्रूणां जेता भवति तस्मै धीयते । निधीयते । जयतो धनं भवतीत्यर्थः । हे इंद्र त्वं तादृशेषु युद्धेषु प्रवृत्तेषु मदच्युता शत्रूणां मदस्य गर्वस्य च्यावयितारौ हरी त्वदीयावश्वौ युक्ष्व । रथे योजय । योजयित्वा च कं कंचिद्राजानं तव परिचरणमकुर्वंतं हनः । हन्याः । कंचन त्वां परिचरंतं वसौ वसुनि धने दधः । स्थापयसि । अतो जयपराजययोस्त्वमेव कारयितासि । तस्मात् हे इंद्रास्मानस्मदीयान्राज्ञो वसौ धने दधः । स्थापय ॥ उदीरते । ईर गतौ । आदादिकः । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते । यद्वृत्तयोगादनिघातः । धना । सुपां सुलुगिति डादेशः । युक्ष्व । युजिर् योगे । अंतर्भावितण्यर्थाल्लोटि बहुलं छंदसीति विकरणस्य लुक् । द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं । हनः । हंतेर्लेटि सिप्यडागमः । हनश्च दधश्चेति चार्थप्रतीतेश्चादिलोपे विभाषेति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः । वसौ । लिंगव्यत्ययः । दधः । दध धारणे । लेटि व्यत्ययेन परस्मैपदं ॥

क्रत्वा महाँ अनुष्वधं भीम आ वावृधे शवः ।
श्रिय ऋष्व उपाकयोर्नि शिप्री हरिवान्दधे हस्तयोर्वज्रमायसं ॥ ४ ॥
क्रत्वा । महान् । अनुऽस्वधं । भीमः । आ । ववृधे । शवः ।
श्रिये । ऋष्वः । उपाकयोः । नि । शिप्री । हरिऽवान् । दधे । हस्तयोः । वज्रं । आयसं ॥ ४ ॥

क्रत्वा कर्मणा प्रज्ञया वा महान् सर्वाधिको भीमः शत्रूणां भयंकर इंद्रोऽनुष्वधं । स्वधेत्यन्ननाम । स्वधायां । विभक्त्यर्थेऽव्ययीभावः । सोमलक्षणस्यान्न उ पाने सतीत्यर्थः । शव आत्मीयं बलमा ववृधे । आभिमुख्येन प्रावर्धयत् । तदनंतरमृष्वो दर्शनीयः शिप्री । शिप्रे हनू नासिके वा । तद्युक्तः हरिवान् हरिनामकाश्वोपेत इंद्र उपाकयोः । अंतिकनामैतत् । समीपवर्तिनोर्हस्तयोरायसं वज्रं श्रिये संपदर्थं

नि दधे । निदधाति । स्थापयति । सोमपानेन हृष्टः प्रबल इंद्रः शत्रूणां हननाय हस्ते वज्रं गृह्णातीति तात्पर्यार्थः ॥ क्त्वा । जसादिषु च्छंदसि वावचनमिति नाभावस्य विकल्पितत्वादभावः । आयसं । तस्य विकार इत्यण्प्रत्ययः ॥

आ पप्रौ पार्थिवं रजो बद्बधे रोचना दिवि ।
न त्वावाँ इंद्र कश्चन न जातो न जनिष्यतेऽति विश्वं ववक्षिथ ॥५॥
आ । पप्रौ । पार्थिवं । रजः । बद्बधे । रोचना । दिवि ।
न । त्वाऽवान् । इंद्र । कः । चन । न । जातः । न । जनिष्यते । अति । विश्वं । ववक्षिथ ॥५॥

इंद्रः स्वतेजसा पार्थिवं पृथिव्याः संबंधि वस्तुजातं रजोऽंतरिक्षलोकं चा पप्रौ । आपूरयति । तथा दिवि द्युलोके रोचना रोचमानानि दीप्तानि नक्षत्राणि बद्बधे । बबंध । स्थापितवान् । अतो हे इंद्र त्वावान् त्वत्सदृशः कश्चन न जातो नोत्पन्नोऽस्ति । न च जनिष्यते । उत्पत्स्यमानोऽपि नास्ति । तादृशस्त्वं विश्वं सर्वं रक्षितव्यं जगदति ववक्षिथ । अतिशयेन वोढुमिच्छसि । सर्वस्य जगतो निर्वाहको भवसीत्यर्थः ॥ पप्रौ । प्रा पूरणे । लिव्यात औ णलः । पा॰ ७. १. ३४. । इत्यौकारादेशः । पार्थिवं । पृथिव्या ञाञौ । पा॰ ४. १. ८५. २. । इत्यञ्प्रत्ययः । ञित्वादाद्युदात्तत्वं । रजः । रजंत्यस्मिन् गंधर्वादय इति रजोऽंतरिक्षं । रञ्ज रागे । असुनि रजकरजनरजःसूपसंख्यानं । का॰ ६. ४. २४. ४. । इति नलोपः । बद्बधे । बध बंधने । लिटि व्यत्ययेन हलादि-शेषाभावः । एकहल्मध्यगतत्वाभावादेत्वाभ्यासलोपावपि न स्तः । पादादित्वान्निघाताभावः । त्वावान् । वतुप्प्र-करणे युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानमिति वतुप् । आ सर्वनाम्न इत्यात्वं । ववक्षिथ । वह प्रापणे । अस्मादिच्छासनि सन्यत इतीत्वस्य सर्वे विधयश्छंदसि विकल्प्यंत इत्यभावः । [illegible] इति निषेधा-दाम्प्रत्ययाभावः ॥ ॥१॥

यो अर्यो मर्तभोजनं पराददाति दाशुषे ।
इंद्रो अस्मभ्यं शिक्षतु वि भजा भूरि ते वसु भक्षीय तव राधसः ॥६॥
यः । अर्यः । मर्तऽभोजनं । पराऽददाति । दाशुषे ।
इंद्रः । अस्मभ्यं । शिक्षतु । वि । भज । भूरि । ते । वसु । भक्षीय । तव । राधसः ॥६॥

अर्यः स्वामी [illegible] य इंद्रो मर्तभोजनं सर्वैर्मनुष्यैरुपभोज्यमन्नं दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय परादाति प्रयच्छति स इंद्रोऽस्मभ्यं शिक्षतु । तादृशमन्नं ददातु । अवशिष्टपादद्वयं प्रत्यक्षकृतं । हे इंद्र अस्मभ्यं दातुं धनं वि भज । विभक्तं कुरु । यतस्ते तव वसु धनं भूरि बहुलमसंख्यातं अतस्तव राधसो धनस्यैकदेशं भक्षीय । भजेय । प्राप्नुयां ॥ परादाति । अभ्यस्तानामादिरित्याद्युदात्तत्वं । तिङि चोदात्तव-तीति गतेरनुदात्तत्वं । दाशुषे । दाशृ दाने । दाश्वान् साह्वानिति क्वसुप्रत्ययांतो निपात्यते । चतुर्थ्येकवचने वसोः संप्रसारणमिति संप्रसारणं । शासिवसिघसीनां चेति षत्वं । भक्षीय । भज सेवायां । प्रार्थनायां लिङि तस्य च्छंदस्युभयथेत्यार्धधातुकत्वाच्छबभावः सलोपाभावश्च । एकाच इतीट्प्रतिषेधः । आगमानुदात्तत्वे प्रत्ययस्वर एव शिष्यते । पूर्वपदस्यासमानवाक्यगतत्वान्निघाताभावः । समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्या इति वचनात् ॥

चातुर्विंशिकेऽहनि माध्यंदिनसवने ब्राह्मणाच्छंसिनो मदेमदे हि नो ददिरिति वैकल्पिकोऽनुरूपस्तृचः । होत्रकाणामिति खंडे सूचितं । मदेमदे हि नो ददिः सुरूपकृत्नुमूतये । आ॰ ७. ४. । इति ॥

मदेमदे हि नो ददिर्यूथा गवामृजुक्रतुः ।
सं गृभाय पुरू शतोभयाहस्त्या वसु शिशीहि राय आ भर ॥७॥

मदे॑ऽमदे । हि । नः॒ । द॒दिः । यू॒था । गवा॑म् । ऋ॒जु॒ऽक्र॒तुः ।
सम् । गृ॒भा॒य॒ । पु॒रु । श॒ता । उ॒भ॒या॒ह॒स्त्या । वसु॑ । शि॒शी॒हि॒ । रा॒यः । आ । भ॒र॒ ॥७॥

मदे मदे सोमपानेन हर्षे हर्षे सति ऋजुक्रतुर्ऋजुकर्मा स इंद्रो नोऽस्मभ्यं गवां यूथा यूथानि ददिर्हि गोयूथानां दाता खलु । हे इंद्र स त्वं पुरु पुरूणि प्रभूतानि शता शतसंख्याकानि । अपरिमितानीत्यर्थः । वसु वसूनि धनान्युभयाहस्त्योभाभ्यां हस्ताभ्यां सं गृभाय । अस्मभ्यं दातुं सम्यग्गृहाण । शिशीहि । अस्मांस्तीक्ष्णीकुरु । निशितबुद्धियुक्तान् कुर्वित्यर्थः । रायो धनानि हस्तयोः स्थितान्या भर । आहर । प्रयच्छ ॥ ददिः । डुदाञ् दाने । आदृगमहनजन इति किप्रत्ययः । यूथा । शेश्छंदसि बहुलमिति शेर्लोपः । गवां । साविकाच इति प्राप्तस्य न गोश्वन्साववर्णेति प्रतिषेधः । गृभाय । ग्रह उपादाने । लोटि हौ छंदसि शायजपि । पा० ३. १. ८४. । इति श्नाप्रत्ययस्य शायजादेशः । हृग्रहोर्भ इति भत्वं । उभयाहस्त्या । उभयहस्तशब्दादुत्तरस्य तृतीयाद्विवचनस्य सुपां सुलुगिति ड्यादेशः । अन्येषामपि दृश्यत इति पूर्वपदस्य दीर्घत्वं । समासांतोदात्तत्व उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्तत्वं । वसु । सुपां सुलुगिति विभक्तेर्लुक् । शिशीहि । शो तनूकरणे । बहुलं छंदसीति विकरणस्य श्लुः । आदेच इत्यात्वं । इदित्यनुवृत्तौ बहुलं छंदसीत्यभ्यासस्येत्वं । ई हल्यघोरिति धातोरीत्वं । पादादित्वान्निघाताभावः । रायः । ऊडिदमिति विभक्तिरुदात्तत्वं ॥

मा॒दय॑स्व सु॒ते सचा॒ शव॑से शूर॒ राध॑से ।
वि॒द्मा हि त्वा॑ पुरू॒वसु॒मुप॒ कामा॑न्त्ससृ॒ज्महेऽथा॑ नोऽवि॒ता भ॑व ॥८॥
मा॒दय॑स्व । सु॒ते । सचा॑ । शव॑से । शू॒र॒ । राध॑से ।
वि॒द्म । हि । त्वा॒ । पु॒रु॒ऽवसु॑म् । उप॑ । कामा॑न् । स॒सृ॒ज्महे॑ । अथ॑ । नः॒ । अ॒वि॒ता । भ॒व॒ ॥८॥

हे शूर शौर्यवन्निंद्र सुते सोमेऽभिषुते सत्यागत्य सचास्माकं सखा सन् मादयस्व । तेन सोमेन तृप्तो भव । किमर्थं । शवसे बलार्थं राधसेऽस्माकं धनार्थं च । त्वा त्वां पुरूवसुं बहुधनं विद्म हि । वयं जानीमः खलु । अतोऽस्मदीयान् कामान् माचा गवा वत्सानिव त्वयोप सस्रृज्महे हि । त्वया खल्वेकीकुर्मः । अथानंतरं नोऽस्माकमविताभिलषितफलप्रदानेन रक्षिता भव ॥ मादयस्व । मद तृप्तियोगे । चुरादिरात्मनेपदी । अदुपदेशात्लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते । ससृज्महे । सृज विसर्गे । बहुलं छंदसीति विकरणस्य श्लुः । प्रत्ययाद्युदात्तत्वं । अत्रापि हिशब्दानुषंगाच्छंदस्यनेकमपि साकांक्षं । पा० ८. १. ३५. । इति निघातप्रतिषेधः ॥

ए॒ते त॑ इंद्र जं॒तवो॒ विश्वं॑ पुष्यंति॒ वार्य॑म् ।
अं॒तर्हि ख्यो जना॑नाम॒र्यो वेदो॒ अदा॑शुषां॒ तेषां॑ नो॒ वेद॒ आ भ॑र ॥९॥
ए॒ते । ते॒ । इं॒द्र॒ । जं॒तवः॑ । विश्व॑म् । पु॒ष्यं॒ति॒ । वार्य॑म् ।
अं॒तः । हि । ख्यः । जना॑नाम् । अ॒र्यः । वेदः॑ । अदा॑शुषाम् । तेषा॑म् । नः॒ । वेदः॑ । आ । भ॒र॒ ॥९॥

हे इंद्र ते तव स्वभूता एते जंतवो यजमानलक्षणा जना विश्वं सर्वं वार्यं सर्वैः संभजनीयं हविः पुष्यंति । वर्धयंति । अदाशुषां हविषामदातॄणां जनानामंतर्मध्ये विद्यमानं वेदो धनमर्यः सर्वेषां स्वामी त्वं ख्यो हि । पश्यसि हि । जानासीत्यर्थः । तेषामयजमानानां वेदो धनं नोऽस्मभ्यमा भर । आहर । प्रयच्छेति यावत् । अयजमानेषु विद्यमानं धनं यागानुपयुक्तत्वाद्व्यर्थमेव भवेत् । अतस्तस्य धनस्य सार्थकत्वाय तदीयं धनमपहृत्य यजमानेभ्यः प्रयच्छेति तात्पर्यार्थः ॥ ख्यः । ख्या प्रकथने । अयं दर्शनार्थोऽपि । वर्तमाने छांदसो लुङ् । अस्यतिवक्तीत्यादिना च्लेरङादेशः । आतो लोप इटि चेत्याकारलोपः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । हि चेति निघातप्रतिषेधः ॥ ॥२॥

उपो ष्विति षडृचं नवमं सूक्तं गोतमस्यार्षमैंद्रं। अंत्या जगती। आद्याः पंक्तयः। अनुक्रांतं च। उपो षु षड् जगत्यंतमिति ॥ सूक्तविनियोगो लैंगिकः ॥ षोडशिशस्त्र आद्या सु[illegible] द्वे ऋचौ च विनियुज्यंते। अथ षोडशीति खंडे सूचितं। उपो षु शृणुही गिरः सुसंदृशं त्वा वयं मघवन्नित्येका द्वे च पंक्ती। आ० ६. २.। इति ॥

**उपो॒ षु शृ॑णु॒ही गिरो॒ मघ॑व॒न्मात॑था इव।**
**यदा॑ नः॑ सू॒नृता॑वतः॒ कर॒ आद॒र्थया॑स॒ इद्योजा॒ न्विं॑द्र ते॒ हरी॑ ॥१॥**
**उपो॒ इति॑। सु। शृ॒णु॒हि। गिरः॑। म॒घ॒ऽव॒न्। मा। अत॑थाःऽइव।**
**यदा॑। नः॒। सू॒नृता॑ऽवतः। करः॑। आत्। अ॒र्थया॑से। इत्। योज॑। नु। इं॒द्र॒। ते॒।**
**हरी॒ इति॑ ॥१॥**

हे मघवन् धनवन्निंद्र गिरोऽस्मदीयाः स्तुतीरुपो उपैव सु शृणुहि। उपगत्य सम्यक् शृणु। अतथा इव पूर्वं यथाविधस्त्वं तद्विपरीतो मा भूः। अस्मासु पूर्वं यथानु[illegible] एव भवेत्यर्थः। अपि च नोऽस्मान्सूनृतावतः। प्रियसत्या[illegible]का वाक् सूनृता। तया स्तुतिरूपया वाचा युक्तान्यदा करः करोषि आदनंतरं त्वमप्यर्थयास इत्। अर्थयस एव। याचयस एव। न तूदास्से। अस्माभिः प्रयुक्ताः स्तुतीस्त्वमपि स्वीकरोषीत्यर्थः। अतो हे इंद्र ते हरी त्वदीयावश्वौ नु चिप्रं योज। रथे योजय ॥ शृणुहि। उतश्च [illegible]से वावचनमिति वचनादुतश्च प्रत्ययादिति हेर्लुगभावः। अतथा इव। तथेवाचरति तथाति। सर्वप्रातिपदिकेभ्य इत्येके। का० ३. १. ११. २.। इति क्विप्। तथातेरप्रत्ययः। न तथा इव अतथा इव। [illegible]रत्वं। करः। डुकृञ् करणे। लुङि कृमृदृरुहिभ्यश्छंदसीति च्लेरङादेशः। नन्वङः सति शिष्टत्वात् चित्स्वरेणांतोदात्तेन भवितव्यं। तर्हि लङि व्यत्ययेन शप्। ननु डुकृञ् करण इति भूवादौ पठ्यते। अतो व्यत्ययः कस्मात् क्रियत इति चेत् नैवं। यस्मादस्य धातोस्तत्र पाठोऽनार्षः। तथा हि। कः [illegible] यदाहतुर्न्यासकारहरदत्तौ व्यत्ययेन शबिति तस्मादस्य धातोर्भूवादौ पाठो नास्तीति गम्यते। किंच यद्ययं पठ्येत करदित्येवमादिरूपसिद्ध्यर्थं कृमृदृरुहिभ्यश्छंदसीति करोतेरङ्विधानमनर्थकं स्यात्। अस्माल्लङि शप्यस्य रूपस्य सिद्धिः। लङ्लुङोरर्थभेदाल्लुङ्येतद्रूपसिद्धये कर्तव्यमङ्विधानमिति चेन्न। छंदसि लुङ्लङ्लिट इति लुङादीनामेकत्र विधानेनार्थभेदा[illegible] प्रकारेणास्माभिर्धातुवृत्तावयं धातुर्निराकृतः। अतो व्यत्ययेनेति सिद्धं। अर्थयासे। अर्थ याच्ञायां। चुरादिरात्मनेपदी। लेट्याडागमः। योज। युजिर् योगे। ण्यंताल्लोटि छंदस्युभयथेति शप आर्धधातुकत्वाण्णेरनिटीति णिलोपः। द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं ॥

**अक्ष॒न्नमी॑मदंत॒ ह्यव॑ प्रि॒या अ॑धूषत।**
**अस्तो॑षत॒ स्वभा॑नवो॒ विप्रा॒ नवि॑ष्ठया म॒ती योजा॒ न्विं॑द्र ते॒ हरी॑ ॥२॥**
**अक्ष॑न्। अमी॑मदंत। हि। अव॑। प्रि॒याः। अ॒धू॒ष॒त॒।**
**अस्तो॑षत। स्वऽभा॑नवः। विप्राः॑। नवि॑ष्ठया। म॒ती। योज॑। नु। इं॒द्र॒। ते॒। हरी॒ इति॑ ॥२॥**

हे इंद्र त्वया दत्तान्यन्नान्यक्षन्। यजमाना भुक्तवंतः। भुक्त्वा चामीमदंत हि। तृप्ताश्चासन्। प्रियाः स्वकीयास्तनूरवाधूषत। अकंपयन्। अतिशयितरसास्वादनेन वक्तुमशक्नुवंतः शरीराण्यकंपयन्। तदनंतरं स्वभानवः स्वायत्तदीप्तयो विप्रा मेधाविनस्ते नविष्ठया नवितृतमया मती मत्या स्तुत्यास्तोषत। अस्तुवन्। [illegible]ज्यं ॥ अक्षन्। अदेर्लुङि लुङ्सनोर्घस्लृ। पा० २. ४. ३७.। इति घस्लादेशः। मंत्रे घसेत्यादिना च्लेर्लुक्। गमहनेत्यादिनोपधालोपः। खरि चेति चर्त्वं। शासिवसिघसीनां चेति षत्वं। अडागम उदात्तः। अमीमदंत। मद तृप्तियोगे। चुरादिरात्मनेपदी। लुङि च्लेश्चङि णिलोपोपधाह्रस्वत्वद्वि[illegible]ः। अधूषत। धूञ् कंपने। लुङि सिचि व्यत्ययेन गुणाभावः। यद्वा। छंदस्युभयथेति सिचः सार्वधातुकत्वेन

ङित्वात् क्ङिति चेति प्रतिषेधः। अथवा धू विधूनने। तौदादिकः। कुटादिः। अस्मात्कर्मणि लुङि गाङ्कुटादिभ्य इति सिचो ङित्त्वाद्गुणाभावः। नविष्ठया। णु स्तुतौ। करणभूताया अपि स्तुतेः स्वव्यापारे कर्तृत्वात्तृच्। तदंतात् तुश्छंदसीतीष्ठन्प्रत्ययः। तुरिष्ठेमेयःस्विति तृलोपः। मती। सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घत्वं। मंत्रे वृषेषपचमनेति क्तिन उदात्तत्व ॥

महापितृयज्ञे सुसंदृशमित्येषाहवनीयोपस्थाने विनियुक्ता। सूचितं च। आहवनीयं सुसंदृशं त्वेति पंक्त्या। आ॰ २. १९.। इति ॥

सुसंदृशं त्वा वयं मघवन्वंदिषीमहि।
प्र नूनं पूर्णवंधुरः स्तुतो याहि वशाँ अनु योजा न्विंद्र ते हरी ॥ ३ ॥
सुऽसंदृशं। त्वा। वयं। मघऽवन्। वंदिषीमहि।
प्र। नूनं। पूर्णऽवंधुरः। स्तुतः। याहि। वशान्। अनु। योज। नु। इंद्र। ते। हरी इति ॥ ३ ॥

हे मघवन्निंद्र सुसंदृशं सुष्ठ्वनुग्रहदृष्ट्या सर्वस्य द्रष्टारं त्वा त्वां वयं वंदिषीमहि। स्तवामहि। स्तुतिकर्तारो भूयास्मेत्याशास्महे। अस्माभिर्वंदिभिः स्तुतस्त्वं पूर्णवंधुरः स्तोतृभ्यो देयैर्धनैः पूरितेन रथेन युक्तः सन् वशान् कामयमानानन्यान्यजमानान्प्रति नूनं प्र याहि। अवश्यं प्रतिष्ठस्व। योजेत्यादि पूर्ववत् ॥ वंदिषीमहि। वदि अभिवादनस्तुत्योः। आशीर्लिङ्। लिङाशिषि। पा॰ ३. ४. ११६.। इति तस्यार्धधातुकत्वेन लसार्वधातुकस्वराभावे प्रत्ययाद्युदात्तत्वं। मघवन्नित्यस्यामंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वे सति पादादित्वान्निघाताभावः ॥

स घा तं वृषणं रथमधि तिष्ठाति गोविदं।
यः पात्रं हारियोजनं पूर्णमिंद्र चिकेतति योजा न्विंद्र ते हरी ॥ ४ ॥
सः। घ। तं। वृषणं। रथं। अधि। तिष्ठाति। गोऽविदं।
यः। पात्रं। हारिऽयोजनं। पूर्णं। इंद्र। चिकेतति। योज। नु। इंद्र। ते। हरी इति ॥ ४ ॥

स घ स खल्विंद्रो वृषणं कामाभिवर्षकं गोविदं गवां लंभयितारं तं रथमधि तिष्ठाति। ईदृशे रथेऽधितिष्ठतु। आरूढो भवतु। हे इंद्र यो रथो हारियोजनमेतत्संज्ञकं धानामिश्रितं पूर्णं सोमेन पूर्णं पात्रं चिकेतति ज्ञापयति। तं रथमधितिष्ठेति पूर्वेणान्वयः। अधिष्ठाय च त्वं [illegible] क्षिप्रं योजय ॥ घ। ऋचि तुनुघेति दीर्घः। रथं। अधिशीङ्स्थासां कर्म। पा॰ १. ४. ४६.। इत्यधिकरणस्य कर्मसंज्ञा। तिष्ठाति। तिष्ठतेर्लेट्याडागमः। चिकेतति। कित ज्ञाने। लेट्यडागमः। जुहोत्या[illegible]: श्लुः। बहुलं छंदसीति वक्तव्यं। का॰ ७. ३. ८७. १.। इति वचनान्नाभ्यस्तस्याचि पितीति लघूपधगुणप्रतिषेधो न भवति ॥

युक्तस्ते अस्तु दक्षिण उत सव्यः शतक्रतो।
तेन जायामुप प्रियां मंदानो याह्यंधसो योजा न्विंद्र ते हरी ॥ ५ ॥
युक्तः। ते। अस्तु। दक्षिणः। उत। सव्यः। शतक्रतो इति शतऽक्रतो।
तेन। जायां। उप। प्रियां। मंदानः। याहि। अंधसः। योज। नु। इंद्र। ते। हरी इति ॥ ५ ॥

हे शतक्रतो बहुकर्मवन्निंद्र ते त्वदीये रथे दक्षिणो दक्षिणपार्श्वस्थोऽश्वो युक्तोऽस्तु। उतापि च सव्यो वामपार्श्वस्थोऽपि युक्तोऽस्तु। तेन रथेनांधसः स[illegible]न्नस्य पानेन मंदानो मत्तस्त्वं प्रियां प्रीणयित्रीं

आयामुप याहि। सा यत्र वर्तते तत्र गच्छेत्यर्थः। तदर्थं हे इंद्र त्वदीयावश्वौ रथे क्षिप्रं योजय। अनयोत्तरया च पीतसोमस्येंद्रस्य स्वगृहं प्रति प्रस्थानं प्रतिपाद्यते ॥ मंदानः। मदि स्तुतिमोदमदस्वप्नकांतिगतिषु। लिटः कानच्। द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यमिति द्विर्वचनाभावः। अंधसः। अद भक्षणे। अदेर्नुम् धश्च। उ० ४. २०५। इत्यसुन् धातोर्नुमागमो धकारांतादेशश्च ॥

अंत्येष्वहःसु हारियोजनस्य युनज्मीत्येषा याज्या। सूचितं च। युनज्मि ते ब्रह्मणा केशिना हरी इति याज्यानुवाक्ये अंत्येष्वहःसु। आ० ६. ११। इति ॥

युनज्मि ते ब्रह्मणा केशिना हरी उप प्र याहि दधिषे गभस्त्योः।
उत्त्वा सुतासो रभसा अमंदिषुः पूषण्वान्वज्रिन्त्समु पत्न्यामदः ॥६॥
युनज्मि। ते। ब्रह्मणा। केशिना। हरी इति। उप। प्र। याहि। दधिषे। गभस्त्योः।
उत्। त्वा। सुतासः। रभसाः। अमंदिषुः। पूषण्ऽवान्। वज्रिन्। सं। ऊं इति।
पत्न्या। अमदः ॥६॥

हे इंद्र केशिना केशयुक्तौ शिखावंतौ ते हरी त्वदीयावश्वौ ब्रह्मणा स्तोत्ररूपेण मंत्रेण युनज्मि। रथे संयोजयामि। तेन रथेनोप प्र याहि। त्वद्गृहमुपगच्छ। गभस्त्योः। बाहुनामैतत्। बाह्वोरश्वबंधकान् रश्मीन्दधिषे। धारयस्व। त्वा त्वां सुतासो यज्ञेऽभिषुताः सोमा रभसा वेगवंतः। तीव्राः क्षिप्रं मदकारिण इत्यर्थः। उदमंदिषुः। उत्कृष्टमदयुक्तमकार्षुः। हे वज्रिन् अतस्त्वं स्वगृहं गत्वा पूषण्वान्। अत्र पूषन्शब्दः पुष्टौ वर्तते। पुष्टिर्वै पूषा पु[illegible] इति श्रुतेः। सोमपानजनितया पुष्ट्या युक्तः सन् पत्न्या स्वनार्यया सह समु अमदः। सम्यगेव तृप्तो भव ॥ केशिना। [illegible]य इनिः। सुपां सुलुगिति विभक्तेराकारः। रभसाः। अर्श-आदिभ्योऽच्। अमंदिषुः। व्यत्ययेन परस्मैपदं। पूषण्वान्। पुष पुष्टौ। श्वन्नुक्षन्नित्यादौ पूषन्निति निपात्यते। तस्मात्र भावसाधनं द्रष्टव्यं। पूषास्यास्तीति पूषण्वान्। मादुपधाया इति मतुपो वत्वं। नलोपेऽनो नुट्। पा० ८. २. १६। इति नुट्। ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं। अमदः। मदी हर्षे। छंदसि लुङ्लङ्लिट इति प्रार्थनायां लङ्। श्यनि प्राप्ते व्यत्ययेन शप् ॥ ॥३॥

अश्वावतीति षळृचं दशमं सूक्तं गोतमस्यार्षमैंद्रं जागतं। तथा चानुक्रांतं। अश्वावति जागतमिति। अतिरात्रे तृतीये पर्याये ब्राह्मणाच्छंसिशस्त्र इदं सूक्तं। सूचितं च। अश्वावति प्रथमो पीतिं वृष्ण इयर्मि सत्यामिति याज्या। आ० ६. ४। इति ॥

अश्वावति प्रथमो गोषु गच्छति सुप्रावीरिंद्र मर्त्यस्तवोतिभिः।
तमित्पृणक्षि वसुना भवीयसा सिंधुमापो यथाभितो विचेतसः ॥१॥
अश्वऽवति। प्रथमः। गोषु। गच्छति। सुप्रऽअवीः। इंद्र। मर्त्यः। तव। ऊतिऽभिः।
तं। इत्। पृणक्षि। वसुना। भवीयसा। सिंधुं। आपः। यथा। अभितः। वि
ऽचेतसः ॥१॥

हे इंद्र यो मर्त्यो मनुष्यस्तवोतिभिस्त्वदीयै रक्षणैः सुप्रावीः सुष्ठु प्ररक्षितो भवति स मर्त्योऽश्वावति बहुभिरश्वैर्युक्ते गृहे वर्तमानो गोषु प्राप्तव्येषु प्रथमो गच्छति। सर्वेभ्यो यजमानेभ्यः पूर्वमेव गोमान् भवतीत्यर्थः। त्वं तमित् तमेव पुरुषं भवीयसा बहुतरेण भवितृतमेन वा शतसहस्रादिसंख्यायुक्तेन वसुना धनेन पृणक्षि। संपृक्तं संपूर्णं करोषि। तत्र दृष्टांतः। विचेतसो विशिष्टज्ञानहेतुभूता आपो यथाभितः सर्वासु दिक्षु सिंधुं समुद्रं पूरयंति तद्वत् ॥ अश्वावति। मंत्रे सोमाश्वेति मतौ दीर्घत्वं। सुप्रावीः। अवितॄस्तृतंत्रिभ्य ईः। उ० ३. १५८। अवतेरीकारप्रत्ययः। ऊतिभिः। ऊतियूतीत्यादिना क्तिन उदात्तत्वं। पृणक्षि। पृची संपर्के। रौधा-

दिकः। भवीयसा। बहुशब्दादीयसुनि बहोर्लोपो भू च बहोरिति बहुशब्दस्य भूभाव ईयसुन ईकारलोपश्च। अत्र तु छांदसत्वादीकारलोपो न क्रियते भूभावश्च क्रियते। अथवा भवितृशब्दात्तुश्छंदसीतीयसुन्। तुरिष्ठेमेयःस्विति तृलोपः॥

अपोनप्त्रीये होतृचमसेऽद्भिः पूर्यमाण आपो न देवीरित्येषानुवक्तव्या। सूचितं च। आपो न देवीरुप यंति होत्रियमिति समाप्य। आ॰ ५.१.। इति। ब्राह्मणं च भवति। आपो न देवीरुप यंति होत्रियमिति होतृचमसे समवनीयमानास्वन्वाह। ऐ॰ ब्रा॰ २.२०.। इति॥

आपो न देवीरुप यंति होत्रियमवः पश्यंति विततं यथा रजः।
प्राचैर्देवासः प्र णयंति देवयुं ब्रह्मप्रियं जोषयंते वरा इव॥२॥
आपः। न। देवीः। उप। यंति। होत्रियं। अवः। पश्यंति। विऽततं। यथा। रजः।
प्राचैः। देवासः। प्र। नयंति। देवऽयुं। ब्रह्मऽप्रियं। जोषयंते। वराःऽइव॥२॥

होत्रियं होतुः स्वभूतं चमसं देवीर्दिव्यो द्योतमाना आपो न यथाप उप यंति उपगच्छंति तद्वदुपरि वर्तमाना देवा एतमेव चमसमवोऽवस्तात्पश्यंति। होतृचमसेऽस्माकं सोमाभिषवायापः पूरिता इति तेषां दृष्टिरप्यस्मिन् संलग्नाभूत्। तत्र दृष्टांतः। विततं विस्तीर्णं रजो ज्योतिः सूर्यसंबंधि यथा निरंतरमवस्तात्पतति तद्वत्। देवयुं देवान् कामयमानमेतं चमसं प्राचैः प्राचीनं यद्वा प्रांचनैः प्रगमनै[illegible]त्तरवेद्यभिमुखं होमकाले प्र णयंति। होमार्थं प्रणीतं ब्रह्मप्रियं ब्रह्मणा सोमलक्षणेनान्नेन प्रीतं संतृप्तं। पूरितमित्यर्थः। जोषयंते। सर्वे देवास्तं चमसं सेवंते। वरा इव कन्यकां। यथा वरा ममेयं भविष्यति ममेयं भविष्यतीति कन्यकां सेवंते। एवं देवा अपि ममायं सोमो ममायं सोम इत्यस्य पार्श्वे वर्तंत इत्यर्थः। [illegible]सारेण योजितं मंत्रस्यानुष्ठेयार्थप्रकाशकत्वात्॥ यदा तु रात्रिपर्यायेऽस्या [illegible]तदा त्वेवं व्याख्येयं। हे इंद्र देव्य आपो यथा निम्नदेशमुपगच्छंति एवं देवास्त्वदीयं स्तोत्रं शुश्रूषमाणा होत्रियं होतृसंबंधि धिष्ण्यस्थानमुपगच्छंति। उपगत्य चावस्तात्पश्यंति विततं ज्योतिरिव। देवयुं देवानात्मन इच्छंतमेतं शंसितारमागताः सर्वे देवाः प्राचीनं प्र णयंति। अग्रतो धारयंति। ब्रह्मप्रियं स्तोत्रप्रियं त्वां शंसंतं वराः कन्यका इव सेवंते॥ होत्रियं। होतृशब्दात्तस्येदमर्थे घप्रत्ययः। अवः। पूर्वाधर[illegible] पुरधवश्चैषामित्यसिप्रत्ययांतोदात्तः। प्राचैः। उच्चैर्नीचैरितिवदव्ययं। यद्वा। प्रपूर्वादंचतेर्घञर्थे कविधानं [illegible]घहनियुध्यर्थमिति परिगणनस्योपलक्षणार्थत्वाद्भावे कप्रत्ययः। अनिदितामिति नलोपः। जोषयंते। जुषी [illegible]। स्वात्मनः प्रयोज्यत्वाद्धेतुमति णिच्॥

प्रवर्ग्याभिष्टवेऽधि द्वयोरित्येषा। सृष्टोदकमिति खंडे सूचितं। अधि द्वयोरदधा उक्थ्यं वचः शुक्रं ते अन्यद्यजतं ते अन्यत्। आ॰ ४.६.। इति॥ हविर्धानप्रवर्तनेऽप्येषा। सूचितं च। यमे इव यतमाने यदैतमधि द्वयोरदधा उक्थ्यं वच इत्यर्धर्च आरमेत्। आ॰ ४.९.। इति॥

अधि द्वयोरदधा उक्थ्यं१ वचो यतस्रुचा मिथुना या सपर्यतः।
असंयत्तो व्रते ते क्षेति पुष्यति भद्रा शक्तिर्यजमानाय सुन्वते॥३॥
अधि। द्वयोः। अदधाः। उक्थ्यं। वचः। यतऽस्रुचा। मिथुना। या। सपर्यतः।
असंऽयत्तः। व्रते। ते। क्षेति। पुष्यति। भद्रा। शक्तिः। यजमानाय। सुन्वते॥३॥

हे इंद्र द्वयोर्हविर्धानयोरुक्थ्यं। उक्थं शस्त्रं। तद्योग्यं वचो युजे वामित्यादिमंत्ररूपं वचनमध्यदधाः। [illegible]। ननु हविर्धानयोर्द्वयोः कथमेकमेव वचोऽधिनिधीयत इत्याशंक्य ब्राह्मणेनैवं व्याख्यातं। अधि द्वयोरदधा उक्थ्यं वच इति द्वयोर्ह्येतत्तृतीयं छदिरधिनिधीयत उक्थ्यं वच इति यदाह यज्ञियं वै कर्मोक्थ्यं वचो यज्ञमेवैतेन समर्धयति। ऐ॰ ब्रा॰ १.२९.। इति। तत्र यथा हविर्धानद्वय एकमेव तृतीयं

च्छदिरधिनिधीयते एवं स्तोत्रमप्युभयोरेकं युक्तं । उक्थं नाम यज्ञसंबंधि शस्त्रं तद्योग्यं वचनमपि यज्ञियं कर्म । तस्य यज्ञरूपयोर्हविर्धानयोर्यज्ञत्वसंपादनायाधिनिधानाद्यज्ञोऽपि समृद्धो भवति । कीदृशयोर्हविर्धानयोः । यतस्रुचा । यताः संबद्धाः स्रुचो ग्रहचमसा[illegible] पात्राणि ययोस्ते । मिथुना युगलरूपेण वर्तमाने या ये हविर्धाने त्वां सपर्यतः पूजयतस्तयोरित्यर्थः । किंच ईदृग्रूपहविर्धानयुक्तो यजमानोऽसंयत्तः शत्रुभिः सह युद्धार्थमनभिगतः सन् ते व्रते त्वदीये कर्मणि चेति । निवसति । पुष्यति च । प्रजया पशुभिश्च पुष्टो भवति च । सुन्वते त्वद्वित्वे यागे सोमाभिषवं कुर्वतो यजमानस्य भद्रा कल्याणी शक्तिरुत्कृष्टं बलं भवति । एतत्सर्वं हविर्धानयोरुक्थस्य वचसोऽधिनिधानेन त्वया कृतमित्यर्थः ॥ यतस्रुचा । यम उपरमे । निष्ठायामनुदात्तोपदेशेत्यादिनानुनासिकलोपः । बहुव्रीहौ पूर्व[illegible] । इदमादिषु त्रिषु पदेषु सुपां सुलुगिति विभक्तेराकारः । सपर्यतः । सपर पूजायां । कंड्वादिभ्यो यक् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे तस्यैव स्वरः शिष्यते । चेति । चि निवासगत्योः । बहुलं छंदसीति विकरणस्य लुक् । सुन्वते । षष्ठ्यर्थे चतुर्थी वक्तव्येति चतुर्थी । शतुरनुम इति विभक्तेरुदात्तत्वं ॥

आदंगिराः प्रथमं दधिरे वय इद्धाग्नयः शम्या ये सुकृत्यया ।
सर्वं पणेः समविंदंत भोजनमश्वावंतं गोमंतमा पशुं नरः ॥४॥
आत् । अंगिराः । प्रथमं । दधिरे । वयः । इद्धऽअग्नयः । शम्या । ये । सुऽकृत्यया ।
सर्वं । पणेः । सं । अविंदंत । भोजनं । अश्वऽवंतं । गोऽमंतं । आ । पशुं । नरः ॥४॥

यदा पणिभिर्गावोऽपहृतास्तदानीमंगिरा अंगिरसः प्रथमं पूर्वमग्रतो वयो हविर्लक्षणमन्नं दधिरे । इंद्रार्थं संपादितवंतः । आदनंतरं तादृशा येऽंगिरस इद्धाग्नयः प्रज्वलिताग्नियुक्ताः संतः सुकृत्यया शोभनकरणोपेतया शम्या कर्मणा शोभनेन यागेनेंद्रमयजन्निति शेषः । ते नरो यज्ञस्य नेतारोऽंगिरसः पणेरेतन्नाम्नोऽसुरस्य संबंधि सर्वं भोजनं धनं समविंदंत । समलभंत । कीदृशं । अश्वावंतं अश्वैर्युक्तं गोमंतं गोभिर्युक्तं । आकारः समुच्चये । [illegible]मन्यत्पशुजातं च समविंदंत ॥ अंगिराः । सुपां सुलुगिति जसः सुः । शम्या । शमीति कर्मनाम । शाम्यत्यनया क्रियया दोषजातमिति शमी । करणे घञ् । नोदात्तोपदेशस्य मांतस्यानाचमेः । पा॰ ७. ३. ३४. । इति वृद्धिप्रतिषेधः । गौरादित्वात् ङीष् । व्यत्ययेनाद्युदात्तत्वं । सुकृत्यया । शोभनं कृत्यं करणं यस्यां सा तथोक्ता । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं ॥

यज्ञैरथर्वा प्रथमः पथस्तते ततः सूर्यो व्रतपा वेन आजनि ।
आ गा आजदुशना काव्यः सचा यमस्य जातममृतं यजामहे ॥५॥
यज्ञैः । अथर्वा । प्रथमः । पथः । तते । ततः । सूर्यः । व्रतऽपाः । वेनः । आ । अजनि ।
आ । गाः । आजत् । उशना । काव्यः । सचा । यमस्य । जातं । अमृतं । यजामहे ॥५॥

पणिभिरपहृतासु गोष्वथर्वैतत्संज्ञ ऋषिर्यज्ञैरिंद्रदेवत्यैरनुष्ठितैर्यागैः पथो गोसंबंधिनो मार्गान् प्रथमस्तते । तनुते । सर्वेभ्य ऋषिभ्यः पूर्वमेव कृतवानित्यर्थः । ततस्तदनंतरं व्रतपा व्रतानां कर्मणां पालयिता वेनः कांतः सूर्यः सूर्यरूप इंद्र आजनि । गवां प्रदर्शनायाविरभूत् । ततोऽथर्वा ता गा आजत् । आभिमुख्येन प्राप्नोत् । तादृशस्येंद्रस्य काव्यः कवेः पुत्र उशना भृगुः सचासुरनिरसनाय सहायोऽभूत् । यमस्यासुराणां नियमनार्थं जातं प्रादुर्भूतममृतं मरणरहितं तमिंद्रं यजामहे । हविर्भिः पूजयामः ॥ पथः । शसि भस्य टेर्लोप इति टिलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं । तते । तनु विस्तारे । बहुलं छंदसीति विकरणस्य लुक् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । अजनि । जनी प्रादुर्भावे । दीपजनबुधेत्यादिना । पा॰ ३. १. ६१. । कर्तरि लुङि च्लेश्चिण् । आजत् । अज गतिक्षेपणयोः ॥

बर्हिर्वा यत्स्वपत्याय वृज्यतेऽर्को वा श्लोकमाघोषते दिवि ।
ग्रावा यत्र वदति कारुरुक्थ्य१स्तस्येदिंद्रो अभिपित्वेषु रण्यति ॥ ६॥
बर्हिः । वा । यत् । सुऽअपत्याय । वृज्यते । अर्कः । वा । श्लोकं । आऽघोषते । दिवि ।
ग्रावा । यत्र । वदति । कारुः । उक्थ्यः । तस्य । इत् । इंद्रः । अभिऽपित्वेषु । रण्यति ॥ ६॥

स्वपत्याय शोभनापतनहेतुभूताय कर्मणे बर्हिर्वा यद्यदा वृज्यते छिद्यते अध्वर्युणा यागार्थमाह्रियते । अर्को वा स्तोत्रनिष्पादको होता वा श्लोकं स्तुतिरूपां वाचं दिवि द्योतमाने यज्ञे यदाघोषते उच्चारयति । यत्र यस्मिन्काले ग्रावाभिषवार्थं प्रवृत्त उपलो वदति शब्दं करोति । तत्र दृष्टांतः । कारुरुक्थ्यः । लुप्तोपममेतत् । उक्थ्यस्य शस्त्रस्य शंसिता कारुः स्तोता यथाभिमतशब्दं करोति तद्वत् । तस्य पूर्वोक्तस्य सर्वस्याभिपित्वेष्वभिप्राप्तिष्विंद्रो रण्यति । रमते । यद्वा । पूर्वोक्तानां बर्हिरादीनामभिप्राप्तिषु सतीष्विंद्रो रण्यति । अस्मदीयो यागो भविष्यतीति हर्षशब्दं करोति ॥ वृज्यते । वृजी वर्जने । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते । निपातैर्यद्यदिहंतेति निघातप्रतिषेधः । आघोषते । घुषिर् विशब्दने । भौवादिकः । अत्रापि यद्वित्यस्य निपातस्यानुषंगान्निघाताभावः । रण्यति । रमु क्रीडायां । व्यत्ययेन श्यन् परस्मैपदं च । अंत्यविकारश्छांदसः । यद्वा । रण शब्दार्थः । व्यत्ययेन श्यन् ॥ ॥ ४ ॥

असावीति विंशत्यृचमेकादशं सूक्तं । अत्रानुक्रम्यते । असावि विंशतिः षळनुष्टुभ [illegible]त्रिष्टुभास्तृचाः प्रगाथ इति । आदितः षडनुष्टुभः सप्तम्याद्यास्तिस्र उष्णिहः । दशम्याद्यास्तिस्रः पंक्तयः । त्रयोदश्याद्यास्तिस्रो गायत्र्यः । षोडश्याद्यास्तिस्रस्त्रिष्टुभः । एकोनविंशी बृहती विंशी सतोबृहती । अनुवर्तनाद्गोतम ऋषिः । अनादेशपरिभाषयेंद्रो देवता ॥ सूक्तविनियोगो लिंगादवगंतव्यः ॥ अविह[illegible] आद्यौ तृचौ स्तोत्रियानुरूपौ । सूचितं च । अथ षोडश्यसावि सोम इंद्र त इति स्तोत्रियानुरूपौ । आ० ६. २. । इति ॥ आभिप्लविकेषूक्थ्येषु तृतीयसवनेऽच्छावाकस्येमाविव तृचौ वैकल्पिकौ स्तोत्रियानुरूपौ । एह्यू ष्विति खंडे सूचितं । असावि सोम इंद्र त इममिंद्र सुतं पिब । आ० ७. ८. । इति ॥

असावि सोम इंद्र ते शविष्ठ धृष्णवा गहि ।
आ त्वा पृणक्त्विंद्रियं रजः सूर्यो न रश्मिभिः ॥ १॥
असावि । सोमः । इंद्र । ते । शविष्ठ । धृष्णो इति । आ । गहि ।
आ । त्वा । पृणक्तु । इंद्रियं । रजः । सूर्यः । न । रश्मिऽभिः ॥ १॥

हे इंद्र ते त्वदर्थं सोम असावि । अभिषुतोऽभूत् । हे [illegible] बलवन् अत एव धृष्णो शत्रूणां धर्षयितरिंद्र आ गहि । देवयजनदेशमागच्छ । आगतं त्वामिंद्रियं सोमपानेनोत्पन्नं प्रभूतं सामर्थ्यमा पृणक्तु । आपूरयतु । रजोऽंतरिक्षं रश्मिभिः किरणैः सूर्यो न । यथा सूर्यः पूरयति तद्वत् ॥ शविष्ठ । शवस्विन्शब्दादिष्ठनि विन्मतोर्लुक् टेरिति टिलोपः । पादादि[illegible]भावः । गहि । गमेर्लोटि बहुलं छंदसीति शपो लुक् । अनुदा[illegible]इत्यादिनानुनासिकलोपः । तस्यासिद्धवदत्राभादित्यसिद्धवत्त्वाड्डेर्लुगभावः ॥

इंद्रमिद्धरी वहतोऽप्रतिधृष्टशवसं । ऋषीणां च स्तुतीरुप यज्ञं च मानुषाणां ॥ २॥
इंद्रं । इत् । हरी इति । वहतः । अप्रतिधृष्टऽशवसं । ऋषीणां । च । स्तुतीः । उप ।
यज्ञं । च । मानुषाणां ॥ २॥

अप्रतिधृष्टशवसं केनाप्यप्रतिधर्षितबलं । अहिंसितबलमित्यर्थः । इंद्रमिदिंद्रमेव ऋषीणां वसिष्ठादीनां मानुषाणामन्येषां मनुष्याणां च स्तुतीर्यज्ञं च हरी अश्वावुप वहतः । समीपं प्रापयतः । यत्र यत्र स्तुवंति यत्र यत्र यजंते तत्र सर्वत्रेंद्रमश्वौ प्रापयत इत्यर्थः ॥ मानुषाणां । मनोर्जाताविति मनुशब्दादञ् षुगागमश्च ॥

आ तिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी ।
अर्वाचीनं सु ते मनो ग्रावा कृणोतु वग्नुना ॥३॥
आ । तिष्ठ । वृत्रऽहन् । रथं । युक्ता । ते । ब्रह्मणा । हरी इति ।
अर्वाचीनं । सु । ते । मनः । ग्रावा । कृणोतु । वग्नुना ॥३॥

हे वृत्रहन् शत्रूणां हंतरिंद्र रथमा तिष्ठ । आरोह । यस्मात्ते हरी त्वदीयावश्वौ ब्रह्मणा स्तोत्रलक्षणेन मंत्रेण युक्ता रथेऽस्माभिर्योजितौ तस्मात्त्वं रथमातिष्ठ । ते मनस्त्वदीयं मनश्च ग्रावाभिषवार्थं प्रवृत्तः पाषाणो वग्नुना वचनीयेनाभिषवशब्देनार्वाचीनमस्मदभिमुखं सु कृणोतु । सुष्ठु करोतु ॥ युक्ता । सुपां सुलुगित्याकारः । वग्नुना । वचेर्गश्च । उ॰ ३. ३३. । इति नुप्रत्ययो गकारश्चांतादेशः ॥

इममिंद्र सुतं पिब ज्येष्ठममर्त्यं मदं । शुक्रस्य त्वाभ्यक्षरन्धारा ऋतस्य सादने ॥४॥
इमं । इंद्र । सुतं । पिब । ज्येष्ठं । अमर्त्यं । मदं । शुक्रस्य । त्वा । अभि । अक्षरन् ।
धाराः । ऋतस्य । सदने ॥४॥

हे इंद्र सुतमभिषुतमिमं सोमं पिब । कीदृशं । ज्येष्ठमतिशयेन प्रशस्यं मदं मदकरं अमर्त्यममारकं । सोमपानजन्यो मदो मदांतरवन्मारको न भवतीत्यर्थः । तथा ऋतस्य यज्ञस्य संबंधिनि सदने गृहे वर्तमानाः शुक्रस्य दीप्तस्यास्य सोमस्य धारास्त्वामभ्यक्षरन् । आभिमुख्येन संचलंति । त्वां प्राप्नुवंति । स्वयमेवागच्छंतीत्यर्थः ॥ ज्येष्ठं । प्रशस्यशब्दादिष्ठनि ज्य च । पा॰ ५. ३. ६१. । इति ज्यादेशः । अक्षरन् । क्षर संचलने । छांदसो लङ् ॥

इंद्राय नूनमर्चतोक्थानि च ब्रवीतन । सुता अमत्सुरिंदवो ज्येष्ठं नमस्यता सहः ॥५॥
इंद्राय । नूनं । अर्चत । उक्थानि । च । ब्रवीतन । सुताः । अमत्सुः । इंदवः । ज्येष्ठं ।
नमस्यत । सहः ॥५॥

हे ऋत्विज इंद्राय नूनं क्षिप्रमर्चत । पूजनं कुरुत । एतदेव स्पष्टीक्रियते । उक्थान्यप्रगीतमंत्रसाध्यानि स्तोत्राणि च ब्रवीतन । ब्रूत । सुता अभिषुता इंदवः सोमाश्चामत्सुः । आगतमेनमिंद्रं मत्तं कुर्वंतु । अनंतरं ज्येष्ठं प्रशस्यतमं सहः सहस्विनं बलवंतं तमिंद्रं नमस्यत । नमस्कुरुत ॥ ब्रवीतन । ब्रवीतेर्लोटि तप्तनप्तनथनाश्चेति तनबादेशः । अमत्सुः । मदी हर्षे । छांदसः प्रार्थनायां लुङ् । [illegible]ानित्यत्वादिडभावः । नमस्यत । नमोवरिवश्चित्रङ इति क्यच् । सहः । लुगकारेकाररेफाश्च वक्तव्याः । पा॰ ४. ४. १२८. २. । इति मत्वर्थीयस्य लुक् ॥ ॥५॥

नकिष्ट्वद्रथीतरो हरी यदिंद्र यच्छसे । नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे ॥६॥
नकिः । त्वत् । रथिऽतरः । हरी इति । यत् । इंद्र । यच्छसे । नकिः । त्वा । अनु ।
मज्मना । नकिः । सुऽअश्वः । आनशे ॥६॥

हे इंद्र यद्यस्मात्त्वं हरी एतत्संज्ञावश्वौ यच्छसे रथे योजयसि तस्मात्त्वत्तोऽन्यः कश्चिद्रथीतरोऽतिशयेन रथवान् नकिः । नास्ति । अन्येषामीदृगश्वयुक्तरथाभावात् । त्वा त्वामनुलक्ष्य मज्मना । बलनामैतत् । बलेन सदृशोऽपि नकिः । न ह्यस्ति । स्वश्वः शोभनाश्वोऽन्यश्च त्वां नकिरानशे । न प्राप । इंद्रस्य बलाश्वयोरसाधारणत्वादिंद्रसदृशो बलवानश्ववान् लोके कश्चिदपि नास्तीत्यर्थः ॥ नकिष्ट्वत् । युष्मत्तत्ततक्षुःष्वंतःपादमिति षत्वं । रथीतरः । [illegible] रथी । तरपीद्रथिनः । पा॰ ८. २. १७. १. । इतीकारांतादेशः । अवग्रहसमये छांदसं ह्रस्वत्वं । यच्छसे । [illegible]मेर्व्यत्ययेनात्मनेपदं । स्वश्वः । बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं । आनशे । अश्नोतेश्चेत्यभ्यासादुत्तरस्य नुट् ॥

आभिप्लविकेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिनो य एक इद्विदयत इति वैकल्पिकः स्तोत्रियतृचः। एह्यू ष्विति खंडे सूचितं। सखाय आशिषामहि य एक इद्विदयते। आ० ७. ८.। इति॥ महाव्रतेऽपि निष्केवल्ये औष्णिहतृचाशीतावयं तृचो विनियुक्तः। तथैव पंचमारण्यके सूत्र्यते। य एक इद्विदयत आ याह्यद्रिभिः सुतं। ऐ० आ० ५. २. ५.। इति॥

य एक इद्विदयते वसु मर्ताय दाशुषे। ईशानो अप्रतिष्कुत इंद्रो अंग॥७॥

यः। एकः। इत्। विऽदयते। वसु। मर्ताय। दाशुषे। ईशानः। अप्रतिऽस्कुतः। इंद्रः। अंग॥७॥

य इंद्र एक इत् एक एव दाशुषे हविर्दत्तवते मर्ताय मनुष्याय यजमानाय वसु धनं विदयते विशेषेण ददाति। अंगेति क्षिप्रनाम। अप्रतिष्कुतः परैरप्रतिशब्दितः। प्रतिकूलशब्दरहित इत्यर्थः। एवंभूतः स इंद्रः क्षिप्रमीशानः सर्वस्य जगतः स्वामी भवति॥ विदयते। दय दानगतिरक्षणहिंसादानेषु। शपः पित्त्वादनुदात्तत्वं। तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते। यद्वृत्तयोगादनिघातः। अप्रतिष्कुतः। कु शब्दे। प्रतिकूलं कूयते शब्द्यत इति प्रतिस्कुतः। पारस्करादेराकृतिगणत्वात्सुट्। सुषामादित्वात्षत्वं। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं॥

कदा मर्तमराधसं पदा क्षुंपमिव स्फुरत्। कदा नः शुश्रवद्गिर इंद्रो अंग॥८॥

कदा। मर्तं। अराधसं। पदा। क्षुंपंऽइव। स्फुरत्। कदा। नः। शुश्रवत्। गिरः। इंद्रः। अंग॥८॥

अराधसं हविर्लक्षणेन राधसा धनेन रहितं। अयष्टारमित्यर्थः। एवंविधं मर्तं मनुष्यमिंद्रः पदा पादेन क्षुंपमिवाहिच्छत्रकमिव कदा स्फुरत्। स्फुरिष्यति। वधिष्यति। यथाहिच्छत्रं मंडलाकारेण शयानं कश्चिदनायासेन हंति एवमिंद्रोऽपि कदास्मच्छत्रून् हनिष्यतीत्यर्थः। स्फुरतिर्वधकर्मा। स्फुरति स्फुलतीति वधकर्मसु पठितत्वात्। नोऽस्माकं यष्टॄणां गिरः स्तुतिलक्षणा वाच इंद्रः कदा कस्मिन्कालेऽंग क्षिप्रं शुश्रवत्। श्रोष्यतीति वितर्क्यते। अत्र निरुक्तं। क्षुंपमहिच्छत्रकं भवति यत् क्षुभ्यते। कदा मर्तमनाराधयंतं पादेन क्षुंपमिवावस्फुरिष्यति। कदा नः श्रोष्यति गिर इंद्रोऽंग। अंगेति क्षिप्रनाम। नि० ५. १७.। इति॥ पदा। पादशब्दस्य पद्दन्नित्यादिना पदादेशः। ऊडिदमिति विभक्तेरुदात्तत्वं। क्षुंपमिव। क्षुभ संचलने। अत्राघञर्थे घञि बहुलवचनाद्धातोर्नुमागमः। वर्णव्यापत्त्या भकारस्य पकारः। स्फुरत्। स्फुर संचलने। छंदसि लुङ्लङ्लिट इति लृडर्थे लङ्। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। शुश्रवत्। श्रु श्रवणे। लेट्यडागमः। बहुलं छंदसीति शपः श्लुः॥

यश्चिद्धि त्वा बहुभ्य आ सुतावाँ आविवासति। उग्रं तत्पत्यते शव इंद्रो अंग॥९॥

यः। चित्। हि। त्वा। बहुऽभ्यः। आ। सुतऽवान्। आऽविवासति। उग्रं। तत्। पत्यते। शवः। इंद्रः। अंग॥९॥

बहुभ्यो मनुष्येभ्यः सकाशाद्यश्चिद्धि य एव खलु यजमानः सुतावान् अभिषुतसोमयुक्तः सन् हे इंद्र त्वा त्वामाविवासति परिचरति। विवासतिः परिचरणकर्मा। तस्मै यजमानाय यदुग्रमुद्गूर्णं शवो बलमिंद्रोऽंग क्षिप्रं पत्यते। पातयति। प्रापयति॥ तत्। सुपां सुलुगिति चतुर्थ्या लुक्। पत्यते। पत्लृ गतौ। अस्मादंतर्भावितण्यर्थाद्व्यत्ययेन श्यन्॥

चातुर्विंशिकेऽहनि माध्यंदिने सवनेऽच्छावाकस्य स्वादोरित्था विषूवत इति वैकल्पिकः स्तोत्रियस्तृचः। नोत्रकाणामिति खंडे सूचितं। यः सत्राहा विचर्षणिः स्वादोरित्था विषूवतः। आ० ७. ४.। इति॥ पृष्ण्यस्य

पंचमेऽहनि निष्केवल्येऽयं तृचोऽनुरूपः। स्तोमे वर्धमान इति खंडे सूचितं। स्वादोरित्था विषूवत उप नो हरिभिः सुतं। आ॰ ७.१२.। इति॥

स्वादोरित्था विषूवतो मध्वः पिबंति गौर्यः।
या इंद्रेण सयावरीर्वृष्णा मदंति शोभसे वस्वीरनु स्वराज्यं ॥१०॥
स्वादोः। इत्था। विषुऽवतः। मध्वः। पिबंति। गौर्यः।
याः। इंद्रेण। सऽयावरीः। वृष्णा। मदंति। शोभसे। वस्वीः। अनु। स्वऽराज्यं ॥१०॥

स्वादोः स्वादुभूतस्य रसयुक्तस्येत्था विषूवत इत्थमनेन प्रकारेण सर्वयज्ञेषु व्याप्तियुक्तस्य मध्वो मधुररसस्य सोमस्य। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। एवंविधं सोमं गौर्यो गौरवर्णा गावः पिबंति। या गावः शोभसे शोभार्थं वृष्णा कामाभिवर्षकेणेंद्रेण सयावरीः सह यांत्यो गच्छंत्यः सत्यो मदंति हृष्टा भवंति। ता इंद्रपीतस्य सोमस्य शेषं पिबंतीत्यर्थः। वस्वीः पयःप्रदानेन निवासकारिण्यस्ता गावः स्वराज्यं स्वस्य स्वकीयस्येंद्रस्य यद्राज्यं राजत्वं तदनुलक्ष्यावस्थिता इति शेषः॥ विषूवतः। विष्लृ व्याप्तौ। अस्मादौणादिकः कुप्रत्ययः। ततो मतुप्। ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं। अन्येषामपि दृश्यत इति संहितायां दीर्घः। व्यत्ययेन मतोर्वत्वं। मध्वः। जसादिषु च्छंदसि वावचनमिति घेर्ङितीति गुणाभावे यणादेशः। गौर्यः। षिद्गौरादिभ्यश्चेति ङीष्। जसि यणादेश उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं। सयावरीः। या प्रापणे। आतो मनिन्निति वनिप्। वनो र चेति ङीब्रेफौ। मदंति। मदी हर्षे। श्यनि प्राप्ते व्यत्ययेन शप्। वस्वीः। वस निवासे। शॄस्वृस्निहीत्यादिना वसेरुप्रत्ययः। धान्ये निदित्यनुवृत्तेराद्युदात्तत्वं। वोतो गुणवचनादिति च गुणवचनान्ङीबाद्युदात्तार्थं। का॰ ४.१.४४.१.। इति वचनाद्वसुशब्दान्ङीपि यणादेशः। जसि वा छंदसीति पूर्वसवर्णदीर्घत्वं। स्वस्य राज्यं स्वराज्यं। अकर्मधारये राज्यं। पा॰ ६.२.१३०.। इत्युत्तरपदाद्युदात्तत्वं॥ ॥६॥

ता अस्य पृशनायुवः सोमं श्रीणंति पृश्नयः।
प्रिया इंद्रस्य धेनवो वज्रं हिन्वंति सायकं वस्वीरनु स्वराज्यं ॥११॥
ताः। अस्य। पृशनऽयुवः। सोमं। श्रीणंति। पृश्नयः।
प्रियाः। इंद्रस्य। धेनवः। वज्रं। हिन्वंति। सायकं। वस्वीः। अनु। स्वऽराज्यं ॥११॥

ताः पूर्वोक्ता अस्येंद्रस्य पृशनायुवः स्पर्शनकामाः पृश्नयो नानावर्णा गाव इंद्रेण पातव्यं सोमं पयसा श्रीणंति। मिश्रीकुर्वंति। इंद्रस्य प्रियाः प्रीतिहेतुभूतास्ता धेनवः सायकं शत्रूणामंतकारकं वज्रमायुधं हिन्वंति। शत्रुषु प्रेरयंति। इंद्रो यथा शत्रुषु वज्रं प्रेरयति तथेंद्रस्य मदमुत्पादयंतीत्यर्थः। अन्यत्पूर्ववत्॥ हिन्वंति। हिवि: प्रीणनार्थः। इदित्वान्नुम्। सायकं। षो अंतकर्मणि। ण्वुल्यात्वे युगागमः॥

ता अस्य नमसा सहः सपर्यंति प्रचेतसः।
व्रतान्यस्य सश्चिरे पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यं ॥१२॥
ताः। अस्य। नमसा। सहः। सपर्यंति। प्रऽचेतसः।
व्रतानि। अस्य। सश्चिरे। पुरूणि। पूर्वऽचित्तये। वस्वीः। अनु। स्वऽराज्यं ॥१२॥

प्रचेतसः प्रकृष्टज्ञानास्ता गावोऽस्येंद्रस्य सहो बलं नमसा स्वकीयेन पयोरूपेणान्नेन सपर्यंति। परिचरंति। पुरूणि बहून्यस्येंद्रस्य व्रतानि शत्रुवधादिरूपाणि वीर्यकर्माणि सश्चिरे। सेविरे। ज्ञायंत इत्यर्थः। किमर्थं। पूर्वचित्तये युयुत्सूनां शत्रूणां पूर्वमेव प्रज्ञापनाय। अनेन युध्यमाना वृत्रादयः सर्वे मरणं प्राप्ताः किमर्थं

भवद्भिः प्राणास्त्यज्यंत इति तेषां बोधनायेत्यर्थः। अन्यत् पूर्ववत् ॥ सश्चिरे। सश्च गतौ। व्यत्ययेनात्मनेपदं। पूर्वचित्तये। चिती संज्ञाने। भावे क्तिन्। मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं ॥

चातुर्विंशिकेऽहनि प्रातःसवने ब्राह्मणाच्छंसिनः शस्त्र इंद्रो दधीच इति षडहस्तोत्रियसंज्ञकस्तृचः। सूचितं च। आदह स्वधामन्वित्येका द्वे चेंद्रो दधीचो अस्थभिः। आ॰ ७.२.। इति ॥

## इंद्रो॑ द॒धी॒चो अ॒स्थभि॑र्वृ॒त्राण्यप्र॑तिष्कुतः। ज॒घान॑ नव॒तीर्नव॑ ॥१३॥

## इंद्रः॑। द॒धी॒चः। अ॒स्थऽभिः॑। वृ॒त्राणि॑। अप्र॑तिऽस्कुतः। ज॒घान॑। न॒व॒तीः। नव॑ ॥१३॥

अत्र शाट्यायनिन इतिहासमाचक्षते। आथर्वणस्य दधीचो जीवतो दर्शनेनासुराः पराबभूवुः। अथ तस्मिन् स्वर्गतेऽसुरैः पूर्णा पृथिव्यभवत्। अथेंद्रस्तैरसुरैः सह योद्धुमशक्नुवंस्तमृषिमन्विच्छन् स्वर्गं गत इति शुश्राव। अथ पप्रच्छ तत्रत्यान् नेह किमस्य किंचित्परिशिष्टमंगमस्तीति। तस्मा अवोचन् अस्त्येतदाश्वं शीर्षं येन शिरसाश्विभ्यां मधुविद्यां प्राब्रवीत्। तत्तु न विद्म यत्राभवदिति। पुनरिंद्रोऽब्रवीत् तदन्विच्छतेति। तद्धान्वैषिषुः। तच्छर्यणावत्यनुविद्याजह्रुः। शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्धे सरः स्यंदते। तस्य शिरसोऽस्थिभिरिंद्रोऽसुराञ्जघानेति ॥ अप्रतिष्कुतः परैरप्रतिशब्दितः प्रतिकूलशब्दरहित इंद्र आथर्वणस्य दधीच एतत्संज्ञकस्य ऋषेरस्थभिरश्वशिरःसंबंधिभिरस्थिभिर्नवतीर्नव नवसंख्याका नवतीर्दशोत्तराष्टशतसंख्याकाः। तथा हि। लोकत्रयवर्तिनो देवाञ्जेतुमादावासुरी माया त्रिधा संपद्यते। त्रिविधातीतानागतवर्तमानकालभेदेन तत्कालवर्तिनो देवाञ्जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति। एवं नव संपद्यते। पुनरप्युत्साहादिशक्तित्रयरूपेण त्रैगुण्ये सति सप्तविंशतिः संपद्यते। पुनः सात्त्विकादिगुणत्रयभेदेन त्रैगुण्ये सत्येकोत्तराशीतिः संपद्यते। एवं चतुर्भिस्त्रिकैर्गुणिताया मायाया दशसु दिक्षु प्रत्येकमवस्थाने सति नव नवतयः संपद्यंते। एवंविधमायारूपाणि वृत्राण्यावरकाण्यसुरजातानि जघान। हतवान् ॥ दधीचः। दध्यंचतीति दध्यङ्। अंचतेर्ऋत्विगित्यादिना क्विन्। अनिदितामिति नलोपः। षष्ठ्येकवचनेऽच इत्यकारलोपे चाविति दीर्घत्वं। उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वे प्राप्ते तदपवादतया चाविति पूर्वपदस्यांतोदात्तत्वं प्राप्तं। अंचेश्छंदस्यसर्वनामस्थानं। पा॰ ६.१.१७०.। इति पुनर्विभक्त्युदात्तत्वविधानेन तद्बाध्यते। अस्थभिः। छंदस्यपि दृश्यते। पा॰ ७.१.७६.। इत्यनजादावप्यस्थिशब्दस्यानङादेशः स चोदात्तः ॥

## इ॒च्छन्नश्व॑स्य॒ यच्छिरः॑ पर्व॑ते॒ष्वप॑श्रितं। तद्वि॑दच्छर्य॒णाव॑ति ॥१४॥

## इ॒च्छन्। अश्व॑स्य। यत्। शिरः॑। पर्व॑तेषु। अप॑ऽश्रितं। तत्। वि॒दत्। श॒र्य॒णा॒ऽव॑ति ॥१४॥

पर्वतेषु पर्ववत्सु गिरिष्वपश्रितमपगत्य स्थितमश्वस्याश्वसंबंधि दधीचो यच्छिर इच्छन्निंद्रो वर्तते शर्यणावत्येतत्संज्ञे सरसि तच्छिरो विदत्। अज्ञासीत्। ज्ञात्वा तदाहृत्य तदीयैरस्थिभिर्वृत्राणि जघानेति पूर्वस्यामृचि संबंधः ॥ इच्छन्। इषु इच्छायां। तुदादित्वाच्छप्रत्ययः। विदत्। वेत्तेर्लुङि व्यत्ययेन च्लेरङादेशः। शर्यणावति। शर्यणा नाम देशाः तेषामदूरभवं सरः शर्यणावत्। मध्वादिषु शर्यणशब्दस्य पाठान्मध्वादिभ्यश्च। पा॰ ४.२.८६.। इति चातुर्थिको मतुप्। संज्ञायामिति मतुपो वत्वं। मतौ बह्वचोऽनजिरादीनां। पा॰ ६.३.११९.। इति दीर्घः ॥

अतिमूर्तिनाम्न्येकाहे कर्तव्ये पूर्वमेवैकं मासं सौर्याचांद्रमसीभ्यामिष्टिभ्यां यष्टव्यं। तत्र पूर्वपक्षे चांद्रमसीष्टिः। अत्राह गोरिति तस्यां प्रधानस्यानुवाक्या। अतिमूर्तिनेति खंडे सूचितं। अत्राह गोरमन्वत नवोनवो भवति जायमानः। आ॰ ९.८.। इति ॥

## अत्राह॒ गोर॑मन्वत॒ नाम॒ त्वष्टु॑रपी॒च्यं॑। इ॒त्था च॒न्द्रम॑सो गृ॒हे ॥१५॥

## अत्र॑। अह॑। गोः। अ॒म॒न्व॒त॒। नाम॑। त्वष्टुः॑। अ॒पी॒च्यं॑। इ॒त्था। च॒न्द्रम॑सः। गृ॒हे ॥१५॥

अत्राहास्मिन्नेव गोर्गंतुश्चंद्रमसो गृहे मंडले त्वष्टुर्दीप्तस्यादित्यस्य संबंध्यपीच्यं रात्रावंतर्हितं स्वकीयं यन्नाम तेजस्तदादित्यस्य रश्मय इत्थेत्थमनेन प्रकारेणामन्वत । अजानन् । उदकमये स्वच्छे चंद्रबिंबे सूर्यकिरणाः प्रतिफलंति । तत्र प्रतिफलिताः किरणाः सूर्ये यादृशीं संज्ञां लभंते तादृशीं चंद्रेऽपि वर्तमाना लभंत इत्यर्थः । एतदुक्तं भवति । यद्रात्रावंतर्हितं सौरं तेजस्तच्चंद्रमंडलं प्रविश्याहनीव नैशं तमो निवार्य सर्वं प्रकाशयति । ईदृग्भूततेजसा युक्तः सूर्यश्चंद्र एव द्वादशस्वादित्येष्विंद्रस्यापि परिगणितत्वात् । अतोऽहोरात्रयोः प्रकाशक इंद्र एवेतींद्रस्तुतेः प्रतीयमानत्वादिंद्रो देवतेत्येतदुपपन्नं भवति । ईदृग्भूतस्य तेजस आश्रयत्वेन चंद्रमसः प्राधान्यविवक्षया चांद्रमस्यामिष्टौ विनियोगोऽप्युपपद्यते । अत्र निरुक्तं । अथाप्यस्यैको रश्मिश्चंद्रमसं प्रतिदीप्यते तदेतेनोपेक्षितव्यमादित्यतोऽस्य दीप्तिर्भवतीति । सुषुम्णः सूर्यरश्मिश्चंद्रमा गंधर्व इत्यपि निगमो भवति । सोऽपि गौरुच्यते । अत्राह [illegible] । नि° २. ६. । अत्र ह गोः स[illegible]यः स्वं नामापीच्यमपचितमपगतमपिहितमंतर्हितं वा । नि° ४. २५. । इति ॥ अमन्वत । मनु अवबोधने । अपीच्यं । अपपूर्वाच्चिनोतेरघ्न्यादयश्च । उ° ४. १११. । इति निपातनाद्यत् । अत एवाभिमतरूपसिद्धिः । यद्वा । अपिपूर्वादंचतेर्ऋत्विगित्यादिना क्विन् । अनिदितामिति नलोपः । अपिगते निगते भवमपीच्यं । भवे छंदसीति यत् । अच इत्यकारलोपे चाविति दीर्घत्वं । तित्स्वरितः । अपीच्योऽप्रकाश इति भट्ट[illegible]ः । इत्था । इदंशब्दात्था हेतौ च छंदसीति प्रकारवचने थाप्रत्ययः । यदि तत्रेदंशब्दो नानुवर्तते तदानीमिदमस्थमुः । पा° ५. ३. २४. । इति थमुप्रत्ययः । अव्ययादाप्सुपः । पा° २. ४. ८२. । इति सुब्लुकं बाधित्वा सुपां सुलुगिति डादेशः । चंद्रमसः चंद्रमाल्हादनं मिमीते निर्मिमीत इति चंद्रमाः । चंद्रे माङो डित् । उ° ४. २२७. । इत्यसिप्रत्ययः । दासीभरादिषु पठितत्वात्पूर्वपदप्रकृतिस्वरत्वं । पूर्वपदं च स्फायितंचीत्यादिना रक्प्रत्ययांतमंतोदात्तं ॥ ॥ ७ ॥

सर्वपृष्ठायामिष्टौ कायस्य हविषः को अद्येति द्वे ऋचौ याज्यानुवाक्ये । सूत्रितं च । कायं दशमं को अद्य युंक्ते धुरि गा ऋतस्येति द्वे इति ॥

को अद्य युंक्ते धुरि गा ऋतस्य शिमीवतो भामिनो दुर्हृणायून् ।
आसन्निषून्हृत्स्वसो मयोभून्य एषां भृत्यामृणधत्स जीवात् ॥ १६ ॥

कः । अद्य । युंक्ते । धुरि । गाः । ऋतस्य । शिमीऽवतः । भामिनः । दुःऽहृणायून ।
आसन्ऽइषून् । हृत्सुऽअसः । मयःऽभून् । यः । एषां । भृत्यां । ऋणधत् । सः ।
जीवात् ॥ १६ ॥

अद्यास्मिन्कर्मणि ऋतस्य गच्छत इंद्रसंबंधिनो रथस्य धुर्यश्ववहनप्रदेशे गा गतिमतोऽश्वान् को युंक्ते । को नाम नियोक्तुं शक्नोति । न कोऽपीत्यर्थः । कीदृशानश्वान् । शिमीवतो वीर्यकर्मोपेतान् भामिनस्तेजसा युक्तान् दुर्हृणायून् परैर्दुःसहेन क्रोधेन युक्तान् । हृणीयतिः क्रुध्यतिकर्मा । आसन्निषून् येषामासन्यास्ये मुखप्रदेशे शत्रूणां प्रहरणार्थमिषवो बाणा बद्धास्तान् हृत्स्वसः । हृत्सु शत्रूणां हृदयेष्वस्यंति स्वकीयं पादं क्षिपंतीति हृत्स्वसः । मयोभून् मयसः सुखस्य भावयितॄन् । स्वकीयानां सुखप्रदानित्यर्थः । यो यजमान एषामीदृशानामश्वानां भृत्यां भरणक्रियां रथवा[illegible]ऋणधत् समर्धयति । स्तौतीति यावत् । स यजमानो जीवात् । जीवनवान्भवेत् ॥ यद्वा । क इति प्रजापतिरुच्यते । को ह वै नाम [illegible]ते श्रुतेः । ऋतस्य यज्ञस्य धुरि निर्वाहे गा वेदरूपान्वाग्विशेषानद्येदानीं युंक्ते । संयोजयति । कीदृशान् । शिमीवतः प्रतिपाद्यैः कर्मभिर्युक्तान् भामिन उज्ज्वलान् दुर्हृणायून् । हृणीयतिर्हानिकर्मा । हातुमशक्यान् वेदाध्ययनस्य नित्यत्वात् । आसन्निषून् आसन्यास्य इषुरेषणं गमनमुच्चारणं येषां तान् हृत्स्वसो हृत्सु हृदयेषु दीप्यमानान् । प्रकाशमानानित्यर्थः । मयोभून् मयसोऽध्ययनप्रभवस्य सुखसाधनस्यादृष्टस्य भावयितॄन् । यो यजमान एषां वचसां भृत्यां भरणक्रियामृणधत् ऋद्धिमतीं करोति स जीवात् । स एव जीवति । अन्ये जीवन्मृता इत्यर्थः ॥ दुर्हृणायून् । हृणीङ् लज्जायां । कंड्वादित्वाद्यक् । बहुलवचनादस्मादुण्प्रत्ययः । अतो लोपे सति वर्णव्यापत्त्याकारः । मृगय्वादिर्वा द्रष्टव्यः । आसन्निषून् । पद्दन्नित्यादिनास्यशब्दस्यासन्नादेशः । इष गतावित्यस्मादिषेः किच्च । उ° १. १४. । इत्यु-

प्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । हत्स्वसः । असु क्षेपणे । अस गतिदीप्त्यादानेषु । क्विब्वेति क्विप् । तत्पुरुषे कृति बहुलमित्यलुक् । कृदुत्तरपदप्रकृतिस्वरत्वं । मयोभून् । व्यत्ययेन ह्रस्वत्वं । यद्वा । मितद्र्वादिभ्य उपसंख्यानं । पा॰ ३. २. १८०. १. । इति डुप्रत्ययः । भृत्यां । भृञ् भरणे । संज्ञायां समजनिषद । पा॰ ३. ३. ९९. । इति क्यप् । उदात्त इत्यनुवृत्तेः प्रत्ययस्योदात्तत्वं । ऋणधत् । ऋधु वृद्धौ । लेटि व्यत्ययेन श्नम् । लेटोऽडाटावित्यडागमः । इतश्च लोप इतीकारलोपः । जीवात् । जीव प्राणधारणे । पूर्ववल्लेट्याडागमः ॥

क ईषते तुज्यते को बिभाय को मंसते संतमिंद्रं को अंति ।
कस्तोकाय क इभायोत रायेऽधि ब्रवत्तन्वे३ को जनाय ॥१७॥
कः । ईषते । तुज्यते । कः । बिभाय । कः । मंसते । संतं । इंद्रं । कः । अंति ।
कः । तोकाय । कः । इभाय । उत । राये । अधि । ब्रवत् । तन्वे । कः । जनाय ॥१७॥

अनुग्रहीतरींद्र आगते सति क ईषते । शत्रोर्भीतः सन् को निर्गच्छति । न कोऽपीत्यर्थः । कस्तुज्यते । को हिंस्यते । शत्रुभिर्हिंस्योऽपि कश्चिन्नास्तीत्यर्थः । को यजमानो बिभाय । बिभेति । इंद्रे रक्षके सति भयमपि नोत्पद्यते दूरे तस्य शत्रुकृता हिंसा । अंत्यंतिके समीपे संतमस्माकं रक्षकत्वेन वर्तमानमिंद्रं कः पुरुषो मंसते । जानाति । वयमेव जानीमो नान्य इत्यर्थः । एकः कः पूरकः । युद्धे सहायार्थमिंद्र आगते सति को यजमानस्तोकाय पुत्रायाधि ब्रवत् । हे इंद्रास्मदीयं पुत्रं रक्षेत्येवंरूपमधिवचनं पक्षपातेन वचनं ब्राह्मणायाधिब्रूयादिति यथा एवंरूपमधिवचनं को यजमानः कुर्यात् । स्वयमेवेंद्रो रक्षतीति भावः । इभाय गजाय कोऽधि ब्रवत् । उतापि च राये शत्रुभिरपह्रियमाणाय धनाय कोऽधि ब्रवत् । अपह्रियमाणमस्मदीयं धनं रक्षेत्यधिवचनमपि को यजमानः कुर्यात् । न कोऽपीत्यर्थः । अपि च तन्वे स्वकीयाय शरीराय जनाय परिजनाय च कोऽधि ब्रवत् । स्वशरीररक्षार्थं परिजनरक्षार्थं चेंद्रस्याधिवचनं नापेक्षितं । स्तुत्या प्रीत इंद्रः स्वयमेव रक्षतीत्यर्थः ॥ यद्वा तु कशब्दाभिधेयस्य प्रजापतेः संबंधिनि कर्मणि विनियोगः तदानीं परमैश्वर्ययोगादिंद्रशब्देन प्रजापतिरेवाभिधीयते । यथैंद्र्या गार्हपत्यमुपतिष्ठत इति विनियोगानुसारेण कद्रा चनेत्यस्यामृचि विद्यमान इंद्रो गार्हपत्यपरतया नीयते तद्वत् ॥ ईषते । ईष गतिहिंसादर्शनेषु । भौवादिक आत्मनेपदी । तुज्यते । तुज हिंसायां । कर्मणि यक् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते । अतिङ इति पर्युदासान्निघाताभावः । मंसते । लेट्यडागमः । सिब्बहुलं लेटीति सिप् । अंति । अंतिकस्य कादिलोपो बहुलमिति कलोपः । ब्रवत् । ब्रवीतेर्लेट्यडागमः । तन्वे । तनुशब्दाच्चतुर्थ्येकवचने जसादिषु छंदसि वावचनमिति घेर्ङितीति गुणाभावे यणादेशः । उदात्तस्वरितयोर्यण इति विभक्तेः स्वरितत्वं ॥

को अग्निमीट्टे हविषा घृतेन स्रुचा यजाता ऋतुभिर्ध्रुवेभिः ।
कस्मै देवा आ वहानाशु होम को मंसते वीतिहोत्रः सुदेवः ॥१८॥
कः । अग्निं । ईट्टे । हविषा । घृतेन । स्रुचा । यजाते । ऋतुऽभिः । ध्रुवेभिः ।
कस्मै । देवाः । आ । वहान् । आशु । होम । कः । मंसते । वीतिऽहोत्रः । सुऽदेवः ॥१८॥

को यजमानोऽग्निमीट्टे । इंद्रार्थं हविर्निरुप्याग्निं स्तौति । इंद्राय हविर्निर्वापोऽपि सम्यक्कर्तुं न शक्यते । इंद्रस्य दुर्विज्ञानत्वात् । को वेंद्रयागार्थमग्निं स्रुचा जुह्वा ध्रुवेभिर्ध्रुवैर्नित्यैरृतुभिर्वसंतादिकालैरुपलक्षितेन घृतेन हविषा यजाते । यजेत् । यद्वा । ऋतवः प्रयाजदेवताः । ऋतवो वै प्रयाजा इति श्रुतेः । ताभिर्ध्रुवैः प्रकृतौ विकृतौ चानुष्ठेयतया निश्चलैरृतुभिः सहाग्निमाज्यभागदेवतां घृतेन हविषा को यजेत् । न कोऽपीत्यर्थः । कस्मै यजमानाय होम ह्वातव्यं प्रशस्यं धनमाशु शीघ्रं देवा आ वहान् । आवहंति । प्रयच्छंति । न कस्मा अपीत्यर्थः । इंद्र एव धनस्य दाता नान्ये देवा इतींद्रः स्तूयते । वीतिहोत्रः प्राप्तयज्ञः सुदेवः शोभनदेवताकः को यजमानो मंसते । इंद्रं सम्यग्जानाति । न कोऽपीत्यर्थः । बहुविधेन स्तोत्रेण चिरकालोपासनेन

चेंद्रः प्रत्यक्षो भवति नान्येन प्रकारेणेति तात्पर्यार्थः ॥ ईट्टे । ईड स्तुतौ । अदादित्वाच्छपो लुक् । स्तुचा । साविकाच इति विभक्तेरुदात्तत्वं । यजाते । यजतेर्लेट्याडागमः । वैतोऽन्यत्रेत्यैकारः । वहान् । वहतेर्लेट्याडागमः । इतश्च लोप इतीकारलोपः । संयोगांतस्येति तकारलोपः । होम । ह्वयतेः ह्वतात्वस्यातो मनिन्निति मनिन् । ह्व इत्यनुवृत्तौ बहुलं छंदसीति संप्रसारणं । यद्वा । नामन्सीमन्नित्यादौ । उ० ४. १५०. । होमन्शब्दो मनिन्प्रत्ययांतो निपात्यते । मंसते । मन ज्ञाने । लेट्यडागमः । सिब्बहुलं लेटीति सिप् । वीतिहोत्रः । वी गत्यादिषु । अस्मात्कर्मणि मंत्रे वृषेत्यादिना क्तिन् स चोदात्तः । होत्रं होमः । हुयामाश्रुभसिभ्यस्त्रन् । उ० ४. १६७. । इति त्रन्प्रत्ययः । वीतिः प्राप्तो होमो येन । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । सुदेवः । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं ॥

त्वमंग प्र शंसिषो देवः शविष्ठ मर्त्यं ।

न त्वदन्यो मघवन्नस्ति मर्डितेंद्र ब्रवीमि ते वचः ॥१९॥

त्वं । अंग । प्र । शंसिषः । देवः । शविष्ठ । मर्त्यं ।

न । त्वत् । अन्यः । मघऽवन् । अस्ति । मर्डिता । इंद्र । ब्रवीमि । ते । वचः ॥१९॥

अंगेत्यभिमुखीकरणे । अंग शविष्ठ हे बलवत्तमेंद्र देवो द्योतमानस्त्वं मर्त्यं मरणधर्माणं त्वां स्तुतवंतं पुरुषं प्र शंसिषः । सम्यगनेन स्तुतमिति प्रशंस । हे मघवन् धनवन्निंद्र त्वदन्यस्त्वत्तोऽन्यः कश्चिन्मर्डिता सुखयिता नास्ति । अतः कारणात्ते तुभ्यमिदं स्तुतिलक्षणं वचो ब्रवीमि । उच्चारयामि ॥ शंसिषः । शन्सु स्तुतौ । लेटि सिप्यडागमः । सिब्बहुलं लेटीति विकरणस्य सिप् । तस्यार्धधातुकत्वादिडागमः । शविष्ठ । अतिशयेन शवस्वी शविष्ठः । इष्ठनि विन्मतोर्लुक् । टेरिति टिलोपः । मर्डिता । मृड सुखने । तृच इडागमः ॥

मा ते राधांसि मा त ऊतयो वसोऽस्मान्कदा चना दभन् ।

विश्वा च न उपमिमीहि मानुष वसूनि चर्षणिभ्य आ ॥२०॥

मा । ते । राधांसि । मा । ते । ऊतयः । वसो इति । अस्मान् । कदा । चन । दभन् ।

विश्वा । च । नः । उपऽमिमीहि । मानुष । वसूनि । चर्षणिऽभ्यः । आ ॥२०॥

हे वसो निवासयितरिंद्र ते तव संबंधीनि राध्नोत्येभिरिति राधांसि भूतान्यस्मान्कदा चन कदाचिदपि मा दभन् । मा विनाशयंतु । तथोतयो गंतारः । यद्वा । धूतय इत्यत्र वर्णलोपः । धूतयः कंपयितारस्ते त्वदीया मरुतश्च मा दभन् । हे मानुष मनुष्यहितेंद्र चर्षणिभ्यो मंत्रद्रष्टृभ्यो नोऽस्मभ्यं विश्वा विश्वानि सर्वाणि वसूनि धनानि च आ उपमिमीहि । सर्वत आहृत्यास्मत्समीपे कुरु । सर्वत्र वर्तमानं धनमस्मभ्यं प्रयच्छेत्यर्थः ॥ कदा । किंशब्दात्सर्वैकान्यकिंयत्तदः काले देति दाप्रत्ययः । किमः क इति कादेशः । व्यत्ययेनाद्युदात्तत्वं । दभन् । दन्भु दंभे । लोडर्थे छांदसे लङि बहुलं छंदसीति विकरणस्य लुक् । न माङ्योग इत्यडभावः । मिमीहि । माङ् माने शब्दे च । व्यत्ययेन परस्मैपदं । जुहोत्यादित्वात् श्लुः । भृञामिदित्यभ्यासस्येत्वं । हेर्ङित्त्वात् घुमास्थेतीत्वं ॥ ॥८॥ ॥१३॥

चतुर्दशेऽनुवाके नव सूक्तानि । तत्र प्र य इति द्वादशर्चं प्रथमं सूक्तं गोतमस्यार्षं । पंचमीद्वादश्यौ त्रिष्टुभौ । शिष्टा जगत्यः । मरुतो देवता । तथा चानुक्रांतं । प्र ये द्वादश मारुतं ह पंचम्यंत्ये त्रिष्टुभाविति । हशब्दप्रयोगादिदमादीनि चत्वारि सूक्तानि मरुद्देवत्यानि ॥ अभिप्लवषडहस्य चतुर्थेऽहन्याग्निमारुत एतत्सूक्तं मारुतनिविद्धानीयं । सूत्रितं च । प्र ये शुंभंते जनस्य गोपा इत्याग्निमारुतं । आ० ७.७. । इति ॥

प्र ये शुंभंते जनयो न सप्तयो यामन्रुद्रस्य सूनवः सुदंससः ।

रोदसी हि मरुतश्चक्रिरे वृधे मदंति वीरा विदथेषु घृष्वयः ॥१॥

प्र। ये। शुंभंते। जनयः। न। सप्तयः। यामन्। रुद्रस्य। सूनवः। सुऽदंससः।
रोदसी इति। हि। मरुतः। चक्रिरे। वृधे। मदंति। वीराः। विदथेषु। घृष्वयः ॥१॥

ये मरुतो यामन् यामनि गमने निमित्तभूते सति प्र शुंभंते प्रकर्षेण स्वकीयान्यंगान्यलंकुर्वंति जनयो न जाया इव। यथा योषितः स्वकीयान्यंगान्यलंकुर्वंति तद्वत्। कीदृशा मरुतः। सप्तयः सर्पणशीलाः रुद्रस्य सूनवः। रोदयति सर्वमंतकाल इति रुद्रः परमेश्वरः। तस्य पुत्राः। सुदंससः शोभनकर्माणः। एतदेवोपपादयति। हि यस्मान्मरुतो रोदसी द्यावापृथिव्यौ वृधे वृष्टिप्रदानादिना वर्धनाय चक्रिरे कृतवंतः। अतः सुदंसस इत्यर्थः। वीरा विशेषेण शत्रुक्षेपणशीलाः घृष्वयो घर्षणशीलाः। महीरुहशिलोच्चयादेर्भंजका इत्यर्थः। एवंभूतास्ते मरुतो विदथेषु। विदंत्येषु यष्टव्यतया देवानिति विदथा यज्ञाः। तेषु मदंति। सोमपानेन हृष्यंति॥ शुंभंते। शुभ शुम्भ दीप्तौ। भौवादिकः। जनयः। जायंत [illegible]नीति जनयो जायाः। इन्सर्वधातुभ्य इतीन्प्रत्ययः। यामन्। या प्रापणे। कृत्यल्युटो बहुलमिति बहुलवचनादातो मनिन्निति भावे मनिन्। सुपां सुलुगिति सप्तम्या लुक्। सुदंससः। दंस इति कर्मनाम। शोभनं दंसो येषां। सोर्मनसी अलोमोषसी इत्युत्तरपदाद्युदात्तत्वं। चक्रिरे। हि चेति निघातप्रतिषेधः। वृधे। वृधु वृद्धौ। सं[illegible]णो भावे क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं। मदंति। मदी हर्षे। श्यनि प्राप्ते व्यत्ययेन शप्। पादादित्वान्निघाताभावः। विदथेषु। विद ज्ञाने। रुविदिभ्यां किदित्यथप्रत्ययः। घृष्वयः। घृषु संघर्षे। कृवि[illegible]दिना विन्प्रत्ययांतो निपात्यते॥

त उक्षितासो महिमानमाशत दिवि रुद्रासो अधि चक्रिरे सदः।
अर्चंतो अर्कं जनयंत इंद्रियमधि श्रियो दधिरे पृश्निमातरः ॥२॥
ते। उक्षितासः। महिमानं। आशत। दिवि। रुद्रासः। अधि। चक्रिरे। सदः।
अर्चंतः। अर्कं। जनयंतः। इंद्रियं। अधि। श्रियः। दधिरे। पृश्निऽमातरः ॥२॥

ये पूर्वोक्तगुणविशिष्टास्ते मरुत उक्षितासो देवैरभिषिक्ताः संतो महिमानं महत्त्वमाशत। आप्नुवन्। रुद्रासो रुद्रस्य पुत्राः। उपचाराज्जन्ये जनकशब्दः। ते रुद्रपुत्रा मरुतो दिवि द्योतमाने नभसि सदः सदनं स्थानमधि चक्रिरे। अधिकं सर्वोत्कृष्टं कृतवंतः। अर्कमर्चनीयमिंद्रमर्चंतः पूजयंत इंद्रियमिंद्रस्य लिंगं वीर्यं जनयंतः। प्रहर भगवो जहि वीरयस्व। ऐ० ब्रा० ३. २०.। इत्येवंरूपेण वाक्येनोत्पादयंतः। पृश्निमातरः पृश्निर्नानारूपाया भूमेः पुत्रा मरुतः श्रिय ऐश्वर्याण्यधि दधिरे। आधिक्येनाधारयन्॥ उक्षितासः। उक्ष सेचने। कर्मणि निष्ठा। आज्जसेरसुक्। महिमानं। महच्छब्दात् पृथ्[illegible]ण इमनिच्। टेरिति टिलोपः। आशत। अशू व्याप्तौ। लङि बहुलं छंदसीति विकरणस्य लुक्। इंद्रियं। इंद्रियमिंद्रलिंगमिंद्रदृष्टं। पा० ५. २. ९३.। इति घच्प्रत्ययांतो निपात्यते। पृश्निमातरः। प्राश्नुते सर्वाणि रूपाणीति पृश्निर्भूमिः। श्रूयते च। इयं वै पृश्निः। तै० ब्रा० १. ४. १. ५.। घृणिः पृश्निरित्यादौ निपातनादभिमतरूपसिद्धिः। पृश्निर्माता येषां ते तथोक्ताः। ऋतश्छंदसि। पा० ५. ४. १५८.। इति समासांतस्य कपः प्रतिषेधः॥

गोमातरो यच्छुभयंते अंजिभिस्तनूषु शुभ्रा दधिरे विरुक्मतः।
बाधंते विश्वमभिमातिनमप वर्त्मान्येषामनु रीयते घृतं ॥३॥
गोऽमातरः। यत्। शुभयंते। अंजिऽभिः। तनूषु। शुभ्राः। दधिरे। विरुक्मतः।
बाधंते। विश्वं। अभिऽमातिनं। अप। वर्त्मानि। एषां। अनु। रीयते। घृतं ॥३॥

गोमातरो गोरूपा भूमिर्माता येषां ते मरुत अंजिभी रूपाभिव्यंजकैराभरणैर्यदा शुभयंते स्वकीयान्यंगानि शोभायुक्तानि कुर्वंति तदानीं शुभ्रा दीप्ता मरुतस्तनूषु स्वकीयेषु शरीरेषु विरुक्मतो विशेषेण रोचमा-

नानलंकारान्दधिरे । धारयंति । अपि च विश्वं सर्वमभिमातिनं शत्रुमप बाधंते । हिंसंति । एषां मरुतां वर्त्मानि मार्गाननुसृत्य घृतं चरणशीलमुदकं रीयते । स्रवति । यत्र मरुतो गच्छंति वृष्ट्युदकमपि तदनुसारेण तत्र गच्छतीत्यर्थः ॥ शुभयंते । संज्ञापूर्वकस्य विधेरनित्यत्वाल्लघूपधगुणाभावः । अंजिभिः । अन्जू व्यक्तिम्रक्षण-गतिषु । खनिकषिकस्यंज्यसिवसिध्वनिस्तनिवनिसनिग्रंथिचरिभ्यश्च । उ० ४. १३९. । इतीप्रत्ययः । शुभ्राः । शुभ दीप्तौ । स्फायितंचीत्यादिना रक् । विरुक्मतः । विशिष्टा रुक् विरुक् । तद्वंतो विरुक्मंतः । मतुप्ययस्मयादित्वेन पदत्वात्कुत्वं । भत्वात् जश्त्वाभावः । रीयते । रीङ् स्रवणे । दैवादिकः ॥

**वि ये भ्राजंते सुमखास ऋष्टिभिः प्रच्यावयंतो अच्युता चिदोजसा ।**
**मनोजुवो यन्मरुतो रथेष्वा वृषव्रातासः पृषतीरयुग्ध्वं ॥ ४ ॥**
**वि । ये । भ्राजंते । सुऽमखासः । ऋष्टिऽभिः । प्रऽच्यवयंतः । अच्युता । चित् । ओजसा ।**
**मनःऽजुवः । यत् । मरुतः । रथेषु । आ । वृषऽव्रातासः । पृषतीः । अयुग्ध्वं ॥ ४ ॥**

सुमखासः शोभनयज्ञा ये मरुत ऋष्टिभिरायुधैर्वि भ्राजंते विशेषेण दीप्यंते ते मरुतोऽच्युता चित् च्याव-यितुमशक्यानि दृढानि पर्वतादीन्यप्योजसा स्वकीयेन बलेन प्रच्यावयंतः प्रकर्षेण च्यावयितारः प्रेरयि-तारो भवंति । उत्तरार्धः प्रत्यक्षकृतः । हे मरुतो मनोजुवो मनोवद्वेगगतयो वृषव्रातासो वृष्ट्युदकसेचनसम-र्थसप्तसंघात्मका यूयं रथेष्वात्मीयेषु पृषतीः । पृषत्य इति मरुद्वाहनानां संज्ञा पृषत्यो मरुतामित्युक्तत्वात् । पृषद्भिः श्वेतविंदुभिर्युक्ता मृगीर्यद्यदायुग्ध्वं आभिमुख्येन नियुक्ता अकुर्त । तदानीं पर्वतादिकं प्रच्यवत इत्यर्थः ॥ सुमखासः । सर्वे विधयश्छंदसि विकल्प्यंत इति नञ्सुभ्यामित्यस्य प्रवृत्त्यभावे बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अच्युता । शेश्छंदसि बहुलमिति शेर्लोपः । मनोजुवः । जु इति सौत्रो धातुर्गत्यर्थः । क्विब्वचीत्यादिना क्विब्दीर्घौ । अयुग्ध्वं । युजिर् योगे । लुङि धि च । पा० ८. २. २५ । इति सकारलोपः ॥

**प्र यद्रथेषु पृषतीरयुग्ध्वं वाजे अद्रिं मरुतो रंहयंतः ।**
**उतारुषस्य वि ष्यंति धाराश्चर्मेवोदभिर्व्युंदंति भूम ॥ ५ ॥**
**प्र । यत् । रथेषु । पृषतीः । अयुग्ध्वं । वाजे । अद्रिं । मरुतः । रंहयंतः ।**
**उत । अरुषस्य । वि । स्यंति । धाराः । चर्मऽइव । उदऽभिः । वि । उंदंति । भूम ॥ ५ ॥**

हे मरुतः पृषतीर्यद्यदा रथेषु प्रायुग्ध्वं प्रायूयुजत । किं कुर्वंतः । वाजेऽन्ने निमित्तभूते सत्यद्रिं मेघं रंहयंतो वर्षणार्थं प्रेरयंतः । उत तदानीमरुषस्यारोचमानस्य सूर्यस्य वैद्युताग्नेर्वा सकाशाद्वृष्ट्युदकधारा भवंतो वि ष्यंति । विमुंचंति । विमुक्तास्ताश्च धारा उदभिरुदकैश्चर्मेव परिमितमल्पं चर्म यथाप्रयत्नेन क्लेद्यते एवं भूम सर्वां भूमिं व्युंदंति । विशेषेणार्द्रां कुर्वंति ॥ रंहयंतः । रहि गतौ । वि ष्यंति । षो अंतकर्मणि । दैवादिकः । ओतः श्यनि । पा० ७. ३. ७१. । इत्योकारलोपः । उपसर्गात्सुनोतीति षत्वं । उदभिः । पद्दन्नित्यादिनोद-कशब्दस्योदन्नादेशः । व्युंदंति । उन्दी क्लेदने । भूम । सुपां सुलुगिति भूमिशब्दादुत्तरस्यामो डादेशः । छांदसं ह्रस्वत्वं ॥

तृतीयसवन आ वो वहंत्विति पोतुः प्रस्थितयाज्या । सूचितं च । आ वो वहंतु सप्तयो रघुष्यदोऽमेव नः सुहवा आ हि गंतन । आ० ५. ५. । इति ॥

**आ वो वहंतु सप्तयो रघुष्यदो रघुपत्वानः प्र जिगात बाहुभिः ।**
**सीदता बर्हिरुरु वः सदस्कृतं मादयध्वं मरुतो मध्वो अंधसः ॥ ६ ॥**

आ। वः। वहंतु। सप्तयः। रघुऽस्यदः। रघुऽपत्वानः। प्र। जिगात। बाहुऽभिः।
सीदत। आ। बर्हिः। उरु। वः। सदः। कृतं। मादयध्वं। मरुतः। मध्वः। अंधसः ॥ ६ ॥

हे मरुतो वो युष्मान् सप्तयः सर्पणशीला अश्वा आ वहंतु। अस्मद्यज्ञं प्रापयंतु। कीदृशाः सप्तयः। रघुष्यदो लघु शीघ्रं स्यंदमानाः। वेगेन गच्छंत इत्यर्थः। रघुपत्वानो लघु शीघ्रं पतंतो गच्छंतो यूयं बाहुभिः स्वकीयैर्हस्तैरस्मभ्यं दातव्यं धनमाहृत्य प्र जिगात। प्रकर्षेण गच्छत। हे मरुतो वो युष्माकं सदः सदनं वेदिलक्षणं स्थानमुरु विस्तीर्णं कृतं। तत्र यदास्तीर्णं बर्हिस्तदा सीदत। तस्मिन्बर्हिष्युपविशत। उपविश्य च मध्वो मधुरस्यांधसः सोमलक्षणस्यान्नस्य पानेन मादयध्वं। तृप्ता भवत ॥ रघुष्यदः। रघु स्यंदंत इति रघुष्यदः। स्यन्दू प्रस्रवणे। क्विप्चेति क्विप्। अनिदितामिति नलोपः। कृदुत्तरपदप्रकृतिस्वरत्वं। रघुपत्वानः। पत्लृ गतौ। अन्येभ्योऽपि दृश्यंत इति वनिप्। जिगात। गा स्तुतौ। जौहोत्यादिकः। जिगातीति गतिकर्मसु पाठादत्र गत्यर्थः। लोण्मध्यमबहुवचनस्य तप्तनप्तनथनाश्चेति तबादेशः। तस्य पित्त्वेन ङित्त्वाभावादी हल्यघोरितीत्वाभावः। सदः। अतः कृकमीति ।पा० ८. ३. ४६.। विसर्जनीयस्य सत्वं। मादयध्वं। मद तृप्तियोगे। चुरादिरात्मनेपदी ॥ ॥ ९ ॥

तेऽवर्धंत स्वतवसो महित्वना नाकं तस्थुरुरु चक्रिरे सदः।
विष्णुर्यद्धावद्वृषणं मदच्युतं वयो न सीदन्नधि बर्हिषि प्रिये ॥ ७ ॥
ते। अवर्धंत। स्वऽतवसः। महिऽत्वना। आ। नाकं। तस्थुः। उरु। चक्रिरे। सदः।
विष्णुः। यत्। ह। आवत्। वृषणं। मदऽच्युतं। वयः। न। सीदन्। अधि। बर्हिषि।
प्रिये ॥ ७ ॥

ते मरुतोऽवर्धंत। वृद्धिं गताः। कीदृशाः। स्वतवसः स्वाश्रयबलाः। नान्यस्य [illegible]ंते। वृद्धिं प्राप्य च महित्वना महिम्ना महत्त्वेन नाकं स्वर्गमा तस्थुः। आस्थितवंतः। सदः सदनं नभोलक्षणं स्थानं च स्वकीयनिवासायोरु विस्तीर्णं चक्रिरे। यदेभ्यो मरुद्भ्यो यदर्थं वृषणं कामाभिवर्षकं मदच्युतं मदस्य हर्षस्यासेक्तारं यज्ञं विष्णुर्हावत् विष्णुरेवागत्य रक्षति ते मरुतो वयो न पक्षिणो यथा शीघ्रमागच्छंति एवं शीघ्रमागत्य बर्हिष्यध्यस्मदीये यज्ञे प्रिये प्रीतिकरे सीदन्। सीदंतु। उपविशंतु ॥ तेऽवर्धंत। स्वरितो वानुदात्ते पदादौ ।पा० ८. २. ६.। इत्येकादेशस्य स्वरितत्वं। महित्वना। भावप्रत्ययादुत्तरस्याङो व्यत्ययेन नाभाव उदात्तत्वं च। यद्वा। सुपां सुलुगित्याजादेशो नकारोपजनश्च। तस्थुः। नाकमातस्थुश्च सदश्च विस्तीर्णं चक्रिर इति चार्थप्रतीतेश्चादिलोपे विभाषेति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः। यत्। सुपां सुलुगिति चतुर्थ्या लुक्। आवत्। छांदसो वर्तमाने लङ्। वृषणं। वा षपूर्वस्य निगम इत्युपधादीर्घाभावः। मदच्युतं। मदं श्च्योततीति मदच्युत्। च्युतिर् आसेचने। क्विप्चेति क्विप्। सीदन्। लिङर्थे लेट्यडागमः ॥

शूरा इवेद्युयुधयो न जग्मयः श्रवस्यवो न पृतनासु येतिरे।
भयंते विश्वा भुवना मरुद्भ्यो राजान इव त्वेषसंदृशो नरः ॥ ८ ॥
शूराःऽइव। इत्। युयुधयः। न। जग्मयः। श्रवस्यवः। न। पृतनासु। येतिरे।
भयंते। विश्वा। भुवना। मरुत्ऽभ्यः। राजानःऽइव। त्वेषऽसंदृशः। नरः ॥ ८ ॥

इदित्येतत्समुच्चये। शूरा इवेत् शौर्योपेता युयुत्सवः पुरुषा इव च युयुधयः शत्रुभिर्युध्यमानाः पुरुषा इव च जग्मयः शीघ्रं गच्छंतो मरुतः श्रवस्यवो न श्रवोऽन्नमात्मन इच्छंतः पुरुषा इव पृतनासु संग्रामेषु येतिरे। प्रयतंते। वृत्रादिभिर्युद्धे व्याप्रियंते। तादृशेभ्यो मरुद्भ्यो विश्वा भुवना सर्वाणि भूतजातानि भयंते। बिभ्यति।

ये नरो वृष्ट्यादेर्नेतारो मरुतो राजान इव राजमाना नृपतय इव त्वेषसंदृशो दीप्तसंदर्शना उग्ररूपतया द्रष्टुमशक्या भवंति । तेभ्य इत्यर्थः ॥ युयुधयः । युध संप्रहारे । आदृगमहनजन इत्यत्रोत्सर्गश्छंदसि ।पा० ३. २. १७१. २.। इति वचनात्किन्प्रत्ययः । लिड्वद्भावाद्द्विर्भावादि । कित्त्वाद्गुणाभावः । नित्त्वादाद्युदात्तत्वं । जग्मयः । तेनैव सूत्रेण किन्प्रत्ययः । गमहनेत्यादिनोपधालोपः । लिड्वद्भावाद्द्विर्भावादि । अवस्यवः । अव इच्छति अवस्यति । क्याच्छंदसीत्युप्रत्ययः । येतिरे । यती प्रयत्ने । छंदसि लुङ्लङ्लिट इति वर्तमाने लिट् । भयंते । ञिभी भये । बहुलं छंदसीति शपः श्लोरभावः । त्वेषसंदृशः । त्विष दीप्तौ । पचाद्यच् । दृशिर् प्रेक्षणे । संपूर्वादस्मात्संपदादिलक्षणो भावे क्विप् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

त्वष्टा यद्वज्रं सुकृतं हिरण्ययं सहस्रभृष्टिं स्वपा अवर्तयत् ।
धत्त इंद्रो नर्यपांसि कर्तवेऽहन्वृत्रं निरपामौब्जदर्णवं ॥९॥
त्वष्टा । यत् । वज्रं । सुऽकृतं । हिरण्ययं । सहस्रऽभृष्टिं । सुऽअपाः । अवर्तयत् ।
धत्ते । इंद्रः । नरि । अपांसि । कर्तवे । अहन् । वृत्रं । निः । अपां । औब्जत् । अर्णवं ॥९॥

स्वपाः शोभनकर्मा त्वष्टा विश्वनिर्माता यद्वज्रमवर्तयत् इंद्रं प्रत्यगमयत् । दत्तवानित्यर्थः । कीदृशं । सुकृतं सम्यङ्निष्पादितं हिरण्ययं सुवर्णमयं सहस्रभृष्टिमनेकाभिर्धाराभिर्युक्तं । तद्वज्रमिंद्रो धत्ते । धारयति । किमर्थं । नरि । अत्र नृसंबंधान्नृशब्देन संग्रामोऽभिधीयते । संग्रामेऽपांसि शत्रुहननादिलक्षणानि कर्माणि कर्तवे कर्तुं । एवं वज्रं धृत्वा तेन वज्रेण वृत्रं वृष्ट्युदकस्यावरकमर्णवमर्णसोदकेन युक्तं मेघमहन् । अवधीत् । अपां तेन निरुद्धा अपश्च स निरौब्जत् । निःशेषेणाधोमुखमपातयत् । प्रवृष्टा अकरोदित्यर्थः ॥ सुकृतं । सुपूर्वात्करोतेः कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । हिरण्ययं । हिरण्यशब्दादुत्तरस्य मयटो मकारस्य लोप ऋत्व्यवास्त्व्यवास्त्वेत्यादौ निपात्यते । स्वपाः । सोर्मनसी अलोमोषसी इत्युत्तरपदाद्युदात्तत्वं । कर्तवे । तुमर्थे सेसेनिति करोतेस्तवेन्प्रत्ययः । अपां । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । ऊडिदमिति विभक्तेरुदात्तत्वं । औब्जत् । उब्ज आर्जवे । अर्णवं । अर्णसो लोपश्च ।का० ५. २. १०९. ३.। इति मत्वर्थीयो वः सलोपश्च ॥

ऊर्ध्वं नुनुद्रेऽवतं त ओजसा दादृहाणं चिद्बिभिदुर्वि पर्वतं ।
धमंतो वाणं मरुतः सुदानवो मदे सोमस्य रण्यानि चक्रिरे ॥१०॥
ऊर्ध्वं । नुनुद्रे । अवतं । ते । ओजसा । दादृहाणं । चित् । बिभिदुः । वि । पर्वतं ।
धमंतः । वाणं । मरुतः । सुऽदानवः । मदे । सोमस्य । रण्यानि । चक्रिरे ॥१०॥

अत्रेयमाख्यायिका । गोतम ऋषिः पिपासया पीडितः सन् मरुत उदकं ययाचे । तदनंतरं मरुतोऽदूरस्थं कूपमुद्धृत्य यत्र स गोतम ऋषिस्तिष्ठति तां दिशं नीत्वा ऋषिसमीपे कूपमवस्थाप्य तत्पार्श्वे आहावं च कृत्वा तस्मिन्नाहावे कूपमुत्सिच्य तमृषिं तेनोदकेन तर्पयांचक्रुः । अयमर्थोऽनयोत्तरया च प्रतिपाद्यते ॥ ते मरुतोऽवतं । अवस्तात्ततो भवतीत्यवतः कूपः । कूपनामसु चावतोऽवट इति पठितं । तमूर्ध्वमुपरि यथा भवति तथौजसा स्वकीयेन बलेन नुनुद्रे । प्रेरितवंतः । उत्खातवंत इत्यर्थः । एवं कूपमुत्खाय ऋषेराश्रमं प्रति नयंतो मरुतो मार्गमध्ये दादृहाणं प्रवृद्धं गतिनिरोधकं पर्वतं चित् पर्ववंतं शिलोच्चयमपि वि बिभिदुः । विशेषेण बभंजुः । सुदानवः शोभनदानास्ते मरुतो वाणं शतसंख्याभिस्तंत्रीभिर्युक्तं वीणाविशेषं धमंतो वादयंतः सोमस्य मदे सोमपानेन हर्षे सति रण्यानि सुत्यानि रमणीयानि धनानि चक्रिरे । स्तोतृभ्यः कुर्वंति ॥ नुनुद्रे । णुद प्रेरणे । लिटीरयो र इति रेआदेशः । दादृहाणं । दृह दृहि वृद्धौ । लिटः कानच् । धमंतः । ध्मा शब्दाग्निसंयोगयोः । पाघ्रेत्यादिना धमादेशः । वाणं । अण रण वण शब्दार्थाः । कर्मणि घञ् । कर्षात्वत इत्यंतो-

दात्तत्वं। रणानि। रणतेर्भावे वशिरण्योरुपसंख्यानं।पा॰ ३. ३. ५८. ३.। इत्यप्। ततो भवे छंदसीति यत्। यतोऽनाव इत्याद्युदात्तत्वं॥

जिह्मं नुनुद्रेऽवतं तया दिशासिंचन्नुत्सं गोतमाय तृष्णजे।
आ गच्छंतीमवसा चित्रभानवः कामं विप्रस्य तर्पयंत धामभिः॥११॥
जिह्मं। नुनुद्रे। अवतं। तया। दिशा। असिंचन्। उत्सं। गोतमाय। तृष्णऽजे।
आ। गच्छंति। ईं। अवसा। चित्रऽभानवः। कामं। विप्रस्य। तर्पयंत। धामऽभिः॥११॥

मरुतोऽवतमुद्धृतं कूपं यस्यां दिशि ऋषिर्वसति तया दिशा जिह्मं वक्रं तिर्यंचं नुनुद्रे। प्रेरितवंतः। एवं कूपं नीत्वा ऋष्याश्रमेऽवस्थाप्य तृष्णजे तृषिताय गोतमाय ऋषये तदर्थमुत्सं जलप्रवाहं कूपादुद्धृत्यासिंचन्। आहावेऽवानयन्। एवं कृत्वेमेनं स्तोतारमृषिं चित्रभानवो विचित्रदीप्तयस्ते मरुतोऽवसेदृशेन रक्षणेन सहा गच्छंति। तत्समीपं प्राप्नुवंति। प्राप्य च विप्रस्य मेधाविनो गोतमस्य काममभिलाषं धामभिरायुषो धारकैरुदकैस्तर्पयंत। अतर्पयन्॥ तया। न गोश्वन्साववर्णेति साविकाच इति प्राप्तस्य विभक्त्युदात्तस्य प्रतिषेधः। दिशा। साविकाच इति विभक्तिरुदात्तत्वं। तृष्णजे। ञितृषा पिपासायां। स्वपितृषोर्नजिङ्।पा॰ ३. २. १७२.। प्रत्ययाद्युदात्तत्वं। पदकारस्य शाकल्यस्य त्वयमभिप्रायः। अन्येष्वपि दृश्यत इति दृशिग्रहणात्केवलादपि जनेर्डप्रत्ययः। तृष्णा जाता यस्य स तथोक्तः। ङ्यापोः संज्ञाछंदसोर्बहुलमिति ह्रस्वत्वं। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। धामभिः। दधातेरातो मनिन्निति मनिन्॥

मारुते पशौ या वः शर्मेति हविषो याज्या। प्रदानानामिति खंडे सूचितं। अरा इवेदचरमा अहेव या वः शर्म शशमानाय संति। आ॰ ३. ७.। इति॥

या वः शर्म शशमानाय संति त्रिधातूनि दाशुषे यच्छताधि।
अस्मभ्यं तानि मरुतो वि यंत रयिं नो धत्त वृषणः सुवीरं॥१२॥
या। वः। शर्म। शशमानाय। संति। त्रिऽधातूनि। दाशुषे। यच्छत। अधि।
अस्मभ्यं। तानि। मरुतः। वि। यंत। रयिं। नः। धत्त। वृषणः। सुऽवीरं॥१२॥

हे मरुतो वो युष्माकं संबंधीनि या यानि शर्म शर्माणि सुखानि गृहाणि वा। कीदृशानि। त्रिधातूनि पृथिव्यादिषु त्रिषु स्थानेष्ववस्थितानि शशमानाय युष्मान्स्तुतिभिर्भजमानाय दातुं संपादितानि। पूर्वोक्तलक्षणानि शर्माणि यानि संति यानि च दाशुषे हविर्दत्तवते यजमानायाधि यच्छत अधिकं प्रयच्छथ हे मरुतस्तानि सर्वाणि शर्माण्यस्मभ्यं वि यंत। विशेषेण प्रयच्छत। किंच हे वृषणः कामानां वर्षितारो मरुतो नोऽस्मभ्यं सुवीरं शोभनैर्वीरैः पुत्रादिभिर्युक्तं रयिं धनं धत्त। दत्त॥ या। शेश्छंदसि बहुलमिति शेर्लोपः। शर्म। सुपां सुलुगिति जसो लुक्। शशमानाय। शश प्लुतगतौ। ताच्छीलिकश्चानश्। यच्छत। छांदसे लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। यंत। यमेर्लोटि बहुलं छंदसीति शपो लुक्। तप्तनप्तनथनाश्चेति तस्य तबादेशः। अतस्तस्य पित्त्वेन ङित्त्वाभावादनुदात्तोपदेशेत्यादिनानुनासिकलोपो न भवति। वृषणः। वा षपूर्वस्य निगम इत्युपधादीर्घाभावः। सुवीरं। बहुव्रीहौ वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं॥ ॥१०॥

मरुतो यस्येति दशर्चं द्वितीयं सूक्तं गोतमस्यार्षं गायत्रं मरुद्देवताकं। अनुक्रम्यते च। मरुतो दश गायत्रमिति॥ व्यूळ्हे तृतीये छंदोम आग्निमारुते शस्त्र एतत्सूक्तं। तृतीयस्यागन्म महेति खंडे सूचितं। मरुतो यस्य हि प्राग्नये वाचमित्याग्निमारुतं। आ॰ ८. ११.। इति॥ ऐंद्रामारुत्यां प्रधानस्य हविषो मरुतो यस्येत्येषानुवाक्या। सूचितं च। ऐंद्रामारुतीं भेदकामा मरुतो यस्य हि क्षये। आ॰ २. ११.। इति॥ एषैव वरुणप्रघासेषु मारुत्या आमिक्षाया अनुवाक्या। सूचितं च। मरुतो यस्य हि क्षयेऽरा इवेदचरमा अहेव। आ॰ २. १७.। इति॥ तथा प्रातःसवने पोतुरेषा प्रस्थितयाज्या। सूचितं च। मरुतो यस्य हि क्षयेऽग्ने पत्नीरिहा वह। आ॰ ५. ५.। इति॥

मरुतो यस्य हि क्षये पाथा दिवो विमहसः । स सुगोपातमो जनः ॥ १ ॥

मरुतः । यस्य । हि । क्षये । पाथ । दिवः । विऽमहसः । सः । सुऽगोपातमः । जनः ॥ १ ॥

हे विमहसो विशिष्टप्रकाशा मरुतो दिवोऽंतरिक्षलोकादागत्य यस्य हि यस्य खलु यजमानस्य क्षये यज्ञगृहे पाथ सोमं पिबथ स जनो जातो यजमानः सुगोपातमः शोभनैः पालकैरत्यंतं युक्तो भवति ॥ पाथ । पा पाने । लटि बहुलं छंदसीति शपो लुक् । यद्वृत्तयोगादनिघातः । विमहसः । विशिष्टं महस्तेजो येषां ते तथोक्ताः । सुगोपातमः । शोभनो गोपा रक्षको यस्य स सुगोपाः । अतिशयेन सुगोपाः सुगोपातमः । तमपः पित्त्वादनुदात्तत्वे सति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वमेव शिष्यते ॥

यज्ञैर्वा यज्ञवाहसो विप्रस्य वा मतीनां । मरुतः शृणुता हवं ॥ २ ॥

यज्ञैः । वा । यज्ञऽवाहसः । विप्रस्य । वा । मतीनां । मरुतः । शृणुत । हवं ॥ २ ॥

हे यज्ञवाहसो यज्ञस्य वोढारो मरुतो यूयं यज्ञैर्वा । वाशब्दः समुच्चये । यज्ञैश्च यजमानस्य मतीनां स्तुतीनां संबंधिनो विप्रस्य वायजमानस्य मेधाविनस्य हवमाह्वानं शृणुत । यज्ञवतो यजमानस्य यागरहितस्य स्तोतुश्चाह्वानमवश्यं भवद्भिः श्रोतव्यं यतो भवंतो यज्ञस्य वोढारः स्तुतिप्रियाश्चेति भावः ॥ यज्ञवाहसः । गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेति वचनाद्वहिहाधाञ्भ्यश्छंदसीति कारकपूर्वाद्वहतेरसुन् । णिदित्यनुवृत्तेरुपधावृद्धिः । मतीनां । मन ज्ञाने । अस्मात्करणे क्तिन् । नामन्यतरस्यामिति नाम उदात्तत्वं । शृणुत । श्रुवः शृ चेति श्नुः । सति शिष्टस्य स्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वचनात्तिङ एव स्वरः शिष्यते । मरुत इत्यस्यामंत्रितस्यामंत्रितं पूर्वमविद्यमानवदित्यविद्यमानवत्त्वेन प[illegible]निघाताभावः । हवं । भावेऽनुपसर्गस्येति ह्वयतेरप् संप्रसारणं च ॥

उत वा यस्य वाजिनोऽनु विप्रमतक्षत । स गंता गोमति व्रजे ॥ ३ ॥

उत । वा । यस्य । वाजिनः । अनु । विप्रं । अतक्षत । सः । गंता । गोऽमति । व्रजे ॥ ३ ॥

उत वापि च यस्य यजमानस्य वाजिनो हविर्लक्षणान्नोपेता ऋत्विजो विप्रं मेधाविनं मरुद्गणमन्वतक्षत हविष्प्रदानादिना तीक्ष्णीकुर्वंति स यजमानो गोमति बहुभिर्गोभिर्युक्ते व्रजे गोष्ठे गंता गमनशीलो भवति ॥ अतक्षत । तक्षू त्वक्षू तनूकरणे । छांदसो लङ् । व्यत्ययेन मध्यमः । गंता । गमेस्ताच्छीलिकस्तृन् ॥

अस्य वीरस्य बर्हिषि सुतः सोमो दिविष्टिषु । उक्थं मदश्च शस्यते ॥ ४ ॥

अस्य । वीरस्य । बर्हिषि । सुतः । सोमः । दिविष्टिषु । उक्थं । मदः । च । शस्यते ॥ ४ ॥

दिविष्टिषु यजनीयदिवसेषु बर्हिषि यज्ञे वीरस्य शत्रुक्षेपणकुशलस्यास्य मरुद्गणस्य यागाय सोमः सुतः । ऋत्विग्भिरभिषुतो भवति । उक्थं मरुद्देवताकं शस्त्रं मदश्च मदिधातुना युक्ता मरुतो देवाः सोमस्य मत्सन्नित्यादिका मारुती निविच्चास्य मरुद्गणस्य हर्षाय शस्यते । होत्रा पठ्यते ॥ अस्य । ऊडिदमिति विभक्तिरुदात्तत्वं । दिविष्टिषु । इष्टय एषणानि गमनानि । दिवो द्योतमानस्य सूर्यस्येष्टयो येषु दिवसेषु ते तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । व्यत्ययेनोत्वाभावः ॥

अस्य श्रोषंत्वा भुवो विश्वा यश्चर्षणीरभि । सूरं चित्सस्रुषीरिषः ॥ ५ ॥

अस्य । श्रोषंतु । आ । भुवः । विश्वाः । यः । चर्षणीः । अभि । सूरं । चित् । सस्रुषीः । इषः ॥ ५ ॥

अस्य यजमानस्य स्तुतिं मरुत आ आभिमुख्येन श्रोषंतु । शृण्वंतु । यो मरुद्गणो विश्वाश्चर्षणीः सर्वान् शत्रुभूत[illegible] भुवः अभिभवति । तादृग्गणाकारा मरुतः शृण्वंत्वित्यर्थः । सूरं चित् स्तुतेः प्रेरयितारं

यजमानमपीषो मरुद्भिः प्रत्तान्यन्नानि सस्तुषीः प्राप्तानि भवंतु ॥ श्रोषंतु । श्रु श्रवणे । लोटि सिब्बहुलं लेटीति बहुलवचनात्सिप् । भुवः । भवतेर्लेटि तिपस्तिङां तिङो भवंतीति सिप् । लेटोऽडाटावित्यडागमः । बहुलं छंदसीति शपो लुक् । भूसुवोस्तिङीति गुणप्रतिषेधः । सूरं । षू प्रेरणे । सुसूधागृधिभ्यः क्रन्निति क्रन्प्रत्ययः । सस्तुषीः । स्नु गतौ । अस्मात्क्लिटः क्वसुः । उगितश्चेति ङीप् । भसंज्ञायां वसोः संप्रसारणमिति संप्रसारणं । शासिवसिघसीनां चेति षत्वं । जसि वा छंदसीति पूर्वसवर्णदीर्घत्वं ॥ ॥११॥

पूर्वीभिर्हि दंदाशिम शरद्भिर्मरुतो वयं । अवोभिश्चर्षणीनां ॥ ६॥

पूर्वीभिः । हि । दुदाशिम । शरत्ऽभिः । मरुतः । वयं । अवःऽभिः । चर्षणीनां ॥ ६॥

हे मरुतः पूर्वीभिर्बह्वीभिः शरद्भिः संवत्सरैश्चर्षणीनां सर्वस्य द्रष्टॄणां सर्वज्ञानां भवतां संबंधिभिरवोभी रक्षणैर्युक्ताः संतो वयं ददाशिम । युष्मभ्यं हवींषि दत्तवंतः । हि यस्मादर्थे । यस्मादेवं तस्मादिदानीमप्यस्मदीयहविःस्वीकरणायागच्छतेत्यर्थः ॥ पूर्वीभिः । पुरुशब्दाद्वोतो गुणवचनादिति ङीष् । यणादेशे हलि चेति दीर्घत्वं । ददाशिम । दाशृ दाने । लिटीडागमः । हि चेति निघातप्रतिषेधः । चर्षणीनां । नामन्यतरस्यामिति नाम उदात्तत्वं ॥

सुभगः स प्रयज्यवो मरुतो अस्तु मर्त्यः । यस्य प्रयांसि पर्षथ ॥ ७॥

सुऽभगः । सः । प्रऽयज्यवः । मरुतः । अस्तु । मर्त्यः । यस्य । प्रयांसि । पर्षथ ॥ ७॥

हे प्रयज्यवः प्रकर्षेण यष्टव्या मरुतः स मर्त्यो मनुष्यो यजमानः सुभगोऽस्तु । शोभनधनो भवतु । यस्य यजमानस्य प्रयांसि हविर्लक्षणान्यन्नानि पर्षथ आत्मनि सिंचथ । स्वीकुरुथेत्यर्थः ॥ सुभगः । भग इति धननाम । शोभनो भगो यस्य । क्रत्वादयश्चेत्युत्तरपदाद्युदात्तत्वं । पर्षथ । पृषु वृषु मृषु सेचने । भौवादिकः । यद्वृत्तान्नित्यमिति निघातप्रतिषेधः ॥

शशमानस्य वा नरः स्वेदस्य सत्यशवसः । विदा कामस्य वेनतः ॥ ८॥

शशमानस्य । वा । नरः । स्वेदस्य । सत्यऽशवसः । विद । कामस्य । वेनतः ॥ ८॥

हे सत्यशवसोऽवितथबला नरो नेतारो मरुतः शशमानस्य युष्मान्स्तुतिभिः संभजमानस्य स्वेदस्य स्तावकमंत्रोच्चारणजनितेन श्रमेण स्विद्यमानगात्रस्य वेनतः । वेनतिः कांतिकर्मा । कामयमानस्य । वाशब्दः समुच्चये एवंभूतस्य स्तोतुश्च कामस्य काममभिलाषं विद । लंभयत । प्रयच्छतेत्यर्थः ॥ शशमानस्य । शश प्लुतगतौ । ताच्छीलिकश्चानश् । स्वेदस्य । ञिष्विदा गात्रप्रक्षरणे । अंतर्भावितण्यर्थात्कर्मणि घञ् । ञित्वादाद्युदात्तत्वं । विद । विदॢ लाभे । लोटि मध्यमपुरुषबहुवचनस्य व्यत्ययेन ह्यादेशः । बहुलं छंदसीति विकरणस्य लुक् । ह्यस्यादादेशः । लोपस्त आत्मनेपदेष्विति तलोपः । प्रत्ययाद्युदात्तत्वं । पादादित्वान्निघाताभावः । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । कामस्य । वृषादिषु पाठादाद्युदात्तत्वं । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ॥

यूयं तत्सत्यशवस आविष्कर्त महित्वना । विध्यता विद्युता रक्षः ॥ ९॥

यूयं । तत् । सत्यऽशवसः । आविः । कर्त । महिऽत्वना । विध्यत । विऽद्युता । रक्षः ॥ ९॥

हे सत्यशवसः सत्यबला अन्यैरप्रधृष्यबला मरुतो यूयं तद्वृत्रवधादिषु प्रसिद्धं युष्मदीयं माहात्म्यमाविष्कर्त । आविष्कुरुत । प्रकाशयत । विद्युता विद्योतमानेन महित्वना तेन महत्त्वेन माहात्म्येन रक्षोऽस्माकमुपद्रवकारिणं राक्षसादिकं विध्यत । ताडयत । नाशयतेत्यर्थः ॥ कर्त । करोतेर्लोटि बहुलं छंदसीति विकरणस्य लुक् । तप्तनप्तनथनाश्चेति तबादेशः । गुणः । इदुदुपधस्य चाप्रत्ययस्य । पा० ८. ३. ४१. । इत्याविःशब्दे विसर्जनीयस्य षत्वं । महित्वना । भावप्रत्ययादुत्तरस्याङो व्यत्ययेन नाभाव उदात्तत्वं च । यद्वा । सुपां सुलुगिति तृतीयाया

आजादेशो नकारोपजनश्च । विध्यत । व्यध ताडने । ग्रहिज्यादिना संप्रसारणं । तशब्दस्य सार्वधातुकमपिदिति ङित्त्वे सति रूचि तुनुघमक्षुतङ्क्षिति संहितायां दीर्घः ॥

गूहता गुह्यं तमो वि यात विश्वमत्रिणं । ज्योतिष्कर्ता यदुश्मसि ॥ १० ॥

गूहत । गुह्यं । तमः । वि । यात । विश्वं । अत्रिणं । ज्योतिः । कर्त । यत् । उश्मसि ॥ १० ॥

हे मरुतो गुह्यं गुहायां स्थितं सर्वत्र व्याप्य वर्तमानं तमोऽंधकारं गूहत । संवृतं कुरुत । यथास्माभिर्न दृश्यते तथादर्शनं प्रापयत । विनाशयतेत्यर्थः । विश्वं सर्वमत्रिणमत्तारं राक्षसादिकं वि यात । विविधं यापयत । अस्मत्सकाशान्निर्गमयत । यज्ज्योतिः सूर्यादिकं वयमुश्मसि कामयामहे तत्कर्त । कुरुत । यद्वा । गुह्यं गुहायां शरीरांतर्गतगुहारूपे हृदये भवं तमो भावरूपाज्ञानं । तद्गूहत । विनाशयत । अत्रिणं पुरुषार्थस्यात्तारं कामक्रोधादिकं सर्वं विनिर्गमयत । यज्ज्योतिः परतत्त्वसाक्षात्काररूपं ज्ञानं कामयामहे प्राणापानादिपंचवृत्तिरूपा हे मरुतस्तत्कर्त । कुरुत ॥ गूहत । गुहू संवरणे । शपि लघूपधगुण ऊदुपधाया गोहः । पा० ६. ४. ८९. । इत्युपधाया ऊकारः । यात । या प्रापणे । अस्मादंतर्भावितण्यर्थाल्लोट् । अत्रिणं । अदेस्त्रिनि च । उ० ४. ६८. । इति त्रिनिप्रत्ययः । उश्मसि । वश कांतौ । इदंतो मसिः । अदादित्वाच्छपो लुक् । ग्रहिज्यादिना संप्रसारणं ॥ ॥ १२ ॥

प्रत्वक्षस इति षडृचं तृतीयं सूक्तं गोतमस्यार्षं जागतं मारुतं । तथा चानुक्रांतं । प्रत्वक्षसः षड्जागतमिति ॥ अग्निष्टोम आग्निमारुतशस्त्र इदं सूक्तं मारुतनिविद्धानं । अथ यथेतमिति खंडे सूचितं । प्रत्वक्षसः प्रतवसो यज्ञा यज्ञा वो अग्नये । आ० ५. २०. । इति ॥

प्रत्वक्षसः प्रतवसो विरप्शिनोऽनानता अविथुरा ऋजीषिणः ।
जुष्टतमासो नृतमासो अंजिभिर्व्यानज्रे के चिदुस्रा इव स्तृभिः ॥ १ ॥

प्रऽत्वक्षसः । प्रऽतवसः । विऽरप्शिनः । अनानताः । अविथुराः । ऋजीषिणः ।
जुष्टऽतमासः । नृऽतमासः । अंजिऽभिः । वि । आनज्रे । के । चित् । उस्राःऽइव ।
स्तृऽभिः ॥ १ ॥

प्रत्वक्षसः शत्रूणां प्रकर्षेण तनूकर्तारः । शत्रुघातिन इत्यर्थः । यतः प्रतवसः प्रकृष्टबलोपेता अत एव विरप्शिनो विविधेन जयघोषेणोपेताः । यद्वा । महन्नामैतत् । महांतो हि विविधैः शब्दैः प्रशस्यंते । अत एवानानता आनतिरहिताः । सर्वोत्कृष्टा इत्यर्थः । अविथुरा अवियुक्ताः । सप्तगणरूपेण संघीभूता इत्यर्थः । ऋजीषिणः । तृतीयसवने ऋजीषस्याभिषवात् तत्र च मरुतः स्तूयंत इति तेषामृजीषित्वं । यद्वा । ऋजीषिणः प्रार्जयितारो रसानां । जुष्टतमासोऽतिशयेन यष्टृभिः सेविताः नृतमासोऽतिशयेन मेघादेर्नेतारः एवंभूता मरुतः स्तृभिः स्वशरीरस्याच्छादकैरंजिभी रूपाभिव्यंजकैराभरणैर्व्यानज्रे । नभसि व्यक्ता दृश्यंते । तत्र दृष्टांतः । के चिदुस्रा इव । ये केचन सूर्यरश्मयो यथा नभसि दीप्यंते तद्वत् ॥ प्रत्वक्षसः । प्रकर्षेण त्वक्षंते तनूकुर्वंतीति प्रत्वक्षसः । तक्षू त्वक्षू तनूकरणे । गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेत्यसुन् पूर्वपदप्रकृतिस्वरत्वं च । प्रतवसः । तव इति बलनाम । प्रकृष्टं तवो येषां । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । विरप्शिनः । रप लप जल्प व्यक्तायां वाचि । विरपणं विरप्शः । औणादिकः शक्प्रत्ययः । तद्वंतो विरप्शिनः । अनानताः । आनता अवनताः प्रह्वीभूताः । न आनता अनानताः । अव्ययपूर्वपदप्रकृतिस्वरत्वं । अविथुराः । व्यथ भयचलनयोः । व्यथेः संप्रसारणं धः किच्च । उ० १. ४०. । इत्युरच्प्रत्ययः । अत्र तु बहुलवचनाज्झत्वं न क्रियते । पूर्ववत्समासस्वरौ । जुष्टतमासः । नित्यं मंत्र इति जुष्टशब्द आद्युदात्तः । तत आतिशायनिकस्य तमपः पित्त्वादनुदात्तत्वे स एव स्वरः शिष्यते । आनज्रे । अन्जू व्यक्तिम्रक्षणकांतिगतिषु । कर्मणि छंदसि लुङ्लङ्लिट इति वर्तमाने लिट् । अत आदेरित्यभ्यासस्यात्वं । तस्मान्नुड्द्विहलः । पा० ७. ४. ७१. । इति नुट् । व्यत्ययेनोपधालोपः । इरयो रे । स्तृभिः । स्तृञ् आच्छादने । क्विप् । आगमानुशासनस्यानित्यत्वात्तुगभावः ॥

उपह्वरेषु यदचिध्वं ययिं वय इव मरुतः केन चित्पथा ।
श्चोतंति कोशा उप वो रथेष्वा घृतमुक्षता मधुवर्णमर्चते ॥ २ ॥
उपऽह्वरेषु । यत् । अचिध्वं । ययिं । वयःऽइव । मरुतः । केन । चित् । पथा ।
श्चोतंति । कोशाः । उप । वः । रथेषु । आ । घृतं । उक्षत । मधुऽवर्णं । अर्चते ॥ २ ॥

हे मरुत उपह्वरेषूपह्वर्तव्येषु गंतव्येष्वस्माकं संनिकृष्टेषु नभसः प्रदेशेषु यद्यदा ययिं गतिमंतं मेघमचिध्वं वर्षणसामर्थ्येनोपचितं कुरुथ । किं कुर्वंतः । वय इव पक्षिण इव केन चित्पथा केनचिदाकाशमार्गेण शीघ्रं गच्छंतः । नभसि शीघ्रं वर्षणार्थं प्रवर्तमानैर्मरुद्भिर्मेघा उपचीयंत इत्यर्थः । तदानीं कोशाः । मेघनामैतत् । वो युष्माकं रथेष्वासक्ता मेघाः श्चोतंति । जलं मुंचंति । यस्मादेवं तस्मात् हे मरुतो यूयमर्चते युष्मान् हविर्भिः पूजयते मह्यं यजमानाय मधुवर्णं मधुसदृशरूपं स्वच्छं घृतं वृष्ट्युदकमा समंतादुक्षत । सिंचत । अस्मदभिलषितां वृष्टिं कुरुतेत्यर्थः ॥ उपह्वरेषु । ह्वृ कौटिल्ये । उपह्वरंति कौटिल्येन तिर्यग्गच्छंत्येष्वित्युपह्वरा नभःप्रदेशाः । पुंसि संज्ञायां घः प्रायेणेत्यधिकरणे घः । अचिध्वं । चिनोतेर्वर्तमाने लङ् । बहुलं छंदसीति विकरणस्य लुक् । ययिं । या प्रापणे । आदृगमहनजन इति किप्रत्ययः । पथा । आङि भस्य टेर्लोप इति टिलोपः । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं । श्चोतंति । श्चुतिर् क्षरणे । छांदसो यलोपः । उक्षत । उक्ष सेचने । लोटि तशब्दस्य ङित्त्वे सति ऋचि तुनुघेत्यादिना सांहितिको दीर्घः ॥

प्रैषामज्मेषु विथुरेव रेजते भूमिर्यामेषु यद्ध युंजते शुभे ।
ते क्रीळयो धुनयो भ्राजदृष्टयः स्वयं महित्वं पनयंत धूतयः ॥ ३ ॥
प्र । एषां । अज्मेषु । विथुराऽइव । रेजते । भूमिः । यामेषु । यत् । ह । युंजते । शुभे ।
ते । क्रीळयः । धुनयः । भ्राजत्ऽऋष्टयः । स्वयं । महिऽत्वं । पनयंत । धूतयः ॥ ३ ॥

यद्ध यदा खल्वेते मरुतः शुभे शोभनाय वृष्ट्युदकाय युंजते मेघान् सज्जीकुर्वंति तदानीमज्मेषु मेघानामुत्क्षेपकेष्वेषां मरुतां संबंधिषु यामेषु मेघानां नियमनेषु सत्सु भूमिः पृथिवी प्र रेजते । प्रकर्षेण कंपते । यद्वा । यदा खलु मरुतः स्वकीयान्रथान्युंजते अश्वैर्योजयंति तदानीमेषां रथानां संबंधिषु पर्वतादेरुत्क्षेपकेषु यामेषु गमनेषु भूमिर्भीत्या कंपते । तत्र दृष्टांतः । विथुरेव । यथा भर्त्रा वियुक्ता जाया राजोपद्रवादिषु सत्सु निरालंबा सती कंपते तद्वत् । ते तादृशाः क्रीळयो विहारशीला धुनयश्चलनस्वभावा भ्राजदृष्टय दीप्यमानायुधा एवंभूता मरुतो धूतयः पर्वतादीन्धुन्वंतः संतो महित्वं स्वकीयं महिमानं स्वयमेव पनयंत । व्यवहरंति । प्रकटयंतीत्यर्थः ॥ अज्मेषु । अज गतिक्षेपणयोः । अर्तिस्तुस्वित्यादिना विधीयमानो मन् ब[illegible]पि द्रष्टव्यः । वलादावार्धधातुके विकल्प इष्यते । का॰ २. ४. ५६. २. । इति वचनादजेर्व्यघञपोरिति वीभावाभावः । नित्त्वादाद्युदात्तत्वं । रेजते । रेजृ कंपने । भ्यसते रेजत इति भयवेपनयोरिति यास्कः । नि॰ ३. २१. । यामेषु । यम उपरमे । भावे घञ् । कर्षात्वत इत्यंतोदात्तत्वे प्राप्ते वृषादिषु पाठादाद्युदात्तत्वं । यद्वा । या प्रापण इत्यस्मादर्तिस्तुस्वित्यादिना मन्प्रत्ययः । शुभे । शुभ दीप्तौ । संपदादिलक्षणः कर्मणि क्विप् । सावेकाच इति विभक्तेरुदात्तत्वं । पनयंत । पन व्यवहारे । गुपूधूप[illegible] । पा॰ ३. १. २८. । अस्माच्छांदसो लङ् । व्यत्ययेन ह्रस्वत्वं ॥

स हि स्वसृ[illegible]षदश्वो युवा गणो३ऽया ईशानस्तविषीभिरावृतः ।
असि सत्य ऋणयावानेद्योऽस्या धियः प्राविताथा वृषा गणः ॥ ४ ॥
सः । हि । स्वऽसृत् । पृषत्ऽअश्वः । युवा । गणः । अया । ईशानः । तविषीभिः । आऽवृतः ।
असि । सत्यः । ऋणऽयावा । अनेद्यः । अस्याः । धियः । प्रऽअविता । अथ । वृषा । गणः ॥ ४ ॥

स हि स खलु मरुद्गणोऽया अस्य सर्वस्य जगत ईशान ईश्वरशीलो भवति। कीदृशः। स्वसृत् स्वयमेव सरन्। न ह्यन्यः कश्चिदस्य मरुद्गणस्य प्रेरकोऽस्ति। पृषदश्वः। पृषत्यः श्वेतविंदुंकिता मृग्योऽश्वस्थानीया यस्य स तथोक्तः। युवा नित्यतरुणः तविषीभिरन्येषामसाधारणैर्बलैरावृतः परिवेष्टितः सत्यः सत्कर्मार्हः ऋणयावा स्तोतॄणामृणस्यापगमयिता। बहुलस्य धनस्य दातित्यर्थः। अनेद्यः। प्रशस्यनामैतत्। सर्वैरनिंदितः वृषा जलानां वर्षिता। एवंभूतो मरुद्गणोऽस्यां धियोऽस्मदीयस्यास्य कर्मणोऽथानंतरं प्राविताअसि। प्रकर्षेण रक्षिता भवति॥ अया। सुपां सुलुगिति षष्ठ्या याजादेशः। हलि लोपः। पा० ७. २. ११३.। इतीदम इद्रूपस्य लोपः। ईशानः। ईश ऐश्वर्य इत्यस्मात्ताच्छीलिकश्चानश्। तस्य लसार्वधातुकत्वाभावेन चित्स्वरेणांतोदात्तत्वं। अया ईशान इत्यत्रैषाअचादित्वात्प्रकृतिभावः। असि। पुरुषव्यत्ययः। ऋणयावा। या प्रापण इत्यस्मादंतर्भावितण्यर्थादातो मनिन्निति वनिप्। अनेद्यः। णिदि कुत्सायां। ऋहलोर्ण्यदिति ण्यत्। आगमानु[illegible]-त्वान्नुमभावे लघूपधगुणः। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं॥

पितुः प्रत्नस्य जन्मना वदामसि सोमस्य जिह्वा प्र जिगाति चक्षसा।
यदीमिंद्रं शम्यृक्वाण आशतादिन्नामानि यज्ञियानि दधिरे ॥५॥

पितुः। प्रत्नस्य। जन्मना। वदामसि। सोमस्य। जिह्वा। प्र। जिगाति। चक्षसा।
यत्। ईं। इंद्रं। शमि। ऋक्वाणः। आशत। आत्। इत्। नामानि। यज्ञियानि। दधिरे॥५॥

प्रत्नस्य चिरंतनस्य पितुरस्माकं जनकस्य रहूगणस्य सकाशाद्यज्जन्म तेन वयं वदामसि। ब्रूमः। वक्ष्यमाणं वृत्तांतमस्माकं पितोपदिष्टवान् अतो वयं ब्रूम इत्यर्थः। कोऽसौ वृत्तांत इति चेत् उच्यते। सोमस्य यज्ञेष्वभिषुतस्य सोमद्रव्यस्य चक्षसा प्रकाशमानयाकृत्या सहिता जिह्वा स्तुतिरूपा वाक् प्र जिगाति। मरुद्गणं प्रकर्षेण गच्छति। यज्ञेषु सोमाकृतिः स्तुतिश्च मरुद्भ्यः क्रियते। यस्मादीमेनमिंद्रं शमि वृत्रवधादिरूपे कर्मणि ऋक्वाणः प्रहर भगवो जहि वीरयस्वेत्येवंरूपया स्तुत्या युक्ताः संत आशत प्राप्नुवन् न पर्यत्याक्षुः आदित् एवमिंद्रप्राप्त्यनंतरमेव यज्ञियानि यज्ञार्हाणीदृङ् चान्यादृङ् चेत्येवमादीनि नामानींद्रसकाशाल्लब्ध्वा दधिरे। धृतवंतः। तस्मादेषां यज्ञे सोमाकृतिः स्तुतिश्च क्रियते॥ शमि। शमीति कर्मनाम। सप्तम्येकवचने छांदस ईकारलोपः। ऋक्वाणः। ऋच स्तुतौ। संपदादिलक्षणो भावे क्विप्। छंदसीवनिपाविति मत्वर्थीयो वनिप्। अंत्यविकारश्छांदसः। यद्वा। अयस्मयादिषु क्वचिदुभयं भवति। का० १. ४. २०.। इत्युक्तत्वात् स सुष्टुभा स ऋक्वतेत्यादाविव पदत्वात्कुत्वं भत्वाज्जश्त्वाभावः। आशत। लङि बहुलं छंदसीति विकरणस्य लुक्। यज्ञियानि। यज्ञर्त्विग्भ्यां घखञाविति तदर्हार्थे घः॥

श्रियसे कं भानुभिः सं मिमिक्षिरे ते रश्मिभिस्त ऋक्वभिः सुखादयः।
ते वाशीमंत इष्मिणो अभीरवो विद्रे प्रियस्य मारुतस्य धाम्नः ॥६॥

श्रियसे। कं। भानुऽभिः। सं। मिमिक्षिरे। ते। रश्मिऽभिः। ते। ऋक्वऽभिः। सुऽखादयः।
ते। वाशीऽमंतः। इष्मिणः। अभीरवः। विद्रे। प्रियस्य। मारुतस्य। धाम्नः ॥६॥

ते पूर्वोक्ता मरुतो भानुभिर्भानुभि[illegible]मानैः सूर्यरश्मिभिः सह कं वृष्ट्युदकं श्रियसे श्रयितुं प्राणिभिः सेवितुं सं मिमिक्षिरे। सम्यग्मेढुमिच्छंति। पृथिवीं वृष्ट्युदकेन सम्यक् सेक्तुमिच्छंति। एवं [illegible] ते मरुत ऋक्वभिः स्तुतिमद्भिरृत्विग्भिः सह सुखादयः शोभनस्य हविषो भक्षयितारो भवंति। वाशीमंतः। वाशीति वाङ्नाम। शोभनया स्तुतिलक्षणया वाचोपेताः इष्मिणो गतिमंतः अभीरवो भयरहितास्ते मरुतः प्रियस्य सर्वाभिमतस्य मारुतस्य मरुत्संबंधिनो धाम्नः स्थानस्य सर्वाभिमतं मरुत्संबद्धं विशिष्टं स्थानं विद्रे। लब्धवंतः॥ श्रियसे। तुमर्थे सेसेनिति कसेन्प्रत्ययः। मिमिक्षिरे। मिह सेचने। अस्मादिच्छासनंताल्लिट्यमंत्र इति निषेधादामभावः। व्यत्ययेनात्मनेपदं। सुखादयः। खादृ भक्षणे। औणादिक इप्रत्ययः। शोभना खादिर्भक्षणं येषां।

नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। इष्मिणः। इष गतौ। इषियुधींधीत्यादिना मक्। ततो मत्वर्थीय इनिः। विद्रे। विद्लृ लाभे। लिटि द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यमिति द्विर्वचनाभावः। इरयो र इतीरयो रेभावः॥ ॥१३॥

आ विद्युन्मद्भिरिति षडृचं चतुर्थं सूक्तं। अत्रानुक्रम्यते। आ विद्युन्मद्भिराद्यांत्ये प्रस्तारपंक्ती पंचमी विराड्रूपेति। पूर्ववदृषिदेवते। आद्या षष्ठी च द्वे प्रस्तारपंक्ती। आद्यौ पादौ जागतौ तृतीयचतुर्थौ गायत्रौ यस्याः सा प्रस्तारपंक्तिः। सूत्रितं च। प्रस्तारपंक्तिः पुरतः। पिं॰ ३. ४०.। इति। अस्यायमर्थः। जागतौ गायत्रौ चेत्यनुवर्तते। यदि पुरतः पुरस्ताद्द्वौ जागतौ पादौ स्यातामंत्यौ गायत्रौ सा प्रस्तारपंक्तिरिति। एतत्त्यदित्येषा पंचमी विराड्रूपा। आदितस्त्रयः पादा एकादशका अंत्योऽष्टकः सा विराड्रूपेत्युच्यते॥ विनियोगो लैंगिकः॥

आ विद्युन्मद्भिर्मरुतः स्वर्कै रथेभिर्यात ऋष्टिमद्भिरश्वपर्णैः।
आ वर्षिष्ठया न इषा वयो न पप्तता सुमायाः॥१॥
आ। विद्युन्मत्ऽभिः। मरुतः। सुऽअर्कैः। रथेभिः। यात। ऋष्टिमत्ऽभिः। अश्वऽपर्णैः।
आ। वर्षिष्ठया। नः। इषा। वयः। न। पप्तत। सुऽमायाः॥१॥

हे मरुतः। मितं निर्मितमंतरिक्षं प्राप्य रुवंति शब्दं कुर्वंतीति मरुतः। यद्वा। अमितं भृशं शब्दकारिणः। अथवा मितं स्वैर्निर्मितं मेघं प्राप्य विद्युदात्मना रोचमानाः। अथवा महत्यंतरिक्षे द्रवंतीति मरुतः। ये मध्यमस्थाने देवगणाः समाम्नातास्ते सर्वे मरुत आख्यायंते। तथा चाहुः। सर्वा स्त्री मध्यमस्थाना पुमान् वायुश्च सर्वगः। गणाश्च सर्वे मरुत इति वृद्धानुशासनमिति। पौराणिकास्त्वाचक्षते। मारीचात्कश्यपात्सप्तगणात्मका एकोनपंचाशत्संख्याका मरुतो जज्ञिर इति। एवंभूता हे मरुतो रथेभिरात्मीयै रथैरा यात। अस्मदीय यज्ञमागच्छत। कीदृशै रथैः। विद्युन्मद्भिः। विद्योतनं विद्युत्। विशिष्टदीप्तियुक्तैः स्वर्कैः स्वर्चनैः शोभनगमनयुक्तैः। यद्वा। शोभनमर्कोऽर्चनं स्तुतिर्येषामस्ति तादृशैः। अथवा शोभनदीप्तियुक्तैः। ऋष्टिमद्भिः। ऋष्टयः शक्तिरूपाण्यायुधानि। स्थूणा इत्यन्ये। तद्वद्भिः। अश्वपर्णैः। अश्वानां पतनं गमनं येषामस्ति तादृशैः। यद्वा। रंहणशीला मेघा रथाः। तैः सहांतरिक्षे वर्षणार्थमागच्छत। कीदृशैः। विद्युन्मद्भिः। विद्युता तडिता तद्वद्भिः स्वर्कैः शोभनगमनैः ऋष्टिमद्भिः। अर्षणं गमनं। तत्स्वभावनीरयुक्तैः। अश्वपर्णैः। अश्वं व्याप्तं पर्णं पतनं गमनं येषां। अंतरिक्षं व्याप्य वर्तमानैरित्यर्थः। हे सुमायाः। मायेति कर्मणो ज्ञानस्य च नामधेयं। शोभनकर्माणः शोभनप्रज्ञा वा मरुतो वर्षिष्ठया प्रवृद्धतरयेषास्मभ्यं दातव्येनान्नेन सह नोऽस्मान्प्रति वयो न पक्षिण इव शीघ्रमा पप्तत। आपतत। आगच्छतेत्यर्थः। अत्र निरुक्तं। अथातो मध्यस्थाना देवगणास्तेषां मरुतः प्रथमागामिनो भवंति। मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवंतीति वेति। विद्युन्मद्भिर्मरुतः स्वर्कैः स्वंचनैरिति वा स्वर्चनैरिति वा स्वर्चिभिरिति वा रथैरायात ऋष्टिमद्भिरश्वपर्णैरश्वपतनैर्वर्षिष्ठेन च नोऽन्नेन वय इवापतत सुमायाः कल्याणकर्माणो वा कल्याणप्रज्ञा वा। नि॰ ११. १३–१४.। इति॥ विद्युन्मद्भिः। यवादेराकृतिगणत्वेन विद्युच्छब्दस्य यवाद्यंतर्भावाद्यवादिभ्य इत्यत्रानुवृत्तेर्ज्ञेयः। पा॰ ८. २. १०.। इति मतुपो वत्वं न प्रवर्तते। ऋष्टिमद्भिः। ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं। अश्वपर्णैः। अशू व्याप्तौ। अशिप्रुषीत्यादिना क्वन्प्रत्ययः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। वर्षिष्ठया। वृद्धशब्दादातिशायनिक इष्ठनि प्रियस्थिरेत्यादिना वर्षादेशः। पप्तत। पत्लृ गतौ। लुङि लृदित्त्वात् च्लेरङादेशः। पतः पुम्। पा॰ ७. ४. १९.। इति पुमागमः॥

तेऽरुणेभिर्वरमा पिशंगैः शुभे कं यांति रथतूर्भिरश्वैः।
रुक्मो न चित्रः स्वधितीवान्पव्या रथस्य जंघनंत भूम॥२॥
ते। अरुणेभिः। वरं। आ। पिशंगैः। शुभे। कं। यांति। रथतूःऽभिः। अश्वैः।
रुक्मः। न। चित्रः। स्वधितिऽवान्। पव्या। रथस्य। जंघनंत। भूम॥२॥

ते पूर्वोक्ता मरुतोऽरुणेभिररुणवर्णैः पिशंगैः पिंगलवर्णैरुभयवर्णोपेतै रथतूर्भी रथस्य प्रेरयितृभिरश्वैर्वरं देवानां वरीतारं कं शब्दयितारं स्तुवंतं यजमानमा यांति। आगच्छंति। किमर्थं। शुभे तस्य शोभां कर्तुं। अथवा शुभ उदकाय। वृष्ट्यर्थमित्यर्थः। तेषां मरुतां गणो रुक्मो न रोचमानं सुवर्णमिव चित्रोऽतिशयेन दर्शनीयः स्वधितीवान्। स्वधितिरिति वज्रनाम। शत्रूणां खंडकेनायुधेनोपेतः। एवंविधगणरूपास्ते मरुतो रथस्य पव्या चक्रधारया भूम भूमिं जंघनंत। अत्यर्थं घ्नंति। स्तोतृरक्षणार्थमागतानां तेषां मरुतां भारमसहमाना भूमिरतिपीडिता बभूवेत्यर्थः॥ वरं। व्रियंते देवा अनेनेति वरः। ग्रहवृदृनिश्चिगमश्चेति करणेऽप्। कं। कै गै शब्दे। कायतीति कः। बहुलवचनात्कप्रत्ययः। रथतूर्भिः। तुर त्वरणे। रथं तुतुरति त्वरायुक्तं कुर्वंतीति रथतुरः। क्विप्चेति क्विप्। भिसि हलि चेति दीर्घत्वं। पव्या। पवी रथनेमिर्भवतीति यास्कः। नि० ५.५.। पूङ् पवने। अस्मादच इतीप्रत्ययः। उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं। जंघनंत। हंतेर्यङंताद्वर्तमाने छांदसो लङ्। छंदस्युभयथेत्यार्धधातुकत्वादतोलोपयलोपौ। भूम। भूमिशब्दादुत्तरस्यामः सुपां सुलुगिति डादेशः। छांदसं ह्रस्वत्वं॥

श्रिये कं वो अधि तनूषु वाशीर्मेधा वना न कृणवंत ऊर्ध्वा।
युष्मभ्यं कं मरुतः सुजातास्तुविद्युम्नासो धनयंते अद्रिं॥३॥
श्रिये। कं। वः। अधि। तनूषु। वाशीः। मेधा। वना। न। कृणवंते। ऊर्ध्वा।
युष्मभ्यं। कं। मरुतः। सुऽजाताः। तुविऽद्युम्नासः। धनयंते। अद्रिं॥३॥

हे मरुतो वो युष्माकं तनूषु शरीरेष्वंसप्रदेशेषु वाशीः शत्रूणामाक्रोशकमाराख्यमायुधं श्रिये कमैश्वर्यार्थं वर्तत इति शेषः। कमित्येतत्पादपूरणं। तदुक्तं। अथापि पादपूरणाः कमीमिद्विति। तादृशा मरुतो वना न उच्छ्रितान्वृक्षसमूहानिव मेधा मेधान्यज्ञानूर्ध्वा ऊर्ध्वान् एकाहाहीनसत्ररूपेणोच्छ्रितान्कृणवंते। यजमानैः कारयंति। हे सुजाताः शोभनजननयुक्ता मरुतो युष्मभ्यं युष्मदर्थं कं सुखकरमद्रिं सोमाभिषवे प्रवृत्तं ग्रावाणं तुविद्युम्नासः प्रभूतधना यजमाना धनयंते। धनं कुर्वंति। युष्माकं यागाय ग्रावभिरभिषुण्वंतीत्यर्थः॥ वाशीः। शत्रूणां भयोत्पादनेनाक्रोशशब्दकरणं वाशः। ततश्छंदसीवनिपाविति मत्वर्थीय ईकारः। व्यत्ययेनाद्युदात्तत्वं। मेधा। सुपां सुलुगिति शसो डादेशः। वना। शेश्छंदसि बहुलमिति शेर्लोपः। कृणवंते। कृवि हिंसाकरणयोश्च। लटि व्यत्ययेनात्मनेपदं। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। पुनरपि व्यत्ययेनांतादेशः। छंदस्युभयथेत्यार्धधातुकत्वेन ङित्त्वाभावाद्गुणेऽवादेशः। ऊर्ध्वा। पूर्ववड्डादेशः। धनयंते। धनशब्दात्तत्करोतीति णिच्॥

अहानि गृध्राः पर्या व आगुरिमां धियं वार्कार्यां च देवीं।
ब्रह्म कृण्वंतो गोतमासो अर्कैरूर्ध्वं नुनुद्र उत्सधिं पिबध्यै॥४॥
अहानि। गृध्राः। परि। आ। वः। आ। अगुः। इमां। धियं। वार्कार्यां। च। देवीं।
ब्रह्म। कृण्वंतः। गोतमासः। अर्कैः। ऊर्ध्वं। नुनुद्रे। उत्सऽधिं। पिबध्यै॥४॥

तृषितैर्गोतमैः स्तुता मरुतस्तेभ्यो गोतमेभ्यो देशांतरे वर्तमानं कूपमुत्खायानीय प्रददुः। एतदृष्ट्वा कश्चिदृषिर्ब्रूते। हे गोतमा गृध्रा अन्नाभिकांक्षायुक्ता वो युष्मानहानि शोभनोदकोपेतानि दिनानि पर्यागुः। पर्यागतानि। परित आभिमुख्येन प्राप्तानि। प्राप्य च वार्कार्यां वार्भिरुदकैर्निष्पाद्यां धियं ज्योतिष्टोमादिलक्षणं कर्म च देवीं द्योतमानमकुर्वन्। येष्वहस्सु ब्रह्म हविर्लक्षणमन्नमर्कैर्मंत्रसाध्यैः स्तोत्रैः सह कृण्वंतो मरुद्भ्यः कुर्वंतो गोतमासो गोतमा ऋषय उत्सधिं। उत्सो जलप्रवाहोऽस्मिन्धीयत इत्युत्सधिः कूपः। तं पिबध्यै स्वकीयपानायोर्ध्वं नुनुद्रे नुनुदिरे देशांतरे वर्तमानं कूपमुत्खातवंतः। एतदीयस्तोत्रैः स्तुता मरुतः कूपमुत्खातवंत इति यत्तदेतदीयस्तोत्रकारितमित्येतेषूपचर्यंते॥ गृध्राः। गृधु अभिकांक्षायां। सुसूधागृधिभ्यः क्रन्निति क्रन्प्रत्ययः। सुपां सुपो भवंतीति शसो जस्। नित्त्वादाद्युदात्तत्वं। अगुः। एतेर्लुङीणो गा लुङीति गादेशः। आत इति

भ्रिर्जुस्। वार्कार्यां। डुकृञ् करणे। ऋहलोर्ण्यत्। वार्भिः कार्या वार्कार्या। चित्रकादित्वादुत्तरपदांतोदात्तत्वं। नुनुद्रे। णुद प्रेरणे। इरयो रे इति रेआदेशः। उत्सधिं। कर्मण्यधिकरणे चेति दधातेरधिकरणे किप्रत्ययः। पिबध्यै। पा पाने। तुमर्थे सेसेनिति शध्यैन्प्रत्ययः। पाघ्रेत्यादिना पिबादेशः॥

एतत्त्यन्न योजनमचेति सस्वर्ह यन्मरुतो गोतमो वः।
पश्यन्हिरण्यचक्रानयोदंष्ट्रान्विधावतो वराहून् ॥५॥
एतत्। त्यत्। न। योजनं। अचेति। सस्वः। ह। यत्। मरुतः। गोतमः। वः।
पश्यन्। हिरण्यऽचक्रान्। अयःऽदंष्ट्रान्। विऽधावतः। वराहून् ॥५॥

हे मरुत एतद्योजनं। युज्यतेऽनेन देवतेति योजनमेतत्सूक्तसाध्यं स्तोत्रं। त्यन्न त्यत् प्रसिद्धमन्यदुत्कृष्टं स्तोत्रमिवाचेति। सर्वैर्ज्ञायते। वो युष्मदर्थं यत् यदेतत्सूक्तरूपं स्तोत्रं गोतम ऋषिः सस्वर्ह उ॥ IKLLLL खलु। किं कुर्वन्। हिरण्यचक्रान् हिरण्मयचक्ररथारूढान् हितरमणीयकर्मयुक्तान्वायोदंष्ट्रान्। दशतीति दंष्ट्रा चक्रधारा। अयोमयीभिश्चक्रधाराभिर्युक्तान्। यद्वा। दंशनसाधना ऋष्टयो दंष्ट्राः। अयोमया ऋष्टयो येषां। तान्विधावतो विविधमितस्ततः प्रवर्तमानान्वराहून् वरस्योत्कृष्टस्य शत्रोर्हर्तॄन्। यद्वा। उत्कृष्टस्य वृष्ट्युदकस्याहर्तॄन्। अथवा उत्कृष्टानां देवतानामाह्वातॄन् वरस्य हविषो भक्षयितॄन्वा। एवंभूतान्मरुतः पश्यन् सम्यग्जानन् गोतमो यत्स्तोत्रं कृतवान् तदेतत्सर्वोत्कृष्टं सदस्माभिः सर्वैरुपलभ्यत इत्यर्थः। अत्र निरुक्तं। अथाप्येते माध्यमका देवगणा वराहव उच्यंते पश्यन्हिरण्यचक्रान्। नि॰ ५. ४.। इति॥ अचेति। चिती संज्ञाने। छांदसो वर्तमाने कर्मणि लुङ्। सस्वः। स्वृ शब्दोपतापयोः। लङि तिपि बहुलं छंदसीति शपः श्लुः। गुणे हल्ङ्याब्भ्य इति तल्लोपः। धातुस्वरेणांतोदात्तत्वं। वराहून्। वरशब्दोपपदादाङ्पूर्वाद्धंतेर्वा हरतेर्वा ह्वयतेर्वा जुहोतेरदनार्थाद्वा। हु इत्येतस्य निष्पत्तिरिति स्कंदस्वामी। अस्य पृषोदरादित्वादभिमतसिद्धिः॥

एषा स्या वो मरुतोऽनुभर्त्री प्रति ष्टोभति वाघतो न वाणी।
अस्तोभयद्वृथासामनु स्वधां गभस्त्योः ॥६॥
एषा। स्या। वः। मरुतः। अनुऽभर्त्री। प्रति। स्तोभति। वाघतः। न। वाणी।
अस्तोभयत्। वृथा। आसां। अनु। स्वधां। गभस्त्योः ॥६॥

हे मरुतः स्या सैषास्मदीया स्तुतिर्वो युष्माकमनुभर्त्री युष्माननुहरंती युष्मद्गुणसदृशी प्रति ष्टोभति। प्रत्येकं स्तौति। स्तोभतिः स्तुतिकर्मा। तथा वाघतो न वाणी। नशब्दः संप्रत्यर्थे। तदुक्तं यास्केन। अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोगः। नि॰ ७. ३१.। इति। इदानीमृत्विक्संबंधिनी वागपि वृथानायासेनासामाभिर्ऋग्भिरस्तोभयत्। अस्तौत्। इदानीमित्युक्ते कदेत्याह। गभस्त्योरस्मदीययोर्बाह्वोः स्वधां। अन्ननामैतत्। यदा बहुविधमन्नं मरुतः स्थापयंति। तामनुलक्ष्येत्यर्थः॥ अनुभर्त्री। हृञ् हरणे। तृच्। ऋन्नेभ्य इति ङीप्। उदात्तयणो हल्पूर्वादिति नद्या उदात्तत्वं॥ ॥१४॥

आ नो भद्रा इति दशर्चं पंचमं सूक्तं। गोतमस्यार्षं वैश्वदेवं। आदितः पंचर्चः सप्तमी च जगत्यः षष्ठी स्वस्ति न इंद्रेत्येषा विराट्स्थाना। नवकौ वैराजस्त्रैष्टुभश्च। अनु॰ ९. ५.। इत्युक्तलक्षणयोगात्। अष्टम्याद्यास्तिस्रस्त्रिष्टुभः। तथा चानुक्रांतं। आ नो दश वैश्वदेवं तु पंचाद्याः सप्तमी च जगत्यः षष्ठी विराट्स्थानेति॥ अग्निष्टोमे वैश्वदेवशस्त्र उत्तमावर्जमेतत्सूक्तं वैश्वदेवनिविद्धानीयं। सा तु प्रकृतौ विकृतौ च वैश्वदेवशस्त्रस्य परिधानीया। तथा च सूचितं। आ नो भद्राः क्रतवो यंतु विश्वत इति नव वैश्वदेवं। आ॰ ५. १८.। इति। अदितिर्द्यौरदितिरंतरिक्षमिति परिदध्यात्सर्वत्र वैश्वदेवे। आ॰ ५. १८.। इति च। ब्राह्मणं च भवति। सदैव पंचजनीयया परिदध्यात्। ऐ॰ ब्रा॰ ३. ३१.। इति॥ महाव्रते निष्केवल्य एतत्सूक्तं। तथा च पंचमारण्यके सूत्र्यते। आनोभद्रीयं च तस्य स्थाने। ऐ॰ आ॰ ५. ३. २.। इति॥

आ नो भद्राः क्रतवो यंतु विश्वतोऽदब्धासो अपरीतास उद्भिदः।
देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवेदिवे ॥१॥
आ। नः। भद्राः। क्रतवः। यंतु। विश्वतः। अदब्धासः। अपरिऽइतासः। उत्ऽभिदः।
देवाः। नः। यथा। सदं। इत्। वृधे। असन्। अप्रऽआयुवः। रक्षितारः। दिवेऽदिवे ॥१॥

नोऽस्मान् क्रतवोऽग्निष्टोमादयो महायज्ञा विश्वतः सर्वस्मादपि दिग्भागादा यंतु। आगच्छंतु। कीदृशाः क्रतवः। भद्राः समीचीनफलसाधनत्वेन कल्याणा भजनीया वा अदब्धासोऽसुरैरहिंसिताः अपरीतासः शत्रुभिरपरिगताः। अप्रतिरुद्धा इत्यर्थः। उद्भिदः शत्रूणामुद्भेत्तारः। ईदृशाः क्रतवोऽस्मांस्तथागच्छंतु। अप्रायुवोऽप्रगच्छंतः स्वकीयं रक्षितव्यमपरित्यजंतः अत एव दिवे दिवे प्रतिदिवसं रक्षितारो रक्षां कुर्वंत एवंगुणविशिष्टाः सर्वे देवा नोऽस्माकं सदमित् सदैव वृधे वर्धनायासन्। भवंतु॥ अदब्धासः। दन्भु दंभे। दंभो हिंसा। निष्ठायां यस्य विभाषेतीट्प्रतिषेधः। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं। अपरीतासः। इण् गतौ। पूर्ववत्कर्मणि निष्ठा। उभयत्राज्जसेरसुक्। वृधे। वृधु वृद्धौ। संपदादिलक्षणो भावे क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं। असन्। अस भुवि। लेट्यडागमः। बहुलं छंदसीति शपो लुगभावः। तस्याङित्त्वात् श्नसोरल्लोप इत्यकारलोपाभावः। अप्रायुवः। इण् गतौ। अस्मात्प्रपूर्वाच्छंदसीण इत्युण्प्रत्ययः। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं। जसि जसादिषु च्छंदसि वावचनमिति गुणस्य विकल्पितत्वादभावे तन्वादित्वादुवङ्॥

देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्ततां।
देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्र तिरंतु जीवसे ॥२॥
देवानां। भद्रा। सुऽमतिः। ऋजुऽयतां। देवानां। रातिः। अभि। नः। नि। वर्ततां।
देवानां। सख्यं। उप। सेदिम। वयं। देवाः। नः। आयुः। प्र। तिरंतु। जीवसे ॥२॥

भद्रा सुखयित्री भजनीया वा देवानां सुमतिः शोभना मतिरनु[illegible] बुद्धिरस्माकमस्त्विति शेषः। कीदृशानां। ऋजूयतामृजुमार्जवयुक्तं सम्यगनुष्ठातारं यजमानमात्मन इच्छतां। तथा देवानां रातिर्दानं नोऽस्मानभिमुख्येन नितरां वर्ततां। तदभिमतफलप्रदानमप्यस्माकं भवत्वित्यर्थः। वयं च तेषां देवानां सख्यं सखित्वं सख्युः कर्म वोप सेदिम। प्राप्नुवाम। तादृशा देवा नो[illegible] युजीवसे जीवितुं प्र तिरंतु। वर्धयंतु॥ भद्रा। भदि कल्याणे सुखे च। [illegible]। उ० २. २८.। रन्प्रत्ययांतो निपातितः। ऋजूयतां। ऋजुमात्मन इच्छति ऋजूयति। सुप आत्मनः क्यच्। तदंताल्लटः शतृ। शतुरनुम इत्यजादिविभक्तेरुदात्तत्वं। रातिः। रा दाने। मंत्रे वृषेति क्तिन उदात्तत्वं। सख्यं। सख्युर्य इति भावे कर्मणि वा यप्रत्ययः। सेदिम। षद्लृ विशरणगत्यवसादनेषु। छंदसि लुङ्लङ्लिट इति वर्तमाने प्रार्थनायां लिट्। सत्वस्यानैमित्तिकत्वेन लिटि परत आदेशादित्वाभावादत एकहल्मध्य इत्येत्वाभ्यासलोपौ। अन्येषामपि दृश्यत इति संहितायां दीर्घत्वं। प्र तिरंतु। प्रपूर्वस्तिरतिर्वर्धनार्थः। तथा च यास्को व्याचख्यौ। देवानां सख्यमुपसीदेम वयं देवा न आयुः प्रवर्धयंतु चिरं जीवनाय। नि० १२. ३९.। इति॥

तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधं।
अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥३॥
तान्। पूर्वया। निऽविदा। हूमहे। वयं। भगं। मित्रं। अदितिं। दक्षं। अस्रिधं।
अर्यमणं। वरुणं। सोमं। अश्विना। सरस्वती। नः। सुऽभगा। मयः। करत् ॥३॥

तान्विश्वान्देवान्पूर्वया पूर्वकालीनया नित्यया निविदा [illegible] वाचा। निविदिति वाङ्नाम। यद्वा।

निविदा विश्वे देवाः सोमस्य मत्सन्नित्यादिकया वैश्वदेव्या निविदा वयं हूमहे । आह्वयामः । देवानिति यत्सामान्येनोक्तं तदेव विव्रियते । भगं भजनीयं द्वादशानामादित्यानामन्यतमं मित्रं प्रमीतेस्त्रायकमहरभिमानिनं देवं । मैत्रं वा अहः । तै० ब्रा० १. ७. १०. १. । इति श्रुतेः । अदितिमखंडनीयामदीनां वा देवमातरं दक्षं सर्वस्य जगतो निर्माणे समर्थं प्रजापतिं । यद्वा । प्राणरूपेण सर्वेषु प्राणिषु व्याप्य वर्तमानं हिरण्यगर्भं । प्राणो वै दक्ष इति श्रुतेः । अस्रिधं शोषणरहितं सर्वदैकरूपेण वर्तमानं मरुद्गणं । अर्यमणं । अरीन् मंदेहादीनसुरान्यच्छति नियच्छतीत्यर्यमा सूर्यः । असौ वा आदित्योऽर्यमेति श्रुतेः । तं । वरुणं । वृणोति पापकृतः स्वकीयैः पाशैरावृणोतीति राज्यभिमानिदेवो वरुणः । श्रूयते च । वारुणी रात्रिः । तै० ब्रा० १. ७. १०. १. । इति । सोमं द्वेधात्मानं विभज्य पृथिव्यां लतारूपेण दिवि च चंद्रात्मना देवतारूपेण वर्तमानं । अश्विनाश्ववंतौ । यद्वा । सर्वं व्याप्नुवंतौ । तथा च यास्कः । अश्विनौ यद्व्याश्नुवाते सर्वं रसेनान्यो ज्योतिषान्योऽश्वैरश्विनावित्यौर्णवाभस्तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचंद्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकाः । नि० १२. १. । इति । एवंभूतान् सर्वान्देवानस्मद्रक्षणार्थमाह्वयाम इति पूर्वत्र संबंधः । अस्माभिराहूता सुभगा शोभनधनोपेता सरस्वती नोऽस्मभ्यं मयः सुखं करत् । करोतु ॥ हूमहे । ह्वेञो लटि ह्व इत्यनुवृत्तौ बहुलं छंदसीति संप्रसारणं । परपूर्वत्वे हल इति दीर्घत्वं । बहुलं छंदसीति शपो लुक् । अस्रिधं । स्रिधु शोषणे । संपदादिलक्षणो भावे क्विप् । बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । मयस्करत् । करोतेर्लेट्यडागमः । बहुलं छंदसीति विकरणस्य लुक् । अतः कृकमीति विसर्जनीयस्य सत्वं ॥

**तन्नो वातो मयोभु वातु भेषजं तन्माता पृथिवी तत्पिता द्यौः ।**
**तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवं ॥ ४ ॥**
**तत् । नः । वातः । मयःऽभु । वातु । भेषजं । तत् । माता । पृथिवी । तत् । पिता । द्यौः ।**
**तत् । ग्रावाणः । सोमऽसुतः । मयःऽभुवः । तत् । अश्विना । शृणुतं । धिष्ण्या । युवं ॥ ४ ॥**

वातो वायुस्तद्भेषजमौषधं नोऽस्मान्वातु । प्रापयतु । यद्भेषजं मयोभु मयसः सुखस्य भावयितृ । माता सर्वेषां जननी पृथिवी भूमिरपि तद्भेषजमस्मान्प्रापयतु । पिता वृष्टिप्रदानेन सर्वेषां रक्षिता द्यौर्द्युलोकोऽपि तद्भेषजमस्मान्प्रापयतु । सोमसुतः सोमाभिषवं कृतवंतो मयोभुवो मयसो यागफलभूतस्य सुखस्य भावयितारो ग्रावाणोऽभिषवसाधनाः पाषाणाश्च तद्भेषजमस्मान्प्रापयंतु । हे धिष्ण्या । धिषणा बुद्धिः । तदर्हावश्विनौ युवं युवां तद्भेषजं शृणुतं । आकर्णयतं । यद्भेषजमस्माभिर्वाय्वादिषु प्रार्थ्यते । तद्भेषजं देवानां भिषजौ युवामस्माकमनुकूलं यथा भवति तथा जानीतमित्यर्थः ॥ मयोभु । ह्रस्वो नपुंसके प्रातिपदिकस्य । पा० १. २. ४७. । इति ह्रस्वत्वं । वातु । वा गतिगंधनयोः । अंतर्भावितण्यर्थात्प्रार्थनायां लोट् । सोमसुतः । सोमे सुञः । पा० ३. २. ९०. । इति भूते क्विप् । धिष्ण्या । धिषणाशब्दादर्हार्थे छंदसि चेति यः । वर्णलोपश्छांदसः । सुपां सुलुगित्याकारः ॥

**तमीशानं जगतस्तस्थुषस्पतिं धियंजिन्वमवसे हूमहे वयं ।**
**पूषा नो यथा वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ५ ॥**
**तं । ईशानं । जगतः । तस्थुषः । पतिं । धियंऽजिन्वं । अवसे । हूमहे । वयं ।**
**पूषा । नः । यथा । वेदसां । असत् । वृधे । रक्षिता । पायुः । अदब्धः । स्वस्तये ॥ ५ ॥**

पूर्वार्धेनेंद्रः स्तूयते अपरार्धेन पूषा । ईशानमैश्वर्यवंतं अत एव जगतो जंगमस्य प्राणिजातस्य तस्थुषः स्थावरस्य च पतिं स्वामिनं धियंजिन्वं धीभिः कर्मभिः प्रीणयितव्यं एवंभूतं तमिंद्रमवसे रक्षणाय वयं हूमहे । आह्वयामः । पूषा नोऽस्माकं वेदसां धनानां वृधे वर्धनाय रक्षिता यथासत् येन प्रकारेण भवति तेनैव प्रकारेणादब्धः केनाप्यहिंसितः पूषा स्वस्तयेऽस्माकमविनाशाय पायुः रक्षिता भवतु ॥ तस्थुषः । तिष्ठतेर्लिटः क्वसुः । षष्ठ्येकवचने वसोः संप्रसारणमिति संप्रसारणं । शासिवसिघसीनां चेति षत्वं । षष्ठ्याः पतिपुत्रेति

विसर्जनीयस्य सत्वं । धियंजिन्वं । जिवि: प्रीणनार्थः । छत्यल्युटो बहुलमिति बहुलवचनात्खच् । इच एकाचोऽम् प्रत्ययवच्च । पा॰ ६. ३. ६८. । इत्यमागमः । असत् । अस भुवि । लेख्यडागमः । बहुलं छंदसीति शपो लुगभावः । पायुः । पा रक्षणे । छवापाजीत्युण् । स्वस्तये । सुपूर्वादस्तेर्भावे क्तिन् । छंदस्युभयथेति तस्य सार्वधातुकत्वादस्तेर्भूः । पा॰ २. ४. ५२. । इति भूभावाभाव इति वृत्तावुक्तं ॥ ॥ १५ ॥

स्वस्ति न इंद्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥ ६ ॥
स्वस्ति । नः । इंद्रः । वृद्धऽश्रवाः । स्वस्ति । नः । पूषा । विश्वऽवेदाः ।
स्वस्ति । नः । तार्क्ष्यः । अरिष्टऽनेमिः । स्वस्ति । नः । बृहस्पतिः । दधातु ॥ ६ ॥

वृद्धश्रवा वृद्धं प्रभूतं श्रवः श्रवणं स्तोत्रं हविर्लक्षणमन्नं वा यस्य तादृश इंद्रो नोऽस्माकं । स्वस्तीत्यविनाशनाम । नि॰ ३. २१. । स्वस्त्यविनाशं दधातु । विदधातु । करोतु । विश्ववेदाः । विश्वानि वेत्तीति विश्ववेदाः । यद्वा । विश्वानि सर्वाणि वेदांसि ज्ञानानि धनानि वा यस्य । तादृशः पूषा पोषको देवो नोऽस्माकं स्वस्ति विदधातु । अरिष्टनेमिः । नेमिरित्यायुधनाम । अरिष्टोऽहिंसितो नेमिर्यस्य । यद्वा । रथचक्रस्य धारा नेमिः । यत्संबंधिनो रथस्य नेमिर्न हिंस्यते सोऽरिष्टनेमिः । एवंभूतस्तार्क्ष्यस्तृक्षस्य पुत्रो गरुत्मान् नोऽस्माकं स्वस्त्यविनाशं विदधातु । तथा बृहस्पतिर्बृहतां देवानां पालयिता नोऽस्माकं स्वस्त्यविनाशं विदधातु ॥ वृद्धश्रवाः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । विश्ववेदाः । विद ज्ञाने । विद्लृ लाभे । आभ्यामसुन्प्रत्ययांतो वेदस्शब्दः । बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं । तार्क्ष्यः । तृक्षस्यापत्यं । गर्गादिभ्यो यञ् । पा॰ ४. १. १०५. । ञित्वादाद्युदात्तत्वं । अरिष्टनेमिः । न रिष्टारिष्टा । अव्ययपूर्वपदप्रकृतिस्वरत्वं । अरिष्टा नेमिर्यस्य स तथोक्तः । बृहस्पतिः । तद्बृहतोः करपत्योः । पा॰ ६. १. १५७.* । इति सुट्तलोपौ । उभे वनस्पत्यादिष्विति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं ॥

पृषदश्वा मरुतः पृश्निमातरः शुभंयावानो विदथेषु जग्मयः ।
अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥ ७ ॥
पृषत्ऽअश्वाः । मरुतः । पृश्निऽमातरः । शुभंऽयावानः । विदथेषु । जग्मयः ।
अग्निऽजिह्वाः । मनवः । सूरऽचक्षसः । विश्वे । नः । देवाः । अवसा । आ ।
गमन् । इह ॥ ७ ॥

पृषदश्वाः । पृषद्भिः श्वेतबिंदुभिर्युक्ता अश्वा येषां ते तथोक्ताः । पृश्निमातरः । पृश्निर्नानावर्णा गौर्माता येषां । शुभंयावानः । शुभं शोभनं यांति गच्छंतीति शुभंयावानः । शोभनगतय इत्यर्थः । विदथेषु यज्ञेषु जग्मयो गंतारः अग्निजिह्वा अग्नेर्जिह्वायां वर्तमानाः । सर्वे हि देवा हविःस्वीकरणायाग्नेर्जिह्वायां वर्तंते । तात्स्थ्यात्ताच्छब्द्यं । मनवः सर्वस्य मंतारः सूरचक्षसः सूर्यप्रकाश इव चक्षः प्रकाशो येषां त एवंभूता मरुतो मरुत्संज्ञका विश्वे देवा सर्वे देवा नोऽस्मानिहास्मिन्कालेऽवसा रक्षणेन सह गमन् । आगच्छंतु ॥ शुभंयावानः । या प्रापणे । आतो मनिन्निति वनिप् । तत्पुरुषे कृति बहुलमिति बहुलवचनाद्द्वितीयाया अलुक् । गमन् । गमेः प्रार्थनायां लेख्यडागमः । इतश्च लोप इतीकारलोपः । बहुलं छंदसीति शपो लुक् ॥

अस्ति सौम्यचरुस्तृतीयसवने । तेन चरुणा देवतामिष्ट्वेष्टशेषे तस्मिन्बहु घृतमवनीय तस्मिन्वषट्कर्त्रा स्वकीया छाया द्रष्टव्या । सा यदि न दृश्येत तदानीं भद्रमित्येका पठितव्या । त्वं सोमेति खंडे तथैव सूत्र्यते । राज्ञा सोमेन तद्वयमस्मासु [illegible] भद्रं कर्णेभिः शृणुयाम देवा इति च । आ॰ ५. १९. । इति ॥ महानाम्नीव्रतेऽप्येषा भूमिस्पर्शने जप्या । सूचितं चैतद्विदमिति खंडे । भद्रं कर्णेभिः शृणुयाम देवाः शं न इंद्राग्नी भवतामवोभिः । आ॰ ८. १४. । इति ॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ ८ ॥
भद्रं । कर्णेभिः । शृणुयाम । देवाः । भद्रं । पश्येम । अक्षऽभिः । यजत्राः ।
स्थिरैः । अंगैः । तुस्तुऽवांसः । तनूभिः । वि । अशेम । देवऽहितं । यत् । आयुः ॥ ८ ॥

हे देवा दानादिगुणयुक्ताः सर्वे देवाः कर्णेभिरस्मदीयैः श्रोत्रैर्भद्रं भजनीयं कल्याणं वचनं शृणुयाम । युष्मत्प्रसादाच्छ्रोतुं समर्थाः स्याम । अस्माकं बाधिर्यं कदाचिदपि मा भूत् । हे यजत्रा यागेषु चरुपुरोडाशादिभिर्यष्टव्या देवा अक्षभिरक्षिभिरात्मीयैश्चक्षुर्भिर्भद्रं शोभनं पश्येम । द्रष्टुं समर्थाः स्याम । अस्माकं दृष्टिप्रतिघातोऽपि मा भूत् । स्थिरैर्दृढैरंगैर्हस्तपादादिभिरवयवैस्तनूभिः शरीरैश्च युक्ता वयं तुष्टुवांसो युष्मान् स्तुवंतो यदायुः षोडशाधिकशतप्रमाणं विंशत्यधिकशतप्रमाणं वा देवहितं देवेन प्रजापतिना स्थापितं तद्व्यशेम । प्राप्नुयाम ॥ कर्णेभिः । बहुलं छंदसीति भिस ऐसभावः । अक्षभिः । छंदस्यपि दृश्यत इत्यनङ् स चोदात्तः । यजत्राः । अमिनक्षीत्यादिना यजेरत्रन्प्रत्ययः । तुष्टुवांसः । ष्टुञ् स्तुतौ । लिटः क्वसुः । शर्पूर्वाः खय इति तकारः शिष्यते । अशेम । अशू व्याप्तौ । लिङ्याशिष्यङ् । यदि तु तत्र परिगणनमन्यव्यावृत्त्यर्थं तदानीं लिङि व्यत्ययेन शप् । देवहितं । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं ॥

शतमिन्नु शरदो अंति देवा यत्रा नश्चक्रा जरसं तनूनां ।
पुत्रासो यत्र पितरो भवंति मा नो मध्या रीरिषतायुर्गंतोः ॥ ९ ॥
शतं । इत् । नु । शरदः । अंति । देवाः । यत्र । नः । चक्र । जरसं । तनूनां ।
पुत्रासः । यत्र । पितरः । भवंति । मा । नः । मध्या । रिरिषत । आयुः । गंतोः ॥ ९ ॥

हे देवा अंत्यंतिके मनुष्याणां समीप आयुष्ट्वेन भवद्भिः कल्पिताः शरदः संवत्सराः शतमिन्नु शतं खलु । यस्मात्सृष्टिकाले मनुष्याणां शतं संवत्सरा आयुरिति युष्माभिः परिकल्पितं तस्मान्नोऽस्माकमायुर्गंतोः क्लृप्तस्यायुषो गमनात्पूर्वं मध्या मध्ये मा रीरिषत । मा हिंसिष्ट । कीदृशान् । नोऽस्माकं तनूनां शरीराणां जरसं जरां यत्र यस्यामवस्थायां चक्र कृतवंतो यूयं । यत्र च पुत्रासः पुत्राः पितरोऽस्माकं रक्षितारो भवंति । ईदृग्दशापन्नानित्यर्थः ॥ अंति । अंतिकशब्दस्य कादिलोपो बहुलमिति वक्तव्यमिति कलोपः । यत्र । ऋचि तुनुघमक्षुतङ्कुत्रेति संहितायां दीर्घः । चक्र । लिटि मध्यमबहुवचनस्य कित्त्वाद्गुणाभावे यणादेशः । द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं । जरसं । जराया जरसन्यतरस्यां । पा॰ ७. २. १०१. । इति जरसादेशः । मध्या । सुपां सुलुगिति सप्तम्या डादेशः । रीरिषत । रिष रुष हिंसायां । अस्मात्स्यतात् माङि लुङि मध्यमबहुवचने च्लेश्चङि णिलोपोपधाह्रस्वद्विर्व[illegible]र्घाः । छांदसः पदकालीनो ह्रस्वः । गंतोः । भावलक्षणे स्थेण । पा॰ ३. ४. १६. । इति गमेस्तोसुन्प्रत्ययः ॥

अदितिर्द्यौरदितिरित्येषादितिदेवताके पशौ हविषो याज्या । सूत्रितं च । अदितिर्द्यौरदितिरंतरिक्षं न ते विष्णो जायमानो न जातः । आ॰ ३. ८. । इति ॥

अदितिर्द्यौरदितिरंतरिक्षमदितिर्माता स पिता स पुत्रः ।
विश्वे देवा अदितिः पंच जना अदितिर्जातमदितिर्जनित्वं ॥ १० ॥
अदितिः । द्यौः । अदितिः । अंतरिक्षं । अदितिः । माता । सः । पिता । सः । पुत्रः ।
विश्वे । देवाः । अदितिः । पंच । जनाः । अदितिः । जातं । अदितिः । जनिऽत्वं ॥ १० ॥

अदितिरदीनाखंडनीया वा पृथिवी देवमाता वा सैव द्यौर्द्योतनशीलो नाकः । सैवांतरिक्षमंतरा

द्यावापृथिव्योर्मध्य ईक्ष्यमाणं व्योम। सैव माता निर्मात्री जगतो जननी। सैव पितोत्पादकः। ततश्च स पुत्रो मातापित्रोर्जातः पुत्रोऽपि सैव। विश्वे देवाः सर्वेऽपि देवा अदितिरेव। पंच जना निषादपंचमाश्चत्वारो वर्णाः। यद्वा। गंधर्वाः पितरो देवा असुरा रक्षांसि। तदुक्तं यास्केन। गंधर्वाः पितरो देवा असुरा रक्षांसीत्येके चत्वारो वर्णा निषादः पंचम इत्यौपमन्यवः। नि॰ ३. ७.। इति। ब्राह्मणे त्वेवमाम्नातं। सर्वेषां वा एतत्पंचजनानामुक्थं देवमनुष्याणां गंधर्वाप्सरसां सर्पाणां च पितॄणां च। ऐ॰ ब्रा॰ ३. ३१.। इति। तत्र गंधर्वाप्सरसामैक्यात्पंचजनत्वं। एवंविधाः पंच जना अप्यदितिरेव। जातं जननं प्रजानामुत्पत्तिः साप्यदितिरेव। जनित्वं जन्माधिकरणं तदप्यदितिरेव। एवं सकलजगदात्मनादितिः स्तूयते। उक्तं च यास्केन। इत्यदितेर्विभूतिमाचष्टे। नि॰ ४. २३.। इति॥ अदितिः। दो अवखंडने। अस्मात्कर्मणि क्तिनि द्यतिस्यतिमास्थां। पा॰ ७. ४. ४०.। इतीत्वं। यास्कपक्षे तु दीङ् क्षय इत्यस्मात् क्तिनि व्यत्ययेन ह्रस्वत्वं। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं। स पिता। निर्दिश्यमानप्रतिनिर्दिश्यमानयोरेकतामापादयंति सर्वनामानि पर्यायेण तल्लिंगतामुपाददत इत्युद्देश्यलिंगतया पुंल्लिंगत्वं। जनित्वं। जनेरौणादिकस्त्वन्प्रत्ययः॥ ॥१६॥

ऋजुनीतीति नवर्चं षष्ठं सूक्तं गोतमस्यार्षं। अत्रानुक्रम्यते। ऋजुनीती नव गायत्रमंत्यानुष्टुबिति। पूर्वत्र वैश्वदेवं त्वित्युक्तत्वात्तुह्यादिपरिभाषयेदमपि सूक्तं बहुदेवताकं। सूक्तविनियोगो लैंगिकः। चातुर्विंशिकेऽहनि प्रातःसवने मैत्रावरुणस्य ऋजुनीती न इत्येषारंभणीया। चतुर्विंश इति खंडे सूचितं। ऋजुनीती नो वरुण इंद्रं वो विश्वतस्परि। आ॰ ७. २.। इति॥ अहर्गणेषु द्वितीयादिष्वहःस्वप्येषारंभणीया शंसनीया। सूचितं च। आरंभणीयाः पर्यासान्कद्वतोऽहरहः शस्यानीति होत्रका द्वितीयादिष्वेव। आ॰ ७. १.। इति॥

ऋ॒जु॒नी॒ती नो॒ वरु॑णो मि॒त्रो न॑यतु वि॒द्वान्। अ॒र्य॒मा दे॒वैः स॒जोषाः॑ ॥१॥

ऋ॒जु॒ऽनी॒ती। नः॒। वरु॑णः। मि॒त्रः। न॒य॒तु॒। वि॒द्वान्। अ॒र्य॒मा। दे॒वैः। स॒ऽजोषाः॑ ॥१॥

अहरभिमानी देवो मित्रो वरुणो राज्यभिमानी। मित्रश्च वरुणश्च विद्वान् नेतव्यमुत्तमं स्थानं जानन् नोऽस्मान् ऋजुनीती ऋजुनीत्या ऋजुनयनेन कौटिल्यरहितेन गमनेन नयतु। अभिमतं फलं प्रापयतु। तथा देवैरन्यैरिंद्रादिभिः सजोषाः [illegible]होरात्रविभागस्य कर्ता सूर्यश्चास्मानृजुगमनेनाभिमतं स्थानं प्रापयतु॥ ऋजुनीती। सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घत्वं॥

ते हि वस्वो॒ वस॑वाना॒स्ते अप्र॑मूरा॒ महो॑भिः। व्र॒ता र॑क्षन्ते वि॒श्वाहा॑ ॥२॥

ते। हि। वस्वः॑। वस॑वानाः। ते। अप्र॑ऽमूराः। महः॑ऽभिः। व्र॒ता। र॒क्ष॒न्ते॒। वि॒श्वाहा॑ ॥२॥

ते हि पूर्वोक्ता मित्रादयो वस्वो वसुनो धनस्य वसवाना वासका आच्छादयितारः। सर्वं जगद्धनेनाच्छादयंतीत्यर्थः। अतस्ते मित्रादयोऽप्रमूरा अप्रमूर्च्छिता अमूढाः प्राज्ञाः संतो महोभिरात्मीयैस्तेजोभिर्विश्वाहा सर्वाण्यहानि। अत्यंतसंयोगे द्वितीया। सर्वेष्वप्यहस्सु व्रता व्रतानि जगन्नि[illegible]णि स्वकीयानि कर्माणि रक्षंते। पालयंति॥ वस्वः। आगमानुशासनस्यानित्यत्वान्नुमभावे जसादिषु छंदसि वावचनमिति घेर्ङितीति गुणस्य विकल्पनादभावे यणादेशः। वसवानाः। वस आच्छादने। अस्मादंतर्भावितण्यर्थाल्लटः शानच्। बहुलं छंदसीति शपो लुगभावः। वर्णव्यापत्त्या मकारस्य वकारः। अप्रमूराः। मुर्छा मोहसमुच्छ्राययोः। अस्मात्संपदादिलक्षणो भावे क्विप्। राल्लोप इति छकारलोपः। प्रकृष्टा मूः प्रमूः। ततो मत्वर्थीयो रः। रो रि। पा॰ ८. ३. १४.। इति रेफलोपः। न प्रमूरा अप्रमूराः। अव्ययपूर्वपदप्रकृतिस्वरत्वं। रक्षंते। रक्ष पालने। व्यत्ययेन तङ्॥

ते अ॒स्मभ्यं॒ शर्म॑ यंसन्न॒मृता॒ मर्त्ये॑भ्यः। बाध॑माना॒ अप॒ द्विषः॑ ॥३॥

ते। अ॒स्मभ्य॑म्। शर्म॑। यं॒स॒न्। अ॒मृताः॑। मर्त्ये॑भ्यः। बाध॑मानाः। अप॑। द्विषः॑ ॥३॥

अमृता अमरणधर्माणस्ते विश्वे देवा मर्त्येभ्यो मरणधर्मभ्योऽस्मभ्यमनुष्ठातृभ्यः शर्मामृतलक्षणं सुखं यंसन्।

यच्छंतु । प्रयच्छंतु । किं कुर्वंतः । द्विषोऽस्मदीयान्पापलक्षणान् शत्रूनप बाधमानाः । विनाशं प्रापयंतः ॥ यंसन् । यम उपरमे । लेट्यडागमः । सिब्बहुलं लेटीति सिप् । अमृताः । मृतं मरणं येषां नास्तीत्यमृताः । नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं ॥

**वि नः पथः सुविताय चियंत्विंद्रो मरुतः । पूषा भगो वंद्यासः ॥ ४ ॥**

**वि । नः । पथः । सुविताय । चियंतु । इंद्रः । मरुतः । पूषा । भगः । वंद्यासः ॥ ४ ॥**

वंद्यासः सर्वैर्वंदनीयाः स्तोतव्या नमस्कर्तव्या वेंद्रादयो देवा नोऽस्माकं पथो मार्गान्वि चियंतु । विचिन्वंतु । अशोभनेभ्यो मार्गेभ्यः सकाशात्पृथक्कुर्वंतु । किमर्थं । सुविताय सुष्ठु प्राप्तव्याय स्वर्गादिफलाय ॥ पथः । शसि भस्य टेर्लोप इति टिलोपः । उदात्तनिवृत्तिस्वरेण शस उदात्तत्वं । सुविताय । इण् गतावित्यस्मात्कर्मणि निष्ठा । तन्वादीनां छंदसि बहुलमुपसंख्यानमित्युवङ् । गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्वे प्राप्ते सूपमानात् क्त इत्युत्तरपदांतोदात्तत्वं । चियंतु । चिञ् चयने । बहुलं छंदसीति विकरणस्य लुक् । इयङ् । पादादित्वा-न्निघाताभावः । वंद्यासः । वदि अभिवादनस्तुत्योः । ऋहलोर्ण्यत् । ईडवंदवृशंसदुहां ण्यत इत्याद्युदात्तत्वं । आज्जसेरसुक् ॥

अप्तोर्यामे संति चत्वार्यतिरिक्तोक्थानि । तत्र चतुर्थेऽच्छावाकातिरिक्तोक्थ उत नो धिय इत्येषानुरूपतृचस्य वैकल्पिकी तृतीया । सूचितं च । उत नो धियो गोअग्रा इति वानुरूपस्योत्तमा । आ॰ ९. ११. । इति ॥

**उत नो धियो गोअग्राः पूषन्विष्णवेवयावः । कर्ता नः स्वस्तिमतः ॥ ५ ॥**

**उत । नः । धियः । गोऽअग्राः । पूषन् । विष्णो इति । एवऽयावः । कर्त । नः । स्वस्तिऽमतः ॥ ५ ॥**

हे पूषन् पोषक देव हे विष्णो व्यापनशील देव हे एवयावः । एवैर्गंतृभिरश्वैर्याति गच्छतीत्येवयावा मरुद्गणः । हे मरुद्गण ते सर्वे यूयं नोऽस्माकं धियोऽप्तोर्यामलक्षणानि कर्माणि गोअग्राः पश्वग्राणि पशुप्रमुखान्यस्मत्सका-शाद्भ्रष्टैः पशुभिर्युक्तानि कर्त । कुरुत । अप्तोर्यामकर्मणश्च पशुप्राप्तिहेतुत्वमाम्नायते । यस्मात्पशवः प्रेव भ्रंशेरन् स एतेन यजेत । तै॰ ब्रा॰ २. ७. १४. २. । इति । उतापि च नोऽस्मान्स्वस्तिमतोऽविनाशिनः कुरुत ॥ एवयावः । इण् गतौ । इण्शीङ्भ्यां वन्निति वन्प्रत्ययः । अस्मिन्नुपपदे या प्रापण इत्यस्मादातो मनिन्निति वनिप् । संबुद्धौ वन उपसंख्यानं । पा॰ ८. ३. १. १. । इति वकारस्य रुत्वं ॥ ॥ १७ ॥

ऋत्विगाद्यर्थमाहृतं मधुपर्कं मधु वाता इति तृचेन ऋत्विगादिः प्रतिग्रहीतावेक्षेत । तथा च सूत्र्यते । मधु वाता ऋतायत इति तृचेनावेक्ष्य । आ॰ गृ॰ १. २४. १४. । इति ॥

**मधु वाता ऋतायते मधु क्षरंति सिंधवः । माध्वीर्नः संत्वोषधीः ॥ ६ ॥**

**मधु । वाताः । ऋतऽयते । मधु । क्षरंति । सिंधवः । माध्वीः । नः । संतु । ओषधीः ॥ ६ ॥**

ऋतायते ऋतं यज्ञमात्मन इच्छते यजमानाय वाता वायवो मधु माधुर्योपेतं कर्म फलं क्षरंति । वर्षंति । प्रयच्छंतीत्यर्थः । तथा सिंधवः स्यंदनशीला नद्यः समुद्रा वा मधु माधुर्योपेतं स्वकीयं रसं क्षरंति । एवं नोऽस्मभ्यमोषधीः फलपाकांता ओषधयस्ताश्च माध्वीर्माधुर्योपेताः संतु । भवंतु ॥ मधु । अस्मादुत्तरस्य मत्वर्थीयस्य लुगकारेकाररेफाश्च वक्तव्याः । पा॰ ४. ४. १२८. २. । इति लुक् । ऋतायते । ऋतमात्मन इच्छति । सुप आत्मनः क्यच् । न च्छंदस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः । अन्येषामपि संहितायां दीर्घत्वं । क्यजंताल्लटः शतृ । शतुरनुम इति विभक्तेरुदात्तत्वं । माध्वीः । मधोरञ् च । पा॰ ४. ४. १२९. । इति मत्वर्थीयोऽञ्प्रत्ययः । ऋत्व्यवास्त्व्येत्या-दावञि यणादेशो निपात्यते । वा छंदसीति पूर्वसवर्णदीर्घत्वं । ओषधीः । ओषः पाक आसु धीयत इत्योष-धयः । कर्मण्यधिकरणे चेति किप्रत्ययः । कृदिकारादक्तिन इति ङीप् । जसि पूर्ववत्पूर्वसवर्णदीर्घः । दासीभा-रादिषु पठितत्वात्पूर्वपदप्रकृतिस्वरत्वं । तच्च घञंतमाद्युदात्तं ॥

मधु नक्तमुतोषसो मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता ॥ ७ ॥
मधु । नक्तं । उत । उषसः । मधुऽमत् । पार्थिवं । रजः । मधु । द्यौः । अस्तु । नः ।
पिता ॥ ७ ॥

नक्तं रात्रिर्नोऽस्माकं मधु मधुमती माधुर्योपेतफलप्रदा भवतु । उतापि चोषस उषःकालोपलक्षितान्यहानि च मधुमंति भवंतु । पार्थिवं रजः पृथिव्याः संबंधी लोकोऽस्माकं मधुमत् माधुर्यविशिष्टफलयुक्तो भवतु । पिता वृष्टिप्रदानेन सर्वेषां पालयिता द्यौर्द्युलोकोऽपि मधु मधुयुक्तो भवतु ॥ पार्थिवं । पृथिव्या ञाञौ । पा० ४. १. ८५. २. । इति प्राग्दीव्यतीयोऽञ्प्रत्ययः । रजः । रजःशब्दो लोकवाची । लोका रजांस्युच्यंते । नि० ४. १९. । इति यास्कः । रजंत्यस्मिञ्जना इति रजः । असुनि रजकरजनरजःसूपसंख्यानं । का० ६. ४. २४. ४. । इति रंजेर्नलोपः ॥

मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः । माध्वीर्गावो भवंतु नः ॥ ८ ॥
मधुऽमान् । नः । वनस्पतिः । मधुऽमान् । अस्तु । सूर्यः । माध्वीः । गावः ।
भवंतु । नः ॥ ८ ॥

नोऽस्माकं वनस्पतिर्वनानां पालयिता यूपाभिमानी देवो मधुमान् माधुर्योपेतफलवानस्तु । तादृशं फलमस्मभ्यं प्रयच्छत्वित्यर्थः । सूर्यः सर्वस्य प्रेरकः सविता च मधुमानस्तु । गावोऽग्निहोत्राद्यर्था धेनवश्च नोऽस्माकं माध्वीर्माधुर्योपेतेन पयसा युक्ता भवंतु ॥ वनस्पतिः । वनानां पतिर्वनस्पतिः । पारस्करादित्वात्सुट् । वनपतिशब्दावाद्युदात्तौ । उभे वनस्पत्यादिषु युगपदिति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं ॥

शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शं न इंद्रो बृहस्पतिः शं नो विष्णुरुरुक्रमः ॥ ९ ॥
शं । नः । मित्रः । शं । वरुणः । शं । नः । भवतु । अर्यमा ।
शं । नः । इंद्रः । बृहस्पतिः । शं । नः । विष्णुः । उरुऽक्रमः ॥ ९ ॥

अहरभिमानी मित्रो देवो नोऽस्माकं शं सुखकरो भवतु । यद्वा । अस्मदीयानामुपद्रवाणां शमयिता भवतु । रात्र्यभिमानी वरुणश्च शं सुखकरो भवतु । अर्यमाहोरात्रयोः ख्यापयिता सूर्यश्च नोऽस्माकं शं सुखकरो भवतु । बृहस्पतिर्बृहतां देवानां पालयितेंद्रश्च नोऽस्माकं शं सुखकरो भवतु । उरुक्रमः । उरु विस्तीर्णं क्रामति पादौ विक्षिपतीत्युरुक्रमः । विष्णुर्हि वामनावतारे पृथिव्यादीन् लोकान्पदत्रयरूपेणाक्रांतवान् । अत उरुक्रमो विष्णुश्च नोऽस्माकं शं सुखकर उपद्रवाणां शमयिता वा भवतु ॥ उरुक्रमः । क्रमु पादविक्षेपे । पचाद्यच् । यद्वा । उरून् क्रामतीत्युरुक्रमः । कर्मण्यण् । नोदात्तोपदेशस्य मांतस्येति वृद्धिप्रतिषेधः ॥ ॥ १८ ॥

त्वं सोमेति त्रयोविंशत्यृचं सप्तमं सूक्तं गोतमस्यार्षं सोमदेवताकं । पंचम्याद्याः षोडश्यंता द्वादशर्चो गायत्र्यः । सप्तदश्युष्णिक् । शिष्टा दश त्रिष्टुभः । तथा चानुक्रांतं । त्वं सोम त्र्यधिका सौम्यं पंचम्यादि गायत्र्यो ऽन्त्योष्णिक् चेति ॥ सूक्तविनियोगो लैंगिकः ॥ एकादशिनस्य सौम्यस्य पशोर्वपापुरोडाशयोस्त्वं सोमेति द्वे ऋचावनुवाक्ये । सूचितं च । त्वं सोम प्र चिकितो मनीषेति द्वे । आ० ३. ७. । इति ॥ महापितृयज्ञ एकैकस्य हविषो द्वे द्वे अनुवाक्ये । तत्र सोमस्य पितृमतस्त्वं सोमेत्येषा प्रथमानुवाक्या । दक्षिणाग्नेरग्निमिति खंडे सूचितं । त्वं सोम प्र चिकितो मनीषा सोमो धेनुं । आ० २. १९. । इति ॥ एषैव प्रायणीयेष्टौ सौम्यस्यानुवाक्या । तदहः प्रायणीयेष्टिरित्यत्र सूचितं । त्वं सोम प्र चिकितो मनीषा या ते धामानि दिवि या पृथिव्यां । आ० ४. ३. । इति ॥

त्वं सो॑म॒ प्र चि॑कितो मनी॒षा त्वं रजि॑ष्ठ॒मनु॑ नेषि॒ पंथां॑ ।
तव॒ प्रणी॑ती पि॒तरो॑ न इंदो दे॒वेषु॒ रत्न॑मभजंत॒ धीराः॑ ॥ १ ॥
त्वं । सो॒म॒ । प्र । चि॒कि॒तः॒ । म॒नी॒षा । त्वं । रजि॑ष्ठं । अनु॑ । ने॒षि॒ । पंथां॑ ।
तव॑ । प्रऽनी॑ती । पि॒तरः॑ । नः॒ । इं॒दो॒ इति॑ । दे॒वेषु॑ । रत्नं॑ । अ॒भ॒जं॒त॒ । धीराः॑ ॥ १ ॥

हे सोम त्वं मनीषा मनीषयास्मदीयया बुद्ध्या प्र चिकितः। प्रकर्षेण ज्ञातोऽसि। वयं त्वां स्तुतिभिरज्ञासिष्मेत्यर्थः। अतस्त्वं रजिष्ठमृजुतममकुटिलं पंथां पंथानं कर्मफलावाप्तिहेतुभूतं मार्गमनु नेषि। अस्माननुक्रमेण प्रापयसि। किंच हे इंदो उंदनशील सर्वं जगदमृतेन क्लेदयितः सोम तव प्रणीती प्रणीत्या त्वत्कर्तृकेण प्रकृष्टनयनेन धीरा धीमंतः कर्मवंतः प्रज्ञावंतो वा नोऽस्माकं पितरो देवेष्विंद्रादिषु रत्नं रमणीयं धनमभजंत। असेवंत। प्राप्नुवन्। अतोऽस्मानपि तादृशं धनं प्रापयेत्यर्थः॥ प्र चिकितः। कित ज्ञाने। अस्मात्कर्मणि निष्ठा। छांदसं द्विर्वचनं। यद्वा। यङ्लुगंतान्निष्ठा। संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणो यङ्लुकोरित्यभ्यासस्य गुणाभावः। यद्वा। छंदस्युभयथेति निष्ठायाः सार्वधातुकसंज्ञायां शप्। जुहोत्यादित्वात्तस्य श्लुः। श्लाविति द्विर्वचनं। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। मनीषा। सुपां सुलुगिति तृतीयाया डादेशः। रजिष्ठं। ऋजुशब्दादिष्ठनि विभाषर्जोश्छंदसि। पा॰ ६. ४. १६२.। इति रत्वं। टेरिति टिलोपः। नेषि। नयतेर्लटि बहुलं छंदसीति शपो लुक्। पंथां। पथिमथ्यृभुक्षामात्। पा॰ ७. १. ८५.। इत्यसावपि व्यत्ययेनात्वं। पथिमथोः सर्वनामस्थान इत्याद्युदात्तत्वं। प्रणीती। तादौ चेति गतेः प्रकृतिस्वरत्वं। सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घत्वं॥

अग्निष्टोमे मरुत्वतीये त्वं सोम क्रतुभिरित्येषा धाय्या। सूत्रितं च। अग्निर्नेता त्वं सोम क्रतुभिः पिन्वंत्यप इति धाय्याः। आ॰ ५. १४.। इति॥

त्वं सो॑म॒ क्रतु॑भिः सु॒क्रतु॑र्भू॒स्त्वं दक्षैः॑ सु॒दक्षो॑ वि॒श्ववे॑दाः ।
त्वं वृषा॑ वृष॒त्वेभि॑र्महि॒त्वा द्यु॒म्नेभि॑र्द्यु॒म्न्य॑भवो नृ॒चक्षाः॑ ॥ २ ॥
त्वं । सो॒म॒ । क्रतु॑ऽभिः । सु॒ऽक्रतुः॑ । भूः॒ । त्वं । दक्षैः॑ । सु॒ऽदक्षः॑ । वि॒श्वऽवे॑दाः ।
त्वं । वृषा॑ । वृ॒ष॒ऽत्वेभिः॑ । म॒हि॒ऽत्वा । द्यु॒म्नेभिः॑ । द्यु॒म्नी । अ॒भ॒वः॒ । नृ॒ऽचक्षाः॑ ॥ २ ॥

हे सोम त्वं क्रतुभिस्त्वत्संबंधिभिरग्निष्टोमादिकर्मभिरात्मीयैर्ज्ञानैर्वा सुक्रतुः शोभनकर्मा शोभनप्रज्ञो वा भूः। भवसि। तथा विश्ववेदाः सर्वधनस्त्वं दक्षैरात्मीयैर्बलैः सुदक्षः शोभनबलो भवसि। तथा त्वं वृषत्वेभिर्वृषत्वैः कामाभिवर्षणैर्महित्वा महत्त्वेन माहात्म्येन च वृषा कामानां वर्षिता महांश्च भवसि। तथा त्वं नृचक्षा नृणां यज्ञस्य नेतॄणां यजमानानामभिमतफलस्य दर्शयिता सन् द्युम्नेभिर्द्युम्नैस्तैर्दत्तैर्हविर्लक्षणैरन्नैर्द्युम्न्यभवः। प्रभूतान्नो भवसि॥ सुक्रतुः। बहुव्रीहौ क्रत्वादयश्चेत्युत्तरपदाद्युदात्तत्वं। सुदक्षः। दक्ष वृद्धौ। दक्ष्यतेऽनेनेति दक्षो बलं। करणे घञ्। ञित्त्वादाद्युदात्तत्वं। सुशब्देन बहुव्रीहावाद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। विश्ववेदाः। विश्वानि वेदांसि यस्यासौ। बहुव्रीहौ विश्वं संज्ञायामिति पूर्वपदांतोदात्तत्वं। वृषत्वेभिः। वृष्णो भावो वृषत्वं। बहुलं छंदसीति भिस ऐसभावः। महित्वा। महेरौणादिक इन्प्रत्ययः। भावप्रत्ययांतात्सुपां सुलुगिति विभक्तेराकारः॥

राज्ञो॒ नु ते॒ वरु॑णस्य व्र॒तानि॑ बृ॒हद्ग॑भी॒रं तव॑ सोम॒ धाम॑ ।
शुचि॒ष्ट्वम॑सि प्रि॒यो न मि॒त्रो द॒क्षाय्यो॑ अर्य॒मेवा॑सि सोम ॥ ३ ॥
राज्ञः॑ । नु । ते॒ । वरु॑णस्य । व्र॒तानि॑ । बृ॒हत् । ग॒भी॒रं । तव॑ । सो॒म॒ । धाम॑ ।
शुचिः॑ । त्वं । अ॒सि॒ । प्रि॒यः । न । मि॒त्रः । द॒क्षाय्यः॑ । अ॒र्य॒माऽइ॑व । अ॒सि॒ । सो॒म॒ ॥ ३ ॥

हे सोम राज्ञो ब्राह्मणानां स्वामिनः। सोमोऽस्माकं ब्राह्मणानां राजा। तै० ब्रा० १. ७. ४. २.। इति श्रुतेः। वरुणस्य यागार्थमाहृतः क्रीतो वस्त्रेणावृतः सोमो वरुणः। वरुणोऽसि धृतव्रत इति मंत्रलिंगात्। क्रीतस्य ते नु तव संबंधीनि हि व्रतानि सर्वाण्यग्निष्टोमादीनि कर्माणि। अतः सर्वेषु यागेषु त्वमेव कारणभूतो भवसीत्यर्थः। अतस्तव धाम त्वदीयं तेजो बृहन्महद्विस्तीर्णं गभीरं गांभीर्योपेतं च। यद्वा। नु इत्येतदुपमार्थे। तदुक्तं यास्केन। अथाप्युपमार्थे भवति वृक्षस्य नु ते पुरुहूत वयाः। नि० १. ४.। इति। राज्ञो राजमानस्य वरुणस्य नु वरुणस्येव हे सोम ते तव व्रतानि कर्माणि लोकहितकारीणि। शिष्टं समानं। हे सोम त्वं शुचिः सर्वेषां शोधकोऽसि। तत्र दृष्टांतः। प्रियो न मित्रः। यथा सर्वेषामनुकूलोऽहरभिमानी मित्रो देवः शोधयिता भवति तद्वत्। तथा त्वमर्यमेवास्माभिर्दृश्यमानः सूर्य इव दक्षाय्योऽसि। सर्वेषां वर्धको भवसि। यथाहनि सूर्यः प्रकाशेन सर्वं वर्धयति एवं निश्यमृतमयैः सोमकिरणैराप्यायमानं सत्स्थावरजंगमात्मकं सर्वं जगद्वर्धते ॥ शुचिष्ट्वं। युष्मत्तत्ततक्षुःष्वंतःपादमिति विसर्जनीयस्य षत्वं। दक्षाय्यः। दक्ष वृद्धौ। श्रुदक्षिस्पृहिगृहिभ्य आय्यः। उ० ३. ९६.। इत्याय्यप्रत्ययः ॥

आग्रयणेष्टौ सौम्यस्य हविषो या ते धामानीति याज्या। आग्रयणं व्रीहिश्यामाकयवानामिति खंडे सूत्रितं। सोम यास्ते मयोभुवो या ते धामानि दिवि या पृथिव्यां। आ० २. ९.। इति ॥ एषैवैकादशिनस्य सौम्यस्य पशोर्वपायां याज्या। सूत्रितं च। या ते धामानि दिवि या पृथिव्यामषाळ्हं युत्सु पृतनासु पप्रिं। आ० ३. ७.। इति ॥ प्रायणीयेष्टावप्येषैव सौम्यस्य याज्या। सूत्रितं च। त्वं सोम प्र चिकितो मनीषा या ते धामानि दिवि या पृथिव्यां। आ० ४. ३.। इति ॥

## या ते धामा॑नि दि॒वि या पृ॑थि॒व्यां या पर्व॑ते॒ष्वोष॑धीष्व॒प्सु।
## तेभि॑र्नो॒ विश्वैः॑ सु॒मना॒ अहे॑ळ॒न्राज॒न्त्सोम॒ प्रति॑ ह॒व्या गृ॑भाय ॥४॥
## या। ते॒। धामा॑नि। दि॒वि। या। पृ॒थि॒व्याम्। या। पर्व॑तेषु। ओष॑धीषु। अ॒प्ऽसु।
## तेभिः॑। नः॒। विश्वैः॑। सु॒ऽमनाः॑। अहे॑ळन्। राज॑न्। सोम॑। प्रति॑। ह॒व्या। गृ॒भा॒य॒ ॥४॥

हे सोम ते तव दिवि द्युलोके या यानि धामानि तेजांसि वर्तंते। तथा पृथिव्यां भूमौ यानि वर्तंते। तथा पर्वतेषु पर्ववत्सु शिलोच्चयेषु यानि वर्तंते। तथा व्रीह्याद्योषधीष्वप्सु च यानि वर्तंते। तेभिर्विश्वैस्तैः सर्वैस्तेजोभिर्युक्तः सुमनाः शोभनमना अहेळन्नक्रुध्यन् हे राजन् सोम राजमान सोम एवंभूतस्त्वं हव्यास्माभिः प्रत्तानि हवींषि प्रति गृभाय। प्रतिगृहाण ॥ या। शेश्छंदसि बहुलमिति शेर्लोपः। पृथिव्यां। उदात्तयण इति विभक्तेरुदात्तत्वं। ओषधीषु। ओषधेश्च विभक्तावप्रथमायां। पा० ६. ३. १३२.। इति दीर्घः। अप्सु। ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। सुमनाः। सोर्मनसी अलोमोषसी इत्युत्तरपदाद्युदात्तत्वं। गृभाय। ग्रह उपादाने। छंदसि शायजपीति श्नः श्नाप्रत्ययस्य शायजादेशः ॥

पौर्णमासेष्टौ सौम्यस्याज्यभागस्य त्वं सोमेत्येषानुवाक्या। सूत्रितं च। अग्निर्वृत्राणि जंघनदिति पूर्वस्याज्यभागस्यानुवाक्या त्वं सोमासि सत्पतिरित्युत्तरस्य। आ० १. ५.। इति। एवं यत्र यत्र वार्त्रघ्नावाज्यभागौ तत्र सर्वत्रास्या विनियोगः ॥ प्रातःकालीनायामुपसदि प्रधानस्य सौम्यस्यैषैवानुवाक्या। आपराह्णिक्यामुपसदि सैव याज्या। सूत्रितं च। त्वं सोमासि सत्पतिर्गयस्फानो अमीवहा इति विपर्यासो याज्यानुवाक्यानां। आ० ४. ८.। इति च ॥

## त्वं सो॑मासि॒ सत्प॑ति॒स्त्वं राजो॒त वृ॑त्र॒हा। त्वं भ॒द्रो अ॑सि॒ क्रतुः॑ ॥५॥
## त्वम्। सो॒म॒। अ॒सि॒। सत्ऽप॑तिः। त्वम्। राजा॑। उ॒त। वृ॒त्र॒ऽहा। त्वम्। भ॒द्रः। अ॒सि॒। क्रतुः॑ ॥५॥

हे सोम त्वं सत्पतिरसि। सतां कर्मसु वर्तमानानां ब्राह्मणानामधिपतिर्भवसि। तस्मात्सोमराजानो ब्राह्मणाः। तै० ब्रा० १. ७. ४. २.। इति श्रुतेः। यद्वा। संतः स्वानादयः पतयः पालका यस्य सोमस्य तादृशो भवसि। तथा चाम्नायते। स्वान भ्राजेत्याहैते वा अमुष्मिन् लोके सोममरक्षन्। तै० सं० ६. १. १०. ५.। इति।

उतापि च राजा राजमानस्त्वं वृत्रहा वृत्रस्यासुरस्य शत्रोर्वा हंतासि। भद्रः शोभनः क्रतुर्योऽयमग्निष्टोमादियागस्त्वमेव तद्रूपो भवसि। त्वत्साध्यत्वाद्यागानां॥ सत्पतिः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। तत्पुरुषपक्षे तु पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वं॥ ॥१९॥

साग्निचित्ये क्रतावग्नीषोमीयस्य पशुपुरोडाशमन्वष्टौ देवसुवां हवींषि निरुप्यंते। तत्र सोमस्य वनस्पतेर्हविषस्त्वं च सोमेत्येषानुवाक्या। अथाग्नीषोमीयेणेति खंडे सूत्रितं। त्वं च सोम नो वशो ब्रह्मा देवानां पदवीः कवीनां। आ॰ ४.११.। इति॥

**त्वं च॑ सोम नो॒ वशो॑ जी॒वातुं॒ न म॑रामहे। प्रि॒यस्तो॑त्रो॒ वन॒स्पतिः॑॥६॥**

**त्वं। च॒। सो॒म॒। नः॒। वशः॑। जी॒वातुं॑। न। म॒रा॒म॒हे॒। प्रि॒य॒ऽस्तो॒त्रः॒। वन॒स्पतिः॑॥६॥**

हे सोम नोऽस्माकं स्तोतॄणां जीवातुं जीवनौषधं त्वं च त्वं चेद्वशः कामयेथाः तदानीं वयं न मरामहे। न म्रियामहे। कीदृशस्त्वं। प्रियस्तोत्रः। प्रियाणि स्तोत्राणि यस्य स तथोक्तः। बहुभिः स्तोतव्य इत्यर्थः। वनस्पतिर्वनानामोषधिवनस्पतिरूपाणां पतिः पालयितासि। सोमो वा ओषधीनां राजा। तै॰ सं॰ ६.१.९.१.। इति श्रुतेः॥ वशः। वश कांतौ। लेटि सिप्यडागमः। आगमानुदात्तत्वे धातुस्वरः शिष्यते। त्वं चेति चशब्दश्चणिति निपातांतरं चेदर्थे। तद्योगान्निपातैर्यद्यदिहंतेति निघातप्रतिषेधः। जीवातुं। जीव प्राणधारणे। जीवेरातुः। उ॰ १.८०.। मरामहे। मृङ् प्राणत्यागे। व्यत्ययेन शप्॥

आयुष्कामेष्ट्यां द्वितीयस्याज्यभागस्य त्वं सोम महे भगमित्येषानुवाक्या। अथ काम्या इति खंडे सूत्रितं। आ नो अग्ने सुचेतुना त्वं सोम महे भगं। आ॰ २.१०.। इति॥

**त्वं सो॑म म॒हे भगं॒ त्वं यून॑ ऋतायते। दक्षं॑ दधासि जी॒वसे॑॥७॥**

**त्वं। सो॒म॒। म॒हे। भग॑म्। त्वम्। यूने॑। ऋ॒त॒ऽय॒ते। दक्ष॑म्। द॒धा॒सि॒। जी॒वसे॑॥७॥**

हे सोम त्वं महे महते वृद्धाय ऋतायते ऋतं यज्ञमात्मन इच्छते पुरुषाय जीवसे जीवितुं दक्षमुपभोगसमर्थं भगं धनं दधासि। विदधासि। करोषि। तथा त्वं यूने तरुणाय च ऋतायते जीवितुं धनं करोषि॥ महे। महते। अच्छब्दलोपश्छांदसः। बृहन्महतोरुपसंख्यानमिति विभक्तेरुदात्तत्वं। यूने। श्वयुवमघोनामतद्धित इति संप्रसारणं। ऋतायते। ऋतमात्मन इच्छति। सुप आत्मनः क्यच्। न च्छंदस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः। अन्येषामपि दृश्यत इति सांहितिको दीर्घः। क्यजंताल्लटः शतृ। शतुरनुमो नद्यजादी इति विभक्तेरुदात्तत्वं। जीवसे। जीव प्राणधारणे। तुमर्थे सेसेनित्यसेप्रत्ययः॥

स्वस्त्ययन्यां द्वितीयस्याज्यभागस्य त्वं नः सोमेत्येषानुवाक्या। सूत्रितं च। स्वस्त्ययन्यां रक्षितवंतावग्ने रक्षा णो अंहसस्त्वं नः सोम विश्वतः। आ॰ २.१०.। इति॥

**त्वं नः॑ सोम वि॒श्वतो॑ रक्षा॑ राजन्नघाय॒तः। न रि॑ष्येत्त्वाव॑तः सखा॑॥८॥**

**त्वम्। नः॒। सो॒म॒। वि॒श्वतः॑। रक्ष॑। रा॒ज॒न्। अ॒घ॒ऽय॒तः। न। रि॒ष्ये॒त्। त्वाऽव॑तः। सखा॑॥८॥**

हे सोम राजन् राजनशील त्वमघायतः। अघं पापं। तद्धेतुकं दुःखमस्माकं कर्तुमिच्छतो विश्वतः सर्वस्मादपि पुरुषान्नोऽस्मान्रक्ष। पालय। त्वावतस्त्वत्सदृशस्य सखा सख्यं प्राप्तः पुरुषो न रिष्येत्। नहि विनश्येत् किमु वक्तव्यं त्वत्सखा न विनश्यतीति॥ अघायतः। अघं पापं परेषामिच्छतीत्यघायन्। छंदसि परेच्छायामपीति क्यच्। अश्वाघस्यादित्वात्वं। रिष्येत। रुष रिष हिंसायां। त्वावतः। वतुप्प्रकरणे युष्मदस्मद्भ्यां छंदसि सादृश्य उपसंख्यानमिति वतुप्। प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य त्वादेशः। आ सर्वनाम्न इत्यात्वं॥

सोमप्रवहणे सोम यास्त इति तृचोऽनुवक्तव्यः। सूत्रितं च। सोम यास्ते मयोभुव इति तिस्रः। आ॰ ४.४.। इति॥ आग्रयणे सौम्यस्य सोम यास्त इत्येषानुवाक्या। सूत्रितं च। सोम यास्ते मयोभुवो या ते धामानि

दिवि या पृथिव्यां । आ० २. ९. । इति ॥ अश्वमेधेऽपि पौष्णामिष्टौ द्वितीयस्याज्यभागस्यैषानुवाक्या । सूचितं च । त्वमग्ने सप्रथा असि सोम यास्ते मयोभुव इति सद्वंतौ । आ० १०. ६. । इति ॥

सोम॒ यास्ते॑ मयो॒भुव॑ ऊ॒तयः॒ संति॑ दा॒शुषे॑ । ताभि॑र्नोऽवि॒ता भ॑व ॥ ९ ॥

सोम॑ । याः । ते॒ । म॒यः॒ऽभुव॑ः । ऊ॒तय॑ः । संति॑ । दा॒शुषे॑ । ताभि॑ः । नः॒ । अ॒वि॒ता । भ॒व॒ ॥ ९ ॥

हे सोम ते तव संबंधिन्यो दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय मयोभुवो मयसः सुखस्य भावयित्र्यो या ऊतयो रक्षाः संति विद्यंते ताभी रक्षाभिर्नोऽस्माकमविता रक्षिता भव ॥ मयोभुवः । अस्योतिविशेषणत्वेन स्त्रीलिंगत्वे भुवश्च । पा० ४. १. ४७. । इति ङीष् प्राप्नोति । तद्वीतो गुणवचनादित्यस्मादुत इति तपरकरणस्यानुवर्तनान्न भवति ॥

इ॒मं य॒ज्ञमि॒दं वचो॑ जुजुषा॒ण उ॒पाग॑हि । सोम॒ त्वं नो॑ वृ॒धे भ॑व ॥ १० ॥

इ॒मं । य॒ज्ञं । इ॒दं । वच॑ः । जु॒जु॒षा॒णः । उ॒प॒ऽआग॑हि । सोम॑ । त्वं । नः॒ । वृ॒धे । भ॒व॒ ॥ १० ॥

हे सोम त्वमिमममस्माभिः क्रियमाणं यज्ञमिदं वच इदानीं क्रियमाणं स्तुतिलक्षणं वचनं जुजुषाणः सेवमानः सन् उपागहि । उपागच्छ । प्राचीनवंशलक्षणं गृहं प्राप्नुहि । प्राप्य च नोऽस्माकं वृधे यज्ञस्य वर्धनाय भव ॥ जुजुषाणः । जुषी प्रीतिसेवनयोः । छंदसि लिट् । लिटः कानच् । चित इत्यंतोदात्तत्वं । उपागहि । गमेर्लोटि बहुलं छंदसीति शपो लुक् । अनुदात्तोपदेशेत्यादिना मकारलोपः । असिद्धवदत्रा भादित्यस्यासिद्धत्वाद्धेर्लुगभावः । गतिर्गतौ । पा० ८. १. ७०. । इति पूर्वस्य गतेर्निघातः ॥ ॥ २० ॥

दर्शयागे सौम्यस्याज्यभागस्य सोम गीर्भिरित्येषानुवाक्या । सूचितं च । अग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वयं । आ० १. ५. । इति । अन्यत्रापि यत्र वृधन्वंतावाज्यभागौ तत्रैषा द्वितीयाज्यभागानुवाक्या ॥

सोम॑ गी॒र्भिष्ट्वा॑ व॒यं व॒र्धया॑मो वचो॒विदः॑ । सु॒मृ॒ळी॒को न॒ आ वि॑श ॥ ११ ॥

सोम॑ । गीः॒ऽभिः । त्वा॒ । व॒यं । व॒र्धया॑मः । व॒चः॒ऽविदः॑ । सु॒ऽमृ॒ळी॒कः । नः॒ । आ । वि॒श॒ ॥ ११ ॥

हे सोम त्वा त्वां वचोविदः स्तुतिलक्षणानां वचसां वेदितारो वयमनुष्ठातारो गीर्भिः स्तुतिलक्षणैर्वचोभिर्वर्धयामः । प्रवृद्धं कुर्मः । तादृशस्त्वं च नोऽस्माकं सुमृळीकः शोभनं सुखं कुर्वन् सन् आ विश । आगच्छ ॥ सुमृळीकः । मृड सुखने । मृडेः कीकन्कनौ । उ० ४. २४. । इति भावे कीकन्प्रत्ययः । शोभनं मृडीकं यस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं ॥

संति पवमानेष्टयस्तिस्रः । तत्र तृतीयस्यामिष्टावुत्तरस्याज्यभागस्य गयस्फान इत्येषानुवाक्या । सूचितं च । पुष्टिमंतावग्निना रयिमश्नवन्नयस्फानो अमीवहा । आ० २. १. । इति ॥ एषैव प्रातःकालीनोपसदि सौम्ययागस्य याज्या सायंकालीनायां त्वनुवाक्या । सूचितं चाथोपसदिति खंडे । त्वं सोमासि सत्पतिर्गयस्फानो अमीवहा । आ० ४. ८. । इति ॥

ग॒य॒स्फानो॑ अमीव॒हा वसु॒वित्पु॑ष्टि॒वर्ध॑नः । सु॒मि॒त्रः सो॑म नो भव ॥ १२ ॥

ग॒य॒ऽस्फान॑ः । अ॒मी॒व॒ऽहा । व॒सु॒ऽवित् । पु॒ष्टि॒ऽवर्ध॑नः । सु॒ऽमि॒त्रः । सो॒म॒ । नः॒ । भव॒ ॥ १२ ॥

गयस्फानः । गय इति धननाम । धनस्य वर्धयिता अमीवहामीवानां रोगाणां हंता वसुवित् स्तोतॄणां धनस्य लंभयिता प्रापयिता पुष्टिवर्धनः पुष्टेः संपदो वर्धयिता सुमित्रः । शोभनानि मित्राणि सखायो

यस्य स तथोक्तः। हे सोम त्वं नोऽस्माकमेवंगुणविशिष्टो भव ॥ गयस्फानः। स्फायी वृद्धौ। अंतर्भावितण्यर्थात् ल्युटि व्यत्ययेन यलोपः। इदमादिषु चतुर्षु पदेषु कदुत्तरपदप्रकृतिस्वरत्वं। सुमित्रः। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं ॥

सोम रारंधि नो हृदि गावो न यवसेष्वा। मर्य इव स्व ओक्ये ॥ १३ ॥

सोम। ररंधि। नः। हृदि। गावः। न। यवसेषु। आ। मर्यःऽइव। स्वे। ओक्ये ॥ १३ ॥

हे सोम त्वं नोऽस्माकं हृदि हृदये ररंधि। रमस्व। तत्र निदर्शनद्वयमुच्यते। गावो न। यथा गावो यवसेषु शोभनतृणेष्वाभिमुख्येन रमंते। मर्य इव। यथा वा मर्यो मरणधर्मा मनुष्यः स्व ओक्ये स्वकीय ओकसि गृहे पुत्रादिभिः सह रमते तद्वदस्माभिर्दत्तेन हविषा तृप्तः सन् अस्मास्वेवावतिष्ठस्व। नान्यत्र गच्छेति निदर्शनद्वयस्य तात्पर्यार्थः ॥ ररंधि। रमु क्रीडायां। व्यत्ययेन परस्मैपदं। बहुलं छंदसीति शपः श्लुः। छंदस्युभयथेति हेरार्धधातुकत्वेन ङित्त्वाभावादङितश्चेति हेर्धिः। अत एवाङित्त्वादनुनासिकलोपाभावः। सेर्ह्यपिच्चेति हेरपित्त्वात्तस्यैव स्वरः शिष्यते। छांदसमभ्यासदीर्घत्वं। आमंत्रितं पूर्वमविद्यमानवदिति पूर्वस्यामंत्रितस्याविद्यमानवत्त्वात्पदादपरत्वेन निघाताभावः। मर्य इव। छंदसि निष्टर्क्येत्यादौ मर्यशब्दो यत्प्रत्ययांतो निपात्यते। यतोऽनाव इत्याद्युदात्तत्वं। ओक्ये। उच समवाये। उच्यते समवेयते प्राप्यत इत्योक्यं गृहं। ऋहलोर्ण्यत्। चजोः कु घिण्ण्यतोरिति कुत्वं। तित्स्वरितः ॥

यः सोम सख्ये तव रारणद्देव मर्त्यः। तं दक्षः सचते कविः ॥ १४ ॥

यः। सोम। सख्ये। तव। ररणत्। देव। मर्त्यः। तं। दक्षः। सचते। कविः ॥ १४ ॥

हे देव द्योतमान सोम तव सख्ये त्वदीये सखित्वे निमित्तभूते सति यो मर्त्यो मरणधर्मा यजमानो रारणत् रणति एतत्सूक्तरूपेण स्तोत्रेण त्वां स्तौति तं यजमानं कविः क्रांतदर्शी दक्षः सर्वकार्यसमर्थस्त्वं सचते। सेवसे। अनुगृह्णासीत्यर्थः ॥ ररणत्। रण शब्दार्थः। लेट्यडागमः। बहुलं छंदसीति शपः श्लुः। इतश्च लोप इतीकारलोपः। छंदस्युभयथेत्यार्धधातुकत्वादभ्यनिटि लसार्वधातुके विधीयमानस्याभ्यस्ताद्युदात्तत्वस्याभावे धातुस्वरः शिष्यते। सचते। षच समवाये। पुरुषव्यत्ययः ॥

उरुष्या णो अभिशस्तेः सोम नि पाह्यंहसः। सखा सुशेव एधि नः ॥ १५ ॥

उरुष्य। नः। अभिऽशस्तेः। सोम। नि। पाहि। अंहसः। सखा। सुऽशेवः। एधि। नः ॥ १५ ॥

हे सोम त्वं नोऽस्मानभिशस्तेरभिशंसनादभिशापरूपान्निंदनादुरुष्य। रक्ष। उरुष्यती रक्षाकर्मेति यास्कः। नि॰ ५. २३.। तथांहसोऽस्मत्कृतात्पापाच्च नि पाहि। नितरां पालय। एवमस्मदीयं पापं परिहृत्य सुशेवोऽस्मभ्यं दातव्येन शोभनेन सुखेन युक्तः सन्सखैधि। हितकारी भव ॥ अभिशस्तेः। शंसु स्तुतौ। अस्माद्भावे क्तिन्। तादौ चेति गतेः प्रकृतिस्वरत्वं। एधि। अस भुवि। लोटि सेर्हिः। तस्य ङित्त्वात् श्नसोरल्लोप इत्यकारलोपः। घ्वसोरेद्धावभ्यासलोपश्चेति सकारस्यैत्वं। तस्यासिद्धवदत्रा भादित्यसिद्धत्वात् हुझल्भ्यो हेर्धिरिति हेर्धिरादेशः ॥ ॥ २१ ॥

ग्रावस्तोत्र आ प्यायस्व समेतु त इति तृचो विनियुक्तः। सूत्रितं च। आ प्यायस्व समेतु त इति तिस्रो मृजंति त्वा दश क्षिपः। आ॰ ५. १२.। इति ॥ पत्नीसंयाजेषु सौम्यस्या प्यायस्वेत्येषानुवाक्या। सूत्रितं च। आ प्यायस्व समेतु ते सं ते पयांसि समु यंतु वाजाः। आ॰ १. १०.। इति ॥ चमसाप्यायनेऽप्येषा विनियुक्ता। सूत्रितं च। आ प्यायस्व समेतु ते सं ते पयांसि समु यंतु वाजा इति चमसानाप्योपाय्यान्। आ॰ ५. ६.। इति ॥

आ प्यायस्व समेतु ते विश्वतः सोम वृष्ण्यं। भवा वाजस्य संगथे ॥ १६ ॥

आ। प्यायस्व। सं। एतु। ते। विश्वतः। सोम। वृष्ण्यं। भव। वाजस्य। संऽगथे ॥ १६ ॥

हे सोम त्वमा प्यायस्व । वर्धयस्व । ते तव वृष्ण्यं वृषत्वं वीर्यं सामर्थ्यं विश्वतः सर्वतः समेतु । संगच्छतां । त्वया संयुक्तं भवतु । एवंभूतस्त्वं वाजस्यान्नस्य संगथे संगमने भव । अस्माकमन्नप्रदो भवेत्यर्थः ॥ वृष्ण्यं । वृष सेचने । कनिन्युवृषीत्यादिना कनिन् । वृष्णि भवं वृष्ण्यं । भवे छंदसीति यत् । अल्लोपोऽन इत्यकारलोपः । ये चाभावकर्मणोरिति प्रकृतिभावस्तु व्यत्ययेन न प्रवर्तते । यतोऽनाव इत्याद्युदात्तत्वं । भव । द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं । संगथे । पातृतुदिवचीत्यादिना विधीयमानस्थक्प्रत्ययो बहुलवचनाद्गमेरपि भवति । थाथादिनोत्तरपदांतोदात्तत्वं ॥

आ प्यायस्व मदिंतम् सोम् विश्वेभिरंशुभिः । भवा नः सुश्रवस्तमः सखा वृधे ॥१७॥
आ । प्यायस्व । मदिन्ऽतम । सोम । विश्वेभिः । अंशुऽभिः । भव । नः । सुश्रवःऽतमः । सखा । वृधे ॥१७॥

हे मदिंतमातिशयेन मदवन् सोम विश्वेभिः सर्वैरंशुभिर्लतावयवैरा प्यायस्व । आ समंताद्वृद्धो भव । स त्वं सुश्रवस्तमोऽतिशयेन शोभनान्नयुक्तः सन् नोऽस्माकं वृधे वर्धनाय सखा भव । मित्रीभव ॥ मदिंतम । मदो हर्षः । तद्वान् मदी । अतिशयेन मदी मदिंतमः । नाद्घस्य । पा० ८. २. १७. । इति तमपो नुट् । सुश्रवस्तमः । श्रव इत्यन्ननाम श्रूयत इति सतः । नि० १०. ३. । इति यास्कः । शोभनं श्रवो यस्य स तथोक्तः । अतिशयेन सुश्रवाः सुश्रवस्तमः । तमपः पित्त्वादनुदात्तत्वे सोर्मनसी अलोमोषसी इत्युत्तरपदाद्युदात्तत्वमेव शिष्यते ॥

पत्नीसंयाजेषु सौम्यस्य सं ते पयांसीति याज्या । सूत्रितं च । सं ते पयांसि समु यंतु वाजा इह त्वष्टारम-ग्रियं । आ० १. १०. । इति ॥ चमसाप्यायनेऽप्येषा । सूत्रितं च । सं ते पयांसि समु यंतु वाजा इति चमसानाप्यो पायान् । आ० ५. ६. । इति ॥

सं ते पयांसि समु यंतु वाजाः सं वृष्ण्यान्यभिमातिषाहः ।
आप्यायमानो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व ॥१८॥
सं । ते । पयांसि । सं । ऊं इति । यंतु । वाजाः । सं । वृष्ण्यानि । अभिमातिऽसहः ।
आऽप्यायमानः । अमृताय । सोम । दिवि । श्रवांसि । उत्ऽतमानि । धिष्व ॥१८॥

हे सोम अभिमातिषाहोऽभिमातीनां शत्रूणां हंतुस्ते तव एवंभूतं त्वां पयांसि अयणार्थानि चीराणि सं यंतु । संगच्छंतां । तथा वाजा उ हविर्लक्षणान्यन्नानि च त्वां संगच्छंतां । वृष्ण्यानि वीर्याणि च संगच्छंतां । हे सोम त्वममृतायास्माकममृतत्वायामरणत्वायाप्यायमान आ समंताद्वर्धमानः सन्दिवि नभसि स्वर्गे उत्तमान्यु-न्नततमान्युत्कृष्टानि श्रवांस्यन्नान्यस्माभिर्भोक्तव्यानि हविर्लक्षणानि वा धिष्व । धारय ॥ ते । क्रियाग्रहणं कर्तव्य-मिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । अभिमातिषाहः । षह अभिभवे । छंदसि सह इति ण्विप्रत्ययः । सुषामादित्वात् षत्वं । अमृताय । नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं । उत्तमानि । उच्छब्दात्ससा-धनक्रियावचनादातिशायनिकस्तमप् । उत्तमशश्वत्तमौ सर्वत्र । पा० ६. १. १६०.* । इत्युंछादिषु पाठादंतो-दात्तत्वं । धिष्व । सुधित वसुधित नेमधित धिष्व धिषीय च । पा० ७. ४. ४५. । इति धिभावो निपात्यते ॥

सोमप्रवहणे या ते धामानीत्येषा । सूत्रितं च । या ते धामानि हविषा यजंतीमां धियं शिक्षमाणस्य देवेति निहिते परिदध्यात् । आ० ४. ४. । इति ॥ एकादशिनस्य सौम्यस्य पशोर्हविष एषैव याज्या । प्रदानाना-मिति खंडे सूत्रितं । अषाळ्हं युत्सु पृतनासु पप्रिं या ते धामानि हविषा यजंति । आ० ३. ७. । इति ॥

या ते धामानि हविषा यजंति ता ते विश्वा परिभूरस्तु यज्ञं ।
गयस्फानः प्रतरणः सुवीरोऽवीरहा प्र चरा सोम दुर्यान् ॥१९॥

या। ते। धामा॑नि। ह॒विषा॑। यज॑न्ति। ता। ते॒। विश्वा॑। प॒रि॒ऽभूः। अ॒स्तु॒। य॒ज्ञं।
गय॒ऽस्फानः॑। प्र॒ऽतर॑णः। सु॒ऽवीरः॑। अवी॑र॒ऽहा। प्र। च॒र॒। सो॒म॒। दुर्या॑न् ॥१९॥

हे सोम ते त्वदीयानि या यानि धामानि द्युप्रभृतिष्ववस्थितानि तेजांसि हविषा चरुपुरोडाशादिना यजंति यजमानाः पूजयंति ता ते विश्वा त्वदीयानि तानि सर्वाणि धामानि यज्ञमस्मदीयमध्वरं परिभूरस्तु। परितो भावयितॄणि परितः प्राप्तानि संतु। यद्वा। त्वदीयानां तेषां सर्वेषां धाम्नामस्मदीयो यजमानः परिभूर्यज्ञं प्रति परिग्रहीता यागेन स्वीकर्तास्तु। भवतु। परिपूर्वो भवतिः परिग्रहार्थः। तादृशैर्धामभिरुपेतस्त्वं दुर्यान् प्राचीनवंशादिलक्षणानस्मदीयान् गृहान्। गृहा वै दुर्या इति श्रुतेः। प्र चर। प्रकर्षेण गच्छ। कीदृशस्त्वं। गयस्फानो गयस्य गृहस्य धनस्य वा वर्धयिता प्रतरणः प्रकर्षेण दुरितात्तारयिता सुवीरः शोभनैर्वीरैः पुरुषैरुपेतः अवीरहा। वीर्याज्जायंत इति वीराः पुत्राः। तेषामहंता ॥ परिभूः। भू प्राप्तौ। अस्मात्क्विपेति क्विप्। व्यत्ययो बहुलं। पा० ३.१.८५.। इति लिंगवचनव्यत्ययौ। अस्तु। व्यत्ययेनैकवचनं। गयस्फानः। गय इति गृहस्य धनस्य च नामधेयं। तेषां स्फायिता वर्धयिता। कृत्यल्युटो बहुलमिति कर्तरि ल्युटि छांदसो यलोपः। अवीरहा। वीराणां हंता वीरहा। न वीरहा अवीरहा ॥

महापितृयज्ञे सोमस्य पितृमतो यागे सोमो धेनुमित्येषा द्वितीयानुवाक्या। तत्र ह्येकैकस्य हविषो द्वे द्वे अनुवाक्ये समुच्चयेन विहिते। तथैव दक्षिणाग्नेरिति खंडे सूचितं। सोमो धेनुं सोमो अर्वंतमाशुं त्वं सोम पितृभिः संविदानः। आ० २.१९.। इति ॥

सोमो॑ धे॒नुं सोमो॒ अर्व॑न्तमा॒शुं सोमो॑ वी॒रं क॑र्म॒ण्यं॑ ददाति।
सा॒द॒न्यं॑ वि॒द॒थ्यं॑ स॒भेयं॑ पितृ॒श्रव॑णं॒ यो ददा॑शदस्मै ॥२०॥
सोमः॑। धे॒नुं। सोमः॑। अर्व॑न्तं। आ॒शुं। सोमः॑। वी॒रं। क॒र्म॒ण्यं॑। द॒दा॒ति॒।
स॒द॒न्यं॑। वि॒द॒थ्यं॑। स॒भेयं॑। पि॒तृ॒ऽश्रव॑णं। यः। ददा॑शत्। अ॒स्मै॒ ॥२०॥

यो यजमानो ददाशत् सोमाय हविर्लक्षणान्यन्नानि दद्यात् तस्मै यजमानाय सोमो धेनुं सवत्सां दोग्ध्रीं गां ददाति। तथाशुं शीघ्रगामिनमर्वंतमश्वं ददाति। प्रयच्छति। तथा वीरं पुत्रमस्मै यजमानाय ददाति। कीदृशं पुत्रं। कर्मण्यं लौकिककर्मसु कुशलं सदन्यं। सदनं गृहं। तदर्हं। गृहकार्यकुशलमित्यर्थः। विदथ्यं। विदंत्येषु देवानिति विदथा यज्ञाः। तदर्हं। दर्शपूर्णमासादियागानुष्ठानपरमित्यर्थः। सभेयं सभायां साधुं। सकलशास्त्राभिज्ञमित्यर्थः। पितृश्रवणं पिता श्रूयते प्रख्यायते येन पुत्रेण तादृशं ॥ कर्मण्यं। कर्मसु साधुः कर्मण्यः। तत्र साधुः। पा० ४.४.९८.। इति यत्। ये चाभावकर्मणोरिति प्रकृतिभावः। तित्स्वरितमिति स्वरितत्वं। एवमुत्तरत्रापि यत्प्रत्ययः। सभेयं। ढश्छंदसि। पा० ४.४.१०६.। इति तत्र साधुरित्यर्थे ढप्रत्ययः। ददाशत्। दाशृ दाने। लेट्यडागमः। बहुलं छंदसीति शपः श्लुः ॥ ॥२२॥

एकादशिनस्य सौम्यस्य पशोः पुरोडाशस्याषाळ्हं युत्स्वित्येषा याज्या। प्रदानानामिति खंडे सूचितं। अषाळ्हं युत्सु पृतनासु पप्रिं या ते धामानि हविषा यजंति। आ० ३.७.। इति ॥

अषा॑ळ्हं यु॒त्सु पृत॑नासु॒ पप्रिं॑ स्व॒र्षाम॒प्सां वृ॒जन॑स्य गो॒पां।
भ॒रे॒षु॒जां सु॑क्षि॒तिं सु॒श्रव॑सं॒ जय॑न्तं॒ त्वामनु॑ मदेम सोम ॥२१॥
अषा॑ळ्हं। यु॒त्ऽसु। पृत॑नासु। पप्रिं॑। स्वः॒ऽसां। अ॒प्सां। वृ॒जन॑स्य। गो॒पां।
भ॒रे॒षु॒ऽजां। सु॒ऽक्षि॒तिं। सु॒ऽश्रव॑सं। जय॑न्तं। त्वां। अनु॑। म॒दे॒म॒। सो॒म॒ ॥२१॥

युत्सु युद्धेष्वषाळ्हं शत्रुभिरनभिभवनीयं तथा पृतनासु सेनासु पप्रिं जयस्य पूरयितारं स्वर्षां स्वर्गस्य

सनितारं दातारं अप्सामपां वृष्टिलक्षणानामुदकानां दातारं। यद्वा। अप्सामप्सातृकं भक्षकरहितं। सर्वेषामनुग्राहकमित्यर्थः। वृजनस्य गोपां। वृज्यतेऽनेनेति वृजनं बलं। तस्य गोपां गोपयितारं रक्षितारं भरेषुजां। भ्रियंत एषु हवींषीति भरा यागाः। तेषु प्रादुर्भवंतं सुक्षितिं शोभननिवासस्थानं सुश्रवसं शोभनयशस्कं जयंतं शत्रूनभिभवंतं। हे सोम ईदृग्भूतं त्वामनुलक्ष्य मदेम। हर्षयुक्ता भवेम॥ अषाळ्हं। षह अभिभवे। साढ्यै साढ्वा साढेति निगमे। पा० ६. ३. ११३.। इति निपातनात् सहिवहोरोदवर्णस्य। पा० ६. ३. ११२.। इत्योत्वाभावः। सहेः साडः स इति षत्वं। पप्रिं। पॄ पालनपूरणयोः। आदृगमहनजन इति किन्प्रत्ययः। स्वर्षां। स्वः स्वर्गं सनोतीति स्वर्षाः। षणु दाने। जनसनखनेति विट्। विड्वनोरनुनासिकस्यादित्यात्वं। अप्सां। अप्शब्दोपपदात्सनोतेः पूर्ववद्विट्। यद्वा। प्सा भक्षणे। प्साति भक्षयतीति प्साः। क्विब्वेति क्विप्। न विद्यते प्सा अस्येति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। भरेषुजां। जनी प्रादुर्भावे। पूर्ववद्विट् आत्वं च। मदेम। मदी हर्षे। व्यत्ययेन शप्॥

**त्वमि॒मा ओष॑धीः सोम॒ विश्वा॒स्त्वम॒पो अ॑जनय॒स्त्वं गाः।**
**त्वमा त॑तंथो॒र्व१॑न्तरि॑क्षं॒ त्वं ज्योति॑षा॒ वि तमो॑ ववर्थ॥२२॥**
**त्वं। इ॒माः। ओष॑धीः। सोम॒। विश्वाः॑। त्वं। अ॒पः। अ॒ज॒न॒यः॒। त्वं। गाः।**
**त्वं। आ। त॒तं॒थ॒। उ॒रु। अं॒तरि॑क्षं। त्वं। ज्योति॑षा। वि। तमः॑। व॒व॒र्थ॒॥२२॥**

हे सोम त्वमिमा भूम्यां वर्तमाना विश्वाः सर्वा ओषधीरजनयः। उत्पादितवानसि। तथा त्वमपस्तासामोषधीनां कारणभूतानि वृष्ट्युदकान्यजनयः। तथा त्वं गाः सर्वान्पशूनुदपादयः। उरु विस्तीर्णमंतरिक्षं त्वमा ततंथ। विस्तारितवानसि। तस्मिन्नंतरिक्षे यत्तमोऽस्मद्दृष्टिनिरोधकमंधकारं तदपि त्वं ज्योतिषात्मीयेन प्रकाशेन वि ववर्थ। विवृतं विश्लिष्टं विनष्टं कृतवानसि॥ ततंथ। तनु विस्तारे। ववर्थ। वृञ् वरणे। उभयत्र लिटस्थलि बभूथा ततंथ जगृभ्म ववर्थेति निगमे। पा० ७. २. ६४.। इति निपात्यते॥

**दे॒वेन॑ नो॒ मन॑सा देव सोम रा॒यो भा॒गं स॑हसावन्न॒भि यु॑ध्य।**
**मा त्वा त॑नदीशि॑षे वी॒र्य॑स्यो॒भये॑भ्यः॒ प्र चि॑कित्सा॒ गवि॑ष्टौ॥२३॥**
**दे॒वेन॑। नः॒। मन॑सा। दे॒व॒। सो॒म॒। रा॒यः। भा॒गं। स॒ह॒सा॒ऽव॒न्। अ॒भि। यु॒ध्य॒।**
**मा। त्वा॒। आ। त॒न॒त्। ईशि॑षे। वी॒र्य॑स्य। उ॒भये॑भ्यः। प्र। चि॒कि॒त्स॒। गोऽइ॑ष्टौ॥२३॥**

हे देव द्योतमान सहसावन् बलवन् सोम देवेन मनसा द्योतमानया त्वदीयया बुद्ध्या रायो भागं धनस्यांशं नोऽस्मानभिलक्ष्य युध्य। प्रेरय। यद्वा। नोऽस्माकं रायो धनस्य भागं भक्तारमपहर्तारं शत्रुमभि युध्य। आभिमुख्येन सम्यक् प्रहर। त्वा तादृशं त्वां कश्चिदपि शत्रुर्मा आ तनत्। क्लेशेनाततं मा कार्षीत्। मा हिंसीदित्यर्थः। उभयेभ्य उभयेषां युध्यमानानां संबंधिनो वीर्यस्य बलस्य त्वमीशिषे। ईश्वरो भवसि। स त्वं गविष्टौ संग्रामे प्र चिकित्स। अस्मदीयमुपद्रवं परिहर॥ रायः। ऊडिदमिति विभक्तिरुदात्तत्वं। भागं। भजतेः कर्मणि घञ्। कृत्यल्युटो बहुलमिति बहुलवचनात्कर्तरि वा। कर्षात्वत इत्यंतोदात्तत्वं। सहसावन्। सहःशब्दान्मतुपि छांदस आकारोपजनः। युध्य। युध संप्रहारे। व्यत्ययेन परस्मैपदं। तनत्। तनु विस्तारे। व्यत्ययेन शप्। न माङ्योग इत्यडभावः। ईशिषे। ईशः से। पा० ७. २. ७७.। इतीडागमः। चिकित्स। कित ज्ञाने॥ गुप्तिज्किद्भ्यः सन्। पा० ३. १. ५.। गविष्टौ। गवां बाणानामिष्टय एषणानि गमनानि येष्विति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं॥ ॥२३॥

एता उ त्या इत्यष्टादशर्चमष्टमं सूक्तं गोतमस्यार्षं। आदितश्चतस्रो जगत्यः। त्रयोदशाद्याः षड्च उष्णिहः। शिष्टा अष्टौ त्रिष्टुभः। उषा देवता। अश्विना वर्तिरित्यंत्यस्तृचोऽश्विदेवताकः। तथा चानुक्रांतं। एता उ त्या ह्यूनोषस्यं चतुर्जगत्यादि षळुष्णिगंतं तृचोऽंत्य आश्विन इति॥ सूक्तविनियोगो लैंगिकः॥ प्रातरनुवाक उषस्ये

क्रतौ जागते छंदस्याश्विनशस्त्रे चैता उ त्या इति चतस्रो विनियुक्ताः । सूचितं च । एता उ त्या इति चतस्रो जागतं । आ० ४. १४. । इति ॥

एता उ त्या उषसः केतुमक्रत पूर्वे अर्धे रजसो भानुमंजते ।
निष्कृण्वाना आयुधानीव धृष्णवः प्रति गावोऽरुषीर्यंति मातरः ॥१॥
एताः । ऊं इति । त्याः । उषसः । केतुं । अक्रत । पूर्वे । अर्धे । रजसः । भानुं । अंजते ।
निःऽकृण्वानाः । आयुधानिऽइव । धृष्णवः । प्रति । गावः । अरुषीः । यंति । मातरः ॥१॥

उ इत्येतत्पादपूरणं । त्यास्ता एता उषसः प्रभातकालाभिमानिन्यो देवताः केतुमंधकारावृतस्य सर्वस्य जगतः प्रज्ञापकं प्रकाशमक्रत । अकृषत । कृतवत्यः । यस्मादेवं तस्मादुषसो रजसोऽंतरिक्षलोकस्य पूर्वेऽर्धे प्राचीनदिग्भागे भानुं प्रकाशमंजते । व्यक्तीकुर्वंति । धृष्णवो धर्षणशीला योद्धार आयुधानीव यथासिप्रभृतीन्यायुधानि संस्कुर्वंति एवं निष्कृण्वानाः स्वभासा जगत्संस्कुर्वाणा गावो गमनस्वभावा अरुषीरारोचमाना मातरः सूर्यप्रकाशस्य निर्मात्र्यो जगज्जनन्यो वोषसः प्रति यंति । प्रतिदिवसं गच्छंति । एवंविधा उषसोऽस्मान्रक्षंत्वित्यर्थः । अत्र निरुक्तं । एतास्ता उषसः केतुमकृषत प्रज्ञानमेकस्या एव पूजनार्थे बहुवचनं स्यात् पूर्वेऽर्धेऽंतरिक्षलोकस्य समंजते भानुना निष्कृण्वाना आयुधानीव धृष्णवः । निरित्येष समित्येतस्य स्थाने । एमीदेषां निष्कृतं जारिणीवेत्यपि निगमो भवति । प्रति यंति गावो गमनादरुषीरारोचनान्मातरो भासो निर्मात्र्यः । नि० १२. ७. । इति ॥ अक्रत । करोतेर्लुङि मंत्रे घसेति च्लेर्लुक् । निष्कृण्वानाः । कृवि हिंसाकरणयोश्च । अस्मात्ताच्छीलिकश्चानश् । धिन्विकृण्व्योरच्चेत्युप्रत्ययः । इदुदुपधस्य चाप्रत्ययस्येति विसर्जनीयस्य षत्वं । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

उदपप्तन्नरुणा भानवो वृथा स्वायुजो अरुषीर्गा अयुक्षत ।
अक्रन्नुषासो वयुनानि पूर्वथा रुशंतं भानुमरुषीरशिश्रयुः ॥२॥
उत् । अपप्तन् । अरुणाः । भानवः । वृथा । सुऽआयुजः । अरुषीः । गाः । अयुक्षत ।
अक्रन् । उषसः । वयुनानि । पूर्वऽथा । रुशंतं । भानुं । अरुषीः । अशिश्रयुः ॥२॥

अरुणा आरोचमाना भानव औषस्यो दीप्तयो वृथानायासेन स्वयमेवोदपप्तन् । उद्गमन् । तदनंतरमुषसश्च स्वायुजः सुखेन रथ आयोक्तुं शक्या अरुषीः शुभ्रवर्णा गाः पूर्वमुत्थितान् रश्मीन् ईदृशीः स्ववाहनभूताश्चतुष्पदीर्गा एव वायुक्षत । स्वरथेऽयोजयन् । उक्तं च । अरुण्यो गाव उषसामिति । एवं गोभिर्युक्तं रथमारुह्योषसः पूर्वथा पूर्वेष्वतीतेष्वहःस्विव वयुनानि सर्वेषां प्राणिनां ज्ञानान्यक्रन् । अकार्षुः । उषःकाले जाते हि सर्वे प्राणिनो ज्ञानयुक्ता भवंति । तदनंतरमरुषीरारोचमानास्ता उषसो रुशंतं । रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः । नि० २. २०. । इति यास्कः । शुभ्रवर्णं भानुं सूर्यमशिश्रयुः । असेवंत । तेन सहैकीभवंतीत्यर्थः ॥ अपप्तन् । पत्लृ गतौ । लुङि लृदित्त्वात् च्लेरङादेशः । पतः पुम् । पा० ७. ४. १९. । इति धातोः पुमागमः । अक्रन् । मंत्रे घसेत्यादिना च्लेर्लुक् । पूर्वथा । प्रत्नपूर्वविश्वेमात्थाल् छंदसि । पा० ५. ३. १११. । इतीवार्थे थाल्प्रत्ययः । अशिश्रयुः । श्रिञ् सेवायां । बहुलं छंदसीति शपः श्लुः । सिजभ्यस्तविदिभ्यश्चेति झेर्जुस् । जुसि च । पा० ७. ३. ८३. । इति गुणः ॥

अर्चंति नारीरपसो न विष्टिभिः समानेन योजनेना परावतः ।
इषं वहंतीः सुकृते सुदानवे विश्वेदह यजमानाय सुन्वते ॥३॥

अर्चंति। नारीः। अपसः। न। विष्टिऽभिः। समानेन। योजनेन। आ। पराऽवतः।
इषं। वहंतीः। सुऽकृते। सुऽदानवे। विश्वा। इत्। अह। यजमानाय। सुन्वते ॥ ३॥

नारीर्नेत्र्य उषसो विष्टिभिर्निवेशकैः स्वकीयैस्तेजोभिः समानेन योजनेनैकेनैव योजनेनोद्योगेना परावत आ दूरदेशादा पश्चिमदिग्भागादर्चंति। नभःप्रदेशं पूजयंति। कृत्स्नं जगद्युगपदेव व्याप्नुवंतीत्यर्थः। तत्र दृष्टांतः। अपसो न। युद्धकर्मणोपेताः पुरुषा यथा स्वकीयैरायुधैर्धाटीमुखेन सर्वं देशं व्याप्नुवंति तद्वत्। किं कुर्वत्यः। सुकृते शोभनस्य कर्मणः कर्त्रे सुन्वते सोमाभिषवं कुर्वते सुदानवे कल्याणीर्दक्षिणा ऋत्विग्भ्यो ददते यजमानाय विश्वेदह सर्वमेवेषमन्नं वहंतीरावहंत्यः। प्रयच्छंत्य इत्यर्थः ॥ नारीः। नॄ नये। ऋदोरप्। नृनरयोर्वृद्धिश्च। पा॰ ४. १. ७३.*। इति शार्ङ्गरवादिषु पाठात् ङीन्। जसि वा छंदसीति पूर्वसवर्णदीर्घत्वं। अपसः। अपस्शब्दादर्शआदिभ्योऽजित्यच्। सुपां सुलुगिति जसः सुः। व्यत्ययेन प्रत्ययात्पूर्वस्योदात्तत्वं। विष्टिभिः। विश प्रवेशने। विशंति प्रविशंतीति विष्टयः किरणाः। क्तिच्क्तौ च संज्ञायामिति क्तिच्। विश्वा। सुपां सुलुगित्यमो डादेशः ॥

अधि पेशांसि वपते नृतूरिवापोर्णुते वक्ष उस्रेव बर्जहं।
ज्योतिर्विश्वस्मै भुवनाय कृण्वती गावो न व्रजं व्यु१षा आवर्तमः ॥ ४॥
अधि। पेशांसि। वपते। नृतूःऽइव। अप। ऊर्णुते। वक्षः। उस्राऽइव। बर्जहं।
ज्योतिः। विश्वस्मै। भुवनाय। कृण्वती। गावः। न। व्रजं। वि। उषाः। आवरि-
त्यावः। तमः ॥ ४॥

उषाः पेशांसि जगत्स्वाश्लिष्टानि कृष्णवर्णानि तमांस्यध्याधिक्येन वपते। छिनत्ति। तत्र दृष्टांतः। नृतूरिव। नॄंस्तूर्वति केशेन रिक्तीकरोतीति नृतूर्नापितः। स यथा केशान्निःशेषेण च्छिनत्ति एवमुषा अप्यंधकारं समूलं हिनस्तीत्यर्थः। यद्वा। नृतूरिव नृत्यंती योषिदिव। पेशांसि। रूपनामैतत्। सर्वैर्दर्शनीयानि रूपाण्युषा अधि वपते। स्वात्मन्यधिकं धारयति। एवं प्रथमतोऽंधकारं स्वकिरणैर्निरस्य वक्षः स्वकीयमुरःप्रदेशमपोर्णुते। तमसानाच्छादितं करोति। स्वयमाविर्भवतीत्यर्थः। बर्जहं पयस उत्पत्तिस्थानं दोहनसमय उस्रा गौर्यथाविष्करोति तद्वत्। किं कुर्वती। गावो न व्रजं यथा गावः स्वकीयं गोष्ठं स्वयमेव शीघ्रं व्याप्नुवंति एवं स्वयमेव प्राचीं दिशं प्राप्य विश्वस्मै भुवनाय सर्वस्मै लोकाय ज्योतिष्कृण्वती। प्रकाशं कुर्वती। एवमुक्तेन प्रकारेणोषास्तमोऽंधकारं व्यावः। विवृतमपश्लिष्टमकरोत् ॥ नृतूरिव। तुर्वी हिंसार्थः। क्विब्वचेति क्विप्। राल्लोप इति वलोपः। र्वोरुपधाया इति दीर्घत्वं। यद्वा। नृती गात्रविनामे। नृतिशृध्योः कूः। उ॰ १. ९३.। इति कूप्रत्ययः। बर्जहं। वृङ् संभक्तौ। वृणीते संभजते गामिति बः पयः। विच्। तज्जहातीति बर्जहः। ओहाङ् त्यागे। खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्य उपसंख्यानं। पा॰ ३. २. २८. १.। इत्यगर्धशब्दोपपदादपि कृत्यल्युटो बहुलमिति बहुलवचनात् खश्। तस्य सार्वधातुकत्वेन कर्तरि शपि जुहोत्यादित्वात् श्लुः। द्विर्वचनादि। बवयोरभेद इति बत्वं। दिवोदासादित्वात्पूर्वपदाद्युदात्तत्वं। आवः। वृञ् वरणे। लुङि मंत्रे घसेति च्लेर्लुक्। गुणे हल्ङ्याब्भ्य इति लोपः। छंदस्यपि दृश्यते। पा॰ ६. ४. ७३.। इत्याडागमः ॥

प्रातरनुवाकस्योषस्ये क्रतौ प्रत्यर्चिरित्यष्टावनुवक्तव्याः। आश्विनशस्त्रे च। तथा च सूचितं। प्रत्यर्चिरित्यष्टौ व्युषा आ वो दिविजा इति षळिति त्रैष्टुभं। आ॰ ४. १४.। इति ॥

प्रत्यर्ची रुशदस्या अदर्शि वि तिष्ठते बाधते कृष्णमभ्वं।
स्वरुं न पेशो विदथेष्वंजञ्चित्रं दिवो दुहिता भानुमश्रेत् ॥ ५॥

प्रति । अर्चिः । रुशत् । अस्याः । अदर्शि । वि । तिष्ठते । बाधते । कृष्णं । अभ्वं ।
स्वरुं । न । पेशः । विदथेषु । अंजन् । चित्रं । दिवः । दुहिता । भानुं । अश्रेत् ॥ ५ ॥

अस्या उषसो रुशद्दीप्यमानमर्चिस्तेजः प्रत्यदर्शि । सद्यः पूर्वस्यां दिशि प्रथमतो दृश्यते । वि तिष्ठते । सर्वासु दिक्षु विविधमवतिष्ठते । व्याप्नोतीत्यर्थः । सर्वा दिशो व्याप्य चाभ्वं । महन्नामैतत् । अतिशयेन विपुलं कृष्णं कृष्णवर्णमंधकारं बाधते । अपसारयति । विदथेषु यज्ञेषु स्वरुं न स्वरुनाम्ना शकलेन युक्तं यूपं यथाज्येनाध्वर्यवोऽंजन् अंजंति तद्वन्नभसि स्वकीयं पेशो रूपमुषा अनक्ति । संश्लिष्टं करोति । तदनंतरं चित्रं चायनीयं भानुं सूर्यं दिवो दुहिता द्युलोकादुत्पन्नोषा अश्रेत् । असेवत ॥ वि तिष्ठते । समवप्रविभ्य इत्यात्मनेपदं । अश्रेत् । श्रिञ् सेवायां । लङि बहुलं छंदसीति शपो लुक् ॥ ॥ २४ ॥

अतारिष्म तमसस्पारमस्योषा उच्छंती वयुना कृणोति ।
श्रिये छंदो न स्मयते विभाती सुप्रतीका सौमनसायाजीगः ॥ ६ ॥
अतारिष्म । तमसः । पारं । अस्य । उषाः । उच्छंती । वयुना । कृणोति ।
श्रिये । छंदः । न । स्मयते । विऽभाती । सुऽप्रतीका । सौमनसाय । अजीगरिति ॥ ६ ॥

अस्य नैशस्य तमसोऽंधकारस्य पारं समाप्तिप्रदेशमतारिष्म । उत्तीर्णा अभूम । अनंतरमुच्छंती नैशं तमो वर्जयंत्युषा वयुना वयुनानि सर्वेषां प्राणिनां ज्ञानानि कृणोति । निर्मिमीते । श्रिये संपदर्थं छंदो न स्मयते । यथोपच्छंदयिता वशीकरणे समर्थः पुरुष आढ्यसमीपं प्राप्य तत्प्रीत्यर्थं स्मयते हसति एवं विभाती विशिष्टप्रकाशं कुर्वत्युषाः स्वकीयया निर्मलदीप्त्या हसंतीव दृश्यते । एवं सुप्रतीका विशिष्टप्रकाशरूपत्वेन शोभनांगी सती सौमनसाय सर्वेषां सौमनस्यायाजीगः । अंधकारं भक्षितवती ॥ अतारिष्म । तॄ प्लवनतरणयोः । लुङि सिचि वृद्धिः । तमसः । षष्ठ्याः पतिपुत्रेति विसर्जनीयस्य संहितायां सत्वं । स्मयते । ष्मिङ् ईषद्धसने । भौवादिकः । अजीगः । गॄ निगरणे । लङि बहुलं छंदसीति शपः श्लुः । बहुलं छंदसीत्यभ्यासस्येत्वं । तुजादित्वाद्दीर्घः ॥

भास्वती नेत्री सूनृतानां दिवः स्तवे दुहिता गोतमेभिः ।
प्रजावतो नृवतो अश्वबुध्यानुषो गोअग्राँ उप मासि वाजान् ॥ ७ ॥
भास्वती । नेत्री । सूनृतानां । दिवः । स्तवे । दुहिता । गोतमेभिः ।
प्रजाऽवतः । नृऽवतः । अश्वऽबुध्यान् । उषः । गोऽअग्रान् । उप । मासि ।
वाजान् ॥ ७ ॥

भास्वती तेजस्विनी । सूनृतेति वाङ्नाम । सूनृतानां प्रियसत्यात्मिकानां नेत्री प्रणेत्री कारयित्री । उषसि हि जातायां मनुष्यप्रमुखाः प्राणिनः स्वस्वव्यापारायेतस्ततः शब्दं कुर्वंति । एवंभूता दिवो दुहिता द्युलोकसकाशादुत्पन्नोषा गोतमेभिर्ऋषिभिरस्माभिः स्तवे । स्तूयते । हे उष अस्माभिः स्तुता त्वं वाजानन्नान्युप मासि । प्रयच्छ । कीदृशान्वाजान् । प्रजावतः प्रजाभिः पुत्रपौत्रादिभिर्युक्तान् नृवतो दासलक्षणैर्नृभिरुपेतान् अश्वबुध्यान् । अश्वा बुध्या विद्यमानत्वेन बोद्धव्या येषु वाजेषु तान् । यद्वा । अश्वबुध्नान् । वर्णव्यापत्त्या यकारः । अश्वमूलान् । अश्वैर्हि राजानो धनान्यन्नानि च लभंते । अतोऽन्नानां तन्मूलत्वं । गोअग्रान् । गावोऽग्रे प्रमुखे येषां तादृशान् ॥ भास्वती । भा दीप्तौ । असुन् । ततो मतुप् । मादुपधाया इति मतुपो वत्वं । उगितश्चेति ङीप् । नेत्री । ऋन्नेभ्यो ङीप् । उदात्तयणो हल्पूर्वादिति ङीप उदात्तत्वं । स्तवे । ष्टुञ् स्तुतौ । कर्मणि लटि बहुलं छंदसीति बहुलग्रहणाद्यकोऽपि लुक् । लोपस्त आत्मनेपदेष्विति तलोपः । छंदस्युभयथेत्येकारस्यार्धधातुकत्वेन ङित्वाभावाद्गुणावादेशौ । नृवतः । व्यत्ययेन मतोर्वत्वं । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं । मासि । मा माने । आदादिकः ॥

उषस्तमश्यां यशसं सुवीरं दासप्रवर्गं रयिमश्वबुध्यं ।
सुदंससा श्रवसा या विभासि वाजप्रसूता सुभगे बृहंतं ॥८॥
उषः । तं । अश्यां । यशसं । सुऽवीरं । दासऽप्रवर्गं । रयिं । अश्वऽबुध्यं ।
सुऽदंससा । श्रवसा । या । विऽभासि । वाजऽप्रसूता । सुऽभगे । बृहंतं ॥८॥

हे उष उषोदेवते तं रयिं धनमश्यां । प्राप्नुयां । कीदृशं । यशसं यशसा कीर्त्या युक्तं । सर्वैः प्रशस्यमित्यर्थः । सुवीरं शोभनैर्वीरैः पुत्रादिभिर्युक्तं दासप्रवर्गं । प्रकृष्टो वर्गः संघः प्रवर्गः । दासानां कर्मकराणां प्रवर्गो यस्मिन् तं । अनेकैर्भृत्यैरुपेतमित्यर्थः । अश्वबुध्यं । अश्वा बुध्या बोद्धव्या येन धनेन तादृशं । हे सुभगे शोभनधन उषः सुदंससा शोभनेन कर्मणा युक्तेन श्रवसा श्रवणीयेन स्तोत्रेण प्रीता त्वं वाजप्रसूतास्मभ्यं दत्तान्ना सती बृहंतं प्रौढं या यं रयिं विभासि विशेषेण प्रकाशयसि । तमश्यामिति पूर्वेण संबंधः ॥ अश्यां । अशू व्याप्तौ । व्यत्ययेन परस्मैपदं । बहुलं छंदसीति विकरणस्य लुक् । यशसं । अर्शआदित्वान्मत्वर्थीयोऽच् । व्यत्ययेन प्रत्ययात्पूर्वस्योदात्तत्वं । दासप्रवर्गं । दासयत्युपक्षपयति शत्रूनिति दासो भृत्यः । दसु उपक्षये । अस्माण्ण्यंतात्पचाद्यच् । चित्त्वादंतोदात्तत्वं । तदेव बहुव्रीहिस्वरेण शिष्यते । सुदंससा । सोर्मनसी अलोमोषसी इति बहुव्रीहावुत्तरपदाद्युदात्तत्वं । या । सुपां सुलुगित्यमो डादेशः ॥

विश्वानि देवी भुवनाभिचक्ष्या प्रतीची चक्षुरुर्विया वि भाति ।
विश्वं जीवं चरसे बोधयंती विश्वस्य वाचमविदन्मनायोः ॥९॥
विश्वानि । देवी । भुवना । अभिऽचक्ष्य । प्रतीची । चक्षुः । उर्विया । वि । भाति ।
विश्वं । जीवं । चरसे । बोधयंती । विश्वस्य । वाचं । अविदत् । मनायोः ॥९॥

देवी द्योतमानोषा विश्वानि सर्वाणि भुवना भुवनानि भूतजातान्यभिचक्ष्याभिप्रकाश्य प्रकाशवंति कृत्वानंतरं प्रतीची प्रत्यङ्मुखी सती चक्षुः प्रकाशकेन तेजसोर्वियोर्वी विस्तीर्णा सती वि भाति । प्रकाशते । अपि च विश्वं जीवं सर्वं प्राणिजातं चरसे चरणाय स्वस्वव्यापारेषु प्रवर्तनाय बोधयंती निद्रातः सकाशादुद्बोधयंत्युषा विश्वस्य सर्वस्य मनायोर्मनसा युक्तस्य वाग्व्यवहारसमर्थस्य प्राणिजातस्य या वागस्ति तां वाचमविदत् । अलभत । अत एवोषसः सूनृतावतीति संज्ञोपपन्ना भवति ॥ अभिचक्ष्य । चक्षिङ् व्यक्तायां वाचि । अयं प्रकाशनार्थोऽपि । समासेऽनञ्पूर्वे । पा० ७. १. ३७. । इति क्त्वाप्रत्ययस्य ल्यबादेशः । प्रतीची । प्रतिपूर्वादंचतेर्ऋत्विगित्यादिना क्विन् । अनिदितामिति नलोपः । अंचतेश्चोपसंख्यानमिति ङीप् । अच इत्यकारलोपे चाविति दीर्घत्वं । उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वं । उर्विया । उर्वीशब्दादुत्तरस्य सोरियाडियाजीकाराणां चोपसंख्यानं । पा० ७. १. ३९. १. । इति डियाजादेशः । आदेशसामर्थ्यात्तस्य लोपो न भवति । मनायोः । मन आत्मन इच्छति मनस्यति । सुप आत्मनः क्यच् । क्याच्छंदसीत्युः । वर्णव्यापत्त्या सकार आकारः । यद्वा । कर्तुः क्यङ् सलोपश्चेति क्यङ् सकारलोपश्च । अकृत्सार्वधातुकयोरिति दीर्घः ॥

पुनःपुनर्जायमाना पुराणी समानं वर्णमभि शुंभमाना ।
श्वघ्नीव कृत्नुर्विज आमिनाना मर्तस्य देवी जरयंत्यायुः ॥१०॥
पुनःऽपुनः । जायमाना । पुराणी । समानं । वर्णं । अभि । शुंभमाना ।
श्वघ्नीऽइव । कृत्नुः । विजः । आऽमिनाना । मर्तस्य । देवी । जरयंती । आयुः ॥१०॥

पुनःपुनर्जायमाना प्रतिदिवसं सूर्योदयात्पूर्वं प्रादुर्भवंती पुराणी चिरंतनी । नित्येत्यर्थः । यस्मात्समानं वर्णमेकमेव रूपमभि प्राप्य शुंभमाना शोभमाना । विभिन्नेष्वपि दिवसेष्वस्या ऐकरूप्येणावस्थानान्नित्यत्वमि-

त्यर्थः। एवंगुणविशिष्टा देवी देवनशीलोषा मर्तस्य मरणधर्मणः सर्वस्य प्राणिजातस्यायुर्जीवनं जरयंत्यूनयंती वर्तते। बह्वीषूषःस्वतीतासु हि सर्वेषामायुर्हीयते। उषाश्च पुनःपुनर्जायमानेत्युक्तं अतः सैवायुर्जरयति। तत्र दृष्टांतः। कृत्नुः कर्तनशीला श्वघ्नीव व्याधस्त्रीव। सा यथा विजश्चलतः पक्षिण आमिनाना पक्षादिच्छेदनेन हिंसंती तेषामायुर्जरयति तद्वत् ॥ पुराणी। पुरेत्यस्मादव्ययात् सायंचिरंप्राह्णे इत्यादिना। पा० ४. ३. २३. । भवार्थे ट्युप्रत्ययः। पुराणप्रोक्तेषु ब्राह्मणकल्पेषु। पा० ४. ३. १०५.। इति निपातनात्तुडभावः। योरनादेशः। टित्त्वाङ्डीप्। व्यत्ययेनांतोदात्तत्वं। शुंभमाना। शुम्भ दीप्तौ। शपः पित्त्वादनुदात्तत्वं। शानचो लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। श्वघ्नी। शुना मृगान् हतवान् श्वहा। बहुलं छंदसि। पा० ३. २. ८८.। इति वचनाद्ब्रह्मादिव्यतिरिक्तेऽप्युपपदे हंतेः क्विप्। ऋन्नेभ्यो ङीबिति ङीप्। अल्लोपोऽन इत्यकारलोपः। हो हंतेरिति घत्वं। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वं। कृत्नुः। कृती छेदने। औणादिकः क्नुप्रत्ययः। विजः। ओविजी भयचलनयोः। विजंति चलंतीति विजः पक्षिणः। आमिनाना। मीञ् हिंसायां। क्रैयादिकः। प्वादीनां ह्रस्व इति ह्रस्वत्वं। शानचश्चित्त्वादंतोदात्तत्वं ॥ ॥२५॥

व्यूर्ण्वती दिवो अंताँ अबोध्यप स्वसारं सनुतर्युयोति।
प्रमिनती मनुष्या युगानि योषा जारस्य चक्षसा वि भाति ॥ ११ ॥
विऽऊर्ण्वती। दिवः। अंतान्। अबोधि। अप। स्वसारं। सनुतः। युयोति।
प्रऽमिनती। मनुष्या। युगानि। योषा। जारस्य। चक्षसा। वि। भाति ॥ ११ ॥

दिवो नभसोऽंतान् प्रांतान्व्यूर्ण्वती विवृतांस्तमसा वियुक्तान् कुर्वत्युषा अबोधि। सर्वैः प्राणिभिरज्ञायि। ज्ञाताभूत्। तदनंतरं स्वसारमुषसः प्रादुर्भावे सति स्वयमेव सरंतीं निशां सनुतः। अंतर्हितनामैतत्। अंतर्हितप्रदेशेऽप युयोति। अपगमय्य पृथक्करोति। मनुष्या मनुष्याणां संबंधीनि युगानि कृतत्रेतादीनि प्रमिनती स्वगमनागमनाभ्यां प्रकर्षेण हिंसंती जारस्य रात्रेर्जरयितुः सूर्यस्य योषा जायोषाश्चक्षसात्मीयेन प्रकाशेन वि भाति। विशेषेण प्रकाशते ॥ व्यूर्ण्वती। ऊर्णुञ् आच्छादने। विपूर्वादस्माल्लटः शतृ। उगितश्चेति ङीप्। शतुरनुम इति नद्या उदात्तत्वं। सनुतः। एतदंतोदात्तं स्वरादिषु निपातितं। अतोऽव्ययसंज्ञायामव्ययादाप्सुप इति सप्तम्या लुक्। युयोति। यु मिश्रणामिश्रणयोः। बहुलं छंदसीति शपः श्लुः। मनुष्या। सुपां सुलुगिति षष्ठ्या डादेशः। युगानि। युजेः करणे कर्मणि वा घञ्। चजोः कु घिण्यतोरिति कुत्वं। उंछादिषु कालविशेषे रथाद्युपकरणे च युगशब्दपाठात् लघूपधगुणाभावः। का० ६. १. १६०.। उंछादीनां चेत्यंतोदात्तत्वं। जारस्य। दारजारौ कर्तरि णिलुक्च। पा० ३. ३. २०. ४.। इति घञंतो निपात्यते ॥

पशून्न चित्रा सुभगा प्रथाना सिंधुर्न क्षोद उर्विया व्यश्वैत्।
अमिनती दैव्यानि व्रतानि सूर्यस्य चेति रश्मिभिर्दृशाना ॥ १२ ॥
पशून्। न। चित्रा। सुऽभगा। प्रथाना। सिंधुः। न। क्षोदः। उर्विया। वि। अश्वैत्।
अमिनती। दैव्यानि। व्रतानि। सूर्यस्य। चेति। रश्मिऽभिः। दृशाना ॥ १२ ॥

सुभगा शोभनधना चित्रा चायनीया पूजनीयोषाः पशून्न यथा पशून् गोपालकोऽरण्ये विस्तारयति तथा प्रथाना तेजांसि विस्तारयंत्युर्वियोर्वी महती एवंभूता सा व्यश्वैत्। सर्वं जगद्व्याप्नोत्। तत्र दृष्टांतः। सिंधुर्न क्षोदः। यथा स्यंदनशीलमुदकं निम्नदेशेऽचिरादेव व्याप्नोति तद्वत्। सैवोषाः सूर्यस्य रश्मिभिः किरणैः सह दृशाना दृश्यमाना सती चेति। प्रज्ञातासीत्। किं कुर्वती। दैव्यानि देवसंबंधीनि व्रतानि दर्शपूर्णमासादीनि कर्माण्यमिनती अहिंसती। अनुष्ठाने यजमानान्प्रवर्तयंतीत्यर्थः। उषसः प्रादुर्भावानंतरं ह्यग्निहोत्रादीनि सर्वाणि कर्माण्यनुष्ठीयंते न रात्रौ। न सायमस्ति देवया अजुष्टं। ऋग्वे० ५ ७७. २.। इति श्रुतेः ॥ प्रथाना। प्रथ प्रख्याने। अस्मादंतर्भावितण्यर्थात्ताच्छीलिकश्चानश्। बहुलं छंदसीति शपो लुक्। सिंधुः।

स्यन्दू प्रस्रवणे । स्यंदेः संप्रसारणं धश्च । उ० १. १२. । इत्युप्रत्ययः । निदित्यनुवृत्तेराद्युदात्तत्वं । अश्वैत् । टुओश्वि गतिवृद्ध्योः । लुङ्ङ्चङ्कोर्विकल्पितत्वात् । पा० ३. १. ४९. ५८. । च्लेः सिच् । आगमानुशासनस्यानित्यत्वादिड्भावः । सिचि वृद्धिः । पा० ७. २. १. । अनिडादित्वात् ह्म्यंतक्षणेति वृद्धिप्रतिषेधाभावः । बहुलं छंदसि । पा० ७. ३. ९७. । इतीडागमाभावः । स्कोः संयोगाद्योरिति सलोपः । चेति । चिती संज्ञाने । कर्मणि लुङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । दृशाना । दृशेः कर्मणि लटः शानच् । बहुलं छंदसीति विकरणस्य लुक् ॥

प्रातरनुवाकस्योषस्ये क्रतावौष्णिहे छंदस्युषस्तच्चित्रमिति तृचो विनियुक्तः । आश्विनशस्त्रे च । अथोषस्य इति खंडे सूचितं । उषस्तच्चित्रमा भरेति तिस्र औष्णिहं । आ० ४. १४. । इति ॥

उषस्तच्चित्रमा भरास्मभ्यं वाजिनीवति । येन तोकं च तनयं च धामहे ॥१३॥
उषः । तत् । चित्रं । आ । भर । अस्मभ्यं । वाजिनीऽवति । येन । तोकं । च । तनयं । च । धामहे ॥१३॥

हे वाजिनीवति । वाजो हविर्लक्षणमन्नं । तद्युक्ता क्रिया वाजिनी । तया क्रियया युक्त उष उषोदेवते ऽस्मभ्यं चित्रं चायनीयं तद्धनमा भर । आहर । प्रयच्छ । येन धनेन तोकं पुत्रं तनयं तत्पुत्रं च धामहे दध्महे धारयामः । अत्र निरुक्तं । उषस्तच्चित्रं चायनीयं धनमाहरास्मभ्यमन्नवति येन पुत्रांश्च पौत्रांश्च दधीमहि । नि० १२. ६. । इति ॥ धामहे । दधातेर्लेटि बहुलं छंदसीति शपो लुक् । व्यत्ययेनाद्युदात्तत्वं । यद्वा । लोण्युत्तमस्य पिच्चेत्याडागमः प्रत्ययस्य पिद्वद्भावश्च । अतः प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते । अस्मिन्पक्ष एत ऐ । पा० ३. ४. ९३. । इत्यैत्वाभावो व्यत्ययेन द्रष्टव्यः । यद्वृत्तयोगादनिघातः ॥

उषो अद्येह गोमत्यश्वावति विभावरि । रेवदस्मे व्युच्छ सूनृतावति ॥१४॥
उषः । अद्य । इह । गोऽमति । अश्वऽवति । विभाऽवरि । रेवत् । अस्मे इति । वि । उच्छ । सूनृताऽवति ॥१४॥

हे गोमत्यस्मभ्यं दातव्यैर्गोभिर्युक्ते तथाश्वावत्यश्वैर्युक्ते विभावरि विशिष्टप्रकाशोपेते सूनृतावति । प्रियसत्यात्मिका वाक् सूनृता । तादृश्या वाचा युक्ते एवंभूते हे उष उषोदेवतेऽद्येदानीं प्रभातसमय इहास्मिन्देशेऽस्मे अस्माकं रेवत् धनयुक्तं कर्म यथा भवति तथा व्युच्छ । नैशं तमो निवारय ॥ अश्वावति । मंत्रे सोमाश्वेंद्रियेति मतौ दीर्घत्वं । पादादित्वादामंत्रितस्याष्टमिकनिघाताभावः । रेवत् । रयेर्मतौ बहुलं । पा० ६. १. ३७. ६. । इति संप्रसारणं । छंदसीरः इति मतुपो वत्वं । रेशब्दाच्च मतुप उदात्तत्वं वक्तव्यं । का० ६. १. १७६. १. । इति मतुप उदात्तत्वं । उच्छ । उछी विवासे । विवासो वर्जनं ॥

युक्ष्वा हि वाजिनीवत्यश्वाँ अद्यारुणाँ उषः । अथा नो विश्वा सौभगान्या वह ॥१५॥
युक्ष्व । हि । वाजिनीऽवति । अश्वान् । अद्य । अरुणान् । उषः । अथ । नः । विश्वा । सौभगानि । आ । वह ॥१५॥

हे वाजिनीवति हविर्लक्षणान्नवत्युष उषोदेवते अरुणानरुणवर्णानश्वानश्वस्थानीयान् गोविशेषानद्यास्मिन्काले युक्ष्वा हि । योजयैव । हिरवधारणे । अथानंतरं रथमारुह्य विश्वा सौभगानि सर्वाणि सौभाग्यानि नोऽस्मभ्यमा वह । आनय ॥ अश्वान् । दीर्घादटि समानपाद इति संहितायां नकारस्य रुत्वं । आतोऽटि नित्यमिति सानुनासिक आकारः । सौभगानि । सुभगाच्च [illegible] पाठाद्भावकर्मणोरर्थयोः प्राणभृज्जा[illegible]दाचादिभ्योऽञित्यञ्प्रत्ययः । हृद्भगसिंध्वंते पूर्वपदस्य चेत्युभयपदवृद्धौ प्राप्तायां सर्वविधीनां छंदसि विकल्पितत्वाद्चोत्तरपदवृद्धिर्न भवतीत्युक्तं । का० ७. ३. १९. ॥ ॥२६॥

प्रातरनुवाकस्याश्विने क्रतावौष्णिहे छंदस्यश्विना वर्तिरित्ययं तृचः। आश्विनशस्त्रे च। तथा च सूचितं। अश्विना वर्तिरस्मदाश्विनाविह गच्छतमिति तृचौ। आ॰ ४. १५.। इति ॥

अश्विना वर्तिरस्मदा गोमद्दस्रा हिरण्यवत्। अर्वाग्रथं समनसा नि यच्छतं ॥१६॥
अश्विना। वर्तिः। अस्मत्। आ। गोऽमत्। दस्रा। हिरण्यऽवत्। अर्वाक्। रथं। सऽमनसा। नि। यच्छतं ॥१६॥

उषःसाहचर्याद्बुद्धिस्थावश्विनाविदमादिकेन तृचेन स्तुवेति। हे अश्विनावश्ववंतौ व्यापनशीलौ वा देवौ दस्रा शत्रूणामुपक्षपयितारौ अस्मदस्माकं वर्तिर्वर्तनहेतुभूतं गृहमा समंताद्गोमद्बहुभिर्गोभिर्युक्तं हिरण्यवद्बितरमणीयधनयुक्तं च यथा भवति तथा समनसा समानमनस्कौ संतौ युवां युष्मदीयं रथमर्वागर्वाचीनमस्मदीयगृहमभिमुखं नि यच्छतं। आवर्तयतं ॥ अश्विना। सुपां सुलुगित्याकारः। वर्तिः। वर्ततेऽस्मिन्निति वर्तिर्गृहं। औणादिक इसिप्रत्ययः। अस्मत्। सुपां सुलुगिति षष्ठ्या लुक्। समनसा। समानं मनो ययोस्तौ। समानस्य च्छंदसीति सभावः ॥

यावित्था श्लोकमा दिवो ज्योतिर्जनाय चक्रथुः। आ न ऊर्जं वहतमश्विना युवं ॥१७॥
यौ। इत्था। श्लोकं। आ। दिवः। ज्योतिः। जनाय। चक्रथुः। आ। नः। ऊर्जं। वहतं। अश्विना। युवं ॥१७॥

हे अश्विनौ यौ युवां दिवो द्युलोकात् श्लोकमुपश्लोकनीयं प्रशंसनीयं ज्योतिस्तेज इत्थेत्थमस्माभिरनुभूयमानेन प्रकारेण चक्रथुः कृतवंतौ। केषांचिन्मतेन सूर्याचंद्रमसावश्विनावित्युच्येते। तदुक्तं यास्केन। तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचंद्रमसावित्येके। नि॰ १२. १.। इति। तथा च प्रकाशकत्वं तयोरुपपन्नं। तौ युवं युवां नोऽस्मभ्यमूर्जं बलप्रदमन्नमा वहतं। आनयतं। प्रयच्छतं ॥ श्लोकं। श्लोक संघाते। अयं स्तुत्यर्थोऽपि। कर्मणि घञ्। ञित्त्वादाद्युदात्तत्वं ॥

एह देवा मयोभुवा दस्रा हिरण्यवर्तनी। उषर्बुधो वहंतु सोमपीतये ॥१८॥
आ। इह। देवा। मयःऽभुवा। दस्रा। हिरण्यवर्तनी इति हिरण्यऽवर्तनी। उषःऽबुधः। वहंतु। सोमऽपीतये ॥१८॥

उषर्बुध उषसि प्रबुद्धा अश्वा इहास्मिन्यागे सोमपीतये सोमपानाय दस्रा शत्रूणामुपक्षपयितारावश्विनावा वहंतु। आनयंतु। कीदृशौ। देवा देवनशीलौ दानादिगुणयुक्तौ वा मयोभुवा मयस आरोग्यप्रदस्य सुखस्य भावयितारौ। अश्विनौ वै देवानां भिषजौ। ऐ॰ ब्रा॰ १. १८.। इति श्रुतेः। हिरण्यवर्तनी। वर्ततेऽनेनेति व्युत्पत्त्या वर्तनिशब्देन रथ उच्यते। सुवर्णमयो वर्तनिर्ययोस्तौ ॥ देवेत्यादिषु त्रिषु सुपां सुलुगित्याकारः। सोमपीतये। पा पाने। भावे क्तिनि घुमास्थेतीत्वं। सोमस्य पीतिः सोमपीतिः। दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं ॥ ॥२७॥

अग्नीषोमाविति द्वादशर्चं नवमं सूक्तं गोतमस्यार्षं। आदितस्तिस्रोऽनुष्टुभः। नवम्याद्यास्तिस्रो गायत्र्यः। अष्टमी जगती त्रिष्टुब्वा। शिष्टाः पंच त्रिष्टुभः। अग्नीषोमौ देवता। तथा चानुक्रांतं। अग्नीषोमौ द्वादशाग्नीषोमीयमाद्यास्तिस्रोऽनुष्टुभ उपांत्यास्तिस्रो गायत्र्योऽष्टमी जगती वेति ॥ अग्नीषोमीयस्य पशोर्वपापुरोडाशहविषामाद्यास्तिस्र ऋचः क्रमेणानुवाक्याः। सूचितं च। अग्नीषोमाविमं स मे युवमेतानि दिवि रोचनानीति तृचौ। आ॰ ३. ८.। इति ॥

अग्नीषोमाविमं सु मे शृणुतं वृषणा हवं। प्रति सूक्तानि हर्यतं भवतं दाशुषे मयः॥१॥

अग्नीषोमौ। इमं। सु। मे। शृणुतं। वृषणा। हवं। प्रति। सुऽउक्तानि। हर्यतं। भवतं।
दाशुषे। मयः॥१॥

वृषणा वृषणौ कामानां वर्षितारौ हे अग्नीषोमौ इममिदानीं प्रयुज्यमानं मे मदीयं हवमाह्वानं सु शृणुतं। सम्यगवगच्छतं। सूक्तानि शोभनानि स्तुतिलक्षणान्यस्माभिः कृतानि वचांसि प्रति हर्यतं। प्रत्येकं कामयेथां। तदनंतरं दाशुषे चरुपुरोडाशादीनि दत्तवते यजमानाय मयो मयसः सुखस्य दातारौ भवतं॥ अग्नीषोमौ। अग्निश्च सोमश्च। द्वंद्व ईदग्नेः सोमवरुणयोः। पा॰ ६. ३. २७.। इतीत्वं। अग्नेः स्तुत्स्तोमसोमाः। पा॰ ८. ३. ८२.। इति षत्वं। देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरे प्राप्त आमंत्रितस्य चेत्याद्युदात्तत्वं। वृषणा। सुपां सुलुगित्याकारः। वा षपूर्वस्येति विकल्पनादुपधाया दीर्घाभावः। हवं। भावेऽनुपसर्गस्येति ह्वयतेरप् संप्रसारणं च। सूक्तानि। सुपूर्वाद्वक्तेः कर्मणि निष्ठा। सूपमानात् क्त इत्युत्तरपदांतोदात्तत्वं। हर्यतं। हर्य गतिकांत्योः। भौवादिकः॥

यदा पौर्णमास्यामग्नीषोमावुपांशुयाजस्य देवता तदानीमग्नीषोमा यो अद्येति तस्यानुवाक्या। सूचितचोक्ता देवता इति खंडे। अग्नीषोमा यो अद्य वामान्यं दिवो मातरिश्वा जभार। आ॰ १. ६.। इति॥

अग्नीषोमा यो अद्य वामिदं वचः सपर्यति। तस्मै धत्तं सुवीर्यं गवां पोषं स्वश्व्यं॥२॥

अग्नीषोमा। यः। अद्य। वां। इदं। वचः। सपर्यति। तस्मै। धत्तं। सुऽवीर्यं।
गवां। पोषं। सुऽअश्व्यं॥२॥

हे अग्नीषोमौ यो यजमानोऽद्यास्मिन्कर्मणि वां युवाभ्यां युष्मदर्थमिदं स्तुतिलक्षणं वचो वाक्यं सपर्यति पूजितं करोति तस्मै यजमानाय गवां पशूनां पोषमभिवृद्धिं धत्तं। प्रयच्छतं। कीदृशं पोषं। सुवीर्यं शोभनेन वीर्येण सामर्थ्येनोपेतं स्वश्व्यं शोभनैरश्वैर्युक्तं॥ गवां। साविकाच इति प्राप्तस्य विभक्त्युदात्तत्वस्य न गोश्वन्सावर्णेति प्रतिषेधः॥

अग्नीषोमा य आहुतिं यो वां दाशाद्धविष्कृतिं।
स प्रजया सुवीर्यं विश्वमायुर्व्यश्नवत्॥३॥
अग्नीषोमा। यः। आऽहुतिं। यः। वां। दाशात्। हविःऽकृतिं।
सः। प्रऽजया। सुऽवीर्यं। विश्वं। आयुः। वि। अश्नवत्॥३॥

हे अग्नीषोमौ यो यजमान आहुतिमाज्याहुतिं वां युवाभ्यां दाशात् दद्यात्। अथवा हविष्कृतिं हविषा चरुपुरोडाशादिना कृतामाहुतिं यो यजमानो दद्यात्। स यजमानः प्रजया पुत्रपौत्रादिना युक्तं सुवीर्यं शोभनवीर्ययुक्तं विश्वं सर्वमायुर्जीवनं व्यश्नवत्। व्याप्नोतु॥ आहुतिं। जुहोतेः क्तिनि तादौ चेति गतेः प्रकृतिस्वरत्वं। दाशात्। दाशृ दाने। लेट्याडागमः। यद्वृत्तयोगादनिघातः। हविष्कृतिं। हविषः कृतिः करणं यस्यामाहुतौ। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। नित्यं समासेऽनुत्तरपदस्थस्येति विसर्जनीयस्य षत्वं। अश्नवत्। अश्नोतेर्व्यत्ययेन परस्मैपदं। लेट्यडागमः॥

अग्नीषोमा चेति तद्वीर्यं वां यदमुष्णीतमवसं पणिं गाः।
अवातिरतं बृसयस्य शेषोऽविंदतं ज्योतिरेकं बहुभ्यः॥४॥

अग्नीषोमा। चेति। तत्। वीर्यं। वां। यत्। अमुष्णीतं। अवसं। पणिं। गाः।
अव। अतिरतं। बृसयस्य। शेषः। अविंदतं। ज्योतिः। एकं। बहुऽभ्यः ॥४॥

हे अग्नीषोमौ वां युवयोस्तद्दृश्यमानं वीर्यं सामर्थ्यं चेति। अस्माभिर्ज्ञातमभूत्। यद्येन वीर्येण गा अवसं गोरूपमन्नं पणिं पणेः। विभक्तिव्यत्ययः। एतन्नाम्नोऽसुरादमुष्णीतं अपाहार्ष्टं। तथा बृसयस्य। बृसिर्वेष्टनार्थः। बृसयति सर्वं वेष्टयतीति बृसयोऽसुरस्त्वष्टा। तस्यासुरस्य शेषोऽपत्यं। शेष इत्यपत्यनाम शिष्यते प्रयत इति यास्कः। नि० ३. २.। त्वष्टृसकाशादुत्पन्नं वृत्रमवातिरतं। अवधिष्टं। अवतिरतिर्वधकर्मा। प्राणापानरूपयोर्युवयोर्वृत्रेऽनवस्थानात्स मरणं प्राप्तः। तथा चाम्नायते। तस्माज्जंजभ्यमानादग्नीषोमौ निरक्रामतां प्राणापानौ वा एनं तदजहितां। तै० सं० २. ५. २. ४.। इति। ततो वृत्रवधानंतरं ज्योतिर्द्योतमानं सूर्यमेकं नभसि गच्छंतं बहुभ्यो जनेभ्यो बहु[illegible]। अलभ्यार्थां। एतत्सर्वं येन वीर्येण क्रियते तदस्माभिर्ज्ञातमित्यर्थः ॥ चेति। चिती संज्ञाने। लुङि चिण् भावकर्मणोः। पा० ३. १. ६६.। इति च्लेश्चिणादेशः। चिणो लुगिति तशब्दस्य लुक्। अमुष्णीतं। मुष स्तेये। क्रैयादिकः। अवसं। अवतेरौणादिकोऽसच्। शेषः। सुपां सुलुगिति द्वितीयायाः सुः। एकं। इण् गतौ। इण्भीकापाशल्यतिमर्चिभ्यः कन्। उ० ३. ४३.। इति कन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं ॥

अग्नीषोमीयस्य पशोर्वपापुरोडाशहविषां युवमेतानीत्याद्यास्तिस्र ऋचः क्रमेण याज्याः। सूत्रं तु पूर्वमेवोदाहृतं। आ० ३. ८.॥ पौर्णमासयागेऽग्नीषोमीयस्य पुरोडाशस्य युवमेतानीत्येषा याज्या। उक्ता देवता इति खंडे सूत्रितं। युवमेतानि दिवि रोचनान्यग्नी अवसा गतं। आ० १. ६.। इति ॥

युवमेतानि दिवि रोचनान्यग्निश्च सोम सक्रतू अधत्तं।
युवं सिंधूँरभिशस्तेरवद्यादग्नीषोमावमुंचतं गृभीतान् ॥५॥
युवं। एतानि। दिवि। रोचनानि। अग्निः। च। सोम। सक्रतू इति सऽक्रतू। अधत्तं।
युवं। सिंधून्। अभिऽशस्तेः। अवद्यात्। अग्नीषोमौ। अमुंचतं। गृभीतान् ॥५॥

हे सोम त्वमग्निश्च सक्रतू समानकर्माणौ संतौ युवं युवां रोचनानि रोचमानानि दीप्यमानान्येतान्यस्माभिर्निरीक्ष्यमाणानि तारायहादीनि ज्योतींषि दिवि द्युलोकेऽधत्तं। अधारयतं। उत्तरार्धस्येयमाख्यायिका। इंद्रो वृत्रं हत्वा ब्रह्महत्याया भीतः सन् पृथिव्यां वृक्षेषु स्त्रीष्वप्सु च तां ब्रह्महत्यां न्यमार्क्षीत् तासामपां शुद्धिरग्नीषोमाभ्यां जातेति। [illegible] पापेन गृभीतान् गृहीतानाक्रांतान् सिंधून् नदीविशेषान् हे अग्नीषोमौ युवामभिशस्तेरभिशस्यमानादभितः प्रकटितादवद्यात्तस्मात्पापादमुंचतं। मुक्तवंतौ। यद्वा। वृत्र इंद्रेण हतः सन् नदीषु पपात। ततो मृतेन वृत्रशरीरेण नद्यः सर्वा दुष्टा बभूवुः। तथा च तैत्तिरीयकं। इंद्रो वृत्रमहन् सोऽपोऽभ्यम्रियत तासां यन्मेध्यं यज्ञियं सदेवमासीत्तदपोदक्रामत्। तै० ब्रा० ३. २. ५. १.। इति। तेन दोषेण गृहीता नदीस्तस्माद्दोषादग्नीषोमौ मुक्तवंतौ ॥ रोचनानि। रुच दीप्तौ। अनुदात्तेतश्च हलादेरिति युच्। सिंधून्। दीर्घादटि समानपाद इति नकारस्य रुत्वं। अत्रानुनासिक इत्यनुनासिकः। गृभीतान्। हृग्रहोर्भ इति भत्वं ॥

अग्नीषोमीयस्योपांशुयाजस्यान्यं दिव इत्येषा याज्या। अग्नीषोमा यो अद्य वामित्यत्र सूत्रमुदाहृतं ॥

आन्यं दिवो मातरिश्वा जभारामथ्नादन्यं परि श्येनो अद्रेः।
अग्नीषोमा ब्रह्मणा वावृधानोरुं यज्ञाय चक्रथुरु लोकं ॥६॥
आ। अन्यं। दिवः। मातरिश्वा। जभार। अमथ्नात्। अन्यं। परि। श्येनः। अद्रेः।
अग्नीषोमा। ब्रह्मणा। ववृधाना। उरुं। यज्ञाय। चक्रथुः। ऊं इति। लोकं ॥६॥

हे अग्नीषोमौ युवयोर्मध्येऽन्यमेकमग्निं मातरिश्वा वायुर्दिवो द्युलोकादा जभार। भृगवे यजमानायाजहार। तथा च मंत्रांतरं। द्विजन्मानं रयिमिव प्रशस्तं रातिं भरद्भृगवे मातरिश्वा। ऋग्वे० १. ६०. १.। इति। श्येनः शंसनीयगतिमान्पक्षी पक्ष्याकारा गायत्र्यन्यं सोममद्रेः परि मेरोरुपर्यवस्थितात्स्वर्गादमथ्नात्। बलादाहृतवती। एवं महानुभावौ युवां ब्रह्मणा स्तुत्या मंत्ररूपेण स्तोत्रेण हविर्लक्षणेनान्नेन वा वावृधाना वर्धमानौ युवां यज्ञायान्येषां देवानां यागायोरुं विस्तीर्णं लोकं स्थानं चक्रथुः। कृतवंतौ। उ इत्येतत्पादपूरणं। आज्यभागदेवतयोरग्नीषोमयोरुत्तरार्धदक्षिणार्धयोरिज्यते। तन्मध्येऽन्यदेवत्यानि सर्वाणि हवींषि हूयंते। तन्मध्यमं स्थानमग्नीषोमकृतं। तथा च तैत्तिरीयकं। राजानौ वा एतौ देवानां यदग्नीषोमावंतरा देवता इज्येते देवतानां विधृत्या इति॥ वावृधाना। वृधेर्लिटः कानच्। छांदसमभ्यासस्य दीर्घत्वं। सुपां सुलुगित्याकारः॥ ॥२८॥

अग्नीषोमा हविषः प्रस्थितस्य वीतं हर्यतं वृषणा जुषेथां।
सुशर्माणा स्ववसा हि भूतमथा धत्तं यजमानाय शं योः॥७॥
अग्नीषोमा। हविषः। प्रऽस्थितस्य। वीतं। हर्यतं। वृषणा। जुषेथां।
सुऽशर्माणा। सुऽअवसा। हि। भूतं। अथ। धत्तं। यजमानाय। शं। योः॥७॥

हे अग्नीषोमौ प्रस्थितस्य होमार्थमाहवनीयसमीपं प्राप्तं हविष इदं हविर्वीतं भक्षयतं। तदनंतरं च हर्यतं। अस्मान्कामयेथां। हे वृषणा कामानां वर्षितारौ जुषेथां। अस्मदीयं परिचरणं सेवेथां। तदनंतरं सुशर्माणा शोभनसुखौ स्ववसा हि शोभनरक्षणौ च भूतं। अस्माकं भवतं। अथानंतरं हविर्दत्तवते यजमानाय शं शमनीयानां रोगाणां शमनं योः पृथक्कर्तव्यानां भयानां यावनं पृथक्करणं च धत्तं। विधत्तं। कुरुतं। उक्तं च यास्केन। शमनं च रोगाणां यावनं च भयानां। नि० ४. २१.। इति॥ हविषः। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। वीतं। वी गतिप्रजनकांत्यसनखादनेषु। यस्तं। अदादित्वाच्छपो लुक्। वीतं च हर्यतं चेति चार्थप्रतीतेश्चादिलोपे विभाषेति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः। हर्यतं। पादादित्वान्निघाताभावः। जुषेथां। वृषणेत्यामंत्रितस्यामंत्रितं पूर्वमविद्यमानवदिति सति तिङः परत्वान्निघाताभावः। सुशर्माणा स्ववसा। उभयत्र बहुव्रीहौ सोर्मनसी अलोमोषसी इत्युत्तरपदाद्युदात्तत्वं। भूतं। लोटि बहुलं छंदसीति शपो लुक्॥

यो अग्नीषोमा हविषा सपर्याद्देवद्रीचा मनसा यो घृतेन।
तस्य व्रतं रक्षतं पातमंहसो विशे जनाय महि शर्म यच्छतं॥८॥
यः। अग्नीषोमा। हविषा। सपर्यात्। देवद्रीचा। मनसा। यः। घृतेन।
तस्य। व्रतं। रक्षतं। पातं। अंहसः। विशे। जनाय। महि। शर्म। यच्छतं॥८॥

यो यजमानोऽग्नीषोमा अग्नीषोमौ देवद्रीचा देवानंचता देवतापरायणेन श्रद्धायुक्तेन मनसांतःकरणेन युक्तः सन् हविषा चरुपुरोडाशादिना सपर्यात् सपर्यति परिचरति। यश्च यजमानो घृतेनाज्येनाग्नीषोमौ परिचरति। तस्य यजमानस्य व्रतं कर्म रक्षतं। अंहसः पापात्तं च यजमानं पातं। रक्षतं। विशे यागेषु प्रविशते तस्मै जनाय यजमानाय महि महत्प्रभूतं शर्म सुखं यच्छतं। दत्तं॥ अग्नीषोमा। देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं। सपर्यात्। सपर पूजायां। कंड्वादिः। लिट्याडागमः। देवद्रीचा। देवानंचतीति देवद्र्यङ्। अंचतेः र्त्विगित्यादिना क्विन्। अनिदितामिति नलोपः। विष्वग्देवयोश्च टेरद्र्यंचतावप्रत्यये। पा० ६. ३. ९२.। इति देवशब्दस्य टेरद्र्यादेशः। तृतीयैकवचनेऽच इत्यकारलोपे चाविति दीर्घत्वं। समासस्य उत्तरपदप्रकृतिस्वरत्वे प्राप्तेऽद्रिसध्र्योरंतोदात्तनिपातनं [illegible] । पा० ६. ३. ९५. १.। इति वचनादद्र्यादेशोऽंतोदात्तः। विशे। सावेकाच इति विभक्तेरुदात्तत्वं॥

पौर्णमासयागेऽग्नीषोमीयस्य यागस्याग्नीषोमेत्येषानुवाक्या । तथा च सूत्रितमुक्ता देवता इति खंडे । अग्नीषोमा सवेदसा युवमेतानि दिवि रोचनानि । आ० १. ६. । इति ॥

**अग्नीषोमा सवेदसा सहूती वनतं गिरः । सं देवत्रा बभूवथुः ॥ ९ ॥**

**अग्नीषोमा । सऽवेदसा । सहूती इति सऽहूती । वनतं । गिरः । सं । देवऽत्रा । बभूवथुः ॥ ९ ॥**

हे अग्नीषोमौ युवां सवेदसा समानेनैकेन वेदसा हविर्लक्षणेन धनेन युक्तौ सहूती समानह्वानौ च संतौ गिरोऽस्मदीयाः स्तुतीर्वनतं । संभजेथां । देवत्रा देवेषु सर्वेषु यौ युवां सं बभूवथुः संभूतौ संभावितौ प्रशस्तौ स्थः । राजानौ वा एतौ देवानां यदग्नीषोमाविति श्रुतेः ॥ सवेदसा । समानं वेदो ययोः । समानस्य छंदसीति सभावः । वनतं । वन षण संभक्तौ । देवत्रा । देवमनुष्यपुरुषपुरुमर्त्येत्यादिना सप्तम्यर्थे त्राप्रत्ययः ॥

**अग्नीषोमावनेन वां यो वां घृतेन दाशति । तस्मै दीदयतं बृहत् ॥ १० ॥**

**अग्नीषोमौ । अनेन । वां । यः । वां । घृतेन । दाशति । तस्मै । दीदयतं । बृहत् ॥ १० ॥**

हे अग्नीषोमौ वां युवयोः संबंधी यो यजमानोऽनेन घृतेनोत्पवनादिभिः संस्कृतेनाज्येन युक्तं हविर्वा युवाभ्यां दाशति प्रयच्छति तस्मै यजमानाय बृहत्प्रभूतं धनं दीदयतं । प्रकाशयतं । प्रयच्छतमित्यर्थः ॥ दाशति । दाशृ दाने । शप्पिपोः पित्त्वादनुदात्तत्वे धातुस्वरः । यद्वृत्तयोगादनिघातः । दीदयतं । दीदयतिर्दीप्तिकर्मा ॥

**अग्नीषोमाविमानि नो युवं हव्या जुजोषतं । आ यातमुप नः सचा ॥ ११ ॥**

**अग्नीषोमौ । इमानि । नः । युवं । हव्या । जुजोषतं । आ । यातं । उप । नः । सचा ॥ ११ ॥**

हे अग्नीषोमौ युवं युवां नोऽस्मदीयानीमानि हव्या हवींषि जुजोषतं । सेवेथां । तदर्थं नोऽस्मान् सचा सह युवामुपा यातं । उपागच्छतं ॥ जुजोषतं । जुषी प्रीतिसेवनयोः । लोटि व्यत्ययेन शप् । छांदसं द्विर्वचनं । यद्वा । विकरणस्य बहुलं छंदसीति श्लुः । ततो व्यत्ययेन शप् । बहुलं छंदसीति वक्तव्यमिति वचनान्नाभ्यस्तस्याचि पितीति लघूपधगुणप्रतिषेधाभावः ॥

**अग्नीषोमा पिपृतमर्वतो न आ प्यायंतामुस्रिया हव्यसूदः ।**
**अस्मे बलानि मघवत्सु धत्तं कृणुतं नो अध्वरं श्रुष्टिमंतं ॥ १२ ॥**

**अग्नीषोमा । पिपृतं । अर्वतः । नः । आ । प्यायंतां । उस्रियाः । हव्यऽसूदः ।**
**अस्मे इति । बलानि । मघवत्ऽसु । धत्तं । कृणुतं । नः । अध्वरं । श्रुष्टिऽमंतं ॥ १२ ॥**

हे अग्नीषोमौ नोऽस्माकमर्वतोऽश्वान्पिपृतं । पालयतं । हव्यसूदः क्षीरादिहविष उत्पादयित्र्य उस्रिया अस्मदीया गावश्च प्यायंतां । आप्यायिताः प्रवृद्धाः संतु । मघवत्सु हविर्लक्षणधनयुक्तेष्वस्मे अस्मासु बलानि धत्तं । स्थापयतं । तथा नोऽस्माकमध्वरं यागं श्रुष्टिमंतं धनयुक्तं कृणुतं । कुरुतं ॥ पिपृतं । पृ पालनपूरणयोः । पॄ इत्येके । जुहोत्यादित्वाच्छपः श्लुः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं । हव्यसूदः । हव्यं सूदंते क्षरंतीति हव्यसूदः । षूद क्षरणे । क्विप्चेति क्विप् । अस्मे । सुपां सुलुगिति सप्तम्याः शेआदेशः । श्रुष्टिमंतं । श्रुष्टीति धननाम । श्रु आश्नुते व्याप्यत इति श्रुष्टिः । पृषोदरादिः । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं ॥ ॥ २९ ॥ ॥ १४ ॥

पंचदशेऽनुवाके द्वादश सूक्तानि । तत्रेमं स्तोममिति षोडशर्चं प्रथमं सूक्तं । आंगिरसस्य कुत्सस्यार्षं । पंचदशीषोडश्यौ त्रिष्टुभौ शिष्टा जगत्यः । अग्निर्देवता । पूर्वो देवा भवतु सुन्वतो रथ इति त्रयः पादा देवदेवत्याः । तन्नो मित्रो वरुण इत्यर्धर्चो लिंगोक्तमित्रावरुणादिषड्देवत्यः । अथवा तस्याप्यग्निरेव देवता मित्रा-

वरुणादयस्तु निपातभाक्त्वेनाप्रधानाः । एतत्सर्वमनुक्रांतं । इमं षोळश कुत्स आग्नेयं तद्धि त्रिष्टुबंतं पूर्वौ देवास्त्रयः पादा दैवास्तन्नो मित्रोऽर्धर्चो लिंगोक्तदेवतो यद्देवत्यं वा सूक्तमिति ॥ प्रातरनुवाकस्याग्नेये क्रतौ जागते छंदस्येतत्सूक्तं । आश्विनशस्त्रे च । तथा च सूत्रितं । इमं स्तोममर्हते सं जागृवद्भिः । आ° ४. १३. । इति ॥ आभिप्लविके षष्ठेऽहन्याग्निमारुतेऽप्येतत्सूक्तं जातवेदस्यनिविद्धानं । सूत्रितं च । प्रयज्यव इमं स्तोममित्याग्नि-मारुतं । आ° ७. ७. । इति ॥ तृतीयसवन इमं स्तोममित्येषाग्नीध्रः प्रस्थितयाज्या । सूत्रितं च । इमं स्तोममर्हते जातवेदस इति तार्तीयसवनिक्यः । आ° ५. ५. । इति ॥

इ॒मं स्तोम॒मर्ह॑ते जा॒तवे॑दसे॒ रथ॑मिव॒ सं म॑हेमा मनी॒षया॑ ।
भ॒द्रा हि नः॒ प्रम॑तिरस्य सं॒सद्यग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ १ ॥
इ॒मं । स्तोम॑ं । अर्ह॑ते । जा॒तऽवे॑दसे । रथ॑म्ऽइव । सं । म॒हे॒म॒ । म॒नी॒षया॑ ।
भ॒द्रा । हि । नः॒ । प्रऽम॑तिः । अ॒स्य॒ । सं॒ऽसदि॑ । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यं । तव॑ ॥ १ ॥

अर्हते पूज्याय जातवेदसे जातानामुत्पन्नानां वेदित्रे जातप्रज्ञाय जातधनाय वाग्नये मनीषया निश्चितया बुद्ध्येममेतत्सूक्तरूपं स्तोमं स्तोत्रं रथमिव यथा तक्षा रथं संस्करोति तथा सं महेम । सम्यक् पूजितं कुर्मः । अस्याग्नेः संसदि संभजने नोऽस्माकं प्रमतिः प्रकृष्टा बुद्धिर्भद्रा हि कल्याणी समर्था खलु । अतस्तया बुद्ध्या स्तुम इत्यर्थः । हे अग्ने तव सख्येऽस्माकं त्वया सह सखित्वे सति वयं मा रिषाम । हिंसिता न भवाम । अस्मान्रक्षे-त्यर्थः ॥ अर्हते । अर्ह पूजायां । अर्हः प्रशंसायां । पा° ३. २. १३३. । इति लटः शत्रादेशः । शपः पित्त्वादनुदात्तत्वं । शतुश्चावुपदेशाल्लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । महेम । मह पूजायां । रिषाम । रिष हिंसायां । व्यत्ययेन शः । तव । युष्मदस्मदोर्ङसीत्याद्युदात्तत्वं ॥

यस्मै॒ त्वमा॒यज॑से॒ स सा॑धत्यन॒र्वा क्षे॑ति॒ दध॑ते सु॒वीर्य॑ं ।
स तू॑ताव॒ नैन॑मश्नोत्यंह॒तिरग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ २ ॥
यस्मै॑ । त्वं । आ॒ऽयज॑से । सः । सा॒ध॒ति॒ । अ॒न॒र्वा । क्षे॒ति॒ । दध॑ते । सु॒ऽवीर्य॑ं ।
सः । तू॒ता॒व॒ । न । ए॒न॒ं । अ॒श्नो॒ति॒ । अं॒ह॒तिः । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यं । तव॑ ॥ २ ॥

यस्मै यजमानाय हे अग्ने त्वमायजसे देवानाभिमुख्येन यजसि स यजमानः साधति । स्वाभिलषितं साधयति । प्राप्नोतीत्यर्थः । किंच स यजमानोऽनर्वा शत्रुभिरप्रत्यृतः सन् क्षेति । निवसति । तथा सुवीर्यं शोभनवीर्योपेतं धनं दधते । धारयति । प्राप्नोतीत्यर्थः । धृत्वा च स यजमानस्तूताव । वर्धते । एनं यजमा-नमंहतिरार्तिर्दारिद्र्यं नाश्नोति । न प्राप्नोति । अन्यत्पूर्ववत् ॥ साधति । षिधु संराद्धौ । णिचि सिध्यतेरपार-लौकिके । पा° ६. १. ४९. । इत्यात्वं । छंदस्युभयथेति शप आर्धधातुकत्वात्सेरनिटीति णिलोपः । क्षेति । क्षि निवासगत्योः । बहुलं छंदसीति विकरणस्य लुक् । दधते । दध धारणे । भौवादिकः । तूताव । तु इति वृद्ध्यर्थः सौत्रो धातुः । अस्माच्छांदसो लिट् । तुजादित्वादभ्यासस्य दीर्घत्वं । अश्नोति । व्यत्ययेन परस्मैपदं । अंहतिः । हंतेरंह च । उ° ४. ६२. । इत्यतिप्रत्ययः । चिदित्यनुवृत्तेरंतोदात्तत्वं ॥

श॒केम॑ त्वा स॒मिध॑ं सा॒धया॑ धि॒यस्त्वे दे॒वा ह॒विर॑दं॒त्याहु॑तं ।
त्वमा॑दि॒त्याँ आ व॑ह॒ तान्ह्यु१॑श्मस्यग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥ ३ ॥
श॒केम॑ । त्वा॒ । स॒म्ऽइध॑ं । सा॒धय॑ । धि॒यः॑ । त्वे इति॑ । दे॒वाः । ह॒विः । अ॒दं॒ति॒ । आऽहु॑तं ।
त्वं । आ॒दि॒त्यान् । आ । व॒ह॒ । तान् । हि । उ॒श्मसि॑ । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ ।
व॒यं । तव॑ ॥ ३ ॥

हे अग्ने त्वा त्वां समिधं सम्यगिद्धं कर्तुं शकेम । शक्ता भूयास्म । त्वं च धियोऽस्मदीयानि दर्शपूर्णमासादीनि कर्माणि साधय । निष्पादय । त्वया हि सर्वे यागा निष्पाद्यंते । यस्मात्त्वे त्वय्यग्नावाहुतं ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकं हविर्देवा अदंति भक्षयंति । तस्मात्त्वं साधयेत्यर्थः । अपि च त्वमादित्यानदितेः पुत्रान् सर्वान्देवाना वह । अस्मद्यज्ञार्थमानय । तान्हीदानीमेव वयमुश्मसि । कामयामहे । अन्यत्पूर्ववत् ॥ शकेम । शक्लृ शक्तौ । लिङ्याशिष्यङ् । अदुपदेशाल्लसार्वधातुकानुदात्तत्वेऽङ एव स्वरः शिष्यते । समिधं । ञिइन्धी दीप्तौ । अस्मात्संपदादिलक्षणः कर्मणि क्विप् । त्वे । सुपां सुलुगिति सप्तम्येकवचनस्य शेआदेशः । उश्मसि । वश कांतौ । इदंतो मसिः । अदादित्वाच्छपो लुक् । ग्रहिज्येत्यादिना संप्रसारणं ॥

भरा॑मे॒ध्मं कृ॒णवा॑मा ह॒वींषि॑ ते चि॒तय॑न्तः॒ पर्व॑णापर्वणा व॒य ।
जी॒वात॑वे प्र॒तरं॑ साधया॒ धियोऽग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥४॥
भरा॑म । इ॒ध्मं । कृ॒णवा॑म । ह॒वींषि॑ । ते॒ । चि॒तय॑न्तः । पर्व॑णाऽपर्वणा । व॒यं ।
जी॒वात॑वे । प्र॒ऽत॒रं । सा॒ध॒य॒ । धियः॑ । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यं । तव॑ ॥४॥

हे अग्ने त्वद्यागार्थमिध्ममिंधनसाधनमेकविंशतिदार्वात्मकं समित्समूहं भराम । संपादयाम । तदनंतरं ते तुभ्यं हवींषि चरुपुरोडाशादीन्यन्नानि वयं कृणवाम । करवाम । किं कुर्वंतः । पर्वणा पर्वणा प्रतिपक्षमावृत्ताभ्यां दर्शपूर्णमासाभ्यां चितयंतस्त्वां प्रज्ञापयंतः । स त्वं जीवातवेऽस्माकं जीवनौषधाय चिरकालावस्थानाय धियः कर्माण्यग्निहोत्रादीनि प्रतरं प्रकृष्टतरं साधय । निष्पादय । अन्यत्समानं ॥ चितयंतः । चिती संज्ञाने । संज्ञापूर्वकस्य विधेरनित्यत्वाल्लघूपधगुणाभावः । पर्वणा पर्वणा । नित्यवीप्सयोरिति वीप्सायां द्विर्भावः । तस्य परमाम्रेडितमिति परस्याम्रेडितसंज्ञायामनुदात्तं चेत्यनुदात्तत्वं । प्रतरं । त[illegible]कर्षे वर्तमानादमु च छंदसि । पा॰ ५. ४. १२. । इत्यमुप्रत्ययः ॥

वि॒शां गो॒पा अ॑स्य चरन्ति ज॒न्तवो॑ द्वि॒पच्च॒ यदु॒त चतु॑ष्पद॒क्तुभिः॑ ।
चि॒त्रः प्र॑के॒त उ॒षसो॑ म॒हाँ अ॑स्यग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥५॥
वि॒शां । गो॒पाः । अ॒स्य॒ । च॒र॒न्ति॒ । ज॒न्तवः॑ । द्वि॒ऽपत् । च॒ । यत् । उ॒त । चतुः॑ऽपत । अ॒क्तुऽभिः॑ ।
चि॒त्रः । प्र॒ऽके॒तः । उ॒षसः॑ । म॒हान् । अ॒सि॒ । अग्ने॑ । स॒ख्ये । मा । रि॒षा॒म॒ । व॒यं । तव॑ ॥५॥

अस्याग्नेर्जंतवो जाता रश्मयो विशां सर्वेषां प्राणिनां गोपा गोपायितारो रक्षकाः सतश्चरंति । उत्क्रामंति । तदनंतरं यच्च द्विपत् द्विपात् मनुष्यादिकमस्ति उतापि च चतुष्पत् चतुष्पात् गवादिकं यदस्ति तदुभयमक्तुभिरंजकैरस्य रश्मिभिरक्तमाश्लिष्टमभूत् । हे अग्ने चित्रो विचित्रदीप्तियुक्तः प्रकेतो रात्रावंधकारावृतानां सर्वेषां प्रज्ञापयिता प्रदर्शयितोषस उषोदेवताया अपि महान् गुणैरधिकोऽसि । भवसि । उषास्तु रात्रेश्चरमभागे प्रकाशयति अग्निस्तु सर्वस्यां रात्रौ प्रकाशयतीति तस्य गुणाधिक्यं ॥ गोपाः । गुपू रक्षणे । गुपूधूपविच्छिपणिपनिभ्य आयप्रत्ययः । पा॰ ३. १. २८. । अस्मात्क्विप् । अतो लोपः । वेरपृक्तलोपाद्वलि लोपो बलीयानिति पूर्वं वलि लोपः । न चातो लोपस्य स्थानिवत्त्वं । न पदांतेत्यादिना यलोपं प्रति तन्निषेधात् । द्विपत् । द्वौ पादावस्येति बहुव्रीहौ संख्यासुपूर्वस्य । पा॰ ५. ४. १४०. । इति पादशब्दस्यांत्यलोपः समासांतः । यचस्मयादिष्वेन भत्वे पादः पत् । पा॰ ६. ४. १३०. । इति पद्भावः । एकदेशविकृतस्यानन्यवत्त्वात् । परि॰ ३७. । द्वित्रिभ्यां पाद्दन्मूर्धसु । पा॰ ६. २. १९७. । इत्युत्तरपदांतोदात्तत्वं । चतुष्पत् । पूर्ववत्समासांतः पद्भावश्च । इदुदुपधस्य चाप्रत्ययस्येति विसर्जनीयस्य षत्वं । त्रः संख्यायाः । फि॰ २. ५. । इति चतुर्शब्द आद्युदात्तः । स एव बहुव्रीहिस्वरेण शिष्यते ॥ ॥ ३० ॥

त्वम॑ध्व॒र्युरु॒त होता॑सि पू॒र्व्यः प्र॑शा॒स्ता पोता॑ ज॒नुषा॑ पु॒रोहि॑तः ।
विश्वा॑ वि॒द्वाँ आर्त्वि॑ज्या धीर पुष्य॒स्यग्ने॑ स॒ख्ये मा रि॑षामा व॒यं तव॑ ॥६॥

त्वं। अध्वर्युः। उत। होता। असि। पूर्व्यः। प्रऽशास्ता। पोता। जनुषा। पुरःऽहितः।
विश्वा। विद्वान्। आर्त्विज्या। धीर। पुष्यसि। अग्ने। सख्ये। मा। रिषाम। वयं। तव ॥ ६॥

हे अग्ने त्वमध्वर्युरध्वरस्य यागस्य नेता देवान्प्रति प्रेरयिता यद्वा याग आध्वर्यवस्य कर्ता भवसि अध्वर्यौ मनुष्ये जाठररूपेण वागिंद्रियाधिष्ठातृत्वेन वावस्थाय यागनिष्पादकोऽसि। उतापि च पूर्व्यो मुख्यो होता देवानामाह्वाता पूर्ववद्धोतर्यवस्थाय हौत्रस्य कर्मणः कर्ता वासि। भवसि। मानुषो होतामुख्यः। तदपेक्षयास्य मुख्यत्वं। तथा प्रशास्ता प्रकर्षेण शास्ता सर्वेषां शिक्षकोऽसि। यद्वा। होतर्यज पोतर्यजेत्यादिना प्रैषेण शास्तीति मैत्रावरुणः प्रशास्ता। पूर्ववत्तस्मिन्नवस्थाय यागनिष्पादकोऽसि। पोता यज्ञस्य पावयिता शोधयितासि। यद्वा। पोतृनामकस्यर्त्विजः पूर्ववदधिष्ठाय यागनिष्पादकोऽसि। तथा जनुषा जन्मना स्वाभाव्येन पुरोहितः पुरस्तादागामिनि स्वर्गादौ हितोऽनुकूलाचरणोऽसि। यद्वा। सर्वेषु कर्मसु पूर्वस्यां दिश्याहवनीये स्थापितोऽसि। अथवा पुरोहितो ब्रह्मा देवपुरोहितस्य बृहस्पतेः प्रतिनिधित्वात्। तथा च मंत्रांतरं। बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणामिति। अतस्तस्मिन्ब्रह्मणि पूर्ववदवस्थाय तद्रूपः सन्विश्वा सर्वाण्यार्त्विज्या ऋत्विजः कर्माण्याध्वर्यवादीनि विद्वान् जानंस्त्वं हे धीर प्राज्ञाग्ने पुष्यसि। न्यूनाधिकभावराहित्येन संपूर्णानि करोषि। अन्यत्समानं॥ जनुषा। जनेरुसिः। पुरोहितः। दधातेः कर्मणि निष्ठा। पूर्वाधरेत्यादिनासिप्रत्ययांतः पुरस्शब्दोऽंतोदात्तः। तद्धितश्चासर्वविभक्तिरित्यव्ययसंज्ञायां पुरोऽव्ययमिति गतित्वाद्गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्वं। आर्त्विज्या। ब्राह्मणादित्वात् ष्यञ्। ञित्वादाद्युदात्तत्वं॥

यो विश्वतः सुप्रतीकः सदृङ्ङसि दूरे चित्सन्तळिदिवाति रोचसे।
राज्याश्चिदंधो अति देव पश्यस्यग्ने सख्ये मा रिषामा वयं तव ॥ ७॥

यः। विश्वतः। सुऽप्रतीकः। सऽदृङ्। असि। दूरे। चित्। सन्। तळित्ऽइव। अति। रोचसे।
राज्याः। चित्। अंधः। अति। देव। पश्यसि। अग्ने। सख्ये। मा। रिषाम। वयं। तव ॥ ७॥

हे अग्ने यस्त्वं सुप्रतीकः शोभनांगः सन् विश्वतः सर्वस्मादपि सदृङ्ङसि अन्यूनः सदृशो भवसि स त्वं दूरे चित्सन् दूरेऽपि वर्तमानः सन् तळिदिव। अंतिकनामैतत्। अंतिके वर्तमान इवाति रोचसे। अतिशयेन दीप्यसे। तदुक्तं यास्केन। दूरेऽपि सन्नंतिक इव सन्दृश्यसे। नि॰ ३. ११.। इति। राज्याश्चित् रात्रेरपि रात्रेः संबंधिनमंधो बहुलमंधकारमपि हे देव द्योतमानाग्नेऽति पश्यसि। अतीत्य प्रकाशसे। अन्यत्पूर्ववत्॥ सुप्रतीकः। शोभनं प्रतीकोऽंगं यस्य। क्रत्वादयश्चेत्युत्तरपदाद्युदात्तत्वं। सदृङ्। समानान्ययोश्चेति वक्तव्यं। पा॰ ३. २. ६०. १.। इति समानोपपदाद्दृशेः क्विन्। दृग्दृशवतुषु। पा॰ ६. ३. ८९.। इति समानस्य सभावः। दृक्स्ववःस्वतवसां छंदसि। पा॰ ७. १. ८३.। इति नुम्। संयोगांतस्य लोपः। क्विन्प्रत्ययस्य कुरिति कुत्वं। कृदुत्तरपदप्रकृतिस्वरत्वं। राज्याः। रात्रेश्चाजसौ। पा॰ ४. १. ३१.। इति ङीप्॥

पूर्वो देवा भवतु सुन्वतो रथोऽस्माकं शंसो अभ्यस्तु दूढ्यः।
तदा जानीतोत पुष्यता वचोऽग्ने सख्ये मा रिषामा वयं तव ॥ ८॥

पूर्वः। देवाः। भवतु। सुन्वतः। रथः। अस्माकं। शंसः। अभि। अस्तु। दुःऽध्यः।
तत्। आ। जानीत। उत। पुष्यत। वचः। अग्ने। सख्ये। मा। रिषाम। वयं। तव ॥ ८॥

हे देवा अग्न्यवयवभूताः सर्वे देवाः सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य रथः पूर्व अन्येषामयजमानानां रथेभ्यो मुख्यो भवतु। अपि चास्माकं शंसः [illegible]शापरूपं पापं दूढ्यो दुर्धियः पापबुद्धीनस्मदभिष्टाचरणपराङ्मुखानभ्यस्तु। अभिभवतु। तान्बाधतां। तदिदं मद्वाक्यं हे देवा आ जानीत। आभिमुख्येनावगच्छत। उतापि च तद्वचोऽस्मदीयं वचनं तदर्थाचरणेन पुष्यत। प्रवर्धयत। हे सर्वदेवात्मकाग्ने सख्य

इत्यादि पूर्ववत् ॥ सुन्वतः । शतुरनुम इति विभक्तेरुदात्तत्वं । शंसः । शंस्यते कीर्त्यत इति शंसोऽभिशापः । कर्मणि घञ् । ञित्वादाद्युदात्तत्वं । दूढ्यः । दुष्टं ध्यायंतीति दुर्धियः । ध्यै चिंतायामित्यस्मात् क्विब्वचीति क्विप् । दृशिग्रहणानुवृत्तेस्तस्य च विध्यंतरोपसंग्रहार्थत्वात्संप्रसारणं । पृषोदरादिषु ध्यै चेति पाठाद्दुरो रेफस्योत्वं उत्तरपदादेः ष्टुत्वं च ॥

वधैर्दुःशंसाँ अप दूढ्यो जहि दूरे वा ये अंति वा के चिदत्रिणः ।
अथा यज्ञाय गृणते सुगं कृध्यग्ने सख्ये मा रिषामा वयं तव ॥९॥
वधैः । दुःऽशंसान् । अप । दुःऽध्यः । जहि । दूरे । वा । ये । अंति । वा । के । चित् । अत्रिणः ।
अथ । यज्ञाय । गृणते । सुऽगं । कृधि । अग्ने । सख्ये । मा । रिषाम । वयं । तव ॥९॥

हे अग्ने त्वं वधैर्हननसाधनैरायुधैर्दुःशंसान्दुःखेन कीर्तनीयान्दूढ्यो दुर्धियः पापबुद्धीनप जहि । वधं प्रापय । ये के चित् ये केचन दूरे विप्रकृष्टदेशे वांतिके समीपदेशे वा वर्तमाना अत्रिणोऽत्तारो राक्षसादयो विद्यंते तान्दुर्धियोऽप जहीत्यर्थः । अथानंतरं यज्ञाय यज्ञपतये गृणते त्वां स्तुवते यजमानाय सुगं शोभनं मार्गं कृधि । कुरु । अन्यत्पूर्ववत् ॥ वधैः । हनश्च वध इति हंतेः करणेऽप् वधादेशश्च । स चादंतोऽंतोदात्तः । तस्यातो लोपे सत्युदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वं । दुःशंसान् । ईषद्दुःसुष्विति कर्मणि खल् । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । जहि । लोटि हिः । हंतेर्ज इति जादेशः । तस्यासिद्धवदत्रा भादित्यसिद्धत्वाद्धेर्लुगभावः । अंति । अंतिकस्य कादिलोपो बहुलमिति कलोपः । अत्रिणः । अदेस्त्रिनि चेति त्रिनिप्रत्ययः । इकारो नकारपरित्राणार्थः । गृणते । शतुरनुम इति विभक्तेरुदात्तत्वं । सुगं । सुदुरोरधिकरणे । पा॰ ३. २. ४८. ३. । इति गमेर्डः । कृधि । श्रुशृणुपृकृवृभ्यश्छंदसीति हेर्धिः । बहुलं छंदसीति विकरणस्य लुक् ॥

यदयुक्था अरुषा रोहिता रथे वातजूता वृषभस्येव ते रवः ।
आदिन्वसि वनिनो धूमकेतुनाग्ने सख्ये मा रिषामा वयं तव ॥१०॥
यत् । अयुक्थाः । अरुषा । रोहिता । रथे । वातऽजूता । वृषभस्यऽइव । ते । रवः ।
आत् । इन्वसि । वनिनः । धूमऽकेतुना । अग्ने । सख्ये । मा । रिषाम । वयं । तव ॥१०॥

हे अग्ने अरुषारोचमानौ रोहिता लोहितवर्णौ । रोहित इत्यग्नेरश्वस्याख्या । रोहितोऽग्नेरिति दर्शनात् । रोहितेन त्वाग्निर्देवतां गमयतु । तै॰ सं॰ १. ६. ४. ३. । इति मंत्रवर्णाच्च । एते वै देवाश्वाः । तै॰ सं॰ १. ७. ४. ३. । इति हि तत्र व्याख्यातं । वातजूता । वातस्य वायोर्जूतं जवो वेग इव वेगो ययोस्तौ । ईदृशावश्वौ रथे यद्यदायुक्थाः अयोजयः तदानीं वनानि दहतस्ते तव रवः शब्दो वृषभस्येव दृप्तस्य महोक्षस्य शब्द इव गंभीरो भवति । आदनंतरं वनिनो वनसंबद्धान्वृक्षान्धूमकेतुना धूमः केतुः प्रज्ञापको यस्य तादृशेन रश्मिनेन्वसि । व्याप्नोषि । अन्यत्पूर्ववत् ॥ अयुक्थाः । युजिर् योगे । लुङि झलो झलीति सकारलोपः । अरुषेत्यादिद्विवचनेषु सुपां सुलुगित्याकारः । रवः । रु शब्दे । ऋदोरबिति भावेऽप् । इन्वसि । इवि व्याप्तौ । भौवादिकः । इदित्वान्नुम् ॥ ॥३१॥

अध स्वनादुत बिभ्युः पतत्रिणो द्रप्सा यत्ते यवसादो व्यस्थिरन् ।
सुगं तत्ते तावकेभ्यो रथेभ्योऽग्ने सख्ये मा रिषामा वयं तव ॥११॥
अध । स्वनात् । उत । बिभ्युः । पतत्रिणः । द्रप्साः । यत् । ते । यवसऽअदः । वि । अस्थिरन् ।
सुऽगं । तत् । ते । तावकेभ्यः । रथेभ्यः । अग्ने । सख्ये । मा । रिषाम । वयं । तव ॥११॥

हे अग्ने अध दुग्धं वनप्रवेशानंतरं स्वनात्त्वदीयात्पूर्वोक्तगंभीरशब्दात्। उतशब्दोऽप्यर्थः। पतत्त्रिणः पक्षिणोऽपि बिभ्युः। बिभ्यति। भयं प्राप्नुवंति। उत्पतनेन देशांतरं गंतुं समर्थाः पक्षिणोऽपि यदा भयं प्राप्नुवंति किमु वक्तव्यमन्येषां तत्तुल्यानां वृकादीनां भीतिर्जायत इति। अतस्त्वयि वनं प्रविशति सर्वे प्राणिनो भयं प्राप्नुवंतीत्यर्थः। तादृशस्य ते तव द्रप्सा ज्वालैकदेशा यवसादो यवसानामरण्ये वर्तमानानां तृणानामत्तारः संतो यद्यदा व्यस्थिरन् विविधमवतिष्ठंते तत्तदा ते तव सर्वमरण्यं सुगं सुखेन गंतुं शक्यं। अतस्तावकेभ्यस्त्वदीयेभ्यो रथेभ्यश्च तदरण्यं सुगं भवति। पूर्वं प्रवृत्तैर्ज्वालाग्रैस्तृणादिषु दग्धेषु सत्सु त्वदीया रथाः प्रतिबंधमंतरेण पश्चाद्गच्छंतीति भावः। अन्यत्समानं॥ बिभ्युः। ञिभी भये। छांदसो लिट्। एरनेकाच इति यण्। व्यस्थिरन्। समवप्रविभ्य इति तिष्ठतेरात्मनेपदं। लुङि व्यत्ययेन झस्य रन्। स्थाघ्वोरिच्चेतीत्वं। ह्रस्वादंगात्। पा० ८. २. २७.। इति सलोपः। तावकेभ्यः। तवकममकावेकवचने। पा० ४. ३. ३.। इति युष्मदस्तवकादेशः॥

अयं मित्रस्य वरुणस्य धायसेऽवयातां मरुतां हेळो अद्भुतः।
मृळा सु नो भूत्वेषां मनः पुनरग्ने सख्ये मा रिषामा वयं तव ॥१२॥
अयं। मित्रस्य। वरुणस्य। धायसे। अवऽयातां। मरुतां। हेळः। अद्भुतः।
मृळ। सु। नः। भूतु। एषां। मनः। पुनः। अग्ने। सख्ये। मा। रिषाम। वयं। तव ॥१२॥

अयमग्निः स्तोता मित्रस्याहरभिमानिनो देवस्य वरुणस्य रात्र्यभिमानिनश्च संबंधिने धायसे धारणायावस्थापनाय भवतु। मित्रावरुणाविममग्निः स्तोतारं धारयतामित्यर्थः। अवयातामवस्ताद्गच्छतां स्वर्गलोकस्याधस्तादंतरिक्षे वर्तमानानां मरुतामेतत्संज्ञानां देवानां हेळः क्रोधोऽद्भुतो महान्भवति। अद्भुत इत्येतन्महन्नाम। तस्मात्क्रोधादिममग्निः स्तोतारं मित्रावरुणौ रक्षतामिति शेषः। अपि च नोऽस्मान् हे अग्ने सु मृळ। सुष्ठु मृडय। सुखय। एषां मरुतां मनश्च पुनर्भूतु। पुनरपि प्रसन्नं भवतु। अन्यत्समानं॥ धायसे। वहिहाधाञ्भ्यश्छंदसीति भावेऽसुन्। णिदित्यनुवृत्तेरातो युक् चिण्कृतोरिति युक्। अवयातां। या प्रापणे। अस्मादवपूर्वाल्लटः शतृ। शतुरनुम इति विभक्तेरुदात्तत्वं। मृळ। मृड सुखने। छंदस्युभयथेति शप आर्धधातुकत्वात्सेरनिटीति णिलोपः। द्व्यचोऽतस्तिङ इति संहितायां दीर्घत्वं। भूतु। बहुलं छंदसीति शपो लुक्॥

देवो देवानामसि मित्रो अद्भुतो वसुर्वसूनामसि चारुरध्वरे।
शर्मन्त्स्याम तव सप्रथस्तमेऽग्ने सख्ये मा रिषामा वयं तव ॥१३॥
देवः। देवानां। असि। मित्रः। अद्भुतः। वसुः। वसूनां। असि। चारुः। अध्वरे।
शर्मन्। स्याम। तव। सप्रथःऽतमे। अग्ने। सख्ये। मा। रिषाम। वयं। तव ॥१३॥

हे अग्ने देवो द्योतमानस्त्वं देवानां सर्वेषामद्भुतो महान्मित्रोऽसि। प्रौढः सखा भवसि। तथा चारुः शोभनस्त्वमध्वरे यज्ञे वसूनां सर्वेषां धनानां वसुरसि। निवासयिता भवसि। अतोऽस्माकं वसूनि देहीत्यर्थः। किंच सप्रथस्तमे सर्वतः पृथुतमेऽतिशयेन विस्तीर्णे तव त्वत्संबंधिनि शर्मणि यज्ञगृहे स्याम। वर्तमाना भवेम। अन्यत्पूर्ववत्॥ शर्मन्। सुपां सुलुगिति सप्तम्या लुक्॥

तत्ते भद्रं यत्समिद्धः स्वे दमे सोमाहुतो जरसे मृळयत्तमः।
दधासि रत्नं द्रविणं च दाशुषेऽग्ने सख्ये मा रिषामा वयं तव ॥१४॥
तत्। ते। भद्रं। यत्। संऽइद्धः। स्वे। दमे। सोमऽआहुतः। जरसे। मृळयत्ऽतमः।
दधासि। रत्नं। द्रविणं। च। दाशुषे। अग्ने। सख्ये। मा। रिषाम। वयं। तव ॥१४॥

हे अग्ने ते त्वत्संबंधि तत्खलु भद्रं भजनीयं। प्रशस्तमित्यर्थः। किं पुनस्तत्। स्वे दमे स्वकीय उत्तरवेदिलक्षणे निवासस्थाने। तस्यैष स्वो लोको यदुत्तरवेदीनाभिः। ऐ॰ ब्रा॰ १. २८.। इति श्रुतेः। तस्यामुत्तरवेद्यां समिद्धः सम्यगिद्धः प्रज्वलितः सोमाहुतो हुतेन सोमरसेन संतर्पितः सन् जरसे। ऋत्विग्भिः स्तूयस इति यदस्ति तद्भद्रमित्यर्थः। एवं प्रशस्तस्त्वं मृळयत्तमोऽतिशयेनास्माकं सुखयिता भूत्वा रत्नं रमणीयं कर्मफलं द्रविणं धनं च दाशुषे हविर्दत्तवते यजमानाय दधासि। प्रयच्छसि। अन्यत्समानं॥ समिद्धः। ञिइन्धी दीप्तौ। कर्मणि निष्ठा। श्वीदितो निष्ठायामितीट्प्रतिषेधः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। सोमाहुतः। सोमेनाहुतः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। जरसे। जरतिः स्तुतिकर्मा। व्यत्ययेन कर्मणि कर्तृप्रत्ययः। यद्वृत्तयोगादनिघातः। दधासि। अनुदात्ते चेत्यभ्यस्तस्याद्युदात्तत्वं॥

यस्मै॒ त्वं सु॑द्रविणो॒ ददा॑शोऽनागा॒स्त्वम॑दिते स॒र्वता॑ता।
यं भ॒द्रेण॒ शव॑सा चो॒दया॑सि प्र॒जाव॑ता॒ राध॑सा॒ ते स्या॑म ॥१५॥
यस्मै॑। त्वं। सु॒ऽद्र॒वि॒णः॒। ददा॑शः। अ॒ना॒गाः॒ऽत्वं। अ॒दि॒ते॒। स॒र्वऽता॑ता।
यं। भ॒द्रेण॑। शव॑सा। चो॒दया॑सि। प्र॒जाऽव॑ता। राध॑सा। ते। स्या॒म॒ ॥१५॥

हे सुद्रविणः शोभनधनादितेऽखंडनीयाग्ने सर्वताता सर्वासु कर्मततिषु यद्वा सर्वेषु यज्ञेषु वर्तमानाय यस्मै यजमानायानागास्त्वमपापत्वं पापराहित्येन कर्मार्हतां त्वं ददाशः प्रयच्छसि स यजमानः समृद्धो भवति। यं च यजमानं भद्रेण भजनीयेन कल्याणेन शवसा बलेन चोदयासि संयोजयसि सोऽपि समृद्धो भवति। वयं च स्तोतारः प्रजावता प्रजाभिः पुत्रपौत्रैर्युक्तेन ते राधसा त्वया दत्तेन धनेन युक्ताः स्याम। भवेम॥ सुद्रविणः। शोभनानि द्रविणानि धनानि यस्य। द्रु गतौ। द्रुदक्षिभ्यामिनन्। उ॰ २. ५०.। द्रविणशब्दस्यांते सकारोपजनश्छांदसः। ददाशः। दाशृ दाने। लेट्यडागमः। बहुलं छंदसीति शपः श्लुः। अभ्यस्तानामादिरित्याद्युदात्तत्वं। सर्वताता। सर्वदेवात्तातिल्लिति स्वार्थे तातिल्प्रत्ययः। यास्कपक्षे तु सर्वाः स्तुतयो येषु यागेष्विति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। वर्णव्यापत्त्यात्वं। उभयत्रापि सुपां सुलुगिति सप्तम्या डादेशः। चोदयासि। चुद प्रेरणे। लेट्याडागमः॥

स त्वम॑ग्ने सौभगत्वस्य॑ वि॒द्वान॒स्माक॒मायुः॒ प्र ति॑रे॒ह दे॑व।
तन्नो॑ मि॒त्रो वरु॑णो मामहंता॒मदि॑तिः॒ सिंधुः॑ पृथि॒वी उ॒त द्यौः ॥१६॥
सः। त्वं। अ॒ग्ने॒। सौ॒भ॒ग॒ऽत्वस्य॑। वि॒द्वान्। अ॒स्माकं॑। आयुः॑। प्र। ति॒र॒। इ॒ह। दे॒व॒।
तत्। नः॒। मि॒त्रः। वरु॑णः। म॒म॒ह॒तां॒। अदि॑तिः। सिंधुः॑। पृ॒थि॒वी। उ॒त। द्यौः ॥१६॥

हे देव दानादिगुणयुक्ताग्ने स पूर्वोक्तगुणविशिष्टस्त्वं सौभगत्वस्य सुभगत्वं सौभाग्यं विद्वान् जानन् इहास्मिन्कर्मण्यस्माकमायुः प्र तिर। प्रवर्धय। प्रपूर्वस्तिरतिर्वर्धनार्थः। त्वया प्रवर्धितं नोऽस्माकं तदायुर्मित्रादयः षड्देवता ममहंतां। पूजयंतां। रक्षंत्वित्यर्थः। मित्रः प्रमीतेस्त्राता वरुणोऽनिष्टानां निवारयिता अदितिरदीनाखंडनीया वा देवमाता सिंधुः स्यंदनशीलोदकात्मा देवता पृथिवी प्रथिता भूदेवता। उतेति समुच्चये। द्यौः प्रकाशमाना द्युलोकात्मा देवता। एताश्च सर्वा अग्निना प्रवर्धितमायुर्ममहंतामिति पूर्वत्रान्वयः॥ सौभगत्वस्य। सुभगस्य भावः सौभगं। सुभगान्मंत्र इत्युद्गात्रादिषु पाठाद्भावेऽञ्। पुनरपि भावप्रत्ययोत्पत्तिश्छांदसी। ममहंतां। मह पूजायां। भौवादिकः। लोटि बहुलं छंदसीति शपः श्लुः। तुजादित्वादभ्यासस्य दीर्घत्वं॥ ॥३२॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके षष्ठोऽध्यायः समाप्तः॥

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

प्रथमे मंडले पंचदशेऽनुवाके प्रथमं सूक्तं व्याख्यातं। द्वे विरूपे इत्येकादशर्चं द्वितीयं सूक्तं। अत्रानुक्रम्यते। द्वे एकादशौषसाय वाग्नय इति। ऋषिश्चान्यस्मादिति परिभाषया कुत्सस्यानुवृत्तेरांगिरसः कुत्स ऋषिः। अनादेशपरिभाषया त्रिष्टुप् छंदः। उषसि प्रातःकाले हविर्भाग्योऽग्निरस्ति स देवता। यद्वा। आग्नेयं तदिति पूर्वत्रोक्तत्वात्तुह्यादिपरिभाषयेदमादीनि पंच सूक्तानि केवलाग्निदेवत्यानि। अतोऽस्य सूक्तस्यौषसगुणविशिष्टोऽग्निः शुद्धोऽग्निर्वा देवतेति वाशब्दार्थः॥ प्रातरनुवाकस्याग्नेये क्रतौ त्रैष्टुभे छंदसीदमादिके द्वे सूक्ते। तथा च सूचितमथैतस्या इति खंडे। द्वे विरूपे इति सूक्ते। आ० ४. १३.। इति॥ आश्विनशस्त्रे चैते प्रातरनुवाकन्यायेन तस्यैव समाम्नायस्य। आ० ६. ५.। इत्यतिदिष्टत्वात्॥

द्वे विरू॑पे चरतः॒ स्वर्थे॒ अ॒न्यान्या॑ व॒त्समुप॑ धापयेते।
हरि॑र॒न्यस्यां॒ भव॑ति स्व॒धावा॑ञ्छु॒क्रो अ॒न्यस्यां॑ ददृशे सु॒वर्चाः॑ ॥१॥
द्वे इति॑। विरू॑पे॒ इति॒ वि॒ऽरू॑पे। च॒र॒तः॒। स्वर्थे॒ इति॑ सु॒ऽअर्थे॑। अ॒न्याऽअ॑न्या। व॒त्सम्। उप॑। धा॒प॒ये॒ते॒ इति॑।
हरिः॑। अ॒न्यस्या॑म्। भव॑ति। स्व॒धाऽवा॑न्। शु॒क्रः। अ॒न्यस्या॑म्। द॒दृ॒शे॒। सु॒ऽवर्चाः॑ ॥१॥

स्वर्थे स्वरणे शोभनगमनागमने। यद्वा। अर्थः प्रयोजनं। शोभनप्रयोजनोपेते विरूपे विषमरूपे शुक्लकृष्णतया नानारूपे द्वे अहोरात्रे चरतः। पुनःपुनः पर्यावर्तेते। ते चाहोरात्रे अग्नेः सूर्यस्य च जनन्यौ। तत्र रात्रेः पुत्रः सूर्यः। स हि गर्भवद्रात्रावंतर्हितः सन् तस्याश्चरमभागादुत्पद्यते। अह्नः पुत्रोऽग्निः। स हि तत्र विद्यमानोऽपि प्रकाशराहित्येनासत्कल्पः सन् तस्मादह्नः सकाशान्निर्मुक्तः प्रकाशमानं स्वात्मानं लभते। अनयोरेतयोः पुत्रत्वं च तैत्तिरीयैराम्नायते। तयोरेतौ वत्सावग्निश्चादित्यश्च रात्रेर्वत्सः श्वेत आदित्योऽह्नो ऽग्निस्ताम्रोऽरुण इति। ते चाहोरात्रे वत्सं स्वं स्वं पुत्रमन्यान्या परस्परव्यतिहारेणोप धापयेते। स्वकीयं रसं पाययतः। यद्रात्र्या कर्तव्यं स्वपुत्रस्यादित्यस्य रसस्य पायनं तदहः करोति। यदह्ना कर्तव्यं स्वपुत्रस्याग्ने रसस्य पायनं तद्रात्रिः करोति। एतच्च सायंप्रातःकालीनाहुत्यभिप्रायं। श्रूयते च। तस्मा अग्नये सायं हूयते सूर्याय प्रातरिति। यस्मादेवं तस्मादन्यस्यां स्वजनन्या अन्यस्यामहरात्मिकायामग्नेर्जनन्यां हरी रसहरणशील आदित्यः स्वधावान् हविर्लक्षणान्नवान्भवति। शुक्रो निर्मलदीप्तिरग्निः स्वजनन्या अन्यस्यां रात्र्यामादित्यस्य जनन्यां सुवर्चाः शोभनदीप्तियुक्तः सन्ददृशे। दृश्यते॥ स्वर्थे। ऋ गतौ। उषिकुषिगार्तिभ्यस्थन्निति भावे कर्मणि वा थन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं। शोभनोऽर्थो ययोस्ते। आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। अन्यान्या। कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलं। म० ८. १. १२. ११.। इति द्विर्भावः। बहुलग्रहणात्समासवद्भावाभावे तस्य परमाम्रेडितमिति परस्याम्रेडितसंज्ञायामनुदात्तं चेत्याम्रेडितानुदात्तत्वं। धापयेते। धेट् पाने। आदेच इत्यात्वं। ततो हेतुमति णिच्। अर्तिह्रीत्यादिना। पा० ७. ३. ३६.। धातोः पुगागमः। तत्र हि लक्षणप्रतिपदोक्तपरिभाषा नास्तीति ज्ञापितं शाच्छासाह्वाव्येति छातात्वानां निर्देशेन। स हि युक्प्राप्तिख्यापनार्थः। यदि तत्र लक्षणप्रतिपदोक्तपरिभाषया पुग्न प्राप्नोति सोऽनर्थकः स्यात्। तस्माद्ध्यापयतीत्यादाविव धापयेते इत्यत्रापि पुगागमः सिद्धः। निगरणचलनार्थेभ्यश्च। पा० १. ३. ८७.। इति प्राप्तस्य परस्मैपदस्य पादिषु धेट उपसंख्यानं। पा० १. ३. ८९. १.। इति प्रतिषेधादात्मनेपदं। हरिः। हृञ् हरणे। औणादिक इन्प्रत्ययः। ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं। भवति। एकान्याभ्यां समर्थाभ्यां। पा० ८. १. ६५.।

इति प्रथमायास्तिङ्विभक्तेर्निघातप्रतिषेधः। ददृशे। दृशेश्छंदसि लुङ्लङ्लिट इति वर्तमाने लिट्। सुवर्चाः। शोभनं वर्चस्तेजो यस्य। सोर्मनसी अलोमोषसी इत्युत्तरपदाद्युदात्तत्वं ॥

**दशेमं त्वष्टुर्जनयंत गर्भमतंद्रासो युवतयो विभृत्रं।**
**तिग्मानीकं स्वयशसं जनेषु विरोचमानं परि षीं नयंति ॥२॥**
**दश। त्वष्टुः। जनयंत। गर्भं। अतंद्रासः। युवतयः। विऽभृत्रं।**
**तिग्मऽअनीकं। स्वऽयशसं। जनेषु। विऽरोचमानं। परि। सीं। नयंति ॥२॥**

अतंद्रासः स्वकार्ये जगतः पोषणेऽनलसा आलस्यरहिताः। जागरूका इत्यर्थः। युवतयो नित्यतरुण्यः। जरामरणरहिता इत्यर्थः। एवंभूता दश प्राच्याद्या दशसंख्याका दिशो गर्भं मेघेषु गर्भरूपेणांतर्वर्तमानं त्वष्टुर्दीप्तान्मध्यमाद्वायोः सकाशाज्जनयंत। वैद्युतमग्निमुत्पादयंति। यद्वा। दशसंख्याका अंगुलयस्त्वष्टुर्दीप्तस्य वायोर्गर्भं स्वकारणभूते वायौ गर्भरूपेण वर्तमानं। अग्नेर्हि वायुः कारणं वायोरग्निरिति श्रुतिः। एवंभूतमिममग्निमरण्योः सकाशाज्जनयंत। उत्पादयंति। कीदृश्योऽंगुलयः। अतंद्रासः पुनःपुनः कर्मकरण आलस्यरहिता युवतयोऽपृथक्कृत्य वर्तमानाः। एकस्मिन्पाणौ संहत्यावस्थिता इत्यर्थः। कीदृशमग्निं। विभृत्रं सर्वेषु भूतेषु विहृतं। जाठररूपेण विभज्य वर्तमानमित्यर्थः। तिग्मानीकं तीक्ष्णमुखं तीक्ष्णतेजसं। अत एव हि वैद्युताग्निदर्शने दृष्टिः प्रतिहन्यते। स्वयशसं स्वायत्तयशस्कं। अतिशयेन यशस्विनमित्यर्थः। जनेषु जनपदेषु सर्वदेशेषु विरोचमानं विशेषेण दीप्यमानं। बहूनामुपकारकमित्यर्थः। एवंभूतं सीमेनमग्निं परि परितः सर्वतो नयंति। स्वस्योपकाराय सर्वे जनाः स्वकीयं देशं प्रापयंति ॥ त्वष्टुः। त्विष दीप्तौ। नप्तृनेष्टृत्वष्टृ इत्यादिना। उ० २. ९६.। उणादिषु तृनंतो निपातितः। अतो नित्त्वादाद्युदात्तत्वं। विभृत्रं। हृञ् हरणे। अस्मात्कर्मणि निष्ठा। छांदसो रेफोपजनः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। हृग्रहोर्भ इति भत्वं। यद्वा। औणादिकः क्त्रप्रत्ययः। तिग्मानीकं। तिज निशाने। युजिरुचितिजां कुत्वं च। उ० १. १४५.। इति मक्। अन प्राणने। अनिदृशिभ्यां चेति कीकन्। तिग्मं तीक्ष्णमनीकं यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। परि षीं। पूर्वपदादिति षत्वं ॥

**त्रीणि जाना परि भूषंत्यस्य समुद्र एकं दिव्येकमप्सु।**
**पूर्वामनु प्र दिशं पार्थिवानामृतून्प्रशासद्वि दधावनुष्ठु ॥३॥**
**त्रीणि। जाना। परि। भूषंति। अस्य। समुद्रे। एकं। दिवि। एकं। अप्ऽसु।**
**पूर्वां। अनु। प्र। दिशं। पार्थिवानां। ऋतून्। प्रऽशासत्। वि। दधौ। अनुष्ठु ॥३॥**

अस्याग्नेस्त्रीणि त्रिसंख्याकानि जाना जननानि जन्मानि परि भूषंति। परितः सर्वतोऽलंकुर्वंति। यद्वा। परीत्येष समित्येतस्य स्थाने। अस्याग्नेस्त्रीणि जन्मानि संभवंति। समुद्रेऽब्धौ वडवानलरूपेणैकं जन्म। दिवि द्युलोक आदित्यात्मनैकं। अप्सु। आप इत्यंतरिक्षनाम। अंतरिक्षे वैद्युताग्निरूपेणैकं। एवमग्निस्त्रेधात्मानं विभज्य त्रिषु स्थानेषु वर्तत इत्यर्थः। तत्रादित्यात्मना वर्तमानः सोऽग्निर्ऋतून्वसंताद्यान् षड्ऋतून्प्रशासत् प्रकर्षेण विभक्ततया ज्ञापयन्पार्थिवानां पृथिव्याः संबंधिनां सर्वेषां प्राणिनां पूर्वां प्राचीं प्रदिशं प्रकृष्टां ककुभं। अनुष्ठ्वित्येतद्व्ययं सम्यक्शब्दसमानार्थं सुष्ठ्विति यथा। सम्यगनुक्रमेण वि दधौ। कृतवान्। स्वतो भेदरहितयोरखंडयोर्दिक्कालयोः प्राच्यादिभेदो वसंतादिभेदश्च सूर्यगत्या निष्पाद्यते। अतः सूर्य एव तयोः कर्तेत्यर्थः ॥ जाना। जनी प्रादुर्भावे। घञ्। कर्षात्वत इत्यंतोदात्तत्वे प्राप्ते वृषादेराकृतिगणत्वादाद्युदात्तत्वं। शेश्छंदसि बहुलमिति शेर्लोपः। भूषंति। भूष अलंकारे। भौवादिकः। यद्वा। भवतेर्लेटि सिब्बहुलं लेटीति सिप्। आगमानुशासनस्यानित्यत्वादिड्भावः संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावश्च। दिवि। अप्सु। ऊडिदमिति विभक्तेरुदात्तत्वं। पार्थिवानां। पृथिव्या ञाञाविति प्राग्दीव्यतीयोऽञ्प्रत्ययः। प्रशासत्। शासु अनुशिष्टौ। अस्माल्लटः शतृ। जक्षित्यादयः षडित्यभ्यस्तसंज्ञायां नाभ्यस्ताच्छतुरिति नुम्प्रतिषेधः। कृदुत्तरपदप्रकृतिस्वरत्वं। अनुष्ठु। अपदुःसुषु स्थः। उ० १. २६.। इति विधीयमानः कुप्रत्ययो बहुलवचनात्तिष्ठतेरनुपूर्वादपि भवति ॥

क [illegible]ं वो निण्यमा चिकेत वत्सो मातॄर्जनयत स्वधाभिः।
बह्वी[illegible] गर्भो अपसामुपस्थान्महान्कविर्निश्चरति स्वधावान् ॥४॥
कः। [illegible]। वः। निण्यं। आ। चिकेत। वत्सः। मातॄः। जनयत। स्वधाभिः।
बह्वीनां। गर्भः। अपसां। उपऽस्थात्। महान्। कविः। निः। चरति। स्वधाऽवान् ॥४॥

हे ऋत्विग्यजमाना निण्यं निर्णीतं। अंतर्हितनामैतत्। अबादिषु गर्भरूपेणांतर्हितं। तथा च मंत्रांतरं। गर्भो यो अपां गर्भो वनानां गर्भश्च स्थातां गर्भश्चरथां। ऋग्वे॰ १.७०.२.। इति। एवंभूतमिममग्निं वो युष्माकं मध्ये क आ चिकेत। को जानाति। न कोऽपीत्यर्थः। सोऽयमग्निर्वत्सो मेघस्थानामपां वैद्युताग्निरूपेण पुत्रस्थानीयः सन् मातॄस्तस्य मातृस्थानीयानि वृष्ट्युदकानि स्वधाभिर्हविर्लक्षणैरन्नैर्जनयत। उत्पादयति। तथा च स्मर्यते। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः। मनु॰ ३.७६.। इति। अपि च बह्वीनां मेघस्थानामपां गर्भो वैद्युतरूपेण गर्भस्थानीयः सोऽग्निरपसामुपस्थात् समुद्रान्निश्चरति। औषसाग्निरूपेणादित्यः सन्निर्गच्छति। कीदृशः। महान् तेजसा प्रौढः कविः क्रांतदर्शी स्वधावान् हविर्लक्षणान्नवान्। एक एवाग्निर्होमनिष्पादकलक्षणेन पार्थिवरूपेण वैद्युतात्मनौषसरूपेणादित्यात्मना च विभज्य वर्तत इत्यर्थः॥ चिकेत। कित ज्ञाने। छांदसो लिट्। जनयत। जनीजॄष्क्नसुरंजोऽमंताश्च। धा॰ १९.६३-६७.। इति मित्त्वान्मितां ह्रस्व इति ह्रस्वत्वं। पूर्ववच्छांदसो लङ्। बह्वीनां। नित्यं छंदसि। पा॰ ४.१.४६.। इति बहुशब्दान्ङीष्। ह्वाश्छंदसि बहुलं। पा॰ ६.१.१७८.। इति नाम उदात्तत्वं। अपसां। आप्लृ व्याप्तौ। आपः कर्माख्यायां ह्रस्वो नुट् च वा। उ॰ ४.२०७.। इति बहुलवचनादकर्माख्यायामप्याप्नोतेरसिप्रत्ययो ह्रस्वश्च। उपस्थात्। उपतिष्ठंत्यापोऽत्रेत्युपस्थः। आतश्चोपसर्ग इति कृत्यल्युटो बहुलमिति बहुलवचनादधिकरणे कप्रत्ययः। मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं॥

आविष्ट्यो वर्धते चारुरासु जिह्मानामूर्ध्वः स्वयशा उपस्थे।
उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते ॥५॥
आविःऽत्यः। वर्धते। चारुः। आसु। जिह्मानां। ऊर्ध्वः। स्वऽयशाः। उपऽस्थे।
उभे इति। त्वष्टुः। बिभ्यतुः। जायमानात्। प्रतीची इति। सिंहं। प्रति। जोषयेते इति ॥५॥

आसु मेघस्थास्वप्सु वैद्युतात्मना वर्तमानोऽग्निश्चारुः शोभनदीप्तिः सन् आविष्ट्यो वर्धते। आविर्भूतः प्रकाशमानो वृद्धिं प्राप्नोति। किं कुर्वन्। जिह्मानां कुटिलानां मेघेषु तिर्यगवस्थितानां तासामपामुपस्थ उत्संगे स्वयशाः स्वायत्तयशस्कोऽग्निरूर्ध्व ऊर्ध्वज्वलनः सन्। स्वकारणभूतास्वप्सु तिर्यगवस्थितास्वपि स्वयमूर्ध्वं ज्वलन्नित्यर्थः। तदुक्तं वैशेषिकैः। अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्पवनं। अणुमनसोराद्यं कर्मेत्यदृष्टकारितानीति। अपि च उभे द्यावापृथिव्यौ त्वष्टुर्दीप्ताज्जायमानादुत्पद्यमानात्तस्मादग्नेर्बिभ्यतुः। भयं प्रापतुः। तदनंतरमुत्पन्नं सिंहं सहनशीलमभिभवनशीलं तमग्निं प्रतीची प्रत्यंचत्यौ प्रतिगच्छंत्यावाभिमुख्येन प्राप्नुवंत्यौ जोषयेते। सेवेते। यास्कस्त्वाह। आविरावेदनात्तत्यो वर्धते चारुरासु चारु चरतेर्जिह्मं जिहीतेरूर्ध्व उच्छ्रितो भवति स्वयशा आत्मयशा उपस्थ उपस्थाने उभे त्वष्टुर्बिभ्यतुर्जायमानात्प्रतीची सिंहं प्रति जोषयेते द्यावापृथिव्याविति वाहोरात्रे इति वारणी इति वापि चैते प्रत्यक्ते सिंहं सहनं प्रत्यासेवेते। नि॰ ८.१५.। इति॥ आवि[illegible] छंदसि। पा॰ ४.२.१०४.१.। इति शैषिकस्त्यप्। ह्रस्वात्तादौ तद्धिते। पा॰ ८.३.१०१.। इति षत्वं। आसु। इदमोऽन्वादेश इत्यशादेशोऽनुदात्तः। विभक्तिश्च सुप्त्वादनुदात्तेति सर्वानुदात्तत्वं। न चोडिदमिति विभक्तेरुदात्तत्वं शंकनीयं। अंतोदात्तादिदंशब्दाडि तद्विधीयते। प्रतीची। प्रतिपूर्वादंचतेर्ऋत्विगित्यादिना क्विन्। अनिदितामिति नलोपः। अंचतेश्चोपसंख्यानमिति ङीप्। अच इत्याकारलोपे चाविति दीर्घत्वं। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वं। वा छंदसीति पूर्वसवर्णदीर्घः। जोषयेते। जुषी प्रीतिसेवनयोः। स्वार्थे णिच्॥ ॥१॥

उभे भद्रे जोषयेते न मेने गावो न वाश्रा उप तस्थुरेवैः ।
स दक्षाणां दक्षपतिर्बभूवांजंति यं दक्षिणतो हविर्भिः ॥ ६ ॥
उभे इति । भद्रे इति । जोषयेते इति । न । मेने इति । गावः । न । वाश्राः । उप । तस्थुः । एवैः ।
सः । दक्षाणां । दक्षऽपतिः । बभूव । अंजंति । यं । दक्षिणतः । हविःऽभिः ॥ ६ ॥

उभे अहश्च रात्रिश्च । यद्वा । उभे द्यावापृथिव्यौ । अरणी वा । भद्रे भजनीये शोभनांग्यौ मेने स्त्रियौ जोषयेते न । सेवेते इव । यथा शोभने स्त्रियौ चामरहस्ते राजानमुभयतः सेवेते एवं द्यावापृथिव्यावेनमग्निमुभयतः सेवेते इत्यर्थः । अपि च वाश्रा हंभारवं कुर्वत्यो गावो न गावो यथैवैः स्वकीयैश्वरित्रैरादरातिशयेन स्वकीयान्वत्सानुप तस्थुः संगच्छंते तथेममग्निं द्यावापृथिव्यावुपस्थिते भवतः । पूर्वं सेवनमात्रमुक्तं इदानीं पुनर्गोनिदर्शनेन तत्रैवादरातिशयो द्योत्यते । अतः सोऽग्निर्दक्षाणां सर्वेषां बलानां दक्षपतिर्बलाधिपतिर्बभूव । आसीत् । बलानां मध्ये यदतिशयितं बलं तस्याधिपतिर्बभूवेत्यर्थः । यमग्निं दक्षिणत आहवनीयस्य दक्षिणभागेऽवस्थिता ऋत्विजो हविर्भिश्चरुपुरोडाशादिभिरंजंति आर्द्रीकुर्वंति तर्पयंति । सोऽग्निरिति पूर्वेणान्वयः ॥ वाश्राः । वाशृ शब्दे । स्फायितंचीत्यादिना रक् । एवैः । इण् गतौ । इण्शीङ्भ्यां वन्निति भावे वन्प्रत्ययः ॥

उद्यंयमीति सवितेव बाहू उभे सिचौ यतते भीम ऋंजन् ।
उच्छुक्रमत्कमजते सिमस्मान्नवा मातृभ्यो वसना जहाति ॥ ७ ॥
उत् । यंयमीति । सविताऽइव । बाहू इति । उभे इति । सिचौ । यतते । भीमः । ऋंजन् ।
उत् । शुक्रं । अत्कं । अजते । सिमस्मात् । नवा । मातृऽभ्यः । वसना । जहाति ॥ ७ ॥

सवितेव सर्वस्य प्रेरक आदित्यो यथा बाहू बाहुस्थानीयान्रश्मीनुन्नमयति तथायमौषसोऽग्निः स्वकीयानि तेजांस्युद्यंयमीति । भृशमुद्यतान्यूर्ध्वाभिमुखानि करोति । तदनंतरं भीमः सर्वेषां भयंकरोऽग्निरुभे सिचावुभे द्यावापृथिव्यौ ऋंजन् प्रसाधयन् स्वतेजसालंकुर्वन्यतते । स्वव्यापारे प्रयतते । तदनंतरं सिमस्मात्सर्वस्माद्भूतजाताच्छुक्रं दीप्तमत्कं सारभूतं रसमुदजते । रश्मिभिरूर्ध्वमादत्ते । अपि च मातृभ्यः स्वमातृस्थानीयेभ्यो वृष्ट्युदकेभ्यः सकाशान्नवा नवानि प्रत्यग्राणि वसना सर्वस्य जगत आच्छादकानि तेजांसि जहाति । उन्नमयति ॥ यंयमीति । यम उपरमे । अस्माद्यङ्लुकि नुगतोऽनुनासिकांतस्य । पा० ७. ४. ८५. । इत्यभ्यासस्य नुगागमः । एतच्चानुस्वारोपलक्षणार्थं । सिचौ । षिचिर् क्षरणे । सिंचतः फलेन संयोजयत इति सिचौ द्यावापृथिव्यौ । क्विप्चेति क्विप् । यतते । यती प्रयत्ने । अत्कं । अत सातत्यगमने । इण्भीकापाशल्यतिमर्चिभ्यः कन् । उ० ३. ४३. । इति कन् । नित्त्वादाद्युदात्तत्वं । सिमस्मात् । सिमशब्दः सर्वशब्दपर्यायः । नवा वसना । उभयत्र शेश्छंदसि बहुलमिति शेर्लोपः । जहाति । ओहाक् त्यागे । जौहोत्यादिकः ॥

त्वेषं रूपं कृणुत उत्तरं यत्संपृंचानः सदने गोभिरद्भिः ।
कविर्बुध्नं परि मर्मृज्यते धीः सा देवताता समितिर्बभूव ॥ ८ ॥
त्वेषं । रूपं । कृणुते । उत्ऽतरं । यत् । संऽपृंचानः । सदने । गोभिः । अत्ऽभिः ।
कविः । बुध्नं । परि । मर्मृज्यते । धीः । सा । देवऽताता । संऽइतिः । बभूव ॥ ८ ॥

सदनेंऽतरिक्षे गोभिर्गंत्रीभिरद्भिर्मेघस्थाभिः सह संपृंचानो वैद्युतरूपेण संयुक्तः सन् त्वेषं दीप्तं सर्वैर्द्रष्टुमशक्यमुत्तरमुत्कृष्टतरं रूपं वैद्युतं प्रकाशं यद्यदा कृणुते करोति तदानीं कविः क्रांतदर्शी धीः सर्वेषां धारकः सोऽग्निर्बुध्नं सर्वस्योदकस्य मूलभूतमंतरिक्षं परि मर्मृज्यते । परितो मार्ष्टि । स्वतेजसाच्छादयति । तस्याग्नेः सा देवताता देवेन देवनशीलेनाग्निना तता विस्तारिता दीप्तिरस्माभिः स्तुता सती समितिर्बभूव । तेजसां संहति-

र्भवति ॥ संपृंचानः । पृची संपर्के । रौधादिकः । अस्माल्लटः शानच् । श्नसोरल्लोप इत्यकारलोपः । सीदंत्यस्मिन् गंधर्वाद्य इति सदनमंतरिक्षं । अधिकरणे ल्युट् । मर्मृज्यते । मृजूष् शुद्धौ । अस्माद्यङि मर्मृज्यते मर्मृज्यमानास उपसंख्यानं । पा० ७. ४. ९१. १. । इति निपातनादभ्यासस्य रुगागमः । देवताता । देवेन तता देवताता । तनोतेः कर्मणि निष्ठा । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । व्यत्ययेनात्वं । तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं ॥

उरु ते ज्रयः पर्येति बुध्नं विरोचमानं महिषस्य धाम ।
विश्वेभिरग्ने स्वयशोभिरिद्धोऽदब्धेभिः पायुभिः पाह्यस्मान् ॥ ९ ॥
उरु । ते । ज्रयः । परि । एति । बुध्नं । विऽरोचमानं । महिषस्य । धाम ।
विश्वेभिः । अग्ने । स्वयशःऽभिः । इद्धः । अदब्धेभिः । पायुऽभिः । पाहि । अस्मान् ॥ ९ ॥

महिषस्य महतस्ते तव ज्रयो राक्षसादीनामभिभावुकं विरोचमानं विशेषेण दीप्यमानमुरु विस्तीर्णं धाम तेजो बुध्नमपां मूलभूतमंतरिक्षं पर्येति । परितो व्याप्नोति । हे अग्ने इद्धोऽस्माभिः प्रज्वलितः सन् विश्वेभिः सर्वैः स्वयशोभिः स्वकीयैरात्मीयैस्तेजोभिरस्मान्पाहि । रक्ष । कीदृशैः । अदब्धेभी राक्षसादिभिरहिंसितैः पायुभिः पालनशक्तैः ॥ ज्रयः । जि ज्रि अभिभवे । असुन् । अदब्धेभिः । दन्भु दंभे । निष्ठायां यस्य विभाषेतीट्प्रतिषेधः । अनिदितामिति नलोपः । झषस्तथोर्धोऽध इति धत्वं । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं । बहुलं छंदसीति भिस ऐसभावः ॥

धन्वन्स्रोतः कृणुते गातुमूर्मिं शुक्रैरूर्मिभिरभि नक्षति क्षां ।
विश्वा सनानि जठरेषु धत्तेऽतर्नवासु चरति प्रसूषु ॥ १० ॥
धन्वन् । स्रोतः । कृणुते । गातुं । ऊर्मिं । शुक्रैः । ऊर्मिऽभिः । अभि । नक्षति । क्षां ।
विश्वा । सनानि । जठरेषु । धत्ते । अंतः । नवासु । चरति । प्रऽसूषु ॥ १० ॥

धन्वन् नभसि गातुं गमनशीलमूर्मिमुदकसंघमयमग्निः स्रोतः कृणुते । स्रोतसा प्रवाहरूपेण युक्तं करोति । शुक्रैर्निर्मलैरूर्मिभिस्तैर्जलसंघैः क्षां भूमिमभि नक्षति । अभिव्याप्नोति । स्वतेजोभिरंतरिक्षे जलसंघमुत्पाद्य तेन सर्वा भूमिमभिवर्षतीत्यर्थः । पश्चाद्विश्वा सर्वाणि सनानि । अन्ननामैतत् । सर्वाण्यन्नानि जठरेषु धत्ते । अवस्थापयति । तदर्थं नवासु वृष्ट्यनंतरमुत्पन्नासु प्रसूषु सर्वेषामन्नानां प्रसविचीष्वोषधीषु पाकार्थमंतश्चरति । मध्ये वर्तते । अंतरवस्थितेन भौमाग्निना सर्वा ओषधयः पच्यंते ॥ धन्वन् । रिवि रवि धवि गत्यर्थाः । इदित्वान्नुम् । कनिन्युवृषीत्यादिना कनिन् । सुपां सुलुगिति सप्तम्या लुक् । धन्वांतरिक्षं धन्वंत्यस्मादाप इति यास्कः । नि० ५. ५. । नित्त्वादाद्युदात्तत्वं । गातुं । गाङ् गतौ । कमिमनिजनीत्यादिना तुप्रत्ययः । ऊर्मिं । अर्तेरूच्चेति मिप्रत्ययः । नक्षति । नक्ष गतौ ॥

एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ ११ ॥
एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि ।
तत् । नः । मित्रः । वरुणः । ममहंतां । अदितिः । सिंधुः । पृथिवी । उत । द्यौः ॥ ११ ॥

हे पावक शोधकाग्ने समिधास्माभिर्दत्तेन समिदादिद्रव्येणैवमुक्तप्रकारेण वृधानो वर्धमानः सन् रेवत् रयिमते धनयुक्ताय नोऽस्माकं श्रवसेऽन्नाय वि भाहि । विशेषेण दीप्यस्व । अस्माकं तादृशमन्नं प्रयच्छेत्यर्थः । नोऽस्माकं तदन्नं मित्राद्यो ममहंतां । पूजयंतां । रक्षंत्वित्यर्थः । उतशब्दः समुच्चये । पृथिवी च द्यौश्चेत्यर्थः ॥

एव । निपातस्य चेति संहितायां दीर्घः । वृधानः । वृधेरंतर्भावितण्यर्थात्ताच्छीलिकश्चानश् । बहुलं छंदसीति शपो लुक् । चानशः सार्वधातुकत्वेन ङित्त्वाल्लघूपधगुणाभावः । लसार्वधातुकत्वाभावेनानुदात्तत्वाभावे चित्स्वर एव शिष्यते । रेवत् । रयिशब्दान्मतुप् । रयेर्मतौ बहुलमिति संप्रसारणं । छंदसीर इति मतुपो वत्वं । रेशब्दाच्च । का॰ ६. १. १७६. १. । इति मतुप उदात्तत्वं । सुपां सुलुगिति चतुर्थ्या लुक् ॥ ॥२॥

स प्रत्नथेति नवर्चं तृतीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभं । द्रविणोदस्त्वगुणविशिष्टोऽग्निः शुद्धाग्निर्वा देवता । तथा चानुक्रांतं । स प्रत्नथा नव द्रविणोदस इति ॥ प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तः सूक्तविनियोगः ॥ व्यूढस्य दशरात्रस्य षष्ठेऽहन्याग्निमारुत इदं सूक्तं जातवेदस्यनिविद्धानं । व्यूळ्हश्चेदिति खंडे सूचितं । स प्रत्नथेत्याग्निमारुतं । आ॰ ८. ८. । इति । स प्रत्नथा सहसा जायमान इति जातवेदस्यं समानोदर्कमित्यादि ब्राह्मणं । ऐ॰ ब्रा॰ ५. १५. ॥ महापितृयज्ञे स्विष्टकृत्स्थानीयस्य कव्यवाहनस्य स प्रत्नथेत्येषा याज्या । दक्षिणाग्नेरिति खंडे सूचितं । स प्रत्नथा सहसा जायमान इत्यग्निः स्विष्टकृत्कव्यवाहनः । आ॰ २. १९. । इति ॥

स प्र॒त्नथा॒ सह॑सा॒ जाय॑मानः स॒द्यः काव्या॑नि॒ बळ॑धत्त॒ विश्वा॑ ।
आप॑श्च मि॒त्रं धि॒षणा॑ च साध॒न्देवा अ॒ग्निं धा॑रयन्द्रविणो॒दां ॥१॥
सः । प्र॒त्नऽथा॑ । सह॑सा । जाय॑मानः । स॒द्यः । काव्या॑नि । बट् । अ॒ध॒त्त॒ । विश्वा॑ ।
आप॑ः । च॒ । मि॒त्रं । धि॒षणा॑ । च॒ । सा॒ध॒न् । दे॒वाः । अ॒ग्निं । धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदां ॥१॥

सहसा बलेन जायमानो निर्मथनेनोत्पद्यमानः सोऽग्निः सद्यस्तदानीमुत्पत्त्यनंतरमेव प्रत्नथा प्रत्न इव चिरंतन इव विश्वा विश्वानि सर्वाणि काव्यानि कवेः क्रांतदर्शिनः प्रगल्भस्य कर्माणि बट् सत्यमधत्त । अधारयत् । पूर्वं विद्यमान इवाग्निरुत्पत्तिसमकालमेव स्वकीयं हविर्वहनादिकं सर्वं कार्यमकरोदित्यर्थः । इममग्निं वैद्युतरूपेण वर्तमानं मेघेष्ववस्थिता आपश्च धिषणा च या माध्यमिका वाक् सा च मित्रं सखिभूतं साधन् । साधयंति । कुर्वंति । तमिमं द्रविणोदां द्रविणस्य धनस्य दातारमग्निं देवा ऋत्विजो धारयन् । गार्हपत्यादिरूपेण धारयंति । यद्वा । देवा एवेंद्रादय इममग्निं द्रविणोदां हविर्लक्षणस्य धनस्य दातारं कृत्वा दूत्ये धारयन् । धारयंति ॥ प्रत्नथा । प्रत्नपूर्वविश्वेमात्थाल् छंदसोतीवार्थे थाल्प्रत्ययः । काव्यानि । कवेः कर्म काव्यं । गुणवचनब्राह्मणादिभ्य इति ष्यञ् । ञित्त्वादाद्युदात्तत्वं । साधन् । षिधु संराद्धौ । णौ सिध्यतेरपारलौकिके । पा॰ ६. १. ४९. । इत्यात्वं । लेट्यडागमः । इतश्च लोप इतीकारलोपः । छंदस्युभयथेति शप आर्धधातुकत्वात्सेरनिटीति णिलोपः । द्रविणोदां । द्रविणानि ददातीति द्रविणोदाः । द्रु गतौ । द्रुदक्षिभ्यामिनन् । छांदसः पूर्वपदस्य सुक् । अन्येभ्योऽपि दृश्यंत इति ददातेर्विच् । सकारांतं त्वसुनि कृते निष्पद्यते ॥

स पूर्व॑या नि॒विदा॑ क॒व्यता॒योरि॒माः प्र॒जा अ॑जनय॒न्मनू॑नां ।
वि॒वस्व॑ता॒ चक्ष॑सा॒ द्याम॒पश्च॑ दे॒वा अ॒ग्निं धा॑रयन्द्रविणो॒दां ॥२॥
सः । पूर्व॑या । नि॒ऽविदा॑ । क॒व्यता॑ । आ॒योः । इ॒माः । प्र॒ऽजाः । अ॒ज॒न॒य॒त् । मनू॑नां ।
वि॒वस्व॑ता । चक्ष॑सा । द्यां । अ॒पः । च॒ । दे॒वाः । अ॒ग्निं । धा॒र॒य॒न् । द्र॒वि॒णः॒ऽदां ॥२॥

सोऽग्निः पूर्वया प्रथमयाग्निर्देवेद्ध इत्यादिकया निविदा कव्यता गुणिनिष्ठगुणाभिधानलक्षणां स्तुतिं कुर्वतायोर्मनोः संबंधिनोक्थेन च स्तूयमानः सोऽग्निर्मनूनां संबंधिनीरिमाः प्रजा अजनयत् । उदपादयत् । मनुना स्तुतः सन् मानवीः सर्वाः प्रजा अजनयदित्यर्थः । तथा विवस्वता विवासनवता विशेषेणाच्छादयता चक्षसात्मीयेन तेजसा द्यां द्युलोकमपश्चांतरिक्षं च व्याप्नोतीति शेषः । अन्यत्समानं ॥ कव्यता । कु शब्दे । अचो यदिति भावे यत् । कव्यं कवनं स्तुतिं करोति । तत्करोति । पा॰ ३. १. २६. ५. । इति णिच् । तदंतात् क्विप् । बहुलमन्यत्रापि संज्ञाच्छंदसोरिति णिलुक् । ततस्तुक् । धातुस्वरेणांतोदात्तत्वं । आयोः । इण् गतौ । छंदसीण इत्युण्प्रत्ययः ॥

तमीळत प्रथमं यज्ञसाधं विश आरीराहुतमृंजसानं ।
ऊर्जः पुत्रं भरतं सृप्रदानुं देवा अग्निं धारयन्द्रविणोदां ॥३॥
तं । ईळत । प्रथमं । यज्ञऽसाधं । विशः । आरीः । आऽहुतं । ऋंजसानं ।
ऊर्जः । पुत्रं । भरतं । सृप्रऽदानुं । देवाः । अग्निं । धारयन् । द्रविणःऽदां ॥३॥

हे विशः सर्वे मनुष्याः आरीरग्निं स्वामिनं गच्छंत्यो यूयं तमग्निमीळत । स्तुध्वं । कीदृशं । प्रथमं सर्वेषु देवेषु मुख्यं यज्ञसाधं यज्ञस्य दर्शपूर्णमासादेः साधकं निष्पादकं आहुतं हविर्भिस्तर्पितं ऋंजसानं स्तोत्रैः प्रसाध्यमानं ऊर्जोऽन्नस्य पुत्रं । भुक्तेनान्नेन जाठराग्नेर्वर्धनादग्नेरन्नपुत्रत्वं । भरतं हविषो भर्तारं । यद्वा । प्राणरूपेण सर्वासां प्रजानां भर्तारं । श्रूयते च । स्वदेहे वा एष प्राणो भूत्वा प्रजा बिभर्ति तस्मादेष भरत इति । सृप्रदानुं सर्पणशीलदानयुक्तं । अविच्छेदेन धनानि प्रयच्छंतमित्यर्थः । देवा इत्यादि गतं ॥ ईळत । ईड स्तुतौ । लोटि व्यत्ययेन परस्मैपदं । बहुलं छंदसीति शपो लुगभावः । यज्ञसाधं । यज्ञं साधयतीति यज्ञसात् । साधयतेः क्विप् । णेरनिटीति णिलोपः । आरीः । ऋ गतौ । सूचिसूत्रीत्यादिना । पा० ३. १. २२. ३. । यङ् । यङोऽचि चेति चशब्देन बहुलग्रहणानुकर्षणादनैमित्तिको लुक् । प्रत्ययलक्षणेन द्विर्भाव उरदत्वहलादिशेषौ । रुग्रिकौ च लुकीति रुक् । यङ्लुगंतादौणादिकः क्विप्रत्ययः । यणादेशे रो रीति रेफलोपः । ढ्रलोपे पूर्वस्येति दीर्घत्वं । कृदिकारादक्तिन इति ङीष् । जसि वा छंदसीति पूर्वसवर्णदीर्घत्वं । व्यत्ययेनाद्युदात्तत्वं । ऋंजसानं । ऋंजतिः प्रसाधनकर्मा । ऋंजिवृधिमंदिसहिभ्यः कित् । उ० २. ८७. । इति कर्मण्यसानच् । भरतं । भृञ् भरणे । भृमृदृशीत्यादिनातच् । सृप्रदानुं । सृप्लृ गतौ । स्फायितंचीत्यादिना रक् । सृप्रो दानुर्दानं यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

स मातरिश्वा पुरुवारपुष्टिर्विदद्गातुं तनयाय स्वर्वित् ।
विशां गोपा जनिता रोदस्योर्देवा अग्निं धारयन्द्रविणोदां ॥४॥
सः । मातरिश्वा । पुरुवारऽपुष्टिः । विदत् । गातुं । तनयाय । स्वःऽवित् ।
विशां । गोपाः । जनिता । रोदस्योः । देवाः । अग्निं । धारयन् । द्रविणःऽदां ॥४॥

सोऽग्निस्तनयायास्मदीयाय पुत्राय गातुमनुष्ठानमार्गं विदत् । लंभयतु । कीदृशः । मातरिश्वा मातरि सर्वस्य जगतो निर्मातर्यंतरिक्षे श्वसन्वर्तमानः पुरुवारपुष्टिः । पुरुभिर्बहुभिर्वारा वरणीया पुष्टिरभिवृद्धिर्यस्य स तथोक्तः । स्वर्वित् स्वः स्वर्गस्य यागद्वारेण लंभयिता विशां सर्वासां प्रजानां गोपा गोपायिता रक्षिता रोदस्योर्द्यावापृथिव्योर्जनिता जनयितोत्पादयिता । देवा इत्यादि गतं ॥ मातरिश्वा । श्वन्नुक्षन्नित्यादौ मातृशब्दोपपदात् श्वस प्राणन इत्यस्मात् कनिन्प्रत्ययांतो निपात्यते । विदत् । विद्लृ लाभे । अस्मादंतर्भावितण्यर्थाच्छांदसो लुङ् । लृदित्त्वात् च्लेरङादेशः । पान्[illegible]घाताभावः । जनिता । जनिता मंत्रे । पा० ६. ४. ५३. । इति तृचि णिलोपो निपात्यते ॥

नक्तोषासा वर्णमामेम्याने धापयेते शिशुमेकं समीची ।
द्यावाक्षामा रुक्मो अंतर्वि भाति देवा अग्निं धारयन्द्रविणोदां ॥५॥
नक्तोषसा । वर्णं । आमेम्याने इत्याऽमेम्याने । धापयेते इति । शिशुं । एकं । समीची इति संऽईची ।
द्यावा[illegible]मा । रुक्मः । अंतः । वि । भाति । देवाः । अग्निं । धारयन् । द्रविणःऽदां ॥५॥

नक्तोषासा रात्रिरहश्च वर्णं स्वकीयं स्वरूपमामेम्याने परस्परं पुनःपुनर्हिंसंत्यौ समीची संगते संश्लिष्टे एवंभूते अहस्त्रियामे एकं शिशुमह्नः पुत्रमग्निं धापयेते। हवींषि पाययेते। रुक्मो रोचमानः सोऽग्निर्द्यावाक्षामा द्यावापृथिव्योरंतर्मध्ये वि भाति। विशेषेण प्रकाशते। अन्यत्पूर्ववत् ॥ नक्तोषसा। नक्तेति रात्रिनाम। नक्तोषाश्च नक्तोषसा। सुपां सुलुगिति विभक्तेराकारः। अन्येषामपीति सांहितिकमुपधादीर्घत्वं। देवताद्वंद्वे चेति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं। आमेम्याने। मीङ् हिंसायां। अस्माद्यङ्लुगंताद्व्यत्ययेन शानच्। अदादिवच्चेति-वचनाच्छपो लुक्। एरनेकाच इति यण्। अभ्यस्तानामादिरित्याद्युदात्तत्वं। कृदुत्तरपदप्रकृतिस्वरत्वं। धापयेते। धेट् पाने। अस्मात्स्यंतान्निगरणचलनेति। पा॰ १. ३. ८७.। प्राप्तस्य परस्मैपदस्य पादिषु धेट उपसंख्यानं। पा॰ १. ३. ८९. १.। इति वचनात् न पादम्याङ्यम। पा॰ १. ३. ८९.। इति प्रतिषेधः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे णिच एव स्वरः शिष्यते। पादादित्वान्निघाताभावः। समीची। संपूर्वादंचतेर्ऋत्विगित्यादिना क्विन्। अनिदितामिति नलोपः। समः समि। पा॰ ६. ३. ९३.। इति सम्यादेशः। अंचतेश्चोपसंख्यानमिति ङीप्। अच इत्यकारलोपे चाविति दीर्घत्वं। उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वं। पदकारस्य त्वयमभिप्रायः। उद ईत्। पा॰ ६. ४. १३९.। इति विधीयमानमीत्वं सम उत्तरस्याप्यंचतेर्व्यत्ययेन भवतीति। वा छंदसीति पूर्वसवर्णदीर्घत्वं। द्यावाक्षामा। दिवो द्यावेति द्यावादेशः। सुपां सुलुगिति षष्ठ्या डादेशः। देवताद्वंद्वे चेति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं॥ ॥३॥

रायो बुध्नः संगमनो वसूनां यज्ञस्य केतुर्मन्मसाधनो वेः।
अमृतत्वं रक्षमाणास एनं देवा अग्निं धारयन्द्रविणोदां ॥६॥
रायः। बुध्नः। सम्ऽगमनः। वसूनां। यज्ञस्य। केतुः। मन्मऽसाधनः। वेरिति वेः।
अमृतऽत्वं। रक्षमाणासः। एनं। देवाः। अग्निं। धारयन्। द्रविणःऽदां ॥६॥

योऽग्नी रायो धनस्य बुध्नो मूलभूतः। आहुतिद्वारा सर्वेषां धनानां कारणत्वात्। वसूनां निवासहेतूनां धनानां संगमनः संगमयिता स्तोतॄणां प्रापयिता यज्ञस्य दर्शपूर्णमासादेः केतुः केतयिता ज्ञापयिता वेरात्मानमभिगच्छतः पुरुषस्य मन्मसाधनो मननीयस्याभिलषितस्य साधयिता। अमृतत्वं स्वकीयामरणत्वं रक्षमाणासः पालयंतो देवा एनं धनस्य दातारमग्निं धारयंति ॥ रायः। ऊडिदमिति विभक्तेरुदात्तत्वं। संगमनः। नंद्यादिलक्षणो ल्युः। वेः। वी गत्यादिषु। अस्मादौणादिक इप्रत्ययः। टिलोपश्च ॥

नू च पुरा च सदनं रयीणां जातस्य च जायमानस्य च क्षां।
सतश्च गोपां भवतश्च भूरेर्देवा अग्निं धारयन्द्रविणोदां ॥७॥
नु। च। पुरा। च। सदनं। रयीणां। जातस्य। च। जायमानस्य। च। क्षां।
सतः। च। गोपां। भवतः। च। भूरेः। देवाः। अग्निं। धारयन्। द्रविणःऽदां ॥७॥

नू चेति निपातसमुदायोऽद्येत्यस्यार्थे। नू चिदिति निपातः पुराणनवयोर्नू च। नि॰ ४. १७.। इति यास्कः। नू चाद्यास्मिन्काले पुरा च रयीणां सर्वेषां धनानां सदनमावासस्थानं जातस्योत्पन्नस्य कार्यजातस्य जायमानस्योत्पद्यमानस्य च क्षां निवासयितारं सतश्च सर्वत्र विद्यमानस्वभावस्य नित्यस्य चाकाशादेर्भवतश्च सद्भावं प्राप्नुवतो भूरेरसंख्यातस्यान्यस्य च भूतजातस्य गोपां गोपायितारं रक्षितारं द्रविणोदां धनप्रदं एवंगुणविशिष्टमग्निं देवा धारयन्। हविर्वोढृत्वेन धारयंति ॥ नू च। ऋचि तुनुघेति दीर्घः। रयीणां। नामन्यतरस्यामिति नाम उदात्तत्वं। क्षां। क्षि निवासगत्योः। [illegible]। वृध्यायादेशौ। ण्यंतात्क्विप्। णेरनिटीति णिलोपः। वेरपृक्तलोपाद्वलि लोपो बलीयानिति पूर्वं लोपो व्योर्वलीति यलोपः। न च णिलोपस्य स्थानिवत्त्वं। न पदांतद्विर्वचनवरेयलोपेति प्रतिषेधात्। यद्वा। क्षै जै षै क्षये। अस्मात्क्विप्। आदेच इत्यात्वं। सतः। असेः शतरि [illegible] लुक्। श्नसोरल्लोप इत्यकारलोपः। शतुरनुम इति विभक्तेरुदात्तत्वं॥

द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत् ।
द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः ॥८॥
द्रविणःऽदाः । द्रविणसः । तुरस्य । द्रविणःऽदाः । सनरस्य । प्र । यंसत् ।
द्रविणःऽदाः । वीरऽवतीं । इषं । नः । द्रविणःऽदाः । रासते । दीर्घं । आयुः ॥८॥

द्रविणोदा द्रविणस्य धनस्य बलस्य वा दातामिस्तुरस्य त्वरमाणस्य चलतो जंगमस्य द्रविणसो धनस्य बलस्य वैकदेशं प्र यंसत्। अस्मभ्यं प्रयच्छतु। तथा द्रविणोदाः सनरस्य सननीयस्य संभजनीयस्य स्थावररूपस्य धनस्यैकदेशं प्रयच्छतु। अपि च द्रविणोदा वीरवतीं वीरैः पुत्रादिभिर्युक्तमिषमन्नं नोऽस्मभ्यं प्रयच्छतु। तथा द्रविणोदा दीर्घमायुरस्मभ्यं रासते। प्रयच्छतु ॥ तुरस्य। तुर त्वरणे। इगुपधलक्षणः कः। सनरस्य। वन षण संभक्तौ। [illegible] ।उ० ५. ४१.। इत्यरन्प्रत्ययः। यंसत्। यम उपरमे। लेट्यडागमः। सिब्बहुलं लेटीति सिप्। रासते। रा दाने। पूर्ववल्लेटि सिप्। व्यत्ययेनात्मनेपदं ॥

एवा नो अग्ने समिधा वृधानो रेवत्पावक श्रवसे वि भाहि ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥९॥
एव । नः । अग्ने । सम्ऽइधा । वृधानः । रेवत् । पावक । श्रवसे । वि । भाहि ।
तत् । नः । मित्रः । वरुणः । ममहंतां । अदितिः । सिंधुः । पृथिवी । उत । द्यौः ॥९॥

व्याख्यातेयं पूर्वसूक्ते। अक्षरार्थस्तु। हे शोधकाग्ने एवमस्माभिर्दत्तेन समिदादिद्रव्येण वृधानो वर्धमानः सन् नोऽस्माकं धनयुक्तायान्नाय विशेषेण प्रकाशस्व। अस्माकं तदन्नं मित्रादयो ममहंतां। पूजयंतां। रक्षंत्वित्यर्थः। तथा सिंधुरब्देवता द्यावापृथिव्यौ च ममहंतां ॥ ॥४॥

अप न इत्यष्टर्चं चतुर्थं सूक्तं कुत्सस्यार्षं गायत्रं। शुचिगुणकोऽग्निः शुद्धोऽग्निर्वा देवता। तथा चानुक्रांतं। अप नोऽष्टौ शुचये गायत्रमिति ॥ विनियोगो लैंगिकः॥ अत्रेदमाख्यानं। दीर्घजिह्वी नाम राक्षसी सर्वान्यज्ञान्बबाधे। तां हंतुमिंद्रोऽशक्तः सन् सर्वस्य मित्रभूतं कुत्समब्रवीदेषा त्वया हंतव्येति। स चावधीत्। तं वागभ्यवदत् अनुचितमिदं त्वया चरितं यत्त्वं सर्वेषां मित्रभूतः सन् क्रूरमकार्षीरिति। तमृषिं शोकः प्राप्नोत्। स ऋषिरनेन सूक्तेनाग्निं स्तुत्वा शोकमपागमयत्। तथा च तांडकं। दीर्घजिह्वी वा इदं रक्षो यज्ञहा यज्ञानवलिहत्यचरत् तामिंद्रः कया चन मायया हंतुं नाशंसत् अथ ह सुमित्रः कुत्सः कल्याण आस तमब्रवीदित्यादि ।तां० १३. ६. ९.। तस्मादेतत्सूक्तं शुगपनयनाय विनियोज्यं। अत एव हि सूत्रकारेण भारद्वाजेन दशमेऽहनि कर्तव्ये शांतिकर्मणि यजुर्वेदे पठितमेतत्सूक्तं विनियुज्यते। नव च स्रुवाहुतीरप नः शोशुचदघमिति ॥

अप नः शोशुचदघमग्ने शुशुग्ध्या रयिं । अप नः शोशुचदघं ॥१॥
अप । नः । शोशुचत् । अघं । अग्ने । शुशुग्धि । आ । रयिं । अप । नः । शोशुचत् । अघं ॥१॥

हे अग्ने नोऽस्माकमघं पापमप शोशुचत्। अस्मत्तो निर्गत्यास्मदीयं शत्रुं शोचयतु। यद्वा। अस्मदीयं पापं शोशुचत्। शोकवत्सत् सद्विनश्यतु। अपि चास्माकं रयिं धनमा समंताच्छुशुग्धि। प्रकाशय। उक्तार्थमपि वाक्यमादरातिशयद्योतनाय पुनः पठ्यते। अवश्यमस्माकमघं विनश्यत्विति ॥ शोशुचत्। शुच शोके। अस्माद्यङ्लुगंताल्लेट्यडागमः। अदादिवच्चेति वचनाच्छपो लुक्। अभ्य[illegible]रित्याद्युदात्तत्वं। अघं शोशुचत्व रयिं शुशुग्धि चेति चार्थप्रतीतेश्चादिलोपे विभाषेति निघातप्रतिषेधः। शुशुग्धि। शुच दीप्तौ। लोटि बहुलं छंदसीति शपः श्लुः। हुझल्भ्यो हेर्धिः। चोः कुरिति कुत्वं ॥

सुक्षेत्रिया सुगातुया वसूया च यजामहे । अप नः शोशुचदघं ॥ २ ॥

सुऽक्षेत्रिया । सुगातुऽया । वसुऽया । च । यजामहे । अप । नः । शोशुचत् । अघं ॥ २ ॥

सुक्षेत्रिया शोभनक्षेत्रेच्छया सुगातुया शोभनमार्गेच्छया वसूया च धनेच्छया निमित्तभूतया च यजामहे । अग्निं हविर्भिः पूजयामः । यद्वा । सुक्षेत्रिया देवयजनलक्षणशोभनदेशसंबंधिना हविषाग्निं यजामहे । नो ऽस्माकमघमप शोशुचत् । विनश्यतु ॥ सुक्षेत्रिया । शोभनं क्षेत्रं सुक्षेत्रं । तद्विषयेच्छा सुक्षेत्रिया । सुप आत्मनः क्यच् । न छंदस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः । व्यत्ययेनेत्वं । क्यजंतात् अ प्रत्ययादिति भावेऽकारप्रत्ययः । ततष्टाप् । सुपां सुलुगिति तृतीयाया लुक् । एवमुत्तरत्रापि । यद्वा । शोभनं क्षेत्रमस्यास्तीति सुक्षेत्रं । इयाडि-याजीकाराणामुपसंख्यानं । पा० ७. १. ३९. १. । इति तृतीयाया डियाजादेशः ॥

प्र यद्भंदिष्ठ एषां प्रास्माकासश्च सूरयः । अप नः शोशुचदघं ॥ ३ ॥

प्र । यत् । भंदिष्ठः । एषां । प्र । अस्माकासः । च । सूरयः । अप । नः । शोशुचत् । अघं ॥ ३ ॥

यद्यथैषां स्तोतॄणां मध्येऽयं कुत्सः प्र भंदिष्ठः प्रकर्षेण स्तोतृतमः एवमस्माकास आस्माकीनाः सूरयः स्तोतारश्च प्रकर्षेण स्तोतृतमा भवंति । अन्यत्समानं ॥ भंदिष्ठः । भंदतिः स्तुतिकर्मा । भदि कल्याणे सुखे चेति तु धातुः । अस्मात्तृजंतात्तुश्छंदसीतीष्ठन् । तुरिष्ठेमेयःस्विति तृलोपः । अस्माकासः । अस्माकं संबंधिन आस्माकाः । तस्मिन्नणि च युष्माकास्माकौ । पा० ४. ३. २. । इत्यस्माकादेशः । छांदसोऽणप्रत्ययस्य लोपः । संज्ञापूर्वकस्य विधेरनित्यत्वाद्वृद्ध्यभावः । आज्जसेरसुक् । स्थानिवदादेशेऽपि मकारात्परस्याकारस्योदात्तत्वं । यद्वा । षष्ठी-बहुवचनेऽस्माकंशब्दस्य मध्योदात्तस्य दृष्टत्वात्स एवाचार्येणातिदिश्यते ॥

प्र यत्ते अग्ने सूरयो जायेमहि प्र ते वयं । अप नः शोशुचदघं ॥ ४ ॥

प्र । यत् । ते । अग्ने । सूरयः । जायेमहि । प्र । ते । वयं । अप । नः । शोशुचत् । अघं ॥ ४ ॥

हे अग्ने यद्यस्मात्ते तव सूरयः स्तोतारः प्रजायंते पुत्रपौत्रादिरूपेण बहुविधा भवंति ततो वयं च ते तव स्तोतारः संतः प्र जायेमहि । पुत्रपौत्रादिभिरूपेता भवेम ॥ जायेमहि । प्रार्थनायां लिङ् । श्नि ज्ञाजनोर्जेति आदेशः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे श्नो नित्त्वादाद्युदात्तत्वं ॥

प्र यदग्नेः सहस्वतो विश्वतो यंति भानवः । अप नः शोशुचदघं ॥ ५ ॥

प्र । यत् । अग्नेः । सहस्वतः । विश्वतः । यंति । भानवः । अप । नः । शोशुचत् । अघं ॥ ५ ॥

सहस्वतः सहनवतः शत्रूनभिभवतोऽग्नेर्भानवो दीप्तयो विश्वतः सर्वतः सर्वस्मादपि प्रदेशात्प्र यंति । प्रकर्षेणोद्गच्छंति । यद्यस्मादेवं तस्मात्तेनाग्नितेजसास्मदीयमघं नश्यतु ॥ यंति । इणो यण् । पा० ६. ४. ८१. । इति यणादेशः ॥

त्वं हि विश्वतोमुख विश्वतः परिभूरसि । अप नः शोशुचदघं ॥ ६ ॥

त्वं । हि । विश्वतःऽमुख । विश्वतः । परिऽभूः । असि । अप । नः । शोशुचत् । अघं ॥ ६ ॥

हे अग्ने त्वं हि त्वं खलु विश्वतोमुखः सर्वतोज्वालः । तव मुखस्थानीयानां ज्वालानां न कुत्रापि प्रतिहति-रस्ति । अतो हे विश्वतोमुखाग्ने विश्वतः सर्वतः सर्वस्मादप्युपद्रवजातात्परिभूरसि । अस्माकं परिग्रहीता भव । रक्षको भवेत्यर्थः । अन्यत्समानं ॥

द्विषो नो विश्वतोमुखाति नावेव पारय । अप नः शोशुचदघं ॥ ७ ॥

द्विषः । नः । विश्वतःऽमुख । अति । नावाऽइव । पारय । अप । नः । शोशुचत् । अघं ॥ ७ ॥

हे विश्वतोमुख सर्वतोमुखाग्ने नावेव नावा नदीमिव द्विषः शत्रून्नोऽस्मानति पारय। अतिक्रमय्य शत्रुरहितं प्रदेशं प्रापय ॥ नावेव। सावेकाच इति विभक्तेरुदात्तत्वं। पारय। पार तीर कर्मसमाप्तौ ॥

स नः सिंधुमिव नावयाति पर्षा स्वस्तये। अप नः शोशुचदघं ॥८॥
सः। नः। सिंधुंऽइव। नावया। अति। पर्ष। स्वस्तये। अप। नः। शोशुचत्। अघं ॥८॥

पूर्वोक्त एवार्थः पुनरपि दार्ढ्याय प्रार्थ्यते। हे अग्ने स त्वं नोऽस्मान्नावया नावा सिंधुमिव नदीमिव स्वस्तये क्षेमार्थमति पर्ष। शत्रूनतिक्रमय्य पालय। शत्रुरहितं प्रदेशमस्मान्प्रापयेत्यर्थः। त्वत्प्रसादान्नोऽस्माकमघं पापं चाप शोशुचत्। अस्मत्तोऽपक्रम्यास्मच्छत्रुः शोकयुक्तो भवतु ॥ नावया। आङ्याजयारां चोपसंख्यानं। म० ७. १. ३९. १.। इति तृतीयाया अयारादेशः। उपोत्तमं रिति। पा० ६. १. २१७.। इत्यकारस्योदात्तत्वं। पर्ष। पॄ पालनपूरणयोः। लोटि बहुलं छंदसीति शपः श्लोरभावः। सिब्बहुलं लेटीति बहुलवचनात्सिप्। गुणः। द्व्यचोऽतस्तिङ इति दीर्घत्वं ॥ ॥५॥

वैश्वानरस्येति तृचं पंचमं सूक्तं कुत्सस्यार्षं त्रैष्टुभं। वैश्वानरगुणकोऽग्निः शुद्धाग्निर्वा देवता। तथा चानुक्रांतं। वैश्वानरस्य तृचं वैश्वानरीयमिति। व्यूढस्य चतुर्थेऽहन्याग्निमारुत इदं सूक्तं वैश्वानरीयनिविद्धानं। व्यूळ्हश्चेदिति खंडे सूचितं। वैश्वानरस्य सुमतौ क ई व्यक्ताः। आ० ८. ८.। इति ॥

वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः।
इतो जातो विश्वमिदं वि चष्टे वैश्वानरो यतते सूर्येण ॥१॥
वैश्वानरस्य। सुऽमतौ। स्याम। राजा। हि। कं। भुवनानां। अभिऽश्रीः।
इतः। जातः। विश्वं। इदं। वि। चष्टे। वैश्वानरः। यतते। सूर्येण ॥१॥

वैश्वानरस्य विश्वेषां नराणां लोकांतरनेतृत्वेन स्वामित्वेन वा संबंधिनोऽग्नेः सुमतौ शोभनायामनुग्रहात्मिकायां बुद्धौ स्याम। अनुग्राह्यत्वेन वर्तमाना भवेम। हि कमित्येतद्धिशब्दार्थे। स हि वैश्वानरोऽभिश्रीरभिश्रयणीय आभिमुख्येन सेवितव्यः सन्भुवनानां सर्वेषां भूतजातानां राजा स्वामी भवति। यो वैश्वानरोऽग्निरितोऽस्मादरणिद्वयाज्जातमात्र एवेदं सर्वं जगद्वि चष्टे विशेषेण पश्यति प्रातरुद्यता सूर्येण च यतते संयतते संगच्छते। उद्यंतं वावादित्यमग्निरनुसमारोहति। तै० ब्रा० २. १. ३. १०.। इति तैत्तिरीयकं। यद्वा। पार्थिवस्याग्नेस्तेजांस्यूर्ध्वं गच्छंति सूर्यकिरणाश्चाधोमुखं प्रसरंति। तयोः संगमनं दृष्ट्वा वैश्वानरो यतते सूर्येणेत्यृषिर्ब्रूते। तथा च यास्कः। अमुतोऽमुष्य रश्मयः प्रादुर्भवंतीतोऽस्यार्चिषस्तयोर्भासोः संसंगं दृष्ट्वैवमवक्ष्यत्। नि० ७. २३.। इति। एवंभूतस्य महानुभावस्य वैश्वानरस्य सुमतौ स्यामेति संबंधः ॥ वैश्वानरस्य। विश्वेषां नराणां संबंधी। नरे संज्ञायां। पा० ६. ३. १२९.। इति पूर्वपदस्य दीर्घत्वं। तस्येदमित्यण्। सुमतौ। शोभना मतिः सुमतिः। तादौ चेति गतेः प्रकृतिस्वरे प्राप्ते मन्क्तिन्नित्यादिनोत्तरपदांतोदात्तत्वं। ननु तत्र कारकादित्यनुवृत्तेर्गतेरुत्तरस्य क्तिनो न प्राप्नोति। एवं तर्हि मतिर्मननं। भावे क्तिन्। शोभनं मननं यस्यां बुद्धौ सा सुमतिः। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। चष्टे। चक्षिङ् व्यक्तायां वाचि। अयं पश्यतिकर्मा च। अदादित्वाच्छपो लुक्। स्कोः संयोगाद्योरिति कलोपः। यतते। यती प्रयत्ने ॥

चातुर्मास्यान्वारंभणीया वैश्वानरपार्जन्या। तस्यां वैश्वानरस्य हविषः पृष्टो दिवीति याज्या। चातुर्मास्यानीति खंडे सूचितं। पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पर्जन्याय प्र गायत। आ० २. १५.। इति ॥

पृष्टो दिवि पृष्टो अग्निः पृथिव्यां पृष्टो विश्वा ओषधीरा विवेश।
वैश्वानरः सहसा पृष्टो अग्निः स नो दिवा स रिषः पातु नक्तं ॥२॥

पृष्टः । दिवि । पृष्टः । अग्निः । पृथिव्यां । पृष्टः । विश्वाः । ओषधीः । आ । विवेश ।
वैश्वानरः । सहसा । पृष्टः । अग्निः । सः । नः । दिवा । सः । रिषः । पातु । नक्तं ॥२॥

अयं वैश्वानरोऽग्निर्दिवि द्युलोक आदित्यात्मना पृष्टः संस्पृष्टः यद्वा निषिक्तो निहितो वर्तते । तथा पृथिव्यां भूमौ गार्हपत्यादिरूपेण पृष्टः संस्पृष्टो निहितो वा । तथा विश्वाः सर्वा ओषधीः पृष्टः संस्पृष्टः सोऽग्निरा विवेश । पाकार्थमंतः प्रविष्टवान् । अंतःप्रविष्टेन पार्थिवेनाग्निना हि सर्वा ओषधयः पच्यते । सहसा परेषामसाधारणेन बलेन पृष्टः संस्पृष्टो वैश्वानरो नोऽस्मान्दिवाह्नि रिषो हिंसतः शत्रोः पातु । रक्षतु । तथा स वैश्वानरो नक्तं रात्रावप्यस्मान्हिंसकात्पातु ॥ पृष्टः । स्पृश संस्पर्शने । छांदसः सकारलोपः । यद्वा । पृषु सेचने । निष्ठायां यस्य विभाषेतीट्प्रतिषेधः । दिवि । ऊडिदमिति विभक्तिरुदात्तत्वं । पृथिव्यां । उदात्तयण इति विभक्तिरुदात्ता । रिषः । रिष हिंसायां । क्विबेति क्विप् । सावेकाच इति पंचम्या उदात्तत्वं ॥

वैश्वानर तव तत्सत्यमस्त्वस्मान्रायो मघवानः सचंतां ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥३॥
वैश्वानर । तव । तत् । सत्यं । अस्तु । अस्मान् । रायः । मघऽवानः । सचंतां ।
तत् । नः । मित्रः । वरुणः । ममहंतां । अदितिः । सिंधुः । पृथिवी । उत । द्यौः ॥३॥

हे वैश्वानर तव त्वदीयं तदस्माभिः क्रियमाणं कर्म सत्यमस्तु । अवितथफलं भवतु । ततोऽस्मान्मघवानो मघवंतो धनवंतो रायो धनवदतिशयाः पुत्राः सचंतां । सेवंतां । एवं यदस्माभिः प्रार्थितं नोऽस्मदीयं तत् मित्रोऽहरभिमानी देवो वरुणो राज्यभिमानो अदितिरदीना देवमाता सिंधुः स्यंदनशीलोदकाभिमानी देवः । उतशब्दः समुच्चये । एते सर्वे मित्रादयो ममहंतां । पूजयंतां । पालयंतामित्यर्थः ॥ ॥ ६ ॥

जातवेदस इत्येकर्चं षष्ठं सूक्तं मरीचिपुत्रस्य कश्यपस्यार्षं त्रैष्टुभं । जातवेदोगुणकोऽग्निः शुद्धाग्निर्वा देवता । तथा चानुक्रांतं । जातवेदस एका जातवेदस्यमेतदादीन्येकभूयांसि सूक्तसहस्रमेतत्तु कश्यपार्षमिति ॥ अहर्गणेषु द्वितीयादिष्वहःस्वाग्निमारुते जातवेदस्यनिविद्धानात्पूर्वमेषा शंसनीया । सूचितं च । जातवेदसे सुनवाम सोममित्याग्निमारुते जातवेदस्यानां । आ० ७.१. । इति ॥

जातवेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिंधुं दुरितात्यग्निः ॥१॥
जातऽवेदसे । सुनवाम । सोमं । अरातिऽयतः । नि । दहाति । वेदः ।
सः । नः । पर्षत् । अति । दुःऽगानि । विश्वा । नावाऽइव । सिंधुं । दुःऽइता । अति । अग्निः ॥१॥

जातवेदसे जातानामुत्पत्तिमतां सर्वेषां वेदित्रे यद्वा जातैः सर्वैः प्राणिभिर्ज्ञायमानाय जातधनाय जातप्रज्ञाय वाग्नये लताहृपं सोमं सुनवाम । अभिषुणुयाम । जातवेदोगुणकमग्निं यष्टुं सोमाभिषवं करवामेत्यर्थः । सोऽग्निररातीयतोऽरातिं शत्रुमिवात्मानाचरतः शत्रोर्वेदो धनं नि दहाति । नितरां दहतु । भस्मीकरोतु । अपि च सोऽग्निर्नोऽस्मान्विश्वा विश्वानि सर्वाणि दुर्गाणि दुर्गमनानि भोक्तुमशक्यानि दुःखान्यति पर्षत् । अतिपारयतु । अतिक्रमय्य दुःखरहितं सुखं प्रापयतु । तत्र दृष्टांतः । नावेव सिंधुं । यथा कश्चित्कर्णधारो ग्राहादिभिर्दुष्टसत्त्वैराकुलितां नदीं नावा तारयति तद्वत् । तथा दुरिता दुरितानि दुःखहेतुभूतानि पापान्यस्मानतिपारयतु । दुःखनिमित्तात्पापादप्यस्मानुत्तारयत्वित्यर्थः । अत्र निरुक्तं । जातवेदाः कस्मात् जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो वा जातविद्यो वा

जातप्रज्ञो वा यत्तज्जातः पशूनविंदतेति तज्जातवेदसो जातवेदस्त्वमिति हि ब्राह्मणमित्यादि । नि० ७.१९.॥ जातवेदसे । जातानि वेत्तीति जातवेदाः । गतिकारकयोरपि पूर्वपदप्रकृतिस्वरत्वं चेति वचनात्कारकपूर्वा-द्वेत्तेरसुन् पूर्वपदप्रकृतिस्वरत्वं च । अरातीयतः । न विद्यते रातिर्दानमस्मिन्नित्यरातिः शत्रुः । तमिवास्माना-चरति । उपमानादाचारे । पा० ३.१.१०.। इत्युपमानभूतात्कर्मणः क्यच् । क्यजंताल्लटः शतृ । शतुरनुम इति ङस उदात्तत्वं । दहाति । दह भस्मीकरणे । लेट्याडागमः । विद्यते लभ्यत इति वेदो धनं । विद्लृ लाभे । औणादिकः कर्मण्यसुन् । पर्षत् । पॄ पालनपूरणयोः । अस्मादंतर्भावितण्यर्थाल्लेट्यडागमः । सिब्बहुलं लेटीति सिप् । दुर्गाणि । दुःखेन गम्यत एष्विति सुदुरोरधिकरण इति गमेर्डः ॥ ॥७॥

स यो वृषेत्येकोनविंशत्यृचं सप्तमं सूक्तं । अत्रानुक्रम्यते । स यो वृषैकोना वार्षागिरा ऋज्राश्वांबरीषसह-देवभयमानसुराधस इति । वृषागिरो महाराजस्य पुत्रभूता ऋज्राश्वादयः पंच राजर्षयः सहेदं सूक्तं ददृशुः । अतस्तेऽस्य सूक्तस्य ऋषयः । उक्तं ह्यार्षानुक्रमण्यां । सूक्तं स यो वृषेत्येतत्पंच वार्षागिरा विदुः । नियुक्ता नाम-धेयैः स्वैरपि चैतत्त्यदित्यृचीति । अनादेशपरिभाषया त्रिष्टुप् । इंद्रो देवता ॥ दशरात्रस्य षष्ठेऽहनि मरुत्वतीय इदं सूक्तं । तथा च सूचितं । यं त्वं रथमिंद्र स यो वृषेंद्र मरुत्व इति तिस्र इति मरुत्वतीयं । आ० ८.१.। इति ॥

स यो वृषा वृष्ण्येभिः समोका महो दिवः पृथिव्याश्च सम्राट् ।
सतीनसत्वा हव्यो भरेषु मरुत्वान्नो भवत्विंद्र ऊती ॥१॥

सः । यः । वृषा । वृष्ण्येभिः । सम्ऽओकाः । महः । दिवः । पृथिव्याः । च । सम्ऽराट् ।
सतीनऽसत्वा । हव्यः । भरेषु । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥१॥

य इंद्रो वृषा कामानां वर्षिता वृष्ण्येभिर्वृष्णि भवैर्वीर्यैः समोकाः सम्यक् समवेतः संगतो महो महतो दिवो द्युलोकस्य पृथिव्याः प्रथितायाभूमेश्च सम्राडीश्वरः सतीनसत्वा । सतीनमित्युदकनाम । उदकस्य सत्वा सादयिता गमयिता भरेषु संग्रामेषु हव्यः सर्वैः स्तोतृभिराह्वातव्यः एवंभूतो मरुत्वान्मरुद्भिर्युक्तः स इंद्रो नो ऽस्माकमूती ऊतये रक्षणाय भवतु ॥ वृष्ण्येभिः । वृषन्शब्दाद्भवे छंदसीति यत् । अल्लोपोऽन इत्यकारलोपः । ये चाभावकर्मणोरिति प्रकृतिभावस्तु व्यत्ययेन न भवति । महः । मह पूजायां । क्विप् । यद्वा । महच्छब्देऽच्छ-ब्दलोपः । साविकाच इति विभक्तिरुदात्तत्वं । सम्राट् । मो राजि समः क्वौ । पा० ८.३.२५.। इति राजतौ क्विबंत उत्तरपदे समो मकारस्य मकारादेशः । मकारस्य च मकारवचनमनुस्वारबाधनार्थं । सतीनसत्वा । षद्लृ विशरणगत्यवसादनेषु । मेघेषु निषीदतीति सतीनं वृष्ट्युदकं । औणादिक ईनप्रत्ययस्तकारांतादेशश्च । यद्वा । सती माध्यमिका वाक् । सा इना ईश्वरा यस्य तत्सतीनं । व्यत्ययेन पुंवद्भावाभावः । तत्सत्वा । सदेरं-तर्भावितण्यर्थात्म ईरसद्योस्तुट्च । उ० ४.११६.। इत्यौणादिको वनिप् तुडागमश्च । मरुद्वृधादित्वात्पूर्वपदांतो-दात्तत्वं । मरुत्वान् । झय इति मतुपो वत्वं । ऊती । ऊतियूतीत्यादिना क्तिन उदात्तत्वं । सुपां सुलुगिति चतुर्थ्याः पूर्वसवर्णदीर्घः ॥

यस्यानाप्तः सूर्यस्येव यामो भरेभरे वृत्रहा शुष्मो अस्ति ।
वृषंतमः सखिभिः स्वेभिरेवैर्मरुत्वान्नो भवत्विंद्र ऊती ॥२॥

यस्य । अनाप्तः । सूर्यस्यऽइव । यामः । भरेऽभरे । वृत्रऽहा । शुष्मः । अस्ति ।
वृषन्ऽतमः । सखिऽभिः । स्वेभिः । एवैः । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥२॥

यस्येंद्रस्य यामो गतिरनाप्तः परैरप्राप्ता सूर्यस्येव । यथा सूर्यस्य गतिरन्यैर्न प्राप्तुं शक्यते तद्वत् । स्वेभिरा त्मीयैरेवैर्गमनशीलैः सखिभिर्मित्रभूतैर्मरुद्भिः सह वृषंतमोऽतिशयेन कामानां वर्षिता भरे भरे सर्वेषु संग्रामेषु वृत्रहा शत्रूणां हंता शुष्मः सर्वेषामसुराणां शोषकः एवंभूतो य इंद्रोऽस्ति विद्यते स मरुत्वानिंद्रो नोऽस्माक रक्षणाय भवतु ॥ यामः । या प्रापणे । अर्तिस्तुस्वित्यादिना भावे मन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । शुष्मः । शु

शोषणे । अविसिविसिशुषिभ्यः कित् । उ॰ १. १४३.। इति मन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । अस्ति । यद्वृत्तयोगादनिघातः । वृषंतमः । वृषन्शब्दादुत्तरस्य तमपो नाद्घस्य । पा॰ ८. २. १७.। इति नुट् । एवैः । इण् गतौ । इणशीङ्भ्यां वन् ॥

दिवो न यस्य रेतसो दुघानाः पंथासो यंति शवसापरीताः ।
तरद्द्वेषाः सासहिः पौंस्येभिर्मरुत्वान्नो भवत्विंद्र ऊती ॥ ३ ॥
दिवः । न । यस्य । रेतसः । दुघानाः । पंथासः । यंति । शवसा । अपरिऽइताः ।
तरत्ऽद्वेषाः । ससहिः । पौंस्येभिः । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥ ३ ॥

यस्येंद्रस्य पंथासो रश्मयो रेतसो वृष्ट्युदकानि दुघाना दुहंतः प्रवर्षंतो यंति निर्गच्छंति द्युलोकादितस्ततः प्रसरंति । तत्र दृष्टांतः । दिवो न । यथा द्योतमानस्य सूर्यस्य किरणा वृष्टिं कुर्वंतो नभःस्थलान्निर्गच्छंति तद्वत् । कीदृशा रश्मयः । शवसा बलेन सहिताः अपरीताः परैरनभिगताः । दुष्प्रापा इत्यर्थः । सोऽयमिंद्रस्तरद्द्वेषा द्वेषांसि शत्रूंस्तरन् । जितशत्रुक इत्यर्थः । पौंस्येभिर्बलैः ससहिः शत्रूणामभिभविता एवंभूतो मरुत्वानिंद्रो नोऽस्माकं रक्षणाय भवतु ॥ रेतसः । रेत इत्युदकनाम । रीयते गच्छतीति रेतः । री गतिरेषणयोः । स्रुरीभ्यां तुट् च । उ॰ ४. २०१.। इत्यसुन् तुडागमश्च । शसो व्यत्ययेन ङसादेशः । दुघानाः । दुह प्रपूरणे । कर्तरि लटः शानच् । अदादित्वाच्छपो लुक् । व्यत्ययेन घत्वं । वृषादेराकृतिगणत्वादाद्युदात्तत्वं । पंथासः । पतंतीति पंथानो रश्मयः । पतेस्थ च । उ॰ ४. १२.। इतीनिप्रत्ययस्थकारांतादेशश्च । जसि पथिमथ्यृभुक्षामादिति व्यत्ययेनात्वं । आज्जसेरसुक् । यद्वा । पंथान इत्यत्र वर्णव्यापत्त्या नकारस्य सकारः । पथिमथोः सर्वनामस्थान इत्याद्युदात्तत्वं । ससहिः । षह अभिभवे । उत्सर्गश्छंदसीति वचनादादृगमहन इति किप्रत्ययः । लिड्वद्भावाद्द्विर्वचनं ॥

सो अंगिरोभिरंगिरस्तमो भूद्वृषा वृषभिः सखिभिः सखा सन् ।
ऋग्मिभिर्ऋग्मी गातुभिर्ज्येष्ठो मरुत्वान्नो भवत्विंद्र ऊती ॥ ४ ॥
सः । अंगिरःऽभिः । अंगिरःऽतमः । भूत् । वृषा । वृषऽभिः । सखिऽभिः । सखा । सन् ।
ऋग्मिऽभिः । ऋग्मी । गातुऽभिः । ज्येष्ठः । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥ ४ ॥

स इंद्रोऽगिरोभिः । अंगंति गच्छंतीत्यंगिरसो गंतारः । तेभ्योऽप्यंगिरस्तमो भूत् । अतिशयेन गंता भवति । वृषभिर्वृषा वर्षितृभ्योऽप्यतिशयेन वर्षिता सखिभिः समानख्यानेभ्यो मित्रभूतेभ्योऽपि सखातिशयेन हितकारी एवंभूतः सन् ऋग्मिभिरर्चनीयेभ्योऽपि ऋग्म्यर्चनीयो भवति । गातुभिर्गातव्येभ्यः स्तोतव्येभ्योऽपि ज्येष्ठोऽतिशयेन स्तोतव्यः एवंगुणविशिष्टो मरुत्वानिंद्रो रक्षणाय भवतु ॥ अंगिरोभिः । अगि रगि लगि गत्यर्थाः । अंगिरा अप्सराः । उ॰ ४. २३५. २३६.। [illegible]ऽसुन्प्रत्ययो निपात्यते । इदमादिषु सर्वत्र पंचम्यर्थे तृतीया । ऋग्मिभिः । ऋच स्तुतौ । संपदादिलक्षणो भावे क्विप् । मत्वर्थीयो मिनिः । पदत्वात्कुत्वं जश्त्वं च । गातुभिः । गा स्तुतौ । कमिमनिजनीत्यादिना कर्मणि तुप्रत्ययः ॥

स सूनुभिर्न रुद्रेभिर्ऋभ्वा नृषाह्ये सासह्वाँ अमित्रान् ।
सनीळेभिः श्रवस्यानि तूर्वन्मरुत्वान्नो भवत्विंद्र ऊती ॥ ५ ॥
सः । सूनुऽभिः । न । रुद्रेभिः । ऋभ्वा । नृऽसह्ये । ससह्वान् । अमित्रान् ।
सऽनीळेभिः । श्रवस्यानि । तूर्वन् । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥ ५ ॥

सूनुभिर्न पुत्रैरिव रुद्रेभी रुद्रपुत्रैर्मरुद्भिर्युक्त ऋभ्वा महान् एवंभूतः स इंद्रो नृषाह्ये नृभिः पुरुषैः सोढव्ये

संग्रामेऽमित्रान् शत्रून् ससह्वानभिभूतवान्। अपि च सनीळेभिः समाननिलयैर्मरुद्भिः सह श्रवस्यानि। श्रव इत्यन्ननाम। तद्धेतुभूतान्युदकानि तूर्वन् मेघात्प्रच्यावयन् मरुत्वानिंद्रोऽस्माकं रक्षणाय भवतु॥ नृषाह्यः। षह मर्षणे। शकिसहोश्च ।पा° ३. १. ९९.। इति कर्मणि यत्। अन्येषामपि दृश्यत इति संहितायां धात्वकारस्य दीर्घत्वं। यतोऽनाव इत्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वं। ससह्वान्। षह अभिभवे। लिटः क्वसुः। अभ्यासदीर्घत्वं छांदसं। अमित्रान्। मित्राण्येषु न संतीत्यमित्राः। नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं। सनीळेभिः। समानं नीळं येषां ते सनीळाः। समानस्य छंदसीति सभावः॥ ॥८॥

स मन्युमीः समदनस्य कर्तास्माकेभिर्नृभिः सूर्यं सनत्।
अस्मिन्नहन्त्सत्पतिः पुरुहूतो मरुत्वान्नो भवत्विंद्र ऊती॥६॥

सः। मन्युऽमीः। सऽमदनस्य। कर्ता। अस्माकेभिः। नृऽभिः। सूर्यं। सनत्।
अस्मिन्। अहन्। सत्ऽपतिः। पुरुऽहूतः। मरुत्वान्। नः। भवतु। इंद्रः। ऊती॥६॥

शत्रुभिरपहृतासु गोषु तैः सह युद्धार्थं विनिर्गता ऋज्राश्वादयोऽनेन सूक्तेनेंद्रमस्तुवन्। स इंद्रो मन्युमीर्मन्योः कोपस्य निर्माता। यद्वा। अभिमन्यमानस्य शत्रोर्हिंसकः। अपि च समदनस्य संग्रामस्य कर्ता सत्पतिः सतां पालयिता पुरुहूतो बहुभिर्यजमानैराहूतः एवंगुणविशिष्टः स अस्मिन्नहन् अस्मिन्दिवसेऽस्माकेभिरास्माकैरस्मदीयैर्नृभिः पुरुषैः सूर्यं सूर्यप्रकाशं सनत्। संभक्तं करोतु। शत्रुपुरुषैस्तु दृष्टिनिरोधकमंधकारं संयोजयतु। स च मरुत्वानिंद्रोऽस्माकं रक्षणाय भवतु॥ मन्युमीः। मन्युं मिनातीति मन्युमीः। मीञ् हिंसायां। क्विप्। समदनस्य। सह माद्यंत्यस्मिन्निति समदनः संग्रामः। मदी हर्षे। अधिकरणे ल्युट्। सहस्य सः संज्ञायां ।पा° ६. ३. ७८.। इति सभावः। अस्माकेभिः। तस्मिन्नणि च युष्माकास्माकावित्यण्यस्मच्छब्दस्यास्माकादेशः। संज्ञापूर्वकस्य विधेरनित्यत्वाद्वृद्ध्यभावः। बहुलं छंदसीति भिस ऐसभावः। स्वरस्तु प्रास्माकासश्च सूरयः ।ऋ° १. ९७. ३.। इत्यत्रोक्तः। सनत्। वन षण संभक्तौ। लेट्यडागमः। अहन्। सुपां सुलुगिति सप्तम्या लुक्। सत्पतिः। पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वं॥

तमूतयो रणयञ्छूरसातौ तं क्षेमस्य क्षितयः कृण्वत त्रां।
स विश्वस्य करुणस्येश एको मरुत्वान्नो भवत्विंद्र ऊती॥७॥

तं। ऊतयः। रणयन्। शूरऽसातौ। तं। क्षेमस्य। क्षितयः। कृण्वत। त्रां।
सः। विश्वस्य। करुणस्य। ईशे। एकः। मरुत्वान्। नः। भवतु। इंद्रः। ऊती॥७॥

तमिंद्रं शूरसातौ शूरैर्वीरपुरुषैः संभजनीये संग्राम ऊतयो गंतारो मरुतो रणयन्। रमयंति। यद्वा प्रहर भगवो जहि वीरयस्वेत्येवंरूपं शब्दमिंद्रमुद्दिश्य कुर्वंति। अपि च क्षितयो मनुष्यास्तमिंद्रं क्षेमस्य रक्षणीयस्य सर्वस्य धनस्य त्रां त्रातारं रक्षितारं कृण्वत। कुर्वंति। देवतांतरादस्य कोऽतिशय इति चेत उच्यते। स इंद्रो विश्वस्य सर्वस्य करुणस्याभिमतफलनिष्पादनरूपस्य कर्मण एकोऽसहाय एवेशे। ईष्टे अन्यत्पूर्ववत्॥ ऊतयः। अवतेर्गत्यर्थात् कृत्यल्युटो बहुलमिति कर्तरि क्तिन्। तितुत्रेतीट्प्रतिषेधः। ज्वरत्वरेत्यादिना वकारस्योपधायाश्च ऊट्। ऊतियूतीत्यादिना क्तिन उदात्तत्वं। यद्वा। कर्तरि क्तिच्। रणयन् रमतेर्हेतुमण्णिजंताद्वर्तमाने छांदसो लङ्। अंत्यविकारश्छांदसः। यद्वा। रण शब्दार्थः। अस्माण्णिजंतात्पूर्ववल्लङ्। त्रां। त्रैङ् पालने। त्रायत इति त्राः। क्विब्वेति चशब्देन दृशिग्रहणानुकर्षणान्निरुपपदादपि क्विप्। करुणस्य। डुकृञ् करणे। कृवृदृदारिभ्य उनन् ।उ° ३. ५३.। इति भाव उनन्। व्यत्ययेन प्रत्ययाद्युदात्तत्वं। ईशे। ईश ऐश्वर्ये। लोपस्त आत्मनेपदेष्विति तलोपः॥

तमप्संत शवस उत्सवेषु नरो नरमवसे तं धनाय ।
सो अंधे चित्तमसि ज्योतिर्विदन्मरुत्वान्नो भवत्विंद्र ऊती ॥ ८ ॥
तं । अप्संत । शवसः । उत्ऽसवेषु । नरः । नरं । अवसे । तं । धनाय ।
सः । अंधे । चित् । तमसि । ज्योतिः । विदत् । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥ ८ ॥

नरो नेतारः स्तोतारः शवसो बलस्य संबंधिषूत्सवेषु संग्रामेषु नरं जयस्य नेतारं तमिंद्रमप्संत । आप्नुवंति । किमर्थं । अवसेऽन्नार्थं रक्षणार्थं वा । तथा धनाय धनार्थं च तमिंद्रं प्राप्नुवंति । यस्मात्स इंद्रस्तमसि दृष्टिप्रतिबंधकेऽंधे चित आध्यानरहिते चित्तव्यामोहकरेऽपि संग्रामे ज्योतिर्विजयलक्षणं प्रकाशं विदत् लंभयति । तस्मात्तमेव प्राप्नुवंतीत्यर्थः । अन्यत्समानं ॥ अप्संत । आप्लृ व्याप्तौ । लङि व्यत्ययेनात्मनेपदं । व्यत्ययेन क्सप्रत्ययः । व्यत्ययेन धातोर्ह्रस्वत्वं । विदत् । विद्लृ लाभे । छंदसि लुङ्लङ्लिट इति वर्तमाने छांदसो लुङ् । लृदित्वाच्च्लेरङादेशः । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः ॥

स सव्येन यमति व्राधतश्चित्स दक्षिणे संगृभीता कृतानि ।
स कीरिणा चित्सनिता धनानि मरुत्वान्नो भवत्विंद्र ऊती ॥ ९ ॥
सः । सव्येन । यमति । व्राधतः । चित् । सः । दक्षिणे । संऽगृभीता । कृतानि ।
सः । कीरिणा । चित् । सनिता । धनानि । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥ ९ ॥

स इंद्रः सव्येन वामहस्तेनैकहस्तेन व्राधतश्चित् हिंसतो महतः शत्रूनपि यमति । नियमयति । तथा स इंद्रो दक्षिणे दक्षिणपार्श्वस्थेन हस्तेनैकेन यजमानैः कृतानि हवींषि संगृभीता । संगृह्णाति । अपि च स इंद्रः कीरिणा चित् कीर्तयित्रा स्तोत्रा च स्तुतः सन्धनानि सनिता प्रदानशीलो भवति । हविष्प्रदातॄणामिव स्तोतॄणामपि धनं प्रयच्छतीत्यर्थः । शिष्टं स्पष्टं ॥ यमति । यम उपरमे । णिच्यमंतत्वान्मित्त्वे मितां ह्रस्व इति ह्रस्वत्वं । छंदस्युभयथेति शप आर्धधातुकत्वात्सेरनिटीति णिलोपः । व्राधतः । वृधु वृद्धौ । अस्मादतिप्रत्यय औणादिक आमागमश्च । वृषादित्वादाद्युदात्तत्वं । संगृभीता । ग्रह उपादाने । लिङि बहुलं छंदसीति विकरणस्य लुक् । लिङः सलोप इति सलोपः । ग्रहिज्यादिना संप्रसारणं । हृग्रहोर्भ इति भत्वं । द्व्यचोऽतस्तिङ इति दीर्घः । सनिता । षणु दाने । ताच्छीलिकस्तृन् । धनानि । न लोकाव्ययेति षष्ठीप्रतिषेधः ॥

स ग्रामेभिः सनिता स रथेभिर्विदे विश्वाभिः कृष्टिभिर्न्व१द्य ।
स पौंस्येभिरभिभूरशस्तीर्मरुत्वान्नो भवत्विंद्र ऊती ॥ १० ॥
सः । ग्रामेभिः । सनिता । सः । रथेभिः । विदे । विश्वाभिः । कृष्टिऽभिः । नु । अद्य ।
सः । पौंस्येभिः । अभिऽभूः । अशस्तीः । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥ १० ॥

स इंद्रो ग्रामेभिर्मरुत्संघैः सह सनिता फलानां प्रदाता भवति । स चाद्यास्मिन्नहनि नु क्षिप्रं विश्वाभिः कृष्टिभिः सर्वैर्मनुष्यै रथेभिरिंद्रसंबंधिभी रथैः करणभूतैर्विदे । विज्ञायते । अपि च स इंद्रः पौंस्येभिः स्वकीयैर्बलैरशस्तीरशंसनीयान् शत्रूनभिभूः । अभिभवन्वर्तते । मरुत्वान्स इंद्रो नोऽस्माकं रक्षणाय भवतु ॥ ग्रामेभिः । बहुलं छंदसीति भिस ऐसभावः । ग्रामादीनां च । फि॰ २. १५. । इत्याद्युदात्तत्वं । विदे । विद ज्ञाने । कर्मणि लट् । बहुलं छंदसीति विकरणस्य लुक् । लोपस्त आत्मनेपदेष्विति तलोपः ॥ ॥ ९ ॥

स जामिभिर्यत्समजाति मीळ्हेऽजामिभिर्वा पुरुहूत एवैः ।
अपां तोकस्य तनयस्य जेषे मरुत्वान्नो भवत्विंद्र ऊती ॥ ११ ॥

सः। जामिऽभिः। यत्। सम्ऽअजाति। मीळ्हे। अजामिऽभिः। वा। पुरुऽहूतः। एवैः।
अपां। तोकस्य। तनयस्य। जेषे। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥११॥

पुरुहूतो बहुभिर्यजमानैराहूतः स इंद्रो मीळ्हे संग्रामे। मीळ्हमिति धननाम। तद्धेतुत्वात्संग्रामोऽपि मीळ्हशब्देनोच्यते। जामिभिर्बंधुभिरजामिभिर्वा बांधवरहितैर्वैर्युद्धार्थं मरुद्भिः सह यद्यदा समजाति संगच्छते। तेषामुभयविधानामपामिंद्रं प्राप्नुवतां पुरुषाणां तोकस्य पुत्रस्य तनयस्य तत्पुत्रस्य च जेषे जयप्राप्तये स इंद्रो भवति। किमु वक्तव्यमस्माकं स्तोतृतमानां जयो भवतीति। अन्यत्समानं ॥ समजाति। अज गतिक्षेपणयोः। लेट्याडागमः। जेषे। जि जये। औणादिकः सप्रत्ययः। चतुर्थ्यर्थे सप्तमी। यद्वा। जेषृ णेषृ प्रेषृ गतौ। क्विचेति क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं ॥

स वज्रभृद्दस्युहा भीम उग्रः सहस्रचेताः शतनीथ ऋभ्वा।
चम्रीषो न शवसा पांचजन्यो मरुत्वान्नो भवत्विंद्र ऊती ॥१२॥

सः। वज्रऽभृत्। दस्युऽहा। भीमः। उग्रः। सहस्रऽचेताः। शतऽनीथः। ऋभ्वा।
चम्रीषः। न। शवसा। पांचऽजन्यः। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥१२॥

स इंद्रो वज्रभृत् अन्यैर्धर्तुमशक्यस्य वज्रस्य भर्ता दस्युहा दस्यूनामुपक्षपयितॄणामसुराणां हंता भीमः सर्वेषां भयहेतुः उग्र उद्गूर्णतेजाः सहस्रचेता बहुविधज्ञानः। सर्वज्ञ इत्यर्थः। शतनीथो बहुस्तुतिर्बहुविधप्रापणो वा ऋभ्वा उरु भासमानो महान्वा चम्रीषो न चम्वां चमसे रसात्मनावस्थितः सोम इव शवसा बलेन पांचजन्यः। गंधर्वा अप्सरसो देवा असुरा रक्षांसि पंच जनाः। निषादपंचमाश्चत्वारो वर्णा वा। तेषु रक्षकत्वेन भवः। एवंभूतः स मरुत्वानिंद्रो नोऽस्माकं रक्षणाय भवतु ॥ दस्युहा। बहुलं छंदसीति हंतेः क्विप्। भीम। ञिभी भये। भीमादयोऽपादाने। पा॰ ३. ४. ७४. इत्यपादाने भियः षुग्वा। उ॰ १. १४७. इति मक्। शतनीथः। णीञ् प्रापणे। हनिकुषिनीरमिकाशिभ्यः क्थन्। उ॰ २. २. इति क्थन्प्रत्ययः। चम्रीषः। इष गतौ। चम्वामिष्यति गच्छतीति चम्रीषः। इगुपधलक्षणः कप्रत्ययः। वर्णव्यापत्त्या रेफो दीर्घश्च। यद्वा। चमेरौणादिक ईषन्प्रत्ययः। पूर्ववद्रेफः। पांचजन्यः। भवार्थे बहिर्देवपंचजनेभ्यश्चेति वक्तव्यं। का॰ ४. ३. ५८. १. इति ञ्यप्रत्ययः। ञित्त्वादाद्युदात्तत्वं ॥

तस्य वज्रः क्रंदति स्मत्स्वर्षा दिवो न त्वेषो रवथः शिमीवान्।
तं सचंते सनयस्तं धनानि मरुत्वान्नो भवत्विंद्र ऊती ॥१३॥

तस्य। वज्रः। क्रंदति। स्मत्। स्वःऽसाः। दिवः। न। त्वेषः। रवथः। शिमीऽवान्।
तं। सचंते। सनयः। तं। धनानि। मरुत्वान्। नः। भवतु। इंद्रः। ऊती ॥१३॥

तस्येंद्रस्य वज्रः कुलिशः स्मत् भृशं क्रंदति। शत्रूनाक्रंदयति। रोदयतीत्यर्थः। य इंद्रः स्वर्षाः शोभनस्योदकस्य दाता दिवो न दिवः संबंधी सूर्य इव त्वेषो दीप्तः रवथः शब्दस्य गर्जनलक्षणस्य कर्ता शिमीवान्। शिमीति कर्मनाम। लोकानुग्राहकेण कर्मणा युक्तस्तमिंद्रं सनयो धनस्य दानानि सचंते। सेवंते। तथा तं धनानि च सेवंते। स मरुत्वानिंद्रो नोऽस्माकं रक्षणाय भवतु ॥ क्रंदति। कदि क्रदि क्लदि आह्वाने रोदने च। छंदस्युभयथेति शप आर्धधातुकत्वात्सेरनिटीति णिलोपः। स्वर्षाः। पूर्वादेतेर्विच्। सुष्ठर्ति गच्छतीति स्वरुदकं। तत्सनोतीति स्वर्षाः। षणु दाने। जनसनखनक्रमगमो विट्। विड्वनोरनुनासिकस्यात्। सनोतेरनः। पा॰ ८. ३. १०८. इति षत्वं। त्वेषः। त्विष दीप्तौ। पचाद्यच्। रवथः। रु शब्दे। शीङ्शपिरुगमिवंचिजीविप्राणिभ्योऽथः। उ॰ ३. ११३. इत्यथप्रत्ययः। गुणावादेशौ। सनयः। सनोतेर्भाव औणादिक इप्रत्ययः॥

यस्याजस्रं शवसा मानमुक्थं परिभुजद्रोदसी विश्वतः सीं ।
स पारिषत्क्रतुभिर्मंदसानो मरुत्वान्नो भवत्विंद्र ऊती ॥ १४ ॥
यस्य । अजस्रं । शवसा । मानं । उक्थं । परिऽभुजत् । रोदसी इति । विश्वतः । सीं ।
सः । पारिषत् । क्रतुऽभिः । मंदसानः । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥ १४ ॥

यस्येंद्रस्योक्थं प्रशस्यं शवसा मानं बलेन सर्वस्य परिच्छेदकं सर्वेषां बलस्योपमानभूतं वा रोदसी द्यावापृथिव्यौ विश्वतः सीं सर्वतोऽजस्रमनवरतं परिभुजत् परितः सर्वतो भुनक्ति पालयति स इंद्रः क्रतुभिरस्माभिः कृतैर्यागैर्मंदसानो मोदमानः सन्पारिषत् । अस्मान्दुरितात्पारयतु ॥ उक्थं । वच परिभाषणे । पातॄतुदिवचीत्यादिना कर्मणि थक् । वचिस्वपीत्यादिना संप्रसारणं । परिभुजत् । भुज पालनाभ्यवहारयोः । लेट्यडागमः । व्यत्ययेन शः । पारिषत् । पार तीर कर्मसमाप्तौ । लेट्यडागमः । सिब्बहुलं लेटीति सिप् । तस्यार्धधातुकत्वादिट् । व्यत्ययेन णिलोपः । मंदसानः । मदि स्तुतिमोदमदस्वप्नकांतिगतिषु । ऋंजिवृधिमंदिसहिभ्यः कित् । उ० २. ८७. । इत्यसानच्प्रत्ययः ॥

न यस्य देवा देवता न मर्ता आपश्चन शवसो अंतमापुः ।
स प्ररिक्वा त्वक्षसा क्ष्मो दिवश्च मरुत्वान्नो भवत्विंद्र ऊती ॥ १५ ॥
न । यस्य । देवाः । देवता । न । मर्ताः । आपः । चन । शवसः । अंतं । आपुः ।
सः । प्रऽरिक्वा । त्वक्षसा । क्ष्मः । दिवः । च । मरुत्वान् । नः । भवतु । इंद्रः । ऊती ॥ १५ ॥

देवता देवस्य दानादिगुणयुक्तस्य यस्येंद्रस्य शवसो बलस्यांतमवसानं देवा वस्वाद्या देवगणा नापुः नानशिरे तथा मर्ता मनुष्या आपश्चनापोऽपि न प्रापुः स तादृश इंद्रस्त्वक्षसा शत्रूणां तनूकर्त्रात्मीयेन बलेन क्ष्मः पृथिव्या दिवश्च स्वर्गस्य च प्ररिक्वा प्रकर्षेण रेचको भवति । लोकद्वयादप्यस्य बलमतिरिच्यत इत्यर्थः । मरुद्भिर्युक्तः स इंद्रो नोऽस्माकमूती ऊतये रक्षणाय भवतु ॥ देवता । देव एव देवता । देवात्तलिति स्वार्थे तल् । सुपां सुलुगिति षष्ठ्या लुक् । मर्ताः । मृङ् प्राणत्यागे । असिहसीत्यादिना तन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । प्ररिक्वा । रिचिर् विरेचने । अन्येभ्योऽपि दृश्यंत इति क्वनिप् । अंत्यविकारश्छांदसः । त्वक्षसा । तक्षू त्वक्षू तनूकरणे । असुन् । नित्त्वादाद्युदात्तत्वं । क्ष्मः । क्ष्मेति पृथिवीनाम । आतो धातोरित्यत्रातः इति योगविभागादिष्टसिद्धिरित्यभिधानात् ङसि भसंज्ञायामाकारलोपः । यद्वा । क्ष्मायी विधूनने । अस्मात्क्विब्वचेति क्विप् । वेरपृक्तलोपात्पूर्वं वलि लोपः । अन्यत्समानं । उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं ॥ ॥ १० ॥

रोहिच्छ्यावा सुमदंशुर्ललामीर्द्युक्षा राय ऋज्राश्वस्य ।
वृषण्वंतं बिभ्रती धूर्षु रथं मंद्रा चिकेत नाहुषीषु विक्षु ॥ १६ ॥
रोहित् । श्यावा । सुमत्ऽअंशुः । ललामीः । द्युक्षा । राये । ऋज्रऽअश्वस्य ।
वृषण्ऽवंतं । बिभ्रती । धूःऽसु । रथं । मंद्रा । चिकेत । नाहुषीषु । विक्षु ॥ १६ ॥

रोहित् रोहितवर्णा श्यावा श्यामवर्णा । उभयोः पार्श्वयोरुभयविधवर्णयुक्तेत्यर्थः । सुमदंशुः सुमत् स्वतः प्रांशुः । उक्तं च यास्केन । सुमत् स्वयमित्यर्थः । नि० ६. २२. । इति । अतिदीर्घावयवा ललामीः पुंड्रवती अश्वभूषणयुक्ता वा द्युक्षा दिवि द्युलोके कृतनिवासा ऋज्राश्वस्यैतत्संज्ञस्य राजर्षे राये धनार्थं वृषण्वंतं वृष्णा सेक्त्रेंद्रेण युक्तं रथं धूर्षु युगसंबंधिषु वहनप्रदेशेषु बिभ्रती वहंती मंद्रा सर्वेषामाह्लादकर्यश्वपंक्तिर्नाहुषीषु । नहुषा मनुष्याः । तत्संबंधिनीषु विक्षु सेनालक्षणासु प्रजासु चिकेत । ज्ञायते । ईदृश्याश्वपंक्त्या युक्त इंद्रः संग्रामेष्वनुग्राहकतया प्रादुर्भवतीत्यर्थः ॥ ललामीः । ललामशब्दाच्छंदसीवनिपौ । पा० ५. २. १०९. २. । इति

मत्वर्थीय ईकारः। अञ्ब्यंतत्वात्सुलोपाभावः। युवा। चि निवासगत्योः। औणादिको डप्रत्ययः। ततष्टाप्। ऋज्राश्वस्य। ऋज गतिस्थानार्जनोपार्जनेषु। ऋज्रेंद्रेत्यादिना रक्प्रत्ययांतो निपातितः। ऋज्रा गतिमंतोऽश्वा यस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। वृषण्वंतं। अनो नुट्। पा॰ ८. २. १६.। इति मतुपो नुट्। चिकेत। कित ज्ञाने। छंदसि लुङ्लङ्लिट इति वर्तमाने कर्मणि लिट्। व्यत्ययेन तिप्॥

एतत्त्यत्त॑ इंद्र॒ वृष्ण॑ उ॒क्थं वा॑र्षागि॒रा अ॒भि गृ॑णंति॒ राधः॑।
ऋ॒ज्राश्वः॒ प्रष्टि॑भिरं॒बरीषः॑ स॒हदे॑वो॒ भय॑मानः सु॒राधाः॑ ॥१७॥

ए॒तत्। त्यत्। ते॒। इं॒द्र॒। वृष्णे॑। उ॒क्थं। वा॒र्षा॒गि॒राः। अ॒भि। गृ॒णं॒ति॒। राधः॑।
ऋ॒ज्रऽअ॑श्वः। प्रष्टि॑ऽभिः। अं॒बरीषः॑। स॒हऽदे॑वः। भय॑मानः। सु॒ऽराधाः॑ ॥१७॥

हे इंद्र वृष्णे कामानां वर्षितुस्ते तव त्यत्तदेतदुक्थं स्तोत्रं राधः संराधकं त्वत्प्रीतिहेतु वार्षागिरा वृषागिरो राज्ञः पुत्रा ऋज्राश्वादयोऽभि गृणंति। आभिमुख्येन वदंति। वार्षागिरा इत्येतद्विवृणोति। ऋज्राश्व एतत्संज्ञो राजर्षिः प्रष्टिभिः पार्श्वस्थैरन्यैर्ऋषिभिः सहेंद्रमस्तौत्। के ते पार्श्वस्थाः। अंबरीषादयश्चत्वारो राजर्षयः॥ वार्षागिराः। तस्यापत्यं। पा॰ ४. १. ९२.। इत्यण्प्रत्ययः। गृणंति। गॄ शब्दे। प्वादीनां ह्रस्व इति ह्रस्वत्वं। राधः। राध साध संसिद्धौ। राध्नोति समृद्धो भवत्यनेनेति राधः। करणेऽसुन्। ऋज्राश्वः। ऋज्रा गतिमंतोऽश्वा यस्य स तथोक्तः। अंबरीषः। अबि शब्दे। औणादिक ईषन्प्रत्ययः। उ॰ ४. २९.। सहदेवः। देवैः सह वर्तत इति सहदेवः। वोपसर्जनस्येति विकल्पनात्सभावाभावः। भयमानः। ञिभी भये। अस्मादंतर्भावितण्यर्थाद्व्यत्ययेन शानच्। बहुलं छंदसीति शपः श्लोरभावः। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते। सुराधाः। राध इति धननाम। शोभनं राधो यस्य। सोर्मनसी अलोमोषसी इत्युत्तरपदाद्युदात्तत्वं॥

दस्यू॒ञ्छिम्यूं॑श्च पुरुहू॒त एवै॑र्ह॒त्वा पृ॑थि॒व्यां शर्वा॒ नि ब॑र्हीत्।
सन॒त्क्षेत्रं॒ सखि॑भिः श्वि॒त्न्येभिः॒ सन॒त्सूर्यं॒ सन॑द॒पः सु॒वज्रः॑ ॥१८॥

दस्यू॑न्। शिम्यू॑न्। च॒। पु॒रु॒ऽहू॒तः। एवैः॑। ह॒त्वा। पृ॒थि॒व्यां। शर्वा॑। नि। ब॒र्ही॒त्।
सन॑त्। क्षेत्रं॑। सखि॑ऽभिः। श्वि॒त्न्येभिः॑। सन॑त्। सूर्यं॑। सन॑त्। अ॒पः। सु॒ऽवज्रः॑ ॥१८॥

पुरुहूतो बहुभिर्यजमानैराहूत इंद्र एवैर्गमनशीलैर्मरुद्भिर्युक्तः सन् पृथिव्यां भूमौ वर्तमानान्दस्यूनुपक्षयितॄञ्छत्रून् शिम्यूंश्च शमयितॄन्वधकारिणो राक्षसादींश्च हत्वा प्रहृत्य तदनंतरं शर्वा हिंसकेन वज्रेण नि बर्हीत्। अवधीत्। निबर्हयतिर्वधकर्मा। एवं शत्रून्निरस्य श्वित्न्येभिः श्वेतवर्णैरलंकारेण दीप्तांगैः सखिभिर्मित्रभूतैर्मरुद्भिः सह क्षेत्रं शत्रूणां स्वभूतां भूमिं सनत्। समभाक्षीत्। तथा वृत्रेण तिरोहितं सूर्यं तस्य वृत्रस्य हननेन सनत्। अभजत। प्राप्तवानित्यर्थः। तथा सुवज्रः शोभनवज्रयुक्त इंद्रो वृत्रेण निरुद्धा अपो वृष्ट्युदकानि सनत्। समभजत॥ दस्यून्। दसु उपक्षये। यजिमनिशुंधिदसिजनिभ्यो युः। वृषादित्वादाद्युदात्तत्वं। शिम्यून्। शमु उपशमे। शमयति सर्वं तिरस्करोतीति राक्षसादिः शिम्युः। औणादिको युन्प्रत्ययः। वर्णव्यापत्त्याकारस्येत्वं। शर्वा। शॄ हिंसायां। अन्येभ्योऽपि दृश्यंत इति वनिप्। सुपां सुलुगिति तृतीयाया डादेशः। सनत्। वन षण संभक्तौ। लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। श्वित्न्येभिः। श्विता वर्णे। औणादिको नक्प्रत्ययः। श्वित्नं शुक्लवर्णमर्हंतीति श्वित्न्याः। छंदसि चेति यः। सुवज्रः। आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं॥

विश्वा॒हेंद्रो॑ अधिव॒क्ता नो॑ अ॒स्त्वप॑रिह्वृताः सनुयाम॒ वाजं॑।
तन्नो॑ मि॒त्रो वरु॑णो मामहंता॒मदि॑तिः॒ सिंधुः॑ पृथि॒वी उ॒त द्यौः ॥१९॥

विश्वाहा । इंद्रः । अधिऽवक्ता । नः । अस्तु । अपरिऽह्वृताः । सनुयाम । वाजं ।
तत् । नः । मित्रः । वरुणः । ममहंतां । अदितिः । सिंधुः । पृथिवी । उत । द्यौः ॥ ११ ॥

विश्वाहा सर्वकालं नोऽस्माकमिंद्रोऽधिवक्तास्तु । अधिवचनं पक्षपातेन वचनं । यथोक्तं । ब्राह्मणायाधि ब्रूयात् । तै० सं० २. ५. ११. ९. । इति । सर्वदास्माकमिंद्रः पक्षपातवचनयुक्तो भवतु । वयं चापरिह्वृता अकुटिलगतयः संतो वाजं हविर्लक्षणमन्नं सनुयाम । संभजामहे । यदनेन सूक्तेनास्माभिः प्रार्थितं तन्मित्रादयो ममहंतां । पूजितं कुर्वंतु ॥ विश्वाहा । विश्वान्यहानि विश्वाहानि । अत्यंतसंयोगे द्वितीया । शेश्छंदसि बहुलमिति शेर्लोपः । उपधादीर्घत्वं नलोपः । मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं । अपरिह्वृताः । ह्वृ कौटिल्ये । निष्ठायामपरिह्वृताश्च । पा० ७. २. ३२. । इति निपातनात् ह्वृभावाभावः । अव्ययपूर्वपदप्रकृतिस्वरत्वं । सनुयाम । षणु दाने । लिङि तनादित्वादुप्रत्ययः । वन षण संभक्तावित्यस्माद्वा व्यत्ययेनोप्रत्ययः ॥ ॥ ११ ॥

प्र मंदिन इत्येकादशर्चमष्टमं सूक्तमांगिरसस्य कुत्सस्यार्षं । अष्टम्याद्याश्चतस्रस्त्रिष्टुभः शिष्टाः सप्त जगत्यः । इंद्रो देवता । तथा चानुक्रांतं । प्र मंदिन एकादश कुत्स आद्या गर्भस्राविण्युपनिषच्चतुस्त्रिष्टुबंतमिति ॥ दशरात्रस्य नवमेऽहनि मरुत्वतीय एतत्सूक्तं । विश्वजित इति खंडे सूचितं । प्र मंदिन इमा उ त्वेति मरुत्वतीयं । आ० ८. ७. । इति ॥

प्र मंदिने पितुमदर्चता वचो यः कृष्णगर्भा निरहन्नृजिश्वना ।
अवस्यवो वृषणं वज्रदक्षिणं मरुत्वंतं सख्याय हवामहे ॥ १ ॥
प्र । मंदिने । पितुऽमत् । अर्चत । वचः । यः । कृष्णऽगर्भाः । निःऽअहन् । ऋजिश्वना ।
अवस्यवः । वृषणं । वज्रऽदक्षिणं । मरुत्वंतं । सख्याय । हवामहे ॥ १ ॥

हे ऋत्विजो मंदिने स्तुतिमते स्तोतव्यायेंद्राय पितुमद्धविर्लक्षणेनान्नेनोपेतं वचः स्तुतिलक्षणं वचनं प्रार्चत । प्रकर्षेणोच्चारयत । य इंद्र ऋजिश्वनैतत्संज्ञकेन राज्ञा सख्या सहितः सन् कृष्णगर्भाः । कृष्णो नाम कश्चिदसुरः । तेन निषिक्तगर्भास्तदीया भार्या निरहन् अवधीत् । कृष्णमसुरं हत्वा पुत्राणामप्यनुत्पत्त्यर्थं गर्भिणीस्तस्य भार्या अप्यवधीदित्यर्थः । अवस्यवो रक्षणेच्छवो वयं वृषणं कामानां वर्षितारं वज्रदक्षिणं वज्रयुक्तेन दक्षिणहस्तेनोपेतं तं मरुत्वंतमिंद्रं सख्याय सख्युः कर्मणे हवामहे । आह्वयामहे ॥ मंदिने । मदि स्तुतिमोदमदस्वप्नकांतिगतिषु । औणादिक इनिप्रत्ययः । तदुक्तं यास्केन । मंदी मंदतेः स्तुतिकर्मणः । नि० ४. २४. । इति । पितुमत् । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं । कृष्णगर्भाः । कृष्णेन निषिक्ता गर्भा यासु तास्तथोक्ताः । परादिश्छंदसि बहुलमिति पूर्वपदांतोदात्तत्वं । अवस्यवः । अवेरौणादिको भावेऽसुन् । अव इच्छत्यवस्यति । सुप आत्मनः क्यच् । क्याच्छंदसीत्युप्रत्ययः । वृषणं । वा षपूर्वस्य निगम इति विकल्पनादुपधादीर्घाभावः । सख्याय । सख्युः कर्म सख्यं । सख्युर्य इति यप्रत्ययः । हवामहे । ह्वेञो लटि बहुलं छंदसीति संप्रसारणं ॥

यो व्यंसं जाहृषाणेन मन्युना यः शंबरं यो अहन्पिप्रुमव्रतं ।
इंद्रो यः शुष्णमशुषं न्यावृणङ्मरुत्वंतं सख्याय हवामहे ॥ २ ॥
यः । विऽअंसं । जहृषाणेन । मन्युना । यः । शंबरं । यः । अहन् । पिप्रुं । अव्रतं ।
इंद्रः । यः । शुष्णं । अशुषं । नि । अवृणक् । मरुत्वंतं । सख्याय । हवामहे ॥ २ ॥

य इंद्रो जहृषाणेन प्रवृद्धेन मन्युना क्रोधेन व्यंसं विगतभुजं वृत्रमहन् अवधीत् । अपि च य इंद्रः शंबरमेतत्संज्ञमसुरं चावधीत् । तथाव्रतं व्रतस्य यागादेः कर्मणो विरोधिनं पिप्रुमेतत्संज्ञमसुरं च य इंद्रोऽवधीत् । किंच य इंद्रोऽशुषं शोषकरहितं शुष्णं सर्वस्य जगतः शोषकमेतत्संज्ञमसुरं न्यवृणक् न्यवर्जयत् । समूलं हतवानित्यर्थः । तं मरुत्वंतमिंद्रं सख्यायाह्वयामहे ॥ व्यंसं । विगतोंऽसो यस्मात् । बहुव्रीहौ पूर्वपदप्र-

प्रकृतिस्वरत्वं । यण उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं । जहृषाणेन । हृष तुष्टौ । अत्र वृद्ध्यर्थः । छंदसि लिट् । लिटः कानज्वेति तस्य कानजादेशः । अन्येषामपि दृश्यत इति संहितायामभ्यासस्य दीर्घत्वं । चित्त्वादंतोदात्तत्वं । अशुषं । शुष शोषणे । इगुपधलक्षणः कः । शुषाः शोषका न संत्यस्येत्यशुषः । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । अवृणक् । वृजी वर्जने । रौधादिकः ॥

यस्य द्यावापृथिवी पौंस्यं महद्यस्य व्रते वरुणो यस्य सूर्यः ।
यस्येंद्रस्य सिंधवः सश्चति व्रतं मरुत्वंतं सख्याय हवामहे ॥ ३ ॥
यस्य । द्यावापृथिवी इति । पौंस्यं । महत् । यस्य । व्रते । वरुणः । यस्य । सूर्यः ।
यस्य । इंद्रस्य । सिंधवः । सश्चति । व्रतं । मरुत्वंतं । सख्याय । हवामहे ॥ ३ ॥

यस्येंद्रस्य महद्विपुलं पौंस्यं बलं द्यावापृथिवी द्यावापृथिव्यावनुवर्तेते । यस्य चेंद्रस्य व्रते नियमरूपे कर्मणि वरुणो वर्तते । वरुणोऽपींद्रस्य नियमनं नातिक्रामतीत्यर्थः । अपि च सूर्योऽपि यस्येंद्रस्य व्रते वर्तते । तथा यस्येंद्रस्य व्रतं कर्म सिंधवो नद्यः सश्चति । वचनव्यत्ययः । गच्छंति । सश्चतिर्गच्छतिकर्मा । इंद्रेणानुशिष्टाः प्रवहंतीत्यर्थः । तं मरुत्वंतमिंद्रं सख्यायाह्वयामहे ॥ द्यावापृथिवी । द्यौश्च पृथिवी च द्यावापृथिव्यौ । दिवो द्यावेति द्यावादेशः । स चाद्युदात्तो निपातितः । पृथिवीशब्दो ङीष्प्रत्ययांतोऽंतोदात्तः । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं । वा छंदसीति पूर्वसवर्णदीर्घः ॥

यो अश्वानां यो गवां गोपतिर्वशी य आरितः कर्मणिकर्मणि स्थिरः ।
वीळोश्चिदिंद्रो यो असुन्वतो वधो मरुत्वंतं सख्याय हवामहे ॥ ४ ॥
यः । अश्वानां । यः । गवां । गोऽपतिः । वशी । यः । आरितः । कर्मणिऽकर्मणि । स्थिरः ।
वीळोः । चित् । इंद्रः । यः । असुन्वतः । वधः । मरुत्वंतं । सख्याय । हवामहे ॥ ४ ॥

य इंद्रोऽश्वानां पतिरधिपतिः । तथा य इंद्रो गोपतिः । न केवलमेकस्या गोः किंतु सर्वासामित्याह गवामिति । सर्वासां गवामधिपतिर्भवति । वशी अपराधीनः । स्वतंत्र इत्यर्थः । अपि च य इंद्रः कर्मणि कर्मणि सर्वेषु कर्मसु स्थिरो नैश्चल्येनावतिष्ठमान आरितः स्तुतिभिः प्रत्यृतः प्राप्तो भवति । आरितः प्रत्यृतः स्तोमानिति निरुक्तं । नि० ५. १५. । यश्चेंद्रोऽसुन्वतः सुन्वतां यागानुष्ठातॄणां विरोधिनो वीळोश्चित् दृढस्यापि शत्रोर्वधो हंता तं मरुत्वंतमिंद्रं सख्यायाह्वयामहे ॥ गवां । न गोश्वन्साववर्णेति विभक्त्युदात्तत्वस्य प्रतिषेधः । गोपतिः । पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वं । आरितः । ऋ गतौ । अस्माण्यंतान्निष्ठा । आगमानुशासनस्यानित्यत्वात्पुगभावः । यद्वा । सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतीनां । पा० ३. १. २२. ३. । इति विहितस्य यङो यङोऽचि चेत्यत्र चशब्देन बहुलग्रहणानुकर्षणादनैमित्तिके लुकि प्रत्ययलक्षणेन सन्यङोरिति ऋ इत्येतस्य द्विर्वचन [illegible]ोः सतो रुग्रिकौ च लुकीति रुक् । ततो निष्ठायां छांदस इडागमः । ऋकारस्य यणादेशः । रो रीत्यभ्यासरेफलोपः । ढ्रलोपे पूर्वस्य दीर्घोऽण इति दीर्घत्वं । वधः । कृत्यल्युटो बहुलमिति बहुलवचनात् हनस्य वध इति कर्तर्यप् वधादेशश्च । स चादंतः । अतो लोप उदात्तनिवृत्तिस्वरेण प्रत्ययस्योदात्तत्वं ॥

यो विश्वस्य जगतः प्राणतस्पतिर्यो ब्रह्मणे प्रथमो गा अविंदत् ।
इंद्रो यो दस्यूँरधराँ अवातिरन्मरुत्वंतं सख्याय हवामहे ॥ ५ ॥
यः । विश्वस्य । जगतः । प्राणतः । पतिः । यः । ब्रह्मणे । प्रथमः । गाः । अविंदत् ।
इंद्रः । यः । दस्यून् । अधरान् । अवऽअतिरत् । मरुत्वंतं । सख्याय । हवामहे ॥ ५ ॥

य इंद्रो विश्वस्य जगतो गच्छतः प्राणतः प्रश्वसतः प्राणिजातस्य पतिः स्वामी यश्च ब्रह्मणे ब्राह्मणजातिभ्योऽंगिरोभ्यः प्रथमोऽन्येभ्यो देवेभ्यः पूर्वभावी सन् पणिभिरपहृता गा अविंदत् अलभत। अन्येभ्यो देवेभ्यः पूर्वमेव तैरसुरैर्युद्ध्वा गाः स्वयमलभतेत्यर्थः। अपि च य इंद्रो दस्यूनुपक्षपयितॄनसुरानधरान्निकृष्टान्कृत्वावातिरत् अवधीत्। अवतिरतिर्वधकर्मा। तं मरुत्वंतमिंद्रं सख्यायाह्वयामहे॥ जगतः। गम्लृ सृप्लृ गतौ। वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च। उ॰ २. ८४.। इत्यतिप्रत्ययांतो निपातितो जगच्छब्द आद्युदात्तः। प्राणतः। श्वस प्राणने अन च। अस्माल्लटः शतृ। अदादित्वाच्छपो लुक्। शतुरनुम इति विभक्तेरुदात्तत्वं। षष्ठ्याः पतिपुत्रेति विसर्जनीयस्य सत्वं॥

यः शूरे॑भि॒र्हव्यो॒ यश्च॑ भी॒रुभि॒र्यो धाव॑द्भि॒र्हूयते॒ यश्च॒ जिग्यु॑भिः।
इंद्रं॒ यं विश्वा॒ भुव॑ना॒भि सं॒दधु॑र्म॒रुत्वं॑तं स॒ख्याय॑ हवामहे॥ ६॥
यः। शूरे॑भिः। हव्यः॑। यः। च॒। भी॒रुऽभिः॑। यः। धाव॑त्ऽभिः। हू॒यते॑। यः। च॒। जि॒ग्युऽभिः॑।
इंद्रं॑। यं। विश्वा॑। भुव॑ना। अ॒भि। सं॒ऽद॒धुः। म॒रुत्वं॑तं। स॒ख्याय॑। ह॒वा॒म॒हे॒॥ ६॥

य इंद्रः शूरेभिः शौर्योपेतैः पुरुषैर्हव्यो योद्धुमाह्वातव्यः। यश्च भीरुभिर्भयशीलैः कातरैः पुरुषैः सहायार्थमाह्वातव्यः। अपि च य इंद्रो धावद्भिः पराजयेन पलायमानैर्हूयते रक्षार्थमाहूयते। यश्च जिग्युभिः प्राप्तजयैराहूयते। यं चेंद्रं विश्वा भुवना सर्वाणि भूतजातानि स्वेषु स्वेषु कार्येष्वभि संदधुः आभिमुख्येन स्थापयंति। तं मरुत्वंतमिंद्रं सख्यायाह्वयामहे॥ शूरेभिः। बहुलं छंदसीति भिस ऐसभावः। हव्यः। ह्वयतेरचो यदिति यत्। ह्व इत्यनुवृत्तौ बहुलं छंदसीति संप्रसारणं। गुणे धातोस्तन्निमित्तस्यैवेत्यवादेशः। भीरुभिः। भियः क्रुक्लुकनौ। उ॰ २. ३१.। इति क्रुप्रत्ययः। धावद्भिः। सृ गतौ। सर्तेर्वेगितायां शपि पाघ्रेत्यादिना धावादेशः। शपः पित्त्वादनुदात्तत्वं। शतुश्च लसार्वधातुकस्वरेण धातुस्वरः शिष्यते। जिग्युभिः। जि जये। लिटः क्वसुः। द्विर्वचने सन्लिटोर्जेरित्यभ्यासादुत्तरस्य जकारस्य कुत्वं। भिस्ययस्मयादित्वेन भत्वाद्वसोः संप्रसारणमिति संप्रसारणं। छांदसोऽत्यलोपः॥ ॥ १२॥

रु॒द्राणा॑मेति प्र॒दिशा॑ विचक्ष॒णो रु॒द्रेभि॒र्योषा॑ तनुते पृ॒थु ज्रयः॑।
इंद्रं॑ मनी॒षा अ॒भ्य॑र्चति श्रु॒तं म॒रुत्वं॑तं स॒ख्याय॑ हवामहे॥ ७॥
रु॒द्राणां॑। ए॒ति॒। प्र॒ऽदिशा॑। वि॒ऽच॒क्ष॒णः। रु॒द्रेभिः॑। योषा॑। त॒नु॒ते॒। पृ॒थु। ज्रयः॑।
इंद्रं॑। म॒नी॒षा। अ॒भि। अ॒र्च॒ति॒। श्रु॒तं। म॒रुत्वं॑तं। स॒ख्याय॑। ह॒वा॒म॒हे॒॥ ७॥

विचक्षणः सूर्यात्मना प्रकाशमान इंद्रो रुद्राणां रुद्रपुत्राणामध्यात्मं प्राणरूपेण वर्तमानानां मरुतां। यद्वा। रोदयितॄणां प्राणानां। प्राणा हि शरीरान्निर्गताः संतो बंधुजनान्रोदयंति। प्रदिशा प्रदेशनेन मनुष्येभ्यः प्रदानेन सहैति। अंतरिक्षे गच्छति। तथा चाम्नायते। योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति। तै॰ आ॰ १. १४. १.। इति। अपि च रुद्रेभिरधिभूतं वर्तमानै रुद्रपुत्रैर्मरुद्भिर्योषा माध्यमिका वाक् पृथु विस्तीर्णं ज्रयो वेगं तनुते। विस्तारयति। प्रसंगाच्च मरुतां स्तुतिः। तैर्मरुद्भिः सह वर्तमानं श्रुतं प्रख्यातं सूर्यात्मानमिंद्रं मनीषा स्तुतिलक्षणा वाक् अभ्यर्चति। आभिमुख्येन स्तौति। तं मरुत्वंतमिंद्रं सख्यायाह्वयामहे॥ प्रदिशा। दिश अतिसर्जने। संपदादिलक्षणो भावे क्विप्। ज्रयः। जि ज्रि अभिभवे। ज्रीयते ऽभिभूयतेऽनेनेति ज्रयो वेगः। करणेऽसुन्। मनीषा। ईषाअक्षादित्वात्प्रकृतिभावः॥

यद्वा॑ मरुत्वः पर॒मे स॒धस्थे॒ यद्वा॑व॒मे वृ॒जने॑ मा॒दया॑से।
अत॒ आ या॑ह्यध्व॒रं नो॒ अच्छा॑ त्वा॒या ह॒विश्च॑कृमा सत्यराधः॥ ८॥

यत्। वा। मरुत्वः। परमे। सधऽस्थे। यत्। वा। अवमे। वृजने। मादयासे।
अतः। आ। याहि। अध्वरं। नः। अच्छ। त्वाऽया। हविः। चकृम। सत्यऽराधः॥८॥

हे मरुत्वो मरुद्भिर्युक्तेंद्र परम उत्कृष्टे सधस्थे सहस्थाने गृहे यद्वा यदि वा मादयासे तृप्तो वर्तसे। यद्वा यदि वावमेऽर्वाचीने वृजने। वृज्यते रिक्तीक्रियतेऽस्मिन्धनमिति वृजनं गृहं। तस्मिन्मादयासे। अतोऽस्मादुभयविधात्स्थानान्नोऽस्माकमध्वरं यज्ञमच्छाभिमुख्येना याहि। आगच्छ। हे सत्यराधः सत्यधन त्वाया त्वत्कामनया वयं हविश्चकृम। कृतवंतः॥ मरुत्वः। मतुवसो रुरिति संबुद्धौ नकारस्य रुत्वं। सधस्थे। सुपि स्थ इति कप्रत्ययः। सध मादस्थयोश्छंदसीति सहस्य सधादेशः। मादयासे। मद तृप्तियोगे। चुरादिरात्मनेपदी। लेट्याडागमः। त्वाया। त्वामात्मन इच्छति। सुप आत्मनः क्यच्। प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य त्वादेशः। व्यत्ययेन दकारस्यात्वं। अ प्रत्ययादित्यकारप्रत्ययः। सुपां सुलुगिति तृतीयाया लुक्॥

त्वायेंद्र सोमं सुषुमा सुदक्ष त्वाया हविश्चकृमा ब्रह्मवाहः।
अधा नियुत्वः सगणो मरुद्भिरस्मिन्यज्ञे बर्हिषि मादयस्व॥९॥
त्वाऽया। इंद्र। सोमं। सुसुम। सुऽदक्ष। त्वाऽया। हविः। चकृम। ब्रह्मऽवाहः।
अध। नियुत्वः। सऽगणः। मरुत्ऽभिः। अस्मिन्। यज्ञे। बर्हिषि। मादयस्व॥९॥

हे सुदक्ष शोभनबलेंद्र त्वाया त्वत्कामनया सोमं सुषुम। अभिषुतवंतो वयं। हे ब्रह्मवाहो ब्रह्मणा मंत्ररूपेण स्तोत्रेणोह्यमान प्राप्यमाणेंद्र त्वाया त्वत्कामनयाहवनीये पुरोडाशलक्षणं हविश्चकृम। कृतवंतः। हे नियुत्वः। नियुतोऽश्वाः। तद्वन्निंद्र अधानंतरं मरुद्भिः सप्तगणरूपैरेतत्संज्ञैर्देवैः सगणो गणसहितः सन्नस्मिन्वर्तमाने यज्ञे बर्हिष्यास्तीर्णे दर्भे उपविश्य मादयस्व। तृप्तो भव॥ सुषुम। षुञ् अभिषवे। लिटि क्रादिनियमप्राप्तस्येटोऽनित्यमागमशासनमिति वचनादभावः॥

मादयस्व हरिभिर्ये त इंद्र वि ष्यस्व शिप्रे वि सृजस्व धेने।
आ त्वा सुशिप्र हरयो वहंतूशन्हव्यानि प्रति नो जुषस्व॥१०॥
मादयस्व। हरिऽभिः। ये। ते। इंद्र। वि। स्यस्व। शिप्रे इति। वि। सृजस्व। धेने इति।
आ। त्वा। सुऽशिप्र। हरयः। वहंतु। उशन्। हव्यानि। प्रति। नः। जुषस्व॥१०॥

हे इंद्र हरिभिरश्वैः सह मादयस्व। तृप्तो भव। ये ते तव स्वभूतास्तदर्थं शिप्रे हनू संहते वि ष्यस्व। सोमपानार्थं विवृते कुरु। तथा धेने पानसाधनभूते जिह्वोपजिह्विके वि सृजस्व। सोमपानार्थं विश्लिष्टे कुरु। हे सुशिप्र। शिप्रे हनू नासिके वा। शोभनशिप्रेंद्र त्वा त्वां हरयोऽश्वा आ वहंतु। अस्मदीयं यज्ञं प्रापयंतु। त्वं चोशन् अस्मान्कामयमानो नोऽस्माकं हव्यानि हवींषि प्रति जुषस्व। प्रत्येकं सेवस्व। मोदासिष्ठाः॥ वि ष्यस्व। षो अंतकर्मणि। व्यत्ययेनात्मनेपदं। दिवादित्वात् श्यन्। ओतः श्यनि। पा॰ ७.३.७१.। इत्योकारलोपः। उपसर्गात्सुनोतीति षत्वं॥

मरुत्स्तोत्रस्य वृजनस्य गोपा वयमिंद्रेण सनुयाम वाजं।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः॥११॥
मरुत्ऽस्तोत्रस्य। वृजनस्य। गोपाः। वयं। इंद्रेण। सनुयाम। वाजं।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः॥११॥

मरुत्स्तोत्रस्य। मरुद्भिः सह स्तोत्रं यस्य स मरुत्स्तोत्रः। तस्य वृजनस्य शत्रूणां छेत्तुरिंद्रस्य संबंधिनो गोपा गोपायनीया रक्षणीया वयं तेनेंद्रेण वाजमन्नं सनुयाम। लभेमहि। यदेतदस्माभिः प्रार्थितं नोऽस्मदीयं तन्मित्रादयो द्यावापृथिव्यौ च ममहंतां। पूजितं कुर्वंतु ॥ वृजनस्य। वृजी वर्जने। कॄपॄवृजिमंदिनिधाञ्भ्यः क्युरिति क्युप्रत्ययः ॥ ॥१३॥

इमां त इत्येकादशर्चं नवमं सूक्तं कुत्सस्यार्षमैंद्रं। अंत्या त्रिष्टुप् शिष्टा दश जगत्यः। तथा चानुक्रांतं। इमां तेऽंत्या त्रिष्टुबिति ॥ विनियोगो लैंगिकः ॥

इमां ते धियं प्र भरे महो महीमस्य स्तोत्रे धिषणा यत्त आनजे।
तमुत्सवे च प्रसवे च सासहिमिंद्रं देवासः शवसामदन्ननु ॥१॥
इमां। ते। धियं। प्र। भरे। महः। महीं। अस्य। स्तोत्रे। धिषणा। यत्। ते। आनजे।
तं। उत्ऽसवे। च। प्रऽसवे। च। ससहिं। इंद्रं। देवासः। शवसा। अमदन्। अनु ॥१॥

हे इंद्र महो महतस्ते तवेमामिदानीं क्रियमाणां महीं महतीं अत्यंतोत्कृष्टां धियं स्तुतिं प्र भरे। प्रकर्षेण संपादयामि। ते तव धिषणा त्वदीया बुद्धिरस्य मम स्तोतुः स्तोत्रे स्तुतौ यद्यस्मादानजे अक्ता संश्लिष्टासीत्। तस्मात्तव प्रियां स्तुतिं करोमीत्यर्थः। उत्तरोऽर्धर्चः परोक्षकृतः। ससहिं शत्रूणामभिभवितारं पूर्वोक्तं तमिंद्रं देवासः कर्मसु दीव्यंत ऋत्विजः शवसा स्तुतिभिः कीर्तनबलेनान्वमदन्। अनुक्रमेण हर्षं प्रापयन्। किमर्थं। उत्सवे चोत्सवार्थमभिवृद्ध्यर्थं प्रसवे च धनानां वृष्ट्युदकानां वोत्पत्त्यर्थं च ॥ आनजे। अन्जू व्यक्तिम्रक्षणगतिषु। अस्मात्कर्मणि लिट्। द्विर्वचनहलादिशेषौ। अत आदेरित्यभ्यासस्यात्वं। तस्मान्नुड्द्विहलः। पा॰ ७. ४. ७१. इति नुट्। व्यत्ययेनोपधानकारलोपः। उत्सवे। प्रसवे। षू प्रेरणे। ऋदोरबिति भावेऽप्। निमित्तात्कर्मसंयोगे। पा॰ २. ३. ३६. ६.। इति सप्तमी। थाथादिनोत्तरपदांतोदात्तत्वं। ससहिं। षह अभिभवे। आदृगमहन इत्यत्रोत्सर्गश्छंदसीति वचनात्किप्रत्ययः। लिड्वद्भावाद्द्विर्वचनं। अन्येषामपि दृश्यत इति संहितायामभ्यासस्य दीर्घत्वं। अमदन्। मदी हर्षे। हेतुमति णिच्। मदी हर्षग्लपनयोरिति घटादिषु पाठान्मितां ह्रस्व इति ह्रस्वत्वं। छंदस्युभयथेति शप आर्धधातुकत्वाण्णेरनिटीति णिलोपः ॥

अस्य श्रवो नद्यः सप्त बिभ्रति द्यावाक्षामा पृथिवी दर्शतं वपुः।
अस्मे सूर्याचंद्रमसाभिचक्षे श्रद्धे कमिंद्र चरतो वितर्तुरं ॥२॥
अस्य। श्रवः। नद्यः। सप्त। बिभ्रति। द्यावाक्षामा। पृथिवी। दर्शतं। वपुः।
अस्मे इति। सूर्याचंद्रमसा। अभिऽचक्षे। श्रद्धे। कं। इंद्र। चरतः। विऽतर्तुरं ॥२॥

अस्येंद्रस्य श्रवो यशः कीर्तिं सप्त इमं मे गंग इत्यस्यामृचि प्राधान्येन प्रतिपादिता गंगाद्याः सप्तसंख्याका नद्यो बिभ्रति। धारयंति। वृत्रहननेनेंद्रस्य यद्वृष्टेः प्रदातृत्वं तत्प्रभूतजलोपेता नद्यः प्रकटयंतीत्यर्थः। अपि च द्यावाक्षामा द्यावापृथिव्यौ। पृथिवीत्यंतरिक्षनाम। अंतरिक्षं चास्य सूर्यात्मना वर्तमानस्येंद्रस्य दर्शतं सर्वैः प्राणिभिर्दर्शनीयं वपुः। रूपनामैतत्। प्रकाशात्मकं रूपं धारयंति। किंच हे इंद्र अस्मे अस्माकमभिचक्षे द्रष्टव्यानां पदार्थानामाभिमुख्येन प्रकाशनार्थं श्रद्धे कं श्रद्धार्थं। चक्षुषा दृष्टे हि वस्तुनीदं सत्यमिति श्रद्धोत्पद्यते। कमित्येतत्पादपूरणं। तदुभयार्थं सूर्याचंद्रमसौ वितर्तुरं परस्परव्यतिहारेण तरणं पुनःपुनर्गमनं यथा भवति तथा चरतः। वर्तेते। त्वमेव तद्रूपः सन्वर्तस इत्यर्थः ॥ अस्य। ऊडिदमिति विभक्तेरुदात्तत्वं। द्यावाक्षामा। द्यौश्च क्षामा च। दिवो द्यावेति द्यावादेशः। सुपां सुलुगिति विभक्तेर्डादेशः। देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं। दर्शतं। भृमृदृशीत्यादिनातच्। सूर्याचंद्रमसा। सूर्यश्च चंद्रमाश्च। देवताद्वंद्वे चेति पूर्वपदस्यानङादेशः। सुपां सुलुगिति विभक्तेराकारः। चंद्रमःशब्दो दासीभारादित्वात्पूर्वपदप्रकृतिस्वरेण मध्योदात्तः। अतो देवताद्वंद्वे चेति प्राप्तस्योभयपदप्रकृतिस्वरस्य नोत्तरपदेऽनुदात्तादावपृथिवीति प्रतिषेधः। अभिचक्षे।

चक्षेः प्रकाशनार्थात्संपदादिलक्षणो भावे क्विप्। तादर्थ्ये चतुर्थी। श्रद्धे। दृशिग्रहणाद्धातेर्भावे विच्। चतुर्थ्येकवचन आतो धातोरित्याकारलोपः। उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्तत्वं। वितर्तुरं। तरतेर्यङ्लुगंताद्दौणादिकः कुरच्। बहुलं छंदसीत्युत्वं ॥

तं स्मा रथं मघवन्प्राव सातये जैत्रं यं ते अनुमदाम संगमे।
आजा न इंद्र मनसा पुरुष्टुत त्वायद्भ्यो मघवञ्छर्म यच्छ नः ॥३॥
तं। स्म। रथं। मघऽवन्। प्र। अव। सातये। जैत्रं। यं। ते। अनुऽमदाम। संऽगमे।
आजा। नः। इंद्र। मनसा। पुरुऽस्तुत। त्वायत्ऽभ्यः। मघऽवन्। शर्म। यच्छ। नः ॥३॥

हे मघवन् धनवन्निंद्र सातयेऽस्माकं धनलाभाय तं स्म तमेव रथं प्राव। प्रेरय। वर्तय। नोऽस्माकं मनसा बुद्ध्या पुरुष्टुत बहुशः स्तुतेंद्र ते तव स्वभूतं जैत्रं जयशीलं यं रथं संगमे शत्रुभिः सह संगमन आजा युद्धे सत्यनुमदाम वयमनुक्रमेण स्तुमः। अपि च हे मघवन् त्वायद्भ्यस्त्वां कामयमानेभ्यो नोऽस्मभ्यं शर्म सुखं यच्छ। देहि ॥ अव। अव रक्षणगतिकांतीत्युक्तत्वादवतिरत्र गत्यर्थः। संगमे। ग्रहवृदृनिश्चिगमश्चेति कर्मण्यप्। थाथादिनोत्तरपदांतोदात्तत्वं। आजा। सुपां सुलुगिति सप्तम्या डादेशः। त्वायद्भ्यः। सुप आत्मनः क्यच्। प्रत्ययोत्तरपदयोश्चेति मपर्यंतस्य त्वादेशः। व्यत्ययेन इकारस्यात्वं। क्यजंताल्लटः शतृ। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे सति क्यचा सहैकादेश एकादेश उदात्तेनेति तस्योदात्तत्वं ॥

वयं जयेम त्वया युजा वृतमस्माकमंशमुदवा भरेभरे।
अस्मभ्यमिंद्र वरिवः सुगं कृधि प्र शत्रूणां मघवन्वृष्ण्या रुज ॥४॥
वयं। जयेम। त्वया। युजा। वृतं। अस्माकं। अंशं। उत्। अव। भरेऽभरे।
अस्मभ्यं। इंद्र। वरिवः। सुऽगं। कृधि। प्र। शत्रूणां। मघऽवन्। वृष्ण्या। रुज ॥४॥

हे इंद्र युजास्माभिर्युक्तेन सहायभूतेन त्वया वृतमावृण्वंतं शत्रुं वयं स्तोतारो जयेम। अभिभवेम। अपि च भरे भरे संग्रामे संग्रामेऽस्माकमंशमस्मदीयं भागमुदव। शत्रुकृतपीडापरिहारेणोत्कृष्टं रक्ष। तथा हे इंद्र वरिवो धनमस्मभ्यं सुगं सुगमं सुप्रापं कृधि। कुरु। तथा हे मघवन् शत्रूणामस्मदुपद्रवकारिणां वृष्ण्या वृष्ण्यानि वीर्याणि प्र रुज। प्रभंग्धि। बाधस्वेत्यर्थः ॥ वृतं। वृञ् वरणे। क्विब्वेति क्विप्। तुगागमः। सुगं। सुदुरोरधिकरण इति गमेर्डप्रत्ययः। कृधि। श्रुशृणुपृकृवृभ्य इति हेर्धिः। रुज। रुजो भंगे। तौदादिकः ॥

नाना हि त्वा हवमाना जना इमे धनानां धर्तरवसा विपन्यवः।
अस्माकं स्मा रथमा तिष्ठ सातये जैत्रं हींद्र निभृतं मनस्तव ॥५॥
नाना। हि। त्वा। हवमानाः। जनाः। इमे। धनानां। धर्तः। अवसा। विपन्यवः।
अस्माकं। स्म। रथं। आ। तिष्ठ। सातये। जैत्रं। हि। इंद्र। निऽभृतं। मनः। तव ॥५॥

हे धनानां धर्तर्गोहिरण्यादिरूपाणां द्रव्याणां धारयितरिंद्र विपन्यवः। स्तोतृनामैतत्। स्तोतार इमे जना अवसा रक्षणेन हेतुना त्वा हवमानास्त्वामाह्वयंतो नाना हि। विभिन्नाः खलु। तेषां मध्येऽस्माकं स्मास्माकमेव सातये धनदानाय रथमा तिष्ठ। आरोह। हे इंद्र निभृतमव्याकुलं तव मनश्चित्तं जैत्रं हि। जयशीलं खलु। शत्रूञ्जित्वास्मभ्यं धनं दातुं स[illegible]ः ॥ सातये। षणु दाने। क्तिनि जनसनखनां सञ्झलोरित्यात्वं ॥ ॥१४॥

गोजिता बाहू अमितक्रतुः सिमः कर्मन्कर्मञ्छतमूतिः खजंकरः ।
अकल्प इंद्रः प्रतिमानमोजसाथा जना वि ह्वयंते सिषासवः ॥ ६ ॥
गोऽजिता । बाहू इति । अमितऽक्रतुः । सिमः । कर्मन्ऽकर्मन् । शतंऽऊतिः । खजंऽकरः ।
अकल्पः । इंद्रः । प्रतिऽमानं । ओजसा । अथ । जनाः । वि । ह्वयंते । सिसासवः ॥ ६ ॥

हे इंद्र तव बाहू हस्तौ गोजिता जयेन गवां लंभयितारौ। त्वं चामितक्रतुरपरिच्छिन्नप्रज्ञानः सिमः श्रेष्ठः। तथा च शाट्यायनकं। सिम इति वै श्रेष्ठमाचक्षत इति। यद्वा। सिमः शत्रूणां बंधकः। कर्मन्कर्मन् स्तोतॄणां कर्मणि कर्मण्युपस्थिते शतमूतिर्बहुविधरक्षणोपेतः खजंकरः। खजति मथ्नाति पुरुषानिति खजः संग्रामः। तस्य कर्ता। अकल्पः कल्पेनान्येन रहितः। स्वतंत्र इत्यर्थः। ओजसा सर्वेषां प्राणिनां यदोजो बलमस्ति तेन सर्वेण प्रतिमानं प्रतिनिधित्वेन मीयमानः। यस्मादेवंगुणविशिष्ट इंद्रोऽथातः कारणात्सिषासवो धनं लब्धुकामा जना वि ह्वयंते। विविधमाह्वयंति ॥ गोजिता। गा जयत इति गोजितौ। सुपां सुलुगिति विभक्तेराकारः। सिमः। षिञ् बंधने। अस्मादौणादिको मक्। खजंकरः। खज मंथे। पचाद्यच्। क्षेमप्रियमद्रेऽण् च। पा॰ ३. २. ४४.। इति चशब्दस्यानुक्तसमुच्चयार्थत्वात् खजशब्दोपपदादपि करोतेः खच। अरुर्द्विषदजंतस्येति मुम्। कृदु-त्तरपदप्रकृतिस्वरत्वं। अकल्पः। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। सिषासवः। वन षण संभक्तौ। सनि ससनी-वंतर्धेति विकल्पनादिडभावः। जनसनखनां सञ्झलोरित्यात्वं। द्विर्वचनादि। सनाशंसभिक्ष उः। पा॰ ३. २. १६८.। इत्युप्रत्ययः। सति शिष्टत्वात्तस्यैव स्वरः शिष्यते ॥

उत्ते शतान्मघवन्नुच्च भूयस उत्सहस्राद्रिरिचे कृष्टिषु श्रवः ।
अमात्रं त्वा धिषणा तित्विषे मह्यधा वृत्राणि जिघ्नसे पुरंदर ॥ ७ ॥
उत् । ते । शतात् । मघऽवन् । उत् । च । भूयसः । उत् । सहस्रात् । रिरिचे । कृष्टिषु । श्रवः ।
अमात्रं । त्वा । धिषणा । तित्विषे । मही । अध । वृत्राणि । जिघ्नसे । पुरंऽदर ॥ ७ ॥

हे मघवन् धनवन्निंद्र कृष्टिषु स्तोतृषु मनुष्येषु त्वया दीयमानं श्रवो यदन्नमस्ति तच्छतात् शतसंख्याकादन्नादुद्रिरिचे। उद्रिक्तमधिकं भवति। अपि च भूयसः शतसंख्याकादपि बहुतरादन्नादुद्रिरिचे। अधिकं भवति। किं बहुना। सहस्रात्सहस्रसंख्याकादप्युद्रिरिचे। त्वया दत्तं तदन्नमक्षयमित्यर्थः। अपि चामात्रं मात्रयेयत्तया रहितं परिगणितुमशक्यैः सर्वैर्गुणैरधिकं त्वां मही महती धिषणास्मदीया स्तुतिलक्षणा वाक् तित्विषे। दीपयति। त्वत्संबंधिनो गुणान्प्रकाशयति। हे पुरंदर शत्रूणां पुरां दारयितरिंद्र अध स्तुत्यनंतरं वृत्राण्यावरकान् शत्रूञ्जिघ्नसे। हंसि। विनाशयसि ॥ रिरिचे। रिचिर् विरेचने। कर्मणि लिट्। तित्विषे। त्विष दीप्तौ। जिघ्नसे। हंतेर्लेटि व्यत्ययेनात्मनेपदं। लेटोऽडाटावित्यडागमः। बहुलं छंदसीति शपः श्लुः। गमहनेत्यादिनोपधालोपः। स्थानिवद्भावाद्द्विर्वचनादि। बहुलं छंदसीत्यभ्यासस्येत्वं। पुरंदर। पूःसर्वयोर्दारिसहोः। पा॰ ३. २. ४१.। इति खच्। खचि ह्रस्वः। पा॰ ६. ४. ९४.। इति ह्रस्वत्वं। वाचंयमपुरंदरौ च। पा॰ ६. ३. ६९.। इति निपातनादम् ॥

त्रिविष्टिधातु प्रतिमानमोजसस्तिस्रो भूमीर्नृपते त्रीणि रोचना ।
अतीदं विश्वं भुवनं ववक्षिथाशत्रुरिंद्र जनुषा सनादसि ॥ ८ ॥
त्रिविष्टिऽधातु । प्रतिऽमानं । ओजसः । तिस्रः । भूमीः । नृऽपते । त्रीणि । रोचना ।
अति । इदं । विश्वं । भुवनं । ववक्षिथ । अशत्रुः । इंद्र । जनुषा । सनात् । असि ॥ ८ ॥

हे नृपते नृणां पालयितरिंद्र त्वमोजसः सर्वेषां प्राणिनां बलस्य प्रतिमानं प्रतिनिधिरसि। कीदृशं प्रति-

मानं । त्रिविष्टिधातु । धातुशब्दो रज्जुभागवचनः । यथा त्रिधातु पंचधातु वा शुल्बं करोतीति । यथा त्रिविष्टिस्त्रिगुणिता रज्जुर्द्रढीयसी एवमिंद्रोऽपि दृढतर इत्यर्थः । किंच त्वं तिस्रो भूमीस्त्रीन् लोकान् त्रीणि रोचना त्रीणि तेजांसि दिव्यादित्याख्यमंतरिक्षे वैद्युतरूपमग्निं पृथिव्यामाहवनीयादिरूपेण वर्तमानं पार्थिवमग्निं एवं त्रीन् लोकान् त्रीणि तेजांसि चाति ववक्षिथ । अतिशयेन वोढुमिच्छसि । अपि चेदं विश्वं सर्वं भुवनं भूतजातं चातिवोढुमिच्छसि । सर्वस्य जगतः पालनेन त्वमेव सर्वेषां निर्वाहको भवसीत्यर्थः । यस्माद्धे इंद्र त्वं सनाच्चिरकालादारभ्य जनुषा जन्मना जन्मप्रभृत्यशत्रुः सपत्नरहितोऽसि ॥ त्रिविष्टिधातु । त्रिधा त्रिप्रकारेण विष्या प्रवेशनेन विधीयते क्रियत इति त्रिविष्टिधातुस्त्रिगुणिता रज्जुः । विशेर्भावे क्तिन् । धाञः सितनिगममिमसीत्यादिना । उ० १. ७०. । कर्मणि तुन्प्रत्ययः । बहुव्रीहावुत्तरपदप्रकृतिस्वरत्वं । अत्र दृढरज्जुवाचकः शब्दस्तद्गतं दार्ढ्यं लक्षयित्वा तद्वति प्रतिमाने वर्तते । यथा माणवकेऽग्निशब्दः । तिस्रः । शसि त्रिचतुरोः स्त्रियामिति तिस्रादेशोऽंतोदात्तः । अचि र ऋत इति रेफादेश उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं । ववक्षिथ । वह प्रापणे इत्यस्मादिच्छासनि ढत्वकत्वषत्वानि । सन्यत इतीत्वाभावश्छांदसः । छांदसे लिट्यमंत्र इति निषेधादाम्प्रत्ययाभावः । जनुषा । जनेरुसिः ॥

त्वां दे॒वेषु॑ प्रथ॒मं ह॑वामहे॒ त्वं ब॑भूथ॒ पृत॑नासु सास॒हिः ।
सेमं नः॑ का॒रुमु॑पमन्यु॒मु॒द्भिद॒मिंद्रः॑ कृणोतु प्रस॒वे रथं॑ पु॒रः ॥ ९ ॥
त्वां । दे॒वेषु॑ । प्र॒थ॒मं । ह॒वा॒म॒हे॒ । त्वं । ब॒भू॒थ॒ । पृत॑नासु । स॒स॒हिः ।
सः । इ॒मं । न॒ः । का॒रुं । उ॒प॒ऽम॒न्युं । उ॒त्ऽभिदं॑ । इंद्रः॑ । कृ॒णो॒तु॒ । प्र॒ऽस॒वे । रथं॑ । पु॒रः ॥ ९ ॥

हे इंद्र देवेषु प्रथमं श्रेष्ठं त्वां हवामहे । यागार्थमाह्वयामहे । तथा त्वं पृतनासु संग्रामेषु ससहिर्बभूथ । शत्रूणामभिभवितासि । उत्तरार्धः परोक्षकृतः । स इंद्रो नोऽस्माकं कारुं स्तुतीनां कर्तारमुपमन्युमुपमंतारं सर्वज्ञमुद्भिदं शत्रूणामुद्भेत्तारमिममेवंगुणविशिष्टं पुत्रं कृणोतु । करोतु । अपि च प्रसवे युद्धोत्पत्तावस्मदीयं रथं पुरोऽन्येभ्यो रथिभ्यः पुरतो वर्तमानं करोतु । यद्वा । कारुमित्यादीनि रथविशेषणानि । कारुं युद्धस्य कर्तारमुपमन्युमुपगतेन प्राप्तेन मन्युना क्रोधेन युक्तमुद्भिदं मार्गेऽवस्थितानां वृक्षादीनामुद्भेत्तारमतिशयेन भंक्तारं ॥ बभूथ । बभूथाततंथ जगृभ्म ववर्थेति निगम इति निपातनादिडभावः । स इमं । सोऽचि लोपे चेत्पादपूरणमिति सुलोपः । प्रसवे । षूङ् प्राणिप्रसवे । ऋदोरप् । थाथादिनोत्तरपदांतोदात्तत्वं ॥

त्वं जि॑गेथ॒ न धना॑ रुरोधि॒थार्भे॒ष्वाजा॑ मघवन्म॒हत्सु॑ च ।
त्वामु॒ग्रमव॑से॒ सं शि॑शीमस्यथा॑ न इंद्र॒ हव॑नेषु चोदय ॥ १० ॥
त्वं । जि॒गे॒थ॒ । न । धना॑ । रु॒रो॒धि॒थ॒ । अर्भे॑षु । आ॒जा । म॒घ॒ऽव॒न् । म॒ह॒त्ऽसु॑ । च ।
त्वां । उ॒ग्रं । अव॑से । सं । शि॒शी॒म॒सि॒ । अथ॑ । न॒ः । इं॒द्र॒ । हव॑नेषु । चो॒द॒य॒ ॥ १० ॥

हे इंद्र त्वं जिगेथ । शत्रूञ्जयसि । तथा धना शत्रुभ्योऽपहृतानि धनानि न रुरोधिथ । नावरुणत्सि । स्तोतृभ्यः प्रयच्छसीत्यर्थः । हे मघवन् धनविन्निंद्र अर्भेष्वल्पेष्वाजा आजिषु संग्रामेषु महत्सु च प्रौढेषु संग्रामेषु चावसेऽस्माकं रक्षणार्थमुग्रमुद्गूर्णमधिकबलं त्वां सं शिशीमसि । स्तोत्रैस्तीक्ष्णीकुर्मः । अथानंतरं हे इंद्र त्वं हवनेषु युद्धार्थमाह्वानेषु सत्स्वागत्य नोऽस्मांश्चोदय । संग्रामेषु प्रेरय । जयं प्रापयेत्यर्थः ॥ जिगेथ । जि जये । लिटि थलि क्रादिनियमात्प्राप्तस्येटोऽचस्तास्वत्थल्यनिटो नित्यं । पा० ७. २. ६१. । इति प्रतिषेधः । सन्लिटोर्जेरित्यभ्यासादुत्तरस्य जकारस्य कुत्वं । रुरोधिथ । क्रादिनियमादिट् । आजा । सुपां सुलुगिति सप्तमीबहुवचनस्य डादेशः । शिशीमसि । शो तनूकरणे । बहुलं छंदसीति विकरणस्य श्लुः । आदेच इत्यात्वं । द्विर्वचने बहुलं छंदसीत्यभ्यासस्येत्वं । ई हल्यघोरितीकारांतादेशः । इदंतो मसिः ॥

विश्वाहेंद्रो अधिवक्ता नो अस्त्वपरिह्वृताः सनुयाम वाजं।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ ११ ॥
विश्वाहा। इंद्रः। अधिऽवक्ता। नः। अस्तु। अपरिऽह्वृताः। सनुयाम। वाजं।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः ॥ ११ ॥

व्याख्यातेयं रोहिच्छ्यावेति वर्गे। इंद्रः सर्वेष्वहःस्वस्माकं पक्षपातेन वक्ता भवतु। वयं चाकुटिलगतयः संत इंद्रेण दत्तमन्नं लभामहे। यदस्माभिः प्रार्थितमस्मदीयं तन्मित्रादयः पूजितं कुर्वंतु ॥ ॥ १५ ॥

तत्त इत्यष्टर्चं दशमं सूक्तं कुत्सस्यार्षमैंद्रं त्रैष्टुभं। तथा चानुक्रांतं। तत्तेऽष्टाविति ॥ तृतीये छंदोमे निष्केवल्य इदं सूक्तं निविद्धानं। विश्वजित इति खंडे सूचितं। तत्त इंद्रियमिति निष्केवल्यं। आ॰ ८.७.। इति ॥

तत्त इंद्रियं परमं पराचैरधारयंत कवयः पुरेदं।
क्षमेदमन्यद्दिव्य१न्यदस्य समी पृच्यते समनेव केतुः ॥ १ ॥
तत्। ते। इंद्रियं। परमं। पराचैः। अधारयंत। कवयः। पुरा। इदं।
क्षमा। इदं। अन्यत्। दिवि। अन्यत्। अस्य। सं। ईमिति। पृच्यते। समनाऽइव। केतुः ॥ १ ॥

हे इंद्र ते त्वदीयं परममुत्कृष्टं तत्प्रसिद्धमिदं वर्तमानमिंद्रियं बलं पुरा पूर्वस्मिन्काले कवयः क्रांतदर्शिनः स्तोतारः पराचैः पराचीनं पराङ्मुखं। यद्वा। पराचैः परांचनैः परागमनैर्युक्तं। युद्धाभिमुखमेवाधारयंत। धृतवंतः। अपि चास्येंद्रस्यान्यदेकमिदमग्न्याख्यं ज्योतिः क्षमा क्षमायां भूमौ वर्तते। अन्यदपरमेकं सूर्याख्यं दिवि द्युलोके। ईं तदिदमुभयविधमिंद्रस्य ज्योतिः सं पृच्यते। परस्परं संयुज्यते। रात्रावादित्योऽग्निना संयुक्तो भवति। अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे इति श्रुतेः। अहनि त्वग्निः सूर्येण संगच्छते। उद्यंतं वावादित्यमग्निरनुसमारोहति तस्माद्धूम एवाग्नेर्दिवा ददृशे इति श्रुतेः। तै॰ ब्रा॰ २.१.२.९–१०.। अनयोः परस्परसंगमने दृष्टांतः। समनेव केतुः। समनशब्दः संग्रामवाची। यथा समने संग्रामे युध्यमानयोरुभयोः केतुर्ध्वजो ध्वजांतरेण संयुज्यते तद्वत् ॥ इंद्रियं। इंद्रस्य लिंगं बलं। इंद्रियमिंद्रलिंगमिति घच्प्रत्ययांतो निपात्यते। पराचैः। अव्ययमेतत् उच्चैर्नीचैरिति यथा। यास्कस्त्वाह। पराचैः परांचनैः। नि॰ ११.२५.। इति। क्षमा। सुपां सुलुगिति सप्तम्या लुक्। ईमो मलोपः सांहितिकश्छांदसः। समनेव। षम ष्टम अवैक्लव्ये। अन्येभ्योऽपि दृश्यते। पा॰ ३.३.१३०.। इति युच्। सुपां सुलुगिति सप्तम्या आकारः। इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं चेति समासः ॥

स धारयत्पृथिवीं पप्रथच्च वज्रेण हत्वा निरपः ससर्ज।
अहन्नहिमभिनद्रौहिणं व्यहन्व्यंसं मघवा शचीभिः ॥ २ ॥
सः। धारयत्। पृथिवीं। पप्रथत्। च। वज्रेण। हत्वा। निः। अपः। ससर्ज।
अहन्। अहिं। अभिनत्। रौहिणं। वि। अहन्। विऽअंसं। मघऽवा। शचीभिः ॥ २ ॥

स इंद्रः पृथिवीमसुरैः पीडितां भूमिं धारयत्। धृतवान्। पीडाराहित्येन स्थितामकरोदित्यर्थः। तदनंतरं पप्रथच्च। तां भूमिं विस्तीर्णामकरोत्। अपि च वज्रेणायुधेन हंतव्यान्वृत्रादीन्हत्वापो वृष्ट्युदकानि निः ससर्ज। मेघान्निर्गमयामास। एतदेव स्पष्टीक्रियते। अहिमंतरिक्षे वर्तमानं मेघमहन्। वज्रेण वर्षणार्थमताडयत्। रौहिणं। रौहिणो नाम कश्चिदसुरः। तं च व्यभिनत्। व्यदारयत्। अपि च मघवा धनवानिंद्रः शचीभिरा-

त्मीयैर्युद्धकर्मभिर्व्यंसं विगतभुजं वृत्रासुरमहन्। अवधीत्॥ पप्रथत्। पृथुं करोति प्रथयति। तत्करोतीति णिच्। णाविष्ठवत्प्रातिपदिकस्य कार्यं। पा° ६. ४. १५५. १.। इति वचनाद्र ऋतो हलादेर्लघोः। पा° ६. ४. १६१.। इति ऋकारस्य रत्वं। टेरिति टिलोपः। तस्य स्थानिवद्भावाद्वृद्ध्यभावः। प्रथयतेर्लुङि चङि णिलोपः। द्विर्वचने चङ्यन्यतरस्यां। पा° ६. १. २१८.। इति चङः पूर्वस्योदात्तत्वं। न णिलोपस्य स्थानिवत्त्वं न पदांतेत्यादिना स्वरविधिं प्रति तन्निषेधात्। पूर्वपदस्यासमानवाक्यस्थत्वान्निघाताभावः॥

स जातूभर्मा श्रद्दधान ओजः पुरो विभिंदन्नचरद्वि दासीः।
विद्वान्वज्रिन्दस्यवे हेतिमस्यार्यं सहो वर्धया द्युम्नमिंद्र॥३॥
सः। जातूऽभर्मा। श्रत्ऽदधानः। ओजः। पुरः। विऽभिंदन्। अचरत्। वि। दासीः।
विद्वान्। वज्रिन्। दस्यवे। हेतिं। अस्य। आर्यं। सहः। वर्धय। द्युम्नं। इंद्र॥३॥

जातूभर्मा। जातू इत्यशनिमाचक्षते। भर्मायुधं। अशनिरूपमायुधं यस्य स तथोक्तः। यद्वा। जातानां प्रजानां भर्ता। ओज ओजसा बलेन निष्पाद्यं कार्यं श्रद्दधान आदरातशयेन कामयमानः एवंभूतः स इंद्रो दासीर्दस्युसंबंधीनि पुरः पुराणि विभिंदन् विनाशयन्व्यचरत्। विविधमगच्छत्। हे वज्रिन्वज्रवन्निंद्र विद्वान् स्तुतीर्विजानंस्त्वमस्य स्तोतुर्दस्यव उपक्षयकारिणे शत्रवे हेतिमायुधं विसृजेति शेषः। अपि च हे इंद्र आर्यं सहः। आर्या विद्वांसः स्तोतारः। तदीयं बलं वर्धय। अतिवृद्धं कुरु। तथा द्युम्नं तदीयं यशश्च प्रवर्धय॥ जातूभर्मा। जनी प्रादुर्भावे। अन्येष्वपि दृश्यत इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्केवलादपि डप्रत्ययः। जांस्तूर्वतीति जातूः। तुर्वी हिंसार्थः। क्विपि राल्लोप इति वलोपः। भ्रियत इति भर्म। अन्येभ्योऽपि दृश्यंत इति मनिन्। जातूर्भर्म यस्य। छांदसो रेफलोपः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। पक्षांतरे तु जनेर्निष्ठा। जनसनखनामित्यात्वं। जातं सर्वं भर्म भर्तव्यं येन। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। वर्णव्यापत्त्याकारस्य ऊकारः॥

तदूचुषे मानुषेमा युगानि कीर्तेन्यं मघवा नाम बिभ्रत्।
उपप्रयन्दस्युहत्याय वज्री यद्ध सूनुः श्रवसे नाम दधे॥४॥
तत्। ऊचुषे। मानुषा। इमा। युगानि। कीर्तेन्यं। मघऽवा। नाम। बिभ्रत्।
उपऽप्रयन्। दस्युऽहत्याय। वज्री। यत्। ह। सूनुः। श्रवसे। नाम। दधे॥४॥

नाम शत्रूणां नामकं तदिंद्रस्य बलमूचुष उक्तवते स्तुवते यजमानाय कीर्तेन्यं कीर्तनीयं स्तुत्यं। नामकं तद्बलं बिभ्रद्धारयन्मघवा धनवानिंद्रो मानुषा मनुष्याणां संबंधीनीमेमानि दृश्यमानानि युगान्यहोरात्रसंघनिष्पाद्यानि कृतत्रेतादीनि सूर्यात्मना निष्पादयतीति शेषः। किं पुनस्तन्नाम। दस्युहत्याय दस्यूनां वृत्रादीनां हननायोपप्रयन् गृहसमीपान्निर्गच्छन् वज्री वज्रवान्सूनुः शत्रूणां प्रेरयितेंद्रो यद्ध यत्खलु नाम शत्रूणां नामकं श्रवसे जयलक्षणाय यशसे दधे धृतवान्॥ ऊचुषे। ब्रूञ् व्यक्तायां वाचि। ब्रुवो वचिः। लिटः क्वसुः। वचिस्वपीत्यादिना संप्रसारणं। चतुर्थ्येकवचने भसंज्ञायां वसोः संप्रसारणमिति संप्रसारणं। शासिवसिघसीनां चेति षत्वं। क्वसुप्रत्ययाद्युदात्तत्वं। कीर्तेन्यं। कृत संशब्दने। कृत्यार्थे तवैकेनिति केन्यप्रत्ययः। मघवा। मघशब्दाच्छंदसीवनिपाविति मत्वर्थीयो वनिप्। बिभ्रत्। डुभृञ् धारणपोषणयोः। शतरि जुहोत्यादित्वाच्छपः श्लुः। भृञामिदित्यभ्यासस्येत्वं। नाभ्यस्ताच्छतुरिति नुमागमप्रतिषेधः। अभ्यस्तानामादिरित्याद्युदात्तत्वं॥

तदस्येदं पश्यता भूरि पुष्टं श्रदिंद्रस्य धत्तन वीर्याय।
स गा अविंदत्सो अविंदद्श्वान्त्स ओषधीः सो अपः स वनानि॥५॥

तत् । अस्य । इदं । पश्यत । भूरि । पुष्टं । श्रत् । इंद्रस्य । धत्तन । वीर्याय ।
सः । गाः । अविंदत् । सः । अविंदत् । अश्वान् । सः । ओषधीः । सः । अपः । सः ।
वनानि ॥५॥

हे ऋत्विग्यजमानलक्षणा जनाः अस्येंद्रस्य तदिदं वीर्यं पुष्टं प्रवृद्धं । अत एव भूरि विस्तीर्णं पश्यत । आलोकयत । तस्मै च वीर्याय श्रद्धत्तन । बहुमानं कुरुत । किं पुनस्तद्वीर्यमिति चेत् उच्यते । स इंद्रः पणिभिरपहृता गा येन वीर्येणाविंदत् अलभत । तथा तैरपहृतानश्वान्स इंद्रो येनाविंदत् । अपि च स इंद्र ओषधीरोषध्युपलक्षितां सर्वां भूमिं येन वीर्येणालभत । तथा वृत्रेण निरुद्धा अपो वृष्ट्युदकानि स इंद्रो येनालभत । तथा वनानि वननीयानि संभजनीयानि धनानि स इंद्रो येन वीर्येण प्राप्नोत् ॥ धत्तन । तप्तनप्तनथनाश्चेति तस्य तनादेशः । अविंदत् । विद्लृ लाभे । शे मुचादीनामिति नुम् ॥ ॥ १६ ॥

भूरिकर्मणे वृषभाय वृष्णे सत्यशुष्माय सुनवाम सोमं ।
य आदृत्या परिपंथीव शूरोऽयज्वनो विभजन्नेति वेदः ॥ ६ ॥
भूरिऽकर्मणे । वृषभाय । वृष्णे । सत्यऽशुष्माय । सुनवाम । सोमं ।
यः । आऽदृत्य । परिपंथीऽइव । शूरः । अयज्वनः । विऽभजन् । एति । वेदः ॥ ६ ॥

भूरिकर्मणे बहुविधेन शत्रुवधादिरूपेण कर्मणा युक्ताय वृषभाय वृषभवत्सर्वेषु देवेषु श्रेष्ठाय वृष्णे सेचनसमर्थाय सत्यशुष्मायावितथबलायेंद्राय तदर्थं सोमं सुनवाम । होमार्थं रसरूपं करवाम । शूरः शौर्योपेतो य इंद्र आदृत्य धनविषयमादरं कृत्वायज्वनोऽयजमानस्य वेदो धनं विभजन् । तस्मादयजमानाद्विभक्तं कुर्वन्नपहरन्नेति । यजमानेभ्यस्तद्धनं दातुं गच्छति । तत्र दृष्टांतः । परिपंथीव । यथा मार्गनिरोधकश्चोरो गच्छतां पुण्यपुरुषाणां धनं बलात्कारेणापहृत्य गच्छति तद्वत् ॥ आदृत्य । दृङ् आदरे । समासेऽनञ्पूर्वे क्त्वो ल्यप् । तस्य स्थानिवद्भावेन कृत्त्वे सति ह्रस्वस्य पिति कृतीति तुक् । परिपंथीव । छंदसि परिपंथिपरिपरिणौ पर्यवस्थातरि । पा० ५. २. ८९. । इतीनिप्रत्ययांतो निपात्यते ॥

तदिंद्र प्रेव वीर्यं चकर्थ यत्ससंतं वज्रेणाबोधयोऽहिं ।
अनु त्वा पत्नीर्हृषितं वयश्च विश्वे देवासो अमदन्ननु त्वा ॥ ७ ॥
तत् । इंद्र । प्रऽइव । वीर्यं । चकर्थ । यत् । ससंतं । वज्रेण । अबोधयः । अहिं ।
अनु । त्वा । पत्नीः । हृषितं । वयः । च । विश्वे । देवासः । अमदन् । अनु । त्वा ॥ ७ ॥

हे इंद्र तद्वीर्यं वीरकर्म प्रेव चकर्थ । प्रख्यातमिवाकार्षीः । किं पुनस्तद्वीर्यं । ससंतं स्वपंतं [illegible] वृत्रं वज्रेण कुलिशेन यद्येन वीर्येण त्वमबोधयः । प्रबुद्धः सन्मया सह युद्धं करोत्विति हृषितं तादृशस्य वृत्रस्य हननेन प्राप्तहर्षं त्वामनु पश्चात्पत्नीर्देवपत्न्य अमदन् । हर्षं प्राप्ताः । अपि च वयश्च गमनशीला मरुतोऽपि तथा विश्वे देवासोऽन्ये च सर्वे देवास्त्वामनु पश्चादमदन् । अमाद्यन् ॥ ससंतं । षस स्वप्ने । अदादित्वाच्छपो लुक् । पत्नीः । वा छंदसीति पूर्वसवर्णदीर्घत्वं । अमदन् । मदी हर्षे । व्यत्ययेन शप् ॥

शुष्णं पिप्रुं कुयवं वृत्रमिंद्र यदावधीर्वि पुरः शंबरस्य ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ ८ ॥
शुष्णं । पिप्रुं । कुयवं । वृत्रं । इंद्र । यदा । अवधीः । वि । पुरः । शंबरस्य ।
तत् । नः । मित्रः । वरुणः । ममहंतां । अदितिः । सिंधुः । पृथिवी । उत । द्यौः ॥ ८ ॥

हे इंद्र त्वं शुष्णादींश्चतुरोऽसुरान्यदावधीः हतवानसि तदानीं शंबरस्यासुरस्य पुरो नगराणि वि[illegible]नासि। असुराणां मुख्येषु हतेष्वन्यान्यप्यसुरपुराणि विदीर्णान्यासन्नित्यर्थः। यदनेन सूक्तेन प्रार्थितमस्मदीयं तन्मित्रादयो ममहंतां। पूजितं कुर्वंतु ॥ शुष्णं। शुष शोषणे। अंतर्भावितण्यर्थात् तृषिशुषिरसिभ्यः कित्च। उ० ३. १२.। इति नप्रत्ययः। निदित्यनुवृत्तेराद्युदात्तत्वं। पिप्रुं। पृ पालनपूरणयोः। पॄ इत्येके। औणादिकः कुप्रत्ययः। छंदस्युभयथेति तस्य सार्वधातुकत्वे सति शप्। जुहोत्यादित्वात् श्लुः। अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं। कुयवं। यवो यवनं मिश्रणं। कुत्सितं यवनमस्य। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। शंबरस्य। शमयतीति शंब आयुधं। शमेर्वन्। उ० ४. ९४.। ततो मत्वर्थीयो रप्रत्ययः॥ ॥१७॥

योनिरिति नवर्चमेकादशं सूक्तं कुत्सस्यार्षं त्रैष्टुभमैंद्रं। योनिर्नवेत्यनुक्रांतं॥ सूक्तविनियोगो लैंगिकः॥

योनिष्ट इंद्र निषदे अकारि तमा नि षीद स्वानो नार्वा।
विमुच्या वयोऽवसायाश्वान्दोषा वस्तोर्वहीयसः प्रपित्वे ॥१॥
योनिः। ते। इंद्र। निऽसदे। अकारि। तं। आ। नि। सीद। स्वानः। न। अर्वा।
विऽमुच्य। वयः। अवऽसाय। अश्वान्। दोषा। वस्तोः। वहीयसः। प्रऽपित्वे ॥१॥

हे इंद्र योनिर्वेद्याख्यं स्थानं ते तव निषदे निषदनायोपवेशनायाकारि। कृतमस्माभिः प्रकल्पितमभूत्। तं योनिमा नि षीद। शीघ्रमागत्य तत्रोपविश। शीघ्रागमने दृष्टांतः। स्वानो नार्वा। अर्वेत्यश्वनाम। यथाश्वः स्वानो हेषाशब्दं कुर्वन् स्वकीयं स्थानं शीघ्रमागच्छति तद्वत्। किं कृत्वा। वयोऽश्वबंधनार्थान् रश्मीन्विमुच्य रथाद्विस्निष्य तथाश्वान् रथे योजितांश्च तुरगानवसाय विमुच्य। अत्र निरुक्तं। अवसायाश्वानिति स्यतिरुपसृष्टो विमोचने। नि० १. १७.। इति। कीदृशानश्वान्। प्रपित्वे यागकाले प्राप्ते। प्रपित्वे प्राप्तेऽभीकेऽभ्यक्ते। नि० ३. २०.। इति यास्कः। दोषा रात्रौ वस्तोरहनि च वहीयस आदरातिशयेन वोढॄन्॥ निषदे। सदेः संपदादिलक्षणो भावे क्विप्। स्वानः। स्वमु स्वन ध्वन शब्दे। बहुलवचनात्कर्तरि घञ्। कर्षात्वत इत्यंतोदात्तत्वं। वयः। वियंति रथेन सह संगच्छंत इति विशब्देन रश्मय उच्यंते। वी गत्यादिषु। औणादिक इप्रत्ययः। टिलोपश्च। द्वितीयार्थे प्रथमा। अवसाय। षो अंतकर्मणि। आदेच इत्यात्वं। समासेऽनञ्पूर्वे इति क्त्वो ल्यबादेशः। वहीयसः। वह प्रापणे। तृजंताद्वोढृशब्दात्तुश्छंदसीतीयसुन्। तुरिष्ठेमेयःस्विति तृलोपे कर्तव्ये ढत्वधत्वष्टुत्वढलोपानामसिद्धत्वात्तदाश्रितस्यौत्वस्याप्यभावे तृलोप एव क्रियते॥

ओ त्ये नर इंद्रमूतये गुर्नू चित्तान्सद्यो अध्वनो जगम्यात्।
देवासो मन्युं दासस्य श्चम्नन्ते न आ वक्षन्त्सुविताय वर्णं ॥२॥
ओ इति। त्ये। नरः। इंद्रं। ऊतये। गुः। नु। चित्। तान्। सद्यः। अध्वनः। जगम्यात्।
देवासः। मन्युं। दासस्य। श्चम्नन्। ते। नः। आ। वक्षन्। सुविताय। वर्णं ॥२॥

त्ये ते नरो यज्ञस्य नेतारो यजमाना ऊतये रक्षणायेंद्रमो। आ उ इत्येतन्निपातद्वयसमुदाय आकारार्थः। आ गुः। आगच्छंति। स चेंद्र आगतांस्तान् नू चित्क्षिप्रं सद्यस्तदानीमेवाध्वनोऽनुष्ठानमार्गाञ्जगम्यात्। गमयतु। प्रापयतु। देवासः सर्वे देवा दा[illegible]रसुरस्य मन्युं क्रोधं श्चम्नन्। भक्षयंतु। हिंसंत्वित्यर्थः। अपि च ते देवा नोऽस्माकं सुविताय सुष्ठु प्राप्तव्याय यज्ञाय वर्णमनिष्टनिवारकमिंद्रमा वक्षन्। आवहंतु। आनयंतु॥ जगम्यात्। गमेरंतर्भावितण्यर्थात् लिङि बहुलं छंदसीति शपः श्लुः। श्चम्नन्। चमु अदने। लेटि व्यत्ययेन श्ना। शकारोपजनश्छांदसः। यद्वा। श्चम्नातिः प्रकृत्यंतरं हिंसार्थं द्रष्टव्यं। वक्षन्। वह प्रापणे। लेटि सिब्बहुलं लेटीति सिप्। ढत्वकत्वषत्वानि। सुविताय। सुपूर्वादेतेः कर्मणि निष्ठा। तन्वादित्वादुवङ्। सूपमानात् क्त इत्युत्तरपदांतोदात्तत्वं। वर्णं। वृञ् वरणे। अस्मादंतर्भावितण्यर्थात्कॄवॄजॄसिद्रुपन्यनिस्वपिभ्यो नित्च। उ० ३. १०.। इति नप्रत्ययः। नित्त्वादाद्युदात्तत्वं॥

अव त्मना भरते केतवेदा अव त्मना भरते फेनमुदन् ।
क्षीरेण स्नातः कुयवस्य योषे हते ते स्यातां प्रवणे शिफायाः ॥३॥
अव । त्मना । भरते । केतऽवेदाः । अव । त्मना । भरते । फेनं । उदन् ।
क्षीरेण । स्नातः । कुयवस्य । योषे इति । हते इति । ते इति । स्यातां । प्रवणे ।
शिफायाः ॥३॥

केतवेदाः केतं ज्ञातं वेदः परेषां धनं येन स तादृशः कुयवनामासुरस्त्मनात्मना स्वयमेवाव भरते । ज्ञातं परेषां धनमपहरति । अपि च सोऽसुर उदन्नुदकेऽंतर्वर्तमानः सन्फेनं फेनयुक्तमुदकमात्मना स्वयमेवाव भरते । अपहरति । क्षीरेण क्षरणशीलेन तेनापहृतेनोदकेन कुयवस्यासुरस्य योषे भार्ये स्नातः । स्नानं कुर्वाते । तादृश्यौ स्त्रियौ शिफायाः । शिफा नाम नदी । तस्याः प्रवणे निम्ने प्रवेष्टुमशक्येऽगाधप्रदेशे हते नष्टे स्यातां । भवेतां । हे इंद्र त्वं परेषां धनमपहृत्यान्यैर्दुरवगाह उदकस्य मध्ये वर्तमानं कुयवं सकुटुंबमवधीरित्यर्थः ॥ त्मना । मंत्रेष्वाङ्यादेरात्मन इत्याकारलोपः । भरते । हृञ् हरणे । हृग्रहोर्भ इति भत्वं । केतवेदाः । कित ज्ञाने । कर्मणि घञ् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । उदन् । पद्दन्नित्यादिनोदकशब्दस्योदन्नादेशः । सुपां सुलुगिति सप्तम्या लुक् ॥

युयोप नाभिरुपरस्यायोः प्र पूर्वाभिस्तिरते राष्टि शूरः ।
अंजसी कुलिशी वीरपत्नी पयो हिन्वाना उदभिर्भरंते ॥४॥
युयोप । नाभिः । उपरस्य । आयोः । प्र । पूर्वाभिः । तिरते । राष्टि । शूरः ।
अंजसी । कुलिशी । वीरऽपत्नी । पयः । हिन्वानाः । उदऽभिः । भरंते ॥४॥

उपरस्योदकमध्य उपरस्यावस्थितस्यायोः परेषामुपद्रवार्थमितस्ततो गच्छतः कुयवस्यासुरस्य नाभिः संनद्धमावसनस्थानं युयोप । गूढमासीत् । यथान्यैर्न दृश्यते सोऽसुरस्तथाकरोदित्यर्थः । अपि च पूर्वाभिः पूरयित्रीभिरात्मनापहृताभिरद्भिः प्र तिरते । सोऽसुरः प्रवर्धते । स च शूरः शौर्योपेतो राष्टि । राजते च । आत्मीयेन शौर्येण लोके प्रख्यातो भवतीत्यर्थः । तमिममसुरमंजस्यांजस्योपेता कुलिशी कुलं शातयंती वीरपत्नी वीरस्य पालयित्री एतत्संज्ञिकास्तिस्रो नद्यः पयः पयसा तत्संबंधिना सारभूतेनोदकेन हिन्वानाः प्रीणयंत्य उदभिरात्मीयैरुदकैर्भरंते । धारयंति ॥ युयोप । युप विमोहने । नाभिः । नहो भश्च । उ० ४.१२५. । इतीञ्प्रत्ययः । राष्टि । राजृ दीप्तौ । बहुलं छंदसीति शपो लुक् । व्रश्चादिना षत्वे ष्टुत्वं । पयः । सुपां सुलुगिति तृतीयाया लुक् । हिन्वानाः । हिवि प्रीणनार्थः । इदित्त्वान्नुम् । अस्मात्ताच्छीलिकश्चानश् । आगमानुशासनस्यानित्यत्वान्नुमभावः । चानशो लसार्वधातुकत्वाभावात्तत्स्वराभावे चित्स्वर एव शिष्यते ॥

प्रति यत्स्या नीथादर्शि दस्योरोको नाच्छा सदनं जानती गात् ।
अध स्मा नो मघवञ्चर्कृतादिन्मा नो मघेव निष्षपी परा दाः ॥५॥
प्रति । यत् । स्या । नीथा । अदर्शि । दस्योः । ओकः । न । अच्छ । सदनं । जानती । गात् ।
अध । स्म । नः । मघऽवन् । चर्कृतात् । इत् । मा । नः । मघाऽइव । निष्षपी ।
परा । दाः ॥५॥

यद्यदा नीथा नयनहेतुभूता स्या सा पदवी प्रत्यदर्शि अस्माभिर्दृष्टाभूत् सा च पदवी दस्योरुपक्षपयितुः कुयवस्यासुरस्य सदनं गृहमच्छाभिमुख्येन गात् गता प्राप्ता । तत्र दृष्टांतः । जानती स्वकीयं वत्समभिजानती

गौरोको न निवासस्थानं स्वकीयं गोष्ठं यथा ऋजु प्राप्नोति । तद्वन्मार्गोऽप्यसुरगृहं प्राप्त इत्यर्थः । अध स्म अथानंतरमेव हे मघवन्धनवन्निंद्र चर्कृतात्पुनःपुनस्तेनासुरेण कृतादुपद्रवान्नोऽस्मान्त्रचेति शेषः । इदित्यवधारणे । अस्मान्त्वैव नोऽस्मान्मा परा दाः । मा परित्याक्षीः । अस्माभिर्ज्ञातेन मार्गेण गत्वास्मदुपद्रवकारिणमसुरं जहीति तात्पर्यार्थः । तत्र व्यतिरेके दृष्टांतोऽभिधीयते । मघेव निष्षपी । यथा विनिर्गतसपो विनिर्गतशेपो यथेष्टचारी दासीपतिर्मघेव यथा धनान्यस्थाने परित्यजति तथास्मान्मा परित्याक्षीरित्यर्थः । अत्र निरुक्तं । निष्षपी स्त्रीकामो भवति विनिर्गतसपः । सपः सपतेः स्पृशतिकर्मणः । मा नो मघेव निष्षपी परा दाः । स यथा धनानि विभजति मा नस्त्वं तथा परा दाः । नि° ५. १६. । इति ॥ नीथा । णीञ् प्रापणे । हनिकुषिनीरमिकाशिभ्यः कथन्निति करणे कथन्प्रत्ययः । गात् । एतेर्लुङीणो गा लुङीति गादेशः । गातिस्थेति सिचो लुक् । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । चर्कृतात् । करोतेर्यङ्लुगंतान्निष्ठेति क्तप्रत्ययः । मघाऽइव । शेश्छंदसीति शेर्लोपः । निष्षपी । षप समवाये । सपति समवैति योन्या संगच्छत इति सपः शेपः । पचाद्यच् । निर्गतो निर्योत्तूतः सपः शेपो यस्य स स्त्रीव्यसनी निष्षपः । वर्णव्यापत्त्या ईकारः । दाः । डुदाञ् दाने । लुङि गातिस्थेति सिचो लुक् । न माङ्योग इत्यडभावः ॥ ॥ १८ ॥

स त्वं न॑ इंद्र॒ सूर्ये॒ सो अ॒प्स्व॑नागा॒स्त्व आ भ॑ज जीवशं॒से ।
मांत॑रां भुज॒मा री॑रिषो न॒: श्र॒द्धितं॑ ते मह॒त इ॑ंद्रि॒याय॑ ॥ ६ ॥
सः । त्वं । न॒ः । इं॒द्र॒ । सूर्यै॑ । सः । अ॒प्ऽसु । अ॒ना॒गाः॒ऽत्वे । आ । भ॒ज॒ । जी॒व॒ऽशं॒से ।
मा । अंत॑रां । भुजं॑ । आ । रि॒रि॒षः॒ । न॒ः । श्र॒द्धितं॑ । ते॒ । म॒ह॒ते । इं॒द्रि॒याय॑ ॥ ६ ॥

हे इंद्र स त्वं नोऽस्मान्सूर्ये सर्वस्य प्रेरक आदित्य आ भज । आभाजय । आभिमुख्येन भक्तान्संभक्तान्कुरु । तथा स त्वमप्स्वब्देवतास्वस्मानाभाजय । अपि च जीवशंसे जीवैः प्राणिभिः शंसनीये कामयितव्येऽनागास्त्वेऽपापत्वे पापराहित्येऽस्मानाभाजय । अपि च नोऽस्माकमंतरां गर्भरूपेणांतर्वर्तमानां भुजं पालयित्रीं प्रजामा समंतान्मा रीरिषः । मा हिंसीः । ते तव महते प्रभूतायेंद्रियाय बलाय श्रद्धितं । अस्माभिः श्रद्धानं कृतं । त्वदीयं बलं बहुमानपूर्वकं स्तुम इत्यर्थः । तस्मात्तादृशबलयुक्तस्त्वं मा रीरिष इति पूर्वेण संबंधः ॥ अनागास्त्वे । न विद्यत आगः पापं यस्य सोऽनागाः । तस्य भावस्तत्त्वं । छांदस उपधादीर्घः । जीवशंसे । शंसु स्तुतौ । कर्मणि घञ् । थाथादिनोत्तरपदांतोदात्तत्वं । भुजं । भुनक्ति पालयतीति भुक् प्रजा । क्विप् । रीरिषः । रिष हिंसायां । स्वार्थे ण्यंतादस्माल्लुङि चङि णिलोप उपधाह्रस्वत्वादीनि । छांदसं पदकालीनमभ्यासह्रस्वत्वं । श्रद्धितं । श्रच्छब्दस्य उर्यादित्वेन । पा° १. ४. ६१. । [illegible] इति पूर्वपदप्रकृतिस्वरत्वं ॥

अधा॑ मन्ये॒ श्रत्ते॑ अ॒स्मा अ॑धायि॒ वृषा॑ चोदस्व मह॒ते धना॑य ।
मा नो॒ अकृ॑ते पुरुहूत॒ योना॒विंद्र॒ क्षुध्य॑द्भ्यो॒ वय॑ आसु॒तिं दा॑: ॥ ७ ॥
अध॑ । मन्ये॒ । श्रत् । ते॒ । अ॒स्मै॒ । अ॒धा॒यि॒ । वृषा॑ । चो॒द॒स्व॒ । म॒ह॒ते । धना॑य ।
मा । न॒ः । अकृ॑ते । पु॒रु॒ऽहू॒त॒ । योनौ॑ । इंद्र॑ । क्षुध्य॑त्ऽभ्यः । वय॑ः । आ॒ऽसु॒तिं । दा॒ः ॥ ७ ॥

हे इंद्र अधाथानंतरं मन्ये । त्वां मनसा जानामि । ते तवास्मै बलाय श्रदधायि । अस्माभिः श्रद्धा कृता । [illegible]शयेन स्तोत्रं कृतमित्यर्थः । वृषा कामानां वर्षिता स त्वं महते प्रौढाय धनाय चोदस्व । चोदय । [illegible] । हे पुरुहूत पुरुभिर्बहुभिर्यजमानैराहूतेंद्र अकृतेऽनिष्पादिते धनशून्ये योनौ । गृहनामैतत् । गृहे नोऽस्मान्मा धाः । निधेहि । धनधान्यपूर्णे गृहेऽस्मान्वासयेत्यर्थः । अपि च हे इंद्र क्षुध्यद्भ्यो बुभुक्षितेभ्योऽन्येभ्योऽपि स्तोतृभ्यो वयोऽन्नमासुतिं पेयं क्षीरादिकं च दाः । देहि ॥ अधायि । दधातेः कर्मणि लुङि च्लेश्चिण् । आतो युक् चिण्कृतोरिति युक् । क्षुध्यद्भ्यः । क्षुध बुभुक्षायां । दिवादित्वात् श्यन् । नित्वादाद्युदात्तत्वं ॥

मा नो॑ वधीरिंद्र॒ मा परा॑ दा॒ मा नः॑ प्रि॒या भोज॑नानि॒ प्र मो॑षीः ।
आं॒डा मा नो॑ मघवञ्छक्र॒ निर्भे॒न्मा नः॒ पात्रा॑ भेत्स॒हजा॑नुषाणि ॥ ८ ॥
मा । नः॒ । व॒धीः॒ । इं॒द्र॒ । मा । परा॑ । दाः॒ । मा । नः॒ । प्रि॒या । भोज॑नानि । प्र । मो॒षीः॒ ।
आं॒डा । मा । नः॒ । म॒घ॒ऽव॒न् । श॒क्र॒ । निः॒ । भे॒त् । मा । नः॒ । पात्रा॑ । भे॒त् । स॒ह॒ऽजा॑-
नुषाणि ॥ ८ ॥

हे इंद्र नोऽस्मान्मा वधीः । मा हिंसीः । सर्वदा रक्षेत्यर्थः । अपि च मा परा दाः । मा परित्याक्षीः । परादानं परित्यागः । अस्मत्कृतां पूजां सर्वदा गृहाणेत्यर्थः । अपि च नोऽस्माकं प्रिया प्रियाणीप्सितानि भोजनान्युपभोग्यानि धनानि मा प्र मोषीः । मापहार्षीः । अस्मास्विव धनानि यथा स्युस्तथा कुर्वित्यर्थः । तथा हे मघवन् धनवन् शक्र सर्वकार्यशक्तेंद्र नोऽस्माकमांडांडसंबंधीनि गर्भरूपेण निषिक्तान्यपत्यानि मा भेत् । मा भिनः । गर्भरूपेणावस्थितानस्मत्पुत्रान्रक्षेत्यर्थः । मा च नः पात्रा । पतंति गच्छंति गमनसमर्थानि यानि तान्यपत्यानि पात्राणि । तानि च मा भेत् । मा भिदः । सहजानुषाणि । जानुभ्यां यानि भूमिं सनंति । गच्छंतीत्यर्थः । तानि जानुषाणि । तैः सहितानि मा विनीनशः ॥ वधीः । हंतेर्माङि लुङि चेति वधादेशः । स चादंतः । सिच् । अतो लोप इत्यकारलोपः । तस्य स्थानिवद्भावादतो हलादेरिति वृद्ध्यभावः । इट ईटीति सिचो लोपः । मोषीः । मुष स्तेये । लुङि सिच इट् । नेटीति वृद्धिप्रतिषेधः । भेत् । भिदिर् विदारणे । लङि सिपि बहुलं छंदसीति विकरणस्य लुक् । लघूपधगुणः । हल्ङ्याब्भ्य इति सिचो लोपः ॥

माध्यंदिने सवनेऽर्वाङेहीत्येषा पोतुः प्रस्थितयाज्या । सूत्रितं च । अर्वाङेहि सोमकामं त्वाहुस्तवायं सोमस्त्वमेह्यर्वाङ् । आ॰ ५. ५. । इति ॥

अ॒र्वाङेहि॒ सोम॑कामं त्वाहु॒र॒यं सु॒तस्तस्य॑ पिबा॒ मदा॑य ।
उ॒रु॒व्यचा॑ ज॒ठर॒ आ वृ॑षस्व पि॒तेव॑ नः शृणुहि हू॒यमा॑नः ॥ ९ ॥
अ॒र्वाङ् । आ । इ॒हि॒ । सोम॑ऽकामं । त्वा॒ । आ॒हुः॒ । अ॒यं । सु॒तः । तस्य॑ । पि॒ब॒ । मदा॑य ।
उ॒रु॒ऽव्यचाः॑ । ज॒ठरे॑ । आ । वृ॒ष॒स्व॒ । पि॒ताऽइ॑व । नः॒ । शृ॒णु॒हि॒ । हू॒यमा॑नः ॥ ९ ॥

हे इंद्र त्वमर्वाङ् अस्मदभिमुखः सन् एहि । आगच्छ । किं कारणमिति चेत् यस्मात्त्वां सोमकामं सोमविषयाभिलाषमाहुः पुराविदः कथयंति । अयमस्मदीयः सोमः सुतः । ऋत्विग्भिरभिषुतः । अत आगच्छेत्यर्थः । आगत्य च मदाय हर्षार्थं तस्य तमस्मदीयमभिषुतं सोमं पिब । एतदेव स्पष्टीक्रियते । उरुव्यचा उरु विस्तीर्णं व्यचो व्यापनं यस्य तादृशो महावयवो भूत्वा जठर आत्मीय उदर आ वृषस्व । सोममासिंच । आ समंतात्पूरयेत्यर्थः । एवंभूतस्त्वं हूयमानः स्तुतिभिराहूयमानः सन् पितेव पुत्राणां वाक्यानि शृणोति तथा नोऽस्माकं वाक्यानि शृणुहि । शृणु ॥ सोमकामं । सोमविषयः कामोऽभिलाषो यस्य । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । आहुः । ब्रुवः पंचानामादित आहो ब्रुवः । पा॰ ३. ४. ८४. । इति झेरुसादेशो धातोराहादेशश्च । तस्य । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । मदाय । मदी हर्षे । मदोऽनुपसर्ग इति भावेऽप् । उरुव्यचाः । व्यच व्याजीकरणे । औणादिकोऽसिप्रत्ययः । व्यचेः कुटादित्वमनसीति वचनात् । का॰ १. २. १. १. । ङित्त्वाभावेन संप्रसारणाभावः । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं । यद्वा । उरु विचति व्याप्नोतीत्युरुव्यचाः । कृदुत्तरपदप्रकृतिस्वरत्वं । वृषस्व । वृष सेचने । व्यत्ययेनात्मनेपदशप्रत्ययौ । शृणुहि । उतश्च प्रत्ययाच्छंदसि वावचनमिति हेर्लुगभावः ॥ ॥ १९ ॥

चंद्रमा इत्येकोनविंशत्यृचं द्वादशं सूक्तं । अपां पुत्रस्य त्रितस्य कूपे पतितस्य कुत्सस्य वार्षं । तथा चोभयोः कूपपात आम्नायते । त्रितः कूपेऽवहितः कांटे निबाल्ह [illegible] इति च । त्रितस्य चापां पुत्रत्वं

तैत्तिरीया स्पष्टमामनंति। तत एकतोऽजायत स द्वितीयमभ्यपातयत् ततो द्वितोऽजायत स तृतीयमभ्यपातयत् ततस्त्रितोऽजायत यदद्भ्योऽजायंत तदाप्यानामाप्यत्वं। तै० ब्रा० ३. २. ८. १०–११.। इति। तमेतमाप्यं त्रितस्त्वद्दिदाप्य इति तकारोपजनेन वयमधीमह इति। अंत्या त्रिष्टुप्। सं मा तपंतीत्येषा यवमध्या महाबृहती। आद्यौ द्वावष्टाक्षरौ पादौ द्वादशाक्षरस्तृतीयस्ततो द्वावष्टाक्षरौ सा यवमध्या महाबृहती। चत्वारोऽष्टका जागतश्च महाबृहतीत्युक्त्वा मध्ये चेद्यवमध्या। अनु० ९. १०.। इत्युक्तलक्षणोपेतत्वात्। शिष्टाः पंक्तयः। विश्वे देवा देवता। तथा चानुक्रांतं। चंद्रमा एकोनाप्यस्त्रितो वा वैश्वदेवं हि पांक्तमंत्या त्रिष्टुबष्टमी महाबृहती यवमध्येति। ह्रीत्यभिधानादिदमादीनि त्रीणि सूक्तानि वैश्वदेवानि ॥ विनियोगः। अत्र शाट्यायनिन इतिहासमाचक्षते। एकतो द्वितस्त्रित इति पुरा त्रय ऋषयो बभूवुः। ते कदाचिन्मरुभूमावरण्ये वर्तमानाः पिपासया संतप्तगात्राः संत एकं कूपमविंदन्। तत्र त्रिताख्य एको जलपानाय कूपं प्राविशत्। स्वयं पीत्वेतरयोश्च कूपादुदकमुद्धृत्य प्रादात्। तौ तदुदकं पीत्वा त्रितं कूपे पातयित्वा तदीयं धनं सर्वमपहृत्य कूपं च रथचक्रेण पिधाय प्रास्थिषातां। ततः कूपे पतितः स त्रितः कूपादुत्तरीतुमशक्नुवन्सर्वे देवा मामुद्धरंत्विति मनसा सस्मार। ततस्तेषां स्तावकमिदं सूक्तं ददर्श। तत्र रात्रौ कूपस्थांतश्चंद्रमसो रश्मीन्पश्यन्परिदेवयते ॥

चंद्रमा अप्स्व१ंतरा सुपर्णो धावते दिवि।
न वो हिरण्यनेमयः पदं विंदंति विद्युतो वित्तं मे अस्य रोदसी ॥१॥
चंद्रमाः। अप्ऽसु। अंतः। आ। सुऽपर्णः। धावते। दिवि।
न। वः। हिरण्यऽनेमयः। पदं। विंदंति। विऽद्युतः। वित्तं। मे। अस्य। रोदसी इति ॥१॥

अप्स्वंतरिक्षासूदकमये मंडलेऽंतर्मध्ये वर्तमानः सुपर्णः शोभनपतनः। यद्वा। सुपर्ण इति रश्मिनाम। सुषुम्णाख्येन सूर्यरश्मिना युक्तश्चंद्रमा दिवि द्युलोक आ धावते। आङ् मर्यादायां। एकेनैव प्रकारेण धावते। शीघ्रं गच्छति। तादृशस्य चंद्रमसः संबंधिनो हे हिरण्यनेमयः सुवर्णसदृशपर्यंताः। यद्वा। हितरमणीयप्रांताः। विद्युतो विद्योतमाना रश्मयो वो युष्माकं पदं पादस्थानीयमग्रं न विंदंति। मदीयानींद्रियाणि कूपेनावृतत्वान्न लभंते। अत इदमनुचितं। तस्मात्कूपान्मामुत्तारयतेत्यर्थः। अपि च हे रोदसी द्यावापृथिव्यौ मे मदीयमस्येदं स्तोत्रं वित्तं। जानीतं। यद्वा। मदीयं कूपपतनरूपं यदिदं दुःखं तदवगच्छतं। मदीयं स्तोत्रं श्रुत्वा मदीयं दुःखं ज्ञात्वा वास्मात्कूपान्मामुत्तारयतमित्यर्थः ॥ चंद्रमाः। चंद्रमाह्लादनं सर्वस्य जगतो निर्मिमीत इति चंद्रमाः। चंद्रे माङो डित्। उ० ४. २२७.। इत्यसुन्। दासीभारादिषु पाठात्पूर्वपदप्रकृतिस्वरत्वं। धावते। सृ गतौ। पाघ्रेत्यादिना वेगितायां धावादेशः। व्यत्ययेनात्मनेपदं। वित्तं। विद ज्ञाने। लोट्यदादित्वाच्छपो लुक्। पादादित्वात्तिङ्ङतिङ इति निघाताभावः। अस्य। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी। ऊडिदमिति विभक्तेरुदात्तत्वं ॥

अर्थमिद्वा उ अर्थिन आ जाया युवते पतिं।
तुंजाते वृष्ण्यं पयः परिदाय रसं दुहे वित्तं मे अस्य रोदसी ॥२॥
अर्थं। इत्। वै। ऊं इति। अर्थिनः। आ। जाया। युवते। पतिं।
तुंजाते इति। वृष्ण्यं। पयः। परिऽदाय। रसं। दुहे। वित्तं। मे। अस्य। रोदसी इति ॥२॥

अर्थिनो धनमपेक्षमाणाः पुरुषा अर्थमिद्वै अपेक्षितं धनं प्राप्नुवंत्येव। नाहं प्राप्नोमि। उ इत्येतत्पादपूरणं। अपि च जायान्यदीया भार्या पतिं स्वपतिमा युवते। आभिमुख्येन प्राप्नोति। मदीया तु मद्विरहाद्रतासीत्। अपि च संयुक्तौ तौ जायापती वृष्ण्यं वीर्यरूपं पय उदकं तुंजाते। प्रजननायान्योन्यसंघट्टनेन प्रेरयतः। तदनंतरं रसं पुरुषस्य सारभूतं वीर्यं परिदाय गर्भाशयेनादाय गर्भरूपेण धृत्वा दुहे। दुग्धे। पुत्ररूपेण जनयति। मम तु पुत्रोऽपि नोत्पद्यते। अत इदं मदीयं दुःखं हे द्यावापृथिव्यौ जानीतं॥ उ। उञः। पा० १. १.

१७.। इति शाकल्यस्य मतेन प्रगृह्यत्वात् प्लुतप्रगृह्या अचीति प्रकृतिभावः। युवते। यु मिश्रणे। व्यत्ययेनात्मनेपदं। शब्लुकि प्राप्ते व्यत्ययेन शः। तुंजाते। तुजि पिजि हिंसाबलदाननिकेतनेषु। इदित्त्वान्नुम्। व्यत्ययेन श्नम्। श्नान्नलोपः। दुहे। दुह प्रपूरणे। लोपस्त आत्मनेपदेष्विति तलोपः॥

मो षु दे॑वा अ॒दः स्व१॒॑रव॑ पादि दि॒वस्परि॑।

मा सो॒म्यस्य॑ शं॒भुवः॒ शूने॑ भूम॒ कदा॑ च॒न वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ ३ ॥

मो इति॑। सु। दे॒वाः॒। अ॒दः। स्वः॑। अव॑। पा॒दि॒। दि॒वः। परि॑।

मा। सो॒म्यस्य॑। शं॒ऽभुवः॑। शूने॑। भू॒म॒। कदा॑। च॒न। वि॒त्तं। मे॒। अ॒स्य। रो॒द॒सी॒ इति॑ ॥ ३ ॥

हे देवाः स्वः स्वर्गे वर्तमानमदस्तदस्मदीयं पितृपितामहप्रपितामहात्मकं संतानं दिवस्परि दिवस्योपरि वर्तमानं मो षु मैवाव पादि। अवपन्नं विपन्नं प्रभ्रष्टं मा भूत् मम पुत्राभावात्। पुत्रेण लोकाञ्जयति नापुत्रस्य लोकोऽस्तीति श्रुतेः। अतो वयं सोम्यस्य सोमपानार्हस्य पितृगणस्य शंभुवः सुखस्य भावयितुः पुत्रस्य शूने अपगमने कदा चन कदाचिदपि मा भूम। युष्मत्प्रसादान्मम पुत्रा आयंतां। अतो मामस्मादुःखादुत्तारयतेत्यर्थः। हे द्यावापृथिव्यौ युवां च मदीयं विज्ञापनं जानीतं॥ मो। मा उ इति [illegible]दायी मैवेत्यस्यार्थे। सु इत्येतदवधारणे। सुञ इति षत्वं। पादि। पद गतौ। चिण् ते पदः। पा॰ ३. १. ६०.। इति कर्तरि लुङि च्लेश्चिणादेशः। दिवः। ऊडिदमिति विभक्तेरुदात्तत्वं। पंचम्याः परावध्यर्थ इति विसर्जनीयस्य सत्वं। सोम्यस्य। सोममर्हति यः। पा॰ ४. ४. १३७.। इति यप्रत्ययः। शंभुवः। भवतेरंतर्भावितण्यर्थात्क्विप्। शूने। टुओश्वि गतिवृद्ध्योः। भावे निष्ठा। श्वीदितो निष्ठायामितीट्[illegible]ः। वचिस्वपीत्यादिना संप्रसारणं। ओदितश्च। पा॰ ८. २. ४५.। इति निष्ठानत्वं। व्यत्ययेनाद्युदात्तत्वं। वृषादिर्वा द्रष्टव्यः॥

य॒ज्ञं पृ॑च्छाम्यव॒मं स तद्दू॒तो वि वो॑चति।

क्व॑ ऋ॒तं पू॒र्व्यं ग॒तं कस्तद्बि॑भर्ति॒ नूत॑नो वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ ४ ॥

य॒ज्ञं। पृ॒च्छा॒मि॒। अ॒व॒मं। सः। तत्। दू॒तः। वि। वो॒च॒ति॒।

क्व॑। ऋ॒तं। पू॒र्व्यं। ग॒तं। कः। तत्। बि॒भ॒र्ति॒। नूत॑नः। वि॒त्तं। मे॒। अ॒स्य। रो॒द॒सी॒ इति॑ ॥ ४ ॥

यज्ञं यजनीयमवमं सर्वेषां देवानामादिभूतं। अग्निर्मुखं प्रथमो देवतानां। ऐ॰ ब्रा॰ १. ४.। इति श्रुतेः। अग्निर्वै देवानामवम इति ब्राह्मणाच्च। तमग्निं पृच्छामि। यन्मया पृष्टं तद्देवानां दूतः सोऽग्निर्वि वोचति। विविच्य कथयतु। किं पुनस्तत्पृच्छ्यत इति चेत् उच्यते। हे अग्ने त्वदीयं पूर्व्यं पूर्वकालीनमृतं भद्रं स्तोतृभ्यः कृतं श्रेयः क्व गतं। कुत्रेदानीं वर्तते। नूतनो नवतरस्त्वत्तोऽन्यः कः पुरुषस्तद्भद्रं बिभर्ति। धारयति। यदि त्वय्यवर्तिष्यत ममेदृशी दशापि नाभविष्यत्। अतस्तत् क्व गतमिति कथय॥ वोचति। वच परिभाषणे। लेट्यडागमः। वच उमिति व्यत्ययेन धातोरुमागमः। क्व। किमोऽत्। पा॰ ५. ३. १२.। इति सप्तम्यर्थेऽत्। क्वाति। पा॰ ७. २. १०५.। इति किमः क्वादेशः। तित्स्वरित इति स्वरितत्वं। परेण सह ऋत्यक इति प्रकृतिभावः॥

अ॒मी ये दे॑वाः॒ स्थन॑ त्रि॒ष्वा रो॑च॒ने दि॒वः।

कद्व॑ ऋ॒तं कदनृ॑तं॒ क्व॑ प्र॒त्ना व॒ आहु॑ति॒र्वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥ ५ ॥

अ॒मी इति॑। ये। दे॒वाः॒। स्थन॑। त्रि॒षु। आ। रो॒च॒ने। दि॒वः।

कत्। वः॒। ऋ॒तं। कत्। अ॒नृ॒तं। क्व॑। प्र॒त्ना। वः॒। आऽहु॑तिः। वि॒त्तं। मे॒। अ॒स्य। रो॒द॒सी॒ इति॑ ॥ ५ ॥

हे देवाः त्रिषु पृथिव्यादिषु स्थानेषु येऽमी यूयं स्थन वर्तमाना भवथ। यानि स्थानानि दिवो द्योतमानस्य सूर्यस्य आ रोचने दीप्तिविषये वर्तंते। सूर्यप्रकाशेषु स्थानेष्वित्यर्थः। तेषां वो युष्माकं संबंधि स्तोतृविषयमृतं सत्यं कत्। कस्मिन्देशे वर्तते। अनृतं द्वेष्टृविषयमसत्यं च कत्। कुत्र गतं। अपि च प्रत्ना चिरकालीना वो युष्माकं संबंधिन्याहुतिर्मया पूर्वमनुष्ठितो यागः क्व। कुत्रासीत्। ईदृग्भूतदुःखानुभवेन मया पूर्वमनुष्ठितो यागसमूहो युष्मान्न प्राप्नोदित्यनुमिमे। अन्यत्पूर्ववत् ॥ स्थन। तप्तनप्तनथनाश्चेति तशब्दस्य थनादेशः। कत्। क्वशब्दस्य वर्णव्यापत्त्या कद्भावः॥ ॥२०॥

कद्व॑ ऋ॒तस्य॑ धर्ण॒सि कद्वरु॑णस्य॒ चक्ष॑णं।
कद॑र्य॒म्णो म॒हस्प॒थाति॑ क्रामेम दू॒ढ्यो॑ वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥६॥
कत्। वः। ऋ॒तस्य॑। ध॒र्ण॒सि। कत्। वरु॑णस्य। चक्ष॑णं।
कत्। अ॒र्य॒म्णः। म॒हः। प॒था। अति॑। क्रा॒मे॒म॒। दुः॒ऽध्यः॑। वि॒त्तं। मे॒। अ॒स्य। रो॒द॒सी॒ इति॑ ॥६॥

हे देवा वो युष्माकं संबंधिन ऋतस्य सत्यस्याभिमतफलप्रापणस्य धर्णसि धारणं कत्। कुत्र गतं। वरुणस्यानिष्टनिवारकस्य देवस्य चक्षणमनुग्रहदृष्ट्या दर्शनं कत्। क्व गतं। महो महतो महानुभावस्यार्यम्णोऽरीणां नियंतुरेतत्संज्ञकस्य देवस्य संबंधिना पथा शोभनमार्गेणेष्टदेशप्रापणं कत्। क्व गतं। एतत्सर्वं युष्मास्वेव वर्तते। न कुत्रापि गतं। अतो वयं दूढ्यो दुर्धियः पापबुद्धीन[illegible]परान् शत्रूनति क्रामेम। अतितरेम। तैः कृतादस्मात्कूपपातलक्षणाद्दुःखाद्वयमुत्तीर्णा भवेम। हे द्यावापृथिव्यौ मदीयमिदं जानीतं॥ धर्णसि। धृञ् धारणे। सानसिधर्णसिपर्णसीत्यादिना। उ० ४.१०७.। असिच्प्रत्ययांतो निपात्यते। अर्यम्णः। षष्ठ्येकवचने ऽल्लोपोऽन इत्यकारलोपः। उदात्तनिवृत्तिस्वरेण विभक्तिरुदात्तत्वं। महः। महतोऽच्छब्दलोपश्छांदसः। यद्वा। मह पूजायां। क्विप्। उभयथापि सावेकाच इति विभक्तिरुदात्तत्वं। दूढ्यः। पृषोदरादिः। ध्यै चेति तत्र पाठाद्दुरो रेफस्योत्वं। उत्तरपदादेः ष्टुत्वं च। उदात्तस्वरितयोर्यण इति स्वरितत्वं॥

अ॒हं सो अ॑स्मि॒ यः पु॒रा सु॒ते वदा॑मि॒ कानि॑ चित्।
तं मा॑ व्यं॒त्या॒ध्यो॒३॒ वृको॒ न तृ॒ष्णजं॑ मृ॒गं वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥७॥
अ॒हं। सः। अ॒स्मि॒। यः। पु॒रा। सु॒ते। वदा॑मि। कानि॑। चि॒त्।
तं। मा॒। व्यं॒ति॒। आ॒ऽध्यः॑। वृकः॑। न। तृ॒ष्णऽजं॑। मृ॒गं। वि॒त्तं। मे॒। अ॒स्य। रो॒द॒सी॒ इति॑ ॥७॥

हे देवाः पुरा पूर्वस्मिन्काले सुते युष्मद्यागार्थं सोमेऽभिषुते कानि चित् कतिपयानि स्तोत्राणि योऽहं वदामि उक्तवानस्मि स [illegible] न त्वन्यः कश्चित्। तस्मात्किमर्थं मां परित्यजथ। तं तादृशं मामाध्यो ऽभिलषितपुत्राद्यप्राप्त्या जनिता मानस्यो व्यथा व्यंति। भक्षयंति। तत्र दृष्टांतः। तृष्णजं जाततृष्णं पिपासंतमुदकं प्रति गच्छंतं मृगं वृको न। यथारण्यश्वा मध्येमार्गं भक्षयति तद्वत्। अन्यत्पूर्ववत्॥ व्यंति। वी गत्यादिषु। अदादित्वाच्छपो लुक्। तन्वादीनां छंदसि बहुलमुपसंख्यानमिति बहुलवचनाद्यण्। आध्यः। आधीयते मनसि स्थाप्यत इत्याधिः। उपसर्गे घोः किः। पा० ३.३.९२.। आतो लोप इटि चेत्याकारलोपः। जसादिषु छंदसि वावचनमिति जसि चेति गुणस्य विकल्पनादभावे यणादेशः। तृष्णजं। तृष पिपासायां। [illegible] । पा० ३.२.१७२.। इति नजिङ्। पदकारस्त्वेवं मन्यते। अन्येष्वपि दृश्यत इति दृशिग्रहणस्य सर्वोपाधिव्यभिचा[illegible]पि जनेर्डप्रत्ययः। तृष्णा जाता यस्य। ङ्यापोः संज्ञाछंदसोर्बहुलमिति ह्रस्वत्वं॥

सं मा॑ तपंत्य॒भितः॑ स॒पत्नी॑रिव॒ पर्श॑वः।
मूषो॒ न शि॒श्ना व्य॑दंति मा॒ध्यः॑ स्तो॒तारं॑ ते शतक्रतो वि॒त्तं मे॑ अ॒स्य रो॑दसी ॥८॥

सं । मा । तपंति । अभितः । सपत्नीःऽइव । पर्शवः ।
मूषः । न । शिश्ना । वि । अदंति । मा । आऽध्यः । स्तोतारं । ते । शतक्रतो इति शतऽक्रतो । वित्तं । मे । अस्य । रोदसी इति ॥ ८ ॥

ऐंद्र्येषा । हे इंद्र पर्शवः पार्श्वास्थीनि अत्र सामर्थ्यात्पर्शुस्थानीयाः कूपभित्तयो मा मामभितः सर्वतः सं तपंति । सम्यक् पीडयंति । तत्र दृष्टांतः । सपत्नीरिव । समान एकः पतिर्यासां ताः सपत्न्यो यथैकं पतिमभितः पीडयंति । परस्परं वा पीडयंति । हे शतक्रतो बहुविधकर्मन् बहुविधप्रज्ञ वेंद्र ते तव स्तोतारं मामाध्योऽसंपद्यमानैर्यागदानादिभिरुत्पादिता मानस्यः पीडा व्यदंति । विविधं भक्षयंति । तत्र दृष्टांतः । मूषो न यथा मूषिकाः शिश्ना शिश्नानि कुविंदेन वायितान्यन्नरसेनालिप्तानि सूत्राणि भक्षयंति । यद्वा । शिश्नशब्देन प्रजननमेवोच्यते । तत्रोपचारात्पुच्छे वर्तते । यथा स्वकीयानि पुच्छानि घृततैलादिभांडे प्रक्षिप्योर्ध्वमुत्कृष्य व्यदंति । लिहंतीत्यर्थः । एवं मामाधयो भक्षयंति । न चैतत् हे इंद्र तव स्तोतुर्न्याय्यं । तस्मात्कूपान्मामुत्तारय । अन्यत्समानं । अत्र निरुक्तं । संतपंति मामभितः सपत्न्य इवेमाः पर्शवः कूपपर्शवो मूषिका इवास्नातानि सूत्राणि व्यदंति । स्वांगाभिधानं वा स्यात् । शिश्नानि व्यदंतीति । नि॰ ४. ६. । इति । सपत्नीः । नित्यं सपत्न्यादिषु । पा॰ ४. १. ३५. । इति पतिशब्दस्य नकारांतादेशः । ङीप् । वा छंदसीति पूर्वसवर्णदीर्घत्वं । मूषः । मुष स्तेये । क्विपि च्छांदसो दीर्घः । तथा च यास्कः । मूषो मूषिका इत्यर्थो मूषिकाः पुनर्मुष्णातेर्मूषोऽप्येतस्मादेव । नि॰ ४. ५. । इति । शिश्ना । ष्णा शौचे । घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थमिति कः । वर्णव्यापत्त्या सकारस्य शकारः । छन्दादीनां के द्वे भवत इति वक्तव्यं । का॰ ६. १. १२. १. । इति द्विर्वचनं । बहुलं छंदसीत्यभ्यासस्येत्वं ॥

अमी ये सप्त रश्मयस्तत्रा मे नाभिरातता ।
त्रितस्तद्वेदाप्त्यः स जामित्वाय रेभति वित्तं मे अस्य रोदसी ॥ ९ ॥
अमी इति । ये । सप्त । रश्मयः । तत्र । मे । नाभिः । आऽतता ।
त्रितः । तत् । वेद । आप्त्यः । सः । जामिऽत्वाय । रेभति । वित्तं । मे । अस्य । रोदसी इति ॥ ९ ॥

येऽमी द्युलोके वर्तमानाः सप्तसंख्याका रश्मयः सूर्यस्य किरणाः संति तत्र तेषु सूर्यरश्मिष्वध्यात्मं सप्तप्राणरूपेण वर्तमानेषु मे मदीया नाभिराततां संबद्धा । ऋषिरात्मानमेव परोक्षतया निर्दिशति । त्रितस्तीर्णतमस्तिरस्कृताज्ञान आप्त्योऽपां पुत्र ऋषिस्तत्पूर्वोक्तं वृत्तांतं वेद । जानाति । नान्यः । स जानन्नृषिर्जामित्वाय कूपान्निर्गंतृत्वाय रेभति । तान् रश्मीन् स्तौति । अन्यत्समानं ॥ आतता । तनोतेः कर्मणि निष्ठा । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । जामित्वाय । जमतिर्गतिकर्मा । जमति गच्छतीति जामिः । औणादिक इण्प्रत्ययः । तस्य भावस्तत्त्वं । रेभति । रेभृ शब्दे । भौवादिकः ॥

अमी ये पंचोक्षणो मध्ये तस्थुर्महो दिवः ।
देवत्रा नु प्रवाच्यं सध्रीचीना नि वावृतुर्वित्तं मे अस्य रोदसी ॥ १० ॥
अमी इति । ये । पंच । उक्षणः । मध्ये । तस्थुः । महः । दिवः ।
देवऽत्रा । नु । प्रऽवाच्यं । सध्रीचीनाः । नि । ववृतुः । वित्तं । मे । अस्य । रोदसी इति ॥ १० ॥

उक्षणः सेक्तारः कामाभिवर्षकाः पंच । तत्र इंद्रं वरुणमस्तदमिस्तदर्यमा तत्सविता चनो धात् । ऋ॰ १. १०७. ३. । इत्यर्धर्चेन प्रतिपादिताः पंचसंख्याका देवाः । यद्वा । अग्निर्वायुः सूर्यश्चंद्रमा विद्युदित्येवं पंचसंख्याकाः । तथा च शाट्यायनकं । एतान्येव पंच ज्योतींषि यान्येषु लोकेषु दीप्यंते । अग्निः पृथिव्यां वायुरंतरिक्षे च आदित्यो दिवि चंद्रमा नक्षत्रे विद्युदप्स्विति । नक्षत्रे नक्षत्रलोके । अप्सु मेघस्थोदके । तैत्तिरीयेऽप्येवमाम्नातं । अग्निः

पृथिव्यां वायुरंतरिक्षे सूर्यो दिवि चंद्रमा दिक्षु नक्षत्राणि स्वर्लोक इति। येऽमी पंचसंख्याका देवा महो दिवो महतो विस्तीर्णस्य द्युलोकस्य मध्ये तस्थुः तिष्ठंति आसते देवत्रा देवेषु नु क्षिप्रं प्रवाच्यं प्रशंसनीयं देवानां योग्यं मदीयं स्तोत्रं प्रति सध्रीचीनाः सहांचंतो युगपदागच्छंतस्ते देवा मदीयं परिचरणं स्वीकुर्वंति। तदनंतरं नि ववृतुः। तृप्ताः संतो निवर्तंते च। अन्यत्समानं॥ उक्षणः। वा षपूर्वस्य निगम इत्युपधादीर्घाभावः। देवत्रा। देवमनुष्येत्यादिना सप्तम्यर्थे त्राप्रत्ययः। प्रवाच्यं। वाचयतेरचो यदिति यत्। णेरनिटीति णिलोपः। यतोऽनाव इत्याद्युदात्तत्वे कृदुत्तरपदप्रकृतिस्वरत्वं। सध्रीचीनाः। सहांचंतीति सध्र्यंचः। त एव सध्रीचीनाः। सहपूर्वादंचतेर्ऋत्विगित्यादिना क्विन्। अनिदितामिति नलोपः। सहस्य सध्रिः। पा° ६. ३. ९५.। इति सध्र्यादेशः। विभाषांचेरदिक्स्त्रियामिति स्वार्थे खप्रत्ययः। ववृतुः। वृतु वर्तने। छंदसि लुङ्लङ्लिट इति वर्तमाने लिट्। व्यत्ययेन परस्मैपदं। अन्येषामपि दृश्यत इति संहितायामभ्यासस्य दीर्घत्वं॥ ॥२१॥

सुपर्णा एत आसते मध्य आरोधने दिवः।
ते सेधंति पथो वृकं तरंतं यह्वतीरपो वित्तं मे अस्य रोदसी॥११॥
सुऽपर्णाः। एते। आसते। मध्ये। आऽरोधने। दिवः।
ते। सेधंति। पथः। वृकं। तरंतं। यह्वतीः। अपः। वित्तं। मे। अस्य। रोदसी इति॥११॥

सुपर्णाः। रश्मिनामैतत्। शोभनपतना एते सूर्यरश्मय आरोधने सर्वस्यावरके व्याप्ते दिवोऽंतरिक्षस्य मध्य आसते। वर्तंते। ते सूर्यरश्मयः पथो मार्गाद्वृकमरण्यश्वानं सेधंति। निषेधंति। निवारयंति। कीदृशं। यह्वतीर्महतीरपस्तरंतमतिक्रामंतं। कूपपतनात्पूर्वं त्रितं दृष्ट्वैनं भक्षयितुं कश्चिदरण्यश्वा महतीं नदीं तितीर्षुराजगाम। स च सूर्यरश्मीन्दृष्ट्वायमवसरो न भवतीति निववृते। अतो रश्मयो वृकं निषेधंतीत्युच्यते। यास्कपक्षे त्वाप इत्यंतरिक्षनाम। यह्वतीरपो महदंतरिक्षं पथः पथा द्वादशराश्यात्मना मार्गेण तरंतं वृकं चंद्रमसं सूर्यरश्मयो निषेधंति। अहनि हि सूर्यरश्मिभिर्निरुद्धश्चंद्रमा निष्प्रभो दृश्यते। अतो निष्प्रभं कुर्वंतीत्यर्थः॥ आरोधने। आरुध्यत आव्रियतेऽनेनेत्यारोधनं। करणे ल्युट्। सेधंति। षिधु गत्यां। अयं केवलोऽपि निपूर्वार्थे द्रष्टव्यः। पथः। पंचम्येकवचने भस्य टेर्लोप इति टिलोपः। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं। यास्कपक्षे तु तृतीयार्थे व्यत्ययेन पंचमी। यह्वतीः। यह्व इति महन्नाम। अस्मादाचारार्थे सर्वप्रातिपदिकेभ्यः। म° ३. १. ११. ३.। इति क्विप्। ततो लटः शतृ। उगितश्चेति ङीप्। आगमानुशासनस्यानित्यत्वान्नुमभावः। शतुरनुम इति नदीस्वरो व्यत्ययेन न प्रवर्तते॥

नव्यं तदुक्थ्यं हितं देवासः सुप्रवाचनं।
ऋतमर्षंति सिंधवः सत्यं तातान सूर्यो वित्तं मे अस्य रोदसी॥१२॥
नव्यं। तत्। उक्थ्यं। हितं। देवासः। सुऽप्रवाचनं।
ऋतं। अर्षंति। सिंधवः। सत्यं। ततान। सूर्यः। वित्तं। मे। अस्य। रोदसी इति॥१२॥

हे देवासो देवा नव्यं नवतरमुक्थ्यं प्रशस्यं स्तुत्यर्हं सुप्रवाचनं सुष्ठु ऋत्विग्भिर्वाचयितुं शक्यं एवंभूतं तद्भवदीयं बलं हितं। युष्मासु निहितं। अतो युष्मदीयेन बलेन सिंधवः स्यंदनशीला नद्य ऋतमुदकमर्षंति। आलस्यराहित्येन सर्वदा प्रेरयंति। अशोष्याः सत्यः प्रवहंतीत्यर्थः। तथा सूर्यः सत्यं सर्वदा विद्यमानं स्वकीयं तेजस्ततान। आतनोति। विस्तारयति। अन्यत्समानं॥ सुप्रवाचनं। वच परिभाषणे। अस्मात्ण्यंतादन्येभ्योऽपि दृश्यत इति खलर्थे युच्। अर्षंति। अर्तेर्लेटि सिब्बहुलं लेटीति सिप्। गुणः। ततान। अन्येषामपि दृश्यत इति संहितायामभ्यासस्य दीर्घत्वं॥

अग्ने तव त्यदुक्थ्यं देवेष्वस्त्याप्यं।
स नः सत्तो मनुष्वदा देवान्यक्षि विदुष्टरो वित्तं मे अस्य रोदसी॥१३॥

अग्ने । तव । त्यत् । उक्थ्यं । देवेषु । अस्ति । आप्यं ।
सः । नः । सत्तः । मनुष्वत् । आ । देवान् । यक्षि । विदुःऽतरः । वित्तं । मे । अस्य । रोदसी इति ॥१३॥

हे अग्ने तवोक्थ्यं प्रशस्यं त्यत् श्रुतिप्रसिद्धमाप्यं । आपिर्बंधुः । तस्य भावः । बांधवं देवेषु दानादिगुणयुक्तेष्विंद्रादिष्वस्ति । विद्यते । तस्मात्स तादृशो विदुष्टरो विद्वत्तरस्त्वं नोऽस्माकं यज्ञे सत्तो निषण्णः सन्देवांस्तानिंद्रादीना शास्त्रमर्यादया यक्षि । यज । हविर्भिः पूजय । तत्र दृष्टांतः । मनुष्वत् । यथा मनूनां यज्ञे तद्वत् । अन्यत्पूर्ववत् ॥ आप्यं । आप्लृ व्याप्तौ । अस्मास्यंतादच इरितीप्रत्ययः । ब्राह्मणादित्वात् ष्यञ् । सत्तः । नसत्तनिषत्तेति निपातनान्निष्ठानत्वाभावः । छांदसो निशब्दलोपो द्रष्टव्यः । मनुष्वत् । मनेरौणादिक उसिप्रत्ययः । तत्र तस्येवेति षष्ठ्यर्थे वतिः । नभोऽंगिरोमनुषां वत्युपसंख्यानं । पा० १. ४. १८. ३. । इति भत्वेन पदत्वाभावाद्रुत्वाद्यभावः । यक्षि । बहुलं छंदसीति शपो लुक् । व्रश्चादिषत्वे कुत्वं । विदुष्टरः । विद्वःशब्दात्तरप्प्रत्ययस्यायादित्वेन भत्वाद्वसोः संप्रसारणमिति संप्रसारणं । शासिवसिघसीनां चेति षत्वं ॥

सत्तो होता मनुष्वदा देवाँ अच्छा विदुष्टरः ।
अग्निर्हव्या सुषूदति देवो देवेषु मेधिरो वित्तं मे अस्य रोदसी ॥१४॥
सत्तः । होता । मनुष्वत् । आ । देवान् । अच्छ । विदुःऽतरः ।
अग्निः । हव्या । सुसूदति । देवः । देवेषु । मेधिरः । वित्तं । मे । अस्य । रोदसी इति ॥१४॥

मनुष्वत् मनोरिवास्माकं यज्ञे सत्तो निषण्णो होता देवानामाह्वाता विदुष्टरो विद्वत्तरो देवो दानादिगुणयुक्तो देवेषु सर्वेष्विंद्रादिषु मध्ये मेधिरो मेधावी एवंभूतोऽग्निस्तान्देवानच्छाभिमुख्येन हव्या हव्यान्यस्मदीयानि हवींषि । मर्यादायामाकारः । शास्त्रमर्यादया यथाशास्त्रं सुषूदति । प्रेरयतु । अन्यत्समानं ॥ सुषूदति । षूद क्षरणे । लेट्यडागमः । बहुलं छंदसीति शपः श्लुः । मेधिरः । मेधारथाभ्यामिरन्निरचौ वक्तव्यौ । पा० ५. २. १०९. ३. । इति मत्वर्थीय इरन् ॥

ब्रह्मा कृणोति वरुणो गातुविदं तमीमहे ।
व्यूर्णोति हृदा मतिं नव्यो जायतामृतं वित्तं मे अस्य रोदसी ॥१५॥
ब्रह्म । कृणोति । वरुणः । गातुऽविदं । तं । ईमहे ।
वि । ऊर्णोति । हृदा । मतिं । नव्यः । जायतां । ऋतं । वित्तं । मे । अस्य । रोदसी इति ॥१५॥

यो वरुणोऽनिष्टस्य निवारयिता देवो ब्रह्म परिवृढं तद्रक्षणरूपं कर्म कृणोति करोति तं तादृशं गातुविदं गातोर्मार्गस्य दुःखनिवारकस्य लंभयितारं वरुणमीमहे । अभिमतफलं याचामहे । ईमह इति याच्ञाकर्मा । तस्मै वरुणायायमस्मदीयः स्तोता हृदा हृदयेन मतिं मननीयां स्तुतिं व्यूर्णोति । विवृणोति । प्रकाशयति । उच्चारयतीत्यर्थः । सोऽयं नव्यः स्तुत्यो वरुणोऽस्माकमृतं जायतां । सत्यभूतोऽस्तु ॥ ब्रह्म । अन्येषामपि दृश्यत इति सांहितिको दीर्घः । गातुविदं । विद्लृ लाभे । अंतर्भावितण्यर्थात् क्विप् । ईमहे । ईङ् गतौ । बहुलं छंदसीति विकरणस्य लुक् । हृदा । पद्दन्नित्यादिना हृदयशब्दस्य हृदादेशः ॥ ॥२२॥

असौ यः पंथा आदित्यो दिवि प्रवाच्यं कृतः ।
न स देवा अतिक्रमे तं मर्तासो न पश्यथ वित्तं मे अस्य रोदसी ॥१६॥

असौ । यः । पंथाः । आदित्यः । दिवि । प्रऽवाच्यं । कृतः ।
न । सः । देवाः । अतिऽक्रमे । तं । मर्तासः । न । पश्यथ । वित्तं । मे । अस्य । रोदसी इति ॥१६॥

पंथाः सततगामी । यद्वा । ब्रह्मलोकं गच्छतामुपासकानां मार्गभूतः । सूर्यद्वारेण ते विरजाः प्रयांति ।मुं॰ उ॰ १. २. ११.। इति श्रुतेः । एवंभूतो योऽसावादित्यो दिवि द्युलोके प्रवाच्यं प्रकर्षेण वचनं यथा भवति तथा कृतो निर्मितः । यथा सर्वैः प्राणिभिर्दृश्यते तथा वर्तमान इत्यर्थः । हे देवाः सोऽयमादित्यो युष्माभिरपि नातिक्रमे । अतिक्रमितुं न शक्यः । युष्मज्जीवनस्य तदायत्तत्वात् । सति हि सूर्ये वसंतादयः काला निष्पद्यंते । कालेषु च यागाः क्रियंते । यागेषु च सत्सु भवतां जीवनं । अतो युष्माभिरप्यसौ नातिक्रमितव्यः । एवं च सति हे मर्तासः पापकृतो मनुष्याः तं महानुभावं सूर्यं न पश्यथ । सूर्यं न जानीथः । एतच्च कूपे पातयित्वा निर्गतावेकतद्वितौ प्रति निंदनं । अहमेव मंत्रद्रष्टा तं सूर्यं जानामि पापकृतौ युवां न जानीथ इति ॥ पंथाः । पतॢ गतौ । पतेस्थ चेतीनिप्रत्ययः । पथिमथ्यृभुक्षामादित्यात्वं । इतोऽत्सर्वनामस्थाने ।पा॰ ७. १. ८६.। इत्यत्वमिकारस्य । थो न्थः ।पा॰ ७. १. ८७.। पथिमथोः सर्वनामस्थान इत्याद्युदात्तत्वं । प्रवाच्यं । वक्तेर्ण्यंतादचो यदिति भावे यत् । यतोऽनाव इत्याद्युदात्तत्वं । अतिक्रमे । क्रमु पादविक्षेपे । कृत्यार्थे तवैकेनिति केन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं ॥

त्रितः कूपेऽवहितो देवान्हवत ऊतये ।
तच्छुश्राव बृहस्पतिः कृण्वन्नंहूरणादुरु वित्तं मे अस्य रोदसी ॥१७॥
त्रितः । कूपे । अवऽहितः । देवान् । हवते । ऊतये ।
तत् । शुश्राव । बृहस्पतिः । कृण्वन् । अंहूरणात् । उरु । वित्तं । मे । अस्य । रोदसी इति ॥१७॥

कूपेऽवहितः पातितस्त्रित एतत्संज्ञ ऋषिरूतये रक्षणाय देवान्हवते । स्तुतिभिराकारयति । यदेतत्त्रितस्याह्वानं बृहस्पतिर्बृहतां महतां देवानां रक्षक एतत्संज्ञो देवस्तदाह्वानं शुश्राव । श्रुतवान् । किं कुर्वन् । अंहूरणादंहसः पापरूपादस्मात्कूपपातादुन्नीयोरु विस्तीर्णं शोभनं कृण्वन् कुर्वन् ॥ हवते । ह्वयतेर्लटि बहुलं छंदसीति संप्रसारणं । शब्गुणावादेशाः । ऊतये । ऊतियूतीत्यादिना क्तिन उदात्तत्वं । बृहस्पतिः । तद्बृहतोः करपत्योः ।पा॰ ६. १. १५७.*। इति पारस्करादिषु पाठात् सुट्तलोपौ । उभे वनस्पत्यादिष्विति पूर्वोत्तरपदयोर्युगपत्प्रकृतिस्वरत्वं । अंहूरणात् । अहि गतौ । इदित्त्वान्नुम् । खर्जिपिंज्यादिभ्य ऊरोलचौ ।उ॰ ४. ९०.। इति भाव ऊरप्रत्ययः । दुःखप्राप्तिहेतुभावा गतिरस्यास्तीति पामादिलक्षणो मत्वर्थीयो नः ।पा॰ ५. २. १००.। आङ्पूर्वाद्ध्वतेर्वा रूपमुन्नेयं ॥

अरुणो मा सकृद्वृकः पथा यंतं ददर्श हि ।
उज्जिहीते निचाय्या तष्टेव पृष्ट्यामयी वित्तं मे अस्य रोदसी ॥१८॥
अरुणः । मा । सकृत् । वृकः । पथा । यंतं । ददर्श । हि ।
उत् । जिहीते । निऽचाय्य । तष्टाऽइव । पृष्टिऽआमयी । वित्तं । मे । अस्य । रोदसी इति ॥१८॥

अरुणवर्णो लोहितवर्णो वृकोऽरण्यश्वा सकृदेकवारं पथा यंतं मार्गेण गच्छंतं मां ददर्श हि । दृष्टवान् । हिः पादपूरणः । निचाय्य दृष्ट्वा च मां जिघृक्षुः सन् उज्जिहीते । उद्गच्छति स्म । तत्र दृष्टांतः । तष्टेव पृष्ट्यामयी । यथा तक्षणजनितपृष्ठक्लेशस्तष्टा वर्धकिस्तदपनोदनायोर्ध्वाभिमुखो भवति तद्वत् । हे द्यावापृथिव्यौ

मदीयमिदं दुःखं वित्तं। जानीतं। यद्वा। वृक इति विवृतज्योतिष्कश्चंद्रमा उच्यते। अरुण आरोचमानः कृत्स्नस्य जगतः प्रकाशकः मासकृत् मासार्धमासर्त्वयनसंवत्सरादीन्कालविशेषान्कुर्वन्। तिथिविभागज्ञानस्य चंद्रगत्यधीनत्वात्। स चंद्रमा आकाशमार्गे यंतं गच्छंतं नक्षत्रगणं ददर्श चिरवधारणे। नक्षत्रगणमेव ददर्श न कूपपतितं मामित्यनादरो द्योत्यते। यदि मां पश्येत् उद्धरेत्कूपात्। निचाय्य नक्षत्रगणं दृष्ट्वा चोज्जिहीते। येन नक्षत्रेण संयुज्यते तेन सहोद्गच्छति। न मामभिगच्छतीत्यर्थः। अन्यत्पूर्ववत् ॥ अत्र मासकृदिति यास्क एकं पदं मन्यते शाकल्यस्तु पदद्वयं। तस्मिन्पक्षेऽयमर्थः। दक्षप्रजापतेर्दुहितृभूताः स्वभार्या अश्विन्याद्यास्तारकाः पुनःपुनर्ददर्श। मां सकृदेव पश्यतीति सकृद्दृष्ट्वा चोज्जिहीते। ताराभिः सहोर्ध्वमेव गच्छति। न मां कूपादुत्तारयति। अत इदमनुचितं। हे द्यावापृथिव्यौ मदीयमिमं वृत्तांतं जानीतं॥ अत्र निरुक्तं। वृकश्चंद्रमा भवति विवृतज्योतिष्को वा विकृतज्योतिष्को वा विक्रांतज्योतिष्को वा। अरुण आरोचनो मासकृन्मासानां चार्धमासानां च कर्ता भवति चंद्रमा वृकः पथा यंतं ददर्श नक्षत्रगणमभिजिहीते निचाय्य येन येन योक्ष्यमाणो भवति चंद्रमास्तक्ष्णुवन्निव पृष्ठरोगी। नि० ५. २०.। इति॥ सकृत्। एकस्य सकृच्च। पा० ५. ४. १९.। इति क्रियाभ्यावृत्तिगणने निपातितः। वृकः। वृञ् वरणे। सृवृभूशुषिमुषिभ्यः कित्। उ० ३. ४१.। इति कप्रत्ययः। जिहीते। ओहाङ् गतौ। जुहोत्यादिकः। भृञामिदित्यभ्यासस्येत्वं। निचाय्य। चायृ पूजानिशामनयोः। अत्र दर्शनार्थो धातूनामनेकार्थत्वात्। समासेऽनञ्पूर्वे क्त्वो ल्यप्। पृष्ट्यामयी। स्पृश संस्पर्शने। स्पृश्यतेऽनेनेति स्पृष्टिः। छांदसो वर्णलोपः। पृष्टावामयः पृष्ट्यामयः। तद्वान् पृष्ट्यामयी॥

एनांगूषेण वयमिंद्रवंतोऽभि ष्याम वृजने सर्ववीराः।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः॥१९॥

एना। आंगूषेण। वयं। इंद्रऽवंतः। अभि। स्याम। वृजने। सर्वऽवीराः।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः॥१९॥

एनानेनांगूषेणाघोषणयोग्येन स्तोत्रेण हेतुभूतेनेंद्रवंतोऽनुग्राहकेणेंद्रेण युक्ताः सर्ववीराः सर्वैर्वीरैः पुत्रैः पौत्रादिभिर्श्चोपेताः संतो वयं वृजने संग्रामेऽभि ष्याम। शत्रूनभिभवेम। तदिदमस्मदीयं वचनं मित्रादयो ममहंतां। पूजयंतु। पालयंत्वित्यर्थः। उतशब्दो देवतासमुच्चये। अत्र यास्कः। आंगूषः स्तोम आघोषः। अनेन स्तोमेन वयमिंद्रवंतः। नि० ५. ११.। इति॥ एना। द्वितीयाटौस्स्वेनः। पा० २. ४. ३४.। इति तृतीयायामिदम एनादेशः। सुपां सुलुगिति विभक्तेराजादेशः। चित्स्वरेणांतोदात्तत्वं। आंगूषेण। आङ्पूर्वाद्घुषेः कर्मणि घञ्। आङो ङकारलोपाभावश्छांदसः। घोषशब्दस्य गूषभावश्च पृषोदरादित्वात्। थाथादिनोत्तरपदांतोदात्तत्वं। स्याम। अस्तेः प्रार्थनायां लिङि श्नसोरल्लोप इत्यकारलोपः। उपसर्गप्रादुर्भ्यामस्तिर्यच्परः। पा० ८. ३. ८७.। इति षत्वं॥ ॥२३॥ ॥१५॥

षोडशेऽनुवाके दश सूक्तानि। तत्रेंद्रमिति सप्तर्चं प्रथमं सूक्तं। अत्रानुक्रम्यते। इंद्रं मित्रं सप्त त्रिष्टुबंतमिति। अनुवर्तमानत्वात्कुत्स ऋषिः। त्रितस्तु वाविशिष्टत्वात्तत्रैव विकल्पितो नानुवर्तते। अंत्या त्रिष्टुप्। शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः। विश्वे देवा देवतेत्युक्तं॥ विनियोगो लैंगिकः॥

इंद्रं मित्रं वरुणमग्निमूतये मारुतं शर्धो अदितिं हवामहे।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन॥१॥

इंद्रं। मित्रं। वरुणं। अग्निं। ऊतये। मारुतं। शर्धः। अदितिं। हवामहे।
रथं। न। दुःऽगात्। वसवः। सुऽदानवः। विश्वस्मात्। नः। अंहसः। निः। पिपर्तन॥१॥

ऊतये रक्षणाय वयमिंद्रादीन्मारुतं शर्धो मरुत्समूहरूपं बलं च हवामहे। आह्वयामहे। वसवो निवासयितारः सुदानवः शोभनदाना इंद्रादयो विश्वस्मात्सर्वस्मादंहसः पापान्नोऽस्मान्निष्पिपर्तन। निर्गमय्य पालयत।

तत्र दृष्टांतः। रथं न दुर्गात्। गंतुमशक्यान्निम्नोन्नतात्स्थानात्सारथयो यथा रथं पालयंति तद्वत् ॥ पिपर्तन। पृ इत्येके। लोटि तप्तनप्तनथनाश्चेति तस्य तनबादेशः। पित्त्वेन ङित्त्वाभावाद्गुणः। अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं ॥

त आ॑दि॒त्या आ ग॑ता स॒र्वता॑तये भू॒त दे॑वा वृत्र॒तूर्ये॑षु श॒म्भुवः॑।
रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ २॥
ते। आ॒दि॒त्याः। आ। ग॒त॒। स॒र्वऽता॑तये। भू॒त। दे॒वाः। वृ॒त्र॒ऽतूर्ये॑षु। श॒म्ऽभुवः॑।
रथ॑म्। न। दुः॒ऽगात्। व॒स॒वः॒। सु॒ऽदा॒न॒वः॒। विश्व॑स्मात्। नः॒। अंह॑सः। निः। पि॒प॒र्त॒न॒ ॥ २॥

हे आदित्या अदितेः पुत्रा देवाः ते यूयं सर्वतातये सर्वैर्वीरपुरुषैस्तताय विस्तारिताय युद्धाय। युद्धेऽस्माकं साहाय्यं कर्तुमित्यर्थः। आ गत। आगच्छत। अपि च वृत्रतूर्येषु। संग्रामनामैतत्। संग्रामेषु शंभुवः सुखस्य भावयितारो भूत। भवत ॥ गत। गमेर्लोटि बहुलं छंदसीति शपो लुक् ॥

अव॑न्तु नः पि॒तरः॑ सुप्रवाच॒ना उ॒त दे॒वी दे॒वपु॑त्रे ऋता॒वृधा॑।
रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ ३॥
अव॑न्तु। नः॒। पि॒तरः॑। सु॒ऽप्र॒वा॒च॒नाः। उ॒त। दे॒वी इति॑। दे॒वपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे। ऋ॒त॒ऽवृधा॑।
रथ॑म्। न। दुः॒ऽगात्। व॒स॒वः॒। सु॒ऽदा॒न॒वः॒। विश्व॑स्मात्। नः॒। अंह॑सः। निः। पि॒प॒र्त॒न॒ ॥ ३॥

नोऽस्मान्पितरोऽग्निष्वात्तादयोऽवंतु। रक्षंतु। कीदृशाः। सुप्रवाचनाः सुखेन प्रवक्तुं स्तोतुं शक्याः। उतापि च देवपुत्रे देवाः सर्वे पुत्रस्थानीया ययोस्ते ऋतावृधा ऋतस्य सत्यस्य यज्ञस्य वा वर्धयित्र्यौ देवी देवनादिगुणयुक्ते द्यावापृथिव्यावस्मान्रक्षतां। अन्यत्समानं ॥ देवी। वा छंदसीति पूर्वसवर्णदीर्घत्वं। ऋतावृधा। वृधेरंतर्भावितण्यर्थात् क्विप्। सुपां सुलुगिति विभक्तेराकारः ॥

न॒रा॒शंसं॑ वा॒जिनं॑ वा॒जय॑न्नि॒ह क्ष॒यद्वी॑रं पू॒षणं॑ सु॒म्नैरी॑महे।
रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ ४॥
न॒रा॒शंसं॑। वा॒जिन॑म्। वा॒जय॑न्। इ॒ह। क्ष॒यत्ऽवी॑रम्। पू॒षण॑म्। सु॒म्नैः। ई॒म॒हे॒।
रथ॑म्। न। दुः॒ऽगात्। व॒स॒वः॒। सु॒ऽदा॒न॒वः॒। विश्व॑स्मात्। नः॒। अंह॑सः। निः। पि॒प॒र्त॒न॒ ॥ ४॥

नराशंसं नरैः शंसनीयं वाजिनमन्नवंतमग्निं वाजयन् उपवाजयन् प्रज्वलयन्निहास्मिन्काले स्तौमीति शेषः। तथा क्षयद्वीरमतिबलिनं यस्मिन्सर्वे वीराः क्षीयंते एवंरूपं पूषणं पोषकं देवं सुम्नैः सुखकरैः स्तोत्रैर्हेतुभूतैरीमहे। याचामहे। अभीष्टं प्रार्थयामहे ॥ नराशंसं। उभे वनस्पत्यादिष्विति युगपदुभयपदप्रकृतिस्वरत्वं। नरशब्द ऋदोरबित्यबंत आद्युदात्तः। निपातनाद्दीर्घः। शंसशब्दो घञंत आद्युदात्तः। वाजयन्। वज व्रज गतौ। अस्माण्णिच्। क्षयद्वीरं। क्षि क्षये। लटः शतृ। शपि प्राप्ते व्यत्ययेन शः। तस्य छंदस्युभयथेत्यार्धधातुकत्वेन ङित्त्वाभावाद्गुणायादेशौ। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे विकरणस्वरः। अतो गुण इति पररूपत्व एकादेश उदात्तेनोदात्त इत्येकादेश उदात्तः। क्षयंतो वीरा यस्मिन्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

बृह॑स्पते॒ सद॒मिन्नः॑ सु॒गं कृ॑धि॒ शं योर्यत्ते॒ मनु॑र्हितं॒ तदी॑महे।
रथं॒ न दु॒र्गाद्व॑सवः सुदानवो॒ विश्व॑स्मान्नो॒ अंह॑सो॒ निष्पि॑पर्तन ॥ ५॥

बृहस्पते। सदं। इत्। नः। सुऽगं। कृधि। शं। योः। यत्। ते। मनुःऽहितं। तत्। ईमहे।
रथं। न। दुःऽगात्। वसवः। सुऽदानवः। विश्वस्मात्। नः। अंहसः। निः। पिपर्तन ॥५॥

बृहस्पते सदमित् सदैवा नोऽस्माकं सुगं। सुखनामैतत्। सुखं कृधि। कुरु। अपि च ते तव स्वभूतं शं शमनीयानां रोगाणामुपशमनं योः पृथक्कर्तव्यानां भयानां यावनं पृथक्करणं मनुर्हितं मनुना ब्रह्मणा हितं त्वय्यवस्थापितं। यद्वा। मनुष्याणामनुकूलं। एवंविधं शमनं यावनं च यदस्ति तदीमहे। याचामहे ॥ सुगं। सुष्ठु गम्यतेऽस्मिन्निति सुगं। सुदुरोरधिकरण इति गमेर्डः। शं योरित्येतत्पदद्वयं यास्केनैवं व्याख्यातं। शमनं च रोगाणां यावनं च भयानां। नि० ४. २१.। इति। मनुर्हितं। मनेरौणादिक उसिन्प्रत्ययः। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं ॥

इंद्रं कुत्सो वृत्रहणं शचीपतिं काटे निबाळ्ह ऋषिरह्वदूतये।
रथं न दुर्गाद्वसवः सुदानवो विश्वस्मान्नो अंहसो निष्पिपर्तन ॥६॥
इंद्रं। कुत्सः। वृत्रऽहनं। शचीऽपतिं। काटे। निऽबाळ्हः। ऋषिः। अह्वत्। ऊतये।
रथं। न। दुःऽगात्। वसवः। सुऽदानवः। विश्वस्मात्। नः। अंहसः। निः। पिपर्तन ॥६॥

काट इति कूपनाम। तस्मिन्निबाळ्हो निपातितः कुत्स ऋषिरूतये रक्षणायेंद्रमह्वत्। आह्वयति स्म। कीदृशं। वृत्रहणं वृत्राणां शत्रूणां हंतारं शचीपतिं। शचीति कर्मनाम। सर्वेषां कर्मणां पालयितारं। यद्वा। शच्या देव्या भर्तारं ॥ शचीपतिं। वनस्पत्यादिषु पाठादुभयपदप्रकृतिस्वरत्वं। शचीशब्दः शार्ङ्गरवादिङीनंत आद्युदात्तः। निबाळ्हः। बाहृ प्रयत्ने। नीत्युपसर्गवशात्पतने वर्तते। निष्ठायामनित्यमागमशासनमितीडभावः। ढत्वधत्वादीनि। यद्वा। क्षुब्धस्वांतेत्यादौ। पा० ७. २. १८.। भृशार्थ इडभावो निपात्यते। अत्र च बाढशब्दो भृशत्वोपेते पतने सामर्थ्याद्वर्तते। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। अह्वत्। लिपिसिचिह्वश्च। पा० ३. १. ५३.। इति लुङि च्लेरङादेशः। आतो लोप इटि चेत्याकारलोपः ॥

देवैर्नो देव्यदितिर्नि पातु देवस्त्राता त्रायतामप्रयुच्छन्।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥७॥
देवैः। नः। देवी। अदितिः। नि। पातु। देवः। त्राता। त्रायतां। अप्रऽयुच्छन्।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः ॥७॥

देवी दानादिगुणयुक्तादितिरखंडनीयादीना वा देवमाता देवैर्दानादिगुणयुक्तैः स्वकीयैः पुत्रैः सह नोऽस्मान्नि पातु। नितरां रक्षतु। देवो दीप्यमानस्त्राता सर्वेषां रक्षकः सविताप्रयुच्छन् अप्रमाद्यन् अस्मद्रक्षणे जागरूकः सन् त्रायतां। अस्मान्पालयतु। यदनेन सूक्तेनास्माभिः प्रार्थितं नोऽस्मदीयं तन्मित्रादयः षड्देवता ममहंतां। पूजयंतु ॥ त्रायतां। त्रैङ् पालने। भौवादिकः। अप्रयुच्छन्। युच्छ प्रमादे। अस्माल्लटः शतृ। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं ॥ ॥२४॥

यज्ञो देवानामिति तृचं द्वितीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभं वैश्वदेवं। यज्ञस्तृचमित्यनुक्रांतं ॥ विनियोगो लैंगिकः ॥

यज्ञो देवानां प्रत्येति सुम्नमादित्यासो भवता मृळयंतः।
आ वोऽर्वाची सुमतिर्ववृत्यादंहोश्चिद्या वरिवोवित्तरासत् ॥१॥

यज्ञः । देवानां । प्रति । एति । सुम्नं । आदित्यासः । भवत । मृळयंतः ।
आ । वः । अर्वाची । सुऽमतिः । ववृत्यात् । अंहोः । चित् । या । वरिवोवित्ऽतरा ।
असत् ॥ १ ॥

अस्मदीयो यज्ञो देवानामिंद्रादीनां सुम्नं सुखं प्रत्येति । प्राप्नोतु । अपि च हे आदित्यास आदित्या मृळयंतोऽस्मान्सुखयंतो भवत । तथा वो युष्माकं सुमतिः शोभना मतिर्भद्रानुग्रहपरा बुद्धिरर्वाच्यस्मदभिमुख्या ववृत्यात् । आवर्ततां । या मतिरंहोश्चित् दारिद्र्यं प्राप्तस्यापि पुरुषस्य वरिवोवित्तरा । वरिव इति धननाम । अतिशयेन धनस्य लंभयित्र्यसत् भवेत् । सैषा मतिरस्मान्प्रति वर्ततामित्यर्थः ॥ भवत । आमंत्रितं पूर्वमविद्यमानवदित्यादित्यास इति पादादौ वर्तमानस्यामंत्रितस्याविद्यमानवत्त्वेनास्य पादादित्वात् अपादादाविति पर्युदासान्निघाताभावः । मृळयंतः । मृड सुखने । ण्यंताल्लटः शतृ । शप् । छंदस्युभयथेति शतुरार्धधातुकत्वेनाद्धुपदेशाल्लसार्वधातुकानुदात्तत्वाभावे शतुः स्वरः शिष्यते । ववृत्यात् । वृतु वर्तने । लिङि व्यत्ययेन परस्मैपदं । बहुलं छंदसीति शपः श्लुः । अंहोः । अहि गतौ । इदित्वान्नुम् । औणादिक उप्रत्ययः । वरिवोवित्तरा । विद्लृ लाभे । अस्मादंतर्भावितण्यर्थात् क्विप् । तत आतिशायनिकस्तरप् । असत् । अस भुवि । लेट्यडागमः ॥

उप नो देवा अवसा गमंत्वंगिरसां सामभिः स्तूयमानाः ।
इंद्र इंद्रियैर्मरुतो मरुद्भिरादित्यैर्नो अदितिः शर्म यंसत् ॥ २ ॥
उप । नः । देवाः । अवसा । आ । गमंतु । अंगिरसां । सामऽभिः । स्तूयमानाः ।
इंद्रः । इंद्रियैः । मरुतः । मरुत्ऽभिः । आदित्यैः । नः । अदितिः । शर्म । यंसत् ॥ २ ॥

देवा दानादिगुणयुक्ताः सर्वे देवा अवसा रक्षणेनास्मभ्यं दातव्येनान्नेन वा युक्ता नोऽस्मान् स्तोतॄनुपागमंतु । उपागच्छंतु । प्राप्नुवंतु । कथंभूताः । अंगिरसामेतत्संज्ञकानामृषीणां संबंधिभिः सामभिः प्रगीतैर्मंत्रैः स्तूयमानाः । अपि चेंद्र इंद्रियैः । धननामैतत । स्वसंबंधिभिरस्मभ्यं दातव्यैर्धनैः सहास्मानागच्छतु । तथा मरुतः सप्तगणरूपा एकोनपंचाशत्संख्याका ईदृङ् चान्यादृङ् चेत्येवमादिनामानो देवा मरुद्भिः स्वावयवभूतैः प्राणापानादिरूपेण वर्तमानैर्वायुभिः सहास्मानागच्छंतु । तथादितिरखंडनीयादीना वा देवमातादित्यैः स्वकीयैः पुत्रैः सह नोऽस्मभ्यं शर्म सुखं यंसत् । यच्छतु ॥ गमंतु । लोटि बहुलं छंदसीति शपो लुक् । छंदस्युभयथेति श्लेरार्धधातुकत्वेन ङित्त्वाभावाद्गमहनेत्यादिनोपधालोपाभावः । यंसत् । यम उपरमे । लेट्यडागमः । सिब्बहुलं लेटीति सिप् ॥

तन्न इंद्रस्तद्वरुणस्तदग्निस्तदर्यमा तत्सविता चनो धात् ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ ३ ॥
तत् । नः । इंद्रः । तत् । वरुणः । तत् । अग्निः । तत् । अर्यमा । तत् । सविता । चनः । धात् ।
तत् । नः । मित्रः । वरुणः । ममहंतां । अदितिः । सिंधुः । पृथिवी । उत । द्यौः ॥ ३ ॥

यदस्माभिः प्रार्थ्यमानमन्नमस्ति । चन इत्यन्ननाम । तत्तादृशं चनोऽन्नं नोऽस्मभ्यमिंद्रो धात् । दधातु । ददातु । एवं तद्वरुण इत्यादावपि योज्यं । तदिदमिंद्रादिभिर्दत्तमस्मदीयमन्नं मित्रादयो ममहंतां । पूजयंतु । पालयंत्वित्यर्थः ॥ चनः । चायृ पूजानिशामनयोः । चायेरन्ने ह्रस्वश्च । उ० ४. १९९. । इत्यसुन् नुडागमश्च धातोर्ह्रस्वत्वं च । वलि लोपः । नित्त्वादाद्युदात्तत्वं । धात् । छंदसि लुङ्लङ्लिट इति प्रार्थनायां लुङ् । गातिस्थेति सिचो लुक् ॥ ॥ २५ ॥

य इंद्राग्नी इति त्रयोदशर्चं तृतीयं सूक्तं कुत्सस्यार्षं त्रैष्टुभमैंद्राग्नं। तथा चानुक्रांतं। य इंद्राग्नी सप्तोनैंद्राग्नं त्विति ॥ विनियोगो लैंगिकः ॥

य इंद्राग्नी चित्रतमो रथो वामभि विश्वानि भुवनानि चष्टे ।
तेना यातं सरथं तस्थिवांसाथा सोमस्य पिबतं सुतस्य ॥१॥
यः। इंद्राग्नी इति। चित्रऽतमः। रथः। वां। अभि। विश्वानि। भुवनानि। चष्टे।
तेन। आ। यातं। सऽरथं। तस्थिऽवांसा। अथ। सोमस्य। पिबतं। सुतस्य ॥१॥

हे इंद्राग्नी चित्रतमोऽतिशयेन चायनीयो वां युवयोः संबंधी यो रथो विश्वानि भुवनानि भूतजातान्यभि चष्टे आभिमुख्येन पश्यति। सुवर्णमयत्वात् रत्नखचितत्वाच्च स्वप्रभाभिः कृत्स्नं जगद्भासयतीत्यर्थः। तेन रथेना यातं। अस्मद्यज्ञमागच्छतं। तत्किं पर्यायेण। नेत्याह। सरथं समानमेकं रथं तस्थिवांसा युगपदेवास्थितवंतौ युवामागच्छतं। न पर्यायेणेत्यर्थः। अथागमनानंतरं सुतस्य ऋत्विग्भिरभिषुतं सोमस्य सोमं स्वांशलक्षणं तदेकदेशं वा पिबतं ॥ वां। युष्मदस्मदोः षष्ठीचतुर्थीत्यादिना। पा॰ ८. १. २०.। षष्ठीद्विवचनस्य वामादेशः। सर्वानुदात्तत्वं। चष्टे। चक्षिङ् व्यक्तायां वाचि। अत्र प्रकाशनार्थः। अदादित्वाच्छपो लुक्। स्कोः संयोगाद्योरिति कलोपः। तास्यनुदात्तेदिति लसार्वधातुकानुदात्तत्वे धातुस्वरः शिष्यते। यद्वृत्तान्नित्यमिति निघातप्रतिषेधः। सरथं। समानश्चासौ रथश्च सरथः। समानस्य च्छंदसीति सभावः। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं। तस्थिवांसा। ष्ठा गतिनिवृत्तौ। लिटः क्वसुः। द्विर्वचनं। शर्पूर्वाः खयः। वस्वेकाजाद्घसामिति इडागमः। आतो लोप इटि चेत्याकारलोपः। सुपां सुलुगित्याकारः। सोमस्य। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी ॥

यावदिदं भुवनं विश्वमस्त्युरुव्यचा वरिमता गभीरं ।
तावाँ अयं पातवे सोमो अस्त्वरमिंद्राग्नी मनसे युवभ्यां ॥२॥
यावत्। इदं। भुवनं। विश्वं। अस्ति। उरुऽव्यचा। वरिमता। गभीरं।
तावान्। अयं। पातवे। सोमः। अस्तु। अरं। इंद्राग्नी इति। मनसे। युवऽभ्यां ॥२॥

विश्वं सर्वमिदं भुवनं जगद्यावदस्ति यावत्प्रमाणं भवति। कीदृशं। उरुव्यचा विस्तीर्णव्यापनं। सर्वव्यापकमित्यर्थः। तथा वरिमता वरिम्णोरुत्वेनात्मीयेन गौरवेण गभीरं गांभीर्योपेतं। हे इंद्राग्नी पातवे युवाभ्यां पातुं सोमस्तावानस्तु। तावत्प्रमाणो भवतु। तथा मनसे युवयोरंतःकरणायारं स सोमः पर्याप्तो भवतु ॥ उरुव्यचा। व्यच व्याजीकरणे। असुन्। व्यचेः कुटादित्वमनसीति वचनात् ङित्त्वाभावेन संप्रसारणाभावः। स्वमोर्नपुंसकात्। पा॰ ७. १. २३.। इति सोर्लुकि प्राप्ते सुपां सुलुगिति व्यत्ययेन डादेशः। वरिमता। पृथ्वादिभ्य इमनिज्वेत्युरुशब्दात्तस्य भाव इत्यर्थ इमनिच्। प्रियस्थिरेत्यादिनोरुशब्दस्य वरादेशः। पुनरपि भावप्रत्ययोत्पत्तिश्छांदसी। सुपां सुलुगिति तृतीयाया लुक्। यद्वा। तृतीयायाश्छांदसस्तुडागमः। तावान्। तत्परिमाणमस्य। यत्तदेतेभ्यः परिमाणे वतुप्। पा॰ ५. २. ३९.। आ सर्वनाम्न इत्यात्वं। पातवे। पा पाने। तुमर्थे सेसेनिति तवेन्प्रत्ययः। नित्त्वादाद्युदात्तत्वं। अरं। वालमूललघ्वलमंगुलीनां वा लो रमापद्यत इति वक्तव्यं। म॰ ८. २. १८.। इति लत्वविकल्पः। युवभ्यां। व्यत्ययेनात्वाभावे शेषे लोप इति दकारलोपः ॥

चक्राथे हि सध्र्य१ङ्नाम भद्रं सध्रीचीना वृत्रहणा उत स्थः ।
ताविंद्राग्नी सध्र्यंचा निषद्या वृष्णः सोमस्य वृषणा वृषेथां ॥३॥
चक्राथे इति। हि। सध्र्यक्। नाम। भद्रं। सध्रीचीना। वृत्रऽहना। उत। स्थः।
तौ। इंद्राग्नी इति। सध्र्यंचा। निऽसद्य। वृष्णः। सोमस्य। वृषणा। आ। वृषेथां ॥३॥

हे इंद्राग्नी भद्रं कल्याणं नाम स्वकीयं नामधेयं सध्र्यक् सहगतमिंद्राग्नी इत्येवं संयुक्तं चक्राथे । युवां कृतवंतौ । उतापि च हे वृत्रहणौ वृत्रस्यासुरस्य हंताराविंद्राग्नी सध्रीचीना सहांचंतौ वृत्रवधार्थं संगतौ स्थः। भवथः । हि यस्मादेवं तस्माद्धि वृषणा कामानां वर्षिताराविंद्राग्नी तौ युवां सध्र्यंचौ सहिताविव संतौ निषद्य वेद्यामुपविश्य वृष्णः सेक्तुः सोमस्यात्मीयं भागमा वृषेथां । स्वकीय उदरे आसिंचेथां ॥ सध्र्यक् । सहशब्दोप-पदादंचतेर्ऋत्विगित्यादिना क्विन् । अनिदितामिति नलोपः । सहस्य सध्रिः । अद्रिसध्र्योरंतोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थं । पा० ६. ३. ९५. १. । इति वचनात्सध्र्यादेशोऽंतोदात्तः । यणादेश उदात्तस्वरितयोर्यण इति स्वरितत्वं । सध्रीचीना । विभाषांचेरदिक्स्त्रियामिति स्वार्थे खः । सुपां सुलुगिति विभक्तेराजादेशः । वृत्रहणौ । संहितायामावादेशे लोपः शाकल्यस्येति वलोपः । वृषेथां । वृष सेचने । व्यत्ययेन श आत्मनेपदं च ॥

समिद्धेष्वग्निष्वानजाना यतस्रुचा बर्हिरु तिस्तिराणा ।
तीव्रैः सोमैः परिषिक्तेभिरर्वागेंद्राग्नी सौमनसाय यातं ॥ ४ ॥
संऽइद्धेषु । अग्निषु । आनजाना । यतऽस्रुचा । बर्हिः । ऊं इति । तिस्तिराणा ।
तीव्रैः । सोमैः । परिऽसिक्तेभिः । अर्वाक् । आ । इंद्राग्नी इति । सौमनसाय । यातं ॥ ४ ॥

अग्निषु गार्हपत्यादिष्वन्वाधानादिना समिद्धेषु सम्यगिद्धेषु दीप्तेषु सत्स्वानजाना हवींष्याज्येनांजंतौ यतस्रुचा तदनंतरं यागार्थं गृहीतस्रुचौ बर्हिरु वेद्यां बर्हिरपि तिस्तिराणा आस्तीर्णं कृतवंतावध्वर्युप्रतिप्रस्था-ताराविवंभूतावभूतां । तथा सति हे इंद्राग्नी तीव्रैः चिप्रं मदकरैः परिषिक्तेभिः परितः सर्वेषु ग्रहचमसादिष्वा-सिक्तैः सोमैर्हेतुभूतैरर्वागस्मदभिमुखमा यातं । आगच्छतं । किमर्थं । सौमनसाय सौमनस्याय । अस्माकमनुग्र-हायेत्यर्थः ॥ आनजाना । अन्जू व्यक्तिम्रक्षणगतिषु । लिटः कानच् । अनिदितामिति नलोपः । द्विर्भावेऽत आदेरित्यभ्यासस्य दीर्घः । तस्मान्नुड्विहल इत्यद्विहलोऽपि व्यत्ययेन नुट् । तिस्तिराणा । स्तृञ् आच्छादने । पूर्ववत्कानच् । ऋत इद्धातोरितीत्वं । द्विर्वचने शर्पूर्वाः खयः । सुपां सुलुगिति विभक्तेराकारः । चित्त्वा-दंतोदात्तत्वं ॥

यानींद्राग्नी चक्रथुर्वीर्याणि यानि रूपाण्युत वृष्ण्यानि ।
या वां प्रत्नानि सख्या शिवानि तेभिः सोमस्य पिबतं सुतस्य ॥ ५ ॥
यानि । इंद्राग्नी इति । चक्रथुः । वीर्याणि । यानि । रूपाणि । उत । वृष्ण्यानि ।
या । वां । प्रत्नानि । सख्या । शिवानि । तेभिः । सोमस्य । पिबतं । सुतस्य ॥ ५ ॥

हे इंद्राग्नी यानि वीर्याणि वृत्रवधादिरूपाणि चक्रथुः कृतवंतौ युवां यानि च रूपाणि निरूप्यमाणानि गवाश्वादीनि भूतजातानि कृतवंतौ । इंद्राग्निभ्यां हि सर्वं जगत्सृज्यते । इंद्रः सूर्यात्मना वृष्टिं सृजत्यग्निश्चाहु-तिद्वारा वृष्ट्युत्पादकः । वृष्टेः सकाशात्सर्वे प्राणिन उत्पद्यंते । उतापि च यानि वृष्ण्यानि वृष्णि भवानि वृष्टिप्रदानादिरूपाणि कर्माणि कृतवंतौ । तथा वां युवयोः संबंधीनि प्रत्नानि चिरंतनानि शिवानि शोभनानि या यानि सख्या सखित्वानि संति । तेभिस्तैः सर्वैः सहितौ युवां सुतस्य सोमस्याभिषुतं सोमं पिबतं ॥ सख्या । सख्युर्भावः सख्यं । सख्युर्य इति यप्रत्ययः । शेश्छंदसि बहुलमिति शेर्लोपः । तेभिः । बहुलं छंदसीति भिस ऐसभावः । साविकाच इति प्राप्तस्य विभक्त्युदात्तत्वस्य न गोश्वन्साववर्णेति प्रति-षेधः ॥ ॥ २६ ॥

यदब्रवं प्रथमं वां वृणानो३यं सोमो असुरैर्नो विहव्यः ।
तां सत्यां श्रद्धामभ्या हि यातमथा सोमस्य पिबतं सुतस्य ॥ ६ ॥

यत्। अब्रवं। प्रथमं। वां। वृणानः। अयं। सोमः। असुरैः। नः। विऽहव्यः।
तां। सत्यां। श्रद्धां। अभि। आ। हि। यातं। अथ। सोमस्य। पिबतं। सुतस्य॥ ६॥

हे इंद्राग्नी प्रथमं कर्मोपक्रम एव वां युवां वृणानः संभजमानो यदब्रवं सोमेन प्रीणयिष्यामीति यदवोचं सत्यां यथार्थां तां श्रद्धां श्रद्धयादरातिशयेन कृतामुक्तिमभ्यभिलक्ष्या हि यातं। आगच्छतमेव नोदासाथां। अथागमनानंतरमभिषुतं सोमं पिबतं। तथा सत्यसुरैर्हविषां प्रक्षेपकैर्ऋत्विग्भिरयं नोऽस्माकं सोमो विहव्यो विशेषेण होतव्यो भवति। इतरथा व्यर्थः स्यात्। तस्मादिंद्राग्नी आगच्छतमित्यर्थः॥ वृणानः। वृङ् संभक्तौ। लटः शानच्। श्नाभ्यस्तयोरात इत्याकारलोपः। असुरैः। असु क्षेपणे। असेरुरन्। उ॰ १. ४३.। इत्युरन्प्रत्ययः। विहव्यः। हु दानादनयोः। अचो यत्। गुणः। धातोस्तन्निमित्तस्यैवेत्यवादेशः। यतोऽनाव इत्याद्युदात्तत्वं। कृदुत्तरपदप्रकृतिस्वरत्वं॥

यदिंद्राग्नी मदथः स्वे दुरोणे यद्ब्रह्मणि राजनि वा यजत्रा।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य॥ ७॥
यत्। इंद्राग्नी इति। मदथः। स्वे। दुरोणे। यत्। ब्रह्मणि। राजनि। वा। यजत्रा।
अतः। परि। वृषणौ। आ। हि। यातं। अथ। सोमस्य। पिबतं। सुतस्य॥ ७॥

यजत्रा यष्टव्यौ हे इंद्राग्नी स्वे दुरोणे स्वकीये गृहे निवासस्थाने यद्यदि मदथः हृष्यथः। यद्यदि वा ब्रह्मणि ब्राह्मणेऽन्यस्मिन्यजमाने हविःस्वीकरणायागत्य हृष्यथः। यदि वा राजनि क्षत्रिये युद्धे साहाय्यं कर्तुमागत्य हृष्यथः। अतः परि परितोऽस्मात्सर्वस्मात्स्थानात् हे वृषणौ कामानां वर्षिताराविंद्राग्नी आ यातं हि। आगच्छतमेव। औदासीन्यं मा कार्ष्ट। अन्यत्पूर्ववत्॥ मदथः। मदी हर्षे। व्यत्ययेन शप्। यजत्रा। अमिनक्षीत्यादिना यजतेः कर्मण्यत्रन्। सुपां सुलुगिति विभक्तेराकारः॥

यदिंद्राग्नी यदुषु तुर्वशेषु यद्द्रुह्युष्वनुषु पूरुषु स्थः।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य॥ ८॥
यत्। इंद्राग्नी इति। यदुषु। तुर्वशेषु। यत्। द्रुह्युषु। अनुषु। पूरुषु। स्थः।
अतः। परि। वृषणौ। आ। हि। यातं। अथ। सोमस्य। पिबतं। सुतस्य॥ ८॥

अत्र यदुष्वित्यादीनि पंच मनुष्यनामानि। हे इंद्राग्नी यद्यदि यदुषु नियतेषु परेषामहिंसकेषु मनुष्येषु स्थः भवथः वर्तेथे। यदि वा तुर्वशेषु हिंसकेषु मनुष्येषु वर्तेथे। यद्यदि वा द्रुह्युषु द्रोहं परेषामुपद्रवमिच्छत्सु मनुष्येषु वर्तेथे। यदि वानुषु प्राणत्सु सफलैः प्राणैर्युक्तेषु ज्ञातृष्वनुष्ठातृषु मनुष्येषु। अन्येषां हि प्राणा निष्फला ज्ञानहीनत्वादनुष्ठानाभावाच्च। तेषु यदि भवथः। तथा पूरुषु कामैः पूरयितव्येष्वन्येषु स्तोतृजनेषु यदि भवथः। अतः सर्वस्मात्स्थानात् हे कामाभिवर्षकाविंद्राग्नी आगच्छतं। अनंतरमभिषुतं सोमं पिबतं॥ यदुषु। यम उपरमे। नियम्यंत इंद्रियाण्येभिरिति यदवः। यमेर्दुक्चेति कुप्रत्ययो दुगागमश्च। अनुदात्तोपदेशेत्यादिनानुनासिकलोपः। तुर्वशेषु। तुर्वी हिंसार्थः। औणादिकोऽशप्रत्ययः। द्रुह्युषु। द्रुह जिघांसायां। संपदादिलक्षणो भावे क्विप्। द्रुहं परेषामिच्छंति। छंदसि परेच्छायामपीति क्यच्। क्याच्छंदसीत्युप्रत्ययः। अनुषु। अन प्राणने। अणश्च। उ॰ १. ८.। इति विधीयमान उप्रत्ययो बहुलवचनादस्मादपि भवति। निदित्यनुवृत्तेरा[illegible]दात्तत्वं। पूरुषु। पूरी आप्यायने। पूर्यंत इति पूरवः। औणादिक उप्रत्ययः॥

यदिंद्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य॥ ९॥

यत्। इंद्राग्नी इति। अवमस्यां। पृथिव्यां। मध्यमस्यां। परमस्यां। उत। स्थः।
अतः। परि। वृषणौ। आ। हि। यातं। अथ। सोमस्य। पिबतं। सुतस्य ॥ ९॥

हे इंद्राग्नी अवमस्यां पृथिव्यां सन्निकृष्टायामस्यां भूम्यां यद्यदि स्थः वर्तमानौ भवथः। यदि वा मध्यमस्यां पृथिव्यामंतरिक्षलोके। अत्र पृथिवीशब्दस्त्रिष्वपि लोकेषु वर्तते। यथा यो द्वितीयस्यां तृतीयस्यां पृथिव्याम-स्यायुषा नाम्नेति। उतापि च परमस्यामुत्कृष्टायां दूरे वर्तमानायां पृथिव्यां द्युलोके यदि वा वर्तेथे। अतः सर्वस्मात्स्थानात् हे वृषणावागच्छतं। आगमानंतरं सुतं सोमं पिबतं ॥ अवमस्यां। अवमशब्दादुत्तरस्य ङेर्व्य-त्ययेन स्याडागमः। एवमुत्तरत्रापि ॥

यदिंद्राग्नी परमस्यां पृथिव्यां मध्यमस्यामवमस्यामुत स्थः।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ १०॥
यत्। इंद्राग्नी इति। परमस्यां। पृथिव्यां। मध्यमस्यां। अवमस्यां। उत। स्थः।
अतः। परि। वृषणौ। आ। हि। यातं। अथ। सोमस्य। पिबतं। सुतस्य ॥ १०॥

पूर्ववद्व्याख्येयं। एतावांस्तु विशेषः। पूर्वं भूम्यादिषु त्रिषु लोकेषु याविंद्राग्नी तावागच्छतामित्युक्तं। इदानीं तु द्युप्रभृतिष्ववरोहक्रमेण वर्तमानेषु त्रिषु लोकेषु याविंद्राग्नी वर्तेते तावागच्छतामिति प्रार्थ्यते ॥

यदिंद्राग्नी दिवि ष्ठो यत्पृथिव्यां यत्पर्वतेष्वोषधीष्वप्सु।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ ११॥
यत्। इंद्राग्नी इति। दिवि। स्थः। यत्। पृथिव्यां। यत्। पर्वतेषु। ओषधीषु। अप्ऽसु।
अतः। परि। वृषणौ। आ। हि। यातं। अथ। सोमस्य। पिबतं। सुतस्य ॥ ११॥

हे इंद्राग्नी दिवि द्युलोके यद्यदि स्थः भवथः। यदि वा पृथिव्यां भूलोके यदि वा पर्वतेषु मेर्वादिषु मेघेषु वा। तथा ओषधीषु तिलमाषव्रीह्यादिष्वप्सूदकेषु चानुग्राहकतया यदि वा स्थः। हे कामाभिवर्षकौ युवामतः सर्वस्मात्स्थानादागच्छतं। आगत्य चाभिषुतं सोमं पिबतं ॥ पृथिव्यां। उदात्तयण इति विभक्तेरुदात्तत्वं। ओषधीषु। ओषः पाक आसु धीयत इति ओषधयः। कर्मण्यधिकरणे चेति किप्रत्ययः। दासीभारादित्वात्पूर्व-पदप्रकृतिस्वरत्वं। तच्च घञंतमाद्युदात्तं। ओषधेश्च विभक्तावप्रथमायामिति दीर्घः ॥

यदिंद्राग्नी उदिता सूर्यस्य मध्ये दिवः स्वधया मादयेथे।
अतः परि वृषणावा हि यातमथा सोमस्य पिबतं सुतस्य ॥ १२॥
यत्। इंद्राग्नी इति। उत्ऽइता। सूर्यस्य। मध्ये। दिवः। स्वधया। मादयेथे इति।
अतः। परि। वृषणौ। आ। हि। यातं। अथ। सोमस्य। पिबतं। सुतस्य ॥ १२॥

हे इंद्राग्नी उदिता उदितस्योदयं प्राप्तस्य सूर्यस्यादित्यस्य संबंधिनो दिवो द्योतमानस्यांतरिक्षस्य मध्ये मध्यभागे स्वधयात्मीयेन तेजसा हविर्लक्षणेनान्नेन वा यद्यस्मात्कारणान्मादयेथे तृप्तौ भवथः तस्मात्कारणादतः सर्वस्मादंतरिक्षभागात् हे कामाभिवर्षकाविंद्राग्नी आगच्छतं। आगमनानंतरमभिषुतं सोमं पिबतं ॥ उदिता। सुपां सुलुगिति षष्ठ्या डादेशः। दिवः। ऊडिदमिति विभक्तेरुदात्तत्वं। मादयेथे। मद तृप्तियोगे। चुरा-दिरात्मनेपदी ॥

एवेंद्राग्नी पपिवांसा सुतस्य विश्वास्मभ्यं सं जयतं धनानि ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥१३॥
एव । इंद्राग्नी इति । पपिऽवांसा । सुतस्य । विश्वा । अस्मभ्यं । सं । जयतं । धनानि ।
तत् । नः । मित्रः । वरुणः । ममहंतां । अदितिः । सिंधुः । पृथिवी । उत । द्यौः ॥१३॥

हे इंद्राग्नी सुतस्याभिषुतं सोममेवैवं पपिवांसा पीतवंतौ युवामस्मभ्यं विश्वा सर्वाणि धनानि सं जयतं। प्रयच्छतं। यदनेन सूक्तेन प्रार्थितं तन्मित्रादयो ममहंतां। पूजयंतु ॥ पपिवांसा । पा पाने । लिटः क्वसुः । वस्वेकाजाद्घसामितीडागमः ॥ ॥२७॥

वि हीत्यष्टर्चं चतुर्थं सूक्तं । अनुक्रांतं च । वि ह्यष्टाविति । ऋष्याद्याः पूर्ववत् ॥ सूक्तविनियोगो लैंगिकः ॥

वि ह्यख्यं मनसा वस्य इच्छन्निंद्राग्नी ज्ञास उत वा सजातान् ।
नान्या युवत्प्रमतिरस्ति मह्यं स वां धियं वाजयंतीमतक्षं ॥१॥
वि । हि । अख्यं । मनसा । वस्यः । इच्छन् । इंद्राग्नी इति । ज्ञासः । उत । वा । सऽजातान् ।
न । अन्या । युवत् । प्रऽमतिः । अस्ति । मह्यं । सः । वां । धियं । वाजऽयंतीं । अतक्षं ॥१॥

हे इंद्राग्नी वस्यः प्रशस्तं धनमिच्छन् कामयमानोऽहं ज्ञासो ज्ञातीन् उत वापि वा सजातान् । समानजन्मानो ज्ञातिव्यतिरिक्ता बांधवाः । तांश्च मनसा बुद्ध्या वि ह्यख्यं । युवामेव ज्ञातिरूपेण बंधुरूपेण च व्यज्ञासिषं । ते हि धनस्य दातारो भवंति । अपि च युवद्युवाभ्यामन्यान्येन केनचिन्मह्यं दत्ता प्रमतिः प्रकृष्टा बुद्धिर्नास्ति । मदीया यैषा प्रकृष्टा बुद्धिः सा युवाभ्यामेव दत्ता । स तादृश्या बुद्ध्या युक्तोऽहं वां युवयोः संबंधिनीं वाजयंतीमन्नमस्मभ्यमिच्छंतीं धियं ध्यानेन निष्पन्नां स्तुतिमतक्षं । अकार्षं ॥ अख्यं । लुङ्यस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङादेशः । वस्यः । वसुशब्दादीयसुन् । टेरिति टिलोपः । छांदस ईकारलोपः । ज्ञासः । सुखदुःखादिकं साम्येन जानंतीति ज्ञासो ज्ञातयः । ज्ञा अवबोधने । औणादिको ऽसुन् । व्यत्ययेन विभक्तेरुदात्तत्वं । युवत् । सुपां सुलुगिति विभक्तेर्लुक् । द्व्यर्थाभिधायकत्वाद्युवावौ द्विवचने । पा॰ ७. २. ९२. । इति युष्मदो मपर्यंतस्य युवादेशः ॥

अश्रवं हि भूरिदावत्तरा वां विजामातुरुत वा घा स्यालात् ।
अथा सोमस्य प्रयती युवभ्यामिंद्राग्नी स्तोमं जनयामि नव्यं ॥२॥
अश्रवं । हि । भूरिदावत्ऽतरा । वां । विऽजामातुः । उत । वा । घ । स्यालात् ।
अथ । सोमस्य । प्रऽयती । युवऽभ्यां । इंद्राग्नी इति । स्तोमं । जनयामि । नव्यं ॥२॥

हे इंद्राग्नी वां युवां भूरिदावत्तरावतिशयेन बहुधनस्य दातारावित्यश्रवं हि । अश्रौषं खलु । कस्मात्पुरुषात् । विजामातुः । श्रुताभिरूप्यादिभिर्गुणैर्विहीनो जामाता यथा कन्यावते बहु धनं प्रयच्छति कन्यालाभार्थं ततोऽप्यतिशयेन दाताराविंद्राग्नी इत्यर्थः । उत वापि च स्यालात् । स्यं शूर्पं । तस्माल्लाजानावपति विवाहकाल इति स्यालः कन्याभ्राता । स यथा भगिनीप्रीत्यर्थं बहु धनं प्रयच्छति ततोऽप्यतिशयेन दाताराविंद्राग्नी । घेति पादपूरणः । तथा च सत्यथानंतरं हे इंद्राग्नी युवाभ्यां सोमस्य प्रयती अभिषुतस्य सोमस्य प्रदानेन सह नव्यं नवतरं प्रत्ययं स्तोमं स्तोत्रं जनयामि । [illegible] । अत्र निरुक्तं । अश्रौषं हि बहुदातृतरौ वां विजामातुरसुसमाप्ताज्जामातुः । विजामातेति शश्वद्दाक्षिणाजाः क्रीतापतिम चक्षतेऽसुसमाप्त इव वरोऽभिप्रेतो जामाता जा अपत्यं तन्निर्माता । उत वा घा स्यालादपि च स्यालात् स्याल आसन्नः संयोगेनेति नैदानाः । स्याल्लाजानावपतीति वा । लाजा लाजतेः स्यं शूर्पं स्यतेः । शूर्पमशनपवनं शृणातेः शृणातेर्वा ।

अथ सोमस्य प्रदानेन युवाभ्यामिंद्राग्नी स्तोमं जनयामि नव्यं नवतरं। नि॰ ६. ९.। इति ॥ अश्रवं। श्रु श्रवणे। लङ्युत्तमपुरुषैकवचने बहुलं छंदसीति विकरणस्य लुक्। भूरिदावत्तरा। डुदाञ् दाने। आतो मनिन्निति वनिप्। अतिशयेन भूरिदावा भूरिदावत्तरः। भूरिदाव्नस्तुड्वक्तव्यः। पा॰ ८. २. १७. २.। इति तरपस्तुट्। पदसंज्ञायां नलोपः। सुपां सुलुगिति विभक्तेराकारः। घ। ऋचि तुनुघेत्यादिना संहितायां दीर्घत्वं। अथ। निपातस्य चेति। प्रयती। यम उपरमे। क्तिन्यनुदात्तोपदेशेत्यादिनानुनासिकलोपः। तादौ चेति गतेः प्रकृतिस्वरत्वं। युवभ्यां। सर्वे विधयश्छंदसि विकल्प्यंत इति युष्मदस्मदोरनादेश इत्यात्वाभावः। शेषे लोप इति दकारलोपः ॥

मा च्छेद्म रश्मीँरिति नाधमानाः पितॄणां शक्तीरनुयच्छमानाः।
इंद्राग्निभ्यां कं वृषणो मदंति ता ह्यद्री धिषणाया उपस्थे ॥३॥
मा। छेद्म। रश्मीन्। इति। नाधमानाः। पितॄणां। शक्तीः। अनुऽयच्छमानाः।
इंद्राग्निऽभ्यां। कं। वृषणः। मदंति। ता। हि। अद्री इति। धिषणायाः। उपऽस्थे ॥३॥

रश्मीन्। रश्मिशब्दो रज्जुवाची। यथा रश्मयो दीर्घा अविच्छिन्ना भवंति एवमविच्छिन्नान्पुत्रपौत्रादीन् मा च्छेद्म मा विच्छिन्नान्कुर्मेति बुद्ध्या नाधमाना इंद्राग्न्योः सकाशात्तथाविधान्पुत्रादीन्याचमानाः। तदनंतरं पितॄणां शक्तीः शक्त्युत्पादकान्वीर्योत्पादकांस्तान्पुत्रादीननुयच्छमाना अनुक्रमेण नियतान् कुर्वंतो वृषणः सेक्तारः पुत्रोत्पादनसमर्थाः। सपत्नीका इत्यर्थः। एवंभूता यजमाना इंद्राग्निभ्यां कं सुखं यथा भवति तथा मदंति। स्तुवंति। हि यस्मादद्री शत्रूनादृणंतौ हिंसंतौ विदारयंतौ ताविंद्राग्नी धिषणायाः स्तुत्या उपस्थ उपस्थाने समीपे भवतः। तस्मात्तत्सांनिध्याय स्तुवंतीति भावः। यद्वा। निपातानामनेकार्थत्वात् हिशब्दो यदेत्यर्थः। यदा ताविंद्राग्नी उद्दिश्याद्री अभिषवसाधनभूता ग्रावाणो धिषणाया उपस्थे। धिषणाधिषवणचर्म। तस्योपरिष्ठादिंद्राग्न्यर्थं सोममभिषुण्वंति। तदा तदा यजमानाः स्तुवंतीति योजनीयं ॥ छेद्म। छिदिर् द्वैधीकरणे। लङि बहुलं छंदसीति विकरणस्य लुक्। छंदस्युभयथेत्यार्धधातुकत्वेन ङित्त्वाभावाल्लघूपधगुणः। न माङ्योग इत्यडभावः। रश्मीन्। दीर्घादटि समानपाद इति संहितायां नकारस्य रुत्वं। अत्रानुनासिकः पूर्वस्य तु वेतीकारः सानुनासिकः। नाधमानाः। नाधृ याच्ञायां। पितॄणां। नामन्यतरस्यामिति नाम उदात्तत्वं। मदंति। मदि स्तुतौ। आगमानुशासनस्यानित्यत्वान्नुमभावः। व्यत्ययेन परस्मैपदं ॥

युवाभ्यां देवी धिषणा मदायेंद्राग्नी सोममुशती सुनोति।
तावश्विना भद्रहस्ता सुपाणी आ धावतं मधुना पृंक्तमप्सु ॥४॥
युवाभ्यां। देवी। धिषणा। मदाय। इंद्राग्नी इति। सोमं। उशती। सुनोति।
तौ। अश्विना। भद्रऽहस्ता। सुपाणी इति सुऽपाणी। आ। धावतं। मधुना। पृंक्तं।
अप्ऽसु ॥४॥

हे इंद्राग्नी युवाभ्यां मदाय युवयोर्हर्षाय देवी द्योतमानोशती युवां कामयमाना धिषणा मंत्ररूपा वाक् सोममभिषुणोति। यद्वा। धिषणाधिषवणचर्म। द्योतमानं तद्युवयोर्मदं कामयमानं सत्सोममभिषुणोति। ग्रावभिः स्वस्मिन्नभिषवात्तस्याभिषवकर्तृत्वं। अश्ववंतौ भद्रहस्ता शोभनदोर्दंडौ सुपाणी। मणिबंधादूर्ध्वभागः पाणिः। शोभनपाणी एवंभूतौ हे इंद्राग्नी तौ युवामा धावतं। शीघ्रमागच्छतं। आगत्य चाप्सूदकेषु वर्तमानेन मधुना माधुर्योपेतेन सारांशेन पृंक्तं। अस्मदीयं सोमं संयोजयतं। यद्वा। अप्सु वसतीवरीषु मधुना माधुर्यं संयोजयतं। विभक्तिव्यत्ययः॥ युवाभ्यां। षष्ठ्यर्थे चतुर्थी। उशती। वश कांतौ। अदादित्वाच्छपो लुक्। ग्रहिज्यादिना संप्रसारणं। उगितश्चेति ङीप्। शतुरनुम इति नद्या उदात्तत्वं। पृंक्तं। पृची संपर्के। रौधा-

दिकः । लोटि थसस्तं । असोरल्लोपः । अनुस्वारपरसवर्णौ । न चाचः परस्मिन्नित्यल्लोपस्य स्थानिवत्त्वं न पदांतेत्यादिना निषेधात् ॥

युवामिंद्राग्नी वसुनो विभागे तवस्तमा शुश्रव वृत्रहत्ये ।
तावासद्या बर्हिषि यज्ञे अस्मिन्प्र चर्षणी मादयेथां सुतस्य ॥५॥
युवां । इंद्राग्नी इति । वसुनः । विऽभागे । तवःऽतमा । शुश्रव । वृत्रऽहत्ये ।
तौ । आऽसद्य । बर्हिषि । यज्ञे । अस्मिन् । प्र । चर्षणी इति । मादयेथां । सुतस्य ॥५॥

हे इंद्राग्नी वसुनो धनस्य विभागे स्तोतृभ्यो दातुं विभजने तात्पर्येण वर्तमानौ युवां वृत्रहत्ये वृत्रस्यासुरस्य हनने तवस्तमातिशयेन बलिनौ प्रवृद्धतमौ वा शुश्रव । अश्रौषं । हे चर्षणी सर्वस्य द्रष्टाराविंद्राग्नी तौ युवामस्मदीयेऽस्मिन्यज्ञे बर्हिषि वेद्यामास्तीर्णे दर्भे आसद्योपविश्य सुतस्याभिषुतस्य सोमस्य पानेन प्र मादयेथां । प्रकर्षेण तृप्तौ भवतं ॥ विभागे । भज सेवायां । भावे घञ् । चजोः कु घिण्ण्यतोरिति कुत्वं । थाथादिनोत्तरपदांतोदात्तत्वं । तवस्तमा । तव इति बलनाम । लुप्तमत्वर्थीयादेतस्मादातिशायनिकस्तमप् । यद्वा । तवतिर्वृद्ध्यर्थः सौत्रो धातुः । तस्मादौणादिकः कर्तर्यसिप्रत्ययः । सुपां सुलुगिति विभक्तेः पूर्वसवर्णदीर्घत्वं । वृत्रहत्ये । हनस्त चेति हंतेर्भावे क्यप् तत्संनियोगेन तकारांतादेशश्च । कृदुत्तरपदप्रकृतिस्वरत्वं ॥ ॥२८॥

ऐंद्राग्नस्य पशोर्हविषः प्र चर्षणिभ्य इत्येषा याज्या । प्रदानानामिति खंडे सूत्रितं । प्र चर्षणिभ्यः पृतनाहवेष्वा देवो यातु सविता सुरत्नः । आ॰ ३.७. । इति ॥

प्र चर्षणिभ्यः पृतनाहवेषु प्र पृथिव्या रिरिचाथे दिवश्च ।
प्र सिंधुभ्यः प्र गिरिभ्यो महित्वा प्रेंद्राग्नी विश्वा भुवनात्यन्या ॥६॥
प्र । चर्षणिऽभ्यः । पृतनाऽहवेषु । प्र । पृथिव्याः । रिरिचाथे इति । दिवः । च ।
प्र । सिंधुऽभ्यः । प्र । गिरिऽभ्यः । महिऽत्वा । प्र । इंद्राग्नी इति । विश्वा । भुवना । अति । अन्या ॥६॥

पृतनाहवेषु पृतनासु संग्रामेषु रक्षणार्थमाह्वानेषु सत्सु हे इंद्राग्नी आगतवंतौ युवां चर्षणिभ्यः सर्वेभ्योऽपि मनुष्येभ्यो महित्वा महत्त्वेन प्र रिरिचाथे । अतिरिच्येथे । सर्वाधिकौ भवथ इत्यर्थः । अत्रोपसर्गवशाद्धातुः स्वाभिधेयविपरीतमर्थमाचष्टे यथा प्रस्खरणं प्रस्थानमिति । तथा पृथिव्याः सर्वस्या भूमेश्च प्र रिरिचाथे । एवं द्युप्रभृतिभ्योऽपि । सिंधवः स्यंदनशीला आपः । गिरयः पर्वताः । अपि च हे इंद्राग्नी विश्वा भुवना सर्वाणि भूतजातान्यन्योक्तव्यतिरिक्तानि यानि संति तान्यतीत्य प्र रिरिचाथे । अधिकौ भवथः ॥ पृतनाहवेषु । पृतनासु हवः पृतनाहवः । ह्वेञो भावेऽनुपसर्गस्येत्यप् संप्रसारणं च । व्यत्ययेन थाथादिस्वराभावे कृदुत्तरपदप्रकृतिस्वरत्वं । रिरिचाथे । रिचिर् विरेचने । छंदसि लुङ्लङ्लिट इति वर्तमाने लिट् । यद्वा । लट्येव बहुलं छंदसीति विकरणस्य श्लुः । महित्वा । मह पूजायां । औणादिक इन्प्रत्ययः । तस्य भावो महित्वं । सुपां सुलुगिति तृतीयाया डादेशः ॥

पूर्वोक्त एव पशावा भरतमित्येषा पुरोडाशस्यानुवाक्या । सूत्रितं च । आ भरतं शिक्षतं वज्रबाहू उभा वामिंद्राग्नी आहुवध्यै । आ॰ ३.७. । इति ॥

आ भरतं शिक्षतं वज्रबाहू अस्माँ इंद्राग्नी अवतं शचीभिः ।
इमे नु ते रश्मयः सूर्यस्य येभिः सपित्वं पितरो न आसन् ॥७॥

आ। भरतं। शिक्षतं। वज्रबाहू इति वज्रऽबाहू। अस्मान्। इंद्राग्नी इति। अवतं। शचीभिः।
इमे। नु। ते। रश्मयः। सूर्यस्य। येभिः। सऽपित्वं। पितरः। नः। आसन् ॥७॥

हे वज्रबाहू वज्रहस्ताविंद्राग्नी आ भरतं। अस्मदर्थं धनमाहरतं। आहृत्य च शिक्षतं। अस्मभ्यं दत्तं। शिक्षतिर्दानकर्मा। अपि चास्माननुष्ठातॄन् शचीभिः। कर्मनामैतत्। आत्मीयैः कर्मभिरवतं। रक्षतं। किंच सूर्यात्मन इंद्रस्य येभी रश्मिभिर्यैरर्चिर्भिर्नोऽस्माकं पितरः पूर्वपुरुषाः सपित्वं सहप्राप्तव्यं स्थानमासन् ब्रह्मलोकमगच्छन्। अर्चिरादिमार्गेण हि ब्रह्मलोकमुपासका गच्छंति। तथा च श्रूयते। तेऽर्चिषमभिसंभवंत्यर्चिषो ऽहरिति। यद्वा। येभी रश्मिभिः सपित्वं समवेतत्वमध्यगच्छन्। ते रश्मय इमे नु इदानीमस्माभिर्दृश्यमाना एत एव खलु। सूर्यात्मन इंद्रस्य ये रश्मयस्त एवाग्नेरपि। तथा च श्रूयते। अग्निं वावादित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे। तै० ब्रा० २. १. २. ९.। इति। तस्मात्सूर्यस्य रश्मीनां स्तवनेनेंद्राग्न्योरुभयोरपि स्तुतिः सिद्धा॥ भरतं। हृग्रहोर्भ इति भत्वं। शिक्षतं। शिक्ष विद्योपादाने। अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वं। धातुस्वरः शिष्यते। तिङः परत्वान्निघाताभावः। सपित्वं। आप्लृ व्याप्तौ। अस्मात्सशब्दोपपदात्कृत्यार्थे तवैकेनिति त्वन्प्रत्ययः। पृषोदरादित्वाद्धातोः पिभावः। यद्वा। षप समवाये। इन्सर्वधातुभ्य इतीन्। सपेर्भावः सपित्वं। आसन्। अस गतिदीप्त्यादानेषु। लङ्याडागम उदात्तः। यद्वृत्तान्नित्यमिति निघाताभावः॥

पुरंदरा शिक्षतं वज्रहस्तास्माँ इंद्राग्नी अवतं भरेषु।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥८॥
पुरंऽदरा। शिक्षतं। वज्रऽहस्ता। अस्मान्। इंद्राग्नी इति। अवतं। भरेषु।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः ॥८॥

हे वज्रहस्ता हस्तेन गृहीतवज्रौ पुरंदरासुरपुराणां दारयितारविंद्राग्नी शिक्षतं। अस्मदपेक्षितं धनं प्रयच्छतं। अपि च भरेषु संग्रामेष्वस्मानवतं। रक्षतं। यदनेन सूक्तेन प्रार्थितं तदस्मदीयं मित्रादयो ममहंतां। पूजयंतां॥ पुरंदरा। पूःसर्वयोर्दारिसहोः। पा० ३. २. ४१.। इति खच्। वाचंयमपुरंदरौ च। पा० ६. ३. ६९.। इति निपातनादम्। सुपां सुलुगिति विभक्तेराकारः॥ ॥२९॥

ततं म इति नवर्चं पंचमं सूक्तं कुत्सस्यार्षं ऋभुदेवताकं। पंचमीनवम्यौ त्रिष्टुभौ। शिष्टाः सप्त जगत्यः। तथा चानुक्रांतं। ततं नवार्भवं तु पंचम्यंत्ये त्रिष्टुभाविति॥ अभिप्लवषडहस्य चतुर्थेऽहनि वैश्वदेवशस्त्र इदमार्भवं निविद्धानं। सूचितं च तृतीयस्येति खंडे। ततं मे अप इति वैश्वदेवं। आ० ७. ७.। इति॥

ततं मे अपस्तदु तायते पुनः स्वादिष्ठा धीतिरुचथाय शस्यते।
अयं समुद्र इह विश्वदेव्यः स्वाहाकृतस्य समु तृप्णुत ऋभवः ॥१॥
ततं। मे। अपः। तत्। ऊं इति। तायते। पुनरिति। स्वादिष्ठा। धीतिः। उचथाय। शस्यते।
अयं। समुद्रः। इह। विश्वऽदेव्यः। स्वाहाऽकृतस्य। सं। ऊं इति। तृप्णुत। ऋभवः ॥१॥

हे ऋभवो मे मयापोऽग्निष्टोमादिरूपं कर्म ततं। विस्तारितं। बहुशः पूर्वमनुष्ठितं। तदु तदेव पुनस्तायते। विस्तार्यते। अनुष्ठीयत इत्यर्थः। तत्र स्वादिष्ठा स्वादुतमातिशयेन प्रीतिकरी धीतिः स्तुतिरुचथाय स्तुत्याय शस्यते। पठ्यते। अपि चेहास्मिन्यागे समुद्रः समुंदनशीलोऽयं सोमरसो विश्वदेव्यः सर्वेभ्यो देवेभ्यः पर्याप्तो यथा भवति तथा संपादितः। तस्य स्वाहाकृतस्य स्वाहाकारेणाग्नौ प्रक्षिप्तस्य सोमस्य पानेन समु तृप्णुत। सम्यगेव तृप्ता भवत॥ ततं। तनु विस्तारे। निष्ठायां यस्य विभाषेतीट्प्रतिषेधः। अनुदात्तोपदेशेत्यादिनानुनासिकलोपः। अपः। आप्लृ व्याप्तौ। आपः कर्माख्यायां ह्रस्वो नुट् च वा। उ० ४. २०७.। इत्यसुन् धातोर्ह्रस्वश्च।

तायते। तनोतेर्यकि। पा॰ ६. ४. ४४.। इत्यात्वं। स्वादिष्ठा। स्वादुशब्दादातिशायनिक इष्ठन्। टेरिति टिलोपः। उचथाय। वच परिभाषणे। औणादिकोऽथक्प्रत्ययः। वचिस्वपीत्यादिना संप्रसारणं। समुद्रः। उन्दी क्लेदने। स्फायितंचीत्यादिना रक्। अनिदितामिति नलोपः। विश्वदेव्यः। देवार्हो भागो देव्यः। छंदसि चेति यप्रत्ययः। विश्वे सर्वे देव्या यस्मिन्सोमे। बहुव्रीहौ विश्वं संज्ञायामिति व्यत्ययेनासंज्ञायामपि पूर्वपदांतोदात्तत्वं। स्वाहाकृतस्य। स्वाहाशब्दस्य ऊर्यादित्वेन गतित्वात्। पा॰ १. ४. ६१.। गतिरनंतर इति पूर्वपदप्रकृतिस्वरत्वं। तृप्णुत। तृप प्रीणने। स्वादिभ्यः श्नुः। ऋभव इत्यनेन संहितायामृत्यक इति प्रकृतिभावः॥

आभोगयं प्र यदिच्छंत ऐतनापाकाः प्रांचो मम के चिदापयः।
सौधन्वनासश्चरितस्य भूमनागच्छत सवितुर्दाशुषो गृहं॥२॥
आऽभोगयं। प्र। यत्। इच्छंतः। ऐतन। अपाकाः। प्रांचः। मम। के। चित्। आपयः।
सौधन्वनासः। चरितस्य। भूमना। अगच्छत। सवितुः। दाशुषः। गृहं॥२॥

हे ऋभवोऽपाकाः परिपक्वज्ञानाः प्रांचः पूर्वकालीना ममापयः प्रापयितारो मदीया ज्ञातयः के चित् एवंभूता ये केचन यूयमाभोगयमुपभोग्यं सोममिच्छंतो यद्यदा प्रैतन तपश्चरितुमरण्यं गतवंतः। ऋभवो हि सुधन्वन आंगिरसस्य पुत्राः। तदुक्तं यास्केन। ऋभुर्विभ्वा वाज इति सुधन्वन आंगिरसस्य त्रयः पुत्रा बभूवुः। नि॰ ११. १६.। इति। कुत्सोऽप्यांगिरसः। अतस्तेन मदीया ज्ञातय इत्युक्तं। हे सौधन्वनासः सुधन्वनः पुत्राः तदानीं चरितस्य समुपार्जितस्य तपसो भूमना भूम्ना बहुत्वेन दाशुषो हवींषि दत्तवतः सवितुः सोमाभिषवं कुर्वतो यजमानस्य संबंधि यज्ञगृहमगच्छत। तपसा लब्धसोमाः संतः कृतपाना यूयं गतवंतः। यद्वा। दाशुषः प्रातःसवनादिष्वग्न्यादिभिरपसारितेभ्य ऋभुभ्यः सोमपानं दत्तवतः सवितुर्गृहं निवासस्थानं तृतीयसवनाख्यमगच्छत। प्राप्ताः। एतत्सर्वमार्भवं शंसतीत्यादौ। ऐ॰ ब्रा॰ ३. ३०.। विस्पष्टमाम्नातं॥ आभोगयं। आ समंताद्भोग आभोगः। तदर्ह आभोगयः। छंदसि चेति यः। यस्येति लोपाभावश्छांदसः। व्यत्ययेन प्रत्ययात्पूर्वस्योदात्तत्वं। यद्वा। आङ्पूर्वाद्भुजेरौणादिकः कर्मणि इप्रत्ययः कुत्वं च। अमि व्यत्ययेन गुणः। ऐतन। इण् गतौ। लङि मध्यमबहुवचनस्य थस्य तादेशः। तप्तनप्तनथनाश्चेति तस्य तनबादेशः। आडागमो वृद्धिश्च। आपयः। आप्नोतेरौणादिक इप्रत्ययः। भूमना। बहुशब्दात्पृथ्वादिलक्षण इमनिच्। बहोर्लोपो भू च बहोरितीकारलोपो बहोर्भूभावश्च। संज्ञापूर्वकस्य विधेरनित्यत्वादल्लोपाभावः॥

तत्सविता वोऽमृतत्वमासुवदगोह्यं यच्छ्रवयंत ऐतन।
त्यं चिच्चमसमसुरस्य भक्षणमेकं संतमकृणुता चतुर्वयं॥३॥
तत्। सविता। वः। अमृतऽत्वं। आ। असुवत्। अगोह्यं। यत्। श्रवयंतः। ऐतन।
त्यं। चित्। चमसं। असुरस्य। भक्षणं। एकं। संतं। अकृणुत। चतुःऽवयं॥३॥

हे ऋभवस्तत्तदानीं सविता सर्वस्य प्रेरको देवो वो युष्माकममृतत्वं देवत्वमासुवत्। आभिमुख्येन प्रेरितवान्। दत्तवानित्यर्थः। यद्यदा यूयमगोह्यं गूहितुमशक्यं सर्वैर्दृश्यमानं सवितारं श्रवयंतोऽपेक्षितं सोमपानं विज्ञापयंतः संत ऐतन आगच्छत। तदानीमिति पूर्वेणान्वयः। यस्माद्यूयं देवैराज्ञापिताः संतोऽसुरस्य त्वष्टुः संबंधिनं। तेन निर्मितमित्यर्थः। भक्षणं सोमपानसाधनं त्यं तं चमसमेकं चित् असहायमेव संतं चतुर्वयं चतुर्व्यूहमकृणुत कृतवंतः। त्वष्ट्रादौ त्वष्ट्रा कृतं चमसं होतृचमसादिमुख्यचमसचतुष्टयरूपेण ऋभवः कृतवंत इत्यर्थः॥ असुवत्। षू प्रेरणे। तौदादिकः। श्रवयंतः। श्रु श्रवणे। छांदसो वृद्ध्यभावः। ऐतन। लङि मध्यमबहुवचनस्य तादेशे तप्तनप्तनथनाश्चेति तनबादेशः। भक्षणं। करणे ल्युट्। अकृणुत। कृवि हिंसाकरणयोश्च। लङि मध्यमबहुवचने धिन्विकृण्व्योरच्चेत्युप्रत्ययः। चतुर्वयं। वया अवयवाः। चत्वारोऽवयवा यस्य स तथोक्तः॥

विष्ट्वी शमी तरणित्वेन वाघतो मर्तासः संतो अमृतत्वमानशुः ।
सौधन्वना ऋभवः सूरचक्षसः संवत्सरे समपृच्यंत धीतिभिः ॥४॥
विष्ट्वी । शमी । तरणिऽत्वेन । वाघतः । मर्तासः । संतः । अमृतऽत्वं । आनशुः ।
सौधन्वनाः । ऋभवः । सूरऽचक्षसः । संवत्सरे । सं । अपृच्यंत । धीतिऽभिः ॥४॥

वाघतः । ऋत्विङ्नामैतत् अत्र च सामर्थ्यात्तद्वंतो लक्ष्यंते । ऋत्विग्भिरुपेता ऋभवः शमी । कर्मनामैतत् । यागदानादीनि कर्माण्यन्यान्यपि एकं चमसं चतुरस्कृणोतन । ऋ० १. १६१. २. । इत्यादिना देवैरुक्तानि कर्माणि तरणित्वेन । तरणिरिति क्षिप्रनाम । क्षिप्रत्वेन शैघ्र्येण विष्ट्वी । यद्यप्येतत्कर्मनाम तथाप्यत्र क्रियापरं व्याप्य कृत्वेत्यर्थः । एवं कर्माणि कृत्वा मर्तासो मनुष्या अपि संतोऽमृतत्वं देवत्वमानशुः । आनशिरे । कृतैः कर्मभिर्लेभिरे । देवत्वं प्राप्य च सौधन्वनाः सुधन्वनः पुत्राः सूरचक्षसः सूर्यसमानप्रकाशाः सूर्यसदृशज्ञाना वा ते ऋभवः संवत्सरे संवत्सरावयवभूते वसंतादिकालेऽनुष्ठेयैर्धीतिभिरग्निष्टोमादिकर्मभिः समपृच्यंत । संयुक्ता अभवन् । हविर्भागार्हा बभूवुरित्यर्थः । अत्र निरुक्तं । कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्तासः संतोऽमृतत्वमानशिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरे समपृच्यंत धीतिभिः कर्मभिर्ऋभुर्विभ्वा वाज इति सुधन्वन आंगिरसस्य त्रयः पुत्रा बभूवुः । नि० ११. १६. । इति ॥ विष्ट्वी । विष्लृ व्याप्तौ । स्नात्व्यादयश्च । पा० ७. १. ४९. । इति क्त्वाप्रत्ययस्य ईकारांतादेशः । शमी । सुपां सुलुगिति शसो लुक् । आनशुः । अशू व्याप्तौ । व्यत्ययेन परस्मैपदं । अश्नोतेश्चेत्यभ्यासादुत्तरस्य नुडागमः । अपृच्यंत । पृची संपर्के । कर्मणि लङ् ॥

क्षेत्रमिव वि ममुस्तेजनेनँ एकं पात्रमृभवो जेहमानं ।
उपस्तुता उपमं नाधमाना अमर्त्येषु श्रव इच्छमानाः ॥५॥
क्षेत्रंऽइव । वि । ममुः । तेजनेन । एकं । पात्रं । ऋभवः । जेहमानं ।
उपऽस्तुताः । उपऽमं । नाधमानाः । अमर्त्येषु । श्रवः । इच्छमानाः ॥५॥

उपस्तुताः समीपस्थैर्ऋषिभिः स्तुता ऋभवो जेहमानं होमक्रियां प्रति प्रयतमानमेकमसहायं पात्रं पानसाधनं त्वष्ट्रा निर्मितं चमसं मानदंडेन क्षेत्रमिव भूमिमिव तेजनेन तीक्ष्णेन शस्त्रेण चमसचतुष्टयरूपेण कर्तुं वि ममुः । विशेषेण मानं कृतवंतः । किमिच्छंतः । उपमं सर्वेषामुपमानभूतं प्रशस्तं सोमलक्षणमन्नं नाधमाना याचमानाः । एतदेव विवृणोति । अमर्त्येषु मरणरहितेषु देवेषु मध्ये श्रवो हविर्लक्षणमन्नमिच्छमाना इच्छंतः । देवैः सह सोमपानं कामयमानास्तल्लाभाय चतुर[illegible]र्थः ॥ ममुः । माङ् माने शब्दे च । व्यत्ययेन परस्मैपदं । तेजनेन । अणोऽप्रगृह्यस्यानुनासिकः । पा० ८. ४. ५७. । इत्यनवसाने व्यत्ययेनाकारस्यानुनासिक्यं । [illegible]चाद्वित्वात्प्रकृतिभावः । जेहमानं । वेहृ जेहृ वाहृ प्रयत्ने । भौवादिकः । अनुदा[illegible]पदं । उपस्तुताः । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । उपमं । माङ् माने । आतश्चोपसर्गे इति कप्रत्ययः । इच्छमानाः । व्यत्ययेनात्मनेपदं ॥ ॥ ३० ॥

आ मनीषामंतरिक्षस्य नृभ्यः स्रुचेव घृतं जुहवाम विद्मना ।
तरणित्वा ये पितुरस्य सश्चिर ऋभवो वाजमरुहन्दिवो रजः ॥६॥
आ । मनीषां । अंतरिक्षस्य । नृऽभ्यः । स्रुचाऽइव । घृतं । जुहवाम । विद्मना ।
तरणिऽत्वा । ये । पितुः । अस्य । सश्चिरे । ऋभवः । वाजं । अरुहन् । दिवः । रजः ॥६॥

अंतरि[illegible]अंतरिक्षलोकस्य मध्यमस्थानस्य संबंधिभ्यो नृभ्यो यज्ञस्य नेतृभ्य ऋभुभ्यः । ऋभवो हि यज्ञस्य नेतारः । तेन हि देवत्वं प्राप्ताः । यद्वा । अंतरिक्षस्य लोकस्य नेतृभ्यः । मध्यमे स्थाने ह्येते पठ्यंते । तादृशेभ्यः

स्रुचेव यथा स्रुचा जुह्वा घृतं क्षरणशीलाज्योपेतं हविरा जुहवाम। मर्यादायामाकारः। यथाशास्त्रं प्रयच्छाम। एवमेव मनीषां स्तुतिं विद्मना वेदनेन ज्ञानेन कुर्म इति शेषः। अपि च ये ऋभवः पितुः सर्वस्य जगतः पालकस्यास्य सूर्यस्य तरणित्वा तरणित्वानि तरणकौशलानि सश्चिरे सूर्यरश्मिभूताः संतः प्रापुः। तदुक्तं। आदित्यरश्मयोऽप्यृभव उच्यंत इति। ते ऋभवो दिवो रजः। रजःशब्दो लोकवाची। द्योतमानस्य स्वर्गाख्यस्य लोकस्य संबंधिनं वाजं सोमलक्षणमन्नमरुहन्। यागदानादिभिः कर्मभिरन्यैश्च देवोक्तिसमसचतुष्टयकरणादिकैः प्राप्नुवन्॥ स्रुचेव। सावेकाच इति विभक्तेरुदात्तत्वं। जुहवाम। हु दानादनयोः। लोण्याडुत्तमस्य पिच्चेत्याडागमः। विद्मना। विद ज्ञाने। औणादिको मनिः। न संयोगाद्वमंतादित्यल्लोपाभावः। तरणित्वा। तॄ प्लवनतरणयोः। अर्तिसृधृधम्यश्यवितॄभ्योऽनिरिति कर्तर्यनिप्रत्ययः। तस्य भावस्तरणित्वं। शेश्छंदसि बहुलमिति शेर्लोपः। सश्चिरे। ग्लुन्च षस्ज गतावित्यत्र सश्चिमप्येके पठंति। व्यत्ययेनात्मनेपदं। द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यमिति वचनाद्द्विर्वचनाभावः। इरेचश्चित्त्वादंतोदात्तत्वं। यद्वृत्तान्नित्यमिति निघातप्रतिषेधः। अरुहन्। रुह बीजजन्मनि प्रादुर्भावे च। लुङि कृमृदृरुहिभ्यश्छंदसीति च्लेरङादेशः। दिवः। ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। रजः। रन्ज रागे। रजंत्यस्मिन्निति रजो लोकः। तदुक्तं। लोका रजांस्युच्यंते। नि॰ ४. १९.। इति। औणादिकोऽधिकरणेऽसुन्। रजकरजनरजःसूपसंख्यानमिति नलोपः। सुपां सुलुगिति षष्ठ्या लुक्॥

ऋ॒भुर्न॒ इंद्रः॒ शव॑सा॒ नवी॑यानृ॒भुर्वाजे॑भि॒र्वसु॑भि॒र्वसु॑र्द॒दिः।
यु॒ष्माकं॑ देवा॒ अव॒साह॑नि प्रि॒ये३॒॑ऽभि ति॑ष्ठेम पृत्सु॒तीरसु॑न्वतां॥७॥
ऋ॒भुः। नः॒। इंद्रः॑। शव॑सा। नवी॑यान्। ऋ॒भुः। वाजे॑भिः। वसु॑ऽभिः। वसुः॑। द॒दिः।
यु॒ष्माकं॑। दे॒वाः॒। अव॑सा। अह॑नि। प्रि॒ये। अ॒भि। ति॒ष्ठे॒म॒। पृ॒त्सु॒तीः। असु॑न्वतां॥७॥

ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः। तत्र शवसा बलेन नवीयान् नवतरः प्रशस्ततर ऋभुर्नोऽस्माकमिंद्रः परमेश्वरः। अस्माकं रक्षक इत्यर्थः। यद्वा। इंद्र एव प्रसंगादुरु भातीति नैरुक्तव्युत्पत्त्या ऋभुरिति स्तूयते। अपि च वाजेभिर्वाजैरस्मभ्यं दातव्यैरन्नैर्वसुभिर्निवासहेतुभिर्धनैश्च ऋभुर्वसुरस्माकं निवासयिता अत एव ददिस्तेषामन्नानां धनानां च दाता भवतु। परोऽर्धर्चः प्रत्यक्षकृतः। हे देवा दानादिगुणयुक्ता ऋभुप्रभृतयो युष्माकं संबंधिनावसा रक्षणेन युक्ते प्रियेऽस्माकमनुकूलेऽहनि दिवसे वर्तमाना वयमसुन्वतां सुन्वद्यजमानविरोधिनां शत्रूणां पृत्सुतीः सेना अभि तिष्ठेम॥ नवीयान्। नवशब्दादातिशायनिक ईयसुन्। वाजेभिः। बहुलं छंदसीति भिस ऐसभावः। वसुः। वस निवासे। अस्मादंतर्भावितण्यर्थात् शॄस्वृस्निहीत्यादिनोप्रत्ययः। निदित्यनुवृत्तेराद्युदात्तत्वं। ददिः। डुदाञ् दाने। आदृगमहन इति किप्रत्ययः। लिड्वद्भावाद्द्विर्भावादि। आतो लोप इटि चेत्याकारलोपः॥

नि॒श्चर्म॑ण ऋभवो॒ गाम॑पिंशत॒ सं व॒त्सेना॑सृजता मा॒तरं॒ पुनः॑।
सौध॑न्वनासः स्वप॒स्यया॑ नरो॒ जिव्री॒ युवा॑ना पि॒तरा॑कृणोतन॥८॥
निः। चर्म॑णः। ऋ॒भ॒वः॒। गां। अ॒पिं॒श॒त॒। सं। व॒त्सेन॑। अ॒सृ॒ज॒त॒। मा॒तरं॑। पु॒नरिति॑।
सौध॑न्वनासः। सु॒ऽअ॒प॒स्यया॑। न॒रः॒। जिव्री॒ इति॑। युवा॑ना। पि॒तरा॑। अ॒कृ॒णो॒त॒न॒॥८॥

पुरा कस्यचिदृषेर्धेनुर्मृता। स ऋषिस्तस्या धेनोर्वत्सं दृष्ट्वा ऋभुं तुष्टाव। ऋभवस्तत्सदृशीमन्यां धेनुं कृत्वा तदीयेन चर्मणा संवीय तेन वत्सेन समयोजयन्निति। अयमर्थः पूर्वार्धे प्रतिपाद्यते। हे ऋभवो यूयं चर्मणश्चर्मणा त्वचा। तृतीयार्थे षष्ठी। गां धेनुं निरपिंशत। निःशेषेणाश्लिष्टां संयुक्तामकुरुत। तदनंतरं मातरं तां गां पुनर्वत्सेन समसृजत। संसृष्टामकुरुत। समगमयतेति यावत्। अपि च हे सौधन्वनासः सुधन्वन आंगिरसस्य पुत्रा नरो यज्ञस्य नेतार ऋभवः स्वपस्यया शोभनकर्मेच्छया। यागदानाद्याचरणेनेति यावत्। जिव्री जीर्णौ वृद्धौ पितरा मातापितरौ युवाना पुनर्यौवनोपेतावकृणोतन। यूयमकुरुत॥ अपिंशत। पिश अवयवे। तौदादिकः। शे मुचादीनामिति नुम्। सौधन्वनासः। सुधन्वनः पुत्राः सौधन्वनाः। अन्। पा॰ ६. ४. १६७.। इति

प्रकृतिभावः । आज्जसेरसुक् । आमंत्रितस्य चेत्याद्युदात्तत्वं । स्वपस्यया । शोभनमपः स्वपः । तदिच्छा स्वपस्या । सुप आत्मनः क्यच् । अ प्रत्ययादिति भावेऽकारप्रत्ययः । जिव्री । जॄष् वयोहानौ । जॄष्टृस्तॄजागृभ्यः क्विन् । उ० ४. ५४. । ऋत इद्धातोरितीत्वं । रेफवकारयोः स्थानविपर्ययः । बहुलवचनाद्धलि चेति दीर्घाभावः । नित्त्वादाद्युदात्तत्वं । युवाना । सुपां सुलुगिति विभक्तेराकारः । पितरा । पिता च माता च पितरौ । पिता मात्रा । पा० १. २. ७०. । इति पिता शिष्यते । पूर्ववद्विभक्तेराकारः । अकृणोतन । कृवि हिंसाकरणयोश्च । इदित्वान्नुम् । धिन्विकृण्व्योरच्चेत्युप्रत्ययः तत्संनियोगेन वकारस्य चाकारः । अतो लोपे सति तस्य स्थानिवद्भावाल्लघूपधगुणाभावः । लङ्मध्यमबहुवचनस्य तशब्दस्य तप्तनप्तनथनाश्चेति तनबादेशः । तस्य पित्त्वेन ङित्त्वाभावाद्गुणः ॥

वाजे॑भिर्नो॒ वाज॑सातावविड्ढ्यृभु॒माँ इं॑द्र चि॒त्रमा द॑र्षि॒ राधः॑ ।
तन्नो॑ मि॒त्रो वरु॑णो मामहंता॒मदि॑तिः॒ सिंधुः॑ पृथि॒वी उ॒त द्यौः ॥ ९॥
वाजे॑भिः । नः॒ । वाज॑ऽसातौ । अ॒वि॒ड्ढि॒ । ऋ॒भु॒ऽमान् । इं॒द्र॒ । चि॒त्रं । आ । द॒र्षि॒ । राधः॑ ।
तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒हं॒तां॒ । अदि॑तिः । सिंधुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥ ९॥

हे इंद्र ऋभुमान् । ऋभुर्विभ्वा वाज इति त्रयोऽप्यृभुशब्देनोपचारादत्रोच्यंते । तैर्युक्तस्त्वं वाजसातौ वाजस्यान्नस्य संभजने निमित्तभूते सति वाजेभिरन्नैरविड्ढि । अस्मान्व्याप्नुहि । यद्वा । वाजसातिरिति संग्रामनाम । वाजसातौ संग्रामे वाजेभिर्वेजनयुक्तैरश्वैरविड्ढि । अस्मान् रक्ष । अपि च चित्रं चायनीयं राधो धनमा दर्षि । अस्मभ्यं दातुमाद्रियस्व । तृतीयसवने ऋभुभिः सहेंद्रस्यावस्थानात् प्रसंगादत्रेंद्रस्तुतिः । यदेतदस्माभिः प्रार्थितमस्मदीयं तन्मित्रादयो ममहंतां । पूजयंतां ॥ वाजसातौ । वन षण संभक्तौ । भावे क्तिन् । जनसनखनां सञ्झलोरित्यात्वं । वाजानां सातिर्यस्मिन् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अविड्ढि । विष्लृ व्याप्तौ । लोटो हिः । बहुलं छंदसीति शपो लुक् । हुझल्भ्यो हेर्धिः । ष्टुत्वजश्त्वे । छंदस्यपि दृश्यत इति । पा० ६. ४. ७३. । इति दृशिग्रहणाल्लोप्यडागमः । यद्वा । अवतेर्लोटि सिब्बहुलं लेटीति बहुलवचनाद्विकरणः सिप् । तस्यार्धधातुकत्वादिट् । आदेशप्रत्ययोरिति षत्वं । धित्वादि पूर्ववत् । ऋभुमान् । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं । दर्षि । दृङ् आदरे । लोटि व्यत्ययेन परस्मैपदं । बहुलं छंदसीति विकरणस्य लुक् ॥ ॥३१॥

तक्षन्निति पंचर्चं षष्ठं सूक्तं कुत्सस्यार्षमार्भवं । पंचमी त्रिष्टुप् । शिष्टाश्चतस्रो जगत्यः । तथा चानुक्रांतं । तक्षन्पंचांत्या त्रिष्टुबिति ॥ अग्निष्टोमे वैश्वदेवशस्त्र इदं सूक्तमार्भवं निविद्धानं । सूचितं च । तक्षन्रथमयं वेनश्चोदयत्पृश्निगर्भाः । आ० ५. १८. । इति ॥

तक्ष॒न्रथं॑ सु॒वृतं॑ विद्म॒नाप॑स॒स्तक्ष॒न्हरी॑ इंद्र॒वाहा॒ वृष॑ण्वसू ।
तक्ष॑न्पि॒तृभ्या॑मृ॒भवो॒ युव॒द्वय॒स्तक्ष॑न्व॒त्साय॑ मा॒तरं॑ सचा॒भुवं॑ ॥ १॥
तक्ष॑न् । रथं॑ । सु॒ऽवृतं॑ । वि॒द्म॒नाऽअ॑पसः । तक्ष॑न् । हरी॒ इति॑ । इं॒द्र॒ऽवाहा॑ । वृष॑ण्वसू॒ इति॒ वृष॑ण्ऽवसू ।
तक्ष॑न् । पि॒तृऽभ्यां॑ । ऋ॒भवः॑ । युव॑त् । वयः॑ । तक्ष॑न् । व॒त्साय॑ । मा॒तरं॑ । स॒चा॒ऽभुवं॑ ॥ १॥

विद्मनापस उत्कृष्टेन ज्ञानेन निष्पाद्यकर्माणो लाभवत्कर्माणो वा ऋभवो रथमश्विनोरारोहणार्थं सुवृतं शोभनवर्तनं सुचक्रं वा तक्षन् । अकुर्वन् । तथेंद्रवाहा इंद्रस्य वाहनभूतौ हरी हरणशीलावेतत्संज्ञकावश्वौ तक्षन् । कृतवंतः । कीदृशौ । वृषण्वसू सेचनसमर्थेन दृढतरेण धनेन बलेन वा युक्तौ । अपि च पितृभ्यां स्वकीयाभ्यां मातापितृभ्यां वृद्धाभ्यां युवद्यौवनोपेतं वय आयुर्ऋभवस्तक्षन् । कृतवंतः । तथा वत्साय मातरं गां सचाभुवं सहभुवं सह वर्तमानां तक्षन् । अकुर्वन् ॥ तक्षन् । तक्षू त्वक्षू तनूकरणे । लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । सुवृतं । शोभनं वर्तत इति सुवृत् । वृतु वर्तने । क्विबेति क्विप् । विद्मनापसः । विद ज्ञाने ।

अन्येभ्योऽपि दृश्यंत इति दृशिग्रहणाद्भावे मनिन्। संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावः। बहुलवचनाद्दलुक्। यद्वा। विद्लृ लाभे। औणादिको भावे मक्। ततः पामादिलक्षणो नप्रत्ययः। विद्मनं लाभवद्रूपः कर्म येषां। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। छांदसः पूर्वसवर्णदीर्घः। इंद्रवाहा। इंद्रं वहत इतींद्रवाहौ। वहश्चेति ण्वि-प्रत्ययः। अत उपधाया इति वृद्धिः। सुपां सुलुगिति विभक्तेराकारः। वृषणस्वसू। वृष सेचने। कनिन्युवृषितक्षी-त्यादिना कनिन्। नित्त्वादाद्युदात्तत्वं। वृषण्वस्वश्वयोरुपसंख्यानं। पा० १. ४. १८. ४.। इति वसुशब्द उत्तरपदे वृषणभावः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। युवत्। अत्र युवन्शब्दः सामर्थ्यात्प्रवृत्तिनिमित्तं युवत्वमात्रमाचष्टे। तदस्मिन्नस्तीति युवत्। छांदसो वर्णलोपः॥

आ नो॑ य॒ज्ञाय॑ तक्षत ऋभु॒मद्वयः॒ क्रत्वे॒ दक्षा॑य सुप्र॒जाव॑ती॒मिष॑म्।
यथा॒ क्षया॑म॒ सर्व॑वीरया वि॒शा तन्नः॒ शर्धा॑य धासथा॒ स्वि॑न्द्रि॒यम् ॥२॥
आ। नः॒। य॒ज्ञाय॑। त॒क्ष॒त॒। ऋ॒भु॒ऽमत्। वयः॑। क्रत्वे॑। दक्षा॑य। सु॒ऽप्र॒जाव॑तीम्। इष॑म्।
यथा॑। क्षया॑म। सर्व॑ऽवीरया। वि॒शा। तत्। नः॒। शर्धा॑य। धा॒स॒थ॒। सु। इ॒न्द्रि॒यम् ॥२॥

हे ऋभवो नोऽस्माकं यज्ञाय यज्ञार्थं ऋभुमदुरुभासनयुक्तं वयो हविर्लक्षणमन्नमा तक्षत। आ समंता-दुत्पादयत। एतदेव विव्रियते। क्रत्वे क्रतवेऽस्मदीयाय कर्मणे दक्षाय बलाय च। तादर्थ्ये चतुर्थी। एतदुभयार्थं सुप्रजावतीं शोभनाभिः पुत्रपौत्रादिलक्षणाभिः प्रजाभिर्युक्तामिषमन्नमा तक्षतेति शेषः। अपि च सर्ववीरया सर्वैर्वीरैः पुत्रादिभिरुपेतया विशा प्रजया सह यथा येन प्रकारेण क्षयाम सुखेन निवसाम तत्तादृशमिंद्रियं। धननामैतत्। धनं नोऽस्मभ्यं शर्धाय बलार्थं सु धासथ। सुष्ठु धत्त। प्रयच्छतेत्यर्थः॥ ऋभुमत्। उरु भातीति नैरुक्तव्युत्पत्त्या ऋभुशब्दः प्रकाशमात्रवाची। ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं। क्रत्वे। जसादिषु छंदसि वावचनमिति घेर्ङितीति गुणाभावे यणादेशः। क्षयाम। क्षि निवासगत्योः। व्यत्ययेन शप्। धासथ। धाञो लेट्यडागमः। सिब्बहुलं लेटीति सिप्। अन्येषामपि दृश्यत इति संहितायां दीर्घत्वं॥

आ त॑क्षत सा॒तिम॒स्मभ्य॑मृभवः सा॒तिं रथा॑य सा॒तिमर्व॑ते नरः।
सा॒तिं नो॒ जैत्रीं॒ सं म॑हेत वि॒श्वहा॑ जा॒मिमजा॑मिं॒ पृत॑नासु स॒क्षणि॑म् ॥३॥
आ। त॒क्ष॒त॒। सा॒तिम्। अ॒स्मभ्य॑म्। ऋ॒भ॒वः॒। सा॒तिम्। रथा॑य। सा॒तिम्। अर्व॑ते। न॒रः॒।
सा॒तिम्। नः॒। जैत्री॑म्। सम्। म॒हे॒त॒। वि॒श्वहा॑। जा॒मिम्। अजा॑मिम्। पृत॑नासु। स॒क्षणि॑म् ॥३॥

हे नरो यज्ञस्य नेतार ऋभवः अस्मभ्यमनुष्ठातृभ्यः सातिं संभजनीयमन्नं धनं वा तक्षत। आ समं-तात्कुरुत। तथास्मदीयाय रथाय रंहणशीलाय पुत्रादये रथायैव वा सातिं संभजनीयं धनमा तक्षत। तथार्वतेऽश्वाय सातिं संभजनीयमन्नं धनं वाश्वयोग्यमा तक्षतेत्येव। किंच विश्वहा सर्वेष्वहःसु नोऽस्माकं जैत्रीं जयशीलामपरिमितत्वेन सर्वाधिकां सातिं संभजनीयं धनं सं महेत। सर्वो जनः सम्यक् पूजयतु। वयं च पृतनासु संग्रामेषु जामिं सहजातमजामिं सहानुत्पन्नं शत्रुं वा सक्षणिमस्मानभिभवंतं युष्मत्प्रसादादभिभवेमेति शेषः॥ सातिं। ऊतियूतिजूतिसातीत्यादिना क्तिन उदात्तत्वं। महेत। मह पूजायां। सक्षणिं। षह अभिभवे। औणादिकः सनिप्रत्ययः। ढलकलषत्वानि॥

ऋ॒भु॒क्षण॒मिन्द्र॒मा हु॑व ऊ॒तय॑ ऋ॒भून्वाजा॑न्म॒रुतः॒ सोम॑पीतये।
उ॒भा मि॒त्रावरु॑णा नू॒नम॒श्विना॒ ते नो॑ हिन्वन्तु सा॒तये॑ धि॒ये जि॒षे ॥४॥
ऋ॒भु॒क्षण॑म्। इन्द्र॑म्। आ। हु॒वे॒। ऊ॒तये॑। ऋ॒भून्। वाजा॑न्। म॒रुतः॑। सोम॑ऽपीतये।
उ॒भा। मि॒त्रावरु॑णा। नू॒नम्। अ॒श्विना॑। ते। नः॒। हि॒न्व॒न्तु॒। सा॒तये॑। धि॒ये। जि॒षे ॥४॥

ऋभुक्षणं । महन्नामैतत् । महांतमिंद्रमा हुवे । आह्वयामि । किमर्थं । ऊतये रक्षणार्थं । तथा ऋभून्वाजान् । ऋभुर्विभ्वा वाज इति त्रयः सुधन्वनः पुत्राः । तत्र प्रथमोत्तमवाचकशब्दाभ्यां मध्यमोऽपि लक्ष्यते । अतः शब्दद्वयेन त्रयोऽप्युच्यंते । तदुक्तं यास्केन । प्रथमोत्तमाभ्यां बहुवन्निगमा भवंति न मध्यमेन । नि० ११. १६. । इति । एवंविधानृभून्मरुतश्च सोमपीतये सोमपानायाह्वयामि । तथोभा युगलरूपेण संहत्य वर्तमानौ द्वौ मित्रावरुणावश्विनौ च नूनमवश्यं सोमपानायाह्वयामीति शेषः । अपि चाहूताश्चेंद्रादयो नोऽस्मान् हिन्वंतु । प्रेरयंतु । गमयंत्वित्यर्थः । किमर्थं । सातये संभजनीयाय धनाय धिये धनसाध्याय कर्मणे जिषे जेतुं शत्रूणां जयार्थं च ॥ ऋभुक्षणं । उरुभासमाने स्थाने क्षियति निवसतीत्यृभुक्षाः । उरुपूर्वाद्भातेर्मृगय्वादयश्च । उ० १. ३८. । इति कुप्रत्ययः । आतो लोप इटि चेत्याकारलोपः पूर्वपदस्य ऋभावश्च । ऋभुशब्दोपपदात्क्षि निवासगत्योरित्यस्मात्पतेश्च चेति विधीयमान इनिप्रत्ययो बहुलवचनाद्भवति । टिलोपः । इतोऽत्सर्वनामस्थाने । पा० ७. १. ८६. । इत्वमिकारस्य । वा षपूर्वस्य निगम इति विकल्पनादुपधादीर्घाभावः । यद्वा । अतेर्भुक्षिनक् । कित्वाद्गुणाभावः । अत एव नावगृह्यते । सोमपीतये । पा पाने । स्थागापापचो भाव इति भावे क्तिन् । घुमास्थेतीत्वं । दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं । हिन्वंतु । हि गतौ वृद्धौ च । अस्मादंतर्भावितण्यर्थाल्लोटि स्वादित्वात् श्नुः । जिषे । जि जये । तुमर्थे सेसेनिति क्सेप्रत्ययः ॥

ऋभुर्भराय सं शिशातु सातिं समर्यजिद्वाजो अस्माँ अविष्टु ।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥ ५ ॥
ऋभुः । भराय । सं । शिशातु । सातिं । समर्यऽजित् । वाजः । अस्मान् । अविष्टु ।
तत् । नः । मित्रः । वरुणः । ममहंतां । अदितिः । सिंधुः । पृथिवी । उत । द्यौः ॥ ५ ॥

ऋभुः प्रथमोऽस्माकं सातिं संभजनीयं धनं भराय संग्रामार्थं सं शिशातु । सम्यक् तीक्ष्णीकरोतु । संग्रामोचितं धनमस्मभ्यं प्रयच्छत्वित्यर्थः । तथा समर्यजित् । मर्या मनुष्याः । तैः सह वर्तत इति समर्यः संग्रामः । तत्र शत्रूणां जेता वाज एतत्संज्ञस्तृतीयश्चास्मान् स्तोतॄनविष्टु । अवतु । संग्रामाद्रक्षत्वित्यर्थः । यदनेन सूक्तेन प्रार्थितमस्मदीयं तन्मित्रादयो ममहंतां । पूजयंतु ॥ शिशातु । शो तनूकरणे । बहुलं छंदसीति विकरणस्य श्लुः । आदेच इत्यात्वं । द्विर्भावः । ह्रस्वत्वे बहुलं छंदसीत्यभ्यासस्येत्वं । अविष्टु । अवतेर्लोटि सिब्बहुलं लेटीति बहुलग्रहणात्सिप् । इडागमः । षत्वष्टुत्वे ॥ ॥ ३२ ॥

ईळे इति पंचविंशत्यृचं सप्तमं सूक्तं । आंगिरसस्य कुत्सस्यार्षं । चतुर्विंशीपंचविंश्यौ त्रिष्टुभौ शिष्टास्त्रयोविंशतिर्जगत्यः । आद्यः पादो द्यावापृथिव्यः । द्वितीय आग्नेयः । शिष्टं सूक्तमाश्विनं । तथा चानुक्रांतं । ईळे पंचाधिकाश्विनमाद्यौ पादौ लिंगोक्तदेवतावंत्ये त्रिष्टुभाविति ॥ प्रवर्ग्येऽभिष्टवेऽप्येतत्सूक्तं । सूत्रितं च । ग्रावाणेवेळे द्यावापृथिवी इति । आ० ४. ६. । इति ॥ प्रातरनुवाके चाश्विने क्रतौ जागते छंदस्येतत्सूक्तं । सूत्रितं च । अगन्म महातारिष्मेळे द्यावापृथिवी इति जागतं । आ० ४. १५. । इति ॥ आश्विनशस्त्रेऽप्येतत् प्रातरनुवाकन्यायेन । आ० ६. ५. । इत्यतिदेशात् ॥ तथाप्तोर्यामे संति चत्वार्यतिरिक्तोकथानि । तत्राच्छावाकातिरिक्तोकथ एतत्सूक्तं यस्य पशव इति खंडे सूत्रितं । ईळे द्यावापृथिवी उभा उ नूनं । आ० ९. ११. । इति ॥

ईळे द्यावापृथिवी पूर्वचित्तयेऽग्निं घर्मं सुरुचं यामन्निष्टये ।
याभिर्भरे कारमंशाय जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतं ॥ १ ॥
ईळे । द्यावापृथिवी इति । पूर्वऽचित्तये । अग्निं । घर्मं । सुऽरुचं । यामन् । इष्टये ।
याभिः । भरे । कारं । अंशाय । जिन्वथः । ताभिः । ऊं इति । सु । ऊतिऽभिः ।
अश्विना । आ । गतं ॥ १ ॥

अहं द्यावापृथिवी द्यावापृथिव्यावीळे । स्तौमि । किमर्थं । पूर्वचित्तये पूर्वमेवाश्विनोः प्रज्ञापनाय । ते

ह्यश्विनोः प्रत्यासन्ने । यद्वा । द्यावापृथिवी अश्विनौ स्तौमि पूर्वचित्तयेऽन्यदीयात्स्तोत्रात्पूर्वमेवास्मदीयस्य स्तोत्रस्य प्रबोधनाय । तथा चोक्तं । तत्कावश्विनौ द्यावापृथिव्यावित्येके । नि॰ १२. १. । इति । अपि च यामन् यामन्यश्विनोरागमने सतीष्टये तदीययागार्थमाहवनीयरूपेण स्थापितमग्निं स्तौमीति शेषः । कीदृशमग्निं । घर्मं प्रवृंजनेन दीप्तं सुरुचं अत एव शोभनकांतियुक्तं । हे अश्विनौ भरे । संग्रामनामैतत । संग्रामेऽंशाय युष्मदीयभागाय जयप्राप्त्यर्थं याभिरूतिभिः पालनैः सहागत्य कारं । कारशब्दः शंखवाचीत्यभियुक्ताः संगिरंते । कारं शब्दकारिणं शंखं जिन्वथः मुखेनापूरयथः ताभिस्तादृशीभिरूतिभिः पालनैः सह । उ इति समुच्चये । अस्मानपि सुष्ठ्वा गतं । आगच्छतं ॥ ईळे । ईड स्तुतौ । उत्तमैकवचनमिट् । अदादित्वाच्छपो लुक् । अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः । द्यावापृथिवी । द्यौश्च पृथिवी च । दिवो द्यावेति द्यावादेश आद्युदात्तो निपातितः । पृथिवीशब्दो ङीषंतोऽंतोदात्तः । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं । अपृथिवीति पर्युदासान्नोत्तरपदेऽनुदात्तादाविति निषेधाभावः । वा छंदसीति पूर्वसवर्णदीर्घत्वं । पूर्वचित्तये । चिती संज्ञाने । अस्माद्भंतर्भावितण्यर्थाद्भावे क्तिन् । मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं । सुरुचं । रुच दीप्तावभिप्रीत्यां च । संपदादिलक्षणो भावे क्विप् । शोभना रुग्यस्य । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । यामन् । या प्रापणे । आतो मनिन्निति छत्यल्युटो बहुलमिति बहुलवचनाद्भावे मनिन् । कारं । क्रियतेऽनेनेति कारः । करणे घञ् । कर्षात्वत इत्यंतोदात्तत्वं । जिन्वथः । जिवि प्रीणनार्थः । अत्र प्रीणनहेतुभूतमापूरणं लक्ष्यते । धनेनापूरितो हि पुरुषः प्रीतो भवति । इदित्त्वान्नुम् । भौवादिकः । शपः पित्त्वादनुदात्तत्वं । तिङोऽदुपदेशाल्लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । यद्वृत्तान्नित्यमिति निघातप्रतिषेधः । तत्र हि व्यवहितेऽपि कार्यमिष्यत इत्युक्तं । का॰ ८. १. ६६. । ऊ षु । इकः सुञीति दीर्घत्वं । सुञ इति षत्वं । ईषाअक्षादित्वात्सुञ उकारस्य प्रकृतिभावः । ऊतिभिः । अवतेर्भावे क्तिन् । ज्वरत्वरेत्यादिना वकारस्योपधायाश्च ऊट् । ऊतियूतीत्यादिना निपातनात् क्तिन उदात्तत्वं । गतं । गमेर्लोटि बहुलं छंदसीति विकरणस्य लुक् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥

युवोर्दानाय सुभरा असश्चतो रथमा तस्थुर्वचसं न मंतवे ।
याभिर्धियोऽवथः कर्मन्निष्टये ताभिरू षु ऊतिभिरश्विना गतं ॥२॥
युवोः । दानाय । सुऽभराः । असश्चतः । रथं । आ । तस्थुः । वचसं । न । मंतवे ।
याभिः । धियः । अवथः । कर्मन् । इष्टये । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतं ॥२॥

सुभराः शोभनस्तोत्रभरणा असश्चतोऽन्यत्रानासक्ताः स्तोतारो हे अश्विनौ युवोर्युवयो रथमा तस्थुः । आतिष्ठंति । प्राप्नुवंति । किमर्थं । दानाय युष्मत्कर्तृकदानार्थं । धनलाभायेत्यर्थः । तत्र दृष्टांतः । वचसं न यथा न्यायोपेतेन वचसा वाक्येन युक्तं विपश्चितं मंतवे बुभुत्सितार्थप्रतिपत्तये स्तोतारः प्राप्नुवंति तद्वत् । अपि च कर्मन् कर्मणीष्टये यागार्थं प्रवृत्तान्धियो ध्यातॄन्विशिष्टज्ञानोपेतान्याभिरूतिभिः पालनैरवथः युवां रक्षथः । ताभिरित्यादि पूर्ववत् ॥ वचसं । अर्शआदित्वान्मत्वर्थीयोऽच् । मंतवे । मन ज्ञाने । कमिमनिजनीत्यादिना तुप्रत्ययः । धियः । ध्यायंतीति धियः स्तोतारः । ध्यै चिंतायां । क्विब्वेति क्विप् । चशब्देन दृशिग्रहणानुकर्षणात्संप्रसारणं । कर्मन् । सुपां सुलुगिति सप्तम्या लुक् । न ङिसंबुद्ध्योरिति नलोपप्रतिषेधः ॥

युवं तासां दिव्यस्य प्रशासने विशां क्षयथो अमृतस्य मज्मना ।
याभिर्धेनुमस्वं१ पिन्वथो नरा ताभिरू षु ऊतिभिरश्विना गतं ॥३॥
युवं । तासां । दिव्यस्य । प्रऽशासने । विशां । क्षयथः । अमृतस्य । मज्मना ।
याभिः । धेनुं । अस्वं । पिन्वथः । नरा । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतं ॥३॥

हे नरा नेताराावश्विनौ दिव्यस्य दिवि भवस्य स्वर्गसमुत्पन्नस्यामृतस्य सोमस्य पानेनोत्पन्नेन मज्मना बलेन युक्तौ युवं युवां तासां यास्त्रिषु लोकेषु वर्तंते तासां सर्वासां विशां प्रजानां प्रशासने प्रकृष्टानुशासने शिक्षणे क्षयथः । ऐश्वर्यकर्मायं । ईशाथे । समर्थौ भवथः । यद्वा । मज्मनान्येषामसाधारणेन बलेन विशां प्रजानां दिविभवस्यामृतस्य वृष्ट्युदकस्य प्रशासने प्रदाने क्षयथः । ईश्वरौ भवथः । अपि च याभिरूतिभी रक्षाभिरस्त्रं प्रसवासमर्थां धेनुं गां शयुनाम्ने ऋषये पिन्वथः सिंचथः । पयसा पूरितवंतावित्यर्थः । ताभिरूतिभिरित्यादि पूर्ववत् ॥ अस्वं । षूङ् प्राणिगर्भविमोचने । सवनं सूः । संपदादिलक्षणो भावे क्विप् । नास्ति सूर्यस्यामित्यसूः । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । अमि अोः सुपीति यणादेशः । उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं । पिन्वथः । पिवि सेचने । इदित्वान्नुम् । भौवादिकः ॥

याभिः परिज्मा तनयस्य मज्मना द्विमाता तूर्षु तरणिर्विभूषति ।
याभिस्त्रिमंतुरभवद्विचक्षणस्ताभिरू षु ऊतिभिरश्विना गतं ॥४॥
याभिः । परिऽज्मा । तनयस्य । मज्मना । द्विऽमाता । तूर्षु । तरणिः । विऽभूषति ।
याभिः । त्रिऽमंतुः । अभवत् । विऽचक्षणः । ताभिः । ऊं इति । सु । ऊतिऽभिः ।
अश्विना । आ । गतं ॥४॥

परिज्मा परितो गंता वायुस्तनयस्यात्मीयस्य पुत्रस्याग्नेः । अग्निर्हि व्यानवृत्त्यात्मना वर्तमानेन वायुना मथ्यमानः सन् जायते । तथा च श्रूयते । अथ यः प्राणापानयोः संधिः स व्यानः । अतो यान्यन्यानि वीर्यवंति कर्माणि यथाग्नेर्मंथनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोतीति । छां० उ० १. ३. ३–५. । यद्वा । सृष्ट्यादौ वायुसकाशादुत्पन्नत्वादग्नेः पुत्रत्वं । आम्नायते च । वायोरग्निरिति । एवं स्वपुत्रस्याग्नेर्मज्मना बलेन युक्तः सन् द्विमाता द्वयोर्लोकयोर्निर्माता । अग्निः पृथिवीस्थानो वायुरंतरिक्षस्थानः । उभयोर्मिलितयोरुभयनिर्मातृत्वमुपपन्नं । यद्वा । द्विमातेति तनयस्य विशेषणं । सुपां सुलुगिति षष्ठ्याः सुः । द्विमातृकस्य द्वाभ्यामरणिभ्यां जातस्य । एवंभूतो वायुर्हे अश्विनौ याभिरूतिभिर्हेतुभूतैः पालनैस्तूर्षु तरीतृषु धावत्सु मध्ये तरणिरतिशयेन तरीता शीघ्रगामी विभूषति विभवति व्याप्तो भवति । यद्वा । विशेषेण सर्वमलंकरोति । अपि च त्रिमंतुस्त्रयाणां मंता त्रिविधेषु पाकयज्ञहविर्यज्ञसोमयज्ञेष्वासादितज्ञानः कक्षीवान् याभिर्युष्मदीयाभिरूतिभिर्विचक्षणो विशिष्टज्ञानयुक्तोऽभवत् । ताभिः सर्वाभिरूतिभिरस्मानागच्छतं ॥ परिज्मा । परिपूर्वादज गतिक्षेपणयोरित्यस्मात् श्वन्नुक्षन्नित्यादौ निपात्यते । तूर्षु । तॄ प्लवनतरणयोः । बहुलं छंदसीत्युत्वं । हलि चेति दीर्घः । यद्वा । त्वरतेः क्विप् । ज्वरत्वरेत्यादिना वकारोपधयोरूट् । साविकाच इति विभक्तेरुदात्तत्वं । विभूषति । भवतेर्लेट्यडागमः । सिब्बहुलं लेटीति सिप् । यद्वा । भूष अलंकारे । भौवादिकः । विचक्षणः । अनुदात्तेतश्च हलादेरिति युच् ॥

याभी रेभं निवृतं सितमद्भ्य उद्वंदनमैरयतं स्वर्दृशे ।
याभिः कण्वं प्र सिषासंतमावतं ताभिरू षु ऊतिभिरश्विना गतं ॥५॥
याभिः । रेभं । निऽवृतं । सितं । अत्ऽभ्यः । उत् । वंदनं । ऐरयतं । स्वः । दृशे ।
याभिः । कण्वं । प्र । सिसासंतं । आवतं । ताभिः । ऊं इति । सु । ऊतिऽभिः ।
अश्विना । आ । गतं ॥५॥

हे अश्विनौ याभिरूतिभी रेभमेतत्संज्ञमृषिं निवृतमसुरैः कूपेऽप्सु निवारितं सितं तदीयैः पाशैर्बद्धमेवंभूतमृषिमद्भ्यः सकाशादुदैरयतं उद्गमयतं । तथा वंदनमेतत्संज्ञमृषिं च तथाभूतमुदैरयतं । किमर्थं । स्वरादित्यं दृशे द्रष्टुं । अपि च कण्वमसुरैरंधकारे प्रक्षिप्तं सिषासंतमालोकं संभक्तुमिच्छंतं याभिरूतिभिः प्रावतं प्रकर्षेणा-

रक्षतं। ताभिरित्यादि समानं ॥ रेभं। रेभृ शब्दे। रेभते स्तौतीति रेभः। पचाद्यच्। निवृतं। वृञ् वरणे। अस्मादंतर्भावितण्यर्थात्कर्मणि निष्ठा। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। सितं। षिञ् बंधने। अद्भ्यः। ऊडिदमित्यादिना विभक्तेरुदात्तत्वं। वंदनं। वदि अभिवादनस्तुत्योः। वंदते स्तौतीति वंदनः। नंद्यादिलक्षणो ल्युः। लित्स्वरेण प्रत्ययात्पूर्वस्योदात्तत्वं। स्वरित्येतद्विश्वादित्यस्य च साधारणनामधेयं। तदुक्तं यास्केन। स्वरादित्यो भवति सु अरणः सु ईरणः। नि॰ २. १४.। इति। स्वरादिनिपातं। पा॰ १. १. ३७.। इत्यव्ययत्वात्सुपो लुक्। दृशे। दृशे विख्ये चेति दृशेस्तुमर्थे केप्रत्ययांतो निपात्यते। सिषासंतं। वन षण संभक्तौ। सनि ससनी-वंतर्धेत्यादिना विकल्पनादिडभावः। जनसनखनां सञ्झलोरित्यात्वं। द्विर्भावेऽभ्यासस्य ह्रस्वत्वं। सन्यत इतीत्वं ॥ ॥३३॥

याभिरंतकं जसमानमारणे भुज्युं याभिरव्यथिभिर्जिजिन्वथुः।
याभिः कर्कंधुं वय्यं च जिन्वथस्ताभिरू षु ऊतिभिरश्विना गतं ॥६॥
याभिः। अंतकं। जसमानं। आऽअरणे। भुज्युं। याभिः। अव्यथिऽभिः। जिजिन्वथुः।
याभिः। कर्कंधुं। वय्यं। च। जिन्वथः। ताभिः। ऊं इति। सु। ऊतिऽभिः। अश्विना।
आ। गतं ॥६॥

आरणमगाधं कूपादि। तत्रासुरैः प्रक्षिप्तं जसमानं तैर्हिंस्यमानमंतकं शत्रूणामंतकरमेतत्संज्ञं राजर्षिं हे अश्विनौ याभिरूतिभिरवथः रक्षथः। तथा भुज्युं सर्वस्य पालकमेतत्संज्ञं समुद्रमध्ये निमग्नं तुग्र्यं तुग्रस्य पुत्रं राजर्षिं याभिरूतिभी रक्षणहेतुभूताभिरव्यथिभिर्व्यथारहिताभिर्नौभिर्जिजिन्वथुः युवामतर्पयतं। एतच्च मंत्रांतरे तुग्रो ह भुज्युमश्विनोदमेघे। ऋ॰ १. ११६. ३.। इत्यादिके विस्पष्टयिष्यते। अपि च कर्कंधुं वय्यं चैतत्संज्ञकौ चासुरैः पीड्यमानौ याभिरूतिभिर्जिन्वथः प्रीणयथः। गतमन्यत् ॥ जसमानं। जसु हिंसायां। यकि प्राप्ते व्यत्ययेन शप्। आरणे। आङ्पूर्वादर्तेर्ल्युट्। जिजिन्वथुः। जिविः प्रीणनार्थः। लिट्यथुसि रूपं ॥

याभिः शुचंतिं धनसां सुषंसदं तप्तं घर्ममोम्यावंतमत्रये।
याभिः पृश्निगुं पुरुकुत्समावतं ताभिरू षु ऊतिभिरश्विना गतं ॥७॥
याभिः। शुचंतिं। धनऽसां। सुऽसंसदं। तप्तं। घर्मं। ओम्याऽवंतं। अत्रये।
याभिः। पृश्निऽगुं। पुरुऽकुत्सं। आवतं। ताभिः। ऊं इति। सु। ऊतिऽभिः।
अश्विना। आ। गतं ॥७॥

हे अश्विनौ धनसां धनस्य संभक्तारं शुचंतिमेतन्नामानं सुषंसदं। संसीदंत्यस्मिन्निति संसद्गृहं। शोभनसंसदं याभिरूतिभिरकुरुतं। तथात्रये याभिरूतिभिस्तप्तं प्रवृंजनेन संतप्तं घर्मं महावीरमोम्यावंतं सुखयुक्तं सुखेन स्प्रष्टुं शक्यमकुरुतं। यद्वा। शतद्वारे यंत्रगृहेऽसुरैः पी[illegible] घर्मं दीप्तं पीडासाधनमग्निं तप्तं तापकारि-णमोम्यावंतं सुखवंतमकुरुतं। यथास्मै सुखं भवति तथा हिमेनोदकेन तमग्निमवारयेथां। यास्कपक्षे त्वत्रये हविषामत्त्रेऽग्नये हविरुत्पत्त्यर्थं सूर्यकिरणसंतप्तं घर्मं नैदाघमहरोम्यावंतं तृ[illegible]तं कृतवंताविति योज्यं। अपि च याभिरूतिभिः पृश्निगुं पुरुकुत्सं चावतं अरक्षतं। ताभिः सर्वाभिरूतिभिर[illegible] ॥ शुचंतिं। शुच दीप्तौ। औणादिको झिच्। धनसां। जनसनखनक्रमगमो विट्। विड्वनोरनुनासिकस्यादि-त्यात्वं। सुषंसदं। शोभना संसदस्य। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। ओम्यावंतं। अवतेरन्येभ्योऽपि दृश्यंत इति मनिन्। ज्वरत्वरेत्यादिना वकारस्योपधायाश्च ऊठ्। गुणः। छंदसि चेत्यर्हार्थे यप्रत्ययः। नस्तद्धित इति टिलोपः। ये चाभावकर्मणोरिति प्रकृतिभावस्तु व्यत्ययेन न प्रवर्तते। पृश्निगुं। पृश्नयो नानावर्णा गावो यस्य स तथोक्तः। गोस्त्रियोरुपसर्जनस्य। पा॰ १. २. ४८.। इति गोशब्दस्य ह्रस्वत्वं ॥

याभिः शचीभिर्वृषणा परावृजं प्रांधं श्रोणं चक्षस एतवे कृथः ।
याभिर्वर्तिकां ग्रसितामर्मुचतं ताभिरू षु ऊतिभिरश्विना गतं ॥८॥
याभिः । शचीभिः । वृषणा । पराऽवृजं । प्र । अंधं । श्रोणं । चक्षसे । एतवे । कृथः ।
याभिः । वर्तिकां । ग्रसितां । अमुंचतं । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतं ॥८॥

हे वृषणा कामानां वर्षितारावश्विनौ याभिः शचीभिः कर्मभिः प्रज्ञाभिर्वा परावृजमेतन्नामकमृषिं पंगुं संतमपंगुमकुरुतं । तथांधं दृष्टिरहितं संतमृज्राश्वमृषिं चक्षसे प्रकाशाय सम्यक् चक्षुषा दर्शनाय याभिरूतिभिः प्र कृथः प्रकर्षेण कुरुथः । याभिश्च श्रोणं विगुणजानुकमेव संतमृषिमेतवे गंतुं प्र कृथः प्रकर्षेण कृतवंतौ । अपि च याभिरूतिभिर्वर्तिकां चटकसदृशस्य पक्षिणः स्त्रियं ग्रसितां वृकेण ग्रस्तामर्मुचतं वृकास्यान्निर्मुक्तामकुरुतं । यास्कपक्षे तु वृकेण विवृतज्योतिष्केण सूर्येण याभिर्ग्रस्तां वर्तिकां प्रत्यहमावर्तमानामुषसं तस्मादमोचयतमिति योज्यं । ताभिः सर्वाभिरूतिभिरस्मानप्यागच्छतं ॥ वृषणा । वृष सेचने । कनिन्युवृषीत्यादिना कनिन् । परावृजं । वृजी वर्जने । परावृणक्ति तपसा पापं विनाशयतीति परावृक् । क्विप्चेति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं । एतवे । तुमर्थे सेसेनित्येतेस्तवेन्प्रत्ययः । कृथः । डुकृञ् करणे । बहुलं छंदसीति विकरणस्य लुक् ॥

याभिः सिंधुं मधुमंतमसंश्चतं वसिष्ठं याभिरजरावजिन्वतं ।
याभिः कुत्सं श्रुतर्यं नर्यमावतं ताभिरू षु ऊतिभिरश्विना गतं ॥९॥
याभिः । सिंधुं । मधुऽमंतं । असंश्चतं । वसिष्ठं । याभिः । अजरौ । अजिन्वतं ।
याभिः । कुत्सं । श्रुतर्यं । नर्यं । आवतं । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतं ॥९॥

हे अश्विनौ सिंधुं स्यंदनशीलां नदीं मधुमंतं मधुसदृशेनोदकेन पूर्णां याभिरूतिभिरसश्चतं अगमयतं । प्रावाहयतमित्यर्थः । हे अजरौ जरारहितावश्विनौ वसिष्ठमृषिं याभिरूतिभिरजिन्वतं अप्रीणयतं । याभिश्च कुत्सादींस्त्रीनृषीनावतं अरक्षतं । ताभिः सर्वाभिरूतिभिरस्मानपि सुष्ठ्वागच्छतं ॥ मधुमंतं । मधुशब्दाद्भूम्नि मतुप् । लिंगव्यत्ययः । असश्चतं । सश्चतिर्गतिकर्मा । अस्मादंतर्भावितण्यर्थाल्लुङ् ॥

याभिर्विश्पलां धनसामथर्व्यं सहस्रमीळ्ह आजावजिन्वतं ।
याभिर्वशमश्व्यं प्रेणिमावतं ताभिरू षु ऊतिभिरश्विना गतं ॥१०॥
याभिः । विश्पलां । धनऽसां । अथर्व्यं । सहस्रऽमीळ्हे । आजौ । अजिन्वतं ।
याभिः । वशं । अश्व्यं । प्रेणिं । आवतं । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतं ॥१०॥

हे अश्विनौ धनसां धनं संभजमानामथर्व्यमगच्छंतीं छिन्नजंघात्वेन गंतुमसमर्थां । थर्वतिर्गतिकर्मा । विश्पलामेतत्संज्ञामगस्त्यपुरोहितस्य खेलस्य संबंधिनीं सहस्रमीळ्हे । मीळ्हमिति धननाम । बहुधनोपेत आजौ संग्रामे याभिरूतिभिरजिन्वतं गंतुं समर्थामकुरुतं । एतच्च चरित्रं हि वेरिवाच्छेदि पर्णं । ऋ० १. ११६. १५. । इत्यत्र विस्पष्टयिष्यते । याभिश्चाश्व्यमश्वाख्यस्य पुत्रं प्रेणिं स्तुतेः प्रेरयितारं वशमेतत्संज्ञमृषिमावतं अरक्षतं । ताभिः सर्वाभिरूतिभिः सहास्मानप्यागच्छतं ॥ प्रेणिं । प्रेणृ गतिप्रेरणश्लेषणेषु । औणादिक इप्रत्ययः ॥ ॥३४॥

याभिः सुदानू औशिजाय वणिजे दीर्घश्रवसे मधु कोशो अक्षरत् ।
कक्षीवंतं स्तोतारं याभिरावतं ताभिरू षु ऊतिभिरश्विना गतं ॥११॥
याभिः। सुदानू इति सुऽदानू। औशिजाय। वणिजे। दीर्घऽश्रवसे। मधु। कोशः। अक्षरत्।
कक्षीवंतं। स्तोतारं। याभिः। आवतं। ताभिः। ऊं इति। सु। ऊतिऽभिः। अश्विना।
आ। गतं ॥११॥

उशिक्संज्ञा दीर्घतमसः पत्नी। तस्याः पुत्रो दीर्घश्रवा नाम कश्चिदृषिरनावृष्ट्यां जीवनार्थमकरोद्वाणिज्यं। स च वर्षणार्थमश्विनौ तुष्टाव। तौ चाश्विनौ मेघं प्रेरितवंतौ। अयमर्थः पूर्वार्धे प्रतिपाद्यते। हे सुदानू शोभनदानावश्विनौ औशिजायोशिक्पुत्राय वणिजे वाणिज्यं कुर्वते दीर्घश्रवस एतत्संज्ञाय ऋषये याभिर्युष्मदीयाभिरूतिभिर्हेतुभूताभिः कोशो मेघो मधु माधुर्योपेतं वृष्टिजलमक्षरत् असिंचत्। युष्मत्प्रसादादपेक्षिता वृष्टिर्जातेत्यर्थः। अपि चौशिजः पुत्रं स्तोतारं कक्षीवंतमेतत्संज्ञमृषिं याभिरूतिभिरावतं अरक्षतं। ताभिः सर्वाभिरूतिभिः सहास्मानप्यागच्छतं॥ कक्षीवंतं। कक्ष्या रज्जुरश्वस्य। तया युक्तः कक्षीवान्। आसंदीवदष्ठीवच्चक्रीवत्कक्षीवदिति निपातनान्मतुपो वत्वं। संप्रसारणं॥

याभी रसां क्षोदसोद्नः पिपिन्वथुरनश्वं याभी रथमावतं जिषे।
याभिस्त्रिशोक उस्रिया उदाजत ताभिरू षु ऊतिभिरश्विना गतं ॥१२॥
याभिः। रसां। क्षोदसा। उद्नः। पिपिन्वथुः। अनश्वं। याभिः। रथं। आवतं। जिषे।
याभिः। त्रिऽशोकः। उस्रियाः। उत्ऽआजत। ताभिः। ऊं इति। सु। ऊतिऽभिः।
अश्विना। आ। गतं ॥१२॥

रसा नदी भवति रसतेः शब्दकर्मण इति यास्कः। नि॰ ११. २५.। हे अश्विनौ याभिरूतिभिर्हेतुभूताभी रसां नदीमनावृष्ट्या जलरहितां क्षोदसा कूलानि संपिंषतोद्न उदकेन पिपिन्वथुः युवां पूरितवंतौ। तथानश्वमश्वैर्वियुक्तमात्मीयं रथं जिषे जेतुं याभिरूतिभिरावतं अगमयतं। अपि च याभिरूतिभिः कण्वपुत्रस्त्रिशोक ऋषिरुस्रिया अपहृता गा उदाजत उदगमयत् असुरसकाशाल्लेभे। ताभिः सर्वाभिरूतिभिः सहास्मानप्यागच्छतं॥ क्षोदसा। क्षुदिर् संपेषणे। औणादिकोऽसुन्। उद्नः। तृतीयैकवचनस्य सुपां सुपो भवंतीति शसादेशः। पद्दन्नित्यादिनोदकशब्दस्योदन्भावः। भसंज्ञाया।मल्लोपोऽन इत्यकारलोपः। पिपिन्वथुः। पिवि सेचने। इदित्त्वान्नुम्। जिषे। जि जये। तुमर्थे सेसेनिति क्सेप्रत्ययः। उदाजत। अज गतिक्षेपणयोः॥

याभिः सूर्यं परियाथः परावति मंधातारं क्षैत्रपत्येष्वावतं।
याभिर्विप्रं प्र भरद्वाजमावतं ताभिरू षु ऊतिभिरश्विना गतं ॥१३॥
याभिः। सूर्यं। परिऽयाथः। पराऽवति। मंधातारं। क्षैत्रऽपत्येषु। आवतं।
याभिः। विप्रं। प्र। भरत्ऽवाजं। आवतं। ताभिः। ऊं इति। सु। ऊतिऽभिः।
अश्विना। आ। गतं ॥१३॥

हे अश्विनौ परावति दूरदेशे स्थितं सूर्यं तमोरूपेण स्वर्भानुनावृतमादित्यं तस्मात्तमसो मोचयितुं याभिरूतिभिः परियाथः युवां परितो गच्छथः। तथा मंधातारमृषिं क्षैत्रपत्येषु। क्षेत्राणां पतिरधिपतिः क्षेत्रपतिः। तत्संबंधिषु कर्मस्वावतं अरक्षतं। अपि च याभिरूतिभिर्विप्रं मेधाविनं भरद्वाज[illegible] प्रावतं प्रकर्षे-

णारचतं। ताभिः सर्वाभिरूतिभिः सह रक्षणार्थमस्मानभ्यागच्छतं ॥ चैत्रपत्येषु। ब्राह्मणादेराकृतिगणत्वात्कर्मण्यर्थे ष्यञ् ॥

याभिर्म॒हाम॑तिथि॒ग्वं क॑शो॒जुवं॒ दिवो॑दासं शंबरह॒त्य आव॑तं।
याभिः॑ पू॒र्भिद्ये॑ त्र॒सद॑स्यु॒माव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तं ॥१४॥
याभिः॑। म॒हां। अ॒ति॒थि॒ऽग्वं। क॒श॒ःऽजुवं॑। दिवः॑ऽदासं। शं॒ब॒र॒ऽह॒त्ये। आव॑तं।
याभिः॑। पूः॒ऽभिद्ये॑। त्र॒सद॑स्युं। आव॑तं। ताभिः॑। ऊं॒ इति॑। सु। ऊ॒ति॒ऽभिः॑। अ॒श्वि॒ना॒।
आ। ग॒तं॒ ॥१४॥

हे अश्विनौ महां महांतमतिथिग्वमतिथिभिर्गंतव्यं कशोजुवमसुरभीत्योदकं प्रविष्टुं गंतारं एवंभूतं दिवोदासमेतत्संज्ञकं राजर्षिं शंबरहत्ये। शंब आयुधं। तद्युक्तः शंबरोऽसुरः। तस्य हनने विषयभूते सति याभिरूतिभिरावतं अरक्षतं। अपि च याभिरूतिभिः पूर्भिद्ये। पुराणि नगराणि भिद्यंतेऽस्मिन्निति पूर्भिद्यः संग्रामः। तस्मिन् त्रसदस्युमेतत्संज्ञकमृषिं पुरुकुत्सपुत्रमावतं अरक्षतं। ताभिरित्यादि पूर्ववत् ॥ महां। महांतमित्यस्य च्छांदसो वर्णलोपः। कशोजुवं। कश इत्युदकनाम। कश गतिशातनयोः। असुन्। कशांस्युदकानि जवतीति कशोजूः। जु इति सौत्रो धातुर्गत्यर्थः। क्विब्वचीत्यादिना। उ० २. ५७.। क्विब्दीर्घौ। दिवोदासं। दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः। का० ६. ३. २१. ५.। इत्यलुक्। दिवोदासादीनां छंदस्युपसंख्यानं। पा० ६. २. ९१. १.। इति पूर्वपदाद्युदात्तत्वं। शंबरहत्ये। हनस्त चेति हंतेर्भावे क्यप् तत्संनियोगेन तकारांतादेशश्च। कृदुत्तरपदप्रकृतिस्वरत्वं ॥

याभि॑र्व॒म्रं वि॑पि॒पा॒नमु॑पस्तु॒तं क॒लिं याभि॑र्वि॒त्तजा॑निं दुव॒स्यथः॑।
याभि॒र्व्य॑श्वमु॒त पृ॒थिमाव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तं ॥१५॥
याभिः॑। व॒म्रं। वि॒ऽपि॒पा॒नं। उ॒प॒ऽस्तु॒तं। क॒लिं। याभिः॑। वि॒त्तऽजा॑निं। दु॒व॒स्यथः॑।
याभिः॑। वि॒ऽअ॑श्वं। उ॒त। पृथिं॑। आव॑तं। ताभिः॑। ऊं॒ इति॑। सु। ऊ॒ति॒ऽभिः॑।
अ॒श्वि॒ना॒। आ। ग॒तं॒ ॥१५॥

हे अश्विनौ वम्रं विखनसः पुत्रमेतत्संज्ञमृषिं विपिपानं विशेषेण पार्थिवं रसं पिबंतं याभिरूतिभिररक्षतं। कीदृशं। उपस्तुतं समीपस्थैः सम्यक् स्तुतमिति स्तूयमानं। तथा वित्तजानिं लब्धभार्यं कलिमेतत्संज्ञमृषिं याभिरूतिभिर्दुवस्यथः रक्षथः। उतापि च व्यश्वं विगताश्वं पृथिमेतत्संज्ञं वैनं राजर्षिं याभिरूतिभिरावतं अरक्षतं। अन्यत्पूर्ववत् ॥ विपिपानं। पा पाने। ताच्छीलिकश्चानश्। बहुलं छंदसीति शपः श्लुः। बहुलं छंदसीत्यभ्यासस्येत्वं। उपस्तुतं। स्तौतेः कर्मणि निष्ठा। प्रवृद्धादित्वादुत्तरपदांतोदात्तत्वं। पा० ६. २. १४७.। वित्तजानिं। वित्ता लब्धा जाया येन स तथोक्तः। जायाया निङ्। पा० ५. ४. १३४.। इति समासांतो निङादेशः। लोपो व्योर्वलीति वलि लोपः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। व्यश्वं। विगतोऽश्वो यस्मात्स तथोक्तः। बहुव्रीहिस्वरेण पूर्वपदस्योदात्तत्व उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं ॥ ॥३५॥

याभि॑र्नरा श॒यवे॒ याभि॒रत्र॑ये॒ याभिः॑ पु॒रा मन॑वे गा॒तुमी॒षथुः॑।
याभिः॑ शारी॒राज॑तं॒ स्यूम॑रश्मये॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तं ॥१६॥
याभिः॑। न॒रा॒। श॒यवे॑। याभिः॑। अत्र॑ये। याभिः॑। पु॒रा। मन॑वे। गा॒तुं। ई॒षथुः॑।
याभिः॑। शारीः॑। आज॑तं। स्यूम॑ऽरश्मये। ताभिः॑। ऊं॒ इति॑। सु। ऊ॒ति॒ऽभिः॑।
अ॒श्वि॒ना॒। आ। ग॒तं॒ ॥१६॥

हे नरा नेतारावश्विनौ पुरा पूर्वस्मिन्काले शयव एतत्संज्ञकाय ऋषये गातुं दुःखान्निर्गमनलक्षणं मार्गं याभिरूतिभिरीषथुः युवां वांछितवंतौ । कृतवंतावित्यर्थः । किं तत् । सामर्थ्यात् शयवे चिन्नासत्या शचीभिः ।ऋ० १. ११६. २२.। इत्यस्यामृचि प्रतिपादितं । तथात्रये ऋषये शतद्वारे यंत्रगृहेऽसुरैः पीड्यमानाय संतापकारिणोऽग्नेः शीतेनोदकेन शीतकरणलक्षणं गातुं दुःखनिर्गमनहेतुभूतं मार्गं याभिरूतिभिर्युवामिष्टवंतौ । एतच्च हिमेनाग्निं घ्रंसमवारयेथां ।ऋ० १. ११६. ८.। इत्यादौ प्रसिद्धं । तथा मनव एतन्नाम्ने राजर्षये याभिरूतिभिर्यवादिधान्यवापनादिरूपं गातुं दारिद्र्यनिर्गमनहेतुं मार्गं युवां कृतवंतौ । तथा च मंत्रांतरं । यवं वृकेणाश्विना वपंता ।ऋ० १. ११७. २१.। इति । अपि च स्यूमरश्मये स्यूतः संबद्धो रश्मिर्दीप्तिर्यस्य तस्मै एतत्संज्ञकाय ऋषये याभिरूतिभिः शारीः । शरो नाम वेणुविशेषः । तद्विकारभूता इषूराजतं शत्रून्प्रति प्रेरयतं । ताभिरूतिभिरित्यादि पूर्ववत् ॥ नरा । नृ नये । ऋदोरप् । सुपां सुलुगिति विभक्तेराकारः । शयवे । शीङ् स्वप्ने । भृमृशीतॄचरीत्यादिना ।उ० १. ७.। उप्रत्ययः । ईषथुः । इषु इच्छायां । लिट्यथुस्यसवर्ण इति पर्युदासात् ।पा० ६. ४. ७८.। अभ्यासस्येयङादेशाभावे सवर्णदीर्घः । शारीः । विकारार्थे शरशब्दादनुदात्तादेश्चेत्यञ् । टिड्ढाणञिति ङीप् । स्यूमरश्मये । षिवु तंतुसंताने । सिवेरौणादिको मन्प्रत्ययः । छ्वोः शूडित्यूट् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥

याभिः पठर्वा जठरस्य मज्मनाग्निर्नादीदेच्चित इद्धो अज्मन्ना ।
याभिः शर्यातमवथो महाधने ताभिरू षु ऊतिभिरश्विना गतं ॥१७॥
याभिः । पठर्वा । जठरस्य । मज्मना । अग्निः । न । अदीदेत् । चितः । इद्धः । अज्मन् । आ ।
याभिः । शर्यातं । अवथः । महाऽधने । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतं ॥१७॥

हे अश्विनौ जठरस्य । जठरमुदरं भवति जग्धमस्मिन्ध्रियत इति यास्कः ।नि० ४. ७.। जठरोपलक्षितस्य शरीरस्य मज्मना बलेन युक्तः सन् पठर्वैतत्संज्ञो राजर्षिरज्मन् । संग्रामनामैतत् । अज्मनि संग्रामे युष्मदीयाभिर्याभिरूतिभिरा समंताददीदेत् अदीप्यत । तत्र दृष्टांतः । चितः काष्ठैरभिचित इद्धो यज्ञगृह ऋत्विग्भिः प्रज्वालितोऽग्निर्न । यथाग्निः प्रकाशते तद्वदित्यर्थः । अपि च शर्यातं मानवमिंद्रेण सह स्पर्धमानं महाधने । संग्रामनामैतत् । महता धनेनोपेते संग्रामे याभिरूतिभिरवथः रक्षथः । ताभिरित्यादि गतं ॥ अदीदेत् । दीदेतिश्छांदसो दीप्तिकर्मा । अज्मन् । अज गतिक्षेपणयोः । अजंति क्षिपंत्यस्मिन्बाणानित्यधिकरणे औणादिको मनिन् । वलादावार्धधातुके विकल्प इष्यते ।का० २. ४. ५६. २.। इति वचनाद्वीभावाभावः । सुपां सुलुगिति सप्तम्या लुक् । महाधने । आन्महत इत्यात्वं ॥

याभिरंगिरो मनसा निरण्यथोऽग्रं गच्छथो विवरे गोअर्णसः ।
याभिर्मनुं शूरमिषा समावतं ताभिरू षु ऊतिभिरश्विना गतं ॥१८॥
याभिः । अंगिरः । मनसा । निःऽरण्यथः । अग्रं । गच्छथः । विऽवरे । गोऽअर्णसः ।
याभिः । मनुं । शूरं । इषा । संऽआवतं । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतं ॥१८॥

अंगिर इत्येतदामंत्रितं वाक्याद्बहिर्भूतं । तेन चात्मानं संबोध्य स्तुतावृषिं प्रेरयति । हे अंगिरोऽंगिरसां गोत्रज त्वमश्विनौ स्तुहि । हे अश्विनौ मनसा मननीयेन स्तोत्रेण प्रीतौ संतौ युवां याभिरूतिभिर्निरण्यथः स्तोतॄन् नितरां रमयथः । यद्वा । मनसैव करणभूतेन रमयथः । तथा गोअर्णसो गोरूपस्यारणीयस्य धनस्य पणिभिर्गुहायां निहितस्य विवरे विवरणे गुहाद्वारस्योद्घाटनेन प्रकाशने विषयभूते सति याभिरूतिभिः सह

युवामग्रं सर्वेभ्यो देवेभ्यः पुरस्ताद्गच्छथः । अपि च शूरं वीर्यवंतं मनुमिषा पृथिव्यामुप्तेन यवादिधान्यरूपेणान्नेन याभिरूतिभिः समावतं सम्यगरक्षतं । ताभिः सर्वाभिरूतिभिः सहास्मानभ्यागच्छतं ॥ निरण्यथः । निरमयथ इत्यस्य वर्णव्यापत्त्यैतद्रूपं । विवरे । ग्रहवृदृनिश्चिगमश्चेति भावेऽप् । थाथादिनोत्तरपदांतोदात्तत्वं ॥

याभिः पत्नीर्विमदाय न्यूहथुरा घ वा याभिररुणीरशिक्षतं ।
याभिः सुदास ऊहथुः सुदेव्यं१ ताभिरू षु ऊतिभिरश्विना गतं ॥१९॥
याभिः । पत्नीः । विऽमदाय । निऽऊहथुः । आ । घ । वा । याभिः । अरुणीः । अशिक्षतं ।
याभिः । सुऽदासे । ऊहथुः । सुऽदेव्यं । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतं ॥१९॥

हे अश्विनौ विमदायैतन्नाम्न ऋषये याभिर्युष्मदीयाभिरूतिभिः पत्नीर्भार्याः पुरुमित्रस्य दुहितरं न्यूहथु नितरां युवां प्रापितवंतौ । घेति पादपूरणः । तथा याभिरूतिभिररुणीररुणवर्णा आरोचमाना गा आभिमुख्येनाशिक्षतं अदत्तं । तथा पिजवनपुत्राय सुदासे कल्याणदानाय राज्ञे सुदेव्यं प्रशस्तं धनं याभिरूतिभिरूहथुः प्रापितवंतौ । ताभिरित्यादि गतं ॥ पत्नीः । अमो व्यत्ययेन शसादेशः । न्यूहथुः । वह प्रापणे । अथुसि यजादित्वात्संप्रसारणं । द्विर्वचनादि । सुदासे । शोभनं ददातीति सुदाः । असुन् । सुदेव्यं । दिगादित्वाद्यत् । पा० ४. ३. ५४. । तित्स्वरित इति स्वरितत्वं ॥

याभिः शंताती भवथो ददाशुषे भुज्युं याभिरवथो याभिरध्रिगुं ।
ओम्यावतीं सुभरामृतस्तुभं ताभिरू षु ऊतिभिरश्विना गतं ॥२०॥
याभिः । शंताती इति शंऽताती । भवथः । ददाशुषे । भुज्युं । याभिः । अवथः ।
याभिः । अध्रिऽगुं ।
ओम्याऽवतीं । सुऽभरां । ऋतऽस्तुभं । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतं ॥२०॥

हे अश्विनौ ददाशुषे हवींषि दत्तवते यजमानाय याभिरूतिभिः शंताती सुखस्य कर्तारौ भवथः । याभिश्चोतिभिर्भुज्युं तुग्रस्य पुत्रमवथः । याभिश्चाध्रिगुं । अध्रिगुर्देवानां शमिता । अध्रिगुश्चापापश्च उभौ देवानां शमितारौ । तै० ब्रा० ३. ६. ६. ४. । इति श्रुतेः । अपि च ऋतस्तुभं । ऋतं सत्यं स्तोभत्युच्चारयतीत्यृतस्तुप् । एतत्संज्ञमृषिं ओम्यावतीं । ओम्येति सुखनाम । तद्युक्तां सुभरां सुखेन भरणीयामिषं याभिरूतिभिः प्रापयथः । ताभिः सर्वाभिरूतिभिः सहास्मानभ्यागच्छतं ॥ शंताती । शिवशमरिष्टस्य करे । पा० ४. ४. १४३. । इति तातिल्प्रत्ययः । लितीति प्रत्ययात्पूर्वस्योदात्तत्वं । ददाशुषे । दाशृ दाने । लिटः क्वसुः । वसोः संप्रसारणमिति संप्रसारणं । शासिवसिघसीनां चेति षत्वं ॥ ॥ ३६ ॥

याभिः कृशानुमसने दुवस्यथो जवे याभिर्यूनो अर्वंतमावतं ।
मधु प्रियं भरथो यत्सरड्भ्यस्ताभिरू षु ऊतिभिरश्विना गतं ॥२१॥
याभिः । कृशानुं । असने । दुवस्यथः । जवे । याभिः । यूनः । अर्वंतं । आवतं ।
मधु । प्रियं । भरथः । यत् । सरट्ऽभ्यः । ताभिः । ऊं इति । सु । ऊतिऽभिः । अश्विना ।
आ । गतं ॥२१॥

स्वानादिषु सोमपालेषु मध्ये कृशानुरेकः सोमपालः। तथा च तैत्तिरीयकं। हस्त सुहस्त कृशानवेते वः सोमक्रयणाः। तै॰ सं॰ १. २. ७.। इति। तं कृशानुमसने। इषवोऽस्यंतेऽस्मिन्नित्यसनः संग्रामः। तस्मिन्संग्रामे हे अश्विनौ याभिरूतिभिर्दुवस्यथः रक्षथः। तथा याभिश्च जवे वेगे प्रवृत्तं यूनस्तरुणस्य पुरुकुत्सस्यार्वंतमश्वमावतं अरक्षतं। अपि च यन्मधु क्षौद्रं प्रियं सर्वेषामनुकूलवेद्यं तत्सरड्भ्यो मधुमक्षिकाभ्यो याभिश्चोतिभिर्भरथः संपादयथः। ताभिः सर्वाभिरूतिभिः सहास्मानभ्यागच्छतं॥ असने। असु क्षेपणे। करणाधिकरणयोश्चेत्यधिकरणे ल्युट्। सरड्भ्यः। सृ गतौ। सर्तेरटिः॥

याभि॒र्नरं॑ गोषु॒युधं॑ नृ॒षाह्ये॒ क्षेत्र॑स्य सा॒ता तन॑यस्य॒ जिन्व॑थः।
याभी॒ रथाँ॒ अव॑थो॒ याभि॒रर्व॑त॒स्ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तं॥२२॥
याभिः॑। नरं॑। गो॒षु॒ऽयुधं॑। नृ॒ऽसह्ये॑। क्षेत्र॑स्य। सा॒ता। तन॑यस्य। जिन्व॑थः।
याभिः॑। रथा॑न्। अव॑थः। याभिः॑। अर्व॑तः। ताभिः॑। ऊं॒ इति॑। सु। ऊ॒तिऽभिः॑।
अ॒श्वि॒ना॒। आ। ग॒तं॒॥२२॥

हे अश्विनौ गोषुयुधं गोविषयं युद्धं कुर्वंतं नरं यज्ञस्य नेतारं यजमानं याभिरूतिभिर्नृषाह्ये नृभिः सोढव्ये संग्रामे जिन्वथः प्रीणयथः। रक्षथ इत्यर्थः। तथा क्षेत्रस्य गृहादिरूपस्य। तनयशब्दो धनवाची। तनयस्य धनस्य च साता सातये संभजनार्थं याभिरूतिभिर्यजमानं रक्षथः। याभिश्च यजमानानां रथान्रक्षथः। तदीयानर्वतोऽश्वांश्च याभिरवथः। ताभिः सर्वाभिरूतिभिः सहास्मानभ्यागच्छतं॥ गोषुयुधं। युध संप्रहारे। गोषु युध्यत इति गोषुयुत्। तत्पुरुषे कृति बहुलमित्यलुक्। नृषाह्ये। षह मर्षणे। शकिसहोश्चेति यत्। अन्येषामपि दृश्यत इति सांहितिको दीर्घः। कृदुत्तरपदप्रकृतिस्वरत्वं। साता। वन षण संभक्तौ। भावे क्तिन्। जनसनखनां सञ्झलोरित्यात्वं। ऊतियूतीत्यादिना क्तिन उदात्तत्वं निपातितं। सुपां सुलुगिति चतुर्थ्या डादेशः। जिन्वथः। जिविः प्रीणनार्थः। भौवादिकः। इदित्वान्नुम्। रथान्। दीर्घादटि समानपाद इति नकारस्य रुत्वं। आतोऽटि नित्यमिति सानुनासिक आकारः॥

याभिः॒ कुत्स॑मार्जुने॒यं श॑तक्रतू॒ प्र तु॒र्वीतिं॒ प्र च॑ द॒भीति॒माव॑तं।
याभि॑र्ध्व॒संतिं॑ पुरु॒षंति॒माव॑तं॒ ताभि॑रू॒ षु ऊ॒तिभि॑रश्विना॒ ग॑तं॥२३॥
याभिः॑। कुत्सं॑। आ॒र्जु॒ने॒यं। श॒त॒क्र॒तू॒ इति॑ शत॒ऽक्र॒तू॒। प्र। तु॒र्वीतिं॑। प्र। च॒। द॒भीतिं॑। आव॑तं।
याभिः॑। ध्व॒संतिं॑। पु॒रु॒ऽसंतिं॑। आव॑तं। ताभिः॑। ऊं॒ इति॑। सु। ऊ॒तिऽभिः॑। अ॒श्वि॒ना॒।
आ। ग॒तं॒॥२३॥

हे शतक्रतू बहुविधकर्माणावश्विनौ आर्जुनेयं। अर्जुन इतींद्रस्य नाम। तथा च वाजसनेयकं। एतद्धा इंद्रस्य गुह्यं नाम यदर्जुन इति। तस्य पुत्रं कुत्सं याभिरूतिभिः प्रावतं प्रकर्षेणारक्षतं। तथा तुर्वीतिं दभीतिं च याभिरूतिभिः प्रावतं। अपि च याभिर्ध्वसंतिमेतत्संज्ञं पुरुषंतिमेतन्नामानं च ऋषिमावतं अरक्षतं। ताभिः सर्वाभिरूतिभिः सहास्मानपि सुष्ठ्वागच्छतं॥ आर्जुनेयं। शुभ्रादिभ्यश्च। पा॰ ४. १. १२३.। इति चशब्दोऽनुक्तसमुच्चयार्थ इत्युक्तत्वात् ढक्। तुर्वीतिं। तुर्वी हिंसार्थः। शत्रूंस्तुर्वतीति तुर्वीतिः। औणादिक ईतिप्रत्ययः। दभीतिं। दम्भु दंभे। औणादिकः कीतिप्रत्ययः। ध्वसंतिं। ध्वन्सु गतौ च। औणादिको झिङ्प्रत्ययः। अनिदितामिति नलोपः। झोऽंतः। पुरुषंतिं। पुरु सनोति ददातीति पुरुषंतिः। क्तिच्क्तौ च संज्ञायामिति क्तिच्। न क्तिचि दीर्घश्चेत्यनुनासिकलोपोपधादीर्घयोर्निषेधः॥

अप्न॑स्वतीमश्विना॒ वाच॑म॒स्मे कृ॒तं नो॑ दस्रा वृषणा मनी॒षां।
अ॒द्यू॒त्येऽव॑से॒ नि ह्व॑ये वां वृ॒धे च॑ नो भवतं॒ वाज॑सातौ॥२४॥

अप्नस्वतीं। अश्विना। वाचं। अस्मे इति। कृतं। नः। दस्रा। वृषणा। मनीषां।
अद्यूत्ये। अवसे। नि। ह्वये। वां। वृधे। च। नः। भवतं। वाजऽसातौ ॥२४॥

हे अश्विनौ अस्मे अस्माकं वाचमप्नस्वतीं। अप्न इति कर्मनाम। विहितैः कर्मभिः संयुक्तां कृतं। कुरुतं। तथा नोऽस्माकं मनीषां बुद्धिं हे वृषणा कामानां वर्षकौ दस्रा शत्रूणामुपक्षपयितारावश्विनौ वेदार्थज्ञानसमर्थां कुरुतं। अपि च यस्माद्युवामेवंगुणविशिष्टौ तस्माद्वां युवामवसे रक्षणाय नि ह्वये। नितरामाह्वये। कदा। अद्यूत्ये द्योतनरहिते प्रकाशनरहिते रात्रेः पश्चिमे यामे। तस्मिन्काले हि प्रातरनुवाकाश्विनशस्त्रयोरिदं सूक्तं पठ्यते। आहूतौ च युवां वाजसातौ वाजस्यान्नस्य संभजने। यद्वा। संग्रामनामैतत्। संग्रामे नोऽस्माकं वृधे वर्धनाय भवतं॥ अप्नस्वतीं। आपः कर्माख्यायां ह्रस्वो नुट् चेत्यसुन् नुडागमश्च। तदस्यास्तीति मतुप्। मादुपधाया इति मतुपो वत्वं। तसौ मत्वर्थ इति भत्वेन पदत्वाभावाद्रुत्वाद्यभावः। अस्मे। सुपां सुलुगिति षष्ठ्याः शेआदेशः। कृतं। करोतेर्लोटि बहुलं छंदसीति विकरणस्य लुक्। अद्यूत्ये। द्युत दीप्तौ। ऋहलोर्ण्यदिति भावे ण्यत्। वर्णव्यापत्त्या ऊकारः। द्यूत्यं प्रकाशनमस्मिन्नास्तीति बहुव्रीहौ व्यत्ययेनांतस्वरितत्वं। नि ह्वये। निसमुपविभ्यो ह्व इत्यात्मनेपदं। वृधे। वृधु वृद्धौ। संपदादिलक्षणो भावे क्विप्। सावेकाच इति विभक्तेरुदात्तत्वं॥

द्युभिरक्तुभिः परि पातमस्मानरिष्टेभिरश्विना सौभगेभिः।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥२५॥
द्युऽभिः। अक्तुऽभिः। परि। पातं। अस्मान्। अरिष्टेभिः। अश्विना। सौभगेभिः।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः ॥२५॥

हे अश्विनौ द्युभिर्दिवसैरक्तुभी रात्रिभिश्चास्मान् स्तोतॄन्परि पातं। परितो रक्षतं। सर्वदास्मान् रक्षतमित्यर्थः। तथारिष्टेभिरहिंसितैः सौभगेभिः सुभगत्वैः सुभगत्वापादकैर्धनैरस्मान्रक्षतं। यदस्माभिः प्रार्थितं नोऽस्मदीयं तन्मित्रादयः षड्देवताः ममहंतां। पूजयंतु। उतशब्दः समुच्चये॥ द्युभिः। दिव उदित्युत्वं। दिवो झल्। पा० ६. १. १८३। इ। सावेकाच इति प्राप्तस्य विभक्त्युदात्तत्वस्य प्रतिषेधः। अरिष्टेभिः। रिष हिंसायां। निष्ठेति क्तः। नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं। बहुलं छंदसीति भिस ऐसभावः। अश्विना। सुपां सुलुगिति विभक्तेराकारः। आमंत्रितस्य चेति सर्वानुदात्तत्वं। सौभगेभिः। शोभनो भगः श्रीर्यस्यासौ सुभगः। तस्य भावः सौभगं। सुभगान्मंत्र इत्युद्गात्रादिषु पाठादञ्प्रत्ययः। हृद्भगसिंध्वंते पूर्वपदस्य चेत्युभयपदवृद्धिर्न भवति तस्य सर्वे विधयश्छंदसि विकल्प्यंत इति विकल्पितत्वात्। पूर्ववदैसभावः। ञ्नित्यादिर्नित्यमित्याद्युदात्तत्वं॥ ॥३७॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टके सप्तमोऽध्यायः समाप्तः॥

---

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं॥

इत्थं सप्तममध्यायं व्याख्यायाष्टमोऽध्यायो व्याख्यातुमारभ्यते। प्रथमे मंडले षोडशेऽनुवाके सप्त सूक्तानि गतानि। इदमिति विंशत्यृचमष्टमं सूक्तं। अत्रानुक्रम्यते। इदं विंशतिरुषस्यं द्वितीयोऽर्धर्चो रात्रेश्चेति। ऋषिश्चान्यस्मादिति परिभाषयानुवृत्तेरांगिरसः कुत्स ऋषिः। अनादेशपरिभाषया त्रिष्टुप् छंदः। उषा देवता

द्वितीयस्यार्धर्चस्य रात्रिरपि ॥ प्रातरनुवाक उषस्ये क्रतौ त्रैष्टुभे छंदस्येतत्सूक्तं । सूत्रितं च । इदं श्रेष्ठं पृथू रथ इति सूक्ते । आ० ४. १४. । इति ॥ आश्विनशस्त्रे चेदं सूक्तं प्रातरनुवाकातिदेशात् ॥

इदं श्रेष्ठं ज्योतिषां ज्योतिरागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा ।
यथा प्रसूता सवितुः सवायँ एवा रात्र्युषसे योनिमारैक् ॥ १ ॥
इदं । श्रेष्ठं । ज्योतिषां । ज्योतिः । आ । अगात् । चित्रः । प्रऽकेतः । अजनिष्ट । विऽभ्वा ।
यथा । प्रऽसूता । सवितुः । सवाय । एव । रात्री । उषसे । योनिं । अरैक् ॥ १ ॥

ज्योतिषां ग्रहनक्षत्रादीनां द्योतमानानां मध्य इदमुषआख्यं ज्योतिः श्रेष्ठं । प्रशस्यतमं । अस्य कोऽतिशय इति चेत् उच्यते । नक्षत्रादिकं ज्योतिः स्वात्मानमेव प्रकाशयति नान्यत् । चंद्रस्तु यद्यप्यन्यत्प्रकाशयति तथापि न विस्पष्टप्रकाशः । औषसं तु ज्योतिर्युगपदेव सर्वस्य जगतोऽंधकारनिराकरणेन विशेषेण प्रकाशकं । अतः प्रशस्यतममित्यर्थः । तादृशं ज्योतिरागात् । पूर्वस्यां दिश्यागमत् । आगते च तस्मिन् चित्रश्चायनीयः प्रकेतोऽंधकारावृतस्य सर्वस्य पदार्थस्य प्रज्ञापकस्तदीयो रश्मिर्विभ्वा विभुर्व्याप्तः सन्नजनिष्ट । प्रादुरभूत् । किंच यथा रात्री रात्रिः स्वयं सवितुः सूर्यसकाशात्प्रसूता उत्पन्ना । सूर्यो ह्यस्तं गच्छन् रात्रिं जनयति । तस्मिन्ननस्तमिते रात्रेरुत्पत्त्यभावात् । एवमेव रात्रिरप्युषसे सवायोषस उत्पत्तये तदर्थं योनिं स्थानं स्वकीयापरभागलक्षणमरैक् । अरेचितवती । कल्पितवतीत्यर्थः । यद्वा । प्रसूता रात्रिसकाशादुत्पन्नोषाः सवितुः सूर्यस्य सवाय प्रसवाय जन्मने यथा भवति एवं रात्रिरप्युषस उषसो यज्जन्म तदर्थं योनिं स्वापरभागलक्षणं स्थानं कृतवती । अत्र निरुक्तं । इदं श्रेष्ठं ज्योतिषां ज्योतिरागमत् चित्रं प्रकेतनं प्रज्ञाततममजनिष्ट विभूततमं यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनिमरिचत्स्थानं । नि० २. १९. । इति ॥ श्रेष्ठं । प्रशस्यशब्दादातिशायनिक इष्ठन् । प्रशस्यस्य श्रः । पा० ५. ३. ६०. । इति आदेशः । प्रकृत्यैकाच् । पा० ६. ४. १६३. । इति प्रकृतिभावाट्टिलोपाभावः । अगात् । एतेर्लुङीणो गा लुङीति गादेशः । गातिस्थेति सिचो लुक् । प्रकेतः । कित ज्ञाने । अंतर्भावितण्यर्थात्कर्मणि घञ् । थाथादिनोत्तरपदांतोदात्तत्वं । अजनिष्ट । जनी प्रादुर्भावे । लुङि सिच इडागमः । विभ्वा । विप्रसंभ्यो ड्वसंज्ञायामिति भवतेर्डुप्रत्ययः । सुपां सुलुगित्यादिना सोराकारादेशः । ओः सुपीति यणादेशस्य न भूसुधियोरिति प्रतिषेधे प्राप्ते छंदस्युभयथेति यणादेशः । व्यत्ययेनाद्युदात्तत्वं । यद्वा । विपूर्वाद्भवतेरौणादिको डुन्प्रत्ययः । नित्त्वादाद्युदात्तत्वं । प्रसूता । षूङ् प्राणिप्रसवे । कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । सवाय । छंदसि जवसवौ वक्तव्यौ । पा० ३. ३. ५६. ४. । इति निपातनादच् । चित्त्वादंतोदात्तत्वं । अणोऽप्रगृह्यस्यानुनासिक इति संहितायामकारः सानुनासिकः । एव । निपातस्य चेति संहितायां दीर्घः । रात्री । रात्रेश्चाजसाविति ङीप् । यस्येति चेतीकारलोपः । अरैक् । रिचिर् विरेचने । लङि बहुलं छंदसीति विकरणस्य लुक् । लघूपधगुणे हल्ङ्याब्भ्य इति तिलोपः । वर्णव्यापत्त्या व्यत्ययेन एकारस्य ऐकारः ॥

रुशद्वत्सा रुशती श्वेत्यागादारैगु कृष्णा सदनान्यस्याः ।
समानबंधू अमृते अनूची द्यावा वर्णं चरत आमिनाने ॥ २ ॥
रुशत्ऽवत्सा । रुशती । श्वेत्या । आ । अगात् । अरैक् । ऊं इति । कृष्णा । सदनानि । अस्याः ।
समानबंधू इति समानऽबंधू । अमृते इति । अनूची इति । द्यावा । वर्णं । चरतः ।
आमिनाने इत्याऽमिनाने ॥ २ ॥

श्वेत्येत्युषसो नामधेयं । रुशती दीप्ता श्वेत्या श्वेतवर्णोषा रुशद्वत्सा रुशद्दीप्तः सूर्यो वत्सो यस्याः सा तथोक्ता । यथा मातुः समीपे वत्सः संचरति एवमुषसः समीपे सूर्यस्य नित्यमवस्थानात्तद्वत्सत्वं । अथवा यथा वत्सो मातुः स्तन्यं रसं पिबन्हरति एवमुषसोऽवश्यायाख्यं रसं पिबन्वत्स इत्युच्यते । तादृशी सत्यागात् । आग-

तवती। आगताया अस्या उषसः कृष्णा कृष्णवर्णा रात्रिः सदनानि स्थानानि स्वकीयांत्यार्धयामलक्षणान्यरैक्। अरिचितवती। कल्पितवती। दत्तवतीत्यर्थः। उ इत्येतत्पादपूरणं। अपि चैते राज्युषसौ समानबंधू समानेनैकेन सूर्याख्येन बंधुना सख्या युक्ते। यद्वा। सूर्येण सह संबद्धे। यथोषा उदेष्यता सूर्येण संबद्धा एवं रात्रिरप्यस्तंयता सूर्येण संबद्धा। अमृते मरणरहिते कालात्मकतया नित्यत्वात् अनूची अन्वंचंत्यौ। प्रथमं रात्रिः पश्चादुषा इत्यनेन क्रमेण गच्छंत्यौ। यद्वा। सूर्यगत्यनुसारेण गच्छंत्यौ। एवंभूते वर्णे सर्वेषां प्राणिनां रूपमामिनाने जरयंत्यौ। यद्वा। स्वकीयं रूपं हिंसंत्यौ। उषसा नैशं तमो निवर्त्यते प्रकाशात्मकमुषसो रूपं रात्र्या। एवंविधे सत्यौ द्यावा द्योतमाने चरतः। प्रतिदिवसमावर्तेते। यद्वा। द्यावा नभसांतरिक्षमार्गेण चरतः। प्रतिदिवसं गच्छतः। अत्र निरुक्तं। रुशद्वत्सा सूर्यवत्सा रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः। सूर्यमस्या वत्समाह साहचर्याद्रसहरणाद्वा। रुशती श्वेत्यागात् श्वेत्या श्वेततेररिचत्कृष्णा सदनान्यस्याः कृष्णवर्णा रात्रिः कृष्णं कृष्यतेर्निकृष्टो वर्णः। अथैने संस्तौति समानबंधू समानबंधने अमृते अमरणधर्माणावनूची अनूच्याविती-तरेतरमभिप्रेत्य द्यावा वर्णं चरतस्ते एव द्यावौ द्योतनादपि वा द्यावा चरतस्तया सह चरत इति स्यादामिनाने आमिन्वाने अन्योन्यस्याध्यात्मं कुर्वाणे। नि० २. २०.। इति ॥ श्वेत्या। श्विता वर्णे। अस्मात्स्यंतादचो यदिति भावे यत्। णिलोपः। अर्शआदित्वान्मत्वर्थीयोऽच्। अमृते। मृतं मरणमनयोर्नास्तीति बहुव्रीहौ नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं। अनूची। अनुपूर्वादंचतेर्ऋत्विगित्यादिना क्विन्। अनिदितामिति नलोपः। अंचतेश्चोपसंख्यानमिति ङीप्। अच इत्यकारलोपे चाविति दीर्घः। अनुदात्तस्य च यत्रोदात्तलोप इति ङीप उदात्तत्वं। सुपां सुलुगिति विभक्तेर्लुक्। आमिनाने। मीङ् हिंसायां। क्रैयादिकः। शानचि मीनातेर्निगम इति ह्रस्वत्वं ॥

स॒मा॒नो अध्वा॒ स्वस्रो॑रनं॒तस्तम॒न्यान्या॑ चरतो दे॒वशि॑ष्टे ।
न मे॑थेते॒ न त॑स्थतुः सु॒मेके॒ नक्तो॒षासा॒ सम॑नसा॒ विरू॑पे ॥३॥
स॒मा॒नः। अध्वा॑। स्वस्रोः॑। अ॒नं॒तः। तं। अ॒न्याऽअ॑न्या। च॒र॒तः। दे॒वशि॑ष्टे॒ इति॑ दे॒वऽशि॑ष्टे। न। मे॒थे॒ते॒ इति॑। न। त॒स्थ॒तुः। सु॒मेके॒ इति॑ सु॒ऽमेके॑। नक्तो॒षसा॑। स॒ऽम॑नसा। विरू॑पे॒ इति॒ वि॒ऽरू॑पे ॥३॥

स्वस्रोर्भगिन्यो राज्युषसोरध्वा संचरणसाधनभूतो मार्गः समान एक एव। येनैवाकाशमार्गेणोषा निर्गच्छति तेनैव रात्रिरपि। स च मार्गोऽनंतोऽवसानरहितः। तं मार्गं देवशिष्टे देवेन द्योतमानेन सूर्येणानुशिष्टे शिक्षिते सत्यावन्यान्या एकैका चरतः। क्रमेण गच्छतः। अपि च सुमेके शोभनमेहने सर्वेषामुत्पादकत्वात् शोभनप्रजनने नक्तोषासा रात्रिरुषाश्च विरूपे तमःप्रकाशलक्षणाभ्यां विरुद्धरूपाभ्यां युक्ते अपि समनसा समानमनस्के ऐकमत्यं प्राप्ते सत्यौ न मेथेते। परस्परं न हिंस्तः। तथा न तस्थतुः। क्वचिदपि न तिष्ठतः। सर्वदा लोकानुग्रहार्थं गच्छत इत्यर्थः ॥ अन्यान्या। कर्मव्यतिहारे सर्वनाम्नो द्वे भवत इति वक्तव्यं समासवच्च बहुलं। म० ८. १. १२. ११.। इत्यन्यशब्दस्य द्विर्भावः। तस्य परमाम्रेडितमित्याम्रेडितसंज्ञायामनुदात्तं चेत्याम्रेडितानुदात्तत्वं। देवशिष्टे। शासु अनुशिष्टौ। अस्मात्कर्मणि निष्ठा। यस्य विभाषेतीट्प्रतिषेधः। शास इदङ्हलोः। पा० ६. ४. ३४.। इत्युपधाया इत्वं। शासिवसिघसीनां चेति षत्वं। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। मेथेते। मिथृ मेथृ मेधाहिंसनयोः। भौवादिकः। अनुदात्तेत्। सुमेके। मिह सेचने। भावे घञ्। शोभनो मेहो ययोस्ते। व्यत्ययेन ककारः। उत्तरपदस्य ञित्स्वरेणाद्युदात्तत्वं। आद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं। नक्तोषासा। सुपां सुलुगिति विभक्तेराकारः। अन्येषामपि दृश्यत इति संहितायामुपधादीर्घः ॥

भास्व॑ती ने॒त्री सू॒नृता॑ना॒मचे॑ति चि॒त्रा वि दुरो॑ न आवः ।
प्रार्प्या॒ जग॒द्व्यु॑ नो रा॒यो अ॑ख्यदु॒षा अ॑जीग॒र्भुव॑नानि॒ विश्वा॑ ॥४॥

भास्वती । नेत्री । सूनृतानां । अचेति । चित्रा । वि । दुरः । नः । आवरित्यावः ।
प्रऽअर्प्य । जगत् । वि । ऊं इति । नः । रायः । अख्यत् । उषाः । अजीगः । भुवनानि ।
विश्वा ॥४॥

भास्वती विशिष्टप्रकाशनयुक्ता । सूनृतेति वाङ्नाम । सूनृतानां वाचां नेत्र्युत्पादयित्री । उषसः प्रादुर्भावानंतरं हि पशुपक्षिमृगादयः सर्वे शब्दं कुर्वंति । एवंभूतोषा अचेति । अस्माभिरज्ञायि । चित्रा चायनीया ज्ञाता सा नोऽस्माकं दुरो द्वाराणि तमसा तिरोहितानि व्यावः । व्यवृणोत् । यथास्माभिर्दृश्यंते तथा तमो निवार्य प्रकाशयतीत्यर्थः । अपि च जगत्सर्वं भुवनं प्रार्प्य प्रकाशं गमयित्वा नोऽस्माकं रायो धनानि व्यख्यत् । विशिष्टप्रकाशनयुक्तान्यकरोत् । उ इत्येतत्पादपूरणं । सैषोषा विश्वा भुवनानि सर्वाणि भुवनानि तमसा तिरोहितत्वेनाविद्यमानकल्पान्यजीगः । उद्गिरति । स्वमुखान्निर्गमयति । स्वकीयेन प्रकाशेन तमो निःसार्य पुनरुत्पन्नानीव करोतीत्यर्थः ॥ नेत्री । णीञ् प्रापणे । तृच् । ऋन्नेभ्यो ङीप् । उदात्तयणो हल्पूर्वादिति ङीप उदात्तत्वं । अचेति । चिती संज्ञाने । दुरः । द्वारशब्दस्य रयेर्मतौ बहुलं । पा॰ ६.१.३७.६. । इति बहुलवचनात्संप्रसारणं । आवः । वृञ् वरणे । लुङि मंत्रे घसेति च्लेर्लुक् । गुणः । हल्ङ्याब्भ्य इति तिलोपः । छंदस्यपि दृश्यत इत्याडागमः । प्रार्प्य । ऋ गतौ । णावर्तिह्रीत्यादिना पुक् । समासेऽनञ्पूर्वे क्त्वो ल्यप् । अख्यत् । ख्या प्रकथने । लुङ्यस्यतिवक्तीत्यादिना च्लेरङादेशः । अजीगः । गॄ निगरणे । लङि तिपि बहुलं छंदसीति विकरणस्य श्लुः । द्विर्वचनोरदत्वहलादिशेषाः । अर्तिपिपर्त्योश्च बहुलं छंदसीत्यभ्यासस्येत्वं । छांदस ईकारः । यद्वा । अस्माण्ण्यंताल्लुङि चङि द्विर्भावसन्वद्भावेत्वदीर्घाः । छांदसश्चङो लोपः ॥

जिह्मश्ये३ चरितवे मघोन्याभोगय इष्टये राय उ त्वं ।
दभ्रं पश्यद्भ्य उर्विया विचक्ष उषा अजीगर्भुवनानि विश्वा ॥५॥
जिह्मऽश्ये । चरितवे । मघोनी । आऽभोगये । इष्टये । राये । ऊं इति । त्वं ।
दभ्रं । पश्यत्ऽभ्यः । उर्विया । विऽचक्षे । उषाः । अजीगः । भुवनानि । विश्वा ॥५॥

मघोनीत्युषसो नामधेयं । मघोनी धनवत्युषा जिह्मश्ये जिह्मं वक्रं शयानाय पुरुषाय चरितवे चरितुं शयनादुत्थाय स्वापेक्षितं प्रति गंतुं व्युच्छंती भवति । त्वं । अयमेकशब्दपर्यायः सर्वनामशब्दः । यदाह त्व इति विनिग्रहार्थीयं सर्वनामानुदात्तं । नि॰ १.७. । इति । त्वमेकं प्रत्याभोगय आभोग्याय शब्दादिविषयार्थं तथापरं प्रतीष्टये यागार्थं तथान्यं प्रति राये धनार्थं च व्युच्छंतीति शेषः । उशब्दश्चार्थे । अपि च दभ्रमल्पं पश्यद्भ्यो ऽंधकारावृतत्वेनेषद्द्रष्टृभ्यो मनुष्येभ्यो विचक्षे विशिष्टप्रकाशाय व्युच्छंत्युर्विया उर्वी विस्तीर्णोषाः सर्वाणि भूतजातानि तमसा तिरोहितानि प्रकाशदानेनोद्गीर्णानीव करोति ॥ जिह्मश्ये । शीङ् स्वप्ने । जिह्मं शेत इति जिह्मशीः । क्विपेति क्विप् । कृदुत्तरपदप्रकृतिस्वरत्वं । एरनेकाच इति यण् । [illegible] इति विभक्तेः स्वरितत्वं । आभोगये । आभोगशब्दाच्चतुर्थ्येकवचने यकारोपजनः । यद्वा । आङ्पूर्वाद्भुजेर्बहुलवचनादौणादिकः किप्रत्ययः कुत्वं च । उर्विया । इयाडियाजीकाराणामुपसंख्यानं । पा॰ ७.१.३९.१. । इत्युर्वीशब्दादुत्तरस्य सोर्डियाजादेशः । विचक्षे । चक्षिङ् व्यक्तायां वाचि । [illegible] भावे क्विप् ॥ ॥१॥

अन्यो न्यर्थः । अर्थमिव त्वमिति पुरा ....

क्षत्राय त्वं श्रवसे त्वं महीया इष्टये त्वमर्थमिव त्वमित्यै ।
विसदृशा जीविताभिप्रचक्ष उषा अजीगर्भुवनानि विश्वा ॥६॥
क्षत्राय । त्वं । श्रवसे । त्वं । महीये । इष्टये । त्वं । अर्थंऽइव । त्वं । इत्यै ।
विऽसदृशा । जीविता । अभिऽप्रचक्षे । उषाः । अजीगः । भुवनानि । विश्वा ॥६॥

चचाय। धननामैतत्। धनार्थं त्वमेकं प्रत्युषा व्युच्छंतीति शेषः। तथा श्रवसेऽन्नार्थं त्वमेकं प्रति महीयै महत्यै इष्टयेऽग्निष्टोमादिमहायज्ञार्थं त्वमेकं प्रति व्युच्छंती। तथार्थमिवापेचितमर्थं प्रतीत्यै गमनार्थं त्वमेकं प्रति व्युच्छंती। अपि च विसदृशा विलचणानि नानारूपाणि जीविता जीवितानि जीवनोपायभूतानि कृषिवाणिज्यादीन्यभिप्रचच आभिमुख्येन प्रकाशयितुं व्युच्छंत्युषाः सर्वाणि भूतजातानि तमसा निगीर्णान्यजीगः। प्रकाशनेनोद्गीर्णानीवाकरोत् ॥ त्वं। त्वसमसिमनेमेत्यनुच्चानि। फि॰ ४. १०.। इति सर्वानुदात्तत्वं। महीयै। मह्यै। महेरिन्सर्वधातुभ्य इतीन्प्रत्ययः। कृदिकारादक्तिन इति ङीष्। उदात्तयण इति विभक्तेरुदात्तत्वं। छांदस ईकारोपजनः। यद्वा। महीशब्दादुत्तरस्य चतुर्थ्येकवचनस्य याडापः। पा॰ ७. ३. ११३.। इति व्यत्ययेन याडागमः। छांदसमंतोदात्तत्वं। विसदृशा। त्यदादिषु दृशोऽनालोचने कञ्चेत्यत्र समानान्ययोश्च। पा॰ ३. २. ६०. १.। इति वचनाद्दृशेः कञ्। समानस्य छंदसीति सभावः। विगतसादृश्यानि विसदृशानि। शेश्छंदसि बहुलमिति शेर्लोपः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। अभिप्रचचे। चचेस्तुमर्थे सेसेनिति सेन्प्रत्ययः। स्कोः संयोगाद्योरिति कलोपः। कत्वषत्वे ॥

एषा दि॒वो दु॑हि॒ता प्रत्य॑दर्शि व्यु॒च्छंती॑ युव॒तिः शु॒क्रवा॑साः।
विश्व॒स्येशा॑ना॒ पार्थि॑वस्य॒ वस्व॒ उषो॑ अ॒द्येह सु॑भगे॒ व्यु॑च्छ ॥ ७॥
एषा। दि॒वः। दु॒हि॒ता। प्रति॑। अ॒द॒र्शि॒। वि॒ऽउ॒च्छंती॑। यु॒व॒तिः। शु॒क्रऽवा॑साः।
विश्व॑स्य। ईशा॑ना। पार्थि॑वस्य। वस्वः॑। उषः॑। अ॒द्य। इ॒ह। सु॒ऽभ॒गे॒। वि। उ॒च्छ॒ ॥ ७॥

दिवो दुहिता व्योम्नो दुहितृस्थानीया। तस्य हि पूर्वार्धे उषा उत्पद्यते। सैषा व्युच्छंती तमो वर्जयंती प्रत्यदर्शि। सर्वैः प्राणिभिर्दृष्टाभूत्। कीदृशी सा। युवतिर्यावयित्री फलानां पुरुषैः प्रापयित्री नित्ययौवनोपेता वा शुक्रवासाः श्वेतवसना निर्मलदीप्तिर्वा तथा विश्वस्य सर्वस्य पार्थिवस्य पृथिव्याः संबंधिनो वस्वो धनस्येशानेश्वरी। हे सुभगे शोभनधन उषः तादृशी त्वमद्यास्मिन्काल इहास्मिन्देवयजनदेशे व्युच्छ। तमांसि विवासय। वर्जयेत्यर्थः ॥ दिवः। ऊडिदमिति विभक्तेरुदात्तत्वं। व्युच्छंती। उच्छी विवासे। विवासो वर्जनं। तौदादिकः। युवतिः। यूनस्तिः। पा॰ ४. १. ७७.। शुक्रवासाः। वस आच्छादने। वस्ते सर्वमाच्छादयतीति प्रकाशो वासः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। ईशाना। ईश ऐश्वर्ये। अदादित्वाच्छपो लुक्। अनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वे धातुस्वरः। पार्थिवस्य। पृथिव्या ञाञाविति प्राग्दीव्यतीयोऽञ्प्रत्ययः। वस्वः। लिंगव्यत्ययः। घेर्ङितीति गुणस्य जसादिषु छंदसि वावचनमिति विकल्पितत्वादभावे यणादेशः ॥

प॒रा॒य॒ती॒नामन्वे॑ति॒ पाथ॑ आय॒ती॒नां प्र॑थ॒मा शश्व॑तीनां।
व्यु॒च्छंती॑ जी॒वमु॑दी॒रयं॑त्यु॒षा मृ॒तं कं च॒न बो॒धयं॑ती ॥ ८॥
प॒रा॒ऽय॒ती॒नां। अनु॑। ए॒ति॒। पाथः॑। आ॒ऽय॒ती॒नां। प्र॒थ॒मा। शश्व॑तीनां।
वि॒ऽउ॒च्छंती॑। जी॒वं। उ॒त्ऽई॒रयं॑ती। उ॒षाः। मृ॒तं। कं। च॒न। बो॒धयं॑ती ॥ ८॥

परायतीनां परागच्छंतीनामतीतानामुषसां संबंधि पाथोऽंतरिचैकदेशलचणं स्थानं। पाथोऽंतरिचं पथा व्याख्यातं। नि॰ ६. ७.। इति यास्कः। अद्यतन्युषा अन्वेति। अनुगच्छति। अतीता उषसो यथा व्युष्टा एवमेवैषापि व्युच्छतीत्यर्थः। तथायतीनामागच्छंतीनां शश्वतीनां बह्वीनामुषसां प्रथमाद्या भवति। एषा यथा वर्तत एवमेवागामिन्योऽप्युषस इत्यर्थः। तादृशी व्युच्छंती तमो वर्जयंती जीवं प्राणिनां जीवात्मानमुदीरयंती शयनादूर्ध्वं प्रेरयंत्युषा मृतं स्वापसमये प्रलीनेंद्रियत्वान्मृतमिव संतं कं चन कमपि पुरुषं बोधयंती पुनरिंद्रियप्रवेशेन चेतनं कुर्वती प्रवर्तत इति शेषः ॥ परायतीनां। इण गतौ। लटः शतृ। इणो यण। उगितश्चेति ङीप्। ह्याश्छंदसि बहुलमिति नाम उदात्तत्वं ॥

उषो यदग्निं समिधे चकर्थ वि यदावश्चक्षसा सूर्यस्य ।
यन्मानुषान्यक्ष्यमाणाँ अजीगस्तद्देवेषु चकृषे भद्रमप्नः ॥ ९ ॥
उषः । यत् । अग्निं । सम्ऽइधे । चकर्थ । वि । यत् । आवः । चक्षसा । सूर्यस्य ।
यत् । मानुषान् । यक्ष्यमाणान् । अजीगरिति । तत् । देवेषु । चकृषे । भद्रं । अप्नः ॥ ९ ॥

हे उषः त्वमग्निं गार्हपत्यादिरूपं समिधे समिंधनाय प्रज्वलनार्थं यच्चकर्थ कृतवती । उषःकाले ह्यग्नयो होमार्थमुपसमिध्यंते । अपि च तमसा तिरोहितं जगत्सूर्यस्य चक्षसा प्रकाशेन यद्व्यावः व्यवृणोः तमसा विश्लिष्टमकरोः । तथा मानुषान्मनोः पुत्रान्मनुष्यान्यक्ष्यमाणान्यागं करिष्यतस्त्वं यदजीगः पूर्वं तमसा ग्रस्तान्प्रकाशेनोद्गीर्णानिवाकरोः । हे उषो देवेषु मध्ये त्वमेव भद्रं भजनीयं तदेतत्त्रिविधमप्नः कर्म चकृषे । कृतवती ॥ आवः । वृञ् वरणे । लुङि मंत्रे घसेति च्लेर्लुक् । गुणे हल्ङ्याब्भ्य इति सिलोपः । छंदस्यपि दृश्यत इत्याडागमः । मानुषान् । मनोर्जातावञ्यतौ षुक्चेत्यञ् षुगागमश्च ॥

कियात्या यत्समया भवाति या व्यूषुर्याश्च नूनं व्युच्छान् ।
अनु पूर्वाः कृपते वावशाना प्रदीध्याना जोषमन्याभिरेति ॥ १० ॥
कियति । आ । यत् । समया । भवाति । याः । विऽऊषुः । याः । च । नूनं । विऽउच्छान् ।
अनु । पूर्वाः । कृपते । वावशाना । प्रऽदीध्याना । जोषं । अन्याभिः । एति ॥ १० ॥

समयेत्यव्ययं समीपवचनं । उषाः समया भवाति समीपस्था भवतीति यदेतत् तत्कियति काले प्रवृत्तं परिसमाप्तं वेत्याकारः प्रश्नार्थः । एतदुक्तं भवति । उषा येन कालेन संयुक्ता स कालः कियान् तस्य कालस्य किं परिमाणमिति । अनेनोषसोऽनंतत्वमुक्तं । तदेव स्पष्टीकरोति । पुरा या उषसो व्यूषुः व्युष्टाः संजाताः । नूनमवश्यमितः परं याश्चोषसो व्युच्छान् व्युच्छंति व्युष्टा भविष्यंति । तत्र पूर्वा व्युष्टा अतीता उषसो वावशाना कामयमानेदानीं वर्तमानोषा अनु कृपते । अनुकल्पते । समर्था भवति । अतीता उषसो यथा प्रकाशमकुर्वन् तद्वदेषापि प्रकाशं करोतीत्यर्थः । तथा प्रदीध्याना प्रकर्षेण दीप्यमानोषा अन्याभिरागामिनीभिरुषोभिर्जोषं सहैति । संगच्छते । आगामिन्योऽप्येतदीयं प्रकाशमनुकुर्वंतीत्यर्थः ॥ कियति । किं परिमाणमस्य । किमिदंभ्यां वो घः । पा॰ ५. २. ४०. । इति घत्वविधानसामर्थ्यात्किंशब्दादपि परिमाणार्थे वतुप्प्रकारस्य घत्वं । इदंकिमोरीश्की । पा॰ ६. ३. ९०. । इति किमः कीआदेशः । घस्येयादेशे यस्येति लोपः । प्रत्ययाद्युदात्तत्वं । छांदसः सांहितिको दीर्घः । भवाति । लेट्याडागमः । व्यूषुः । विपूर्वो वसतिर्व्युच्छने वर्तते । लिट्युसि कित्त्वे यजादित्वात्संप्रसारणं द्विर्वचनादि । व्युच्छान् । उछी विवासे । विवासो वर्जनं । लेट्याडागमः । संयोगांतस्य लोपः । कृपते । कृपू सामर्थ्ये । व्यत्ययेन शः । वावशाना । वश कांतौ । अस्माद्यङ्लुगंतात्ताच्छीलिकश्चानश् । प्रदीध्याना । दीधीङ् दीप्तिदेवनयोः । लटः शानच् । अदादित्वाच्छपो लुक् । जक्षित्यादयः षडित्यभ्यस्तसंज्ञायामभ्यस्तानामादिरित्याद्युदात्तत्वं । गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वं ॥ ॥ २ ॥

ईयुष्टे ये पूर्वतरामपश्यन्व्युच्छंतीमुषसं मर्त्यासः ।
अस्माभिरू नु प्रतिचक्ष्याभूदो ते यंति ये अपरीषु पश्यान् ॥ ११ ॥
ईयुः । ते । ये । पूर्वऽतरां । अपश्यन् । विऽउच्छंतीं । उषसं । मर्त्यासः ।
अस्माभिः । ऊं इति । नु । प्रतिऽचक्ष्या । अभूत् । ओ इति । ते । यंति । ये । अपरीषु ।
पश्यान् ॥ ११ ॥

ये मर्त्यासो मरणधर्माणो मनुष्या व्युच्छंतीं विवासयंतीं पूर्वतरामतिशयेन पूर्वां विप्रकृष्टामुषसमपश्यन् दृष्टवंतः ते मनुष्या ईयुः। गताः। तथास्माभिरपि नु इदानीं प्रतिचक्ष्या प्रकर्षेण द्रष्टव्याभूत्। जाता। तथापरीषु भाविनीषु रात्रिषु ये मनुष्या एतामुषसं पश्चात् पश्यंति ते। आ उ इति निपातद्वयसमुदायः। तत्र उ इत्येतदवधारणे। एव यंति। आगच्छंत्येव। कालत्रयेऽप्येषा व्याप्य वर्तत इत्यर्थः॥ ईयुः। इण् गतौ। लिट्युसीणो यणिति यणादेशः। द्विर्वचनेऽचीति तस्य स्थानिवद्भावाद्द्विर्भावे दीर्घ इणः किति। पा॰ ७. ४. ६९.। इत्यभ्यासस्य दीर्घत्वं। ते। युष्मत्ततक्षुःष्वंतःपादमिति सकारस्य षत्वं ष्टुत्वं च। मर्त्यासः। आज्जसेरसुक्॥

यावयद्द्वेषा ऋतपा ऋतेजाः सुम्नावरी सूनृता ईरयंती।
सुमंगलीर्बिभ्रती देववीतिमिहाद्योषः श्रेष्ठतमा व्युच्छ॥१२॥
यवयत्ऽद्वेषाः। ऋतऽपाः। ऋतेऽजाः। सुम्नऽवरी। सूनृताः। ईरयंती।
सुऽमंगलीः। बिभ्रती। देवऽवीतिं। इह। अद्य। उषः। श्रेष्ठऽतमा। वि। उच्छ॥१२॥

यावयद्द्वेषाः। यावयंति अस्मत्तः पृथक्कृतानि द्वेषांसि द्वेष्टॄणि राक्षसादीनि यया सा तथोक्ता। न ह्युषसि जातायां राक्षसादयोऽवतिष्ठंते यतस्ते निशाचराः। ऋतपा ऋतस्य सत्यस्य यज्ञस्य वा पालयित्री ऋतेजा यज्ञार्थं प्रादुर्भूता। सत्यामुषस्यहनि यागा अनुष्ठीयंते अतो यज्ञार्थं जातेत्युच्यते। सुम्नावरी। सुम्नमिति सुखनाम। तद्वती सूनृताः। वाङ्नामैतत्। पशुपक्षिमृगादीनां वचांसीरयंती प्रेरयंत्युत्पादयंती सुमंगलीः सौमंगल्योपेता। पत्या कदाचिदपि न वियुक्तेत्यर्थः। देववीतिं देवैः काम्यमानं यज्ञं बिभ्रती धारयंती हे उषः श्रेष्ठतमोक्तेन प्रकारेणातिप्रशस्ता त्वमिहास्मिन्देवयजनदेशेऽद्यास्मिन्दिवसे व्युच्छ। विवासय॥ यावयद्द्वेषाः। यु मिश्रणामिश्रणयोः। अस्माण्ण्यंताल्लटः शतृ। तस्य च्छंदस्युभयथेत्यार्धधातुकत्वादुपदेशात्सार्वधातुकानुदात्तत्वाभावात्प्रत्ययस्वर एव शिष्यते। पुनर्बहुव्रीहौ स एव स्वरः। छांदसः पदकालीनो ह्रस्वः। ऋतपाः। ऋतं पाति रक्षतीत्यृतपाः। पा रक्षणे। विच्। ऋतेजाः। ऋते निमित्तभूते जायत इत्यृतेजाः। जनी प्रादुर्भावे। जनसनखनक्रमगमो विट्। विड्वनोरनुनासिकस्यादित्यात्वं। तत्पुरुषे कृति बहुलमित्यलुक्। सुम्नावरी। छंदसीवनिपाविति मत्वर्थीयो वनिप्। वनो र चेति ङीप् नकारस्य रेफादेशश्च। अन्येषामपि दृश्यत इति दीर्घः। व्यत्ययेन प्रत्ययाद्युदात्तत्वं। सुमंगलीः। सुमंगलात्संज्ञायां। पा॰ ४. १. ४१.*। इति गौरादिषु पाठात् ङीष्। सर्वे विधयश्छंदसि विकल्प्यंत इति हल्ङ्याब्भ्य इति सुलोपस्य विकल्पितत्वादभावे रुत्वविसर्गौ। देववीतिं। वी गतिप्रजनकांत्यशनखादनेषु। देवैर्वीयते काम्यत इति देववीतिर्यज्ञः। कर्मणि क्तिन्। दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं॥

शश्वत्पुरोषा व्युवास देव्यथो अद्येदं व्यावो मघोनी।
अथो व्युच्छादुत्तराँ अनु द्यूनजरामृता चरति स्वधाभिः॥१३॥
शश्वत्। पुरा। उषाः। वि। उवास। देवी। अथो इति। अद्य। इदं। वि। आवः। मघोनी।
अथो इति। वि। उच्छात्। उत्ऽतरान्। अनु। द्यून्। अजरा। अमृता। चरति।
स्वधाभिः॥१३॥

देवी देवनशीलोषाः पुरा पूर्वस्मिन्काले शश्वन्नित्यं संततं व्युवास। व्यौच्छत्। अथो अनंतरमद्यास्मिन्काले मघोनी धनवत्युषास्तमसा तिरोहितमिदं सर्वं जगद्व्यावः। विवासितं प्रकाशनेन तमसा वियुक्तमकरोत्। अथो अनंतरमुत्तरानूर्ध्वतरान्भाविनो द्यून् दिवसाननुलक्ष्यागामिष्वपि दिवसेषु व्युच्छात्। व्युच्छति। विवासयति। अतः कालत्रयव्यापिनी सोषा अजरा जरारहिता सर्वदैकरूपामृता मरणरहिता च सती स्वधाभिरात्मीयैस्तेजोभिः सह चरति। वर्तते॥ उवास। वस निवासे। लिट्यभ्यासस्योभयेषामित्यभ्यासस्य संप्रसारणं। आवः। तस्मादेव धातोर्लङि बहुलं छंदसीति विकरणस्य लुक्। हल्ङ्याब्भ्य इति तिलोपः। छंदस्यपि

दृशत इत्याडागमः। उच्छात्। लिव्याडागमः। उत्तरान्। दीर्घादटि समानपाद इति नकारस्य रुत्वं। आतो ऽटि नित्यमिति सानुनासिक आकारः। अनु। अनुर्लक्षणे। पा० १. ४. ८४.। इत्यनोः कर्मप्रवचनीयत्वं। अजरा अमृता। तत्र बहुव्रीहौ नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं॥

व्य१ंजिभिर्दिव आतास्वद्यौदप कृष्णां निर्णिजं देव्यावः।
प्रबोधयंत्यरुणेभिरश्वैरोषा याति सुयुजा रथेन॥१४॥
वि। अंजिऽभिः। दिवः। आतासु। अद्यौत्। अप। कृष्णां। निःऽनिजं। देवी। आवरित्यावः।
प्रऽबोधयंती। अरुणेभिः। अश्वैः। आ। उषाः। याति। सुऽयुजा। रथेन॥१४॥

दिवो नभसः संबंधिनीष्वातासु। दिङ्नामैतत्। आततासु विस्तीर्णासु दिक्षूषा अंजिभिर्व्यंजकैः प्रकाशकैस्तेजोभिर्व्यद्यौत्। विद्योतते। प्रकाशते। सैषा देवी देवनशीला कृष्णां निर्णिजं। निर्णिगिति रूपनाम। रात्रिकृतं कृष्णं रूपमपावः। अपावृणोत्। प्रकाशेन तिरस्कृतवती। अपि चारुणेभिररुणैर्लोहितवर्णैरश्वैर्व्यापनशीलैः स्वकीयैः किरणैस्तुरगैर्वा सुयुजा सम्यग्युक्तेन रथेनोषा आ याति। आगच्छति। किं कुर्वती। प्रबोधयंती सुप्तान्प्राणिनः प्रबुद्धान्कुर्वती॥ अद्यौत्। द्युत दीप्तौ। लुङ्। द्युद्भ्यो लुङि। पा० १. ३. ९१.। इति परस्मैपदं। व्यत्ययेन च्लेर्लुक्। गुणे प्राप्ते वृद्धिश्छांदसी। यद्वा। द्यु अभिगमने। आदादिकः। उतो वृद्धिर्लुकि हलि। पा० ७. ३. ८९.। इति वृद्धिः॥

देवीनां हविःष्वावहंतीत्येषोषसो याज्या। सूत्रितं च। आ द्यां तनोषि रश्मिभिरावहंती पोष्या वार्याणि न ता अर्वा रेणुककाटो अश्नुते। आ० ६. १४.। इति॥

आवहंती पोष्या वार्याणि चित्रं केतुं कृणुते चेकिताना।
ईयुषीणामुपमा शश्वतीनां विभातीनां प्रथमोषा व्यश्वैत्॥१५॥
आऽवहंती। पोष्या। वार्याणि। चित्रं। केतुं। कृणुते। चेकिताना।
ईयुषीणां। उपऽमा। शश्वतीनां। विऽभातीनां। प्रथमा। उषाः। वि। अश्वैत्॥१५॥

पोष्या यावज्जीवं पोषणसमर्थानि वार्याणि वरणीयानि धनान्यावहंत्यस्मभ्यमानयंती चेकिताना सर्वं जनं प्रज्ञापयंत्युषाश्चित्रं विचित्रमाश्चर्यभूतं चायनीयं वा केतुं प्रज्ञापकं रश्मिं कृत्स्नजगत्प्रकाशनसमर्थं कृणुते। स्वात्मनः प्रकाशात्कुरुते। सैषेयुषीणां गमनवतीनां पूर्वनिष्पन्नानां शश्वतीनां बह्वीनामुषसामुपमा उप समीपे निर्मितोपमानभूता वा विभातीनां विशेषेण प्रकाशमानानामागामिनीनामुषसां प्रथमाद्या एवंभूतोषा व्यश्वैत्। तेजसा प्रवृद्धासीत्॥ पोष्या। पुष पुष्टौ। पोषणं पोषः। भावे घञ्। तत्र भवानि। भवे छंदसीति यत्। यतोऽनाव इत्याद्युदात्तत्वं। शेश्छंदसि बहुलमिति शेर्लोपः। वार्याणि। वृङ् संभक्तौ। ऋहलोर्ण्यत्। ईडवंदवृशंसदुहां ण्यत इत्याद्युदात्तत्वं। चेकिताना। कित ज्ञाने। अस्माद्यङंताल्लटः शानच्। छंदस्युभयथेति तस्यार्धधातुकत्वादतोलोपयलोपौ। अभ्यस्तानामादिरित्याद्युदात्तत्वं। ईयुषीणां। इण् गतौ। लिटः क्वसुः। द्विर्भावादि। उगितश्चेति ङीप्। वसोः संप्रसारणं। इणो यणिति यणादेशः। दीर्घ इणः कितीत्यभ्यासस्य दीर्घत्वं। शासिवसिघसीनां चेति षत्वं। ङीप्सुपौ पित्त्वादनुदात्तौ। विभातीनां। भा दीप्तौ। अस्माच्छतंतात्पूर्ववत् ङीप्। ङ्याश्छंदसि बहुलमिति नाम उदात्तत्वं। अश्वैत्। टुओश्वि गतिवृद्ध्योः। लङि बहुलं छंदसीति विकरणस्य लुक्। गुणे कृते व्यत्ययेनैत्वं॥ ॥३॥

उदीर्ध्वं जीवो असुर्न आगादप प्रागात्तम आ ज्योतिरेति।
आरैक्पंथां यातवे सूर्यायागन्म यत्र प्रतिरंत आयुः॥१६॥

उत् । ईर्ध्वं । जीवः । असुः । नः । आ । अगात् । अप । प्र । अगात् । तमः । आ । ज्योतिः । एति । अरैक् । पंथां । यातवे । सूर्याय । अगन्म । यत्र । प्रऽतिरंते । आयुः ॥ १६ ॥

हे मनुष्या उदीर्ध्वं । शयनं परित्यज्योद्गच्छत । नोऽस्माकमसुः शरीरस्य प्रेरयिता जीवो जीवात्मागात् । आगतवान् । तमोऽप प्रागात् । अपक्रांतं । उषसः प्रकाशे सति सर्वजीवनव्यापारयोगः । तस्मात्परमात्मरूपतया स च जीवस्तदेव ज्योतिरैति । आगच्छति । सूर्याय सूर्यस्य पंथां मार्गमारैक् । विविक्तीकरोति । यातवे गमनाय । तस्मिन्देशेऽगन्म गच्छामो यत्र यस्मिन्देश आयुः । अन्ननामैतत् । अन्नं प्रतिरंते । प्रपूर्वस्तिरतिर्वर्धनार्थः । उदारा दानेन प्रवर्धयंति ॥ ईर्ध्वं । ईर गतौ । आदादिकोऽनुदात्तेत् । अरैक् । रिचिर् विरेचने । लङि बहुलं छंदसीति विकरणस्य लुक् । गुणे व्यत्ययेनैत्वं । पंथां । द्वितीयायामपि पथिमथ्यृभुक्षामादिति व्यत्ययेनात्वं । अगन्म । गमेर्लङि बहुलं छंदसीति विकरणस्य लुक् । म्वोश्च । पा० ८. २. ६५. । इति मकारस्य नकारः ॥

स्यूमना वाच उदियर्ति वह्निः स्तवानो रेभ उषसो विभातीः ।
अद्या तदुच्छ गृणते मघोन्यस्मे आयुर्नि दिदीहि प्रजावत् ॥ १७ ॥

स्यूमना । वाचः । उत् । इयर्ति । वह्निः । स्तवानः । रेभः । उषसः । विऽभातीः । अद्य । तत् । उच्छ । गृणते । मघोनि । अस्मे इति । आयुः । नि । दिदीहि । प्रजाऽवत् ॥ १७ ॥

वह्निः स्तोत्राणां वोढा रेभः । स्तोतृनामैतत् । स्तोतोषसो विभातीस्तमसोऽपनोदनेन प्रकाशमाना उषोदेवताः स्तवानः स्तुवन् वाचो वेदरूपायाः संबंधीनि स्यूमना स्यूमान्यनुस्यूतानि संततान्युकथान्युदियर्ति । उद्गमयति । उच्चारयति । अतो हे मघोनि मघवत्युषः अद्यास्मिन्समये गृणते स्तुवते तस्मै पुरुषाय तदुच्छ । दृष्टिनिरोधकतया प्रसिद्धं नैशं तमो विवासय । वर्जय । अस्मे अस्मभ्यं च प्रजावत् प्रजाभिः पुत्रपौत्रादिभिर्युक्तमायुरन्नं नि दिदीहि । नितरां प्रकाशय । दीदेतिश्छांदसो दीप्तिकर्मा । प्रयच्छेत्यर्थः ॥ स्यूमना । षिवु तंतुसंताने । अन्येभ्योऽपि दृश्यंत इति दृशिग्रहणस्य सर्वोपाधिव्यभिचारार्थत्वात्कर्मणि मनिन् । छ्वोः शूडित्यूट् । आङयाजयारां चोपसंख्यानं । म० ७. १. ३९. १. । इति विभक्तेराङादेशः । यद्वा । औणादिको भावे मक् । पामादिलक्षणो मत्वर्थीयो नः । बंधनयुक्तानीत्यर्थः । शेश्छंदसि बहुलमिति शेर्लोपः । व्यत्ययेनाद्युदात्तत्वं । वाचः । सावेकाच इति ङस उदात्तत्वं । इयर्ति । ऋ गतौ । जौहोत्यादिकः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं । स्तवानः । ष्टुञ् स्तुतौ । शानच्छदादित्वाच्छपो लुक् । तस्य च्छंदस्युभयथेत्यार्धधातुकत्वेन ङित्त्वाभावाद्गुणावादेशौ । व्यत्ययेनाद्युदात्तत्वं । विभातीः । शतुरनुमो नद्यजादी इति ङीप उदात्तत्वं । गृणते । गॄ शब्दे । क्रैयादिकः । प्वादीनां ह्रस्वः । पूर्वोक्तेन सूत्रेण विभक्तेरुदात्तत्वं । अस्मे । सुपां सुलुगिति चतुर्थ्याः शेआदेशः ॥

या गोमतीरुषसः सर्ववीरा व्युच्छंति दाशुषे मर्त्याय ।
वायोरिव सूनृतानामुदर्के ता अश्वदा अश्नवत्सोमसुत्वा ॥ १८ ॥

याः । गोऽमतीः । उषसः । सर्वऽवीराः । विऽउच्छंति । दाशुषे । मर्त्याय ।
वायोःऽइव । सूनृतानां । उत्ऽअर्के । ताः । अश्वऽदाः । अश्नवत् । सोमऽसुत्वा ॥ १८ ॥

दाशुषे हवींषि दत्तवते मर्त्याय मनुष्याय यजमानाय गोमतीर्गोमत्यो बहुभिर्गोभिर्युक्ताः सर्ववीराः सर्वैः सर[illegible]मर्थैर्वीरैः शूरैर्युक्ता या उषसो व्युच्छंति तमो वर्जयंति वायोरिव वायुवच्छीघ्रं प्रवर्तमानानां सूनृतानां स्तुतिरूपाणां वाचामुदर्के समाप्तावश्वदा अश्वानां दात्रीस्ता उषसः सोमसुत्वा सोमानामभिषोता

यजमानोऽश्नवत्। व्याप्नोतु ॥ दाशुषे। दाशृ दाने। दाश्वान्साह्वानिति क्वसुप्रत्ययांतो निपात्यते। चतुर्थ्येकवचने वसोः संप्रसारणमिति संप्रसारणं। शासिवसिघसीनां चेति षत्वं। अश्नवत्। अशू व्याप्तौ। व्यत्ययेन परस्मैपदं। लेट्यडागमः। इतश्च लोप इतीकारलोपः। सोमसुत्वा। षुञ् अभिषवे। अन्येभ्योऽपि दृश्यंत इति क्वनिप्। ह्रस्वस्य पितीति तुक् ॥

माता देवानामदितेरनीकं यज्ञस्य केतुर्बृहती वि भाहि।
प्रशस्तिकृद्ब्रह्मणे नो व्यु१च्छा नो जने जनय विश्ववारे ॥१९॥
माता। देवानां। अदितेः। अनीकं। यज्ञस्य। केतुः। बृहती। वि। भाहि।
प्रशस्तिऽकृत्। ब्रह्मणे। नः। वि। उच्छ। आ। नः। जने। जनय। विश्वऽवारे ॥१९॥

हे उषस्त्वं देवानां माता जननी। उषसि सर्वे देवाः स्तुत्या प्रबोध्यंते अतः सा तज्जननवतीत्युच्यते। अत एवादितेर्देवानां मातुरनीकं प्रत्यनीकं। प्रतिस्पर्धिनी त्वमित्यर्थः। यद्वा। दीव्यंतीति देवा रश्मयः। तेषां निर्मात्री अदितिरखंडनीयाया भूमेरनीकं मुखं। यथेंद्रियाश्रयत्वान्मुखं प्रकाशकं एवमुषा भूमेः प्रकाशयित्री-त्यर्थः। यज्ञस्य केतुः केतयित्री ज्ञापयित्री बृहती महती सती वि भाहि। प्रकाशस्व। अपि च प्रशस्तिकृत् सम्यक् स्तुतमिति प्रशंसनं कुर्वती नोऽस्मदीयाय ब्रह्मणे मंत्ररूपाय स्तोत्राय व्युच्छ। विवासय। तदनंतरं हे विश्ववारे सर्वैर्वरणीय उषो नोऽस्मान् जने जनपद आ जनय। आभिमुख्येन प्रादुर्भावय। अवस्थापयेत्यर्थः॥ बृहती। बृहन्महतोरुपसंख्यानमिति ङीप उदात्तत्वं। प्रशस्तिकृत्। शन्सु स्तुतौ। भावे क्तिन्। तितुत्रेतीट्प्रति-षेधः। अनिदितामिति नलोपः। तस्मिन्नुपपदे करोतेः क्विपेति क्विप्। जनय। जनी प्रादुर्भावे। णिच्युपधा-वृद्धिः। जनीजॄष्क्नसुरंजोऽमंताश्च। धा० १९. ६३-६७.। इति मित्त्वे मितां ह्रस्व इति ह्रस्वत्वं ॥

यच्चित्रमप्न उषसो वहंतीजानाय शशमानाय भद्रं।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥२०॥
यत्। चित्रं। अप्नः। उषसः। वहंति। ईजानाय। शशमानाय। भद्रं।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः ॥२०॥

चित्रं चायनीयमप्न आप्तव्यं यद्धनमुषसो वहंति आनयंति ईजानाय हविर्भिरिष्टवते शशमानाय स्तुतिभिः संभजमानाय पुरुषाय भद्रं भजनीयं तद्भवतीति शेषः। यदनेन सूक्तेनास्माभिः प्रार्थितं तन्मित्रादयः षड्देवता ममहंतां। पूजितं कुर्वंतु ॥ अप्नः। आप्लृ व्याप्तौ। आपः कर्माख्यायां ह्रस्वो नुट् चेति बहुलग्रहणादकर्माख्यायाम-प्यसुन् धातोर्ह्रस्वो नुडागमश्च। ईजानाय। यजतेश्छंदसि लिट्। लिटः कानज्वा। वचिस्वपीत्यादिना संप्र-सारणं। द्विर्वचनादि। शशमानाय। शश प्लुतगतौ। ताच्छीलिकश्चानश्। तस्य लसार्वधातुकत्वाभावादनुप-देशाल्लसार्वधातुकस्वराभावे चित्स्वर एव शिष्यते॥ ॥४॥

इमा रुद्रायेत्येकादशर्चं नवमं सूक्तं कुत्सस्यार्षं। दशम्येकादश्यौ त्रिष्टुभौ। शिष्टा नव जगत्यः। रुद्रो देवता। तथा चानुक्रांतं। इमा एकादश रौद्रं द्वित्रिष्टुबंतमिति ॥ शूलगवादिषु रुद्रदेवत्येषु कर्मस्वनेन सूक्तेन दिगुपस्थेया। तथा च सूचितं। कद्रुद्रायेमा रुद्राया ते पितरिमा रुद्राय स्थिरधन्वने गिर इति सर्वरुद्रयज्ञेषु दिशामुपस्थानं। आ० गृ० ४. ९. २१.। इति ॥

इमा रुद्राय तवसे कपर्दिने क्षयद्वीराय प्र भरामहे मतीः।
यथा शमसद्द्विपदे चतुष्पदे विश्वं पुष्टं ग्रामे अस्मिन्ननातुरं ॥१॥

इमाः । रुद्राय । तवसे । कपर्दिने । क्षयत्ऽवीराय । प्र । भरामहे । मतीः ।
यथा । शं । असत् । द्विऽपदे । चतुःऽपदे । विश्वं । पुष्टं । ग्रामे । अस्मिन् । अनातुरं ॥१॥

रुद्राय । रोदयति सर्वमंतकाल इति रुद्रः । यद्वा । रुत्संसाराख्यं दुःखं । तद्द्रावयत्यपगमयति विनाशयतीति रुद्रः । यद्वा । रुतः शब्दरूपा उपनिषदः । ताभिर्द्रूयते गम्यते प्रतिपाद्यत इति रुद्रः । यद्वा । रुत् शब्दात्मिका वाणी तत्प्रतिपाद्यात्मविद्या वा । तामुपासकेभ्यो राति ददातीति रुद्रः । यद्वा । रुणद्ध्यावृणोतीति रुदंधकारादि । तद्दृणाति विदारयतीति रुद्रः । यद्वा । कदाचिद्देवासुरसंग्रामेऽग्न्यात्मको रुद्रो देवैर्निचिप्तं धनमपहृत्य निरगात् । असुराञ्जित्वा देवा एनमन्विष्य दृष्ट्वा धनमपाहरन् । तदानीमरुदत् । तस्माद्रुद्र इत्याख्यायते । तथा च तैत्तिरीयकं । सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं । तै° सं° १. ५. १. १. । इति । तस्मै रुद्राय मतीर्मननीया इमाः स्तुतीः प्र भरामहे । प्रकर्षेण निष्पादयामः । कीदृशाय । तवसे प्रवृद्धाय कपर्दिने जटिलाय क्षयद्वीराय क्षयंतो विनश्यंतो वीरा यस्मिन् तादृशाय । यद्वा । क्षयतिरैश्वर्यकर्मा । क्षयंतः प्राप्तैश्वर्या वीरा मरुद्गणाः पुत्रा यस्य तस्मै । यथा येन प्रकारेण शं शमनीयानां रोगाणामुपशमनं द्विपदेऽस्मदीयाय मनुष्याय चतुष्पदे गवाश्वप्रभृतये चासत् भवेत् । तेन प्रकारेण स्तुतीः कुर्म इत्यर्थः । अतोऽस्मिन्नस्मदीये ग्रामे वर्तमानं विश्वं सर्वं प्राणिजातमनातुरं । आतुरा रुग्णाः । तै रहितं सत् पुष्टं प्रवृद्धं भवतु ॥ रुद्राय । रोदेर्णिलुक्च । उ° २. २२. । इति रक् । तवसे । तवतिर्वृद्ध्यर्थः सौत्रो धातुः । औणादिकोऽसिप्रत्ययः । क्षयद्वीराय । क्षि क्षये । लटः शतृ । छंदस्युभयथेति शतुरार्धधातुकत्वेनादुपदेशाल्लसार्वधातुकानुदात्तत्वाभावात्तस्यैव स्वरः शिष्यते । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । असत् । अस भुवि । लेट्यडागमः । इतश्च लोप इतीकारलोपः । द्विपदे । द्वौ पादावस्य । संख्यासुपूर्वस्येति पादशब्दस्यांत्यलोपः समासांतः । चतुर्थ्येकवचने भसंज्ञायां पादः पदिति पद्भावः । एकदेशविकृतस्यानन्यत्वात् । परि° ३७. । द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहाविल्युत्तरपदाद्युदात्तत्वं । चतुष्पदे । स्वरवर्जं पूर्ववत् । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । पूर्वपदं च त्रेः संख्यायाः । फि° २. ५. । इत्याद्युदात्तं ॥

रुद्रदेवत्ये पशौ वपापुरोडाशयोर्मृळा नो रुद्रेत्यादिके द्वे अनुवाक्ये । तथा च सूत्रितं । मृळा नो रुद्रोत नो मयस्कृधीति द्वे आ ते पितर्मरुतां सुम्नमेतु । आ° ३. ८. । इति ॥

मृळा नो रुद्रोत नो मयस्कृधि क्षयद्वीराय नमसा विधेम ते ।
यच्छं च योश्च मनुरायेजे पिता तदश्याम तव रुद्र प्रणीतिषु ॥२॥
मृळ । नः । रुद्र । उत । नः । मयः । कृधि । क्षयत्ऽवीराय । नमसा । विधेम । ते ।
यत् । शं । च । योः । च । मनुः । आऽयेजे । पिता । तत् । अश्याम । तव । रुद्र ।
प्रऽनीतिषु ॥२॥

हे रुद्र नोऽस्मभ्यमस्मदर्थं मृळ । त्वं सुखयिता भव । उतापि च तदनंतरं नोऽस्माकं मयः सुखं कृधि । कुरु । वयं च क्षयद्वीराय क्षपितसर्ववीरं प्राप्तैश्वर्यैर्मरुद्भिर्युक्तं वा ते त्वां नमसा हविर्लक्षणेनान्नेन नमस्कारेण वा विधेम । परिचरेम । विधतिः परिचरणकर्मा । अपि च पितोत्पादको मनुः स्वकीयाभ्यः प्रजाभ्यः शं रोगाणां शमनं योश्च भयानां यावनं च यदेतद्द्वयमायेजे देवेभ्यः सकाशात्प्राप्य दत्तवान् हे रुद्र तव प्रणीतिषु प्रकृष्टनयनेषु सत्सु तद्वयमश्याम । व्याप्नुयाम ॥ मृळ । मृड सुखने । तौदादिकः । द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । कृधि । करोतेर्लोटि बहुलं छंदसीति विकरणस्य लुक् । श्रुशृणुपॄकृवृभ्यश्छंदसीति हेर्धिः । अतः कृकमीति मयसो विसर्जनीयस्य सत्वं । क्षयद्वीराय । क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी । विधेम । विध विधाने । तौदादिकः । आयेजे । यज देवपूजासंगतिकरणदानेषु । लिटि संज्ञापूर्वकस्य विधेरनित्यत्वात्संप्रसारणाभाव एत्वाभ्यासलोपौ । अश्याम । अशू व्याप्तौ । व्यत्ययेन परस्मैपदं । बहुलं छंदसीति विकरणस्य लुक् ॥

अश्याम ते सुमतिं देवयज्यया क्षयद्वीरस्य तव रुद्र मीढ्वः ।
सुम्नायन्निद्विशो अस्माकमा चरारिष्टवीरा जुहवाम ते हविः ॥३॥
अश्याम । ते । सुऽमतिं । देवऽयज्यया । क्षयत्ऽवीरस्य । तव । रुद्र । मीढ्वः ।
सुम्नऽयन् । इत् । विशः । अस्माकं । आ । चर । अरिष्टऽवीराः । जुहवाम । ते । हविः ॥३॥

हे मीढ्वः सेक्तः कामाभिवर्षक नित्यतरुण वा रुद्र क्षयद्वीरस्य क्षपितप्रतिपक्षस्य मरुद्भिर्युक्तस्य वा तव सुमतिं शोभनां कल्याणीमनुग्रहात्मिकां बुद्धिं ते त्वत्संबंधिनो वयं देवयज्यया देवयागेन त्वद्देवत्येन यज्ञेनाश्याम । प्राप्नवाम । त्वं चास्माकं विशः प्रजा अभिलक्ष्या चर । आगच्छ । किं कुर्वन् । सुम्नायन्नित् । सुम्नमिति सुखनाम । तासां प्रजानां सुखमिच्छन्नेव । सुखप्रद एव भवेत्यर्थः । ततो वयमरिष्टवीराः । वीर्याज्जायंत इति वीराः प्रजाः । अरिष्टा अहिंसिता वीरा येषां तथाभूताः संतस्ते तुभ्यं हविश्चरुपुरोडाशादिकं जुहवाम । चोदित आधारे प्रक्षिपाम ॥ सुमतिं । मतिर्मननं । शोभनं मननं यस्यां बुद्धौ सा सुमतिः । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । देवयज्यया । छंदसि निष्टर्क्येत्यादौ यजेर्यप्रत्ययो निपात्यते स्त्रीलिंगता च । मीढ्वः । मिह सेचने । दाश्वान्साह्वान्मीढ्वानिति क्वसुप्रत्ययांतो निपातितः । संबुद्धौ मतुवसो रुरिति रुत्वं । सुम्नायन् । सुम्नं परेषामिच्छति । छंदसि परेच्छायामपीति क्यच् । न च्छंदस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः । देवसुम्नयोर्यजुषि काठके । पा॰ ७. ४. ३८. । इति विधीयमानमात्वं व्यत्ययेनाचापि द्रष्टव्यं ॥

त्वेषं वयं रुद्रं यज्ञसाधं वंकुं कविमवसे नि ह्वयामहे ।
आरे अस्मद्दैव्यं हेळो अस्यतु सुमतिमिद्वयमस्या वृणीमहे ॥४॥
त्वेषं । वयं । रुद्रं । यज्ञऽसाधं । वंकुं । कविं । अवसे । नि । ह्वयामहे ।
आरे । अस्मत् । दैव्यं । हेळः । अस्यतु । सुऽमतिं । इत् । वयं । अस्य । आ । वृणीमहे ॥४॥

अवसे रक्षणाय रुद्रं महादेवं नि ह्वयामहे । नितरामाह्वयामः । कीदृशं । त्वेषं दीप्तं यज्ञसाधं यज्ञस्य साधयितारं । एष हि यज्ञं स्विष्टं करोति । तथा च तैत्तिरीयके देवा वै यज्ञाद्रुद्रमंतरायन्[illegible]त्तं । स्विष्टं वै न इदं भविष्यति यदिमं राधयिष्याम इति तत्स्विष्टकृतः स्विष्टकृत्त्वं । तै॰ सं॰ २. ६. ८. ३. । इति । वंकुं कुटिलगंतारं कविं क्रांतदर्शिनं । स च रुद्रो दैव्यं देवस्य द्योतमानस्य संबंधिनं हेळः क्रोधमस्मदारेऽस्मत्तो दूरदेशेऽस्यतु । प्रेरयतु । अस्य महादेवस्य सुमतिमित् शोभनामनुग्रहरूपां बुद्धिमेव वयमा वृणीमहे । आभिमुख्येन संभजामहे ॥ यज्ञसाधं । यज्ञं साधयतीति यज्ञसात् । षिधू संराद्धौ । सिध्यतेरपारलौकिक इत्यात्वं । यद्वा । राध साध संसिद्धौ । अस्मात्ण्यंतात् क्विप् । वंकुं । वकि कौटिल्ये । औणादिक उप्रत्ययः । नि ह्वयामहे । निसमुपविभ्यो ह्व इत्यात्मनेपदं । दैव्यं । देवाद्यञञौ । पा॰ ४. १. ८५. ३. । इति प्राग्दीव्यतीयो यञ् । अस्यतु । असु क्षेपणे । दैवादिकः । वृणीमहे । वृङ् संभक्तौ । क्रैयादिकः ॥

दिवो वराहमरुषं कपर्दिनं त्वेषं रूपं नमसा नि ह्वयामहे ।
हस्ते बिभ्रद्भेषजा वार्याणि शर्म वर्म च्छर्दिरस्मभ्यं यंसत् ॥५॥
दिवः । वराहं । अरुषं । कपर्दिनं । त्वेषं । रूपं । नमसा । नि । ह्वयामहे ।
हस्ते । बिभ्रत् । भेषजा । वार्याणि । शर्म । वर्म । छर्दिः । अस्मभ्यं । यंसत् ॥५॥

वराहं वराहारमुत्कृष्टभोजनं । यद्वा । वराहवद्दृढांगं । अरुषमारोचमानं कपर्दिनं जटाभिर्युक्तं त्वेषं तेजसा दीप्यमानं रूपं निरूपणीयं वेदांतैरधिगम्यं एवंभूतं रुद्रं नमसा हविर्लक्षणेनान्नेन नमस्कारेण वा दिवो द्युलोकसकाशान्नि ह्वयामहे । नितरामाह्वयामः । स आहूतो रुद्रो हस्ते स्वकीये बाहौ वार्याणि सर्वैर्व-

रणीयानि भेषजा भैषज्यानि रोगशमनहेतुभूतानि बिभ्रत् धारयन् अस्मभ्यं स्तोतृभ्यः शर्मारोग्यलक्षणं सुखं वर्मायुधानां निवारकं कवचं छर्दिः । गृहनामैतत् । गृहं च यंसत् । प्रयच्छतु ॥ बिभ्रत् । डुभृञ् धारणपोषणयोः । जौहोत्यादिकः । लटः शतृ । भृञामिदित्यभ्यासस्येत्वं । भेषजा । भिषज् चिकित्सायां । कंड्वादिः । पचाद्यच् । अतोलोपयलोपौ । सुमंगलभेषजाच्च । पा॰ ४. १. ३०. । इति निपातनाद्रूपसिद्धिः । शेश्छंदसि बहुलमिति शेर्लोपः । वार्याणि । वृङ् संभक्तौ । ऋहलोर्ण्यत् । ईडवंदेत्याद्युदात्तत्वं । छर्दिः । उछृदिर् दीप्तिदेवनयोः । छृद्यते दीप्यते सुवर्णादिभिर्धनैः प्रकाश्यत इति छर्दिर्गृहं । अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः । यंसत । यम उपरमे । लेट्यडागमः । सिब्बहुलं लेटीति सिप् । इतश्च लोप इतीकारलोपः ॥ ॥५॥

इदं पित्रे मरुतामुच्यते वचः स्वादोः स्वादीयो रुद्राय वर्धनं ।
रास्वा च नो अमृत मर्तभोजनं त्मने तोकाय तनयाय मृळ ॥६॥
इदं । पित्रे । मरुतां । उच्यते । वचः । स्वादोः । स्वादीयः । रुद्राय । वर्धनं ।
रास्व । च । नः । अमृत । मर्तऽभोजनं । त्मने । तोकाय । तनयाय । मृळ ॥६॥

इदं स्तुतिलक्षणं वचो मरुतामेकोनपंचाशत्संख्याकानां देवविशेषाणां पित्रे जनकाय रुद्रायेश्वरायोच्यते । उच्चार्यते । कीदृशं । स्वादोः स्वादीयो रसवतो मधुघृतादेरपि स्वादुतरं । अतिशयेन हर्षजनकमित्यर्थः । वर्धनं स्तुत्यस्य प्रवर्धकं । स्तोत्रेण हि देवता हृष्टा सती प्रवर्धते । रुद्रस्य च मरुतां पितृत्वमेवमाख्यायते । पुरा कदाचिदिंद्रोऽसुराञ्जिगाय । तदानीं दितिरसुरमातेंद्रहननसमर्थं पुत्रं कामयमाना तपसा भर्तुः सकाशाद्गर्भं लेभे । इमं वृत्तांत[illegible]न्नेंद्रो वज्रहस्तः सन् सूक्ष्मरूपो भूत्वा तस्या उदरं प्रविश्य तं गर्भं सप्तधा बिभेद । पुनरप्येकैकं सप्तखंडमकरोत् । ते सर्वे गर्भैकदेशा योनेर्निर्गत्यारुदन् । एतस्मिन्नवसरे लीलार्थं गच्छंतौ पार्वतीपरमेश्वराविमान्ददृशतुः । महेशं प्रति पार्वत्येवमवोचत् । इमे मांसखंडा यथा प्रत्येकं पुत्राः संपद्यंतामेवं त्वया कार्यं मयि चेत्प्रीतिरस्तीति । स च महेश्वरस्तान्समानरूपान् समानवयसः समानालंकारान्पुत्रान्कृत्वा गौर्यै प्रददौ तवेमे पुत्राः संत्विति । अतः सर्वेषु मारुतेषु सूक्तेषु मरुतो रुद्रपुत्रा इति स्तूयंते । रौद्रेषु च मरुतां पिता रुद्र इति । अपि च हे अमृत मरणरहित रुद्र मर्तभोजनं मर्तानां मनुष्याणां भोगपर्याप्तमन्नं नोऽस्मभ्यं रास्व । प्रयच्छ । तथा त्मने आत्मने । द्वितीयार्थे चतुर्थी । मां तोकाय तोकं पुत्रं तनयाय तनयं तत्पुत्रं च मृळ । सुखय ॥ पित्रे । उदात्तयण इति विभक्तेरुदात्तत्वं । रास्व । रा दाने । व्यत्ययेनात्मनेपदं । त्मने । मंत्रेष्वाङ्याद्रेरात्मन इत्यत्राङोऽन्यत्रापि छंदसि दृश्यते । का॰ ६. ४. १४१. १. । इति वचनादात्मन आकारलोपः ॥

मा नो महांतमुत मा नो अर्भकं मा न उक्षंतमुत मा न उक्षितं ।
मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥७॥
मा । नः । महांतं । उत । मा । नः । अर्भकं । मा । नः । उक्षंतं । उत । मा । नः । उक्षितं ।
मा । नः । वधीः । पितरं । मा । उत । मातरं । मा । नः । प्रियाः । तन्वः । रुद्र । रिरिषः ॥७॥

हे रुद्र नोऽस्माकं मध्ये महांतं वृद्धं मा वधीः । मा हिंसीः । उतापि च नोऽस्माकमर्भकं बालं मा हिंसीः । तथा नोऽस्माकं मध्य उक्षंतं सेक्तारं मध्यवयस्कं युवानं मा वधीः । उतापि च नोऽस्माकमुक्षितं गर्भरूपेण स्त्रीषु निषिक्तमपत्यं मा वधीः । तथा नोऽस्माकं पितरं जनकं मा वधीः । उतापि च मातरं जननीं मा वधीः । तथा नोऽस्माकं प्रियाः स्नेहविषयास्तन्वः शरीराणि तनूषु भवाः प्रजा वा हे रुद्र मा रिरिषः । मा हिंसीः ॥ वधीः । हंतेर्माङि लुङि चेति वधादेशः । स चादंतः । सिच इट् । अतो लोपस्य स्थानिवद्भावाद्वृद्ध्यभावः । रिरिषः । रिष हिंसायां । ण्यंताल्लुङि चङि णिलोपोपधाह्रस्वत्वादीनि । छांदसः पदकालीनोऽभ्यासह्रस्वः ॥

मा नस्तोके तनये मा न आयौ मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदमित्त्वा हवामहे ॥ ८॥
मा । नः । तोके । तनये । मा । नः । आयौ । मा । नः । गोषु । मा । नः । अश्वेषु । रिरिषः ।
वीरान् । मा । नः । रुद्र । भामितः । वधीः । हविष्मंतः । सदं । इत् । त्वा । हवामहे ॥ ८॥

हे रुद्र नोऽस्माकं तोकादिविषये मा रिरिषः । मा हिंसीः । तोकशब्दः पुत्रवाची । तनयस्तत्पुत्रः । आयुरित्यंतोदात्तो मनुष्यनाम । पुत्रपौत्रव्यतिरिक्तो योऽस्मदीयो मनुष्यस्तस्मिन् गोषु पश्वादिष्वश्वेषु च मा रिरिषः । हिंसां मा कृथाः । तथा हे रुद्र वीरान् विक्रांतान् शौर्योपेतानस्मदीयान् भामितः क्रुद्धः सन् मा वधीः । मा हिंसीः । वयं च हविष्मंतो हविर्भिर्युक्ताः संतः सदमित् सर्वदैव त्वां हवामहे । आह्वयामहे ॥ आयौ । इण् गतौ । छंदसीण इत्युणप्रत्ययः । भामितः । भाम क्रोधे क्रोधिकरणे चेति कर्तरि क्तः । हवामहे । ह्वेञो लटि बहुलं छंदसीति संप्रसारणं ॥

देवसुवां हविःषु रुद्रस्य पशुपतेर्याग उप ते स्तोमानित्यादिके याज्यानुवाक्ये । सूत्रितं च । उप ते स्तोमान्पशुपा इवाकरमिति द्वे । आ॰ ४.११. । इति ॥

उप ते स्तोमान्पशुपा इवाकरं रास्वा पितर्मरुतां सुम्नमस्मे ।
भद्रा हि ते सुमतिर्मृळयत्तमाथा वयमव इत्ते वृणीमहे ॥ ९॥
उप । ते । स्तोमान् । पशुपाःऽइव । आ । अकरं । रास्व । पितः । मरुतां । सुम्नं । अस्मे इति ।
भद्रा । हि । ते । सुऽमतिः । मृळयत्ऽतमा । अथ । वयं । अवः । इत् । ते । वृणीमहे ॥ ९॥

हे रुद्र स्तोमान् स्तुतिरूपान्मंत्रान् ते तुभ्यमुपाकरं । उपाकरोमि । समर्पयामि । तत्र दृष्टांतः । पशुपा इव । यथा पशूनां पालयिता गोपः प्रातःकाले स्वस्मै समर्पितान्पशून् सायंकाले स्वामिभ्यः प्रत्यर्पयति एवं त्वत्सकाशाल्लब्धान् स्तुतिरूपान्मंत्रान् स्तुतिसाधनतया तुभ्यं प्रत्यर्पयामीत्यर्थः । हे मरुतां पितर्मरुत्संज्ञानां देवानामुत्पादक रुद्र नोऽस्मभ्यं सुम्नं सुखं रास्व । देहि । अपि च ते त्वदीया सुमतिः कल्याणी बुद्धिर्मृळयत्तमातिशयेन सुखयितृतमा । अत एव भद्रा भजनीया हि । यस्मादेवं तस्मादथानंतरं वयं ते त्वदीयमवो रक्षणं वृणीमहे । संभजामहे ॥ अकरं । छंदसि लुङ्लङ्लिट इति वर्तमाने लुङ् । कृमृदृरुहिभ्य इति च्लेरङादेशः । ऋदृशोऽङि गुणः । पितर्मरुतां । परमपि च्छंदसीति परस्याः षष्ठ्याः पूर्वामंत्रितानुप्रवेशे सत्यामंत्रितस्य चेति पदद्वयमप्यनुदात्तं । अस्मे । सुपां सुलुगिति चतुर्थीबहुवचनस्य शेआदेशः । मृळयत्तमा । मृड सुखने । अस्मात्स्यंतात्लटः शतृ । तस्य च्छंदस्युभयथेत्यार्धधातुकत्वात्सार्वधातुकानुदात्तत्वाभावे प्रत्ययस्वरः शिष्यते ॥

आरे ते गोघ्नमुत पूरुषघ्नं क्षयद्वीर सुम्नमस्मे ते अस्तु ।
मृळा च नो अधि च ब्रूहि देवाधा च नः शर्म यच्छ द्विबर्हाः ॥ १०॥
आरे । ते । गोऽघ्नं । उत । पुरुषऽघ्नं । क्षयत्ऽवीर । सुम्नं । अस्मे इति । ते । अस्तु ।
मृळ । च । नः । अधि । च । ब्रूहि । देव । अध । च । नः । शर्म । यच्छ । द्विऽबर्हाः ॥ १०॥

हे क्षयद्वीर क्षापितसर्वशत्रुजन रुद्र ते त्वदीयं गोघ्नं यद्गोहननं यद्वा गोहननसाधनमायुधं उतापि च पुरुषघ्नं पुरुषहननं तत्साधनमायुधं वा तदुभयमारे दूरेऽस्मत्तो विप्रकृष्टदेशे भवतु । अस्मे अस्मासु ते त्वदीयं सुम्नं सुखमस्तु । भवतु । अपि च नोऽस्माकं मृळ । सुखसिद्ध्यर्थं प्रसन्नो भव । हे देव द्योतमान रुद्र नोऽस्मानधि ब्रूहि च । अधिवचनं पक्षपातेन वचनं ब्राह्मणेभ्योऽधि ब्रूयात् । तै॰ सं॰ २. ५. ११. ९. । इति यथा । अध चाथानंतरं च द्विबर्हा द्वयोः स्थानयोः पृथिव्यामंतरिक्षे च परिवृढः । यद्वा । द्वयोर्दक्षिणोत्तरमार्गयोर्ज्ञानकर्म-

गोर्वा परिवृढः स्वामी । स त्वं नोऽस्मभ्यं शर्म सुखं यच्छ । देहि ॥ गोघ्नं । हन हिंसागत्योः । अस्माद्वन्यर्थे कविधानमिति भावे करणे वा कप्रत्ययः । गमहनेत्युपधालोपः । हो हंतेरिति कुत्वं । द्विबर्हाः । बृह बृहि वृद्धौ । द्वयोः स्थानयोर्बर्हते प्रवर्धत इति द्विबर्हाः । असुन् । बहुव्रीहौ प्रकृत्या पूर्वपदमिति पूर्वपदप्रकृतिस्वरत्वं ॥

**अवो॑चाम॒ नमो॑ अस्मा अव॒स्यवः॑ शृ॒णोतु॑ नो॒ हवं॑ रु॒द्रो म॒रुत्वा॑न् ।**
**तन्नो॑ मि॒त्रो वरु॑णो मामहन्ता॒मदि॑तिः॒ सिन्धुः॑ पृथि॒वी उ॒त द्यौः ॥११॥**
**अवो॑चाम । नमः॑ । अ॒स्मै॒ । अ॒व॒स्यवः॑ । शृ॒णोतु॑ । नः॒ । हवं॑ । रु॒द्रः । म॒रुत्वा॑न् ।**
**तत् । नः॒ । मि॒त्रः । वरु॑णः । म॒म॒ह॒न्तां॒ । अदि॑तिः । सिन्धुः॑ । पृ॒थि॒वी । उ॒त । द्यौः ॥११॥**

अवस्यवोऽवोऽन्नं रक्षणं वेच्छंतो वयमवोचाम । एतत्सूक्तरूपं स्तोत्रमवादिष्म । अस्मै रुद्राय नमो नमस्कारोऽस्तु । मरुत्वान्मरुद्भिः स्वकीयैः पुत्रैर्युक्तो रुद्रश्च नोऽस्माकं हवमाह्वानं शृणोतु । स्वीकरोतु । यदस्माभिरुक्तं नोऽस्मदीयं तत्सर्वं मित्रादयः षड्देवता ममहंतां । पूजयंतु । उतशब्दोऽप्यर्थे ॥ अवोचाम । ब्रूञ् व्यक्तायां वाचि । लुङि ब्रुवो वचिः । अस्यतिवक्तिख्यातिभ्योऽङिति च्लेरङादेशः । वच उमित्युमागमः । अवस्यवः । अव रक्षणे । भावेऽसुन् । सुप आत्मनः क्यच् । क्याच्छंदसीत्युप्रत्ययः । हवं । भावेऽनुपसर्गस्येत्यप् संप्रसारणं च । मरुत्वान् । झय इति मतुपो वत्वं । तसौ मत्वर्थ इति भत्वेन पदत्वाभावाज्जश्त्वाभावः ॥ ॥ ६ ॥

चित्रमिति षडृचं दशमं सूक्तं कुत्सस्यार्षं त्रैष्टुभं सूर्यदेवताकं । तथा चानुक्रांतं । चित्रं षट् सौर्यमिति ॥ आश्विनशस्त्रे सूर्योदयादूर्ध्वं सौर्याणि सूक्तानि शंसनीयानि । तत्रेदं सूक्तं शंसनीयं । सूचितं च । चित्रं देवानां नमो मित्रस्य । आ० ६. ५. । इति ॥ आदितस्तिस्र ऋचः सौर्यस्य पशोर्वपापुरोडाशहविषां क्रमेणानुवाक्याः । ततो द्वे वपापुरोडाशयोर्याज्ये । तथा च सूचितं । चित्रं देवानामुदगादनीकमिति पंच शं नो भव चक्षसा शं नो अह्ना । आ० ३. ८. । इति ॥ अतिमूर्तिनाम्न्येकाहे शुनासीर्ये पर्वणि च सूर्यस्य हविषश्चित्रं देवानामित्येषा याज्या । सूचितं च । तरणिर्विश्वदर्शतश्चित्रं देवानामुदगादनीकमिति याज्यानुवाक्याः । आ० ९. ८. । इति ॥

**चि॒त्रं दे॒वाना॒मुद॑गा॒दनी॑कं॒ चक्षु॑र्मि॒त्रस्य॒ वरु॑णस्या॒ग्नेः ।**
**आप्रा॒ द्यावा॑पृथि॒वी अ॒न्तरि॑क्षं॒ सूर्य॑ आ॒त्मा जग॑तस्त॒स्थुष॑श्च ॥१॥**
**चि॒त्रं । दे॒वानां॑ । उत् । अ॒गा॒त् । अनी॑कं । चक्षुः॑ । मि॒त्रस्य॑ । वरु॑णस्य । अ॒ग्नेः ।**
**आ । अ॒प्राः॒ । द्यावा॑पृथि॒वी इति॑ । अ॒न्तरि॑क्षं । सूर्यः॑ । आ॒त्मा । जग॑तः । त॒स्थुषः॑ । च॒ ॥१॥**

देवानां । दीव्यंतीति देवा रश्मयः । तेषां देवजनानामेव वानीकं तेजःसमूहरूपं चित्रमाश्चर्यकरं सूर्यस्य मंडलमुदगात् । उदयाचलं प्राप्तमासीत् । कीदृशं । मित्रस्य वरुणस्याग्नेश्च । उपलक्षणमेतत् । तदुपलक्षितानां जगतां चक्षुः प्रकाशकं चक्षुरिंद्रियस्थानीयं वा । उदयं प्राप्य च द्यावापृथिवी दिवं पृथिवीमंतरिक्षं चाप्राः । स्वकीयेन तेजसा आ समंतादपूरयत् । ईदृग्भूतमंडलांतर्वर्ती सूर्योऽंतर्यामितया सर्वस्य प्रेरकः परमात्मा जगतो जंगमस्य तस्थुषः स्थावरस्य चात्मा स्वरूपभूतः । स हि सर्वस्य स्थावरजंगमात्मकस्य कार्यवर्गस्य कारणं । कारणाच्च कार्यं नातिरिच्यते । तथा च पारमर्षं सूत्रं । तदनन्यत्वमारंभणशब्दादिभ्यः । वेदां० २. १. १४. । इति । यद्वा । स्थावरजंगमात्मकस्य सर्वस्य प्राणिजातस्य जीवात्मा । उदिते हि सूर्ये मृतप्रायं सर्वं जगत्पुनश्चेतनयुक्तं सदुपलभ्यते । तथा च श्रूयते । योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति । तै० आ० १. १४. १. । इति ॥ आप्राः । प्रा पूरणे । लङि पुरुषव्यत्ययः । अदादित्वाच्छपो लुक् । जगतः । गमेर्द्वे च । पा० ३. २. १७८. ३. । इति क्विब्द्विर्वचनं । गमः क्वावित्यनुनासिकलोपः । तस्थुषः । तिष्ठतेर्लिटः क्वसुः । द्विर्वचने शर्पूर्वाः खयः । षष्ठ्येकवचने वसोः संप्रसारणमिति संप्रसारणं । आतो लोप इटि चेत्याकारलोपः । शासिवसीति षत्वं ॥

सूर्यो॑ दे॒वीमु॒षसं॒ रोच॑मानां॒ मर्यो॒ न योषा॑म॒भ्ये॑ति प॒श्चात् ।
यत्रा॒ नरो॑ देव॒यंतो॑ यु॒गानि॑ वित॒न्वते॒ प्रति॑ भ॒द्राय॑ भ॒द्रं ॥ २ ॥

सूर्यः॑ । दे॒वीं । उ॒षसं॑ । रोच॑मानां । मर्यः॑ । न । योषां॑ । अ॒भि । ए॒ति॒ । प॒श्चात् ।
यत्र॑ । नरः॑ । दे॒व॒ऽयंतः॑ । यु॒गानि॑ । वि॒ऽत॒न्वते॑ । प्रति॑ । भ॒द्राय॑ । भ॒द्रं ॥ २ ॥

सूर्यो देवीं दानादिगुणयुक्तां रोचमानां दीप्यमानामुषसं पश्चादभ्येति । उषसः प्रादुर्भावानंतरं तामभिलक्ष्य गच्छति । तत्र दृष्टांतः । मर्यो न योषां । यथा कश्चिन्मनुष्यः शोभनावयवां गच्छंतीं युवतिं स्त्रियं सततमनुगच्छति तद्वत् । यत्र यस्यामुषसि जातायां देवयंतो देवं द्योतमानं सूर्यं यष्टुमिच्छंतो नरो यज्ञस्य नेतारो यजमाना युगानि । युगशब्दः कालवाची । तेन च तत्र कर्तव्यानि कर्माणि लक्ष्यंते यथा दर्शपूर्णमासाविति । अग्निहोत्रादीनि कर्माणि वितन्वते विस्तारयंति । यद्वा । देवयंतो देवयागार्थं धनमात्मन इच्छंतो यजमानपुरुषा युगानि हलावयवभूतानि कर्षणाय वितन्वते प्रसारयंति । तामुषसमनुगच्छतीत्यर्थः । एवंविधं भद्रं कल्याणं सूर्यं प्रति भद्राय कल्याणरूपाय कर्मफलाय स्तुम इति शेषः । यद्वा । देवयंतो देवकामा यजमाना युगानि युग्मानि भूत्वा पत्नीभिः सहिताः संतो भद्रं कल्याणमग्निहोत्रादिकं कर्म भद्राय तत्फलार्थं प्रति प्रत्येकं यस्यामुषसि प्रवृत्तायां वितन्वते विस्तारयंति ॥ मर्यः । मृङ् प्राणत्यागे । छंदसि निष्टर्क्येत्यादौ यत्प्रत्ययांतो निपात्यते । यतोऽनाव इत्याद्युदात्तत्वं । युगानि । युजेः कर्मणि घञ् । युगशब्दः कालविशेषे रथाद्युपकरणे च । का० ६. १. १६०. । इत्युंछादिषु पाठाद्गुणाभावोऽंतोदात्तत्वं च । वितन्वते । तनु विस्तारे । तनादिकृञ्भ्य उः । सहेति योगविभागात्तिङोपसर्गस्य समासे सति समासस्येत्यंतोदात्तत्वं ॥

भ॒द्रा अश्वा॑ ह॒रितः॒ सूर्य॑स्य चि॒त्रा एत॑ग्वा अ॒नु॒माद्या॑सः ।
न॒म॒स्यंतो॑ दि॒व आ पृ॒ष्ठम॑स्थुः॒ परि॒ द्यावा॑पृथि॒वी यं॑ति स॒द्यः ॥ ३ ॥

भ॒द्राः । अश्वाः॑ । ह॒रितः॑ । सूर्य॑स्य । चि॒त्राः । एत॑ऽग्वाः । अ॒नु॒ऽमाद्या॑सः ।
न॒म॒स्यंतः॑ । दि॒वः । आ । पृ॒ष्ठं । अ॒स्थुः॒ । परि॑ । द्यावा॑पृथि॒वी इति॑ । यं॒ति॒ । स॒द्यः ॥ ३ ॥

भद्राः कल्याणाः । अश्वा एतग्वा इत्येतदुभयमश्वनाम । तत्रैकं क्रियापरं योजनीयं । अश्वास्तुरगा व्यापनशीला वा हरितो हर्तारश्चित्रा विचित्रावयवा अनुमाद्यासोऽनुक्रमेण सर्वैः स्तुत्या मादनीयाः एवंभूताः सूर्यस्यैतग्वा अश्वाः । यद्वा । एतं गंतव्यं मार्गं गंतारोऽश्वाः । एतं शबलवर्णं वा प्राप्नुवंतोऽश्वाः । नमस्यंतोऽस्माभिर्नमस्यमानाः संतो दिवोऽंतरिक्षस्य पृष्ठमुपरिप्रदेशं पूर्वभागलक्षणमास्थुः । आतिष्ठंति । प्राप्नुवंति । यद्वा । हरितो रसहरणशीला रश्मयो भद्रादिलक्षणविशिष्टा दिवः पृष्ठं नभःस्थलमातिष्ठंति । आस्थाय च द्यावापृथिवी द्यावापृथिव्यौ सद्यस्तदानीमेवैकेनाह्ना परि यंति । परितो गच्छंति । व्याप्नुवंतीत्यर्थः ॥ अश्वाः । अशू व्याप्तौ । अशिप्रुषीत्यादिना क्वन् । एतग्वाः । इण् गतौ । आसिहसीत्य। दि-॰ कर्मणि तन्प्रत्ययः । गमेरौणादिको भावे ड्वप्रत्ययः । एतमेतव्यं प्रति ग्वो गमनं येषां ते तथोक्ताः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अनुमाद्यासः । मदि स्तुतौ । अस्मात्स्यंतादचो यत् । यतोऽनाव इत्याद्युदात्तत्वं । नमस्यंतः । नमोवरिव इति पूजार्थे क्यच् । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । अस्थुः । तिष्ठतेश्छांदसो वर्तमाने लुङ् । गातिस्थेति सिचो लुक् । आत इति झेर्जुस् ॥

तत्सूर्य॑स्य दे॒व॒त्वं तन्म॑हि॒त्वं म॒ध्या कर्तो॒र्वित॑तं॒ सं ज॑भार ।
य॒देद॑यु॑क्त ह॒रितः॑ स॒धस्था॒दाद्रात्री॒ वास॑स्तनुते सि॒मस्मै॑ ॥ ४ ॥

तत् । सूर्य॑स्य । दे॒व॒ऽत्वं । तत् । म॒हि॒ऽत्वं । म॒ध्या । कर्तोः॑ । वि॒ऽत॑तं । सं । ज॒भा॒र॒ ।
य॒दा । इत् । अयु॑क्त । ह॒रितः॑ । स॒ध॒ऽस्था॑त् । आत् । रात्री॑ । वासः॑ । त॒नु॒ते॒ । सि॒मस्मै॑ ॥ ४ ॥

सूर्यस्य सर्वप्रेरकस्यादित्यस्य तद्देवत्वमीश्वरत्वं। स्वातंत्र्यमिति यावत्। महित्वं महत्त्वं माहात्म्यं च तदेव। तच्छब्दश्रुतेर्यच्छब्दाध्याहारः। यत्कर्तोः। कर्मनामैतत्। प्रारब्धापरिसमाप्तस्य कृष्यादिलक्षणस्य कर्मणो मध्या मध्येऽपरिसमाप्त एव तस्मिन्कर्मणि विततं विस्तीर्णं स्वकीयं रश्मिजालमस्तं गच्छन् सूर्यः सं जभार अस्माल्लोकात्स्वात्मन्युपसंहरति। कर्मकरश्च प्रवृत्तमपरिसमाप्तमेव विसृजत्यस्तं यंतं सूर्यं दृष्ट्वा। ईदृशं स्वातंत्र्यं महिमा च सूर्यव्यतिरिक्तस्य कस्यास्ति। न कस्यापि। सूर्य एवेदृशं स्वातंत्र्यं महिमानं चावगाहते। अपि च। इदित्यवधारणे। यदेवास्मिन्नेव काले हरितो रसहरणशीलान्स्वरश्मीन् हरिद्वर्णानश्वान्वा सधस्थात्सहस्थानादस्मात्पार्थिवाल्लोकादादायायुक्त अन्यत्र संयुक्तान्करोति। यद्वा। युजिः केवलोऽपि विपूर्वो द्रष्टव्यः। यदैवासौ स्वरश्मीनश्वान्वा सधस्थात्। सह तिष्ठंत्यस्मिन्निति सधस्थो रथः। तस्माद्युक्त। अमुंचत्। आत् अनंतरमेव रात्री निशा वास आच्छादयितृ तमः सिमस्मै। सिमशब्दः सर्वशब्दपर्यायः। सप्तम्यर्थे चतुर्थी। सर्वस्मिन् लोके तनुते। विस्तारयति। यद्वा। वासो वासरमहः। तत्सर्वस्मादस्माल्लोकादपनीय रात्री तमस्तनुते। अत्र निरुक्तं। तत्सूर्यस्य देवत्वं तन्महित्वं मध्ये यत्कर्मणां क्रियमाणानां विततं संह्रियते यदासावयुक्त हरणानादित्यरश्मीन्हरितोऽश्वानिति वाथ रात्री वासस्तनुते सिमस्मै वासरमहरवयुवती सर्वस्मात्। नि० ४. ११.। इति॥ महित्वं। मह पूजायां। औणादिक इन्प्रत्ययः। तस्य भावस्त्वतलौ। पा० ५. १. ११९.। मध्या। मध्यशब्दात्सप्तम्येकवचनस्य सुपां सुलुगिति डादेशः। कर्तोः। करोतेरौणादिकस्तुन्प्रत्ययः। विततं। विपूर्वात्तनोतेः कर्मणि निष्ठा। उदित्त्वेन क्त्वाप्रत्यय इटो विकल्पनादस्य विभाषितीट्प्रतिषेधः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। जभार। हृग्रहोर्भ इति भत्वं। अयुक्त। युजेर्लुङि झलो झलीति सिचो लोपः। सधस्थात्। घञर्थे कविधानमित्यधिकरणे कप्रत्ययः। सध मादस्थयोश्छंदसीति सधादेशः। दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं। रात्री। रात्रेश्चाजसाविति ङीप्॥

तन्मित्रस्य वरुणस्याभिचक्षे सूर्यो रूपं कृणुते द्योरुपस्थे।
अनंतमन्यद्रुशदस्य पाजः कृष्णमन्यद्धरितः सं भरंति ॥५॥
तत्। मित्रस्य। वरुणस्य। अभिऽचक्षे। सूर्यः। रूपं। कृणुते। द्योः। उपऽस्थे।
अनंतं। अन्यत्। रुशत्। अस्य। पाजः। कृष्णं। अन्यत्। हरितः। सं। भरंति ॥५॥

तत्तदानीमुदयसमये मित्रस्य वरुणस्यैतदुभयोपलक्षितस्य सर्वस्य जगतोऽभिचक्ष आभिमुख्येन प्रकाशनाय द्योर्नभस उपस्थ उपस्थाने मध्ये सूर्यः सर्वस्य प्रेरकः सविता रूपं सर्वस्य निरूपकं प्रकाशकं तेजः कृणुते। करोति। अपि चास्य सूर्यस्य हरितो रसहरणशीला रश्मयो हरिद्वर्णा अश्वा वानंतमवसानरहितं कृत्स्नस्य जगतो व्यापकं रुशद्दीप्यमानं श्वेतवर्णं पाजः। बलनामैतत्। बलयुक्तमतिबलस्यापि नैशस्य तमसो निवारणे समर्थमन्यत्तमसो विलक्षणं तेजः सं भरंति। अहनि स्वकीयागमनेन निष्पादयंति। तथा कृष्णं कृष्णवर्णमन्यत्तमः स्वकीयापगमनेन रात्रौ। अस्य रश्मयोऽप्येवं कुर्वंति किमु वक्तव्यं तस्य माहात्म्यमिति सूर्यस्य स्तुतिः॥ अभिचक्षे। संपदादिलक्षणो भावे क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वं। द्योः। ङसिङसोश्च। पा० ६. १. ११०.। इति पूर्वरूपता। उपस्थे। घञर्थे कविधानमिति कप्रत्ययः। मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं। पाजः। पाति रक्षतीति पाजो बलं। पातेर्बले जुट्च। उ० ४. २०२.। इत्यसुन् जुडागमश्च। छांदसो मत्वर्थीयस्य विनो लोपः॥

अद्या देवा उदिता सूर्यस्य निरंहसः पिपृता निरवद्यात्।
तन्नो मित्रो वरुणो मामहंतामदितिः सिंधुः पृथिवी उत द्यौः ॥६॥
अद्य। देवाः। उत्ऽइता। सूर्यस्य। निः। अंहसः। पिपृत। निः। अवद्यात्।
तत्। नः। मित्रः। वरुणः। ममहंतां। अदितिः। सिंधुः। पृथिवी। उत। द्यौः ॥६॥

हे देवा द्योतमानाः सूर्यरश्मयः अद्यास्मिन्काले सूर्यस्यादित्यस्योदिता उदितावुदये सतीतस्ततः प्रसरंतो

यूयमस्मानंहसः पापान्निष्पिपृत । निष्कृष्य पालयत । यदिदमस्माभिरुक्तं नोऽस्मदीयं तन्मित्रादयः षड्देवता ममहंतां । पूजयंतु । अनुमन्यंतां । रक्षंत्विति यावत् । मित्रः प्रमीतेस्त्रायकोऽहरभिमानी देवः । वरुणोऽनिष्टानां निवारयिता राज्यभिमानी । अदितिरखंडनीयादीना वा देवमाता । सिंधुः स्यंदनशीलोदकाभिमानिनी देवता । पृथिवी भूलोकस्याधिष्ठात्री द्यौर्द्युलोकस्य । उतशब्दः समुच्चये ॥ अद्य । निपातस्य चेति संहितायां दीर्घत्वं । उदिता । उत्पूर्वादेतेर्भावे क्तिन् । सुपां सुलुगिति डादेशः । तादौ चेति गतेः प्रकृतिस्वरत्वं । पिपृत । पॄ पालनपूरणयोः । पृ इत्येके । लोटि जुहोत्यादित्वाच्छपः श्लुः । द्विर्वचनोरदत्वहलादिशेषाः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं । सार्वधातुकमपिदिति तशब्दस्य ङित्त्वे सति ऋचि तुनुघेत्यादिना संहितायां दीर्घः ॥ ॥ ७ ॥ ॥ १६ ॥

सप्तदशेऽनुवाके पंच सूक्तानि । तत्र नासत्याभ्यामिति पंचविंशत्यृचं प्रथमं सूक्तं । उशिक्संज्ञायामंगराजस्य महिष्या दास्यां दीर्घतमसोत्पादितः कक्षीवानस्य सूक्तस्य ऋषिः । त्रिष्टुप् छंदः । अश्विनौ देवता । तथा चानुक्रांतं । नासत्याभ्यां पंचाधिका कक्षीवान्दैर्घतमस उशिकप्रसूत आश्विनं वा इति । तुह्यादिपरिभाषयेदमादीनि पंच सूक्तान्यश्विदेवत्यानि ॥ प्रातरनुवाकस्याश्विने क्रतौ त्रैष्टुभे छंदसीदमादीनि त्रीणि सूक्तानि । अथाश्विन इति खंडे सूचितं । ग्रावाणेव नासत्याभ्यामिति त्रीणि । आ° ४. १५. । इति ॥ आश्विनशस्त्रे चैतानि शस्यानि प्रातरनुवाकन्यायेन । आ° ६. ५. । इत्यतिदिष्टत्वात् ॥

नास॑त्याभ्यां ब॒र्हिरि॑व॒ प्र वृं॑जे॒ स्तोमाँ॑ इयर्म्य॒भ्रिये॑व॒ वातः॑ ।
यावर्भ॑गाय विम॒दाय॑ जा॒यां से॑ना॒जुवा॑ न्यू॒हतू॒ रथे॑न ॥ १ ॥

नास॑त्याभ्यां । ब॒र्हिःऽइ॑व । प्र । वृं॒जे॒ । स्तोमा॑न् । इ॒य॒र्मि॒ । अ॒भ्रिया॑ऽइव । वातः॑ ।
यौ । अर्भ॑गाय । वि॒ऽम॒दाय॑ । जा॒यां । से॒ना॒ऽजुवा॑ । नि॒ऽऊ॒हतुः॑ । रथे॑न ॥ १ ॥

बर्हिरिव यथा कश्चिद्यजमानो यागार्थं बर्हिः प्र वृंजे प्रकर्षेणान्यूनानतिरिक्तं यागाय पर्याप्तं दर्भं वृंक्ते छिनत्ति । संपादयतीति यावत् । एवमहं नासत्याभ्यामश्विभ्यां स्तोमान् स्तुतीरियर्मि । संपादयामि । एतदेव विशदीक्रियते । अभ्रियेव यथाभ्रियाण्यभ्रेषु मेघेष्ववस्थितान्युदकानि वातो वायुर्वर्षणार्थं बहुशः प्रेरयति एवमहमश्विभ्यां स्तोत्राणीयर्मि । बहुशः प्रेरयामि । कीदृशावश्विनौ । अर्भगाय बालाय स्वयंवरलब्धभार्याय विमदायैतत्संज्ञाय राजर्षये मध्येमार्गं स्वयंवरार्थमागतैस्तामलभमानैरन्यैर्नृपैः सह योद्धुमशक्नुवतेऽपि तस्मै सेनाजुवा शत्रुसेनायाः प्रेरकेण शत्रुभिर्दुष्प्रापेण रथेन यावश्विनौ जायां भार्यां परैरनुक्रांतां न्यूहतुः शत्रून्निहत्य तदीयं गृहं प्रापयामासतुः । ताभ्यामित्यर्थः ॥ नासत्याभ्यां । सत्सु भवौ सत्यौ । न सत्यावसत्यौ । न असत्यौ नासत्यौ । नभ्राण्नपादित्यादिना नञः प्रकृतिभावः । अव्ययपूर्वपदप्रकृतिस्वरत्वं । वृंजे । वृजी वर्जने । आदादिकः । इदित्त्वान्नुम् । लोपस्त आत्मनेपदेष्विति तलोपः । इयर्मि । ऋ गतौ । जौहोत्यादिकः । अर्तिपिपर्त्योश्चेत्यभ्यासस्येत्वं । अभ्यासस्यासवर्णे इतीयङ् । अभ्रियेव । समुद्राभ्राद्घ इति भवार्थे घः । घस्येयादेशः । शेश्छंदसि बहुलमिति शेर्लोपः । अर्भगाय । अर्तिगृभ्यां भन् । उ° ३. १५२. । इत्यर्तेर्भन् । अर्भ एवार्भकः । संज्ञायां कन् । पा° ५. ३. ८७. । छांदसो गकारः । अपर आह । अर्भमल्पं मायति शब्दयतीत्यर्भगः । कै गै शब्दे । गापोष्टक् । पा° ३. २. ८. । आतो लोप इटि चेत्याकारलोपः । तदेतत्पदकृतः शाकल्यस्याभिमतं । सेनाजुवा । जु इति सौत्रो धातुर्गत्यर्थः । अस्मादंतर्भावितण्यर्थात् क्विब्वचिप्र॰॰ीत्यादिना क्विब्दीर्घौ । तन्वादित्वादुवङ् । पा° ६. ४. ७७. १. । न्यूहतुः । वह प्रापणे । लिट्यतुसि यजादित्वात्संप्रसारणं । यद्वृत्तान्नित्यमिति निघातप्रतिषेधः ॥

वी॒ळु॒पत्म॑भिराशु॒हेम॑भिर्वा दे॒वानां॑ वा जू॒तिभिः॒ शाश॑दाना ।
तद्रास॑भो नासत्या स॒हस्र॑मा॒जा य॒मस्य॑ प्र॒धने॑ जिगाय ॥ २ ॥

वी॒ळु॒पत्म॑ऽभिः । आ॒शु॒हेम॑ऽभिः । वा॒ । दे॒वाना॑म् । वा॒ । जू॒तिऽभि॑ः । शाश॑दाना ।
तत् । रास॑भः । ना॒स॒त्या॒ । स॒हस्र॑म् । आ॒जा । य॒मस्य॑ । प्र॒ऽध॒ने । जि॒गा॒य॒ ॥ २ ॥

वीळुपत्मभिः । वीड्विति बलनाम । बलवदुत्पतनैः आशुहेमभिः शीघ्रगमनैः । वाशब्दः समुच्चये । हे नासत्याश्विनौ एवंभूतैरश्वैश्च देवानामिंद्रादीनां जूतिभिः प्रेरणैश्च शाशदाना शाशद्यमानयोरत्यर्थं प्रेर्यमाणयोर्युवयोर्वाहनभूतो यो रासभः प्रजापतिना दत्तः स यमस्य वैवस्वतस्य प्रीतिकरे प्रधने प्रकीर्णधनोपेत आजा आजौ संग्रामे तच्छत्रूणां सहस्रं जिगाय । जितवान् । वैवस्वतो हि बहूनां मरणहेतुना संग्रामेण तुष्टो भवति । यद्वा । जेतव्यत्वेन प्रजापतिना निहितमृक्सहस्रं शीघ्रगमनयुक्तो रासभो जिगाय । जयेनालभत । अन्येभ्यो देवेभ्यः पूर्वमेवाजिं प्राप्य युवां जयं प्रापयामास । तथा चास्मिन्नर्थे प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत् । ऐ॰ ब्रा॰ ४. ७. । इत्यादिकं ब्राह्मणमनुसंधेयं ॥ वीळुपत्मभिः । वीळु बलवत्पतंतीति वीळुपत्मानः । आशुहेमभिः । आशु शीघ्रं हिन्वंति गच्छंतीत्याशुहेमानः । तैः । हि गतौ वृद्धौ च । अन्येभ्योऽपि दृश्यंत इति मनिन् । कृदुत्तरपदप्रकृतिस्वरत्वं । जूतिभिः । ऊतियूतिजूतीत्यादिना क्तिन उदात्तत्वं । शाशदाना । शद्लृ शातने । अत्र गत्यर्थो धातूनामनेकार्थत्वात् । अस्माद्यङंताल्लटः शानच् । तस्य छंदस्युभयथेत्यार्धधातुकत्वात् श्नभावः । अतोलोपयलोपौ । अभ्यस्तानामादिरित्याद्युदात्तत्वं । सुपां सुलुगिति षष्ठ्याः पूर्वसवर्णदीर्घः । आजा । तेनैव सूत्रेण डादेशः । जिगाय । जि जये । सन्लिटोर्जेरित्यभ्यासादुत्तरस्य कुत्वं गकारः ॥

तुग्रो॑ ह भु॒ज्युम॑श्विनोदमे॒घे र॒यिं न कश्चि॑न्ममृ॒वाँ अवा॑हाः ।
तमू॑हथुर्नौ॒भिरा॑त्म॒न्वती॑भिरंतरिक्ष॒प्रुद्भि॒रपो॑दकाभिः ॥ ३ ॥

तुग्र॑ः । ह॒ । भु॒ज्युम् । अ॒श्वि॒ना॒ । उ॒द॒ऽमे॒घे । र॒यिम् । न । कः । चि॒त् । म॒मृ॒ऽवान् । अव॑ । अ॒हाः॒ ।
तम् । ऊ॒ह॒थुः॒ । नौ॒भिः । आ॒त्म॒न्ऽवती॑भिः । अ॒न्त॒रि॒क्ष॒प्रुत्ऽभिः । अप॑ऽउदकाभिः ॥ ३ ॥

अत्रेयमाख्यायिका । तुग्रो नामाश्विनोः प्रियः कश्चिद्राजर्षिः । स च द्वीपांतरवर्तिभिः शत्रुभिरत्यंतमुपद्रुतः सन् तेषां जयाय स्वपुत्रं भुज्युं सेनया सह नावा प्राहैषीत् । सा च नौर्मध्येसमुद्रमतिदूरं गता वायुवशेन भिन्नासीत् । तदानीं स भुज्युः शीघ्रमश्विनौ तुष्टाव । तौ च स्तुतौ सेनया सहितमात्मीयासु नौष्वारोप्य पितुस्तुग्रस्य समीपं त्रिभिरहोरात्रैः प्रापयामासतुरिति । अयमर्थ इदमादिकेन तृचेन प्रतिपाद्यते । हशब्दः प्रसिद्धौ । तुग्रः खलु पूर्वं शत्रुभिः पीडितः सन् तज्जयार्थमुदमेघे । उदकैर्मिह्यते सिच्यत इत्युदकमेघः समुद्रः । तस्मिन्भुज्युमेतत्संज्ञं प्रियं पुत्रमवाहाः । नावा गंतुं पर्यत्याक्षीत् । तत्र दृष्टांतः । ममृवान् म्रियमाणः सन्धनलोभी कश्चिन्मनुष्यो रयिं न यथा धनं परित्यजति तद्वत् । हे अश्विनौ तं च भुज्युं मध्येसमुद्रं निमग्नं नौभिः पितृसमीपमूहथुः । युवां प्रापितवंतौ । कीदृशीभिः । आत्मन्वतीभिरात्मीयाभिः । युवयोः स्वभूताभिरित्यर्थः । यद्वा । धृतिरात्मा । धारणवतीभिरित्यर्थः । अंतरिक्षप्रुद्भिरतिस्वच्छत्वादंतरिक्षे ज[illegible]ादेव गच्छंतीभिः अपोदकाभिः सुश्लि[illegible]भिः । अप्रविष्टोदकाभिरित्यर्थः ॥ उदमेघे । मिह सेचने । कर्मणि घञ् । न्यंक्वादीनां च । पा॰ ७. ३. ५३. । इति कुत्वं । उदकस्योदः संज्ञायां । पा॰ ६. ३. ५७. । थाथादिनोत्तरपदांतोदात्तत्वं । ममृवान् । मृङ् प्राणत्यागे । लिट[illegible] क्वसु । क्रादिनियमात्प्राप्तस्येटो वस्वेकाजाद्घसामिति नियमादभावः । अहाः । ओहाक् त्यागे । लुङि तिपि च्लेः सिच् । आगमानुशासनस्यानित्यत्वात्सगिटौ न क्रियेते । बहुलं छंदसीतीडभावः । हल्ङ्याब्भ्य इति तिलोपः । रुत्वविसर्गौ । यद्वा । मंत्रे घसेति च्लेर्लुक् । च्लेर्लुप्तत्वादिण् न क्रियते । नौभिः । सावेकाच इति विभक्तेरुदात्तत्वं । आत्मन्वतीभिः । आत्मनो मतुप् । मादुपधाया इति वत्वं । अनो नुडिति नुट् । नलोपः । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं । अंतरिक्षप्रुद्भिः । प्रुङ् गतौ । क्विब्वेति क्विप् ॥

ति॒स्रः क्षप॒स्त्रिरहा॑ति॒व्रज॑द्भि॒र्नास॑त्या भु॒ज्युमू॑हथुः पत॒ङ्गैः ।
स॒मु॒द्रस्य॒ धन्व॑न्ना॒र्द्रस्य॑ पा॒रे त्रि॒भी रथैः॑ श॒तप॑द्भिः॒ षळ॑श्वैः ॥ ४ ॥

तिस्रः । क्षपः । त्रिः । अहा । अतिव्रजत्ऽभिः । नासत्या । भुज्युं । ऊहथुः । पतंगैः ।
समुद्रस्य । धन्वन् । आर्द्रस्य । पारे । त्रिऽभिः । रथैः । शतपत्ऽभिः । षट्ऽअश्वैः ॥४॥

हे नासत्यौ सेनया सहोदके निमग्नं भुज्युं तिस्रः क्षपस्त्रिसंख्याका रात्रीस्त्रिरहा त्रिवारमावृत्तान्यहानि चातिव्रजद्भिरतिक्रम्य गच्छद्भिरेतावंतं कालमतिव्याप्य वर्तमानैः पतंगैः पतद्भिस्त्रिभिस्त्रिसंख्याकै रथैरूहथुः । युवामूढवंतौ । क्वेति चेत् उच्यते । समुद्रस्यांबुराशेर्मध्ये धन्वन् धन्वनि जलवर्जिते प्रदेशे आर्द्रस्योदकेनार्द्रीभूतस्य समुद्रस्य पारे तीरदेशे च । कथंभूतै रथैः । शतपद्भिः शतसंख्याकैश्चक्रलक्षणैः पादैरुपेतैः षळश्वैः षड्भिरश्वैर्युक्तैः ॥ तिस्रः । त्रिचतुरोः स्त्रियामिति त्रिशब्दस्य तिस्रादेशः । स चांतोदात्तः । अचि र ऋत इति रेफादेश उदात्तयणो हल्पूर्वादिति विभक्तिरुदात्तत्वं । क्षपः । विभक्त्यंतस्य च्छांदसं ह्रस्वत्वं । यद्वा । शस्यात इति योगविभागादधातोरप्याकारलोपः । अहा । शेश्छंदसि बहुलमिति शेर्लोपः । पतंगैः । पत्लृ गतौ । पतेरंगच् । उ० १. ११८. । धन्वन् । धविर्गत्यर्थः । इदित्वान्नुम् । कनिन्युवृषीत्यादिना कनिन् । सुपां सुलुगिति सप्तम्या लुक् । शतपद्भिः । शतं पादा येषां । संख्यासुपूर्वस्येति पादशब्दस्यांत्यलोपः समासांतः । अयस्मयादित्वेन भत्वात्पादः पदिति पद्भावः । यद्वा । पादसमानार्थः पच्छब्दः प्रकृत्यंतरं द्रष्टव्यं ॥

अनारंभणे तदवीरयेथामनास्थाने अग्रभणे समुद्रे ।
यदश्विना ऊहथुर्भुज्युमस्तं शतारित्रां नावमातस्थिवांसं ॥५॥
अनारंभणे । तत् । अवीरयेथां । अनास्थाने । अग्रभणे । समुद्रे ।
यत् । अश्विनौ । ऊहथुः । भुज्युं । अस्तं । शतऽअरित्रां । नावं । आतस्थिऽवांसं ॥५॥

हे अश्विनौ अनारंभणे आलंबनरहिते समुद्रे तत्कर्मावीरयेथां । विक्रांतं कृतवंतौ युवां । अनारंभणत्वमेव स्पष्टीकरोति । अनास्थाने । आस्थीयतेऽस्मिन्नित्यास्थानो भूप्रदेशः । तद्रहिते स्थातुमशक्ये जल इत्यर्थः । अग्रभणेऽग्रहणे । हस्तेन ग्राह्यं शाखादिकमपि यत्र नास्ति तस्मिन्नित्यर्थः । किं पुनस्तत्कर्म । भुज्युं समुद्रे मग्नं शतारित्रां बह्वरित्रां । यैः काष्ठैः पार्श्वतो बद्धैर्जलालोडने सति नौः शीघ्रं गच्छति तान्यरित्राणि । ईदृशीं ना[illegible]स्थिवांसमास्थितवंतमा[illegible]ढवंतं कृत्वास्तं । गृहनामैतत् । पितुस्तुग्रस्य गृहं प्रति यदूहथुः । तत्प्रापणमन्यैर्दुःशकं युवां समुद्रमध्ये कृतवंतावित्यर्थः ॥ अनारंभणे । आरभ्यत इत्यारंभणं । कृत्यल्युटो बहुलमिति कर्मणि ल्युट् । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । अवीरयेथां । शूर वीर विक्रांतौ । चुरा[illegible] । अनास्थानाग्रभणयोः पूर्ववल्ल्युट्स्वरौ । अयं तु विशेषः । हृग्रहोर्भ इति भत्वं । अस्तं । अस्यतेऽस्मिन सर्वमित्यस्तं गृहं । असिहसीत्यादिना तन्प्रत्ययः । शतारित्रां । ऋ गतौ । अर्तिलूधूसू । पा० ३. २. १८४. । इति करण इत्रप्रत्ययः । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं ॥ ॥८॥

यमश्विना ददथुः श्वेतमश्वमघाश्वाय शश्वदित्स्वस्ति ।
तद्वां दात्रं महि कीर्तेन्यं भूत्पैद्वो वाजी सदमिद्धव्यो अर्यः ॥६॥
यं । अश्विना । ददथुः । श्वेतं । अश्वं । अघऽअश्वाय । शश्वत् । इत् । स्वस्ति ।
तत् । वां । दात्रं । महि । कीर्तेन्यं । भूत् । पैद्वः । वाजी । सदं । इत् । हव्यः । अर्यः ॥६॥

अत्रेदमाख्यायते । पेदुर्नाम कश्चित् स चाश्विनौ तुष्टाव । तस्मै प्रीतौ कंचिच्छ्वेतवर्णमश्वं दत्तवंतौ । स चाश्वस्तस्य प्रौढं जयं चकारेति । एतदत्र प्रतिपाद्यते । हे अश्विनौ युवामघाश्वाया[illegible] पेदुनाम्ने राजर्षये यं श्वेतवर्णमश्वं ददथुः दत्तवंतौ सोऽश्वस्तस्मै स्वस्ति जयलक्षणं मंगलं शश्वदित् नित्यमेव चकार । वां युवयोस्तद्दात्रं दानं महि महदतिगंभीरं अत एव कीर्तेन्यं सर्वैः कीर्तनीयं प्रशस्यं भूत् । अभूत् । तस्मात्पैद्वः पेदोः संबंधी पतनशीलः शीघ्रगामी वार्यः शत्रूणां प्रेरयिता युद्धेषु प्रेरयितव्यो वा वाजी वेजनवान्सोऽश्वः

सदमित् सद्वैव हव्योऽस्माभिराह्वातव्यः ॥ दात्रं । ददातेर्भाव औणादिकस्त्रप्रत्ययः । महि । मह पूजायां । इन्सर्वधातुभ्य इतीन् । कीर्तेन्यं । कृत संशब्दने । कृत्यार्थे तवैकेन्केन्यत्वन इति केन्यप्रत्ययः । ऋत इद्धातोरितीत्वं । भूत् । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । पैद्वः । पेदोः संबंधी । तस्येदमित्यण् । छांदसो वर्णलोपः । हव्यः । ह्वयतेरचो यदिति यत् । बहुलं छंदसीति संप्रसारणं । गुणो धातोस्तन्निमित्तस्यैवेत्यवादेशः । अर्यः । ऋ गतौ । अघ्न्यादयश्च । उ॰ ४. १११. । इत्यौणादिको यत् । व्यत्ययेनांतोदात्तत्वं ॥

युवं नरा स्तुवते पज्रियाय कक्षीवते अरदतं पुरंधिं ।
कारोतराच्छफादश्वस्य वृष्णः शतं कुंभाँ असिंचतं सुरायाः ॥ ७ ॥
युवं । नरा । स्तुवते । पज्रियाय । कक्षीवते । अरदतं । पुरंऽधिं ।
कारोतरात् । शफात् । अश्वस्य । वृष्णः । शतं । कुंभान् । असिंचतं । सुरायाः ॥ ७ ॥

अत्रेयमाख्यायिका । कक्षीवानृषिः पुरा तमसातिरोहितज्ञानः सन् ज्ञानार्थमश्विनौ तुष्टाव । तस्मा अश्विनौ प्रभूतां धियं दत्तवंताविति । तदाह । हे नरा नेताराववश्विनौ युवं युवां पज्रियाय । पज्रा इत्यंगिरसामाख्या पज्रा वा अंगिरस इत्याम्नातत्वात् । तेषां कुले जाताय कक्षीवते । कक्ष्या रज्जुरश्वस्य । तद्वते तत्संज्ञाय स्तुवते युवयोः स्तुतिं कुर्वते मह्यं पुरंधिं प्रभूतां धियं बुद्धिमरदतं । व्यलिखतं । यथा सर्वार्थगोचरा भवति तथा कृतवंतावित्यर्थः । अपि च कारोतरात । कारोतरो नाम वैदलश्चर्मवेष्टितो भाजनविशेषो यस्मिन्सुरायाः स्रावणं क्रियते । लुप्तोपममेतत् । कारोतराद्यथा सुरायाः संपादकास्तां स्रावयंति एवमेव युवां वृष्णः सेचनसमर्थस्य युष्मदीयस्याश्वस्य शफात् खुरात् सुरायाः शतं कुंभान् असंख्यातान्सुराघटानसिंचतं । अक्षारयतं । यद्वा । सिंचतिः पूरणार्थः । कारोतरस्थानीयाद्युष्मदीयाश्वखुरात् या सुरा प्रवहति तयासंख्यातान् घटानसिंचतं । अपूरयतं । ये जनाः सौत्रामण्यादिकर्मणि युष्मद्यागाय सुरां याचंते तेषामित्यर्थः ॥ स्तुवते । स्तौतेर्लटः शतृ । अदादित्वाच्छपो लुक् । शतुरनुम इति विभक्तेरुदात्तत्वं । पज्रियाय । पज्रशब्दाच्छैषिको घच् । कक्षीवते । आसंदीवदष्ठीवच्चक्रीवत्कक्षीवदिति निपातनात् कक्ष्याशब्दस्य संप्रसारणं वत्वं च । अरदतं । रद विलेखने । पुरंधिं । पुरंधिर्बहुधीरिति यास्कः । नि॰ ६. १३. । पृषोदरादित्वात्पुरंधिभावः । यद्वा । पुरं पूरयितव्यं सर्वविषयजातमस्यां धीयतेऽवस्थाप्यत इति पुरंधिर्बुद्धिः । कर्मण्यधिकरणे चेति दधातेः किप्रत्ययः । तत्पुरुषे कृति बहुलमिति बहुलवचनादलुक् । इदं तु व्युत्पत्तिमात्रं वस्तुतः पृषोदरादित्वात् । असिंचतं । षिचिर् क्षरणे । तौदादिकः । शे मुचादीनामिति नुम् ॥

हिमेनाग्निं घ्रंसमवारयेथां पितुमतीमूर्जमस्मा अधत्तं ।
ऋबीसे अत्रिमश्विनावनीतमुन्निन्यथुः सर्वगणं स्वस्ति ॥ ८ ॥
हिमेन । अग्निं । घ्रंसं । अवारयेथां । पितुऽमतीं । ऊर्जं । अस्मै । अधत्तं ।
ऋबीसे । अत्रिं । अश्विना । अवऽनीतं । उत् । निन्यथुः । सर्वऽगणं । स्वस्ति ॥ ८ ॥

अत्रेदमाख्यानं । अत्रिमृषिमसुराः शतद्वारे पीडायंत्रगृहे प्रवेश्य तुषाग्निनाबाधिषत । तदानीं तेन ऋषिणा स्तुतावश्विनावग्निमुदकेनोपशमय्य तस्मात्पीडागृहाद्विकलेंद्रियवर्गं संतं निरगमयतामिति । तदेतत्प्रतिपाद्यते । हे अश्विनौ हिमेन हिमवच्छीतेनोदकेन घ्रंसं दीप्यमानमत्रेर्बाधनार्थमसुरैः प्रक्षिप्तं तुषाग्निमवारयेथां । युवां निवारितवंतौ । शीतीकृतवंतावित्यर्थः । अपि चास्मा असुरपीडया कार्श्यं प्राप्तायात्रये पितुमतीं । पितुरित्यन्ननाम । अन्नयुक्तमूर्जं बलप्रदं रसात्मकं क्षीरादिकमधत्तं । पुष्ट्यर्थं प्रायच्छतं । ऋबीसेऽपगतप्रकाशे पीडायंत्रगृहेऽवनीतमवाङ्मुखतयासुरैः प्रापितमत्रिं सर्वगणं । गणः समूहः । सर्वेषामिंद्रियाणां पुत्रादीनां वा गणेनोपेतं स्वस्ति अविनाशो यथा भवति तथोन्निन्यथुः । तस्माद्गृहादुन्नमय्य युवां स्वगृहं प्रापितवंतौ । यद्वा । हिमेन शीतेन वृष्ट्युदकेनाग्निमग्निवत्तीक्ष्णं घ्रंसं । अहर्नामैतत् । सामर्थ्यान्निदाघकालीनमहरवारयेथां । तस्मादृबीसेऽस्मिं

निवारितवंतौ। अपि चास्मा अत्रये पितुमतीं चरुपुरोडाशादिलक्षणान्नोपेतमूर्जं बलकरं रसात्मकमुपस्तरणा भिघारणात्मकं घृतमधत्तं । वृष्ट्युत्पादनेनाग्नेर्यागार्थं हवींषि निष्पादितवंताविल्यर्थः । ऋबीसेऽपगततेजस्के पृथिवीद्रव्येऽवनीतमोषधीनामुत्पादनायावस्तान्नीतं । पार्थिवाग्निना परिपक्का उदकेन क्लिन्ना ह्योषधिवनस्पतयो विरोहंति । अत्रिं हविषामत्तारमोषधिवनस्पत्यादीनां वा एवंविधमग्निं सर्वगणं व्रीह्याद्योषधिगणोपेत हे अश्विनौ युवां स्वस्ति अविनाशो यथा भवति तथोन्निन्यथुः । व्रीह्याद्योषधिवनस्पतिरूपेण भूमेरुपरिष्ठान्नीतवंतौ । कारणात्मना पार्थिवाग्नौ वर्तमानं सर्वमोषधिवनस्पत्यादिकमश्विनौ प्रवर्षणेन व्यक्तीकृतवंताविल्यर्थः । अयं पक्षो यास्केन हिमेनोदकेनेत्यादिनोक्तः । नि० ६. ३६. ॥ पितुमतीं । ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं । ऋबीसे । अत्र यास्कः । ऋबीसमपगतभासमपचितभासमपहृतभासं गतभासं वेति । नि० ६. ३५. । पृषोदरादित्वादभिमतरूपस्वरसिद्धिः । अत्रिं । अद भक्षणे । अदेस्त्रिनि चेति चशब्दात्त्रिः । अवनीतं । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । स्वस्ति । अस भुवि । भावे क्तिन् । छंदस्युभयथेति सार्वधातुकत्वादस्तेर्भूभावाभावः ॥

परावतं नासत्यानुदेथामुच्चाबुध्नं चक्रथुर्जिह्मबारं ।
क्षरन्नापो न पायनाय राये सहस्राय तृष्यते गोतमस्य ॥९॥
परा । अवतं । नासत्या । अनुदेथां । उच्चाऽबुध्नं । चक्रथुः । जिह्मऽबारं ।
क्षरन् । आपः । न । पायनाय । राये । सहस्राय । तृष्यते । गोतमस्य ॥९॥

अत्रेदमाख्यानं । कदाचिन्मरुभूमौ वर्तमानस्य स्तोतुर्गोतमस्य ऋषेः समीपं देशांतरे वर्तमानं कूपमुत्खायाश्विनौ प्रापयेतां । प्रापय्य च तं कूपं स्नानपानादिसौकर्यायोपरिमूलमधोबिलमवास्थापयतामिति । तदेतदाह । हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ नासिकाप्रभवौ वा एतत्संज्ञावश्विनौ युवामवतं । कूपनामैतत् । अवस्तात्तं कूपं परानुदेथां । गोतमस्य ऋषेः समीपे प्रेरिषाथां । तदनंतरं तं कूपमुच्चाबुध्नं । उच्चैरुपरिष्ठाद्बुध्नो मूलं यस्य स तथोक्तः । जिह्मबारं । जिह्ममधस्ताद्वर्तमानतया वक्रं बारं द्वारं यस्य स तथोक्तः । एवंगुणविशिष्टं चक्रथुः । युवामकृषाथां । तस्मात्कूपात्तृष्यते पिपासते गोतमस्य पायनाय पानार्थमापो न आपस्य । अयं नशब्दश्चार्थे । क्षरन् । प्रवाहरूपेण निरगमन् । कीदृशस्य । राये हवींषि दत्तवतः । सहस्राय सहनशीलाय । यद्वा । सहस्रसंख्याकाय राये धनाय एतत्संख्यधनलाभार्थं चाक्षरन् ॥ अनुदेथां । णुद प्रेरणे । तौदादिकः । जिह्मबारं । द्वारशब्दस्य पृषोदरादित्वाद्बारादेशः । क्षरन् । क्षर संचलने । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । शपः पित्त्वादनुदात्तत्वं । तिङो लसार्वधातुकस्वरेण धातुस्वरः । पायनाय । हेतुमति णिच् । शाच्छासाह्वेति युक् । भावे ल्युट् । राये । रा दाने । राति ददातीति राः । रातेर्डैः । उ० २. ६६. । ऊडिदमिति विभक्तिरुदात्तत्वं । तृष्यते । ञितृषा पिपासायां । श्यन् । लटः शतृ । श्यनो नित्त्वादाद्युदात्तत्वं । षष्ठ्यर्थे चतुर्थी वक्तव्या । पा० २. ३. ६२. १. । इति चतुर्थी ॥

जुजुरुषो नासत्योत वव्रिं प्रामुंचतं द्रापिमिव च्यवानात् ।
प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनां ॥१०॥
जुजुरुषः । नासत्या । उत । वव्रिं । प्र । अमुंचतं । द्रापिंऽइव । च्यवानात् ।
प्र । अतिरतं । जहितस्य । आयुः । दस्रा । आत् । इत् । पतिं । अकृणुतं । कनीनां ॥१०॥

अत्रेदमाख्यानं । वलीपलितादिभिरुपेतो जीर्णांगः पुत्रादिभिः परित्यक्तश्च्यवन[illegible] ऋषिरश्विनौ तुष्टाव । स्तुतावश्विनौ तस्मा ऋषये जरामपगमय्य पुनर्यौवनमकुरुतामिति । तदेतदाह । हे नासत्यावश्विनौ जुजुरुषो जीर्णात् च्यवानात् च्यवनाख्यादृषेः सकाशाद्वव्रिं कृत्स्नं शरीरमावृत्य वर्तितां जरां प्रामुंचतं । प्रकर्षेणामोचयतं । तत्र दृष्टांतः । द्रापिमिव । द्रापिरिति कवचस्याख्या । यथा कश्चित्कवचं कृत्स्नशरीरव्यापकं धृत्वा पश्चाच्छरीरात्पृथक्करोति तद्वत् । उतापि च हे दस्रा एतत्संज्ञौ दर्शनीयौ वाश्विनौ जहितस्य पुत्रादिभिः

परित्यक्तस्य ऋषेरायुर्जीवनं प्रातिरतं। प्रावर्धयतं। प्रपूर्वस्तिरतिर्वर्धनार्थः। आदित् अनंतरमेव युवान संत कनीनां कन्यानां पतिं भर्तारमकृणुतं। अकुरुतं॥ जुजुरुषः। जॄष् वयोहानौ। लिटः क्वसुः। बहुलं छंदसीत्युत्वं। द्विर्भावः। पंचम्येकवचने वसोः संप्रसारणमिति संप्रसारणं। शासिवसिघसीनां चेति षत्वं। वव्रिं। वृञ् वरणे। आदृगमहन इति किप्रत्ययः। जहितस्य। ओहाक् त्यागे। कर्मणि निष्ठा। तस्य छंदस्युभयथेति सार्वधातुकत्वाद्यक्। तस्य बहुलं छंदसीति श्लुः। जहातेश्च। पा॰ ६. ४. ११६.। इत्वं। कनीनां। रयिर्मतौ बहुलमिति बहुलवचनात्कन्याशब्दस्यात्र संप्रसारणं॥ ॥ ८॥

**तद्वां॑ नरा॒ शंस्यं॒ राध्यं॑ चाभिष्टि॒मन्ना॑सत्या॒ वरू॑थं।**

**यद्वि॒द्वांसा॑ नि॒धिमि॒वाप॑गूळ्हमु॒द्द॑र्श॒तादू॒पथु॒र्वंद॑नाय ॥ ११॥**

**तत्। वां॒। न॒रा॒। शंस्यं॑। राध्यं॑। च॒। अ॒भि॒ष्टि॒ऽमत्। ना॒स॒त्या॒। वरू॑थं।**

**यत्। वि॒द्वांसा॑। नि॒धिंऽइ॑व। अप॑ऽगूळ्हं। उत्। द॒र्श॒तात्। ऊ॒पथुः॑। वंद॑नाय ॥ ११॥**

अत्रेदमाख्यानं। वंदनो नाम कश्चिदृषिः। स चासुरैः कूपे निखात उत्तरीतुमशक्नुवन्नश्विनावस्तौत्। तमश्विनौ कूपादुन्निन्यतुरिति। तदाह। नरारोग्यस्य नेतारौ हे नासत्यावश्विनौ वां युवयोः संबंध्यभिष्टिमदभ्येषणयुक्तमाभिमुख्येन प्राप्तव्यं तथा वरूथं वरणीयं कामयितव्यं तत्कर्म शंस्यं। अस्माभिः प्रशंसनीयं। राध्यं। आराधनीयं च। किं पुनस्तत्कर्म। विद्वांसा जानंतौ युवां निधिमिव निक्षिप्तं धनमिवापगूळ्हमरण्ये निर्जने देशे कूपमध्येऽसुरैर्निगूढं वंदनाय वंदनमृषिं दर्शतादध्वगैः पिपासुभिर्द्रष्टव्यात्कूपादुदूपथुः। उदहार्ष्टं। एवं यदेतत्कूपादुद्धरणं तदित्यर्थः॥ शंस्यं। शन्सु स्तुतौ। अस्मात्ऋयंतादचो यदिति यत्। यतोऽनाव इत्याद्युदात्तत्वं। अभिष्टिमत्। अभिपूर्वादिष गतावित्यस्माद्भावे क्तिन्। मंत्रे वृषेति क्तिन उदात्तत्वं। कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते। शकंध्वादित्वात्पररूपत्वं। तादौ चेति तु गतिस्वरस्य सर्वविधीनां छंदसि विकल्पितत्वादप्रवृत्तिः। ततो मतुप्। अंतोदात्तादुत्तरस्य तस्य ह्रस्वनुड्भ्यामित्युदात्तत्वं। वरूथं। जॄवृञ्भ्यामूथन्। उ॰ २. ६.। विद्वांसा। सुपां सुलुगिति विभक्तेराकारः। अपगूळ्हं। गुहू संवरणे। कर्मणि निष्ठा। यस्य विभाषेतीट्प्रतिषेधः। ढत्वधत्वष्टुत्वढलोपदीर्घाः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। दर्शतात्। भृमृदृशीत्यादिनातच्। ऊपथुः। डुवप् बीजतंतुसंताने। लिट्यथुसि यजादित्वात्संप्रसारणं। द्विर्वचनादि। वंदनाय। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी॥

**तद्वां॑ नरा स॒नये॒ दंस॑ उ॒ग्रमा॒विष्कृ॑णोमि त॒न्य॒तुर्न वृ॒ष्टिं।**

**द॒ध्यङ् ह॒ यन्मध्वा॑थर्व॒णो वा॒मश्व॑स्य शी॒र्ष्णा प्र यदी॑मु॒वाच॑ ॥ १२॥**

**तत्। वां॒। न॒रा॒। स॒नये॑। दंसः॑। उ॒ग्रं। आ॒विः। कृ॒णो॒मि॒। त॒न्य॒तुः। न। वृ॒ष्टिं।**

**द॒ध्यङ्। ह॒। यत्। मधु॑। आ॒थ॒र्व॒णः। वा॒म्। अश्व॑स्य। शी॒र्ष्णा। प्र। यत्। ई॒म्। उ॒वाच॑ ॥ १२॥**

अत्रेयमाख्यायिका। इंद्रो दधीचे प्रवर्ग्यविद्यां मधुविद्यां चोपदिश्य यदीमामन्यस्मै वक्ष्यसि शिरस्ते छेत्स्यामीत्युवाच। ततोऽश्विनावश्वस्य शिरश्छित्त्वा दधीचः शिरः प्रच्छिद्यान्यत्र निधाय तत्राश्व्यं शिरः प्रत्यधत्तां। तेन च दध्यङ् ऋचः सामानि यजूंषि च प्रवर्ग्यविषयाणि मधुविद्याप्रतिपादकं ब्राह्मणं चाश्विनावध्यापयामास। तदिंद्रो ज्ञात्वा वज्रेण तच्छिरोऽच्छिनत्। अथाश्विनौ तस्य स्वकीयं मानुषं शिरः प्रत्यधत्तामिति शाट्यायनवाजसनेययोः प्रपंचेनोक्तं। तदेतत्प्रतिपाद्यते। हे नरा नरावश्विनौ वां युवयोः संबंध्युग्रमुद्गूर्णमन्यैर्दुःशकं दंसः। कर्मनामैतत्। युवाभ्यां पुरा कृतं तत्कर्म सनये धनलाभार्थमाविष्कृणोमि। प्रकटीकरोमि। तत्र दृष्टांतः। तन्यतुर्न यथा मेघस्थः शब्दो वृष्टिं मेघांतर्वर्तमानमुदकं प्रवर्षणेन सर्वत्र प्रकटयति तद्वत्। किं तत्कर्म। अथर्वणः पुत्रो दध्यङ् एतत्संज्ञ ऋषिरश्वस्य शीर्ष्णा युष्मत्सामर्थ्येन प्रतिहितेन शिरसा वां युवाभ्यामीमिमां मधुविद्यां यत्र यदा खलु प्रोवाच प्रोक्तवान्। तदानीमाश्वस्य शिरसः संधानलक्षणं पुनर्मानुषस्य शिरसः प्रतिसंधानलक्षणं च यन्नवदीयं कर्म तदाविष्कृणोमीत्यर्थः॥ सनये। षणु दाने। खनिकषिकस्यज्यसि-

वसिध्वनिस्तनिवनिसनिग्रंथिचरिभ्यश्चेतीप्रत्ययः । तन्यतुः । तनु विस्तारे । ऋतन्यंजीत्यादिना यतुच् । यद्वा । स्तन शब्दे । बाहुलकाद्यतुच् । छांदसः सलोपः । वृष्टिं । वृष्यते सिच्यतेऽनेनेति वृष्टिः । मंत्रे वृषेत्यादिना क्तिन उदात्तत्वं । आथर्वणः । अपत्यार्थेऽण्यन् । पा॰ ६. ४. १६७. । इति प्रकृतिभावाट्टिलोपाभावः । शीर्ष्णा । शीर्षश्छंदसि । पा॰ ६. १. ६०. । इति शिरःशब्दपर्यायः शीर्षन्शब्दोऽंतोदात्तो निपात्यते । अल्लोपे सत्युदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं ॥

अजोहवीन्नासत्या करा वां महे यामन्पुरुभुजा पुरंधिः ।
श्रुतं तच्छासुरिव वध्रिमत्या हिरण्यहस्तमश्विनावदत्तं ॥ १३ ॥
अजोहवीत् । नासत्या । करा । वां । महे । यामन् । पुरुऽभुजा । पुरंऽधिः ।
श्रुतं । तत् । शासुःऽइव । वध्रिऽमत्याः । हिरण्यऽहस्तं । अश्विना । अदत्तं ॥ १३ ॥

वध्रिमती नाम कस्यचिद्राजर्षेः पुत्री नपुंसकभर्तृका । सा पुत्रलाभार्थमश्विनावाजुहाव । तदाह्वानं श्रुत्वाश्विनावागत्य तस्यै हिरण्यहस्ताख्यं पुत्रं ददतुः । तदेतदाह । पुरुभुजा बहूनां पालकौ प्रभूतहस्तौ वा हे नासत्यावश्विनौ महे महनीये पूजनीये यामन् यामनि । याति गच्छतीति याम स्तोत्रं । तस्मिन्सति कराभिमतफलस्य कर्तारौ वां युवां पुरंधिर्बहुधीर्वध्रिमती । वध्रिः पुत्रोत्पादनाशक्तः पंडकः । तद्वती एतत्संज्ञा राजपुत्र्यजोहवीत् । पुनःपुनःस्तुत्या पुत्रलाभार्थमाहूतवती । युवां च वध्रिमत्यास्तदाह्वानं श्रुतं । अशृणुतं । तत्र दृष्टांतः । शासुरिव । यथा शासुराचार्यस्य वचनं शिष्योऽवहितः सन्नैकाग्र्येण शृणोति तद्वत् । श्रुत्वा च हे अश्विनौ तस्यै हिरण्यहस्तं सुवर्णमयपाणिं हितरमणीयपाणिं वा एतत्संज्ञं पुत्रमदत्तं । प्रायच्छतं ॥ अजोहवीत् । ह्वयतेर्यङ्लुगंताल्लङ् । यङो वेति तिप ईडागमः । करा । करोतेः पचाद्यच् । सुपां सुलुगिति विभक्तेराकारः । यामन् । आतो मनिन्क्वनिब्वनिपश्चेति मनिन् । सुपां सुलुगिति सप्तम्या लुक् । श्रुतं । लङि बहुलं छंदसीति विकरणस्य लुक् । बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः । शासुः । शास्तुः । शासु अनुशिष्टौ । शंसिशसिशासीत्यादिना । उ॰ २. ९४. । संज्ञायां तृन् । इडभावः । छांदसस्तलोपः ॥

आस्नो वृकस्य वर्तिकामभीके युवं नरा नासत्यामुमुक्तं ।
उतो कविं पुरुभुजा युवं ह कृपमाणमकृणुतं विचक्षे ॥ १४ ॥
आस्नः । वृकस्य । वर्तिकां । अभीके । युवं । नरा । नासत्या । अमुमुक्तं ।
उतो इति । कविं । पुरुऽभुजा । युवं । ह । कृपमाणं । अकृणुतं । विऽचक्षे ॥ १४ ॥

वर्तिका चटकसदृशस्य पक्षिणः स्त्री । तामरण्ये वर्तमानेन शुना ग्रस्तां पुरा किलाश्विनावमोचयतां । तदेतदाह । हे नरा नेतारौ नासत्यावश्विनौ युवं युवामभीकेऽभिगते वृकवर्तिकयोः संग्रामे वृकस्य [illegible] शुन आस्न आस्याद्वर्तिकां चटकसदृशीममुमुक्तं । अमोचयतं । यास्कस्त्वाह । पुनःपुनर्वर्तते प्रतिदिवसमावर्तत इति वर्तिकोषाः । तां वृकेणावरकेण सर्वजगत्प्रकाशेनाच्छादयित्रा सूर्येण ग्रस्तां तदीय[illegible]ममुंचतामिति । उतो अपि च पुरुभुजा महाबाहू प्रभूतहस्तौ वा युवं ह युवां खलु कृपमाणं स्तुवंतं कविं एतत्संज्ञमंधमृषिं विचक्षे विशेषेण द्रष्टुं समर्थमकृणुतं । अकुरुतं ॥ आस्नः । पद्दन्नित्यादिनास्यस्यासन्नादेशः । अल्लोपोऽन इत्यकारलोप उदात्तनिवृत्तिस्वरेणोङिदमिति विभक्तेरुदात्तत्वं । अमुमुक्तं । मुचेरंतर्भावितण्यर्थाल्लङि बहुलं छंदसीति विकरणस्य श्लुः । कृपमाणं । कृपिः स्तुतिकर्मा तुदादिषु द्रष्टव्यः । विकरणस्वरे प्राप्ते वृषादीनां चेत्याद्युदात्तत्वं । विचक्षे । तुमर्थे सेसेनिति सेन्प्रत्ययः । स्कोः संयोगाद्योरिति सलोपः ॥

चरित्रं हि वेरिवाच्छेदि पर्णमाजा खेलस्य परितक्म्यायां ।
सद्यो जंघामायसीं विश्पलायै धने हिते सर्तवे प्रत्यधत्तं ॥ १५ ॥

चरित्रं । हि । वेःऽइव । अच्छेदि । पर्णं । आजा । खेलस्य । परिऽतक्म्यायां ।
सद्यः । जंघां । आयसीं । विश्पलायै । धने । हिते । सर्तवे । प्रति । अधत्तं ॥१५॥

अगस्त्यपुरोहितः खेलो नाम राजा । तस्य संबंधिनी विश्पला नाम स्त्री संग्रामे शत्रुभिश्छिन्नपादासीत् । पुरोहितेनागस्त्येन स्तुतावश्विनौ रात्रावागत्यायोमयं पादं समधत्तां । तदेतदाह । आजा आजौ संग्रामेऽगस्त्यपुरोहितस्य खेलस्य संबंधिन्या विश्पलाख्यायाश्चरित्रं चरणं वेरिव वेः पक्षिणः पर्णं पतत्रमिवाच्छेदि हि । पुरा छिन्नमभूत्खलु । हे अश्विनौ युवामगस्त्येन स्तुतौ संतौ परितक्म्यायां । परितक्म्या रात्रिः परित एनां तकतीति यास्कः । नि॰ ११. २५. । एनामुभयतः सूर्यो गच्छतीति तस्यार्थः । रात्रावागत्य सद्यस्तदानीमेव हिते शत्रुषु निहिते धने जेतव्ये विषयभूते सति सर्तवे सर्तुं गंतुं विश्पलाया आयसीमयोमयीं जंघां जंघोपलक्षितं पादं प्रत्यधत्तं । संधानमेकीकरणं कृतवंतावित्यर्थः ॥ चरित्रं । अर्तिलूधूसूखनसहचर इत्र इति करण इत्रः । आजा । सुपां सुलुगिति विभक्तेर्डादेशः । आयसीं । अयःशब्दाद्विकारार्थे प्राणिरजतादिभ्योऽञ् । पा॰ ४. ३. १५४. । टिड्ढाणञिति ङीप् ॥ ॥१०॥

शतं मेषान्वृक्ये चक्षदानमृज्राश्वं तं पितांधं चकार ।
तस्मा अक्षी नासत्या विचक्ष आधत्तं दस्रा भिषजावनर्वन् ॥१६॥

शतं । मेषान् । वृक्ये । चक्षदानं । ऋज्रऽअश्वं । तं । पिता । अंधं । चकार ।
तस्मै । अक्षी इति । नासत्या । विऽचक्षे । आ । अधत्तं । दस्रा । भिषजौ । अनर्वन् ॥१६॥

वृषागिरः पुत्र ऋज्राश्वो नाम राजर्षिः । तस्य समीपेऽश्विनोर्वाहनभूतो रासभो वृकी भूत्वावतस्थे । स च तस्या आहारार्थमेकोत्तरशतसंख्याकान्पौरजनानां स्वभूतान्मेषान् शकलीकृत्य प्रददौ । ऋज्राश्वः शतमेकं च मेषानिति मंत्रांतरे दर्शनात् । एवं पौराणामहिते प्रवृत्तं पिता शापेन नेत्रहीनमकरोत् । तेन स्तूयमानावश्विनावस्मद्वाहननिमित्तमस्यांध्यं जातमिति जानंतौ तस्मा अक्षिणी प्रायच्छतामिति । तदेतदाह । अत्र तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । य ऋज्राश्वः शतं शतसंख्याकान्मेषान्वृक्य आत्मनापोषितायै वृकस्त्रियै शकलीकृत्य प्रादात् तं चक्षदानं । चक्षतिरत्तिकर्मात्र शकलीकरणार्थः । शकलीकृत्य दत्तवंतमृज्राश्वं पिता शापेनांधं दृष्टिहीनं चकार । कृतवान् । हे नासत्या सत्यस्वभावौ सत्यस्य नेतारौ वा भिषजौ देवानां वैद्यभूतौ । अश्विनौ वै देवानां भिषजौ । ऐ॰ ब्रा॰ १. १८. । इति श्रुतेः । दस्रा दर्शनीयावेतत्संज्ञौ वा हे अश्विनावनर्वन्ननर्वणी द्रष्टव्यं प्रति पितृशापाद्गमनरहिते अक्षी चक्षुषी विचक्षे विविधं द्रष्टुं समर्थे तस्मै ऋज्राश्वायाधत्तं । व्यधत्तं । अकुरुतं ॥ वृक्ये । वृकोऽरण्यश्वा । तस्य स्त्री वृकी । जातेरस्त्रीविषयात् । पा॰ ४. १. ६३. । इति ङीष् । जसादिषु छंदसि वावचनमिति चतुर्थ्येकवचनस्याडभावे यणादेश उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं । चक्षदानं । चक्षेर्लिटः कानच् । चित्स्वरः । अक्षी । ई च द्विवचने । पा॰ ७. १. ७७. । इति परत्वादक्षशब्दस्येकारांतादेशः स चोदात्तः । तस्मिन्कृते सकृद्गतौ विप्रतिषेधे । परि॰ ४०. । इति परिभाषया पुनर्नुम्न भवति । विचक्षे । चक्षेः संपदादिलक्षणो भावे क्विप् । अनर्वन् । ऋ गतौ । अस्मादन्येभ्योऽपि दृश्यंत इति दृशिग्रहणस्य विध्यंतरोपसंग्रहार्थत्वाद्भावे वनिप् । अर्व गमनं विषयं प्रत्येनयोर्नास्तीति बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । सुपां सुलुगिति द्विवचनस्य लुक् । छांदसो नलोपाभावः ॥

आ वां रथं दुहिता सूर्यस्य कार्ष्मेवातिष्ठदर्वता जयंती ।
विश्वे देवा अन्वमन्यंत हृद्भिः समु श्रिया नासत्या सचेथे ॥१७॥

आ । वां । रथं । दुहिता । सूर्यस्य । कार्ष्मऽइव । अतिष्ठत् । अर्वता । जयंती ।
विश्वे । देवाः । अनु । अमन्यंत । हृत्ऽभिः । सं । ऊं इति । श्रिया । नासत्या ।
सचेथे इति ॥१७॥

सविता स्वदुहितरं सूर्याख्यां सोमाय राज्ञे प्रदातुमैच्छत्। तां सूर्यां सर्वे देवा वरयामासुः। तेऽन्योन्यमूचुः। आदित्यमवधिं कृत्वाजिं धावाम। योऽस्माकं मध्य उज्जेष्यति तस्येयं भविष्यतीति। तत्राश्विनावुदजयतां। सा च सूर्या जितवतोस्तयो रथमारुरोह। अत्र प्रजापतिर्वै सोमाय राज्ञे दुहितरं प्रायच्छत्। ऐ० ब्रा० ४. ७.। इत्यादिकं ब्राह्मणमनुसंधेयं। इदं चाख्यानं सूर्याविवाहस्य स्तावकेन सत्येनोत्तभिता भूमिरिति सूक्तेन विस्पष्टयिष्यते। हे अश्विनौ वां युवयो रथं काष्मेव। कार्ष्मशब्दः काष्ठवाची। यथा काष्ठमाजिधावनस्यावधितया निर्दिष्टं लक्ष्यमाशुगामी कश्चित्सर्वेभ्यो धावद्भ्यः पूर्वं प्राप्नोति एवमेव सर्वेभ्यो देवेभ्यः पूर्वमर्वता शीघ्रमवधिं प्राप्नुवता युष्मदीयेनाश्वेन करणभूतेन युवाभ्यां जयंती जीयमाना सूर्यस्य सवितुर्दुहितातिष्ठत्। आरूढवती। विश्वे सर्व इतरे देवा एतदारोहणस्थानं हृद्भिर्हृदयैरन्वमन्यंत। अन्वजानन्। तदानीं हे नासत्यावश्विनौ श्रिया कृत्स्नसहस्रलाभरूपया संपदा कांत्या वा युवां सं सचेथे। संगच्छेथे॥ जयंती। व्यत्ययेन कर्मणि शतृप्रत्ययः। हृद्भिः। पद्दन्नित्यादिना हृदयशब्दस्य हृद्भावः। सचेथे। षच समवाये। स्वरितेत्त्वादात्मनेपदं॥

यद्यातं दिवोदासाय वर्तिर्भरद्वाजायाश्विना हयंता।
रेवदुवाह सचनो रथो वां वृषभश्च शिंशुमारश्च युक्ता॥१८॥

यत्। अयातं। दिवःऽदासाय। वर्तिः। भरत्ऽवाजाय। अश्विना। हयंता।
रेवत्। उवाह। सचनः। रथः। वां। वृषभः। च। शिंशुमारः। च। युक्ता॥१८॥

हे अश्विनौ हयंता स्तुतिभिराहूयमानौ युवां भरद्वाजाय संभ्रियमाणहविर्लक्षणान्नाय यजमानाय दिवोदासायैतत्संज्ञाय राजर्षयेऽभीष्टं फलं दातुं वर्तिस्तदीयं गृहं यद्यदायातं अगच्छतं तदानीं रेवद्धनयुक्तमन्नं वां युवयोः सचनः सेवनो रथ उवाह। तस्मै दिवोदासाय प्रापयामास। अपि च तस्मिन्रथे वृषभोऽनड्वान् शिंशुमारो ग्राहश्च परस्परविरुद्धावपि स्वसामर्थ्यप्रकटनाय युक्ता। वाहनतया संयुक्तावास्तां॥ दिवोदासाय। दिवश्च दासे षष्ठ्या अलुग्वक्तव्यः। का० ६. ३. २१. ५.। इत्यलुक्। दिवोदासादीनां छंदस्युपसंख्यानमिति पूर्वपदाद्युदात्तत्वं। भरद्वाजाय। भृञ् भरणे। अस्माद्व्यत्ययेन कर्मणि शतृप्रत्ययः। शतुश्छंदस्युभयथेत्यार्धधातुकत्वेन लसार्वधातुकानुदात्तत्वाभावात्प्रत्ययाद्युदात्तत्वं। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। हयंता। ह्वेञः कर्मणि लटो व्यत्ययेन शतृ। बहुलं छंदसीति संप्रसारणं। शपि गुणे छांदसोऽयादेशः। रेवत्। रयिशब्दान्मतुप्। रयेर्मतौ बहुलमिति संप्रसारणं। छंदसीर इति मतुपो वत्वं। रयिशब्दाच्च। का० ६. १. १७६. १.। इति मतुप उदात्तत्वं। सचनः। षच सेवने। अनुदात्तेतश्च हलादेरिति युच्। युक्ता। सुपां सुलुगिति विभक्तेराकारः॥

रयिं सुक्षत्रं स्वपत्यमायुः सुवीर्यं नासत्या वहंता।
आ जह्नावीं समनसोप वाजैस्त्रिरह्नो भागं दधतीमयातं॥१९॥

रयिं। सुऽक्षत्रं। सुऽअपत्यं। आयुः। सुऽवीर्यं। नासत्या। वहंता।
आ। जह्नावीं। सऽमनसा। उप। वाजैः। त्रिः। अह्नः। भागं। दधतीं। अयातं॥१९॥

हे नासत्यावश्विनौ सुक्षत्रं शोभनबलं रयिं धनं स्वपत्यं शोभनैः पुत्रादिभिरुपेतं सुवीर्यं शोभनवीर्योपेतमायुः। अन्ननामैतत्। एवंगुणविशिष्टमन्नं च वहंता धारयंतौ युवां समनसा समानमनस्कौ संतौ जह्नावीं जह्नोर्महर्षेः संबंधिनीं प्रजामायातं। आभिमुख्येनागच्छतं। कीदृशीं। वाजैर्हविर्लक्षणैरन्नैरुपेतां अह्नः। अत्राहःशब्देन तत्रानुष्ठेयः सोमयागो लक्ष्यते। तस्य प्रातःसवनादिरूपेण त्रिस्त्रिधा विभक्तं भागमंशं दधतीं बिभ्रतीं। अनुसवनं हविर्भिर्यजमानामित्यर्थः॥ सुक्षत्रं। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। सुवीर्यं। वीरवीर्यौ चेति बहुव्रीहावुत्तरपदाद्युदात्तत्वं। जह्नावीं। जह्नुशब्दात्तस्येदमित्यर्थेऽण्। टिड्ढाणञिति ङीप्। जाह्नवीह्रस्वदीर्घयोर्विनिमयः पृषोदरादित्वात्। उक्तं च। वर्णागमो वर्णविपर्ययश्च। का० ६. ३. १०९.। इति। अत एव मध्योदात्तत्वं॥

परिविष्टं जाहुषं विश्वतः सीं सुगेभिर्नक्तमूहथू रजोभिः ।
विभिंदुना नासत्या रथेन वि पर्वताँ अजरयू अयातं ॥ २० ॥
परिऽविष्टं । जाहुषं । विश्वतः । सीं । सुऽगेभिः । नक्तं । ऊहथुः । रजःऽभिः ।
विऽभिंदुना । नासत्या । रथेन । वि । पर्वतान् । अजरयू इति । अयातं ॥ २० ॥

जाहुषो नाम कश्चिद्राजा । विश्वतः सर्वतः परिविष्टं शत्रुभिः परिवृतं तं राजानं हे नासत्यावश्विनावजरयू जरारहितौ नित्यतरुणौ युवां विभिंदुना विशेषेण सर्वस्य भेदकेनात्मीयेन रथेन नक्तं रात्रौ सुगेभिः सुष्ठु गंतुं शक्यै रजोभी रंजकैर्मार्गैरूहथुः । तस्माच्छत्रुसमूहान्निरगमयतं । सीमित्येतत्पादपूरणं । निर्गतेन तेन सह पर्वतान् शत्रुभिरारोढुमशक्यान् शिलोच्चयान्व्ययातं । विशेषेणागच्छतं ॥ परिविष्टं । विश प्रवेशने । कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । सुगेभिः । सुदुरोरधिकरण इति गमेर्डः । विभिंदुना । भिदिर् विदारणे । औणादिक उप्रत्ययो नुमागमश्च । अजरयू । न जरा अजरा । तामात्मन इच्छतः । सुप आत्मनः क्यच् । न च्छंदस्यपुत्रस्येतीत्वदीर्घयोर्निषेधः । क्याच्छंदसीत्युप्रत्ययः ॥ ॥ ११ ॥

एकस्या वस्तोरावतं रणाय वशमश्विना सनये सहस्रा ।
निरहतं दुच्छुना इंद्रवंता पृथुश्रवसो वृषणावरातीः ॥ २१ ॥
एकस्याः । वस्तोः । आवतं । रणाय । वशं । अश्विना । सनये । सहस्रा ।
निः । अहतं । दुच्छुनाः । इंद्रऽवंता । पृथुऽश्रवसः । वृषणौ । अरातीः ॥ २१ ॥

हे अश्विनौ वशमेतत्संज्ञमृषिमेकस्या वस्तोरेकस्मादह्नो रणाय रमणीयाय सहस्रा सहस्रसंख्याकाय सनये धनलाभायावतं । अरक्षतं । स ऋषिः प्रत्यहं यथा सहस्रसंख्यं धनं लभते तथा रक्षितवंतावित्यर्थः । अपि च हे वृषणौ कामानां वर्षितारावश्विनौ इंद्रवंता इंद्रेण संयुक्तौ युवां दुच्छुना दुष्टसुखान्दुःखस्य कर्तॄन् पृथुश्रवसो विस्तीर्णयशसोऽरातीः शत्रून्निरहतं । निःशेषेणावधिष्टं । यद्वा । कानीनस्य पृथुश्रवःसंज्ञस्य राज्ञः शत्रूनिति योज्यं ॥ सहस्रा । सुपां सुलुगिति चतुर्थ्या डादेशः । अहतं । लङि थसस्तं । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः । दुच्छुनाः । शुनमिति सुखनाम । दुष्टं सुखं यासां तास्तथोक्ताः । परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं ॥

शरस्य चिदार्चत्कस्यावतादा नीचादुच्चा चक्रथुः पातवे वाः ।
शयवे चिन्नासत्या शचीभिर्जसुरये स्तर्यं पिप्यथुर्गां ॥ २२ ॥
शरस्य । चित् । आर्चत्ऽकस्य । अवतात् । आ । नीचात् । उच्चा । चक्रथुः । पातवे । वारिति वाः ।
शयवे । चित् । नासत्या । शचीभिः । जसुरये । स्तर्यं । पिप्यथुः । गां ॥ २२ ॥

आर्चत्कस्य ऋचत्कपुत्रस्य शरस्यैतत्संज्ञस्यापि स्तोतुः पिपासितस्य पातवे पानार्थं नीचान्नीचीनादवतात्कूपादुच्चा उच्चैरुपरिष्टाद्वाः उदकं हे अश्विनौ युवामा चक्रथुः । आभिमुख्येन कृतवंतौ । तथा हे नासत्यावश्विनौ शचीभिर्युष्मदीयैः कर्मभिः परिचरणैर्जसुरये श्रांताय शयवे चित् शयुनाम्न ऋषये स्तर्यं निवृत्तप्रसवां गामग्निहोत्रार्थस्य पयसो दोग्ध्रीं पिप्यथुः । पयसा युवामापूरितवंतौ ॥ पातवे । पा पाने । तुमर्थे सेसेनिति तवेन्प्रत्ययः । जसुरये । जसु हिंसायां । जसिसहोरुरिन् । उ॰ २.७३. । स्तर्यं । स्तीर्यत आच्छाद्यते प्रसवसामर्थ्याभावेनेति स्तरीः । अवितॄस्तृतंत्रिभ्य ईः । उ॰ ३.१५८. । इतीकारप्रत्ययः । वा छंदसीत्यमि पूर्वत्वस्य विकल्पि-

तत्वाद्भावे यणादेशः । उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं । पिप्यथुः । प्यायी वृद्धौ । लिटि व्यत्ययेन परस्मैपदं । लिड्यङोश्च । पा॰ ६. १. २९. । इति पीभावः ॥

अवस्यते स्तुवते कृष्णियाय ऋजूयते नासत्या शचीभिः ।
पशुं न नष्टमिव दर्शनाय विष्णाप्वं ददथुर्विश्वकाय ॥ २३ ॥

अवस्यते । स्तुवते । कृष्णियाय । ऋजुऽयते । नासत्या । शचीभिः ।
पशुं । न । नष्टंऽइव । दर्शनाय । विष्णाप्वं । ददथुः । विश्वकाय ॥ २३ ॥

अवस्यतेऽवनं रक्षणमात्मन इच्छते स्तुवते स्तुतिं कुर्वते कृष्णियाय । कृष्णो नाम कश्चित् । तस्य पुत्राय ऋजूयत आर्जवमिच्छते विश्वकायैतत्संज्ञाय ऋषये हे नासत्यौ युवां शचीभिरात्मीयैः कर्मभिर्विष्णाप्वं नाम विनष्टं पुत्रं दर्शनाय दर्शनार्थं ददथुः । दत्तवंतौ । तत्र दृष्टांतः । पशुं न नष्टमिव । एक उपमार्थीयः पूरकः । यथा कश्चिद्विनष्टं पशुं स्वामिनो दृष्टिपथं प्रापयति तद्वत् ॥ अवस्यते । अवःशब्दात्सुप आत्मनः क्यच् । शतुरनुम इति विभक्तेरुदात्तत्वं । कृष्णियाय । कृष्णशब्दादपत्यार्थे छांदसो घच् ॥

दश रात्रीरशिवेना नव द्यूनवनद्धं श्नथितमप्स्वन्तः ।
विप्रुतं रेभमुदनि प्रवृक्तमुन्निन्यथुः सोममिव स्रुवेण ॥ २४ ॥

दश । रात्रीः । अशिवेन । नव । द्यून् । अवऽनद्धं । श्नथितं । अप्ऽसु । अंतरिति ।
विऽप्रुतं । रेभं । उदनि । प्रऽवृक्तं । उत् । निन्यथुः । सोमंऽइव । स्रुवेण ॥ २४ ॥

पुरा खलु रेभमृषिं पाशैर्बद्धासुराः कूपे कस्यचिद्दिवसस्य सायंकाले प्रचिक्षिपुः । स चाश्विनौ स्तुवन् दश रात्रीर्नवाहानि च कूपमध्ये तथैवावतस्थे । दशमेऽहनि प्रातरश्विनौ तं कूपादुदतारयतामिति । तदाह । अप्सु कूपांतर्वर्तमानास्वंतर्मध्येऽसुरैः पातितमशिवेन दुःखहेतुना दाम्नावनद्धं बद्धं श्नथितं शत्रुभिर्हिंसितं दश रात्रीर्दशसंख्याका निशा नव द्यून् नवसंख्याकान्यहानि च । अत्यंतसंयोगे द्वितीया । एतावंतं कालं तत्रैव कूपेऽवस्थितं अत एवोदन्युदके विप्रुतं विप्लुतं व्याक्षिप्तसर्वांगं प्रवृक्तं । लुप्तोपममेतत् । प्रवृंजनेन संतप्तं घर्ममिव व्यथया संतप्यमानं एवंभूतं रेभं हे अश्विनौ युवामुन्निन्यथुः । तस्मात्कूपादुन्नीतमुत्तीर्णं कृतवंतौ । तत्र दृष्टांतः । सोममिव यथाग्निहोत्रहोमार्थमभिषुतं सोमरसं कूपसदृशेऽग्निहोत्रस्थालीमध्ये वर्तमानं स्रुवेणाध्वर्युरुन्नयत्यूर्ध्वं नयति तद्वत् ॥ अवनद्धं । णह बंधने । कर्मणि निष्ठा । नहो धः । पा॰ ८. २. ३४. । झषस्तथोर्धोऽध इति निष्ठातकारस्य धत्वं । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । श्नथितं । श्नथ हिंसार्थः । निष्ठा । विप्रुतं । प्रुङ् गतौ । अवनद्धवत्प्रत्ययस्वरौ । कपिल[illegible]विकल्पः । उदनि । पद्दन्नित्यादिनोदकशब्दस्योदन्भावः ॥

प्र वां दंसांस्यश्विनाववोचमस्य पतिः स्यां सुगवः सुवीरः ।
उत पश्यन्नश्नुवन्दीर्घमायुरस्तमिवेज्जरिमाणं जगम्यां ॥ २५ ॥

प्र । वां । दंसांसि । अश्विनौ । अवोचं । अस्य । पतिः । स्यां । सुऽगवः । सुऽवीरः ।
उत । पश्यन् । अश्नुवन् । दीर्घं । आयुः । अस्तंऽइव । इत् । जरिमाणं । जगम्यां ॥ २५ ॥

एवमनेन सूक्तेनाश्विनोर्महिमानं प्रशस्याधुना मंत्रद्रष्टा स्वाभीष्टं प्रार्थयते । हे अश्विनौ वां युवयोर्दंसांसि पुरा कृतानि कर्माणि प्रावोचं । इत्थमुक्तवानस्मि । सोऽहं सुगवः शोभनगोयुक्तः सुवीरः शोभनवीरश्च भूत्वास्य राष्ट्रस्य पतिरधिपतिः स्यां । भवेयं । उतापि च पश्यन्नक्षिभ्यां पश्यन् । उपलक्षणमेतत् । सर्वैरिंद्रियैः स्वस्वविषयसमर्थैर्दीर्घं वर्षशतरूपेणायतमायुः जीवितं चाश्नुवन् प्राप्नुवन्नहमस्तमिव यथा गृहं स्वामी निष्कंटकं प्रविशति

एवं जरिमाणं जरां जगम्यां । कंटकराहित्येन प्राप्नुयां । वृद्धः संश्चिरकाल निवसेयमित्यर्थः ॥ स्यां । अस्तेः प्रार्थनायां लिङ् । यासुट् । असोरल्लोप इत्यकारलोपः । अश्नुवन् । अशू व्याप्तौ । व्यत्ययेन शतृ । जरिमाणं । जॄष् वयोहानौ । अस्मादौणादिक इमनिच् । जगम्यां । गमेः प्रार्थनायां लिङि बहुलं छंदसीति विकरणस्य श्लुः ॥ ॥१२॥

मध्व इति पंचविंशत्यृचं द्वितीयं सूक्तं । औशिजस्य कक्षीवत आर्षं त्रैष्टुभमाश्विनं । मध्व इत्यनुक्रांतं ॥ प्रातरनुवाकाश्विनशस्त्रयोः पूर्वसूक्तेन सहोक्तो विनियोगः ॥

मध्वः सोम॑स्याश्विना॒ मदा॑य प्र॒त्नो होता॒ वि॑वासते वां ।
ब॒र्हिष्म॑ती रा॒तिर्वि॑श्रि॑ता॒ गीरि॒षा या॑तं नासत्योप॒ वाजैः॑ ॥ १ ॥
मध्वः॑ । सोम॑स्य । अ॒श्विना॑ । मदा॑य । प्र॒त्नः । होता॑ । आ । वि॒वा॒स॒ते॒ । वां॒ ।
ब॒र्हिष्म॑ती । रा॒तिः । विऽश्रि॑ता । गीः । इ॒षा । या॒तं॒ । ना॒स॒त्या॒ । उप॑ । वाजैः॑ ॥ १ ॥

हे अश्विनौ मध्वो मधुना माधुर्योपेतेन सोमस्य सोमेन मदाय युवयोर्मदार्थं प्रत्नश्चिरंतनो होता होमनिष्पादको यजमानो वां युवामा विवासते । विवासतिः परिचरणकर्मा । आङ् मर्यादायां । यथाशास्त्रं परिचरति । अपि च रातिर्दातव्यं हविर्बर्हिष्मती । आस्तीर्णेन बर्हिषा युक्तं । युष्मदर्थं बर्हिष्यासादितमित्यर्थः । तथा गीः स्तुतिलक्षणा वाक् च विश्रिता । ऋत्विक्षु समवेता । तैः स्तुतिरपि क्रियत इत्यर्थः । अतो हे नासत्यावश्विनौ इषास्मभ्यं दातव्येनान्नेन वाजैर्बलैश्च सह युवामुप यातं । अस्मत्समीपं प्राप्नुतं ॥ मध्वः । सुपां सुपो भवंतीति तृतीयार्थे षष्ठी । जसादिषु छंदसि वावचनमिति घेर्ङितीति गुणाभावे यणादेशः । मदाय । मदी हर्षे । मदोऽनुपसर्गे इत्यप् । रातिः । रा दाने । कर्मणि क्तिन् । मंत्रे वृषेषेत्यादिना तस्योदात्तत्वं । विश्रिता । श्रिञ् सेवायां । कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं ॥

यो वा॑मश्विना॒ मन॑सो॒ जवी॑यान्र॒थः स्वश्वो॒ विश॑ आ॒जिगा॑ति ।
येन॒ गच्छ॑थः सु॒कृतो॑ दुरो॒णं तेन॑ नरा व॒र्तिर॒स्मभ्यं॑ यातं ॥ २ ॥
यः । वां॒ । अ॒श्वि॒ना॒ । मन॑सः । जवी॑यान् । रथः॑ । सु॒ऽअश्वः॑ । विशः॑ । आ॒ऽजिगा॑ति ।
येन॑ । गच्छ॑थः । सु॒ऽकृतः॑ । दु॒रो॒णं । तेन॑ । न॒रा॒ । व॒र्तिः । अ॒स्मभ्यं॑ । या॒तं॒ ॥ २ ॥

हे अश्विनौ वां युवयोः स्वभूतो मनसो जवीयान् मनसोऽप्यतिशयेन वेगवान् स्वश्वः शोभनाश्व एवंभूतो यो रथो विशः प्रजा आजिगाति आभिमुख्येन गच्छति । येन रथेन सुकृतः शोभनं यागं कुर्वतो यजमानस्य दुरोणं देवयजनलक्षणं गृहं गच्छथः । हे नरा नेतारावश्विनौ तेन रथेनास्मभ्यमस्माकं वर्तिर्वर्तनाधिकरणं गृहं यातं । आगच्छतं ॥ जवीयान् । जवोऽस्यास्तीति जववान् । तदस्यास्तीति मतुप् । तत आतिशायनिक ईयसुन् । विन्मतोर्लुक् । टेरिति टिलोपः । जिगाति । गा स्तुतौ । जौहोत्यादिकः । गतिकर्मसु पाठादत्र गत्यर्थः । बहुलं छंदसीत्यभ्यासस्येत्वं ॥

ऋषिं॑ नरा॒वंह॑सः॒ पांच॑जन्यमृ॒बीसा॒दत्रिं॑ मुंचथो ग॒णेन॑ ।
मि॒नंता॒ दस्यो॒रशि॑वस्य मा॒या अ॑नुपू॒र्वं वृ॑षणा चो॒दयं॑ता ॥ ३ ॥
ऋषिं॑ । न॒रौ॒ । अंह॑सः । पांच॑ऽजन्यं । ऋ॒बीसा॑त् । अत्रिं॑ । मुं॒च॒थः॒ । ग॒णेन॑ ।
मि॒नंता॑ । दस्योः॑ । अशि॑वस्य । मा॒याः । अ॒नु॒ऽपू॒र्वं । वृ॒ष॒णा॒ । चो॒दयं॑ता ॥ ३ ॥

हिमेनाग्निं । ऋ० १. ११६. ८. । इत्यनयोक्त एवार्थः पुनः प्रकारांतरेणानया प्रतिपाद्यते । अतस्तत्रोक्तं सवमत्रापि द्रष्टव्यं । अक्षरार्थस्तु । हे नरौ नेतारौ वृषणा कामानां वर्षितारावश्विनौ पांचजन्यं । निषादपंच-

माश्चत्वारो वर्णाः पंच जनाः। तेषु भवं। स्वर्भानुना गृहीतममुं सूर्यं मोचयन्नत्रिः सर्वेषां हिताचरणात्तत्र भव इत्युच्यते। तादृशमृषिमंहसः पापरूपादृबीसात् शतद्वारे यंत्रगृहेऽत्रेः पीडार्थमसुरैः प्रक्षिप्तात्तुषाग्नेः सकाशाद्गणेनेंद्रियवर्गेण पुत्रपौत्रादिगणेन वा सह मुंचथः। अमोचयतं। किं कुर्वंतौ। मिनंता शत्रून् हिंसंतौ दस्योरुपद्रवपितुरशिवस्य दुःखकारिणोऽसुरस्य संबंधिनीस्ताश्छिन्नत्रौ प्रयुक्ता मायास्तानुपूर्वमानुपूर्व्येण चोदयंता प्रेरयंतौ निवारयंतौ ॥ पांचजन्यं। बहिर्देवपंचजनेभ्यश्चेति वक्तव्यं। का० ४. ३. ५८. १.। इति भवार्थे ञ्यः। मिनंता। मीञ् हिंसायां। क्र्यादिकः। लटः शतृ। मीनातेर्निगम इति ह्रस्वत्वं ॥

अश्वं न गूळ्हमश्विना दुरेवैरृषिं नरा वृषणा रेभमप्सु।
सं तं रिणीथो विप्रुतं दंसोभिर्न वां जूर्यंति पूर्व्या कृतानि ॥४॥

अश्वं। न। गूळ्हं। अश्विना। दुःऽएवैः। ऋषिं। नरा। वृषणा। रेभं। अप्ऽसु।
सं। तं। रिणीथः। विऽप्रुतं। दंसःऽभिः। न। वां। जूर्यंति। पूर्व्या। कृतानि ॥४॥

नरा नेतारौ वृषणा कामानां वर्षकौ हे अश्विनौ दुरेवैर्दुष्प्रापैरसुरैरप्सु कूपस्थेषूदकेषु गूळ्हं निगूढं निखातं रेभमृषिं कूपादुन्नीय विप्रुतं विश्लिष्टावयवं तमश्वं न व्याधितमश्वमिव दंसोभिरात्मीयैर्भैषज्यरूपैः कर्मभिः सं रिणीथः। समधत्तं। सर्वैरवयवैरुपेतमकुरुतमित्यर्थः। वां युवयोः संबंधीनि पूर्व्या चिरंतनानि कृतानि कर्माणि न जूर्यंति। न हि जीर्णानि भवंति ॥ दुरेवैः। दुरुपसृष्टादेतेरीषद्दुःसुष्विति खल्। रिणीथः। री गतिरेषणयोः। क्र्यादिकः। प्वादीनां ह्रस्वः। जूर्यंति। जूष् वयोहानौ। दैवादिकत्वाच्छ्यन्। बहुलं छंदसीत्युत्वं। हलि चेति दीर्घः ॥

सुषुप्वांसं न निरृतेरुपस्थे सूर्यं न दस्रा तमसि क्षियंतं।
शुभे रुक्मं न दर्शतं निखातमुदूपथुरश्विना वंदनाय ॥५॥

सुसुप्वांसं। न। निःऽऋतेः। उपऽस्थे। सूर्यं। न। दस्रा। तमसि। क्षियंतं।
शुभे। रुक्मं। न। दर्शतं। निऽखातं। उत्। ऊपथुः। अश्विना। वंदनाय ॥५॥

निरृतिरिति भूनाम। निर्ऋतेः पृथिव्या उपस्थ उत्संगे सुषुप्वांसं सुप्तवंतं पुरुषमिव कूपमध्ये शयानं सूर्यं न सूर्यमिव तमसि कूपांतर्गतांधकारे क्षियंतं निवसंतं सूर्यमिव। तेजस्विनमित्यर्थः। शुभे शोभार्थं निर्मितं रुक्मं न रोचमानं सुवर्णमयाभरणमिव दर्शतं दर्शनीयं एवंगुणविशिष्टं कूपेऽसुरैर्निखातं वंदनाय वंदनमृषिं हे दस्रा दर्शनीयावश्विनौ युवामुदूपथुः। उद्धृतवंतौ ॥ सुषुप्वांसं। ञिष्वप् शये। लिटः क्वसुः। वचिस्वपीत्यादिना संप्रसारणं द्विर्वचनादि। उपस्थे। उपपूर्वात्तिष्ठतेर्घञर्थे कविधानमित्यधिकरणे कप्रत्ययः। मरुद्वृधा[illegible]- पदांतोदात्तत्वं। वंदनाय। क्रियाग्रहणं कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थी ॥ ॥१३॥

तद्वां नरा शंस्यं पज्रियेण कक्षीवता नासत्या परिज्मन्।
शफादश्वस्य वाजिनो जनाय शतं कुंभाँ असिंचतं मधूनां ॥६॥

तत्। वां। नरा। शंस्यं। पज्रियेण। कक्षीवता। नासत्या। परिऽज्मन्।
शफात्। अश्वस्य। वाजिनः। जनाय। शतं। कुंभान्। असिंचतं। मधूनां ॥६॥

हे नरा नेतारौ नासत्यावश्विनौ परिज्मन् परिगमनेऽभीष्टस्य प्रापणे निमित्तभूते सति पज्रियेण पज्राणामंगिरसां कुले जातेन कक्षीवता मया वां युवयोः संबंधि तत्कर्म शंस्यं। प्रकर्षेण शंसनीयं। तच्छब्दश्रुतेर्यच्छब्दाध्याहारः। यज्जनायापेक्षमाणाय पुरुषाय वाजिनो वेगवतस्त्वदीयस्याश्वस्य शफान्निर्गतैर्मधूनां मधुभिः शतसंख्याकान्कुंभानसिंचतं। अपूरयतं। सिंचतिरत्र पूरणार्थः। यदेतन्मधुना पूरणं तच्छंस्यमित्यर्थः ॥

युवं नरा स्तुवते कृष्णियाय विष्णाप्वं ददथुर्विश्वकाय ।
घोषायै चित्पितृषदे दुरोणे पतिं जूर्यंत्या अश्विनावदत्तं ॥७॥
युवं । नरा । स्तुवते । कृष्णियाय । विष्णाप्वं । ददथुः । विश्वकाय ।
घोषायै । चित् । पितृऽसदे । दुरोणे । पतिं । जूर्यंत्यै । अश्विनौ । अदत्तं ॥७॥

हे नरा नेतारावश्विनौ युवं युवां स्तुवते स्तोत्रं कुर्वते कृष्णियाय कृष्णाख्यस्य पुत्राय विश्वकाय विष्णाप्वं ददथुः । विष्णाप्वं नाम विनष्टं पुत्रं दत्तवंतौ । घोषा नाम ब्रह्मवादिनी कक्षीवतो दुहिता । सा कुष्ठिनी सती कस्मैचिद्वरायादत्ता पितृगृहे निषण्णा जीर्णासीत् । साश्विनोरनुग्रहान्नष्टकुष्ठा सती पतिं लेभे । तदेतदाह । हे अश्विनौ पित्रा संबद्धे दुरोणे स्वकीयजनकगृहे कुष्ठरोगेण भर्तारमप्राप्य पितृषदे पितृसमीपे निषण्णायै जूर्यंत्यै जरां प्राप्नुवत्यै घोषायै चित् एतत्संज्ञायै ब्रह्मवादिन्या अपि रोगोपशमनेन पतिं भर्तारमदत्तं । युवां दत्तवंतौ ॥ पितृषदे । षद्लृ विशरणादिषु । क्विचेति क्विप् । जूर्यंत्यै । जूष् वयोहानौ । लटः शतृ । दिवादित्वाच्छ्यन् । वक्तलं छंदसीत्युत्वं । हलि चेति दीर्घः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे श्यनो नित्त्वादाद्युदात्तत्वं ॥

युवं श्यावाय रुशतीमदत्तं महः क्षोणस्याश्विना कण्वाय ।
प्रवाच्यं तद्वृषणा कृतं वां यन्नार्षदाय श्रवो अध्यधत्तं ॥८॥
युवं । श्यावाय । रुशतीं । अदत्तं । महः । क्षोणस्य । अश्विना । कण्वाय ।
प्रऽवाच्यं । तत् । वृषणा । कृतं । वां । यत् । नार्सदाय । श्रवः । अधिऽअधत्तं ॥८॥

हे अश्विनौ युवं युवां श्यावाय कुष्ठरोगेण श्यामवर्णायर्षये रुशतीं दीप्तत्वचं स्त्रियमदत्तं । प्रायच्छतं । अपि च क्षोणस्य क्षोणाय यो दृष्टिराहित्येन गंतुमशक्तः सन्नेकस्मिन्नेव स्थाने निवसति तस्मै कण्वायर्षये महस्तेजस्तेजसं चक्षुरिंद्रियमदत्तमिति शेषः । तथा हे वृषणा कामानां वर्षितारौ वां युवयोस्तत्कृतं कर्म प्रवाच्यं । प्रकर्षेण वाचनीयं शंसनीयं । नार्षदाय नृषदपुत्राय बधिरायर्षये श्रवः श्रवणेंद्रियं यदध्यधत्तं । दत्तवंतौ स्थ इति यत् तदित्यर्थः । अपर आह । ब्राह्मण्यस्य परीक्षार्थमसुराः कण्वमृषिं गूढे तमसि निदधुः । अत्रैव स्थितः सन् व्युष्टामुषसं विजानीहि यदि त्वं ब्राह्मणोऽसीति । तमश्विनावागत्योचतुः । व्युष्टायां हर्म्यस्योपरि वीणां [illegible]ः । तं शब्दं श्रुत्वा व्युष्टामुषसं ब्रूहि । तदेतत्प्रतिपाद्यते । हे वृषणा कामानां वर्षितारावश्विनौ वां युवयोस्तत्कृतं कर्म प्रवाच्यं प्रशंसनीयं यन्नार्षदाय नृषदपुत्राय कण्वाय क्षोणस्य । क्षोणः शब्दकारी वीणाविशेषः । महो महतः क्षोणस्य श्रवः शब्दमध्यधत्तं उषसो विज्ञानार्थमधिकमकुरुतं ॥ महः । मह पूजायां । अस्मादौणादिकोऽसिप्रत्ययः । पक्षांतरे तु महच्छब्दात् षष्ठ्येकवचने छांदसो ऽल्लोपः । बृहन्महतोरुपसंख्यानमिति विभक्तेरुदात्तत्वं । यद्वा । क्विबंतात् षष्ठ्येकवचनं । क्षोणस्य । क्षि निवासगत्योः । कृत्यल्युटो बहुलमिति कर्तरि ल्युट् । पृषोदरादित्वात् क्षोणभावः । तदुक्तं यास्केन । क्षोणस्य चयनस्य । नि॰ ६. ६. । इति । पक्षांतरे तु टुक्षु शब्दे इत्यस्मादौणादिको नप्रत्ययः । नार्षदाय । ऋष्यंधकेत्यण् ॥

पुरू वर्पांस्यश्विना दधाना नि पेदव ऊहथुराशुमश्वं ।
सहस्रसां वाजिनमप्रतीतमहिहनं श्रवस्यं तरुत्रं ॥९॥
पुरु । वर्पांसि । अश्विना । दधाना । नि । पेदवे । ऊहथुः । आशुं । अश्वं ।
सहस्रऽसां । वाजिनं । अप्रतिऽइतं । अहिऽहनं । श्रवस्यं । तरुत्रं ॥९॥

हे अश्विनौ पुरु पुरूणि बहूनि वर्पांसि । रूपनामैतत् । आत्मीयैः कर्मभिः कृतानि रूपाणि दधाना धारयंतौ युवामाशुं शीघ्रगामिनमश्वं पेदवे पेदुनाम्ने स्तुवते न्यूहथुः । नितरां प्रापितवंतौ । दत्तवंतावित्यर्थः ।

कीदृशमश्वं। सहस्रसां सहस्रसंख्याकस्य धनस्य सनितारं दातारं वाजिनं बलवंतं अत एवाप्रतीतं शत्रुभिरप्रतिगतं अहिहनमहीनामागत्य हंतॄणां शत्रूणां शत्रून्वा हंतारं श्रवस्यं। श्रवः श्रवणीयं स्तोत्रं। तत्र भवं। स्तुतिविषयमित्यर्थः। तरुत्रं तरितारं॥ वर्पांसि। वृञ् वरणे। वृञ्शीङ्भ्यां रूपस्वांगयोः पुक्च। उ० ४. २००.। इत्यसुन् पुगागमश्च। दधाना। दधातेर्लटः शानच्। अभ्यस्तानामादिरित्याद्युदात्तत्वं। सहस्रसां। षणु दाने। जनसनखनेति विट्। विड्वनोरनुनासिकस्यादित्यात्वं। श्रवस्यं। श्रवःशब्दाद्भवे छंदसीति यत्। तित्स्वरितः। तरुत्रं। तॄ प्लवनतरणयोः। अशित्रादिभ्य इत्रोत्रौ। उ० ४. १७२.। इत्युत्रप्रत्ययः। व्यत्ययेनाद्युदात्तत्वं। यद्वा। ग्रसितस्कभितेत्यादौ निपातनात्तृनंतात्तरुतृशब्दादमि संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावे यण्। नित्स्वरेणाद्युदात्तत्वं॥

एतानि वां श्रवस्या सुदानू ब्रह्मांगूषं सदनं रोदस्योः।
यद्वां पज्रासो अश्विना हवंते यातमिषा च विदुषे च वाजं॥१०॥
एतानि। वां। श्रवस्या। सुदानू इति सुऽदानू। ब्रह्म। आंगूषं। सदनं। रोदस्योः।
यत्। वां। पज्रासः। अश्विना। हवंते। यातं। इषा। च। विदुषे। च। वाजं॥१०॥

हे सुदानू शोभनदानावश्विनौ वां युवयोः संबंधीन्येतानि समनंतरोक्तानि वीर्याणि श्रवस्या श्रवणीयानि सर्वैर्ज्ञातव्यानि भवंति। तदर्थं रोदस्योर्द्यावापृथिव्यात्मना वर्तमानयोर्युवयोः। उक्तं च यास्केन। तत्कावश्विनौ द्यावापृथिव्यावित्येके। नि० १२. १.। इति। तथा च तैत्तिरीयकं। इमे अश्विना संवत्सरोऽग्निर्वैश्वानर इति। तयोर्युवयोः सदनं स्तोतृसमीपे निवेशनं प्रसादनहेतुभूतं वांगूषमाघोषणीयं ब्रह्म मंत्ररूपं स्तोत्रं निष्पन्नमिति शेषः। यद्यदा पज्रासोऽंगिरसां गोत्रोत्पन्ना यजमाना हे अश्विनौ वां युवां हवंते स्तुतिभिरात्मरक्षणार्थमाह्वयंति तदानीमिषा दातव्येनान्नेन सहा यातं। आगच्छतं च। विदुषे युष्मद्विषयं स्तोत्रं जानते मह्यं च वाजमन्नं बलं वा प्रयच्छतमिति शेषः॥ यातं। चवायोगे प्रथमेति निघातप्रतिषेधः। विदुषे। विद ज्ञाने। विदेः शतुर्वसुः। वसोः संप्रसारणमिति संप्रसारणं। शासिवसिघसीनां चेति षत्वं॥ ॥१४॥

सूनोर्मानेनाश्विना गृणाना वाजं विप्राय भुरणा रदंता।
अगस्त्ये ब्रह्मणा वावृधाना सं विश्पलां नासत्यारिणीतं॥११॥
सूनोः। मानेन। अश्विना। गृणाना। वाजं। विप्राय। भुरणा। रदंता।
अगस्त्ये। ब्रह्मणा। ववृधाना। सं। विश्पलां। नासत्या। अरिणीतं॥११॥

भुरणा भर्तारौ पोषकौ नासत्या सत्यस्वभावौ हे अश्विनौ सूनोः कुंभात्प्रसूतस्यागस्त्यस्य खेलपुरोहितस्य संबंधिना मानेन स्तुत्यस्य [illegible] स्तोत्रेण गृणाना स्तूयमानौ विप्राय मेधाविने भरद्वाजायर्षये वाजमन्नं रदंता विलिखंतौ निष्पादयंतौ युवां विश्पलां संग्रामे छिन्नजंघां खेलस्य संबंधिनीं स्त्रियं समरिणीतं। पुनरायस्या जंघया समयोजयतं। तृतीयेन पादेन प्रथमपादोक्तोऽर्थो विव्रियते। अगस्त्य ऋषौ ब्रह्मणा मंत्ररूपेण स्तोत्रेण ववृधाना प्रवर्धिताविति॥ गृणाना। गॄ शब्दे। व्यत्ययेन कर्मणि कर्तृप्रत्ययः। प्वादीनां ह्रस्वः। भुरणा। भुरण धारणपोषणयोः। कंड्वादिः। पचाद्यच्। अतोलोपयलोपौ। सुपां सुलुगिति विभक्तेराकारः। आमंत्रितनिघातः। विप्रायेत्यस्य रदंतेत्यनेनासामर्थ्यान्न परांगवत्त्वं। ववृधाना। वृधेर्लिटः कानच्। संहितायां छांदसमभ्यासस्य दीर्घत्वं। तुजादित्वे हि तूतुजान इतिवत् पदकालेऽपि स्यात्। अरिणीतं। री गतिरेषणयोः। क्रैयादिकः। प्वादीनां ह्रस्वः॥

कुह यांता सुष्टुतिं काव्यस्य दिवो नपाता वृषणा शयुत्रा।
हिरण्यस्येव कलशं निखातमुदूपथुर्दशमे अश्विनाहन्॥१२॥

कुह । यान्ता । सुऽस्तुतिं । काव्यस्यं । दिवंः । नपाता । वृषणा । शयुत्रा ।
हिरण्यस्यऽइव । कलशं । निऽखातं । उत् । ऊपथुः । दशमे । अश्विना । अहंन् ॥ १२ ॥

पुरा खलूशनसः स्तुतिं गच्छंतावश्विनौ मार्गमध्ये कूपे पतितं रेभं दृष्ट्वा तं कूपादुदतारयतां । तदानीमश्विभ्यां गंतव्यं काव्यस्य निवासस्थानमजानन्नृषिरश्विनौ पृच्छति । हे दिवो नपाता द्योतमानस्य सूर्यस्य पुत्रौ वृषणा कामाभिवर्षकावश्विनौ कुह कुत्र शयुत्रा शयने निवासस्थान वर्तमानस्य काव्यस्य भार्गवस्य सुष्टुतिं शोभनां स्तुतिं श्रोतुं यांता गच्छंतौ । यद्वा । शयुत्रेत्येतदश्विनोर्विशेषणं । शयुनाम्नस्त्रायकौ युवां । हिरण्यस्येव कलश यथा हिरण्यपूरितं कलशं भूम्यां निक्षिप्तं सर्वैर्दुर्ज्ञातं कश्चिदभिज्ञ उद्धरति एवमसुरैः कूपे निखातं दश रात्रीर्नवाहानि च तत्रैव निवसंतं रेभमवगत्य दशमेऽहन्नहन्युदूपथुः । कूपादुन्नीतवंतौ । किं तन्निवासस्थानमिति प्रश्नः । रेभस्यानुक्तावपि दश रात्रीरशिवेन । ऋ॰ १. ११६. २४. । इति मंत्रांतरसामर्थ्यात्प्रतीतिः । यद्वा । काव्यस्य स्तुतिं प्रति गच्छंतौ युवां कुह कस्मिन्स्थाने रेभं युवामुन्निन्यथुरिति प्रश्नः ॥ कुह । वा ह च छंदसीति सप्तम्यर्थे हप्रत्ययः । दिवो नपाता । सुबामंत्रिते पराङ्गवत्स्वर इति पराङ्गवद्भावेन षष्ठ्यंतस्यामंत्रितानुप्रवेशादामंत्रितस्य चेति पदद्वयसमुदायस्य षाष्ठिकमाद्युदात्तत्वं । पादादित्वादाष्टमिकनिघाताभावः । नपादित्यपत्यनाम । न पातयतीति नपात् । नभ्राण्नपादिति नञः प्रकृतिभावः । सुपां सुलुगिति विभक्तेराकारः । शयुत्रा । अशिषादिभ्य इत्रोत्राविति शीङ उत्रः । यथंतोदात्तता न स्यात् तर्ह्येवं । शयुं त्रायेते इति शयुत्रौ । त्रैङ् पालने । आदेच इत्यात्वं । आतोऽनुपसर्गे कः । अत एव व्युत्पत्त्यनवधारणादनवग्रहः । निखातं । खनु अवदारणे । अस्मात्कर्मणि निष्ठा । यस्य विभाषेतीट्प्रतिषेधः । जनसनखनां सञ्झलोरित्यात्वं । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । अहन् । सुपां सुलुगिति सप्तम्या लुक् । न ङिसंबुद्ध्योरिति नलोपप्रतिषेधः ॥

युवं च्यवानमश्विना जरंतं पुनर्युवानं चक्रथुः शचीभिः ।
युवो रथं दुहिता सूर्यस्य सह श्रिया नासत्यावृणीत ॥ १३ ॥
युवं । च्यवानं । अश्विना । जरंतं । पुनः । युवानं । चक्रथुः । शचीभिः ।
युवोः । रथं । दुहिता । सूर्यस्य । सह । श्रिया । नासत्या । अवृणीत ॥ १३ ॥

हे अश्विनौ युवं युवां शचीभिरात्मीयैर्भैषज्यलक्षणैः कर्मभिर्जरंतं जीर्यंतं च्यवानं स्तुतीनां च्यावयितारमेतत्संज्ञमृषिं युवानं पुनर्यौवनोपेतं चक्रथुः । कृतवंतौ । अपि च हे नासत्यावश्विनौ युवोर्युवयो रथं सूर्यस्य दुहिता सूर्याख्या श्रिया सह ऋक्सहस्ररूपया संपदा कांत्या वा सहावृणीत । समभजत । आगत्यारूढवतीत्यर्थः । आ वां रथं दुहिता । ऋ॰ १. ११६. १७. । इत्यत्र लिखितमाख्यानमत्रापि द्रष्टव्यं ॥ जरंतं । जॄष् वयोहानौ । व्यत्ययेन शप् । युवोः । युष्मच्छब्दात् षष्ठीद्विवचने व्यत्ययेन योऽचीति यत्वाभावे सति शेषे लोप इति दकारलोपः । अतो गुणे इति पररूपत्वं । एकादेश उदात्तेनोदात्तः । अवृणीत । वृङ् संभक्तौ । क्रैयादिकः ॥

युवं तुग्राय पूर्व्येभिरेवैः पुनर्मन्यावभवतं युवाना ।
युवं भुज्युमर्णसो निः समुद्राद्विभिरूहथुर्ऋज्रेभिरश्वैः ॥ १४ ॥
युवं । तुग्राय । पूर्व्येभिः । एवैः । पुनःऽमन्यौ । अभवतं । युवाना ।
युवं । भुज्युं । अर्णसः । निः । समुद्रात् । विऽभिः । ऊहथुः । ऋज्रेभिः । अश्वैः ॥ १४ ॥

हे युवाना दुःखानां यावयितारावश्विनौ युवं युवां पूर्व्येभिः । पुराणनामैतत् । पूर्वकालीनैश्चिरंतनैरेवैः स्तुत्यं प्रति गंतृभिः स्तोत्रैस्तुग्राय भुज्योर्जनकस्य संबंधिभिः पुनर्मन्यौ यथा भुज्योः समुद्रगमनात्पूर्वं युवां स्तोतव्यौ तथा पु[illegible] स्तोतव्यावभवतं । यदा युवां समुद्रमध्ये सेनया सह निमग्नं भुज्युं तुग्रस्य पुत्रमर्णसोऽर्णस्वतः प्रौढोदकयुक्तात्समुद्रादंबुराशेः सकाशाद्विभिर्गंतृभिर्नौभिर्ऋज्रेभिः शीघ्रगतियुक्तैरश्वैश्च निरूहथुः

निर्गमय्य पितृसमीपं प्रापितवंतौ । तदानीं पुनरप्यतिशयेन स्तोतव्यौ जातावित्यर्थः । तुग्रो ह भुज्युं । ऋ० १. ११६. ३. । इत्यत्रोक्तमाख्यानमत्राप्यनुसंधेयं ॥ एवैः । इण् गतौ । इण्शीङ्भ्यां वन् । पुनर्मन्यौ । मन ज्ञाने । अत्र स्तुत्यर्थः । मन्यते स्तौतीति मना स्तुतिः । पचाद्यच् । छंदसि चेत्यर्हार्थे यः । युवाना । यु मिश्रणामिश्रणयोः । कनिन्युवृषीत्यादिना कनिन् । सुपां सुलुगिति विभक्तेराकारः । अर्णसः । अर्णःशब्दादुत्पन्नस्य मत्वर्थीयस्य बहुलं छंदसीति बहुलग्रहणाल्लोपः । सर्वे विधयश्छंदसि विकल्प्यंत इति विभक्त्युदात्तस्य विकल्पनादभावः । ऋज्रेभिः । ऋज गतिस्थानार्जनोपार्जनेषु । ऋज्रेंद्रेत्यादौ रन्प्रत्ययांतो निपातितः । बहुलं छंदसीति भिस ऐसभावः ॥

**अजो॑हवीदश्विना तौ॒ग्र्यो वां॒ प्रोळ्हः॑ समु॒द्रम॑व्य॒थिर्ज॑ग॒न्वान् ।**
**निष्टमू॑हथुः सु॒युजा॒ रथे॑न॒ मनो॑जवसा वृषणा स्व॒स्ति ॥ १५ ॥**
**अजो॑हवीत् । अ॒श्विना॒ । तौ॒ग्र्यः । वां॒ । प्रऽऊ॑ळ्हः । स॒मु॒द्रं । अ॒व्य॒थिः । ज॒ग॒न्वान् ।**
**निः । तं । ऊ॒ह॒थुः॒ । सु॒ऽयुजा॑ । रथे॑न । मनः॑ऽजवसा । वृ॒ष॒णा॒ । स्व॒स्ति ॥ १५ ॥**

हे अश्विनौ वां युवां तौग्र्यस्तुग्रपुत्रः प्रोळ्हः पित्रा प्रापितः समुद्रमब्धिं जगन्वान्भुज्युरुदके निमग्नोऽप्यव्यथिर्व्यथां पीडामप्राप्त एव सन्नजोहवीत् । स्तुतिभिराह्वयत् । तमाह्वातारं हे मनोजवसा मनोवद्वेगयुक्तौ वृषणा कामाभिवर्षकावश्विनौ सुयुजा सुष्ठ्वश्वैर्युक्तेन रथेन स्वस्ति क्षेमं यथा भवति तथा निरूहथुः । जलान्निर्गमय्य युवां पितृगृहं प्रापितवंतौ ॥ जगन्वान् । गमेर्लिटः क्वसुः । विभाषा गमहनविदविशामिति विकल्पनादिडभावः । म्वोश्चेति मकारस्य नकारः । निष्टं । युष्मत्तत्ततक्षुःष्वंतःपादमिति मूर्धन्यः । मनोजवसा । मनसो जव इव जवो ययोस्तौ तथोक्तौ । सुपां सुलुगिति विभक्तेराकारः । पादादित्वादामंत्रितनिघाताभावे षाष्ठिकमाद्युदात्तत्वं ॥ ॥ १५ ॥

**अजो॑हवीदश्विना व॒र्तिका॑ वामा॒स्नो यत्सी॒मम॑ुंचतं॒ वृक॑स्य ।**
**वि ज॒युषा॑ ययथुः॒ सान्वद्रे॑र्जा॒तं वि॒ष्वाचो॑ अहतं वि॒षेण॑ ॥ १६ ॥**
**अजो॑हवीत् । अ॒श्विना॒ । व॒र्तिका॑ । वां॒ । आ॒स्नः । यत् । सीं॒ । अमु॑ंचतं । वृक॑स्य ।**
**वि । ज॒युषा॑ । य॒य॒थुः॒ । सानु॑ । अद्रेः॑ । जा॒तं । वि॒ष्वाचः॑ । अ॒ह॒तं॒ । वि॒षेण॑ ॥ १६ ॥**

आस्नो वृकस्य । ऋ० १. ११६. १४. । इत्यर्धर्चे यदुक्तं तदत्र पूर्वार्धेन प्रतिपाद्यते । वर्तिका चटकसदृशस्य पक्षिणः स्त्री वृकेणारण्यश्वना ग्रस्ता सती हे अश्विनौ वां युवां तदाजोहवीत् [illegible] यत्सीं यदा खलु वृकस्यास्य आस्यादमुंचतं वर्तिकाममोचयतं । अपि च युवां जयुषा जयशीलेन रथेनाद्रेः पर्वतस्य सानु समुच्छ्रितप्रदेशं वि ययथुः । शत्रुभिरावेष्टितं जाहुषाख्यं स्तोतारं [illegible] तेन सहान्यैर्गंतुमशक्यं पर्वताग्रं गतवंतावित्यर्थः । तदुक्तं परिविष्टं जाहुषमित्यत्र । ऋ० १. ११६. २०. । तथा विष्वाचो विविधगतियुक्तस्यैतत्संज्ञस्यासुरस्य जातमुत्पन्नमपत्यं विषेण क्ष्वेडेनाहतं । युवां हतवंतौ । यद्वा । वर्तते प्रतिदिवसमावर्तत इति वर्तिकोषाः । वृक इति विवृतज्योतिष्कः सूर्य उच्यते । तेन ग्रस्ता सती सा हे अश्विनौ युवामजोहवीत् । आह्वयत् । यदा खलु युवां वृकस्य सूर्यस्यास्न आस्यस्थानीयान्मंडलादमुंचतं अमोचयतं । सूर्येणैकीभूतामुषसं पृथक्कृत्योदयात्पूर्वं रात्रेरपरभागे स्थापितवंतावित्यर्थः । तथा च यास्कः । आदित्योऽपि वृक उच्यते यदावृंक्ते । आह्वयदुषा अश्विनावादित्येनाभिग्रस्ता तामश्विनौ प्रमुमुचतुरित्याख्यानं । नि० ५. २१. । इति । अपि च जयुषा जयशीलेन रथेनाद्रेर्मेघस्य सानु समुच्छ्रितप्रदेशं वृष्टिचिकीर्षया विशेषेण ययथुः । युवां गतवंतौ । गत्वा च विष्वाचो विविधगतियुक्तस्य मेघस्य संबंधिना विषेणोदकेन जातमुत्पन्नं सर्वं भूतजातमहतं । अगमयतं । वृष्टिं कृतवंतावित्यर्थः ॥ अजोहवीत् । ह्वयतेर्यङ्लुगंताल्लङि तिपि यङो वेतीडागमः । अभ्यस्तस्य चेति द्विर्वचनात्पूर्वमेव ह्वयतेः संप्रसारणं । आस्नः । पद्दन्नित्यादिनास्यशब्दस्यासन्नादेशः । अल्लोपोऽन इत्यकारलोपः । जयुषा । जि जये । औणादिक उसिप्रत्ययः । विष्वाचः । विषु नानाभिमुख्येनांचतीति विग्रहः । ऋत्विगित्यादिना

क्विन्। अच इत्यकारलोपः। चाविति दीर्घः। उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वे प्राप्ते चावित्यंतोदात्तत्वं। अहतं। हन हिंसागत्योः। लङ्घदादित्वाच्छपो लुक्। अनुदात्तोपदेशेत्यादिनानुनासिकलोपः॥

शतं मेषान्वृक्ये मामहानं तमः प्रणीतमशिवेन पित्रा।
आक्षी ऋज्राश्वे अश्विनावधत्तं ज्योतिरंधाय चक्रथुर्विचक्षे ॥१७॥
शतं। मेषान्। वृक्ये। ममहानं। तमः। प्रऽनीतं। अशिवेन। पित्रा।
आ। अक्षी इति। ऋज्रऽअश्वे। अश्विनौ। अधत्तं। ज्योतिः। अंधाय। चक्रथुः।
विऽचक्षे ॥१७॥

शतं मेषान्वृक्ये चक्षदानं। ऋ॰ १. ११६. १६.। इत्यत्र यदाख्यानमवादिष्म तदत्राप्यनुसंधेयं। शतं शतसंख्याकान्मेषान्वृक्ये वृकीरूपेणावस्थितायाश्विनोर्वाहनाय रासभाय ममहानं पूजितवंतमाहारार्थं समर्पितवंतमशिवेनासुखकारिणा पित्रा स्वकीयेन जनकेन तमो दृष्टिराहित्येन कृतमांध्यं प्रणीतं प्रापितमृज्राश्वं चक्षुष्मंतमश्विनावकुरुतामिति शेषः। एतदेव विशदयति। हे अश्विनौ अक्षी पितृशापान्नष्टे चक्षुषी ऋज्राश्वे एतत्संज्ञके राजर्षावाधत्तं। पुनर्दर्शनसमर्थे अकुरुतं। एतदेवाह। अंधाय दृष्टिहीनाय ज्योतिः प्रकाशकं चक्षुः विचक्षे विविधं जगद्द्रष्टुं चक्रथुः। युवां कृतवंतौ॥ ममहानं। मह पूजायां। लिटः कानच्। संहितायां छांदसमभ्यासस्य दीर्घत्वं। प्रणीतं। प्रपूर्वान्नयतेः कर्मणि निष्ठा। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। पित्रा। उदात्तयण इति विभक्तेरुदात्तत्वं। अक्षी। अक्षिशब्दाद्द्विवचने नुमागमस्य प्राप्नोति। ई च द्विवचन इतीकारांतादेशश्च। परत्वादीकारादेशः। कृते तस्मिन् सकृद्गतपरिभाषया पुनर्नुम्न भवति। उदात्त इत्यनुवृत्तेरीकारस्योदात्तत्वं॥

शुनमंधाय भरमह्वयत्सा वृकीरश्विना वृषणा नरेति।
जारः कनीन इव चक्षदान ऋज्राश्वः शतमेकं च मेषान् ॥१८॥
शुनं। अंधाय। भरं। अह्वयत्। सा। वृकीः। अश्विना। वृषणा। नरा। इति।
जारः। कनीनःऽइव। चक्षदानः। ऋज्रऽअश्वः। शतं। एकं। च। मेषान् ॥१८॥

शुनमिति सुखनाम। भरं पोषणहेतुभूतं चक्षुरिंद्रियेण निष्पाद्यं सुखमंधाय दृष्टिहीनाय तस्मा ऋज्राश्वायेच्छंती सा वृकीर्हे अश्विनावश्वयुक्तौ कृत्स्नं जगद्व्याप्नुवंतौ वा वृषणा हे वृषणौ कामानां वर्षितारावित्येवं संबोध्य नरा नेतारावश्विनावह्वयत्। आह्वतवती। आह्वयंत्यास्तस्याः कोऽभिप्राय इति चेत् तदुच्यते। कनीन इव यथा प्राप्तयौवनः कामुको जारः पारदारिकः सन् परस्त्रियै सर्वं धनं प्रयच्छति [illegible] ऋज्राश्वो मह्यं शतमेकं चैकोत्तरशतसंख्याकान्मेषान्पौरजनानां स्वभूतानपहृत्य चक्षदानः शकलीकुर्वन् प्रादात्। तेनेदृशीं दुर्दशां प्राप्त इति॥ कनीनः। युवशब्दादिष्ठनि युवाल्पयोः कनन्यतरस्यां। पा॰ ५. ३. ६४.। इति युवशब्दस्य कनादेशः। व्यत्ययेनेष्ठनः खादेशः। यद्वा। कन दीप्तिकांतिगतिषु। अस्मादौणादिक ईनप्रत्ययः॥

मही वामूतिरश्विना मयोभूरुत स्रामं धिष्ण्या सं रिणीथः।
अथा युवामिदह्वयत्पुरंधिरागच्छतं सीं वृषणाववोभिः ॥१९॥
मही। वां। ऊतिः। अश्विना। मयःऽभूः। उत। स्रामं। धिष्ण्या। सं। रिणीथः।
अथ। युवां। इत्। अह्वयत्। पुरंऽधिः। आ। अगच्छतं। सीं। वृषणौ। अवःऽभिः॥१९॥

हे अश्विनौ वां युवयोर्मही महत्यूतिः पालनं मयोभूर्मयसः सुखस्य भावयित्री। उतापि च हे धिष्ण्या।

धिषणा स्तुतिलक्षणा वाक्। तया स्तोतव्यौ स्रामं व्याधितं पुरुषं विश्लिष्टांगमन्ध्यादिकं सं रिणीथः। संगतावयवं कुरुथः। अथापि च युवामिद्युवामेव पुरंधिर्बहुधीर्घोषा विश्पला वाह्वयत्। रोगोपशमनार्थमाह्वतवती। हे वृषणौ कामानां वर्षितारावश्विनौ अवोभी रक्षणैः सहागच्छतं। आभिमुख्येन सीमेनां प्राप्तवंतौ ॥ मही। महती। छांदसो वर्णलोपः। यद्वा। महेरौणादिक इन्। कृदिकारादक्तिन इति ङीष्। मयोभूः। भवतेरंतर्भावितण्यर्थात् क्विप्। रिणीथः। री गतिरेषणयोः। क्रैयादिकः। प्वादीनां ह्रस्व इति ह्रस्वत्वं ॥

अधेनुं दस्रा स्तर्यं१ विषक्तामपिन्वतं शयवे अश्विना गां।
युवं शचीभिर्विमदाय जायां न्यूहथुः पुरुमित्रस्य योषां ॥२०॥
अधेनुं। दस्रा। स्तर्यं। विऽसक्तां। अपिन्वतं। शयवे। अश्विना। गां।
युवं। शचीभिः। विऽमदाय। जायां। नि। ऊहथुः। पुरुऽमित्रस्य। योषां ॥२०॥

हे दस्रा दर्शनीयावश्विनौ विषक्तां विशेषेण सक्तावयवां। [illegible]मित्यर्थः। अत एव स्तर्यं निवृत्तप्रसवां अत एवाधेनुमदोग्ध्रीं एवंभूतां गां शयव एतत्संज्ञायर्षयेऽपिन्वतं। पयसापूरयतं। अपि च पुरुमित्रस्य। पुरुमित्रो नाम कश्चिद्राजा। तस्य योषां कुमारीं शचीभिरात्मीयैः कर्मभिर्विमदायैतत्संज्ञायर्षये शत्रुभिः सह योद्धुमशक्ताय युवां न्यूहथुः। विमदस्य गृहं प्रापितवंतौ ॥ स्तर्यं। स्तृञ् आच्छादने। अवितृस्तृतंत्रिभ्य [illegible]:। वा छंदसीत्यमि पूर्वस्य विकल्पनादभावे यणादेशः। उदात्तस्वरितयोर्यण इति परस्यानुदात्तस्य स्वरितत्वं। विषक्तां। षन्ज संगे। कर्मणि निष्ठा। अनिदितामिति नलोपः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। अपिन्वतं। पिवि सेचने। [illegible]। भौवादिकः। पुरुमित्रस्य। पुरूणि मित्राणि यस्य। संज्ञायां मित्राजिनयोः। पा॰ ६. २. १६५.। इति बहुव्रीहावुत्तरपदांतोदात्तत्वं ॥ ॥१६॥

यवं वृकेणाश्विना वपंतेषं दुहंता मनुषाय दस्रा।
अभि दस्युं बकुरेणा धमंतोरु ज्योतिश्चक्रथुरार्याय ॥२१॥
यवं। वृकेण। अश्विना। वपंता। इषं। दुहंता। मनुषाय। दस्रा।
अभि। दस्युं। बकुरेण। धमंता। उरु। ज्योतिः। चक्रथुः। आर्याय ॥२१॥

आर्याय विदुषे। मनुषशब्दो मनुशब्दपर्यायः। मनुषाय मनवे मनोरर्थं हे दस्रा दर्शनीयावश्विनौ वृकेण लांगलेन कर्षकैः कृष्टदेशे यवं यवाद्युपलक्षितं सर्वं धान्यजातं वपंता वापयंतौ तथेषं। अन्ननामैतत्। तत्कारणभूतं वृष्ट्युदकं च दुहंता मेघात्क्षारयंतौ तथा दस्युमुपक्षयकारिणमसुरपिशाचादिकं बकुरेण। बकुरो भासमानो वज्रः। तेनाभि धमंता। धमतिर्वधकर्मा। अभिघ्नंतौ एवं त्रिविधं कर्म कुर्वंतौ युवामुरु विस्तीर्णं ज्योतिः स्वकीयं तेजो माहात्म्यं चक्रथुः। कृतवंतौ। दर्शितवंतावित्यर्थः। यद्वा। त्रिविधकर्माचरणेनार्याय विदुषे मनवे विस्तीर्णं सूर्याख्यं ज्योतिश्चक्रथुः। कृतवंतौ। जीवन् हि सूर्यं पश्यति। तद्धेतुभूतानि त्रीणि कर्माणि युवाभ्यां कृतानीति भावः। अत्र निरुक्तं बकुरो भास्करो भयंकरो भासमानो द्रवतीति वा यवमिव वृकेणाश्विनौ निवपंतौ वृको लांगलं भवति विकर्तनादित्यादिकमनुसंधेयं। नि॰ ६. २६.॥ मनुषाय। मनेरौणादिक उषन्प्रत्ययः ॥

आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतं।
स वां मधु प्र वोचदृतायन्त्वाष्ट्रं यद्दस्रावपिकक्ष्यं वां ॥२२॥
आथर्वणाय। अश्विना। दधीचे। अश्व्यं। शिरः। प्रति। ऐरयतं।
सः। वां। मधु। प्र। वोचत्। ऋतऽयन्। त्वाष्ट्रं। यत्। दस्रौ। अपिऽकक्ष्यं। वां ॥२२॥

तद्वां नरा सनये । ऋ॰ १. ११६. १२. । इत्यत्रोक्तमाख्यानमत्रानुसंधेयं । हे अश्विनौ आथर्वणायाथर्वणः पुत्राय दधीचे दध्यङ्नाम्ने महर्षयेऽश्व्यमश्वसंबंधि शिरः प्रत्यैरयतं । प्रत्यधत्तं । तदीयं मानुषं शिरः प्रच्छिद्यान्यत्र विधायाश्व्येन शिरसा तमृषिं समयोजयतमित्यर्थः । स च वां युवाभ्यां प्रवर्ग्यविद्यां मधुविद्यां च वक्ष्यामीति पुरा कृतां प्रतिज्ञां ऋतायन् सत्यामात्मन इच्छन् मधु मधुविद्यां त्वाष्ट्रं त्वष्टुरिंद्राल्लब्धं प्र वोचत् । प्रोक्तवान् । हे दस्रौ दर्शनीयावश्विनौ वां युवयोः संबंधि यदपिकक्ष्यं छिन्नस्य यच्छिरसः कक्षप्रदेशेन पुनःसंधानभूतं प्रवर्ग्यविद्याख्यं रहस्यं तदपि वां युवाभ्यां प्रावोचदित्यर्थः ॥ दधीचे । अचतेर्ऋत्विगित्यादिना क्विन् । अनिदितामिति नलोपः । चतुर्थ्येकवचनेऽच इत्यकारलोपे चाविति दीर्घत्वं । उदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वे प्राप्ते तस्यापवादत्वेन चाविति विभक्तेः पूर्वस्योदात्तत्वं प्राप्तं । तस्याप्ययमपवादः । अंचेश्छंदस्यसर्वनामस्थानमिति विभक्त्युदात्तत्वं ॥

सदा कवी सुमतिमा चके वां विश्वा धियो अश्विना प्रावतं मे ।
अस्मे रयिं नासत्या बृहंतमपत्यसाचं श्रुत्यं रराथां ॥ २३ ॥
सदा । कवी इति । सुऽमतिं । आ । चके । वां । विश्वाः । धियः । अश्विना । प्र । अवतं । मे ।
अस्मे इति । रयिं । नासत्या । बृहंतं । अपत्यऽसाचं । श्रुत्यं । रराथां ॥ २३ ॥

हे कवी क्रांतदर्शिनौ मेधाविनावश्विनौ वां युवयोः सुमतिं कल्याणीमनुग्रहात्मिकां बुद्धिं सदा सर्वदा चके । आभिमुख्येन प्रार्थये । मे मदीयानि विश्वा धियः सर्वाणि कर्माणि युवां प्रावतं । प्रकर्षेण रक्षतं । अपि चास्मे अस्मभ्यं हे नासत्यावश्विनौ बृहंतं महांतमपत्यसाचमपत्यैः पुत्रादिभिः समवेतं श्रुत्यं प्रशंसनीयमुत्कृष्टं रयिं धनं रराथां । प्रयच्छतं ॥ चके । कै गै शब्दे । व्यत्ययेनात्मनेपदं । लिट्युत्तमैकवचने रूपं । अस्मे । सुपां सुलुगिति चतुर्थीबहुवचनस्य शेआदेशः । अपत्यसाचं । अपत्यैः सह सचते संगच्छत इत्यपत्यसाच् । छांदसो खिः । श्रुत्यं । श्रुतिः स्तुतिः । तत्र भवं श्रुत्यं । भवे छंदसीति यत् । यतोऽनाव इत्याद्युदात्तत्वं । रराथां । रा दाने । लोटि व्यत्ययेनात्मनेपदं । बहुलं छंदसीति शपः श्लुः ॥

हिरण्यहस्तमश्विना रराणा पुत्रं नरा वध्रिमत्या अदत्तं ।
त्रिधा ह श्यावमश्विना विकस्तमुज्जीवस ऐरयतं सुदानू ॥ २४ ॥
हिरण्यऽहस्तं । अश्विना । रराणा । पुत्रं । नरा । वध्रिऽमत्याः । अदत्तं ।
त्रिधा । ह । श्यावं । अश्विना । विऽकस्तं । उत् । जीवसे । ऐरयतं । सुदानू इति सुऽदानू ॥ २४ ॥

रराणा रममाणौ दातारौ वा नरा नेतारौ हे अश्विनौ हिरण्यहस्तं नाम पुत्रं वध्रिमत्या एतत्संज्ञायै ब्रह्मवादिन्या अदत्तं । प्रायच्छतं ह । अपि च हे सुदानू शोभनदानावश्विनौ त्रिधा त्रेधा विकस्तं विच्छिन्नं श्यावमृषिं जीवसे जीवितुमुदैरयतं । असुरैस्त्रेधा खंडितं शरीरं पुनरेकीकृत्योद्गमयतमित्यर्थः ॥ रराणा । रमतेः शानचि बहुलं छंदसीति शपः श्लुः । व्यत्ययेन मकारस्यात्वं । रातेर्वा व्यत्ययेन शानच् । पूर्ववत् श्लुः । वध्रिमत्याः । चतुर्थ्यर्थे बहुलं छंदसीति षष्ठी । जीवसे । जीव प्राणधारणे । तुमर्थे सेसेनित्यसेप्रत्ययः ॥

एतानि वामश्विना वीर्याणि प्र पूर्व्याण्यायवोऽवोचन् ।
ब्रह्म कृण्वंतो वृषणा युवभ्यां सुवीरासो विदथमा वदेम ॥ २५ ॥
एतानि । वां । अश्विना । वीर्याणि । प्र । पूर्व्याणि । आयवः । अवोचन् ।
ब्रह्म । कृण्वंतः । वृषणा । युवऽभ्यां । सुऽवीरासः । विदथं । आ । वदेम ॥ २५ ॥

अश्विना हे अश्विनौ वां युवयोः संबंधीनि पूर्व्याणि प्रत्नान्येतानीदानीं मयोक्तानि वीर्याणि वीरकर्माण्यायवो मनुष्या मदीयाः पित्रादयः प्रावोचन्। उक्तवंतः। वयं च हे वृषणा कामाभिवर्षकावश्विनौ युवाभ्यां ब्रह्म मंत्रात्मकं स्तोत्रं कृण्वंतः कुर्वंतः सुवीरासः सुवीराः शोभनैर्वीरैः पुत्रादिभिरुपेताः संतो विदथं यज्ञमा वदेम। आभिमुख्येन स्तुतीरुच्चारयाम। यद्वा। विदथं वेदयंतमतिथिं तदपेक्षितप्रदानेना वदेम। आभिमुख्येन प्रियपूर्विकां वाचमुच्चारयाम ॥ कृण्वंतः। कृवि हिंसाकरणयोश्च। इदित्वान्नुम्। लटः शतृ। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। अकारांतादेशश्च। अतो लोपे सति स्थानिवद्भावाल्लघूपधगुणाभावः। सुवीरासः। शोभना वीरा येषां ते तथोक्ताः। आज्जसेरसुक्। वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं। विदथं। विद ज्ञाने। रुविदिभ्यां कि-दित्यथप्रत्ययः ॥ ॥१७॥

आ वामित्येकादशर्चं तृतीयं सूक्तं कक्षीवत आर्षं त्रैष्टुभमाश्विनं। तथा चानुक्रांतं। आ [illegible]दशेति ॥ पूर्वसूक्ताभ्यां सह प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

**आ वां रथो अश्विना श्येनपत्वा सुमृळीकः स्ववाँ यात्वर्वाङ्।**
**यो मर्त्यस्य मनसो जवीयान्त्रिवंधुरो वृषणा वातरंहाः ॥१॥**
**आ। वां। रथः। अश्विना। श्येनऽपत्वा। सुऽमृळीकः। स्वऽवान्। यातु। अर्वाङ्।**
**यः। मर्त्यस्य। मनसः। जवीयान्। त्रिऽवंधुरः। वृषणा। वातऽरंहाः ॥१॥**

हे अश्विनौ वां युवयोः स्वभूतो रथोऽर्वाङस्मदभिमुखमा यातु। आगच्छतु। कीदृशो रथः। श्येनपत्वा। श्येना इत्यश्वनाम। शंसनीयगमनैरश्वैः पतन् गच्छन्। यद्वा। श्येनः पक्षी। स इव शीघ्रं पतन्। सुमृळीकः शोभनसुखयुक्तः स्ववान् धनवान्। हे वृषणौ कामानां वर्षितारावश्विनौ यो युष्मदीयो रथो मर्त्यस्य मनुष्यस्य मनसो जवीयानतिशयेन वेगवान्। तद्यथा वेगेन कृत्स्नं जगद्व्याप्नोति ततोऽप्यतिशयेन क्षणमात्रादेव सर्वं जगत्पर्यटतीत्यर्थः। त्रिवंधुरः। वंधुरं वेष्टितं सारथेः स्थानं। त्रिप्रकारेण वंधुरेण युक्तः वातरंहा वातस्य वायो रंहा वेग इव वेगो यस्य स तथोक्तः। अनेना[illegible]। स रथ इति पूर्वत्रान्वयः ॥ श्येनपत्वा। पत्लृ गतौ। अन्येभ्योऽपि दृश्यंत इति वनिप्। दासीभारादिः। यद्वा। दृशिग्रहणस्य विध्यंतरोपसंग्रहार्थत्वाद्भावे वनिप्। ततो बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। जवीयान्। जवोऽस्यास्तीति जववान्। अतिशयेन जववान्। आतिशायनिक ईयसुन्। विन्मतोर्लुक्। टेरिति टिलोपः ॥

**त्रिवंधुरेण त्रिवृता रथेन त्रिचक्रेण सुवृता यातमर्वाक्।**
**पिन्वतं गा जिन्वतमर्वतो नो वर्धयतमश्विना वीरमस्मे ॥२॥**
**त्रिऽवंधुरेण। त्रिऽवृता। रथेन। त्रिऽचक्रेण। सुऽवृता। आ। यातं। अर्वाक्।**
**पिन्वतं। गाः। जिन्वतं। अर्वतः। नः। वर्धयतं। अश्विना। वीरं। अस्मे इति ॥२॥**

त्रिवंधुरेण। वंधुरं सारथिस्थानं। त्रिप्रकारवंधुरोपेतेन त्रिवृता त्रिधा वर्तमानेन त्रिचक्रेण चक्रत्रयोपेतेन सुवृता शोभनं गच्छता रथेनार्वागस्मदभिमुखमा यातं। आगच्छतं। आगत्य चास्मदीया गाः पिन्वतं। पयसा पूरयतं। नोऽस्माकमर्वतोऽश्वान् जिन्वतं। प्रीणयतं। अपि च हे अश्विनौ अस्मे अस्माकं वीरं पुत्रादिकं वर्धयतं। प्रवृद्धं कुरुतं ॥ त्रिचक्रेण। त्रीणि चक्राणि यस्य स तथोक्तः। [illegible] छंदस्युपसंख्यानं। पा० ६. २. १९९. १.। इत्युत्तरपदांतोदात्तत्वं ॥

**प्रवद्यामना सुवृता रथेन दस्राविमं शृणुतं श्लोकमद्रेः।**
**किमंग वां प्रत्यवर्तिं गमिष्ठाहुर्विप्रासो अश्विना पुराजाः ॥३॥**

प्रवत्ऽयामना । सुऽवृता । रथेन । दस्रौ । इमं । शृणुतं । श्लोकं । अद्रेः ।
किं । अंग । वां । प्रति । अवर्तिं । गमिष्ठा । आहुः । विप्रासः । अश्विना । पुराऽजाः ॥३॥

हे दस्रौ दर्शनीयावश्विनौ प्रवद्यामना प्रकृष्टगमनेन शीघ्रगामिना सुवृता शोभनवर्तनेन रथेनागत्याद्रेरादरं कुर्वतः स्तोतुरिमं श्लोकं स्तुतिलक्षणामिमां वाचं शृणुतं । अंगाश्विना हे अश्विनौ पुराजाः पूर्वजाताश्चिरंतना विप्रासो मेधाविनो वां युवामवर्तिं स्तोतॄणां दारिद्र्यं प्रति तत्परिहर्तुं गमिष्ठा गंतृतमावाहुः । कथयंति । किंशब्दः प्रदर्शनफलप्रश्ने वर्तते । किं न कथयंति । कथयंत्येव सर्वे । तथा सत्यागंतव्यमिति ॥ प्रवद्यामना । स्तोपवृष्टे धात्वर्थे वर्तमानात्प्रशब्दादुपसर्गाच्छंदसि धात्वर्थे । पा० ५. १. ११८. । इति वतिः । या प्रापणे । आतो मनिन्निति बहुलवचनाद्भावे मनिन् । ततो बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं । अद्रेः । दृङ् आदरे । आङ्पूर्वादस्मादौणादिकः किप्रत्यय आङो ह्रस्वश्च । गमिष्ठा । गंतृशब्दात्तुश्छंदसीतीष्ठन् । तुरिष्ठेमेयःस्विति तृलोपः । सुपां सुलुगिति विभक्तेराकारः । आहुः । प्रत्ययस्वरः । पादादित्वान्निघाताभावः ॥

आ वां श्येनासो अश्विना वहंतु रथे युक्तास आशवः पतंगाः ।
ये अप्तुरो दिव्यासो न गृध्रा अभि प्रयो नासत्या वहंति ॥४॥
आ । वां । श्येनासः । अश्विना । वहंतु । रथे । युक्तासः । आशवः । पतंगाः ।
ये । अप्ऽतुरः । दिव्यासः । न । गृध्राः । अभि । प्रयः । नासत्या । वहंति ॥४॥

हे अश्विनौ रथे युक्तासः सारथिना वहनप्रदेशे योजिता आशवो व्याप्नुवंतः पतंगाः पतनसमर्थाः श्येनासः शंसनीयगमना अश्वा वां युवामा वहंतु । अस्मत्समीपमानयंतु । येऽश्वा अप्तुर आप इव त्वरोपेता दिव्यासो न गृध्रा अंतरिक्षे वर्तमाना गृध्राख्याः पक्षिण इव शीघ्रं गच्छंतो हे नासत्यौ युवां प्रयो हविर्लक्षणमन्नमभिलक्ष्य वहंति प्रापयंति । तादृशा इति पूर्वत्र संबंधः ॥ अप्तुरः । तुर त्वरणे । अप्शब्दोपपदादस्मात् क्विप्चेति क्विप् ॥

आ वां रथं युवतिस्तिष्ठदत्र जुष्ट्वी नरा दुहिता सूर्यस्य ।
परि वामश्वा वपुषः पतंगा वयो वहंत्वरुषा अभीके ॥५॥
आ । वां । रथं । युवतिः । तिष्ठत् । अत्र । जुष्ट्वी । नरा । दुहिता । सूर्यस्य ।
परि । वां । अश्वाः । वपुषः । पतंगाः । वयः । वहंतु । अरुषाः । अभीके ॥५॥

हे नरा नेतारावश्विनौ युवतिस्तरुणी सूर्यस्य दुहिता जुष्ट्वी प्रीता सती वां युवयोरत्रेमं रथमा तिष्ठत् । आरूढवती । तया सहितौ वां युवामश्वा अभीके गृहसमीपे तं रथं परि वहंतु । परिप्रापयंतु । कीदृशा अश्वाः । वपुषः । वपुरिति रूपस्य शरीरस्य वा नामधेयं । तद्वंतः । छांदसो मत्वर्थीयस्य लोपः । पतंगा उत्पतनसमर्थाः वयो गच्छंतः अरुषा आरोचमाना हिं[illegible] वा ॥ अत्र । इतराभ्योऽपि दृश्यंते । पा० ५. ३. १४. । इति [illegible]बदावयोगेऽपीदंशब्दाद्विभक्त्यर्थे त्रल्प्रत्ययः । जुष्ट्वी । जुषी प्रीतिसेवनयोः । औणादिकः क्वुप्रत्ययः । वोतो [illegible]णवचनादिति ङीष् ॥ ॥१८॥

उद्वंदनमैरतं दंसनाभिरुद्रेभं दस्रा वृषणा शचीभिः ।
निष्टौग्र्यं पारयथः समु[illegible]वानं चक्रथुर्युवानं ॥६॥
उत् । वंदनं । ऐरतं । दंसनाभिः । उत् । रेभं । दस्रा । वृषणा । शचीभिः ।
निः । तौग्र्यं । पारयथः । समुद्रात् । पुनरिति । च्यवानं । चक्रथुः । युवानं ॥६॥

हे अश्विनौ वंदनमेतत्संज्ञमृषिं दंसनाभिरात्मीयैः कर्मभिः कूपादुदैरतं। उदैरयतं। उद्गमयतं। हे दस्रा दर्शनीयौ वृषणा कामानां वर्षितारावश्विनौ शचीभिः कर्मभी रेभमेतत्संज्ञमृषिं दश रात्रीर्नवाहानि च कूपे निवसंतं तस्मादुदैरयतं। उदतारयतं। तथा तौग्र्यं तुग्रस्य पुत्रं भुज्युं समुद्रे निमग्नमात्मीयाभिर्नौभिरश्विेश्च समुद्रान्निष्पारयथः। तीरदेशं प्रापितवंतौ। तथा च्यवानं च्यवनमृषिं जीर्णं पुनर्युवानं यौवनोपेतं चक्रथुः। कृतवंतौ॥ ऐरतं। ईर गतौ कंपने च। लंतान्लङि च्छंदस्युभयथेति शप आर्धधातुकत्वात्सेरनिटीति णिलोपः॥

युवमत्रयेऽवनीताय तप्तमूर्जमोमानमश्विनावधत्तं।
युवं कण्वायापिरिप्ताय चक्षुः प्रत्यधत्तं सुष्टुतिं जुजुषाणा॥७॥
युवं। अत्रये। अवऽनीताय। तप्तं। ऊर्जं। ओमानं। अश्विनौ। अधत्तं।
युवं। कण्वाय। अपिऽरिप्ताय। चक्षुः। प्रति। अधत्तं। सुऽस्तुतिं। जुजुषाणा॥७॥

हे अश्विनौ युवं युवामवनीताय शतद्वारे पीडायंत्रगृहेऽवस्तान्नीतायात्रये तप्तं पीडार्थं प्रक्षिप्तं तुषाग्निं शीतेनोदकेनावारयेथां। अपि चास्मा अत्रय ओमानं सुखकरमूर्जं रसवदन्नमधत्तं। प्रायच्छतं। तथा सुष्टुतिं शोभनां स्तुतिं जुजुषाणा सेवमानौ युवामपिरिप्तायासुरैर्ब्राह्मण्यपरीक्षार्थमिहासीनः सन् व्युष्टामुषसं जानीहीति त्यंधकारवति गृहे प्रवेशिताय कण्वायर्षये चक्षुर्व्युष्टाया उषसः प्रकाशकं वीणाशब्दं प्रत्यधत्तं। कृतवंतौ। यद्वा। अपिरिप्तायापिलिप्ताय पटलेन पिहितदृष्टय एवंविधाय कण्वाय चक्षुरिंद्रियं प्रत्यधत्तं। प्रत्यस्थापयतं॥ ओमानं। अवतेरौणादिको मनिः। ज्वरत्वरेत्यादिना वकारस्योपधायाश्च ऊठ्। गुणः। अपिरिप्ताय। लिप उपदेहे। अस्मात्कर्मणि निष्ठा। कपिलकादित्वाल्लत्वविकल्पः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। जुजुषाणा। जुषी प्रीतिसेवनयोः। छांदसो लिट्। लिटः कानज्वा। सुपां सुलुगिति विभक्तेराकारः॥

युवं धेनुं शयवे नाधितायापिन्वतमश्विना पूर्व्याय।
अमुंचतं वर्तिकामंहसो निः प्रति जंघां विश्पलाया अधत्तं॥८॥
युवं। धेनुं। शयवे। नाधिताय। अपिन्वतं। अश्विना। पूर्व्याय।
अमुंचतं। वर्तिकां। अंहसः। निः। प्रति। जंघां। विश्पलायाः। अधत्तं॥८॥

अश्विना हे अश्विनौ युवं युवां पूर्व्याय पुरातनाय नाधिताय याचमानाय शयव एतत्संज्ञायर्षये धेनुं निवृत्तप्रसवामदोग्ध्रीमपिन्वतं। पयसासिंचतं। सर्वदा पयस्विनीमकुरुतमित्यर्थः। अपि च वर्तिकां वृकेण ग्रस्तां चटकसदृशीं शकुनिमंहसो वृकाख्यलक्षणात्पापान्निरमुंचतं। निरमोचयतं। यद्वा। पुनःपुनर्वर्तत इति वर्तिकोषाः। तामादित्येनाभिग्रस्तां युवाममोचयतं। तथा विश्पलायै संग्रामे छिन्नजंघाया अगस्त्यपुरोहितस्य खेलस्य संबधिन्या एतत्संज्ञायै स्त्रिया आयसीं जंघां प्रत्यधत्तं। प्रत्यस्थापयतं। समयोजयतमित्यर्थः॥

युवं श्वेतं पेदव इंद्रजूतमहिहनमश्विनादत्तमश्वं।
जोहूत्रमर्यो अभिभूतिमुग्रं सहस्रसां वृषणं वीड्वंगं॥९॥
युवं। श्वेतं। पेदवे। इंद्रऽजूतं। अहिऽहनं। अश्विना। अदत्तं। अश्वं।
जोहूत्रं। अर्यः। अभिऽभूतिं। उग्रं। सहस्रऽसां। वृषणं। वीळुऽअंगं॥९॥

अश्विना हे अश्विनौ पेदवे पेदुनाम्ने राज्ञे युवं युवां श्वेतवर्णमश्वमदत्तं। प्रायच्छतं। कीदृशं। इंद्रजूतमिंद्रेण युवाभ्यां गमितं। दत्तमित्यर्थः। अहिहनं शत्रूणां हंतारं जोहूत्रमतिशयेन संग्रामेष्वाह्वातारं अर्योऽरेः शत्रोरभिभूतिमभिभावुकं उग्रमुद्गूर्णं। वीर्यवंतमित्यर्थः। सहस्रसां सहस्रसंख्याकस्य धनस्य संभक्तारं

दातारं वा वृषणं सेक्तारं। युवानमित्यर्थः। वीळ्वंगं दृढांगं ॥ इंद्रजूतं। जु इति सौत्रो धातुर्गत्यर्थः। अस्मादंतर्भावितण्यर्थात्कर्मणि निष्ठा। तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं। जोहूत्रं। ह्वयतेर्यङ्लुगंतात्[illegible]त्क-स्त्रप्रत्ययः। प्रत्ययस्य पित्त्वादनुदात्तत्वे धातुस्वरः शिष्यते। अर्यः। अरिशब्दात् षष्ठ्येकवचने जसादिषु छंदसि वावचनमिति घेर्ङितीति गुणस्य विकल्पितत्वादभावे यणादेशः। उदात्तयण इति विभक्तेरुदात्तत्वं। अभिभूतिं। अभिभूयतेऽनेनेत्यभिभूतिः। करणे क्तिन्। तादौ चेति गतेः प्रकृतिस्वरत्वं। सहस्रसां। सनोतेः सनतेर्वा [illegible] विट्। विड्वनोरनुनासिकस्यादित्यात्वं ॥

ता वां नरा स्ववसे सुजाता हवामहे अश्विना नाधमानाः।

आ न उप वसुमता रथेन गिरो जुषाणा सुविताय यातं ॥१०॥

ता। वां। नरा। सु। अवसे। सुऽजाता। हवामहे। अश्विना। नाधमानाः।

आ। नः। उप। वसुऽमता। रथेन। गिरः। जुषाणा। सुविताय। यातं ॥१०॥

नरा नेतारौ हे अश्विनौ सुजाता शोभनजन्मानौ ता वां तौ युवां नाधमाना धनं याचमाना वयं स्तोतारोऽवसे रक्षणार्थं सु हवामहे। शोभनमाह्वयामहे। गिरः स्तुतीर्जुषाणा सेवमानौ युवां वसुमता धनयुक्तेन रथेन नोऽस्मानुपा यातं। उपागच्छतं। किमर्थं। सुविताय सुष्ठु प्राप्तव्याय धनाय सुखाय वा ॥ सुजाता। शोभनं जातं जन्म ययोस्तौ सुजातौ। सुपां सुलुगिति विभक्तेराकारः। नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं। नाधमानाः। नाधृ याच्ञायां। जुषाणा। जुषी प्रीतिसेवनयोः। ताच्छीलिकश्चानश्। तुदादित्वाच्छः। पूर्ववद्विभक्तेराकारः। सुविताय। सुपूर्वादेतेः कर्मणि निष्ठा। तन्वादित्वादुवङ्। सूपमानात् क्त इत्युत्तरपदांतोदात्तत्वं ॥

आ श्येनस्य जवसा नूतनेनास्मे यातं नासत्या सजोषाः।

हवे हि वामश्विना रातहव्यः शश्वत्तमाया उषसो व्युष्टौ ॥११॥

आ। श्येनस्य। जवसा। नूतनेन। अस्मे इति। यातं। नासत्या। सऽजोषाः।

हवे। हि। वां। अश्विना। रातऽहव्यः। शश्वत्ऽतमायाः। उषसः। विऽउष्टौ ॥११॥

हे नासत्यावश्विनौ सजोषाः सजोषसौ समानप्रीतियुक्तौ श्येनस्य शंसनीयं गच्छतोऽश्वस्य नूतनेन नवतरेण प्रत्ययेण जवसा वेगेन सहितौ युवामस्मे अस्माना यातं। आगच्छतं। अश्विना हे अश्विनौ रातहव्यो वां युवाभ्यां दातव्येन हविषा युक्तः सन् शश्वत्तमायाः कालात्मकतया नित्याया उषसो व्युष्टौ विवासनसमये वां युवां हवे। आह्वयामि। हिर्हेतौ। हि यस्मादेवं तस्मादा यातमित्यर्थः॥ अस्मे। सुपां सुलुगिति शसः शेआदेशः। सजोषाः। तेनैव द्विवचनस्य सुआदेशः। हवे। ह्वेञो लडुत्तमैकवचने बहुलं छंदसीति संप्रसारणं। शब्गुणावादेशाः। [illegible]। उत्तमशश्वत्तमौ सर्वत्र। पा० ६.१.१६०.*। इत्युंछादिषु पाठादंतोदात्तत्वं ॥ ॥१९॥

आ वां रथमिति दशर्चं चतुर्थं सूक्तं दैर्घतमसस्य कक्षीवत आर्षं जागतमाश्विनं। तथा चानुक्रांतं। आ वां रथं दश जागतमिति ॥ प्रातरनुवाकाश्विने क्रतौ जागते छंदसीदं सूक्तमाश्विनशस्त्रे च। तथा च सूचितं। आ वां रथमभूदिदं यो वां परिज्मेति चीणि। आ० ४.१५.। इति ॥

आ वां रथं पुरुमायं मनोजुवं जीराश्वं यज्ञियं जीवसे हुवे।

सहस्रकेतुं वनिनं शतद्वसुं श्रुष्टीवानं वरिवोधामभि प्रयः ॥१॥

आ। वां। रथं। पुरुऽमायं। मनःऽजुवं। जीरऽअश्वं। यज्ञियं। जीवसे। हुवे।

सहस्रऽकेतुं। वनिनं। शतत्ऽवसुं। श्रुष्टीऽवानं। वरिवःऽधां। अभि। प्रयः ॥१॥

हे अश्विनौ वां युवयो रथं जीवसे जीवनार्थं प्रयो हविर्लक्षणमन्नमभिलक्ष्या हुवे। आह्वयामि। कीदृशं। पुरुमायं बहुविधाश्चर्यं बहुविधकर्माणं वा मनोजुवं मन इव शीघ्रं गच्छंतं जीराश्वं जववदश्वोपेतं यज्ञियं यज्ञेभ्याह्वातुमर्हं सहस्रकेतुं अनेकध्वजं सहस्रस्य धनस्य केतयितारं ज्ञापयितारं वा वनिनं। वनमित्युदकनाम। तद्वंतं शतद्वसुं शतसंख्याकैर्धनैर्युक्तं श्रुष्टीवानं। श्रुष्टीति चिप्रनाम। चिप्रं संभजमानं। यद्वा। सुखवंतं। वरिवोधां। वरिव इति धननाम। वरिवसो धनस्य दातारं॥ पुरुमायं। बहुव्रीहौ चिचक्रादित्वादंतोदात्तत्वं। यद्वा। तत्पूर्वादर्शआदित्वादच्। जीराश्वं। जु इति गत्यर्थः सौत्रो धातुः। जोरी च। उ० २. २३.। इति रगोकारांतादेशश्च। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वं। यज्ञियं। यज्ञर्त्विग्भ्यां घखञावित्यर्हार्थे घप्रत्ययः। हुवे। ह्वेञो लटि बहुलं छंदसीति संप्रसारणं। लुगित्यनुवृत्तौ बहुलं छंदसीति शपो लुक्। उवङ्। शतद्वसुं। शतवसुं। छांदसस्तकारोपजनः॥

ऊर्ध्वा धी॒तिः प्रत्य॑स्य॒ प्रया॑म॒न्यधा॑यि॒ शस्म॒न्त्सम॑यंत॒ आ दिश॑ः।
स्वदा॑मि घ॒र्मं प्रति॑ यंत्यू॒तय॒ आ वा॑मू॒र्जानी॒ रथ॑मश्विनारुहत्॥ २॥
ऊ॒र्ध्वा। धी॒तिः। प्रति॑। अ॒स्य॒। प्रऽया॑मनि। अधा॑यि। शस्म॑न्। सं। अ॒यंत॒। आ। दिश॑ः।
स्वदा॑मि। घ॒र्मं। प्रति॑। यं॒ति॒। ऊ॒तय॑ः। आ। वा॒ं। ऊ॒र्जानी॑। रथ॑ं। अ॒श्वि॒ना॒। अ॒रु॒ह॒त्॥ २॥

अस्य रथस्य प्रयामनि प्रयाणे प्रगमने सति शस्मन् अश्विनोः शंसने स्तवने धीतिरस्मदीया बुद्धिरूर्ध्वोन्मुखा प्रत्यधायि। प्रत्यस्थायि। तदनंतरं दिशो देष्टव्याः स्तुतयोऽपि समयंते। अश्विभ्यां संगच्छंते। आकारः समुच्चये। अहं च स्तोता घर्मं महावीरस्थं यद्वा चरणशीलाज्यादिकं हविः स्वदामि। स्वादूकरोमि। ऊतयोऽवितारो रक्षका ऋत्विजश्च प्रति यंति। घर्मं प्रति गच्छंति संस्कारार्थं। अपि च हे अश्विनौ वां युवयो रथमूर्जानी सूर्यस्य दुहितारुहत्। आरूढवती॥ प्रयामनि। या प्रापणे। आतो मनिन्निति छत्वसुटो बहुलमिति बहुलवचनाद्भावे मनिन्। दासीभारादित्वात्पूर्वपदप्रकृतिस्वरत्वं। शस्मन्। शंसु स्तुतौ। अन्येभ्योऽपि दृश्यंत इति मनिन्। दृशिग्रहणस्य विध्यंतरोपसंग्रहार्थत्वादुपधानकारलोपः। सुपां सुलुगिति सप्तम्या लुक्। अयंते। अय पय गतौ। भौवादिकोऽनुदात्तेत्। ऊतयः। क्तिच्क्तौ च संज्ञायामित्यवतेः कर्तरि क्तिच्। ज्वरत्वरेत्यादिना वकारोपधयोरूठ्। अरुहत्। छंदसि कृमृदृरुहिभ्य इति च्लेरङादेशः॥

सं यन्मि॒थः प॑स्पृधा॒नासो॒ अग्म॑त शु॒भे म॒खा अमि॑ता जा॒यवो॒ रणे॑।
यु॒वोरह॑ प्रव॒णे चे॑किते॒ रथो॒ यद॑श्विना॒ वह॑थः सू॒रिमा वर॑ं॥ ३॥
सं। यत्। मि॒थः। प॒स्पृ॒धा॒नास॑ः। अग्म॑त। शु॒भे। म॒खाः। अमि॑ताः। जा॒यव॑ः। रणे॑।
यु॒वोः। अह॑। प्र॒व॒णे। चे॒कि॒ते॒। रथ॑ः। यत्। अ॒श्वि॒ना॒। वह॑थः। सू॒रिं। आ। वर॑ं॥ ३॥

मखा मखवंतो यज्ञोपेता अमिता अपरिमिता जायवो जयशीला मनुष्या रणे संग्रामे शुभे शोभनाय धनाय तदर्थं मिथः पस्पृधानासोऽन्योन्यं स्पर्धमाना यद्यदा समग्मत संगच्छंते तदानीं हे अश्विना अश्विनौ युवोरह युवोरेव रथः प्रवणे प्रकर्षेण संभजनीये भूतले चेकिते। ज्ञायते। देवेषु मध्ये युवामेव रक्षणार्थं शीघ्रं रथेनागच्छथ इत्यर्थः। यद्येन रथेन सूरिं स्तोतारं प्रति वरं श्रेष्ठं धनमावहथः प्रापयथः। स रथ इत्यर्थः॥ पस्पृधानासः। स्पर्ध संघर्षे। छांदसो लिट्। तस्य लिटः कानजादेशः। छांदसं रेफस्य संप्रसारणमकारलोपश्च। अग्मत। गमेश्छांदसो लङ्। समो गम्यृच्छीत्यादिनात्मनेपदं। बहुलं छंदसीति शपो लुक्। झस्यादादेशः। गमहनेत्युपधालोपः। मखाः। मखो यज्ञः। अर्शआदित्वादच्। जायवः। जि जये। कृवापाजीत्यादिनोण्। चेकिते। कित ज्ञाने। अस्मायडंताच्छांदसो वर्तमाने लिट्। अतोलोपयलोपौ। यत्। सुपां सुलुगिति तृतीयाया लुक्॥

युवं भुज्युं भुरमाणं विभिर्गतं स्वयुक्तिभिर्निवहंता पितृभ्य आ ।
यासिष्टं वर्तिर्वृषणा विजेन्यं१ दिवोदासाय महि चेति वामवः ॥ ४ ॥

युवं । भुज्युं । भुरमाणं । विऽभिः । गतं । स्वयुक्तिऽभिः । निऽवहंता । पितृऽभ्यः । आ ।
यासिष्टं । वर्तिः । वृषणा । विऽजेन्यं । दिवःऽदासाय । महि । चेति । वां । अवः ॥ ४ ॥

वृषणा कामानां वर्षितारौ हे अश्विनौ युवं युवां भुरमाणं विभिरश्वैर्भ्रियमाणं गतं समुद्रे निमग्नं भुज्युं तुग्रपुत्रं स्वयुक्तिभिः स्वयमेव युज्यमानैरश्वैर्नौविशेषैश्च निवहंता नितरां वहंतौ पितृभ्य आ । आङ् मर्यादायां । यत्र पितरस्तुग्रादय आसते तावत्पर्यंतमित्यर्थः । विजेन्यमिति दूरस्थं ब्रुवते । दूरे वर्तमानं वर्तिस्तुग्रस्य गृहं प्रति यासिष्टं । अगच्छतं । अपि च दिवोदासाय राज्ञे कृतं युवयोः संबंध्यवो रक्षणं शंबरहननरूपं महि महद्गंभीरं चेति । अस्माभिर्ज्ञायते ॥ भुरमाणं । डुभृञ् धारणपोषणयोः । कर्मणि लटः शानच् । व्यत्ययेन शः । बहुलं छंदसीत्युत्वं । पितृभ्य आ । मर्यादायामाङः कर्मप्रवचनीयसंज्ञा । पा० १. ४. ८९. । पंचम्यपाङ्परिभिः । पा० २. ३. १०. । इति पंचमी । यासिष्टं । या प्रापणे । यमरमनमातां सक्च । पा० ७. २. ७३. । इति सगागमः । सिच इडागमः । विजेन्यं । विजनो दूरदेशः । तत्र भवं विजेन्यं । भवे छंदसीति यत् । तित्स्वरित इति स्वरितत्वं ॥

युवोरश्विना वपुषे युवायुजं रथं वाणी येमतुरस्य शर्ध्यं ।
आ वां पतित्वं सख्याय जग्मुषी योषावृणीत जेन्या युवां पती ॥ ५ ॥

युवोः । अश्विना । वपुषे । युवाऽयुजं । रथं । वाणी इति । येमतुः । अस्य । शर्ध्यं ।
आ । वां । पतिऽत्वं । सख्याय । जग्मुषी । योषा । अवृणीत । जेन्या । युवां । पती इति ॥ ५ ॥

अश्विना हे अश्विनौ युवोर्युवयोर्वाणी वननीयौ प्रशस्यावश्वौ युवायुजं युवाभ्यां युज्यमानं रथमाजिधावनसमयेऽस्य रथस्य यच्छर्ध्यं प्राप्यमादित्याख्यमवधिभूतं लक्ष्यं वपुषे शोभार्थं तद्येमतुः । सर्वेभ्यो देवेभ्यः पूर्वं प्रापयामासतुः । तदनंतरं चा जग्मुष्यागतवती जेन्याजिधावनेन जीयमाना योषा सूर्या सख्याय सखित्वाय युवां युवयोः पतित्वमवृणीत । कथमिति । मम युवामेव पती भर्तारावितिति ॥ युवोः । षष्ठीद्विवचने योऽचीति यत्वस्य सर्वविधीनां छंदसि विकल्पितत्वादभावे शेषे लोप इति दकारलोपः । अतो गुण इति पररूपत्वं । युवायुजं । युवावौ द्विवचन इति द्व्यर्थाभिधायकस्य युष्मच्छब्दस्याविभक्तावपि व्यत्ययेन युवादेशः । शर्ध्यं । शृधु प्रसहने । अस्मादृयंतादचो यदिति यत् । यतोऽनाव इत्याद्युदात्तत्वं । जग्मुषी । गमेर्लिटः क्वसुः । उगितश्चेति ङीप् । वसोः संप्रसारणमिति संप्रसारणं । गमहनेत्युपधालोपः । जेन्या । जि जये । औणादिक एन्यप्र-[illegible] ॥ ॥ २० ॥

युवं रेभं परिषूतेरुरुष्यथो हिमेन घर्मं परितप्तमत्रये ।
युवं शयोरवसं पिप्यथुर्गवि प्र दीर्घेण वंदनस्तार्यायुषा ॥ ६ ॥

युवं । रेभं । परिऽसूतेः । उरुष्यथः । हिमेन । घर्मं । परिऽतप्तं । अत्रये ।
युवं । शयोः । अवसं । पिप्यथुः । गवि । प्र । दीर्घेण । वंदनः । तारि । आयुषा ॥ ६ ॥

हे अश्विनौ युवं युवां रेभमृषिं परिषूतेः परितः प्रेरकादुपद्रवात्कूपपतनाद्योरुष्यथः । रक्षथः । उरुष्यती रक्षाकर्मेति यास्कः । नि० ५. २३. । तथात्रय ऋषये परितप्तं परितस्तप्तं घर्ममसुरैः पीडार्थं प्रक्षिप्तं दीप्यमानं तुषाग्निं हिमेन शीतेनोदकेनावारयेथां । यद्वा । हविषामत्रये भक्षयित्रेऽग्नये परितप्तं सूर्यकिरणैः संतप्तं घर्मं । अहर्नामैतत् । अहर्हिमेन वृष्ट्युदकेन हविःसंपादकव्रीह्याद्युत्पत्त्यर्थमवारयेथां । अपि च [illegible] तत्संबंधिषु गोषु वे

निवृत्तप्रसवायां धेनाववसं रक्षकं पयो युवं युवां पिप्यथुः। प्रवर्धितवंतौ। तथा जीर्णांगो वंदन ऋषिर्दीर्घेणा-युषा प्र तारि। युवाभ्यां प्रवर्धितः। प्रपूर्वात्तरतिर्वर्धनार्थः॥ अवसं। अवतेरौणादिकोऽसच्। पिप्यथुः। प्यायी वृद्धौ। व्यत्ययेन परस्मैपदं। लिड्यङोश्च। पा० ६. १. २९.। इति पीभावः॥

युवं वंदनं निर्ऋतं जरण्यया रथं न दस्रा करणा समिन्वथः।
क्षेत्रादा विप्रं जनथो विपन्यया प्र वामत्र विधते दंसना भुवत् ॥७॥
युवं। वंदनं। निःऽऋतं। जरण्यया। रथं। न। दस्रा। करणा। सं। इन्वथः।
क्षेत्रात्। आ। विप्रं। जनथः। विपन्यया। प्र। वां। अत्र। विधते। दंसना। भुवत् ॥७॥

हे दस्रावश्विनौ युवं युवां जरण्यया जरया निर्ऋतं निःशेषेण प्राप्तं वंदनमृषिं करणा कर्मणां कर्तारौ शिल्पकुशलौ युवां समिन्वथः। समधत्तं। पुनर्युवानमकुरुतं। तत्र दृष्टांतः। रथं न। यथा कश्चिच्छिल्पी जीर्णं रथं पुनरप्यभिनवं करोति तद्वत्। अपि च विपन्यया स्तुत्या गर्भस्थेन वामदेवेन स्तुतौ संतौ क्षेत्रादा। आकारः समुच्चये। मातुरुदरलक्षणाज्जन्मस्थानाद्विप्रं मेधाविनं तमृषिं जनथः। जनयथश्च। तथा वां युवयोर्दंसना रक्षणात्मकं कर्मात्रास्मिन् विधते परिचरते यजमानाय प्र भुवत्। प्रभवतु। रक्षितुं समर्थं भवतु॥ निर्ऋतं। ऋ गतौ। कर्मणि निष्ठा। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। जरण्यया। जरणक्रियार्हा जरण्या। अंत्यावस्था-च्छंदसि चेति यः। करणा। करोतेरन्येभ्योऽपि दृश्यते। पा० ३. ३. १३०.। इति युच्। इन्वथः। इवि व्याप्तौ। [illegible]। भौवादिकः। जनथः। जनी प्रादुर्भावे। णिच्युपधावृद्धिः। जनीजॄष्क्नसुरंज इति मित्त्वान्मितां ह्रस्व इति ह्रस्वत्वं। छंदस्युभयथेति शप आर्धधातुकत्वाण्णेरनिटीति णिलोपः। विपन्यया। पन स्तुतौ। अघ्न्या-दयश्चेति भावे यत्। व्यत्ययेनांतोदात्तत्वं। विधते। विध विधाने। तौदादिकः। लटः शतृ। शतुरनुम इति विभक्तेरुदात्तत्वं। भुवत्। भवतेर्लेट्यडागमः। बहुलं छंदसीति शपो लुक्। भूसुवोस्तिङीति गुणप्रतिषेधः॥

अगच्छतं कृपमाणं परावति पितुः स्वस्य त्यजसा निबाधितं।
स्वर्वतीरित ऊतीर्युवोरह चित्रा अभीके अभवन्नभिष्टयः॥८॥
अगच्छतं। कृपमाणं। पराऽवति। पितुः। स्वस्य। त्यजसा। निऽबाधितं।
स्वःऽवतीः। इतः। ऊतीः। युवोः। अह। चित्राः। अभीके। अभवन्। अभिष्टयः॥८॥

हे अश्विनौ परावति दूरदेशे समुद्रमध्ये स्वस्य पितुस्तुग्रस्य त्यजसा त्यागेन निबाधितं पीडितं भुज्युं कृपमाणं युवां स्तुवंतमगच्छतं। युवां रक्षणार्थं गतवंतौ। यस्मादेवं तस्माद्धे अश्विनौ स्वर्वतीः स्वर्वत्यः शोभन-गमनयुक्ता इत इतोमुखाच्चित्राश्चायनीया युवोरह युवयोरेवोतीरूतयो रक्षा अभीके समीपेऽभिष्टयः सर्वैः प्राणिभिरभ्येषणीया अभवन्। भवंति॥ कृपमाणं। कृपतिः स्तुतिकर्मा। अयं च तुदादिर्द्रष्टव्यः। स्वर्वतीः। सुपूर्वादर्तेर्भावे विच्। ततो मतुप्। छंदसीर इति मतुपो वत्वं। अभिष्टयः। इषु इच्छायां। भावे क्तिन्। शकंध्वादि[illegible]॥

उत स्या वां मधुमन्मक्षिकारपन्मदे सोमस्यौशिजो हुवन्यति।
युवं दधीचो मन आ विवासथोऽथा शिरः प्रति वामश्व्यं वदत्॥९॥
उत। स्या। वां। मधुऽमत्। मक्षिका। अरपत्। मदे। सोमस्य। औशिजः। हुवन्यति।
युवं। दधीचः। मनः। आ। विवासथः। अथ। शिरः। प्रति। वां। अश्व्यं। वदत्॥९॥

उतापि च हे अश्विनौ मधुमन्मधुमंतौ वां युवां स्या सा मक्षिका सरघा मधुकामा सत्यरपत्। अस्तौत्।

तथौशिज उशिजः पुत्रः कक्षीवान् सोमस्य पानेन युवयोर्मदे हर्षे निमित्तभूते सति हुवन्यति। युवामाह्वयति। युवं युवां च तस्यै मक्षिकायै मधु दातुं मधुविद्यार्थिनौ संतौ दधीच आथर्वणस्य [illegible] शुश्रूषया आ विवासथः। पर्यचरतं। अथानंतरं तस्मिन्प्रीते सत्यश्व्यं युवाभ्यां प्रतिहितमश्वस्य संबंधि [illegible] युवां प्रति मधु[illegible]दत्। स ऋषिराश्वेन शिरसोपदिष्टवानित्यर्थः ॥ मधुमत्। सुपां सुलुगिति विभक्तेर्लुक्। अरपत्। रप लप व्यक्तायां वाचि। मदे। मदी हर्षे। मदोऽनुपसर्ग इति भावेऽप्। हुवन्यति। ह्वेञ् स्पर्धायां शब्दे च। ल्युडिति भावे ल्युट्। बहुलं छंदसीति संप्रसारणं। हवनमात्मन इच्छति। सुप आत्मनः क्यच्। अंत्यलोपश्छांदसः। वर्णव्यापत्त्योत्वं। अश्व्यं। अश्वे भवमश्व्यं। भवे छंदसीति यत् ॥

युवं पेदवे पुरुवारमश्विना स्पृधां श्वेतं तरुतारं दुवस्यथः।
शर्यैरभिद्युं पृतनासु दुष्टरं चर्कृत्यमिंद्रमिव चर्षणीसहं ॥१०॥
युवं। पेदवे। पुरुऽवारं। अश्विना। स्पृधां। श्वेतं। तरुतारं। दुवस्यथः।
शर्यैः। अभिऽद्युं। पृतनासु। दुस्तरं। चर्कृत्यं। इंद्रंऽइव। चर्षणिऽसहं ॥१०॥

अश्विना हे अश्विनौ पेदवे पेदुनाम्ने राज्ञे पुरुवारं बहुभिर्वरणीयं स्पृधां संग्रामे स्पर्धमानानां शत्रूणां तरुतारं तारकं श्वेतं शुभ्रवर्णमिंद्राल्लब्धमश्वं युवं युवां दुवस्यथः। दत्तवंतौ। पुनरपि कीदृशं। शर्यैः। शीर्यंत इति शर्या योद्धारः। तैः पृतनासु संग्रामेषु दुस्तरं तरीतुमशक्यं अभिद्युमभिगतदीप्तिं चर्कृत्यं सर्वेषु कार्येषु पुनःपुनः प्रयोज्यं इंद्रमिव चर्षणीसहं। इंद्रो यथा शत्रूनभिभवति एवं शत्रुजनानामभिभवितारमित्यर्थः ॥ स्पृधां। स्पर्ध संघर्षे। क्विप्चेति क्विप्। चशब्देन दृशिग्रहणानुकर्षणात्तस्य च विध्यंतरोपसंग्रहार्थत्वादकारस्य लोपो रेफस्य च संप्रसारणं। साविकाच इति विभक्तेरुदात्तत्वं। तरुतारं। तॄ प्लवनतरणयोः। अस्मात्तृचि यसितस्कभितस्तभितेत्यादौ निपातनाद्रूपसिद्धिः। चर्कृत्यं। करोतेर्यङ्लुगंताद्विभाषा कृवृषोरिति क्यप्। ततस्तुक् ॥ ॥२१॥

का राधदिति द्वादशर्चं पंचमं सूक्तं। अत्रानुक्रम्यते। का राधद्द्वादशांत्या दुःस्वप्ननाशन्याद्या गायत्री द्वितीया ककुप् तृतीयाचतुर्थ्यौ काविराण्नष्टरूप्यौ पंचमी तनुशिरा षष्ठ्यचरैरुष्णिग्विष्टारबृहती कृतिर्विराट् तिस्रो गायत्र्य इति। अस्यायमर्थः। [illegible]शिजो दैर्घतमसः कक्षीवानृषिः। आद्या गायत्री। विद्वांसाविस्येषा ककुप् मध्यमपादस्य द्वादशाक्षरत्वात्। मध्यमश्चेत्ककुप्। अनु॰ ५. ३.। इति हि तल्लक्षणं। तृतीया ता विद्वांसेत्येषा काविराट्। नवकयोर्मध्ये जागतः काविराट्। अनु॰ ६. ५.। इत्युक्तलक्षणोपेतत्वात्। चतुर्थी वि पृच्छामीत्येषा नष्टरूपी। नववैराजत्रयोदशैर्नष्टरूपी। अनु॰ ६. ६.। इत्युक्तलक्षणोपेतत्वात्। प्र या घोष इत्येषा पंचमी तनुशिरा। एकादशिनोः परः षट्कस्तनुशिरा। अनु॰ ५. ५.। इत्युक्तलक्षणोपेतत्वात्। श्रुतं गायत्रमित्येषा षष्ठी यद्यपि पादसंख्ययोष्णिङ्ग भवति तथाप्यक्षरसंख्ययोष्णिक्। युवं ह्यीति सप्तमी विष्टारबृहती। अष्टिनोर्मध्ये दशकौ विष्टारबृहती। अनु॰ ७. ५.। इति तल्लक्षणोपेतत्वात्। मा कस्मा इत्यष्टमी कृतिः। जागतावष्टकश्च कृतिः। अनु॰ ६. ३.। इत्युक्तलक्षणसद्भावात्। दुहीयन्निति नवमी विराट्। दशम्याद्यास्तिस्रो गायत्र्यः। आश्विनं वै इति वैशब्दप्रयोगात्तुह्यादिपरिभाषयेदमपि सूक्तमाश्विनं। अथ स्वप्नस्येत्यंत्यया दुःस्वप्ननाशनं प्रतिपाद्यते। अतो या तेनोच्यते सा देवता। अनु॰ २. ५.। इति न्यायेन तदेव देवता ॥ सूक्तविनियोगो लैंगिकः ॥ घर्माभिष्टव आदितो नवर्चो विनियुक्ताः। सूत्र्यते हि। का राधद्धोत्राश्विना वामिति नवा भात्यग्निः। आ॰ ४. ६.। इति। का राधद्धोत्राश्विना वामिति नव त्रिच्छंदसः। ऐ॰ ब्रा॰ १. २१.। इत्यादिकं ब्राह्मणमनुसंधेयं ॥

का राधद्धोत्राश्विना वां को वां जोष उभयोः। कथा विधात्यप्रचेताः ॥१॥
का। राधत्। होत्रा। अश्विना। वां। कः। वां। जोषे। उभयोः। कथा। विधाति।
अप्रऽचेताः ॥१॥

अश्विना हे अश्विनौ वां युवां का होत्रा । वाङ्नामैतत् । कीदृशी स्तुतिलक्षणा वाग्राधत् । आराधयति । प्रीतौ करोति । युवयोर्माहात्म्यानुरूपा स्तुतिर्नास्तीत्यर्थः । किंच वां युवयोरुभयोर्जोषे जोषणे सेवने प्रीणने वा समर्थः कः स्तोता विद्यते । युष्मद्गुणाभिज्ञः कश्चिदपि नास्तीत्यर्थः । अप्रचेता युवयोर्माहात्म्यमजानंश्च कथा केन प्रकारेण विधाति । युवां परिचरति । युष्मद्विषयं परिचरणमपि न कर्तुं शक्यमित्यर्थः ॥ राधत् । राध साध संसिद्धौ । लेव्यडागमः । जोषे । जुषी प्रीतिसेवनयोः । भावे घञ् । ञित्वादाद्युदात्तत्वं । कथा । था हेतौ च च्छंदसीति किंशब्दात्प्रकारवचने थाप्रत्ययः । किमः क इति कादेशः । विधाति । विध विधाने । तौदादिकः । लेव्याडागमः । अप्रचेताः । प्रकृष्टं चेतो यस्यासौ प्रचेताः । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं ॥

विद्वांसाविद्दुरः पृच्छेदविद्वानित्थापरो अचेताः । नू चिन्नु मर्ते अक्रौ ॥२॥
विद्वांसौ । इत् । दुरः । पृच्छेत् । अविद्वान् । इत्था । अपरः । अचेताः । नु । चित् । नु । मर्ते । अक्रौ ॥२॥

इत्थेत्थमनेन पूर्वोक्तप्रकारेणाविद्वानज्ञः स्तोता विद्वांसावित् सर्वज्ञावश्विनावेव दुरो द्वाराणि स्तुतिपरिचरणयोरुपायभूतान्मार्गान्पृच्छेत् । प्रष्टुमर्हति । अपरोऽश्विभ्यामन्यः सर्वोऽप्यचेताः । चेतसा ज्ञानेन रहितः । तस्मादश्विनावेव पृच्छेदित्यर्थः । तौ चाक्रौ शत्रुभिरनाक्रांतावश्विनौ नू चित् क्षिप्रमेव मर्ते मनुष्ये स्तोतरि भक्तानुग्राहकतया सनिं धत्त इति वाक्यशेषः ॥ इत्था । था हेतौ च च्छंदसीति थाप्रत्ययः । इदम इश् । एतेतौ रथोः । पा० ५. ३. ४. । इतीद्भावः । यदि था हेतौ चेत्यत्रेदंशब्दस्य नानुवृत्तिस्तदानीमिदमस्थमुः । एतदंतात्परस्या विभक्तेर्व्यत्ययेन सुपां सुलुगिति विभक्तेर्डादेशः । अक्रौ । क्रमु पादविक्षेपे । अस्मान्नञ्युपपदे छत्यल्युटो बहुलमिति बहुलवचनात्कर्मण्यपि जनसनखनक्रमगमो विडिति विट् । विड्वनोरनुनासिकस्यादित्यात्वं । नञ्समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं ॥

ता विद्वांसा हवामहे वां ता नो विद्वांसा मन्म वोचेतमद्य ।
प्रार्चद्दयमानो युवाकुः ॥३॥
ता । विद्वांसा । हवामहे । वां । ता । नः । विद्वांसा । मन्म । वोचेतं । अद्य ।
प्र । आर्चत् । दयमानः । युवाकुः ॥३॥

हे अश्विनौ विद्वांसा सर्वज्ञौ ता वां तौ युवां हवामहे । आह्वयामहे । तावाहूतौ विद्वांसाभिज्ञौ युवां नोऽस्मभ्यं मन्म मननीयं ज्ञातव्यं स्तोत्रमद्यास्मिन्काले वोचेतं । ब्रुवाणौ भूयास्तं । स चाहं युवाकुर्युवां कामयमानः स्तुत्या संयोजयन्वा दयमानो युवाभ्यां हविः प्रयच्छन् प्रार्चत् । प्रार्चं । प्रकर्षेण स्तौमि ॥ ता । सुपां सुलुगिति विभक्तेराकारः । वोचेतं । ब्रूञ् व्यक्तायां वाचि । ब्रुवो वचिः । लिङ्याशिष्यङ् । वच उमित्युमागमः । आर्चत् । अर्च पूजायां । भौवादिकः । तिङां तिङो भवंतीति मिपस्तिबादेशः । दयमानः । दय दानगतिरक्षणहिंसादानेषु । शपः पित्त्वादनुदात्तत्वं । शानचो लसार्वधातुकस्वरेण धातुस्वरः शिष्यते । युवाकुः । युवां कामयत इति युवाकुः । मितद्र्वादिभ्य उपसंख्यानं । पा० ३. २. १८०. १. । इति डुप्रत्ययः । अविभक्तावपि व्यत्ययेन युवावौ द्विवचन इति युवादेश आत्वं च । यद्वा । यु मिश्रणे । औणादिकः काकुप्रत्ययः ॥

वि पृच्छामि पाक्या३ न देवान्वषट्कृतस्याद्भुतस्य दस्रा ।
पातं च सह्यसो युवं च रभ्यसो नः ॥४॥
वि । पृच्छामि । पाक्या । न । देवान् । वषट्ऽकृतस्य । अद्भुतस्य । दस्रा ।
पातं । च । सह्यसः । युवं । च । रभ्यसः । नः ॥४॥

हे अश्विनौ युवां वि पृच्छामि। विशेषेण प्रष्टुमिच्छामि। पाक्या न पक्तव्यप्रज्ञान् स्वपरिपक्कमतीनन्यान्देवान्न पृच्छामि। किंतु युवामेव सर्वज्ञौ पृच्छामीत्यर्थः। हे दस्रा दर्शनीयौ तौ युवां वषट्कृतस्य वषट्कारेणाभौ हुतस्याद्भुतस्याश्चर्यभूतस्य महतः सह्यसोऽतिशयेन बलवतो बलोत्पादकस्य सोमस्य स्वांशलक्षणमेकदेशं पातं च। नोऽस्मांश्च रभ्यसोऽतिशयेन रभस्विनः प्रौढोद्यमान्कुरुतं॥ पाक्या। पचेर्ण्यद्द्हलोर्ण्यत्। चजोः कु घिण्यतोरिति कुत्वं। तित्स्वरः। सुपां सुलुगिति विभक्तेर्डादेशः। वषट्कृतस्य। वषट्शब्दस्योर्यादित्वेन गतित्वाद्गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। पातं। पा पाने। बहुलं छंदसीति शपो लुक्। सह्यसः। सहतेऽभिभवत्यनेनेति सहो बलं। असुन्। तदस्यास्तीति सहस्वी। मत्वर्थीयो विनिः। तत आतिशायनिक ईयसुन्। विन्मतोर्लुक्। छांदस ईकारलोपः। रभ्यसः। रभ राभस्ये। राभस्यं कार्योपक्रमः। पूर्ववत्प्रक्रियोन्नेया॥

**प्र या घोषे भृगवाणे न शोभे यया वाचा यजति पज्रियो वां। प्रैषयुर्न विद्वान्॥५॥**

**प्र। या। घोषे। भृगवाणे। न। शोभे। यया। वाचा। यजति। पज्रियः। वां। प्र। इषऽयुः। न। विद्वान्॥५॥**

हे अश्विनौ प्र भवति समर्था भवति सा वाक् या वाग्युष्मत्स्तुतिरूपा घोषे घोषाख्यायाः पुत्रे सुहस्त्याख्य ऋषौ भृगवाणे न भृगौ च शोभे शोभते। यया च स्तुतिलक्षणया वाचा पज्रियः। पज्रा अंगिरसः। तेषां कुलोत्पन्नः कक्षीवान्वां युवां यजति पूजयति स्तौति। सापि शोभत इत्यर्थः। इषयुर्न इषमन्नमात्मनः कामयमानस्य विद्वान् स्तुत्यभिज्ञः कक्षीवानृषिः प्र भवतु। युष्मदनुग्रहात्संपूर्णकामो भवत्वित्यर्थः॥ घोषे। घोषा नाम काचिद्ब्रह्मवादिनी कक्षीवतः पुत्री। अत्रोपचारात्तद्वाचकं प्रातिपदिकं पुत्रे वर्तते। भृगवाणे। चिरंतनो भृगुरिवाचरति। सर्वप्रातिपदिकेभ्य इति क्विप्। धातुसंज्ञायां व्यत्ययेन लटः शानच्। शबादि। आगमानुशासनस्यानित्यत्वान्मुगभावः। वृषादिः। शोभे। शुभ दीप्तौ। लोपस्त आत्मनेपदेष्विति तलोपः। इषयुः। इष गतौ। इष्यति गच्छतीतीषमन्नं। इगुपधलक्षणः कः। यद्वा। इषु इच्छायां। इष्यते सर्वैः प्राणिभिरितीषमन्नं। व्यत्ययेन कर्मणि कर्तृप्रत्ययः। प्रशब्देन संहितायां प्रादूहोढोढ्येषैष्येषु वृद्धिर्वक्तव्या। पा॰ ६. १. ८९. ४.। इति वृद्धिः॥ ॥२२॥

**श्रुतं गायत्रं तकवानस्याहं चिद्धि रिरेभाश्विना वां। आक्षी शुभस्पती दन्॥६॥**

**श्रुतं। गायत्रं। तकवानस्य। अहं। चित्। हि। रिरेभ। अश्विना। वां। आ। अक्षी इति। शुभः। पती इति। दन्॥६॥**

हे अश्विनाश्विनौ गायत्रं गातव्यं गायत्रीयुक्तं गायत्रसाम्ना निष्पाद्यं वा स्तोत्रं तकवानस्य स्खलद्गतेरंधस्य ऋज्राश्वस्य संबंधि श्रुतं। अशृणुतं। अहं चिदहमिव वां युवां स हि रिरेभ। स्तुतवान्। किं कुर्वन्। हे शुभस्पती शोभनस्य कर्मणः पालयितारौ जलस्य वा स्वामिनौ अक्षी युवाभ्यां दत्ते चक्षुषी आ दन् आददानः। तस्मा इव मह्यमप्यभिमतफलं प्रयच्छतमिति भावः॥ श्रुतं। श्रु श्रवणे। लङि बहुलं छंदसीति विकरणस्य लुक्। तकवानस्य। तक गतौ। अत्र गतिसामान्यवाचिना तद्विशेषो मंदगतिर्लक्ष्यते। औणादिक उप्रत्ययः। भृगवाणं इतिवत् प्रक्रियोन्नेया। रिरेभ। रेभृ शब्दे। अक्षी। ई च द्विवचन इत्यक्षिशब्दस्य ईकारांतादेशः। स चोदात्तः। शुभस्पती। सुबामंत्रिते पराङ्गवत्स्वर इति षष्ठ्यंतस्य पराङ्गवद्भावात्पदद्वयसमुदायस्याष्टमिकामंत्रितानुदात्तत्वं। दन्। आङ्पूर्वाद्ददातेराङो दोऽनास्यविहरणे। पा॰ १. ३. २०.। इत्यात्मनेपदं। व्यत्ययेन शतृ। जुहोत्यादित्वात् श्लुः। द्विर्वचनप्रकरणे छंदसि वेति वक्तव्यमिति वचनाद्विर्वचनाभावः। छंदस्युभयथेत्युभयथाश्रयणात् शतुः सार्वधातुकत्वेन ङित्त्वं। आर्धधातुकत्वादातो लोप इटि चेत्याकारलोपः॥

**युवं ह्यास्तं महो रन्युवं वा यन्निरततंसतं।**
**ता नो वसू सुगोपा स्यातं पातं नो वृकादघायोः॥७॥**

युवं । हि । आस्तं । महः । रन् । युवं । वा । यत् । निःऽअततंसतं ।
ता । नः । वसू इति । सुऽगोपा । स्यातं । पातं । नः । वृकात् । अघऽयोः ॥ ७ ॥

हे अश्विनौ महो महतो धनस्य रन् रातारौ दातारौ युवं युवां कंचनास्तं । [illegible] निरततंसतं । धनानि निरगमयतं । रक्षकौ विनाशकावपि युवामेवेत्यर्थः । हे वसू वासयितारावश्विनौ ता तादृशौ युवां नोऽस्माकं सुगोपा सुष्ठु गोपायितारौ रक्षितारौ स्यातं । भवतं । अपि च नोऽस्मानघायोरघं पापफलमस्माकमिच्छतो वृकात्स्तेनात्पातं । रक्षतं ॥ महः । महतः । छांदसोऽच्छब्दलोपः । रन् । दन्निितिवत्प्रक्रियोन्नेया । व्यत्ययेनैकवचनं । निरततंसतं । तसि अलंकारे । अस्मात्स्यंताल्लुङि णिश्रिद्रुस्रुभ्य इति च्लेश्चङ् द्विर्वचनादि च । गुरुसंज्ञया लघुसंज्ञाया बाधितत्वात्सन्वद्भावाभावः । सुगोपा । सुपां सुलुगिति विभक्तेर्लुक् । अघायोः । अघं परेषामिच्छति । छंदसि परेच्छायामिति क्यच् । अश्वाघस्यादित्यात्वं । क्याच्छंदसीत्युप्रत्ययः ॥

मा कस्मै धातमभ्यमित्रिणे नो माकुत्रा नो गृहेभ्यो धेनवो गुः ।
स्तनाभुजो अशिश्वीः ॥ ८ ॥
मा । कस्मै । धातं । अभि । अमित्रिणे । नः । मा । अकुत्र । नः । गृहेभ्यः । धेनवः । गुः ।
स्तनऽभुजः । अशिश्वीः ॥ ८ ॥

हे अश्विनौ अमित्रिणे । अमित्रं मित्रराहित्यं । तद्वते कस्मै चिदपि शत्रवे नोऽस्मान्माभि धातं । आभिमुख्येन मा स्थापयतं । अपि च नोऽस्माकं गृहेभ्यः सकाशात्स्तनाभुजः स्तनैर्वत्सान्मनुष्यांश्च पालयंत्यो धेनवो गावोऽशिश्वीः शिशुना वत्सेन विरहिता अस्मदीये गृहेऽशयाना वा सत्योऽकुत्र चिदस्माभिरगम्ये प्रदेशे मा गुः । मा गच्छंतु ॥ धातं । धाञो माङि लुङि गातिस्थेति सिचो लुक् । न माङ्योग इत्यडभावः । अकुत्र । परादिश्छंदसि बहुलमित्यु[illegible]त्वं । गुः । इण् गतौ । इणो गा लुङीति गादेशः । गातिस्थेति सिचो लुक् । आत इति झेर्जुस् । स्तनाभुजः । भुज पालनाभ्यवहारयोः । स्तनैर्भुंजंति पालयंतीति स्तनाभुजः । क्विप् । अन्येषामपि दृश्यत इति सांहितिको दीर्घः । अशिश्वीः । सख्यशिश्वीति भाषायां । पा॰ ४. १. ६२. । इति च्छंदस्यपि व्यत्ययेन निपातनं द्रष्टव्यं । यद्वा । शिशुरस्यास्तीति शिश्वी । छंदसीवनिपाविति मत्वर्थीय ईकारः । नञ्समासेऽव्ययपूर्वपद[illegible] । वा छंदसीति पूर्वसवर्णदीर्घः । अथवा । शीङ् स्वप्ने । उत्सर्गश्छंदसीति क्विप्रत्ययः । द्विर्वचनहृस्वत्वे । एरनेकाच इति यण् । छांदसो वकारः । पूर्ववत्समासस्वरौ ॥

दुहीयन्मित्रधितये युवाकु राये च नो मिमीतं वाजवत्यै ।
इषे च नो मिमीतं धेनुमत्यै ॥ ९ ॥
दुहीयन् । मित्रऽधितये । युवाकु । राये । च । नः । मिमीतं । वाजऽवत्यै ।
इषे । च । नः । मिमीतं । धेनुऽमत्यै ॥ ९ ॥

हे अश्विनौ युवाकु युवां कामयमानाः स्तुति[illegible] वा स्तोतारो मित्रधितये मित्राणां बंधुजनानां धारणार्थं दुहीयन् । युष्मत्सकाशाद्धनानि दुहंति प्राप्नुवंति । अतो नोऽस्मानपि वाजवत्यै वाजयुक्ताय च राये धनाय मिमीतं । कुरुतं । तथा धेनुमत्यै धेनुभिर्युक्तायेषेऽन्नाय च नोऽस्मान्मिमीतं । कुरुतं । अस्मभ्यं स्तोतृभ्यो बलयुक्तं धनं गोयुक्तमन्नं च प्रयच्छतमित्यर्थः ॥ दुहीयन् । दुह प्रपूरणे । दुहिर्दोहः । इगुपधात्कित् । उ॰ ४. ११९. । इति भाव इप्रत्ययः । दुहिमात्मन इच्छति दुहीयति । सुप आत्मनः क्यच् । दुहीयतेर्लङ्यडागमः । इतश्च लोप इतीकारलोपः । यद्वा । दुहेर्लिङि झस्य रन् । पा॰ ३. ४. १०५. । इति व्यत्ययेन रनादेशाभावे रूपमेतत् । छांदसोऽंत्यलोपः । यद्वा । रनादेशे कृते छांदसो रेफस्य यकारः । अत

एव व्युत्पत्त्यनवधारणान्नावगृह्णंति । युवाकु । सुपां सुलुगिति जसो लुक् । मिमीतं । माङ् माने शब्दे च । जौहोत्यादिकः । व्यत्ययेन परस्मैपदं । भृञामिदित्यभ्यासस्येत्वं । चवायोगे प्रथमेति [illegible]निषेधः ॥

अश्विनोरसनं रथमनश्वं वाजिनीवतोः । तेनाहं भूरि चाकन ॥१०॥

अश्विनोः । असनं । रथं । अनश्वं । वाजिनीऽवतोः । तेन । अहं । भूरि । चाकन ॥१०॥

वाजिनीवतोः । वाजोऽन्नं बलं वा । तद्वत्क्रियावतोरश्विनोरनश्वमश्वरहितमश्वराहित्येऽपि सामर्थ्यातिशयेन गच्छंतं रथमसनं । अहं स्तोता समभजं । तेन च रथेन भूरि प्रभूतं श्रेयश्चाकन । कामये ॥ असनं । वन षण संभक्तौ । लङ् । चाकन । कन दीप्तिकांतिगतिषु । छांदसो लिट् । णलुत्तमो वा । पा॰ ७.१.९१. । इति णित्त्वस्य विकल्पनाद्वृद्ध्यभावः । तुजादित्वादभ्यासदीर्घत्वं ॥

अयं समह मा तनूह्याते जनाँ अनु । सोमपेयं सुखो रथः ॥११॥

अयं । समह । मा । तनु । ऊह्याते । जनान् । अनु । सोमऽपेयं । सुऽखः । रथः ॥११॥

हे समह धनेन सहित हे रथ अयं पुरोवर्ती त्वं मा मां तनु । विस्तारय । पुत्रपौत्रधनादिभिः समृद्धं कुरु । यद्वा । अयमयमानं त्वां प्राप्नुवंतं मामिति योज्यं । स च सुखः शोभनावकाशः सुखहेतुर्वा रथो जनाननु स्तोतृजनेषु सोमपेयं सोमपानं प्रत्यूह्याते । उह्यते । अश्विभ्यां नीयते । अतोऽश्विभ्यां यद्दीयते तत्सर्वं रथ एव ददातीति रथं संबोध्य प्रार्थना ॥ अयं । इदोऽय् पुंसि । पा॰ ७.२.१११. । इद्वा । अय पय गतौ । पचाद्यच् । समह । मघमिति धननाम । मघेन सह वर्तत इति समघः । छांदसो वर्णविकारः । यद्वा । मह पूजायां । महयति पूजयतीति महो धनं । पचाद्यच् । ऊह्याते । वह प्रापणे । कर्मणि लेट्याडागमः । यजादित्वात्संप्रसारणं । तस्य च्छांदसो दीर्घः । अदुपदेशाल्लसार्वधातुकानुदात्तत्वे यक एव स्वरः शिष्यते । सोमपेयं । पा पाने । अचो यदिति भावे यत् । ईद्यतीति ईकारादेशः । यतोऽनाव इत्याद्युदात्तत्वं । कृदुत्तरपदप्रकृतिस्वरत्वं ॥

अध स्वप्नस्य निर्विदेऽभुंजतश्च रेवतः । उभा ता बस्रि नश्यतः ॥१२॥

अध । स्वप्नस्य । निः । विदे । अभुंजतः । च । रेवतः । उभा । ता । बस्रि । नश्यतः ॥१२॥

अधेदानीं प्रभातसमये स्वप्नस्य स्वप्नं प्रति निर्विदे । निर्विण्णोऽस्मि । तथाभुंजतः परानरक्षतो रेवतो धनवतस्य पुरुषस्य एवंभूतं पुरुषं प्रत्यपि निर्विण्णोऽस्मि । यतस्तावुभौ बस्रि क्षिप्रं नश्यतः नाशं प्राप्नुतः । स्वप्नदृष्टः पदार्थः प्रातर्नोपलभ्यते कदर्यस्येव धनमभुक्तमदत्तं सत् क्षिप्रमेव नश्यति । तदुभयविषयो निर्वेदो मां बाधत इत्यर्थः । अत्र स्वप्नमात्रस्यासत्त्वप्रतिपादनेन दुः[illegible]सद्भावः प्रतिपादितः । अत एषा दुःस्वप्ननाशनीति युज्यते ॥ स्वप्नस्य । [illegible] कर्तव्यमिति कर्मणः संप्रदानत्वाच्चतुर्थ्यर्थे षष्ठी । विदे । विद्लृ लाभे । आगमानु[illegible]नित्यत्वान्नुमभावः । रेवतः । रयिशब्दान्मतुप् । रयेर्मतौ बहुलमिति संप्रसारणं । छंदसीर इति मतुपो वत्वं । रेशब्दाच्च मतुप उ[illegible]त्तत्वमिति तस्योदात्तत्वं । उभा ता । उभयत्र सुपां सुलुगित्याकारः ॥ ॥२३॥ ॥१७॥

अष्टादशेऽनुवाके षट् सूक्तानि । तत्र कदित्थेति पंचदशर्चं प्रथमं सूक्तं । [illegible] । कदित्था पंचोना वैश्वदेवं वेति । अनुवर्तमानः कक्षीवानृषिः । अनादेशपरिभाषया त्रिष्टुप् । विश्वे देवा इंद्रो वा देवता ॥ विनियोगो लैंगिकः ॥

कदित्था नॄँः पात्रं देवयतां श्रवद्गिरो अंगिरसां तुरण्यन् ।

प्र यदानड्विश आ [illegible]र्म्यस्योरु क्रंसते अध्वरे यजत्रः ॥१॥

कत्। इत्था। नॄन्। पात्वँ। देवऽयतां। श्रवत्। गिरः। अंगिरसां। तुरण्यन्।
प्र। यत्। आनट्। विशः। आ। हर्म्यस्य। उरु। क्रंसते। अध्वरे। यजत्रः ॥ १॥

नॄँः पात्वं नॄन्पाता नृणां स्तुतेर्नेतॄणां पुरुषाणां रक्षणशील इंद्रस्तुरण्यन् गोरूपधनं प्रेरयन् देवयतां देवं द्योतमानं दानादिगुणयुक्तं वेंद्रमात्मन इच्छतामंगिरसामृषीणामस्माकमित्येत्थं प्रयुज्यमाना गिरः स्तुतीः कत् कदा कस्मिन्काले श्रवत्। शृणुयात्। यद्यदा स इंद्रो हर्म्यस्य हर्म्योपलक्षितेन गृहेण युक्तस्य यजमानस्य संबंधिनो विश ऋत्विग्लक्षणान्मनुष्याना आभिमुख्येन प्रानट् प्राप्नोति तदानीमध्वरेऽस्मदीये यज्ञे यजत्रो यष्टव्यः सन्नुरु बहुलं क्रंसते। क्रमते। स्वयमेवोत्सहत इत्यर्थः ॥ कत्। कदा। अंत्यलोपश्छांदसः। नॄँः पात्वं। नॄन्पे। पा॰ ८. ३. १०.। इति संहितायां नकारस्य रुत्वं। अत्रानुनासिकः पूर्वस्य तु वेत्यॄकारः सानुनासिकः। पात्वं। पा रक्षणे। ताच्छीलिकस्तृन्। व्यत्ययेन सोरमादेशः। संज्ञापूर्वकस्य विधेरनित्यत्वाद्गुणाभावे यण्। देवयतां। सुप आत्मनः क्यच्। ततो लटः शतृ। शतुरनुम इति विभक्तेरुदात्तत्वं। श्रवत्। श्रु श्रवणे। लेट्यडागमः। बहुलं छंदसीति विकरणस्य लुक्। तुरण्यन्। तुरण त्वरायां। कंड्वादिः। आनट्। अश्नोतेर्लङि व्यत्ययेन परस्मैपदं। अशौ प्राप्ते व्यत्ययेन श्नम्विकरणः। व्रश्चादिषत्वे जश्त्वं। आडागमः। हर्म्यस्य। हर्म्यशब्दादर्शआदित्वादच्। क्रंसते। क्रमु पादविक्षेपे। वृत्तिसर्गतायनेषु क्रमः। पा॰ १. ३. ३८.। इत्यात्मनेपदं। लेट्यडागमः। सिब्बहुलं लेटीति सिप्। यजत्रः। अमिनक्षीत्यादिना यजेरत्रन्प्रत्ययः ॥

स्तंभीद्ध द्यां स धरुणं प्रुषायदृभुर्वाजाय द्रविणं नरो गोः।
अनु स्वजां महिषश्चक्षत व्रां मेनामश्वस्य परि मातरं गोः ॥ २॥
स्तंभीत्। ह। द्यां। सः। धरुणं। प्रुषायत्। ऋभुः। वाजाय। द्रविणं। नरः। गोः।
अनु। स्वऽजां। महिषः। चक्षत। व्रां। मेनां। अश्वस्य। परि। मातरं। गोः ॥ २॥

स इंद्रो द्यां द्युलोकं स्तंभीद्ध। स्तभ्नाति खलु। तथा गोः पणिभिरपहृतस्य गोसमूहस्य वज्रस्योदकस्य किरणसमूहस्य वा नरो नेता। स इंद्र ऋभुः सूर्यात्मनोरु विस्तीर्णं भासमानः सन् द्रविणं सर्वैः प्राणिभिरभिद्रवणीयं धरुणं। उदकनामैतत्। सर्वस्य धारकं वृष्ट्युदकं वाजायान्नार्थं बलार्थं वा प्रुषायत्। प्रुष्णाति। सिंचति। प्रवर्षतीत्यर्थः। अपि च महिषः। महन्नामैतत्। महान्सूर्यरूपींद्रः स्वजां स्वसकाशादुत्पन्नां व्रां। वृणोति तमसा सर्वमाच्छादयतीति व्रा रात्रिः। यद्वा। प्रकाशेन वृणोतीति व्रा उषाः। तामनु चक्षत। चष्टिः पश्यतिकर्मा। अनु पश्चात्पश्यति प्रकाशते। स्वयं प्रौढप्रकाशोऽपि स्वगत्या निष्पादिताया रात्रेरुषसस्त्र पश्चादुदेतीत्यर्थः। अपि चेदमपरमाश्चर्यं यदयमश्वस्य मेनां। स्त्रीनामैतत्। स्त्रियं वडवां गोर्मातरं जननीं। परिवैपरीत्ये। विपरीतमकरोत्। कदाचिदिंद्रो लीलयाश्वायां गामुत्पादयामास। तदत्र प्रतिपाद्यते मंत्रांतरे चेंद्रवाक्यरूप एतद्विस्पष्टमवगम्यते ॥ धरुणं। धारेर्णिलुक्चेत्युनप्रत्ययः। प्रुषायत्। प्रुष प्लुष स्नेहनसेचनपूरणेषु। क्रैयादिकः। लेट्यडागमः। छंदसि शायजपीत्यहावपि श्नाप्रत्ययस्य शायजादेशः। नरः। नॄ नये। बहुलवचनादृदोरबिति कर्तर्यप्। चक्षत। चक्षिङ् व्यक्तायां वाचि। छांदसो लङ्। बहुलं छंदसीति शपो लुगभावः ॥

नक्षद्धवमरुणीः पूर्व्यं राट् तुरो विशामंगिरसामनु द्यून्।
तक्षद्वज्रं नियुतं तस्तंभद्द्यां चतुष्पदे नर्याय द्विपादे ॥ ३॥
नक्षत्। हवं। अरुणीः। पूर्व्यं। राट्। तुरः। विशां। अंगिरसां। अनु। द्यून्।
तक्षत्। वज्रं। निऽयुतं। तस्तंभत्। द्यां। चतुःऽपदे। नर्याय। द्विऽपादे ॥ ३॥

अरुणीररुणवर्णा आरोचमाना वोषसो राट् राजयन्प्रकाशयन्सूर्यात्मेंद्रः पूर्व्यं पूर्वैर्ऋषिभिः प्रयुक्तं हवमिदानीमस्माभिः क्रियमाणमाह्वानं नक्षत्। नक्षतु। शृणोतु। कीदृशः। अनु द्यून् अनुदिवसं विशां मनुष्याणामं-

गिरसामृषीणां स्तोतॄणां तुरो धनस्य प्रेरयिता। अपि च स इंद्रो वज्रं स्वकीयमायुधं नियुतं हंतव्येन सह नितरां युक्तं ततक्षत्। अकरोत्। तथा द्यां द्युलोकं तस्तंभत्। अस्तंभयत्। यथाधो न पतति तथाकरोदित्यर्थः। किमर्थं। नर्याय नृभ्यो हिताय चतुष्पदे गवाश्वादये द्विपादे मनुष्याय च। एतदुभयार्थमित्यर्थः॥ ततक्षत्। तक्ष गतौ। लेट्यडागमः। पूर्व्यं। पूर्वैः कृतमिनयौ च। पा° ४. ४. १३३.। इति यप्रत्ययः। राट्। राजृ दीप्तौ। अस्मादंतर्भावितण्यर्थात् क्विप्। तुरः। तुर त्वरणे। इगुपधलक्षणः कः। ततक्षत्। तक्षू त्वक्षू तनूकरणे। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। तस्तंभत्। ष्टभि स्कभि गतिप्रतिबंधे। अस्माण्ण्यंताल्लुङि चङि रूपं। चङ्यन्यतरस्यामित्युपोत्तमस्योदात्तत्वं। पूर्वपदस्यासमानवाक्यस्थत्वान्निघाताभावः। चतुष्पदे। चत्वारः पादा अस्य। संख्यासुपूर्वस्येति पादशब्दस्यांत्यलोपः समासांतः। चतुर्थ्येकवचने भसंज्ञायां पादः पदिति पद्भावः। द्विपादे। पूर्ववत्प्रक्रिया। अयं तु विशेषः। अयस्मयादित्वेन पदत्वाद्भसंज्ञाया अभावे पद्भावाभावः। द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहावित्युत्तरपदांतोदात्तत्वं॥

अस्य मदे स्वर्यं दा ऋतायापीवृतमुस्रियाणामनीकं।
यद्ध प्रसर्गे त्रिककुम्निवर्तदप द्रुहो मानुषस्य दुरो वः॥४॥
अस्य। मदे। स्वर्यं। दाः। ऋताय। अपिऽवृतं। उस्रियाणां। अनीकं।
यत्। ह। प्रऽसर्गे। त्रिऽककुप्। निऽवर्तत्। अप। द्रुहः। मानुषस्य। दुरः। वरिति वः॥४॥

हे इंद्र अस्य सोमस्य पानेन मदे हर्षे सत्यृताय यज्ञार्थं स्वर्यं स्तुत्यमपीवृतं पणिभिर्गुहासु निगूढमुस्रियाणां गवामनीकं संघं दाः। अंगिरोभ्यो दत्तवानसि। उत्तरार्धः परोक्षकृतः। यद्ध यदा खलु प्रसर्गे युद्धे त्रिककुप् त्रिषु लोकेषूच्छ्रित इंद्रो निवर्तत् नितरां वर्तेत तदानीं स इंद्रो द्रुहो द्रोग्धुर्मानुषस्य मनोः संबंधिनोऽसुरस्य पणेः संबंधीनि दुरो द्वाराणि गवामनिर्गमनाय पिहितान्यप वः। अपवृणोति। उद्घाटयति॥ स्वर्यं। स्वृ शब्दोपतापयोः। ऋहलोर्ण्यत्। संज्ञापूर्वकस्य विधेरनित्यत्वाद्वृद्ध्यभावः। अपीवृतं। अपिपूर्वाद्वृणोतेः कर्मणि निष्ठा। निपातस्य चेति पूर्वपदस्य दीर्घः। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं। प्रसर्गे। प्रकर्षेण सृज्यंते विमुच्यंतेऽस्मिन्निषव इति प्रसर्गः। अधिकरणे घञ्। कृदुत्तरपदप्रकृतिस्वरत्वं। छांदसत्वाथादिस्वराभावः। निवर्तत्। वृतु वर्तने। लेट्यडागमः। व्यत्ययेन परस्मैपदं। वः। वृञ् वरणे। छांदसे लुङि मंत्रे घसेति च्लेर्लुक्। गुणे हल्ङ्यादिलोपः॥

तुभ्यं पयो यत्पितरावनीतां राधः सुरेतस्तुरणे भुरण्यू।
शुचि यत्ते रेक्ण आयजंत सबर्दुघायाः पय उस्रियायाः॥५॥
तुभ्यं। पयः। यत्। पितरौ। अनीतां। राधः। सुऽरेतः। तुरणे। भुरण्यू इति।
शुचि। यत्। ते। रेक्णः। आऽअयजंत। सबःऽदुघायाः। पयः। उस्रियायाः॥५॥

हे इंद्र तुरणे क्षिप्रकारिणे तुभ्यं भुरण्यू कृत्स्नं जगत्पोषयंत्यौ पितरावुत्पादयंत्यौ द्यावापृथिव्यौ यद्यदा पयः सांनाय्यलक्षणं हविरनीतां गोष्वनयतां। न्यधिषातामित्यर्थः। कीदृशं पयः। राधो राधकं समृद्धिकरं सुरेतः शोभनरेतस्कं। कृत्स्नजगदुत्पादनशक्तमित्यर्थः। हविषः सकाशाद्धि जगदुत्पद्यते। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः। मनु° ३. ७६.। इति। यद्यदा च द्यावापृथिवीभ्यां गोष्वानीतं शुचि शुद्धं सबर्दुघायाः क्षीरस्य दोग्ध्र्या उस्रियाया गोः पयो रेक्णः। धननामैतत्। धनवदतिप्रियं। यद्वा। अतिरिक्तं प्रवृद्धं। एवंविधं हविस्तुभ्यमायजंत आभिमुख्येन यजमानाः प्रायच्छन्। तदानीं द्रुहो मानुषस्य द्वाराण्यपवृणोतीति पूर्वया संबंधः॥ अनीतां। णीञ् प्रापणे। लङि बहुलं छंदसीति शपो लुक्। सुरेतः। सोर्मनसी अलोमोषसी इत्युत्तरपदाद्युदात्तत्वं। तुरणे। तुरण त्वरायां। कंड्वादिः। क्विब्वेति क्विप्। अतोलोपयलोपौ। भुरण्यू। भुरण धारणपोषणयोः। अयमपि कंड्वादिः। औणादिक उप्रत्ययः॥ ॥२४॥

अध॒ प्र ज॑ज्ञे त॒रणि॑र्ममत्तु॒ प्र रो॒च्य॑स्या उ॒षसो॒ न सूरः॑ ।
इंदु॒र्येभि॒राष्ट॒ स्वेदु॑हव्यैः स्रु॒वेण॑ सिं॒चञ्ज॒रणा॒भि धाम॑ ॥ ६ ॥

अध॑ । प्र । ज॒ज्ञे॒ । त॒रणिः॑ । म॒म॒त्तु॒ । प्र । रो॒चि॒ । अ॒स्याः॒ । उ॒षसः॑ । न । सूरः॑ ।
इंदुः॑ । येभिः॑ । आष्ट॑ । स्वऽइ॑दुहव्यैः । स्रु॒वेण॑ । सिं॒चन् । ज॒रणा॑ । अ॒भि । धाम॑ ॥ ६ ॥

अधेदानीमयमिंद्रः स्तुतिभिः प्रीयमाणः सन् प्र जज्ञे । प्रकर्षेण प्रादुर्बभूव । स तरणिः शत्रूणां तारको ऽस्मान्ममत्तु । मादयतु । स च प्र रोचि । प्रकृष्टं रोचते । तत्र दृष्टांतः । अस्या अस्माभिर्दृश्यमानाया उषसः समीपे वर्तमानः सूरो न सूर्य इव । जरणा जरणीयः स्तोतव्य इंदुः सोमो धामाहवनीयलक्षणं स्थानमभिलक्ष्य स्रुवेण सिंचन् सिच्यमानः सन् स्वेदुहव्यैः स्वभू[illegible]र्यैरस्माभिराष्ट आशित आसीत् । तानस्मान्मादयत्वित्यर्थः ॥ जज्ञे । जनी प्रादुर्भावे । लिटि गमहनेत्युपधालोपः । ममत्तु । मदी हर्षे । बहुलं छंदसीति विकरणस्य श्लुः । रोचि । रुच दीप्तौ । छांदसो वर्तमाने लुङ् । व्यत्ययेन च्लेश्चिणादेशः । आष्ट । अश भोजने । कर्मणि लङि बहुलं छंदसीति विकरणस्य लुक् । व्रश्चादिषत्वे ष्टुत्वं । आडागमः । यद्वृत्तान्नित्यमिति निघातप्रतिषेधः । स्वेदुहव्यैः । इदि परमैश्वर्ये । औणादिक उप्रत्ययः । अनित्यमागमशासनमिति नुमभावः । इंदूनि प्रभूतानि च तानि हव्यानि स्वभूतानि च हव्यानि येषां । यद्वा । ञिइन्धी दीप्तौ । स्वायत्तानींदूनीद्धानि हव्यानि येषां । अथवा । स्वभूतमिदं पुरोवर्ति हव्यं हविर्येषां ते तथोक्ताः । पृषोदरादित्वादभिमतरूपसिद्धिः । सिंचन् । षिचिर् क्षरणे । व्यत्ययेन कर्मणि कर्तृप्रत्ययः । शे मुचादीनामिति नुम् । जरणा । जरतिः स्तुतिकर्मा । अस्मात्कर्मणि ल्युट् । सुपां सुलुगिति विभक्तेराकारः । व्यत्ययेन ञित्स्वराभावः ॥

स्वि॒ध्मा यद्व॒नधि॑तिरप॒स्यात्सूरो॑ अध्व॒रे परि॒ रोध॑ना॒ गोः ।
यद्ध॑ प्र॒भासि॒ कृत्व्याँ॒ अनु॒ द्यूनन॑र्विशे प॒श्विषे॑ तु॒राय॑ ॥ ७ ॥

सु॒ऽइ॒ध्मा । यत् । व॒न॒ऽधि॑तिः । अ॒प॒स्यात् । सूरः॑ । अ॒ध्व॒रे । परि॑ । रोध॑ना । गोः ।
यत् । ह॒ । प्र॒ऽभासि॑ । कृत्व्या॑न् । अनु॑ । द्यून् । अन॑र्विशे । प॒शु॒ऽइ॒षे॑ । तु॒राय॑ ॥ ७ ॥

यदि स्विध्मा सुदीप्तास्या वनधितिर्वने छेत्तव्ये वृक्षसमूहे निधातव्या शस्त्र्यपस्यात् अपो विशसनात्मकं स्वकीयं कर्म कर्तुमिच्छेत् तदानीं सूरः प्रेरकोऽध्वर्युरध्वरे यज्ञे गोः पशो रोधना रोधनाय यूपे नियोजन[illegible] परि भवति । समर्थो भवति । यद्वा । स्विध्मा सूर्यकिरणैः सुदीप्ता वनधितिः । वनमुदकमस्यां धीयत इति वनधितिर्मेघमाला । सा यद्यदापस्यात् अपः प्रवर्षणलक्षणं कर्म करोति तदानीं सूरः प्रेरक इंद्रोऽध्वरे यज्ञस्य निमित्तभूतेऽध्वर्तव्येऽहिंसितव्येऽंतरिक्षे वर्तमानः सन् गोर्वृष्ट्युदकस्य रोधना रोधनान्यावरणानि परि परितो निवारयतीति शेषः । उत्तरार्धः प्रत्यक्षकृतः । हे इंद्र सूर्यात्मना वर्तमानस्त्वं कृत्व्यान् । कृत्वीति कर्मनाम । कर्मसु साधून् द्यून् दिवसाननुलक्ष्य यद्ध यदा खलु प्रभासि प्रकर्षेण दीप्यसे तदानीमनर्विशेऽनसा शकटेनेंधनाद्याहरणायारण्यं प्रविशते । यद्वा । गंतव्यं स्थलं प्रति गंतुमशक्ताय । पुरुषाय पश्विषे पशून्प्रेरयते तुराय त्वरमाणाय गोपालाय च सिध्येदभिमतमिति वाक्यशेषः ॥ स्विध्मा । शोभनमिध्मं दीप्तमास्यं दीप्तिर्वा यस्याः सा तथोक्ता । नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं । अपस्यात् । अपःशब्दात्सुप आत्मनः क्यच् । लेट्याडागमः । रोधना । रुधिर् आवरणे । ल्युडिति भावे ल्युट् । शेश्छंदसि बहुलमिति शेर्लोपः । अनर्विशे । अनसा विशति प्राप्नोतीत्यनर्विट् । विशतेः क्विप् । अहरादीनां पत्या[illegible] । म॰ ८. २. ७०. १. । इति सकारस्य रेफादेशः । यद्वा । अर्तेः कर्मणि विच् । अरं गंतव्यं प्रति विशति प्राप्नोतीत्यर्विट् । न अर्विट् अनर्विट् । अव्ययपूर्वपदप्रकृतिस्वरत्वं । अत एव व्युत्पत्त्यनवधारणादनवग्रहः । पश्विषे । इष गतौ । अस्मादंतर्भावितण्यर्थात् क्विबेति क्विप् ॥

अष्टा महो दिव आदो हरी इह द्युम्नासाहमभि योधान उत्सं ।
हरिं यत्ते मंदिनं दुक्षन्वृधे गोरभसमद्रिभिर्वाताप्यं ॥८॥

अष्टा । महः । दिवः । आदः । हरी इति । इह । द्युम्नऽसहं । अभि । योधानः । उत्सं ।
हरिं । यत् । ते । मंदिनं । धुक्षन् । वृधे । गोऽरभसं । अद्रिऽभिः । वाताप्यं ॥८॥

हे इंद्र महो महतो दिवो मदकरस्य सोमस्याष्टा भोक्तारौ पातारौ हरी स्वकीयावश्वाविहास्मिन्कर्मण्यादः। पीतशेषं सोमं पायय। तथा द्युम्नासाहं द्युम्नस्यास्मदीयस्य धनस्याभिभवितारमुत्समुत्स्रावयितारं शत्रुं योधानो योधनशीलस्त्वमभि भव। यद्यदा ते तव वृधे वर्धनाय हरिं मनोहरं मंदिनं मदकरं गोरभसं। अत्र गोशब्दः पयसि वर्तते। पयो बलं। तद्वद्वेगवंतं। वीर्यवंतमित्यर्थः। वाताप्यं वातेन प्राप्तव्यं। वाततुल्येन शीघ्रकारिणा त्वया [illegible]त्यर्थः। एवंविधं सोममद्रिभिर्ग्रावभिर्धुक्षन् दुहंति ऋत्विजोऽभिषुण्वंति। [illegible] पूर्वत्र संबंधः॥ अष्टा। अश भोजने। तृच्। आगमानुशासनस्यानित्यत्वादिडभावः। धुक्षन्। पदकालीनो भष्भावश्छांदसः॥

त्वमायसं प्रति वर्तयो गोर्दिवो अश्मानमुपनीतमृभ्वा ।
कुत्साय यत्र पुरुहूत वन्वञ्छुष्णमनंतैः परियासि वधैः ॥९॥

त्वं । आयसं । प्रति । वर्तयः । गोः । दिवः । अश्मानं । उपऽनीतं । ऋभ्वा ।
कुत्साय । यत्र । पुरुऽहूत । वन्वन् । शुष्णं । अनंतैः । परिऽयासि । वधैः ॥९॥

हे इंद्र त्वं गोर्गंतुः शुष्णस्यासुरस्य वधार्थमायसमयोमयं वज्रं प्रति वर्तयः। आभिमुख्येन व्यसृजः। कीदृशं वज्रं। दिवो द्युलोकादृभ्वा दीप्तेन त्वष्ट्रो[illegible]तं अश्मानं शीघ्रं शत्रोर्व्यापकं। यत्र यदा हे पुरुहूत पुरुभिर्बहुभिः स्तोतृभिराहूतेंद्र कुत्सायैतत्संज्ञायर्षये शुष्णं शोषकम[illegible]रमनंतैर्निरवधिकैर्वधैर्हननसाधनैरायुधैर्वन्वन् हिंसन् परियासि परितो गच्छसि। तदानीं तद्वधार्थं वज्रं प्रत्यवर्तय इत्यर्थः॥ अश्मानं। अशू व्याप्तौ। अन्येभ्योऽपि दृश्यंत इति मनिन्। ऋभ्वा। जसादिषु छंदसि वावचनमिति नाभावस्य विकल्पितत्वादभावे यणादेशः। वन्वन्। वनु याचने। अत्र हिंसार्थः। तथा च यास्कः। वनुष्यतिर्हंतिकर्मानवगतसंस्कारो भवति। नि॰ ५. २.। इति। वधैः। हनश्च वध इति हंतेः करणेऽप् तत्संनियोगेन वधादेशश्च। स चादंतो ऽंतोदात्तः। तस्यातो लोपे सत्यु[illegible]स्वरेण प्रत्ययस्योदात्तत्वं॥

पुरा यत्सूरस्तमसो अपीतेस्तमद्रिवः फलिगं हेतिमस्य ।
शुष्णस्य चित्परिहितं यदोजो दिवस्परि सुग्रथितं तदादः ॥१०॥

पुरा । यत् । सूरः । तमसः । अपिऽइतेः । तं । अद्रिऽवः । फलिऽगं । हेतिं । अस्य ।
शुष्णस्य । चित् । परिऽहितं । यत् । ओजः । दिवः । परि । सुऽग्रथितं । तत् । आ ।
अदरित्यदः ॥१०॥

पुरा यद्यदा सूरः सूर्यस्तमसस्तमोरूपस्य शु[illegible]तेः संग्रामान्मुक्तोऽभवदिति शेषः। तदानीं हे अद्रिवः। आदृ[illegible]। तद्वन्निंद्र तं फलिगं। मेघनामैतत्। मेघरूपेणावृण्वंतं हेतिं हंतारं शुष्णमसुरमस्य। निरसितवानसि। यद्वा। अस्य शु[illegible]ष्णस्यासुरस्य हेतिं हननसाधनमायुधं फलिगं मेघलक्षणं प्राभांक्षीरिति शेषः। तथा शुष्णस्य चित् शोषयितुरसुरस्य च यदोज आच्छादकं बलं दिवस्परि द्योतमानस्य सूर्यस्योपरि परिहितमाच्छादितं सुग्रथितं सुष्ठु सूर्ये सक्तं तदोजस्तस्मात्सूर्यादादः। आदृणाः। विश्लिष्टं कृतवानसीत्यर्थः॥ अद्रिवः। छंदसीर इति मतुपो वत्वं। मतुवसो रुरिति नकारस्य रुत्वं। हेतिं। कृत्यल्युटो बहुलमिति बहुलवचनाद्धंतेः कर्तरि क्तिन्। ऊतियूतीत्यादौ निपातनाद्रूपसिद्धिरंतोदात्तत्वं च। अस्य। असु क्षेपणे।

लटः सिप्। तस्य व्यत्ययेन ह्यादेशः। अतो हेरिति हेर्लुक्। दिवस्परि। पंचम्याः परावध्यर्थ इति विसर्जनीयस्य सत्वं। अदः। दॄ विदारणे। लङि सिपि बहुलं छंदसीति विकरणस्य लुक्। गुणे हल्ङ्याब्भ्य इति सिलोपः॥ ॥२५॥

अनु त्वा मही पाजसी अचक्रे द्यावाक्षामा मदतामिंद्र कर्मन्।
त्वं वृत्रमाशयानं सिरासु महो वज्रेण सिष्वपो वराहुं ॥११॥

अनु। त्वा। मही इति। पाजसी इति। अचक्रे इति। द्यावाक्षामा। मदतां। इंद्र। कर्मन्।
त्वं। वृत्रं। आऽशयानं। सिरासु। महः। वज्रेण। सिस्वपः। वराहुं ॥११॥

हे इंद्र मही मह्यौ महत्यौ पाजसी बलवत्यावचक्रे अचंक्रमणे सर्वत्र व्याप्य वर्तमाने द्यावाक्षामा द्यावापृथिव्यौ कर्मन् वृत्रवधादिलक्षणे कर्मणि प्रवृत्तं त्वामनु मदतां। हृष्टमकुरुतां। अन्वमन्येतां वा। तथा च तैत्तिरीयकं। स आभ्यामेव प्रसूत इंद्रो वृत्रमहन्निति। तदनंतरं त्वमाशयानमा समंताद्व्याप्य वर्तमानं वराहुं वराहारं वृत्रमसुरं सिरासु सरणशीलास्वप्सु महो महता वज्रेण सिष्वपः। अस्वापयः। वज्रेण हत्वा पातितवानित्यर्थः॥ मही। सुपां सुलुगिति विभक्तेः पूर्वसवर्णदीर्घः। पाजसी। पाजःशब्दो बलवाचको लक्षणयात्र तद्वति वर्तते। ईयाडियाजीकाराणामुपसंख्यानमिति विभक्तेरीकारादेशः। द्यावाक्षामा। द्यौश्च क्षामा च। दिवो द्यावेति द्यावादेशः। देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं। सुपां सुलुगिति विभक्तेर्लुक्। मदतां। मदी हर्षे। व्यत्ययेन शप्। बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। महः। महतः। करणे शेषत्वेन विवक्षिते षष्ठी। अल्लोपश्छांदसः। सिष्वपः। ञिष्वप् शये। अस्माण्ण्यंताल्लुङि चङि संज्ञापूर्वकस्य विधेरनित्यत्वात् स्वापेश्चङि। पा० ६. १. १८.। इति संप्रसारणं न क्रियते॥

त्वमिंद्र नर्यो याँ अवो नॄन्तिष्ठा वातस्य सुयुजो वहिष्ठान्।
यं ते काव्य उशना मंदिनं दाद्वृत्रहणं पार्यं ततक्ष वज्रं ॥१२॥

त्वं। इंद्र। नर्यः। यान्। अवः। नॄन्। तिष्ठ। वातस्य। सुऽयुजः। वहिष्ठान्।
यं। ते। काव्यः। उशना। मंदिनं। दात्। वृत्रऽहनं। पार्यं। ततक्ष। वज्रं ॥१२॥

हे इंद्र नर्यो नृभ्यो हितस्त्वं यान्नॄन्नेतॄनश्वानवः अवसि रक्षसि तान्वातस्य तुल्यान् तद्वच्छीघ्रं गच्छतः सुयुजः शोभनं रथेन युज्यमानान्वहिष्ठानतिशयेन वोढॄनश्वांस्तिष्ठ। आतिष्ठ। आरोहेत्यर्थः। काव्यः कवेः पुत्र उशना मंदिनं मदकरं यं वज्रं ते तुभ्यं दात् दत्तवान् तं वज्रं वृत्रहणं वृत्रस्यासुरस्य घातकं पार्यं शत्रूणां पारणेऽतिक्रमणे समर्थं च ततक्ष। कृतवानसि॥ अवः। अवतेर्लेट्यडागमः। इतश्च लोप इतीकारलोपः। वहिष्ठान्। वोढृशब्दात्तुश्छंदसीतीष्ठन्। तुरिष्ठेमेयःस्विति तृलोपः। पार्यं। पार तीर कर्मसमाप्तौ। अस्माण्ण्यंतादचो यदिति यत्। ततक्ष। तक्षू त्वक्षू तनूकरणे। पुरुषव्यत्ययः॥

त्वं सूरो हरितो रामयो नॄन्भरच्चक्रमेतशो नायमिंद्र।
प्रास्य पारं नवतिं नाव्यानामपि कर्तमवर्तयोऽयज्यून् ॥१३॥

त्वं। सूरः। हरितः। रमयः। नॄन्। भरत्। चक्रं। एतशः। न। अयं। इंद्र।
प्रऽअस्य। पारं। नवतिं। नाव्यानां। अपि। कर्तं। अवर्तयः। अयज्यून् ॥१३॥

हे इंद्र सूरः सूर्यात्मना वर्तमानस्त्वं हरितो हरिद्वर्णान्नॄन्नेतॄनश्वान् यद्वा रसहरणशीलान् रश्मीन् रमयः। उपारमयः। एतशो न। एतश इति सूर्याश्वस्याख्या। तथा च श्रूयते। एतशेन त्वा सूर्यो देवतां गमयत्विति। नशब्दश्चार्थे। एतशश्च रथस्य चक्रं भरत्। प्रावहत्। अपि च त्वं नाव्यानां नावा तार्याणां नदीनां नवतिं नवतिसंख्यामतीत्य वर्तमानं पारं तीरदेशं। सप्तम्यर्थे द्वितीया। तीरदेशेऽयज्यूनयजमाना- यज्ञविहीना-

नसुरादीन् प्रास्य प्रक्षिप्य तत्र कर्तमवर्तयः। कर्तव्यमपि कृत्वा तानयजमानानवर्तयः। प्रापयः॥ रमयः। लङि बहुलं छंदस्यमाङ्योगेऽपीत्यडभावः। अन्येषामपि दृश्यत इति सांहितिको दीर्घः। प्रास्य। असु क्षेपणे। अस्मात्ल्यपि रूपं। नाव्यानां। नौवयोधर्मेत्यादिना यत्। तित्स्वरित इति स्वरितत्वं॥

त्वं नो॑ अ॒स्या इं॑द्र दु॒र्हणा॑याः पा॒हि व॑ज्रिवो दुरि॒ताद॒भीके॑।
प्र नो॒ वाजा॑न्र॒थ्यो॒३ अश्व॑बुध्यानि॒षे यं॑धि॒ श्रव॑से सू॒नृता॑यै ॥१४॥
त्वं। नः॒। अ॒स्याः। इं॒द्र॒। दुः॒ऽहना॑याः। पा॒हि। व॒ज्रि॒ऽवः॒। दुः॒ऽइ॒तात्। अ॒भीके॑।
प्र। नः॒। वाजा॑न्। र॒थ्यः॑। अश्व॑ऽबुध्यान्। इ॒षे। यं॒धि॒। श्रव॑से। सू॒नृता॑यै ॥१४॥

हे वज्रिवो वज्रवन्निंद्र त्वं दुर्हणाया दुःखेन हंतव्याया अस्या अवृत्तेर्दारिद्र्यान्नोऽस्मान्पाहि। रक्ष। तथा दुरितात्पापादभीकेऽभिप्राप्ते समीपवर्तिनि संग्रामेऽस्मान्रक्ष। अपि च नोऽस्मभ्यं रथ्यो रथयुक्तान् अश्वबुध्यानश्वानां बोधकान्। अश्वा यावद्भिर्लभ्यंते तावदित्यर्थः। यद्वा। अश्वबुध्यान्। छांदसो वर्णविकारः। अश्वमूलान्। अश्वप्रमुखानित्यर्थः। सर्वं हि धनमश्वमूलं दासापवर्गं। यथोक्तं। दासप्रवर्गं रयिमश्वबुध्यं। ऋ० १. ९२. ८.। इति। एवंविधान्वाजान् धनानि प्र यंधि। प्रयच्छ। किमर्थं। इष अन्नार्थं श्रवसे कीर्त्यर्थं सूनृतायै। सूनृता प्रियसत्यात्मिका वाक्। तदर्थं च॥ दुर्हणायाः। ईषद्दुःसुष्विति हंतेः कर्मणि खल्। पाहि। पादादित्वान्निघाताभावः। वज्रिवः। वज्रोऽस्यास्तीति वज्री हस्तः। तद्वान् वज्रिवान्। छंदसीर इति मतुपो वत्वं। संबुद्धौ मतुवसो रुरिति नकारस्य रुत्वं। रथ्यः। छंदसीवनिपाविति रथशब्दान्मत्वर्थीय ईकारः। यंधि। यम उपरमे। बहुलं छंदसीति विकरणस्य लुक्। वा छंदसीति हेः पित्त्वेन ङित्त्वाभावादङितश्च। पा० ६. ४. १०३.। इति हेर्धिः॥

मा सा ते॑ अ॒स्मत्सु॑म॒तिर्वि द॑स॒द्वाज॑प्रमहः॒ समिषो॑ वरंत।
आ नो॑ भज मघव॒न्गोष्व॒र्यो मंहि॑ष्ठास्ते सध॒मादः॑ स्याम ॥१५॥
मा। सा। ते॒। अ॒स्मत्। सु॒ऽम॒तिः। वि। द॒स॒त्। वाज॑ऽप्रमहः। सं। इषः॑। व॒रं॒त॒।
आ। नः॒। भ॒ज॒। म॒घ॒ऽव॒न्। गोषु॑। अ॒र्यः। मंहि॑ष्ठाः। ते॒। स॒ध॒ऽमादः॑। स्या॒म॒ ॥१५॥

हे वाजप्रमहो वाजैर्धनैः प्रमहनीयेंद्र ते त्वदीया सा सुमतिः शोभनानुग्रहरूपा बुद्धिरस्मदस्मासु मा वि दसत्। मा विशुष्यतु। तथेषोऽन्नान्यस्मान् सं वरंत। संवृतान्कुर्वंतु। हे मघवन् धनवन्निंद्र अर्यो धनपतिस्त्वं नोऽस्मान् गोष्वा भज। प्रापय। ते तव मंहिष्ठा अतिशयेन स्तुतिभिः प्रवर्धयितारो वयं सधमादः स्याम। पुत्रपौत्रादिभिः सह माद्यंतो भवेम॥ अस्मत्। सुपां सुलुगिति सप्तम्या लुक्। दसत्। दसु उपक्षये। माङि लुङि पुषादित्वादङ्। वाजप्रमहः। वाजैर्धनैः प्रकृष्टं महस्तेजो यस्य स तथोक्तः। पादादित्वादाष्टमिकनिघाताभावः। षाष्ठिकमामंत्रितायुदात्तत्वं। वरंत। वृञ् वरणे। व्यत्ययेन शप्। गोषु। सावेकाच इति प्राप्तस्य विभक्त्युदात्तत्वस्य न गोश्वन्साववर्णेति प्रतिषेधः। अर्यः। अर्यः स्वामिवैश्ययोरिति निपात्यते। अर्यः स्वाम्याख्या चेत्। फि० १. १८.। इत्यंतोदात्तत्वं। मंहिष्ठाः। महि वृद्धौ। इदित्त्वान्नुम्। अस्मादंतर्भावितण्यर्थात्तृच्। तुश्छंदसीतीष्ठन्। तुरिष्ठेमेयःस्विति तृलोपः। सधमादः। मद तृप्तियोगे। चौरादिकः। सह माद्यंते तृप्ता भवंतीति सधमादः। क्विप्चेति क्विप्। जस्। सध मादस्थयोश्छंदसीति सहस्य सधादेशः॥ ॥२६॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये प्रथमाष्टकेऽष्टमोऽध्यायः समाप्तः॥

॥ इति प्रथमाष्टकः समाप्तः॥

ओं

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे । यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननं ॥
यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वंदे [illegible] ॥
प्रक्रिया प्रथमे कांडे साकल्येनोपवर्णिता । अत ऊर्ध्वतनी ज्ञेया स्मर्यते च क्वचित्क्वचित् ॥

अथ द्वितीयाष्टके प्रथमोऽध्याय आरभ्यते । शतर्चिनामाद्ये मंडले चतुर्विंशत्यनुवाकाः । तेषु [illegible]दशानुवाके षट् सूक्तानि । तत्र प्र वः पांतमिति द्वितीयं सूक्तं । पंचोनेत्यनुवर्तमानात्पंचदशर्चं । ऋषिश्चान्यस्मादृषेरिति परिभाषया कक्षीवानृषिः । अनादेशपरिभाषया त्रिष्टुप् । विश्वे देवा देवता । प्र वो वैश्वदेवमित्यनुक्रमणिका ॥ अस्य विशेषविनियोगो लैंगिकः ॥

प्र वः पांतं रघुमन्यवोऽधो यज्ञं रुद्राय मीळ्हुषे भरध्वं ।
दिवो अस्तोष्यसुरस्य वीरैरिषुध्येव मरुतो रोदस्योः ॥१॥

प्र । वः । पांतं । रघुऽमन्यवः । अंधः । यज्ञं । रुद्राय । मीळ्हुषे । भरध्वं ।
दिवः । अस्तोषि । असुरस्य । वीरैः । इषुध्याऽइव । मरुतः । रोदस्योः ॥१॥

हे रघुमन्यवो लघुक्रोधा अक्रोधिन ऋत्विजो वो युष्माकं पांतं पालनशीलं पातव्यं वा यज्ञं यागसाधनमंधोऽन्नमाज्यसोमादिलक्षणं रुद्राय । रुद्दुःखं तद्धेतुभूतं दुरितं वा । तस्य द्रावयित्रे एतन्नामकाय देवाय मीळ्हुषे फलस्य वर्षित्रे तदर्थं प्र भरध्वं । प्रकर्षेण संपादयत । अहं चेषुध्येव इषुध्या शत्रून्यथा निरस्यति तथा वीरैरमित्राणां विविधमीरकैर्वीर्योपेतैर्वा तदनु[illegible]ः सह दिवो द्युलोकसकाशात् । उपलक्षणमेतत् । लोकत्रयादप्यसुरस्य निरसितव्यानामसुराणां निरसितुः । कर्मणि षष्ठी । निरसितारं तमेव देवं रोदस्योर्निरोधनवत्योर्द्यावापृथिव्योर्मध्ये वर्तमानाम्मरुतश्चास्तोषि । स्तौमि ॥ पांतं । पांतमित्यत्र पातेः शतृ पिबतेर्वौणादिको झः । मीळ्हुषे । दाश्वान्साह्वानिति क्वसुप्रत्ययांतो निपातः । चतुर्थ्येकवचने वसोः संप्रसारणमिति संप्रसारणं । शासिवसीत्यादिना षत्वं । दिवः । ऊडिदमित्यादिना विभक्तेरुदात्तत्वं । अस्तोषि । स्तौतेश्छांदसो लुङ् । इषुध्येव । इषवो धीयंतेऽस्यामितीषुधीः । कर्मण्यधिकरणे चेति दधातेः किः । कृत्स्वरेणांतोदात्तः । उदात्तयणो हल्पूर्वादिति विभक्तेरुदात्तत्वं ॥

पत्नीव पूर्वहूतिं वावृधध्या उषासानक्ता पुरुधा विदाने ।
स्तरीर्नात्कं व्युतं वसाना सूर्यस्य श्रिया सुदृशी हिरण्यैः ॥२॥

पत्नीऽइव । पूर्वऽहूतिं । ववृधध्यै । उषसानक्ता । पुरुधा । विदाने इति ।
स्तरीः । न । अत्कं । विऽउतं । वसाना । सूर्यस्य । श्रिया । सुऽदृशी । हिरण्यैः ॥२॥

पत्नीव पत्नी यथा पूर्वहूतिं पत्युः पूर्वाह्वानं ववृधध्यै वर्धयितुं शीघ्रगतिर्भवति तद्वदुषासानक्ताहोरात्रे देवते अपि पुरुधा बहुप्रकारं बहुविधैः स्तोत्रैर्विदाने ज्ञायमाने सत्यौ पूर्वहूतिं ववृधध्या अस्मदीयं पूर्वाह्वानं वर्धयितुं शीघ्रमागच्छतमिति शेषः । यद्वा । ववृधध्या अस्मद्वर्धनाय पुरुधा बहुप्रकारं विदाने वर्धनोपायाज्ञानत्यौ भवतमिति शेषः ॥ उषासानक्ता । उषासोषसः । पा॰ ६. ३. ३१. । इति पूर्वपदस्योषासादेशः । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं ॥ अथ केवलोषा उच्यते । स्तरीः शत्रूणां हिंसकस्तेजसाच्छन्नो वादित्यः स इव हिरण्यैर्हिरण्यवर्णै रश्मिभिर्व्युतं विततं विशेषेण संबद्धमत्कमत्कं संततं वा रूपं वसानाच्छादयंती धारयंती सूर्यस्य श्रिया शोभया सुदृशी शोभनं दृश्यमाना । सूर्यस्य पुरोगामिनी रश्मिभिः खल्वेषा जगद्भासयति । तादृश्युषा अस्मत्पूर्वहूतिं पालयत्वित्यर्थः । यद्वा । हिरण्यैर्हितरमणीयैः प्रकाशैर्धनविशेषैर्वा सहागच्छतु ॥ व्युतं । व्येञो निष्ठायां वचिस्वपीत्यादिना संप्रसारणं । स्तरीः । अवितृस्तृ इतीकारप्रत्ययः ॥

**ममत्तु नः परिज्मा वसर्हा ममत्तु वातो अपां वृषण्वान् ।**
**शिशीतमिंद्रापर्वता युवं नस्तन्नो विश्वे वरिवस्यंतु देवाः ॥३॥**
**ममत्तु । नः । परिऽज्मा । वसर्हा । ममत्तु । वातः । अपां । वृषण्ऽवान् ।**
**शिशीतं । इंद्रापर्वता । युवं । नः । तत् । नः । विश्वे । वरिवस्यंतु । देवाः ॥३॥**

नोऽस्मान्वसर्हा वसनार्हो गार्हपत्यादिरूपेण । यद्वा । वासकानामाच्छादकानां वृत्रादीनां हंताग्निः । अथवा । वसर्हा वासार्हो वासरस्य गमयिता । परिज्मा परितो गंतादित्यो ममत्तु । मादयतु । तथापां वृष्ट्युदकानां वृषण्वान् वर्षणवान् वृष्ट्युत्पादको वातो वायुरस्मान्ममत्तु । किंच हे इंद्रापर्वता । इंद्रः प्रसिद्धः । पर्वतः पर्ववान् वृष्ट्यादिपूरणवान्पर्जन्यः । तौ युवं युवां नोऽस्मानस्मद्बुद्धिं वा शिशीतं । तीक्ष्णीकुरुतं । शोधयतमित्यर्थः । तत्तस्मात् यस्मादहं सर्वान्देवान् स्तौमि तस्माद्विश्वे सर्वेऽपि देवा नोऽस्माकं वरिवस्यंतु । प्रभूतमन्नं प्रदातुमिच्छंतु । समृद्धान्नप्रदानेन प्रीणयंत्वित्यर्थः ॥ ममत्तु । मदी हर्षे । अंतर्भावितण्यर्थाल्लोटि छांदसो विकरणस्य श्लुः । द्विर्वचनं । शिशीतं । ई हल्यघोरितीत्वं । बहुलं छंदसीत्यभ्यासस्येत्वं । इंद्रापर्वतेत्यत्र देवताद्वंद्वे चेति पूर्वपदस्यानङादेशः ॥

**उत त्या मे यशसा श्वेतनायै व्यंता पांतौशिजो हुवध्यै ।**
**प्र वो नपातमपां कृणुध्वं प्र मातरा रास्पिनस्यायोः ॥४॥**
**उत । त्या । मे । यशसा । श्वेतनायै । व्यंता । पांता । औशिजः । हुवध्यै ।**
**प्र । वः । नपातं । अपां । कृणुध्वं । प्र । मातरा । रास्पिनस्य । आयोः ॥४॥**

औशिज उशिजः पुत्रः कक्षीवानहं मे । तादर्थ्ये चतुर्थी । मदर्थं यशसा । यश इत्यन्नं बलं कीर्तिर्वोच्यते । तद्वंती व्यंता भक्षयंती चरुपुरोडाशादिकं पांता पिबंतावाज्यसोमादिकं त्या । तच्छब्दसमानार्थस्त्यच्छब्दः । यौ सुत्यत्वेन प्रसिद्धौ तावश्विनौ । अत्र यद्यपि विशेषो न श्रुतः तथापि सूक्तस्य वैश्वदेवत्वादुषःसंबंधाद्द्विवचनलिंगाच्चाश्विनाविति गम्यते । तादृशावश्विनौ श्वेतनायै । इति षष्ठ्यर्थे चतुर्थी । विश्वं जगच्छ्वेतयंत्या उषसः तत्संबंधिनि काले । उषःकालीनाह्वानाय यतेयमिति शेषः । हे ऋत्विजः वो यूयं । प्रथमार्थे द्वितीया । अपामुदकानां नपातं नपातयितारं तासां नप्तारं वाग्निं । अद्भ्य ओषधिवनस्पतयः ताभ्योऽग्निरित्यपां नप्तृत्वमग्नेः । तं देवं प्र कृणुध्वं । करोतिरत्र क्रियासामान्यवाची क्रियाविशेषे स्तोत्रे पर्यवस्यति । प्रकर्षेण स्तुध्वमित्यर्थः । किंच रास्पिनस्य । रपते रसतेर्वा शब्दनार्थस्य घञंतस्य कृतसकारपकारोपजनस्य रास्प इति भवति । तट्[illegible] रास्पि स्तोत्रं । तद्वान् रास्पिनः स्तोता । तस्यायोस्तादृशस्य मनुष्यस्य मम मह्यं मातरा मातृ[illegible]वहोरात्रदेवते अपि प्र कृणुध्वं । अथवा रास्पिनस्य । एको मत्वर्थप्रत्ययश्छांदसः । प्रवर्षणध्वनियुक्तस्य वृष्ट्युदकस्य गमनशीलस्य निर्मात्र्यावहोरात्रे प्र कृणुध्वं ॥ व्यंता पांता । उभयत्र सुपां सुलुगित्याकारः ॥

आ वो॑ रुव॒ण्युमौ॑शि॒जो हु॒वध्यै॒ घोषे॑व॒ शंस॒मर्जु॑नस्य॒ नंशे॑ ।
प्र वः॑ पू॒ष्णे दा॒वन॒ आँ अच्छा॑ वोचेय व॒सुता॑तिम॒ग्नेः ॥५॥
आ । व॒ः । रु॒व॒ण्युं । औ॒शि॒जः । हु॒वध्यै॑ । घोषा॑ऽइव । शंस॑ं । अर्जु॑नस्य । नंशे॑ ।
प्र । व॒ः । पू॒ष्णे । दा॒वने॑ । आ । अच्छ॑ । वो॒चे॒य॒ । व॒सु॒ऽता॑तिं । अ॒ग्नेः ॥५॥

हे देवाः औशिजः कक्षीवानहं वो युष्माकं संबंधिनं रुवण्युं रवणीयं शब्दनीयं शंसं स्तोत्रमा ऊवध्यै युष्मदाह्वानायाच्छा वोचेय। आभिमुख्येन ब्रवीमि। यद्वा। अत्राप्यश्विनाविवोच्येते। तस्मिन्पक्षे बहुवचनं पूजार्थं। हे अश्विनौ वो युष्मान् घोषेवैतन्नामिका ब्रह्मवादिनीव। सा यथार्जुनस्य श्वेतवर्णस्य स्वशरीरगतत्वग्रोगस्य नंशे नाशनाय यथाश्विनोः शंसमकार्षीत् तद्वदहमपीत्यर्थः। हे देवाः युष्मत्संबंधिने दावन आ आभिमुख्येन फलस्य दात्रे पूष्णे पोषकायैतन्नामकाय देवायापि॥ आकारस्याङोऽनुनासिकश्छंदसीति प्रकृतिभावः॥ अच्छाभिमुख्यगमनेन वोचेय। स्तौमि॥ वच परिभाषणे। लिङ्याशिष्यङ्। वच उमित्युम्। किंचाग्नेर्वसुतातिं तत्संबंधि धनमपि वोचेय। स्तौमि तमेवाग्निं॥ ॥१॥

श्रु॒तं मे॑ मित्रावरुणा॒ हवे॒मोत श्रु॒तं॒ सद॑ने वि॒श्वतः॑ सीं ।
श्रोतु॑ नः॒ श्रोतु॑रातिः सु॒श्रोतुः॑ सु॒क्षेत्रा॒ सिंधु॑र॒द्भिः ॥६॥
श्रु॒तं । मे॒ । मि॒त्रा॒व॒रु॒णा॒ । हवा॑ । इ॒मा । उ॒त । श्रु॒तं । सद॑ने । वि॒श्वतः॑ । सीं॒ ।
श्रोतु॑ । नः॒ । श्रोतु॑ऽरातिः । सु॒ऽश्रोतुः॑ । सु॒ऽक्षेत्रा॑ । सिंधुः॑ । अ॒त्ऽभिः ॥६॥

हे मित्रावरुणा एतन्नामानावहोरात्राभिमानिदेवौ युवामिमेमानि हवा[illegible] श्रुतं। शृणुतं। न केवलमस्मदाह्वानं उतापि च सदने यागगृहे विश्वत उद्गात्रादिभिः सर्वतः क्रियमाणं सीमेतत्स्तोत्रमपि श्रुतं। शृणुतं। किंच श्रोतुरातिः सर्वत्र श्रूयमाणधनत्वाद्बहुप्रदानो वा सुश्रोतुरस्मदाह्वानस्य सम्यक्श्रोता सिंधुर्जलाभिमानी देवः सुक्षेत्रा सुक्षेत्राण्यद्भिर्वृष्टिजलैः क्लेदयन्निति शेषः। यद्वा। अस्मत्क्षेत्राण्यद्भिः सुक्षेत्राणि सस्यादिसमृद्धानि कुर्वन्नो हवं शृणोतु। सुक्षेत्रत्वलाभाय शृणोत्वित्यर्थः॥ हवा इमा। उभयत्र विभक्त्या आकारः। श्रुतमित्यत्र बहुलं छंदसीति विकरणस्य लुक्॥

स्तु॒षे सा वां॑ वरुण मित्र रा॒तिर्गवां॑ श॒ता पृ॒क्षया॑मेषु प॒ज्रे ।
श्रु॒तर॑थे प्रि॒यर॑थे॒ दधा॑नाः स॒द्यः पु॒ष्टिं निरुं॑धा॒नासो॑ अग्मन् ॥७॥
स्तु॒षे । सा । वां॒ । व॒रु॒ण॒ । मि॒त्र॒ । रा॒तिः । गवां॑ । श॒ता । पृ॒क्षऽया॑मेषु । प॒ज्रे ।
श्रु॒तऽर॑थे । प्रि॒यऽर॑थे । दधा॑नाः । स॒द्यः । पु॒ष्टिं । नि॒ऽरुं॒धा॒नासः॑ । अ॒ग्म॒न् ॥७॥

हे मित्र हे वरुण देव वां युवामहं स्तुषे। स्तुवे॥ व्यत्ययेन मध्यमः॥ युवयोः संबंधिनी सा प्रसिद्धा रातिर्दानं शता शतानां शतसंख्यानामपरिमितानां गवां संबंधिन्यसंख्यातगोविषया राति. पज्रे कक्षीवति मयि पृक्षयामेषु। पृक्ष इत्यकारांतोऽप्यस्ति। पृक्षाणामन्नानां नियमनं येषु स्तोत्रेषु यज्ञेषु वा तेषु निमित्तभूतेषु भवत्विति शेषः। किंच मित्रादयो देवाः श्रुतरथे सर्वत्र प्रसिद्धरथोपेते प्रियरथे प्रीयमाणरथयुक्ते सर्वदा रथप्रिये पज्रे च मय्येव दधानाः प्रीतिं धारयंतः सद्य आगमनानंतरमेव पुष्टिं गवादिपोषं निरुंधानाः नीऽवरुंधाना अस्मास्वेव स्थापयंतः। यद्वा। मयि पुष्टिं दधानाः कुर्वाणा निरुंधानासः कृतामेव पुष्टिं मयि स्थिरां कुर्वंतोऽग्मन्। आगच्छंतु॥ रातिः। रा दाने। भावे क्तिन्। मंत्रे वृषेत्यादिना क्तिन उदात्तत्वं। शता। सुपां सुलुगिति षष्ठ्याः पूर्वसवर्णदीर्घत्वं। दधानाः। जुहोत्यादित्वाच्छपः श्लुः। अभ्यस्तानामादिरित्याद्युदात्तत्वं। अग्मन्। गमेश्छांदसे लुङि मंत्रे घसेत्यादिना च्लेर्लुक्। गमहनेत्युपधालोपः॥

अस्य स्तुषे महिमघस्य राधः सचा सनेम नहुषः सुवीराः ।
जनो यः पज्रेभ्यो वाजिनीवानश्वावतो रथिनो मह्यं सूरिः ॥ ८ ॥
अस्य । स्तुषे । महिऽमघस्य । राधः । सचा । सनेम । नहुषः । सुऽवीराः ।
जनः । यः । पज्रेभ्यः । वाजिनीऽवान् । अश्वऽवतः । रथिनः । मह्यं । सूरिः ॥ ८ ॥

महिमघस्य । महि महत्पूज्यं मघो धनमन्नं वा यस्य देवसंघस्य स तथोक्तः । तादृशस्यास्य राधो धनं स्तुषे । स्तुवे । व्यत्ययेन मध्यमः । धनलाभाय प्रभूतधनं देवसंघं स्तौमीत्यर्थः । किंच नहुषः । मनुष्यनामैतत् । परस्परस्नेहबंधोपेता मनुष्या वयं कक्षीवंतः सुवीराः शोभनपुत्राद्युपेताः संतः सचा सह परस्परैकमत्येन सनेम । त्वद्दत्तं धनं संभजेम । लभेमहि । देवसंघो विशेष्यते । यो जनो देवजनो यश्च देवसंघः पज्रेभ्योऽंगिरोगोत्रोत्पन्नेभ्यः कक्षीवद्भ्यः । पज्रा वा अंगिरस इति श्रुतिः । तेभ्यो वाजिनीवान् । वाजोऽन्नं । तद्वती क्रिया वाजिनी । तया तद्वान्भवति । यद्वा । एको मत्वर्थीयप्रत्ययश्छांदसः । अस्मभ्यं प्रदेयेन दत्तेन वान्नेन तद्वान्भवतीत्यर्थः यश्च देवसंघोऽश्वावतो बहुभिस्तद्दत्तैरश्वैस्तद्वतो रथिनो रथवतो मह्यं मे सूरिः प्रेरको भवति । अश्वानां रथानां प्रेरयितारं देवसंघं स्तुष इत्यर्थः ॥ सुवीराः । वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं । अश्वावतः । अश्वशब्दस्य मंत्रे सोमाश्वेत्यादिना मतुपि दीर्घत्वं ॥

जनो यो मित्रावरुणावभिध्रुगपो न वां सुनोत्यक्ष्णयाध्रुक् ।
स्वयं स यक्ष्मं हृदये नि धत्त आप यदीं होत्राभिर्ऋतावा ॥ ९ ॥
जनः । यः । मित्रावरुणौ । अभिऽध्रुक् । अपः । न । वां । सुनोति । अक्ष्णयाऽध्रुक् ।
स्वयं । सः । यक्ष्मं । हृदये । नि । धत्ते । आप । यत् । ईं । होत्राभिः । ऋतऽवा ॥ ९ ॥

हे मित्रावरुणौ युष्माकं यो जनोऽभिध्रुक् अभितो द्रोग्धा भवति । अयष्टा भवतीत्यर्थः । यश्चाक्ष्णयाध्रुक् वक्रेण मार्गेण द्रुह्यति अन्यथाप्रकारेण द्रुह्यति । द्रोहप्रकार उच्यते । यो युवामपः सोमरसान्न सुनोति । अभिषवं न करोति । युवामतिक्रम्यान्यदेवतार्थं सुनोतीत्यभिप्रायः । अयमेवाक्ष्णयाद्रोहः । स मूढो द्विविधो जनः स्वयं यक्ष्मं व्याधिं हृदये स्वचित्ते नि धत्ते । स्थापयति । अनुष्ठातॄणां भोगान्पश्यन्व्यथितो भवतीत्यर्थः । यत् । लिंगव्यत्ययः । य उक्तविलक्षणः पुमान ऋतावा यज्ञवान् [illegible] होत्राभिः । वाङ्नामैतत् । स्तुतिवाग्भिरीमेनं सोमरसमाप व्याप्नोति । स्तुवन् सोममभिषुणोतीति यावत् । स नरः पृत्सु यातीति वक्ष्यमाणेन सह संबंधः ॥ अभिध्रुक् । द्रुहेः सत्सूद्विषेति क्विप् । संहितायां भष्भावश्छांदसः । ऋतावेत्यत्र छंदसीवनिपाविति मत्वर्थीयो वनिप् । अन्येषामपि दृश्यत इति संहितायां दीर्घत्वं ॥

स व्राधतो नहुषो दंसुजूतः शर्धस्तरो नरां गूर्तश्रवाः ।
विसृष्टरातिर्याति बाळ्हसृत्वा विश्वासु पृत्सु सदमिच्छूरः ॥ १० ॥
सः । व्राधतः । नहुषः । दंऽसुजूतः । शर्धःऽतरः । नरां । गूर्तऽश्रवाः ।
विसृष्टऽरातिः । याति । बाळ्हऽसृत्वा । विश्वासु । पृत्ऽसु । सदं । इत् । शूरः ॥ १० ॥

हे मित्रावरुणौ युवां गतमंत्रावसानोक्तलक्षणो युष्मत्पूजको जनो दंसुजूतो दांतैरश्वैः सुष्ठु प्रेरितः अत एव नरां नराणां शर्धस्तरोऽतिशयेनाभिभविता । अथवातिशयेन बलवान् । नराणां स्वसमानानां मध्ये गूर्तश्रवा उद्गूर्णदीप्तिः प्रख्यातान्नो वा विसृष्टरातिरर्थिभ्यः प्रदत्तधनः एवं महानुभावः शूरः सन् विश्वासु पृत्सु सर्वेषु अन्येषु संग्रामेषु व्राधतः । महन्नामैतत् । हिंसकान्महतोऽपि नहुषः । मनुष्यनामैतत् । मनुष्यान् शत्रून्प्रति बाळ्हसृत्वा भृशं सर्ताशंकितगमनः सन् सदमित् सदैव याति । गच्छति ॥ दंसुजूतः । दाम्येर्विच् । तृतीया

कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । गूर्तश्रवाः । गुरी उद्यमने । नसत्तनिषत्तेत्यादौ निपातनान्निष्ठानत्वाभावः । विस्पृष्टरातिः । विपूर्वात्सृजतेः कर्मणि निष्ठा । गतिरनंतर इति गतेः प्रकृतिस्वरत्वं । बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव शिष्यते । पृत्सु । पदादिषु मांसपृत्स्नूनामुपसंख्यानमिति पृतनाशब्दस्य पृदादेशः । साविकाच इति विभक्तेरुदात्तत्वं । बाल्हत्वा । सर्वेभ्योऽपि दृश्यंत इति क्वनिप् ॥ ॥२॥

अध ग्मंता नहुषो हवं सूरेः श्रोता राजानो अमृतस्य मंद्राः ।
नभोजुवो यन्निरवस्य राधः प्रशस्तये महिना रथवते ॥११॥
अध । ग्मंत । नहुषः । हवं । सूरेः । श्रोत । राजानः । अमृतस्य । मंद्राः ।
नभःऽजुवः । यत् । निरवस्य । राधः । प्रऽशस्तये । महिना । रथऽवते ॥११॥

हे राजानो राजमानाः सर्वस्येश्वरा वा हे मंद्रा मादयितारः यूयममृतस्यामरणस्य सूरेः स्तोत्रादिप्रेरकस्य नहुषो मनुष्यस्य मम हवमाह्वानं श्रोत । शृणुत ॥ बहुलं छंदसीति शपो लुक् । अमृतस्येत्यत्र बहुव्रीहौ नञो जरमरमित्रमृता इत्युत्तरपदाद्युदात्तत्वं ॥ अधाथ श्रवणानंतरं ग्मंत । आगच्छत ॥ गमेश्छांदसो लङ् । मध्यमबहुवचनस्य व्यत्ययेन झः । बहुलं छंदसीति शपो लुक् । गमहनेत्युपधालोपः ॥ किमर्थमागमनं उच्यते । नभोजुवो नभसि व्याप्ता यूयं यद्यस्मान्निरवस्य निर्गतरवकस्य युष्मद्व्यतिरेकेण रक्षकांतररहितस्य । अथवा निर्गतो मुखादुच्चरितो रवः शब्दः स्तोत्ररूपो यस्य तादृशस्य । रथवते रथवतो यजमानस्य । षष्ठ्यर्थे चतुर्थी । महिना महिम्ना माहात्म्येन ॥ मकारलोपश्छांदसः ॥ तेन युक्तं राधः समृद्धिसाधनं हविर्लक्षणं संराधकं स्तोत्रं वा प्रशस्तये प्रशंसितुं कामयध्वे । तस्मादाह्वानं शृणुतागच्छत चेति ॥

एतं शर्धं धाम यस्य सूरेरित्यवोचन्दशतयस्य नंशे ।
द्युम्नानि येषु वसुताती रारन्विश्वे सन्वंतु प्रभृथेषु वाजं ॥१२॥
एतं । शर्धं । धाम । यस्य । सूरेः । इति । अवोचन् । दशऽतयस्य । नंशे ।
द्युम्नानि । येषु । वसुऽतातिः । ररन् । विश्वे । सन्वंतु । प्रऽभृथेषु । वाजं ॥१२॥

यस्य सूरेर्हविरादिप्रेरकस्य यजमानस्य संबंधिनो दशतयस्य दशेंद्रियसंवर्धकत्वेन दशावयवस्यान्नस्य नंशे प्राप्तये वयमाहृताः स्म तस्मै यजमानायैतमिदानीं दातव्यत्वेन वर्तमानं शर्धं परेषामभिभावकमन्नं तत्प्राप्तिहेतुं बलं वा धाम विदधाम करवामेत्यवोचन्देवाः ॥ धाम । दधातेर्लुङि गातिस्थेति सिचो लुक् । वचेरकारस्योम् । अस्यतिवक्तीत्यादिना च्लेरङ् ॥ येषु देवेषु द्युम्नानि द्योतमानान्यन्नानि वसुतातिर्वसूनां धनानां तातिर्विस्तारश्च वसून्येव वा रारन् रमंते भृशं ॥ तातिः । तनोतेः क्तिनि व्यत्ययेनात्वं । मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं । यद्वा । स्वार्थिकस्तातिल् । रारन्निति रमतेर्यङ्लुगंतस्य लुङि रूपं ॥ ते विश्वे सर्वे देवाः प्रभृथेषु प्रकृष्टभरणेषु यागेषु वाजमन्नं सन्वंतु । ददतु । प्रयच्छंतु ॥ षणु दाने ॥ यद्वा । यस्य सूरेः स्वभूतस्य च दशतयस्य दश चमसेष्ववस्थितस्य सोमस्य प्राप्तये वयमाहृताः स्म तस्मा एतं शर्धं धामेत्यवोचन् । यस्मादेवं तस्मात्प्रभृथेषु यागेषु वाजं तादृशं सोमलक्षणमन्नं विश्वे देवाः सन्वंतु । संभजंतां ॥ वन षण संभक्तावित्यस्य व्यत्ययेनोप्रत्ययः ॥ कीदृशेषु यज्ञेषु । येषु वसुतातिर्वसूनां हविर्लक्षणानां धनानां वा विस्तारयितार ऋत्विजः । वचनव्यत्ययः । द्युम्नानि द्योतमानानि हवींषि रारन् ददति ॥ रा दाने । लेटि छांदसः शपः श्लुः । छंदस्युभयथेत्यार्धधातुकत्वादातो लोप इटि चेत्याकारलोपः । अत एवाभ्यस्तानामादिरित्याद्युदात्तत्वाभावश्च ॥

मंदामहे दशतयस्य धासेर्द्विर्यत्पंच बिभ्रतो यंत्यन्ना ।
किमिष्टाश्व इष्टरश्मिरेत ईशानासस्तरुष ऋंजते नॄन् ॥१३॥

मंदामहे। दशऽतयस्य। धासेः। द्विः। यत्। पंच। बिभ्रतः। यंति। अन्ना।
किं। इष्टऽअश्वः। इष्टऽरश्मिः। एते। ईशानासः। तरुषः। ऋंजते। नृन् ॥ १३॥

मंदामहे। स्तुमो वयं देवान् ॥ मदि स्तुतौ। इदित्त्वान्नुम् ॥ किमर्थं। दशतयस्य धासेर्दशेंद्रियतृप्तिसाधनत्वेन दशावयवस्यान्नस्य यद्यस्माद्विः पंच दशविधान्यन्नानि। दशचमसगृहीतत्वादन्नस्य दशविधत्वं। एवंविधमन्नं बिभ्रतो धारयंतो दश चमसाध्वर्यवो यंति होमाय गच्छंत्याहवनीयं प्रति। यद्वा। आश्वमेधिकानि दशान्नानि जुहोतीत्याम्नातान्याज्यमध्वादीनि दशविधान्यन्नानि विश्वेभ्यो देवेभ्यो होतुं धारयंतो यंति यदा तदा मंदामह इति। न चेष्टाश्वप्रभृतीन्यष्टृन्विहाय कस्मादस्मान्प्रत्यागमिष्यंतीति वाच्यं। तरुषः शत्रूणां तारकान् ॥ तरतेरौणादिक उसिन् ॥ नृन् नेतृन्कर्मणां एवं महानुभावान्वरुणादीनिष्टाश्व एतन्नामको राजा किमृंजते। किं प्रसाधयति। तथेष्टरश्मिस्च किमृंजते। एत इदानीं वर्तमाना ईशानासः पृथिव्या ईश्वरा राजानश्च किं प्रसाधयंति। यद्वा। येषां स्तोतृणामस्माकमेते स्तुता देवा ईशानासः स्वामिनः किल तादृशांस्तरुषः शत्रूणां तारकान् नृन् कर्मनिर्वाहकानस्मानिष्टाश्वादयः किं साधयंति। किमुपद्रवंति। न प्रभवंतीत्यर्थः ॥

हिरण्यकर्णं मणिग्रीवमर्णस्तन्नो विश्वे वरिवस्यंतु देवाः।
अर्यो गिरः सद्य आ जग्मुषीरोस्राश्चाकंतूभयेष्वस्मे ॥ १४॥
हिरण्यऽकर्णं। मणिऽग्रीवं। अर्णः। तत्। नः। विश्वे। वरिवस्यंतु। देवाः।
अर्यः। गिरः। सद्यः। आ। जग्मुषीः। आ। उस्राः। चाकंतु। उभयेषु। अस्मे इति ॥ १४॥

हिरण्यकर्णं हिरण्यविकारकुंडलाद्युपेतकर्णं मणिग्रीवं रत्नाद्युपेतकंठं। एतद्द्वयं सर्वावयवस्याप्युपलक्षणं। एवं सर्वांगाभरणयुक्तमर्णः अरणीयं रूपं तद्वंतं पुत्रादिकमित्यर्थः। उक्तलक्षणमस्मदीयं रूपं वा नोऽस्माकं विश्वे सर्वे देवा वरिवस्यंतु। परिचरंतु। प्रयच्छंत्वित्यर्थः। अर्योऽरणीयो विश्वेषां देवानां संघो जग्मुषीः स्तोतुर्मुखान्निर्गच्छंतीर्गिरः स्तुतीरुस्राः। विकारे प्रकृतिशब्दः। क्षीराज्यादीनि हवींषि च सद्योऽस्मदागमनानंतरमेव चाकंतु। कामयंतां ॥ छांदसः शपः श्लुः परस्मैपदं च। यद्वा। यङ्लुकि नुगभाव. ॥ आ चाकंत्विति वा योज्यं। पर्याप्तं [illegible]त्यर्थः। केष्विति तदुच्यते। अस्मे अस्माकं संबंधिषूभयेषु स्तोतृषु यष्टृषु च। यद्वा। अस्माकमुभयेष्वैहिकामुष्मिकविषयेषूभयविधेषु फलेषु ॥

चत्वारो मा मशर्शारस्य शिश्वस्त्रयो राज्ञ आयवसस्य जिष्णोः।
रथो वां मित्रावरुणा दीर्घाप्साः स्यूमगभस्तिः सूरो नाद्यौत् ॥ १५॥
चत्वारः। मा। मशर्शारस्य। शिश्वः। त्रयः। राज्ञः। आयवसस्य। जिष्णोः।
रथः। वां। मित्रावरुणा। दीर्घऽअप्साः। स्यूमऽगभस्तिः। सूरः। न। अद्यौत् ॥ १५॥

मा मा कक्षीवंतं मशर्शारस्य। मशकीकृत्य भृशं शृणोति शारयति वामित्रानिति मशर्शारः। एतन्नामकस्य राज्ञः शिश्वः शिशवः शिशुवदप्रबुद्धाश्चत्वारः पुत्रा बाधंत इति शेषः ॥ शिशु[illegible]स्य जसादिषु छंदसि वावचनमिति गुणाभावः ॥ तथायवसस्य सर्वतः प्राप्तान्नस्यैतन्नाम्नो राज्ञो जिष्णोर्जयशीलस्य पुत्रास्त्रयस्तेऽपि बाधंत इति शेषः। हे मित्रावरुणावेतन्नामानौ देवौ वां युवयोः संबंधी रथो दीर्घाप्साः। अप्स इति रूपनाम। अतिविस्तृतरूपः स्यूमगभस्तिः। स्यूममिति सुखनाम। सुखकरदीप्तिः सन् सूरो न सूर्य इवाद्यौत्। द्योततां। उक्तानामस्मद्विरोधिनां पुरतः स्फुरन् भयजनको भवत्वित्यर्थः ॥ द्युतेश्छंदसि लुङ्लङ्लिट इति लुङ्। द्युद्भ्यो लुङि। पा॰ १. ३. ९१.। इति परस्मैपदं। सिचि वृद्धिः परस्मैपदेषु। पा॰ ७. २. १.। इति वृद्धिः। बहुलं छंदसीतीडभावे हल्ङ्याद्दिसंयोगांतलोपौ। यद्वा। द्यु अभिगमने। आदादिकः। छांदसे लङ्युतो वृद्धिर्लुकि हलि। पा॰ ७. ३. ८९.। इति वृद्धिः ॥ ॥ ३॥

कदित्येत्यस्मिन्नष्टादशेऽनुवाके षट् सूक्तानि। तत्र पृथू रथ इति तृतीयं सूक्तं त्रयोदशर्चं। अत्रानुक्रमणिका। पृथुः सप्तोनोषस्यं त्विति। दीर्घतमसः पुत्रः कक्षीवानृषिर्ऋषिस्त्वान्यस्मादृषेरिति परिभाषितत्वात्। अनादेशपरिभाषया त्रिष्टुप् छंदः। तुशब्दप्रयोगादिदमादिके सूक्ते उषोदेवताके॥ प्रातरनुवाक उषस्ये क्रतावस्य चोत्तरस्य च विनियोगः। अथोषस्य इति खंडे सूचितं। पृथू रथ इति सूक्ते प्रत्यर्चिरित्यष्टौ। आ° ४. १४.। इति॥ तथाश्विनशस्त्र इदमादिसूक्तद्वयस्य विनियोगः प्रातरनुवाकन्यायेन। आ° ६. ५.। इत्यतिदिष्टत्वात्॥

पृथू रथो दक्षिणाया अयोज्यैनं देवासो अमृतासो अस्थुः।
कृष्णादुदस्थादर्या३ विहायाश्चिकित्संती मानुषाय क्षयाय॥१॥
पृथुः। रथः। दक्षिणायाः। अयोजि। आ। एनं। देवासः। अमृतासः। अस्थुः।
कृष्णात्। उत्। अस्थात्। अर्या। विऽहायाः। चिकित्संती। मानुषाय। क्षयाय॥१॥

दक्षिणायाः प्रवृद्धायाः स्वव्यापारकुशलाया उषोदेवतायाः पृथुर्विस्तीर्णो रथोऽयोजि। अश्वैर्युक्तः संनद्धोऽभूत्। अत्र यद्यपि देवताविशेषो न श्रुतस्तथाप्युषस्यत्वादुषस इति गम्यते। एनं संनद्धं रथममृतासोऽमरणधर्माणो देवासो देवनशीला हविर्भाजो देवा आस्थुः। आस्थितवंतः। देवयजनं गंतुमारूढा इत्यर्थः। अनंतरं सोषाः कृष्णान्निकृष्टवर्णान्नैशात्तमसः सकाशादुदस्थात्। उत्थिताभूत्। कृष्णं कृष्यतेर्निकृष्टो वर्णः। नि° २. २०.। इति यास्कः। कीदृशी सा। अर्यारणीया पूजनीया विहाया विविधगमनयुक्ता महती वा। विहाया इति महन्नाम विहाया यह्व इति तन्नामसु पाठात्। मानुषाय क्षयाय मनुष्याणां निवासाय चिकित्संत्यंधकारनिवारणरूपां चिकित्सां कुर्वती। तमो निवारयंतीत्यर्थः॥

पूर्वा विश्वस्माद्भुवनादबोधि जयंती वाजं बृहती सनुत्री।
उच्चा व्यख्यद्युवतिः पुनर्भूरोषा अगन्प्रथमा पूर्वहूतौ॥२॥
पूर्वा। विश्वस्मात्। भुवनात्। अबोधि। जयंती। वाजं। बृहती। सनुत्री।
उच्चा। वि। अख्यत्। युवतिः। पुनःऽभूः। आ। उषाः। अगन्। प्रथमा। पूर्वऽहूतौ॥२॥

विश्वस्माद्भुवनात्सर्वस्मात्सुप्ताद्भूतजातात्पूर्वा प्रथमा सतीयमुषा अबोधि। बुद्धाभूत्। उषःकालमवगत्य हि पश्चात्सर्वे प्राणिनः प्रतिबुध्यंते। कीदृशी सा। वाजं गमनशीलं प्रकाशं निर्वर्त्यांधकारं जयंती पराभवं कुर्वती। यद्वा। वाजशब्दोऽन्ननामसु पठितत्वादन्ननाम। अन्नं वै वाजः। शत° ९. ३. ४. १.। इति श्रुतेश्च। यजमानार्थमन्नं संपादयंती। बृहती महती सनुत्री सर्वं जगत्संभजंती दात्री वा प्रकाशस्य। किंच सोषा उच्चोच्चैरुन्नता सती व्यख्यत्। विचष्टे। सर्वं जगत्पश्यतीत्यर्थः। कीदृशी सा। युवतिर्मिश्रणशीला नित्ययौवना वा पुनर्भूः पुनःपुनर्भवनशीला प्रतिदिनं वर्तमानत्वात्। सोषाः पूर्वहूतौ सत्यां प्रथमा मुख्या प्रकृष्टा सत्यागन्। देवयजनदेशं प्रत्यागच्छति। प्रथम इति मुख्यनाम प्रतमो भवतीति यास्कः। नि° २. २२.। इतरदेवेभ्यः पूर्वमाहूता सती शीघ्रमेवागच्छतीत्यर्थः॥

यदद्य भागं विभजासि नृभ्य उषो देवि मर्त्यत्रा सुजाते।
देवो नो अत्र सविता दमूना अनागसो वोचति सूर्याय॥३॥
यत्। अद्य। भागं। विऽभजासि। नृऽभ्यः। उषः। देवि। मर्त्यऽत्रा। सुऽजाते।
देवः। नः। अत्र। सविता। दमूनाः। अनागसः। वोचति। सूर्याय॥३॥

सुजाते शोभनजनने देवि देवनशीले हे उष उषःकालाभिमानिदेवते मर्त्यत्रा मनुष्याणां पालयित्री

त्वमद्यास्मिन्काले नृभ्यो मनुष्येभ्यो यद्यं भागं भजनीयं स्वकीयप्रकाशस्यांशं विभजासि विभज्य ददासि। यद्वा। मर्त्यत्रा मर्त्येषु मध्ये नृभ्यो यजमानेभ्यो देवानां भागं विभज्य ददासि। उषसि प्रवृत्तायां हविषो दीयमानत्वादुषसो दातृत्वमुपचर्यते। अत्रास्मिन्भागविषये दमूना यजमानेभ्योऽभिमतफलदानमनाः। दमूना दममना वा दानमना वा दांतमना वेति निरुक्तवचनं। नि० ४. ४.। तादृशः सविता प्रेरको देवो नोऽस्माननागसो वोचति। अपापान् यागयोग्यान्ब्रवीतु। अनुगृह्णात्वित्यर्थः। किमर्थं। सूर्यायास्मद्यागदेशं प्रति सूर्यस्यागमनार्थं॥

गृहंगृहमहना यात्यच्छा दिवेदिवे अधि नामा दधाना।
सिषासंती द्योतना शश्वदागादग्रमग्रमिद्भजते वसूनां॥ ४॥

गृहंऽगृहं। अहना। याति। अच्छ। दिवेऽदिवे। अधि। नाम। दधाना।
सिसासंती। द्योतना। शश्वत्। आ। अगात्। अग्रंऽअग्रं। इत्। भजते। वसूनां॥ ४॥

अहना। उषोनामैतत्। अहना द्योतनेति तन्नामसु पाठात्। सा देवी दिवे दिवे प्रत्यहं। दिवे दिवे द्यवि द्यवीत्यहर्नामसु पाठात्। गृहं गृहं तत्तद्यज्ञगृहमच्छाभिमुख्येन याति। गच्छति। कीदृशी। अध्यधिकं नाम नमनं प्रह्वत्वं प्रतिगृहमुद्योगं प्रकाशनरूपं दधाना धारयंती। यद्वा। अधि दधानाधिकं धारयंती। किंच सिषासंती संभक्तुमिच्छंती द्योतना कृत्स्नं जगद्द्योतनशीला शश्वत् प्रतिदिनमागात्। आगच्छति। पूर्वं यातीत्युक्तत्वात्पुनरागादिति वचनमावश्यकत्वद्योतनार्थं। आगत्य च वसूनां धनानां हविर्लक्षणानामग्रमग्रमित् तत्तच्छ्रेष्ठभागं भजते। सेवते। स्वीकरोतीत्यर्थः॥

भगस्य स्वसा वरुणस्य जामिरुषः सूनृते प्रथमा जरस्व।
पश्चा स दघ्या यो अघस्य धाता जयेम तं दक्षिणया रथेन॥ ५॥

भगस्य। स्वसा। वरुणस्य। जामिः। उषः। सूनृते। प्रथमा। जरस्व।
पश्चा। सः। दघ्याः। यः। अघस्य। धाता। जयेम। तं। दक्षिणया। रथेन॥ ५॥

सूनृते सुष्ठु मनुष्याणां नेत्र्युषो हे उषोदेवते भगस्य सर्वैर्भजनीयस्यादित्यस्य स्वसासि। स्वसृस्थानीयासि। तेन सहोत्पद्यमानत्वात्तद्वत्पूज्येत्यर्थः। तथा वरुणस्य तमोवारकस्य सवितुर्देवस्य जामिरसि। भगिनीस्थानीयासि। एकस्मिन्नेव स्थान उत्पद्यमानत्वात्। जनयंत्युत्पादयंत्यस्यामपत्यमन्य इति जामिः। यद्वा। जमति गच्छति स्वोत्पत्तिस्थानादन्यत्रेति। उक्तनिर्वचनद्वयमभिप्रेत्य यास्क आह। न जामये भगिन्यै जामिरन्येऽस्यां जनयंति जामपत्यं जमतेर्वा स्याद्गतिकर्मणो निर्गमनप्राया भवति। नि० ३. ६.। इति। तादृशी त्वं प्रथमेतरदेवेभ्यः पूर्वोत्कृष्टा वा सती जरस्व। स्तुता भव। जरतिः स्तुत्यर्थः। जरा स्तुतिर्जरतेः स्तुतिकर्मणः। नि० १०. ८.। इति यास्कः। पश्चा पश्चात्त्वत्प्रीत्यनंतरं योऽघस्य धाता यः कश्चिद्दुःखस्य तदुत्पादकपापस्य वा धारयितास्ति स दघ्याः। गच्छतु। वचनव्यत्ययः। दघ्यतिर्गत्यर्थः। दघ्यति दभ्नोतीति गत्यर्थेषु पाठात्। यदि स पापी बलीयान् तं दक्षिणया प्रवृद्धया सहायभूतया त्वया रथेनास्मदीयरथादिसाधनेन च जयेम॥ ॥ ४॥

उदीरतां सूनृता उत्पुरंधीरुदग्नयः शुशुचानासो अस्थुः।
स्पार्हा वसूनि तमसापगूळ्हाविष्कृण्वंत्युषसो विभातीः॥ ६॥

उत्। ईरतां। सूनृताः। उत्। पुरंऽधीः। उत्। अग्नयः। शुशुचानासः। अस्थुः।
स्पार्हा। वसूनि। तमसा। अपऽगूळ्हा। आविः। कृण्वंति। उषसः। विऽभातीः॥ ६॥

सूनृताः प्रियसत्यात्मिका वाच उदीरतां। उद्गच्छंतु। हे ऋत्विजः उत्कृष्टं यथा भवति तथा स्तोत्रं प्रवर्त-

यध्वं। तथा पुरंधीः पुरंधयः। पुरं शरीरं यासु धीयते याभिर्वा ताः पुरंधयः प्रज्ञाः प्रयोगविषयाः। ता अप्युन्मिषंतु। प्रज्ञोपलक्षितानि कर्माणि प्रवर्तंतामित्यर्थः। यद्यपि प्राणवायुना शरीरं धार्यते तथापि यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राण इति श्रुतेः प्राणप्रज्ञयोरेकत्वात्प्रज्ञायाः शरीरधारणमविरुद्धं। तथाग्नय आहवनीयाद्याः शुशुचानासोऽत्यंतं दीप्यमाना उदस्थुः। उत्तिष्ठंतु। प्रज्वलयंत्वित्यर्थः। किमर्थमेवमिति तदुच्यते। यतो विभातीर्विविधं भासमाना उषस उषोदेवतास्तमसापगूळ्हान्यंधकारेणात्यंतं गोपितानि स्पार्हा स्पृहणीयानि वसूनि वासयोग्यानि यज्ञसाधनभूतहविरादीन्याविष्कृण्वंति यथावस्तु प्रकटीकुर्वंति। तस्मात्स्तोत्रादिकं कुर्वंत्वित्यर्थः॥

अपान्यदेत्यभ्य१न्यदेति विषुरूपे अहनी सं चरेते।
परिक्षितोस्तमो अन्या गुहाकरद्यौदुषाः शोशुचता रथेन॥७॥
अप। अन्यत्। एति। अभि। अन्यत्। एति। विषुरूपे इति विषुऽरूपे। अहनी इति। सं। चरेते इति।
परिऽक्षितोः। तमः। अन्या। गुहा। अकः। अद्यौत्। उषाः। शोशुचता। रथेन॥७॥

इदानीमहोरात्रस्तुतिद्वारोषाः स्तूयते। विषुरूपे वक्ष्यमाणप्रकारेण नानारूपे अहनी अहश्च रात्रिश्चोभे सं चरेते। समित्येकीभावे। सहैवाव्यवधानेन चरतः। अत्राहुः साहचर्यात्तत्प्रतियोगित्वाच्च रात्रिरप्यहरित्युच्यते। उत्तरत्र मंत्रांतरेऽयमेवार्थः स्पष्ट आम्नातः। अहश्च कृष्णमहरर्जुनं च वि वर्तेते रजसी वेद्याभिः। ऋ० ६. ९. १.। इति। तयोर्मध्येऽन्यद्रात्रिरूपमहरपैति। अपगच्छति। प्रतिलोमं गच्छति वा। अपेत्येतस्य प्रातिलोम्यं। नि० १. ३.। इति यास्कः। अन्यच्च दिवसाख्यमहरभ्येति। आभिमुख्येन गच्छति। अभीत्याभिमुख्यं। नि० १. ३.। इति यास्कः। रात्र्यां प्रतिनिवृत्तायामहरभिमुखमागच्छतीत्यर्थः। विषुरूपे सं चरेते इति यदुक्तं तदेव स्पष्टीक्रियते। परिक्षितोः पर्यायेण निवसतोः परिक्षपयतोर्वा। प्राणिनामहःस्वतीतेष्वायुषः क्षयात्परिक्षपणं प्रसिद्धं। तयोर्मध्येऽन्या रात्रिस्तमस्तमोरूपा गुहा पदार्थानां गूहनमकः। करोति। अन्याहरेकदेशभूता चोषाः शोशुचता भृशं दीप्तेन रथेनाद्यौत्। द्योतते। प्रकाशते प्रकाशयति वा सर्वं। रात्रिस्तमोरूपत्वात्सर्वं जगदावृणोति। उषास्तु सर्वान्भावान्प्रकाशयतीत्युषसः स्तुतिः॥

सदृशीरद्य सदृशीरिदु श्वो दीर्घं सचंते वरुणस्य धाम।
अनवद्यास्त्रिंशतं योजनान्येकैका क्रतुं परि यंति सद्यः॥८॥
सऽदृशीः। अद्य। सऽदृशीः। इत्। ऊं इति। श्वः। दीर्घं। सचंते। वरुणस्य। धाम।
अनवद्याः। त्रिंशतं। योजनानि। एकाऽएका। क्रतुं। परि। यंति। सद्यः॥८॥

अद्यास्मिन्नहनि सदृशीरित् परस्परं सदृश्य एव। तथा श्व इत् परस्मिन्नप्यहनि सदृशीः परस्परं सदृश्य एव। उशब्दोऽपिशब्दार्थः। इच्छब्द एवार्थः। अद्यतन्योऽपि श्वस्तनीभिः सदृश्यः श्वस्तन्यश्चाद्यतनीभिः। एवमहरंतरेण सादृश्यं। कथं सादृश्यमिति तदुपपाद्यते। यदा नक्षत्राणि न दृश्यंते सूर्यश्च नोदेति उषःकालः। स चैकविंशतिघटिकाभिः षड्विंशतिपराभिश्च संमितः। सूर्यो हि प्रतिदिनमेकोनषष्ट्यधिकपंचसहस्रयोजनानि मेरुं प्रादक्षिण्येन परिभ्रमति। तथा सति यत्र यत्र लंकादिभूप्रदेशे सूर्यो गच्छति तस्य तस्य पुरस्तात्त्रिंशद्योजनमुषा अपि गच्छति। सूर्यो यस्मिन्देशे गच्छति तत्र त्रिंशद्योजनं पुरस्ताद्देशस्थितानामुदितो दृश्यते। एवं सर्वप्रदेशेष्वपि। तथोषा अपि यत्र गच्छति ततः पुरस्तात्त्रिंशद्योजनभूभागवर्तिनामुदिता दृश्यते। एवं लंकादिसर्वप्रदेशस्थितानामप्युषस उदयोऽवगंतव्यः। एवं च सत्येकस्मिन्भूभागे यावत्कालं यथोषाः प्रकाशयति तथा भूभागांतरेऽपि तावंतं कालं प्रकाशयति। एवमुक्तरीत्यैकस्मिन्नेवाहनि सर्वप्रदेशवर्तिन्यमप्युषसः सदृश्यः। प्रदेश-

बाहुल्यमपेक्ष्योषसां बहुत्वाद्बहुवचनं। एवमेकरूपा उषसोऽनवद्याः शुद्धाः। तासामुदयात्सर्वे भावा अनवद्या भविष्यंति किमु वक्तव्यं तासामनवद्यत्वे। दीर्घसुक्तरीत्यात्यंतमायतं वरुणस्य तमोनिवारकस्य सूर्यस्य धाम स्थानं मेरुवलयं सचंते। प्रतिदिनं सेवंते। कियद्दूरमिति तदुच्यते। त्रिंशतं योजनानि त्रिंशद्योजनानि पुरतः। सूर्यो यत्र यत्रोदेति ततस्ततस्त्रिंशद्योजनं पुरस्ताद्वर्तंतीत्यर्थः। किंचासां मध्य एकैकोषा लंकादेकैकभूभागवर्तिनां क्रतुं गमनागमनादिरूपं कर्म तद्विषयां प्रज्ञां वा। तथा च निरुक्तं। क्रतुं दधिक्राः कर्म वा प्रज्ञां वा। नि० २. २८.। इति। सद्यस्तदानीमेव स्वोदयकाल एव परि यंति। परितो गच्छंति। निर्वहंतीत्यर्थः। तत्तद्भूभागविशेषेण सूर्यस्योदयो ज्योतिःशास्त्रे प्रदर्शितः। उदयो यो लंकायां सोऽस्तमयः सवितुरेव सिद्धपुरे। मध्याह्नो यवकोट्यां रोमकविषयेऽर्धरात्रः स्यात्। आर्य० ४.१३.। इति॥

जा॒न॒त्यह्नः॑ प्रथ॒मस्य॒ नाम॑ शु॒क्रा कृ॒ष्णाद॑जनिष्ट श्विती॒ची।
ऋ॒तस्य॒ योषा॒ न मि॑नाति॒ धामाह॑रह॒र्निष्कृ॒तमा॒चर॑न्ती॥९॥
जा॒न॒ती। अह्नः॑। प्र॒थ॒मस्य॑। नाम॑। शु॒क्रा। कृ॒ष्णात्। अ॒ज॒नि॒ष्ट। श्वि॒ती॒ची।
ऋ॒तस्य॑। योषा॑। न। मि॒ना॒ति॒। धाम॑। अहः॑ऽअहः। निः॒ऽकृ॒तं। आ॒ऽचर॑न्ती॥९॥

उषाः प्रथमस्य मुख्यस्य प्रथमानस्य वाह्नो दिवसस्य नाम नमनमागमनं जानत्यवगच्छंती। प्राणिनां प्रज्ञापयंतीत्यर्थः। सोषाः शुक्रा स्वतो दीप्ता अत एव श्वितीची श्वैत्यं गच्छंती प्रकाशं प्राप्नुवती कृष्णान्निकृष्टात्तमसः सकाशाद्दजनिष्ट। प्रादुर्भवति। यद्यपि तमसः सकाशान्नोत्पद्यते तथापि तदनंतरभावित्वात्तत उत्पद्यत इत्युपचर्यते। उत्पन्ना सा ऋतस्य सत्यभूतस्यादित्यस्य धाम तेजोयुक्तं स्थानं योषा मिश्रयंती न मिनाति। न हिनस्ति। तदीयं तेजो न पराभवति। अपि त्वहरहः सर्वेष्वहःसु निष्कृतमाचरंती। अलंकारशोभां कुर्वती। यद्वा। ऋतस्य सत्यभूतस्य यज्ञस्य धाम देवयजनाख्यं स्थानं योषा मिश्रणशीला सती न मिनाति। न हिनस्ति। किंत्वहरहः सर्वेषु यागदिवसेषु निष्कृतं हविरादीनां प्रकाशनरूपमलंकारमाचरंती कुर्वती। तादृश्युषा अजनिष्टेति पूर्वत्रान्वयः॥

क॒न्ये॑व त॒न्वा॒३॒॑ शाश॑दानाँ॒ एषि॑ देवि दे॒वमिय॑क्षमाणं।
सं॒स्मय॑माना युव॒तिः पु॒रस्ता॑दा॒विर्वक्षां॑सि कृणुषे विभा॒ती॥१०॥
क॒न्या॑ऽइव। त॒न्वा॑। शाश॑दाना। एषि॑। दे॒वि॒। दे॒वं। इय॑क्षमाणं।
सं॒ऽस्मय॑माना। यु॒व॒तिः। पु॒रस्ता॑त्। आ॒विः। वक्षां॑सि। कृ॒णु॒षे॒। वि॒ऽभा॒ती॥१०॥

तन्वा शरीरेण शाशदाना शाशद्यमाना स्पष्टतां प्राप्नुवती। शाशदानः शाशद्यमानः। नि० ६.१६.। इति यास्कः। कन्येव कमनीया कन्यकेव। कन्या कमनीया भवति क्वेयं नेतव्येति वा। नि० ४.१५.। इति यास्कः। सा यथा जनांतिके विवसना संचरति तथा हे उषस्त्वं कन्या कमनीयाप्रगल्भा सती तन्वा शरीरेण शाशदाना स्पष्टतां गच्छंती दृश्यसे। पश्चात्प्रगल्भा सती हे देवि देवनशील इयक्षमाणं यष्टुमिच्छंतमभिमतं दातुमिच्छंतं वा देवं द्योतनस्वभावं सूर्यरूपं प्रियमेषि। गच्छसि। ततः पश्चात् युवतिर्यौवनोपेता सती पुरस्तात्पत्युः सूर्यस्य पुरतः संस्मयमाना समीषद्धसंती हास्यं कुर्वती विभात्यत्यंतं भासमाना वक्षांसि वक्षसोपलक्षितानवयवानाविष्कृणुषे। प्रकटीकरोषि। यद्वा। युवतिरिति लुप्तोपमा। यथा लोके प्रगल्भा योषित् पुरस्तात्प्रियतमस्य पुरतः संस्मयमाना दंतप्रदर्शनायेषद्धसनं कुर्वती वक्षांसि वक्षसोपलक्षितानि गोप्यानि बाहुमूलस्तनादीन्याविष्करोति तथा त्वमपीत्यर्थः। यद्वा। पुरस्तात्पूर्वस्यां दिशि संस्मयमाना स्मितोपमप्रकाशं कुर्वती युवतिः सर्वेषु भावेषु मिश्रणशीला वक्षांसि। वक्ष इति रूपनाम। दंतस्थानीयानि नीलपीतादीनि रूपाण्याविष्करोषि॥ ॥५॥

सुसंकाशा मातृमृष्टेव योषाविस्तन्वं कृणुषे दृशे कं ।
भद्रा त्वमुषो वितरं व्युच्छ न तत्ते अन्या उषसो नशंत ॥११॥
सुऽसंकाशा । मातृमृष्टाऽइव । योषा । आविः । तन्वं । कृणुषे । दृशे । कं ।
भद्रा । त्वं । उषः । विऽतरं । वि । उच्छ । न । तत् । ते । अन्याः । उषसः । नशंत ॥११॥

हे उषोदेवि मातृमृष्टा मातृभिर्जननीभिः शुद्धीकृता योषेव सुसंकाशात्यर्थं प्रकाशमाना त्वं तन्वं स्वकीयां तनुं दृशे सर्वेषां दर्शनायाविः कृणुषे । प्रकटयसि । यथा लोके मात्रादिना स्वलंकृतात्यंतं शोभना सती स्वकीयं लावण्योपेतं सर्वशरीरं दर्शनायाविष्करोति तद्वत्त्वमपीत्यर्थः । अत्र कमिति पादपूरणोऽत्र विशेषस्याभावात् शिशिरं जीवनाय कमितिवत् । तथा च यास्काचार्यः । मिताक्षरेष्वनर्थकाः कमीमिद्विति । नि॰ १. ९. । इति । यद्वा । कमिति सुखवचनः । सुखं यथा भवति तथाविष्कृणुष इत्यर्थः । हे उषः यत एवं करोष्यतो भद्रा कल्याणशीला स्तुत्या त्वं वितरं व्युच्छ । आवरकमंधकारं विप्रकृष्टं यथा भवति तथा विवासय । अत्र यद्यपि विशेषो न श्रुतस्तथापि प्रकाशनिवर्त्यत्वात्परिहरणीयत्वाच्च व्युदसनीयं तम एवेति गम्यते । किंच ते तव तद्व्युदसनमन्या उषसोऽतीता आगामिन्यश्च न नशंत । न व्याप्नुवंति । तथा व्युच्छेति भावः । नशिर्व्याप्तिकर्मा । इन्वति ननक्षेति व्याप्तिकर्मसु पाठात् ॥

अश्वावतीर्गोमतीर्विश्ववारा यतमाना रश्मिभिः सूर्यस्य ।
परा च यंति पुनरा च यंति भद्रा नाम वहमाना उषासः ॥१२॥
अश्वऽवतीः । गोऽमतीः । विश्वऽवाराः । यतमानाः । रश्मिऽभिः । सूर्यस्य ।
परा । च । यंति । पुनः । आ । च । यंति । भद्रा । नाम । वहमानाः । उषसः ॥१२॥

अश्वावतीरश्ववत्यो बहुभिरश्वैस्तद्वत्यः तथा गोमतीर्बहुभिर्गोभिस्तद्वत्यः विश्ववारा विश्वे वारा वरणीयाः काला यासां तास्तथोक्ताः । सार्वकालीना इत्यर्थः । यद्वा । विश्वे वरितारो यासु ता विश्ववाराः । विश्वैर्वरणीया इत्यर्थः । सूर्यस्य रश्मिभिर्यतमानाः सूर्यरश्मिभिः साकं तमोनिवारणाय प्रयत्नं कुर्वाणाः । यद्यपि सूर्यरश्मय एव जगत्प्रकाशनाय प्रभवंति तथापि सूर्योदयात्पूर्वं तमोनिवारणस्यापेक्षितत्वात्तासामपि प्रयत्नमविरुद्धं । रश्मिदेवता अपि प्रकाशिका इत्यर्थः । किंच भद्रा भद्रं कल्याणं स्तुत्यं वा नाम नमनं सर्वजनानुकूल्यं वहमाना धारयमाणा उषास उषोदेवताः परा च यंति । परायंति च । तथा पुनरा च यंति । पुनरायंति च । परस्परापेक्षयोभयत्र चशब्दः । या एवातीतेषु दिनेषु गतास्ता एव पुनःपुनर्दिनांतरेष्वायंति । जगन्निर्वाहाय प्रतिदिनं गतागतं कुर्वंतीत्यर्थः ॥

ऋतस्य रश्मिमनुयच्छमाना भद्रंभद्रं क्रतुमस्मासु धेहि ।
उषो नो अद्य सुहवा व्युच्छास्मासु रायो मघवत्सु च स्युः ॥१३॥
ऋतस्य । रश्मिं । अनुऽयच्छमाना । भद्रंऽभद्रं । क्रतुं । अस्मासु । धेहि ।
उषः । नः । अद्य । सुऽहवा । वि । उच्छ । अस्मासु । रायः । मघवत्ऽसु । च ।
स्युरिति स्युः ॥१३॥

हे उषः ऋतस्य सत्यभूतस्यादित्यस्य रश्मिं रश्मीननुयच्छमानानुकूल्येन प्रवर्तमाना त्वं भद्रं भद्रं क्रतुं तत्तत्कल्याणं स्तुत्यं वा लौकिकं वैदिकं कर्म तद्विषयां प्रज्ञां वा धेहि । स्थापय । हे उषः नोऽस्मदर्थं सुहवा सुष्ठाहूता सती व्युच्छ । तमो विवासय । प्रकाशं कुर्वित्यर्थः । किमर्थमिति तदुच्यते । मघवत्सु । मघमिति

धननाम । हविर्लक्षणधनयुक्तेष्वस्मासु यजमानेषु रायश्च स्युः । बहुविधानि धनानि संभवंत्विति पूर्वोक्तेन क्रतुना सह समुच्चयार्थश्चशब्दः ॥ ॥६॥

उषा उच्छंतीति त्रयोदशर्चं चतुर्थं सूक्तं दैर्घतमसः कक्षीवत आर्षं त्रैष्टुभमुषस्यं । उषा उच्छंतीत्यनुक्रांतं ॥ विनियोगस्तु पूर्वसूक्त एवोक्तः ॥

उषा उच्छंती समिधाने अग्ना उद्यन्त्सूर्य उर्विया ज्योतिरश्रेत् ।
देवो नो अत्र सविता न्वर्थं प्रासावीद्द्विपत्प्र चतुष्पदित्यै ॥१॥
उषाः । उच्छंती । संऽइधाने । अग्नौ । उत्ऽयन् । सूर्यः । उर्विया । ज्योतिः । अश्रेत् ।
देवः । नः । अत्र । सविता । नु । अर्थं । प्र । असावीत् । द्विऽपत् । प्र । चतुःऽपत् । इत्यै ॥१॥

एषोषाः समिधानेऽग्नौ । अग्नित्वसामान्येनैकवचनं । अग्निषु समिध्यमानेषु सत्सु । कर्मार्थे कर्तृप्रयोगः । उषःकाले ह्याहवनीयादयः प्रज्वाल्यंते । उच्छंती तमो विवासयंत्युर्वियोरु बहुलं ज्योतिः प्रकाशमश्रेत् । सेवते । प्रकाशते प्रकाशयति वा सर्वं । किमिव । उद्यन् सूर्यः । उपमाप्रधाननिर्देशः । उदितः सूर्य इव । सूर्यो यथा प्रकाशयति तथेत्यर्थः । अत्र [illegible]ल्कर्मणि वा सविता देवः सर्वस्य प्रेरकः सूर्यो नोऽस्मदर्थं नु क्षिप्रमर्थं । अर्थशब्दोऽत्र विशेषणवाची नपुंसकलिंगः । अथन्नर्थानि छणवन्नपांसीत्यादौ । ऋ० ७. ६३. ४. । तथादृष्टत्वात् । अरणीयं द्विपत् पादद्वयोपेतं मनुष्यादिरूपं धनं प्रासावीत् । अनुजानातु । ददात्वित्यर्थः । तथा चतुष्पत् पादचतुष्टयोपेतं गवादिरूपं धनं प्रासावीत् । किमर्थं । इत्यै द्विपदां चतुष्पदां च गमनाय । यद्वा । न इत्या इति संबंधः । अस्मद्गमनागमनादिव्यापारायेत्यर्थः ॥

अमिनती दैव्यानि व्रतानि प्रमिनती मनुष्या युगानि ।
ईयुषीणामुपमा शश्वतीनामायतीनां प्रथमोषा व्यद्यौत् ॥२॥
अमिनती । दैव्यानि । व्रतानि । प्रऽमिनती । मनुष्या । युगानि ।
ईयुषीणां । उपमा । शश्वतीनां । आऽयतीनां । प्रथमा । उषाः । वि । अद्यौत् ॥२॥

दैव्यानि व्रतानि देवसंबंधीन्यग्निहोत्रादीनि कर्माणि । व्रतमिति कर्मनाम व्रतं कर्वरमिति तन्नामसु पाठात् । तानि कर्माण्यमिनत्यहिंसंती भानप्रदानेनानुकूलं कुर्वती । तथा मनुष्या मनुष्याणां युगानि युगोपलक्षितान्निमेषादिकालावयवान्प्रमिनती प्रकर्षेण हिंसंती । आयुः क्षपयंतीत्यर्थः । यद्वा । युगानि युग्मानि परस्परसंयोगं प्रमिनती हिंसंती । वियोगं कुर्वतीत्यर्थः । उषःकाले सर्वे यथायथं स्वस्वव्यापाराय गच्छंतीति प्रसिद्धं । किंच ईयुषीणां गच्छंतीनामतीतानां शश्वतीनां नित्यानामुषसामुपमा । ताभिः सदृशीत्यर्थः । सादृश्यं च सदृशीरद्य सदृशीरिदु श्व इत्यत्रोक्तं । ऋ० १. १२३. ८. । तथायतीनां प्रथमागामिनीनामुषसां प्रथमभाविनी सती व्यद्यौत् । विशेषेण प्रकाशते । यद्वा । ईयुषीणां गमनशीलानां पश्वादीनां शश्वतीनां संततिप्रवाहरूपेण नित्यानामुपमा । तद्वन्नित्येत्यर्थः । तथायतीनां रात्र्यवसानसमय उत्पद्यमानानां प्रज्ञावागादीनां प्रथमा प्रथमभाविनी । उषस्यागतायां वाचो बुद्धयश्च स्फुरंतीति प्रसिद्धं । तादृशी देवी व्यद्यौत् । प्राणिनामनुग्रहाय द्योतते ॥

एषा दिवो दुहिता प्रत्यदर्शि ज्योतिर्वसाना समना पुरस्तात् ।
ऋतस्य पंथामन्वेति साधु प्रजानतीव न दिशो मिनाति ॥३॥
एषा । दिवः । दुहिता । प्रति । अदर्शि । ज्योतिः । वसाना । समना । पुरस्तात् ।
ऋतस्य । पंथां । अनु । एति । साधु । प्रजानतीऽइव । न । दिशः । मिनाति ॥३॥

एषोषा दिवो द्योतमानात्मकस्य द्युलोकस्य दुहिता दुहितृस्थानीया। तत उत्पद्यमानत्वाद्दुहितेत्युपचर्यते। पुरस्तात्पूर्वस्यां दिशि प्रति प्रत्येकमदर्शि। दृश्यते। सर्वेषामपि प्राणिनामाभिमुख्येन प्रकाशत इत्यर्थः। कीदृशी सा। ज्योतिर्वसाना तेजोरूपं वस्त्रमाच्छादयंती तेजसा प्रकाशयंती समना सम्यगानयित्री चेष्टयित्री॥ अंतर्भावितण्यर्थोऽयं। यद्वा। सह युगपदेव मन्यतेऽवबुध्यते प्राणिभिरिति समना। व्युत्पत्त्यनवधारणादनवग्रहः॥ सा तादृशी ऋतस्यादित्यस्य पंथां पंथानं मेरोः प्रांतप्रदेशमनुक्रमेण साधु सम्यगेति। गच्छति। सूर्यो यत्र यत्र गच्छति तत्र तत्र पुरस्तादुषा अपि गच्छतीत्यर्थः। सैव विशेष्यते। प्रजानतीव। प्रियभूतस्य सूर्यस्य मार्गो मयापि गंतव्य इति चेतयंतीव। यथा लोके प्रियतमेऽनुरागयुक्ता काचिद्भर्तारं सर्वास्ववस्थासु न विमुंचति तथेयमपीत्यर्थः। किंच दिशः प्रागादिका न मिनाति। न हिनस्ति। किंतूषा यत्र गच्छति सा प्राचीत्येवं प्रागादिव्यवहारं करोतीत्यर्थः॥

उपो॑ अदर्शि शुं॒ध्युवो॒ न वक्षो॑ नो॒धा इ॑वा॒विर॑कृत प्रि॒याणि॑।
अ॒द्म॒सन्न स॑स॒तो बो॒धय॑न्ती शश्वत्त॒मागा॒त्पुन॑रे॒युषी॑णाम्॥४॥

उपो॒ इति॑। अ॒द॒र्शि॒। शुं॒ध्युव॑ः। न। वक्षः॑। नो॒धाःऽइ॑व। आ॒विः। अ॒कृ॒त॒। प्रि॒याणि॑।
अ॒द्म॒ऽसत्। न। स॒स॒तः। बो॒धय॑न्ती। श॒श्व॒त्ऽत॒मा। आ। अ॒गा॒त्। पुन॑ः। आ॒ऽई॒युषी॑णाम्॥४॥

एषोषाः। उपो इति निपातद्वयसमुदायात्मक एको निपातः। सर्वैः समीप एवादर्शि। दृश्यते। तत्र दृष्टांतः। शुंध्युवो न वक्षः। अत्र नकार उपमार्थीय उपरिष्टात्प्रयुज्यमानत्वात्। यत्र तु प्रतिषेधो विवक्षितस्तत्र पुरस्तान्नकारः प्रयुज्यते। तथा च यास्कः। पुरस्तादुपाचारस्तस्य यत्प्रतिषेधतीति। तस्योदाहरणं नेंद्रं देवममंसतेति। उपरिष्टादुपाचारस्तस्य येनोपमिमीत इति। तस्योदाहरणं दुर्मदासो न सुरायामिति। नि० १.४. ऋ० १०.८६.१. ऋ० ८.२.१२.। शुंध्युरादित्यः सर्वेषां शोधकत्वात्। तस्य वक्षो वक्षःस्थानीयो रश्मिसमूहः। स यथा प्रकाशमानो दृश्यते तथेत्यर्थः। यद्वा। शुंध्युरिति जलचरः श्वेतवर्णः पक्षिविशेषः। स यथा स्वकीयं वक्षः प्रकाशयन्दृश्यते तद्वदित्यर्थः। किंच नोधा इव [illegible]। नवनं स्तोत्रं धारयतीति नोधाः। एतन्नामा महर्षिर्देवतास्तुतिव्याजेन नानाविधैर्मंत्रैः प्रियाणि [illegible]। तथैवापि स्वकीयानि सर्वलोकप्रियाणि तेजांस्याविरकरोत्। किंचाद्मसन्न। अत्राप्युपमार्थीयो नकारः। अद्मत इत्यद्मान्नं। तस्य पाकाय गृहे सीदतीत्यद्मसत् पाचिका योषित् ससतो बोधयंती। सा यथा स्वपतः पुत्रादीन्भोजनाय बोधयति तद्वत्। यद्वा। अद्मेति गृहनाम वरूथमद्मेति तन्नामसु पाठात्। तत्र सीदतीत्यद्मसज्जननी। सा यथा स्वपतः पुत्रादीनुषःकाले प्रबोधयति तथा भुवनाख्ये गृहे सीदंती तत्रत्यान्प्राणिनः प्रबोधयंतीयमुषाः। एयुषीणा[illegible]गमनशीलानां स्त्रीणां मध्ये शश्वत्तमा पुनःपुनरागच्छति। प्रातर्नियतमागच्छंतीनां वारयोषितां मध्ये स्वयमेका सती नियतमागच्छतीत्यभिप्रायः। अत्र निरुक्तं। उपादर्शि शुंध्युवः शुंध्युरादित्यो भवति शोधनात्तस्यैव वक्षो भासोऽध्यूळ्हमिदमपीतरद्वक्ष [illegible]तस्मादेवाध्यूळ्हं काये। शकुनिरपि शुंध्युरुच्यते शोधनादेवोदकचरो भवति। आपोऽपि शुंध्युव उच्यंते शोधनादेव। नोधा ऋषिर्भवति नवनं दधाति स यथा स्तुत्या कामानाविष्कुरुत एवमुषा रूपाण्याविष्कुरुते। अद्मसदद्मान्नं भवत्यद्मसादिनीति वान्नसानिनीति वा। ससतो बोधयंती शश्वत्तमागात्पुनरेयुषीणां स्वपतो बोधयंती शाश्वतिकतमागात्पुनरागामिनीनां। नि० ४.१६.। इति॥

पूर्वे॒ अर्धे॒ रज॑सो अ॒प्त्यस्य॒ गवां॒ जनि॑त्र्यकृत॒ प्र के॒तुम्।
व्यु॑ प्रथते वित॒रं वरी॑य॒ ओभा पृ॒णन्ती॑ पि॒त्रोरु॒पस्था॑॥५॥

पूर्वे॑। अर्धे॑। रज॑सः। अ॒प्त्यस्य॑। गवा॑म्। जनि॑त्री। अ॒कृ॒त॒। प्र। के॒तुम्।
वि। ऊं॒ इति॑। प्र॒थ॒ते॒। वि॒ऽत॒रम्। वरी॑यः। आ। उ॒भा। पृ॒णन्ती॑। पि॒त्रोः। उ॒पऽस्था॑॥५॥

अप्त्यस्य व्यापनशीलस्य विस्तृतस्य रजसो रंजकस्यांतरिक्षलोकस्य। रजःशब्दोऽतरिक्षलोकवाची लोका रजांस्युच्यंत इति यास्केनोक्तत्वात्। नि॰ ४. १९.। तस्य पूर्वेऽर्धे पूर्वस्मिन्भागे जनित्र्युत्पन्ना सती गवां दिशां रश्मीनां वा केतुं प्रज्ञानं प्राक्त। प्रकर्षेण करोति। यद्वा। रजसो रंजकस्याह्नः। रजःशब्दोऽहर्वाची। अस्तगहनी रजसी उच्येते इति यास्केनोक्तत्वात्। नि॰ ४. १९.। तस्य पूर्वेऽर्धे पूर्वस्मिन्भाग उषःकाले गवां वाचां जनित्री जनयित्र्युत्पादयित्री। उषःकाले सर्वेषां प्राणिनां वाचः स्फुरंतीति प्रसिद्धं। यद्वा। अप्त्यस्य कर्मसु स्थितस्य जंतोः केतुं गमनागमनादिरूपं कर्म। केतुरिति कर्मनाम केतः केतुरिति तन्नामसु पाठात्। प्राक्त। प्रकर्षेण करोति। किंच पित्रोः पालयित्र्योर्द्यावापृथिव्योरुपस्थोपस्थ उत्संगेऽतरालप्रदेशे स्थित्वोभेभे द्यावा-पृथिव्यौ पृणंती स्वतेजसा पूरयंती। यद्वा। उभोभयोः पित्रोरिति संबंधः। वितरं विशिष्टतरं वरीय उरुतरमतिविस्तीर्णं यथा भवति तथा व्यु प्रथते। विशेषेणैव प्रख्याता भवति। प्रकाशत इत्यर्थः। उशब्दोऽवधारणार्थः पादपूरणो वा मिताक्षरेष्वनर्थकाः कमीमिद्विति यास्केनोक्तत्वात्॥ ॥७॥

एवेदेषा पुरुतमा दृशे कं नाजामिं न परि वृणक्ति जामिं।
अरेपसा तन्वा३ शाशदाना नार्भादीषते न महो विभाती ॥६॥
एव। इत्। एषा। पुरुऽतमा। दृशे। कं। न। अजामिं। न। परि। वृणक्ति। जामिं।
अरेपसा। तन्वा। शाशदाना। न। अर्भात्। ईषते। न। महः। विऽभाती ॥६॥

एषोषा एवेत्। इच्छब्द एवकारार्थः। एवमेवेदानींभासमानप्रकारेणैव पुरुतमा विपुलतमात्यंतविस्तृता सत्यजामिं विजातीयं मनुष्यादिजातिं न परि वृणक्ति। परितः सर्वतो न वर्जयति। तथा जामिं सजातीयं देवजातिं न परि वृणक्ति। न परिवर्जयति। मनुष्यादिकं देवादिकं च तदुपलक्षितं लोकद्वयं वा कार्त्स्न्येन प्रकाशयतीत्यर्थः। किमर्थमिति तदुच्यते। दृशे कं सुखेन सर्वेषां दर्शनाय। सुखं यथा भवति तथा सर्वान्द्र-र्शयितुं वा। किंचारेपसापापया निर्मलया तन्वा शरीरेण शाशदाना शाशायमाना। शाशदानः शाशाय-मान इति यास्कः। नि॰ ६. १६.। स्पष्टतां गच्छंतीत्यर्थः। विभाती विशेषेण प्रकाशयंती सार्भादल्पात्पुत्ति-कादेः सकाशान्नेषते। न गच्छति। तमपि प्रकाशयति। तथा महो महतो मेर्वादेः सकाशान्नेषते। न गच्छति। तमपि प्रकाशयति। पूर्वं लोकद्वयं प्रकाशत इत्युक्तं। इदानीमस्मिँल्लोके परमाण्वादि पर्वतपर्यंतं कृत्स्नं प्रकाशयतीत्यर्थः॥

अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानां।
जायेव पत्य उशती सुवासा उषा हस्रेव नि रिणीते अप्सः ॥७॥
अभ्राताऽइव। पुंसः। एति। प्रतीची। गर्तऽआरुगिव। सनये। धनानां।
जायाऽइव। पत्ये। उशती। सुऽवासाः। उषाः। हस्राऽइव। नि। रिणीते। अप्सः ॥७॥

अभ्रातेव भ्रातृरहितेव पुंसः पित्रादीन्प्रति प्रतीची स्वकीयस्थानात्प्रतिनिवृत्तमुखी सत्येति। गच्छति। यथा लोके भ्रातृरहिता योषित्स्वोचितवासोऽलं[illegible]लाभाय पितॄनेति। सति भ्रातरि स एवोचितप्रदानादिना सम्यक् तोषयति। तदभावात्पितरमेव प्राप्नोति। यद्वा। सति स्वभ्रातरि स एव पितुः पिंडदानादिकं संतानकृत्यं करोति। तस्याभावात्स्वयमेव तत्कर्तुं पित्रादीन्गच्छति। तद्वदियमुषा अपि स्वो[illegible]ादिलाभाय स्वप्रकाशदानाय वा पितृभूतं सूर्यमाभिमुख्येन गच्छति। अयमेको दृष्टांतः। तथा धनानां सनये गर्तारुगिवेत्यपरो दृष्टांतः। गर्त इति गृहनाम छदरो गर्त इति तन्नामसु पाठात्। अत्रौचित्येन राजपुरुषैर्न्यायनिर्णेतृभिश्चाधिष्ठितं स्थानमुच्यते। तदारोहतीति गर्तारुक्। यथा लोके काचिन्नतभर्तृका [illegible] स्वकीयरिक्थानां सनये लाभाय गर्तमागच्छति। तां तु सभ्या विचार्य यदीयं रिक्थं लभते चेदचैः संताड्य तदीयं धनं वितरंति। तथेयमपि धनानां प्रीणनसाधनानां प्रकाशानां सनये लाभाय गर्तमाकाशं सूर्यनिवासस्थानमारोहति।

देशविशेषाचारमपेक्ष्यैवं दृष्टांतितं। किंच पत्य उशती कामयमाना सुवासा जायेव। अयमपरो दृष्टांतः। यथा च लोके सुवासा दुकूलादिशोभनवसना स्वलंकृता पूर्वं रजोदर्शनसमये मलिनवस्त्रा सती स्नानानंतरं शोभनवस्त्राभरणादिना शोभमाना विशेषेण पतिं भोगाय कांक्षंती तेन सह संक्रीडते तथेयमुषा अतिनैशांधकारेणावृतत्वान्मलिनवसनापि प्रभाते स्वतेजसावृतत्वात्सुवसना सती पतिस्थानीयेन सूर्येण साकं संक्रीडमाना हसंतीव हसनेनाप्तो दंतस्थानीयानि रूपाणि नीलपीतादीनि। यद्वा। निरूप्यमाणानि पदार्थजातानि। नि रिणीते। नितरां रिणीते गमयति। प्रकाशयतीत्यर्थः। यथा लोके काचिद्रमणीया योषित्स्मितव्याजेन दंतान्विवृणुते तथेयमपि सर्वाणि रूपाणि प्रकाशयतीत्यर्थः। अयं मंत्रो निरुक्ते स्पष्टं व्याख्यातः। अभ्रातृकेव पुंसः पितृनेत्यभिमुखी संतानकर्मणे पिंडदानाय न पतिं गर्तारोहिणीव धनलाभाय दाक्षिणाजा। गर्तः सभास्थाणुर्गृणातेः सत्यसंगरो भवति। तं तत्र यापुत्रा यापतिका सारोहति तां तत्राक्षैराघ्नंति सा रिक्थं लभत इति। जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दंतान्विवृणुते। नि॰ ३. ५.। इति च॥

स्वसा॒ स्वस्रे॒ ज्याय॑स्यै॒ योनि॑मारै॒गपै॒त्यस्याः प्रति॒चक्ष्ये॑व।
व्यु॒च्छंती॑ र॒श्मिभिः॒ सूर्य॑स्यां॒ज्यं॑क्ते समनगा इ॑व॒ व्राः॥८॥
स्वसा॑। स्वस्रे॑। ज्याय॑स्यै। योनि॑म्। अ॒रै॒क्। अप॑। ए॒ति॒। अ॒स्याः॒। प्र॒ति॒चक्ष्या॑ऽइव।
वि॒ऽउ॒च्छंती॑। र॒श्मिऽभिः॑। सूर्य॑स्य। अं॒जि। अं॒क्ते। स॒म॒न॒गाःऽइ॑व। व्राः॥८॥

एकस्मादेवांतरिक्षादुत्पन्नत्वात्परस्परं स्वसृभावः। तथाप्यह्नः प्राथम्यात्तेजस्वित्वाच्च ज्यायस्त्वं। स्वयमेव सरतीति वा स्वसा। रात्रिः स्वस्रे ज्यायस्या उक्तरीत्या ज्येष्ठायै योनिमुत्पत्तिस्थानमपररात्ररूपमरैक्। अरिचत्। प्रादात्। प्ररेचयतीत्यर्थः। तथा च पूर्वचाम्नातं। रात्र्युषसे योनिमारैक्। ऋ॰ १. ११३. १.। इति। दत्त्वा चास्या उत्पन्नाया उषसः प्रतिचक्ष्येव ज्ञापयित्वेव स्वयमपक्रम्यैव गच्छति। ज्यायस्यामागतायां तस्यै स्वस्थानं दत्त्वा स्वयं तत्संनिधौ स्थातुमनुचितमिति विज्ञायैवापगच्छतीति भावः। एवमुत्पन्नैषा सूर्यस्य रश्मिभिर्व्युच्छंती तमो विवासयंत्यंजि व्यंजकं तेजः। यद्वा। अंजि व्यक्तं जगत्। अंक्ते। अनक्ति। प्रकाशयति। किमिव। समनगा इव। सम्यगननहेतव आपः समनाः। ता गच्छंतीति समनगा विद्युतः। व्रा व्राताः। विद्युत्संघा इव। यद्वा। सम्यगननाय गच्छंतीति समनगाः सूर्यरश्मयः। त इव व्रा व्राताः संघीभूताः। ते यथांजते जगत्प्रकाशयंति तथेत्यर्थः॥ व्रात इत्यत्र तकारलोपश्छांदसः॥

आ॒सां पूर्वा॑सा॒मह॑सु॒ स्वसॄ॑णा॒मप॑रा॒ पूर्वा॑म॒भ्ये॑ति प॒श्चात्।
ताः प्र॑त्न॒वन्नव्य॑सीर्नू॒नम॒स्मे रे॒वदु॑च्छंतु सु॒दिना॑ उ॒षासः॑॥९॥
आ॒सां। पूर्वा॑सां। अह॑ऽसु। स्वसॄ॑णां। अप॑रा। पूर्वा॑ं। अ॒भि। ए॒ति॒। प॒श्चात्।
ताः। प्र॒त्नऽव॒त्। नव्य॑सीः। नू॒नं। अ॒स्मे इति॑। रे॒वत्। उ॒च्छं॒तु॒। सु॒ऽदिनाः॑। उ॒षसः॑॥९॥

स्वसॄणां परस्परं स्वसृभावमापन्नानां स्वयं सरंतीनां वा पूर्वासां पुरातनीनामासामुषसां मध्येऽहस्वहःसु प्रतिदिनमपरान्याद्यतन्युषा पूर्वामतीतदिवससंबंधिनीमुषसं पश्चादनुसृत्याभ्येति। अभिमुखं गच्छति। अव्यवधानेन गच्छतीत्यर्थः। सर्वेष्वहःस्वेवमेवाभ्येति। नव्यसीर्नवीयस्यो नवतरा आगामिन्यस्ता उषास उषसोऽपि नूनं निश्चयं प्रत्नवत् पुरातन्य इव सुदिनाः शोभनकर्मानुष्ठानसाधनदिवसाः शोभनदिनमुखा वा सत्योऽस्मे अस्माकं रेवत् बहुधनविशिष्टं यथा भवति तथोच्छंतु। प्रकाशयंतु। पूर्वतन्यो यथौच्छन् तथागमिन्योऽप्युच्छंत्वित्यर्थः॥

प्र बो॑धयोषः पृण॒तो म॑घो॒न्यबु॑ध्यमानाः प॒णयः॑ ससंतु।
रे॒वदु॑च्छ म॒घव॑द्भ्यो मघोनि रे॒वत्स्तो॒त्रे सू॑नृते जा॒रयं॑ती॥१०॥

प्र। बोधय। उषः। पृणतः। मघोनि। अबुध्यमानाः। पणयः। ससंतु।
रेवत्। उच्छ। मघवत्ऽभ्यः। मघोनि। रेवत्। स्तोत्रे। सूनृते। जरयंती ॥ १० ॥

हे मघोनि मघवत्यस्मभ्यं दातव्यैर्बहुभिर्धनैस्तद्वत्युषो हे उषोदेवि पृणतो हविष्प्रदानस्मान्यजमानान्प्र बोधय। प्रज्ञापय। प्रतिबुद्धान्कुरु। किंच पणयो व्ययासहिष्णवो वणिजः। पणिर्वणिग्भवतीति यास्कः। नि० २. १७.। पणय इव लुब्धका अबुध्यमाना यागादीनकुर्वाणा अदानशीला असमच्छत्रवः ससंतु। स्वपंतु। दीर्घनिद्रा भवंतु। म्रियंतामित्यर्थः। तथा च मंत्रांतरं। ससंतु त्या अरातयो बोधंतु शूर रातयः। ऋ० १. २९. ४.। इति। किंच हे मघोन्यस्मद्दत्तहविर्भिस्तद्वति हे उषः मघवद्भ्यो हविर्लक्षणान्नवद्भ्यो यजमानेभ्यस्तेषामर्थ रेवद्धनवत्समृद्धिमदुच्छ। विभाहि। किंच हे सूनृते सुष्ठु मनुष्याणां नेत्रि देवि जरयंती सर्वप्राणिनः क्षपयंती त्वं स्तोत्रे स्तुतिकर्त्रे यजमानाय तदर्थं रेवद्धनवत्समृद्ध्यर्थमुच्छेति शेषः ॥ ॥ ८ ॥

अवेयमश्वैद्युवतिः पुरस्ताद्युंक्ते गवामरुणानामनीकं।
वि नूनमुच्छादसति प्र केतुर्गृहंगृहमुप तिष्ठाते अग्निः ॥ ११ ॥
अव। इयं। अश्वैत्। युवतिः। पुरस्तात्। युंक्ते। गवां। अरुणानां। अनीकं।
वि। नूनं। उच्छात्। असति। प्र। केतुः। गृहंऽगृहं। उप। तिष्ठाते। अग्निः ॥ ११ ॥

इयमुषा युवतिर्यौवनोपेतयोषित्स्थानीया। यद्वा। सर्वेषु भावेषु मिश्रयंती। पुरस्तात्पूर्वस्यां दिश्यवाश्वैत्। अत्यर्थमागच्छति वर्धते वा। अवावशब्दो विनिग्रहार्थीयो न्वेति विनिग्रहार्थीयौ। नि० १. ३.। इति यास्केनोक्तत्वात्। तत्कथमवगम्यत इति तत्राह। इयमरुणानामरुणवर्णानां गवां प्रसिद्धानामेतन्नामकानामश्वानां वानीकं समूहं युंक्ते। रथे योजयति। अरुण्यो गाव उषसां श्यावाः सवितुः। नै० १. १५.। इति। यथा लोके वाहनसंनाहं दृष्ट्वा प्रयाणमनुमीयते तथाचाप्यरुणरश्मीनामश्वानां दर्शनादुषा आगच्छतीत्यध्यवसीयते। यद्वा। अरुणानां रश्मीनां समूहं युंक्ते। तथा नूनं निश्चयमेषा व्युच्छात्। तमो विवर्जयिष्यति। यत इयं गा युनक्ति अत एव कारणाद्यथा लोकेऽश्वसंनाहं दृष्ट्वोदयोऽनुमीयते तथात्रापीत्यर्थः। तादृशी सासत्यसत्प्राये नीरूपेऽतरिक्षे तिरोधायकत्वादशोभने तमसि वा केतुः केतुस्थानीया ज्ञापयित्री प्रकर्षेण विविधं भासत इति शेषः। उपसर्गवशाद्योग्यक्रियाध्याहारः। यद्वा। असति तमोरूपेऽधकारे प्र केतुः प्रकर्षेण ज्ञापयित्री सती नूनं व्युच्छादिति पूर्वेणान्वयः। तस्मिन्कालेऽग्निराहवनीयादिरूपो गृहं गृहं सर्वयजमानगृहमग्निहोत्रार्थमुप तिष्ठाते। उपतिष्ठते। दीप्यत इत्यर्थः ॥

उत्ते वयश्चिद्वसतेरपप्तन्नरश्च ये पितुभाजो व्युष्टौ।
अमा सते वहसि भूरि वाममुषो देवि दाशुषे मर्त्याय ॥ १२ ॥
उत्। ते। वयः। चित्। वसतेः। अपप्तन्। नरः। च। ये। पितुऽभाजः। विऽउष्टौ।
अमा। सते। वहसि। भूरि। वामं। उषः। देवि। दाशुषे। मर्त्याय ॥ १२ ॥

ते तव व्युष्टौ सत्यां वयश्चिन्नमनवंतः पक्षिणोऽपि। चिदित्येषोऽप्यर्थे। निपातानामनेकार्थत्वात्। उच्चावचेष्वर्थेषु निपतंति। नि० १. ४.। इति यास्केनोक्तत्वात्। वसतेर्निवासस्थानान्नीडादेरूर्ध्वमपप्तन्। पतंति। पूर्ववाक्ये गृहं गृहमुप तिष्ठातेऽग्निरित्युक्तत्वात्तदपेक्षयापिशब्दः। किंच नरश्च मनुष्याश्च पितुभाजोऽन्नवंतो ऽन्नार्थिनः कृषिवाणिज्यादिकर्तारः स्वस्वव्यापारार्थमुदुन्मुखा अपप्तन्। गच्छंति। तथा मंत्रांतरं। पद्वदीयत उत्पातयति पक्षिणः। ऋ० १. ४८. ५.। इति। एवं सत्यां हे देवि देवनशील उषोदेवतेऽमा गृहे देवयजनाख्ये सते तिष्ठते यजमानाय तदर्थं। अमेति गृहनाम अमा दम इति तन्नामसु पठितत्वात्। यद्वा। अमा सह हय-

मानेनाग्निना सह निवसते यजमानाय। अमा वसेतामित्यादौ सहार्थे प्रयोगात्। मर्त्याय मनुष्याय दाशुषे हविर्दत्तवते यजमानाय भूरि वामं बहु शोभनं धनं वहसि। प्रापयसि ॥

अस्तोढ्वं स्तोम्या ब्रह्मणा मेऽवीवृधध्वमुशतीरुषासः।
युष्माकं देवीरवसा सनेम सहस्रिणं च शतिनं च वाजं ॥१३॥
अस्तोढ्वं। स्तोम्याः। ब्रह्मणा। मे। अवीवृधध्वं। उशतीः। उषसः।
युष्माकं। देवीः। अवसा। सनेम। सहस्रिणं। च। शतिनं। च। वाजं ॥१३॥

एवं सूक्तद्वयोक्तरीत्या बहुधा स्तुत्वा तां च स्तुतिमनया निवेदयित्वा स्वाभीष्टं प्रार्थयते। हे स्तोम्याः। स्तोमः स्तोत्रं। तदर्हंतीति स्तोम्याः स्तुत्यर्हा उषसः। यतो यूयं तादृश्यः अतो मे मत्स्वभूतेन ब्रह्मणा सूक्तद्वयगतमंत्ररूपेण स्तोत्रेणास्तोढ्वं। स्तुता भवत। किंच हे उषास उषसः उशतीः स्तोतॄनस्मान् अस्मत्समृद्धिं वा कामयमाना यूयमवीवृधध्वं। अस्मान्प्रवर्धयत। किंच हे देवीर्देव्यो देवनशीलाः युष्माकमवसा युष्मत्संबंधिना रक्षणेन वयं सहस्रिणं सहस्रसंख्याकमभीष्टं धनं सनेम। लभेमहि। तथा शतिनं च वाजं शतसंख्याकमपरिमितं धनं सनेम। युष्मत्कृतेन शतसहस्रपरिमितधनादिरूपरक्षणेन वयमप्यर्थिभ्यः शतसहस्रपरिमितस्य धनस्य सनितारो भवेमेत्यर्थः॥ ॥९॥

प्राता रत्नमिति सप्तर्चं पंचमं सूक्तं काक्षीवतं। दानस्य स्तूयमानत्वाद्दानदेवत्यं या तेनोच्यते सा देवता। अनु० २. ५.। इति परिभाषितत्वात्। त्रैष्टुभं। उपेत्यादिके द्वे जगत्यौ। प्राता रत्नं सप्त स्वनयस्य दानस्तुतिरूप जगत्यावित्यनुक्रमणिका ॥

प्राता रत्नं प्रातरित्वा दधाति तं चिकित्वान्प्रतिगृह्या नि धत्ते।
तेन प्रजां वर्धयमान आयू रायस्पोषेण सचते सुवीरः ॥१॥
प्रातरिति। रत्नं। प्रातःऽइत्वा। दधाति। तं। चिकित्वान्। प्रतिऽगृह्य। नि। धत्ते।
तेन। प्रऽजां। वर्धयमानः। आयुः। रायः। पोषेण। सचते। सुऽवीरः ॥१॥

अत्रेतिहासमाचक्षते। दैर्घतमसः कक्षीवान्नाम ऋषिर्ब्रह्मचर्यं चरिष्यन्वेदाभ्यासाय गुरुकुले चिरकालमुषित्वा वेदान्सम्यगधीत्य व्रतानि च चरित्वा तेनानुज्ञातः पुनः स्वगृहं प्रति प्रयास्यन् मध्ये मार्गे रात्रौ विश्रांतः। प्रभाते भावयव्यस्य पुत्रः स्वनयो नाम राजानुचरैः संक्रीडमानोऽकस्मात्कक्षीवतोऽंतिकमाससाद। स च रभसा प्रतिबुद्धः सहसोत्तस्थौ। तं च राजा पाणिं गृहीत्वा स्वकीय आसन उपवेश्यास्य सौंदर्यमवगत्य स्वकन्याप्रदानमनाः पप्रच्छ भगवन् कस्य पुत्रः किंनामा त्वमिति। स च पृष्टो मातरं पितरं च स्ववृत्तांतं चाचचक्षे। स च राजा संभाव्य इत्यवगत्य मुदितमनाः स्वगृहं प्राप्यास्मै मधुपर्कमारचय्य वस्त्रमाल्यादिभिः पूजयित्वा सरथा दश कन्याः शतनिष्कानश्वशतं पुंगवानां शतं गवां षष्ट्युत्तरसहस्रं पुनरेकादश रथांश्च प्रादात्। स च सर्वमनुक्रमेण प्रतिगृह्य दीर्घतमसोऽंतिकमागत्य तस्मै प्रादर्शयत्॥ ननु कक्ष्या नामाश्वबंधनी रज्जुः। तद्वान्कक्षीवान्। अश्वबंधनं च राज्ञ एवोचितं। अतोऽस्य राजन्यत्वात्प्रतिग्रहो नोपपद्यते। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रह इत्युक्तत्वात्। मनु० १०. ७६.। तस्माद्ब्राह्मणस्यैवाधिकारो न तु क्षत्रियस्येति। नैष दोषः। यद्यप्यसौ कलिंगाख्यस्य राज्ञः पुत्रस्तथापि तेन कलिंगेन स्वयं वृद्धत्वादपत्योत्पादनाय सामर्थ्यमलभमानेन तदुत्पादनाय याचितो दीर्घतमा ऋषिरुशिग्नामिकामपत्योत्पादनाय प्रेषितया राजमहिष्यातिजरठेन महर्षिणा सह रंतुं लज्जमानया स्ववस्त्राभरणैरलंकृत्य स्वप्रतिनिधित्वेन प्रेषितामुशिग्नामिकां योषितं दासीमित्यवगत्य मंत्रपूतेन जलेनाभिषिच्य ऋषिपुत्रीं कृत्वा तया सह रेमे। तदुत्पन्नः कक्षीवान्नाम ऋषिः। एतत्सर्वमस्माभिः पूर्वाध्याये नासत्याभ्यां। ऋ० १. ११६.। इत्यत्र सूक्ते विस्तरेण प्रतिपादितं। अतोऽस्य क्षत्रियसंबंधात्कक्षीवानिति नामोपपन्नं। दीर्घतमसः परमर्षेरुत्पन्नत्वेन ब्राह्मणत्वात्प्रतिग्रहोऽप्युपपन्न एव ॥

इदमादि सूक्तद्वयं स्वनयस्य राज्ञो दानप्रशंसाख्यानप्रतिपादकं। नन्वनुक्रमण्यां स्वनयस्य दानस्तुतिरिति दानतुष्टो भावयव्यं तुष्टावेति चोभयत्र स्तोतव्यं भिन्नमेवानुगम्यत इत्युच्यते। उत्तरसूक्तस्य प्रथमायामृच्यधि श्रियतो भाव्यस्येति दातुर्भावयव्यस्य श्रूयमाणत्वात्तत्प्राथम्यमुपजीव्य पृथगुपात्तं। वस्तुतस्तु पितुर्नाम्ना पुत्रस्य व्यवहर्तव्यत्वात् तथा आ रुद्रास इत्यादौ बहुशः प्रयोगदर्शनात्स्वनयेन दत्ता इति तत्रैव सूक्ते स्वनयस्यापि श्रूयमाणत्वाच्चोभयत्रापि दातृप्रतिगृहीत्रोरेकत्वेनैकमेव दानप्रशंसारूपमाख्यानमिति प्रसिद्धं॥ स च कक्षीवानानीतं सर्वं पितुर्निवेदयन् परोक्षेणैव दानप्रकारं प्रशंसति। स्वनयो नाम राजा प्रातरित्वा प्रातरेवात्मनः सकाशमागतः सन् रत्नं रमणीयं निष्कादिकं प्रातः प्रभातकाले दधाति। अस्मत्संनिधौ स्थापयति। ददाति। तं स्थापितं सर्वं चिकित्वांश्चेतनावान् अदुष्टमित्यवगतवान्प्रतिगृह्य स्वीकृत्य नि धत्ते। पितुः समीपे स्थापयति। अनंतरं तेन दत्तेन निष्कादिना प्रजां पुत्रभृत्यादिरूपां वर्धयमानः पोषयन् आयुर्जीवितं च वर्धयन् सुवीरः शोभनैर्वीरैः पुत्रभृत्यादिभिरुपेतः सन् रायस्पोषेण धनानां पुनःपुनर्वर्धनेन सचते। असौ राजा संगच्छतामिति तव दातुराशिषं प्रार्थयते॥

सुगुरसत्सुहिरण्यः स्वश्वो बृहदस्मै वय इंद्रो दधाति।
यस्त्वायंतं वसुना प्रातरित्वो मुक्षीजयेव पदिमुत्सिनाति॥२॥
सुऽगुः। असत्। सुऽहिरण्यः। सुऽअश्वः। बृहत्। अस्मै। वयः। इंद्रः। दधाति।
यः। त्वा। आऽयंतं। वसुना। प्रातःऽइत्वः। मुक्षीजयाऽइव। पदिं। उत्ऽसिनाति॥२॥

अत्र कक्षीवतः पितानीतेन धनेन संतुष्टो राजानं बहुप्रकारेणाशास्ते। असौ स्वनयो राजा सुगुरसत्। शोभनैर्बहुभिर्गोभिस्तद्वान्भवतु। तथा सुहिरण्यः सुष्ठु हितरमणीयैर्धनैस्तद्वान्भवतु। तथा स्वश्वः शोभनैरश्वैस्तद्वान् सन् असौ राज्ञे प्रदात्रे बृहत् प्रभूतं वयोऽन्नमिंद्रः परमेश्वरो धर्मदेवता दधाति। दधातु। ददातु। यतोऽयं राजास्मै गोहिरण्याश्वान्नानि बहुसंख्याकानि दत्तवान् अतस्तेषामभिवृद्धिप्रार्थनोचितैव। कस्त्वेवमाशीरिति स उच्यते। यः यो राजा प्रातरित्वः प्रातरागामिन्नतिथि पुत्र आयंतं गुरुकुलादागतं पदिं पथिकं यदृच्छया गंतारं त्वा त्वां वसुनान्नसाधनेन गवादिधनेनोत्सिनाति। गमनत उत्कृष्टं बध्नाति। गतिं निरुणद्धीत्यर्थः। प्रतिबंधे दृष्टांत उच्यते। मुक्षीजयेव पदिं। मुच्यमाना सती बंधनं जनयतीति मुक्षीजा मृगपक्ष्यादिबंधनी रज्जुः। तया पाशको यथा पदिं गंतारं मृगपक्ष्यादिकमुत्सिनाति बध्नाति तथा मयाननुज्ञातमपि त्वां गमनं प्रतिबध्य गवादीष्टदानादिना यो राजा तोषयति स एवं भवत्विति। पदिरिति पदं व्याचक्षाणेन यास्केन तदुदाहरणमयमंत्रो व्याख्यातः। सुगुर्भवति ततनात्त्वेति। नि० ५.१९.॥

आयमद्य सुकृतं प्रातरिच्छन्निष्टेः पुत्रं वसुमता रथेन।
अंशोः सुतं पायय मत्सरस्य क्षयद्वीरं वर्धय सूनृताभिः॥३॥
आयं। अद्य। सुऽकृतं। प्रातः। इच्छन्। इष्टेः। पुत्रं। वसुऽमता। रथेन।
अंशोः। सुतं। पायय। मत्सरस्य। क्षयत्ऽवीरं। वर्धय। सूनृताभिः॥३॥

प्रातः पूर्वेद्युः प्रभातकालेऽयं धनं दत्तवान् तस्मिन्नेव काले सुकृतं शोभनस्य कर्तारं त्वामिच्छन् प्राप्तुमिच्छन् कदा द्रक्ष्यामीति कामयमानोऽहमद्यास्मिन्दिन इदानीमायं। प्राप्तोऽस्मि। अत्र यद्यपि केवलं प्रातरित्येव श्रुतं न पूर्वेद्युरिति तथाप्यद्यायमित्युक्तत्वादर्थात्पूर्वेद्युः प्रातरिति गम्यते। कीदृशं। इष्टेरिष्टस्येष्टमागमस्य यागस्य वा पुत्रं पुरु त्रातारं। पुत्रः पुरु त्रायते। नि० २.११.। इति यास्कः। कर्तारमित्यर्थः। केन साधनेनेति तदुच्यते। वसुमता रथेन समृद्धधनवता रथेन साधनेन। यद्वा। तेन सहित इति सहार्थे तृतीया। किंच मदानीतेन समृद्धेन धनेनांशोरंशुमतो वल्लीरूपस्य मत्सरस्य मादनसाधनस्य सोमस्य। मत्सरः सोमो मंदतेस्तृप्तिकर्मण इति निरुक्तं।२.५.। तस्य सुतमभिषुतं रसं पायय। आत्मानं पायय। इष्टसाधनं सोमयागं

कुर्वित्यर्थः। कृत्वा च चयद्वीरं क्षियंतो निवसंतो वीराः पुत्रभृत्यादयो यस्य तं तादृशं त्वदिष्टसाधनबहुधनप्रदातारं सूनृताभिः प्रियसत्यात्मिकाभिर्वाग्भिर्वर्धय। समृद्धं कुरु। पुत्रभृत्यादिवीरैर्यथा प्रवृद्धो भवति तथा कामयेत्यर्थः॥

उप क्षरंति सिंधवो मयोभुव ईजानं च यक्ष्यमाणं च धेनवः।
पृणंतं च पपुरिं च श्रवस्यवो घृतस्य धारा उप यंति विश्वतः॥४॥
उप। क्षरंति। सिंधवः। मयःऽभुवः। ईजानं। च। यक्ष्यमाणं। च। धेनवः।
पृणंतं। च। पपुरिं। च। श्रवस्यवः। घृतस्य। धाराः। उप। यंति। विश्वतः॥४॥

पूर्वस्यामृच्यानीतेन धनेन सोमयागं कुर्वित्युक्तं। तमेव सोमयागं फलप्रदर्शनेन स्तौति। सिंधवः स्यंदनशीलाः प्रस्नुतपयोधाराः। सिंधुः स्यंदनादिति यास्कः। नि° ९. २६.। मयोभुवः सुखभावयित्र्यः। मय इति सुखनाम मयः सूमकमिति तन्नामसु पाठात्। धेनवः प्रीणयित्र्यो गाव ईजानं सोमयागमनुतिष्ठंतं तथा यक्ष्यमाणं यक्ष्य इति प्रणतिं कुर्वंतं च। न केवलमीजानं अपि तु यक्ष्य इत्यध्यवसितवंतमप्युप उपेत्य क्षरंति। स्रवंति। प्रीणयंतीत्यर्थः। न च पूर्वस्यामृचि सोमं पिबेत्युक्तत्वात् सर्वेषां सोमयागानामग्निष्टोमात्मकज्योतिष्टोमस्य प्रकृतस्य ज्योतिष्टोमेन स्वर्गकामो यजेतेति स्वर्ग एव फलत्वेन श्रुतः न गवादिकमिति वाच्यं। स्वर्गवद्गवादिकामनयापि सोमयागस्य कर्तुं शक्यत्वात्। न केवलं सोमयागमनुतिष्ठतामेव महत्फलं अपि तु सुकृतसाधनानि कर्मांतराण्यधितिष्ठतामपि महत्फलमस्त्येवेति दर्शयति। पृणंतं पितॄन्प्रीणयंतं पपुरिं प्रीणनशीलमिष्टदातारं प्राणिनः सर्वदा प्रीणयंतं च पुरुषं श्रवस्यवोऽन्नमिच्छंत्योऽन्नसमृद्धिहेतवो घृतस्य धाराः। यद्वा। घृतकुल्याः। विश्वतः सर्वत उप उपेत्य यंति। प्राप्नुवंति। प्रीणयंतीत्यर्थः॥

नाकस्य पृष्ठे अधि तिष्ठति श्रितो यः पृणाति स ह देवेषु गच्छति।
तस्मा आपो घृतमर्षंति सिंधवस्तस्मा इयं दक्षिणा पिन्वते सदा॥५॥
नाकस्य। पृष्ठे। अधि। तिष्ठति। श्रितः। यः। पृणाति। सः। ह। देवेषु। गच्छति।
तस्मै। आपः। घृतं। अर्षंति। सिंधवः। तस्मै। इयं। दक्षिणा। पिन्वते। सदा॥५॥

सोमयागप्रशंसाप्रसंगेन सामान्यतो दानमेतदादिभिस्त्रिभिः प्रशंसति। यद्वा। सोमस्यैव स्तुतत्वाद्दक्षिणाशब्दस्य याग एव प्रसिद्धत्वाच्च सूक्तपरिसमाप्तेः सोमयाग एव प्रस्तूयते। यः यो मर्त्यः पृणाति हविरादिदानेन देवादीन्प्रीणाति स नाकस्य। कमिति सुखनाम। तद्विरुद्धमकं। न विद्यतेऽकं दुःखं तत्साधनं पापं वेति नाको द्युलोकः। तथा श्रूयते। न वा अमुं लोकं जग्मुषे किं चनाकमिति। नि° २. १४.। तस्य पृष्ठ उन्नत उपरिदेशे श्रितः सन्नध्यधिकमा कल्पांतं तिष्ठति। यद्वा। अधि तिष्ठति। अधिष्ठाय प्रमुखो भूत्वा तिष्ठति। न केवलं स्वर्गाश्रयणं किंतु देवेषु मध्ये गच्छति। वर्तते। स्वयमेव देवो भवतीत्यर्थः। हेति प्रसिद्धौ। तस्मै प्रीणयित्रे पुरुषाय सिंधवः स्यंदनशीला आपो घृतं तेजोवत्सारमर्षंति। गच्छंति। रसवत्यो भवंतीत्यर्थः। किंचेयं भूमिरपि दक्षिणा सस्यादिफलसंपादनदक्षा सती सदा सर्वकालं पिन्वते। सेचयति। तोषयतीत्यर्थः। दातुर्जीवनसाधकान्नोदकानि रुचिराणि समृद्धानि भवंतीत्यर्थः॥

दक्षिणावतामिदिमानि चित्रा दक्षिणावतां दिवि सूर्यासः।
दक्षिणावंतो अमृतं भजंते दक्षिणावंतः प्र तिरंत आयुः॥६॥
दक्षिणाऽवतां। इत्। इमानि। चित्रा। दक्षिणाऽवतां। दिवि। सूर्यासः।
दक्षिणाऽवंतः। अमृतं। भजंते। दक्षिणाऽवंतः। प्र। तिरंते। आयुः॥६॥

दक्षिणावतां बहुविधगोहिरण्यादिरूपदक्षिणाप्रदातॄणां । इच्छब्द एवकारार्थः । तेषामेवार्थं इमानि भूमौ दृश्यमानानि चित्राणि चायनीयानि स्रक्चंदनमणिमुक्तादिरूपाणि द्रव्याणि समृद्धानि भवंतीति शेषः । किंच दक्षिणावतामेव दिवि द्युलोके सूर्यासः सूर्यसंबंधिनो लोकास्तदनुगृहीता भोगा वा समृद्धा भवंति । किंच दक्षिणावंत एवामृतं जरामरणरहितं स्थानं भजंते । सेवंते । यद्वा । दानेनापहतपाप्मान आत्मानं विदित्वामृतमविनाशं मोक्षं भजंते । प्राप्नुवंति । यज्ञेन दानेनेति श्रुतेः । किंच दक्षिणावंत एवायुः प्र तिरंते । अतिदीर्घमेवमायुष्यं लभंते । प्रपूर्वस्तिरतिर्वर्धनार्थः । इदिति सर्वत्र संबध्यते ॥

मा पृणंतो दुरितमेन आरन्मा जारिषुः सूरयः सुव्रतासः ।
अन्यस्तेषां परिधिरस्तु कश्चिदपृणंतमभि सं यंतु शोकाः ॥ ७॥
मा । पृणंतः । दुःऽइतं । एनः । आ । अरन् । मा । जारिषुः । सूरयः । सुऽव्रतासः ।
अन्यः । तेषां । परिऽधिः । अस्तु । कः । चित् । अपृणंतं । अभि । सं । यंतु । शोकाः ॥ ७॥

अन्वयव्यतिरेकाभ्यां दानं प्रशंसितुमाह । पृणंतो देवादीन्हविरादिना प्रीणयंतः संतो दुरितं दुष्टं यथा भवति तथा प्राप्तं दुःखमेनस्तत्साधनं पापं च मारन् । मा प्राप्नुवन् । न केवलं दातार एव अपि तु सूरयो देवानां स्तोतारो विद्वांसो मा जारिषुः । जरया न जीर्णा भवेयुः । तथा सुव्रतासः शोभनकृच्छ्रचांद्रायणादिनियमवंतोऽपि मा जारिषुः । तर्ह्येषामन्यो जनः क इति स उच्यते । तेषां दातॄणां स्तोतॄणां वान्यस्तेभ्योऽन्यो यः कोऽपि पुरुषः परिधिः पापस्य परितो धारकोऽस्तु । यद्वा । अन्यो यः कश्चन पापदेवस्तेषां परिधिस्थानीयो व्यवधायकोऽस्तु । यथाग्नेः परिधिः स्वयं रक्षःप्रभृतिभिर्बाध्यमानः स्वांतर्हितमग्निं रक्षति तद्वत् । अथवा । अन्यो धर्मविशेषस्तेषां परिधिः परिधानमस्तु । कवचस्थानीयोऽस्तु । तर्हि किं प्राप्नुयुरिति उच्यते । अपृणंतं देवादीनप्रीणयंतमदातारं शोकाश्चित्तपीडास्तत्साधनाः पाप्मानोऽभ्यभिमुखं सं यंतु । सम्यक् प्राप्नुवंतु । वयं सुखिनो भवेमेत्यर्थः ॥ ॥ १०॥

अमंदानिति षष्ठं सूक्तं सप्तेत्यनुवर्तनात्सप्तर्चं । आदितः पंचानां कक्षीवानृषिः षष्ठ्या भावयव्यः सप्तम्या रोमशा नाम ब्रह्मवादिनी । आदितः पंचानां भावयव्यस्य स्तुतिरूपत्वात्स एव देवता या तेनोच्यते । अनु० २.५. । इति न्यायात् । अंत्ययोः षष्ठीसप्तम्योस्तु भावयव्यरोमशयोः संवादः । षष्ठ्या भावयव्यः सप्तम्या रोमशा । यद्यपि स्वनयेन दत्ता इति श्रूयमाणत्वात्तस्यैव स्तुत्या भाव्यं तथापि पितृपुत्रयोरभेदात् आ रुद्रास इतिवत् पितृनाम्ना व्यवहर्तुं शक्यत्वात् प्रथमायामृचि भाव्यस्येत्युक्तत्वाच्च भावयव्यं तुष्टवेत्येतदविरुद्धमित्युक्तं पूर्वसूक्त एव । आदितः पंच त्रिष्टुभः । अंत्ये अनुष्टुभौ । तथा चानुक्रांतं । अमंदानिति कक्षीवान्दानतुष्टः पंचभिर्भावयव्यं तुष्टावांत्ये अनुष्टुभौ भावयव्यरोमशयोर्दंपत्योः संवाद इति ॥ उक्तो विनियोगः ॥

अमंदान्स्तोमान्प्र भरे मनीषा सिंधावधि क्षियतो भाव्यस्य ।
यो मे सहस्रममिमीत सवानतूर्तो राजा श्रव इच्छमानः ॥ १॥
अमंदान् । स्तोमान् । प्र । भरे । मनीषा । सिंधौ । अधि । क्षियतः । भाव्यस्य ।
यः । मे । सहस्रं । अमिमीत । सवान् । अतूर्तः । राजा । श्रवः । इ[illegible]ः ॥ १॥

सिंधौ सिंधुदेशे यद्वा लक्षणया सिंधुतीरे समुद्रतीरेऽधि क्षियतोऽधिनिवसतो भाव्यस्य भावयव्यस्य । तत्पुत्रस्य स्वनयस्येत्यर्थः । तस्यामंदाननल्पान् स्तोमान् स्तोत्राणि तन्निष्ठबहुविधदानादीना कीर्तनानि मनीषा मनीषया प्रियातिशयबुद्ध्या प्र भरे । प्रकर्षेण संपादयामि । कस्तस्य विशेष इति तत्राह । अतूर्तः केनाप्यहिंसितो यो राजा मे मदर्थं सहस्रं तत्संख्याका- सवान् । सूयंते सोमा एष्विति सवाः सोमयागाः । तानमिमीत संपूर्णधनप्रदानेन निर्मितवा- । किमिच्छन् । श्रवः सर्वैः श्रूयमाणां कीर्तिमात्मन इच्छमानः कामयमानः । यतोऽयमार्त्विज्याद्युपाधिना विना कीर्त्यर्थमेव बहु धनं प्रादात् अतस्तं स्तौमीत्यर्थः ॥

शतं राज्ञो नाधमानस्य निष्काञ्छतमश्वान्प्रयतान्त्सद्य आदं ।
शतं कक्षीवाँ असुरस्य गोनां दिवि श्रवोऽजरमा ततान ॥२॥
शतं । राज्ञः । नाधमानस्य । निष्कान् । शतं । अश्वान् । प्रऽयतान् । सद्यः । आदं ।
शतं । कक्षीवान् । असुरस्य । गोनां । दिवि । श्रवः । अजरं । आ । ततान ॥२॥

नाधमानस्य स्वीकर्तव्यमित्युच्चैर्याचमानस्यासुरस्य धनानां निरसितुर्दानशीलस्य राज्ञः स्वतेजसा दीप्यमानस्य स्वनयस्य निष्कानाभरणविशेषान् इयत्ताविशेषविशिष्टानि वा सुवर्णानि शतसंख्याकानि । शतं सहस्रमित्यपरिमितवचनः । अपरिमितान् सद्यः प्रार्थनानंतरमेव कक्षीवानहमादं । आत्तवानस्मि । स्वीकृतवानस्मीत्यर्थः । तथा प्रयतान् शुद्धान् लक्षणोपेतानश्वानध्वगमनसमर्थान् हयानादं । आत्तवान् । तथा गोनां पुंगवानां । बलीवर्दानामित्यर्थः उत्तरमंत्रे स्त्रीगवीनामभिधानात् । तेषां शतमादं । एवं प्रदाता राजा दिवि द्युलोके श्रवः कीर्तिमजरं शाश्वतीमा ततान । विस्तारितवान् । गवादिप्रतिग्रहीताहं स्वर्गे कीर्तिमकरवमित्यर्थः ॥

उप मा श्यावाः स्वनयेन दत्ता वधूमंतो दश रथासो अस्थुः ।
षष्टिः सहस्रमनु गव्यमागात्सनत्कक्षीवाँ अभिपित्वे अह्नां ॥३॥
उप । मा । श्यावाः । स्वनयेन । दत्ताः । वधूऽमंतः । दश । रथासः । अस्थुः ।
षष्टिः । सहस्रं । अनु । गव्यं । आ । अगात् । सनत् । कक्षीवान् । अभिऽपित्वे । अह्नां ॥३॥

स्वनयेन दत्ताः श्यावास्तद्वर्णाश्वैर्युक्तत्वात् श्यावा वधूमंत आरूढाभिर्वधूभिस्तद्वंतो दशैतत्संख्याका रथासो रथा उपास्थुः । उपस्थिताः । गव्यशब्दो गोसमूहवाची । षष्टिः सहस्रमनु गव्यं षष्ट्यधिकसहस्रं गवां समूहोऽन्वागात् । आगतः । तत आत्मानं परोक्षेण ब्रवीति । तत्सर्वं प्रतिगृह्यायं कक्षीवानह्नां दिवसानां मध्येऽभिपित्वे सन्निहितेऽहनि सनत् । स्वीकृतं रथवध्वादिकं स्वपित्रे समर्पयति स्वयं वा स्वीकरोति । अभिपित्वशब्द आसन्नकालवाची प्रपित्वशब्द इतिवत् । स च प्रपित्वेऽभीक इत्यासन्नस्येति यास्केनोक्तत्वादासन्नवचनः । नि० ३. २०. । उपसर्गभेदेऽप्यर्थाभेदः ॥

चत्वारिंशद्दशरथस्य शोणाः सहस्रस्याग्रे श्रेणिं नयंति ।
मदच्युतः कृशनावतो अत्यान्कक्षीवंत उदमृक्षंत पज्राः ॥४॥
चत्वारिंशत् । दशऽरथस्य । शोणाः । सहस्रस्य । अग्रे । श्रेणिं । नयंति ।
मदऽच्युतः । कृशनऽवतः । अत्यान् । कक्षीवंतः । उत् । अमृक्षंत । पज्राः ॥४॥

दशरथस्य दशसंख्याकरथवतः सहस्रस्य सहस्रसंख्याकानुचरोपेतस्य कक्षीवतो गोयूथसहस्रस्य वाग्रे पुरस्तात् शोणाः शोणवर्णोपेता अश्वाश्चत्वारिंशत् एकैकस्य रथस्य चतुष्टये सति दशरथानां मिलित्वा चत्वारिंशदश्वा भवंति । तेऽपि श्रेणिं पंक्तिमाश्रित्य नयंति । रथानभिमतदेशं प्रापयंति । यद्वा । [illegible] रथान् श्रेणिं श्रेणीभावं नयंति । प्रापयंति । एकैकं रथं चत्वारश्चत्वारः पंक्त्याकारेण वहंतीत्यर्थः । अथ तान् कक्षीवंतः । कक्ष्याश्वसंबंधिनी रज्जुः । कक्ष्या रज्जुरश्वस्येति यास्केनोक्तत्वात् । नि० २. २. । ताभिस्तद्वंतः । यद्वा । अंगिरसः पुत्राः सर्वेऽपि कक्षीवंतः । अथवा कक्षीवदनुचराः सर्वेऽपि छत्रिन्यायेन कक्षीवंतः । पज्रा घासाद्यन्नवंतः संतो मदच्युतो मदस्राविण उद्वृत्तान् शत्रूणां मदस्य च्यावयितॄन्वा कृशनावतः सुवर्णमयनानाभरणयुक्तान् । कृशनमिति हिरण्यनाम कृशनं लोहमिति तन्नामसु पाठात् । सुवर्णाभरणोपेतानत्यान् सततगमन[illegible]नुदमृक्षंत । अध्वश्रमजनितस्वेदापनयनायोत्कृष्टं मार्जयंति ॥

पूर्वामनु प्रयतिमा ददे वस्त्रीन्युक्ताँ अष्टावरिधायसो गाः ।
सुबंधवो ये विश्या इव व्रा अनस्वंतः श्रव ऐषंत पज्राः ॥ ५ ॥
पूर्वां । अनु । प्रऽयतिं । आ । ददे । वः । त्रीन् । युक्तान् । अष्टौ । अरिऽधायसः । गाः ।
सुऽबंधवः । ये । विश्याःऽइव । व्राः । अनस्वंतः । श्रवः । ऐषंत । पज्राः ॥ ५ ॥

इदानीमानीतं धनं बंधुभ्यो निवेदयन्नाह । हे सुबंधवः पूर्वां प्रयतिं पूर्वप्रदानमनु तमनुसृत्य वक्ष्यमाणानि रथादीनि वो युष्मदर्थमा ददे । स्वीकृतवानस्मि । यद्वा । पूर्वां प्रयतिं प्रदेयं रथादिकमनु दानक्रमेणैवा ददे । प्रतिगृहीतवानस्मि । कानि तानीति । त्रीनष्टौ च युक्तान् चतुर्भिश्चतुर्भिरश्वैर्धनैर्वा युक्तान् रथानिति शेषः । अत्र संख्यापृथङ्निर्देशो न विवक्षितः । तथारिधायसोऽरिभिरीश्वरैर्धारणीया बहुमूल्या असंख्याता गाश्चा ददे । अत्र वक्ष्यमाणानि पूर्वं प्रतिगृहीतादधिकानीति युक्तं । पूर्वमेव पित्रे निवेदितानां पुनर्बंधुभ्यो निवेदनासंभवात् वधूमंतो दश रथासो अस्थुरिति दशानां रथानामुक्तत्वादत्र च त्रीनष्टाविस्येकादशानां वक्ष्यमाणत्वाद्वधूविशिष्टानामन्येभ्यो दातुमनुचितत्वाच्चान्यानीति युक्तं । उक्तानामेवानुवदनपक्षे दश वधूयुक्ता रथा एको धनपूर्ण इति विवेकः । उक्तानामेव रथादीनां पुनरभिधानं प्रकृष्टत्वज्ञापनार्थं सर्वे ब्राह्मणा आगता वसिष्ठश्चागत इतिवत् । इदानीं परोक्षेणाह । सुबंधवः शोभना विद्यायोनिसंबंधिनो येषां ते तथोक्ताः । यद्वा । शोभनबांधवोपेताः परस्परमनुरागयुक्ता इत्यर्थः । विशः प्रजाः । तत्र भवा विश्याः । व्रियंत इति व्रा व्राताः ॥ तकारलोपश्छांदसः ॥ विश्यां व्राता यथा परस्परमनुरागवंतस्तथैतेऽपीत्यर्थः । पज्रा अन्नवंतोऽंगिरसः संतानप्रभवा ये संति ते सर्वे सुबंधवोऽनस्वंतः शकटवंतो हविर्धानशकटोपलक्षितसोमयागवंतः संतः श्रवः सर्वत्र श्रूयमाणां कीर्तिमैषंत । इच्छंति इच्छंतु वा । तदर्थमा दद इति शेषः ॥

आगधिता परिगधिता या कशीकेव जंगहे ।
ददाति मह्यं यादुरी याशूनां भोज्या शता ॥ ६ ॥
आऽगधिता । परिऽगधिता । या । कशीकाऽइव । जंगहे ।
ददाति । मह्यं । यादुरी । याशूनां । भोज्या । शता ॥ ६ ॥

संभोगाय प्रार्थितो भावयव्यः स्वभार्यां रोमशामप्रौढेति बुद्ध्या परिहसन्नाह । भोज्या भोगयोग्यैषागधिता आ समंताद्गृहीता स्वीकृता । तथा परिगधिता परितो गृहीता । आदरातिशयाय पुनर्वचनं । गध्यं गृह्णातेरिति यास्कः । नि॰ ५. १५. । यद्वा । आगधिता आ समंतान्मिश्रयंती । आंतरं प्रजननेन बाह्यं भुजादिभिरित्यर्थः । गध्यतिर्मिश्रीभावकर्मेति यास्कः । नि॰ ५. १५. । पूर्वस्मिन् पक्षे पुरुषस्य प्राधान्यं उत्तरस्मिंस्तु योषित इति भेदः । कीदृशी सा । या जंगहे अत्यर्थं गृह्णाति कदाचिदपि न मुंचति । अत्यागे दृष्टांतः । कशीकेव । कशीका नाम सूतवत्सा नकुली । सा यथा पत्या सह चिरकालं क्रीडति न कदाचिदपि विमुंचति तथैषापि । किंच भोज्यैषा यादुरी । यादुरित्युदकनाम । रेतोलक्षणमुदकं प्रभूतं ददातीति यादुरी । बहुरेतोयुक्तेत्यर्थः । तादृशी सती याशूनां संभोगानां । यश इति प्रजनननाम । तत्संबंधीनि कर्माणि याशूनि भोगाः । तेषां शता शतान्यसंख्यातानि मह्यं ददाति ॥

रोमशा नाम बृहस्पतेः पुत्री ब्रह्मवादिनी परिहसंतं स्वपतिं प्रत्याह ॥

उपोप मे परा मृश मा मे दभ्राणि मन्यथाः ।
सर्वाहमस्मि रोमशा गंधारीणामिवाविका ॥ ७ ॥

उपऽउप । मे । परा । मृश । मा । मे । दभ्राणि । मन्यथाः ।
सर्वा । अहं । अस्मि । रोमशा । गंधारीणांऽइव । अविका ॥ ७॥

भो पते मे मां । द्वितीयार्थे चतुर्थी । उपोप । द्वितीय उपशब्दः पादपूरणः । उपेत्य परा मृश । सम्यक् स्पृश । भोगयोग्यामवगच्छेत्यर्थः । यद्वा । मे मम गोपनीयमंगमुपोप परा मृश । अत्यंतमांतरं स्पृश । परामर्शाभावशंकां निवारयति । मे मदंगानि रोमाणि दभ्राणि मा मन्यथाः । अल्पानि मा बुध्यस्व । दभ्रमर्भकमित्यल्पस्येति दभ्रं दभ्नोतेरिति यास्कः । नि॰ ३. २०. । अदभ्रत्वमेव विशदयति । अहं रोमशा बहुरोमयुक्तास्मि । यतोऽहमीदृशी अतः सर्वा संपूर्णावयवास्मि । रोमशत्वे दृष्टांतः । गंधारीणामविकेव । गंधारा देशाः । तेषां संबंधिन्यविजातिरिव । तद्देशस्था अवयो मेषा यथा रोमशाः तथाहमस्मि । यद्वा । गंधारीणां गर्भधारिणीनां स्त्रीणामविकात्यर्थं तर्पयंती योनिरिव । तासामा प्रसवं रोमादिविकर्तनस्य शास्त्रे निषिद्धत्वाद्योनी रोमशा भवति । अतः सोपमीयते । यतोऽहमीदृशी अतो मामप्रौढां मावबुध्यस्वेत्यर्थः ॥ ॥ ११ ॥ ॥ १८ ॥

एकोनविंशेऽनुवाके सप्त सूक्तानि । तत्राग्निं होतारमिति प्रथमं सूक्तमेकादशर्चं दिवोदासपुत्रस्य परुच्छेपस्यार्षमाग्नेयमात्यष्टं । स हि शर्ध इत्यस्याः षट्सप्तत्यक्षरातिधृतिः । उत्कृत्यभिकृतिसंकृतिविकृत्याकृतिप्रकृतिकृत्यतिधृतिधृत्यत्यष्ट्यष्टिषु चतुरुत्तरशताक्षरमारभ्य चतुर्णां परित्याग एकैकमुक्तं छंदो जायते । तथा सत्यत्यष्ट्यतिधृती उक्तसंख्योपेते स्यातां । एतत्सर्वं छंदोग्रंथे चतुःशतमुत्कृतिरित्यादिसूत्रैः प्रतिपादितं । पिं॰ ४. १. । तथा चानुक्रांतं । अग्निमेकादश परुच्छेपो दैवोदासिराग्नेयं तु पारुच्छेपं सर्वमात्यष्टं तत्रातिधृतिः षष्ठीति ॥ सूक्तस्य विशेषविनियोगो लैंगिकः ॥ दशरात्रस्य षष्ठेऽहनि प्रातःसवने प्रस्थितयाज्यानां पुरस्तादन्या ऋचः कृत्वा प्राकृतीभिश्च सह यष्टव्यं । तत्राग्नीध्रस्यैषा प्रथमा । षष्ठस्य प्रातःसवन इति खंडे सूचितं । अग्निं होतारं मन्ये दास्वंतं दध्यङ् ह मे जनुषं पूर्वो अंगिराः । आ॰ ८. १. । इति ॥

अग्निं होतारं मन्ये दास्वंतं वसुं सूनुं सहसो जातवेदसं विप्रं न जातवेदसं ।
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा ।
घृतस्य विभ्राष्टिमनु वष्टि शोचिषाजुह्वानस्य सर्पिषः ॥ १॥
अग्निं । होतारं । मन्ये । दास्वंतं । वसुं । सूनुं । सहसः । जातऽवेदसं ।
विप्रं । न । जातऽवेदसं ॥ य । ऊर्ध्वया । सुऽअध्वरः । देवः । देवाच्या । कृपा ।
घृतस्य । विऽभ्राष्टिं । अनु । वष्टि । शोचिषा । आऽजुह्वानस्य । सर्पिषः ॥ १॥

अग्निं सर्वासां देवसेनानामग्रण्यं यज्ञेष्वग्रं नीयमानं वा होतारमस्मद्यागं प्रति देवानामाह्वातारं । यद्वा । होमनिष्पादकं होतारं । जुहोतेर्होतेत्यौर्णवाभ इति यास्कः । नि॰ ७. १५. । अग्निमद्य होतारमवृणीत । तै॰ ब्रा॰ २. ६. १५. १. । इति श्रुतेः । अग्निमग्न आवहेति चाग्नेराह्वातृत्वं प्रसिद्धं । अग्निं होतारं मन्ये । एवं प्रतिविशेषणं मन्य इति संबंधः । यद्वा । यागनिष्पत्तेरेवापेक्षितत्वादेतदेव विधेयविशेषणं । इतराणि वक्ष्यमाणविशेषणानि स्तुतिपराणि । दास्वंतमतिशयेन दानवंतं वसुं सर्वेषां निवासहेतुं सहसः सूनुं बलस्य पुत्रं । अग्निमंथनकाले बलेन मथ्यमान उत्पद्यत इति पुत्रत्वमुपचर्यते । जातवेदसं जातानां वेदितारं जातप्रज्ञं जातबलं वा । जातवेदःशब्दो यास्केन बहुधा निरुक्तः । नि॰ ७. १९. । अग्नेर्जातवेदस्त्वे दृष्टांतः । विप्रं न जातवेदसं जातविद्यं मेधाविनं ब्राह्मणमिव । तं यथा बहुमन्यंते तथा त्वामपि मन्ये । स्तौमीत्यर्थः । उक्तगुणविशिष्टो यो देवः स्वध्वरः शोभनयज्ञवान् यज्ञं सम्यग्निर्वहन् ऊर्ध्वयोन्नतयोत्कृष्टया देवाच्या देवान्पूजयंत्या देवान्प्रत्यक्तया वा कृपा कृपया सामर्थ्यलक्षणया । देवान्प्रत्यक्तया कृपेति यास्कः । नि॰ ६. ८. । तेभ्यो हविर्वहनबुद्ध्या युक्तः सन् आजुह्वत्या समंताद्धूयमानस्य सर्पिषः सरणशीलस्य घृतस्य विलापनेन दीप्तस्याज्यस्य विभ्राष्टिं विशेषेण भ्राजमानमनु स्वयमपि तदाज्यं शोचिषा ज्वालया वष्टि । कामयते । स्वीकरोतीत्यर्थः ॥

यजिष्ठं त्वा यजमाना हुवेम ज्येष्ठमंगिरसां विप्र मन्मभिर्विप्रेभिः शुक्र मन्मभिः ।
परिज्मानमिव द्यां होतारं चर्षणीनां ।
शोचिष्केशं वृषणं यमिमा विशः प्रावंतु जूतये विशः ॥ २ ॥
यजिष्ठं । त्वा । यजमानाः । हुवेम । ज्येष्ठं । अंगिरसां । विप्र । मन्मऽभिः ।
विप्रेभिः । शुक्र । मन्मऽभिः ॥ परिज्मानंऽइव । द्यां । होतारं । चर्षणीनां ।
शोचिःऽकेशं । वृषणं । यं । इमाः । विशः । प्र । अवंतु । जूतये । विशः ॥ २ ॥

हे विप्र मेधाविन् शुक्र दीप्तज्वालाग्ने यजिष्ठमतिशयेन यष्टृतमं त्वा त्वां यजमाना वयं यष्टारो हुवेम । आह्वयामः । यतो वयं यजमाना यतश्च त्वं यजिष्ठः अतो हुवेमेत्यभिप्रायः । कीदृशं त्वां । अंगिरसामंगिरोगोत्रोत्पन्नानां मध्ये ज्येष्ठं । यद्वा । अंगाराणां मध्ये ज्येष्ठं ज्वालायुक्तत्वात् । अंगिरा अंगारा इति यास्कः । नि० ३. १७. । येऽंगारा आसंस्तेऽंगिरसोऽभवन् । ऐ० ब्रा० ३. ३४. । इति श्रुतेः । केन साधनेनेति तदुच्यते । मन्मभिर्मननसाधनैर्विप्रेभिर्विशेषेण प्रीणयितृभिर्मन्मभिर्मंत्रैः । यद्वा । विप्रेभिर्मेधाविभिर्ऋत्विग्भिर्मन्मभिर्मंत्रैश्च सहिता वयमिति संबंधः । त्वदाह्वानानंतरं परिज्मानं परितो गच्छंतं द्यामिव सूर्यमिव होतारं देवानामाह्वातारं । केषामर्थे । चर्षणीनां । मनुष्यनामैतत् । मनुष्याणां यजमानानामर्थे । यद्वा । चर्षणीनां पूर्वं मनुष्याणामेव सतां पश्चाद्यागादिसाधनेन देवत्वमापन्नानां देवानामाह्वातारं । तथा शोचिष्केशं केशवदत्यंतायतज्वालोपेतं वृषणं वर्षितारं एवंरूपं यं त्वां विशस्त्वामेव निविशमाना इमा विशो यजमानरूपाः प्रजा जूतये स्वर्गाद्यभिमतफलप्राप्तये प्रावंतु प्रकर्षेण प्रीणयंतु । तादृशं त्वां हुवेमेति संबंधः ॥

स हि पुरू चिदोजसा विरुक्मता दीद्यानो भवति द्रुहंतरः परशुर्न द्रुहंतरः ।
वीळु चिद्यस्य समृतौ श्रुवद्वनेव यत्स्थिरं ।
निष्षहमाणो यमते नायते धन्वासहा नायते ॥ ३ ॥
सः । हि । पुरु । चित् । ओजसा । विरुक्मता । दीद्यानः । भवति । द्रुहंऽतरः ।
परशुः । न । द्रुहंऽतरः ॥ वीळु । चित् । यस्य । संऽऋतौ । श्रुवत् । वनाऽइव । यत् । स्थिरं ।
निःऽसहमानः । यमते । न । अयते । धन्वऽसहा । न । अयते ॥ ३ ॥

स हि स एव पूर्वं स्तुत एवाग्निर्विरुक्मता विशेषेण रोचनवतौजसा ज्वालारूपेण बलेन पुरु चित् अत्यधिकमेव दीद्यानो दीप्यमानो द्रुहंतरो द्रोग्धॄणां तरिता निवारयिता भवति । अस्मासु द्रोहं कुर्वतां शत्रूणां हिंसको भवतीत्यर्थः । तत्र दृष्टांतः । द्रुहंतरो द्रोग्धॄणां छेदनाय प्रयुक्तः परशुर्न परशुरिव । स यथामोघं हिनस्ति तथायमपि । किंच यस्याग्नेः समृतौ संगतौ संयोगे वीळु चित् दृढमपि पाषाणादिकं श्रुवत् गच्छेत् शीर्येत । तथा यत्स्थिरं यच्च पर्वतादि स्थिरमचलितं तदपि श्रुवत् । वीड्विति दृढनाम वीळु च्यौत्नमिति तन्नामसु पाठात् । तत्र दृष्टांतः । वनेव उदकमिव । उदकं यथाग्निसंयोगे शुष्यति तथेत्यर्थः । अत्यंतदृढं स्थिरमपि हिनस्ति अस्मद्द्रोग्धारं शत्रुं हिनस्तीति किमु वक्तव्यमित्यभिप्रायः । किंचायमग्निर्निष्षहमाणः शत्रून्निःशेषेणाभिभवन् यमते । उपरमते । शत्रुषु मध्ये क्रीडति । तानेव नाशयति । तथा कुर्वन्नायते । न गच्छति । शत्रोः सकाशान्न पलायते । तत्र दृष्टांतः । धन्वसहा न । धनुषा शत्रूनभिभवतीति धन्वसहा धानुष्कः ॥ सहतेरसुन् छांदसोऽंत्यलोपः ॥ स यथा शत्रोरभिमुखं विध्यति न पलायते तद्वदित्यर्थः । यद्वा । दृढधनुर्वहनक्षमो धन्वसहः ॥ अस्मिन्पक्षे पचाद्यच् । सुपां सुलुगित्याकारः ॥ दृढधन्वा सन्नायते न चलति ॥

दृ॒ळ्हा चि॑दस्मा॒ अनु॑ दु॒र्यथा॑ वि॒दे तेजि॑ष्ठाभिर॒रणि॑भिर्दा॒ष्ट्यव॑सेऽ॒ग्नये॑ दा॒ष्ट्यव॑से ।
प्र यः पु॒रूणि॒ गाह॑ते॒ तक्ष॒द्वने॑व शो॒चिषा॑ ।
स्थि॒रा चि॒दन्ना॒ नि रि॑णा॒त्योज॑सा॒ नि स्थि॒राणि॑ चि॒दोज॑सा ॥४॥

दृ॒ळ्हा । चि॒त् । अ॒स्मै॒ । अनु॑ । दुः॒ । यथा॑ । वि॒दे । तेजि॑ष्ठाभिः । अ॒रणि॑ऽभिः । दा॒ष्टि॒ । अव॑से । अ॒ग्नये॑ । दा॒ष्टि॒ । अव॑से ॥ प्र । यः । पु॒रूणि॑ । गाह॑ते । तक्ष॑त् । वना॑ऽइव । शो॒चिषा॑ । स्थि॒रा । चि॒त् । अन्ना॑ । नि । रि॒णा॒ति॒ । ओज॑सा । नि । स्थि॒राणि॑ । चि॒त् । ओज॑सा ॥ ४ ॥

अस्मा अग्नये दृळ्हा चित् दृळ्हान्येव सारवंति हवींष्यनुक्रमेण प्रतिमंत्रं दुः । ददति ॥ ददातेर्लुङि गातिस्थेति सिचो लुक् । आत इति झेर्जुस् ॥ यजमाना ददति । दाने दृष्टांतः । यथा विदे विदुषे परमार्थदर्शिन उत्कृष्टानि धनानि वितरंति दानशीलाः । यद्वा । अयमग्निर्यथा विदे विंदते स्वातिरिक्तं हविर्देवेभ्यो दातुं लभते स्वीकरोति तथा दुरिति ॥ विंदतेश्छांदसः शपो लुक् । लोपस्त आत्मनेपदेष्विति तलोपः ॥ किंच सोऽग्निस्तेजिष्ठाभिररणिभिरत्यंततेजोयुक्तैर्मार्गैर्यज्ञादिरूपैर्दाष्टि । पूजितः सन् स्वर्गादिकं ददाति ॥ दाशृ दाने । शपो लुक् ॥ किमर्थं । अवसे तद्रक्षणाय । यद्वा । तेजिष्ठाभिरतिशयेन तेजोवद्भिररणिभिर्गमनैरितरदेवानुद्दिश्य यजमानेन दत्तं हविरवसे तेषां स्वीकाराय दाष्टि । अयमग्निर्ददाति । नयति । किंचाग्नये इतरदेवताप्रदानसमयेऽपि यजमानोऽग्नयेऽग्निप्रीतये दाष्टि । प्रथमं ददाति । किमर्थं । अवसे रक्षणार्थं । यद्ययमतृप्तः स्यात् इतरेभ्यो दत्तमपि स्वयं स्वीकुर्यात् तस्मादग्नये प्रयाजादिरूपेण ददातीत्यर्थः । किंच योऽग्निः पुरूणि बहूनि सामर्थ्याद्यजमानधनादीनि प्र गाहते प्रविशति प्रविश्य च वाष्पादिरूपया ज्वालया तक्षत् तनूकरोति । नाशयतीत्यर्थः । तत्र दृष्टांतः । वनेव । वृक्षादिसमूहानि वनानि यथा प्रविश्य तक्षति दहति तथेत्यर्थः । किंचायमग्निः स्थिरा स्थिराणि कठिनान्यन्नान्नानि व्रीह्यादीन्योजसा तेजोरूपया ज्वालया नि नितरां रिणाति । गच्छति । पचतीत्यर्थः ॥ री गतिरेषणयोः क्रैयादिकः । प्वादीनां ह्रस्व इति ह्रस्वः ॥ तथौजसा स्वकीयेन तेजसा स्थिराण्यपरिहरणीयानि पापान्यमित्राणि वा नि रिणाति । निःशेषेण गच्छति । नाशयतीत्यर्थः ॥

तम॑स्य पृ॒क्षमुप॑रासु धीमहि॒ नक्तं॒ यः सु॒दर्श॑तरो॒ दिवा॑तरा॒दप्रा॑यु॒षे॒ दिवा॑तरात् ।
आद॒स्यायु॒र्ग्रभ॑णवद्वी॒ळु शर्म॒ न सू॒नवे॑ ।
भ॒क्तमभ॑क्त॒मवो॒ व्यंतो॑ अ॒जरा॑ अ॒ग्नयो॒ व्यंतो॑ अ॒जराः॑ ॥५॥

तं । अ॒स्य॒ । पृ॒क्षं । उप॑रासु । धी॒म॒हि॒ । नक्तं॑ । यः । सु॒दर्श॑ऽतरः । दिवा॑ऽतरात् । अप्र॑ऽआयुषे । दिवा॑ऽतरात् ॥ आत् । अ॒स्य॒ । आयुः॑ । ग्रभ॑णऽवत् । वी॒ळु । शर्म॑ । न । सू॒नवे॑ । भ॒क्तं । अभ॑क्तं । अवः॑ । व्यंतः॑ । अ॒जराः॑ । अ॒ग्नयः॑ । व्यंतः॑ । अ॒जराः॑ ॥ ५ ॥

अस्याग्नेः पृक्षं हविर्लक्षणमन्नमुपरासु । उपरमंतेऽस्मिन् हवींषीत्युपरा वेदिसमीपभूमयः । तासु धीमहि । धारयामः । अस्येत्युक्तं कस्येत्याह । योऽग्निर्नक्तं रात्रौ दिवातरात् अह्नोऽपि सुदर्शतरः अत्यर्थं सर्वैर्दर्शनीयो भवति । यतोऽयं रात्रौ सर्वेषु भावेषु तमसावृतत्वाददृश्यमानेष्वपि स्वयमत्यर्थं प्रकाशते अतोऽस्मै धीमहि । पुनः कीदृशाय । दिवातरात् सकाशादेवाप्रायुषे । प्रगतमायुर्यस्यासौ प्रायुः । न प्रायुरप्रायुः । तस्मै । असौ योऽस्तमेति स सर्वेषां भूतानां प्राणानादायास्तमेतीति श्रुते रात्रौ सर्वे भावा निद्रयावृतत्वात्प्रायुष इव भवंति । अयमग्निस्तु सर्वप्राणिप्राणापहर्तुः सूर्यस्य रात्रौ स्वस्मिन्नेव प्रवेशात्प्रकृष्टायुर्भवति । अतोऽपि धीमहि । किंचात् अत एव कारणात् यतोऽयं सुदर्शतरो यतश्चायमप्रायुः अतः कारणादस्याग्नेः तदर्थमायु-

हैविर्लक्षणमन्नं ग्रभणवत् ग्रहणयुक्तमभूत् । ग्रहणे दृष्टांतः । सूनवे पुत्राय पित्रोर्वोळ्हु शर्म दृढं सुखसाधनं गृहं यथा ग्रहणवद्भवति तथेत्यर्थः । शर्मेति गृहनाम शर्म वर्मेति तन्नामसु पाठात् । इदानीमाहवनीयादिरूपेणा-ग्नेर्बहुत्वमपेक्ष्याह । एतेऽग्नयो भक्तं सेवमानमभक्तमसेवमानं च व्यंत एते प्राणिनोऽनुयाह्या इति बुध्यमाना अवः । रक्षंति । यद्यपि विशेषेण प्राणिनो दाहपाकादिद्वारा रक्षंति तथाप्यस्ति यजमानेष्वतिशय इत्याह । व्यंतस्तैः प्रत्तं हविरश्नंतोऽजरा भवंति । स्वयं हविषाजराः संतो यजमानानप्यजरान्कुर्वंतीत्यर्थः ॥ ॥ १२ ॥

स हि शर्धो न मारुतं तुविष्वणिरप्नस्वतीषूर्वरास्विष्टनिरार्तनास्विष्टनिः ।
आदद्धव्यान्याददिर्यज्ञस्य केतुरर्हणा ।
अध स्मास्य हर्षतो हृषीवतो विश्वे जुषंत पंथां नरः शुभे न पंथां ॥ ६ ॥
सः । हि । शर्धः । न । मारुतं । तुविऽस्वनिः । अप्नस्वतीषु । उर्वरासु । इष्टनिः ।
आर्तनासु । इष्टनिः ॥ आदत् । हव्यानि । आऽददिः । यज्ञस्य । केतुः । अर्हणा ।
अध । स्म । अस्य । हर्षतः । हृषीवतः । विश्वे । जुषंत । पंथां । नरः । शुभे । न । पंथां ॥ ६ ॥

स हि स एव स्तुत्यतया प्रसिद्ध एवाग्निस्तुविष्वणिः । तुवीति बहुनाम उरु तुवीति तन्नामसु पाठात् । बहुस्वनिः प्रभूतध्वनियुक्तो वर्तते । अत्यंतज्वलितेऽग्नौ वायुसंपर्कात् भुगिभुगिति ध्वनिरुत्पद्यते । ज्वलतीत्यर्थः । ध्वनने दृष्टांतः । मारुतं शर्धो न मरुत्संबंधि बलमिव । मरुतां समूहो यथा ध्वनयति तथेत्यर्थः । कुत्रेति तदुच्यते । अप्नस्वतीषु खननप्रोक्षणादिकर्मोपेतासु । अप्न इति कर्मनाम अप्नो दंस इति तन्नामसु पाठात् । उर्वरासूरुवरणयुक्तासु श्रेष्ठासु वेदिभूमिषु । कीदृशोऽयं । इष्टनिर्यष्टव्यः ॥ औणादिकोऽनिक् तुडागमश्च ॥ किंचा-र्तनासु । आर्तान्करोत्यार्तयति । आर्तयंतीत्यार्तनाः पृतनाः । तासु ॥ ण्यासश्रंथो युच् । पा० ३. ३. १०७. । वृषा-दित्वादाद्युदात्तत्वं ॥ तासां जयायेष्टनिरिष्टव्यो यष्टव्यो वा । किंचैवं स्वनयन्नग्निर्हव्यान्याज्यपुरोडाशादीन्यादत् । अत्ति । भक्षयति ॥ छांदसो लुङ् । यद्वा । आङ्पूर्वाद्ददातेराङो यमहनः । पा० १. ३. २८. । इति व्यत्ययेनात्म-नेपदाभावः । गातिस्थेति सिचो लुक् । छांदसो ह्रस्वः । केवलादेव वा छंदस्यपि दृश्यत इत्यनजादेरप्याडागमः । अत एवानवग्रहः स एव शिष्यते ॥ आददिः सर्वत्र हविरादानशीलः तथा यज्ञस्य केतुः प्रज्ञापकः केतुस्थानीयो वा अर्हणा पूजनीयः ॥ सुपां सुलुगिति सोराकारः । प्रत्ययाद्युदात्तत्वं छांदसं ॥ किंच हर्षतो हविर्भक्षणादत्यं-तहर्षयुक्तस्य यद्वाभिमतफलदानेन यजमानान्हर्षयतो हृषीवत आज्यस्वीकारेण हर्षयुक्तस्याग्नेः पंथां पंथानं मार्गं विश्वे सर्वे मनुष्या जुषंत । अप्रीणयन् असेवंत वा । किमर्थं । शुभे शुभाय शोभनाय सुखप्राप्तये । पंथानं सर्वैर्गंतव्यमैहिकामुष्मिकफलस्याग्नेरेव मार्गं सर्वेऽनुगच्छंति । अग्निमेव प्रीणयित्वा साधयंति । मार्गाश्रयणे दृष्टांतः । यथा लोके नरो मनुष्याः शुभे शोभनाय सुखप्राप्तये पंथानं सर्वैर्गंतव्यं निर्भयं प्रौढमार्गमिव ॥

द्विता यदीं कीस्तासो अभिद्यवो नमस्यंत उपवोचंत भृगवो मथ्नंतो दाशा भृगवः ।
अग्निरीशे वसूनां शुचिर्यो धर्णिरेषां ।
प्रियाँ अपिधीँर्वनिषीष्ट मेधिर आ वनिषीष्ट मेधिरः ॥ ७ ॥
द्विता । यत् । ईं । कीस्तासः । अभिऽद्यवः । नमस्यंतः । उपऽवोचंत । भृगवः ।
मथ्नंतः । दाशा । भृगवः ॥ अग्निः । ईशे । वसूनां । शुचिः । यः । धर्णिः । एषां ।
प्रियान् । अपिऽधीन् । वनिषीष्ट । मेधिरः । आ । वनिषीष्ट । मेधिरः ॥ ७ ॥

यद्यं द्विता द्वित्वमापन्नं द्विप्रकारं श्रौतस्मार्तभेदेन द्वित्वमापन्नं । यद्वा । उपलक्षणमेतत् । आहवनीयादि-रूपेण नानाविधं । यद्वा । द्विता द्विविधायैहिकामु[illegible]भयाय ॥ विभक्तेराजादेशः ॥ ईमिममग्निं

कीस्तासः कीर्तनं कुर्वंतः स्तोतारः ॥ पचाद्यचि छांदसं सत्वं ॥ अभिद्यवोऽभितो द्योतमाना नमस्यंतो नमस्कारोपलक्षितमुपस्थानं कुर्वंतो भृगवो भृगुगोत्रोत्पन्ना महर्षय उपवोचंत उपेत्य ब्रुवंति । किं कुर्वंतः । दाशा दानेन निमित्तभूतेन हविर्दानार्थं मथ्नंतोऽरण्यामग्निमंथनं कुर्वंतः तथा भृगवो भ्रष्टारो हविषां पापानां वा । किंच योऽग्निः शुचिर्दीप्तो धर्णिर्धारणकुशलोऽयमग्निरेषां दीयमानानां वसूनां हविर्लक्षणानामीशे । ईष्टे । समर्थो भवति ॥ लोपस्त आत्मनेपदेष्विति तलोपः ॥ यद्वा । एषां दृश्यमानानां मणिमुक्तादीनां वसूनामीशे । ईष्टे । समर्थो भवति प्रदातुमिति शेषः । किंचायमग्निर्मेधिरः । मेधो यज्ञः । तद्वान् स्वयं यष्टव्यत्वेन प्रधानभूतः सन् प्रियान् स्वप्रीतिहेतूनाज्यादीनपिधीन् पर्याप्तिपर्यंतं दत्तान्वनिषीष्ट । संभक्तवान् । संभजतां वा । तथा मेधिरो मेधावानसावा वनिषीष्ट । अन्यदेवताकेष्वपि यज्ञेषु स्वयमाज्यभागप्रयाजादिरूपं हविः संभजते ॥

विश्वासां त्वा विशां पतिं हवामहे सर्वासां समानं दंपतिं भुजे सत्यगिर्वाहसं भुजे ।
अतिथिं मानुषाणां पितुर्न यस्यासया ।
अमी च विश्वे अमृतास आ वयो हव्या देवेष्वा वयः ॥८॥
विश्वासां । त्वा । विशां । पतिं । हवामहे । सर्वासां । समानं । दंऽपतिं । भुजे ।
सत्यऽगिर्वाहसं । भुजे ॥ अतिथिं । मानुषाणां । पितुः । न । यस्य । आसया ।
अमी इति । च । विश्वे । अमृतासः । आ । वयः । हव्या । देवेषु । आ । वयः ॥८॥

विश्वासां सर्वासां विशां प्रजानां यजमानानां पतिमभिमतफलदानेन पालकं हवामहे । आह्वयामः । न केवलं यजमानानां किंतु सर्वासां प्रजानां समानमेकरूपं दहनपचनाद्युपकारस्य सर्वेषां समत्वात् । तथा दंपतिं गार्हपत्यादिरूपेण गृहस्य पालकं । दम इति गृहनाम दमे क्षत्तिरिति तन्नामसु पाठात् ॥ अकारलोपश्छांदसः ॥ किमर्थं । भुजे भोगाय हवामहे । आह्वयामः । पुनः स एव विशेष्यते । सत्यगिर्वाहसं यथार्थभूतानामविसंवादिफलानां स्तुतिरूपाणां गिरां वोढारं । यद्वा । गिरो मंत्ररूपा वहंतीति गिर्वाहस ऋत्विजः । सत्या अविसंवादिफला गिर्वाहसो यस्य तं तादृशं हवामह इति शेषः ॥ वहिहाधाञ्भ्य इत्यसुन् । णि[illegible]रुपधावृद्धिः ॥ पुनः कीदृशं । मानुषाणां मनुष्याणामतिथिमतिथिवत्पूज्यं दर्शादितिथिमपेक्ष्यागंतारं वा । किंच यस्याग्नेरासया समीपे । आसेत्यंतिकनाम आसांबरमिति तन्नामसु पाठात् । तत्समीपेऽमी विश्वेऽमृतासो हविर्भोक्तृत्वेन प्रसिद्धाः सर्वे देवा अप्या गच्छंति ॥ उपसर्गवशाद्योग्यक्रियाध्याहारः ॥ किमर्थं । वयो हविर्लक्षणान्नमुद्दिश्य अग्निमुखाद्देवेतरेभ्यो दीयमानत्वात् । तत्र दृष्टांतः । पितुर्न । पितुरंतिके पुत्रादयो यथान्नाद्यर्थं सेवंते तद्वत् । किंच वयो नेतार ऋत्विजोऽपि [illegible]षु मध्ये हव्या हवींष्या ददत्यग्नये ॥ वेतेरौणादिको डिः । विचि वा गुणः ॥

त्वमग्ने सहसा सहंतमः शुष्मिंतमो जायसे देवतातये रयिर्न देवतातये ।
शुष्मिंतमो हि ते मदो द्युम्निंतम उत क्रतुः ।
अध स्मा ते परि चरंत्यजर श्रुष्टीवानो नाजर ॥९॥
त्वं । अग्ने । सहसा । सहन्ऽतमः । शुष्मिन्ऽतमः । जायसे । देवऽतातये ।
रयिः । न । देवऽतातये ॥ शुष्मिन्ऽतमः । हि । ते । मदः । द्युम्निन्ऽतमः । उत । क्रतुः ।
अध । स्म । ते । परि । चरंति । अजर । श्रुष्टीऽवानः । न । अजर ॥९॥

हे अग्ने त्वं सहसा बलेन सहंतमोऽतिशयेन शत्रूणामभिभविता तथा शुष्मिंतमोऽतिशयेन तेजस्वी जायसे ॥ सहेरौणादिकः कनिन् । नाद्यस्येति नुट् ॥ किमर्थं । देवतातये देवानां विस्तारयुक्ताय यागाय तदर्थं । यत्र-

नामैतत्। यद्वा। उक्तगुणविशिष्टः स जायसे। अरण्योरुत्पद्यसे। यज्ञार्थत्वे दृष्टांतः। रयिर्न देवतातये। धनं यथा यज्ञार्थमुत्पद्यते। तथा चोक्तं यज्ञार्थं द्रव्यमुत्पन्नमिति। किंच ते तव मद आज्यस्वीकारजनितो हर्षः शुष्मिंतमोऽतिशयेन बलवान्। हिशब्दः प्रसिद्धौ। आज्येनाग्नेर्मदो भवतीति प्रसिद्धं। अपि च ते क्रतुः कर्मविशेषोऽपि द्युम्निंतमो यशोयुक्तोऽन्नयुक्तो वा खलु। द्युम्नं द्योततेर्यशो वान्नं वेति यास्कः। नि॰ ५. ५.। अधातः कारणात् अजर हे जरारहिताग्ने ते त्वां परि चरंति यजमानाः। तत्र दृष्टांतः। श्रुष्टीवानो न दूता इव। ते यथा वार्त्ताविशेषप्रदानेन राजानं सेवंते तद्वत्॥ छंदसीवनिपाविति वनिप्। छांदसं प्रत्ययाद्युदात्तत्वं॥ अजर भक्तानामजरयितः॥ अंतर्भावितण्यर्थात्पचाद्यच्॥ यद्वा। अजरास्तोतः। जरा स्तुतिः। असौ न कस्यापि स्तोता भवति किंतु सर्वैः स्वयं स्तूयते। तादृशं त्वां परि चरंतीत्यर्थः॥

प्र वो॑ म॒हे सह॑सा॒ सह॑स्वत उष॒र्बुधे॑ पशु॒षे नाग्नये॒ स्तोमो॑ बभूत्व॒ग्नये॑।
प्रति॒ यदीं॑ ह॒विष्मा॒न्विश्वा॑सु॒ क्षासु॒ जोगु॑वे।
अग्रे॑ रे॒भो न जर॑त ऋषू॒णां जूर्णि॒र्होत॑ ऋषू॒णां॥१०॥
प्र। वः। म॒हे। सह॑सा। सह॑स्वते। उ॒षः॒ऽबुधे॑। प॒शु॒ऽसे। न। अ॒ग्नये॑।
स्तोमः॑। ब॒भू॒तु॒। अ॒ग्नये॑॥ प्रति॑। यत्। ई॒म्। ह॒विष्मा॑न्। विश्वा॑सु। क्षासु॑। जोगु॑वे।
अग्रे॑। रे॒भः। न। ज॒र॒ते॒। ऋ॒षू॒णां। जूर्णिः॑। होता॑। ऋ॒षू॒णां॥१०॥

हे उद्गात्रादयः स्तोतारः वो युष्माकं संबंधि स्तोमः स्तोत्रमग्नये प्र बभूतु। प्रीणयितुं समर्थं भवतु॥ छांदसः शपः श्लुः। अत्वं चाभ्यासस्य। भूसुवोस्तिङीति गुणाभावः॥ कीदृशायाग्नये। महे महते पूज्याय सहसा पराभिभवसामर्थ्येन तद्वते उषर्बुध उषःकाले प्रबुध्यमानाय॥ अहरादीनां पत्यादिषूपसंख्यानमिति रत्वं॥ पशुषे पशुफलप्रदाय। नशब्दोऽत्रापिशब्दार्थः। यद्वा। पशुषे पशुप्रदात्रे प्रभवे यथा स्तुतिः क्रियते तद्वत्। किमर्थमिति तदुच्यते। ईमेनमग्निं प्रति लक्षीकृत्य हविष्मान् घृतादिहविर्युक्तो यजमानो विश्वासु क्षासु सर्वासु निवासभूतासु वेदिभूमिषु जोगुवे। अत्यर्थं गच्छति॥ गुवतेर्यङ्लुगंताच्छांदसो लिट्। व्यत्ययेनात्मनेपदं। अमंत्र इति पर्युदासादामभावः॥ क्षेति भूनाम क्षा क्षामेति तन्नामसु पाठात्। ऋषूणामागंतॄणां देवानां मध्ये श्रेष्ठमग्निं जूर्णिः स्तुतिकुशलो होताग्र इतरदेवेभ्यः पूर्वं जरते। स्तौति। तत्र दृष्टांतः। ऋषूणां महतां धनवतामग्रे रेभो न वंदीव॥ ऋषी गतौ। औणादिकः कुप्रत्ययः। नामन्यतरस्यामिति नाम उदात्तत्वं॥ यद्वा। ऋषूणामित्येतज्ज्ञानिनां। ऋषूणां ज्ञानवतां मध्ये श्रेष्ठोऽयं होतेत्यर्थः॥

स नो॒ नेदि॑ष्ठं॒ ददृ॑शान॒ आ भ॒राग्ने॑ दे॒वेभिः॒ सच॑नाः सुचे॒तुना॑ म॒हो रा॒यः सु॑चे॒तुना॑।
महि॑ शविष्ठ नस्कृधि सं॒चक्षे॑ भु॒जे अ॒स्यै।
महि॑ स्तो॒तृभ्यो॑ मघवन्त्सु॒वीर्यं॒ मथी॑रु॒ग्रो न शव॑सा॥११॥
सः। नः॒। नेदि॑ष्ठं। ददृ॑शानः। आ। भ॒र॒। अग्ने॑। दे॒वेभिः॑। स॒ऽच॑नाः। सु॒ऽचे॒तुना॑।
म॒हः। रा॒यः। सु॒ऽचे॒तुना॑॥ महि॑। श॒वि॒ष्ठ॒। नः॒। कृ॒धि॒। सं॒ऽचक्षे॑। भु॒जे। अ॒स्यै।
महि॑। स्तो॒तृऽभ्यः॑। म॒घ॒ऽव॒न्। सु॒ऽवीर्यं॑। मथीः॑। उ॒ग्रः। न। शव॑सा॥११॥

हे अग्ने स त्वं नो नेदिष्ठमत्यंतसमीपे ददृशानो वेद्यां ददृशानो दीप्तत्वेन दृश्यमानो देवेभिः सचना इतरैर्देवैः समानान्नः। अग्निमुखेनैवेतरेषां हविःस्वीकारात्समानान्नत्वं। सुचेतुना शोभनेन चेतनेन चेतसा वा। पुनस्तदेव विशेष्यते। सुचेतुना शोभनचेतोवता मया॥ औणादिक उः। बहुव्रीहौ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं॥ युक्तेन। त्वदायत्ते मय्यनुग्रहयुक्तेनेत्यर्थः। तादृशस्त्वं महः पूजनीयानि रायो धनान्या भर। अस्मा-

कमाहर। हे अग्ने शविष्ठ बलवन्नग्ने नोऽस्मभ्यं महि महदन्नं महतीं कीर्तिं वा कृधि। कुरु। संपादय। शविष्ठेति संबोधितत्वात्तदेव प्रार्थ्यत इति गम्यते। किमर्थं। संचक्षे सम्यग्दर्शनीयत्वाय अस्या अस्याः पृथिव्याः संबंधिने भुजे भोगाय। यद्वा। संचक्षे भुज इति सामानाधिकरण्यं। सम्यग्दर्शनीयाय भोगायेत्यर्थः। न केवलं यजमानेभ्योऽस्मभ्यमेव अपि तु स्तोतृभ्यः स्तोत्रकर्तृभ्योऽपि हे मघवन्नन्नवन्नग्ने सुवीर्यं शोभनपुत्रभृत्याद्युपेतं धनं शोभनसामर्थ्यं वा कृधि। कुरु। किंच शवसा बलेन युक्तः सन् मथीः। अस्मद्विरोधिनो नाशय॥ लुङि ह्म्यंतक्षणेति वृद्धिप्रतिषेधः। कारकपचे औणादिक ईकारः। आद्युदात्तश्छांदसः॥ यद्वा। मथीर्मथनवांस्त्वमस्मदर्थं शवसा बलेन युक्तो भवेति शेषः। तत्र दृष्टांतः। उग्रो न शवसा। यथा कश्चित् क्रूरः शवसा बलेन मथीर्भवति तद्वत्॥ ॥१३॥

अयं जायतेत्यष्टर्चं द्वितीयं सूक्तं। अयं जायताष्टावित्यनुक्रमणिका। परुच्छेप ऋषिः। सर्वमात्यष्टमित्युक्तत्वादत्यष्टिश्छंदः। आग्नेयं त्विति तुशब्दस्योक्तत्वादिदमप्याग्नेयं॥ पृष्ठ्यस्य षष्ठेऽहन्येतत्सूक्तमाज्यशस्त्रत्वेन विनियुक्तं। सूचितं च षष्ठस्येति खंडे। अयं जायत मनुषो धरीमणीत्याज्यं। आ० ८.१.। इति॥

**अयं जायत मनुषो धरीमणि होता यजिष्ठ उशिजामनु व्रतमग्निः स्वमनु व्रतं।**
**विश्वश्रुष्टिः सखीयते रयिरिव श्रवस्यते।**
**अदब्धो होता नि षददिळस्पदे परिवीत इळस्पदे॥१॥**
**अयं। जायत। मनुषः। धरीमणि। होता। यजिष्ठः। उशिजां। अनु। व्रतं।**
**अग्निः। स्वं। अनु। व्रतं॥ विश्वऽश्रुष्टिः। सखिऽयते। रयिःऽइव। श्रवस्यते।**
**अदब्धः। होता। नि। सदत्। इळः। पदे। परिऽवीतः। इळः। पदे॥१॥**

अयमग्निर्मनुषो मनुष्यस्याध्वर्योः सकाशाज्जायत। अरणिमंथनेनोत्पन्नः। कीदृशोऽयं। होता देवानामाह्वाता यजिष्ठोऽतिशयेन यष्टृतमः। किमर्थमुत्पन्न इति। उशिजां फलस्य कामयितॄणां यजमानानां व्रतं सोमयागादिरूपं कर्मानु लक्षीकृत्य। न केवलं परार्थमेव अपि त्वयमर्थः। स्वं व्रतमनु स्वकीयं हविःस्वीकारादिरूपं कर्मानुलक्ष्य। पुनः स एव विशेष्यते। विश्वश्रुष्टिर्[illegible]वान्। कस्मै। सखीयते सखित्वमात्मन इच्छते। तथा श्रवस्यतेऽतिप्रसिद्धान्नमात्मन इच्छते यजमानाय रयिरिव धनस्थानीयो भवति। धनं यथा सख्यमन्नसमृद्धिं च साधयति तद्वदयमग्निरपि तस्मै द्वयं साधयतीत्यर्थः। किंचायमग्निरिळस्पद इडाया भूम्याः पदे॥ अंत्यलोपश्छांदसः॥ धरीमणि सारभूते स्थाने वेदिरूपे। वेदिमाहुः परमंतं पृथिव्याः। तै० सं० ७.४.१८.२.। इति श्रुतेः। एतावती वै पृथिवी यावती वेदिरिति च। पुनस्तदेव विशेष्यते। इडस्पद इडादेवताया मनोः पुत्र्या गोरूपाया [illegible]तपादितायाः पदे पादन्यासप्रदेशे। इडा वै मानवी य[illegible]न्यासीत्। तै० ब्रा० १.१.४.४.। इतीडायाः पदे घृतवति स्वाहा। तै० सं० १.२.५.१.। इति च श्रुतेः। नि षदत्। निषीदति। कीदृशोऽयमग्निः। अदब्धः केनाप्यहिंसितः होता ह[illegible]कः परिवीत ऋत्विग्भिः परिधिभिर्वा परितो वेष्टितः। एवंभूतः सन् नि षदत्॥

**तं यज्ञसाधमपि वातयामस्यृतस्य पथा नमसा हविष्मता देवताता हविष्मता।**
**स न ऊर्जामुपाभृत्यया कृपा न जूर्यति।**
**यं मातरिश्वा मनवे परावतो देवं भाः परावतः॥२॥**
**तं। यज्ञऽसाधं। अपि। वातयामसि। ऋतस्य। पथा। नमसा। हविष्मता।**
**देवऽताता। हविष्मता॥ सः। नः। ऊर्जां। उपऽआभृति। अया। कृपा। न। जूर्यति।**
**यं। मातरिश्वा। मनवे। पराऽवतः। देवं। भारिति भाः। पराऽवतः॥२॥**

यज्ञसाधं यज्ञस्य साधकं ॥ साध्नोतेः क्विपि कृदुत्तरपदप्रकृतिस्वरत्वं ॥ तमग्निं वेद्यां स्थापितमपि वातयामसि । अपिः संभावनार्थः । आ परितोषं सेवामहे ॥ वात गतिसुखसेवनयोः । चौरादिकः । इदंतो मसिः ॥ केनोपायेनेति तदुच्यते । ऋतस्य पथा यागस्य मार्गेण यागानुष्ठानेन । यज्ञेन देवेभ्य इति श्रुतेर्यज्ञेन देवस्य महती प्रीतिर्भवति । यद्वा । ऋतस्य यज्ञस्य पथा । मार्गस्तीर्थाख्यः पूर्वेणोत्करमपरेण प्रणीताः । आ॰ १. १. । इत्यादिसूत्रोक्तः । तेन मार्गेण गत्वा । पुनः केन । हविष्मताज्यादिप्रदेयद्रव्यवता नमसा नमस्कारोपलक्षणेन स्तोत्रेणोपस्थानेन वा । तदुभयेनेत्यर्थः । कुत्रेति तदुच्यते । हविष्मता हविष्मत्याज्यपुरोडाशादिबहुहविर्युक्ते देवताता देवानां विस्तारयुक्ते यज्ञे । किंच सोऽग्निर्नोऽस्मत्संबंधिनामूर्जा हविर्लक्षणानामन्नानामुपाभृत्युपाहरणे तत्स्वीकारविषये ॥ उपाङुपसृष्टाद्भरतेः क्तिन् । हृग्रहोर्भ इति भत्वं । सुपां सुलुगिति सप्तम्या लुक् । तादौ चेत्यनंतरस्य गतेः प्रकृतिस्वरत्वं ॥ अया कृपानया सामर्थ्यलक्षणया कल्पनया हविःस्वीकरणरूपया न जूर्यति । यज्ञसमाप्तिपर्यंतं न नश्यति । अजरो वर्तत इत्यर्थः । स इत्युक्तं । क इत्याह । यमग्निं देवं द्योतनशीलं मातरिश्वांतरिक्षसंचारी वायुः पूर्वं मनवे मनोरर्थाय परावतोऽतिदूरं गतवत आदित्याद्वाः । अभासीत् । औचित्येन भूमौ स्थापितवानित्यर्थः । तद्वत्परावतो दूराद्देवमग्निमस्मद्देवयजनं प्रति स्थापयत्वित्यर्थः ॥

एवेन सद्यः पर्येति पार्थिवं मुहुर्गी रेतो वृषभः कनिक्रदद्दधद्रेतः कनिक्रदत् ।
शतं चक्षाणो अक्षभिर्देवो वनेषु तुर्वणिः ।
सदो दधान उपरेषु सानुष्वग्निः परेषु सानुषु ॥३॥

एवेन । सद्यः । परि । एति । पार्थिवं । मुहुःऽगीः । रेतः । वृषभः । कनिक्रदत् । दधत् । रेतः । कनिक्रदत् ॥ शतं । चक्षाणः । अक्षऽभिः । देवः । वनेषु । तुर्वणिः । सदः । दधानः । उपरेषु । सानुषु । अग्निः । परेषु । सानुषु ॥३॥

अयमग्निरेवेन गमनसाधनेन गमनेन वा सद्योऽस्मदाह्वानानंतरं पार्थिवं पृथिवीसंबंधि स्थानं वेदिलक्षणमेव परि परितः । यद्वा । अनर्थक आभिमुख्यार्थो वा परि । एति । गच्छति । कीदृशोऽग्निः । मुहुर्गीः सर्वदा गीयमानः । रेतःशब्देन तत्कार्यं हवीरूपमन्नमुच्यते । तद्वान् ॥ मत्वर्थीयो लुप्यते ॥ वृषभः कामानां वर्षिता कनिक्रदत् शब्दयन् पर्येति । पुनः स एव विशेष्यते । रेतो दधदाज्यादिस्वीकारेणात्यधिकं सामर्थ्यं दधानः कनिक्रदत् शब्दयन् पर्येतीति शेषः । पुनः स एव विशेष्यते । अयमग्निर्देवो वनेषु संभजनेषु स्तोत्रेषु निमित्तभूतेष्वक्षभिरक्षस्थानीयाभिर्ज्वालाभिः शतं चक्षाणः सर्वतः प्रकाशमानः । यद्वा । ज्वालोत्कर्षेण यजमानेन कृतं शतगुणितं प्रख्यापयन् । तथा तुर्वणिः शीघ्रगंता शत्रूणां हिंसको वा । तुर्वणिस्तूर्णवनिरिति यास्कः । नि॰ ६. १४ । किंच सानुषु समुच्छ्रितेषु । सानु समुच्छ्रितं भवतीति यास्कः । नि॰ २. २४. । तेषूपरेषु । उपरमंत एष्वमय इत्युपरा धिष्ण्या यजमानगृहा वा । तेषु सदो दधानः स्थानं धारयमाणोऽग्निः सद्यः पर्येतीति पूर्वत्रान्वयः । किमर्थं । परेषूत्कृष्टेषु सानुषु समुच्छ्रितेषु कर्मसु हविःषु वा निमित्तभूतेषु ॥

स सुक्रतुः पुरोहितो दमेदमेऽग्निर्यज्ञस्याध्वरस्य चेतति क्रत्वा यज्ञस्य चेतति ।
क्रत्वा वेधा इषूयते विश्वा जातानि पस्पशे ।
यतो घृतश्रीरतिथिरजायत वह्निर्वेधा अजायत ॥४॥

सः । सुऽक्रतुः । पुरःऽहितः । दमेऽदमे । अग्निः । यज्ञस्य । अध्वरस्य । चेतति । क्रत्वा । यज्ञस्य । चेतति ॥ क्रत्वा । वेधाः । इषुऽयते । विश्वा । जातानि । पस्पशे । यतः । घृतऽश्रीः । अतिथिः । अजायत । वह्निः । वेधाः । अजायत ॥४॥

सोऽग्निः सुक्रतुः शोभनकर्मा पुरोहितः पुरो धार्यमाणः। यद्वा। पुरोहितवद्यागनिर्वाहकः सन्। दमे दमे तत्तद्यजमानगृहे सर्वेषु देवयजनेषु वाध्वरस्य नाशरहितस्य फलप्रदस्य यज्ञस्य तदर्थं चेतति। जानाति। प्रबुध्यत इत्यर्थः। किंचायं यजमानोऽपि क्रत्वा शोभनेन कर्मणा यज्ञस्य चेतति। कर्तव्यतामवजानाति। किंचायमग्निरपि क्रत्वा प्रकृष्टेन कर्मणा वेधा विविधानां फलानां कर्ता सन्निषूयते। इष्यत इतीषुरन्नमागमनं वा। तदिच्छति यजमानार्थं विश्वा जातानि सर्वाणि संपादितानि हविरादीनि पस्पशे। अत्यर्थं स्पृशति। स्वीकरोति। यतोऽयं घृतश्रीर्घृतं सेवमानोऽतिथिरतिथिवत्पूज्यश्चाजायत उत्पन्नः। यतः कारणात् घृतमत्यर्थं सेवमानः प्रवृद्धोऽभवत् अतः पस्पश इत्यर्थः। एवमग्नौ प्रवृद्धे सति यजमानोऽपि वह्निर्हविषां वोढा वेधा विविधस्य फलस्य कर्तोत्पादयिताजायत। समर्थोऽभवत्॥

क्रत्वा यद॑स्य तवि॑षीषु पृं॒चते॑ऽग्नेर॑वे॑ण म॒रुतां॒ न भो॒ज्ये॑षि॒राय॒ न भो॒ज्या॑।
स हि ष्मा॒ दान॒मिन्व॑ति॒ वसू॑नां च म॒ज्मना॑।
स न॑स्त्रासते दुरि॒ताद॑भि॒ह्रुतः॒ शंसा॑द॒घाद॑भि॒ह्रुतः॑ ॥५॥

क्रत्वा॑। यत्। अ॒स्य॒। तवि॑षीषु। पृं॒चते॑। अ॒ग्नेः। अवे॑न। म॒रुता॑म्। न। भो॒ज्या॑। इ॒षि॒राय॑। न। भो॒ज्या॑॥ सः। हि। स्म॒। दान॑म्। इ॒न्वति॑। वसू॑नाम्। च॒। म॒ज्मना॑। सः। नः॒। त्रा॒स॒ते॒। दुः॒ऽइ॒तात्। अ॒भि॒ऽह्रुतः॑। शंसा॑त्। अ॒घात्। अ॒भि॒ऽह्रुतः॑ ॥५॥

यद्यस्मात्कारणात्सर्वे यजमानाः क्रत्वा प्रकृष्टेन कर्मणा हविष्प्रदानादिरूपेणास्याग्नेस्तविषीषु प्रबलासु ज्वालास्ववेन तृप्तिनिमित्तेन भोज्या भक्ष्याणि पुरोडाशादीनि पृंचते मिश्रयंति। तविषीति बलनाम तविषी शुष्ममिति तन्नामसु पाठात्। तत्र दृष्टांतः। मरुतां न भोज्या वायूनां संबंधीनि व्रीह्याद्यन्नानीव। वायुषु मेघं निर्भिद्य वृष्टिं जनयत्सु सत्सु सस्यादिद्वारा व्रीह्यादिभोज्यानि यथा पृंचते तथेत्यर्थः। दाने दृष्टांतः। इषिराय न भोज्या। एषणयुक्ताय याचमानायार्थिने भोज्या भोग्यानि भक्ष्यादीनि यथा दीयंते तद्वत्। इषिरशब्दो यास्केनैवं निरुक्तः। ईषणेन वैषणेन वा। नि० ४. ७.। इति। अतः कारणात् स खलु यजमानो दानमिन्वति। हविष्प्रदानं तस्मै व्याप्नोति। यद्वा। स्वयमभिमतं दानमिन्वति। इन्वतिर्व्याप्तिकर्मा इन्वति ननक्षेति तत्कर्मसु पाठात्। केन सामर्थ्येनेति। वसूनां च मज्मना निवासयोग्यानां धनानामग्निना लब्धानां बलेनैव। यद्वा। सोऽग्निर्वसूनां हविर्निवासयोग्यानां ज्वालारूपाणां धनानां मज्मना बलेन दानमिन्वतीति शेषः। किंच सोऽग्निरभिह्रुत आभिमुख्येन पापैः ह्रियमाणान् नोऽस्मान् दुरितात्पापात् त्रासते। त्रायते। तथा शंसाद्-तिप्रभूतत्वेन शंसनीयात् यद्वा हिंसकात् अभिह्रुतोऽभितो ह्रियमाणादघाद्दुःखात् तत्कारणात्पापाद्वा त्रासते। त्रायते॥ ॥१४॥

विश्वो॒ विहा॑या अर॒तिर्वसु॑र्दधे॒ हस्ते॑ द॒क्षिणे॑ त॒रणि॒र्न शि॑श्रथच्छ्रव॒स्यया॒ न शि॑श्रथत्।
[illegible] इदि॑षुध्यते दे॒व॒त्रा ह॒व्यमोहि॑षे।
विश्व॑स्मा॒ इत्सु॒कृते॒ वार॑मृण्व॒त्य॑ग्निर्द्वारा॒ व्यृ॑ण्वति ॥६॥

विश्वः॑। वि॒ऽहा॑याः। अ॒र॒तिः। वसुः॑। द॒धे॒। हस्ते॑। द॒क्षिणे॑। त॒रणिः॑। न। शि॒श्र॒थ॒त्। श्र॒व॒स्यया॑। न। शि॒श्र॒थ॒त्॥ विश्व॑स्मै। इत्। इ॒षु॒ध्य॒ते॒। दे॒व॒ऽत्रा। ह॒व्यम्। आ। ऊ॒हि॒षे॒। विश्व॑स्मै। इत्। सु॒ऽकृते॑। वार॑म्। ऋ॒ण्व॒ति॒। अ॒ग्निः। द्वारा॑। वि। ऋ॒ण्व॒ति॒ ॥६॥

अयमग्निर्दक्षिणेऽभिमतं प्रदातुमुत्साहयुक्ते हस्ते वामेतरे यजमानाय दातव्यं धनं दधे। धारयति। कीदृशोऽयं। विश्वः सर्वैर्गंतव्यः यद्वा विश्वात्मकः विहाया महान्। विहाया इति महन्नाम विहाया यह्व इति

तन्नामसु पाठात्। अरतिरीश्वरोऽरममाणो वाप्रीतिः ॥ अत्र वहिवस्यर्तिभ्यश्चिदित्यतिप्रत्ययः। चित्वात्स्वरेणांतोदात्तः ॥ धृत्वा च शिश्रथत्। धृतं हस्तं यजमानार्थं श्रथयति। ददाति ॥ श्रथयतेर्लुङि चङि रूपं ॥ तत्र दृष्टांतः। तरणिर्न तरणिरिव तारकः सूर्य इव। स यथा स्वोपासकायाभिमतं हस्ते धृत्वा वितरति तद्वत्। यद्वा। तरणिः सर्वस्य तारको न शिश्रथत्। यजमानं न श्रथयति न मुंचति। किंच अवस्यया न शिश्रथत्। हवीरूपान्नेच्छयैव न शिश्रथत्। न विमुंचति। अयमनुग्रहेणैव पालयति हविःस्वीकारस्तु व्यपदेशमात्रेणेति भावः। इदानीं प्रत्यक्षकृतः। हे अग्ने देववा देवेषु मध्येऽतिशयेन त्वं विश्वस्मै सर्वस्मा इषुध्यते हविरात्मन इच्छत इंद्रादये ॥ इषुध्यतिः कंड्वादिः ॥ हव्यं तत्तद्देवतामुद्दिश्य प्रत्तं पुरोडाशादिकमोहिषे। सर्वतो वहसि ॥ वहेर्लेटि यजादित्वात्संप्रसारणं ॥ किंचायमग्निर्विश्वस्मै सुकृते शोभनयज्ञकर्त्रे यजमानाय वारं सर्वैर्वरणीयं क्षुदादिनिवारकं वान्नादिकमृण्वति। गच्छति। करोतीत्यर्थः। किंचायमग्निर्द्वारा स्वर्गाद्यभिमतद्वाराणि व्यृण्वति। विवृणोति। प्रतिबंधकपापापनयनद्वाराभिमतानि साधयतीत्यर्थः ॥ ऋण्वतिर्गतिकर्मा। यद्वा। रिविर्गत्यर्थः। इदित्वान्नुम्। छांदसं रेफस्य संप्रसारणं ॥

स मानु॑षे वृ॒जने॒ शंत॑मो हि॒तो॒३॑ऽग्निर्य॒ज्ञेषु॒ जेन्यो॒ न वि॒श्पतिः॑ प्रि॒यो य॒ज्ञेषु॑ वि॒श्पतिः॑।
स ह॒व्या मानु॑षाणामि॒ळा कृ॒तानि॑ पत्यते।
स न॑स्त्रासते॒ वरु॑णस्य धू॒र्तेर्म॒हो दे॒वस्य॑ धू॒र्तेः ॥७॥
सः। मानु॑षे। वृ॒जने॑। शंऽत॑मः। हि॒तः। अ॒ग्निः। य॒ज्ञेषु॑। जेन्यः॑। न। वि॒श्पतिः॑। प्रि॒यः। य॒ज्ञेषु॑। वि॒श्पतिः॑ ॥ सः। ह॒व्या। मानु॑षाणां। इ॒ळा। कृ॒तानि॑। प॒त्य॒ते॒। सः। नः॒। त्रा॒स॒ते॒। वरु॑णस्य। धू॒र्तेः। म॒हः। दे॒वस्य॑। धू॒र्तेः ॥७॥

सोऽग्निर्मानुषे मनुष्यस्य यजमानस्य संबंधिनि वृजने वर्जनीये पापे निमित्तभूते सति यज्ञेषु निमित्तेषु शंतमोऽत्यंतं सुखतमः अरिष्टस्य निवारकत्वात् अत एव हितः स्वर्गाद्यभिमतसाधकत्वात्। किंचायं यज्ञेषु विश्पतिर्ऋत्विग्रूपाणां [illegible]तिशयेन पालकः ॥ पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरे प्राप्ते परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं ॥ अत एव प्रियश्च भवति। तत्र दृष्टांतः। जेन्यो न विश्पतिर्जयशीलो राजेव। स यथा परसेनाद्युपद्रवपरिहारेण सम्यक्परिपालनेन च प्रजानां प्रियो भवति। किंचायमग्निर्मानुषाणां मनुष्याणां यजमानानां संबंधीनि हव्या हवींषीळा कृतानीळायां वेद्यां कृतानि संपादितान्युद्दिश्य पत्यते। पतति। आगच्छति। किंच सोऽग्निर्नोऽस्मान्यजमानान्वरुणस्य वारकस्य धूर्तेर्हिंसकस्य भयात्त्रासते। त्रायते। यद्वा। धूर्तेरिति पंचमी। वरुणस्य पापदेवस्य धूर्तेर्हिंसकात्। किंच महो महतो देवस्य धूर्तेर्हिं[illegible]। पालयति। [illegible]तीति प्रसिद्धं। यद्वा। एकमेव वाक्यं। धूर्तेर्हिंसकस्य महो महतो वरुणस्य देवस्य वरुणाख्यायाः पापदेवताया धूर्तेर्हिंसातो नोऽस्मान् सोऽग्निस्त्रासते। त्रायते ॥

अ॒ग्निं होता॑रमीळते॒ वसु॑धितिं प्रि॒यं चेति॑ष्ठमर॒तिं न्ये॑रिरे हव्य॒वाहं॒ न्ये॑रिरे।
वि॒श्वायुं॑ वि॒श्ववे॑दसं॒ होता॑रं यज॒तं क॒विं।
दे॒वासो॑ र॒ण्वमव॑से वसू॒यवो॑ गी॒र्भी र॒ण्वं व॑सू॒यवः॑ ॥८॥
अ॒ग्निं। होता॑रं। ई॒ळ॒ते॒। वसु॑ऽधितिं। प्रि॒यं। चेति॑ष्ठं। अ॒र॒तिं। नि। ए॒रि॒रे॒। ह॒व्य॒ऽवाहं॑। नि। ए॒रि॒रे॒ ॥ वि॒श्वऽआ॑युं। वि॒श्वऽवे॑दसं। होता॑रं। य॒ज॒तं। क॒विं। दे॒वासः॑। र॒ण्वं। अव॑से। व॒सु॒ऽयवः॑। गीः॒ऽभिः। र॒ण्वं। व॒सु॒ऽयवः॑ ॥८॥

अमुमग्निं हो[illegible] होमनिष्पादकं वेळते। ऋत्विजः स्तुवंति। तथा वसुधितिं धनस्य धारयि-

तारं दातारं वा अत एव प्रियं सर्वेषां प्रियतमं चेतिष्ठमतिशयेन यजमानानां चेतयितारं यद्वा प्रकृष्टचेतनवंतं ॥ चेतृशब्दात्तुश्छंदसीतीष्ठन्। तुरिष्ठेमेयःस्विति तृलोपः ॥ अरतिमीश्वरं तादृशं देवं न्येरिरे। नितरां प्राप्ताः। प्राप्तिरेव विशेष्यते। हव्यवाहं न्येरिरे। निःशेषेण प्राप्ताः। इतरदेवेभ्यो हव्यं वोढुं यथा प्रभवति तथा नितरां प्राप्ताः। पुनः कीदृशं। विश्वायुं सर्वत्र प्राणिजीवनं विश्ववेदसं सर्वप्रज्ञं होतारं देवानामाह्वातारं यजतं यजनीयं कविं सर्वज्ञं ॥ ईर प्रेरणे ईर गतावित्यन्यतमस्य लिटि रूपं ॥ किंच देवासो देवनशीला ऋत्विजो रण्वमतिप्रवृद्धा शब्दयंतमवसेऽस्य रक्षणाय वसूयवो वसुकामाः संतः। पुनः कीदृशाः। गीर्भिः स्तुतिभी रण्वं रणयंतं रमणीयं वा वसूयवो वसु हवीरूपमन्नममये प्रदातुमात्मन इच्छंतो न्येरिरे। प्रीतो यथा धनं प्रयच्छति तथा हविरादिना प्राप्ता इत्यर्थः ॥ ॥१५॥

यं त्वं रथमित्येकादशर्चं तृतीयं सूक्तं पारुच्छेपं सर्वमात्यष्टाभत्युत्तरा त्वष्टिरिंद्रस्कं। अनुक्तत्वादैंद्रं। प्रप्रा वो अस्मे इत्यादिके द्वे अतिशक्वर्यौ षष्ठ्यक्षरोपेतत्वात्। पाहि न इत्यंत्याष्टिः चतुःषष्ठ्यक्षरोपेतत्वात्। प्र तद्वोचेयमिति षष्ठींदुदेवत्या। तथा चानुक्रमणिका। यं त्वमेकादश षष्ठ्यैंदवी प्रप्रा वोऽतिशक्वर्यावष्टिरंत्येति ॥ दशरात्रस्य षष्ठेऽहनि मरुत्वतीये शस्त्र एतत्सूक्तं षष्ठस्येति खंडे सूत्रितं। यं त्वं रथमिंद्र स यो वृषा। आ० ८. १.। इति ॥

यं त्वं रथमिंद्र मेधसातयेऽपाका संतमिषिर प्रणयसि प्रानवद्य नयसि।
सद्यश्चित्तमभिष्टये करो वशश्च वाजिनं।
सास्माकमनवद्य तूतुजान वेधसामिमां वाचं न वेधसां ॥१॥
यं। त्वं। रथं। इंद्र। मेधऽसातये। अपाका। संतं। इषिर। प्रऽनयसि।
प्र। अनवद्य। नयसि ॥ सद्यः। चित्। तं। अभिष्टये। करः। वशः। च। वाजिनं।
सः। अस्माकं। अनवद्य। तूतुजान। वेधसां। इमां। वाचं। न। वेधसां ॥१॥

हे इंद्रेषिर यज्ञगमनशील त्वं मेधसातये यज्ञस्य दानाय लाभाय वा यं यजमानं प्रति रथं प्रणयसि प्रापयसि ॥ द्विकर्मकोऽयं ॥ कीदृशं यजमानं। अपाकापाकमनल्पप्रज्ञयाधिकारवंतं। पाकः पक्तव्यो भवतीति यास्कः। नि० ३.१२.। अत एव संतं पंडितं संतं। किंच हे अनवद्यानिंदित यं यजमानं धनविद्यादिना प्रणयसि प्रकृष्टं नयसि। तं यजमानं सद्यश्चित् तदानीमेव तदनुग्रहकाल एवाभिष्टय आभिमुख्येन यागायाभिमतप्राप्तये वा ॥ अभिपूर्वादिषेः क्तिन्। शकंध्वादित्वात्पररूपत्वं। गतिरनंतर इति गतेः प्रकृतिस्वरत्वं ॥ करः। समर्थं करोषि ॥ लेटि व्यत्ययेन शप् ॥ एवं कृत्वा च वाजिनं हविर्लक्षणमन्नं तद्वंतं वा वशः। कामयसे च ॥ वष्टेर्लेट्यडागमः। तिङः परत्वादनिघातः ॥ यजमानेनाहूतः सन् शीघ्रमेवागत्य हविः स्वीकृत्य यागं साधु निर्वर्त्य तं चाभिमतफलेन संयोज्य पुनर्हविः स्वीकरोषीत्यर्थः। हे इंद्रानवद्यानिंदित सर्वैः स्तूयमान तूतुजानास्माननुग्रहीतुं त्वरमाण ॥ तुजेः प्रेरणार्थाल्लिटः कानच्। तुजादीनां दीर्घोऽभ्यासस्येत्यभ्यासस्य दीर्घत्वं ॥ स त्वं ॥ सोऽचि लोपे चेदिति संहितायां सोर्लोपः ॥ वेधसां विविधफलकर्तॄणां मध्ये श्रेष्ठतया वेधसां मेधाविनामस्माकं संबंधि हविः स्वीकुर्वित्यर्थः। तत्र दृष्टांतः। इमां वाचं नास्मदीयां स्तुतिरूपां वाचमिव। स्तुतिं यथा स्वीकरोषि तथा हविरपीत्यर्थः ॥

स श्रुधि यः स्मा पृतनासु कासु चिद्दक्षाय्य इंद्र भरहूतये नृभिरसि प्रतूर्तये नृभिः।
यः शूरैः स्वः सनिता यो विप्रैर्वाजं तरुता।
तमीशानास इरधंत वाजिनं पृक्षमत्यं न वाजिनं ॥२॥

सः। श्रुधि। यः। स्म। पृतनासु। कासु। चित्। दक्षाय्यः। इंद्र। भरऽहूतये। नृऽभिः। असि। प्रऽतूर्तये। नृऽभिः॥ यः। शूरैः। स्वरिति स्वः। सनिता। यः। विप्रैः। वाजं। तरुता। तं। ईशानासः। इरधंत। वाजिनं। पृक्षं। अत्यं। न। वाजिनं ॥२॥

हे इंद्र स वक्ष्यमाणगुणविशिष्टस्त्वं श्रुधि। अस्मदाह्वानं स्तोत्रं वा शृणु॥ हेर्धिभावः॥ यः स्म यः खलु त्वं नृभिर्मनुष्यैरेव सद्भिः पश्चाद्देवत्वमापन्नैर्मरुद्भिः। पुनस्त एव विशेष्यंते। नृभिः संग्रामनयनशीलैः। इंद्रस्य मरुतां साहाय्यमिंद्रो मरुद्भिः। तै॰ सं॰ ६.५.५.१.। मरुतो हैनं नाजहुः। ऐ॰ ब्रा॰ ३.२०.। इत्यादिषु प्रसिद्धं। तैः सहितः सन् कासु चित्पृतनासु सर्वासु प्रौढिष्वपि संग्रामेषु भरहूतये भरणविशिष्टाह्वानयुक्ताय प्रतूर्तये प्रकृष्टहिंसनाय। यद्वा। भरहूतये शूरो भव प्रहरेत्येवमादिभरणयुक्ताह्वानाय प्रतूर्तये च शूराणां प्रकृष्टवधाय च। दक्षाय्योऽसि प्रवर्धनशीलोऽसि। यद्वा। नृभिर्नेतृभिर्यजमानैः प्रार्थितः सन् प्रतूर्तये शत्रूणां पापानां वा प्रकृष्टहिंसनाय दक्षाय्योऽसि समर्थोऽसि। किंच यस्त्वं शूरैः शौर्योपेतैर्मरुद्भिरन्यैर्भटैर्वा सहितः सन् स्वः स्वयमेव सनिता संग्रामभयस्यान्यस्य वा मनीषितस्य सनिता संभक्तासि। सत्यपि तेषां साहित्येऽन्यनैरपेक्ष्येणैव तरुतासीत्यर्थः॥ तरतेस्तृनि ग्रसितस्कभितेत्यादौ निपात्यते॥ यश्च त्वं विप्रैर्मेधाविभिर्ऋत्विग्भिः स्तुतः सन् वाजं तरुता तेभ्योऽन्नस्य दातासि। विप्रैर्मरुद्भिः सहित इति संबंधः। तं तादृशं वाजिनं गमनवंतं पृक्षं हविर्लक्षणान्नवंतमिंद्रमीशानासः सम्यगभ्यर्थयितुं समर्था ऋत्विज इरधंत। संराधंति। सेवंते। तत्र दृष्टांतः। वाजिनं वेजनवंतं गमनवंतं पृक्षं घासाद्यन्नवंतमत्यं नाश्वमिव। तं यथा समर्थाः स्वादु[illegible]ना पोषयंति तद्वत्। अत्य इत्यश्वनाम अत्यो हय इति तन्नामसु पठितत्वात्॥

दस्मो हि ष्मा वृषणं पिन्वसि त्वचं कं चिद्यावीररुं शूर मर्त्यं परिवृणक्षि मर्त्यं।
इंद्रोत तुभ्यं तद्दिवे तद्रुद्राय स्वयशसे।
मित्राय वोचं वरुणाय सप्रथः सुमृळीकाय सप्रथः ॥३॥

दस्मः। हि। स्म। वृषणं। पिन्वसि। त्वचं। कं। चित्। यावीः। अररुं। शूर। मर्त्यं। परिऽवृणक्षि। मर्त्यं॥ इंद्र। उत। तुभ्यं। तत्। दिवे। तत्। रुद्राय। स्वऽयशसे। मित्राय। वोचं। वरुणाय। सऽप्रथः। सुऽमृळीकाय। सऽप्रथः ॥३॥

हे इंद्र त्वं दस्मो हि। शत्रूणामुपक्षपणकर्ता खलु। अत एव कारणाद्वृषणं स्वतो वर्षणशीलं त्वचं संवरणवंतं पुटबंधनवदुदकवेष्टनवंतं कं चिज्जलधारिणं मेघं पिन्वसि। निर्भिद्य सेचयसि। किंच मर्त्यं मर्त्यवदररुं मरणशीलं गमनस्वभावं कंचिन्मेघं हे शूर विक्रांत यावीः। मिश्रयसि॥ यौतेश्छांदसे लुङि छांदसोऽडभावः॥ अवर्षणेन गच्छंतं बलान्निगृह्य वर्षयसीत्यर्थः। यथा शूरः कश्चिद्बलवंतं गच्छंतं वैरिणं निगृह्य स्वीकरोति तद्वदित्यर्थः। तथा मर्त्यं मरणशीलं शीर्यमाणस्वभावं निरुदकं कंचिन्मेघं परिवृणक्षि। सर्वतो वर्जयसि। औदासीन्यं करोषीत्यर्थः। हे इंद्र तत्तादृशं कर्म वर्षणरूपं सप्रथः सर्वतः पृथु यथा भवति तथा तुभ्यं वोचं। ब्रवीमि। इंद्र एव विशेष्यते। स्वयशसे स्वकीययशोयुक्ताय। तथा दिव उत त्वदाश्रयभूतायै द्युलोकदेवताया अपि तत्तादृशं कर्म वोचं। ब्रवीमि। उतशब्दोऽपिशब्दार्थः। वर्षणकर्मणो द्युदेवताया आनुकूल्यात्तस्या अपि वचनं युक्तं। तथा रुद्राय जगतां दुःखद्रावयित्रे रोदनशीलाय वाग्नये तद्वोचं। रुद्रो वै क्रूरो यदयमग्निरिति श्रुते रुद्रत्वं। सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं। तै॰ सं॰ १.५.१.१.। इति श्रुते रोदनस्वभावत्वं प्रसिद्धं। तस्य चाहुतिद्वारा वृष्ट्यनुकूलत्वात्तस्यापि कथनं युक्तं। स्वयशस इत्यस्य रुद्रायेत्यनेन वा संबंधः संनिहितत्वाद्बोध्यत्वा-। स्वकीययशोयुक्तायाग्नय इत्यर्थः। तथा मित्रायाहरभिमानिदेवतायै तद्वोचं। वरुणाय रात्र्यभिमानिदेवतायै तद्वोचं। अहोरात्रे वै मित्रावरुणौ। तां॰ २५.१०.१०.। अहोरात्राभ्यां खलु वै पर्जन्यो वर्षति। तै॰ सं॰ २.१.७.३.। इति तथा मैत्रं वा अहर्वारुणी रात्रिरित्यादिश्रुतिभ्यो मित्रावरुणयोरहोरात्रा-

भिमानिदेवत्वं। अत एव श्रुतेर्वृष्टिप्रदातृत्वात्ताभ्यामपि प्रथनं युक्तं। सुमृळीकाय शोभनसुखयित्रे प्रजानां। एतत्सर्वत्र संबध्यते। उक्तेभ्यो देवेभ्यः सप्रथः सर्वतः पृथ्वतिविस्तीर्णं यथा भवति तथा तद्वर्षणकर्म ब्रवीमि ॥

अस्माकं व इंद्रमुश्मसीष्टये सखायं विश्वायुं प्रासहं युजं वाजेषु प्रासहं युजं।
अस्माकं ब्रह्मोतयेऽवा पृत्सुषु कासु चित्।
नहि त्वा शत्रुः स्तरते स्तृणोषि यं विश्वं शत्रुं स्तृणोषि यं ॥४॥

अस्माकं। वः। इंद्रं। उश्मसि। इष्टये। सखायं। विश्वऽआयुं। प्रऽसहं। युजं। वाजेषु। प्रऽसहं। युजं ॥ अस्माकं। ब्रह्म। ऊतये। अव। पृत्सुषु। कासु। चित्। नहि। त्वा। शत्रुः। स्तरते। स्तृणोषि। यं। विश्वं। शत्रुं। स्तृणोषि। यं ॥४॥

हे ऋत्विजः अस्माकमस्मदर्थं वो युष्मदर्थं चेष्टये यागायाभिमतैषणाय वेंद्रमुश्मसि। अभिमतं कामयामहे ॥ वश कांतौ। आदादिकः। इदंतो मसिः। ग्रहिज्येत्यादिना संप्रसारणं ॥ यद्वा। अस्माकं सखायमिति संबंधः। कीदृशमिंद्रं। सखायं सखिवदत्यंतहितकारिणं समानख्यानं वा विश्वायुं विश्वेषां यागानां गंतारं प्रासहं प्रकर्षेण शत्रूणां मर्षयितारं ॥ सहेः क्विप्। नहिवृतीत्यादिनोपसर्गस्य दीर्घः ॥ युजं सर्वदा युक्तं। सहायभूतमित्यर्थः। पुनः स एव विशेष्यते। वाजेषु हवीरूपान्नेषु तद्वत्सु यज्ञेषु वा निमित्तभूतेषु प्रासहं यज्ञविघातिनः सहमानं युजमभिमतफलैर्युक्तं मरुद्भिर्वा। किंच हे इंद्र अस्माकमूतये रक्षणाय ब्रह्म परिवृढं कर्माव। रक्ष। कस्तत्र विशेष इति तत्राह। कासु चित् पृत्सु संग्रामेषु। पृत्सु समत्स्विति संग्राममनामसु पाठात्तन्नामत्वं। तेषु त्वा त्वां नहि स्तरते न हिनस्ति न विरोधमाचरति यं स्तृणोषि। यं विश्वं शत्रुं स्तृणोषि वारयसि स कश्चिदपि शत्रुर्न हिनस्ति। तव महत्त्वेन सर्वे भीता विधेया भवंति शत्रुभावं न कोऽप्याचरति। अजातशत्रुत्वादित्यर्थः ॥

नि षू नमातिमतिं कयस्य चित्तेजिष्ठाभिररणिभिर्नोतिभिरुग्राभिरुग्रोतिभिः।
नेषि णो यथा पुरानेनाः शूर मन्यसे।
विश्वानि पूरोरप पर्षि वह्निरासा वह्निर्नो अच्छ ॥५॥

नि। सु। नम। अतिऽमतिं। कयस्य। चित्। तेजिष्ठाभिः। अरणिऽभिः। न। ऊतिऽभिः। उग्राभिः। उग्र। ऊतिऽभिः ॥ नेषि। नः। यथा। पुरा। अनेनाः। शूर। मन्यसे। विश्वानि। पूरोः। अप। पर्षि। वह्निः। आसा। वह्निः। नः। अच्छ ॥५॥

हे इंद्र कयस्य कस्य चित् त्वद्भक्तस्य यजमानस्यातिमतिमतिक्रांतमननं विरुद्धमनस्कं शत्रुं नि षू नम। नितरां सुष्ठु नामय। अस्मत्प्रणतं कुरु ॥ अंतर्भावितण्यर्थोऽयं ॥ हे उग्रोद्गूर्णबल ऊतिभी रक्षणैः प्रीतिभिर्वा युक्तः सन् तेजिष्ठाभिररणिभिर्नातिशयेन तेजस्विभिर्युद्धादिरूपैर्मार्गैरिव ॥ तेजस्वच्छब्दादातिशायनिक इष्ठन्। विन्मतोर्लुक्। टेरिति टिलोपः ॥ अतिमतिं वृत्रादिं यथा नामितवान् तथास्मद्विरोधिनमपीत्यर्थः। यद्वा। उत्तरत्रान्वयः। तेजिष्ठाभिररणिभिर्न तेजोयुक्तैर्गमनसाधनैर्यज्ञादिमार्गैर्यथास्मान्योजितवानसि तथोग्राभिः प्रकाशिकाभिरूतिभी रक्षणैर्यागफलभूतैर्नोऽस्मान् नेषि। नयसि। अभिमतस्वर्गादिफलं प्रापयसीत्यर्थः ॥ नयतेश्छांदसः शपो लुक् ॥ तत्र दृष्टांतः। पुरा पूर्वस्मिन्कालेऽस्मत्पित्रादीन्यथोतिभिर्नीतवानसि। तथा नेषीत्यर्थः। हे शूर विक्रांत त्वमनेना मन्यसे। सर्वैरपापत्वेनावबुध्यसे। स्वर्गाद्यभिमतसाधकत्वादिति भावः। यद्वा। अनेनास्त्वमस्मानप्यनेनसो मन्यसे। किंच हे इंद्र वह्निर्वृष्ट्यादिप्रदानेन जगतां निर्वाहकः सन् पूरोर्मनुष्यस्य [illegible]। पूरुरिति मनुष्यनाम पूरवो जगत इति तन्नामसु पाठात्। तस्य विश्वानि सर्वाण्येनां-

त्वम् पर्षि। अपहृत्य पालयसि॥ पृणातेश्छांदसः शपो लुक्॥ अतो नोऽस्माकमप्यासांतिके देवयजनदेशेऽच्छा-
भिमुख्येनागत्य वह्निरभिमतानां वोढा सन्नपानमभिमतमपहृत्य पर्षि। अभिमतफलं पूरयसि॥ ॥१६॥

प्र तद्वोचेयं भव्यायेंदवे हव्यो न य इषवान्मन्म रेजति रक्षोहा मन्म रेजति।
स्वयं सो अस्मदा निदो वधैरजेत दुर्मतिं।
अव स्रवेदघशंसोऽवतरमव क्षुद्रमिव स्रवेत्॥६॥
प्र। तत्। वोचेयं। भव्याय। इंदवे। हव्यः। न। यः। इषऽवान्। मन्म। रेजति।
रक्षःऽहा। मन्म। रेजति॥ स्वयं। सः। अस्मत्। आ। निदः। वधैः। अजेत। दुःऽमतिं।
अव। स्रवेत्। अघऽशंसः। अवऽतरं। अव। क्षुद्रंऽइव। स्रवेत्॥६॥

भव्याय भवनशीलाय प्रतिदिनं कलाभिवृद्ध्या वर्धनशीलायेंदवेऽमृतेन सर्वस्य क्लेदयित्रे तदर्थं तद्वक्ष्यमाणं कर्म स्तोत्रं वा प्र वोचेयं। प्रकर्षेण वक्तुं शक्तो भूयासं। स्तुतेरतिमहत्त्वादिति भावः॥ वचेर्लिङ्याशिष्यङ्। वच उम्॥ कस्य तदिति। य इंदुरिषवानिषणवान् मन्म मननीयं स्तोत्रं कर्म वोद्दिश्य रेजति गच्छति। रेजति-र्गत्यर्थः रेजति दृप्यतीति तन्नामसु पाठात्। आगमने दृष्टांतः। हव्यो न होतव्य आह्वातव्यो वा हव्य इंद्र इव। प्रायेणेंद्र आगच्छेत्यादिनेंद्र एवाह्वयते। स इव। स एव विशेष्यते। रक्षोहा यज्ञविघातकानां रक्षसां हंता मन्म तेषामेव कर्म हननादिरूपं रेजति गच्छति। चालयति नाशयतीत्यर्थः। स एवेंदुः स्वयं निदः॥ णिदि कुत्सायां। क्विप्। साविकाच इति विभक्तिरुदात्तता॥ अस्मन्निंदितुर्वैरिणो वधैर्हननोपायैः॥ हनश्च वध इति भावेऽप् तत्संनियोगेन वधादेशः। स चादंतोऽंतोदात्तः॥ दुर्मतिं दुर्बुद्धिमस्मदस्मत्त आजेत। आक्षिपेत्। अवनयेत्। किंचाघशंसोऽघानां पापानां हिंसादीनां शंसिता स्तेनोऽवतरमत्यंतनिकृष्टमव स्वस्थानादवाङ्मुखो भूत्वा स्रवेत्। गच्छतु। अधः पतत्वित्यर्थः। अघशंसः स्तेनः अघशंसो वृक इति तन्नामसु पाठात्। अवस्रवणमेव प्रार्थ्यते। क्षुद्रमिव क्षेप्तुं शक्यमुदकादिकमिव। उदकं यथा तिष्ठति स्रवन्नश्यति तथासावपीत्यर्थः॥

वनेम तद्धोत्रया चितंत्या वनेम रयिं रयिवः सुवीर्यं रण्वं संतं सुवीर्यं।
दुर्मन्मानं सुमंतुभिरेमिषा पृचीमहि।
आ सत्याभिरिंद्रं द्युम्नहूतिभिर्यजत्रं द्युम्नहूतिभिः॥७॥
वनेम। तत्। होत्रया। चितंत्या। वनेम। रयिं। रयिऽवः। सुऽवीर्यं।
रण्वं। संतं। सुऽवीर्यं॥ दुःऽमन्मानं। सुमंतुऽभिः। आ। ईं। इषा। पृचीमहि।
आ। सत्याभिः। इंद्रं। द्युम्नहूतिऽभिः। यजत्रं। द्युम्नहूतिऽभिः॥७॥

हे इंद्र वयं यजमानास्तत्तादृशं स्तुत्यं तव रूपं यद्वा तत्ते वयं चितंत्या तव गुणान् ज्ञापयंत्या॥ चिती संज्ञाने। अस्मादण्यंताच्छतरि व्यत्ययेन शः॥ होत्रया होमसाधनभूतया स्तुतिरूपया वाचा वनेम। संभजेम। यद्वा। शब्दयेम। स्तुतिं करवामेत्यर्थः। होत्रेति वाङ्नाम होत्रा गीरिति तन्नामसु पाठात्। किंचैवं स्तोतारो वयमपि हे रयिवो विशिष्टधनवन्निंद्र रयिं धनं वनेम। संभजेम। कीदृशं रयिं। सुवीर्यं शोभनसामर्थ्योपेतं रण्वं रमणीयं गंतव्यं वार्थिभिः संतं सर्वदा वर्तमानं यज्ञादिद्वारा बहुशो दीयमानमपि शवर्धमानं। पुनस्तदेव विशेष्यते। सुवीर्यं शोभनपुत्रभृत्याद्युपेतं धनेन तेषां संपादयितुं शक्यत्वात्॥ वीरवीर्यौ चेत्युत्तरपदाद्युदात्तत्वं॥ किंच हे इंद्र दुर्मन्मानं दुःखेन मंतुं शक्यं त्वां तव महिम्नोऽतिमहत्त्वात् सुमंतुभिः शोभनैर्मननैस्तत्साधनैः स्तोत्रैरेवैषा हवीरूपेणान्नेन चा पृचीमहि। सर्वतः संपृक्ता भूयास्म। यद्वा। इषान्नेन निमित्तेन। पूर्वं धनस्य प्रार्थितत्वादिदानीमन्नं प्रार्थ्यते॥ पृची संपर्के। लिङि छांदसो विकरणस्य लुक्॥ किंच यजत्रं यागनिष्पादक-

मिंद्रं सत्याभिरविसंवादिनीभिर्यथाभिलाषमुपजायमानफलाभिर्द्युम्नहूतिभिः। हरिव आगच्छ मेधातिथेर्मेषेत्याह्वानैरित्यर्थः। पुनस्ता एव विशेष्यंते। द्युम्नहूतिभिर्हविर्लक्षणान्ननिमित्तैराह्वानैरा पृचीमहीति शेषः। द्युम्नं द्योततेर्यशो वान्नं वा। नि० ५. ५.। इति यास्कः॥

प्रप्रा वो अस्मे स्वयंशोभिरूती परिवर्ग इंद्रो दुर्मतीनां दरीमन्दुर्मतीनां।
स्वयं सा रिषयध्यै या नं उपेषे अत्रैः।
हतेमसन्न वक्षति क्षिप्ता जूर्णिर्न वक्षति ॥८॥
प्रऽप्र। वः। अस्मे इति। स्वयशःऽभिः। ऊती। परिऽवर्गे। इंद्रः। दुःऽमतीनां।
दरीमन्। दुःऽमतीनां॥ स्वयं। सा। रिषयध्यै। या। नः। उपऽईषे। अत्रैः।
हता। ईं। असत्। न। वक्षति। क्षिप्ता। जूर्णिः। न। वक्षति ॥८॥

हे ऋत्विजः वो युष्मदर्थमस्मे अस्मदर्थं चायमिंद्रः स्वयशोभिः स्वकीययशोयुक्तैरूतिभी रक्षणैर्दुर्मतीनां दुर्मननयुक्तानां विरोधिनां परिवर्गे परितो वर्जने निमित्तभूते सति प्रप्र। प्रकृष्टो भवति। समर्थो भवतीत्यर्थः। द्विर्भावः पादपूरणः। यद्वा। हे ऋत्विजः वो युष्मदर्थमस्मे अस्माकं संबंधिभिः स्वयशोभिः स्वयमेवान्यैरनपेक्ष्येण स्तोतुं समर्थैः स्तोत्रैस्तुष्टः सन् ऊती ऊतौ रक्षणे प्रप्र। प्रकृष्टो भवति॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥ कुत्रेति तदुच्यते। दुर्मतीनां दुष्टानां परिवर्गे परितो वर्जनवति संग्रामे यागे वा। पुनः स एव विशेष्यते। दुर्मतीनां दुष्टबहुमानवतां हननबुद्धीनां दरीमन् दरीमण्यतिशयेन दारयितरि। एवमिंद्रे सम्यक् पालयति सत्यत्रैर्भक्षकैरस्मद्विरोधिभिर्या जूर्णिर्जववती सेना। जूर्णिर्जवतेर्वा द्रवतेर्वा दूनोतेर्वेति यास्कः। नि० ६. ४.। नोऽस्मान् प्रति रिषयध्यै हिंसितुं॥ रिषेर्ण्यंतात्तुमर्थे शध्यैप्रत्ययः॥ उपेष उपगंतुमस्मान् प्राप्तुं॥ ईङ् गतौ। तुमर्थे क्सेप्रत्ययः॥ क्षिप्ता प्रेरिता सा सेना स्वयं हतेमसत्। हिंसितैवासीत्। न वक्षति। अस्मान्न वहेत्। न प्राप्नोति। तथास्मद्धिंसकाञ्शत्रूनपि पुनर्न वक्षति। न वहति॥ वहेर्लेट्यडागमः। सिब्बहुलमिति सिप्॥ इंद्रसामर्थ्येन तत्रैव नष्टाभूदित्यर्थः॥

त्वं नं इंद्र राया परीणसा याहि पथाँ अनेहसा पुरो याह्यरक्षसा।
सचस्व नः पराक आ सचस्वास्तमीक आ।
पाहि नो दूरादारादभिष्टिभिः सदा पाह्यभिष्टिभिः ॥९॥
त्वं। नः। इंद्र। राया। परीणसा। याहि। पथा। अनेहसा।
पुरः। याहि। अरक्षसा॥ सचस्व। नः। पराके। आ। सचस्व। अस्तंऽईके। आ।
पाहि। नः। दूरात्। आरात्। अभिष्टिऽभिः। सदा। पाहि। अभिष्टिऽभिः ॥९॥

हे इंद्र त्वं नः पथास्मत्संबंधिना मार्गेण पुरो याहि। आगच्छ॥ भस्य टेर्लोपः। उदात्तनिवृत्तिस्वरेण तृतीयाया उदात्तत्वं॥ कीदृशेन मार्गेण। अरक्षसा रक्षोवर्जितेन अनेहसापापेन। यज्ञगमनमार्गस्य स्तुतिचोदितत्वादनेहस्त्वं। यद्वा। नोऽस्मानुद्दिश्य याहि। किंविशिष्ट इति। परीणसा परितो नद्धेन रायास्मभ्यं दातव्येन बहुविधधनेन युक्तः सन्। हे इंद्र नोऽस्मान् पराकेऽत्यंतदूरदेशात् स्वर्गलक्षणादा सचस्व। समवेतो भव। पराक इति दूरनाम पराके पराचैरिति तन्नामसु पाठात्। तथास्तमीकेऽत्यंतांतिके देवयजनदेशे सचस्व। अस्मत्प्रत्तं हविः सेवस्व। संगच्छस्व वा। किंच नोऽस्मान् दूराद्दूरदेशात्स्वर्गादेः सकाशात् पाहि। रक्ष। आरात् संनिहितादिह लोकात् पाहि। पालय। यद्वा। दूरादयागकाले स्वर्ग एवोषित्वास्मान्पाहि। पालय। आराद्यागकाले संनिहिते देवयजनदेशे पाहि। केनेति तदुच्यते। अभिष्टिभिरभिमुखैर्यागैस्तन्निर्वाहैः।

यद्वा । अभ्यागमनैः । किं बहुना । सदा सर्वकालं यागकालेऽयागकाले दूरेऽंतिके चाभिष्टिभिरभित एषणैः पाहि । सम्यक् परिपालय ॥

त्वं न॑ इंद्र रा॒या तरू॑षसो॒ग्रं चि॑त्त्वा महि॒मा स॑क्ष॒दव॑से म॒हे मि॒त्रं नाव॑से ।
ओजि॑ष्ठ॒ त्रात॒रवि॑ता॒ रथं॒ कं चि॑दमर्त्य ।
अ॒न्यम॒स्मद्रि॑रिषेः॒ कं चि॑दद्रिवो॒ रिरि॑क्षंतं चिदद्रिवः ॥ १० ॥
त्वं । नः॒ । इं॒द्र॒ । रा॒या । तरू॑षसा । उ॒ग्रं । चि॒त् । त्वा॒ । म॒हि॒मा । स॒क्ष॒त् । अव॑से ।
म॒हे । मि॒त्रं । न । अव॑से ॥ ओजि॑ष्ठ । त्रात॒रिति॑ । अवि॑त॒रिति॑ । रथं॑ । कं । चि॒त् । अ॒म॒र्त्य॒ ।
अ॒न्यं । अ॒स्मत् । रि॒रि॒षेः॒ । कं । चि॒त् । अ॒द्रि॒ऽवः॒ । रिरि॑क्षंतं । चि॒त् । अ॒द्रि॒ऽवः॒ ॥ १० ॥

हे इंद्र त्वं नोऽस्मांस्तरूषसा तरणकुशलेनास्मानापद्भ्य उत्तारयितुं शक्तेन राया धनेनोद्धर्ता भवेति शेषः । हे इंद्र त्वा त्वामुग्रं चिदुद्गूर्णबलं संतं त्वामेव महिमा महत्त्वमस्मत्स्तोत्रजनितः कश्चिदतिशयः सक्षत् । सेवते । संभजते । उत्कर्षयतीत्यर्थः । किमर्थं । अवसे त्वत्प्रीतये । तत्र दृष्टांतः । महे महतेऽवसे रक्षणाय प्रकाशारोग्यादिरूपाय मित्रं न सर्वजनमित्रं सूर्यमिव । तं यथा महत्त्वेन संयोजयंति तथेत्यर्थः । यद्वा । मित्रं न प्रियहितरूपं सखायमिव । तं यथा महत्यै प्रीतये संभजंते तद्वत् । किंच हे ओजिष्ठौजस्वितमातिशयेन बलवन् त्रातारक्षितरस्मान्पालयितर्वा अमर्त्यामरणधर्मन्निंद्र अवितरस्मान्धनेन तर्पयितः त्वं कं चिद्रथं वेगवंतमारुह्यास्मद्देवयजनं शीघ्रमागच्छेति शेषः । तथा हे अद्रिवः शत्रूणामतिशयेन भक्षकेंद्र अस्मदन्यं रिरिक्षंतं चिदल्पं महांतं वा । शत्रुमिति शेषः । रिरिषेः । बाधस्व । तथा हे अद्रिवोऽद्रेरादर्तर्भक्षक वा शत्रूणां । अद्रिवन्नद्रिरादृणात्यनेनापि वात्तेः स्यादिति निरुक्तं । नि॰ ४. ४. । रिरिक्षंतं चिदत्यंतं कुत्सितं हिंसंतमपि शत्रुं रिरिषेः । बाधस्व ॥ रिष हिंसायां । छांदसः शपः श्लुः । पुनर्व्यत्ययेन शः । रिरिक्षंतं । अस्मादेव सनि हलंताच्चेति सनः कित्वाद्गुणाभावः । चिदित्यवकुत्सितः । कुल्माषांश्चिदाहरेत्यवकुत्सित इति यास्केनोक्तत्वात् । नि॰ १. ४. । यद्वा । समुच्चयार्थः । कंचिदित्यनेन सह समुच्चीयते ॥

पा॒हि न॑ इंद्र सुष्टुत स्रि॒धो॑ऽवया॒ता स॒दमिद्दु॑र्मती॒नां दे॒वः सन्दु॑र्मती॒नां ।
ह॒न्ता पा॒पस्य॑ र॒क्षस॑स्त्रा॒ता विप्र॑स्य॒ माव॑तः ।
अधा॒ हि त्वा॑ जनि॒ता जीज॑नद्वसो र॒क्षो॒हणं॑ त्वा॒ जीज॑नद्वसो ॥ ११ ॥
पा॒हि । नः॒ । इं॒द्र॒ । सु॒ऽस्तु॒त॒ । स्रि॒धः । अ॒व॒ऽया॒ता । स॒दं॑ । इत् । दुः॒ऽम॒ती॒नां ।
दे॒वः । सन् । दुः॒ऽम॒ती॒नां ॥ ह॒न्ता । पा॒पस्य॑ । र॒क्षसः॑ । त्रा॒ता । विप्र॑स्य । मा॒ऽव॑तः ।
अध॑ । हि । त्वा॒ । ज॒नि॒ता । जीज॑नत् । व॒सो॒ इति॑ । र॒क्षः॒ऽहनं॑ । त्वा॒ । जीज॑नत् । व॒सो॒ इति॑ ॥ ११ ॥

हे इंद्र सुष्टुत शोभनस्तुत त्वं स्रिधो दुःखात् तदुत्पादकात्पापाद्वा नोऽस्मान्पाहि । रक्ष । यतस्त्वं दुर्मतीनां दुर्मनस्कानां रक्षःप्रभृतीनां ॥ नामन्यतरस्यामिति नाम उदात्तत्वं ॥ सदमित् सर्वदैवावयाताधोयापयिता प्रापयितासि । अतः पाहि । अत एव हे इंद्र देवोऽस्मत्स्तुत्या हृष्टः सन् दुर्मतीनां दुष्टमननवतां यागविघातकानामवयातासि । तथा रक्षसो रक्षणनिमित्तभूतस्य । रक्षो रक्षितव्यमस्मादिति यास्कः । नि॰ ४. १८. । तादृशस्य पापस्य फलप्रतिबंधरूपस्य हंता घातकोऽसि । यद्वा । पापस्य पापिनो रक्षसो राक्षसादेर्हंतासि । तथा मावतो मत्सदृशस्य विप्रस्य मेधाविनो यजमानस्य त्राता रक्षितासि । अधातो हेतोर्हि इंद्र वसो सर्वेषां निवासभूत त्वा त्वां जनिता सर्वस्य जनयितादिकर्ता परमेश्वरो जीजनत् । अजनयत् । उत्पादितवान् । तथा हे वसो वासयितः त्वा त्वां रक्षोहणं जीजनत् । रक्षोहननायोत्पादितवान् ॥ जनयतेर्लुङि चङि रूपं ॥ यद्वा-

दिविघातिनां रक्षःप्रभृतीनां विघाताय हींद्रस्यावतारः । तमिंद्रो देवतान्वरुज्यतेत्यादिप्रसिद्धद्योतनार्थो हिशब्दः ॥ ॥१७॥

एंद्र याह्युप न इति दशर्चं चतुर्थं सूक्तं पारुच्छेपमैंद्रं । अंत्या स नो नव्येभिरित्येषा त्रिष्टुप् शिष्टा अत्यष्टयः । अत्र त्रिष्टुबंतपरिभाषा नाश्रीयते सर्वमात्यष्टमिति विशेषेण प्रतिज्ञातत्वात् । एंद्र याहि दशांत्या त्रिष्टुबित्यनुक्रमणिका ॥ पृष्ठ्यषडहस्य षष्ठेऽहनि निष्केवल्यमेतत्सूक्तं । षष्ठस्येति खंडे सूचितं । एंद्र याह्युप नः प्र घान्वस्य । आ॰ ८. १. । इति ॥ महाव्रते माध्यंदिनसवने ब्राह्मणाच्छंसिनोऽनुरूपतृचे प्रथमैंद्र याहीत्येषा । महाव्रतस्य पंचविंशतिमिति खंडे शौनकेन सूचितं । एंद्र याह्युप नः परावत इंद्राय हि द्यौरसुरो अनम्नत । ऐ॰ आ॰ ५. १. १. । इति ॥

एंद्र याह्युप नः परावतो नायमच्छा विदथानीव सत्पतिरस्तं राजेव सत्पतिः ।
हवामहे त्वा वयं प्रयस्वंतः सुते सचा ।
पुत्रासो न पितरं वाजसातये मंहिष्ठं वाजसातये ॥१॥
आ । इंद्र । याहि । उप । नः । पराऽवतः । न । अयं । अच्छ । विदथानिऽइव । सत्ऽपतिः ।
अस्तं । राजाऽइव । सत्ऽपतिः ॥ हवामहे । त्वा । वयं । प्रयस्वंतः । सुते । सचा ।
पुत्रासः । न । पितरं । वाजऽसातये । मंहिष्ठं । वाजऽसातये ॥१॥

हे इंद्र परावतो दूरदेशात् स्वर्गलक्षणान्नोऽस्मानुप याहि । अस्मत्समीपं प्रत्यागच्छ । तत्र दृष्टांतः । अयं न । पुरोवर्त्यग्निरभिषुतः सोमो वा प्रस्तुतत्वान्निर्दिश्यते । स इव । यद्यपि पुरस्तादुपाचारान्निषेधार्थीयो नकारः सर्वत्र तथाप्यत्रौचित्येनोपमार्थीयो गृह्यते । यद्वा । परावतो न दूरदेशादिव । यद्यपि यज्ञे सर्वदा संनिहितस्तथापि स्वर्गाख्याद्दूरदेशादिवास्मिन्यज्ञे ॥ अयमिति विभक्तिव्यत्ययः ॥ अमुं देवयजनदेशमच्छाभिप्राप्तुमायाहीति शेषः । तत्र दृष्टांतः । सत्पतिः सतां सर्वदा वर्तमानानामृत्विजां पालको यजमान इव ॥ पत्यावैश्वर्य इति पूर्वपदप्रकृतिस्वरत्वं ॥ स यथा विदथानि वेदनान्यनुष्ठेययज्ञानानि । यद्वा । सतां विद्यमानानां फलानां पालकोऽग्निः । स यथा विदथानि यज्ञगृहाण्यागच्छति तद्वत्त्वमपि यज्ञगृहाण्यागच्छ । यद्वा सतां नक्षत्राणां पती राजा चंद्रमा अस्तमिव । स यथा स्वधामस्थानमागच्छति तद्वत् । किंच प्रयस्वंतो हविर्लक्षणान्नवंतो वयं यजमानास्त्वा त्वां हवामहे । आह्वयामः । किमर्थं । सुतेऽभिषुते सोमे निमित्तभूते सति । कीदृशा वयं । सचा ऋत्विग्भिः सहिताः । सचा सहेत्यर्थ इति यास्कः । नि॰ ५. ५. । आह्वाने दृष्टांतः । पुत्रासः पुत्राः पितरं न पालकं जनकमिव तं यथा वाजसातयेऽन्नस्य संभजनायाह्वयंति तथा वयमपि त्वां तदर्थमाह्वयामः । किंच मंहिष्ठं मंहनीयं त्वां वाजसातये संग्रामप्राप्तये तज्जयाय हविःस्वीकाराय वाह्वयामः ॥

षष्ठेऽहनि माध्यंदिने सवने प्रस्थितयाज्यानां पुरस्ताद्न्या ऋचः प्रक्षेपणीयाः । तत्र होतुः पुरस्तात् पिबा सोममिंद्रेत्येषा । षष्ठस्य प्रातःसवन इति खंडे सूचितं । पिबा सोममिंद्र सुवानमद्रिभिरिंद्राय हि द्यौरसुरो अनम्नत । आ॰ ८. १. । इति ॥

पिबा सोममिंद्र सुवानमद्रिभिः कोशेन सिक्तमवतं न वंसगस्तातृषाणो न वंसगः ।
मदाय हर्यताय ते तुविष्टमाय धायसे ।
आ त्वा यच्छंतु हरितो न सूर्यमहा विश्वेव सूर्यं ॥२॥
पिब । सोमं । इंद्र । सुवानं । अद्रिऽभिः । कोशेन । सिक्तं । अवतं । न । वंसगः ।
ततृषाणः । न । वंसगः ॥ मदाय । हर्यताय । ते । तुविःऽतमाय । धायसे ।
आ । त्वा । यच्छंतु । हरितः । न । सूर्यं । अहा । विश्वाऽइव । सूर्यं ॥२॥

हे इंद्र वंसगो वननीयगमनस्त्वं सोमं पिब ॥ द्व्यचोऽतस्तिङ इति दीर्घः ॥ कीदृशं तं । अद्रिभिरभिषवसाधनैर्ग्रावभिः सुवानं सूयमानं ॥ कर्मणि कर्तृप्रत्ययः ॥ कोशेन सिक्तं कोशस्थानीयेन दशापवित्रेण शोधितं । यद्वा । अवतमित्यनेन सह संबंधः । कोशेनेति लक्षणेन सिक्तं स्वोचितजलेन पूरितमवतं नाहावलक्षणमवटमिव । तं यथा वंसगो वननोयगमनस्तृषा शीघ्रगामो वृषभः पिबति तद्वत् । ततृषाणो न वंसगः । यथात्यंतं तृषितो वंसगो वननीयगमनः शीघ्रगामी पुरुष आहावादिकमागत्य पिबति तद्वत् । किमर्थं पानमिति तत्राह । ते तव मदाय तृप्तये हर्यताय विक्रांतिहेतवे कांत्यर्थं वा ॥ हर्य गतिकांत्योः । भृमृदृशीत्यादिनातच् ॥ तुविष्टमाय महत्त्वाय प्रवृद्धत्वाय धायसे यदर्थं मद उपजायते तदर्थाय ॥ धाञो वह्निहाधाञ्भ्य इत्यसुनि णिदित्यनुवृत्तेरातो युगिति युक् ॥ यद्वा । ते तव तुविष्टमाय धायसेऽतिप्रभूताय पानाय । त्वा त्वामा यच्छंतु । आभिमुख्येन गमयंतु । अश्वा इति शेषः । तत्र दृष्टांतः । हरितो न सूर्यं हरिद्वर्णविशिष्टा एतन्नामका अश्वाः सूर्यमिव । तं यथातित्वरयाभिमतदेशमभिप्रेरिता वहंति तद्वत् । किंचाह्रा विश्वा सर्वाण्यहानि सूर्यमिव । तं यथा त एव प्रतिदिनं वहंति तथास्मद्यागदिवसेषु प्रतिदिनमावहंतु ॥

अविंदद्दिवो निहितं गुहा निधिं वेर्न गर्भं परिवीतमश्मन्यनंते अंतरश्मनि ।
व्रजं वज्री गवामिव सिषासन्नंगिरस्तमः ।
अपावृणोदिष इंद्रः परीवृता द्वार इषः परीवृताः ॥३॥

अविंदत् । दिवः । निऽहितं । गुहा । निऽधिं । वेः । न । गर्भं । परिऽवीतं । अश्मनि । अनंते । अंतः । अश्मनि ॥ व्रजं । वज्री । गवांऽइव । सिसासन् । अंगिरःऽतमः । अप । अवृणोत् । इषः । इंद्रः । परिऽवृताः । द्वारः । इषः । परिऽवृताः ॥३॥

अयमिंद्रो दिवो द्युलोकादानीतं सोममविंदत् । अलभत । लब्धवान् । द्युलोकाद्गायत्र्या पक्षिरूपयापहृतं भूमावानीतं स्वीकृतवानित्यर्थः । द्युलोकादानयनं तैत्तिरीये तृतीयस्यामितो दिवि सोम आसीत्तं गायत्र्याहरत् । तै॰ब्रा॰ ३. २. १. १. । इत्यादिषु प्रसिद्धं । स एव विशेष्यते । गुहा निहितमतिगोप्ये प्रदेशे पर्वतादौ स्थापितं अत एव निधिं निधिस्थानीयं । अनाशमित्यर्थः । आनयने दृष्टांतः । वेः पक्षिणो गर्भं न शिशुमिव । यथा कपोतादिस्त्री पक्षिणी स्वशिशुं व्याधादिभयात्कस्मिंश्चिद्दुर्गमे स्थापयित्वा तत्स्थानमजानती परिभ्रम्य विंदते तद्वदित्यर्थः । पुनः कीदृशं । अश्मनि पाषाणेऽतिमहति विस्तृतेऽनंतेऽश्मन्यपरिमितपाषाणे पर्वतादौ परिवीतं लताकंटकादिना परितो वेष्टितं । सत्स्वपीतरेषु देवेषु कोऽस्यातिशय इति तत्राह । अयमिंद्रो वज्री वज्रवान् गवां व्रजमिव पणिनासुरेणापहृतं भूमौ खनित्वा पाषाणेन पिहितद्वारं गवां व्रजं यथा तमसुरं जित्वा द्वारमुद्घाट्य लब्धवान् तद्वत्सोमं सिषासन् संभक्तुमिच्छन् ॥ सनीवंतर्धेति विकल्पनादिडभावे जनसनेत्यात्वं ॥ अविंदत् । अयमर्थः पणिनेव गावः । ऋ॰ १. ३२. ११. । इत्यादिश्रुतिषु प्रसिद्धः । तथायमिंद्रः परीवृताः परितो मेघेनावृता इषोऽन्नहेतुभूतस्योदकस्य द्वारो द्वाराण्यपावृणोत् । अपवृतान्यकरोत् । उद्घाटितवानित्यर्थः । तथा कृत्वेष इष्यमाणानि व्रीह्याद्यन्नानि परीवृता भूमौ परितो व्याप्तान्यकरोत् । वज्रेण मेघं भित्त्वा जलवर्षणेन सस्यादिसमृद्धिं कृत्वा व्रीह्यादिकं भूमौ व्याप्तमकरोदित्यर्थः । यतोऽयमेवं कृतवान् अतः सोमस्वीकारो युक्तः ॥

दादृहाणो वज्रमिंद्रो गभस्त्योः क्षद्मेव तिग्ममसनाय सं श्यदहिहत्याय सं श्यत् ।
संविव्यान ओजसा शवोभिरिंद्र मज्मना ।
तष्टेव वृक्षं वनिनो नि वृश्चसि परश्वेव नि वृश्चसि ॥४॥

दादृहाणः । वज्रं । इंद्रः । गभस्त्योः । क्षद्मऽइव । तिग्मं । असनाय । सं । श्यत् । अहिऽहत्याय । सं । श्यत् ॥ संऽविव्यानः । ओजसा । शवःऽभिः । इंद्र । मज्मना । तष्टाऽइव । वृक्षं । वनिनः । नि । वृश्चसि । परश्वाऽइव । नि । वृश्चसि ॥४॥

अयमिंद्रो गभस्त्योर्बाह्वोर्वज्रं ददृहाणो दृढं गृह्णन् ॥ दृह दृहि वृद्धौ । लिटः कानच् ॥ गभस्ती इति बाहुनाम गभस्ती बाहू इति तन्नामसु पाठात् । किमर्थं । असनाय शत्रोरुपरि क्षेपणाय । तिग्ममत्यंततीक्ष्णं वज्रं सं श्यत् । सम्यक् तीक्ष्णीकरोति ॥ शो तनूकरणे । ओतः श्यनीत्योकारलोपः । छांदसोऽडभावः । यद्वा । लेटीतश्च लोप इतीकारलोपः ॥ तत्र दृष्टांतः । अद्भेव उदकमिव । उदकं यथा शत्रूणां निरसनायाभिमंत्रणादिसंस्कारेण तीक्ष्णीक्रियते तद्वत् । अद्मेत्युदकनाम अद्म नभ इति तन्नामसु पाठात् । पुनरपि तदेव विशेष्यते । अहिहत्यायाहेर्वृत्रस्य मेघस्य वा हननाय ॥ हंतेर्हनस्त चेति क्यप् तकारांतादेशश्च ॥ सं श्यत् । पूर्वमेव तीक्ष्णं सत् पुनरपि वधाय तीक्ष्णयति । हे इंद्र ओजसा बलेन पराभिभवनसामर्थ्येन शवोभिः सेनालक्षणैर्बलैर्मज्मना शारीरेण च बलेन संविव्यानः सम्यग्युक्तः सन् ॥ विव्यान इति लिटः कानच् । ग्रहिज्यावयीति संप्रसारणं ॥ तष्टा वृक्षमिव । यथा कश्चित्तष्टा वृक्षाणां तक्षणस्य साधु कर्ता वनिनो वनसंबंधिनो वृक्षान्निवृश्चति स्वोपयोगाय नितरां छिनत्ति तक्षणेन तनूकरोति तथा त्वमप्यस्मासु वक्रमाचरंतं शत्रुं नि वृश्चसि । किंच परश्वेव नि वृश्चसि । यथा परशुना कश्चिच्छिनत्ति वृक्षं तथा त्वमप्युक्तैस्त्रिविधैर्बलैर्नितरामस्मद्द्वेषिणं वृश्चसि ॥

त्वं वृथा नद्य इंद्र सर्तवेऽच्छा समुद्रमसृजो रथाँ इव वाजयतो रथाँ इव ।
इत ऊतीरयुंजत समानमर्थमक्षितं ।
धेनूरिव मनवे विश्वदोहसो जनाय विश्वदोहसः ॥५॥
त्वं । वृथा । नद्यः । इंद्र । सर्तवे । अच्छ । समुद्रं । असृजः । रथान्ऽइव ।
वाजऽयतः । रथान्ऽइव ॥ इतः । ऊतीः । अयुंजत । समानं । अर्थं । अक्षितं ।
धेनूःऽइव । मनवे । विश्वऽदोहसः । जनाय । विश्वऽदोहसः ॥५॥

हे इंद्र त्वं वृथाप्रयत्नेनैव नद्यो नदीः समुद्रमच्छाभिमुख्येन सर्तवे प्राप्तुमसृजः । मेघं निर्भिद्योत्पादितवानसि । तत्र दृष्टांतः । रथानिव । यथा त्वं रथानश्ववागं प्रत्यच्छ सर्तव आभिमुख्येन प्राप्तुमसृजः सृष्टवानसि तद्वत् । किंच वाजयतो रथानिव संग्राममन्नं वेच्छंतो राजादयो रथानिव । ते यथा संग्रामं प्रत्योषध्यादिकं वातिसर्तुं रथान् सृजंति तद्वत् ॥ क्यजंतात् शतुरनुम इति विभक्तेरुदात्तत्वं ॥ किंचेतोऽस्मत्संनिधिदेशं ॥ द्वितीयार्थे तसिल् ॥ अस्मान् प्रत्यूतीरूत्यो गमनवत्यो रक्षणवत्यो वा नद्यः समानमर्थं समानप्रयोजनवदक्षितमुदकमयुंजत । योजितवत्यः । त्वत्प्रसादादिति भावः ॥ अर्थशब्द उदकविशेषणः सन्नपुंसकलिंगः ॥ अक्षितमित्युदकनाम अक्षितं बर्हिरिति तन्नामसु पाठात् । तत्र दृष्टांतः । मनवे मनोरर्थाय धेनूरिव धेनवो यथा विश्वदोहसः सर्वार्थं दोग्ध्र्योऽभवन् । यथा वा जनाय यस्मै कस्मै चित्समर्थाय तदर्थं विश्वदोहसो भवंति सर्वक्षीरप्रदा भवंति । यद्वा । जनाय सर्वजनार्थं सस्यादीनभिलक्ष्य नद्यो विश्वदोहसः संपूर्णदोग्ध्र्यो भवंति । सर्वत्र प्रवहंति । अत्र नद्यः प्रीणनाद्दोहस इत्युपचर्यंते । ईदृग्जगदुपकारिवृष्टिप्रद इतींद्रस्यैव स्तुतिः ॥ ॥१८॥

इमां ते वाचं वसूयंत आयवो रथं न धीरः स्वपा अतक्षिषुः सुम्नाय त्वामतक्षिषुः ।
शुंभंतो जेन्यं यथा वाजेषु विप्र वाजिनं ।
अत्यमिव शवसे सातये धना विश्वा धनानि सातये ॥६॥
इमां । ते । वाचं । वसुऽयंतः । आयवः । रथं । न । धीरः । सुऽअपाः । अतक्षिषुः ।
सुम्नाय । त्वां । अतक्षिषुः ॥ शुंभंतः । जेन्यं । यथा । वाजेषु । विप्र । वाजिनं ।
अत्यंऽइव । शवसे । सातये । धना । विश्वा । धनानि । सातये ॥६॥

हे इंद्र ते त्वदर्थं वसूयंतो धनमात्मन इच्छंत आयवो दातव्यहवीरूपान्नवंत ऋत्विजः । आयव इति

मनुष्यनाम आयवोऽनव इति तन्नामसु पाठात्। त इमां क्रियमाणां स्तुतिरूपां वाचमतक्षिषुः। संपादितवंतः। स्वपाः शोभनकर्मवान् कुशली ॥ बहुव्रीहौ सोर्मनसी इत्युत्तरपदाद्युदात्तत्वं ॥ धीरो धीमान् रथं न रथमिव। तं यथा प्रयत्नेन साधु करोति तद्वत्। एवं कृत्वा त्वां सुम्नाय सुखायातक्षिषुः। अनुकूलमुत्पादयंति। सुम्नमिति सुखनाम सुम्नं सुग्म्यमिति तन्नामसु पाठात्। किंच हे विप्र मेधाविन्निंद्र वाजेषु संग्रामेषु वाजिनं वेगवंतं त्वां शुंभंतो गुणैर्दीपयंतोऽतक्षिषुः। स्तुत्या प्रीणयंति। तत्र दृष्टांतः। जेन्यं यथा। जयशीलं शूरं यथा भटाः स्तुवंति तद्वत्। यद्वा। जेन्यं जयशीलं वाजिनं वेगवंतमश्वं वाजेषु संग्रामेषु यथोत्साहयंति तद्वत्। किंच शवसे बलाय धना धनानां सातये लाभाय च स्तुम इति शेषः ॥ ऊतियूतिजूतिसातीत्यादिना क्तिन उदात्तत्वं ॥ न केवलं धनमात्रं किंतु विश्वा धनानि सातये कृत्स्नानि प्रीणनसाधनानि गवादिधनानि ॥ षष्ठ्यर्थे द्वितीया ॥ तेषां लाभाय। तत्र दृष्टांतः। धना धने संग्रामे शवसे वैरिजयसाधनबलाय सातये तेषामेव धनानां प्राप्तये चात्यमिव सततगामिनमश्वमिव। तं यथा स्तुवंति तद्वत् ॥

भिनत्पुरो नवतिमिंद्र पूरवे दिवोदासाय महि दाशुषे नृतो वज्रेण दाशुषे नृतो।
अतिथिग्वाय शंबरं गिरेरुग्रो अवाभरत्।
महो धनानि दयमान ओजसा विश्वा धनान्योजसा ॥ ७ ॥
भिनत्। पुरः। नवतिं। इंद्र। पूरवे। दिवःऽदासाय। महि। दाशुषे। नृतो इति। वज्रेण। दाशुषे। नृतो इति ॥ अतिथिऽग्वाय। शंबरं। गिरेः। उग्रः। अव। अभरत्। महः। धनानि। दयमानः। ओजसा। विश्वा। धनानि। ओजसा ॥ ७ ॥

हे इंद्र नृतो रणे नर्तनशील त्वं दाशुषे हविर्दत्तवते पूरवेऽभिमतपूरकाय। मनुष्यनामैतत्। महि महते दिवोदासायैतन्नामकाय राज्ञे ॥ दिवो दासे षष्ठ्या अलुक्। का॰ ६. ३. २१. ५.। इत्यलुक्। दिवोदासादीनां छंदसीति पूर्वपदाद्युदात्तत्वं ॥ नवतिमेतत्संख्याकानि पुरः शत्रूणां पुराणि भिनत्। भिन्नवानसि। तथा हे नृतो गात्रविक्षेपणकुशल हस्तपादादिप्रक्षेपेण शत्रूणां हिंसक वज्रेण क्षेपणसमर्थेनायुधेन दाशुषे हविर्दत्तवते दिवोदासायान्यस्मै वा भिनत्। तमपि शत्रुं भिन्नवानसि। इदानीं परोक्षेणाह। अतिथिग्वाय पूजार्थमतिथिं गच्छते दिवोदासाय तदर्थं ॥ गमेरौणादिको ड्वप्रत्ययः ॥ उग्र उद्गूर्णबल इंद्रः पूर्वं पुरभेदनसमये विद्रुमप्यम्रियमाणं गिरिमारूढं शंबरमेतन्नामानमसुरं गिरेर्दुर्गमात्पर्वतादेः सकाशादोजसा स्वकीयेन बलेनावाभरत्। अवाङ्मुखमवकृष्य प्राणं हृतवान्। किं कुर्वन्। महो महांति धनानि तदीयगवाश्वादीनि दयमानो दिवोदासाय राज्ञे साधयन् ॥ दय दानगतिहिंसादानेषु। शपः पित्त्वादनुदात्तत्वे शानचो लसार्वधातुकस्वरेण धातुस्वरः ॥ न केवलमल्पं धनं किंतु विश्वा धनानि सर्वाण्यपि तेषां मणिमुक्तादीन्योजसा स्वकीयेन बलेन दयमानः साधयन्नवाभरत् ॥

इंद्रः समत्सु यजमानमार्यं प्रावद्विश्वेषु शतमूतिराजिषु स्वर्मीळ्हेष्वाजिषु।
मनवे शासदव्रतान्त्वचं कृष्णामरंधयत्।
दक्षन्न विश्वं ततृषाणमोषति न्यर्शसानमोषति ॥ ८ ॥
इंद्रः। समत्ऽसु। यजमानं। आर्यं। प्र। आवत्। विश्वेषु। शतंऽऊतिः। आजिषु। स्वःऽमीळ्हेषु। आजिषु ॥ मनवे। शासत्। अव्रतान्। त्वचं। कृष्णां। अरंधयत्। धक्षत्। न। विश्वं। ततृषाणं। ओषति। नि। अर्शसानं। ओषति ॥ ८ ॥

अयमिंद्रः समत्सु रणेषु प्रहारनिमित्तेषु यजमानं यष्टारमार्यमरणीयं सर्वैर्गंतव्यं प्रावत्। रक्षति। सम-

त्स्विति संग्रामनाम समत्सु समरण इति तन्नामसु पाठात्। किंच शतमूतिः स्वभक्तेष्वपरिमितरक्षण इंद्रो विश्वेषु ॥ लिंगव्यत्ययः ॥ आजिषु सर्वेषु स्पर्धानिमित्तेषु संग्रामेषु यजमानं प्रावत्। तथा स्वर्मीळ्हेषु स्वर्गदेशेषु सुखस्य सेचयत्सु वाजिषु महासंग्रामेषु प्रावत्। स्वर्गप्रदानेन रक्षति। रण आभिमुख्येन हतानां वीराणां स्वर्गः पराशरेण स्मर्यते। द्वाविमौ पुरुषौ लोके सूर्यमंडलभेदिनौ। परिव्राड्योगयुक्तश्च रणे योऽभिमुखो हतः ।परा० ३. २५.। इति। अत्रेतिहासमाचक्षते। अंशुमती नाम नदी। तस्यास्तीरे कृष्णनामासुरो वर्णतश्च कृष्णो दशसहस्रैरनुचरैरुपेतस्तद्देशवर्तिनः पीडयन्नास्ते। तत्रेंद्रो बृहस्पतिना प्रेरितः सन् मरुद्भिः सहितः कृष्णां तदीयत्वचमुत्कृत्य सानुचरमवधीत्। अयमर्थोऽव द्रप्सो अंशुमतीमतिष्ठत्।ऋ० ८.९६.१३.। इत्यादिनोपरिष्टाद्वक्ष्यते। तदत्रोच्यते। अयमिंद्रो मनवे मनुष्याय ॥ विभक्तिव्यत्ययः ॥ मनुष्याणामर्थायाव्रतान्। व्रतमिति कर्मनाम। तद्रहितान् यागविद्वेषिणः शासत्। शिक्षितवान्। हिंसितवान् ॥ शासेर्लेट्यडागमः ॥ तथा कृष्णां त्वचं कृष्णनाम्नोऽसुरस्य कृष्णवर्णां त्वचमुत्कृत्यारंधयत्। हिंसितवान् ॥ रध हिंसायां। रधिजभोरचीति नुम् ॥ केन प्रकारेणेति तदुच्यते। धक्षत्। भस्मीकरोति ॥ लेट्यडागमः। सिब्बहुलमिति सिप् ॥ तथा विश्वं ततृषाणमोषति। सर्वमपि हिंसकं तदनुचरसंघं दहति। यत्किंचिदवशिष्टमिति नेत्याह। अर्शसानं हिंसारुचिं हतावशिष्टं सर्वमपि न्योषति। निःशेषेण दहति ॥

सूर॑श्च॒क्रं प्र वृ॑ह॒ज्जा॒त ओज॑सा प्रपि॒त्वे वाच॑मरु॒णो मु॑षायतीशा॒न आ मु॑षायति।
उ॒शना॑ य॒त्प॑रा॒वतोऽज॑गन्नू॒तये॑ कवे।
सु॒म्नानि॒ विश्वा॒ मनु॑षेव तु॒र्वणि॒रहा॒ विश्वे॑व तु॒र्वणिः॑ ॥९॥
सूरः॑। च॒क्रं। प्र। वृ॒ह॒त्। जा॒तः। ओज॑सा। प्र॒ऽपि॒त्वे। वाच॑ं। अ॒रु॒णः। मु॒षा॒य॒ति॒।
ई॒शा॒नः। आ। मु॒षा॒य॒ति॒॥ उ॒शना॑। यत्। प॒रा॒ऽवतः॑। अज॑गन्। ऊ॒तये॑। क॒वे॒।
सु॒म्नानि॑। विश्वा॑। मनु॑षाऽइव। तु॒र्वणिः॑। अहा॑। विश्वा॑ऽइव। तु॒र्वणिः॑ ॥९॥

अत्रापीतिहासमाचक्षते। केचनासुराः पूर्वमिंद्रवज्रेण वधो मा भूदिति ब्रह्मणो वरं लब्ध्वेंद्रमगणयित्वोद्वृत्ता आसन्। तान् हंतुमिंद्रः सूर्यरथस्य चक्रमादायावधीदिति। [illegible]। अयमिंद्रः सूरः सूर्यस्य ॥ षष्ठ्यर्थे प्रथमा ॥ चक्रं रथस्य चक्रमादायौजसा शारीरेण बलेन जातः समृद्धः सन् प्र वृहत्। प्रक्षिप्तवान् ॥ वृहू उद्यमने। तौदादिकः ॥ किंचारुणोऽरुणवर्णोऽत्यंततेजोयुक्तः सन् यद्वा गमनशीलः सन् प्रपित्वे तेषां समीपे तत्समीपमागत्य वाचं वागुपलक्षितं प्राणं मुषायति। मुमोष मुष्णाति वा। प्रपित्व इत्यासन्ननाम। यद्वा। वाचं तेषां प्रहारध्वनिं मुषायति। तेषु हतेषु ध्वनिः स्वयमेव विश्रांतो भवति। अवधीदित्यर्थः। अथवा। इंद्र एव द्युस्थानः सन्नादित्यात्मना स्तूयते। सूरः सूर्यो जात उदितः सन्नोजसा स्वकीयेन तेजसा युक्तश्चक्रं प्र वृहत्। तमोनिवारणार्थमसुरजयाय वा चक्रोपलक्षितं रथं प्रकर्षेणोद्यतं करोति। ततः पूर्वमरुणस्तद्रथयंता प्रपित्वे मंदेहाद्यसुराणां प्रपित्वे समीपे वाचं तेषां जहि भिंधीत्यादिध्वनिं मुषायति। मुष्णाति ॥ मुषेरुत्तरस्य श्नो ऽहावपि छंदसि शायजपीति शायजादेशः ॥ तदनंतरं सूर्य ईशानः सर्वाणि तमांस्यसुरान्वा निराकर्तुं समर्थः सन् आ मुषायति। समंतान्मुष्णाति। अथ प्रत्यक्षकृतः। हे कवे क्रांतदर्शिन् यद्यस्त्वमुशनोशनस एतन्नाम्नो महर्षेरूतये रक्षणाय परावतो दूरात्स्वर्गस्थानादजगन् गतवानसि प्राप्तवानसि ॥ गमेः सिपि छांदसः शपः श्लुः। हल्ङ्यादिलोपे मो नो धातोः।पा० ८.२.६४.। इति नत्वं ॥ यद्वा। उशनोशनसा युक्तः सन्नजगन्। आगच्छ। आगत्य च विश्वा विश्वानि सुम्नानि सुखसाधनानि धनान्यादायास्माकं तुर्वणिस्तूर्णवनिः क्षिप्रं संभक्ता भवेति शेषः। तुर्वणिस्तूर्णवनिरिति निरुक्तं।६.१४.। तत्र दृष्टांतः। मनुषेव मनुष्येणेव। यथा त्वोतेन परिवृढाय देशांतरादभिमतं धनमानीयते तद्वत्। यद्वा। मनुषेव [illegible]मिव। [illegible]त्वजां विश्वा सुम्नानि सर्वाणि धनान्यादाय तुर्वणिर्भवसि। तद्वदस्माकमपि। न [illegible]नैव यागदिने किंत्वहा विश्वेव विश्वान्यप्यहानि सर्वेष्वप्यहःसु तुर्वणिर्भव। यद्वा। तुर्वणिस्त्वमहा विश्वेव विश्वान्यहान्यतिदीर्घमायुष्यं यथा ददासि तथा सुम्नान्यपि। उभयमपि देहीत्यर्थः ॥

स नो नव्येभिर्वृषकर्मन्नुक्थैः पुरां दर्तः पायुभिः पाहि शग्मैः ।
दिवोदासेभिरिंद्र स्तवानो वावृधीथा अहोभिरिव द्यौः ॥१०॥
सः । नः । नव्येभिः । वृषऽकर्मन् । उक्थैः । पुरां । दर्तरिति दर्तः । पायुऽभिः । पाहि । शग्मैः ।
दिवःऽदासेभिः । इंद्र । स्तवानः । ववृधीथाः । अहोभिःऽइव । द्यौः ॥१०॥

हे इंद्र वृषकर्मन्नभिमतवर्षणव्यापारवन् पुरां दर्तरसुरपुराणां दारयितः ॥ सुबामंत्रित इति षष्ठ्याः परांगवद्भावात् षष्ठ्यामंत्रितसमुदायस्य पादादित्वादाष्टमिकमाद्युदात्तत्वं ॥ स तादृशो महानुभावस्त्वं नोऽस्मत्संबंधिभिर्नव्येभिर्नूतनैरुक्थैरिदानीं प्रतिपादितप्रकारैः स्तोत्रैस्तुष्टः सन् पायुभिः पालनप्रकारैः शग्मैः सुखैरैहिकामुष्मिकरूपैः पाहि । पालय । किंच हे इंद्र दिवोदासेभिर्दिवोदासगोत्रोत्पन्नैः ॥ अर्शआदित्वादच् ॥ अस्माभिः परुच्छेपैः । यद्वा । पूजार्थं बहुवचनं । स्तवानः स्तूयमानः ॥ कर्मणि कर्तृप्रत्ययः ॥ ववृधीथाः । प्रवृद्धो भव ॥ वृधेर्लिङि छांदसः शपः श्लुः ॥ किमिव । अहोभिरिव द्यौः । द्योतनशील आदित्योऽहोभिः प्रसिद्धैर्यथा प्रवृद्धो भवति । तथास्मत्स्तुत्यात्यंतं प्रवृद्धो भवेत्यर्थः ॥ ॥१९॥

इंद्राय हीति सप्तर्चं पंचमं सूक्तं । इंद्राय सप्तेत्यनुक्रमणिका । परुच्छेप ऋषिः । अत्यष्टिश्छंदः । इंद्रो देवता ॥ पृष्ठ्यस्य षष्ठेऽहनि माध्यंदिनसवने होत्रकाः स्वस्वशस्त्र एतत्सूक्तं तृचत्रयं कृत्वारंभणीयाभ्य ऊर्ध्वमावपेयुः । अत्रायं विभागः । आद्यास्तिस्रो मैत्रावरुणस्य । तृतीयाद्यास्तिस्रो ब्राह्मणाच्छंसिनः । पंचम्याद्यास्तिस्रोऽच्छावाकस्य । एतच्चतुर्थेऽहनीति खंडे सूचितं । षष्ठेऽहनींद्राय हि द्यौरसुरो अनम्नतेत्येवमेव । आ० ७. ११. । इति ॥ तत्रैवाहनि तस्मिन्नेव सवने प्रशास्त्रादीनां प्रस्थितयाज्याभ्यः पुरस्तादादितः षड्टृच एकैकशः प्रक्षेपणीयाः । षष्ठस्येति खंडे सूचितं । इंद्राय हि द्यौरसुरो अनम्नतेति षट् । आ० ८. १. । इति ॥ महाव्रते निष्केवल्य इंद्राय हीति तृचो वैकल्पिकानुरूपद्वितीयः । महाव्रतस्येति खंडे सूचितं । एंद्र याह्युप नः परावत इंद्राय हि द्यौरसुरो अनम्नत । ऐ० आ० ५. १. १. । इति ॥

इंद्राय हि द्यौरसुरो अनम्नतेंद्राय मही पृथिवी वरीमभिर्द्युम्नसाता वरीमभिः ।
इंद्रं विश्वे सजोषसो देवासो दधिरे पुरः ।
इंद्राय विश्वा सवनानि मानुषा रातानि संतु मानुषा ॥१॥
इंद्राय । हि । द्यौः । असुरः । अनम्नत । इंद्राय । मही । पृथिवी । वरीमऽभिः ।
द्युम्नऽसाता । वरीमऽभिः ॥ इंद्रं । विश्वे । सऽजोषसः । देवासः । दधिरे । पुरः ।
इंद्राय । विश्वा । सवनानि । मानुषा । रातानि । संतु । मानुषा ॥१॥

द्यौर्द्योतनशीलो द्युलोकस्तन्निवासी देवसंघो वा स चासुरो निरसनशीलः शत्रूणां पुरस्तात्तामेव तन्निवासात् इंद्राय हींद्रायैवानम्नत । स्वयमेव प्रह्वो भवति ॥ नमेश्छांदसे लङि कर्मकर्तर्यात्मनेपदं । न दुहस्नुनमामिति यगभावः । पा० ३. १. ८९. । छांदसः शपः श्लुः । हलादिशेषाभावस्य । अनुनासिकलोपः ॥ हिशब्दः प्रसिद्ध्यर्थो वा । तथेंद्रायेंद्रार्थं मही महती पृथिवी भूमिस्तत्रत्यः सर्वो जनो वानम्नत । उभयत्राश्रयवाचिशब्देनाश्रयी लक्ष्यते ग्राम आगत इतिवत् । केन साधनेनेति तदुच्यते । वरीमभिर्वरणीयैः स्तोत्रैर्हविर्भिर्वा । किंच द्युम्नसाता द्युम्नसातावन्नस्य यशसो वा लाभे निमित्ते सति वरीमभिर्वरणीयैर्हविर्भिर्युक्ता यजमानाः प्रह्वा भवंति । किंचेंद्रमेव विश्वे सर्वे देवासो देवाः सजोषसः समानप्रीतियुक्ता ऐकमत्यभाजः पूर्वमसुरजयार्थं पुरो दधिरे । पुरतः स्थापितवंतः । इंद्रमुखेनैवासुराञ्जितवंत इत्यर्थः । तथा मानुषा सवनानि मनुष्याणां संबंधीन्यभिषवयुक्तानि प्रातरादिसवनानींद्राय संतु । इंद्रायैव भवंतु । तथा मानुषा मनुष्याणामृत्विजां संबंधीनि रातानि दातव्यानि पुरोडाशादीनींद्राय हींद्रायैव संतु । इंद्रं प्रीणयितुं समर्थानि भवंत्वित्यर्थः ॥

विश्वेषु हि त्वा सवनेषु तुंजते समानमेकं वृषमण्यवः पृथक् स्वः सनिष्यवः पृथक्।
तं त्वा नावं न पर्षणिं शूषस्य धुरि धीमहि।
इंद्रं न यज्ञैश्चितयंत आयवः स्तोमेभिरिंद्रमायवः ॥२॥
विश्वेषु। हि। त्वा। सवनेषु। तुंजते। समानं। एकं। वृषऽमन्यवः। पृथक्।
स्वरिति स्वः। सनिष्यवः। पृथक्॥ तं। त्वा। नावं। न। पर्षणिं। शूषस्य। धुरि। धीमहि।
इंद्रं। न। यज्ञैः। चितयंतः। आयवः। स्तोमेभिः। इंद्रं। आयवः ॥२॥

हे इंद्र त्वा त्वामेकमेकमेव संतं विश्वेषु सर्वेषु सवनेषु तद्वत्स्वेकाहाहीनसत्त्ररूपेषु सर्वेषु सोमयागेषु यजमानास्तुंजते। त्वरयंति। हविरादीनि ददते। कीदृशं त्वां। समानं सर्वेषामेकरूपं। कीदृशा यजमानाः। वृषमण्यवोऽभिमतवर्षणाय त्वामेव मन्यमानाः पृथग्विविच्य स्वस्वयागे। किमिच्छंतः। स्वः स्वर्गं सुखविशेषं वा सनिष्यवः संभक्तुकामाः पृथक् तुंजते। पृथगेव त्वरयंति। तुंजतिर्दानार्थः शिचति तुंजत इति तन्नामसु पाठात्। तं तादृशं त्वा त्वां शूषस्य बलस्य सेनारूपस्य धुरि वहने तज्जयाय धीमहि। स्थापयामः। यद्वा। शूषस्यास्मदीयशारीरबलस्य धुरि धीमहि। शूषमिति बलनाम शूषं सह इति तन्नामसु पाठात्। तत्र दृष्टांतः। पर्षणिं नावं न पारस्य संभक्त्रीं पूरयित्रीं वा फलस्य नावमिव। तां यथा भारवहने स्थापयंति॥ पार तीर कर्मसमाप्तौ। छंदसि वनसनेति सनेरिन्प्रत्ययः। पा० ३. २. २७.। पृषोदरादिः। पिपर्तेरौणादिकः सनिप्रत्ययो वा॥ कीदृशा वयं। आयवो मनुष्या यजमाना यज्ञैः साधनैरिंद्रं न चितयंतः परमेश्वरमिव त्वां चेतयंतः। परमेश्वरबुद्ध्या भावयंत इत्यर्थः। यद्वा। नशब्द एवकारार्थः। इंद्रमेव त्वां जानंतः। तथा स्तोमेभिः स्तोत्रैरिंद्रमिंद्रमेवायवो गच्छंतो वयं धीमहि॥ दधातेर्लिङि च्छांदसः शपो लुक्॥

वि त्वा ततस्रे मिथुना अवस्यवो व्रजस्य साता गव्यस्य निःसृजः सक्षंत इंद्र निःसृजः।
यद्गव्यंता द्वा जना स्वर्यंता समूहसि।
आविष्करिक्रद्वृषणं सचाभुवं वज्रमिंद्र सचाभुवं ॥३॥
वि। त्वा। ततस्रे। मिथुनाः। अवस्यवः। व्रजस्य। साता। गव्यस्य। निःऽसृजः।
सक्षंतः। इंद्र। निःऽसृजः॥ यत्। गव्यंता। द्वा। जना। स्वः। यंता। संऽऊहसि।
आविः। करिक्रत्। वृषणं। सचाऽभुवं। वज्रं। इंद्र। सचाऽभुवं ॥३॥

हे इंद्र त्वा त्वामुद्दिश्य मिथुनाः पत्नीसहिता यजमाना वि ततस्रे। यज्ञं वितन्वते। यद्वा। यज्ञे पयोव्रतादेना त्वां पचयंति॥ तसु उपक्षये। छांदसे लिटीरयो र इति रेभावः॥ किमर्थं। गव्यस्य व्रजस्य साता गवां संबंधिनो यूथस्य लाभे निमित्तभूते सति। न च सर्वत्राग्निहोत्रादिनित्यवाक्येषु कारीरीचित्रादिकाम्यवाक्येषु यस्योदयं यस्य गृहानित्यादिनैमित्तिकवाक्येषु पुरुषस्यैवार्थित्वादेः सद्भावात्तस्यैवाधिकारः स्त्रियास्त्वर्थित्वेऽध्ययनाभावेन विद्वत्ताया अभावादत एव सामर्थ्याभावाच्च नास्त्यधिकार इति वाच्यं। यद्यपि स्त्रिया नास्ति पृथगधिकारस्तथापि पूर्वमीमांसायां षष्ठेऽधिकाराध्याये तृतीयचतुर्थाभ्यामधिकरणाभ्यां अस्त्येव स्त्रिया अधिकारः स च पत्या सहेति प्रपंचितत्वात् जायापती अग्निमादधीयातामित्याधानविधानात् स्मृतिषु च नास्ति स्त्रीणां पृथग्यज्ञो न व्रतं। म० ५. १५५.। इति पृथगधिकारस्यैव निवारितत्वादस्त्येव स्त्रियाः पत्या सहाधिकारः। अध्ययनाभावेऽपि वेदं पत्न्यै प्रदाय वाचयेत्। आ० १. ११.। इति सूत्रकारवचनात् पत्न्यन्वास्त इत्यादिविधिषु सुप्रजसस्त्वा वयं। तै० सं० १. १. १०. १.। इत्यादिमंत्रविधानाच्च वचनमस्ति तत्र स्त्येव मंत्रेऽधिकारः किं हि वचनेन कुर्यान्नास्ति वचनस्यातिभार इति न्यायात्। तस्मान्मिथुना यज्ञं तत

इत्येतदुक्तं । कीदृशास्ते । अवस्यव इंद्रायात्मने वा तृप्तिमिच्छंतः निःस्रजो निःशेषेण हविस्त्यजंतः सचंतः ॥ सचतिर्गत्यर्थः ॥ त्वां संभजमानाः । पुनस्त एव विशेष्यंते । निःस्रजः फलप्रतिबंधकं पापं निर्गमयंतः । कस्तव विशेष इति तदुच्यते । यद्यस्मात्कारणाद्गव्यंता गामात्मन इच्छंतौ ॥ गोशब्दात्सुप आत्मनः क्यच् । वांतो यि प्रत्यय इत्यवादेशः ॥ स्वर्यंता स्वर्गं यंतौ गंतुमुद्युक्तौ द्वा जना द्वौ जायापतिरूपौ जनौ समूहसि । संयुक्तयोरे-वाभिमतं स्वर्गादिकं प्रापयसि । यद्वा । सम्यगनुष्ठितवंताविव्यूहसि निश्चिनोषि । अतः पत्नीसहिता अनुतिष्ठंती-त्यर्थः । किंच हे इंद्र त्वं वृषणं वर्षकं कामानां सचाभुवं सहैवोत्पन्नं त्वया विना भूतं तथा सचाभुवं शत्रुवधा-दिव्यापारसामर्थ्येन सहैवोत्पन्नं वज्रमाविष्करिक्रत् । आविष्कुर्वन्प्रकटयन्वर्तस इति शेषः ॥

विदुष्टे अस्य वीर्यस्य पूरवः पुरो यदिंद्र शारदीरवातिरः सासहानो अवातिरः ।
शासस्तमिंद्र मर्त्यमयज्युं शवसस्पते ।
महीममुष्णाः पृथिवीमिमा अपो मंदसान इमा अपः ॥४॥
विदुः । ते । अस्य । वीर्यस्य । पूरवः । पुरः । यत् । इंद्र । शारदीः । अव॒ऽअतिरः ।
ससहानः । अव॒ऽअतिरः ॥ शासः । तं । इंद्र । मर्त्यं । अयज्युं । शवसः । पते ।
महीं । अमुष्णाः । पृथिवीं । इमाः । अपः । मंदसानः । इमाः । अपः ॥४॥

हे इंद्र ते वीर्यस्य तव संबंधिनोऽस्य वीर्यस्य ॥ कर्मणि षष्ठी ॥ वक्ष्यमाणमेतद्वीर्यं विदुः । ये पूरवो मनुष्या यजमानास्तव महत्त्वं जानानास्त्वामेव यजंति ते विदुः । यद्वा । अस्य वीर्यस्य माहात्म्यमिति शेषः ॥ विदुष्ट इत्यत्र युष्मत्तत्ततक्षुःष्विति विसर्जनीयस्य सत्वं ॥ वीर्यमेव विशेष्यते । हे इंद्र यद्यस्मात्कारणात् शारदीः संवत्सरसंबंधिनीः संवत्सरपर्यंतं प्राकारपरिखादिभिर्दृढीकृताः पुरः शत्रूणां पुरीरवातिरः अनाशयः ॥ अवपूर्वस्तिरतिर्नाशनार्थः ॥ किं कुर्वन् । ससहानस्तत्रत्यानभिभवन् धनाद्यपहरेण पीडयन् ॥ सहतेर्यङ्लुगंता-त्ताच्छीलिकश्चानश् ॥ अवातिरः । किंच हे इंद्र तं मर्त्यं मरणधर्माणमयज्युमयष्टारं यज्ञविघातिनं राक्षसादि शासः । निगृहीतवानसि । हे शवसस्पते बलस्य पालकेंद्र त्वं महीं महतीं पृथिवीमिमा अपश्च समुद्रगयात्म-कान्युदकानि चामुष्णाः । बलादपहृतवानसि । असुरैरन्यैर्वा यज्ञविद्वेषिभिराक्रांतां भूमिं तत्संबंधिनीरपश्च तेषां पुराणि भित्त्वापहृतवानसीत्यर्थः । किं दुःखेन । नेत्याह । मंदसानो हृष्यन्नेवेमा अप इमान्यप्कार्याणि व्रीह्याद्यन्नान्यमुष्णाः । लब्धवानसि ॥

आदित्ते अस्य वीर्यस्य चर्किरन्मदेषु वृषन्नुशिजो यदाविथ सखीयतो यदाविथ ।
चकर्थ कारमेभ्यः पृतनासु प्रवंतवे ।
ते अन्यामन्यां नद्यं सनिष्णत श्रवस्यंतः सनिष्णत ॥५॥
आत् । इत् । ते । अस्य । वीर्यस्य । चर्किरन् । मदेषु । वृषन् । उशिजः । यत् । आविथ ।
सखिऽयतः । यत् । आविथ ॥ चकर्थ । कारं । एभ्यः । पृतनासु । प्रऽवंतवे ।
ते । अन्यांऽअन्यां । नद्यं । सनिष्णत । श्रवस्यंतः । सनिष्णत ॥५॥

हे इंद्र आदत एव हेतोस्ते वीर्यस्य तव संबंधिने वीर्याय तदभिवृद्धये चर्किरन् । पुनःपुनः सोमं विकिरंति ॥ किरतेर्यङ्लुगंताल्लङ्यथेन शः ॥ सर्वेषु सवनेषु वितरंति यजमानाः । अत इत्युक्तं कुत इत्याह । मदेषु वृषन् सोमजनितमदेषु सत्सु हे कामानां वर्षितः उशिजस्त्वां कामयमानान्यजमानान् यद्यतः कारणादाविथ रक्षसि । किंच सखीयतस्तव सखित्वमात्मन इच्छतोऽस्मान् यद्यस्मादाविथ तर्पयसि अभिमतेन प्रीणयसि अतश्चर्किरन् । किंच हे इंद्र एभ्यो यजमानेभ्यः कारं शब्दं सिंहनादलक्षणं चकर्थ । करोषि ॥ करोतेः कर्मणि घञ् । कर्षात्वत

इत्यंतोदात्तत्वं ॥ कुत्रेति तदुच्यते । पृतनासु संग्रामेषु । किमर्थं । प्रवंतवे प्रकर्षेण वनितुं संभक्तुं । युद्धाय हि धीराः संभजंते ॥ वनतेस्तुमर्थे तवेन्प्रत्ययः । तादौ चेति गतेः प्रकृतिस्वरत्वं ॥ किंच ते तव संग्राममवासिनस्त्वय्य-न्यामन्यामन्यांश्चान्यांश्चान्यमन्यं प्रति ॥ कर्मव्यतिहारे सर्वनाम्नो द्विर्वचनं ॥ नद्यं नर्दि संतोषं समृद्धिं ॥ टुनदि समृद्धौ । पूर्वरूपत्वं बाधित्वा छांदसो यणादेशः ॥ सनिष्णत । संभजंते ॥ सनेर्लेटि सिब्बहुलमिति सिप् । इट् । व्यत्ययेन पुनः श्नाप्रत्ययः । आत्मनेपदेष्वनत इत्यदादेशे श्नाभ्यस्तयोरात इत्याकारलोपः । छांदसः टेरेत्वाभावः ॥ तथा श्रवस्यंतोऽन्नमिच्छंतो जयाल्लब्धमन्नं कांक्षंतः सनिष्णत । संगजंते ॥

उतो नो अस्या उषसो जुषेत ह्य१र्कस्य बोधि हविषो हवीमभिः स्वर्षाता हवीमभिः ।
यदिंद्र हंतवे मृधो वृषा वज्रिञ्चिकेतसि ।
आ मे अस्य वेधसो नवीयसो मन्म श्रुधि नवीयसः ॥ ६॥
उतो इति । नः । अस्याः । उषसः । जुषेत । हि । अर्कस्य । बोधि । हविषः । हवीमऽभिः ।
स्वःऽसाता । हवीमऽभिः ॥ यत् । इंद्र । हंतवे । मृधः । वृषा । वज्रिन् । चिकेतसि ।
आ । मे । अस्य । वेधसः । नवीयसः । मन्म । श्रुधि । नवीयसः ॥ ६॥

अयमिंद्रो नोऽस्माकं संबंधिनीमस्या उषसः ॥ कर्मणि षष्ठी ॥ एतामुषसं सुत्याहःसंबंधिनमुषःकालमुतो जुषेत । अपि नाम सेवेत । उषस्येवास्माकमयमिंद्रो यज्ञं गच्छेदित्यर्थः । हिः पूरणार्थः । गत्वा चार्कस्य हविषः ॥ पूर्ववत्कर्मणि षष्ठी ॥ अर्चनसाधनं हविर्हवीमभिर्ह्वनप्रकारविशेषैर्दत्तं हविस्ततो बोधि । अपि नाम जानीहि । किंच स्वर्षाता स्वर्गस्यान्यस्य सुखविशेषस्य वा संभजनस्थाने यज्ञे हवीमभिराह्वानैराहूतो भवेति शेषः । अस्मा-भिराहूतः सन् उषस्येवागत्य हविः स्वीकरोषीत्यर्थः । कस्मादिदमुच्यते । यद्यस्मात्कारणात् हे वज्रिन् वज्रयुक्तेंद्र मृधो हिंसकाञ्छत्रून् हंतवे हंतुं वृषा वर्षिता सन् कामानां चिकेतसि अवबुध्यसे ॥ कित ज्ञाने । जौहोत्यादिकः । लेट्यडागमः । नाभ्यस्तस्याचि पितीत्यत्र छंदसि बहुलमिति वचनाल्लघूपधगुणप्रतिषेधाभावः । अभ्यस्ताना-मादिरित्याद्युदात्तत्वं ॥ तस्माद्ब्रूमः । हे इंद्र मे मम मन्म मननीयं स्तोत्रमा श्रुधि । सर्वतः शृणु । कीदृशस्य मे । वेधसो मेधाविनः नवीयसो नवतरस्य । दीक्षितसंस्कारैः संस्कृतत्वान्नवीयस्त्वं । पुनर्विशिष्यते । नवीयसोऽति-शयेन नवनवतोऽसाधारणस्तुतिमतः । अत्र यजमानविशेषणैस्तत्कर्तृकं स्तोत्रमेव विशिष्टं भवति ॥

त्वं तमिंद्र वावृधानो अस्मयुरमित्रयंतं तुविजात मर्त्यं वज्रेण शूर मर्त्यं ।
जहि यो नो अघायति शृणुष्व सुश्रवस्तमः ।
रिष्टं न यामन्नप भूतु दुर्मतिर्विश्वाप भूतु दुर्मतिः ॥ ७॥
त्वं । तं । इंद्र । ववृधानः । अस्मऽयुः । अमित्रऽयंतं । तुविऽजात । मर्त्यं ।
वज्रेण । शूर । मर्त्यं ॥ जहि । यः । नः । अघऽयति । शृणुष्व । सुश्रवःऽतमः ।
रिष्टं । न । यामन् । अप । भूतु । दुःऽमतिः । विश्वा । अप । भूतु । दुःऽमतिः ॥ ७॥

हे इंद्र तुविजाताधत्स्तुत्या बहुभावमापन्न शूर विक्रांत त्वं ववृधानोऽत्यर्थं वर्धमानोऽस्मयुरस्मान् त्वद्भक्तान्कामयमानस्त्वममित्रयंतमस्मासु शत्रुत्वमाचरंतं मर्त्यं मरणस्वभावं तं मर्त्यं वज्रेण जहि ॥ हंतेर्ज इति जादेशः । तस्यासिद्धवद्त्रा भादित्यसिद्धत्वात् हेर्लुगभावः ॥ तमित्युक्तं कमित्याह । यो मर्त्यो नोऽस्माकमघा-यति अघं पापं दुःखं वेच्छति तं जहि ॥ अश्वाघस्यादित्यात्वं ॥ किंच सुश्रवस्तमोऽतिशयेन शोभनश्रवणस्त्वं शृणुष्व । श्रावयास्मद्वाक्यं । कीदृशं तदिति तदुच्यते । हे इंद्र त्वत्प्रसादाद्दुर्मतिर[illegible]विषया दुष्टा बुद्धिरप भूतु । अपगता भवतु ॥ छांदसः शपो लुक् । भूसुवोस्तिङीति गुणप्रतिषेधः ॥ न केवलं हिंसारूपा

अपि तु विश्वा सर्वापि क्रोधपरिवादादिरूपाप भूतु। तत्र दृष्टांतः। यामन् यामन्यध्वनि रिष्टं न। अध्वनः श्रमेण हिंसितं परिश्रांतं यथा दुर्मतिश्चौरादिविषया बाधते तद्वद्स्मान्बाधमाना दुर्मतिरपगच्छतु। यद्वा। यामनि मार्गे यद्वादिरूपे रिष्टमसुरकृतहिंसादिरूपं विघ्नं परिहरसि तद्वत् ॥ ॥२०॥

त्वया वयमिति षळृचं षष्ठं सूक्तं पारुच्छेपमात्यष्टमैंद्रं। युवं तमित्ययमैंद्रापार्वतोऽर्धर्चः। त्वया वयं षड्युवं तमैंद्रापार्वतोऽर्धर्चं इत्यनुक्रमणिका ॥ विनियोगो लैंगिकः ॥

त्वया वयं मघवन्पूर्व्ये धन इंद्रत्वोताः सासह्याम पृतन्यतो वनुयाम वनुष्यतः।
नेदिष्ठे अस्मिन्नहन्यधि वोचा नु सुन्वते।
अस्मिन्यज्ञे वि चयेमा भरे कृतं वाजयंतो भरे कृतं ॥१॥
त्वया। वयं। मघऽवन्। पूर्व्ये। धने। इंद्रत्वाऽऊताः। ससह्याम। पृतन्यतः।
वनुयाम। वनुष्यतः॥ नेदिष्ठे। अस्मिन्। अहनि। अधि। वोच। नु। सुन्वते।
अस्मिन्। यज्ञे। वि। चयेम। भरे। कृतं। वाजऽयंतः। भरे। कृतं ॥१॥

हे मघवन्। मघः सौख्यं। तद्वन्निंद्र त्वया साधनेन युक्ता वयं। अत एवेंद्रत्वोता अतिप्रबलेनेंद्रेण त्वया रक्षिताः संतः ॥ प्रत्ययोत्तरपदयोश्चेति त्वादेशः। छांदसमात्वं ॥ पृतन्यतः पृतनामात्मन इच्छतः प्रबलसेनायुक्ताञ्छत्रून् ससह्याम। अभिभवेम। तथा वनुष्यतोऽस्मत्प्रहारायागच्छतः शत्रून्वनुयाम। तेषामागमनात्पूर्वमेव वयं संभजेम। किंच पूर्व्ये धनेऽस्मिन्यज्ञे नेदिष्ठेऽत्यंतसंनिहितेऽस्मिन्नहन्यभिषवयुक्तेऽद्यतनेऽहनि सुन्वते यजमानाय तदर्थमधि वोच। तं हविष्प्रदं यजमानं यज्ञं वा नु क्षिप्रमधिकं ब्रूहि ॥ लोटि व्यत्ययेनाङ्। वच उम् ॥ किंच हे इंद्र वयं यजमाना भरे संग्रामे कृतं जयस्य कर्तारं त्वामुद्दिश्य तज्जयार्थं वाजयंतो हविर्लक्षणान्नमुपाचरंतो वि चयेम। स्तोत्रादिकं हविरादिकं वा विचिनुयाम ॥ चिनोतेर्व्यत्ययेन शप् ॥ पुनः कीदृशं त्वां। भरे देवानां संग्रामेऽसुरजये देवानां सम्यग्भरणे वा कृतं कर्तारं। भर इति संग्रामनाम भरतेर्वा हरतेर्वा। नि० ४. २४.। इति यास्कः ॥

स्वर्जेषे भर आप्रस्य वक्मन्युषर्बुधः स्वस्मिन्नंजसि क्राणस्य स्वस्मिन्नंजसि।
अहन्निंद्रो यथा विदे शीर्ष्णाशीर्ष्णोपवाच्यः।
अस्मत्रा ते सध्र्यक्संतु रातयो भद्रा भद्रस्य रातयः ॥२॥
स्वःऽजेषे। भरे। आप्रस्य। वक्मनि। उषःऽबुधः। स्वस्मिन्। अंजसि।
क्राणस्य। स्वस्मिन्। अंजसि॥ अहन्। इंद्रः। यथा। विदे। शीर्ष्णाऽशीर्ष्णा। उपऽवाच्यः।
अस्मऽत्रा। ते। सध्र्यक्। संतु। रातयः। भद्राः। भद्रस्य। रातयः ॥२॥

अयमिंद्रः स्वर्जेषे स्वर्गगमनसाधने भरे संग्रामे। युद्ध आभिमुख्येन हतस्य स्वर्गो द्वाविमौ पुरुषौ लोके सूर्यमंडलभेदिनौ। परा० ३. ३५.। इत्यादिस्मृतिषु प्रसिद्धः। आप्रस्यापनशीलस्य शत्रुवधायेतस्ततो व्याप्तस्य ॥ औणादिको रः ॥ शूरस्य वर्त्मनि मार्गभूते स्वस्मिन् स्वभूतेऽंजसि[illegible] कपटादिरहिते। पुनः स एव विशेष्यते। स्वस्मिन्नंजसि स्वकीयेऽंजसि मुख्ये महति संग्रामे। यद्वा। स्वस्मिन्नंजसि शची स्वयमेवाप्रच्छन्नत्वेनागते सति। अहन्। शत्रून् हिनस्ति। कस्य संग्राम इति तदुच्यते। आप्रस्यापनशीलस्य आ [illegible] प्रीणयितुर्वा उषर्बुध उषःकालेऽनुष्ठानाय प्रबुध्यमानस्य क्राणस्य यागं कुर्वाणस्य ॥ करोतेः शतरि छांदसः शपो लुक् ॥ अस्य यजमानस्य शत्रूनहन्। हिनस्ति। अतः कारणादयमिंद्रः शीर्ष्णा शीर्ष्णोपवाच्यः। सर्वेषां शिरसा प्रणम्यः स्तुत्यः ॥ शीर्षंश्छंदसि। पा० ६. १. ६०.। इत्युदात्तनिवृत्तिस्वरेणांतोदात्तत्वं। नित्यवीप्सयोरिति

द्विर्भावः ॥ तत्र दृष्टांतः । यथा विदे सर्वज्ञाय शिरसा प्रणतिः क्रियते स्तूयते च तथैनमित्यर्थः । यद्वा । यथा विदे येन प्रकारेण हंतव्यं शत्रुं जानासि तं तं प्रहंसि ॥ वेत्तेर्व्यत्ययेनात्मनेपदं । पुरुषव्यत्ययः । लोपस्त आत्मनेपदेष्विति तलोपः ॥ अथवा । यथा विदे यं यं विंदसे लभसे शत्रुं तं तं मारयसि । अतः कारणात्स्तुत्य इत्यर्थः ॥ अस्मिन्पक्षे छांदसो विकरणस्य लुक् । पूर्ववत्तलोपः ॥ किंच हे इंद्र ते रातयस्तव संबंधीनि धनानि दानान्यस्मचास्मास्त्रिव सध्रक् सहैकोद्योगेन संतु । भवंतु ॥ सहपूर्वादंचतेर्ऋत्विगित्यादिना क्विन् । सहस्य सध्रिरिति सध्र्यादेशः । अद्रिसध्र्योरंतोदात्तनिपातनं कृत्स्वरनिवृत्त्यर्थमिति स चांतोदात्तः । उदात्तस्वरितयोर्यण इति स्वरितः ॥ किंच भद्रस्य स्तुत्यस्य रातयोऽस्मासु दत्तानि दानानि भद्रा अतिस्थिराणि संतु ॥

तत्तु प्रयः प्रत्नथा ते शुशुक्वनं यस्मिन्यज्ञे वारमकृण्वत क्षयमृतस्य वारसि क्षयं ।
वि तद्वोचेरध द्वितांतः पश्यंति रश्मिभिः ।
स घा विदे अन्विंद्रो गवेषणो बंधुक्षिद्भ्यो गवेषणः ॥३॥
तत् । तु । प्रयः । प्रत्नऽथा । ते । शुशुक्वनं । यस्मिन् । यज्ञे । वारं । अकृण्वत । क्षयं ।
ऋतस्य । वाः । असि । क्षयं ॥ वि । तत् । वोचेः । अध । द्विता । अंतरिति । पश्यंति । रश्मिऽभिः ।
सः । घ । विदे । अनु । इंद्रः । गोऽएषणः । बंधुक्षित्ऽभ्यः । गोऽएषणः ॥३॥

हे इंद्र तत्तु खलु प्रसिद्धं प्रयो हविर्लक्षणमन्नं शुशुक्वनमाज्यादिसंयोगेन भृशं दीप्तं ॥ शुचेर्दीप्तिकर्मण एतद्रूपं ॥ ते तव स्वभूतं । प्रत्नथा पूर्वमितःपूर्वं यथा यागकाले हविस्ते तव स्वं भवति तथाद्यतनमपि । सर्वदा त्वामेव यजंत इति भावः ॥ प्रत्नपूर्वविश्वेत्यादिनेवार्थे थाल् । लित्स्वरः ॥ कीदृशं तदिति उच्यते । यज्ञे यागे यस्मिन् हविषि दातव्ये सति वारं वरणीयं क्षयं स्थानं वेदिलक्षणमकृण्वत कुर्वत्यृत्विजः । कस्तव विशेष इति चेत् उच्यते । ऋतस्य सत्यफलस्य यज्ञस्य वारसि क्षयं । निवासस्थानं संभक्तोऽसि । यद्वा । ऋतमित्युदकनाम । तस्य क्षयं स्थानं प्राप्तोऽसि । वृष्टिप्रदोऽसीत्यर्थः । अथवा । ऋतस्यादित्यस्य क्षयं स्थानं द्युलोकाख्यं वारसि । यजमानं गमयितासि । तत्तादृशं वक्ष्यमाणं कर्म वि वोचेः । विब्रूहि । अधातः कारणाद्द्वितांतर्द्वित्वोपेतयोर्द्यावापृथिव्योर्मध्येऽंतरिक्षे रश्मिभिरादित्यकिरणैः पश्यंति । मेघं निर्भिद्य रश्मिद्वारा प्रवर्षणरूपं कर्म सर्वे जनाः प्रत्यक्षतः पश्यंति । अस्मद्दत्तं हविरादित्यं प्रापयित्वा तद्रश्मिद्वारा वृष्टिं जनयसीत्येतत्सर्वैर्दृश्यत इत्यर्थः । इदानीं परोक्षतया स्तौति । स घ स खल्विंद्रो गवेषण उदकस्यान्वेषणशीलः । तथा बंधुक्षिद्भ्यो हविष्प्रदानादिना बंधुभावं प्राप्तवद्भ्यो यजमानेभ्यो गवेषणो गवां प्रसिद्धानामेषणकर्ता ॥ इषेर्बाहुलकात्कर्तरि ल्युट् । यद्वा । गवेष मार्गणे । पूर्ववल्ल्युट् ॥ यजमानफलस्य मृगयितेत्यर्थः । अनु उक्तक्रमेणैव कर्ता सन् विदे । विंदते । उदकप्राप्तिप्रकारं जानाति ॥

नू इत्था ते पूर्वथा च प्रवाच्यं यदंगिरोभ्योऽवृणोरप व्रजमिंद्र शिक्षन्नप व्रजं ।
ऐभ्यः समान्या दिशास्मभ्यं जेषि योत्सि च ।
सुन्वद्भ्यो रंधया कं चिदव्रतं हृणायंतं चिदव्रतं ॥४॥
नु । इत्था । ते । पूर्वऽथा । च । प्रऽवाच्यं । यत् । अंगिरःऽभ्यः । अवृणोः । अप । व्रजं ।
इंद्र । शिक्षन् । अप । व्रजं ॥ आ । एभ्यः । समान्या । दिशा । अस्मभ्यं । जेषि । योत्सि । च ।
सुन्वत्ऽभ्यः । रंधय । कं । चित् । अव्रतं । हृणायंतं । चित् । अव्रतं ॥४॥

हे इंद्र ते तव संबंधि कर्मेत्थेत्थमुक्तप्रकारं वक्ष्यमाणरूपं वा पूर्वथा पूर्वमिव पूर्वं यथा नु क्षिप्रं प्रवाच्यं सर्वैः स्तोतव्यं तद्वदि[illegible] स्तुत्यं ॥ नू इत्येत्यत्रैषामवादित्वात्प्रकृतिभावः ॥ कीदृशं तदिति तदुच्यते ।

यत्त्वमंगिरोभ्य एतन्नाम्नोत्पन्नेभ्यो महर्षिभ्यस्तेषामर्थाय व्रजमंतरिक्षे गच्छंतं मेघमपावृणोः अपवृतवानसि मेघमुत्पाट्य वृष्टिमुत्पादितवानसि। व्रज इति मेघनाम व्रजो वराह इति तन्नामसु पाठात्। किंच हे इंद्र व्रजं गवां समूहमपायद्भ्योऽपहृत्य तेभ्य एवांगिरोभ्यः शिक्षन् वितरन् रक्षितवानसि। यद्वा। पणिभिरपहृतं बिले स्थितं गवां व्रजमपहर्तुमपावृणोः। अपवृतद्वारमकरोः। किंच हे इंद्र एभ्य उक्तेभ्य ऋषिभ्यः समान्या दिशा समानया रीत्या तेभ्यो यथा ददासि तद्वदस्मभ्यमपि जेषि। धनं संग्रामं वा जय। तदर्थं योत्सि। युध्यस्व च॥ छांदसो विकरणस्य लुक्। व्यत्ययेन परस्मैपदं॥ किंच त्वं सुन्वद्भ्यस्त्वदर्थमभिषवं कुर्वद्भ्योऽस्मभ्यं कं चिदव्रतं सर्वमप्ययज्वानं यागविरोधिनं रंधय। बाधय। मदधीनं कुर्वित्यर्थः। न केवलमयज्वानं किंतु हृणायंतं चिदव्रतं॥ चिदित्यवकुत्सिते॥ अस्मासु रोषं कुर्वंतं तमेवायष्टारं स्वयं रोषवंतं वा। यद्वा। हृणायंतं चित् रोषं कुर्वंतमप्यव्रतमकर्माणं पुनर्हननासमर्थं कुर्वन् रंधय॥ हृणीङ् रोषे कंड्वादिः। व्यत्ययेनाकारः॥

सं यज्जनान् क्रतुभिः शूर ईक्षयद्धने हिते तरुषंत श्रवस्यवः प्र यक्षंत श्रवस्यवः।
तस्मा आयुः प्रजावदिद्बाधे अर्चंत्योजसा।
इंद्र ओक्यं दिधिषंत धीतयो देवाँ अच्छा न धीतयः॥५॥

सं। यत्। जनान्। क्रतुऽभिः। शूरः। ईक्षयत्। धने। हिते। तरुषंत। श्रवस्यवः।
प्र। यक्षंत। श्रवस्यवः॥ तस्मै। आयुः। प्रजाऽवत्। इत्। बाधे। अर्चंति। ओजसा।
इंद्रे। ओक्यं। दिधिषंत। धीतयः। देवान्। अच्छ। न। धीतयः॥५॥

यद्य इंद्रः शूरो विक्रांतः सन् जनान् सर्वान्प्राणिनः क्रतुभिः प्रज्ञाभिः समीक्षयत् सम्यगीक्षयति तत्तद्विषयान्। अंतर्यामिरूपेण सर्वेषां बुद्धिषु स्थित्वा तैर्विषयानुल्लेखयतीत्यर्थः। यद्वा। क्रतुभिः कर्मभिः सुकृतदुष्कृतरूपैर्निमित्तभूतैस्तत्तत्फलैर्योजयति। एवं प्रेरयति सति श्रवस्यवोऽन्नमिच्छंतो यजमाना धने गवादिरूपे हितेऽभिमते सति। यद्वा। हिते धनेऽभिप्रेते सति। तरुषंत। हिंसंति शत्रून्॥ तरुष्यतिर्वधकर्मा। छांदसे लुङि व्यत्ययेन च्लेरङ्। तरतेर्वा [illegible]यो विकरणाः॥ तरंतीत्यर्थः। अतः कारणात् श्रवस्यवोऽन्नं हविर्लक्षणमिंद्रायात्मने वेच्छंतः संतः प्र यक्षंत। प्रकर्षेण यजंते॥ छांदसे लुङि व्यत्ययेन क्सः॥ किंच तस्मा इत् तस्मै प्रसिद्धायेंद्रायैवायुर्हविर्लक्षणमन्नं प्रजावत् पुत्रादिसहितं भवति। तैः सहितैर्दीयत इत्यर्थः। किंच यजमाना ओजसा स्वकीयेन बलेन युक्ता बाधे शत्रूणां बाधने निमित्तभूते सति बाधितुं वा॥ कृत्यार्थे तवैकेन्केन्यत्वन इति केन्प्रत्ययः॥ अर्चंति। पूजयंति। यद्वा। तस्मा इद्यजमानायैव बाधे बले निमित्तभूते सति। बाध इति बलनाम बाधस्तविषीति तन्नामसु पाठात्। प्रजावत् पुत्राद्युपेतमायुरन्नं लब्धुमोजसा बलेन युक्ता अर्चंति। इंद्रं पूजयंति ऋत्विज इति शेषः। किंच धीतयः कर्मवंतो यजमाना इंद्र इंद्रसमीपे॥ गंगायां घोष इतिवत् तत्सामीप्यं लक्ष्यते॥ इंद्रलोक इत्यर्थः। तत्रौक्यमोको निवासस्थानं॥ स्वार्थे यत्॥ दिधिषंत। धारयंति॥ धिष शब्दे। अत्र धारणार्थः। जौहोत्यादिकः। व्यत्ययेनांतादेशः॥ त एव पुनर्विशेष्यंते। धीतयः स्वर्गसाधनकर्मवंतः संतो देवाँ अच्छा न देवानाभिमुख्येन प्राप्तुमिवौक्यं दिधिषंतेत्यन्वयः॥

अविवाक्येऽहनि मानसग्रहभक्षणानंतरं नक्षत्रेषु दृश्यमानेष्वध्वर्युप्रमुखाः सर्वे युवं तमित्येतां जपेयुः। गार्हपत्ये जुह्वतीति खंडे सूचितं। युवं तमिंद्रापर्वता पुरोयुधेति जपंतः। आ० ८. १३.। इति॥

युवं तमिंद्रापर्वता पुरोयुधा यो नः पृतन्यादप तंतमिद्धतं वज्रेण तंतमिद्धतं।
दूरे चत्ताय च्छंत्सद्गहनं यदिनक्षत्।
अस्माकं शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः॥६॥

यु॒वं । तं । इ॒न्द्रा॒प॒र्व॒ता॒ । पु॒रः॒ऽयुधा॑ । यः । नः॒ । पृ॒त॒न्यात् । अप॑ । तंऽतं॑ । इत् । ह॒तं॒ । वज्रे॑ण । तंऽतं॑ । इत् । ह॒तं॒ ॥ दू॒रे । च॒त्ताय॑ । छ॒न्त्स॒त् । गह॑नं । यत् । इन॑क्षत् । अ॒स्माकं॑ । शत्रू॑न् । परि॑ । शू॒र॒ । वि॒श्वतः॑ । द॒र्मा । द॒र्षी॒ष्ट॒ । वि॒श्वतः॑ ॥ ६ ॥

हे इंद्रापर्वता । इंद्रः प्रसिद्धः । पर्वतः पर्ववान्मेघः । तदभिमानी देवः । तौ युवं युवां पुरोयुधा संग्रामे पुरतो योद्धारौ नोऽस्माकं यः शत्रुः पृतन्यात् अस्मान् हंतुं पृतनामात्मन इच्छति तं तमित् सर्वमपि शत्रुमप हतं । नाशयतं ॥ हंतेर्लोट्यनुदात्तोपदेशेत्यनुनासिकलोपः ॥ केन साधनेनेति तदुच्यते । तं तमित् सर्वमपि शत्रुं हंतुं वज्रेण साधनेन प्राप्नुतं । ईदृक् सामर्थ्यमस्तीति दर्शयति । यद्वो वज्रः ॥ लिंगव्यत्ययः ॥ दूरे चत्तायात्यंत-दूरदेशे गताय ॥ चातयतेर्वा नाशकर्मणः ॥ नष्टाय । अदर्शनमापन्नायेत्यर्थः ॥ ग्रसितस्कभितेत्यादौ निपातना-दिडभावः ॥ तादृशं शत्रुं छंत्सत् छंदयति कामयते हंतुं ॥ छंदतेः कांतिकर्मण इदं रूपं ॥ किंच गहनं दुरवगाहं स्थानमतिकठिनं हृदयं शत्रुसमीपं वेनचत् व्याप्नोति ॥ नच गतौ । छांदस इकारोपजनः । इनचतिर्वा प्रक्षत्यंतरं ॥ इदानीमिंद्र एव स्तूयते । हे शूर शौर्योपेतेंद्र अस्माकं विरोधिनः शत्रून् विश्वतो विश्वान् ॥ सार्वविभक्तिकस्तसिल् ॥ परि परितो विश्वतो विश्वैरुपायैर्दर्षीष्ट । दारयसि । किंच दर्मा शत्रूणां दारकः ॥ दारयतेरन्येभ्योऽपि दृश्यंत इति मनिन् । णिलोप उदात्तनिवृत्तिस्वरेण मनिन उदात्तत्वं । ह्रस्वश्छांदसः । यद्वा । दॄ भये । घटादित्वान्मितां ह्रस्व इति ह्रस्वत्वं ॥ तव पूर्वोक्तो वज्रो विश्वतः सर्वान्शत्रून् सर्वैरुपायैर्वा दर्षीष्ट । दारयति । यद्वा । दर्मा शत्रूणां दारक इंद्रो दर्षीष्ट । कार्त्स्न्येन दारयति शत्रून् ॥ ॥ २१ ॥

उभे पुनामीति सप्तर्चं सप्तमं सूक्तं पारुच्छेपमैंद्रं । आद्या त्रिष्टुप् । अभिव्लग्येत्याद्यास्तिस्रोऽनुष्टुभः । पिशंग-भृष्टिमित्येषा गायत्री । अवर्मह इत्येषा धृतिः । वनोति हीत्यनभिधानादत्यष्टिः । अत्रानुक्रमणिका । उभे सप्ताद्या त्रिष्टुप् तिस्रोऽनुष्टुभो गायत्री धृतिरिति ॥ अस्य सूक्तस्य विनियोगमाह शौनकः । उभे पुनामीति पुरा रिपुघ्न्यस्तु प्रकीर्तिताः । ता जपन् प्रयतो नित्यमिष्टान् कामान्समश्नुते । ता जपन् हंति रक्षांसि सपत्नांश्च नियच्छति । ऋग्वि० १. २५. ॥

उ॒भे पु॑नामि॒ रोद॑सी ऋ॒तेन॒ द्रुहो॑ दहामि॒ सं म॒हीर॑निं॒द्राः ।
अ॒भि॒व्लग्य॒ यत्र॑ ह॒ता अ॒मित्रा॑ वैलस्था॒नं परि॑ तृ॒ळ्हा अशे॑रन् ॥ १ ॥
उ॒भे इति॑ । पु॒ना॒मि॒ । रोद॑सी॒ इति॑ । ऋ॒तेन॑ । द्रुहः॑ । द॒हा॒मि॒ । सं । म॒हीः । अ॒निं॒द्राः । अ॒भि॒ऽव्लग्य॑ । यत्र॑ । ह॒ताः । अ॒मित्राः॑ । वै॒ल॒ऽस्था॒नं । परि॑ । तृ॒ळ्हाः । अशे॑रन् ॥ १ ॥

हे इंद्र ऋतेन त्वदुद्देशेन यज्ञेन बलेनोभे रोदसी द्यावापृथिव्यौ पुनामि । लोकद्वयं हिंसकानां तवाय-ष्टॄणां वापगमनेन पावयामि । किंच भूलोकेऽनिंद्रा इंद्रविरहितानामाश्रयभूता महीरुर्वीः अत एव द्रुहो द्रोहिणामाधारभूतत्वात्स्वयमपि द्रोग्ध्रीः सं दहामि । संभूयैकहेलया दहामि । पुनस्ता एव विशेष्यंते । यत्र यासु भूमिष्वमित्राः शत्रवोऽभिव्लग्याभितो गत्वा हताः सर्वतः प्राप्ता अस्माभिर्घातिता वा ॥ व्लगतिर्गतिकर्मा । छांदसो धातुः ॥ ते सर्वे परि तृळ्हा हिंसिताः ॥ तृह्र हिंसार्थः । उदित्त्वादस्य विभाषेतीट्प्रतिषेधः ॥ हिंसिताः संतोऽशेरन् । शयनं प्राप्ताः ॥ शेतेर्व्यत्ययेन परस्मैपदं । शीङो रुट् । पा० ७. १. ६. । शीङः सार्वधातुके गुणः ॥ वैलस्थानं । बिलशब्दो गर्तसमानार्थः । स च गर्तः श्मशानवचनः । अतोऽयमपि श्मशानवाची । अथवा बिलसंबंधिस्थानं नागलोकः । तत्र वाशेरन् ॥ यद्वा । बिल भेद इति धातुः । घञर्थे कः । स्वार्थिकोऽण् । तत्र शवाः भिद्यंत इति वैलस्थानं श्मशानं ॥ तत्र त्वया हता भूमिं श्मशानवत्कृत्वा सर्वत्र शेरते । तान्द-हामीत्यर्थः ॥

अ॒भि॒व्लग्या॑ चिदद्रिवः शी॒र्षा या॑तु॒मती॑नां ।
छि॒न्धि व॑टू॒रिणा॑ प॒दा म॒हाव॑टूरिणा प॒दा ॥ २ ॥

अभिऽवृग्य॑ । चित् । अद्रिऽवः । शीर्षा । यातुऽमतीनां ।
छिंधि । वटूरिणा॑ । पदा । महाऽवटूरिणा । पदा ॥ २ ॥

अद्रिवो वैरिणां भक्षक यद्वाद्रिर्मेघस्तद्वन्निंद्र त्वं यातुमतीनां हिंसावतीनां सेनानां । यद्वा । यातनसाधनान्यायुधानि यातूनि तद्वतीनां । अथवा । यातवो रक्षांसि तद्वतीनां सेनानां ॥ कर्मणि षष्ठी ॥ शत्रूणां सेनाः । शीर्षा शीर्षाण्यभिवृग्या चिदभितः प्राप्यैव छिंधि । चूर्णय । यद्वा । तासां संबंधीनि रथादीनि छिंधि । केन साधनेनेति तदुच्यते । वटूरिणा पदा वेष्टनशीलेन सर्वव्यापिना त्वदीयपादेन । अतिविस्तृतेनेत्यर्थः । यद्वा । वटूरिणा पदा वेष्टनशीलेन हस्तिनः संबंधिना पादेन । ऐरावतपादेनेत्यर्थः । न केवलेन येन केन पादेनेत्याह । महावटूरिणा पदा महाविष्टनवता स्वीयेनैरावतसंबंधिना वा पादेन छिंधि । चूर्णय ॥ वट वेष्टने । खर्जिपिंज्यादिभ्य ऊरोलचौ । उ॰ ४. ९०. । इत्यूरप्रत्ययः । अत इनिठनाविती निः ॥

अवा॑सां मघवञ्जहि शर्धो॑ यातुमतीनां । वैलस्थानके अर्मके महावैलस्थे अर्मके ॥ ३ ॥
अव॑ । आसां । मघऽवन् । जहि । शर्धः । यातुऽमतीनां । वैलऽस्थानके । अर्मके ।
महाऽवैलस्थे । अर्मके ॥ ३ ॥

हे इंद्र मघवन् धनवन् आसां यातुमतीनां । यातनसाधनान्यायुधानि यातूनि । तद्वतीनां यातुधानवतां वा सेनानां शर्धो बलमव जहि । चूर्णय । तथा कृत्वा चार्मके कुत्सिते शवैररणीये वैलस्थानके कुत्सिते पूर्वोक्तलक्षणे श्मशाने क्षपयेति शेषः । यद्वा । वैलस्थानके बिलसंबंधिनि कुत्सिते स्थानेऽंधकारावृतेऽधोलोके स्थापयेति शेषः । ननु यत्र क्वचित्क्षुद्रे नेत्याह । महावैलस्थे सर्वैर्गंतव्ये महाश्मशाने नागलोके वा । पुनः कीदृशे । अर्मके कुत्सिते गतासुभिररणीये ॥

यासां॑ तिस्रः पंचाशतो॑ऽभिव्लंगैरपावपः । तत्सु ते॑ मनायति तकत्सु ते॑ मनायति ॥ ४ ॥
यासां॑ । तिस्रः । पंचाशतः । अभिऽव्लंगैः । अपऽअव॑पः । तत् । सु । ते । मनायति ।
तकत् । सु । ते । मनायति ॥ ४ ॥

हे इंद्र यासां पूर्वमंत्रोक्तलक्षणानां सेनानां तिस्रः पंचाशतः त्रिगुणितपंचाशत्संख्यां सार्धशतमभिव्लंगैरभिगमनैः ॥ व्लंगतिर्गतिकर्मेत्युक्तं ॥ अभिगम्यापावपः नाशितवानसि । हे इंद्र तत्तादृशं सेनावधादिरूपं कर्म सु मनायति । सुष्ठु संभावयतीत्यर्थः । किंच हे इंद्र ते तवाध्यर्धशतशत्रुसेनाजयरूपं महदपि तकदिति सु मनायति । अत्यल्पमिदमिति सुष्ठु मन्यते ॥

पिशंगभृष्टिमंभृणं पिशाचिमिंद्र सं मृण । सर्वं रक्षो नि बर्हय ॥ ५ ॥
पिशंगऽभृष्टिं । अंभृणं । पिशाचिं । इंद्र । सं । मृण । सर्वं । रक्षः । नि । बर्हय ॥ ५ ॥

हे इंद्र पिशंगभृष्टिमीषद्रक्तवर्णं अंभृणमतिभयंकरं शब्दायमानं ॥ भ्रण शब्दे । यङ्लुगंतात्पचाद्यचि छांदसो भलोपश्च ॥ यद्वा । महांतं । अतिप्रवृद्धमित्यर्थः । अंभृण इति महन्नाम अंभृणो माहिन इति तत्र पाठात् । उक्तविधिं पिशाचिं पिशाचविशेषं । जरामित्येके । सं मृण । [illegible] । न केवलं तमेकं किंतु सर्वं रक्षो रक्षणनिमित्तभूतं राक्षसादिकं नि बर्हय । निषूदय ॥ बृह हिंसायां चौरादिकः ॥ नामय । वधकर्मैतत् नितोशयति निबर्हयतीति तत्रोक्तत्वात् ॥

दशरात्रस्य षष्ठेऽहनि प्रउगशस्त्र ऐंद्रतृचस्यावर्मे इंद्रेत्यादिके प्रथमाद्वितीये । षष्ठस्येति खंडे सूचितं । अवर्मह इंद्र वृषन्निंद्र । आ॰ ८. १. । इति ॥

अवर्महं इंद्र दादृहि श्रुधी नः शुशोच हि द्यौः क्षा न भीषाँ अद्रिवो
घृणान्न भीषाँ अद्रिवः ॥ शुष्मिंतमो हि शुष्मिभिर्वधैरुग्रेभिरीयसे ।
अपूरुषघ्नो अप्रतीत शूर सत्वभिस्त्रिसप्तैः शूर सत्वभिः ॥ ६॥

अवः । महः । इंद्र । दृदृहि । श्रुधि । नः । शुशोच । हि । द्यौः । क्षाः । न । भीषा । अद्रिऽवः ।
घृणात् । न । भीषा । अद्रिऽवः ॥ शुष्मिन्ऽतमः । हि । शुष्मिऽभिः । वधैः । उग्रेभिः । ईयसे ।
अपुरुषऽघ्नः । अप्रतिऽइत । शूर । सत्वऽभिः । त्रिऽसप्तैः । शूर । सत्वऽभिः ॥ ६ ॥

हे इंद्र महो महतो मेघस्य ॥ कर्मणि षष्ठी ॥ महांतं जलधारिणं मेघं महांतं वृत्रं वावरवस्तादवाङ्मुखं ॥ पूर्वाधरेत्यादिनासिप्रत्ययोऽवादेशश्च । अम्नरूधरवरित्युभयथा छंदसि । पा॰ ८. २. ७०. । इति रेफः ॥ दृदृहि । विदारय । किंच नोऽस्मद्वाक्यं श्रुधि । शृणु । हे अद्रिवः । अद्रिर्मेघः । तद्वन्निंद्र हि यस्मात्कारणाद्द्यौर्द्युलोको देवानामाश्रयभूतः शुशोच शोचति । वृष्ट्यभावेन हविराद्यभावादिति भावः । तत्र दृष्टांतः । क्षा न ॥ क्षेति भूनाम । क्षायंति निवसंत्यस्यामिति क्षाः । क्षै जै षै क्षये । अधिकरणे क्विप् ॥ क्षा न सर्वनिवासाश्रयभूमिरिव । सा यथा भीषा वृष्ट्यभावात्सस्यादिशोषभीत्या शोचति तद्वत् । लोकद्वयमपि वृष्ट्यभावेन शोचतीत्यर्थः । असुरपक्षं लोकद्वयमावृत्य प्रवर्धमानं धर्तुमसहमाने द्यावापृथिव्यौ शोचत इत्यर्थः । तस्माच्छ्रुधीति पूर्वत्रान्वयः । भीतौ दृष्टांतः । हे अद्रिवः शत्रूणां भक्षक । यद्वा । अद्रिर्वज्रः । तेन तद्वन् । हे इंद्र घृणाद्भीषा न दीप्ता-दग्नेर्मूर्त्यंतरात्त्वष्टुर्भीत्येव । त्वष्टुर्भीत्या पूर्वं यथा द्यावापृथिव्यौ शोचतस्तद्वत् । अत्रेतिहासमाहुः । पूर्वं जगति महांधकारेणावृते सति देवा विचिंत्याग्निं प्रार्थितवंतः । स च त्वष्टृरूपेण द्यावापृथिवीभ्यां सकाशात्तमो व्युदस्यन्नुदपद्यत । तं दृष्ट्वा द्यावापृथिव्यौ बिभ्यतुरिति । स चोभे त्वष्टुर्बिभ्यतुः । ऋ॰ १. ९५. ५. । इत्यादिश्रुतितोऽवगंतव्यः । यद्वा । घृणः केवलोऽग्निः । तस्माद्यथा बिभीतस्तद्वत् । सा च भीतिररेजेतां रोदसी । ऋ॰ १. ३१. ३. । इत्यादिश्रुतितोऽवगंतव्या । तादृशभीतिं वृष्टिप्रदानेन परिहरेत्यर्थः । हे इंद्र त्वं शुष्मिभिर्बलैः शुष्मिंतमो हि । अतिशयेन बलवान् खलु । अतः कारणादुग्रेभिरुद्गूर्णैरतिक्रूरैर्वधैस्तदुपायैः सहितस्त्वमीयसे । शत्रून् मेघान्वा गच्छसि ॥ ईङ् गतौ । दैवादिकत्वात् श्यन् ॥ यद्वा । शुष्मिभिर्वधैरिति संबंधः । हे शूर विक्रांत सत्वभिरप्रतीतावसन्नै रक्षःप्रभृतिभिरप्रतिगत युद्धे शत्रुभिरनाक्रांत । यद्वा । सत्वभिः प्राणिभिरसंस्कृतमनस्कै-रनधिगत । अपुरुषघ्नः पौरुषोपेतानां यजनसमर्थानामहननस्त्वं । त्रिसप्तैः सत्वभिस्त्रिभिः सप्तभिर्वा सत्वभि-रनुचरैरुपेतः सन् । ईयस इत्यन्वयः ॥

प्रातःसवने ब्राह्मणाच्छंसिनः प्रस्थितयाज्यायाः पुरस्ताद्वनोति हीत्येषा प्रक्षेपणीया । तत्रैव खंडे सूचितं । वनोति हि सुन्वन्क्षयं परीणसो मो षु वो अस्मदभि तानि पौंस्या । आ॰ ८. १. । इति ॥

वनोति हि सुन्वन्क्षयं परीणसः सुन्वानो हि ष्मा यजत्यव द्विषो देवानामव द्विषः ।
सुन्वान इत्सिषासति सहस्रा वाज्यवृतः ।
सुन्वानायेंद्रो ददात्याभुवं रयिं ददात्याभुवं ॥ ७॥

वनोति । हि । सुन्वन् । क्षयं । परीणसः । सुन्वानः । हि । स्म । यजति । अव । द्विषः ।
देवानां । अव । द्विषः ॥ सुन्वानः । इत् । सिसासति । सहस्रा । वाजी । अवृतः ।
सुन्वानाय । इंद्रः । ददाति । आऽभुवं । रयिं । ददाति । आऽभुवं ॥ ७ ॥

हे इंद्र सुन्वन् त्वामुद्दिश्याभिषवं कुर्वन्यजमानः क्षयं सर्वैर्वस्तव्यं गंतव्यं वा गृहं वनोति हि । त्वत्प्रसादात्सं-भजते । हिः प्रसिद्ध्यर्थः । किंच सुन्वानो हि सोमयागं कुर्वाण एव परीणसः परितो नद्धान् संबद्धान् द्विषो

द्वेष्टृनेव यजति। नाशयति। न केवलं यागद्वेषिणः देवानां द्विषोऽप्येव यजति। किंच सुन्वान इदभिषवोपलक्षितं यागं कुर्वाणो हे इंद्र त्वत्प्रसादाद्वाजी वाजवानन्नवान् अवृतः परैरनाक्रांतः सन् सहस्रा सहस्राण्यपरिमितानि गवादिधनानि सिषासति। साधयितुं संभक्तुं वेच्छति ॥ सनेः सनि सनीवंतर्धेति विकल्पनादिडभावे जनसनखनेत्यात्वं ॥ केनेदं लभ्यत इति तत्राह। सुन्वानायेंद्रमुद्दिश्य सोमयागं कुर्वाणाय यजमानाय वायमिंद्र आभुवं समंताद्भवनशीलं तथाभुवं पुनर्भवनशीलमतिसमृद्धं रयिं गवादिरूपं धनं ददाति। प्रयच्छति। तस्मात्सुन्वानः सिषासतीत्यर्थः ॥ ॥२२॥ ॥१९॥

विंशेऽनुवाके षट् सूक्तानि। तत्रा त्वा जुव इति षड्चं प्रथमं सूक्तं पारुच्छेपमात्यष्टं। त्वं नो वायवित्यंत्याष्टिश्चतुःषष्ट्यक्षरा। वायव्यं त्वित्युच्यमानत्वादिदमुत्तरं च वायुदेवत्यं। अत्रानुक्रमणिका। आ त्वा पड्वायव्यं त्वंत्याष्टिरिति ॥ विनियोगो लैंगिकः ॥

आ त्वा जुवो रारहाणा अभि प्रयो वायो वहंत्विह पूर्वपीतये सोमस्य पूर्वपीतये।
ऊर्ध्वा ते अनु सूनृता मनस्तिष्ठतु जानती।
नियुत्वता रथेना याहि दावने वायो मखस्य दावने ॥१॥

आ। त्वा। जुवः। ररहाणाः। अभि। प्रयः। वायो इति। वहंतु। इह। पूर्वऽपीतये। सोमस्य। पूर्वऽपीतये ॥ ऊर्ध्वा। ते। अनु। सूनृता। मनः। तिष्ठतु। जानती। नियुत्वता। रथेन। आ। याहि। दावने। वायो इति। मखस्य। दावने ॥१॥

हे वायो त्वा त्वां जुवो गमनशीला ररहाणाः शीघ्रगामिनो बलवंतो वा सामर्थ्यान्नियुत्संज्ञका अश्वाः ॥ रहि गतौ। लिटः कानच्। छांदसोऽनुनासिकलोपः ॥ इहास्मिन्यज्ञे प्रयश्चरुपुरोडाशादि हविर्लक्षणमन्नं वहंतु। प्रापयंतु। किमर्थं। पूर्वपीतये पूर्ववत्पानाय। पुनः किमर्थं। पूर्वपीतय इतरदेवेभ्यः पुरा पानाय ॥ मरुद्वृधादित्वात्पूर्वपदांतोदात्तत्वं ॥ किंच हे वायो ते तव संबंधि मनोऽनु सूनृता प्रियसत्यात्मिका स्तुतिरूपास्मदीया वाक् तिष्ठतु। आश्रित्य सर्वदा वर्ततां। हर्षयत्वित्यर्थः। सूनृतेति वाङ्नाम सूनृता ब्रह्मेति तन्नामसूक्तत्वात्। ऊर्ध्वोन्नता तथा जानती तव गुणान्विशेषेणावगच्छंती। सोमपानार्थं स्तुत्यर्थं च हे वायो मखस्य यज्ञस्य दावने दातव्याय हविषि तत्स्वीकाराय। पुनः किमर्थं। दावनेऽस्मभ्यमभिमतदानाय ॥ उभयत्र ददातेः कर्मणि भावे च क्रमेणौणादिको वनिः। छांदस उपधालोपः ॥ नियुत्वता रथेन नियुद्भिर्युक्तेन रथेना याहि। आगच्छ ॥

मंदंतु त्वा मंदिनो वायविंदवोऽस्मत्क्राणासः सुकृता अभिद्यवो
गोभिः क्राणा अभिद्यवः ॥ यद्ध क्राणा इरध्यै दक्षं सचंत ऊतयः।
सध्रीचीना नियुतो दावने धिय उप ब्रुवत ईं धियः ॥२॥

मंदंतु। त्वा। मंदिनः। वायो इति। इंदवः। अस्मत्। क्राणासः। सुऽकृताः। अभिऽद्यवः। गोभिः। क्राणाः। अभिऽद्यवः ॥ यत्। ह। क्राणाः। इरध्यै। दक्षं। सचंते। ऊतयः। सध्रीचीनाः। निऽयुतः। दावने। धियः। उप। ब्रुवते। ईं। धियः ॥२॥

हे वायो त्वा त्वामस्मदस्माकं संबंधिन इंदवः क्लेदयितारः सोमा मंदंतु। मादयंतु ॥ व्यत्ययेन परस्मैपदं ॥ कीदृशाः सोमाः। मंदिनो मादयितारः क्राणासः कुर्वाणाः स्वकार्यं हर्षादिकं सुकृता अभि[illegible]गोधनग्रहणादिभिः सुष्ठु कृताः अभिद्यवोऽभितो द्योतयंतः गोभिर्वाग्भिर्मंत्ररूपाभिः क्राणाः क्रियमाणा हूयमानाः। यद्वा। गोभिर्गंतृभिराहवनीयं प्रत्यानेतृभिः क्राणा हूयमानाः ॥ करोतेः शानच्। छांदसः शपो

लुक् ॥ तथाभिद्यवोऽभिगंतारः । हे वायो यद्यस्मात्कारणात् । ह्शब्दः प्रसिद्धौ । दृत्नमस्मद्यागदेशं प्रति गंतुमुत्साहवंतं समर्धयितारमीं त्वां नियुत एतत्संज्ञकास्त्ववाश्वा दावने दानाय हविःस्वीकारनिमित्तं धियः कर्माण्युद्दिश्य सचंते त्वां संगच्छंते यागदेशं वा । किमर्थं । इरध्यै प्रापयितुं परिचरितुं वा ॥ ईर गतौ । तुमर्थे कध्यैप्रत्ययः । ह्रस्वश्छांदसः ॥ इरध्यतिः परिचरणकर्मा इरध्यति विधेमेति तन्नामसूक्तत्वात् ॥ कीदृशास्ताः । क्राणाः स्वव्यापारं रथवाहनादिकं कुर्वाणाः । क्राणाः कुर्वाणा इति यास्कः । नि॰ ४. १९. । ऊतयो रक्षणवत्यः प्रीतियुक्ता वा तथा सध्रीचीनास्त्वया सहांचंत्यो गच्छंत्यः ॥ सहस्य सध्रिर्विभाषांचेरिति स्वार्थे खः । व्यत्ययेनांतोदात्तः ॥ किंच धियः कर्मवंतो बुद्धिमंतो वा ऋत्विजो यजमाना वोप ब्रुवते । उपेत्य ब्रुवंति स्वाभिमतं विज्ञापयंति वा ॥

वा॒युर्यु॑ङ्क्ते॒ रोहि॑ता वा॒युर॑रु॒णा वा॒यू र॒थे अ॑जि॒रा धु॒रि वोळ्ह॑वे॒
वहि॑ष्ठा धु॒रि वोळ्ह॑वे ॥ प्र बो॑धया॒ पुर॑न्धिं जा॒र आ स॑स॒तीमि॑व ।
प्र च॑क्षय॒ रोद॑सी वासयो॒षसः॒ श्रव॑से वासयो॒षसः॑ ॥३॥

वा॒युः । यु॒ङ्क्ते॒ । रोहि॑ता । वा॒युः । अ॒रु॒णा । वा॒युः । र॒थे । अ॒जि॒रा । धु॒रि । वोळ्ह॑वे
वहि॑ष्ठा । धु॒रि । वोळ्ह॑वे ॥ प्र । बो॒ध॒य॒ । पुर॑म्ऽधिम् । जा॒रः । आ । स॒स॒तीम्ऽइ॑व ।
प्र । च॒क्ष॒य॒ । रोद॑सी॒ इति॑ । वा॒स॒य॒ । उ॒षसः॑ । श्रव॑से । वा॒स॒य॒ । उ॒षसः॑ ॥३॥

अयं वायू रोहिता रोहितवर्णावश्वौ धुरि धारणप्रदेशे रथस्याग्रभागे यद्वा भारवहने युंक्ते । क्वचिद्योजयति । तथा क्वचिदरुणारुणवर्णौ धुरि युंक्ते । तथाजिराजिरौ गमनशीलौ वर्णविशेषयुक्तौ कदाचिद्युंक्ते । यद्वा । एतदुभयत्र संबध्यते । किमर्थं युंक्त इति तदाह । वोळ्हवे धुरं वोढुं भारवहनाय । किंच वहिष्ठा वहिष्ठावतिशयेन वोढारावश्वौ ॥ वोढृशब्दादिष्ठनि तुरिष्ठेमेयःस्विति तृलोपः । ढत्वादिकमसिद्धत्वान्निवर्तते । द्विवचनस्याकारः ॥ धुरि वोळ्हवे महद्भारं वोढुं महति भारे वोढव्ये सति । पुनःपुनर्वायुग्रहणमश्वयोजनवचनं चातिशीघ्रमागच्छतीति ज्ञापनार्थं । इदानीं प्रत्यक्षेणाह । हे वायो पुरंधिं बहुप्रज्ञं सामर्थ्याद्यजमानमिति गम्यते । पुरंधिर्बहुधीरिति यास्कः । नि॰ ६. १३. । तं प्र बोधय । रथेन शीघ्रमागत्य प्रज्ञापय हविःस्वीकारायेति भावः । तत्र दृष्टांतः । जारः पारदारिक आ ससतीमुपपत्यागमनध्यानेनेषत्स्वपंतीं पुरंधिमिव प्रकृष्टशरीरधारिणीं योषितमिव । तां यथा स्वसंकेतेन स प्रबोधयति तद्वत्त्वमपि कर्मव्यग्रेणेषत्स्वपंतं यजमानं प्र बोधय । किंच तदर्थं रोदसी द्यावापृथिव्यौ प्र चक्षय । प्रकर्षेण प्रख्यापय । प्रकाशयेत्यर्थः । तत्प्रकाशार्थमुषसो वासय । उषःकालानपि यथावत्स्थापय । प्रभातं कुर्वित्यर्थः । पुनस्तदेव प्रार्थ्यते । श्रवसे । श्रव इत्यन्ननाम । तव हवीरूपान्नस्वीकारायोषसो वासय ॥

तुभ्य॑मु॒षासः॒ शुच॑यः परा॒वति॑ भ॒द्रा वस्त्रा॑ तन्वते॒ दंसु॑ र॒श्मिषु॑ चि॒त्रा नव्ये॑षु र॒श्मिषु॑ ।
तुभ्यं॑ धे॒नुः स॑ब॒र्दुघा॒ विश्वा॒ वसू॑नि दोहते ।
अज॑नयो म॒रुतो॑ व॒क्षणा॑भ्यो दि॒व आ व॒क्षणा॑भ्यः ॥४॥

तुभ्य॑म् । उ॒षसः॑ । शुच॑यः । प॒रा॒ऽवति॑ । भ॒द्रा । वस्त्रा॑ । त॒न्व॒ते॒ । दम्ऽसु॑ । र॒श्मिषु॑ ।
चि॒त्रा । नव्ये॑षु । र॒श्मिषु॑ ॥ तुभ्य॑म् । धे॒नुः । स॒बः॒ऽदुघा॑ । विश्वा॑ । वसू॑नि । दो॒ह॒ते॒ ।
अज॑नयः । म॒रुतः॑ । व॒क्षणा॑भ्यः । दि॒वः । आ । व॒क्षणा॑भ्यः ॥४॥

हे वायो तुभ्यं त्वदर्थमुषास उषसः पूर्वोक्तरीत्या त्वया प्रकाशिताः शुचयः शुद्धा दीप्ता वा परावत्यत्यंतदूरदेशेऽंतरिक्षे दंसु दंसेषु कर्मवत्सु । यद्वा । गृहनामैतत् ॥ अंत्यलोपश्छांदसः ॥ गृहवदाच्छादकेषु । रश्मिषु

स्वकीयेषु तैर्भद्रा भंदनीयानि कल्याणानि वस्त्राच्छादनयोग्यानि वस्त्राणि तन्वते । विस्तारयंति । यद्वा । उषसो दंसु यागगृहेषु देवयजनेषु रश्मिषु होमाय प्रदीप्ताग्निज्वालावत्स्वागताय तुभ्यं भद्रा वस्त्रा तन्वते । अग्निज्वाला एव वस्त्राणि विस्तारयंतीत्यर्थः । उषःकालेऽग्नीनां प्रज्वाल्यमानत्वात्ता एव वस्त्राणीत्युपचर्यते । ननु केवलं साधारणानि वस्त्राणि नेत्याह । नव्येषु नूतनेषु स्तूयमानेषु ॥ णु स्तुतौ । अचो यत् । वांतो यि प्रत्यय इत्यवादेशः । यतोऽनाव इत्याद्युदात्तत्वं ॥ रश्मिषु चित्राणि नानावर्णयुक्तान्याश्चर्यभूतानि तन्वते । उषःकाले रश्मीनां नानावर्णत्वादिति भावः । अग्निद्वारिति पक्षे ज्वालानां कालीकरालीत्यादिरूपेण नाना- वर्णत्वाच्चित्रत्वं । किंच हे वायो तुभ्यं त्वदर्थं त्वद्यागार्थमेव धेनुर्घृतादिना प्रीणयित्री गौः । जातावेकवचनं । सबर्दुघा । सबरित्यमृतनाम । तस्य दोग्ध्री ॥ दुहः कब्घश्चेति कप् ॥ सती विश्वा वसूनि सर्वाणि धनान्याज्या- दिरूपाणि दोहते । स्वयमेव दुग्धे । प्रीणयतीत्यर्थः ॥ कर्मकर्तरि न दुहस्नुनमां । पा० ३. १. ८९. । इति यग- भावः । छांदसः शपो लुगभावः ॥ कस्तत्र विशेष इति चेत् उच्यते । हे वायो दिवो दीप्तादंतरिक्षान्मरुत एतन्नामकान् मेघं विशीर्य वृष्ट्युत्पादकान् त्वदंशभूतान्देवानजनयः । जनयसि । उत्पादयसि । किमर्थमिति तदुच्यते । वक्षणाभ्यः प्रवहणशीलाभ्योऽद्भ्यो वृष्टिलक्षणाभ्यः । तथा वक्षणाभ्यः । नदीनामैतत् वक्षणा इजाना इति तन्नामसु पाठात् । तासामर्थाय ॥

तुभ्यं॑ शु॒क्रासः॒ शुच॑यस्तुर॒ण्यवो॒ मदे॑षू॒ग्रा इ॑षणंत भु॒र्वण्य॒पामि॑षंत भु॒र्वणि॑ ।
त्वां त्सा॒री दस॑मानो॒ भग॑मीट्टे तक्ववी॒ये॑ ।
त्वं विश्व॑स्मा॒द्भुव॑नात्पासि॒ धर्म॑णासु॒र्या॑त्पासि॒ धर्म॑णा ॥५॥

तुभ्यं॑ । शु॒क्रासः॑ । शुच॑यः । तु॒र॒ण्यवः॑ । मदे॑षु । उ॒ग्राः । इ॒ष॒णं॒त । भु॒र्वणि॑ ।
अ॒पां । इ॒षं॒त । भु॒र्वणि॑ ॥ त्वां । त्सा॒री । दस॑मानः । भग॑ं । ई॒ट्टे॒ । त॒क्व॒ऽवी॒ये॑ ।
त्वं । विश्व॑स्मात् । भुव॑नात् । पा॒सि॒ । धर्म॑णा । अ॒सु॒र्या॑त् । पा॒सि॒ । धर्म॑णा ॥ ५ ॥

हे वायो तुभ्यं त्वदर्थं शुक्रासो दीप्ताः शुचयः शुद्धाः । सोमस्य पातारोऽत्यंतं शुद्धा भवंति । किमु वक्तव्यं तेषां शुद्धत्वे । तुरण्यवस्त्वरणयुक्तास्त्वां प्राप्तुं उग्रा उद्गूर्णतेजसः सोमा मदेषु तव मदेषु निमित्तभूतेषु भुर्वणि भरणवति याग इषणंत । आहवनीयं प्रति गच्छंति इच्छंति वा ॥ व्यत्ययेनात्मनेपदं । श्नश्नमौ द्वौ विकरणौ ॥ किंचापां भुर्वणि मेघ इषंत । उदकमिच्छंत्युत्पादयितुं । अग्नौ हूयमानस्याहुतेरादित्यद्वारा वृष्ट्युत्पादकत्वात् । यद्वा । यजमानास्त्वामुद्दिश्याजुह्वाना अपां वर्षणमिषंत । इच्छंति । किंच हे वायो भगं भजनीयं त्वां त्सारी त्सरणवानत्यंतभीतो दसमान उपक्षीणो यज्ञविघातकैः पयोव्रतादिनियमैर्वा यजमानस्तक्ववीये तस्कराणां [illegible] गमनायेट्टे । स्तौति ॥ ईड स्तुतौ । अदादित्वाच्छपो लुक् ॥ यतस्त्वं विश्वस्माद्भुवनात् सर्वस्माल्लोकात् भूतजाताद्वा लोकत्रयसंबंधिनो भयाद्धर्मणास्मदीयहविषां धारणेन पासि पालयसि । किंचा- सुर्यादसुरसंबंधिनो भयाद्विशेषेण पासि धर्मणास्मद्धारणेन पोषणेन वा युक्तः सन् । यत एवं करोषि अतः स्तौमीत्यर्थः ॥

त्वं नो॑ वायवेषा॒मपू॑र्व्यः॒ सोमा॑नां प्र॒थमः॑ पी॒तिम॑र्हसि सु॒ताना॑ं पी॒तिम॑र्हसि ।
उ॒तो वि॒हुत्म॑तीनां वि॒शां व॑व॒र्जुषी॑णां ।
विश्वा॒ इत्ते॑ धे॒नवो॑ दुह्र आ॒शिरं॑ घृ॒तं दु॑ह्रत आ॒शिरं॑ ॥ ६ ॥

त्वं । न॒ः । वा॒यो॒ इति॑ । ए॒षां॒ । अ॒पू॒र्व्यः॑ । सोमा॑नां । प्र॒थ॒मः । पी॒तिं । अ॒र्ह॒सि॒ ।
सु॒ताना॑ं । पी॒तिं । अ॒र्ह॒सि॒ ॥ उ॒तो इति॑ । वि॒हुत्म॑तीनां । वि॒शां । व॒व॒र्जुषी॑णां ।
विश्वाः॑ । इत् । ते॒ । धे॒नवः॑ । दु॒ह्रे॒ । आ॒ऽशिरं॑ । घृ॒तं । दु॒ह्र॒ते॒ । आ॒ऽशिरं॑ ॥ ६ ॥

हे वायो त्वमपूर्व्यः । न विद्यते पूर्वं यस्मात् तत्पानमपूर्वं । तदर्हतीत्यपूर्व्यः । तादृशः अत एव प्रथम इतरदेवेभ्यः पूर्वभूतः सन् सोमानां पीतिं पानमर्हसि । प्राप्नोषि । सुतानामभिषवकृतानां सोमानां पीतिं पानमर्हसि । यत्र यत्राभिषवोऽस्ति तत्र सर्वत्र नियमेन पिबसीत्यर्थः । पूर्वं प्राथम्याभिप्रायेण इदानीं तु सर्वत्र सोमवति यागेऽस्य पानमस्तीति ज्ञापयितुं पृथगभिधानं । न केवलं सोमपानमात्रं उतो अपि तु विहुततीनां विशेषेण होमवतीनामाह्वानवतीनां वा ॥ जुहोतेः संपदादिलक्षणो भावे क्विप् । ततो मतुब्ङीपौ ॥ ववर्जुषी-णामनभिमतपापं वर्जयंतीनां ॥ वर्जयतेर्लिटः क्वसुङीप्संप्रसारणत्वानि ॥ विश्वामृत्विग्यजमानरूपाणां प्रजानां संबंधि हविः स्वीकरोषीति शेषः । यद्वा । तेषां यष्टॄणां विश्वा इडेनवः सर्वा अपि गावस्ते त्वदर्थमाशि-रमाश्रयणद्रव्यं क्षीरं दुह्रे । दुहंति स्वयमेव ॥ कर्तरि न दुहस्नुनमामिति यगभावः । लोपस्त आत्मनेपदे-ष्विति तलोपः । बहुलं छंदसीति रुट् ॥ तथाशिरं घृतमुपस्तरणाभिघारणाद्याश्रयणाय योग्यं कारणं द्रव्यं दुह्रते ॥ ॥२३॥

स्तीर्णं बर्हिरिति नवर्चं सूक्तं पारुच्छेपमात्यष्टं । पूर्वत्र तुशब्दाद्वायुदेवत्यं । आ वां रथ इत्याद्यृक्पंचकमैंद्रं । सप्तम्यष्टम्यावष्टी । अत्रानुक्रमणिका । स्तीर्णं नव चतुर्थ्याद्याः पंचैंद्रयश्चोपांत्ये अष्टी इति ॥ सूक्तस्य विशेषविनि-योगो लैंगिकः । दशरात्रस्य षष्ठेऽहनि प्रउगशस्त्र आद्यौ तृचौ प्राकृतयोर्वायव्यैंद्रवायव्ययोः स्थाने विनियुक्तौ । षष्ठस्य प्रातःसवन इति खंडे सूचितं । स्तीर्णं बर्हिरिति तृचौ । आ० ८. १. । इति ॥

स्तीर्णं बर्हिरुप नो याहि वीतये सहस्रेण नियुता नियुत्वते शतिनीभिर्नियुत्वते ।
तुभ्यं हि पूर्वपीतये देवा देवाय येमिरे ।
प्र ते सुतासो मधुमंतो अस्थिरन्मदाय क्रत्वे अस्थिरन् ॥१॥
स्तीर्णं । बर्हिः । उप । नः । याहि । वीतये । सहस्रेण । निऽयुता । नियुत्वते ।
शतिनीभिः । नियुत्वते ॥ तुभ्यं । हि । पूर्वऽपीतये । देवाः । देवाय । येमिरे ।
प्र । ते । सुतासः । मधुऽमंतः । अस्थिरन् । मदाय । क्रत्वे । अस्थिरन् ॥१॥

हे वायो नोऽस्मदनुग्रहार्थं स्तीर्णमास्तृतं बर्हिरभिलक्ष्योप याहि । आगच्छ । किमर्थं । वीतये हविषां भक्षणाय । केन साधनेनेति तदुच्यते । सहस्रेण सहस्रसंख्याकेन नियुता । जातावेकवचनं । नियुत इति वायोरश्वानां नामधेयं नियुतो वायोरिति निरुक्तत्वात् । नै० १. १५. । तथा शतिनीभिः शतसंख्योपेताभिर्नि-युद्भिरागच्छेति शेषः । यद्वा । सहस्रेण नियुता शतिनीभिश्च नियुद्भिर्नियुत्वते तद्वते देवाय हविर्दीयत इति शेषः । यद्वा । तुभ्यमित्यनेन संबंधः । उक्तसंख्याकाभिर्नियुद्भिस्तद्वते देवाय द्योतमानाय तुभ्यं ॥ ङयि च । पा० ६. १. २१२. । इत्याद्युदात्तत्वं ॥ पूर्वपीतय इतरदेवेभ्यः पूर्वं पानाय देवा येमिरे । यमितवंतः । यद्वा । स्तोतार ऋत्विजो देवाय तुभ्यं येमिरे । आहवनीयं प्रति सोमं नियमितवंतः । अग्रं पिबा मधूनां सुतं वायो । ऋ० ४. ४६. १. । इत्यादिमंत्रांतरप्रसिद्धिद्योतनार्थो हिशब्दः । किंचैते त्वदर्थं सुतासोऽभिषुता मधुमंतो माधु-र्योपेताः सोमा मदाय तव मोदायास्थिरन् । तिष्ठंति । किंच क्रत्वे कर्मणे तत्सिद्ध्यर्थमस्थिरन् । ऋत्विग्भिर्धृ-तास्तिष्ठंति । अतस्त्वं पिबेति शेषः ॥ तिष्ठतेश्छांदसे लुङि व्यत्ययेन झस्य रन् । स्थाघ्वोरिच्चेति सिचः कित्त्वं धातोरित्वं च । ह्रस्वादंगादिति सिलोपः ॥

तुभ्यायं सोमः परिपूतो अद्रिभिः स्पार्हा वसानः परि कोशमर्षति
शुक्रा वसानो अर्षति ॥ तवायं भाग आयुषु सोमो देवेषु हूयते ।
वह वायो नियुतो याह्यस्मयुर्जुषाणो याह्यस्मयुः ॥२॥

तुभ्यं । अयं । सोमः । परिऽपूतः । अद्रिऽभिः । स्पार्हा । वसानः । परि । कोशं । अर्षति ।
शुक्रा । वसानः । अर्षति ॥ तव । अयं । भागः । आयुषु । सोमः । देवेषु । हूयते ।
वह । वायो इति । निऽयुतः । याहि । अस्मऽयुः । जुषाणः । याहि । अस्मऽयुः ॥ २ ॥

हे वायो तुभ्य तुभ्यं त्वदर्थं ॥ सुपां सुलुगिति चतुर्थ्या लुक् ॥ अयं सोमो हूयमानः कोशं कोशस्थानीयं ग्रहमर्षति । गच्छति । प्राप्नोति । कीदृशः सोमः । अद्रिभिः परिपूतः । अभिषवसाधनैरपगतर्जीषत्वेन शोधितः । यद्वा । अद्रिभिरभिषुतो दशापवित्रशोधनेन ग्रहणेन वा शोधितः । तथा स्पार्हा स्पृहणीयानि तेजांसि वसानः पिधानः । किंच शुक्रा निर्मलानि दीप्तानि वा तेजांसि वसानः सोमोऽर्षति । त्वां प्राप्नोति ॥ ऋषी गतौ । व्यत्ययेन शप् ॥ हे वायो आयुषु मनुष्येषु यष्टव्यत्वेन स्थितो भागो भजनीयः सोमस्तव त्वदर्थं देवेषु मध्ये हूयते । सत्स्वपीतरेषु देवेषु यतः सोमस्तव भागः अतः प्रथमं तुभ्यं हूयत इत्यर्थः । किंच हे वायो एवं तं सोममस्मयुरस्माभिस्तद्वान् ॥ मत्वर्थीयो युः ॥ त्वं नियुतो वह । नियुत्संज्ञकानश्वान्वहनाय प्रापय । ततः परं याहि । दिवं प्रति गच्छ । तथा कुर्वन् अस्मयुरस्माभिर्युक्तः सन्नस्माननुगृह्णन् अस्मान्कामयमानो वा ॥ क्यचि च्छांदसेऽत्वलोपे क्याच्छंदसीत्युः ॥ जुषाणः प्रीयमाणो याहि । गच्छ ॥

आ नो नियुद्भिः शतिनीभिरध्वरं सहस्रिणीभिरुप याहि वीतये
वायो हव्यानि वीतये ॥ तवायं भाग ऋत्वियः सरश्मिः सूर्ये सचा ।
अध्वर्युभिर्भरमाणा अयंसत वायो शुक्रा अयंसत ॥ ३ ॥
आ । नः । नियुत्ऽभिः । शतिनीभिः । अध्वरं । सहस्रिणीभिः । उप । याहि । वीतये ।
वायो इति । हव्यानि । वीतये ॥ तव । अयं । भागः । ऋत्वियः । सऽरश्मिः । सूर्ये । सचा ।
अध्वर्युऽभिः । भरमाणाः । अयंसत । वायो इति । शुक्राः । अयंसत ॥ ३ ॥

हे वायो त्वं नोऽध्वरमस्मत्संबंधिनं यज्ञं शतिनीभिर्नियुद्भिः सहस्रिणीभिश्च ताभिस्त्वदीयैरश्वैर्नोऽस्मदयज्ञमुपा याहि । उपागच्छ । किमर्थं । वीतये त्वदभिमतकामाय तत्पूर्तये । आगत्य च हव्यानि वीतये सोमादिहविर्भक्षणायाध्वरं हव्यानि चोपलक्ष्य तेषामेव भक्षणाय शतसहस्रैरश्वैरतिशीघ्रमागच्छेत्यर्थः । किंचायं तव भागो भजनीयः सोम ऋत्वियः प्राप्तकालः प्रदानावसरं प्राप्तः । ऋतुशब्देन प्रदानकालो लक्ष्यते ॥ छंदसि घस् । पा० ५. १. १०६. । सिति च । पा० १. ४. १६. । इति पदसंज्ञया भसंज्ञाया बाधादोर्गुणाभावे यण् ॥ किंच सोमः सूर्ये उदिते सति तस्य रश्मिभिः सचा सह सरश्मिर्भवति । समानदीप्तिर्भवति । यद्वा । तैः सहितो भवति । यतः सूर्य उदिते सति रश्मिर्भवति अतः प्राप्तकाल इत्यर्थः । किंच सोमा अध्वर्युभिश्चमसाध्वर्युभिः । तेषां दशत्वाद्बहुवचनं । तैर्भरमाणा भ्रियमाणा अयंसत । नियता अभवन् । किंच हे वायो ते सोमाः शुक्रा अयंसत । अत्यंतदीप्ता उद्यताः । अतस्तेषां भक्षणायायाहीत्यर्थः ॥

आ वां रथो नियुत्वान्वक्षदवसेऽभि प्रयांसि सुधितानि वीतये
वायो हव्यानि वीतये ॥ पिबतं मध्वो अंधसः पूर्वपेयं हि वां हितं ।
वायवा चंद्रेण राधसा गतमिंद्रश्च राधसा गतं ॥ ४ ॥
आ । वां । रथः । नियुत्वान् । वक्षत् । अवसे । अभि । प्रयांसि । सुऽधितानि । वीतये ।
वायो इति । हव्यानि । वीतये ॥ पिबतं । मध्वः । अंधसः । पूर्वऽपेयं । हि । वां । हितं ।
वायो इति । आ । चंद्रेण । राधसा । आ । गतं । इंद्रः । च । राधसा । आ । गतं ॥ ४ ॥

केवलं वायुं स्तुत्वा व्यासक्ततयेंद्रवायू स्तौति। हे वायो त्वामिंद्रं च वां युष्मान् रथो युवयोः संबंधी रथो नियुत्वान् नियुद्भिरश्वैस्तद्वान् सन्ना वक्षत्। देवयजनं प्रति युष्मानावहतु ॥ वहेर्लेट्यडागमः। सिब्बहुलमिति सिप् ॥ यद्यपि नियुतो वायोरेव रथस्योचिताः तथापि व्यासक्तदेवतात्वात् सहैवागमनादिंद्रार्थमपि वहंति। किमर्थं। अवसे गमनाय रक्षणाय वा। पुनश्च किमर्थं। प्रयांस्यन्नानि सोमलक्षणानि सुधितानि सुष्ठु गृहीतानि वीतये। तेषां भक्षणाय। तथा हव्यानि वीतय इतरेषां सवनीयपुरोडाशादीनां खादनाय ॥ वेतेः क्तिन्। मंत्रे वृषेत्यादिना तस्योदात्तत्वं ॥ किंच मध्वो मधुररसस्यांधसोऽन्नस्य सोमरूपस्य ॥ कर्मणि षष्ठी ॥ मधुरं सोमं पिबतं। यतः पूर्वपेयमितरदेवेभ्यः पूर्वपानं वां युवयोर्हितं ॥ पातेरचो यदिति यत्। ईद्यतीतीकारः ॥ अभिमतं। अतः प्रथमं पिबतमित्यर्थः। यद्यपींद्रादपि वायोः पूर्वपानं त्वं हि पूर्वपा असि। ऋ॰ ४. ४६. १.। देव दधिषे पूर्वपेयं। ऋ॰ ७. ९२. १.। इत्यादिषु सर्वत्र प्रसिद्धं तथापींद्रस्येतरदेवेभ्यः पूर्वं वायुना सह पानं चेंद्रतुरीयार्थवादनब्राह्मणे देवा वै सोमस्य राज्ञोऽग्रपेये न समपादयन्नित्यत्र प्रतिपादितं। ऐ॰ ब्रा॰ २. २५.। किंचागमनसमये हे वायो त्वमिंद्रश्च चंद्रेणास्मदाह्लादकेन हिरण्येन राधसा गवादिरूपेण धनेन च सहा गतं। आगच्छतं। राधसा रत्नेन धनेन सहा गतं ॥ गमेर्लोटि छांदसः शपो लुक्। अनुदात्तोपदेशेत्यनुनासिकलोपः। लुङि च मंत्रे घसेति च्लेर्लुक् ॥

आ वां धियो ववृत्युरध्वराँ उपेममिंदुं मर्मृजंत वाजिनमाशुमत्यं न वाजिनं।
तेषां पिबतमस्मयू आ नो गंतमिहोत्या।
इंद्रवायू सुतानामद्रिभिर्युवं मदाय वाजदा युवं ॥ ५ ॥
आ। वां। धियः। ववृत्युः। अध्वरान्। उप। इमं। इंदुं। मर्मृजंत। वाजिनं।
आशुं। अत्यं। न। वाजिनं ॥ तेषां। पिबतं। अस्मयू इत्यस्मऽयू। आ। नः। गंतं। इह। ऊत्या।
इंद्रवायू इति। सुतानां। अद्रिऽभिः। युवं। मदाय। वाजऽदा। युवं ॥ ५ ॥

हे इंद्रवायू वां युवां धियः कर्माणि स्तोत्रादिलक्षणान्यध्वरानुपास्मदीयान्यज्ञान् लक्षीकृत्य ववृत्युः। अतिशयेन वर्तयंति प्रवर्तयंति। किंच युष्मदर्थं वाजिनं ग्रहणाय द्रोणकलशाद्ग्रहान्प्रति गमनवंतमामिक्षावंतं वेममिंदुं पुरतो वर्तमानं सोमं मर्मृजंत। अध्वर्यवो दशापवित्रेण संमार्जयंति। मार्जने दृष्टांतः। आशुमतिशीघ्रगामिनमत्यं न सततं गंतारं वाजिनं वेजनवंतमश्वमिव। तं यथा स्वेदाद्यपनयनेन संमार्जयंति तद्वत्। किंच हे इंद्रवायू तेषामध्वर्यूणां संबंधिनः शोधितान् सोमान्पिबतं। पानं कुरुतं। तदर्थं नोऽस्माकं यज्ञं प्रतीहेदानीमूत्यास्मद्रक्षणेन सहा गंतं। आगच्छतं। किंच हे इंद्रवायू अस्मयू अस्मद्यज्ञमिच्छंतौ युवं युवामद्रिभिर्ग्रावभिः सुतानामभिषुतानां ॥ पूर्ववत्कर्मणि षष्ठी ॥ तान्पिबतमिति शेषः। किमर्थं। मदाय तृप्तये मोदाय वा। यतो युवं युवां वाजदा वाजस्यान्नस्य दातारौ। अतः पिबतमित्यन्वयः ॥ ॥ २४ ॥

इमे वां सोमा अप्स्वा सुता इहाध्वर्युभिर्भरमाणा अयंसत वायो शुक्रा अयंसत।
एते वामभ्यसृक्षत तिरः पवित्रमाशवः।
युवायवोऽति रोमाण्यव्यया सोमासो अत्यव्यया ॥ ६ ॥
इमे। वां। सोमाः। अप्ऽसु। आ। सुताः। इह। अध्वर्युऽभिः। भरमाणाः। अयंसत।
वायो इति। शुक्राः। अयंसत ॥ एते। वां। अभि। असृक्षत। तिरः। पवित्रं। आशवः।
युवाऽयवः। अति। रोमाणि। अव्यया। सोमासः। अति। अव्यया ॥ ६ ॥

हे वायो वां युवयोस्तव चेंद्रस्य च स्वभूता इमे सोमा अप्स्वस्मदीयेषु कर्मसु ॥ ऊडिदमित्यादिना विभ-

तेरुदात्तत्वं ॥ इहास्मिन्नभिषवस्थाने सुता अध्वर्युभिर्भरमाणास्तैर्भ्रियमाणा गृहीता होतुं वा ह्रियमाणाः ॥ कर्मणि कर्तृप्रत्ययः ॥ संत आयंसत । आगच्छंत । युवयोर्नियता भवंति । किंच त एव सोमाः शुक्राः शुभ्रा दीप्ता अयंसत । नियता भवंति । किंचैत आशवो व्यापकाः सोमा वां युवां । प्रीणयितुमिति शेषः । तिरः पवित्रं तिर्यग्भूतं सोमांतर्धायकं वोर्णामयं पवित्रमभ्यसृक्षत । अभिलक्ष्यासृज्यंत । सृष्टा भवंति ॥ सृजेः कर्मणि लुङि लिङ्सिचावात्मनेपदेष्विति सिचः कित्त्वाद्गुणाभावोऽमागमाभावश्च ॥ किंच युवायवो युवां कामयमानाः सोमासः सोमा अव्ययाव्ययान्यच्छिन्नानि रोमाणि पवित्रसंबंधीन्यविरोमाणि । यद्वा । अव्यया अविमयानि ॥ मकारो लुप्यते ॥ तादृशानि रोमाण्यत्यतिक्रम्य पात्राणि गच्छंतीति शेषः । पुनस्त एव विशेष्यंते । अत्यतिशयेनाव्यया व्ययरहिताः सोमासः सोमा असृक्षतेति शेषः ॥

**अति॑ वायो सस॒तो या॑हि॒ शश्व॑तो॒ यत्र॒ ग्रावा॒ वद॑ति॒ तत्र॑ गच्छतं॒ गृह॒मिंद्र॑श्च गच्छतं ।**
**वि सू॒नृता॒ दद॑ृशे॒ रीय॑ते घृ॒तमा पू॒र्णया॑ नि॒युता॑ याथो अध्व॒रमिंद्र॑श्च याथो अध्व॒रं ॥७॥**

**अति॑ । वा॒यो॒ इति॑ । स॒स॒तः । या॒हि॒ । शश्व॑तः । यत्र॑ । ग्रावा॑ । वद॑ति । तत्र॑ । ग॒च्छ॒तं॒ । गृ॒हं । इंद्रः॑ । च॒ । ग॒च्छ॒तं॒ ।**
**वि । सू॒नृता॑ । दद॑ृशे । रीय॑ते । घृ॒तं । आ । पू॒र्णया॑ । नि॒ऽयुता॑ । या॒थः॒ । अ॒ध्व॒रं । इंद्रः॑ । च॒ । या॒थः॒ । अ॒ध्व॒रं ॥७॥**

हे वायो त्वं ससत आलस्यादिना निद्रां कुर्वतः शश्वतो बहून्यजमानान् । शश्वदिति बहुनाम शश्वदिश्वमिति तन्नामसु पाठात् । अत्यतिक्रम्योपेक्ष्यास्मद्यज्ञं याहि । गच्छ । इंद्रश्च तथा करोतु । कं देशमिति तमाह । यत्र ग्रावा वदति यस्मिन्देशेऽभिषवार्थः पाषाणध्वनिः श्रूयते तत्र गच्छतं तं देशं प्रत्यागच्छतं । गृहं यज्ञगृहं गच्छतं । पुनः स्थानमेव विशेष्यते । सूनृता प्रियतथ्यात्मिका स्तुतिरूपा वाग्यत्र वि ददृशे विशेषेण दृश्यते । श्रूयत इत्यर्थः । तत्र गच्छतं । यत्र च घृतमत्यंतदीप्तमाज्यं होमार्थं गृहीतं रीयते गच्छति आहवनीयं प्रति नीयते ॥ रीङ् स्रवणे । दिवादित्वात् श्यन् ॥ तत्र गच्छतं । गमनप्रकार एव विशेष्यते । पूर्णया संपूर्णया पुष्टांगया नियुता ॥ जातावेकवचनं ॥ नियुज्जात्याध्वरमस्मदीयं यज्ञमा याथः । आभिमुख्येन प्रयाथः । किंच हे वायो त्वमिंद्रश्च युवामध्वरमस्मदीयं यागमा याथः । सहैवागच्छतं । तथास्माभिरपि सहैव गच्छतमित्यर्थः ॥

**अत्राह॒ तद्व॑हेथे॒ मध्व॒ आहु॑तिं॒ यम॑श्व॒त्थमु॑प॒तिष्ठं॑त जा॒यवो॒ऽस्मे ते सं॑तु जा॒यवः॑ ।**
**सा॒कं गावः॑ सुव॑ते॒ पच्य॑ते॒ यवो॒ न ते॑ वाय॒ उप॑ दस्यंति धे॒नवो॒**
**नाप॑ दस्यंति धे॒नवः॑ ॥८॥**

**अत्र॑ । अह॑ । तत् । व॒हे॒थे॒ इति॑ । मध्वः॑ । आऽहु॑तिं । यं । अ॒श्व॒त्थं । उ॒प॒ऽतिष्ठं॑त । जा॒यवः॑ । अ॒स्मे इति॑ । ते । सं॒तु॒ । जा॒यवः॑ ।**
**सा॒कं । गावः॑ । सुव॑ते । पच्य॑ते । यवः॑ । न । ते॒ । वा॒यो॒ इति॑ । उप॑ । द॒स्यं॒ति॒ । धे॒नवः॑ । न । अप॑ । द॒स्यं॒ति॒ । धे॒नवः॑ ॥८॥**

हे इंद्रवायू अत्राहास्मिन्नेव यज्ञे ॥ अहेति विनिग्रहार्थीयः ॥ मध्वो मधुरस्य मधुसदृशस्य वा तत् तस्याहुतिं प्रदेयद्रव्यं वहेथे । धारयतं । यं सोममश्वत्थं पर्वतादिव्याप्तिप्रदेशे स्थितं जायवो जेतारो यजमाना उपतिष्ठंत उपेत्य तिष्ठंति क्रयाद्यर्थं । किंचास्मे अस्माकं संबंधिनो जायवो जेतारः कर्मनिर्वहितारस्त ऋत्विजः संतु । समर्था भवंतु । यज्ञं निर्वहंत्वित्यर्थः । यद्वा । ते प्रसिद्धाः प्रयोगकुशला जायवो जेतार ऋत्विजोऽस्मे संतु नान्यस्य । अत्र वहेथे इत्युक्तं कोऽत्र विशेष इति तत्राह । हे इंद्रवायू अस्मिन्यज्ञे गावो धेनवः साकं सहैव

सुवते । युष्मदर्थमेव क्षीरमुत्पादयंति । दोग्ध्र्यो भवंतीत्यर्थः । यद्वा । गावः साकं सहैव सुवते । अपत्यमुत्पादयंति त्वद्दोहनार्थं ॥ आदादिकः । ङित्वात्तास्यनुदात्तेदिति लसार्वधातुकानुदात्तत्वे धातुस्वरः ॥ किंच यवः । जातावेकवचनं । उपलक्षणमेतत् । यवादिभिः पुरोडाशादिकं पच्यत इत्यर्थः । किंच हे वायो इंद्र च यतो गाव एवं सुवते अतस्ते त्वदर्था धेनवो नोप दस्यंति । नोपक्षीणा भवंति । रोगादिना कृशा न भवंति । न केवलमनुपक्षीणाः किंतु धेनवो युष्मत्प्रीणयित्र्यो गावो नाप दस्यंति । चौराद्युपहारैरुपक्षीणा नष्टा न भवंति ॥

इमे ये ते सु वायो बाह्वोजसोऽन्तर्नदी ते पतयन्त्युक्षणो महि व्राधन्त उक्षणः ।
धन्वञ्चिद्ये अनाशवो जीराश्चिदगिरौकसः ।
सूर्यस्येव रश्मयो दुर्नियन्तवो हस्तयोर्दुर्नियन्तवः ॥ ९ ॥
इमे । ये । ते । सु । वायो इति । बाहुऽओजसः । अन्तः । नदी इति । ते । पतयन्ति । उक्षणः ।
महि । व्राधन्तः । उक्षणः ॥ धन्वन् । चित् । ये । अनाशवः । जीराः । चित् । अगिराऽओकसः ।
सूर्यस्यऽइव । रश्मयः । दुःऽनियन्तवः । हस्तयोः । दुःऽनियन्तवः ॥ ९ ॥

हे सु वायो शोभनफलप्रद वायुदेव ते तव स्वभूता इमे पुरतो दृश्यमाना येऽश्वाः संति ते नदी नद्ने द्यावापृथिव्यावंतस्तयोरंतराले तं त्वां पतयंति । पातयंति । गमयंति । यद्वा । ते तव संबंधिनोऽश्वाः पतयंति । पतंति । यज्ञदेशं गच्छंति ॥ पत गतौ चौरादिरदंतः ॥ कीदृशास्ते । बाह्वोजसो बाहुषु प्रकृष्टबलवंतः । उपलक्षणमेतत् सर्वांगबला इत्यर्थः । किंचोक्षणः सेक्तारः । युवान इत्यर्थः । महि महदतिप्रभूतं व्राधंतो वर्धमानाः तथोक्षण उक्षाणः । तत्सदृशा इत्यर्थः ॥ वा षपूर्वस्य निगम इति दीर्घाभावः ॥ किंच धन्वन् चित् धन्वन्युदकनिर्गमनापादानभूतेऽंतरिक्षेऽपि निरालंबेऽनाशवो नाशरहिता अव्याप्ता वा । आकाशे विलंबमकुर्वाणा इत्यर्थः । अत एव जीराश्चित् । चिच्छब्दः पूजायां । अत्यंतं क्षिप्रगतयः । यद्वा । अनाशव इत्यनेन सह समुच्चयार्थश्चिच्छब्दः । आकाशमार्गेऽक्षीणाः । शीघ्रगतयश्चेत्यर्थः । किंचागिरौकसः । गिरा ओकः स्थानं येषां नास्ति ते तादृशाः । भर्त्सनादिना स्थितिमलभमाना इत्यर्थः ॥ छांदसस्तृतीयाया अलुक् ॥ तदेव स्पष्टयति । सूर्यस्य रश्मय इव दुर्नियंतवो दुःखेन नियंतव्याः । ते यथा क्षणेन दश दिशो व्याप्नुवंति बहवश्च तद्वदेतेऽपीत्यर्थः । पूर्वं गिरानिग्राह्यत्वमुक्तं । इदानीं हस्तेनाप्यनिग्राह्यत्वमाह । हस्तयोर्दुर्नियंतव उभाभ्यामपि हस्ताभ्यां दुःखेन नियंतव्याः । देवयजनगमनाय शीघ्रगामिन इत्यर्थः ॥ ॥ २५ ॥

प्र सु ज्येष्ठमिति सप्तर्चं तृतीयं सूक्तं । ऋषिश्चान्यस्मादिति परिभाषया परुच्छेप ऋषिः । अत्यष्टिश्छंदः । ऊती देवानामित्यंत्या त्रिष्टुप् । अत्र त्रिष्टुबंतपरिभाषा नाश्रीयते सर्वमात्यष्टमिति विशेषपरिभाषया बाधितत्वात् । मित्रावरुणौ देवता । अंत्ययोस्तु तन्मंत्रलिंगोक्तदेवता । तथा चानुक्रांतं । प्र सु सप्त मैत्रावरुणं त्वंत्ये लिंगोक्तदेवते अंत्या त्रिष्टुबिति । तुशब्दप्रयोगादिदमादिके द्वे सूक्ते मैत्रावरुणदेवताके ॥ विनियोगो लैंगिकः ॥

प्र सु ज्येष्ठं निचिराभ्यां बृहन्नमो हव्यं मतिं भरता मृळयद्भ्यां स्वादिष्ठं मृळयद्भ्याम् ।
ता सम्राजा घृतासुती यज्ञेयज्ञ उपस्तुता ।
अथैनोः क्षत्रं न कुतश्चनाधृषे देवत्वं नू चिदाधृषे ॥ १ ॥
प्र । सु । ज्येष्ठं । निऽचिराभ्यां । बृहत् । नमः । हव्यं । मतिं । भरत । मृळयत्ऽभ्यां ।
स्वादिष्ठं । मृळयत्ऽभ्यां ।
ता । सम्ऽराजा । घृतासुती इति घृतऽआसुती । यज्ञेऽयज्ञे । उपऽस्तुता ।
अथ । एनोः । क्षत्रं । न । कुतः । चन । आऽधृषे । देवऽत्वं । नु । चित् । आऽधृषे ॥ १ ॥

हे ऋत्विजः मित्रावरुणाभ्यां ज्येष्ठं प्रशस्यं बृहन्महदतिप्रवृद्धं नमो नमस्कारोपलक्षितं स्तोत्रं तदुपलक्षितं हविर्लक्षणमन्नं वा प्र भरत। संपादयत। नम इत्यन्ननाम नम आयुरिति तन्नामसु पाठात्। किंच हव्यं हव्यां मतिं तत्प्रदानविषयां बुद्धिं भरत। यद्वा। मतिं पूज्यं हव्यं हविर्भरत। पूर्वत्र पुरोडाशाद्यदनीयमन्नं इदानीं तु सोमाज्यादिरूपं निपेयं हविरिति विवेकः। कीदृशाभ्यां ताभ्यां। निचिराभ्यां नितरां चिरकालाभ्यां। नित्याभ्यामित्यर्थः। प्रवाहरूपेणेति भावः। किंच मृळयद्भ्यां स्तुत्या हविःस्वीकारेण स्वयं मृडित्वा यजमानमपि सुखयद्भ्यां तथा स्वादिष्ठं स्वादुतरं मृळयद्भ्यां हविः सुखयद्भ्यां। भक्षयद्भ्यामित्यर्थः। कस्मयोर्विशेष इति तत्राह। ता तौ मित्रावरुणौ सम्राजा सम्यग्राजमानौ॥ राजतेः क्विप्। मो राजि समः क्वाविति समो मकारस्य मकारः॥ घृतासुती। घृतमासूयत आदीयते याभ्यां तौ तादृशौ। यद्वा। घृतमुदकं वृष्टिलक्षणं प्रसूयते सर्वत्रानुज्ञायते याभ्यां तौ। एतयोरहोरात्राभिमानिदेवत्वादहोरात्रद्वारा वृष्ट्युत्पादकत्वात्। अहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षति। तै० सं० २. १. ७. ३.। इति श्रुतेर्वृष्ट्यनुज्ञाप्रदत्वं प्रसिद्धं। किंचैतौ यज्ञे यज्ञे सर्वेष्वपि यज्ञेषूपस्तुता सर्वैर्ऋत्विग्भिः स्तूयमानौ॥ गतिरनंतर इति गतेः प्रकृतिस्वरत्वं॥ अथापि चैनोरेनयोः॥ संज्ञापूर्वकस्य विधेरनित्यत्वाद्दोसि च। पा० ७. ३. १०४.। इति गुणाभावेऽतो गुण इति पररूपत्वं॥ क्षत्रं बलं कुतश्चन कस्मादपि च शत्रो राक्षसादेः सकाशात् कस्मादप्युपायाद्वा नाधृषे। आधर्षितुं शक्यं न भवति॥ कृत्यार्थे तवैकेनिति केन्प्रत्ययः॥ किंच तयोर्देवत्वं नू चित् देवभावोऽपि नाधृषे। आधर्षणायोग्यः। यद्वा। पूर्वमिवेदानीमपि। नू चिदिति निपातः पुराणनवयोरिति यास्केनोक्तत्वात्। नि० ४. १७.। आधृषे न केनाप्याधर्षणीयो भवति। एतयोर्बलं नाधृष्यं किमु तद्देवत्वमिति भावः॥

अदर्शि गातुरुरवे वरीयसी पंथा ऋतस्य समयंस्त रश्मिभिश्चक्षुर्भगस्य रश्मिभिः।
द्युक्षं मित्रस्य सादनमर्यम्णो वरुणस्य च।
अथा दधाते बृहदुक्थ्यं१ वय उपस्तुत्यं बृहद्वयः॥२॥

अदर्शि। गातुः। उरवे। वरीयसी। पंथाः। ऋतस्य। सं। अयंस्त। रश्मिऽभिः। चक्षुः। भगस्य। रश्मिऽभिः॥ द्युक्षं। मित्रस्य। सदनं। अर्यम्णः। वरुणस्य। च। अथ। दधाते इति। बृहत्। उक्थ्यं। वयः। उपऽस्तुत्यं। बृहत्। वयः॥२॥

गातुर्गमनशीला वरीयसुरुतरोषा उरवे विस्तीर्णाय यागाय गमनादिव्यापारायादर्शि। सर्वैर्दृष्टाभूत्। तथा ऋतस्य गमनशीलस्यादित्यस्य पंथा मार्ग आकाशलक्षणो रश्मिभिः समयंस्त। प्रकाशैः संगतोऽभूत्। भगस्य सर्वैर्भजनीयस्यैतन्नामकस्य देवस्य रश्मिभिश्चक्षुः सर्वप्राणिनां लोचनं समयंस्त। संगतमभूत्। सर्वे स्वस्वद्रव्यदर्शनाय समर्था अभवन्नित्यर्थः। तदेव स्पष्टीक्रियते। मित्रस्य प्रकाशकारित्वात्सर्वजनमित्रस्य सदनं गृहमंतरिक्षं द्युक्षं दीप्तानां निवासस्थानं रश्मिभिः समयंस्त। संगतमभूत्। तथार्यम्ण एतन्नामकस्य देवस्य॥ उदात्तनिवृत्तिस्वरेण विभक्तेरुदात्तत्वं॥ द्युक्षं सदनं रश्मिभिः समयंस्त। किंच वरुणस्य तमोनिवारकस्यैतन्नामकस्य देवस्य सदनं तथाभूत्। यद्यपि सूर्यस्यैकत्वेऽप्युपाधिभेदेन भेदात्पृथक् स्तुतिः तथा यद्यपि त्रिभिरपि प्रकाश्यमप्यंतरिक्षमेकं तथापि प्रकाशकानां भेदात् त्रिधा स्तूयते। उदयानंतरं कर्मानुष्ठानाय प्रकाशोऽभवदित्यर्थः। अथातः कारणादुदितत्वादेवोक्थ्यं स्तुत्यं बृहत् प्रभूतं वयो हविर्लक्षणमन्नं दधाते। धारयतः। किंचोपस्तुत्यमुपेत्य स्तोतव्यं॥ एतिस्तुशास्त्वित्यादिना क्यप्। पा० ३. १. १०९.॥ बृहत्स्तोमादिना महत्स्तोत्रं वयो हविर्लक्षणमन्नं च दधाते॥

ज्योतिष्मतीमदितिं धारयत्क्षितिं स्वर्वतीमा सचेते दिवेदिवे जागृवांसा दिवेदिवे।
ज्योतिष्मत्क्षत्रमाशाते आदित्या दानुनस्पती।
मित्रस्तयोर्वरुणो यातयज्जनोऽर्यमा यातयज्जनः॥३॥

ज्योतिष्मतीं। अदितिं। धारयत्ऽक्षितिं। स्वःऽवतीं। आ। सचेते इति। दिवेऽदिवे।
जागृऽवांसा। दिवेऽदिवे।
ज्योतिष्मत्। क्षत्रं। आशाते इति। आदित्या। दानुनः। पती इति।
मित्रः। तयोः। वरुणः। यातयत्ऽजनः। अर्यमा। यातयत्ऽजनः ॥३॥

अयं यजमानो ज्योतिष्मतीमाहवनीयाग्नेस्तेजोयुक्तामदितिमदीनां संपूर्णलक्षणां क्षितिमग्नेर्निवासयोग्यां भूमिमुत्तरवेदिलक्षणां धारयत्। धारयति। स्वयं कृतवानित्यर्थः। एतावती वै पृथिवी यावती वेदिरिति श्रुतेः। तथा स्वर्वतीं यज्ञनिष्पत्तिद्वारा स्वर्गवतीं ईदृशीं तामा सचेते। मित्रावरुणौ संगतौ भवतः। न केवलमेतस्मिन्नेवाहनि किंतु दिवे दिवे सर्वेष्वप्यहःसु। कीदृशौ तौ। दिवे दिवे प्रतिदिनं जागृवांसा प्रबोधं कुर्वाणौ। यज्ञं गंतुमनलसावित्यर्थः। किंच वेदिमागत्य ज्योतिष्मदाज्यादिस्वीकारेणातिशयेन तेजोयुक्तं क्षत्रं बलमाशाते। अश्नुवाते। प्राप्नुतः॥ अश्नोतेश्छांदसे लिट्यनित्यमागमशासनमिति वचनान्नुडभावः। लटि वा छांदसः शपः लुः॥ कीदृशाविति तावाह। आदित्यादितेः पुत्रौ दानुनस्पती दानस्याज्यादिप्रदानस्य स्वामिनौ अभिमतदानस्य पालयितारौ वा॥ षष्ठ्याः पतिपुत्रेति संहितायां सत्वं॥ मित्रश्च वरुणश्च तावुभौ देवौ। अर्यमाख्यस्तु देवस्तयोर्मित्रावरुणयोर्यातयज्जनः। तयोरेव संबंधादुभयोर्मध्ये स्थितो यातयज्जनः स्वस्वव्यापारनियोजितसर्वजनः। मित्रावरुणावहोरात्रदेवौ अर्यमा तु तयोरेव सामर्थ्यात्सर्वप्राणिनः प्रेरयतीत्यर्थः। किंच यातयज्जनः। यातयंति लोकं यदीया जनाः प्रेष्याः स तादृशः। यद्वा। यात्यमाना नरके निपात्यमाना जनाः प्राणिनोऽयष्टारो येन स तादृशः। कर्मसाक्षित्वात्स्वस्वकर्मानुरोधेन प्राणिनः सुकृते यातयतीत्यर्थः। तादृशोऽर्यमा मित्रावरुणयोरधीनो वर्तत इति शेषः॥

अयं मित्राय वरुणाय शंतमः सोमो भूत्ववपानेष्वाभगो देवो देवेष्वाभगः।
तं देवासो जुषेरत विश्वे अद्य सजोषसः।
तथा राजाना करथो यदीमह ऋतावाना यदीमहे ॥४॥
अयं। मित्राय। वरुणाय। शंऽतमः। सोमः। भूतु। अवऽपानेषु। आऽभगः।
देवः। देवेषु। आऽभगः॥ तं। देवासः। जुषेरत। विश्वे। अद्य। सऽजोषसः।
तथा। राजाना। करथः। यत्। ईमहे। ऋतऽवाना। यत्। ईमहे ॥४॥

अयमस्माभिर्हूयमानः सोमो मित्राय वरुणाय च शंतमः पीयमानः सन् सुखतमो भूतु। भवतु॥ छांदसः शपो लुक्। भूसुवोस्तिङीति गुणाभावः॥ अवपानेष्ववाङ्मुखचमसपानेषु विषयेषु आ सर्वतो भगो भजनीयस्ताभ्यां। किंच देवो दीप्यमानो देवेषु मित्रावरुणानुचरेष्वितरदेवेषु तैराभग आभजनीयः। यद्वा। देवेषु स्तोतृषु यजमानेषु मध्ये देवो दीप्यमानः। तथाभगस्तैरेवा सर्वतो भजनीयः। किंच तं सोमं विश्वे सर्वे देवासो देवा अद्यास्मिन्नहनि जुषेरत। सेवंते॥ छांदसो झस्य रन्नादेशाभावः। बहुलं छंदसीति रुडागमः॥ कीदृशास्ते। सजोषसः समानप्रीतियुक्ताः। तथा राजाना राजमाना मित्रावरुणौ युवां करथः। कुरुतं। सेवेथे इत्यर्थः॥ व्यत्ययेन शप्॥ यद्यस्मात्कारणाद्यदीमहे यत्प्राप्नुमस्तद्देवान्याचामहे॥ ईङ् गतौ। दैवादिकः। छांदसो विकरणस्य लुक्॥ तस्माज्जुषेरत। तथा ऋतावाना ऋतवंतौ सत्यवंतौ यज्ञवंतौ वा मित्रावरुणा वीमहे। अभिमतफलं तयोः पानं वा याचामहे॥

यो मित्राय वरुणायाविधज्जनोऽनर्वाणं तं परि पातो अंहसो दाश्वांसं मर्तमंहसः।
तमर्यमाभि रक्षत्यृजूयंतमनु व्रतं।
उक्थैर्य एनोः परिभूषति व्रतं स्तोमैराभूषति व्रतं ॥५॥

यः । मित्राय । वरुणाय । अविधत् । जनः । अनर्वाणं । तं । परि । पातः । अंहसः ।
दाश्वांसं । मर्तं । अंहसः ॥ तं । अर्यमा । अभि । रक्षति । ऋजुऽयंतं । अनु । व्रतं ।
उक्थैः । यः । एनोः । परिऽभूषति । व्रतं । स्तोमैः । आऽभूषति । व्रतं ॥ ५॥

यो जनो यजमानो मित्राय वरुणाय च ॥ कर्मणः संप्रदानत्वाच्चतुर्थी ॥ मित्रं वरुणं चाविधत् परिचरति तं जनं युष्मत्परिचारकमनर्वाणमद्वेषिणं । भ्रातृव्यो वा अर्वेति श्रुतेः । अनल्पं वानन्यसेविनं परि पातः । परितो रक्षतां । कस्मादिति तदुच्यते । अंहसो न्यूनातिरिक्तजनितात्पापात् । न केवलं सामान्यं जनं अपि तु दाश्वांसं हविर्दत्तवंतं मर्तं मरणधर्माणमंहसः सर्वस्मादपि पापात् । न केवलं भवंताविव अपि त्वर्यमा सर्वेषां नियंता देव ऋजूयंतं देवेष्वार्जवमाचरंतं यजमानमनु व्रतं तदीयं कर्मानुलक्ष्याभि रक्षति । अभितो रक्षति । कोऽस्य जनस्य विशेष इति तत्राह । यो यजमान उक्थैः शस्त्रैरेनोरेनयोर्मित्रावरुणयोर्व्रतं कर्म परिभूषति परिगृह्णाति तथा यजमानो युष्मदीयं व्रतं कर्म स्तोमैः स्तोत्रैर्गानयुक्तमंत्रसाध्यैराभूषति सर्वतोऽलंकरोति ॥ भूष अलंकारे भौवादिकः ॥ तमभिरक्षतीत्यन्वयः ॥

नमो दिवे बृहते रोदसीभ्यां मित्राय वोचं वरुणाय मीळ्हुषे सुमृळीकाय मीळ्हुषे ।
इंद्रमग्निमुप स्तुहि द्युक्षमर्यमणं भगं ।
ज्योग्जीवंतः प्रजया सचेमहि सोमस्योती सचेमहि ॥ ६॥
नमः । दिवे । बृहते । रोदसीभ्यां । मित्राय । वोचं । वरुणाय । मीळ्हुषे ।
सुऽमृळीकाय । मीळ्हुषे ॥ इंद्रं । अग्निं । उप । स्तुहि । द्युक्षं । अर्यमणं । भगं ।
ज्योक् । जीवंतः । प्रऽजया । सचेमहि । सोमस्य । ऊती । सचेमहि ॥ ६॥

दिवे द्योतमानाय सूर्याय नमो वोचं । नमस्कारोपलक्षितं स्तोत्रं वोचं । ब्रवीमि । स्तौमीत्यर्थः । कीदृशाय तस्मै । बृहते महते ॥ बृहन्महतोरुपसंख्यानमिति विभक्तिरुदात्ता ॥ स्तुत्याय । तथा रोदसीभ्यां द्यावापृथिवीभ्यां तदभिमानिदेवाभ्यां नमो वोचं । तथा मित्राय सर्वजनहितायाहरभिमानिदेवाय नमो वोचं । तथा वरुणायावरकाय राज्यभिमानिदेवाय । तथा मीळ्हुषेऽभिमतफलस्य सेक्त्रे रुद्राय । कीदृशाय तस्मै । सुमृळीकाय शोभनसुखयित्रे । पुनः स एव विशेष्यते । मीळ्हुषे सुमृळीकायेति द्वे प्रत्येकविशेषणभूते । इदानीं यजमान ऋत्विजं स्वात्मानं वा प्रति ब्रवीति । हे होतः हे आत्मन्वा इंद्रमग्निं द्युक्षं दीप्तिमंतमर्यमणं भगं चोपोपेत्य बुद्ध्या प्राप्य स्तुहि । स्तुतिं कुरु । युष्मदनुग्रहाज्ज्योक् चिरकालं जीवंतो जीवनोपेता वयं प्रजया पुत्रभृत्यादिना सचेमहि । संगता भूयास्म । किंच सोमस्येंदोरूती ऊत्या सचेमहि । तमपि स्तुत्वा तत्कारितेन रक्षणेन सहिता भूयास्मेत्यर्थः ॥

ऊती देवानां वयमिंद्रवंतो मंसीमहि स्वयशसो मरुद्भिः ।
अग्निर्मित्रो वरुणः शर्म यंसन्तदश्याम मघवानो वयं च ॥ ७॥
ऊती । देवानां । वयं । इंद्रऽवंतः । मंसीमहि । स्वऽयशसः । मरुत्ऽभिः ।
अग्निः । मित्रः । वरुणः । शर्म । यंसन् । तत् । अश्याम । मघऽवानः । वयं । च ॥ ७॥

इंद्रवंतः प्रीतैरिंद्रेण तद्वंतो वयं देवानां देवान् ॥ कर्मणि षष्ठी ॥ ऊती ऊत्या तर्पणेन हविरादिना मंसीमहि । मन्येमहि । कीदृशा वयं । स्वयशसः स्वायत्तकीर्तयो मरुद्भिः स्तुत्या हृष्टैर्मरुद्देवैरनुगृहीताः । यद्वा । देवानामूत्या रक्षणेन रक्षिता मंसीमहि ज्ञातारो भवेम सामर्थ्यात्तेषामेव महत्त्वस्य । किंचाग्निमित्रवरुणा

देवाः शर्म यंसन्। अस्माकं सुखं प्रायच्छन् तं तं वरं। मघवानो वयं च तैर्दत्तान्नवंतः संतस्तत्सुखमश्याम। व्याप्नुयाम॥ अश्नोतेराशिषि लिङि च्छंदस्युभयथेति सार्वधातुकत्वात्सलोपः॥ ॥२६॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके प्रथमोऽध्यायः समाप्तः॥

---

॥ श्रीगणेशाय नमः॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं॥

अथ द्वितीयाष्टके द्वितीयोऽध्याय आरभ्यते। सुषुमा यातमिति तृचात्मकं चतुर्थं सूक्तं पारुच्छेपमतिशाक्करं षष्ठ्यचरोपेतत्वात्। पूर्ववच्च तुशब्दप्रयोगान्मैत्रावरुणं। अत्रात्यष्टिपरिभाषा नाश्रीयतेऽतिशाक्करमिति विशेषितत्वात्। अत्रानुक्रमणिका। सुषुम तृचमतिशाक्करमिति॥ दशरात्रस्य षष्ठेऽहनि प्रातःसवने प्रउगशस्त्र इदं सूक्तं मित्रावरुणदेवत्यं तृतीयतृचं। सूचितं च। स्तीर्णं बर्हिरिति तृचौ सुषुमा यातमद्रिभिः। आ० ८.१। इति॥ तथास्मिन्नेव मैत्रावरुणस्य प्रस्थितयाज्यायाः पुरस्तादाद्या प्रक्षेपणीया। षष्ठस्य प्रातःसवन इति खंडे सूचितं। सुषुमा यातमद्रिभिः। आ० ८.१। इति॥

सुषुमा यातमद्रिभिर्गोश्रीता मत्सरा इमे सोमासो मत्सरा इमे।
आ राजाना दिविस्पृशास्मत्रा गंतमुप नः।
इमे वां मित्रावरुणा गवाशिरः सोमाः शुक्रा गवाशिरः॥१॥

सुसुम। आ। यातं। अद्रिऽभिः। गोऽश्रीताः। मत्सराः। इमे। सोमासः। मत्सराः। इमे॥ आ। राजाना। दिविऽस्पृशा। अस्मऽत्रा। गंतं। उप। नः। इमे। वां। मित्रावरुणा। गोऽआशिरः। सोमाः। शुक्राः। गोऽआशिरः॥१॥

हे मित्रावरुणौ आ यातं। अस्मद्यज्ञं प्रत्यागच्छतं। आगमनाय किमस्तीति चेत् तत्राह। अद्रिभिरभिषवसाधनैर्ग्रावभिः सुषुम। सोमं सुतवंतो वयं॥ सुनोतेर्लिटि रूपं॥ अतो गोश्रीताः। विकारे प्रकृतिशब्दः। पयोभिर्मिश्रिताः। तस्मान्मैत्रावरुणं पयसा श्रीणातीति हि ब्राह्मणं। मत्सरास्तृप्तिहेतवः सोमाः। मत्सरः सोमो मंदतेस्तृप्तिकर्मण इति यास्कः। नि० २.५। इमे पुरतो गृहीता वर्तंते। अत आ यातं। पुनस्त एव विशेष्यंते। इमे सोमासो मत्सरा मदहेतवो मादने मात्सर्यवंतो वेतरयज्ञगतसोमेभ्यः सोमाः। कीदृशौ युवां। राजाना राजनशीलौ दिविस्पृशा द्युलोकवासिनौ॥ हृद्युभ्यां ङेरुपसंख्यानं। पा० ६.३.९.१। इत्यलुक्॥ ईदृशौ युवामस्मत्रास्मासु मध्येऽस्मत्पालकौ वा युवां नोऽस्मत्संबंधिनं यज्ञमुप गंतं। आगच्छतं। किंच हे मित्रावरुणौतन्नामानौ देवौ वां युवयोरर्थायेमे सोमा गवाशिरः। पूर्ववद्विकारे प्रकृतिशब्दः। गोभिः क्षीरैराशिरो मिश्रिताः संजाताः। किंच गवाशिरो गोभिरुदकैर्मिश्रिताः संजाताः। यद्वा। गोभिः स्तुतिलक्षणैर्मंत्रैर्मिश्रिताः। अत एव शुक्रा दीप्ताः संजाताः। आशिरमव नयति सशुक्रत्वाय। तै० सं० ६.१.६.५। इति श्रुतेः॥

इम आ यातमिंदवः सोमासो दध्याशिरः सुतासो दध्याशिरः ।
उत वामुषसो बुधि साकं सूर्यस्य रश्मिभिः ।
सुतो मित्राय वरुणाय पीतये चारुर्ऋताय पीतये ॥२॥
इमे । आ । यातं । इंदवः । सोमासः । दधिऽआशिरः । सुतासः । दधिऽआशिरः ।
उत । वां । उषसः । बुधि । साकं । सूर्यस्य । रश्मिऽभिः ।
सुतः । मित्राय । वरुणाय । पीतये । चारुः । ऋताय । पीतये ॥२॥

हे मित्रावरुणौ आ यातं । आगच्छतं । यतो युष्मदर्थमिंदवः क्लेदनसमर्थाः सोमासः सोमा दध्याशिरो दध्याश्रयणवंतः संत इमे पुरतो ग्रहेण गृहीता वर्तंते अत आ यातं । किंच दध्याशिरो धीयमानाशिरः सोमाः सुतासो मंत्रेण ग्रावभिरभिषुताः संपन्नाः । अत आ यातमिति शेषः । आदित्यग्रहे दध्यवनयसद्भावात्तदपेक्षया दध्याशिर इत्युक्तं । उतापि च वां युवयोः प्रीतये पालनायोषसो बुध्युषसः संबंधिनि बोधे सति ॥ संपदादिलक्षणो भावे क्विप् । साविकाच इति विभक्तेरुदात्तत्वं ॥ प्रकाशे संजाते सति । न केवलमुषस एव बोधः अपि तु सूर्यस्य रश्मिभिः साकं सूर्यकिरणैः सह प्रकाशे हविष्प्रदानाय संजाते सति सुतः सोमोऽभिषुतः । इदानीं वियुज्योच्यते । मित्राय सर्वहितायैतन्नामकायाहरभिमानिदेवाय तथा वरुणायावरकाय रात्र्यभिमानिदेवाय च तदर्थं सोमः सुत इति शेषः । किंच ऋताय यज्ञाय तन्निर्वाहकाय तदर्थं पीतये पानाय । यज्ञसिद्ध्यर्थं हि देवानां सोमपानं । यद्वा ॥ कर्तरि क्तिच् ॥ पीतये पात्र ऋत्विगादये ऋताय यज्ञाय तन्निर्वाहकाय । चारुश्चरणीयो भक्षणीयः सोमः सुतोऽभिषुतः ॥

तां वां धेनुं न वासरीमंशुं दुहंत्यद्रिभिः सोमं दुहंत्यद्रिभिः ।
अस्मत्रा गंतमुप नोऽर्वाचा सोमपीतये ।
अयं वां मित्रावरुणा नृभिः सुतः सोम आ पीतये सुतः ॥३॥
तां । वां । धेनुं । न । वासरीं । अंशुं । दुहंति । अद्रिऽभिः ।
सोमं । दुहंति । अद्रिऽभिः ॥ अस्मऽत्रा । गंतं । उप । नः । अर्वाचा । सोमऽपीतये ।
अयं । वां । मित्रावरुणा । नृऽभिः । सुतः । सोमः । आ । पीतये । सुतः ॥३॥

वां युवयोः संबंधिनमंशुं वल्लीरूपं सोमं दुहंति । संपादयंत्यध्वर्यवः । किमिव । तां प्रसिद्धामग्निहोत्रार्थां वासरीं सर्वांगाच्छादितपयस्कां । बहुक्षीरामित्यर्थः । यद्वा । पयआदिनाच्छादयित्रीं ॥ वस आच्छादने । औणादिकोऽरिप्रत्ययः । कृदिकारादक्तिन इति ङीष् । यद्वा । केवल औणादिकोऽरप्रत्ययः स्वार्थिकोऽण् ॥ धेनुं न प्रीणयित्रीं गामिव । केन साधनेनेति तदाह । अद्रिभिरभिषवसाधनैर्ग्रावभिः । किंचाद्रिभिस्तैरेव साधनैः सोमं युष्मदर्थमेव दुहंति । वल्लीरूपं सोमं युष्मदर्थमेवोदकेनाप्लाव्य रसं दुहंति । किंचार्वाचास्मदभिमुखौ संतौ सोमपीतये सोमपानायास्मत्रास्मत्त्रातारौ युवां नोऽस्मदीयं यज्ञमुप गंतं । उपागच्छतं । किंच वां युष्मदर्थमयं सोमो नृभिर्नेतृभिर्यज्ञनिर्वाहकैर्ऋत्विग्भिः सुतः । अभिषुतः । किंचा पीतये संपूर्णपानाय सुतः । अत आगच्छतमित्यर्थः ॥ ॥१॥

प्रप्र पूष्ण इति चतुर्ऋचं पंचमं सूक्तं पा [illegible]ष्टं पुषदेवताकं । प्रप्र चतुष्कं पौ[illegible]मित्यनु[illegible] ॥ विनियोगो लैंगिकः ॥

प्रप्र पूष्णस्तुविजातस्य शस्यते महित्वमस्य तवसो न तंदते स्तोत्रमस्य न तंदते ।
अर्चामि सुम्नयन्नहमंत्यूतिं मयोभुवं ।
विश्वस्य यो मन आयुयुवे मखो देव आयुयुवे मखः ॥१॥

प्रऽप्र । पूष्णः । तुविऽजातस्य । शस्यते । महिऽत्वं । अस्य । तवसः । न । तंदते ।
स्तोत्रं । अस्य । न । तंदते ॥ अर्चामि । सुम्नऽयन् । अहं । अंतिऽऊतिं । मयःऽभुवं ।
विश्वस्य । यः । मनः । आऽयुयुवे । मखः । देवः । आऽयुयुवे । मखः ॥१॥

तुविजातस्य बहुयजमानार्थमुत्पन्नस्यास्य पूष्णः पोषकस्यैतन्नामकस्य देवस्य तवसो महित्वं बलस्य महत्त्वं प्रप्र शस्यते । प्रस्तूयते सर्वैः ॥ वीप्सा पादपूरणे ॥ न तंदते । न हिनस्ति कश्चित्तदपि । किंचास्य पूष्णः स्तोत्रं न तंदते । न हिनस्ति । न विरमति । सर्वोऽपि जन एनं स्तौतीत्यर्थः । जगत्पोषकत्वादिति भावः । अतः कारणादहं अहमपि यजमानः सुम्नयन् सुखमिच्छन्नर्चामि । स्तौमि । कीदृशं तं । अंत्यूतिमासन्नरक्षणं ॥ कादिलोपो बहुलमिति कलोपः ॥ स्तुत्यनंतरमेव वरप्रदमित्यर्थः । मयोभुवं सुखस्योत्पादकं भावयितारं वा । यः पूषा मखी यज्ञवान् ॥ मत्वर्थो लुप्यते ॥ विश्वस्य सर्वस्य [illegible] मन आयुयुवे समंतान्मिश्रयति । शीघ्रवरप्रदानादिति भावः । किंच देवो दीप्यमान एष मखो मखं यज्ञमायुयुवे । संपूर्तिपर्यंतं मिश्रयति । यद्वा । विश्वस्य मनोमिश्रणे यजमाने किमायातमिति चेत् उच्यते । मखो यज्ञनिर्वाहकोऽयं पूषा देवो यजमानस्य मन आयुयुवे । समंतान्मिश्रयति । सामर्थ्याद्यजमानस्य मन इति लभ्यते ॥ यौतेश्छांदसो लिट् ॥

प्र हि त्वा पूषन्नजिरं न यामनि स्तोमेभिः कृण्व ऋणवो यथा मृध
उष्ट्रो न पीपरो मृधः । हुवे यत्त्वा मयोभुवं देवं सख्याय मर्त्यः ।
अस्माकमांगूषान्द्युम्निनस्कृधि वाजेषु द्युम्निनस्कृधि ॥२॥

प्र । हि । त्वा । पूषन् । अजिरं । न । यामनि । स्तोमेभिः । कृण्वे । ऋणवः । यथा । मृधः ।
उष्ट्रः । न । पीपरः । मृधः ॥ हुवे । यत् । त्वा । मयःऽभुवं । देवं । सख्याय । मर्त्यः ।
अस्माकं । आंगूषान् । द्युम्निनः । कृधि । वाजेषु । द्युम्निनः । कृधि ॥२॥

हे पूषन् अजिरं यज्ञदेशं प्रति गमनवंतं त्वा त्वां यामनि गमने निमित्तभूते सति स्तोमेभिः स्तोमैः प्र कृण्वे । प्रकृष्टं करोमि । तत्र दृष्टांतः । यामनि शीघ्रगमनेऽजिरं न शीघ्रगामिनमश्वमिव । स यथा प्रस्तूयते तद्वत् । किंच यथा मृधः संग्रामानुद्दिश्य ऋणवः गच्छेः तथा प्र कृण्वे । यद्वा । यथा ऋणवः अस्मद्यज्ञं प्रति गच्छेः ॥ ऋण गतौ । तानादिकः । लेट्यडागमः ॥ तथा त्वां कृण्वे । किंच मृधो हिंसकान्योद्धॄन् संग्रामे पीपरः । पारं नयसि ॥ पारयतेर्लुङि चङि रूपं ॥ तत्र दृष्टांतः । उष्ट्रो न । उष्ट्रो यथा भारं वोढा पारयति तद्वन्मृधः संग्रामात्पीपरः । पारं नयसि । अतः कारणात् त्वा त्वां मयोभुवं सुखस्य भावयितारं देवं देवनशीलं पूषणं मर्त्यो मरणधर्मा मनुष्योऽहं हुवे । आह्वयामि । किमर्थं । सख्याय समानख्यानाय प्रियकरणाय । एवमाहूतः सन्नस्माकमांगूषानाघोषान् स्तोमान् । आंगूषः स्तोम आघोष इति यास्कः । द्युम्निनस्कृधि । द्योतनवतः कुरु । यद्वा । स्तोमान् यशोवतोऽन्नवतो वा कृधि । अस्मत्स्तुत्या प्रीतस्त्वमेवं कुर्वित्यर्थः । किंच वाजेषु संग्रामेषु द्युम्निनोऽन्नवतः कृधि । अस्मद्वैरिणो जित्वा तेषामन्नं मयि कुर्वित्यर्थः ॥

यस्य ते पूषन्त्सख्ये विपन्यवः क्रत्वा चित्संतोऽवसा बुभुज्रिर इति क्रत्वा बुभुज्रिरे ।
तामनु त्वा नवीयसीं नियुतं राय ईमहे ।
अहेळमान उरुशंस सरी भव वाजेवाजे सरी भव ॥३॥

यस्य । ते । पूषन् । सख्ये । विपन्यवः । क्रत्वा । चित् । संतः । अवसा । बुभुज्रिरे । इति । क्रत्वा । बुभुज्रिरे ॥ तां । अनु । त्वा । नवीयसीं । निऽयुतं । रायः । ईमहे । अहेळमानः । उरुऽशंस । सरी । भव । वाजेऽवाजे । सरी । भव ॥ ३ ॥

हे पूषन् देव यस्य ते रक्षकत्वेन प्रसिद्धस्य तव सख्ये सखित्वे हितकरणे सति क्रत्वा चित् क्रतुना प्रज्ञष्टेन कर्मणैव ॥ जसादिषु च्छंदसि वावचनमिति नाभावाभावः ॥ संतो भवंतं प्रीणयितारः संतो विपन्यवो विशेषेण स्तोत्रशीलाः । यद्वा । मेधाविनामैतत् । मेधाविनः । यजमाना अवसा त्वत्कृतेन रक्षणेन रक्षिताः संतो बुभुज्रिरे । भुंजते भोगान् । इति एवमेव सर्वदा क्रत्वा कर्मणा बुभुज्रिरे । भुंजते सर्वे पाल्यंत इति वा ॥ भुजेश्छंदसि लिटि बहुलं छंदसीति रुट् ॥ तां तादृशीं नवीयसीं नवतरां स्तुत्यां वा रक्षामन्वनुसृत्य रक्षाया अनंतरं त्वां नियुतं राय एतत्संख्याकान्धनानीमहे । याचामहे । किंच हे उरुशंस बहुधा स्तुत्य त्वमहेळमानोऽक्रुध्यन्नस्मासु सुमनाः सन् सरी भव । अस्माभिर्गंतव्यो भव ॥ सर्तेरौणादिक इनिप्रत्ययः । आद्युदात्तत्वं ॥ किंच त्वं वाजे वाजे सर्वेष्वपि संग्रामेषु सरी भव । गमनशीलो भव । पुरतो गंता भवेत्यर्थः ॥

अस्या ऊ षु ण उप सातये भुवोऽहेळमानो ररिवाँ अजाश्व श्रवस्यतामजाश्व ।
ओ षु त्वा ववृतीमहि स्तोमेभिर्दस्म साधुभिः ।
नहि त्वा पूषन्नतिमन्य आघृणे न ते सख्यमपह्नुवे ॥ ४ ॥

अस्याः । ऊं इति । सु । नः । उप । सातये । भुवः । अहेळमानः । ररिऽवान् । अजऽअश्व । श्रवस्यतां । अजऽअश्व ॥ ओ इति । सु । त्वा । ववृतीमहि । स्तोमेभिः । दस्म । साधुऽभिः । नहि । त्वा । पूषन् । अतिऽमन्ये । आघृणे । न । ते । सख्यं । अपऽह्नुवे ॥ ४ ॥

हे अजाश्व पूषन् । अजाश्वेति पूषणमाहेति यास्कः । नि० ४. २५. । नोऽस्माकमस्या अस्यै ॥ चतुर्थ्यर्थे षष्ठी ॥ सातये लाभायाहेळमानोऽक्रुध्यन्ननादरमकुर्वन् ररिवान् दाता च सन् सु सुष्ठुप भुवः । समीपस्थो भव ॥ रातेश्छांदसस्य लिटः क्वसुः । पदसंज्ञाया अभावेऽपि पपिवांसं तस्थिवांसमित्यादौ छांदसोऽवग्रहो दृश्यते । ऊ इति पादपूरणः ॥ किंच श्रवस्यतामन्नमिच्छतामस्माकं हे अजाश्व अजा एवाश्वस्थानीया यस्य तादृश त्वं । पूषनामेदं । ररिवांश्च सन्नुप भुवः । अजाः पूष्ण इति यास्कः । ओ इति निपातद्वयसमुदायात्मक एको निपातः । हे दस्म शत्रूणामुपक्षपयितः पूषन् त्वा त्वामो षु ववृतीमहि । सर्वत एव सुतरां वर्तयेमहि ॥ वृतेरंतर्भावितण्यर्थाल्लिङि बहुलं छंदसीति शपः श्लुः ॥ यज्ञांतरगमनान्निवर्तयाम इत्यर्थः । केन साधनेनेति तदुच्यते । साधुभिः स्तोमेभिस्त्वां प्रीणयितुं समर्थैः स्तोत्रैः । किंच हे पूषन् आघृणे सर्वतो वृष्टेः क्षारयितः । यद्वा । आघृणे हविषामाहर्तः स्वीकर्तः त्वां नह्यतिमन्ये । अवमतिं नैव करोमि । न केवलमनतिक्रममात्रं किंतु ते सख्यं तव सखित्वं हितकर्तृत्वं नह्यपह्नुवे । नैवापनयामि । न त्यजामि । सर्वतः प्रख्यापयामीत्यर्थः ॥ ॥ २ ॥

अस्तु श्रौषडित्येकादशर्चं षष्ठं सूक्तं । अत्रानुक्रमणिका । अस्तु श्रौषळेकादश वैश्वदेवी मैत्रावरुणाश्विन्यस्तिस्र ऐंद्र्याग्नेयी मारुत्यैंद्राग्नी बार्हस्पत्या वैश्वदेव्यंत्या त्रिष्टुप्पंचमी बृहती वैश्वदेवमेतदेवमन्यासामपि सूक्तप्रयोगे वैश्वदेवत्वं सूक्तभेदप्रयोगे यल्लिंगं सा देवतेति । परुच्छेप ऋषिः । अंत्या त्रिष्टुप् पंचमी बृहती । अन्या अत्यष्टयो विशेषाभावात् । कृत्स्नं सूक्तं वैश्वदेवं । तत्राद्याया विश्वे देवा देवता । द्वितीयाया मित्रावरुणौ । अथ तिस्रोऽश्विदेवताकाः । ऐंद्री षष्ठी । सप्तम्याग्नेयी । अष्टमी मारुती । नवम्यैंद्राग्नी । दशमी बार्हस्पत्या । एकादशी वैश्वदेवी ॥ सूक्तविनियोगो लैंगिकः ॥ दशरात्रस्य षष्ठेऽहनि प्रउगशस्त्र आद्या वैश्वदेवतृचे प्रथमा । षष्ठस्येति खंडे सूचितं । अस्तु श्रौषळ्ळो षू णो अग्ने । आ० ८. १. । इति ॥

अस्तु श्रौषट् पुरो अग्निं धिया दध आ नु तच्छर्धो दिव्यं वृणीमह इंद्रवायू वृणीमहे।
यद्ध क्राणा विवस्वति नाभा संदायि नव्यसी ।
अध प्र सू न उप यंतु धीतयो देवाँ अच्छा न धीतयः ॥१॥
अस्तु। श्रौषट्। पुरः। अग्निं। धिया। दधे। आ। नु। तत्। शर्धः। दिव्यं। वृणीमहे।
इंद्रवायू इति। वृणीमहे॥ यत्। ह। क्राणा। विवस्वति। नाभा। सम्ऽदायि। नव्यसी।
अध। प्र। सु। नः। उप। यंतु। धीतयः। देवान्। अच्छ। न। धीतयः॥१॥

अहं पुरः पुरत उत्तरवेद्यामग्निमाहवनीयाख्यं धिया प्रणयनादिकर्मणा दधे। धारितवानस्मि। तच्छर्धस्तादृशं बलवंतं वाग्निं यद्वा तच्छर्धस्तादृशं मरुतां स्वरूपं बलं दिव्यं दिवि भवं नु क्षिप्रमा वृणीमहे। आभिमुख्येन संभजामहे। किंचेंद्रवायू वृणीमहे। यद्यस्मात्कारणाद्विवस्वति दीप्तमति नाभा नाभौ भूम्या नाभिस्थाने देवयजने वेदिरूपे। यद्वा। नाभौ सर्वफलस्य संबंधके यज्ञे। यज्ञमाहुर्भुवनस्य नाभिमिति श्रुतेः। क्राणा कुर्वाणा स्वार्थप्रकाशनं नव्यसी नवतरा स्तुतिरूपा वाक् संदायि संबध्यते॥ छांदसः कर्मणि लुङ्॥ अस्माभिः प्रयुज्यत इत्यर्थः। यस्मात्स्तुतिः क्रियते तस्मादस्तु श्रौषट्। अस्याः स्तुतेः श्रवणं भवतु। श्रोता भवतु वा मरुतां गणोऽग्निर्वा। इंद्रावायुपक्षे प्रत्येकापेक्षयैकवचनं। अधानंतरं नो धीतयोऽस्मदीयानि कर्माणि स्तुत्यादिरूपाणि प्र सूप यंतु। प्रकर्षेण सुष्ठु युष्मानुपगच्छंतु। किंच देवाँ अच्छा नाग्न्यादिदेवानाभिमुख्येन प्राप्तुमिव धीतयोऽस्मदीयानि कर्माण्युप यंतु। तेषां समीपं प्राप्नुवंतु॥

यद्ध त्यन्मित्रावरुणावृतादध्याददाथे अनृतं स्वेन मन्युना दक्षस्य स्वेन मन्युना।
युवोरित्थाधि सद्मस्वपश्याम हिरण्ययं।
धीभिश्चन मनसा स्वेभिरक्षभिः सोमस्य स्वेभिरक्षभिः ॥२॥
यत्।ह।त्यत्।मित्रावरुणौ।ऋतात्।अधि।आददाथे इत्याऽददाथे।अनृतं।स्वेन।मन्युना।
दक्षस्य। स्वेन। मन्युना॥ युवोः। इत्था। अधि। सद्मऽसु। अपश्याम। हिरण्ययं।
धीभिः। चन। मनसा। स्वेभिः। अक्षऽभिः। सोमस्य। स्वेभिः। अक्षऽभिः॥२॥

हे मित्रावरुणौ ऋतादादित्यात्त्यत्तदुदकं यद्यस्मात्कारणादध्यधिकमाददाथे सर्वतो दद्थः। कीदृशमुदकं। अनृतं नश्वरं शोषणस्वभावं। केन साधनेन। स्वेन मन्युना स्वकीयेन तेजसा। अहोरात्राभिमानिदेवौ मित्रावरुणौ खलु वृष्टिं मोचयतः। अहोरात्रे वा इत्यादिश्रुतिः पूर्वमेवोदाहृता। मन्युर्विशेष्यते। दक्षस्य समर्थस्य स्वेन मन्युनात्मभूतेन मननीयेन सामर्थ्येन। किंच हे मित्रावरुणौ युवोः॥ अंत्यलोपश्छांदसः॥ युवयोः संबंधि हिरण्ययं हिरण्मयं रूपं॥ ऋत्व्यवास्त्व्यवास्त्वेत्यादौ मयटो मशब्दलोपो निपात्यते॥ इत्थेत्थं वक्ष्यमाणप्रकारेण सद्मसु यज्ञसदनेष्वध्यपश्याम। पश्येम। केन साधनेनेति तदुच्यते। धीभिस्त्वदुद्देशैः कर्मभिर्यज्ञादिरूपैः मनसा चन त्वदासक्तेन चेतसा च स्वेभिरक्षभिरात्मीयैरनन्यैश्चक्षुरादींद्रियैः। किंच सोमस्य सोमं स्वेभिरक्षभिरस्मदीयैरिंद्रियैः॥ नासाद्यपेक्षया बहुवचनं॥

पृष्ठ्यस्य षष्ठेऽहनि प्रउगशस्त्रे युवां स्तोमेभिरित्याश्विनस्तृचः। षष्ठस्येति खंडे सूचितं। युवां स्तोमेभिर्देवयंतो अश्विनावर्मह इंद्र। आ० ८.१। इति॥

युवां स्तोमेभिर्देवयंतो अश्विनाश्रावयंत इव श्लोकमायवो युवां हव्याभ्या३यवः।
युवोर्विश्वा अधि श्रियः पृक्षश्च विश्ववेदसा।
प्रुषायंते वां पवयो हिरण्यये रथे दस्रा हिरण्यये॥३॥

युवां । स्तोमेभिः । देवऽयंतः । अश्विना । आश्रवयंतःऽइव । श्लोकं । आयवः ।
युवां । हव्या । अभि । आयवः ॥ युवोः । विश्वाः । अधि । श्रियः । पृक्षः । च । विश्वऽवेदसा ।
प्रुषायंते । वां । पवयः । हिरण्यये । रथे । दस्रा । हिरण्यये ॥ ३ ॥

हे अश्विनाश्विनौ देवौ युवां स्तोमेभिः स्तोत्रैर्देवयंतो युवामात्मन इच्छंत आयवः । मनुष्यनामैतत् । यजमानाः श्लोकं युष्मदीयस्तुतिरूपां वाचमाश्रावयंत इव सर्वतः श्रवणविषयां कुर्वंत इव स्तुवंति । श्लोक इति वाङ्नाम श्लोको धारेति तन्नामसूक्तत्वात् । कीदृशास्ते । युवां हव्या हविषाज्यादिनाभ्यायव आभिमुख्येन गंतारः । प्रीणयितुमिति शेषः । हवींष्याभिमुख्येन प्रापयंतो वा । किंच हे विश्ववेदसा सर्वधनौ युवोर्युवयोः संबंधिन्यो विश्वाः श्रियः सेवनीयाः सर्वा लक्ष्मीर्धनकनकादिरूपा अध्यधिकं भजंत इति शेषः । किंच पृक्षश्चान्नमपि युष्मत्प्रसादादध्यधिकं लभंते । किंच हे दस्रा शत्रूणामुपक्षपयितारौ वां हिरण्यये रथे हिरण्मये मधुपूर्णे रथे पवयस्तन्नेमयः प्रुषायंते । क्षरंति स्रवंति ॥ प्रुष प्लुष स्नेहनसेचनपूरणेषु । छंदसि शायजपीत्यहावपि श्नः शायजादेशः ॥ मधुपूर्णपात्रोपेतत्वात् शीघ्रगमनेन चक्रेषु मधूनि स्रवंतीति भावः । पवी रथनेमिर्भवति यद्विपुनाति भूमिमिति निरुक्तं । ५. ५. । अश्विनो रथस्य मधुपूर्णत्वं चयः पवयो मधुवाहने रथे । ऋ० १. ३४. २. । इत्यादिषु प्रसिद्धं । किंच तादृशे हिरण्यये हृदयरमणे रथे मधुरं हविर्वहतमिति शेषः ॥

अचेति दस्रा व्यु१ नाकमृण्वथो युंजते वां रथयुजो दिविष्टिष्वध्वस्मानो दिविष्टिषु ।
अधि वां स्थाम वंधुरे रथे दस्रा हिरण्यये ।
पथेव यंतावनुशासता रजोऽंजसा शासता रजः ॥ ४ ॥
अचेति । दस्रा । वि । ऊं इति । नाकं । ऋण्वथः । युंजते । वां । रथऽयुजः । दिविष्टिषु ।
अध्वस्मानः । दिविष्टिषु ॥ अधि । वां । स्थाम । वंधुरे । रथे । दस्रा । हिरण्यये ।
पथाऽइव । यंतौ । अनुऽशासता । रजः । अंजसा । शासता । रजः ॥ ४ ॥

हे दस्रा दस्रावश्विनौ अचेति । वक्ष्यमाणं युष्मच्चेष्टितं ज्ञायते सर्वैः । किं तदिति तदुच्यते । नाकं स्वर्गं व्यृण्वथः । विशेषेण गच्छथः ॥ ऋणु गतौ [illegible] । लेख्यडागमः ॥ यज्ञसंपूर्त्यनंतरमिति यावत् । उशब्दोऽवधारणे । यद्वा । नाकं । अकं दुःखं । तद्रहितं यज्ञमृण्वथः । विशेषेण गच्छथ एव । तदर्थं वां रथयुजो युष्मत्संबंधिनो रथस्य योजयितारः सारथयो दिविष्टिषु स्वर्गैषणेषु द्योतनात्मकस्य यज्ञस्यैषणेषु गमनेषु वा निमित्तभूतेषु युंजते । अश्वान्योजयंति रथे । युंक्ते रथे वा युष्मान् । त एव विशेष्यंते । दिविष्टिषु दिवो गमनेषु निरालंबाकाशगमनेष्वध्वस्मानो रथस्य तदाश्रितस्य च ध्वंसमकुर्वाणाः । किंच हे दस्राश्विनौ वां युवयोर्वंधुरे बंधुरत्रययुक्ते । युगबंधनाधारः काष्ठविशेषो बंधुरं । तादृशत्रययुक्तत्वं रथो यो वां त्रिवंधुरः । ऋ० ८. २२. ५. । इत्यादिषु प्रसिद्धं । हिरण्यये हिरण्मये रथेऽधि तादृशस्य रथस्योपरि स्थाम । अस्थापयाम ॥ छांदसे लङि बहुलं छंदसीत्यडभावः । आद्युदात्तश्छांदसः ॥ कीदृशौ । पथेव सुपथेन मार्गेण निरालंब आकाशे रजो रंजनात्मकं स्वर्गं प्रति यंतौ गच्छंतौ । लोका रजांस्युच्यंत इत्युक्तत्वात् । अनुशासतानुकूलाञ्छत्रूननुशासतौ विधेयीकुर्वंतौ ॥ शासेः शतरि जक्षित्यादय इत्यभ्यस्तत्वादभ्यस्तानामादिरित्याद्युदात्तत्वं ॥ किंचांजसा मुख्यत्वेन प्रकृष्टं रज उदकं वृष्टिलक्षणं शासता शासतौ बलाद्विधेयीकुर्वंतौ ॥

शचीभिर्नः शचीवसू दिवा नक्तं दशस्यतं ।
मा वां रातिरुप दसत्कदा चनास्मद्रातिः कदा चन ॥ ५ ॥

शचीभिः । नः । शचीवसू इति शचीऽवसू । दिवा । नक्तं । दशस्यतं ।
मा । वां । रातिः । उप । दसत् । कदा । चन । अस्मत् । रातिः । कदा । चन ॥ ५ ॥

हे शचीवसू । शचीति कर्मनाम । अस्मदनुष्ठितज्योतिष्टोमादिकर्मधनौ युवां शचीभिरस्मदीयैः कर्मभिर्यागादिभिर्निमित्तभूतैर्दिवा नक्तमहनि रात्रौ च दशस्यतं । अभिमतं दद्देथां ॥ दाशृ दान इत्यस्येदं छांदसं रूपं । यद्वा । दशस्यतिर्दानार्थः कंड्वादिषु द्रष्टव्यः ॥ वां युवयो रातिर्दानं कदा चन सर्वदा यागकालेऽयागकालेऽपि मोप दसत् । मोपक्षीणं भूत् ॥ दसु उपक्षये । लुङि पुषादिद्युतादीति च्लेरङ् ॥ न केवलं युष्मदीयं अपि त्वस्माकमपि रातिर्दानं हविरादिप्रदानं सर्वविषयदानं वार्थिभ्यः कदा चन सर्वावस्थायामपि मोप दसत् । उपक्षीणं मा भूत् । सर्वदा वर्ततां । अहमपि सर्वदा युष्मानुद्दिश्य दद्यां युवामपि मदभिमतं सर्वदा दत्तमित्यर्थः ॥ ॥ ३ ॥

पृष्ठ्यस्य षष्ठेऽहनि प्रउगशस्त्रस्यैंद्रे तृचे तृतीया वृषन्निंद्रेत्येषा । वृषन्निंद्र वृषपाणास इंदवः सुषुमा यातमद्रिभिः । आ० ८.१ । इति ॥ तत्रैव सवने प्रस्थितयाज्यानां पुरस्तादन्या ऋचः प्रक्षिप्योभयीभिर्यष्टव्यं । तत्र होतुः प्रस्थितयाज्यायाः पुरस्तादेषा प्रक्षेपणीया । सूचितं च । षष्ठस्य प्रातःसवने प्रस्थितयाज्यानां पुरस्तादन्याः कलोभाभ्यामनवानंतो यजंति । आ० ८. १ । इति ॥

वृषन्निंद्र वृषपाणास इंदव इमे सुता अद्रिषुतास उद्भिदस्तुभ्यं सुतास उद्भिदः ।
ते त्वा मंदंतु दावने महे चित्राय राधसे ।
गीर्भिर्गिर्वाहः स्तवमान आ गहि सुमृळीको न आ गहि ॥ ६ ॥
वृषन् । इंद्र । वृषऽपानासः । इंदवः । इमे । सुताः । अद्रिऽसुतासः । उत्ऽभिदः ।
तुभ्यं । सुतासः । उत्ऽभिदः ॥ ते । त्वा । मंदंतु । दावने । महे । चित्राय । राधसे ।
गीःऽभिः । गिर्वाहः । स्तवमानः । आ । गहि । सुऽमृळीकः । नः । आ । गहि ॥ ६ ॥

हे इंद्र वृषन् वर्षितः कामानां इमे पुरतो दृश्यमाना इंदवः सोमाः सुताः । त्वदर्थमभिषुताः । कीदृशास्ते । वृषपानासोऽभिमतवर्षकेण त्वया पातव्याः अद्रिसुतासोऽद्रिभिर्दृढैः पाषाणैरभिषवसाधनैः सुताः उद्भिद उद्भेदका वर्षस्य । त एव पुनर्विशेष्यंते । उद्भिदो बलस्योद्भेदका उद्भिन्ना वा पर्वतादौ तादृशाः सोमास्तुभ्यं सुतासस्त्वदर्थमेवाभिषुताः । किंच ते तादृशाः सोमास्त्वा त्वां मंदंतु । तर्पयंतु । कुत्रेति तदुच्यते । दावने दानवति यागे । अभिमतदानाय वा । तथा महे महते चित्राय चायमानाय विचित्राय नानाविधाय वा राधसे धनाय । किंच हे गिर्वाहो गिरां स्तुतीनामस्मदीयानां वोढः ॥ वहिहाधाञ्भ्य इत्यसुन् ॥ गीर्भिरस्मत्स्तुतिभिः स्तवमानः सन्ना गहि । आगच्छ । नोऽस्मान् सुमृळीकः सुष्ठु मृडयिता सन्ना गहि । आगच्छ ॥

दशरात्रस्य षष्ठेऽहनि प्रातःसवने नेष्टुः प्रस्थितयाज्यायाः पुरस्तादो षू णो अग्न इत्येषावपनीयैकैकोक्त्योभाभ्यां यागः । षष्ठस्येति खंडे सूचितं । ओ षू णो अग्ने शृणुहि त्वमीळितोऽग्निं होतारं । आ० ८.१. इति ॥ तस्मिन्नेव सवने प्रउगशस्त्रे द्वितीया । सूचितं च । अस्तु श्रौषळो षू णो अग्ने । आ० ८. १ । इति ॥

ओ षू णो अग्ने शृणुहि त्वमीळितो देवेभ्यो ब्रवसि यज्ञियेभ्यो राजभ्यो यज्ञियेभ्यः ।
यद्ध त्यामंगिरोभ्यो धेनुं देवा अदत्तन ।
वि तां दुह्रे अर्यमा कर्तरी सचाँ एष तां वेद मे सचा ॥ ७ ॥

ओ इति । सु । नः । अग्ने । शृणुहि । त्वं । ईळितः । देवेभ्यः । ब्रवसि । यज्ञियेभ्यः । राजऽभ्यः । यज्ञियेभ्यः ॥ यत् । ह । त्यां । अंगिरःऽभ्यः । धेनुं । देवाः । अदत्तन । वि । तां । दुह्रे । अर्यमा । कर्तरि । सचा । एषः । तां । वेद । मे । सचा ॥ ७ ॥

हे अग्ने त्वं नोऽस्मदीयमावाहनं स्तुतिं वेळितोऽस्माभिः स्तुतः सन्नो षु शृणुहि । ओ इति निपातद्वयसमुदायात्मक एको निपातः । आभिमुख्येनैव सुष्ठु शृणु ॥ उतश्च प्रत्ययादिति छंदसि वावचनमिति हेर्लुगभावः ॥ श्रुत्वा च देवेभ्यो देवनशीलेभ्यो यज्ञियेभ्यो यज्ञार्हेभ्यो हविर्भाग्भ्यः स्तुतिभाग्भ्यश्चेत्यर्थः ॥ यज्ञर्त्विग्भ्यामिति घः ॥ तेभ्यो यज्ञियेभ्यो यज्ञार्हेभ्यो यजमानेभ्यः संबंधि कर्म ब्रवसि । ब्रूहि ॥ ब्रवीतेर्लेट्यडागमः ॥ कीदृशेभ्यः । राजभ्यो राजमानेभ्यः । इदानीं देवाः प्रत्यक्षेणोच्यंते । अत्रेतिहासमाहुः । अंगिरसो नाम महर्षयः पूर्वं यज्ञार्थं देवान् स्तुत्वा प्रीणयित्वा गा अयाचंत । ते प्रीताः कामदुघां प्रादुः । लब्ध्वां च तां धेनुं क्षीरं दोग्धुमशक्नुवाना अर्यमणं देवं प्रार्थयन् । स च प्रार्थितोऽग्निहोत्राद्यर्थं क्षीरं दुदोहेति । तदिदमत्रोच्यते । यद्यां त्यां तां प्रसिद्धां धेनुं क्षीरादिना प्रीणयित्रीं गां ह देवा अंगिरोभ्यस्तदर्थमदत्तन दत्तवंतः ॥ तप्तनप्तनथनाश्चेति तनादेशः ॥ तां धेनुमर्यमा सर्वस्य नियमिता देवः कर्तरि सर्वस्योत्पादके त्वय्यग्नौ सचेतरदेवेभ्यः साकं वि दुह्रे । विविधं दुग्धवान् ॥ दुहेर्लिटि बहुलं छंदसीति रुट् । छंदसि वेति वचनाद्द्विर्वचनाभावः । लस्येव वा लोपस्त इति तलोपः ॥ एषः एष एवार्यमा तां धेनुं मे सचा मत्समवायेन वेद । जानाति । अर्यमाहमपि जानामीत्यर्थः । ईदृशी धेनुस्त्वदर्थमेव दुह्यत इत्यग्नेः स्तुतिः ॥

मो षु वो अस्मदिति प्रस्थितयाज्या । सूत्रितं च । मो षु वो अस्मदभि तानि पौंस्या षू णो अग्ने । आ॰ ८. १. । इति ॥

मो षु वो अस्मदभि तानि पौंस्या सना भूवन्द्युम्नानि मोत जारिषुरस्मत्पुरोत जारिषुः ।
यद्वश्चित्रं युगेयुगे नव्यं घोषादमर्त्यं ।
अस्मासु तन्मरुतो यच्च दुष्टरं दिधृता यच्च दुष्टरं ॥ ८ ॥

मो इति । सु । वः । अस्मत् । अभि । तानि । पौंस्या । सना । भूवन् । द्युम्नानि । मा । उत । जारिषुः । अस्मत् । पुरा । उत । जारिषुः ॥ यत् । वः । चित्रं । युगेऽयुगे । नव्यं । घोषात् । अमर्त्यं । अस्मासु । तत् । मरुतः । यत् । च । दुस्तरं । दिधृत । यत् । च । दुस्तरं ॥ ८ ॥

हे मरुतः वो युष्मत्संबंधीनि तानि प्रसिद्धानि पौंस्या पौंस्यानि बलानि सना सदातनानि नित्यानि द्युम्नानि प्रकाशयुक्तानि । यद्वा । सना संभजनीयानि द्युम्नानि धनवंति यशोवंति वा ॥ मत्वर्थीयो लुप्यते । मो इति निपातद्वयसमुदाय उशब्दोऽवधारणे ॥ अस्मदस्मान् मो ष्वभि भूवन् । सुष्ठु मैवाभिभवन् । यद्वा । अस्मत्तोऽपगतानि मा भूवन् । उतापि च । यद्वा । द्युम्नानीत्येतदुत्तरत्र संबध्यते । द्युम्नानि धनानि यशांसि वास्मदीयानि मा जारिषुः । क्षीणानि मा भूवन् । उतापि चास्मत्पुरा पुराणि लक्षणया तत्रस्थाः प्राणिनो मा जारिषुः । जीर्णा नष्टा मा भूवन् । किंच वो युष्मत्संबंधि चित्रं चायनीयं नानाविधं नव्यं नूतनं स्तोतव्यं वामर्त्यममरणधर्मकं मर्त्येषु दुर्लभं वा यदस्ति घोषात् घोषाः ॥ व्यत्ययेन पंचमी ॥ शब्दोपेता गवादयो घोषोपलक्षिता ग्रामनगरादयो वा ये संति तत्सर्वं युगे युगे युगशब्दोपलक्षिते तत्तत्कालेऽस्मासु । अस्मास्वेव भवत्विति शेषः । नान्यस्य । किंच हे मरुतः यच्च दुस्तरं दुःखेन तरणीयं संपादनीयं धनं दिधृत धारयत तदस्मासु । किंच दुस्तरं शत्रुभिरहिंसितं तत्सर्वमपि विशेषेणास्मासु स्थापयत ॥

पृष्ठ्यस्य षष्ठेऽहन्यच्छावाकस्य प्रस्थितयाज्यायाः पुरस्तात् दध्यङ् ह म इत्येषा । सूत्रितं च । दध्यङ् ह मे जनुषं पूर्वो अंगिरा इत्येवमेव माध्यंदिने । आ॰ ८. १. । इति ॥

दध्यङ् ह मे जनुषं पूर्वो अंगिराः प्रियमेधः कण्वो अत्रिर्मनुर्विदुस्ते मे पूर्वे मनुर्विदुः।
तेषां देवेष्वायतिरस्माकं तेषु नाभयः।
तेषां पदेन मह्या नमे गिरेंद्राग्नी आ नमे गिरा ॥९॥

दध्यङ्। ह। मे। जनुषं। पूर्वः। अंगिराः। प्रियऽमेधः। कण्वः। अत्रिः। मनुः। विदुः। ते। मे। पूर्वे। मनुः। विदुः ॥ तेषां। देवेषु। आऽयतिः। अस्माकं। तेषु। नाभयः। तेषां। पदेन। महि। आ। नमे। गिरा। इंद्राग्नी इति। आ। नमे। गिरा ॥९॥

दध्यङ्ङथर्वणगोत्रोत्पन्न एतन्नामको महर्षिः स च पूर्वः पूरकः सर्वस्य पुरातनो वा अंगिरा अंगारः। तद्वत्तेजस्वीत्यर्थः। यद्वा। अंगारा एवांगिरसोऽभवन् येऽंगारा आसंस्तेऽंगिरसोऽभवन्निति श्रुतेः। अंगिरा अंगारा अंकना अंचना इति निरुक्तं। एतन्नामा महर्षिश्च प्रियमेधो मेधाप्रियः। प्रियमेधः प्रिया अस्य मेधाः। नि॰ ३.१७.। इति यास्कः। स च कण्वो मेधावी स चात्रिर्दुःखत्रयरहितः। अत्रिर्न त्रय इति निरुक्तं। ३.१७.। मनुर्मननवानेतन्नामा महर्षिः। एते सर्वे महात्मानो महर्षयो मे जनुषं दिवोदासपुत्रस्य परुच्छेपस्य जन्म विदुः। जानंति ॥ वेत्तेर्विदो लटो वेति झेरुसादेशः ॥ किंच ते पूर्वोक्ताः पूर्वे पूर्वकालीना मेऽस्मत्पित्रादीञ्जानंत इत्यर्थः। मनुर्मनवो ज्ञानवंतो यतस्ते पूर्वे मनवश्च अतो विदुरिति भावः ॥ सुपां सुलुगिति जसो लुक् ॥ तेषां ज्ञान उपपत्तिमाह। तेषां दध्यङ्ङादीनां देवेष्वितरेषु देवनशीलेषु महर्षिषु मध्य आयतिर्दीर्घकालसंबंधोऽस्ति। अतो विदुरित्यर्थः। ततश्च किमित्याह। अस्माकं नाभयो जीवेन सह बंधवंतः प्राणाः फलेन संबद्धा यागा वा तेषु। तेष्वेव वर्तंते। असौ विशिष्टजन्मातो यज्ञयोग्य इति तैर्वक्तव्यत्वेन तदधीनत्वं। तेषां दध्यङ्ङादीनां पदेनास्पदेन महत्त्वेन निमित्तेन गिरा स्तुतिरूपया वाचा महि महदत्यधिकं नमे। नमति सर्वो जनः। किंच तेषामनुग्रहाद्यज्ञयोग्यः सन्निंद्राग्नी गिरा स्तुतिरूपया वाचा युक्तः सन्ना नमे। आभिमुख्येन नमामि स्तौमि। नमामि चेत्यर्थः ॥ नमेर्व्यत्ययेनात्मनेपदं ॥ यद्वा ॥ कर्मकर्तरि न दुहस्नुनमामिति यकः प्रतिषेधः ॥ स्वयमेव नतोऽस्मि ॥

होता यक्षद्वनिनो वंत वार्यं बृहस्पतिर्यजति वेन उक्षभिः पुरुवारेभिरुक्षभिः।
जगृभ्मा दूरआदिशं श्लोकमद्रेरध त्मना।
अधारयदररिंदानि सुक्रतुः पुरू सद्मानि सुक्रतुः ॥१०॥

होता। यक्षत्। वनिनः। वंत। वार्यं। बृहस्पतिः। यजति। वेनः। उक्षऽभिः। पुरुऽवारेभिः। उक्षऽभिः ॥ जगृभ्म। दूरेऽआदिशं। श्लोकं। अद्रेः। अध। त्मना। अधारयत्। अररिंदानि। सुऽक्रतुः। पुरु। सद्मानि। सुऽक्रतुः ॥१०॥

अयं होता दैव्योऽग्निर्मानुषो वा देवानामाह्वाता यक्षत्। याज्यां पठतु ॥ यजेर्लेट्यडागमः। सिब्बहुलमिति सिप् ॥ वनिनो वननवंतः हविः कामयमाना वा देवा वार्यं वरणीयं सोमं वंत। संभजंतां ॥ वनतेश्छांदसे लङि व्यत्ययेनात्मनेपदं। बहुलं छंदसीति शपो लुक्। छांदसोऽंत्यलोपः ॥ तदर्थं बृहस्पतिर्बृहतो मंत्रस्य हावषो वा पालकोऽध्वर्युर्दैव्यो बृहस्पतिर्वा स्वयमेव यजति। यागं करोति। कीदृशः सः। वेनः कामयमानः। केन साधनेनेति तदुच्यते। उक्षभिः सेचकैः सोमैः पुरुवारेभिर्बहुभिर्वरणीयैः तथोक्षभिः सेचनसमर्थैरुदकैः तन्निमित्तभूतैर्हूयमानैराहुतिभिरादित्यद्वारा वृष्ट्युत्पन्नैः। वयं यजमाना दूरआदिशं दूरदेश आदिगादेशो यस्य तादृशं ॥ हलदंतात्सप्तम्याः। पा॰ ६.३.९.। इत्यलुक् ॥ अद्रेः। जातावेकवचनं। अभिषवसाधनस्य ग्राव्णः श्लोकं वाचं ध्वनिं जगृभ्म। गृह्णीमः श्रोत्राभ्यां। पूजार्थं बहुवचनं। इदानीं परोक्षकृतः। सुक्रतुः शोभनकर्मायं

यजमानोऽधाथ यागसंपूर्त्यनंतरमररिंदानि । उदकनामैतत् अररिंदानि ध्वस्मन्वदिति तन्नामसु पाठात् । वृष्टिलक्षणान्युदकानि त्मनात्मनाधारयत् । धारयति ॥ ररिर्दाता । नास्त्यन्यो ररिरस्य पिपासोपशमनस्य तादृशं पिपासोपशमनं ददतीत्यररिंदानि । यद्वा । अररिरितश्चेतश्च गमनं । औणादिकोऽरिप्रत्ययः । आतोऽनुपसर्गे कः । पृषोदरादित्वादभिमतस्वरूपस्वरसिद्धिः । तद्ददतीत्यररिंदान्युदकानि । चेष्टाप्रदानीत्यर्थः । आपोमयः प्राणः । छां॰ उ॰ ६. ५. ४. । इति श्रुतेः । यद्वा । ररिर्दानं । न विद्यते तादृशं दानमितरभूतेषु तदररि । तद्ददतीत्यररिंदानि । अन्यैरदेयं लोकोपकारि भोगं ददतीत्यर्थः ॥ तादृशान्युदकानि यागेनोत्पादितवानित्यर्थः । किंच सुक्रतुः शोभनकर्मायं पुरू पुरूणि बहूनि सद्मानि सदनानि सुखनिवासयोग्यानि गृहाण्यधारयत् । यद्वा । बृहस्पतिः सुक्रतुश्चायमध्वर्युररिंदान्युक्तलक्षणान्यभिषवसाधनान्युदकान्यधारयत् । धारितवान् । तथा सुक्रतुः शोभनप्रज्ञः पुरू सद्मानि सदनानि हविरासादनान्यधारयत् ॥

दशरात्रे षष्ठेऽहनि प्रउगशस्त्रे वैश्वदेवतृचस्य द्वितीया ये देवास इत्येषा । सूत्रितं च । ये देवासो दिव्येकादश स्थेयमददाद्रभसं । आ॰ ८. १. । इति ॥

ये दे॑वासो दि॒व्येका॑दश॒ स्थ पृ॑थि॒व्यामध्येका॑दश॒ स्थ ।
अ॒प्सु॒क्षितो॑ महि॒नैका॑दश॒ स्थ ते दे॑वासो य॒ज्ञमि॒मं जु॑षध्वं ॥ ११ ॥
ये । दे॒वा॒सः॒ । दि॒वि । एका॑दश । स्थ । पृ॒थि॒व्यां । अधि॑ । एका॑दश । स्थ ।
अ॒प्सु॒ऽक्षितः॑ । म॒हि॒ना । एका॑दश । स्थ । ते । दे॒वा॒सः॒ । य॒ज्ञं । इ॒मं । जु॒ष॒ध्वं॒ ॥ ११ ॥

हे देवासो देवा द्योतनशीला ये यूयं दिवि द्युलोक एकादश स्थ एकं च दश चेत्येतत्संख्याका भवथ तथा पृथिव्यामध्युपर्यैकादश स्थ एतत्संख्याका भवथ किंचाप्सुक्षितः । तच्छेतुत्वात्ताच्छब्द्यं । अप्स्वंतरिक्षे क्षियंति निवसंतीत्यप्सुक्षितः ॥ क्षियतेः क्विप् । तत्पुरुषे कृतीत्यलुक् ॥ अंतरिक्षवासिनो देवा एकादश स्थ तत्संख्याका भवथ । यद्वा । अंतरिक्षस्यैयं संज्ञा । आपः पृथिवीत्यंतरिक्षनामसु पाठात् । यद्यपि तिस्र एव देवता इत्युक्तत्वात् क्षित्याद्यभिमानिन्यो देवतास्तिस्र एव तथापि महिना महत्त्वेन स्वस्वविभूत्या त्रयस्त्रिंशत्संख्याका भवंति । तत्तत्स्थाना अन्यास्तद्विभूतय इत्युक्तत्वात् । महिना देवास इत्येते सर्वत्र संबध्येते । ते यूयं हे देवासो मिलित्वोक्तसंख्याका देवा इममस्मदीयं यज्ञं जुषध्वं । संभजध्वं । तत्संबंधि हविर्वा सेवित्वा प्रीणयध्वं ॥ एकं च दश चैकादश । प्रागेकादशभ्यः । पा॰ ५. ३. ४९. । इति निपातनाद्दीर्घः । संख्येति पूर्वपदप्रकृतिस्वरत्वं ॥ ॥ ४ ॥ ॥ २० ॥

एकविंशेऽनुवाके सप्तदश सूक्तानि । तत्र वेदिषद इति प्रथमं सूक्तं त्रयोदशर्चं । उचथ्यपुत्रस्य दीर्घतमस आर्षं । आग्नेयं । अंत्ये त्रिष्टुभौ । शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः । दशमी त्रिष्टुब्जगती वा । अत्यष्टिपरिभाषा निवृत्ता । अत्रानुक्रमणिका । वेदिषदे सप्तोना दीर्घतमा औचथ्य आग्नेयं तु द्वित्रिष्टुबंतं तु त्रिष्टुब्दशमी वेति ॥ प्रातरनुवाकस्याग्नेये क्रतौ जागते छंदसीदमादीनि तृतीयवर्जितानि षट् सूक्तानि विनियुक्तानि । तथाश्विनशस्त्रे षण्णां तृतीयवर्जितानां सूक्तानां विनियोगः । सूत्रितं च । वेदिषद इति षण्णां तृतीयमुद्धरेत् । आ॰ ४. १३. । इति ॥

वे॒दि॒षदे॑ प्रि॒यधा॑माय सु॒द्युते॑ धा॒सिमि॑व॒ प्र भ॑रा॒ योनि॑म॒ग्नये॑ ।
वस्त्रे॑णेव वासया॒ मन्म॑ना॒ शुचिं॑ ज्यो॒तीर॑थं शु॒क्रव॑र्णं॒ तमो॒हनं॑ ॥ १ ॥
वे॒दि॒ऽसदे॑ । प्रि॒यऽधा॑माय । सु॒ऽद्युते॑ । धा॒सिंऽइ॑व । प्र । भ॒र॒ । योनि॑ । अ॒ग्नये॑ ।
वस्त्रे॑णऽइव । वा॒स॒य॒ । मन्म॑ना । शुचिं॑ । ज्यो॒तिःऽर॑थं । शु॒क्रऽव॑र्णं । त॒मः॒ऽहनं॑ ॥ १ ॥

हे अध्वर्यो वेदिषदे वेद्यां सीदते नित्यं प्रियधामाय प्रियधाम्ने प्रियस्थानायोत्तरवेदिलक्षणप्रियाय सुद्युते शोभनद्योतनायाग्नयेऽग्रनयनादिगुणविशिष्टाय योनिं स्थानं वेद्याख्यं धासिमिव हवीरूपमन्नमिव प्र

भर । प्रहर । प्रकर्षेण संपादयेत्यर्थः । तच्च स्थानं वस्त्रेणेव तेन यथा मार्दवायास्तृणाति तद्वत् मन्मना मननीयेन संभारेण बर्हिषा वा वेदिस्थानं वासय । आच्छादय । कीदृशं तत्स्थानमिति तदुच्यते । शुचिमुत्पवनप्रोक्षणादिनामेध्यासुरादीनामपगतत्वाच्छुद्धं ज्योतीरथं ज्योतिष आज्यादेरग्नेर्वा रथस्थानीयमाधारभूतत्वात् शुक्रवर्णं अग्न्युपेतत्वाद्दीप्तवर्णं अत एव तमोहनं तमसोऽंधकारस्य हंतारमज्ञानस्य वा । अग्निसाध्ययज्ञादिद्वारा ज्ञानविचारकत्वादिति भावः । यद्वा । तस्यां योनौ स्थाने वस्त्रेण यथा गोपनीयं वस्तु गोपयंति तद्वत्तमग्निं वासय । निवासय । स्थापय । मन्मना मननीयेन हृद्येन वस्त्रसदृशेन मृदुकाष्ठादिनाच्छादय वा । कीदृशं । ज्योतीरथं दीप्तिरथोपेतं । शेषं पूर्ववत् ॥

अभि द्विजन्मा त्रिवृदन्नमृज्यते संवत्सरे वावृधे जग्धमी पुनः ।
अन्यस्यासा जिह्वया जेन्यो वृषा न्य१न्येन वनिनो मृष्ट वारणः ॥ २ ॥
अभि । द्विऽजन्मा । त्रिऽवृत् । अन्नं । ऋज्यते । संवत्सरे । ववृधे । जग्धं । ईमिति । पुनरिति ।
अन्यस्य । आसा । जिह्वया । जेन्यः । वृषा । नि । अन्येन । वनिनः । मृष्ट । वारणः ॥ २ ॥

द्विजन्मा द्वाभ्यामरणीभ्यां जायमानः । यद्वा । मथनेनाधानसंस्कारेण चोत्पन्नत्वात् द्विजन्मत्वं ॥ अन्येभ्योऽपि दृश्यंत इति मनिन् ॥ अयमग्निस्त्रिवृदन्नमाज्यपुरोडाशसोमरूपेण त्रिप्रकारमन्नमदनीयमभि ऋज्यते । प्राप्नोति । अभित आभिमुख्येन नयति भक्षयति ॥ ऋज गतिस्थानार्जनोपार्जनेषु । व्यत्ययेन श्यन् ॥ यद्वा । भृज्यते ॥ भ्रस्जो पाके ॥ पक्वं करोति वा । किंच ई इदं ॥ ईमित्यत्र सांहितिको मलोपश्छांदसः ॥ जग्धं भक्षितं संवत्सरे पूर्णे पुनर्ववृधे । अग्निर्वर्धयति । जीर्णस्य पुनर्वृद्ध्यभावाद्यजमानं हविर्वृद्ध्या प्रतिसंवत्सरं यागसमर्थं करोतीत्यर्थः । यद्वा । एकवारं भक्षितं हविः पुनः संवत्सरे पूर्णे संवत्सर उदरस्थं वर्धते वर्धयति वा भक्षितारं । किंचायमग्निर्वृषा वर्षकः सन्नन्यस्य हविष आसास्येन जिह्वया जेन्यः प्रभूतो भवतीति शेषः । यद्वा । वर्षिता सन्नेकेन रूपेणान्यस्य यज्ञे होत्रादेर्जिह्वया तदुपलक्षितया स्रुचा जेन्यः प्रवृद्धो भवति । तथान्येन दावाग्निरूपेण वारणः सर्वेषां वारकः सन् वनिनो वनसंबंधिनो वृक्षान्नि मृष्ट । निमार्ष्टि । दहतीत्यर्थः ॥ मृजेश्छांदसे लङि व्यत्ययेनात्मनेपदं ॥

कृष्णप्रुतौ वेविजे अस्य सक्षिता उभा तरेते अभि मातरा शिशुं ।
प्राचाजिह्वं ध्वसयंतं तृषुच्युतमा साच्यं कुपयं वर्धनं पितुः ॥ ३ ॥
कृष्णऽप्रुतौ । वेविजे इति । अस्य । सऽक्षितौ । उभा । तरेते इति । अभि । मातरा । शिशुं ।
प्राचाऽजिह्वं । ध्वसयंतं । तृषुऽच्युतं । आ । साच्यं । कुपयं । वर्धनं । पितुः ॥ ३ ॥

अस्याग्नेर्मातरा मातृस्थानीये उत्पादयित्र्यावुभोभे अरण्याख्ये मातरौ वेविजे । चलतः ॥ ओविजी भयचलनयोः । अस्माद्यङ्लुगंताद्व्यत्ययेनात्मनेपदमेकवचनं च । लोपस्त आत्मनेपदेष्विति तलोपः । चादिलोपे विभाषेति निघाताभावः ॥ मथनोपक्रमे कृष्णप्रुतावग्निसंपर्कात्कृष्णवर्णतां प्राप्नुवत्यौ प्रापयंत्यौ वा भूमिं तथा सक्षितौ समानकार्यमग्न्युत्पादनं गच्छंत्यौ एवंभूते मातरौ शिशुं शिशुवदुत्पत्तिसमयेऽत्यल्पमग्निमभि तरेते । आभिमुख्येन प्राप्नुतश्च । कीदृशं शिशुं । प्राचाजिह्वं प्राग्देशस्थितजिह्वास्थानीयज्वालं ध्वसयंतं तमो नाशयंतं तृषुच्युतमरणीभ्यां क्षिप्रं निर्गच्छंतमक्लेशेन योनेः सकाशाच्छीघ्रमुत्पद्यमानं । आ ईषत् साच्यं समवेतव्यं मृदुकाष्ठचूर्णादिना कुपयं गोपनीयं पितुः पालकस्य यजमानस्य वर्धनं प्रवर्धनं प्रवर्धयितारं । उक्तप्रकारैर्लौकिकशिशुसाधारणैरुपेतं शिशुमग्निं मातरावुत्पादयत इत्यर्थः ॥

मुमुक्ष्वो३ मनवे मानवस्यते रघुद्रुवः कृष्णसीतास ऊ जुवः ।
असमना अजिरासो रघुष्यदो वातजूता उप युज्यंत आशवः ॥ ४ ॥

मुमुक्ष्वः । मनवे । मानवस्यते । रघुऽद्रुवः । कृष्णऽसीतासः । ऊं इति । जुवः ।
असमनाः । अजिरासः । रघुऽस्यदः । वातऽजूताः । उप । युज्यंते । आशवः ॥४॥

मनवे मननवते मानवस्यते मानवानृत्विजः कर्मार्थमिच्छते यजमानाय तदर्थमध्वर्य्वादिभिरग्नेर्ज्वाला उप युज्यंते यज्ञेषु । सूक्तस्याग्नेयत्वादौचित्याज्ज्वाला इति गम्यते । कीदृश्यस्ताः । मुमुक्ष्वो मुमुचव आहुतिद्वारा यजमानं मोक्तुमिच्छंत्यो ब्रह्मलोकं प्रापयंत्यः ॥ जसादिषु छंदसि वावचनमिति गुणाभावः ॥ ज्वालानामाहुतिद्वारा ब्रह्मलोकप्राप्तिसाधनत्वं काली करालीत्युपक्रम्य श्रूयते । एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् तं नयंत्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः । मुं० उ० १. २. ४-५. । इति । रघुद्रुवः क्षिप्रं गच्छंत्यः कृष्णसीतासः कृष्णमार्गाः । उकारः समुच्चयार्थः । जुवो जवनशीलाः शीघ्रकारिण्यः स्वव्यापारेषु असमना असमानमनस्काः । काश्चन प्राङ्मुख्यो गच्छंति काश्चन प्रत्यङ्मुख्य इति विविधमनस्काः ॥ व्यत्ययेनैकवचनं ॥ यद्वा । असमना भिन्नवर्णाः । भिन्नवर्णत्वं च तत्रैव श्रूयते । काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा स्फुलिंगिनी विश्वभुवी च देवी लेलायमाना इति सप्त जिह्वा इति । अजिरासो गमनशीलाः रघुस्यदः शीघ्रं स्यंदमानाः वातजूता वातप्रेरिताः ॥ तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं ॥ आशवो व्यापनशीलाः ॥

आदस्य ते ध्वसयंतो वृथेरते कृष्णमभ्वं महि वर्पः करिक्रतः ।
यत्सीं महीमवनिं प्राभि मर्मृशदभिश्वसन्स्तनयन्नेति नानदत् ॥५॥
आत् । अस्य । ते । ध्वसयंतः । वृथा । ईरते । कृष्णं । अभ्वं । महि । वर्पः । करिक्रतः ।
यत् । सीं । महीं । अवनिं । प्र । अभि । मर्मृशत् । अभिऽश्वसन् । स्तनयन् । एति ।
नानदत् ॥५॥

आदनंतरमस्य स्तूयमानस्याग्नेस्ते प्रसिद्धा विस्फुलिंगा वृथा सहैवेरते । सर्वतो गच्छंति । कीदृशास्ते । ध्वसयंतस्तमांसि ध्वंसयंतः तथा कृष्णवर्णमभ्वं महांतमभिभवद्गमनमार्गं महि महद्वर्पो रूपं प्रकाशं करिक्रतो ऽत्यर्थं कुर्वंतः । कस्मिन् काल इति तदुच्यते । यद्यदा महीं महतीमवनिं भूमिं सीं सर्वतो मर्मृशत् पुनःपुनरामृशत् ॥ मृशेर्यङ्लुगंताच्छतर्यभ्यस्तानामादिरित्याद्युदात्तत्वं ॥ अभिश्वसन् सर्वतश्चेष्टमानः स्तनयञ्शब्दं कुर्वन् नानददत्यर्थं शब्दयन् ॥ पूर्ववत्प्रत्ययस्वरौ ॥ अभितः प्रकर्षेणैति गच्छति । यदेतस्ततो जिह्वाभिर्लेलिहानो भुगुभुगुध्वनिं कुर्वञ्ज्वलति तदैव विस्फुलिंगा उद्भवंतीत्यर्थः ॥ ॥५॥

भूषन्न योऽधि बभ्रूषु नम्नते वृषेव पत्नीरभ्येति रोरुवत् ।
ओजायमानस्तन्वश्च शुंभते भीमो न शृंगा दविधाव दुर्गृभिः ॥६॥
भूषन् । न । यः । अधि । बभ्रूषु । नम्नते । वृषाऽइव । पत्नीः । अभि । एति । रोरुवत् ।
ओजायमानः । तन्वः । च । शुंभते । भीमः । न । शृंगा । दविधाव । दुःऽगृभिः ॥६॥

योऽग्निर्बभ्रूषु बभ्रुवर्णास्वोषधीषु भरणकुशलासु वा जगतामध्यधिकं नम्नते नमति काष्ठानि प्रविशति ॥ नमतेर्लेट्यडागमः । व्यत्ययेन श्ना । यद्वा । लटि छांदसः शपः श्लुः । व्यत्ययेन हलादिशेषाभावः ॥ भूषन्न भूतान्येव स्वतेजसा भूषयन्निव । किंचायं प्रविशन् वृषेव सेक्ता वृषभ इव पत्नीस्तमेव पालयित्रीः समर्धयित्रीरोषधी रोरुवत् । रौतेर्यङ्लुगंताच्छतर्यभ्यस्तानामादिरित्याद्युदात्तत्वं ॥ अत्यर्थं शब्दयन्नभ्येति । अभितो गच्छति । प्रथममोषधीः प्रविश्य पश्चात्प्रवृद्धः संस्ता एव दहतीत्यर्थः । किंचैवं कृत्वा ओजायमानः । ओज इति बलनाम । स्वयं बलमिवाचरन् ॥ कर्तुः क्यङ् सलोपश्चेति क्यङ्सलोपौ ॥ धूमादिभिर्विना केवलं तेजोरूप एव

संस्तन्वश्च शुंभते। स्वशरीरभूता ज्वाला अपि दीपयति। पोषयतीत्यर्थः। किंच प्रवृद्धज्वालो दुर्गृभिः केनचिदपि ग्रहीतुमशक्यः सन् भीमो न भयंकरो मृग इव स यथा दुर्ग्रहः सञ्शृंगं चालयति तद्वदयमपि शृंगाणि शृंगवदुन्नता ज्वाला दविधाव। अत्यर्थं चालयति ॥ धुनोतेर्यङ्लुगंताल्लिटि रूपं। अस्य च दाधर्त्यादाविति-शब्देन संग्रहो द्रष्टव्यः ॥

स संस्तिरो विष्टिरः सं गृभायति जानन्नेव जानतीर्नित्य आ शये।
पुनर्वर्धंते अपि यंति देव्यमन्यद्वर्पः पित्रोः कृण्वते सचा ॥७॥
सः। संऽस्तिरः। विऽस्तिरः। सं। गृभायति। जानन्। एव। जानतीः। नित्यः। आ। शये।
पुनः। वर्धंते। अपि। यंति। देव्यं। अन्यत्। वर्पः। पित्रोः। कृण्वते। सचा ॥७॥

सोऽग्निः संस्तिर आच्छन्नः ॥ संपूर्वात्स्तृणातेर्मूलविभुजादित्वात्कप्रत्ययः। पा॰ ३. २. ५. २.। परादिश्छंदसि बहुलमित्युत्तरपदाद्युदात्तत्वं ॥ तथा विस्तरः कदाचिद्विस्तीर्णः सन् सं गृभायति। संगृह्णात्योषधीः। किंचायं जानन्नेव यजमानार्थं प्रवृद्धेन भवितव्यं अतो ज्वालाभिः संयोज्य इत्यधिगच्छन्नेव जानतीर्यजमानार्थं प्रवृद्धाभिर्भवितव्यमित्यवगच्छंतीर्ज्वाला नित्योऽविच्छिन्नः सन्ना शये। आश्रिते। आश्रयतीत्यर्थः ॥ लोपस्त आत्मनपदेष्विति तलोपः ॥ एवंभूतज्वालाः पुनः पूर्वं प्रवृद्धा एव पुनरपि यागयोग्या यथा भवंति तथा वर्धंते। देव्यं यागादिव्यवहारयोग्यं स्तुत्यं वाग्निमपि यंति। प्राप्नुवंति। यद्यप्यग्निज्वालयोरेकत्वं तथापि राहोः शिर इतिवदौपचारिको गंतृगंतव्यभावः। किंचैवं प्रवृद्धा ज्वाला ओषधयो वा सचाग्निना सह पित्रोर्जगत्पालयित्रोस्ताभ्यां संभूय द्यावापृथिव्योरन्यत्पूर्वमविद्यमानं तेजोमयं वर्पो रूपं कृण्वते। कुर्वंति। लोकद्वयं स्पृशंतीत्यर्थः ॥

तमग्रुवः केशिनीः सं हि रेभिर ऊर्ध्वास्तस्थुर्मम्रुषीः प्रायवे पुनः।
तासां जरां प्रमुंचन्नेति नानदद्सुं परं जनयंजीवमस्तृतं ॥८॥
तं। अग्रुवः। केशिनीः। सं। हि। रेभिरे। ऊर्ध्वाः। तस्थुः। मम्रुषीः। प्र। आयवे। पुनरिति।
तासां। जरां। प्रऽमुंचन्। एति। नानदत्। असुं। परं। जनयन्। जीवं। अस्तृतं ॥८॥

तमग्निमग्रुवोऽग्रतः स्थिताः। यद्वा। अंगुलिनामैतत्। अंगुलय इवाकुटिलाः। केशिनीः केशस्थानीयोर्ध्वभाविकाष्र्ण्योपेता ज्वालाः सं रेभिरे हि। परिरंभं कुर्वंति खलु। आलिंगंति। किंचैवं कुर्वत्यो मम्रुषीर्मृता अंगारभावमापन्ना अपि ॥ म्रियतेः क्वसुप्रत्ययांतात् ङीपि रूपं ॥ आयव आगच्छतेऽग्नये भर्त्रे पुनः स्वोपद्रवमजानत्य ऊर्ध्वाः प्र तस्थुः। ऊर्ध्वमुखा उन्नताः प्रतस्थिरे। मृतप्राया अपि प्रत्युत्थानं कृतवत्य इत्यर्थः। एवं कृतवतीषु सतीषु स भर्ताग्निस्तासां ज्वालानां जरां वयोहानिं प्रमंचन प्रकर्षेण मोचयन् नानदज्जरापरिहाराय मंत्रयन्निवात्यर्थं शब्दयन्। न केवलं जराहानिरेव अपि तु परं निरतिशयमसुं प्राणमस्तृतं काष्ठोदकादिप्रक्षेपेणाप्यहिंसितं जीवं प्राणधारणसामर्थ्यं जनयन्नुत्पादयन्नेति। गच्छति। तासां ज्वालानां संनिधिं प्राप्नोति। यथा लोके काश्चन रमण्यो रमणेन सह निर्भरं क्रीडित्वा पश्चात्प्रोषिते तस्मिन्विरहेण जीर्णा म्रियमाणाः पश्चात्तस्मिन्नागते सति स्वदौर्बल्यमगणयित्वा संतोषेण परिष्वंगाय चेष्टंते स भर्ता मंत्रोच्चारणेन जरामपनोयोचितप्रदानेन प्राणयन् रक्षतीत्ययं भावोऽत्रानुसंधेयः ॥

अधीवासं परि मातू रिहन्नह तुविग्रेभिः सत्वभिर्याति वि ज्रयः।
वयो दधत्पद्वते रेरिहत्सदानु श्येनी सचते वर्तनीरह ॥९॥
अधीवासं। परि। मातुः। रिहन्। अह। तुविऽग्रेभिः। सत्वऽभिः। याति। वि। ज्रयः।
वयः। दधत्। पत्ऽवते। रेरिहत्। सदा। अनु। श्येनी। सचते। वर्तनिः। अह ॥९॥

दावाग्निः स्तूयते । अयमग्निर्मातुर्भूतानां निर्मातुर्भूमेरधीवासमुपर्याच्छादनस्थानीयं तृणगुल्मौषध्यादिकं परि परितो रिहन् लिहन्। अहेति प्रसिद्धौ । यद्वा । मातुर्भूमेरधीवासमुपरि धार्यमाणं वस्त्रं परि परितो रिहन् संपादयन्। तुविग्रेभिः प्रभूतं शब्दयद्भिः प्रभूतगमनैर्वा सत्वभिः प्राणिभिः सहितो जयो जयसा जवेन वि याति । विविधं गच्छति । किंच पद्वते पादवते द्विपदे चतुष्पदे च वयोऽन्नं तत्तदुचितं दधद्ददत्। विवने दावानले भीत्या पलायमानान्प्राणिनो व्याघ्रादयो भक्षयंतीति प्रसिद्धं । किं कुर्वन्। सदा सर्वदा तृणादिकं रेरिहद्दहन्। किंच श्येनी श्यामवर्णी वर्तनिर्मार्गो वियांतमन्वनुक्रमेण सचते । सेवते । यत्र यत्राग्निर्गच्छति तत्र तत्र मार्गोऽपि कृष्णो भवति । अहेति प्रसिद्धौ ॥

अस्माकमग्ने मघवत्सु दीदिह्यध श्वसीवान्वृषभो दमूनाः ।
अवास्या शिशुमतीरदीदेर्वर्मेव युत्सु परिजर्भुराणः ॥ १० ॥
अस्माकं । अग्ने । मघवत्ऽसु । दीदिहि । अध । श्वसीवान् । वृषभः । दमूनाः ।
अवऽअस्य । शिशुऽमतीः । अदीदेः । वर्मऽइव । युत्ऽसु । परिऽजर्भुराणः ॥ १० ॥

हे अग्ने अस्माकं मघवत्स्वस्मत्संबंधिष्वन्नवत्सु यागेषु गृहेषु वा दीदिहि । दीप्यस्व । अधाथानंतरं श्वसीवान् श्वसनवान् ज्वालाभिश्चेष्टावान् अस्मत्प्राणनवान्वा वृषभो वर्षिताभिमतानां दमूना दानमना दममना दांतमना वा सर्वत्र भवेति शेषः । स उक्तलक्षणस्त्वं शिशुमतीरवास्य । शिशुशब्देन तदवस्था लक्ष्यते । शैशववतीर्ज्वाला अपक्षिप्य विहायादीदेः । भृशं दीप्यस्व । कीदृशस्त्वं । युत्सु संग्रामेषु वर्मेव कवचमिव परिजर्भुराणोऽस्मद्द्विष्टून् पुनःपुनः परिहरन् । यद्वा । युत्सु संग्रामेषु वर्मेव परिजर्भुराणो भव ॥ हरतेर्यङ्लुगंताद्व्यत्ययेन शानच् । अभ्यस्तानामादिरित्याद्युदात्तत्वं ॥ उक्तगुणको भवान्मघवत्सु यज्ञेषु दीप्यस्व ॥ ॥ ६ ॥

इदमग्ने सुधितं दुर्धितादधि प्रियादु चिन्मन्मनः प्रेयो अस्तु ते ।
यत्ते शुक्रं तन्वो३ रोचते शुचि तेनास्मभ्यं वनसे रत्नमा त्वं ॥ ११ ॥
इदं । अग्ने । सुऽधितं । दुःऽधितात् । अधि । प्रियात् । ऊं इति । चित् । मन्मनः । प्रेयः । अस्तु । ते ।
यत् । ते । शुक्रं । तन्वः । रोचते । शुचि । तेन । अस्मभ्यं । वनसे । रत्नं । आ । त्वं ॥ ११ ॥

हे अग्ने इदमस्मदीयं सोमादिरूपं हविः । कीदृशं तत् । दुर्धिताद्दुष्टं स्थापितात्कठिनात्काष्ठादेरध्युपरि सुधितं सुहितं सुष्ठु दत्तं । मन्मनो मननीयात्प्रियादु चित् तव हृद्यादपि । उशब्दोऽवधारणे चिच्छब्दोऽपिशब्दार्थः । ते तव प्रेयोऽतिप्रियतममस्तु । तत्किमित्याह । हे अग्ने ते तव तन्वः शरीरस्य घृतेनोज्ज्वलिताया ज्वालायाः शुचि निर्मलं शुक्रं दीप्तं यत्तेजो रोचते तेन सह रत्नं रमणीयं मणिमुक्तादिकं वितरन्नस्मभ्यं वनसे । अस्मान्संभजस्व ॥ वनतेर्व्यत्ययेनात्मनेपदं ॥

रथाय नावमुत नो गृहाय नित्यारित्रां पद्वतीं रास्यग्ने ।
अस्माकं वीराँ उत नो मघोनो जनाँश्च या पारयाच्छर्म या च ॥ १२ ॥
रथाय । नावं । उत । नः । गृहाय । नित्यऽअरित्रां । पत्ऽवतीं । रासि । अग्ने ।
अस्माकं । वीरान् । उत । नः । मघोनः । जनान् । च । या । पारयात् । शर्म । या । च ॥ १२ ॥

हे अग्ने उतापि च रथाय रंहणाय गृहाय सर्वस्यायतनभूताय नोऽस्माकं यजमानाय नावं संसारोत्तारिकां सोमयागात्मिकां नावं । यज्ञो वै सुतर्मा नौरित्यादिषु श्रुतिषु नौरूपत्वेन स्तुतत्वात् । कीदृशीं तां । नित्यारित्रां नियतर्त्विग्रूपोदकाकर्षणकाष्ठसाधनोपेतां पद्वतीं ॥ ह्रस्वनुड्भ्यामिति मतुप उदात्तत्वं ॥ द्रव्यदेवतामंत्रादिरूपपादोपेतां । ईदृशीं यज्ञात्मिकां नावं रासि । देहि । संपादय । रातिर्दानकर्मा दासति रातीति

तन्नामसु पाठात्। सैव विशिष्यते। उतापि च या नौरस्माकं वीरानस्मत्संबंधिनः पुत्रादीन्मघोनो हविर्लक्षणान्नवतः करोति। जनांश्च यजमानानस्मानपि या नौः पारयात् पारयेत् उत्तारयेत् ॥ पारयतेर्लेट्याडागमः ॥ जननमरणादिबहुदुःखात्मकस्य पारं निरतिशयसुखास्पदं ब्रह्मलोकं प्रापयेत्। एष वः पुण्यः सुकृतो ब्रह्मलोक इति यागाद्यनुष्ठानवतां श्रूयमाणत्वात्। एवं प्रापय्य च या नौः शर्म सुखं निरतिशयं ब्रह्म प्रापयेत् परस्यांते कृतात्मानः प्रविशंति परं पदमित्युक्तत्वात्। चित्तशुद्ध्युत्पादनद्वारा विविदिषंति यज्ञेन दानेनेति श्रुतेः ॥

अभी नो अग्न उक्थमिज्जुगुर्या द्यावाक्षामा सिंधवश्च स्वगूर्ताः।
गव्यं यव्यं यंतो दीर्घाहेषं वरमरुण्यो वरंत ॥१३॥
अभि। नः। अग्ने। उक्थं। इत्। जुगुर्याः। द्यावाक्षामा। सिंधवः। च। स्वऽगूर्ताः।
गव्यं। यव्यं। यंतः। दीर्घा। अहा। इषं। वरं। अरुण्यः। वरंत ॥१३॥

हे अग्ने न उक्थं शस्त्रमभि जुगुर्याः। आभिमुख्येन स्तुहि प्रोत्साहय। सम्यक् शस्तमित्यंगीकुरु ॥ गॄ शब्दे। लिङि बहुलं छंदसीति विकरणस्य श्लुः। बहुलं छंदसीत्युत्वं ॥ तथा द्यावाक्षामा द्यावापृथिव्यावपि यज्ञसाधनसंपादनेन प्रोत्साहयतां। तथा सिंधवः स्यंदनशीला नद्यश्च स्वगूर्ताः स्वयमेव गामिन्यो गव्यं गोसंभवं क्षीरादिकं गवां तृणाद्युत्पादनद्वारा यव्यं। उपलक्षणमेतत्। यवव्रीह्यादिजन्यं पुरोडाशादिकं यंतः प्रापयंतः प्रोत्साहयंतु। तथारुण्योऽरुणवर्णगोयुक्ताः ॥ मत्वर्थीयो लुप्यते ॥ आरुण्यसाधनभूता उषसः। तद्धेतुत्वात्ताच्छब्द्यं। दीर्घाहा सर्वाण्यहानि सर्वकालमिषमिष्यमाणमन्नरसादिकं वरं वरणीयं श्रेष्ठमन्यदपि यागसाधनं वरंत। प्रापयंतु ॥ वृङ् संभक्तौ। अंतर्भावितण्यर्थाच्छांदसो लङ्। व्यत्ययेन शप् ॥ साधयंतु। एतत्सर्वमग्नेः प्रसादादित्यग्नेरेव स्तुतित्वादाग्नेयत्वमविरुद्धं ॥ ॥७॥

बळित्थेति त्रयोदशर्चं द्वितीयं सूक्तं दैर्घतमसं जागतं। अंत्ये त्रिष्टुभौ। अग्निर्देवता ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥

बळित्था तद्वपुषे धायि दर्शतं देवस्य भर्गः सहसो यतो जनि।
यदीमुप ह्वरते साधते मतिर्ऋतस्य धेना अनयंत सस्रुतः ॥१॥
बट्। इत्था। तत्। वपुषे। धायि। दर्शतं। देवस्य। भर्गः। सहसः। यतः। जनि।
यत्। ईं। उप। ह्वरते। साधते। मतिः। ऋतस्य। धेनाः। अनयंत। सऽस्रुतः ॥१॥

देवस्य द्योतनशीलस्यादित्यस्य दर्शतं सर्वैर्दर्शनीयं तत् प्रसिद्धं भर्गस्तेज इत्येत्थं सर्वैर्दृश्यमानप्रकारेण वपुषे शरीरव्यवहाराय दार्ढ्याय धायि। धार्यते सर्वैः। बळित्थेत्युभे अपि सत्यनामनी बट् श्रत् सत्रेत्थेति तन्नामसु पाठात्। जाठराग्निना भुक्तानां जरणेन शरीरधारणं प्रसिद्धं। तत्रोपपत्तिमाह। यतः सहसो जनि। यतः कारणान्मथनकाले बलेनोत्पन्नः अतो बलाय धार्यत इत्यर्थः। यदीं यदेतत्प्रसिद्धं लोकोपकार्यग्नेस्तेजो मतिर्मदीया बुद्धिरुप ह्वरते उपगच्छति उपगम्य वर्तते वा ॥ ह्वृ कौटिल्ये ॥ साधते च तेनैव तेजसा साधयति स्वाभीष्टं। किंच ऋतस्य यज्ञसाधकस्याग्नेस्तेजसा धेनाः सर्वप्राणिनां वाचः सस्रुतः समानं गच्छंत्यः सहैव प्रवर्तमानाः ॥ स्रवतेः कर्तरि क्विप् ॥ अनयंत। नयंति। निर्वहंति जगद्व्यवहारं ॥ व्यत्ययेनात्मनेपदं ॥ यद्वा। ऋतस्य धेना यज्ञस्य संबंधिन्यो मंत्ररूपा वाचः सस्रुतो होत्रादिमुखेन सहैव प्रवर्तमाना अनयंत। नयंति। अग्नेः स्तोत्रं निर्वहंति। अग्नेस्तेजसा वा यज्ञं निर्वहंति। तेजोमयी वागिति श्रुतेः। छां० उ० ६. ५. ४.। अतः [illegible] इत्यर्थः। धेनेति वाङ्नाम धेना ग्ना इति तन्नामसु पाठात् ॥

पृक्षो वपुः पितुमान्नित्य आ शये द्वितीयमा सप्तशिवासु मातृषु ।
तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयंत योषणः ॥ २ ॥
पृक्षः । वपुः । पितुऽमान् । नित्यः । आ । शये । द्वितीयं । आ । सप्तऽशिवासु । मातृषु ।
तृतीयं । अस्य । वृषभस्य । दोहसे । दशऽप्रमतिं । जनयंत । योषणः ॥ २ ॥

अयमग्निः पृक्षोऽन्नसाधकः पाकादिना वपुर्वपुष्माञ्छरीराभिवृद्धिहेतुः पितुमान् हविर्लक्षणान्नयुक्तो नित्यः शाश्वतः । ईदृशः सन् प्रथमं पृथिवीस्थानः सन्ना शये । आशेते । दाहपाकादि लौकिकं कर्म यज्ञादि वैदिकं कर्म च निर्वर्तयन्ध्रुवो भूमौ वर्तत इत्यर्थः । तथा सप्तशिवासु मातृषु सप्तलोकशिवकरीषु मातृस्थानीयासु हितकरीषु वृष्टिषु द्वितीयमाशेते । मध्यमस्थानो विद्युद्रूपो वा वर्तते । अस्य वृषभस्य वर्षितुरस्यैव वैद्युताग्नेः सहायत्वेन संबंधिने दोहसे दोग्ध्र आदित्यस्योदकस्य वर्षयित्र आदित्यरश्मये ॥ दुहेः कर्तर्यसुप्रत्ययः ॥ तत्प्रवृत्तये तृतीयमाशेते । द्युस्थानो वर्तते । यद्वा । अस्य वृषभस्य वर्षितुः प्रसिद्धस्यादित्यस्य संबंधिने दोग्ध्रे रश्मये तत्प्रवृत्त्यर्थं । आदित्यरश्मयो घर्मकाले भूमिस्थमुदकमाकृष्य सूर्यं प्रापय्य तत्र चिरकालं धृत्वा पुनरंतरिक्षं प्राप्य मेघेषु स्थित्वा वर्षकाले प्रवर्षंतीति प्रसिद्धं । अतो रश्मेर्दोग्धृत्वं । ईदृशं त्रिस्थानमग्निं महाभागं योषणो मिश्रणशीलाः सर्वा दिशो जनयंत । उत्पादयंति । सर्वासु दिक्षु प्रसूत इत्यर्थः । कीदृशं तं । दशप्रमतिं । दशसु दिक्षु प्रकृष्टमननवंतं पूज्यत्वाय । यद्वा । मथनकाले दशभिरंगुलीभिरुत्पन्नं लोकत्रये दशदिक्षु च व्याप्तमित्यर्थः ॥

निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः शवसा क्रंत सूरयः ।
यदीमनु प्रदिवो मध्व आधवे गुहा संतं मातरिश्वा मथायति ॥ ३ ॥
निः । यत् । ईं । बुध्नात् । महिषस्य । वर्पसः । ईशानासः । शवसा । क्रंत । सूरयः ।
यत् । ईं । अनु । प्रऽदिवः । मध्वः । आऽधवे । गुहा । संतं । मातरिश्वा । मथायति ॥ ३ ॥

ईमेनमग्निं यद्यस्मात्कारणान्महिषस्य । महन्नामैतत् महिषोऽभ्व ऋभुक्वा इति तन्नामसु पाठात् । महतो यज्ञस्य बुध्नान्मूलादाधानादारभ्य वर्पसः । रूपनामैतत् । रूपस्योपक्रमोपसंहारात्मकस्य सिद्धय ईशानासः स्वकीयव्यापारसमर्थाः सूरयो मेधाविन ऋत्विजः शवसा बलेन मंत्रादिरूपेण शारीरेण वा निष्क्रंत निष्कुर्वंति साधयंति उत्पादयंति काष्ठात् । यद्वा । एनमग्निं बुध्नादादितो मथनादारभ्य महिषस्य वर्पसो महतो रूपस्याकृतिस्वीकारसमर्थस्य सिद्धये निष्कुर्वंति ॥ करोतेश्छांदसे लुङि मंत्रे घसेति च्लेर्लुक् । व्यत्ययेनांतादेशः ॥ किंच यदीमेनमेवाग्निं प्रदिवः पुराणात् । अनादिकालमारभ्य न केवलमिदानीमेवेत्यर्थः । पूर्ववदिदानीं मध्वो मधुनो मधुसदृशस्याधव आधवने प्रक्षेपे निमित्ते सति गुहा संतं गुहायां वेद्यां काष्ठेषु निगूढं संतं मातरिश्वांतरिक्षे चेष्टमानो वायुरनुक्रमेण मथायति चालयति । उद्बोधयतीत्यर्थः । यद्वा । मातरि फलस्य मातरि यागे श्वसिति चेष्टत इति मातरिश्वा यजमानो गुहा संतमरण्योर्निगूढं संतं प्रादुर्भावायानुक्रमेण मथायति मथ्नाति । उत्पादयतीत्यर्थः । यस्मादेवंरूपस्तस्मात्स्तोतव्य इत्यर्थः ॥

प्र यत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति ।
उभा यदस्य जनुषं यदिन्वत आदिद्यविष्ठो अभवद्घृणा शुचिः ॥ ४ ॥
प्र । यत् । पितुः । परमात् । नीयते । परि । आ । पृक्षुधः । वीरुधः । दंऽसु । रोहति ।
उभा । यत् । अस्य । जनुषं । यत् । इन्वतः । आत् । इत् । यविष्ठः । अभवत् । घृणा । शुचिः ॥ ४ ॥

यद्यस्मात्पितुरन्नस्य पशुलक्षणस्य ॥ षष्ठीस्थाने प्रथमा ॥ तस्य परमात् परमत्वाद्धेतोः । उत्कृष्टत्वायेत्यर्थः । तदर्थं प्र परि णीयते प्रकर्षेण परितो नीयते । पर्यग्निक्रियत इत्यर्थः । यद्वा । पितुरुत्पादकात्परमादुत्कृष्टाद्गार्हपत्यलक्षणस्याग्नेः सकाशादाहवनीयं प्रति प्र परि णीयते प्रकर्षेण नीयते । परिरनर्थकः । किंच पृक्षुधः पशुपुरोडाशादिषु दाहमध्ये धीयमानाः । यद्वा ॥ प्रशब्दस्य संप्रसारणं । क्षुध बुभुक्षायां । क्विप् ॥ प्रक्षोध्याः प्रकर्षेण बुभुक्षिता भोक्तुमिष्यमाणाः । वीरुधो दंसु दंतेषु मध्य आ रोहति । आरोहंति । प्रविशंतीत्यर्थः । यद्यस्मादुभो- भावध्वर्युयजमानौ उभे अरणी वास्याग्नेर्जनुषं जन्मोत्पत्तिमिन्वतः व्याप्नुतः । स्वीकुरुत इत्यर्थः ॥ इवि व्याप्तौ । इदित्त्वान्नुम् ॥ आदिदत एव कारणाच्छुचिः शुद्धोऽयमग्निर्घृणा यजमानेष्वनुग्रहेण । यद्वा । घृणा घृणी दीप्तिमान् ॥ मत्वर्थो लुप्यते ॥ दीप्त्या वा यविष्ठो युवतमोऽभवत् । संपन्नः । स्वीकारसमर्थोऽभवदित्यर्थः ॥

आदिन्मातॄराविशद्यास्वा शुचिरहिंस्यमान उर्विया वि वावृधे ।
अनु यत्पूर्वा अरुहत्सनाजुवो नि नव्यसीष्ववरासु धावते ॥५॥
आत् । इत् । मातॄः । आ । अविशत् । यासु । आ । शुचिः । अहिंस्यमानः । उर्विया । वि । ववृधे ।
अनु । यत् । पूर्वाः । अरुहत् । सनाऽजुवः । नि । नव्यसीषु । अवरासु । धावते ॥५॥

अयमग्निरा शुचिर्दीप्तः सन् आदित् पूर्वमंत्रे यविष्ठोऽभवदित्युक्तत्वात् तदनंतरमेव मातॄरुत्पादयित्रीर्मातृस्थानीया दश दिश आविशत् । सर्वतः प्रविशति । पूर्वत्र दशप्रमतिं जनयंत योषण इत्युक्तत्वात् दिशां मातृत्वं । दिक्षु प्रकाशेन व्याप्त इत्यर्थः । मातरो विशेष्यंते । यासु मातृष्वहिंस्यमानः परैरपीड्यमान उर्वियोर्वतिप्रभूतं वि ववृधे विविधं प्रवृद्धोऽभवत् तास्वाविशत् । यथा लोके कश्चित्तेजस्वी जनन्याः स्तनपानपरिपीडादिभिः सम्यक् पोषितो लोके प्रकाश्य पुनरागत्य मातरमालिंगति तद्वदिति भावः । कस्मिन्काल इति तत्राह । यद्यदा सनाजुवो दीर्घकालवियोगिन्यः स्थापनकाल एव प्रक्षिप्ताः अत एव पूर्वाः प्रथमभाविनीरोषधीरनुक्रमेणारुहत् आरोहति ॥ रुहेश्छांदसो लुङ् । कृमृदृरुहिभ्यश्छंदसीति च्लेरङादेशः ॥ उपरि प्रज्वलति । तथा नव्यसीषु नवतरासु अत एवावरासु अत एव पूर्वापेक्षया निकृष्टासु पश्चाद्भाविनीष्वोषधीषु नि धावते नितरां नीचैर्वा गच्छति । अंतःप्रविशतीत्यर्थः । यदा काष्ठानामधस्तादुपरिष्टाच्च प्रविश्य ज्वलति तदा दिक्षु प्रकाशितोऽभवदित्यर्थः ॥ ॥८॥

आदिद्धोतारं वृणते दिविष्टिषु भगमिव पपृचानास ऋंजते ।
देवान्यत्क्रत्वा मज्मना पुरुष्टुतो मर्तं शंसं विश्वधा वेति धायसे ॥६॥
आत् । इत् । होतारं । वृणते । दिविष्टिषु । भगंऽइव । पपृचानासः । ऋंजते ।
देवान् । यत् । क्रत्वा । मज्मना । पुरुऽस्तुतः । मर्तं । शंसं । विश्वधा । वेति । धायसे ॥६॥

होतारं होमनिष्पादकमाह्वातारं वा देवानां ईदृशमग्निं दिविष्टिषु दिवसैषणेषु निमित्तभूतेषु वृणते । संभजते । आदिदनंतरमेव तथा पपृचानासो हविषा स्तुत्या च संपृचाना ऋत्विजो यजमानाः ॥ पृचेश्छांदसस्य लिटः कानच् ॥ ऋंजते । प्रसाधयंति । किमिव । भगमिव । तं यथा जनाः प्रसाधयंति तद्वत् । यद्वा । महांतं राजानमिव सूर्यदीप्तिवत्पूज्यमित्यर्थः । ऋंजतिः प्रसाधनकर्मेति यास्कः । यद्यस्मादयमग्निः पुरुष्टुतो बहुभिर्बहुधा वा स्तूयमानः क्रत्वा क्रतुना कर्मणा यागादिरूपेण मज्मना शारीरेण बलेन च युक्तान्देवान्व्यवहर्तॄनृत्विजो यज्ञभुजो देवान्वा क्रत्वा मज्मना च योजयितुं तथा मर्तं यजमानं शंसं स्तुतिं च स्तुत्यं वा तं विश्वधा विश्वधनो यद्वा विश्वात्मकोऽयं वेति पूर्वोक्तान्कामयते । किमर्थं । धायसे हविर्लक्षणान्नाय । तस्माद्धोतारमग्निं वृणते ऋंजते च ॥

वि यदस्थाद्यजतो वातचोदितो ह्वारो न वक्वा जरणा अनाकृतः ।
तस्य पत्मन्दक्षुषः कृष्णजंहसः शुचिजन्मनो रज आ व्यध्वनः ॥ ७ ॥
वि । यत् । अस्थात् । यजतः । वातऽचोदितः । ह्वारः । न । वक्वा । जरणाः । अनाकृतः ।
तस्य । पत्मन् । धक्षुषः । कृष्णऽजंहसः । शुचिऽजन्मनः । रजः । आ । विऽअध्वनः ॥ ७ ॥

यद्यदायमग्निर्वातचोदितो वायुना प्रेरितः ॥ तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं ॥ यजतः सर्वैर्यष्टव्यो यष्टुं योग्यः सन् व्यस्थात् वितिष्ठते सर्वतो व्याप्तो भवति । तत्र दृष्टांतः । अनाकृतोऽनिवारितोऽप्रतिहतप्रसरो वक्वा बहुवक्ता ॥ वचेरन्येभ्योऽपि दृश्यंत इति वनिप् । दृशिग्रहणात्कुत्वं ॥ ह्वारो न कुटिल इव विदूषणकादिरिव ॥ ह्वरतेर्ण्यंतात्पचाद्यच् ॥ स यथा जरणाः स्तुतीर्वितिष्ठते विविधं कुर्वन् वर्तते तद्वदयमप्यनाकृतोऽप्रतिबद्धप्रसरो व्यवस्थितः । तदा तस्याग्नेः पत्मन् पतने मार्गे यज्ञरूपे रजो रंजनात्मको लोक आस्थात् । आतिष्ठति । सर्वत आश्रयति । अग्नौ बहुधा यजतीत्यर्थः । कीदृशस्य तस्य । धक्षुषो दहतः ॥ दहेर्लिटः क्वसुः ॥ कृष्णजंहसः । कृष्णमार्गस्य ॥ पुनःपुनर्गम्यत इति जंहा मार्गः । हंतेर्यङ्लुगंतात्कर्मण्यसुन् । कुत्वाभावश्छांदसः ॥ शुचिजन्मनः मंत्रसहितारण्योरुत्पन्नत्वात् व्यध्वनो विविधज्वालस्यानियतमार्गस्य ॥

रथो न यातः शिक्वभिः कृतो द्यामंगेभिररुषेभिरीयते ।
आदस्य ते कृष्णासो दक्षि सूरयः शूरस्येव त्वेषथादीषते वयः ॥ ८ ॥
रथः । न । यातः । शिक्वऽभिः । कृतः । द्यां । अंगेभिः । अरुषेभिः । ईयते ।
आत् । अस्य । ते । कृष्णासः । धक्षि । सूरयः । शूरस्यऽइव । त्वेषथात् । ईषते । वयः ॥ ८ ॥

अयमग्निः शिक्वभी रज्जुभिः कृतो बद्धो रथो न रथ इव । स यथा स्वीयैश्चक्रादिभिरंगैरीयते तद्वद्यातः स्थापितः सन्नरुषेभिर्गमनशीलैरंगेभिर्ज्वालादिरूपैरवयवैर्द्यामंतरिक्षमाज्येन हृष्टः सन्नीयते । गच्छति ॥ ईङ् गतौ ॥ आत् प्रवृद्ध्यनंतरमस्याग्नेस्ते सूरयः सरणयो मार्गाः कृष्णासः कृष्णवर्णा भवंति । यत एवं भवंति तदर्थं दक्षि । दहति काष्ठान् ॥ पुरुषव्यत्ययः । छांदसः शपो लुक् ॥ किंच ज्वलितस्याग्नेस्त्वेषथाद्दीप्तात्तेजसः सकाशाद्वयो गमनवंतः पक्षिमृगादय ईषते । गच्छंति ॥ ईष गत्यादौ । बहुलं छंदसीति शपो लुक् ॥ पलायंते । तत्र दृष्टांतः । शूरस्य त्वेषथाद्वय इव । कस्यचिद्विक्रांतस्य दीप्तात्तेजसः सकाशाद्भीत्या पलायमाना इव । एवमंतरिक्षं स्पृशन् सर्वतो दहतीति सर्वदा दावाग्निरूपेण स्तूयते ॥

त्वया ह्यग्ने वरुणो धृतव्रतो मित्रः शाशद्रे अर्यमा सुदानवः ।
यत्सीमनु क्रतुना विश्वथा विभुररान्न नेमिः परिभूरजायथाः ॥ ९ ॥
त्वया । हि । अग्ने । वरुणः । धृतऽव्रतः । मित्रः । शाशद्रे । अर्यमा । सुऽदानवः ।
यत् । सीं । अनु । क्रतुना । विश्वऽथा । विऽभुः । अरान् । न । नेमिः । परिऽभूः ।
अजायथाः ॥ ९ ॥

हे अग्ने त्वया खलु वरुणो रात्र्यभिमानी देवो धृतव्रतः स्वीकृतवर्षणादिकर्मा भवति । तथा मित्रोऽहरभिमानी देवः शाशद्रे । शातयति तमः ॥ शद्लृ शातने । छांदसो लिङ् । बहुलं छंदसीति रुट् । तुजादित्वादभ्यासदीर्घः ॥ तथार्यमोभयोर्मध्यवर्ती देवः सुदानवः शोभनदानो भवति ॥ व्यत्ययेन बहुवचनं ॥ यद्वा । एते वरुणादयः सुदानवः शोभनदानाः स्वस्वकार्यकर्तारस्त्वया हि शाशद्रे । तीक्ष्णीक्रियंते । हिशब्दो मंत्रांतरप्रसिद्धिद्योतनार्थः । त्वमग्ने वरुणो जायसे । ऋ० ५. ३. १. । इति हि मंत्रांतरं ॥ शदेः कर्मणि च्छांदसो लिट् ।

इरयो र इति रेभावः। हि चेति निघाताभावः॥ वरुणादीनामग्न्यायत्तत्व उपपत्तिमाह। यद्यस्मात्कारणात् हे अग्ने सीं सर्वतः क्रतुना कर्मणा विश्वथा विश्व इव विश्वात्मक इव विभुर्मिचार्यमात्मना सर्वव्यापी परिभूः स्वतेजसा सर्वतः परिभाविता सन्ननुक्रमेणाजायथाः जायसे प्रादुर्भवसि। तत्र दृष्टांतः। अरान्रथस्य चक्रान्नेमिर्न वाह्यवलय इव। स यथा व्याप्य तिष्ठति तद्वदयमग्निर्वरुणादीन्व्याप्य तिष्ठति॥

त्वम॑ग्ने शशमा॒नाय॑ सुन्व॒ते रत्नं॑ यविष्ठ दे॒वता॑तिमिन्वसि।
तं त्वा॒ नु नव्यं॑ सहसो युवन्व॒यं भग॒ं न का॒रे म॑हिरत्न धीमहि॥१०॥
त्वं। अ॒ग्ने॒। श॒श॒मा॒नाय॑। सु॒न्व॒ते। रत्नं॑। यवि॑ष्ठ। दे॒वऽता॑तिं। इ॒न्व॒सि॒।
तं। त्वा॒। नु। नव्यं॑। स॒ह॒सः॒। यु॒व॒न्। व॒यं। भगं॑। न। का॒रे। म॒हि॒ऽर॒त्न॒। धी॒म॒हि॒॥१०॥

हे अग्ने यविष्ठ युवतम त्वं शशमानाय त्वां स्तुवते। शशमानः शंसमान इति यास्कः। नि० ६. ८.। सुन्वते त्वदर्थमभिषवं कुर्वते यजमानाय तद्यागार्थं रत्नं रमणीयं हविर्देवतातिं देवेषु तायमानं विस्तार्यमाणमिन्वसि। व्याप्नोषि। अस्मत्प्रत्तं हविर्देवान्प्रापयसीत्यर्थः। इन्वतिर्व्याप्तिकर्मा इन्वति ननक्षेति तन्नामसु पाठात्। हे सहसो युवन्। युवशब्देनोत्पत्तिर्लक्ष्यते। मथनकाले बलेनोत्पन्न बलस्य मिश्रयितर्वा। यद्वा। सहसस्पुत्र युवन्नित्यतरुण माहिरत्नास्मत्प्रदेयमहद्रमणीयधन नव्यं नवतरं स्तुत्यं वा तं तादृशं हविर्भुजं त्वा त्वां वयं यजमानाः कारे शब्दे स्तोत्रलक्षणे नु क्षिप्रं धीमहि। स्थापयामः। हविष्प्रदानसमये क्षिप्रमेव स्तुम इत्यर्थः। तत्र दृष्टांतः। भगं मादित्यमिव। यद्वा। महांतं राजानमिव। तं यथा स्तुवंति तद्वत्॥

अ॒स्मे र॒यिं न स्व॒र्थं॑ दमू॑नसं॒ भग॒ं दक्षं॒ न प॑पृचासि धर्ण॒सिं।
र॒श्मीँरि॑व॒ यो यम॑ति॒ जन्म॑नी उ॒भे दे॒वानां॒ शंस॑मृ॒त आ च॑ सु॒क्रतुः॑॥११॥
अ॒स्मे इति॑। र॒यिं। न। सु॒ऽअ॒र्थं॑। दमू॑नसं। भगं॑। दक्षं॑। न। प॒पृ॒चा॒सि॒। ध॒र्ण॒सिं।
र॒श्मीन्ऽइ॑व। यः। यम॑ति। जन्म॑नी॒ इति॑। उ॒भे इति॑। दे॒वानां॑। शंसं॑। ऋ॒ते। आ।
च॒। सु॒ऽक्रतुः॑॥११॥

हे अग्ने त्वमस्मे अस्मासु स्वर्थं सुष्ठुरणीयं दमूनसं दमनीयसुपार्ज्यं॥ दमेरूनसिः। उ० ४. २३४.। इत्यूनसिप्रत्ययः॥ रयिं न पपृचासि धनं यथा संपृणक्षि। तथा भगं सर्वैर्भजनीयं दक्षं नोत्साहवंतं प्रवृद्धं वा धर्णसिं विद्यादिधारणकुशलं पुत्रं यथा पपृचासि संपृणक्षि। उभयमपि ददासीत्यर्थः॥ पृची संपर्के। लेट्याडागमः। बहुलं छंदसीति विकरणस्य श्लुः॥ इदानीं परोक्षेणाह। योऽग्नी रश्मींरिव स्वकीयान्रश्मीन्यथा यमति नियमयति विस्तारयति तद्वत् स उभे जन्मनी जननाधारभूतावुभौ लोकाविहलोकपरलोकौ यमति नियच्छति। तथा सुक्रतुः शोभनकर्मायमृतेऽस्मदीययज्ञे देवानां देवसंबंधिनं शंसं स्तवं चा यमति आयच्छति सर्वदा ददाति। यद्वा। पूर्वार्धे पपृचासीत्यपि परोक्षत्वाय प्रथमपुरुषतया योज्यं॥

उ॒त नः॑ सु॒द्योत्मा॑ जी॒राश्वो॒ होता॑ म॒न्द्रः शृ॑णवच्च॒न्द्ररथः॑।
स नो॑ नेष॒न्नेष॑तमै॒रमू॑रो॒ऽग्निर्वा॒मं सु॑वि॒तं वस्यो॒ अच्छ॑॥१२॥
उ॒त। नः॒। सु॒ऽद्योत्मा॑। जी॒रऽअ॑श्वः। होता॑। म॒न्द्रः। शृ॒ण॒व॒त्। च॒न्द्रऽर॑थः।
सः। नः॒। ने॒ष॒त्। नेष॑ऽतमैः। अमू॑रः। अ॒ग्निः। वा॒मं। सु॒वि॒तं। वस्यः॑। अच्छ॑॥१२॥

उतशब्दोऽप्यर्थः। स च संभावनायां। सोऽग्निर्नोऽस्मदीयमाह्वानमुत शृणवत्। अपि नाम शृणुयात्। यद्वा। नोऽस्मान् श्रावयेत्। देवेषु मध्ये प्रख्यापयेत्॥ शृणोतेर्लेट्यडागमः॥ कीदृशोऽयं। सुद्योत्मा सुद्योत-

मानः ॥ द्युत दीप्तौ । अन्येभ्योऽपि दृश्यंत इति मनिन् ॥ जीराश्वः शीघ्रगमनाश्वः होता देवानामाह्वाता मंद्रो मदनशीलः चंद्ररथः सुवर्णमयरथोपेतः । किंचायममूरोऽमूढबलो वस्वो वसनीयः स प्रसिद्धोऽग्निर्नेषतमेरत्यर्थं नेतृभिः कर्मभिः स्तोत्रैर्वा नोऽस्मानुत नेषत् । अपि नाम नयेत् । यज्ञस्य पारं प्रापयेत् ॥ नयतेर्लेट्यडागमः । सिब्बहुलमिति सिप् ॥ किमर्थं । वामं वननीयं सुवितं सुष्ठु प्राप्यं सर्वैः कांक्षणीयं स्वर्गमच्छाभिमुख्येन प्राप्तुं नेषत् ॥

अस्ता॑व्य॒ग्निः शि॒मीव॑द्भिर॒र्कैः साम्रा॑ज्याय प्रत॒रं दधा॑नः ।
अ॒मी च॒ ये म॒घवा॑नो व॒यं च॒ मिहं॒ न सूरो॒ अति॒ निष्ट॑तन्युः ॥१३॥
अस्ता॑वि । अ॒ग्निः । शि॒मीव॑त्ऽभिः । अ॒र्कैः । साम्ऽरा॑ज्याय । प्र॒ऽत॒रम् । दधा॑नः ।
अ॒मी इति॑ । च॒ । ये । म॒घऽवा॑नः । व॒यम् । च॒ । मिह॑म् । न । सूरः॑ । अति॑ । निः । त॒त॒न्युः॒ ॥१३॥

अयमग्निः शिमीवद्भिर्हविष्प्रदानादिकर्मवद्भिरर्कैरर्चनसाधनैर्मंत्रैरस्तावि । स्तुतोऽस्माभिर्यजमानैः । शिमीति कर्मनाम शिमी शक्तिरिति तन्नामसु पाठात् । कीदृशोऽयं । साम्राज्याय साम्राज्यस्येति कर्मणि षष्ठीस्थाने चतुर्थी । सम्यग्राजमानत्वं प्रतरं प्रकृष्टतरमत्यर्थं दधानः ॥ अमु च छंदसीत्यमुप्रत्ययः ॥ किंचेममग्निममी च पुरोवर्तमाना ऋत्विजः पुत्रादयो वा ये वयं च पूर्वं स्तोतृत्वेन प्रसिद्धा वयमप्यत्यत्यर्थं निष्टतन्युः । शब्दयंतु ॥ निष्पूर्वः स्तनतिः शब्दकर्मा ॥ इतः परमप्यस्मत्पुत्रपौत्रादयो वयं चाग्निं स्तुम इत्यर्थः । तत्र दृष्टांतः । मिहं न सूरः । मिहं मेहनशीलं मेघं यथा सूरः सूर्यो वृष्ट्यर्थं शब्दयति तद्वत् ॥ लिङि छांदसो विकरणस्य लुः । अभिनिसः स्तनः शब्दसंज्ञायां । पा० ८. ३. ८६. । इति षत्वं ॥ ॥ ९ ॥

समिद्ध इति त्रयोदशर्चं तृतीयं सूक्तमानुष्टुभं । प्रथमायाः समिद्धनामकोऽग्निर्देवता समिद्धोऽग्निः । द्वितीयादीनां तनूनपान्नराशंस इळो बर्हिर्देवीर्द्वार उषासानक्ता दैव्यौ होतारौ प्रचेतसौ तिस्रो देव्यः सरस्वतीळाभारत्यस्त्वष्टा वनस्पतिः स्वाहाकृतिरित्येताः क्रमेण देवताः । अंत्याया इंद्रः । तिस्रो देव्य इत्यस्य विवरणं सरस्वतीळाभारत्य इति । अत्रानुक्रमणिका । समिद्ध आप्रिय आनुष्टुभमंत्यैंद्रीति ॥ अत्रेध्मतनूनपादादिभिर्यज्ञावयववाचिभिर्यज्ञ एवोच्यते । अतः स एव देवतेति कात्यक्यस्य मतं । अग्निरेव समिदादिभिरुच्यते । अतः स एव देवतेति शाकपूणिर्मतं । निरुक्ते किंदेवताः प्रयाजानुयाजा इति छंदोदेवता इत्यादिपक्षांतरं बहुधा प्रदर्श्य तदर्थं ब्राह्मणादि चोदाहृत्य इतरे पक्षा अर्थवादा आग्नेया एवेति सिद्धांतितं अथ किंदेवताः प्रयाजानुयाजा इत्यादिना । नि० ८. २१. ॥ पशावंगिरोगोत्रोत्पन्नानामेतदाप्रीसूक्तं । एकादश प्रयाजा इति खंडे सूचितं । समिद्धो अद्येति सर्वेषां यथऋषि वा । आ० ३. २. । इति । अत्र यथऋषिग्रहणात् ॥ आप्रीसूक्तानि त्रिविधानि । तत्र वासिष्ठात्रेयवाध्र्यश्वगार्त्समदानि चत्वारि नराशंसवंति । मैधातिथदैर्घतमसप्रैषिकाणि नराशंसतनूनपादुभयवंति । इतराणि तनूनपात्वंतीति । तत्रैतत्सूक्तं दैर्घतमसत्वादुभयवत् ॥

समि॑द्धो अग्न॒ आ व॑ह दे॒वाँ अ॒द्य य॒तस्रु॑चे । तंतुं॑ तनुष्व पू॒र्व्यं सु॒तसो॑माय दा॒शुषे॑ ॥१॥
सम्ऽइ॑द्धः । अ॒ग्ने॒ । आ । व॒ह॒ । दे॒वान् । अ॒द्य । य॒तऽस्रु॑चे । तंतु॑म् । त॒नु॒ष्व॒ । पू॒र्व्यम् ।
सु॒तऽसो॑माय । दा॒शुषे॑ ॥१॥

हे अग्ने समिद्धः सम्यग्दीपित एतन्नामकस्त्वमद्यास्मिन्यागदिने देवान् हविषां भोक्तॄनग्न्यादीना वह । अस्मद्यज्ञं प्रति प्रापय । यतस्रुचे यागायोद्यतस्रुचे यजमानाय तदर्थं । आवाह्य च सुतसोमाय यागार्थमभिषुतसोमाय दाशुषे हविर्दत्तवते । यद्यपीदानीमेवाहूयंते देवाः तथापि पूर्वानुष्ठानापेक्षया भाव्यपेक्षया वा दाशुष इत्युच्यते । हविर्दात्रे वा यजमानाय तदर्थं पूर्व्यं पूर्वेभ्यो देवेभ्यो हितं पूर्वकालीनं वा तंतुं यज्ञं तनुष्व । विस्तारय ॥

घृतवं॑तमुप॑ मासि॒ मधु॑मंतं तनूनपात्।
य॒ज्ञं विप्र॑स्य॒ माव॑तः शशमा॒नस्य॑ दा॒शुषः॑ ॥२॥
घृत॒ऽवं॑तं। उप॑। मा॒सि॒। मधु॑ऽमंतं। त॒नू॒ऽन॒पा॒त्।
य॒ज्ञं। विप्र॑स्य। मा॒ऽव॑तः। श॒श॒मा॒नस्य॑। दा॒शुषः॑ ॥२॥

हे तनूनपात्। तनूनपादाज्यमिति कात्यक्यपक्षे तन्वो गावो भोगानां तासु जायमानत्वात् ताभ्य उत्पन्नं क्षीरं क्षीरात्सर्पिरित्याज्यस्य नमृत्वं। तद्वान्यज्ञः। अग्निपक्ष आपस्तन्व उच्यंते। ताभ्य ओषधिवनस्पतयः। तेभ्यो ऽग्निरिति नमृत्वं। अरणीभ्यामिति भावः। एतन्नामक हे अग्ने विप्रस्य मेधाविनः शशमानस्य शंसमानस्य त्वां स्तुवतो दाशुषो हविर्दत्तवतो मावतो मत्सदृशस्य यजमानस्य ॥ युष्मदस्मद्भ्यां छंदसि सादृश्य इति वतुप्। आ सर्वनाम्न इत्यात्वं ॥ घृतवंतं क्षरदाज्योपेतं मधुमंतं माधुर्योपेतं सोमादिमधुरद्रव्येण तद्वंतं यज्ञमुपोपेत्य मासि। निर्मिमीषे। मितो भवसि वा। संपूर्तिपर्यंतं तिष्ठसीत्यर्थः ॥ मा माने। आदादिकः ॥

शुचि॑ः पाव॒को अद्भु॑तो॒ मध्वा॑ य॒ज्ञं मि॑मिक्षति।
न॒रा॒शंस॒स्त्रिरा दि॒वो दे॒वो दे॒वेषु॑ य॒ज्ञियः॑ ॥३॥
शुचि॑ः। पा॒व॒कः। अद्भु॑तः। मध्वा॑। य॒ज्ञं। मि॒मि॒क्ष॒ति॒।
न॒रा॒शंसः॑। त्रिः। आ। दि॒वः। दे॒वः। दे॒वेषु॑। य॒ज्ञियः॑ ॥३॥

देवेषु मध्ये शुचिः शुद्धो दीप्तो वा पावकोऽन्नस्यापूतस्य शोधयिताद्भुतोऽभूत इव अवचरणे भविता। आश्चर्यभूत इत्यर्थः। देवो द्योतनशीलो यज्ञियो यज्ञसंपादनार्हः ईदृशो नराशंसो नरैः कर्मनेतृभिर्ऋत्विग्भिः शंसनीयोऽग्निर्दिवो द्युलोकादागत्य मध्वा मधुरेण रसेन यज्ञमस्मदीयं त्रिरा मिमिक्षति। त्रिवारं समंतात्सिंचति। स्वदयतीत्यर्थः। यद्वा। मधुरेण फलेन त्रिरा मिमिक्षति। योजयतीत्यर्थः। नराशंसो यज्ञ इति कात्यक्यपक्षे यज्ञाभिमानी देवो द्योतमानो द्युलोकादागत्यानुष्ठीयमानं यज्ञं त्रिरा मिमिक्षति। अयं नराशंसो देवस्त्रिरा ॥ उपसर्गवशाद्योग्यक्रियाध्याहारः ॥ त्रिवारमागच्छति। त्रिराहरति वा फलं। अवशिष्टं पूर्ववन्नेयं ॥

ई॒ळि॒तो अ॑ग्न॒ आ व॒हेंद्रं॑ चि॒त्रमि॒ह प्रि॒यं।
इ॒यं हि त्वा॑ म॒तिर्ममाच्छा॑ सुजिह्व व॒च्यते॑ ॥४॥
ई॒ळि॒तः। अ॒ग्ने॒। आ। व॒ह॒। इंद्रं॑। चि॒त्रं। इ॒ह। प्रि॒यं।
इ॒यं। हि। त्वा॒। म॒तिः। मम॑। अच्छ॑। सु॒ऽजि॒ह्व॒। व॒च्यते॑ ॥४॥

हे अग्ने ईळितः सर्वैः स्तुत्य इएनामकस्त्वमिहास्मिन्यज्ञे चित्रं चायनीयं प्रियं प्रीणयितारमस्मान् हविः स्वीकर्तुं वा प्रीतियुक्तमिंद्रमा वह। आह्वय। हे सुजिह्व घृतपानेन शोभनज्वाल इयं मम मतिर्मननसाधना स्तुतिरूपा वाक् त्वा त्वामच्छाभिमुख्येन प्राप्तुं वच्यते। मतिरिवास्मदीयोच्यते ॥ हिः पूरणार्थः। वचेर्यकि संप्रसारणाच्चेति पूर्वरूपस्य वा छंदसीति विकल्पितत्वादभावे यण् ॥ अत्र पुरोडाशादीडभिमानियज्ञपरतया वा व्याख्येयं। एवमुत्तरत्र यज्ञांगैर्यज्ञसंबंधिदेवताभिश्च यज्ञ एवोच्यत इति तत्परत्वेन व्याख्येयं ॥

स्तृ॒णा॒नासो॑ य॒तस्रु॑चो ब॒र्हिर्य॒ज्ञे स्व॑ध्व॒रे। वृं॒जे दे॒वव्य॑चस्तम॒मिंद्रा॑य॒ शर्म॑ स॒प्रथः॑ ॥५॥
स्तृ॒णा॒नासः॑। य॒तऽस्रु॑चः। ब॒र्हिः। य॒ज्ञे। सु॒ऽअ॒ध्व॒रे। वृं॒जे। दे॒वव्य॑चःऽतमं। इंद्रा॑य।
शर्म॑। स॒ऽप्रथः॑ ॥५॥

स्वध्वरे शोभनप्रायणीयाद्यवांतरयागवति यज्ञे सोमयागे बर्हिर्दर्भान् स्तृणानास आस्तरंतो यतस्रुचो नियमितजुह्वादिपात्रा ऋत्विजो देवव्यचस्तममतिशयेन देवगामिनं सप्रथः सर्वतो विस्तीर्णं शर्म सुखसाधनं गृहमिंद्राय वृंजे । विवर्जयंति । संपादयंतीत्यर्थः ॥

वि श्र॑यंतामृता॒वृधः॑ प्र॒यै दे॒वेभ्यो॑ म॒हीः ।
पा॒व॒कासः॑ पुरु॒स्पृहो॒ द्वारो॑ दे॒वीर॑स॒श्चतः॑ ॥ ६ ॥
वि । श्र॒यं॒तां॒ । ऋ॒त॒ऽवृधः॑ । प्र॒ऽयै । दे॒वेभ्यः॑ । म॒हीः ।
पा॒व॒कासः॑ । पु॒रु॒ऽस्पृहः॑ । द्वारः॑ । दे॒वीः । अ॒स॒श्चतः॑ ॥ ६ ॥

द्वारो देवीर्यज्ञस्य द्वाराभिमानिन्यो देवता वि श्रयंतां । विविधं श्रयंतु । विवृता भवंतु । किमर्थं । देवेभ्यः प्रयै प्रयातुं देवानां प्रापणाय ॥ प्रयै रोहिष्यै अव्यथिष्यै । पा० ३.४.१०. । इति निपातितः ॥ कीदृश्यस्ताः । ऋतवृधो यज्ञस्य वर्धयित्र्यः पूज्याः महीर्महत्यः पावकास शोधयित्र्यः पुरुस्पृहो बहुस्पृहणीयाः असश्चतोऽसज्यमानाः । परस्परविप्रकृष्टा इत्यर्थः ॥ ॥ १० ॥

आ भंद॑माने॒ उपा॑के॒ नक्तो॒षासा॑ सु॒पेश॑सा ।
य॒ह्वी ऋ॒तस्य॑ मा॒तरा॒ सीद॑तां ब॒र्हिरा सु॒मत् ॥ ७ ॥
आ । भंद॑माने॒ इति॑ । उपा॑के॒ इति॑ । नक्तो॒षसा॑ । सु॒ऽपेश॑सा ।
य॒ह्वी इति॑ । ऋ॒तस्य॑ । मा॒तरा॑ । सीद॑तां । ब॒र्हिः । आ । सु॒ऽमत् ॥ ७ ॥

भंदमाने सर्वैः स्तूयमाने उपाके परस्परं संनिहिते सुपेशसा शोभनरूपे । पेश इति रूपनाम । यह्वी महत्यौ अपत्यरूपे वा प्रतिदिनं जायमानत्वात् । यहुरित्यपत्यनाम यहुः सूनुरिति तन्नामसु पाठात् । ऋतस्य मातरा यज्ञस्य निर्मात्र्यौ । ताभ्यामागमनाद्यज्ञस्य संपूर्तेर्यज्ञमातृत्वमुपचर्यते । यद्वा । अतिरात्रादीनामहोरात्रसाध्यत्वात् । नक्तोषासा उक्तगुणविशिष्टे अहोरात्रदेवते सुमत् स्वयमेव । अस्माभिरप्रार्थिते इत्यर्थः । यद्वा । सुमद्बर्हिरास्तृतं दर्भमा समंतादा सीदतां । उपविशतां । यद्वा । ऋतस्येति कर्मणि षष्ठी । यज्ञमा सीदतां । आसाद्य च बर्हिरास्तृतं दर्भं स्वयमेवा सीदतां ॥

मं॒द्रजि॑ह्वा जुगु॒र्वणी॒ होता॑रा॒ दैव्या॑ क॒वी ।
य॒ज्ञं नो॑ यक्षतामि॒मं सि॒ध्रम॒द्य दि॑वि॒स्पृश॑ं ॥ ८ ॥
मं॒द्रऽजि॑ह्वा । जु॒गु॒र्वणी॒ इति॑ । होता॑रा । दैव्या॑ । क॒वी इति॑ ।
य॒ज्ञं । नः॒ । य॒क्ष॒तां॒ । इ॒मं । सि॒ध्रं । अ॒द्य । दि॒वि॒ऽस्पृश॑ं ॥ ८ ॥

मंद्रजिह्वा देवानां मादनज्वालौ जुगुर्वणी भृशं गृणतां स्तुवतां यजमानानां संभक्तारौ ॥ गृणतेर्यङ्लुगंतात् क्विपि छांदसी रूपसिद्धिः । तस्मिन्नुपपदे वनतेश्छंदसि वनसनरक्षिमथामिति इन्प्रत्ययः ॥ कवी मेधाविनौ क्रांतदर्शिनौ दैव्या होतारा देवसंबंधिनौ होतारौ अयं च मध्यमस्थानश्चेत्युभौ सिध्रं फलसाधनभूतं ॥ सिधेः स्फायितंचीत्यादिना रक् ॥ दिविस्पृशं द्युलोकवासिदेवान् स्पृशंतं । तैर्हविषः स्वीक्रियमाणत्वादिति भावः । ईदृशं नोऽस्मदीयमिमं यज्ञमद्य यक्षतां । अनुतिष्ठतां पूजयतां वा । सम्यङ्निर्वाहयतामित्यर्थः ॥

शुचिर्देवेष्वर्पिता होत्रा मरुत्सु भारती।
इळा सरस्वती मही बर्हिः सीदंतु यज्ञियाः ॥९॥
शुचिः । देवेषु । अर्पिता । होत्रा । मरुत्ऽसु । भारती ।
इळा । सरस्वती । मही । बर्हिः । सीदंतु । यज्ञियाः ॥९॥

शुचिः शुद्धा मरुत्सु विरुद्धलक्षणयामरणेषु देवेषु द्योतनशीलेषु स्तोतृषु मरुत्सु ऋत्विक्षु वार्पिता नियता होत्रा होमनिष्पादिका भारती भरतस्यादित्यस्य संबंधिनी द्युस्थाना वाक् तथेळा पार्थिवी प्रैषादिरूपा मही महती सरस्वती। सर इत्युदकनाम। तद्वती स्तनितादिरूपा माध्यमिका च वाक् एतास्तिस्रस्त्रिस्थानवागभि-[illegible] यज्ञिया यज्ञार्हाः सत्यो बर्हिः स्तीर्णं सीदंतु। उपविशंतु॥

तन्नस्तुरीपमद्भुतं पुरु वारं पुरु त्मना।
त्वष्टा पोषाय वि ष्यतु राये नाभा नो अस्मयुः ॥१०॥
तत्। नः। तुरीपं। अद्भुतं। पुरु। वा। अरं। पुरु। त्मना।
त्वष्टा। पोषाय। वि। स्यतु। राये। नाभा। नः। अस्मऽयुः ॥१०॥

नोऽस्मदर्थं तत्तादृशं तुरीपं तूर्णं व्याप्यद्भुतं सद आविर्भवदभूतमिव सत्। यद्वा। महन्नामैतत्। सारतो महत्। पुरु वारं बहूनां प्राणिनामर्थायैवारमलं समर्थं। यद्वा। पुरु वारं बहु प्रभूतं च। वाशब्दश्चार्थे। अरं अलं। त्मनात्मना पुरु। बहुक्रियाविशेषणमेतत्। ईदृशमुदकं त्वष्टा वृष्ट्यादेः कर्ता। त्वष्टृशब्दो यास्केनैवं व्याख्यातः। त्वष्टा तूर्णमश्नुत इति नैरुक्तास्त्विषेर्वा स्याद्दीप्तिकर्मणस्त्वक्षतेर्वा स्यात्करोतिकर्मणः। नि० ८. १३.। इति। तन्नामको वैद्युतोऽग्निरस्मयुरस्मान्कामयमानो देवो नः पोषायास्मत्पुष्टये राये समृद्धये च नाभा नाभौ वृष्टेर्बंधके मेघस्य नाभिस्थानेऽवस्थितमुक्तलक्षणमुदकं वि ष्यतु। विविधं गमयतु॥ षोऽंतकर्मणि। ओतः श्यनीत्योकारलोपः। उपसर्गात्सुनोतीति षत्वं॥ यद्वा। नो नाभास्मत्संबंधियज्ञनाभावुत्तरवेद्यां राये॥ षष्ठ्यर्थे चतुर्थी॥ रायो गवादिधनस्य पोषाय पुष्ट्यै॥ स्यतिरुपसृष्टो विमोचनार्थः॥ उक्तलक्षणां वृष्टिं मुंचतु॥

अवसृजन्नुप त्मना देवान्यक्षि वनस्पते। अग्निर्हव्या सुषूदति देवो देवेषु मेधिरः ॥११॥
अवऽसृजन्। उप। त्मना। देवान्। यक्षि। वनस्पते। अग्निः। हव्या। सुसूदति।
देवः। देवेषु। मेधिरः ॥११॥

हे वनस्पते वनानां पालक यूपाभिमानिदेवाग्ने अवसृजन् स्वैरं वर्तयन्नृत्विजः स्वस्वकर्मसु व्यापारयन् त्मनात्मना देवान्हविर्भुज उप यक्षि। उपेत्य यज॥ बहुलं छंदसीति शपो लुक्॥ देवो द्योतमानो मेधिरो मेधावानग्निराहवनीयो देवेषूभयेषां मध्ये हव्या हवींषि सुसूदति। प्रेरयति। स्वीकरोति॥ षूद क्षरणे। बहुलं छंदसीति शपः श्लुः। लेटोऽडाटावित्यडागमः॥ यद्वा। यूपाग्निरिव परोक्षेणोच्यते। सोऽग्निर्हवींषि सुष्ठु स्वीकरोति॥

पूषण्वते मरुत्वते विश्वदेवाय वायवे। स्वाहा गायत्रवेपसे हव्यमिंद्राय कर्तन ॥१२॥
पूषण्ऽवते। मरुत्वते। विश्वऽदेवाय। वायवे। स्वाहा। गायत्रऽवेपसे। हव्यं।
इंद्राय। कर्तन ॥१२॥

पूषण्वते पूष्णा तद्वते॥ अनो नुडिति नुट्। ह्रस्वनुड्भ्यां मतुबिति मतुप उदात्तत्वं॥ मरुत्वते मरुद्भिस्तद्वते

विश्वदेवाय सर्वदेवसंघाय वायवे गमनशीलाय वायुदेवाय च तथा गायत्रवेपसे । वेप इति रूपनाम । गायत्रशब्द इतरसामोपलक्षणः । गायत्रं वेपो रूपं यस्य तादृशायेंद्राय हव्यं हविः प्रदातुं स्वाहा कर्तन । स्वाहाकारं कुरुत ऋत्विजः ॥ करोतेर्लोटि तप्तनप्तनथनाश्चेति तनबादेशः ॥

स्वाहाकृतान्या गह्युप हव्यानि वीतये। इंद्रा गहि श्रुधी हवं त्वां हवंते अध्वरे ॥१३॥

स्वाहाऽकृतानि । आ । गहि । उप । हव्यानि । वीतये । इंद्र । आ । गहि । श्रुधि । हवं । त्वां । हवंते । अध्वरे ॥१३॥

हे इंद्र स्वाहाकृतानि । स्वाहेत्येवंपूर्वा कृतिः करणमुच्चारणं यक्ष्यमाणदेवतानां ताः स्वाहाकृतयः । तद्वंति हव्यानि हवींषि । अत्र प्रयाजेषु वषट्कारप्रदानात्स्वाहाकृतं हविरित्यर्थः । तद्धविरुपेत्य वीतये भक्षणाया गहि । आगच्छ ॥ गमेश्छांदसः शपो लुक् । अनुदात्तोपदेशेत्यादिनानुनासिकलोपः ॥ तथा हे इंद्र आ गहि । स्तोत्राण्यभिलक्ष्यागच्छ । आगत्य हवमस्मदीयमाह्वानं श्रुधि । शृणु । यतस्त्वामध्वरेऽहिंसात्मके यागे हवंते आह्वयंति ऋत्विजः अतः श्रुधि ॥ ह्वयतेर्बहुलं छंदसीति संप्रसारणं ॥ ॥११॥

प्र तव्यसीमित्यष्टर्चं चतुर्थं सूक्तं दैर्घतमसं । तथा चानुक्रांतं । प्र तव्यसीमष्टावाग्नेयं तु तत्त्रिष्टुबंतमिति । तु तदित्युक्तत्वादिदमादिसूक्ताष्टकस्याग्निर्देवता । अंत्या त्रिष्टुप् शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः ॥ प्रातरनुवाकाश्विनशस्त्रयोरुक्तो विनियोगः ॥ अग्निष्टोम आग्निमारुते शस्त्र इदं सूक्तं जातवेदस्यनिविद्धानीयं । अथ यथेतमिति खंडे सूचितं । प्र तव्यसीं नव्यसीमापो हि ष्ठेति तिस्रः । आ॰ ५. २०. । इति ॥ दशरात्रस्य प्रथमेऽप्यहनि जातवेदस्यनिविद्धानं आश्वमेधिके मध्यमेऽहनि च निविद्धानं । तथा चाचार्यातिदेशः । ऐकाहिकान्युपसंशस्य तेषु निविदो दध्यादेवमेवाग्निमारुते । आ॰ १०. १०. । इति ॥

प्र तव्यसीं नव्यसीं धीतिमग्नये वाचो मतिं सहसः सूनवे भरे ।
अपां नपाद्यो वसुभिः सह प्रियो होता पृथिव्यां न्यसीददृत्वियः ॥१॥

प्र । तव्यसीं । नव्यसीं । धीतिं । अग्नये । वाचः । मतिं । सहसः । सूनवे । भरे । अपां । नपात् । यः । वसुऽभिः । सह । प्रियः । होता । पृथिव्यां । नि । असीदत् । ऋत्वियः ॥१॥

अहमग्नये तव्यसीं तवीयसीमतिशयेन वर्धयित्रीं ॥ तवतिर्वृद्ध्यर्थः सौत्रो धातुः । अस्मात्तृजंतात्तुश्छंदसीतीयसुन् । तुरिष्ठेमेयःस्विति तृलोपः । छांदस ईकारलोपः ॥ नव्यसीं नवतरामपूर्वां धीतिं यागलक्षणामुक्तगुणकं कर्म प्र भरे । प्रकर्षेण करोमि । तथोक्तलक्षणां वाचो मतिं स्तुतिरूपं कर्म भरे । कीदृशायाग्नये । सहसो बलस्य सूनवे पुत्राय । किंच योऽग्निरपां नपात् तासां नप्ता । अद्भ्य ओषधयः ओषधीभ्योऽग्निरित्यग्नेर्नप्तृत्वं । अथवा । अपां न पातयिता वैद्युताग्निरूपेण प्रवर्षकत्वादिति भावः । तथा प्रियो यजमानस्य प्रीणयिता प्रियतमो वा तस्य होता होमनिष्पादकः सोऽग्निर्ऋत्वियः प्राप्तकालः प्राप्तप्रदानसमयः सन् पृथिव्यां वेदिलक्षणायां वसुभिर्निवासयोग्यैर्गवादिधनैः सहितो न्यसीदत् । नितरां सीदति ॥

स जायमानः परमे व्योमन्याविरग्निरभवन्मातरिश्वने ।
अस्य क्रत्वा समिधानस्य मज्मना प्र द्यावा शोचिः पृथिवी अरोचयत् ॥२॥

सः । जायमानः । परमे । विऽओमनि । आविः । अग्निः । अभवत् । मातरिश्वने । अस्य । क्रत्वा । सम्ऽइधानस्य । मज्मना । प्र । द्यावा । शोचिः । पृथिवी इति । अरोचयत् ॥२॥

स पूर्वोक्तोऽग्निर्जायमानोऽरणीभ्यामुत्पद्यमानः काष्ठेषु वा प्रादुर्भूतः सन् तदानीमेव परम उत्कृष्टे व्योमनि विविधरक्षणवति वेदिदेशे मातरिश्वनेऽतरिक्षसंचारिणे वायवे प्रथममाविरभवत्। प्रत्यक्षोऽभूत्। त्वमग्ने प्रथमो मातरिश्वन आविर्भव। ऋ० १. ३१. ३.। इत्यादिश्रुत्यंतरप्रसिद्धिः। वायुसंयोगात्प्रज्वलित इत्यर्थः। अथवा मातरि फलस्य निर्मातरि यज्ञे श्वसिति चेष्टत इति मातरिश्वा यजमानः। तदर्थं। किंच ममिधान-स्येंधनैः सम्यग्वर्धमानस्याग्नेर्मज्मना। बलनामैतत्। बलवता क्रत्वा क्रतुना कर्मणा ज्वालनार्थापारेण शोचिर्द्यावा पृथिवी द्यां च पृथिवीं च प्रारोचयत्। प्रकर्षेणादीपयत्॥ मध्ये शोचिःशब्दश्छांद ॥ मज्मना क्रत्वा समिधानस्येति वा योज्यं। प्रबलेन समिंधनादिव्यापारेण समिध्यमानस्येत्यर्थः॥

अस्य त्वेषा अजरा अस्य भानवः सुसंदृशः सुप्रतीकस्य सुद्युतः।
भात्वक्षसो अत्यक्तुर्न सिंधवोऽग्ने रेजंते असंसंतो अजराः॥३॥
अस्य। त्वेषाः। अजराः। अस्य। भानवः। सुऽसंदृशः। सुऽप्रतीकस्य। सुऽद्युतः।
भाऽत्वक्षसः। अति। अक्तुः। न। सिंधवः। अग्नेः। रेजंते। असंसंतः। अजराः॥३॥

अस्य सूयमानस्याग्नेस्त्वेषा दीप्तयोऽजरा जरारहिता अजीर्णाः। अविरता इत्यर्थः॥ नञो जरमरेत्या-दिनोत्तरपदाद्युदात्तत्वं॥ तथा सुप्रतीकस्य शोभनमुखस्यास्याग्नेर्भानवो रश्मयः। दीप्तिरुक्तत्वादत्र विस्फुलिंगा अवगंतव्याः। ते च सुसंदृशः सुष्ठु सम्यग्द्रष्टारः। सर्वतो व्याप्ता इत्यर्थः। सुद्युतः सुष्ठु सर्वतो द्योतमानाः। तथास्याग्नेर्भात्वक्षसः। त्वक्ष इति बलनाम त्वक्षः शर्ध इति बलनामसु पाठात्। भासमानबलाः। अक्तुरिति रात्रिनामैतत् अक्तुरूर्म्यैति तन्नामसूक्तत्वात्। द्वितीयार्थे प्रथमा। अक्तुं जगदंजकं नैशं तमोऽत्यतिक्रम्य सिंधवः स्यंदमानाः सर्वत्र व्याप्नुवंतोऽससंतः स्वव्यापारेष्वस्वपंतोऽविरताः अत एवाजरा न रेजंते। न कंपंते। दाहपाकादिषु न चलंति न चाल्यंते वान्यैः। यद्वा। नशब्दो दृष्टांतवचनः। भात्वक्षसो भा एव त्वक्षो बलं यस्य तादृशस्यादित्यस्य सिंधवो न रश्मय इव। ते यथा स्यंदनशीला व्याप्तिमंतोऽक्तुरति अंजकं तमोऽतिक्र-म्याससंतो रेजंते तद्वज्ज्वालक्षसोऽस्याग्नेरुक्तलक्षणा दीप्तयोऽपि सर्वत्र रेजंते। कंपंते। व्याप्नुवंतीत्यर्थः॥

यमेरिरे भृगवो विश्ववेदसं नाभा पृथिव्या भुवनस्य मज्मना।
अग्निं तं गीर्भिर्हिनुहि स्व आ दमे य एको वस्वो वरुणो न राजति॥४॥
यं। आऽईरिरे। भृगवः। विश्वऽवेदसं। नाभा। पृथिव्याः। भुवनस्य। मज्मना।
अग्निं। तं। गीःऽभिः। हिनुहि। स्वे। आ। दमे। यः। एकः। वस्वः। वरुणः।
न। राजति॥४॥

विश्ववेदसं सर्वधनं। वेद इति धननाम वेदो वरिव इति तन्नामसु पाठात्। तादृशं यमग्निं भृगवो भृगुगोत्रोत्पन्नाः पापस्य भर्जकाः पृथिव्या वेद्याः। एकदेशे कृत्स्नशब्दः। यद्वा। एतावती वै पृथिवीत्यादि-श्रुतेर्वेद्याः पृथिवीत्वं। तस्या नाभावुत्तरवेद्यां भुवनस्य भूतजातस्य मज्मना बलेन निमित्तेना आभिमुख्येने-रिरे ईरितवंतः स्थापितवंतः तमग्निं स्वे स्वकीये दमे गृह उत्तरवेद्यां गीर्भिः स्तुतिभिरा हिनुहि। प्राप्नुहि॥ हि गतौ वृद्धौ च। उतश्च प्रत्ययाच्छंदसि वावचनमिति हेर्लुगभावः॥ योऽग्निरेको मुख्यः सन् एक एव वा वस्वो वसुनो गवादिधनस्य राजति ईश्वरो भवति। प्रदातुमिति शेषः। राजतीत्यैश्वर्यकर्मा क्षियति राजतीति तन्नामसु पाठात्। तत्र दृष्टांतः। वरुणो न वारक आदित्य इव। स यथा सर्वस्येष्टे तद्वत्॥

न यो वराय मरुतामिव स्वनः सेनेव सृष्टा दिव्या यथाशनिः।
अग्निर्जंभैस्तिगितैरत्ति भर्वति योधो न शत्रून्स वना न्यृंजते॥५॥

न । यः । वराय । मरुताम्ऽइव । स्वनः । सेनाऽइव । सृष्टा । दिव्या । यथा । अशनिः ।
अग्निः । जंभैः । तिगितैः । अत्ति । भर्वति । योधः । न । शत्रून् । सः । वना । नि । ऋंजते ॥५॥

योऽग्निर्वराय वरणाय निग्रहाय न शक्तो न भवति । तत्र दृष्टांतत्रयमुच्यते । मरुतां स्वन इव । स यथाग्राह्यस्तद्वत् । तथा सृष्टा वैरिक्षयार्थं प्रबलेनातिसृष्टा सेनेव । सा यथान्यैरनिरोध्या तद्वत् । तथा दिव्या दिवि भवाशनिर्यथा पतत्येव न निवार्यते तद्वत् । ईदृक् सामर्थ्यमस्तीति दर्शयति । अयमग्निस्तिगितैर्निशितैस्तीक्ष्णीभूतैः ॥ अंत्यविकारश्छांदसः ॥ जंभैर्दंतैर्दंतस्थानीयाभिर्ज्वालाभिरत्ति । अस्मद्विरोधिनो भक्षयति । तथा भर्वति । हिनस्ति ॥ भर्व हिंसायां ॥ यास्कस्त्वाह भर्वतिरत्तिकर्मेति । नि० ९. २३. । यद्यप्यत्तिभर्वत्योरदनमेवार्थः तथापि तदवांतरभेदोऽवगंतव्यः । तत्र दृष्टांतः । योधो न संप्रहर्ता शूर इव । स यथा शत्रून्भर्वति भक्षयति तद्वत् । किंच सोऽग्निर्वना वनानि वृक्षादिसमूहान् न्यृंजते । नितरां प्रसाधयति । दहतीत्यर्थः । ऋंजतिः प्रसाधनकर्मेति यास्कः ॥

कुविन्नो अग्निरुचथस्य वीरसद्वसुष्कुविद्वसुभिः काममावरत् ।
चोदः कुवित्तुतुज्यात्सातये धियः शुचिप्रतीकं तमया धिया गृणे ॥६॥
कुवित् । नः । अग्निः । उचथस्य । वीः । असत् । वसुः । कुवित् । वसुऽभिः । कामं । आऽवरत् ।
चोदः । कुवित् । तुतुज्यात् । सातये । धियः । शुचिऽप्रतीकं । तं । अया । धिया । गृणे ॥६॥

अयमग्निर्नोऽस्माकमुचथस्योक्थस्य स्तोत्रस्य कुविद्बहुवारं वीः कामयितासत् । भवतु ॥ अस्तेर्लेट्यडागमः ॥ यद्वा । उचथस्येतन्नामकस्य महर्षेर्गोत्रप्रभवस्य न इति संबंधः । तथा वसुर्वासयिता सर्वेषां वसुस्थानीयो वा वसुभिर्वासयितृभिर्धनैः काममत्यर्थमभिमतं वा कुविदतिप्रभूतमावरत् । आवृणोतु । अभिमतप्रदानेन कामं निवर्तयत्वित्यर्थः ॥ वृणोतेर्लेट्यडागमः । छांदसो विकरणस्य लुक् ॥ अयमग्निश्चोदोऽस्माकं कर्मसु प्रेरकः सन् धियः कर्माणि सातये [illegible]भाय कुविद्बहु तुतुज्यात् । त्वरयतु । प्रेरयत्वित्यर्थः ॥ तुजिः प्रेरणार्थः । छांदसः शपः श्लुः ॥ शुचिप्रतीकं शोभनावयवं शोभनज्वालं तमग्निमया धियानया स्तुतिरूपया प्रज्ञया गृणे । उच्चारयामि । स्तौमीत्यर्थः ॥

घृतप्रतीकं व ऋतस्य धूर्षदमग्निं मित्रं न समिधान ऋंजते ।
इंधानो अक्रो विदथेषु दीद्यच्छुक्रवर्णामुदु नो यंसते धियं ॥७॥
घृतऽप्रतीकं । वः । ऋतस्य । धूःऽसदं । अग्निं । मित्रं । न । संऽइधानः । ऋंजते ।
इंधानः । अक्रः । विदथेषु । दीद्यत् । शुक्रऽवर्णां । उत् । ऊं इति । नः । यंसते । धियं ॥७॥

घृतप्रतीकं घृतोपक्रमं प्रयाजादिष्वाज्यैर्हूयमानत्वात् । यद्वा । प्रतीकमंगं । दीप्तज्वालमित्यर्थः । किंच वो युष्मत्संबंधिन ऋतस्य यज्ञस्य धूर्षदं धुरि निर्वहणे सीदंतं यज्ञनिर्वाहकमग्निं मित्रं न मित्रमिव समिधान इध्मैर्दीपयमान ऋंजते । प्रसाधयति । ऋंजतिः प्रसाधनकर्मा । इंधानः सम्यग्दीप्यमानोऽक्रो [illegible]दिभिराक्रांतोऽन्यैरनाक्रांतो वा ॥ क्रमेश्छांदसो डः ॥ विदथेषु यज्ञेषु वेदयत्सु स्तोत्रेषु निमित्तभूतेषु दीद्यत् स्वयं दीप्यमानोऽस्मदीयां धियं प्रज्ञां यागादिविषयां शुक्रवर्णां शुभ्रवर्णां निर्मलां ज्योतिष्टोमादि कर्म वोढु यंसते । उद्योजयत्येव ॥ यमेर्लेट्यडागमः । सिप् ॥ उशब्दोऽवधारणे । धीरिति कर्मनाम धीः शमीति तन्नामसु पाठात् ॥

अप्रयुच्छन्नप्रयुच्छद्भिरग्ने शिवेभिर्नः पायुभिः पाहि शग्मैः ।
अदब्धेभिरदृपितेभिरिष्टेऽनिमिषद्भिः परि पाहि नो जाः ॥८॥

अप्रऽयुच्छन् । अप्रयुच्छत्ऽभिः । अग्ने । शिवेभिः । नः । पायुऽभिः । पाहि । शग्मैः ।
अदब्धेभिः । अदृपितेभिः । इष्टे । अनिमिषत्ऽभिः । परि । पाहि । नः । जाः ॥८॥

हे अग्ने अप्रयुच्छन्नस्मास्वप्रमाद्यन् ॥ युच्छ प्रमादे ॥ अविच्छिन्नप्रवृत्तिः सन्नप्रयुच्छद्भिरप्रमाद्यद्भिरनवधानरहितैः शिवेभिर्मंत्रकल्याणैः शग्मैः सुखकरैः पायुभी रक्षणप्रकारैर्नोऽस्मान्पाहि । रक्ष । किंच हे इष्टे सर्वैरेषणीयाग्ने जा जायमानोऽस्माभिर्दीप्यमानः सन्नदब्धेभिरहिंसितैरदृपितेभिः केनचिदप्यपरिभूतैः ॥ दृप दृम्फ उत्क्लेशे तौदादिकः ॥ अनिमिषद्भिर्निमेषरहितैरनलसस्वभावैः ईदृशैर्लक्षणैर्नोऽस्मान्परि परितः पाहि । पालय । यद्वा । उपर्युपरि जायंत इति जाः । नो जा अस्मत्संबंधिनीः पुत्रपौत्रादिरूपाः प्रजाः परि पाहि । परितो रक्ष । न केवलमस्मान् किंत्वस्मत्पुत्रपौत्रादीनपि रक्ष ॥ ॥१२॥

एति प्र होतेति सप्तर्चं पंचमं सूक्तं दैर्घतमसं जागतं । पूर्वत्राग्नेयं तु तदित्युक्तत्वादिदमप्याग्नेयं । तथा चानुक्रमणिका । एति प्र सप्त जागतमिति ॥ प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः ॥

एति प्र होता व्रतमस्य माययोर्ध्वां दधानः शुचिपेशसं धियं ।
अभि स्रुचः क्रमते दक्षिणावृतो या अस्य धाम प्रथमं ह निंसते ॥१॥
एति । प्र । होता । व्रतं । अस्य । मायया । ऊर्ध्वां । दधानः । शुचिऽपेशसं । धियं ।
अभि । स्रुचः । क्रमते । दक्षिणाऽआवृतः । याः । अस्य । धाम । प्रथमं । ह । निंसते ॥१॥

अयं होता होमनिष्पादकोऽध्वर्युरस्याग्नेर्व्रतं हविष्प्रदानादिरूपं कर्म कर्तुं मायया कर्तव्यविशेषप्रज्ञया युक्तः सन् प्रैति । प्रकर्षेण गच्छति होतुं । मायेति प्रज्ञानाम माया वयुनमिति तन्नामसु पाठात् । कीदृशोऽयं । ऊर्ध्वामुपर्यारूढां शुचिपेशसं शोभनरूपोपेतां । पेश इति रूपनाम । धियं प्रज्ञां दधानः । आ चतुर्थात्कर्मणोऽभिसमीक्ष्येतेदं करिष्यतीत्युक्तत्वात् । आगत्य च दक्षिणावृतः प्रादक्षिण्येन वर्तमानाः स्रुचो जुह्वादीः क्रमते । गृह्णाति । कीदृश्यः स्रुचः । याः प्रथमं पात्रासादनकालेऽस्याग्नेर्धाम स्थानं निंसते ॥ निंस चुंबन इति धातुः ॥ चुंबंति । भजंत इत्यर्थः । प्रथममनुष्ठेयक्रमं बुद्ध्वा प्रैति पश्चात्स्रुचः क्रमत इत्यर्थः । हशब्दः प्रसिद्धौ । यद्वा । होता देवानामाह्वातायमग्निरस्य यजमानस्य व्रतं कर्म ज्योतिष्टोमादि प्रज्ञाविशेषेण युक्तः सन्नेति । यज्ञदेशं प्रत्यागच्छति । कीदृशोऽयं । ऊर्ध्वामूर्ध्ववर्तिं शुचिपेशसं शोभनरूपोपेतं धियं ज्वालाचलनादिरूपं कर्म दधानो धारयमाणः । आगत्य च दक्षिणावृत उक्तलक्षणाः स्रुचो घृतपूर्णा जुहूपभृदादिका अभि क्रमते । आक्रमते । घृतं स्वीकर्तुं ज्वालाः प्रसर्पंतीत्यर्थः । याः स्रुचः प्रथमं पूर्वं हविरासादनकालेऽस्याग्नेर्धाम स्थानं वेदिलक्षणं निंसते चुंबंति प्राप्ताः । हशब्दः प्रसिद्धौ ॥ णिसि चुंबने । अदादित्वाच्छपो लुक् । इदित्त्वान्नुम् ॥

अभीमृतस्य दोहना अनूषत योनौ देवस्य सदने परीवृताः ।
अपामुपस्थे विभृतो यदावसदध स्वधा अधयद्याभिरीयते ॥२॥
अभि । ईं । ऋतस्य । दोहनाः । अनूषत । योनौ । देवस्य । सदने । परिऽवृताः ।
अपां । उपऽस्थे । विऽभृतः । यत् । आ । अवसत् । अध । स्वधाः । अधयत् ।
याभिः । ईयते ॥२॥

ऋतस्योदकस्य दोहना धारा योनावुत्पत्तिस्थाने देवस्य सदने द्योतमानस्यादित्यस्य स्थाने परीवृतास्तद्रश्मिभिः परितो व्याप्ताः सत्योऽभ्यनूषत । अभिनवा भवंति । आभवंत्येव स्तूयंते वा । कदेत्यत आह । यद्यदापामुपस्थ उदकानामुत्संगेऽंतर्विभृतो विशेषेण ताभिर्धार्यमाणः सन्नावसत् आक्रम्य निवसत्ययमग्निः तदानीमि-

त्यर्थः। अधाधुना स्वधा अमृतोपमा अपोऽधयत्। पिबति सर्वो लोकः। ता विशेष्यंते। याभिः सहैयतेऽयमग्निः संगच्छते वा भूमिं ता अधयत्। विद्युदात्मनोदकानि जगत्पाययत इत्यग्नेः स्तुतिः॥

युयूषतः सवयसा तदिद्वपुः समानमर्थं वितरित्रता मिथः।
आदीं भगो न हव्यः समस्मदा वोळ्हुर्न रश्मीन्त्समयंस्त सारथिः॥३॥
युयूषतः। सऽवयसा। तत्। इत्। वपुः। समानं। अर्थं। विऽतरित्रता। मिथः।
आत्। ईं। भगः। न। हव्यः। सं। अस्मत्। आ। वोळ्हुः। न। रश्मीन्। सं।
अयंस्त। सारथिः॥३॥

सवयसा समानवयस्कौ। वयःशब्देन सामर्थ्यं लक्ष्यते। समानसामर्थ्यौ तदित्तदानीमेव यदा प्रवृद्धो भवति तदानीमेव समानमर्थं समानप्रयोजनं निष्पत्तिं मिथः प्रत्येकं वितरित्रता भृशं तरंतौ होत्रध्वर्यू वपुरग्नेः शरीरं युयूषतः। स्वस्वव्यापारेण मिश्रयितुमिच्छतः। प्रैषानंतरं याज्यादिपाठो होतुर्व्यापारः वषट्कारानंतरं होमोऽध्वर्योरिति विभागः। अत्रेदमनुसंधेयं। सवयसा समानवयस्कौ मिथः प्रत्येकं समानप्रयोजनं सुखप्राप्तिं वितरित्रता विशेषेण तरितुमिच्छंतौ॥ तरतेर्यङ्लुगंताच्छतरि दाधर्त्यादौ निपात्यते। द्विवचनस्याकारः॥ जायापती तद्वपुस्तद्वेव परस्परं शरीरं युयूषतः मिश्रयितुमिच्छतः परस्परमालिंगतः। तद्वदग्निं साकं होत्रध्वर्यू युयूषतः। आदीमनंतरमेव हव्य आहवनीयोऽग्निः सारथिः सरणशीलः सारथिवद्यज्ञात्मकस्य रथस्य निर्वाहको वा सन्नस्मदस्माकं संबंधिनो रश्मीन् रश्मिवदायता घृतधारा आ सर्वतः समयंस्त। सम्यक् स्वीकरोति। तत्र दृष्टांतद्वयमुच्यते। भगो न सर्वैः सेवनीय आदित्यः स यथा सर्वतः पूजामादत्ते तद्वत्। सारथी रथस्य यंता वोढुर्वाहकस्याश्वादे रश्मीन्न प्रतिग्रहानिव। तान्यथा स्वीकरोति तद्वदयमग्निरपि हवींषि समयंस्त॥

यमीं द्वा सवयसा सपर्यतः समाने योना मिथुना समोकसा।
दिवा न नक्तं पलितो युवाजनि पुरू चरन्नजरो मानुषा युगा॥४॥
यं। ईं। द्वा। सऽवयसा। सपर्यतः। समाने। योना। मिथुना। संऽओकसा।
दिवा। न। नक्तं। पलितः। युवा। अजनि। पुरु। चरन्। अजरः। मानुषा। युगा॥४॥

यमीमेनमग्निं द्वा द्वौ सवयसा समानवयस्कौ समानसामर्थ्यौ वा समाने योना योनौ फलस्योत्पत्तिस्थाने यज्ञे वर्तमानौ मिथुना दंपती इवैककार्योद्युक्तौ समोकसा समाननिवासौ देवयजनस्थानौ ईदृशौ होत्रध्वर्यू सपर्यतः पूजयतः स्तुत्या हविष्प्रदानेन च प्रीणयतः। कदेत्याह। दिवा नाहनीव नक्तं रात्रावपि। सर्वदेत्यर्थः। एवं पूज्यमानोऽग्निः पलितः पूर्वमंगारावस्थायां जीर्णोऽपि समिंधनानंतरं युवा तरुणस्तेजसा सर्वस्य मिश्रयिता वाजनि। जायते। एवं जातोऽयं मानुषा युगा मनोः संबंधीनि युगानि जायापतिरूपाणि होत्रध्वर्युरूपाणि वोद्दिश्य पुरु चरन् बह्वाज्यादिकं भक्षयन् अजरोऽजीर्णो जरारहितो वर्तते॥

तमीं हिन्वंति धीतयो दश व्रिशो देवं मर्तास ऊतये हवामहे।
धनोरधि प्रवत आ स ऋण्वत्यभिव्रजद्भिर्वयुना नवाधित॥५॥
तं। ईं। हिन्वंति। धीतयः। दश। व्रिशः। देवं। मर्तासः। ऊतये। हवामहे।
धनोः। अधि। प्रऽवतः। आ। सः। ऋण्वति। अभिव्रजत्ऽभिः। वयुना। नवा।
अधित॥५॥

देवं द्योतमानं तमेनमग्निं दश धीतयो दशसंख्याका अंगुलयो विशो विशः परस्परविश्लिष्टा हिन्वंति। प्रीणयंति मथनकाले। तथा मर्तासो मनुष्या वयं यजमाना ऊतये रक्षणाय हवामहे। आह्वयामः। कोऽस्य विशेष इत्युच्यते। अयमग्निर्धनोर्धनुषः सकाशात्प्रवत आ प्रकर्षेण गच्छतो बाणानिव। तान्यथा शत्रोरुपरि मुंचंति ॥ आ इत्युपमार्थे ॥ तद्वत्सोऽग्निर्धनुःस्थानीयान्निजशरीरसकाशात्प्रवतः प्रकृष्टवेगवतो रश्मीनृण्वति। गमयति ॥ रिविर्गत्यर्थः। अत्रांतर्भावितण्यर्थोऽयं। इदित्वान्नुम्। छांदसं रेफस्य संप्रसारणं। अधिशब्दोऽनर्थको धात्वर्थमात्रानुवादी ॥ किंचैवं प्रवृद्धोऽग्निरभिव्रजद्भिरनुष्ठानार्थमभितः संचरद्भिर्ज्ञेयमर्थमभिगच्छद्भिर्वा तदर्थं नवा नवानि नूतनानि वयुना वयुनानि प्रज्ञानान्यनुष्ठानविषयाण्यधित। धारयति। ज्ञापयतीत्यर्थः। यद्वा। अभिव्रजद्भिराभिमुख्येन गच्छद्भिर्होत्रादिभिः क्रियमाणानि नवानि वयुनानि प्रज्ञाविशिष्टानि स्तोत्रादीन्यधित। धत्ते ॥ धात्रश्छांदसे लुङि स्थाघ्वोरिच्चेतीत्वं। उत्तरस्य सिचः कित्त्वं। ह्रस्वादंगादिति सलोपः ॥

त्वं ह्यग्ने दिव्यस्य राजसि त्वं पार्थिवस्य पशुपा इव त्मना ।
एनी त एते बृहती अभिश्रिया हिरण्ययी वक्करी बर्हिराशाते ॥६॥
त्वं। हि। अग्ने। दिव्यस्य। राजसि। त्वं। पार्थिवस्य। पशुपाःऽइव। त्मना।
एनी इति। ते। एते इति। बृहती इति। अभिऽश्रिया। हिरण्ययी इति। वक्करी इति।
बर्हिः। आशाते इति ॥६॥

हे अग्ने त्वं दिव्यस्य दिवि भवस्य देवादेर्विद्युदात्मना वृष्ट्यादेर्वा राजसि। ईशिषे। ऐश्वर्यनामैतत्। तथा पार्थिवस्य पृथिवीसंबंधिनो मनुष्यादे राजसि। ईश्वरो भवसि। किमन्यतंत्रत्वेन नेत्याह। त्मनात्मनैव स्वसामर्थ्येनैव। तत्र दृष्टांतः। पशुपा इव। पशुपालको यथा स्वसामर्थ्येनैव पशूनां निरोधनिर्गमनादिव्यापारेषु समर्थो भवति तद्वत्। एतद्दृष्टांतेनात्यंतस्वातंत्र्यमुक्तं भवति। किंच यस्मादेवं तस्मात्ते तव बर्हिर्यज्ञमेते प्रसिद्धे एनी एतवर्णौ शुभ्रे द्यावापृथिव्यावाशाते। अश्नुवाते। व्याप्नुतः ॥ वर्णादनुदात्तादिति ङीप् तकारस्य नकारश्च ॥ कीदृश्यौ ते। बृहती महत्यावतिविस्तृते अभिश्रिया प्राप्तैश्वर्ये अभितः सेव्ये वा हिरण्ययी हितरमणीये वक्करी अतिकुशलं शब्दयंत्यौ ॥ वचेर्वनिपि वनो र चेति ङीब्रेफौ। छांदसं कुत्वं। वकि कौटिल्य इत्यस्माद्वा छांदसो नुमभावः ॥ ईदृश्यौ द्यावापृथिव्यौ बर्हिरश्नुवाते ॥

अग्ने जुषस्व प्रति हर्य तद्वचो मंद्र स्वधाव ऋतजात सुक्रतो ।
यो विश्वतः प्रत्यङ्ङसि दर्शतो रण्वः संदृष्टौ पितुमाँ इव क्षयः ॥७॥
अग्ने। जुषस्व। प्रति। हर्य। तत्। वचः। मंद्र। स्वधाऽवः। ऋतऽजात। सुक्रतो इति सुऽक्रतो।
यः। विश्वतः। प्रत्यङ्। असि। दर्शतः। रण्वः। संऽदृष्टौ। पितुमान्ऽइव। क्षयः ॥७॥

हे अग्ने जुषस्व। सेवस्व हविः। प्रीतो भव वा स्तुत्या। किंच तत्तादृशं प्रियकरं वचो वाग्रूपं स्तोत्रं प्रति हर्य। पुनः कामयस्व। हे मंद्र मादनशील स्तुत्य वा हे स्वधावो हविर्लक्षणान्नवन् हे ऋतजात यज्ञार्थमुत्पन्न हे सुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा। य ईदृशस्त्वं विश्वतः सर्वस्य स्थावरजंगमस्य जगतः प्रत्यङ्ङसि अभिमत अनुकूलोऽसि। न पराङ्मुख इत्यर्थः। तथा दर्शतो दर्शनीयः सर्वैः किंच संदृष्टौ सम्यग्दर्शने रण्वो रमणशीलो रमयिता वा भवसि सर्वस्य। यद्वा। तव संदृष्टौ सत्यां सर्वो जनः क्षयो निवासवान्भवति। तत्र दृष्टांतः। पितुमानिव। अतिप्रभूतान्नस्वामी यथा सर्वैर्वस्तव्यो गंतव्यश्च भवति तद्वत् ॥ ॥१३॥

तं पृच्छतेति पंचर्चं पंचमं सूक्तं। अनुक्रमणिका। तं पृच्छत पंचांत्या त्रिष्टुबिति। दीर्घतमा ऋषिः। पूर्वत्राग्नेयं तु तदित्युक्तत्वादिदमप्याग्नेयं। अंत्या त्रिष्टुप्। शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः ॥ प्रातरनुवाकाश्विन.शस्त्रयोरस्य विनियोग उक्तः ॥

तं पृ॑च्छता॒ स ज॑गामा॒ स वे॑द॒ स चि॑कि॒त्वाँ ई॑यते॒ सा न्वी॑यते ।
तस्मि॑न्त्संति प्र॒शिष॒स्तस्मि॑न्नि॒ष्टयः॒ स वाज॑स्य॒ शव॑सः शु॒ष्मिण॒स्पतिः॑ ॥१॥
तं । पृ॒च्छ॒त॒ । सः॒ । ज॒गा॒म॒ । सः॒ । वे॒द॒ । सः॒ । चि॒कि॒त्वान् । ई॒यते॒ । सः॒ । नु॒ । ई॒यते॒ ।
तस्मि॑न् । सं॒ति॒ । प्र॒ऽशिषः॑ । तस्मि॑न् । इ॒ष्टयः॑ । सः॒ । वाज॑स्य । शव॑सः । शु॒ष्मिणः॑ । पतिः॑ ॥१॥

हे यजमानाः तमग्निं पृच्छत । यत्स्वर्गादिविषयं प्रष्टव्यमस्ति तत् । तस्यैव प्रष्टव्यत्वेऽतिशयमाह । स जगाम । स सर्वत्र गच्छति । अत एव स वेद । स च प्रष्टव्यं जानाति । किमितरसाधारण्येन नेत्याह । स चिकित्वान् स एव चेतनावान् । स विशेषज्ञ इत्यर्थः । स एवेयते । श्रेयसकाशं गच्छति । पुनर्गतिरेव विशेष्यते । सः सोऽग्निरेव नु क्षिप्रमीयते । यद्यजमानस्य श्रेयमस्ति तमर्थं ज्ञातुं शीघ्रमेव गच्छतीत्यर्थः । यद्वा । ज्ञानार्थमीयते । सेव्यते । तथा शीघ्रमनुसेव्यते । यस्मादयमुक्तरूपः तस्मात्तमेव पृच्छतेत्यर्थः । तत्रापेक्षिताः कामाः संतीत्याह । तस्मिन्नग्नौ प्रशिषः प्रशासनानि नियमनसामर्थ्यानि संति । असाध्यं नियम्यापि साधयितुं शक्त इत्यर्थः । किंच तस्मिन्नेवाग्नावेष्टव्या एष्टव्या भोगाः सर्वफलसाधका यागा वा संति । किंच सोऽग्निर्वाजस्यान्नस्य शवसो बलस्य च पतिः पालयिता दाता । किंच शुष्मिणो बलवतो राजादेरपि पतिः स्वामी । यस्मादयं महानुभावस्तस्मात्तमेव पृष्ट्वा पुरुषार्थं साधयतेति ॥

तमित्पृ॑च्छंति॒ न सि॒मो वि पृ॑च्छति॒ स्वेने॑व॒ धीरो॒ मन॑सा॒ यदग्र॑भीत् ।
न मृ॑ष्यते प्रथ॒मं नाप॑रं॒ वचो॑ऽस्य॒ क्रत्वा॑ सचते॒ अप्र॑दृपितः ॥२॥
तं । इत् । पृ॒च्छं॒ति॒ । न । सि॒मः । वि । पृ॒च्छ॒ति॒ । स्वेन॑ऽइव । धीरः॑ । मन॑सा । यत् । अग्र॑भीत् ।
न । मृ॒ष्य॒ते॒ । प्र॒थ॒मं । न । अप॑रं । वचः॑ । अ॒स्य॒ । क्रत्वा॑ । स॒च॒ते॒ । अप्र॑ऽदृपितः ॥२॥

पूर्वमंत्रेऽग्निं पृच्छतेत्युक्तं । अत्र तु सोऽनुनयेन प्रष्टव्य इत्याह । तमित्तमेवाग्निं पृच्छंति स तु नान्यं पृच्छति प्रश्नसमयेऽपि । सिमः सर्वजनो न वि पृच्छति । विपरीतं न पृच्छति । पृष्टोऽपि धीरो धीमानयं स्वेनेव मनसा । इवशब्द एवार्थे । स्वकीयेनैव बुद्ध्या यत् यत्कार्यमग्रभीत् वदामीत्यादत्ते तदेव प्रतिब्रूते न तु प्रश्नानुकूलं । स्वतंत्रेश्वर इत्युक्तं भवति । यद्वा । प्रष्टा धीमान् स्वेन मनसा वाचा वाच्यं विचार्य यदग्रभीत् यद्वाक्यं वक्तव्यत्वेन स्वीकुर्यात् तदेवाग्निं पृच्छति न तु बहु भाषत इत्यर्थः । परवाक्यासहत्वमाह । अयमग्निः प्रथमं वचः स्ववाक्यात्पूर्वभावि वचनं न मृष्यते । न सहते । तथापरं वचः स्वोक्त्यनंतरभावि प्रतिवचनं न मृष्यते । यस्मादयमेवंविधस्तस्मादप्रदृपितोऽप्रदृप्तः यद्वा तेन शिक्षितोऽनुद्दंडः सर्वो लोकोऽस्य महानुभावस्याग्नेः क्रत्वा क्रतुना रक्षणादिकर्मणा सह सचते । संगच्छते । जीवतीत्यर्थः ॥

तमिद्ग॑च्छंति जु॒ह्व१॒॑स्तमर्व॑ती॒र्विश्वा॒न्येकः॑ शृणव॒द्वचां॑सि मे ।
पु॒रु॒प्रै॒षस्ततु॑रिर्य॒ज्ञसा॑धनोऽच्छिद्रोतिः॒ शिशु॒राद॑त्त॒ सं रभः॑ ॥३॥
तं । इत् । ग॒च्छं॒ति॒ । जु॒ह्वः॑ । तं । अर्व॑तीः । विश्वा॑नि । एकः॑ । शृ॒ण॒व॒त् । वचां॑सि । मे॒ ।
पु॒रु॒ऽप्रै॒षः । त॒तु॑रिः । य॒ज्ञऽसाध॑नः । अच्छि॑द्रऽऊतिः । शिशुः॑ । आ । अ॒द॒त्त॒ । सं । रभः॑ ॥३॥

जुह्वोऽस्मदीया जुहूपभृदादयस्तमित्तमेवोद्दिश्याज्यपूर्णाः सत्यो गच्छंति प्रीणयितुं । यद्वा । ह्वयंत इति जुह्व आहुतयः सोमादिरूपाः । अथवा जुह्वादिषु ।श्रुतान्याज्या।न्यथाश्रयाश्रयिणोरभेदेन जुह्व इत्युच्यंते मंचाः क्रोशंतीतिवत् । ता अपि तमेव गच्छंति अस्य सर्वदेवतात्मकत्वात् । अग्नेवेतरदे[illegible] ह्रयमानं चेति भावः । किंचार्वतीः प्राप्तिमत्यः स्तुतयस्तमित्तमेवाग्निं गच्छंति सर्वदेवतात्मकत्वादेव । स एवैकोऽयमग्निर्विश्वानि मे मदीयानि वचांसि स्तोत्ररूपाणि शृणवत् । शृणोति । अग्नेः सर्वदेवतात्मकत्वं तैत्तिरीया आहुः ।

ते देवा बिभ्यतोऽग्निं प्राविशन् तस्मादाहुरग्निः सर्वा देवता इति । तै॰ सं॰ ६. २. २. ६. । तथाचैव पुरस्ता-दाम्नास्यते । त्वमग्ने वरुणो जायसे यत्त्वं मित्रः । ऋ॰ ५. ३. १. । इत्यादिकोऽस्य विशेष इत्युच्यते । पुरुप्रैषो बहुप्रैषभाक् । यद्वा । बहुप्रेषणः । सर्वस्याज्ञापयितेत्यर्थः । ततुरिस्तारयिता ॥ तरतेरंतर्णीतण्यर्थाद्दृगमहन इति किन्प्रत्ययः । बहुलं छंदसीत्युत्वं ॥ यज्ञसाधनो यज्ञसाधकः अग्न्यधीनत्वाद्यज्ञस्य अच्छिद्रोतिरविच्छिन्नरक्षणः शिशुः शिशुवत्प्रियकारी शोचयिता वा शत्रूणां एवंभूतोऽग्निः सं रभो यज्ञादिसंरंभवान् सन्नादत्त । आदत्ते । हविरादिकं स्वीकरोति ॥

उपस्थायं चरति यत्समारत सद्यो जातस्तत्सार युज्येभिः ।
अभि श्वांतं मृशते नांद्ये मुदे यदीं गच्छंत्युशतीरपिष्ठितं ॥४॥
उपऽस्थायं । चरति । यत् । संऽआरत । सद्यः । जातः । तत्सार । युज्येभिः ।
अभि । श्वांतं । मृशते । नांद्ये । मुदे । यत् । ईं । गच्छंति । उशतीः । अपिऽस्थितं ॥४॥

यद्यदाध्वर्युरुपस्थायं चरति उपस्थायोपस्थायानुतिष्ठति उत्पत्त्यनुकूलव्यापारं करोति । कदेत्याह । यत् समारत समागच्छत मथनेनाविरभवत् ॥ समो गम्यृच्छीत्यर्तेरात्मनेपदं ॥ सद्यस्तदानीमेव जात उत्पन्नः सन् युज्येभिर्योक्तुं संबंद्धुं समर्थैः फलैर्मिश्रयितुमर्हैस्तेजोभिर्वा युक्तः सन् तत्सार । अरण्योर्गूढः सन् चचार । यद्वा । युज्येभिरश्वैर्जातमात्र एव सर्वत्र संचचार ॥ त्सर छद्मगतौ । लिटि णलि रूपं ॥ एवं प्रवृद्धोऽयं श्वांतं श्रांतं शांतं वा यजमानं नांद्ये नंदनीये कर्मणि निमित्तभूते सति मुदे तस्य संतोषायाभि मृशते । अभिमर्शनं करोति । फलप्रदानेनेति भावः । यथा लोके गुर्वादिः श्रांतं शिष्यादिकं स्पृशति तद्वत् । कदेति चेत् उच्यते । यद्यदापिष्ठितं व्याप्य वर्तमानमीं [illegible] उशतीः कामयमाना आज्यधाराः स्तुतयो वा गच्छंति प्राप्नुवंति तदाभि मृशति ॥

स ईं मृगो अप्यो वनर्गुरुप त्वच्युपमस्यां नि धायि ।
व्यंब्रवीद्वयुना मर्त्येभ्योऽग्निर्विद्वाँ ऋतचिद्धि सत्यः ॥५॥
सः । ईं । मृगः । अप्यः । वनर्गुः । उप । त्वचि । उपऽमस्यां । नि । धायि ।
वि । अब्रवीत् । वयुना । मर्त्येभ्यः । अग्निः । विद्वान् । ऋतऽचित् । हि । सत्यः ॥५॥

स ईं स एवाग्निरुपमस्यामुपमायामुपमास्यदायां त्वच्योषध्यादिभिराच्छादितायां वेद्यामुप नि धायि । उपस्थाप्यत उत्तरत्रोपभोगाय । कीदृशः सः । मृगो मार्जयितान्वेषणशीलो वा । मृगो मार्ष्टेर्गतिकर्मणः । नि॰ १. २०. । इति यास्कः । अप्य आप्यो गंतव्यः । अपः कर्म तत्र साधुर्वा । वनर्गुर्वनगामी ॥ ऋच्छतेर्गमेश्चेदं रूपं । यद्वा । गमेरेव । उपपदस्य रुडागमश्छांदसः ॥ एवंभूतोऽग्निर्मर्त्येभ्यो मरणधर्मेभ्यो यजमानादिरूपेभ्यो वयुनानि प्रज्ञानान्यनुष्ठेयज्ञानानि व्यब्रवीत् । विशेषेण ब्रवीति । उपदिशति । वयुनमिति प्रज्ञानाम वयुनम-भिख्येति तन्नामसु पाठात् । ईदृक् सामर्थ्यमस्तीति दर्शयति । अयमग्निर्विद्वान् सर्वज्ञ ऋतचिद्यज्ञस्योदकस्य वा चेतिता ज्ञाता सत्यः । सत् क्रियमाणं कर्म । तत्र साधुः । सत्सु भवो वा । सत् फलं तदर्हतीति वा । सम्यक्फलप्रद इत्यर्थः । यस्मादयमुक्तसामर्थ्योपेतस्तस्मात्प्रज्ञोपदेशो युक्तः । हिशब्दः प्रसिद्धौ ॥ ॥१४॥

त्रिमूर्धानमिति पंचर्चं षष्ठं सूक्तं दैर्घतमसं । आग्नेयं पूर्वचाग्नेयं तु तदित्युक्तत्वात् । त्रिमूर्धानमित्यनु-क्रमणिका ॥ प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभे छंदसीदमादिसूक्तत्रयस्य विनियोगः । अथैतस्या इति खंडे सूचितं । त्रिमूर्धानमिति त्रीणि । आ॰ ४. १३. । इति ॥

त्रिमूर्धानं सप्तरश्मिं गृणीषेऽनूनमग्निं पित्रोरुपस्थे ।
निषत्तमस्य चरतो ध्रुवस्य विश्वा दिवो रोचनापप्रिवांसं ॥१॥

त्रिऽमूर्धानं । सप्तऽरश्मिं । गृणीषे । अनूनं । अग्निं । पित्रोः । उपऽस्थे ।
निऽसत्तं । अस्य । चरतः । ध्रुवस्य । विश्वा । दिवः । रोचना । आपप्रिऽवांसं ॥ १ ॥

अनयाग्निर्यज्ञरूपेण स्तूयते । त्रिमूर्धानं सवनत्रयरूपमूर्धत्रयोपेतं ॥ द्वित्रिभ्यां पाद्दन्मूर्धसु बहुव्रीहाविति उत्तरपदांतोदात्तत्वं ॥ किंच सप्तरश्मिं नियामकसप्तच्छंदोयुक्तं अनूनमविकलं संपूर्णफलं अग्निमग्निसाध्यमंगनादिगुणयुक्तं वा पित्रोरुपस्थे द्यावापृथिव्योरुत्संगे निषत्तं निषण्णं । मध्ये वर्तमानमित्यर्थः । भूमिस्थद्रव्येण द्युलोकस्थदेवताभिश्च साध्यत्वादिति यावत् । किंच ध्रुवस्य निश्चलस्य चरतो हविर्भक्षयतोऽस्याग्नेः संबंधिनं यज्ञं दिवो द्युलोकादागतानि विश्वानि रोचनानि देवविमानान्यापप्रिवांसं सर्वतः पूरयितारं गृणीषे । गृणीहि । स्तुहि । यद्वा । अयमग्निरेवोच्यते । त्रिमूर्धवद्त्र त्रित्वंतरिक्षद्युलोकाख्यस्थानत्रयोपेतं । लोकत्रयव्याप्तमित्यर्थः । गार्हपत्यादिस्थानत्रयवर्तिनं वा । सप्तरश्मिं सप्तज्वालं अनूनमन्यूनं पित्रोर्द्यावापृथिव्योरुपस्थ उत्संगे निषत्तं ॥ नसत्तनिषत्तेति निपातनान्निष्ठानत्वाभावः ॥ निषण्णं आपप्रिवांसं सर्वतः पूरयंतं कामानां उक्तलक्षणविशिष्टमग्निं गृणीषे । गृणीहि । स्तुहि । किंच चरतः सर्वत्र ज्वालाभिर्गच्छतो ध्रुवस्य धृतत्वाद्विचलितस्य दिवो द्योतमानस्यास्याग्नेर्विश्वा सर्वाणि रोचना रोचमानानि तेजांसि सर्वत्र व्याप्नुवंतीति शेषः । ईदृशमग्निं स्तुहीत्यंतरात्मनः प्रैषः ॥

उक्षा महाँ अभि ववक्ष एने अजरस्तस्थावितऊतिर्ऋष्वः ।
उर्व्याः पदो नि दधाति सानौ रिहंत्यूधो अरुषासो अस्य ॥ २ ॥
उक्षा । महान् । अभि । ववक्षे । एने इति । अजरः । तस्थौ । इतःऽऊतिः । ऋष्वः ।
उर्व्याः । पदः । नि । दधाति । सानौ । रिहंति । ऊधः । अरुषासः । अस्य ॥ २ ॥

उक्षा सेक्ता । फलप्रदानसमर्थ इत्यर्थः । अत एव महान् महिम्ना स्वरूपेणोद्वृत्तवृषभसदृशोऽयमग्निरेने द्यावापृथिव्यावभ्यभिक्रम्य व्याप्य ववक्षे । वहति । व्याप्नोतीत्यर्थः ॥ वहतेर्लिटि च्छांदसः शपः स्तुः । लोपस्त आत्मनेपदेष्विति तलोपः । सिब्बहुलमिति सिप् ॥ वृष्ट्यादिप्रदानेन हविर्वहनेन च लोकद्वयस्य वासिनो देवान्मनुष्यांश्च रक्षतीत्यर्थः । किंचायमजरो जरारहित ऋष्वो महान् पूज्यः । महन्नामैतत् ऋष्व उक्ष इति तन्नामसु पाठात् । तथेतऊतिः प्राप्तरक्षणः सन् तस्थौ । स्थितो वर्तते । यद्वा । उक्तगुणोऽयमितऊतिरित एव गमनवानस्मद्देवयजनाभिमुखगमनवान् तस्थौ । वर्तते । तदनंतरमुर्व्या विस्तृताया भूम्याः सानौ समुच्छ्रिते प्रदेशे वेदिलक्षणे पदो नि दधाति । पदानि स्थापयति करोति । किंचास्याग्नेररुषासोऽरुषा आरोचना ऊधरूधःस्थानीयमंतरिक्षं रिहंति लिहंति । यद्वा । अस्योधरूधःस्थानीयं यज्ञमरुषास आरोचना ब्रह्मवर्चसेन यजमाना रिहंति । अभिमतस्वर्गादीनि लिहंति ॥

समानं वत्समभि संचरंती विष्वग्धेनू वि चरतः सुमेके ।
अनपवृज्याँ अध्वनो मिमाने विश्वान्केताँ अधि महो दधाने ॥ ३ ॥
समानं । वत्सं । अभि । संचरंती इति संऽचरंती । विष्वक् । धेनू इति । वि । चरतः ।
सुमेके इति सुऽमेके ।
अनपऽवृज्यान् । अध्वनः । मिमाने इति । विश्वान् । केतान् । अधि । महः ।
दधाने इति ॥ ३ ॥

समानमेकमेव वत्सं वत्सस्थानीयं पुत्रवद्वर्धहेतुमग्निमभिमुखं संचरंती संचरंत्यौ द्वे धेनू अभिहितकरणेन प्रीणयित्र्यौ पत्नीयजमानलक्षणे धेनू विष्वक् वि चरतः । संचरतः । स्तनपानादिसदृशेंधनप्रक्षेपसंमार्जनादिना

सम्यग्वर्धयत इत्यर्थः। कीदृश्यौ ते। सुमेके शोभनकर्माणौ शोभनमेहने वा। परिचरणकुशले इत्यर्थः। किंचानपवृज्यानपवर्जनीयरहितान्॥ नञ्सुभ्यामित्युत्तरपदांतोदात्तत्वं॥ अध्वनो मार्गानसेः प्रांतप्रदेशान् केशाद्यमेध्यरहितान्निमाने संपादयित्र्यौ। किंच विश्वान्केतान् सर्वाणि प्रज्ञानानि प्रवर्धनविषयाणि महो महांत्यध्यधिकं दधाने धारयंत्यौ। ईदृशावध्वर्युयजमानरूपे जायापतिरूपे वा धेनू विश्वत्रि चरतः॥

धीरा॑सः प॒दं क॒वयो॑ नयंति॒ नाना॑ हृ॒दा रक्ष॑माणा अजु॒र्यं।
सिषा॑संतः॒ पर्य॑पश्यंत॒ सिंधु॑मा॒विरे॑भ्यो अभवत्सू॒र्यो॒ नॄन् ॥४॥
धीरा॑सः। प॒दं। क॒वयः॑। न॒यंति॒। नाना॑। हृ॒दा। रक्ष॑माणाः। अ॒जु॒र्यं।
सिसा॑संतः। परि॑। अ॒प॒श्यं॒त॒। सिंधुं॑। आ॒विः। ए॒भ्यः। अ॒भ॒व॒त्। सूर्यः॑। नॄन् ॥४॥

धीरासो धीरा धीमंतः प्रयोगज्ञा अध्वर्य्वादयोऽजुर्यमजर्यमजीर्णमेनमग्निं पदं स्थानं वेदिलक्षणं नयंति। प्रापयंति। मथनदेशाद्गार्हपत्याद्वा। अथवा वक्ष्यमाणलक्षणा यजमानादयः पदमास्पदं सर्वकामानामास्पदमेनं गमयंति। कीदृशास्ते। कवयः क्रांतदर्शिनो मेधाविनः अनूचाना वा। ये वा अनूचानास्ते कवय इति श्रुतेः। किंच नाना हृदा बहुप्रकारया बुद्ध्या रक्षमाणा धारयमाणाः। किंचैवंरूपास्ते सिंधुं स्यंदमानं यद्द्वारा फलानि स्रवंतमग्निं सिषासंतः संभक्तुमिच्छंतः॥ सनतेः सनि सनीवंतर्धेति विकल्पनादिडभावः। [illegible]त्वं॥ पर्यपश्यंत। परितः पश्यंति। शुश्रूषंत इत्यर्थः। किंच सूर्यः सर्वस्य प्रसवितायमग्निरेभ्य एवं कुर्वद्भ्यो नृभ्यो नेतृभ्य आविरभवत्। तेषामनुग्रहेण प्रत्यक्षोऽभवत्॥ नॄनित्यत्र वचनव्यत्ययः॥ नॄन्प्राणिनोऽनुग्रहीतुमिति वा योज्यं॥

दि॒दृ॒क्षेण्यः॒ परि॒ काष्ठा॑सु॒ जेन्य॑ ई॒ळेन्यो॑ म॒हो अर्भा॑य जी॒वसे॑।
पु॒रु॒त्रा यदभ॑वत्सू॒रहै॑भ्यो॒ गर्भे॑भ्यो म॒घवा॑ वि॒श्वद॑र्शतः ॥५॥
दि॒दृ॒क्षेण्यः॑। परि॑। काष्ठा॑सु। जेन्यः॑। ई॒ळेन्यः॑। म॒हः। अर्भा॑य। जी॒वसे॑।
पु॒रु॒ऽत्रा। यत्। अभ॑वत्। सूः। अहै॑। ए॒भ्यः। गर्भे॑भ्यः। म॒घऽवा॑। वि॒श्वऽद॑र्शतः ॥५॥

अयमग्निः काष्ठासु परस्परं क्रांत्वा वर्तमानासु दशसु दिक्षु दिदृक्षेण्यः। अनुग्रहयुक्तया दर्शनयुक्तो भवति। यद्वा। द्रष्टुमिष्टव्यो दर्शनेच्छाविषयभूतः॥ दृशेः सनंतात्कृत्यार्थे तवैकेन्केन्येति केन्यप्रत्ययः॥ अत एव जेन्यः सर्वत्र प्रादुर्भवनशीलो भवति जयशीलो वा। किंच प्रदानसमय ईळेन्यः स्तुत्यो भवति। किमर्थमेवं। महो महतो देवादेरर्भायार्भकस्याल्पस्य यजमानादेर्वा जीवसे जीवनाय। हविर्वहनेन धनप्रदानेनेति विवेकः। तत्रोपपत्तिमाह। यदह यस्मात्खलु पुरुत्रा बहुषु देशेषु॥ देवमनुष्येत्यादिना त्राप्रत्ययः॥ मघवा ह[illegible]न विश्वदर्शतः सर्वविषयद्रष्ट[illegible]भ्यो गर्भेभ्यः॥ षष्ठ्यर्थे चतुर्थी॥ एषामृत्विजां गर्भवच्छिशुवदत्यंतरक्षणीयानां सूरभवत् प्रसवितोत्पादयिताभवत् भवति। तस्मान्नाना हृदा रक्षमाणाः कवयः पदं नयंतीति पूर्वत्र संबंधः॥ ॥१५॥

कथा त इति पंचर्चं सप्तमं सूक्तं दैर्घतमसमाग्नेयं त्रैष्टुभं। [illegible]॥ प्रातरनु[illegible]योरस्य सूक्तस्य विनियोगस्त्रिमूर्धानमिति चोक्तत्वनेनोक्तः॥

क॒था ते॑ अग्ने शु॒चयं॑त आ॒योर्द॑दा॒शुर्वाजे॑भिराशुषा॒णाः।
उ॒भे यत्तो॒के तन॑ये॒ दधा॑ना ऋ॒तस्य॒ साम॑न्र॒णयं॑त दे॒वाः ॥१॥
क॒था। ते॒। अ॒ग्ने॒। शु॒चयं॑तः। आ॒योः। द॒दा॒शुः। वाजे॑भिः। आ॒शु॒षा॒णाः।
उ॒भे इति॑। यत्। तो॒के इति॑। तन॑ये। दधा॑नाः। ऋ॒तस्य॑। साम॑न्। र॒णयं॑त। दे॒वाः ॥१॥

हे अग्ने ते तव संबंधिनो रश्मयः शुचयंतो दीप्तिं सर्वत्र चक्षाणाः प्रकटयंत आशुषाणा आशु शीघ्रं संभक्तार आशूत्संभक्तारो वा । वाय्वादेरपि शीघ्रं संभक्तार इत्यर्थः । यद्वा । समंताच्छोषयितारः । यद्वा । सर्वं व्याप्नुवंतः ॥ अश्नोतेर्लिटः कानच् । व्यत्ययेनोप्रत्ययः सिब्बेति द्विविकरणता । आङ्पूर्वादंतर्भावितण्यर्थाच्छुषेः शानचि छांदसः शपो लुक् । आशुशब्दोपपदात्सनतेः कर्मण्यण् ॥ ईदृशा रश्मयो वाजेभिरन्नैः सहितमायो- रायुरायुष्यं ॥ कर्मणि षष्ठी ॥ कथा केनोपायेन ददाशुः । ददति ॥ दाशृ दाने । छांदसो लिट् ॥ तमुपायमनुगृ- हाणेत्यर्थः । रश्मीनां वरप्रदानं कुत्र दृष्टमिति चेत् उच्यते । यत्र यस्मादुभे उक्ते अन्नायुषी तोके पुत्रे तनये ऽनवच्छेदेन कुटुंबस्य विस्तारके । यद्वा । तोके पुत्रे तनये तत्पुत्रादौ च । दधाना धारयंतो देवा व्यवहर्तारो यजमाना ऋतस्य यज्ञस्य संबंधिनि सामन् साम्नि रथंतरादौ रणयंत रमंते रमयंति शब्दयंत्येव वा । यस्मा- दन्नायुष्पुत्रादिसहिताः सोमेनेष्ट्वा साम्नि रमंते तस्माद्रश्मयो ददतीत्यवगम्यत इत्यर्थः । तादृशांस्त्वदीयान्र- श्मीन् मामप्यनुगृहाणेत्यर्थः ॥

बोधा मे अस्य वचसो यविष्ठ मंहिष्ठस्य प्रभृतस्य स्वधावः ।
पीयंति त्वो अनु त्वो गृणाति वंदारुस्ते तन्वं वंदे अग्ने ॥२॥
बोध । मे । अस्य । वचसः । यविष्ठ । मंहिष्ठस्य । प्रऽभृतस्य । स्वधाऽवः ।
पीयंति । त्वः । अनु । त्वः । गृणाति । वंदारुः । ते । तन्वं । वंदे । अग्ने ॥२॥

हे यविष्ठ युवतम हे स्वधावो हविर्लक्षणान्नेन तद्वन्नग्ने मे मदीयस्य मंहिष्ठस्यातिशयेन पूजनीयस्य प्रभृतस्य प्रकर्षेण संपादितस्यास्येदानीं क्रियमाणस्य वचसः स्तुतिरूपस्य वचनस्य ॥ कर्मणि षष्ठी ॥ उक्तलक्षणं वचो बोध । बुध्यस्व । स्तुतो भवेत्यर्थः । हे अग्ने लोके त्वः । अत्र यास्कस्त्वो नेम इत्यर्धस्येत्युक्त्वैतदेवोदाजहार । नि॰ ३.२०. । एको जनः पीयति । वधकर्मैतत् । हिनस्ति । यज्ञादिना न पूजयतीत्यर्थः । त्व एकोऽनु गृणाति । अनुकूलमुच्चारयति । तयोर्मध्ये हे अग्ने वंदारुर्वंदनशीलोऽहं ते तव तन्वं तनुं तव मूर्तिं वंदे । स्तौमि ॥

ये पायवो मामतेयं ते अग्ने पश्यंतो अंधं दुरितादरक्षन् ।
ररक्ष तान्त्सुकृतो विश्ववेदा दिप्संत इद्रिपवो नाह देभुः ॥३॥
ये । पायवः । मामतेयं । ते । अग्ने । पश्यंतः । अंधं । दुःऽइतात् । अरक्षन् ।
ररक्ष । तान् । सुऽकृतः । विश्वऽवेदाः । दिप्संतः । इत् । रिपवः । न । अह । देभुः ॥३॥

अत्रेतिहासमाचक्षते । उचथ्यबृहस्पतिनामानौ द्वावृषी आस्तां । तत्रोचथ्यस्य ममता नाम भार्या । सा च गर्भिणी । तां बृहस्पतिर्गृहीत्वारमयत् । शुक्रनिर्गमनावसरे प्राप्ते गर्भस्थं रेतः प्रावादीत् हे मुने रेतो मा त्याक्षीः पूर्वमहं वसामि रेतःसंकरं मा कार्षीरिति । एवमुक्तो बृहस्पतिर्बलात्प्रतिरुद्धरेतस्कः सन् शशाप । हे गर्भ त्वं यतो रेतोनिरोधमकरोः अतस्त्वं दीर्घं तमः प्राप्नुहि जात्यंधो भवेति । एवं शप्तो ममतायां दीर्घतमा अजायत । स चोत्पन्नस्तमोव्यथयाग्निमस्तौषीत् । स च स्तुत्वा प्रीत आंध्यं पर्यहरदिति । तदिदमत्रोच्यते । हे अग्ने ते तव संबंधिनो ये पायवः प्रसिद्धाः पालयितारो रश्मयो मामतेयं ममतायाः पुत्रं दीर्घतमसमंधं पश्यंतोऽंधोऽयं अतोऽस्माभी रक्षणीय इत्यवगच्छंतो दुरिताद्दुष्टं प्राप्ताद्दुःखादरक्षन् तान्सुकृतः सुखकर्तॄन् विश्ववेदा विश्वप्रज्ञो ररक्ष । रक्षति । अस्मत्पालनायेति भावः । तैरस्मानपि रक्षिष्यतीत्यर्थः । एवं रक्षितान- स्मान् दिप्संतो दंभितुमिच्छंतो रिपवः कामादयो नाह देभुः । अहेति विनिग्रहार्थीयः । न खलु दंभितुं शक्नुवंति ॥ दन्भु दंभे । श्रंथिग्रंथिदंभिस्वंजीनामिति वक्तव्यं । का॰ १.२.६.१. । इति लिटः कित्त्वादनिदिता- मिति नलोपः । तस्यासिद्धत्वादेत्वाभ्यासलोपयोरप्राप्तौ दंभेश्चेति वक्तव्यं । पा॰ ६.४.१२०.५. । इति तौ वि- धीयेते ॥ यद्वा । सूक्तद्रष्टा दीर्घतमाः स्वयमेवात्मानं परोक्षतया ब्रवीति ॥

यो नो॑ अग्ने॒ अर॑रिवाँ अघा॒युर॑राती॒वा म॒र्चय॑ति द्व॒येन॑ ।
मंत्रो॑ गु॒रुः पुन॑रस्तु॒ सो अ॑स्मा॒ अनु॑ मृक्षीष्ट त॒न्वं॑ दुरु॒क्तैः ॥ ४ ॥
यः । नः॒ । अ॒ग्ने॒ । अर॑रिऽवान् । अ॒घ॒ऽयुः । अ॒रा॒ति॒ऽवा । म॒र्चय॑ति । द्व॒येन॑ ।
मंत्रः॑ । गु॒रुः । पुनः॑ । अ॒स्तु॒ । सः । अ॒स्मै॒ । अनु॑ । मृ॒क्षी॒ष्ट॒ । त॒न्व॑म् । दुः॒ऽउ॒क्तैः ॥ ४ ॥

हे अग्ने नोऽस्मान्युष्मद्र्चितान् योऽघायुर्मारणादिरूपपापेच्छावान् अररिवानदाता । अस्मद्दानप्रतिबंधक इत्यर्थः ॥ रातेश्छांदसस्य लिटः क्वसुः ॥ अरातीवा स्वयमदानवान् ॥ छंदसि वनिपमिच्छंतीति मत्वर्थीयो वनिप् ॥ शत्रुत्वमाचरन् यः शत्रुर्द्वयेन मानसवाचिकभेदेन द्विविधेन । न ददामीति मानसो मंत्रः । निंदाद्यारोपेण दाननिवारणं वाचिको मंत्रः । यद्वा । मायाहेतुकेन विरुद्धरूपेण द्विविधेन मंत्रेण । यो विरुद्धमाचरति तन्न संकीर्तयति यच्च प्रियं ब्रूते तन्न करोति अन्यत्करोत्यन्यद्वदतीत्येवं मंत्रस्वरूपद्वैविध्यं । पूर्वं मानसवाचिकभेदेन इदानीं वाचिककायिकभेदेनेति विवेकः । ईदृशेन मंत्रेण यः शत्रुर्मर्चयति भर्त्सयति विधेयीकरोति वास्मान् । स मंत्रैकदेशो मानसरूपोऽस्मै पुनर्गुरुरस्तु ॥ षष्ठ्यर्थे चतुर्थी ॥ प्रयोक्तुरेव पुनर्गरितास्तु । तथा दुरुक्तैर्दुर्वाक्यैर्निंदारूपैर्वाचिकैस्तन्वं स्वकीयां तनुमनु मृक्षीष्ट । अनुमार्ष्टु । अनुक्रमेण लुंपतु । यद्वा । स द्विविधो मंत्रोऽस्मै प्रयोक्तुरेव गुरुर्गरितास्तु । अन्यान्यप्यस्मन्न्यक्काराय प्रयुक्तानि निष्ठुरभाषणानि संति । तैर्दुरुक्तैः सोऽरातिः स्वतनुमेवावलुंपतु । स्वात्मानमेवावृत्य दहत्वित्यर्थः ॥

उ॒त वा॒ यः स॑हस्य प्रवि॒द्वान्मर्तो॒ मर्तं॑ म॒र्चय॑ति द्व॒येन॑ ।
अतः॑ पाहि स्तवमान स्तु॒वंत॑मग्ने॒ माकि॑र्नो दुरि॒ताय॑ धायीः ॥ ५ ॥
उ॒त । वा॒ । यः । स॒ह॒स्य॒ । प्र॒ऽवि॒द्वान् । मर्तः॑ । मर्त॑म् । म॒र्चय॑ति । द्व॒येन॑ ।
अतः॑ । पा॒हि॒ । स्त॒व॒मा॒न॒ । स्तु॒वंत॑म् । अग्ने॑ । माकिः॑ । नः॒ । दुः॒ऽइ॒ताय॑ । धा॒यीः॒ ॥ ५ ॥

पूर्वमंत्रे द्विविधकुटिलमंत्रेण कर्तारं तन्मंत्रणं प्राप्नोतु मास्मानित्युक्तं । अत्र तु तन्मंत्रणात्पाहीत्यग्निः प्रार्थ्यते । उत वा हे सहस्य । सह इति बलनाम । तत्र भवाग्ने यो मर्त्यो मरणधर्मा मनुष्यः प्रविद्वान् मायामंत्रणं प्रकर्षेण जानन् द्वयेन पूर्वोक्तरीत्या द्विविधमंत्रेण मर्तं मनुष्यं मर्चयति विधेयीकरोति भर्त्सयति वा अतस्तादृशाद्भर्त्सनात्तत्कर्तुः सकाशाद्वा हे स्तवमान स्तूयमानाग्ने स्तुवंतं स्तुतिं कुर्वंतं मां पाहि । रक्ष । किंच नोऽस्मान्दुरिताय तत्कृताय दुर्मंत्रणप्रयुक्तदुःखाय समर्थं माकिर्धायीः । मा स्थापय । दुरितभाजनं मा कार्षीरित्यर्थः ॥ धि धारणे । व्यत्ययेनेट् । सिचि वृद्धिः । न माङ्योग इत्यडभावः ॥ ॥ १६ ॥

मथीद्यदिति पंचर्चमष्टमं सूक्तं दैर्घतमसं त्रैष्टुभमाग्नेयं । मथीद्यदित्यनुक्रमणिका ॥ सूक्तत्रयमध्यस्य तृतीयत्वेन पूर्वं विनियोग उक्तः ॥

म॒थीद्यदीं॑ वि॒ष्टो मा॑त॒रिश्वा॒ होता॑रं वि॒श्वाप्सुं॑ वि॒श्वदे॑व्यं ।
नि यं द॒धुर्म॑नु॒ष्या॑सु वि॒क्षु स्व१॒॑र्ण चि॒त्रं वपु॑षे वि॒भावं॑ ॥ १ ॥
मथी॑त् । यत् । ई॒म् । वि॒ष्टः । मा॒त॒रिश्वा॑ । होता॑रम् । वि॒श्वऽअ॑प्सुम् । वि॒श्वऽदे॑व्यम् ।
नि । यम् । द॒धुः । म॒नु॒ष्या॑सु । वि॒क्षु । स्वः॑ । न । चि॒त्रम् । वपु॑षे । वि॒भाऽव॑म् ॥ १ ॥

होतारं देवानामाह्वातारं विश्वाप्सुं । अप्स इति रूपनाम । नानारूपं पार्थिववैद्युतजाठरादिभेदेनाहवनीयादिभेदेन वा । यद्वा । कालीकराल्यादिरूपेण ज्वालानां वैरूप्याद्विश्वरूपत्वं । विश्वदेव्यं सर्वदेवयोग्यक्रियासाधुं यदीं यमेनमग्निं मातरिश्वा वृष्ट्यादिनिर्मातंतरिक्षश्वसनो वायुर्विष्टः काष्ठेष्वंतःप्रविष्टः सन् मथीत् अमथ्नात् । प्रावर्धयदित्यर्थः ॥ मथि विलोडने । ह्म्यंतक्षणेति वृद्धिप्रतिषेधः ॥ पुनः स एव विशेष्यति । यमग्निं

मनुष्यासु मत्वा कर्म कुर्वतीषु विट्सूत्विग्रूपासु प्रजासु पूर्वं वपुषे यज्ञासङ्घये नि दधुः धारयंति यजमानाः। मनुष्यशब्दो निरुक्ते बहुधा निरुक्तः। मनुष्याः कस्मान्मत्वा कर्माणि सीव्यंति मनस्यमानेन सृष्टा मनोरपत्यं मनुषो वा। नि० ३. ७.। इति। यद्वा। पूर्वं देवा मनुष्यासु मनोरपत्यभूतासु विक्षु प्रजासु प्राणिषु वपुषे स्वरूपाय यागादिस्वरूपप्रकाशाय शरीरधारणाय वा जाठराग्निरूपेण नि दधुः। स्थापितवंतः। तत्र दृष्टांतः। स्वर्णं स्वरणं स्वीरणं वा। आदित्यमिव चित्रं चायनीयं विभावं विविधप्रकाशवंतं यथा प्रकाशादिसाधनाय धारयंति तद्वत्। स्वःशब्दं यास्क एवं निरुवाच। स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान्स्वृता भासं ज्योतिषां स्वृतो भासेति वा। नि० २. १४.। इति। ईदृशं यं नि दधुस्तं मथीदिति पूर्वत्रान्वयः॥

दुदानमिन्न दंदभंत मन्माग्निर्वरूथं मम तस्यं चाकन्।
जुषंत विश्वान्यस्य कर्मोपंस्तुतिं भरमाणस्य कारोः॥२॥
दुदानं। इत्। न। दुदभंत। मन्मं। अग्निः। वरूथं। ममं। तस्यं। चाकन्।
जुषंतं। विश्वानि। अस्य। कर्मं। उपंऽस्तुतिं। भरमाणस्य। कारोः॥२॥

मन्म मननीयं स्तोत्रं हविरादिकं वा ददानमिदग्नये कुर्वाणमेव मां दंभितारो वैरिणो न ददभंत। दंभितुं हिंसितुं न प्रभवंति॥ दंभेर्बहुलं छंदसीति विकरणस्य श्लुः। व्यत्ययेनांतादेशः॥ मम कोऽतिशय इति उच्यते। तस्य तादृशस्य प्रदातुर्मम वरूथं वरणीयं स्तोत्रादिकमयमग्निश्चाकन्। अत्यर्थं कामयते॥ कनतिः कांतिकर्मा। अस्माद्यङ्लुगंताल्लङि च्छांदसोऽडभावः। बहुलादेव वा छांदसस्तुजादित्वादभ्यासदीर्घः॥ यस्मादेवं तस्मान्न दभ्नुवंतीत्यर्थः। न केवलमग्निरेव कामयते किंतु सर्वे देवाः कामयंत इत्याह। उपस्तुतिं भरमाणस्य कुर्वाणस्य कारोः स्तोतुरस्य यजमानस्य मम विश्वानि सर्वाणि हविष्प्रदानादिरूपाणि जुषंत सर्वे देवाः। अतो न ददभंतेत्यर्थः॥

नित्यें चिन्नु यं सदने जगृभ्रे प्रशस्तिभिर्दधिरे यज्ञियासः।
प्र सू नंयंत गृभयंत इष्टावश्वासो न रथ्यो रारहाणाः॥३॥
नित्यें। चित्। नु। यं। सदंने। जगृभ्रे। प्रशस्तिऽभिः। दधिरे। यज्ञियासः।
प्र। सु। नयंत। गृभयंतः। इष्टौ। अश्वासः। न। रथ्यः। ररहाणाः॥३॥

यज्ञियासो यज्ञयोग्या यजमाना ऋत्विजो वा यं मथनेनोत्पन्नमग्निं नित्ये चित्सदने नित्य एव गार्हपत्यलक्षणेऽग्न्यासादनस्थाने नु क्षिप्रं जगृभ्रे गृह्णंति॥ ग्रहेर्लिटीरयो र इति रेभावः। हृग्रहोर्भ इति भत्वं॥ नित्यं गतश्रियो ध्रियते नित्यं गार्हपत्यमिति सूत्रान्नार्हपत्यो नित्यः। तदाश्रयत्वात्सदनमपि नित्यमुच्यते। गृहीत्वा प्रशस्तिभिः प्रशंसाभिः स्तुतिभिर्दधिरे। धारयंत्याहवनीयार्थं। धृत्वा चेष्टाविषयसाधने यज्ञे निमित्तभूते सति गृभयंत ऋत्विजः प्र सू नयंत। सुष्ठु प्रणयंति। तत्र दृष्टांतः। ररहाणा रंहसा गच्छंतः॥ रहि गतौ। छांदसस्य लिटः कानच्। अनित्यमागमशासनमिति नुमभावः॥ रथ्यो रथवंतस्तत्र नियुक्ताः॥ छंदसीवनिपाविति रथशब्दान्मत्वर्थीय ईकारः॥ अश्वासो नाश्वा इव। ते यथा धृत्वा रथस्थमभिमतदेशं नयंति तद्वत्॥

पुरूणिं दुस्मो नि रिणाति जंभैराद्रोचते वन आ विभावां।
आदस्य वातो अनुं वाति शोचिरस्तुर्न शर्यामसनामनु द्यून्॥४॥
पुरूणिं। दुस्मः। नि। रिणाति। जंभैः। आत्। रोचते। वनें। आ। विभाऽवां।
आत्। अस्य। वातः। अनुं। वाति। शोचिः। अस्तुः। न। शर्यां। असनां। अनुं। द्यून्॥४॥

अत्र दावाग्निरूपेणायं स्तूयते । दस्म उपक्षपयितायमग्निः पुरूणि बहूनि वृक्षादीनि नि रिणाति । नितरां हिनस्ति ॥ री गतिरेषणयोः । प्वादित्वाद्ध्रस्वः ॥ केन साधनेनेति तदुच्यते । जंभैर्दंतस्थानीयाभिर्ज्वालाभिः । आहाहानंतरं वने वृक्षादिसमूहात्मके विभावा विविधप्रकाशयुक्तः सन्रोचते । दीप्तो भवति । आदनंतरमस्य शोचिर्ज्वालानुकूलं वातोऽग्निसखिभूतो वायुरनु वून् । अन्विति वीप्सार्थे । प्रतिदिनमनुकूलं वाति । ज्वाला आदाय गच्छति । तत्र दृष्टांतः । अस्तुः क्षेप्तुः सकाशाद्‌सनां गच्छंतीं शर्या न । शरो नाम हिंसासाधनलोहमयमिषुमुखं । तत्प्रचुरां । यद्वा । शरो नाम वंशावांतरजातीयः काष्ठविशेषः । तद्विकारामिषुमिव । शर्या इषवः शरमय्य इति यास्कः । नि॰ ५. ४. । यद्वा । शर एव शर्या । अथवा । शरो हिंसा । तत्करोतीति शर्येषुः । तां यथा वायुर्नोदकजन्यो वेगो वानुकूलं प्रेरयति तद्वत् ॥

न यं रिपवो न रिषण्यवो गर्भे संतं रेषणा रेषयंति ।
अंधा अपश्या न दभन्नभिख्या नित्यास ईं प्रेतारो अरक्षन् ॥५॥
न । यं । रिपवः । न । रिषण्यवः । गर्भे । संतं । रेषणाः । रेषयंति ।
अंधाः । अपश्याः । न । दभन् । अभिऽख्या । नित्यासः । ईं । प्रेतारः । अरक्षन् ॥५॥

यमग्निं गर्भे गर्भवद्रक्षकेऽरण्यिमध्ये संतं वर्तमानं रिपवो नरा न रेषयंति न दुःखयंति । तथा रिषण्यवोऽन्ये हिंसकाः ॥ दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति । पा॰ ७. ४. ३६. । इति क्यचि निपात्यते । क्याच्छंदसीत्युः ॥ न हिंसंति । कीदृशास्ते । रेषणा हिंसनस्वभावाः । यद्वा । तैः क्रियमाणा हिंसनप्रकारा न हिंसंति । किंचास्याभिख्याभितः ख्यातिं माहात्म्यमंधा ज्ञानशक्तिरहिता अविद्वांसः अत एवापश्या अद्रष्टारः । यद्वा । विद्वांसोऽप्यभावयितारः । अनुपासका इत्यर्थः । ईदृग्रूपा भयेऽपि न दभन् । न दभ्नुवंति । न हिंसंति । लौकिकोपकारेणापि प्रयोजकत्वादिति भावः । तर्ह्यस्य पारमार्थिकं रूपं के जानंतीति चेत् उच्यते । नित्यासो नित्या अविचलितभक्तयः अग्निहोत्रादिनित्यकर्मरता वा । अग्न्यनुग्रहात्स्वयमपि नित्या भविष्यंतीति भावि नित्यत्वमाश्रित्य नित्या उपचर्यंते । तादृशा यजमानाः प्रेतारो यज्ञादिना तमेव तर्पयितारः संत ईमेनमरक्षन् । रक्षंति । यज्ञादिरूपेण भजंत इत्यर्थः ॥ ॥१७॥

महः स इति पंचर्चं नवमं सूक्तं दैर्घतमसं वैराजमाग्नेयं । दशकास्त्रयो विराळिकादशका वा । अनु॰ ६. ७. । इत्युक्तलक्षणसद्भावात् । तथा चानुक्रांतं । महः स वैराजमिति ॥ विनियोगो लैंगिकः ॥

महः स राय एषते पतिर्दन्निन इनस्य वसुनः पद आ ।
उप ध्रजंतमद्रयो विधन्नित् ॥१॥
महः । सः । रायः । आ । ईषते । पतिः । दन् । इनः । इनस्य । वसुनः । पदे । आ ।
उप । ध्रजंतं । अद्रयः । विधन् । इत् ॥१॥

महो महतः पूज्यस्य रायो गवादिरूपस्य धनस्य पतिः पालकः स्वामी सोऽग्निर्दन् ददद्भिमतं प्रयच्छन् ॥ ददातेः शतरि च्छांदसः शपो लुक् । तस्य च्छंदस्युभयथेत्यार्धधातुकत्वादातो लोप इति चेत्याकारलोपः ॥ आ आभिमुख्येनास्मद्देवयजनं प्रतीषते । गच्छति । किंचेनस्य स्वामिनोऽपीनः स्वामी । सर्वस्य पतिरित्यर्थः । ईदृशोऽयं वसुनो धनस्य पद आस्पदभूते वेदिस्थान आ । आश्रयति ॥ उपसर्गवशाद्योग्यक्रियाध्याहारः ॥ यद्वा । वसुनो निवासयोग्यस्य धनस्यापीन इति संबंधः । यद्वा । वसुप्राप्तिः प्रसिद्धा । किंचोप ध्रजंतमुपगच्छंतमेनमभिषवार्थमद्रयो ग्राववंतो यजमाना विधन्नित् । परिचरंत्येव ॥ विध विधाने । तौदादिकः । लङि बहुलं छंदसीत्यडभावः । निघाताभावश्छांदसः । यद्वा । पूर्वेच तच्छब्दश्रुतेरत्र यच्छब्दाध्याहारेणास्य संबंधादनिघातः ॥ यद्वा । अद्रयोऽभिषवग्रावाणः स्वशब्दैरुपेपेत्य विधन्नित् । पूजयंत्येव । आह्लादं जनयंतीत्यर्थः ॥

स यो वृषा नरां न रोदस्योः श्रवोभिरस्ति जीवपीतसर्गः ।
प्र यः सस्राणः शिश्रीत योनौ ॥२॥
सः । यः । वृषा । नराम् । न । रोदस्योः । श्रवःऽभिः । अस्ति । जीवपीतऽसर्गः ।
प्र । यः । सस्राणः । शिश्रीत । योनौ ॥२॥

स तादृशो योऽग्निर्नरां न मनुष्याणामिव रोदस्योर्द्यावापृथिव्योरपि वृषा सेक्ता । उत्पादक इत्यर्थः । एवं सर्वोत्पादकः श्रवोभिः सर्वत्र श्रूयमाणैर्यशोभिर्युक्तः सन्नस्ति वर्तते । सर्वोत्पादक इत्युक्तं तत्रोपपत्तिमाह । यतोऽयं जीवपीतसर्गः । जीवैर्नानाविधैः पीत आस्वादितः सर्गः सृष्टिक्रमो यस्य स तथोक्तः ॥ तृतीया कर्मणीति पूर्वपदप्रकृतिस्वरत्वं । पुनर्बहुव्रीहौ स एव स्वरः ॥ अत्रायं सृष्टिक्रमः । अयमग्निः स्वदत्तं हविरादित्यं प्रापय्य तद्रश्मिभिः सह वैद्युतरूपेण मेघद्वारोदकेन प्रवर्ष्य सर्वान्प्राणिनः प्रापयतीत्यतो वृष्ट्युत्पादनद्वारोत्पादयिता । इदानीं साक्षादुत्पादकत्वमाह । योऽग्निर्योनौ गर्भाशये सस्राणः प्रविष्टः सन् शिश्रीत निषिक्तं रेतः पारयति । नृपश्वादिदेहाकारेण परिणमयतीत्यर्थः । यद्यग्निर्न पचेत् पूरयेदेव नोत्पद्यते । तस्मादियं साक्षादेवोत्पादकः । स तादृशोऽग्निर्यशस्वी वर्तत इत्यर्थः । यद्वा । योऽग्निर्नरां न नराणां कर्मसूत्साहयुक्तानां यजमानानामिव । नरा मनुष्या नृत्यंति कर्मस्विति यास्कः । नि॰ ५. १. । तेषां यथा स्वर्गाद्यभिमतवर्षकः तद्वद्रोदस्योरपि । आश्रयवाचिना शब्देनाश्रयिणो लक्ष्यंते । भूलोकवर्तिनां वृष्टिप्रदानेन द्युलोकवर्तिनां हविष्प्रापणेनेति भावः । स तादृशोऽग्निः श्रवोभिर्हविर्लक्षणैः सोमाज्यादिभिरन्नैर्निमित्तभूतैर्जीवपीतसर्गो जीवविशेषैर्यजमानैरविशेषेण सर्वैर्वास्वादितस्वभावः सन्नस्ति । प्रकृष्टो वर्तते । अमुमग्निं हविर्भिः प्रीणयित्वा स्वाभिमतान्भोगान्भुंजत इत्यर्थः । किंच योऽग्निर्योनौ स्वकीयस्थाने वेदिलक्षणे सस्राणः प्रविष्टः सन् शिश्रीत स्वस्मिन्प्राप्तं पुरोडाशादिकं पचति सोऽयमग्निरस्ति । महानुभावो वर्तते ॥

आ यः पुरं नार्मिणीमदीदेदत्यः कविर्नभन्यो३ नार्वा । सूरो न रुरुक्वाञ्छतात्मा ॥३॥
आ । यः । पुरम् । नार्मिणीम् । अदीदेत् । अत्यः । कविः । नभन्यः । न । अर्वा । सूरः ।
न । रुरुक्वान् । शतऽआत्मा ॥३॥

योऽग्निर्नार्मिणीं नर्मवतीं यजमानानां संबंधिनीमुत्तरवेदिं । यद्वा । नृणां मनसि स्थितां यजमानानां यज्ञार्थं यां भूमिं प्रत्यग्न्यागमनमनीषा विद्यते तां । पुरं तत्स्थानमादीदेत् दीपयति । कीदृशोऽयं । अत्योऽपेक्षितदेशं प्रत्यतनशीलः कविः क्रांतदर्शी । तत्र दृष्टांतः । अर्वारणकुशलो नभन्यो न नभस्याकाशे भवो नभस्वान्वायुरिव । किंच शतात्मा । शतं सहस्रमित्यपरिमितवचनः । तत्तद्यजमानगृहापेक्षया आहवनीयगार्हपत्याद्यपेक्षया वा नानारूपत्वं । अथवा मित्रवरुणभेदेनाग्नेर्मित्रादिरूपं त्वमग्ने वरुणो जायसे यत् । ऋ॰ ५. ३. १. । इंद्रं मित्रं वरुणमग्निमाहुः । ऋ॰ १. १६४. ४६. । इत्यादिश्रुतिषु प्रसिद्धं । अग्नेरिंद्राद्यात्मकत्वमाहुरिति द्वितीयमंत्रस्यार्थः । तादृशोऽयं सूरो न सूर्य इव रुरुक्वान् दीप्यमानः ॥ रुच दीप्तौ । छांदसस्य लिटः क्वसुः ॥ अतः स तादृशोऽग्निरस्ति उत्कृष्टं वर्तत इति पूर्वत्रान्वयः ॥

अभि द्विजन्मा त्री रोचनानि विश्वा रजांसि शुशुचानो अस्थात् ।
होता यजिष्ठो अपां सधस्थे ॥४॥
अभि । द्विऽजन्मा । त्री । रोचनानि । विश्वा । रजांसि । शुशुचानः । अस्थात् ।
होता । यजिष्ठः । अपाम् । सधऽस्थे ॥४॥

अयमग्निर्द्विजन्मा द्वाभ्यामरणीभ्यां जायमानः । यद्वा । मथनात्प्रथमं जन्म । उत्पत्त्यनंतरं पवमानेष्ट्यादि-

संस्काररूपं द्वितीयं जन्मैव। एवं द्विजन्मत्वं। अथवा द्यावापृथिवीभ्यामुत्पन्नत्वात्। तादृशोऽग्निस्त्री रोचनानि त्रीणि रोचनानि चित्यादिस्थानानि गार्हपत्यादीनि वाभि शुशुचानोऽभितः प्रकाशयन्। न केवलं त्रीण्येव किंतु विश्वा रजांसि सर्वाण्यपि रंजनात्मकानि चित्यादिलोकान् शुशुचानोऽभितः प्रकाशयन् दीपयन् होता देवानामाह्वाता यजिष्ठो यष्टृतमः सन्नपां प्रोक्षण्याद्युदकानां सधस्थे सहस्थाने यागदेशेऽस्थात्। तिष्ठति ॥

अ॒यं स होता॒ यो द्विजन्मा॒ विश्वा॑ द॒धे वार्या॑णि श्रव॒स्या।
मर्तो॒ यो अ॑स्मै सु॒तुको॑ द॒दाश॑ ॥५॥
अ॒यम्। सः। होता॑। यः। द्वि॒ऽजन्मा॑। विश्वा॑। द॒धे। वार्या॑णि। श्र॒व॒स्या।
मर्तः॑। यः। अ॒स्मै॒। सु॒ऽतुकः॑। द॒दाश॑ ॥५॥

या द्विजन्मा स एव होता होमनिष्पादकः अरणीभ्यामुत्पन्नस्यैव गार्हपत्यद्वाराहवनीयत्वात् आह्वाता वा देवानां सोऽयं विश्वा विश्वानि वार्याणि वरणीयानि ॥ ईडवंदवृशंसदुहां ण्यत इत्याद्युदात्तत्वं ॥ श्रवस्या श्रवस्यया। श्रवोऽन्नं हविर्लक्षणं। तदिच्छया ॥ श्रवःशब्दात् क्यजंतात् अ प्रत्ययादिति भावे अप्रत्ययः ॥ दधे। धारयति। अस्मा उक्तस्वरूपायाग्नये यो मर्तो मर्त्यो ददाश ददाति स सुतुकः शोभनपुत्रो भवति ॥ ॥१८॥

पुरु त्वेति तृचात्मकं दशमं सूक्तं दैर्घतमसमाग्नेयमौष्णिहं। पुरु तृचमौष्णिहमित्यनुक्रमणिका ॥ प्रातरनुवाकाश्विनशस्त्रयोरौष्णिहे छंदस्यस्य विनियोगः। अथैतस्या इति खंडे सूचितं। पुरु त्वा त्वामग्ने। आ० ४. १३.। इति ॥

पु॒रु त्वा॑ दा॒श्वान्वो॑चे॒ऽरिर॑ग्ने॒ तव॑ स्वि॒दा। तो॒दस्ये॑व शर॒ण आ म॒हस्य॑ ॥१॥
पु॒रु। त्वा॒। दा॒श्वान्। वो॒चे॒। अ॒रिः। अ॒ग्ने॒। तव॑। स्वि॒त्। आ। तो॒दस्य॑ऽइव। श॒र॒णे।
आ। म॒हस्य॑ ॥१॥

हे अग्ने त्वा त्वां पुरु बहु वोचे। यद्वा। बहु दाश्वानिति संबंधः। पुत्रं देहि वित्तं देहीत्याद्याशासनानि ब्रवीमीत्यर्थः। किं तूष्णीं नेत्याह। यतो दाश्वानभिमतं हविर्दत्तवानस्मि अतो वोचे। इतरसाधारण्येन ब्रुवतः कथं दातव्यमिति न मंतव्यं। यतोऽहं हे अग्ने तव स्वित्तवैवा आभिमुख्येनारिरर्ता हविरादिप्रापणेन सेवकोऽहं। तत्र दृष्टांतः। महस्य महतस्तोदस्येव शिक्षकस्य स्वामिनः शरणेऽस्य गृहे यथा गर्भदासादिरा समंतान्नियतो वर्तते तद्वदहमपि। यस्मादेवं तस्मादभिमतं बहु वोचे त्वमपि तत्सर्वं देहीत्यर्थः। अत्र निरुक्तं। बहु दाश्वांस्त्वामेवाभिह्वयाम्यरिरमित्र ऋच्छतेः। ईश्वरोऽप्यरिरितस्मादेव। यदन्यदेवत्या अमावाकृतयो ह्ययंत इत्येतद्दृष्ट्वैवमवक्ष्यत् तोदस्येव शरण आ महस्य तुदस्येव शरणेऽधि महतः। नि० ५. ७.। इति ॥

व्य॑नि॒नस्य॑ ध॒निनः॑ प्रहो॒षे चि॒दर॑रुषः। क॒दा च॒न प्र॒जिग॑तो॒ अदे॑वयोः ॥२॥
वि। अ॒नि॒नस्य॑। ध॒निनः॑। प्र॒ऽहो॒षे। चि॒त्। अर॑रुषः। क॒दा। च॒न। प्र॒ऽजिग॑तः।
अदे॑वऽयोः ॥२॥

पूर्वमंत्रे स्वाभीष्टं बहु विज्ञापयामीत्युक्तं। अत्र तु स्वविलक्षणेभ्यो दानादिरहितेभ्यो दानं न दातव्यमिति प्रार्थयते। हे अग्ने त्वां विशेषेण ब्रवीमि ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः। अथवा सन्निहितत्वाद्वोच इत्यनुषज्यते ॥ अस्मदर्थं यद्व्यजिज्ञपन् तद्विरुद्धं वोचे। वक्ष्यमाणस्वरूपस्य न दातव्यमिति ब्रवीमीत्यर्थः। तेषां स्वरूपमाह। [illegible]स्वामिनं कुर्वाणस्य तथा धनिनः समग्रधनवतः। पूर्वमेव धनवतो दानस्य नि[illegible]र्थकत्वा[illegible]त्तन्निवार्यते। यद्वा। यागाद्यनुपयोगिधनवत इत्यर्थः। किंच प्रहोषे प्रकर्षेण होतुमररुषोऽददतो [illegible]चित्ता[illegible]रूपेण। यद्वा। प्रहोषेऽनिनस्येति संबंधः। प्रकर्षेण होतुमसमर्थस्येत्यर्थः। अत्रेनशब्देन तत्स्थं सामर्थ्यं

लक्ष्यते। चिच्छब्दः समुच्चयार्थः। किंच कदा चन प्रजिगतः कदाचिदपि प्रकर्षेण देवानस्तुवतः। अत्र चनेति निपातद्वयसमुदायः। तत्र चशब्दः समुच्चये नशब्दो निषेधे। किंचादेवयोः। देवानात्मनोऽनिच्छतः। एतेषां न दातव्यमिति विवोच इत्यर्थः। निंदितानां स्वरूपनिरूपणेन स्वस्यातादृशत्वात् बकू वोच इत्येतदुक्तमेवेत्युक्तं भवति। यद्वा। चनेति चिच्छब्दपर्यायः। उक्तप्रकारेण दुष्टस्यापि कदाचित्प्रजिगतो यदाकदाचित्त्वां स्तुवतो विवोचे। तादृशस्य दातव्यमिति विशेषेण ब्रवीमि। किमु वक्तव्यमस्मदर्थमिति भावः ॥

स चंद्रो विप्र मर्त्यो महो व्राधंतमो दिवि। प्रप्रेत्ते अग्ने वनुषः स्याम ॥ ३ ॥

सः। चंद्रः। विप्र। मर्त्यः। महः। व्राधन्ऽतमः। दिवि। प्रऽप्र। इत्। ते। अग्ने। वनुषः। स्याम ॥ ३ ॥

हे अग्ने विप्र मेधाविन् यो मर्त्यस्त्वां यजते स मर्त्यो यजमानो दिवि द्युलोके चंद्रः सर्वेषामाह्लादकश्चंद्रसदृशो भवति। यद्वा। चंद्र एव भवति। यजमानानां चंद्रत्वप्राप्तिं छंदोगा आमनंति। पितृलोकादाकाशमाकाशाच्चंद्रमसमेष सोमो राजा। छां० उ० ५. १०. ४.। इति। सोमलोके विभूतिमनुभूयेति च। तथा मुंडकेऽपि द्युलोकप्राप्तिराम्नायते। एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहंति तं नयंत्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवास इति। एष वः पुण्यः सुकृतो ब्रह्मलोक इति च। मुं० उ० १. २. ५–६.। पुनः स एव विशेष्यते। महो महतोऽपि व्राधंतमः प्रवृद्धतमः। इतरदेवानामपि श्रेष्ठ इत्यर्थः। अतोऽग्ने ते तव प्रप्रेत् प्रकर्षेणैव वनुषः संभक्तारः स्याम। यद्वा। प्रीणयित्वा प्रप्रेत् स्याम। प्रकृष्टा एव भवेम ॥ ॥ १९ ॥

मित्रं न यमिति नवर्चमेकादशं सूक्तं दैर्घतमसं जागतं मैत्रावरुणं। आद्या मैत्र्येव। [illegible]णिका। मित्रं नव मैत्रावरुणं हि जागतं मैत्र्याद्येति ॥ विनियोगो लैंगिकः ॥

मित्रं न यं शिम्या गोषु गव्यवः स्वाध्यो विदथे अप्सु जीजनन्।
अरेजेतां रोदसी पाजसा गिरा प्रति प्रियं यजतं जनुषामवः ॥ १ ॥

मित्रं। न। यं। शिम्या। गोषु। गव्यवः। सुऽआध्यः। विदथे। अप्ऽसु। जीजनन्।
अरेजेतां। रोदसी इति। पाजसा। गिरा। प्रति। प्रियं। यजतं। जनुषां। अवः ॥ १ ॥

यमग्निं शिम्या। कर्मनामैतत् शिमी शक्तिरिति तन्नामसूक्तत्वात्। प्रकाशवृष्ट्युत्पादनादिकर्मणा मित्रं न मित्रमिव स्थितं। यद्वा। शिम्येत्येतत् क्रियया सह संबध्यते। गोषु बह्वीषु निमित्तभूतासु गव्यवो गा आत्मन इच्छंतः। अत्र यद्यपि गव्यव इत्येवालं न गोष्विति तथापि गव्यव इत्यत्र गोस्वामित्वं प्रतिपाद्यते। तच्चैकया द्विचाभिरपि स्यात्। अतः स्पृहणीया बह्व्य इत्यवगमयितुं गोष्विति पदं। यथा गवामसि गोपतिः। ऋ० ७. ९८. ६.। गणानां त्वा गणपतिं। ऋ० २. २३. १.। तथा स्वाध्यः सुष्ठ्वाध्यातारः फलस्योत्पादयितारः शोभनध्याना वा विदथे यागेऽप्स्वंतरिक्षे वैद्युतरूपेण वर्तमानं। आप इत्यंतरिक्षनाम आपः पृथिवीति तन्नामसूक्तत्वात्। अग्नेरंतरिक्षोत्पत्तिर्यदग्ने दिविजा अस्यप्सुजा वा। ऋ० ८. ४३. २८.। अप्स्वग्ने सधिष्टव। ऋ० ८. ४३. ९.। इत्यादिमंत्रांतरेषु प्रसिद्धा। प्रियं सर्वेषां प्रियतमं प्रीणयितारं वा यजतं यष्टव्यमग्निं जनुषां जन्मवतां प्राणिनामवः प्रति रक्षणं निमित्तीकृत्य शिम्या मथनादिकर्मणा जीजनन् जनयंति यजमानाः। यद्वा। अप्सु निमित्तभूतासु जीजनन् सर्वप्राणिनामुपकाराय वृष्ट्यर्थं चेत्यर्थः। एवमुत्पन्नस्याग्नेः पाजसा बलेन गिरा भयंकरशब्देन च रोदसी द्यावापृथिव्यावरेजेतां। अकंपेतां। अग्नेः सकाशात्कंपनमरेजेतां रोदसी होतृवूर्ये। ऋ० १. ३१. ३.। इत्यादिश्रुतिषु प्रसिद्धं। न च सर्वरक्षणार्थमुत्पादितोऽग्निर्लोकद्वयस्य भीतिमजनयत् किमेतदिति वाच्यं निंदास्तुतित्वात्। यथा लोकौ बिभीतस्तथा प्रवृद्धोऽभवदिति स्तुतौ पर्यवसानात्। यद्यप्यत्राग्निरेव प्रतिपाद्यते मित्रस्तु परं दृष्टांतित एव तथापि द्युस्थानस्याग्नेरेव मित्रत्वान्मंत्रस्य मैत्रत्वमविरुद्धं। यद्वा। मित्रं न सखायमिव स्थितं मित्रनामकं देवं यज्ञेंऽतरिक्षे च ऋत्विजः प्रादुर्भावयंति। शिष्टमेतद्विशेषेण तथैव योजनीयं ॥

यद्ध त्यद्वां पुरुमीळ्हस्य सोमिनः प्र मित्रासो न दधिरे स्वाभुवः ।
अध क्रतुं विदतं गातुमर्चत उत श्रुतं वृषणा पस्त्यावतः ॥ २ ॥
यत् । ह । त्यत् । वां । पुरुऽमीळ्हस्य । सोमिनः । प्र । मित्रासः । न । दधिरे । सुऽआभुवः ।
अध । क्रतुं । विदतं । गातुं । अर्चते । उत । श्रुतं । वृषणा । पस्त्यऽवतः ॥ २ ॥

हे मित्रावरुणौ यद्यस्मात्कारणाद्वां युवां पुरुमीळ्हस्य बहुलाभीष्टसेचनस्य सोमिनः स्वाभुवः सोमवतः स्वाभवनशीलस्य ॥ कर्मणि षष्ठी ॥ त्यदुक्तलक्षणं कर्म प्र मित्रासो न मित्राणीव मित्रभूता ऋत्विजः प्र दधिरे प्रकर्षेण धारयंति । हेति पूरणः । अधातः कारणाद्गातुं युष्मद्गमनमर्चते ॥ षष्ठ्यर्थे चतुर्थी ॥ अर्चतः पूजयतो यजमानस्य क्रतुं कर्म विदतं । जानीतं ॥ विदेर्लोटि व्यत्ययेन शः ॥ उतापि च हे वृषणा कामानां वर्षितारौ युवां पस्त्यावतः । पस्त्येति गृहनाम पस्त्या दुरोण इति तन्नामसूक्तत्वात् । सदःप्राचीनवंशादिगृहवतो यजमानस्याह्वानं स्तोत्रं वा श्रुतं । शृणुतं ॥ छांदसो विकरणस्य लुक् ॥ यद्वा । यद्यस्मात्सोमिनः सोमवतः पुरुमीळ्हस्यैतन्नामकस्य राज्ञो मित्रासो न मित्राणीव स्थिताः स्वाभुवः स्वाभवनशीलाः स्वस्वव्यापारसमर्था दधिरे अधातः कारणात्तस्यार्चतेऽर्चतः क्रतुं विदतमित्यादि पूर्ववत् ॥

आ वां भूषन्क्षितयो जन्म रोदस्योः प्रवाच्यं वृषणा दक्षसे महे ।
यदीमृताय भरथो यदर्वते प्र होत्रया शिम्या वीथो अध्वरं ॥ ३ ॥
आ । वां । भूषन् । क्षितयः । जन्म । रोदस्योः । प्रऽवाच्यं । वृषणा । दक्षसे । महे ।
यत् । ईं । ऋताय । भरथः । यत् । अर्वते । प्र । होत्रया । शिम्या । वीथः । अध्वरं ॥ ३ ॥

हे वृषणा कामानां वर्षितारौ हे मित्रावरुणौ वां युवयोः संबंधि जन्म जननमुत्पत्तिं रोदस्योर्द्यावापृथिव्योः सकाशात् । द्यावापृथिवीभ्यामेव सर्वेषामुत्पत्तेः । यद्वा । मित्र इति सर्वोपकार्यग्निरुच्यते वरुण इति तमोनिवारक आदित्यः । उभयोः पृथिवीद्युस्थानत्वात् । ततः पूर्वमंत्रे मित्रदृष्टांतत्वेनाग्निः स्तुतः । अत इदमधिगम्यते अग्निरेव मित्र इति । तथान्यत्रापि । अग्निं मित्रं न क्षितिषु प्रशंस्यं । ऋ० २. २. ३. । मित्रं न यं सुधितं भृगवो दधुः । ऋ० ६. १५. २. । इति च । प्रवाच्यं स्तुत्यं तादृग्युवयोर्जन्म महे महते दक्षसे सर्वविषयबलाय क्षितयो मनुष्या यजमाना आ भूषन् । सर्वतोऽलंकुर्वंति । श्लाघंत इत्यर्थः । जन्मनः प्रवाच्यत्वमाह । यदीं यस्मादेव कारणात् । अथवा । ईमित्यनर्थकः मिताक्षरेष्वनर्थकाः कमीमिद्विती त्युक्तत्वात् । ऋताय यज्ञाय भरथः सामर्थ्यं । यद्यस्माच्च कारणादर्वते युष्मान् प्राप्नवते यजमानाय च भरथोऽभिमतं फलं । अथवा । उभयत्र कर्मणः संप्रदानत्वाच्चतुर्थी । यज्ञं यजमानं च भरथ इत्यर्थः । यस्माच्च होत्रया स्तुतिरूपया वाचा शिम्या हविष्प्रदानादिकर्मणा च प्र वीथः प्रकर्षेण प्राप्नुथः । तस्मात्प्रवाच्यं जन्म भूषयंतीत्यर्थः । होत्रेति वाङ्नाम होत्रा गीरिति तन्नामसु पाठात् ॥

प्र सा क्षितिरसुर या महि प्रिय ऋतावानावृतमा घोषथो बृहत् ।
युवं दिवो बृहतो दक्षमाभुवं गां न धुर्युप युंजाथे अपः ॥ ४ ॥
प्र । सा । क्षितिः । असुरा । या । महि । प्रिया । ऋतऽवानौ । ऋतं । आ । घोषथः । बृहत् ।
युवं । दिवः । बृहतः । दक्षं । आऽभुवं । गां । न । धुरि । उप । युंजाथे इति । अपः ॥ ४ ॥

हे असुरासुरौ बलवंतौ मित्रावरुणौ युवयोर्या क्षितिर्देवयजनरूपा महि महदत्यधिकं प्रिया प्रियतरा प्रीणयित्री वा सा क्षितिः प्र । प्रकर्षेण संपादिता ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥ तामासीदतमिति शेषः । यागभूमिर्देवानां प्रियेति प्रसिद्धं । आसाद्य च हे ऋतावानावृतवंतौ युवां बृहत्प्रवृद्धमृतमस्मदीयं

यद्वमा घोषथः। अवैकल्येन संपादित इति स्तुतमित्यर्थः। यतो युवं युवां बृहतो महतो दिवो द्युलोकस्य धुरि दक्षं तर्पणवहने समर्थं। अथवा बृहतो दिवो महतो द्युलोकस्थदेवान् दक्षं प्रीणयितुमिति शेषः। यद्वा। कर्मणि षष्ठी। दिवो द्योतनात्मकं बृहतः प्रभूतं दक्षमभिमतसाधनसमर्थं। आभुवं सर्वतो भवनशीलमपः कर्म सोमयागरूपमुप युंजाथे सेवेथे तत्रत्यं हविः स्वीकुरुथ इत्यर्थः। उपयोगे दृष्टांतः। धुरि शारीरबलस्य निर्वाहे तदर्थं गां न धेनुमिव। तां यथोपयुंजते तद्वत्। यद्वा। विकारे प्रकृतिशब्दः। क्षीरादिकमिव। तस्मादृतम घोषथः॥

मही अत्र महिना वारमृण्वथोऽरेणवस्तुज आ सद्मन्धेनवः।
स्वरंति ता उपरताति सूर्यमा निम्रुच उषसस्तक्ववीरिव ॥५॥
मही इति। अत्र। महिना। वारं। ऋण्वथः। अरेणवः। तुजः। आ। सद्मन्। धेनवः।
स्वरंति। ताः। उपरऽताति। सूर्यं। आ। निऽम्रुचः। उषसः। तक्ववीःऽइव ॥५॥

हे मित्रावरुणौ युवां मही महत्यां॥ सप्तम्येकवचने पूर्वसवर्णदीर्घः। ईदूतौ च सप्तम्यर्थे। पा० १. १. १९.। इति प्रगृह्यता॥ अत्रास्यां पृथिव्यां महिना महत्त्वेन या धेनूर्वारं वरणीयं प्रदेशमृण्वथः गमयथः॥ अंतर्भावितण्यर्थोऽयं॥ गमनादिव्यवहारस्य तयोरधीनत्वात् द्यावापृथिव्योरभिमानि[illegible] मित्रावरुणयोः। ता एता धेनवो गावः सायंकाले युष्मन्महत्त्वेनारेणवोऽनवद्यास्तस्कराद्यनपहारिणानष्टा वा तुजः क्षीराणां प्रदात्र्यः॥ तुजतिर्दानकर्मा॥ सद्मन् सद्मनि गोष्ठ आ। आश्रिता आगच्छंति वा॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥ ता एवंकारिता धेनव उपरतात्युपरताती॥ सप्तम्या लुक्॥ मेघानां विस्तारवत्यंतरिक्षे मेघाच्छन्ने सति सूर्यं सर्वस्य प्रसवितारं सुवीर्यं शोभनसामर्थ्यं वा। सुवीर्यो मर्या यथा गोपायत इति तत्सूर्यस्य सूर्यत्वमिति श्रुत्यंतरात्। आदित्यमभिलक्ष्य स्वरंति। शब्दयंति सुखसंचाराय॥ स्वृ शब्दोपतापयोः। भौवादिकः॥ कस्मिन्काल इति तदुच्यते। निम्रुच उषसः। सर्वेष्वपि सायंकालेषूषःकालेषु च। तत्र दृष्टांतः। तक्ववीरिव। तक्वा स्तेनः। तस्य वेता गंता मनुष्यः। स यथा क्रोशति तद्वत्। एवं निरुद्धानां गवां सुखचारी युष्मदायत्त इति तयोः स्तुतिः॥ ॥२०॥

आ वामृताय केशिनीरनूषत मित्र यत्र वरुण गातुमर्चथः।
अव त्मना सृजतं पिन्वतं धियो युवं विप्रस्य मन्मनामिरज्यथः ॥६॥
आ। वां। ऋताय। केशिनीः। अनूषत। मित्र। यत्र। वरुण। गातुं। अर्चथः।
अव। त्मना। सृजतं। पिन्वतं। धियः। युवं। विप्रस्य। मन्मनां। इरज्यथः ॥६॥

हे मित्रावरुणौ केशिनीः केशवत्योऽग्नेर्ज्वाला वां युवामृताय यज्ञार्थमानूषत। हविःसमर्पणेनाभिपूजयंतीत्यर्थः। कुत्रेति तदुच्यते। हे मित्र हे वरुण युवामुभौ यत्र यागे गातुं गमनं देवयजनदेशं वा। गातुरिति पृ[illegible] गातुः पृथिव्युक्तत्वात्। अर्चथः पूजयथः। स्वीकुरुथ इत्यर्थः। आगत्य च त्मनात्मनैवाव सृजतं वृष्टिमवाङ्मुखं विसृजतं। तथा कृत्वा धियोऽस्मदीयानि कर्माणि पिन्वतं। वर्धयतमित्यर्थः। एवं कृत्वा विप्रस्य मेधाविनो यजमानस्य मन्मनां मननवतीनां स्तुतीनां युवं युवामिरज्यथः। ईश्वरौ स्वामिनौ भवथः। इरज्यतिरैश्वर्यकर्मा इरज्यति पत्यत इति तन्नामसूक्तत्वात्॥

यो वां यज्ञैः शशमानो ह दाशति कविर्होता यजति मन्मसाधनः।
उपाह तं गच्छथो वीथो अध्वरमच्छा गिरः सुमतिं गंतमस्मयू ॥७॥

यः । वां । यज्ञैः । शशमानः । ह । दाशति । कविः । होता । यजति । मन्मऽसाधनः ।
उप । अह । तं । गच्छथः । वीथः । अध्वरं । अच्छ । गिरः । सुऽमतिं । गंतं ।
अस्मयू इत्यस्मऽयू ॥ ७ ॥

यो ह यः खलु यजमानो वां युवामुद्दिश्य युवाभ्यां वा यज्ञैर्यागैर्निमित्तभूतैः शशमानः शंसमानो दाशति हविरादिकं स्वस्वं निवर्त्य युष्मत्स्वत्वापादनं करोति । य एव कविरनूचानः । येऽनूचानास्ते कवय इति श्रुतेः । अथवा कविर्मेधावी होता सम्यग्घोमनिष्पादको यजमानो मन्मसाधनो मननीयद्रव्यदक्षिणादिसाधनोपेतः सन्यजति सोमयागादिकं करोति । तमेव यजमानं सुमतिं शोभनप्रज्ञमुपोपलक्ष्य गच्छथः । प्राप्नुथः खलु । अध्वरं तदीयं यज्ञं वीथः । कामयेथे । किंचास्मयू अस्मान्कामयमानौ युवां गिरः स्तुतीरच्छाभिलक्ष्य गंतं । गच्छतं । तादृशं मां प्राप्य स्तुतीः स्वीकुरुतमित्यर्थः । अत्र यद्यपि तमिति सामान्यनिर्देशः प्रतिभाति तथाप्यस्मयू इत्युक्तेर्दीर्घतमाः स्वात्मानमेव परोक्षतयोक्तवानिति गम्यते । यद्वा । यो दाशति यश्च यजते तमुपेत्य तदीयं यज्ञं कामयेथे । अतोऽस्मयू युवां सुमतिं मां मदीया गिरः स्तुतीरच्छाभिलक्ष्य गच्छतं ॥

युवां यज्ञैः प्रथमा गोभिरंजत ऋतावाना मनसो न प्रयुक्तिषु ।
भरंति वां मन्मना संयता गिरोऽदृप्यता मनसा रेवदाशाथे ॥ ८ ॥
युवां । यज्ञैः । प्रथमा । गोभिः । अंजते । ऋतऽवाना । मनसः । न । प्रऽयुक्तिषु ।
भरंति । वां । मन्मना । संऽयता । गिरः । अदृप्यता । मनसा । रेवत् । आशाथे इति ॥ ८ ॥

हे ऋतावाना यज्ञवंतौ वृष्ट्युदकवंतौ वा मित्रावरुणौ युवां प्रथमा प्रथमौ यज्ञैर्यजनसाधनैर्गोभिर्गोविकारैः पयआदिभिरंजते । व्यंजयंति यजमानाः । देवभागं यागेषु क्षीरादिभिर्यजंत इत्यर्थः । यद्वा । गोभिरंजति । स्तुवंति । तत्र दृष्टांतः । प्रयुक्तिषु प्रयोगेषु मनसो न ॥ कर्मणि षष्ठी ॥ मन इव । तद्यथा प्रथमं व्यंजयंति मुख्यं कुर्वंति तत्पूर्वकत्वात्सर्वव्यवहारस्य । किंच वां युवां मन्मना मननवता संयता युवामेव सम्यग्गच्छता चित्तेन गिरः स्तुतीर्भरंति । [illegible] । यस्मादेवं तस्माददृप्यतानभिभववता मनसा प्रहृष्टेन चेतसा युक्तौ संतौ रेवद्धनवत्कर्मास्मदीयमाशाथे । अश्नुवाथे । व्याप्नुथः । ददाथे इत्यर्थः ॥ अश्नोतेर्लिट्यनित्यमागमशासनमिति वचनादिड्भावः ॥

रेवद्वयो दधाथे रेवदाशाथे नरा मायाभिरितऊति माहिनं ।
न वां द्यावोऽहभिर्नोत सिंधवो न देवत्वं पणयो नानशुर्मघं ॥ ९ ॥
रेवत् । वयः । दधाथे इति । रेवत् । आशाथे इति । नरा । मायाभिः । इतऽऊति । माहिनं ।
न । वां । द्यावः । अहऽभिः । न । उत । सिंधवः । न । देवऽत्वं । पणयः । न । आनशुः ।
मघं ॥ ९ ॥

हे मित्रावरुणौ युवां रेवद्धनवद्वयोऽन्नं दधाथे । उभयं च धारयथः । यस्मादेवं तस्माद्रेवद्धनवत् । सहदृष्टत्वादत्र इति गम्यते । धनविशिष्टमन्नं हे नरा नेतारौ युवामाशाथे । अश्नुवाथे । अस्मभ्यं ददाथे इत्यर्थः । कीदृशं । मायाभिर्युवयोः प्रज्ञाभिरितऊतीतोऽस्मदभिमुखं गमनवत् इतो रक्षणवद्वा माहिनं । महन्नामैतत् । अतिमहत् । ईदृशोर्युवयोरेतादृशं सामर्थ्यं कुत इत्यत आह । वां युवयोर्देवत्वमहभिरहोभी रात्रिभिः । अत्राहःशब्देन रात्रिरभिधीयते द्योशब्देनाहःपृथगभिधानात् । ताभिः सहिता द्यावो दिवसा नानशुः । न प्राप्नुवंति । अहश्च रात्रिश्चोभे न तरत इत्यर्थः । उतापि च सिंधवः स्यंदनशीला नद्यो न चैवानशुः । तथा युवयोर्देवत्वं

पण्योऽसुरा अपि नानशुः । मघं धनं च नानशिरे । लोकत्रये युवयोः पराभवितारो न केऽपि संतीत्यर्थः ॥ ॥२१॥

युवं वस्त्राणीति सप्तर्चं द्वादशं सूक्तं दैर्घतमसं । अनादेशपरिभाषया त्रैष्टुभं । मैत्रावरुणं पूर्ववत् मैत्रावरुणं हीत्युक्तत्वात् ॥ सूक्तविनियोगो लैंगिकः ॥ मैत्रावरुणे पशावाद्या वपायाज्या । प्रदानानामिति खंडे सूचितं । युवं वस्त्राणि पीवसा वसाथे प्र बाहवा सिसृतं जीवसे नः । आ० ३. ८. । इति ॥ सैव समावर्तने नववस्त्रधारणे विनियुक्ता । सूचितं च । युवं वस्त्राणि पीवसा वसाथे इत्यहते वाससी आच्छाद्य । आ० गृ० ३. ८. ९. । इति ॥

युवं वस्त्राणि पीवसा वसाथे युवोरच्छिद्रा मंतवो ह सर्गाः ।
अवातिरतमनृतानि विश्व ऋतेन मित्रावरुणा सचेथे ॥१॥
युवं । वस्त्राणि । पीवसा । वसाथे इति । युवोः । अच्छिद्राः । मंतवः । ह । सर्गाः ।
अव । अतिरतं । अनृतानि । विश्वा । ऋतेन । मित्रावरुणा । सचेथे इति ॥१॥

हे मित्रावरुणौ पीवसा पीनौ युवं युवां । यद्वा । पीवसा पीनान्यच्छिन्नानि । वस्त्राण्याच्छादनयोग्यानि वासांसि वसाथे । आच्छादयथः । यद्वा । पीवसा स्थूलेन प्रभूतेन तेजसा वस्त्राणि दधाथे । अविच्छिन्नानि वस्त्रस्थानीयानि तेजांसि धारयथ इत्यर्थः । किंच युवयोः सर्गाः सृष्टय अच्छिद्रा अच्छिन्ना मंतवो ह मननीयाश्च । ईदृशौ युवां विश्वा विश्वानि सर्वाण्यनृतान्यसत्यान्यप्रियाणि पापान्यवातिरतं । नाशयतं ॥ विश्वेत्यत्र संहितायामृत्यक इति प्रकृतिभावो ह्रस्वत्वं च ॥ ऋतेन फलेन तत्साधनेन यज्ञेन वा सचेथे । संगच्छेथे । अस्मभ्यं योजयथ इत्यर्थः ॥

एतच्चन त्वो वि चिकेतदेषां सत्यो मंत्रः कविशस्त ऋघावान् ।
त्रिरश्रिं हंति चतुरश्रिरुग्रो देवनिदो ह प्रथमा अजूर्यन् ॥२॥
एतत् । चन । त्वः । वि । चिकेतत् । एषां । सत्यः । मंत्रः । कविऽशस्तः । ऋघावान् ।
त्रिःऽअश्रिं । हंति । चतुःऽअश्रिः । उग्रः । देवऽनिदः । ह । प्रथमाः । अजूर्यन् ॥२॥

एषामेतयोर्मध्ये ॥ बहुवचनं पूजार्थं । यद्वा । तदनुचरापेक्षया बहुवचनं ॥ एतयोर्मध्ये त्वश्चैक एवैतद्वक्ष्यमाणं सामर्थ्यरूपं कर्म वि चिकेतत् । विशेषेण चेतति । अनुतिष्ठतीत्यर्थः । स विशेष्यते । स एकः सत्योऽबाध्यः सत्सु भवो वा मंत्रो मननवान् कविशस्तः कविभिर्मेधाविभिः शंसनीय ऋघावान् हिंसावान् । अनेन वक्ष्यमाणस्य सामर्थ्यस्य संभाविता प्रतिपादिताभवदित्युक्तं । किं तदित्याशंक्याह । त्रिरश्रिं । अश्रित्रयोपेतमायुधं त्रिरश्रि । तद्वंतं ॥ मत्वर्थो लुप्यते ॥ उपलक्षणमेतत् सर्वायुधसंपन्नमित्यर्थः । एतन्नामानं वा । चतुरश्रिस्ततोऽप्यधिकायुधवान् । न केवलमायुधसामर्थ्यं किंतूग्रः स्वयमुद्गूर्णबलो हंति । हिनस्त्यतिबलं शत्रुं । किंच युवयोरेकस्यैव सामर्थ्येन देवनिदो ह देवनिंदकास्तु प्रथमाः समर्थाः संतोऽप्यजूर्यन् । स्वयमेव जीर्णा भवंति ॥ जीर्यतेः श्नि बहुलं छंदसीत्युत्वं ॥ युवयोर्मध्य एकोऽपि महाबलः । मिलितयोस्तु सामर्थ्ये किमु वक्तव्यमिति भावः । अथवा । एषां युवयोरेतदुत्तरत्र वक्ष्यमाणं सामर्थ्यमेकः सत्यादिलक्षणो वि चिकेतत् । विशेषेण जानाति । शेषं पूर्ववत् ॥

अपादेति प्रथमा पद्वतीनां कस्तद्वां मित्रावरुणा चिकेत ।
गर्भो भारं भरत्या चिदस्य ऋतं पिपर्त्यनृतं नि तारीत् ॥३॥
अपात् । एति । प्रथमा । पत्ऽवतीनां । कः । तत् । वां । मित्रावरुणा । आ । चिकेत ।
गर्भः । भारं । भरति । आ । चित् । अस्य । ऋतं । पिपर्ति । अनृतं । नि । तारीत् ॥३॥

हे मित्रावरुणा मित्रावरुणौ पद्वतीनां मनुष्यादीनां प्रजानां प्रथमा प्रथमभाविन्यपात् पादरहितोषाः। प्रतिदिनं सूर्यचंद्रादिवत् स्वस्याः परिभ्रमणाभावात् सूर्यगमनेनैव स्वगमनाद्पादिति चैतीति चोपचर्यते। तत्तादृशं युवयोः प्रसिद्धं कर्म क आ चिकेत। क आभिमुख्येन जानाति॥ कित ज्ञाने॥ तत्स्तुत्यमित्यर्थः। मित्रावरुणयोरहोरात्रदेवत्वादहोरात्रयोरंतरालस्यैवोषस्त्वादेतत्कर्मत्वं। किंचास्य लोकस्य भारं निर्वाहं गर्भो युवयोर्गर्भस्थानीयः शिशुरादित्यः। अहोरात्रयोर्मध्यकाल उत्पत्तेस्ताभ्यामेव मित्रावरुणत्वात् अहोरात्रे वै मित्रावरुणाविति श्रुतेः। स आहरति चित्। समंतान्निर्वहत्येव। हरति वास्य भारं जाड्यं। चिदित्यवधारणे। तत्कथमिति तदुच्यते। ऋतं सत्यं जगतः प्रकाशगमनादिरूपं पिपर्ति। पूरयति। अनृतमुक्तविलक्षणमंधकारं गमनादिनिरोधं च नि तारीत्। नितरति। निमज्जयति। नाशयतीत्यर्थः। शिशोर्जगद्भारवहनरूपं कर्म युष्मत्सामर्थ्यादिति॥

प्रयंतमित्परि जारं कनीनां पश्यामसि नोपनिपद्यमानं।
अनवपृग्णा वितता वसानं प्रियं मित्रस्य वरुणस्य धाम॥४॥
प्रऽयंतं। इत्। परि। जारं। कनीनां। पश्यामसि। न। उपऽनिपद्यमानं।
अनवऽपृग्णा। विऽतता। वसानं। प्रियं। मित्रस्य। वरुणस्य। धाम॥४॥

कनीनां कमनीयानां दीप्तानां कन्यकास्थानीयानामुषसां॥ कनतेः कांतिकर्मण इन्। कृदिकारादक्तिन इति ङीष्। आमि कन्याशब्दस्य वा छांदसं संप्रसारणं॥ तासां जारमादित्यं प्रयंतमित् प्रगच्छंतमेव परि पश्यामसि। वयं परिपश्यामः। उपनिपद्यमानं क्षणमात्रमपि निषीदंतं न पश्यामः। एतदपि तयोः सामर्थ्यं। पुनस्तदेव विशिष्यति। अनवपृग्णानवपृग्णानि अत एव विततानि तेजांसि वसानमाच्छादयंतं प्रियं सर्वेषां प्रियभूतं मित्रस्य वरुणस्य च धाम तेजःस्थानभूतं। यद्वा। प्रियं धामेति संबध्यते। तयोः प्रेमस्थानं। ईदृश- मादित्यं युष्मदनुज्ञया संचरंतं पश्यामसि॥

अनश्वो जातो अनभीशुरर्वा कनिक्रदत्पतयदूर्ध्वसानुः।
अचित्तं ब्रह्म जुजुषुर्युवानः प्र मित्रे धाम वरुणे गृणंतः॥५॥
अनश्वः। जातः। अनभीशुः। अर्वा। कनिक्रदत्। पतयत्। ऊर्ध्वऽसानुः।
अचित्तं। ब्रह्म। जुजुषुः। युवानः। प्र। मित्रे। धाम। वरुणे। गृणंतः॥५॥

स एवादित्योऽनश्वो यद्यपि शीघ्रगाम्यश्वरहितः तथानभीशुरालंबनाधारप्रग्रहस्थानीयरश्मिरहितः तथाप्यर्वा जातः शीघ्रगमनवान् संपन्नः। तथाविधोऽयमादित्यः कनिक्रदत्यर्थं क्रंदयन्॥ क्रंदेर्यङ्लुगंताच्छतरि दाधर्त्यादौ निपात्यते॥ ऊर्ध्वसानुरुन्नतं [illegible] समुच्छ्रयणः सन् पतयत्। गच्छति। अचित्तं चित्ताविषयं ब्रह्म परिवृढमुक्तरूपं कर्म मित्रे वरुणे च उभयोर्धाम तेजःस्थानं युवानो मिश्रयंतस्तयोर्धाम्न्यारोपयंतः तथा प्र गृणंतो युवयोस्तेजः प्रभवमिति प्रकर्षेण स्तुवंतो जुजुषुः। सेवंते। मनुष्याः सूर्यस्य निरालंबांतरिक्षसंचारात्मकं कर्म वरुणमित्रयोरधीनमिति स्तुवंतीत्यर्थः॥

आ धेनवो मामतेयमवंतीर्ब्रह्मप्रियं पीपयन्त्सस्मिन्नूधन्।
पित्वो भिक्षेत वयुनानि विद्वानासाविवासन्नदितिमुरुष्येत्॥६॥
आ। धेनवः। मामतेयं। अवंतीः। ब्रह्मऽप्रियं। पीपयन्। सस्मिन्। ऊधन्।
पित्वः। भिक्षेत। वयुनानि। विद्वान्। आसा। आऽविवासन्। अदितिं। उरुष्येत्॥६॥

मामतेयं ममतायाः पुत्रं दीर्घतमसं मां ब्रह्मप्रियं परिवृढस्य कर्मणः प्रियतमं परिवृढस्यामेः प्रीणयितारं

वावंतीरवंत्यः प्रीणयंत्यो धेनवो गावः सस्मिन् स्वकीय ऊधन्नूधस्या पीपयन्। सर्वत आप्याययंतु ॥ प्याय-तेर्णिचि च्छांदसः पीभावः ॥ ऊधोगतेन क्षीरेण युवाभ्यां प्रदेयेन नोऽस्मानित्यर्थः। मित्रावरुणाभ्यां पयस्येति श्रुतेः। एवं प्रदत्तहविर्वयुनान्यनुष्ठानविषयज्ञानानि विद्वाञ्जानन् कृतशेषो भक्षणीय इत्यवगच्छन् दीर्घतमाः पित्वः पितोर्हुतशिष्टस्यान्नस्य तादृगन्नमासास्येन भक्षयितुं भिक्षेत। याचेत युष्मान्। किंच विवासन् युवां परिचरन्नदितिमखंडितमन्यूनमेतत्कर्मोरुष्येत्। यथा शिष्टं भिक्षेत यथा च कर्म समापनेन रक्षेत् तथा-पीपयन्नित्यर्थः ॥

मैत्रावरुणपशौ वपाया एषानुवाक्या। सूचितं च। आ वां मित्रावरुणा हव्यजुष्टिमा यातं मित्रावरुणा। आ० ३. ८.। इति ॥

आ वां मित्रावरुणा हव्यजुष्टिं नमसा देवाववसा ववृत्यां।
अस्माकं ब्रह्म पृतनासु सह्या अस्माकं वृष्टिर्दिव्या सुपारा ॥७॥
आ। वां। मित्रावरुणा। हव्यऽजुष्टिं। नमसा। देवौ। अवसा। ववृत्यां।
अस्माकं। ब्रह्म। पृतनासु। सह्याः। अस्माकं। वृष्टिः। दिव्या। सुऽपारा ॥ ७॥

हे देवौ देवनशीलौ मित्रावरुणा मित्रावरुणौ वां युवां हव्यजुष्टिं हविःसेवां नमसा नमस्कारोपलक्षितेन स्तोत्रेणावसा रक्षणेन निमित्तभूतेना ववृत्यां। आवर्तयेयं। यद्वा। नमस्कारेणावसान्नेन चा ववृत्यां। किंच हे मित्रावरुणौ अस्माकं संबंधि ब्रह्मेदानीं क्रियमाणं परिवृढं कर्म पृतनासु संग्रामेषु सह्याः। सह्यात्। शत्रून-भिभूयात्। अनेन कर्मणा शत्रूनभिभवेयमित्यर्थः। किंचास्माकं दिव्या दिवि भवा वृष्टिः सुपारा सुष्ठु पारयित्री भवत्विति शेषः। वृष्टौ सत्यां व्रीह्यादिद्वारा कर्मसमाप्तेरिति भावः ॥ ॥ २२ ॥

यजामहे वामिति चतुर्ऋचं चतुर्दशं सूक्तं दैर्घतमसं त्रैष्टुभं मैत्रावरुणं। यजामहे चतुष्कमित्यनुक्रमणिका ॥ विनियोगो लैंगिकः ॥

यजामहे वां महः सजोषा हव्येभिर्मित्रावरुणा नमोभिः।
घृतैर्घृतस्नू अध यद्वामस्मे अध्वर्यवो न धीतिभिर्भरंति ॥१॥
यजामहे। वां। महः। सऽजोषाः। हव्येभिः। मित्रावरुणा। नमःऽभिः।
घृतैः। घृतस्नू इति घृतऽस्नू। अध। यत्। वां। अस्मे इति। अध्वर्यवः। न।
धीतिऽभिः। भरंति ॥१॥

हे घृतस्नू घृतस्य स्रावयितारौ मित्रावरुणौ महो महांतौ वां यजामहे। पूजयामो यजमाना ऋत्विजश्च। कीदृशाः। सजोषाः समानप्रीतियुक्ताः। केन साधनेनेति तदुच्यते। हव्येभिः पुरोडाशादिभिर्नमोभिर्नमस्का-रोपलक्षितैः। अधापि च यद्यस्मात्कारणाद्वां युवामध्वर्यवोऽस्मदीया अध्वर्यवोऽपि। अत्र नशब्दोऽप्यर्थे। तेऽपि धीतिभिः कर्मभिः स्वकीयैर्भरंति पोषयंति तस्माद्यजामहे ॥

प्रस्तुतिर्वां धाम न प्रयुक्तिरयामि मित्रावरुणा सुवृक्तिः।
अनक्ति यद्वां विदथेषु होता सुम्नं वां सूरिर्वृषणावियक्षन् ॥ २ ॥
प्रऽस्तुतिः। वां। धाम। न। प्रऽयुक्तिः। अयामि। मित्रावरुणा। सुऽवृक्तिः।
अनक्ति। यत्। वां। विदथेषु। होता। सुम्नं। वां। सूरिः। वृषणौ। इयक्षन् ॥ २॥

हे मित्रावरुणौ वां युवयोः संबंधिनो यागस्य प्रस्तुतिः प्रस्तावना करोमीति संकल्प एव न प्रयुक्तिः कृत्स्नप्रयोगो न संपन्नः । तावतैव युवयोर्धाम तेजःस्थानमयामि । प्राप्नोमि । सुवृक्तिर्युवयोः शोभनावर्जकस्य युष्मत्परिग्रहादस्मि । यद्यदा तु विदथेषु यज्ञेषु वां युवां होता होमनिष्पादकोऽयमध्वर्युरनक्ति हविषागच्छति । होमं करोतीत्यर्थः । यद्वा । होता देवानामाह्वातैतन्नामक ऋत्विक् शस्त्रादिना वामनक्ति व्यंजयति । तदा सूरिर्युष्मन्माहात्म्यविदियचन् यागं कर्तुमिच्छन्नहं हे वृषणौ कामानां वर्षितारौ वां युवयोः सुम्नं युष्मत्संबंधि सुखं देवत्वलक्षणमयामीति शेषः ॥

पीपार्य धेनुरदितिर्ऋताय जनाय मित्रावरुणा हविर्दे ।
हिनोति यद्वां विदथे सपर्यन्त्स रातहव्यो मानुषो न होता ॥ ३ ॥
पीपार्य । धेनुः । अदितिः । ऋताय । जनाय । मित्रावरुणा । हविःऽदे ।
हिनोति । यत् । वां । विदथे । सपर्यन् । सः । रातऽहव्यः । मानुषः । न । होता ॥ ३ ॥

हे मित्रावरुणा मित्रावरुणौ ऋताय युष्मत्संबंधियज्ञाय हविर्दे हविषो दात्रे ॥ आतो मनिन्निति विच् । भत्व आतो धातोरित्याकारलोपः ॥ जनाय यजमानाय च धेनुः प्रीणयित्री गौरदितिरदीना बहुक्षीरा सती पीपाय । क्षीरेण पुनःपुनराप्यायतां ॥ प्यायतेश्छांदसः प्रार्थनायां लिट् । लिड्यङोश्चेति पीभावः ॥ पयस्यादिहविष्कं यज्ञं पयोव्रतादिषु यजमानं चेत्यर्थः । कस्मिन्काल इति चेत् तत्राह । यद्यदा स प्रसिद्धो रातहव्य एतन्नामा राजा सपर्यन् स्तुत्वा पूजयन् मानुषो होता न मनुष्यस्य यजमानस्य संबंध्येतन्नामक ऋत्विगिव विदथे यज्ञे वां हिनोति हविरादिना प्रीणयति । तदा पीपायेत्याह ॥

उत वां विक्षु मद्यास्वंधो गाव आपश्च पीपयंत देवीः ।
उतो नो अस्य पूर्व्यः पतिर्दन्वीतं पातं पयस उस्रियायाः ॥ ४ ॥
उत । वां । विक्षु । मद्यासु । अंधः । गावः । आपः । च । पीपयंत । देवीः ।
उतो इति । नः । अस्य । पूर्व्यः । पतिः । दन् । वीतं । पातं । पयसः । उस्रियायाः ॥ ४ ॥

उतापि च हे मित्रावरुणौ वां युवामंधोऽदनीयमन्नं पयोरूपं पुरोडाशादिरूपं वा देवीर्द्योतनशीला गाव आपश्च व्रीह्यादिप्रवर्ध[illegible] च मद्यासु युष्माभिर्मदनीयासु विक्षु प्रजासु यजमानलक्षणासु तासामभिवृद्ध्यर्थं पीपयंत । आप्याययंतु । उतो अपि च नोऽस्मत्संबंधिनोऽस्य यज्ञस्य पूर्व्यः पूर्वकालीनः पतिः पालकोऽग्निर्दन् दाता भवत्विति शेषः । अग्नौ हूयमान[illegible] हविषां । यस्मादेवं तस्मात्हे मित्रावरुणौ वीतं । भक्षयतं पुरोडाशादिकं । उस्रियायाः क्षीराद्युत्स्राविण्या गोः पयसः पयः पातं । यद्वा । घनीभूतं पयस्याया वीतं स्वद्रूपं पातं ॥ ॥ २३ ॥

विष्णोर्नु कमिति षड्टचं पंचदशं सूक्तं दैर्घतमसं त्रैष्टुभं वैष्णवं । अत्रानुक्रमणिका । विष्णोः षड्वैष्णवं हीति ॥ अभिप्लवषडहेषूक्थ्येषु तृतीयसवने स्तोमवृद्धावच्छावाकस्य स्तोमातिशंसनार्थमिदमादिसूक्तद्वयं विनियुक्तं । स्तोमे वर्धमान इति खंडे सूचितं । विष्णोर्नु कमिति सूक्ते परो मात्रयेत्यच्छावाकः । आ॰ ७. ९. । इति ॥ तथा तृतीयसवने सोमातिरेक उत्तरोत्तरसंस्थोपगंतव्या आतिरात्रात् ततोऽप्यतिरिक्ते तदर्थमेव शस्त्रमुपजनयितव्यं । तत्रैतदेव सूक्तं सोमातिरेक इति खंडे सूचितं । महाँ इंद्रो नृवद्विष्णोर्नु कं । आ॰ ६. ७. । इति ॥ आग्निमारुतशस्त्र आद्या विनियुक्ता । अथ यथेतमिति खंडे सूचितं । विष्णोर्नु कं वीर्याणि प्र वोचं तंतुं तन्वन्रजसो भानुमन्विहि । आ॰ ५. २०. । इति ॥

विष्णोर्नु कं वीर्याणि प्र वोचं यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थं विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥

विष्णोः । नु । कं । वीर्याणि । प्र । वोचं । यः । पार्थिवानि । विऽममे । रजांसि ।
यः । अस्कभायत् । उत्ऽतरं । सधऽस्थं । विऽचक्रमाणः । त्रेधा । उरुऽगायः ॥ १ ॥

हे नराः विष्णोर्व्यापनशीलस्य देवस्य वीर्याणि वीरकर्माणि नु कमतिशीघ्रं प्र वोचं । प्रब्रवीमि । अत्र यद्यपि नु कमिति पदद्वयं तथापि यास्केन नवोत्तराणि पदानि । नि० ३. १२. । इत्युक्तत्वात् शाखांतर एकत्वेन पाठाच्च नु इत्येतस्मिन्नेवार्थे नु कमिति पदद्वयं । कानि तानीति तत्राह । यो विष्णुः पार्थिवानि पृथिवीसंबंधीनि रजांसि रंजनात्मकानि क्षित्यादिलोकत्रयाभिमानीन्यग्निवाय्वादित्यरूपाणि रजांसि विममे विशेषेण निर्ममे । अत्र त्रयो लोका अपि पृथिवीशब्दवाच्याः । तथा च मंत्रांतरं । यदिंद्राग्नी अवमस्यां पृथिव्यां मध्यमस्यां परमस्यामुत स्थः । ऋ० १. १०८. ९. । इति । तैत्तिरीयेऽपि । योऽस्यां पृथिव्यामस्यायुपेत्युपक्रम्य यो द्वितीयस्यां तृतीयस्यां पृथिव्यामिति । तै० सं० १. २. १२. १. । तस्माल्लोकत्रयस्य पृथिवीशब्दवाच्यत्वं । किंच यश्च विष्णुरुत्तरमुद्गततरमतिविस्तीर्णं सधस्थं सहस्थानं लोकत्रयाश्रयभूतमंतरिक्षमस्कभायत् तेषामाधारत्वेन स्तंभितवान् । निर्मितवानित्यर्थः । अनेनांतरिक्षाश्रितं लोकत्रयमपि सृष्टवानित्युक्तं भवति । यद्वा । यो विष्णुः पार्थिवानि पृथिवीसंबंधीनि रजांसि पृथिव्या अधस्तनसप्तलोकान्विममे विविधं निर्मितवान् । रजःशब्दो लोकवाची लोका रजांस्युच्यंत इति यास्केनोक्तत्वात् । किंच यश्चोत्तरमुद्गततरमुत्तरभाविनं सधस्थं सहस्थानं पुण्यकृतां सहनिवासयोग्यं भूरादिलोकसप्तकमस्कभायत् स्कंभितवान् । सृष्टवानित्यर्थः ॥ स्कंभेः स्तंभुस्तुंभ्विति विहितस्य श्नः छंदसि शायजपीति व्यत्ययेन शायजादेशः ॥ अथवा पार्थिवानि पृथिवीनिमित्तकानि रजांसि लोकान् विममे । भूरादिलोकत्रयमित्यर्थः । भूम्यामुपार्जितकर्मभोगार्थत्वादितरलोकानां तत्कारणत्वं । किंच यश्चोत्तरमुत्कृष्टतरं सर्वेषां लोकानामुपरिभूतं । अपुनरावृत्तेस्तस्योत्कृष्टत्वं । सधस्थमुपासकानां सहस्थानं सत्यलोकमस्कभायत् । स्कंभितवान् । ध्रुवं स्थापितवानित्यर्थः । किं कुर्वन् । त्रेधा विचक्रमाणस्त्रिप्रकारं स्वसृष्टाँल्लोकान्विविधं क्रममाणः । विष्णोस्त्रेधा क्रमणमिदं विष्णुर्वि चक्रमे । ऋ० १. २२. १७. । इत्यादिश्रुतिषु प्रसिद्धं । अत एवोरुगाय उरुभिर्महद्भिर्गीयमानः अतिप्रभूतं गीयमानो वा । य एवं कृतवान् तादृशस्य विष्णोर्वीर्याणि प्र वोचं ॥

तृतीयसवने सोमातिरेक एव शस्त्रमुपजनयितव्यं । तत्र प्र तदित्ययमनुरूपस्तृचः । सोमातिरेक इति खंडे सूचितं । प्र तद्विष्णुः स्तवते वीर्येणेति स्तोत्रियानुरूपौ । आ० ६. ७. । इति ॥ वाजपेयेनाधिपत्यकाम इति खंडे सूचितं । प्र तत्ते अद्य शिपिविष्ट नाम प्र तद्विष्णुः स्तवते वीर्येण । आ० ९. ९. । इति ॥

प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियंति भुवनानि विश्वा ॥ २ ॥
प्र । तत् । विष्णुः । स्तवते । वीर्येण । मृगः । न । भीमः । कुचरः । गिरिऽस्थाः ।
यस्य । उरुषु । त्रिषु । विऽक्रमणेषु । अधिऽक्षियंति । भुवनानि । विश्वा ॥ २ ॥

यस्येति वक्ष्यमाणत्वात् स इति अवगम्यते । स महानुभावो वीर्येण स्वकीयेन वीरकर्मणा पूर्वोक्तरूपेण स्तवते । स्तूयते सर्वैः ॥ कर्मणि व्यत्ययेन शप् ॥ वीर्येण स्तूयमानत्वे दृष्टांतः । मृगो न सिंहादिरिव । यथा स्वविरोधिनो मृगयिता सिंहो भीमो भीतिजनकः कुचरः कुत्सितहिंसादिकर्ता दुर्गमप्रदेशगंता वा गिरिष्ठाः पर्वताद्युन्नतप्रदेशस्थायी सर्वैः स्तूयते । अस्मिन्नर्थे निरुक्तं । मृगो न भीमः कुचरो गिरिष्ठाः । मृग इव भीमः कुचरो गिरिष्ठा मृगो मार्ष्टेर्गतिकर्मणो भीमो बिभ्यत्यस्माद्भीष्मोऽप्येतस्मादेव । कुचर इति चरतिकर्म कुत्सितमथ चेद्देवताभिधानं क्वायं न चरतीति वा । गिरिष्ठा गिरिस्थायी गिरिः पर्वतः समुद्गीर्णो भवति पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वा । नि० १. २०. । इति ॥ तद्वदयमपि मृगोऽन्वेष्टा शत्रूणां भीमो भयानकः सर्वेषां भीत्युपादानभूतः । परमेश्वराद्भीतिर्भीषास्माद्वातः पवते । तै० आ० ८. ८. १. । इत्यादिश्रुतिषु प्रसिद्धा । किंच कुचरः शत्रुवधादिकुत्सितकर्मकर्ता कुषु सर्वासु भूमिषु लोकत्रये संचारी वा तथा गिरिष्ठा गिरिवदुच्छ्रितलो-

कस्थायी। यद्वा। गिरि मंत्रादिरूपायां वाचि सर्वदा वर्तमानः। ईदृशोऽयं स्वमहिम्ना स्तूयते। किंच यस्य विष्णोरुरुषु विस्तीर्णेषु त्रिसंख्याकेषु विक्रमणेषु पादप्रक्षेपेषु विश्वा सर्वाणि भुवनानि भूतजातान्यधिक्षियंति आश्रित्य निवसंति स विष्णुः स्तूयते॥

प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे।
य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः॥३॥
प्र। विष्णवे। शूषं। एतु। मन्म। गिरिऽक्षिते। उरुऽगायाय। वृष्णे।
यः। इदं। दीर्घं। प्रऽयतं। सधऽस्थं। एकः। विऽममे। त्रिऽभिः। इत्। पदेभिः॥३॥

विष्णवे सर्वव्यापकाय शूषमस्मत्कृत्यादिजन्यं बलं महत्त्वं मन्म मननं स्तोत्रं मननीयं शूषं बलं वा विष्णुमेतु। प्राप्नोतु॥ कर्मणः संप्रदानत्वाच्चतुर्थी॥ कीदृशाय। गिरिक्षिते वाचि गिरिवदुन्नतप्रदेशे वा तिष्ठते उरुगायाय बहुभिर्गीयमानाय वृष्णे वर्षित्रे कामानां। एवंमहानुभावं शूषं प्राप्नोतु। कोऽस्य विशेष इति उच्यते। यो विष्णुरिदं प्रसिद्धं दृश्यमानं दीर्घमतिविस्तृतं प्रयतं नियतं सधस्थं सहस्थानं लोकत्रयमेक इदेक एवाद्वितीयः सन् त्रिभिः पदेभिः पादैर्विममे विशेषेण निर्मितवान्॥

यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदंति।
य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा॥४॥
यस्य। त्री। पूर्णा। मधुना। पदानि। अक्षीयमाणा। स्वधया। मदंति।
यः। ऊं इति। त्रिऽधातु। पृथिवीं। उत। द्यां। एकः। दाधार। भुवनानि। विश्वा॥४॥

यस्य विष्णोर्मधुना मधुरेण दिव्येनामृतेन पूर्णा पूर्णानि त्रीणि पदानि पादप्रक्षेपणान्यक्षीयमाणान्यक्षीयमाणानि स्वधयान्नेन मदंति मादयंति तदाश्रितजनान्। य उ य एव पृथिवीं प्रख्यातां भूमिं द्यामुत द्योतनात्मकमंतरिक्षं च विश्वा भुवनानि सर्वाणि भूतजातानि चतुर्दश लोकांश्च। यद्वा। पृथिवीशब्देनाधोवर्तीन्यतलवितलादिसप्तभुवनान्युपात्तानि। द्युशब्देन तदवांतररूपाणि भूरादिसप्तभुवनानि। एवं चतुर्दश लोकान् विश्वा भुवनानि सर्वाण्यपि तत्रत्यानि भूतजातानि। त्रिधातु। त्रयाणां धातूनां समाहारस्त्रिधातु। पृथिव्यप्तेजोरूपधातुत्रयविशिष्टं यथा भवति तथा दाधार। धृतवान्॥ तुजादित्वादभ्यासस्य दीर्घत्वं॥ उत्पादितवानित्यर्थः। छंदोगारण्यके। तत्तेजोऽसृजत तदन्नमसृजत ता आप ऐक्षंतेति भूतत्रयसृष्टिमुक्त्वा हंताहमिमास्तिस्रो देवतास्तासां त्रिवृतं त्रिवृतमेकैकां करवाणीत्यादिना त्रिवृत्करणसृष्टिरुपपादिता। छां० उ० ६. २. ३-३. ३.। यद्वा। त्रिधातु कालत्रयं गुणत्रयं वा दाधारेत्यन्वयः॥

आतिथ्यायां तदस्येत्येषा प्रधानस्य याज्या। अथातिथ्येति खंडे सूत्रितं। इदं विष्णुर्वि चक्रमे तदस्य प्रियमभि पाथो अश्यां। आ० ४. ५.। इति॥

तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदंति।
उरुक्रमस्य स हि बंधुरित्था विष्णोः पदे परमे मध्व उत्सः॥५॥
तत्। अस्य। प्रियं। अभि। पाथः। अश्यां। नरः। यत्र। देवऽयवः। मदंति।
उरुऽक्रमस्य। सः। हि। बंधुः। इत्था। विष्णोः। पदे। परमे। मध्वः। उत्सः॥५॥

अस्य महतो विष्णोः प्रियं प्रियभूतं तत्सर्वैः सेव्यत्वेन प्रसिद्धं पाथः। अंतरिक्षनामैतत् पाथोऽंतरिक्षं पथा व्याख्यातं। नि० ६. ७.। इति यास्केनोक्तत्वात्। अविनश्वरं ब्रह्मलोकमित्यर्थः। अश्यां। व्याप्नुयां। तदेव

विशेष्यते। यत्र स्थाने देवयवो देवं द्योतनस्वभावं विष्णुमात्मन इच्छंतो यज्ञदानादिभिः प्राप्तुमिच्छंतो नरो मदंति तृप्तिमनुभवंति। तदस्यामित्यन्वयः। पुनरपि तदेव विशेष्यते। उरुक्रमस्यात्यधिकं सर्वं जगदाक्रममाणस्य तत्तदात्मना अत एव विष्णोर्व्यापकस्य परमेश्वरस्य परम उत्कृष्टे निरतिशये केवलसुखात्मके पदे स्थाने मध्वो मधुरस्योत्सो निष्यंदो वर्तते। तदश्यां। यत्र क्षुत्तृष्णाजरामरणपुनरावृत्त्यादिभयं नास्ति संकल्पमात्रेणामृतकुल्यादिभोगाः प्राप्यंते तादृशमित्यर्थः। ततोऽधिकं नास्तीत्याह। इत्थेत्थमुक्तप्रकारेण स हि बंधुः स खलु सर्वेषां सुकृतिनां बंधुभूतो हितकरो वा तस्य पदं प्राप्तवतां न पुनरावृत्तिः। न च पुनरावर्तत इति श्रुतेस्तस्य बंधुत्वं। हिशब्दः सर्वश्रुतिस्मृतिपुराणादिप्रसिद्धिद्योतनार्थः॥

ता वां वास्तून्युश्मसि गमध्यै यत्र गावो भूरिशृंगा अयासः।
अत्राह तदुरुगायस्य वृष्णः परमं पदमव भाति भूरि॥६॥
ता। वां। वास्तूनि। उश्मसि। गमध्यै। यत्र। गावः। भूरिऽशृंगाः। अयासः।
अत्र। अह। तत्। उरुऽगायस्य। वृष्णः। परमं। पदं। अव। भाति। भूरि॥६॥

हे पत्नीयजमानौ वां युष्मदर्थं ता तानि गंतव्यत्वेन प्रसिद्धानि वास्तूनि सुखनिवासयोग्यानि स्थानानि गमध्यै युवयोर्गमनायोश्मसि। कामयामहे। तदर्थं विष्णुं प्रार्थयाम इत्यर्थः। तानीत्युक्तं कानीत्याह। यत्र येषु वास्तुषु गावो रश्मयो भूरिशृंगा अत्यंतोन्नत्युपेता बहुभिराश्रयणीया वायासोऽयना गंतारोऽतिविस्तृताः। यद्वा। यासो गंतारः। अतादृशाः। अत्यंतप्रकाशयुक्ता इत्यर्थः। अत्राहात्र खलु वास्त्वाधारभूते द्युलोक उरुगायस्य बहुभिर्महात्मभिर्गातव्यस्य स्तुत्यस्य वृष्णः कामानां वर्षितुर्विष्णोस्तत्तादृशं सर्वत्र पुराणादिषु गंतव्यत्वेन प्रसिद्धं परमं निरतिशयं पदं स्थानं भूर्यतिप्रभूतमव भाति। स्वमहिम्ना स्फुरति। अयं मंत्रो यास्केन गोशब्दो रश्मिवाचक इति व्याचक्षाणेन व्याख्यातः। तानि वां वास्तूनि कामयामहे गमनाय यत्र गावो भूरिशृंगा बहुशृंगा भूरीति बहुनो नामधेयं प्रभवतीति सतः शृंगं श्रयतेर्वा शृणातेर्वा शम्नातेर्वा शरणायोन्नतमिति वा शिरसो निर्गतमिति वायासोऽयनाः। तत्र तदुरुगायस्य विष्णोर्महागतेः परमं पदं परार्ध्यस्थमवभाति भूरि। पादः पद्यतेः। नि॰ २. ७.। इति॥ ॥२४॥

प्र वः पांतमिति षडृचं षोडशं सूक्तं दैर्घतमसं जागतं। पूर्वत्र वैष्णवं हीत्युक्तत्वाद्वैष्णवं। आद्यस्तृच इंद्रदेवताकश्च। प्र वो जागतं त्वैंद्रस्त्वाद्यस्तृच इत्यनुक्रमणिका॥ आभिप्लविकेषूक्थ्येषु स्तोमातिशंसन उक्तो विनियोगः॥

प्र वः पांतमंधसो धियायते महे शूराय विष्णवे चार्चत।
या सानुनि पर्वतानामदाभ्या महस्तस्थतुरर्वतेव साधुना॥१॥
प्र। वः। पांतं। अंधसः। धियाऽयते। महे। शूराय। विष्णवे। च। अर्चत।
या। सानुनि। पर्वतानां। अदाभ्या। महः। तस्थतुः। अर्वताऽइव। साधुना॥१॥

हे अध्वर्य्वादयः वो युष्माकं संबंधि पांतं पालनस्वभावं पातव्यं वांधसोऽंधः सोमरूपमन्नं प्रार्चत। प्रकर्षेण संपादयत। कस्मै। धियायते स्तुतीरिच्छते महे महते शूराय विक्रांतायेंद्राय विष्णवे व्यापकायैतन्नामकाय देवाय च। कस्तयोरतिशय इति उच्यते। या याविंद्राविष्णू पर्वतानां प्रीणनवतां पूरणवतां वा। पर्वतशब्दो यास्केनैवं निरुक्तः। पर्ववान् पर्वतः पर्व पुनः पृणातेः प्रीणातेर्वेति। उक्तलक्षणानां लोकानां सानुनि समुच्छ्रितप्रदेशे। सर्वलोक इत्यर्थः। अथवा मेघानां समुच्छ्रितप्रदेशे। पर्वतशब्दो मेघनामसूक्तत्वात्। तत्र तस्थतुः। तिष्ठतः। कीदृशौ तौ। अदाभ्यादंभनीयौ परैरनभिभाव्यौ अत एव महो महांतौ। यद्वा। महो महसि स्वतेजसि सानुनीत्यनेन संबंधः। तत्र दृष्टांतः। साधुनाभिमतदेशप्रापणसमर्थेनार्वता वेगवताश्वेनेव। तेन समुच्छ्रितं प्रदेशमारोहति तद्वदुच्चं पदमारूढौ। तस्मात्ताभ्यामर्चत॥

सोमातिरेके तृतीयसवन एषा वैकल्पिकी याज्या। तथा च सूचितं। त्वेषमित्था समरणं शिमीवतोरिति वा याज्या। आ० ६. ७.। इति ॥

त्वेषमित्था समरणं शिमीवतोरिंद्राविष्णू सुतपा वामुरुष्यति।
या मर्त्याय प्रतिधीयमानमित्कृशानोरस्तुरसनामुरुष्यथः ॥ २ ॥
त्वेषं। इत्था। सम्ऽअरणं। शिमीऽवतोः। इंद्राविष्णू इति। सुतऽपाः। वां। उरुष्यति।
या। मर्त्याय। प्रतिऽधीयमानं। इत्। कृशानोः। अस्तुः। असनां। उरुष्यथः ॥ २ ॥

हे इंद्राविष्णू शिमीवतोरिष्टप्रदानादिकर्मवतोर्वा युवयोरित्थेत्थं त्वेषं प्रदीप्तं समरणं सम्यग्यागदेशगमनं सुतपा कृतशिष्टसोमपीतयजमान उरुष्यति। रक्षति। यागेन पूजयति। यद्वा। शिमीवतोः प्रहरणादिकर्मवतोर्वा युवयोस्त्वेषं दीप्तं शौर्योपेतं समरणं सम्यक्परस्परगमनोपेतं वृष्टिप्रदानाय मेघविदारणरूपं यजमान उरुष्यति। रक्षति। स्तौतीत्यर्थः। कस्तयोरतिशय इति उच्यते। या याविंद्राविष्णू मर्त्याय मनुष्याय हविर्दात्रे यजमानाय प्रतिधीयमानमित् प्रतिधातव्यं फलरूपमसनामसनं चलनशीलं प्रदानशीलमन्नादिकमस्तुरभिमतक्षेप्तुर्निरसितुर्वा शत्रूणां कृशानोरग्नेः सकाशादुरुष्यथः। अविच्छेदेन प्रवर्तयथः। वह्नौ कृतं हविः स्वीकृत्य तन्मुखादेव फलमपि दास्यथ इत्यर्थः ॥

ता ईं वर्धंति मह्यस्य पौंस्यं नि मातरा नयति रेतसे भुजे।
दधाति पुत्रोऽवरं परं पितुर्नाम तृतीयमधि रोचने दिवः ॥ ३ ॥
ताः। ईं। वर्धंति। महि। अस्य। पौंस्यं। नि। मातरा। नयति। रेतसे। भुजे।
दधाति। पुत्रः। अवरं। परं। पितुः। नाम। तृतीयं। अधि। रोचने। दिवः ॥ ३ ॥

ताः सोमरूपाः प्रसिद्धा आहुतयो यजमानेन कृता ईमेतदस्येंद्रस्य महि महत्पौंस्यं पुंसः कर्म वक्ष्यमाणरूपं बलं वर्धंति। वर्धयंति। ईमित्यनर्थको वा। स चेंद्रः सोमपानजनितं सामर्थ्यं मातरा द्यावापृथिव्यौ नि नयति। नितरां प्रापयति। किमर्थं। रेतसे प्राणिनां पुत्राद्युत्पादनसामर्थ्याय भुजे तेषां भोगाय रक्षणाय वा। कुत्रेति तदुच्यते। दिवो द्योतमानस्यादित्यस्याध्यधिकं रोचने रोचमाने मंडले। नाम नमनं द्यावापृथिव्योः स्थापितं सामर्थ्यं पुत्रः पुरुत्राता सर्वो जनः पितुः पालकाद्विष्णोरनुग्रहात्। यद्वा। पितुः स्वोत्पादकात्स्वयमुत्पन्नं सत् अवरं निकृष्टं नाम पौत्रसंज्ञं परं तदुत्कृष्टं पुत्र इति नाम तदुभयापेक्षया तृतीयं पितेति नाम दधाति। धारयति। त्रीणि वाव रेतांसि पिता पुत्रः पौत्रः। तै० सं० ५. ६. ८. ४.। इति श्रुतेः। अस्यायमर्थः। अमी कृताः सोमाहुतय आदित्यमंडलं प्राप्य द्वादशात्मनः सवितुर्मूर्त्यंतराविंद्राविष्णू पोषयंति। तुष्टौ तौ मेघद्वारा वर्षतः। तया वृष्ट्या सस्यादिद्वारा प्रजाः पुत्रपौत्रादिरूपेण वर्धयत इत्येवंमहानुभावाविंद्राविष्णू इति ॥

तत्तदिदस्य पौंस्यं गृणीमसीनस्य त्रातुरवृकस्य मीळ्हुषः।
यः पार्थिवानि त्रिभिरिद्विगामभिरुरु क्रमिष्टोरुगायाय जीवसे ॥ ४ ॥
तत्ऽतत्। इत्। अस्य। पौंस्यं। गृणीमसि। इनस्य। त्रातुः। अवृकस्य। मीळ्हुषः।
यः। पार्थिवानि। त्रिऽभिः। इत्। विगामऽभिः। उरु। क्रमिष्ट। उरुऽगायाय।
जीवसे ॥ ४ ॥

अस्य महानुभावस्य तत्तत्पौंस्यं पुंस्त्वं पराक्रमातिशयं गृणीमसि। गृणीमः। स्तुमः। कीदृशस्यास्य। इनस्य सर्वस्य स्वामिनः त्रातुः पालकस्य अवृकस्य। वृको हिंसकः शत्र्वादिः। तद्रहितस्य मीळ्हुषः सेक्तुर्नित्यतरुणस्य।

स्तुत्येषु पराक्रमेषु मध्य एकमुदाहरति । यो विष्णुः पार्थिवानि पृथिव्यादीनि प्रथनवंति वा । सामर्थ्यात् रजांसीति गम्यते । लोकत्रयस्यापि पृथिवीशब्दवाच्यत्वं पूर्वमुदाहृतं । तानि त्रिभिरिद्विगामभिस्त्रिभिरेव विविधगमनैरुरु विस्तीर्णं यथा भवति तथा क्रमिष्ट क्रांतवान् । विचक्रम इत्यर्थः । उरुगायायोरुगातव्याय जीवसे लोकत्रयरक्षणाय । यद्वा । उरुगायाय ॥ षष्ठ्यर्थे चतुर्थी ॥ उरुगायस्य विष्णोरीदृशं पराक्रमं गृणीमसि । किमर्थं । जीवसे जीवनाय रक्षणाय ॥

द्वे इद॑स्य क्रम॑णे स्व॒र्दृशो॑ऽभि॒ख्याय॒ मर्त्यो॑ भुरण्यति ।
तृ॒तीय॑मस्य॒ नकि॒रा द॑धर्षति॒ वय॑श्च॒न प॒तय॑न्तः पत॒त्रिणः॑ ॥ ५ ॥
द्वे इति॑ । इत् । अ॒स्य॒ । क्रम॑णे॒ इति॑ । स्वः॒ऽदृशः॑ । अ॒भि॒ऽख्याय॑ । मर्त्यः॑ । भु॒र॒ण्य॒ति॒ ।
तृ॒तीय॑म् । अ॒स्य॒ । नकिः॑ । आ । द॒ध॒र्ष॒ति॒ । वयः॑ । च॒न । प॒तय॑न्तः । प॒त॒त्रिणः॑ ॥ ५ ॥

अस्य स्वर्दृशः स्वर्गस्य सर्वस्य वा द्रष्टुर्विष्णोर्द्वे इत् क्रमणे द्वे एव पदे मर्त्यो मनुष्योऽभिख्याय सर्वभूत्यादिना प्रख्याय भुरण्यति । गच्छति । भजते । भुरण्यतिः कंड्वादिर्गतिकर्मा भुरण्यति शवतीति तत्कर्मसु पाठात् । प्रसिद्धत्वाद्भूलोकं वृष्ट्यागमनादंतरिक्षं चेत्युभे क्रमणे जानाति । अस्य विष्णोस्तृतीयं क्रमणं द्युलोकाख्यं कोऽपि मर्त्यो नकिर्नैवा दधर्षति । बुद्ध्या नाभिभवति । ज्ञातुं न शक्नोतीत्यर्थः । न केवलं मनुष्य एव अपि तु वयश्चन वेतारो मरुतोऽपि । कीदृशास्ते । पतयंतः सर्वत्र गमनसमर्थाः तथा पतत्रिणः पतनशीला गरुडादयो वायवो वा नकिरा दधर्षति । नैव शक्नुवंति ॥ धृषेर्लेट्यडागमः ॥ सत्यलोकस्यात्यंतविप्रकृष्टत्वेन सर्वेषामविषयत्वादिति भावः ॥

च॒तुर्भिः॑ सा॒कं न॑व॒तिं च॒ नाम॑भिश्च॒क्रं न वृ॒त्तं व्यती॑ँरवीविपत् ।
बृ॒हच्छ॑रीरो वि॒मिमा॑न॒ ऋक्व॑भि॒र्युवाकु॑मारः॒ प्रत्ये॑त्याह॒वम् ॥ ६ ॥
च॒तुःऽभिः॑ । सा॒कम् । न॒व॒तिम् । च॒ । नाम॑ऽभिः । च॒क्रम् । न । वृ॒त्तम् । व्यती॑न् । अ॒वी॒वि॒प॒त् ।
बृ॒हत्ऽश॑रीरः । वि॒ऽमिमा॑नः । ऋक्व॑ऽभिः । युवा॑ । अकु॑मारः । प्रति॑ । ए॒ति॒ । आ॒ऽह॒वम् ॥ ६ ॥

अयमादित्यात्मा विष्णुश्चतुर्भिः साकं सहितां नवतिं च । चतुर्नवतिमित्यर्थः । एतत्संख्याकान्कालावयवान् नामभिः स्वकीयनमनप्रकारैः प्रेरणविशेषैर्वृत्तं यथा भवति तथा व्यतीन् विविधातनस्वभावान् वृत्तं चक्रं न बद्धरोपितं चक्रमिव तं यथा शचीरुपरि प्रक्षेपेण भ्रमयति तद्वदुक्तसंख्याकान्कालावयवानवीविपत् । कंपयति । भ्रमयति ॥ टुवेपृ कंपने । णंताल्लुङि चङि रूपं ॥ के पुनस्ते उच्यते । संवत्सर एकः । अयने द्वे । पंचर्तवः । द्वादश मासाः । चतुर्विंशत्यर्धमासाः । त्रिंशदहोरात्राः । अष्टौ यामाः । एकस्मिन्दिने पर्यावर्तमानानि मेषादीनि द्वादश लग्नानीति मिलित्वा चतुरधिकनवतिसंख्याकानवीविपत् । नन्वादित्यः स्वयमपीतरवत्परिभ्रमति कथं भ्रमयतीत्युच्यते । नैष दोषः । एतेषां भ्रामकस्य ध्रुवस्य विष्णोर्मूर्त्यंतरत्वात् । अथवा स्वभ्रमणाधीनत्वादितरेषां परिभ्रमणस्य । अतः स्वयं भ्रमयतीत्युच्यते । एवं कालात्मको विष्णुर्बृहच्छरीरो विराडात्मना सर्वदेवमनुष्यादिशरीराणां स्वशरीरत्वात् । बृहच्छरीरत्वमिति [illegible] । विमिमानो विविधमात्मानं मिमानो देवतिर्यगात्मना विभज्य स्थापयन् । यद्वा । ऋक्वभिः स्तुतिमद्भिर्मंत्रवद्भिर्वा विमिमानः । यद्यपि विभुस्तथापि भक्त्याधीनत्वात् स्तुत्या मीयते । युवा सर्वत्र मिश्रणशीलो नित्यतरुणो वा अत एवाकुमारोऽनल्पः एवंभूतो महा[illegible]नं प्रत्येति । गच्छति यज्ञदेशं ॥ ॥ २५ ॥

भवा मित्र इति पंचर्चं सप्तदशं सूक्तं दैर्घतमसं । जागतं त्वित्युक्तत्वादिदमपि जागतं । वैष्णवं हीत्युक्तत्वाद्वैष्णवं । भव पंचेत्यनुक्रांतं ॥ उक्थ्ये तृतीयसवनेऽच्छावाकशस्त्र एतत्सूक्तं विनियुक्तं । उक्थ्ये तु होत्रकाणामिति खंडे सूचितं । भवा मित्रः सं वां कर्मणा । आ० ६. १. । इति ॥ सौम्यचरोरुभयतो घृतेन यष्टव्यं तत्रोपरितने

घृतयाग उरु विष्णो वि क्रमस्वेति प्राकृता याज्या। दशमेऽहनि तु तस्याः स्थाने भवा मित्र इत्येषा प्रयोक्तव्या। दशमेऽहनीति खंडे सूत्रितं। उरु विष्णो वि क्रमस्वेति घृतयाज्यास्थाने भवा मित्रः। आ॰ ८. १२.। इति ॥

भवा मित्रो न शेव्यो घृतासुतिर्विभूतद्युम्न एवया उ सप्रथाः।
अधा ते विष्णो विदुषा चिदर्ध्यः स्तोमो यज्ञश्च राध्यो हविष्मता ॥१॥
भव। मित्रः। न। शेव्यः। घृतऽआसुतिः। विभूतऽद्युम्नः। एवऽयाः। ऊं इति। सऽप्रथाः।
अध। ते। विष्णो इति। विदुषा। चित्। अर्ध्यः। स्तोमः। यज्ञः। च। राध्यः। हविष्मता ॥१॥

हे विष्णो मित्रो न। मितेर्दुःखात् त्राता सखा आदित्यो वा मित्रः। प्रमीतेस्त्रायत इति निरुक्तं ।१०.२१.। तद्वत् शेव्यः सुखे साधुः सुखकर्ता घृतासुतिः। घृतमुदकमासूयते येन स तादृशः। यद्वा। घृतमाज्यमाभिमुख्येन नीयते यस्मै स तादृशः। विभूतद्युम्नः प्रभूतयशाः प्रभूतान्नो वा। एवया रक्षणस्य मिश्रयिता प्रापयिता। सप्रथाः सर्वतः पृथुः। प्रतिविशेषणं नो भवेति संबंधः॥ द्व्यचोऽतस्तिङ इति दीर्घः। उ इति पादपूरणः॥ हे विष्णो त्वं यस्मादीदृशो भवसि अधास्मात्ते तव स्तोमः स्तोत्रविशेषो विदुषा त्वन्माहात्म्यवेदित्रा यजमानेनार्ध्यः पुनःपुनः प्रवर्धनार्हः। एकवारकरणे न संपूर्यत इत्यर्थः। तथा ते यज्ञश्च हविष्मता तेन यजमानेन राध्यः समाराधनीयः। यद्वा। विदुषा होत्रा स्तोमो राध्यो हविष्मता यज्ञश्च राध्यः॥

यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति।
यो जातमस्य महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसत् ॥२॥
यः। पूर्व्याय। वेधसे। नवीयसे। सुमत्ऽजानये। विष्णवे। ददाशति।
यः। जातं। अस्य। महतः। महि। ब्रवत्। सः। इत्। ऊं इति। श्रवःऽभिः। युज्यं।
चित्। अभि। असत् ॥२॥

यः यो मर्त्यः पूर्व्याय पूर्वकालीनाय। नित्यायेत्यर्थः। वेधसे विविधजगत्कर्त्रे नवीयसे नित्यनूतनाय। अत्यंतरमणीयायेत्यर्थः। स्तुत्याय वा सुमज्जानये स्वयमेवोत्पन्नाय॥ जनेरौणादिक इण्॥ सुमत्स्वयमित्यर्थः ।नि॰ ६. २२.। इति यास्कः। यद्वा। सुतरां मादयतीति सुमत्। तादृशी जाया यस्य स तथोक्तः। तस्मै सर्वजगन्मादनशीलश्रीपतय इत्यर्थः॥ बहुव्रीहौ जायाया निङ् ।पा॰ ५. ४. १३४.। इति निङादेशः समासांतः। वलि लोपः॥ उक्तगुणकाय विष्णवे व्यापकाय ददाशति हविरादिकं ददाति। किंचास्य विष्णोर्महतो महानुभावस्य महि महत् पूज्यं जातं जन्मोत्पत्तिं हिरण्यगर्भादिरूपं जन्म ब्रवत् ब्रूयात्॥ ब्रवीतेर्लेट्यडागमः॥ संकीर्तयेत्। सेदु। उशब्दोऽपिशब्दार्थः। सोऽपि दाता स्तोता च श्रवोभिरन्नैः कीर्तिभिर्वा युक्तः सन् युज्यं चित् सर्वैर्गंतव्यमेव तत्पदमभ्याभिमुख्येनासत्। गच्छति। प्राप्नोति॥

तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन।
आस्य जानंतो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ॥३॥
तं। ऊं इति। स्तोतारः। पूर्व्यं। यथा। विद। ऋतस्य। गर्भं। जनुषा। पिपर्तन।
आ। अस्य। जानंतः। नाम। चित्। विवक्तन। महः। ते। विष्णो इति। सुऽमतिं।
भजामहे ॥३॥

हे स्तोतारः तमु तमेव विष्णुं पूर्व्यं पूर्वार्ह[illegible]ऋतस्य गर्भं यज्ञस्य गर्भभूतं। यज्ञात्मनोत्पन्नमित्यर्थः।

यज्ञो वै विष्णुः । शत॰ १. १. २. १३. । इति श्रुतेः । यद्वा । ऋतस्योदकस्य गर्भं गर्भकारणं । उदकोत्पादकमित्यर्थः । अप एव ससर्जादौ । मनु॰ १. ८. । इति स्मृतेः । एवंभूतं विष्णुं यथा विद जानीथ तथा जनुषा जन्मना स्वत एव न केनचिद्द्रव्यलाभादिना पिपर्तन । स्तोत्रादिना प्रीणयत । यावदस्य माहात्म्यं जानीथ तावदित्यर्थः ॥ विदेर्लेटि मध्यमबहुवचनं । विद ऋतस्येत्यत्र संहितायामृत्यक इति प्रकृतिभावः ॥ किंचास्य महानुभावस्य विष्णोर्नाम चित् सर्वैर्नमनीयमभिधानं सार्वात्म्यप्रतिपादकं विष्णुरित्येतन्नाम जानंतः पुरुषार्थप्रदमित्यधिगच्छंत आ समंताद्विवक्तन । वदत । संकीर्तयत । यद्वा । नाम यज्ञात्मना नमनं विष्णोरिव सर्वेषां स्वर्गापवर्गसाधनायेध्याद्यात्मना द्रव्यदेवतात्मना वा परिणाममा जानंतो यूयं विवक्तन । ब्रूत । स्तुत ॥ वचेर्लोटि छांदसः शपः श्लुः । बहुलं छंदसीत्यभ्यासस्येत्वं । पूर्ववत्तनादेशः ॥ इदानीं साक्षात्कृत्याह । हे विष्णो सर्वात्मक देव महो महतस्ते तव सुमतिं सुष्टुतिं शोभनात्मिकां बुद्धिं वा भजामहे । सेवामहे वयं यजमानाः ॥

अग्नीषोमप्रणयने तमस्य राजेत्येषा प्रयोक्तव्या । अग्नीषोमौ प्रणेष्यत्स्विति खंडे सूत्रितं । तमस्य राजा वरुणस्तमश्विनेत्यर्धर्चं आरमेत् । आ॰ ४. १०. । इति ॥

तमस्य राजा वरुणस्तमश्विना क्रतुं सचंत मारुतस्य वेधसः ।
दाधार दक्षमुत्तममहर्विदं व्रजं च विष्णुः सखिवाँ अपोर्णुते ॥४॥
तं । अस्य । राजा । वरुणः । तं । अश्विना । क्रतुं । सचंत । मारुतस्य । वेधसः ।
दाधार । दक्षं । उत्ऽतमं । अहःऽविदं । व्रजं । च । विष्णुः । सखिऽवान् । अपऽऊर्णुते ॥४॥

मारुतस्य । मरुतामृत्विजां संघातो मारुतं । तद्वतः ॥ मत्वर्थो लुप्यते ॥ मरुतां देवानां संबंधिनो वा वेधसो मेधाविनोऽस्य यजमानस्य तं प्रसिद्धं क्रतुं यागं यज्ञात्मकं विष्णुं । यज्ञो वै विष्णुरिति श्रुतेः । राजा राजमानो वरुणः सचंत । सेवते । तमेव क्रतुं यागमश्विनाश्विनौ सचेते । अन्येऽपि देवाः सचंते । सेवंते । किंच विष्णुः सवनत्रयात्मना व्याप्तो विष्णुः सखिवान् यजमानादिसखिभिर्युक्तः सन्नुत्तममुत्कृष्टतममहर्विदमहर्वेत्तारं । स्वर्गोत्पादकमित्यर्थः । दक्षं बलं फलप्रदानसामर्थ्यरूपं दाधार । धृतवान् । किंच व्रजं च मेघं च । व्रज इति मेघनाम व्रजश्चरुरिति तन्नामसु पाठात् । तं वृष्ट्युदकायापोर्णुते । अपगतावरणं करोति । आहुतिद्वारा यज्ञस्यैव वृष्ट्युत्पादकत्वात् । यद्वा । मारुतस्य मरुत्संघातस्य देवगणस्य वेधसो विधातुः स्रष्टुर्विष्णोः क्रतुं कर्म पालनादिरूपं वरुणादयः सचंते । तदधीनत्वात्पालनस्य । स च सखिवानिंद्रमरुदादिसहायोपेतः सन्नुक्तलक्षणं दक्षं वृष्ट्युत्पादनादिसामर्थ्यरूपं बलं दाधार । तथा व्रजं चापोर्णुते ॥

आ यो विवाय सचथाय दैव्य इंद्राय विष्णुः सुकृते सुकृत्तरः ।
वेधा अजिन्वत्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत् ॥५॥
आ । यः । विवाय । सचथाय । दैव्यः । इंद्राय । विष्णुः । सुऽकृते । सुकृत्ऽतरः ।
वेधाः । अजिन्वत् । त्रिऽसधस्थः । आर्यं । ऋतस्य । भागे । यजमानं । आ । अभजत् ॥५॥

यो विष्णुर्दैव्यो दिवि भवः सुकृत्तरः शोभनफलप्रदानां मध्ये श्रेष्ठ आ विवाय । आगच्छति ॥ वेतेर्लिटि रूपं ॥ किमर्थं । सचथाय सचनाय यागसहायकरणाय । कस्मै । इंद्राय । इरां हविर्लक्षणान्नं द्रावयतीतींद्रो यजमानः । इंद्र इरां दृणातीति इदंकरणादित्याग्रायण इति यास्केनोक्तनिर्वचनस्यात्रापि सद्भावात् । नि॰ १०. ८. ॥ तस्मा उक्तरूपाय यजमानाय सुकृते शोभनस्तुतिकर्त्रे । आगत्य च वेधा अभिमतफलविधाता त्रिषधस्थस्त्रिसंख्योपेतसहस्थानवान् । सवनत्रयस्थानः क्षित्यादिस्थानत्रयो वा विष्णुः । आर्यमागंतव्यं यजमानमजिन्वत् । प्रीणयति ॥ जिवि प्रीणनार्थः । इदित्वान्नुम् ॥ तदर्थमृतस्य यज्ञस्य भागे हुतशेषरूपे तं यजमानमाभजत् । भजति । समीपयतीत्यर्थः । यद्वा । ऋतस्य यज्ञस्य भागे फले यजमानमाभजत् । स्वामित्वेन स्थापयति ॥ ॥२६॥ ॥२१॥

द्वाविंशेऽनुवाकेऽष्टौ सूक्तानि। तत्राबोध्यग्निर्ज्म इति प्रथमं सूक्तं षडृचं दै[illegible]नं। पूर्वत्र जागतं त्विति तुशब्दादिदमपि जागतं। अंत्ये द्वे त्रिष्टुभौ। अबोधि षळाश्विनं त्वंत्ये त्रिष्टुभावित्यनुक्रमणिका॥ प्रातरनुवाकाश्विनशस्त्रयोर्जागते छंदस्यस्य विनियोगः। अथाश्विन इति खंडे सूचितं। अबोध्यग्निर्ज्म एष स्य भानुः। आ० ४. १५.। इति॥

अबोध्यग्निर्ज्म उदेति सूर्यो व्यु१षाश्चंद्रा मह्यावो अर्चिषा।
आयुक्षातामश्विना यातवे रथं प्रासावीद्देवः सविता जगत्पृथक्॥१॥
अबोधि। अग्निः। ज्मः। उत्। एति। सूर्यः। वि। उषाः। चंद्रा। मही। आवः। अर्चिषा।
अयुक्षातां। अश्विना। यातवे। रथं। प्र। असावीत्। देवः। सविता। जगत्। पृथक्॥१॥

अयमग्निर्विहितः सञ्ज्मो ज्मायाः पृथिव्या वेदिलक्षणायाः संबंधी सन्नबोधि। प्रतिबोधितः। ज्मेति पृथिवीनाम ग्मा ज्मेति तन्नामसूक्तत्वात्। किंच सूर्य उदेति। मही महत्युषा अर्चिषा प्रकृष्टेन तेजसा चंद्रा प्राणिनामाल्हादिनी सती व्यावः। तमांसि विवासयति॥ वसेर्लुङि च्छांदसश्च्लेर्लुक्। छंदस्यपि दृश्यत इत्याडागमः॥ यत इयमुषा उदेति यतश्च सूर्यो यतश्चायमग्निः प्रबुद्धो भवति अतः कारणाद्धे अश्विनौ युष्मत्संबंधिनं रथं यातवे देवयजनगमनाय रासभाभ्यामायुक्षातां। आभिमुख्येन युंजाथां। तथा सविता सर्वकर्मणोऽनुज्ञाता देवो जगज्जंगमं प्राणिजातं पृथक् स्वस्वकर्मानुरोधेन प्रासावीत्। प्रसौतु। अनुजानातु॥

यद्युंजाथे वृषणमश्विना रथं घृतेन नो मधुना क्षत्रमुक्षतं।
अस्माकं ब्रह्म पृतनासु जिन्वतं वयं धना शूरसाता भजेमहि॥२॥
यत्। युंजाथे इति। वृषणं। अश्विना। रथं। घृतेन। नः। मधुना। क्षत्रं। उक्षतं।
अस्माकं। ब्रह्म। पृतनासु। जिन्वतं। वयं। धना। शूरऽसाता। भजेमहि॥२॥

हे अश्विनाश्विनौ यद्यदा वृषणं वृष्ट्यादिवर्षकं रथं युंजाथे योजयथः तदा नः क्षत्रमस्मदीयं बलं क्षत्रियजातं वा घृतेनोदकेन मधुना मधुरेणोक्षतं। प्रवर्धयतमित्यर्थः। यद्वा। घृतेन क्षरणरूपेण मधुना मधुरेणामृतेनोक्षतं। युष्मद्रथस्थेन मधुनास्मदीयं बलं प्रवर्धयतमित्यर्थः। अश्विनो रथस्य मधुपूर्णत्वं मधुवाहनो रथ इत्यादिषु प्रसिद्धं। किंचास्माकं पृतनास्वस्मदीयासु पुत्रभृत्यादिमनुष्यरूपासु प्रजासु ब्रह्म ब्राह्मं तेजो जिन्वतं। पृतना इति मनुष्यनाम विवस्वंतः पृतना इति तन्नामसूक्तत्वात्। यद्वा। पृतनासु परकीयासु प्रजासु ब्रह्म तासां परिवृढमन्नमस्माकं जिन्वतं। प्रीणयतं। ब्रह्मेत्यन्ननाम ब्रह्म वर्च इति तन्नामसूक्तत्वात्। वयं च शूरसाता शूरसातौ शूराणां प्रहारादिना युक्ते संग्रामे धना तदीयानि धनानि बहुविधानि भजेमहि। लभेमहि॥

अर्वाङ् त्रिचक्रो मधुवाहनो रथो जीराश्वो अश्विनोर्यातु सुष्टुतः।
त्रिवंधुरो मघवा विश्वसौभगः शं न आ वक्षद्द्विपदे चतुष्पदे॥३॥
अर्वाङ्। त्रिऽचक्रः। मधुऽवाहनः। रथः। जीरऽअश्वः। अश्विनोः। यातु। सुऽस्तुतः।
त्रिऽवंधुरः। मघऽवा। विश्वऽसौभगः। शं। नः। आ। वक्षत्। द्विऽपदे। चतुःऽपदे॥३॥

अश्विनो रथोऽर्वाङस्मदभिमुखो यातु। गच्छतु। कीदृशः। त्रिचक्रश्चक्रत्रययुक्तः मधुवाहनो मधुवोढा जीराश्वः शीघ्रगाम्यश्वोपेतः सुष्टुतोऽत एवास्माभिः स्तूयमानः त्रिवंधुरो निम्नोन्नतकाष्ठत्रयोपेतः। सारथ्या-

अयस्थानं वंधुरं। मघवा धनवान् अत एव विश्वसौभगः सर्वसौभाग्योपेतः। ईदृशोऽश्विनो रथो नोऽस्माकं द्विपदे पुत्रादिप्रजायै चतुष्पदे पशवे च शं सुखमा वक्षत्। आवहतु॥ वहेर्लेट्यडागमः। सिप्॥

आ न ऊर्जं वहतमश्विना युवं मधुमत्या नः कशया मिमिक्षतं।
प्रायुस्तारिष्टं नी रपांसि मृक्षतं सेधतं द्वेषो भवतं सचाभुवा ॥४॥
आ। नः। ऊर्जं। वहतं। अश्विना। युवं। मधुऽमत्या। नः। कशया। मिमिक्षतं।
प्र। आयुः। तारिष्टं। निः। रपांसि। मृक्षतं। सेधतं। द्वेषः। भवतं। सचाऽभुवा ॥४॥

हे अश्विनाश्विनौ युवं युवां नोऽस्माकमूर्जं बलं प्राणनसमर्थमन्नं वा वहतं। प्रापयतं। किंच नोऽस्मान्मधुमत्या माधुर्योपेतया कशया वाचेष्टप्रदानरूपया मिमिक्षतं। सिंचतं। प्रीणयतं। कशेति वाङ्नाम कशा धिषणेति तन्नामसूक्तत्वात्। यद्वा। मधुमत्या मधुरवृष्टिमत्या माधुर्योपेतया कशयाश्वताडन्या नोऽस्मान्मिमिक्षतं। मध्वित्युदकनाम मधु पुरीषमिति तन्नामसूक्तत्वात्। कशयाश्वताडनेन शीघ्रमागत्य वृष्टिरूपं फलं दास्यत इति कशाया मधुमत्त्वं। किंचायुरायुष्यं प्र तारिष्टं। प्रवर्धयतं॥ प्रपूर्वस्तिरतिर्वर्धनार्थः॥ तथा रपांसि मृक्षतं। पापानि निःशेषेण शोधयतं। रपो रिप्रमिति पापनामनी भवतः। नि० ४. २१.। इति यास्कः। किंच द्वेषो द्वेष्यमभिचारादिकं सेधतं। नाशयतं। इदं च भाव्यं। सचाभुवा सहभुवावस्मत्कार्येषु सहभवनवंतौ भवतं। भवंतावेकमत्यं भजत इत्यर्थः॥ वाक्यभेदादनिघातः॥

युवं ह गर्भं जगतीषु धत्थो युवं विश्वेषु भुवनेष्वंतः।
युवमग्निं च वृषणावपश्च वनस्पतींरश्विनावैरयेथां ॥५॥
युवं। ह। गर्भं। जगतीषु। धत्थः। युवं। विश्वेषु। भुवनेषु। अंतरिति।
युवं। अग्निं। च। वृषणौ। अपः। च। वनस्पतीन्। अश्विनौ। ऐरयेथां ॥५॥

हे अश्विनौ युवं ह युवां खलु जगतीष्वंतर्गमनशीलासु गोषु मध्ये गर्भं धत्थः। धारयथः। न केवलं गोष्वेव अपि तु युवं युवां विश्वेषु सर्वेषु भुवनेषु भूतजातिष्वंतर्मध्ये गर्भं धत्थः। वृष्टिद्वाराभिषरूपत्वेन गर्भस्थरेतसः पोषकत्वात्। किंच हे वृषणौ कामानां वर्षितारौ युवं युवामग्निं चापश्च वनस्पतींश्चैरयेथां। प्रवर्तयेथां। आहुतिभोगायाग्निं स्वीकृत्य च वृष्ट्युदकानि उदकैरोषधिवनस्पत्यादिकं एतान्यस्मदर्थं प्रेरयेथां॥

युवं ह स्थो भिषजा भेषजेभिरथो ह स्थो रथ्या३ राथ्येभिः।
अथो ह क्षत्रमधि धत्थ उग्रा यो वां हविष्मान्मनसा ददाश ॥६॥
युवं। ह। स्थः। भिषजा। भेषजेभिः। अथो इति। ह। स्थः। रथ्या। रथ्येभिरिति रथ्येभिः।
अथो इति। ह। क्षत्रं। अधि। धत्थः। उग्रा। यः। वां। हविष्मान्। मनसा। ददाश ॥६॥

हे अश्विनौ युवं युवां ह खलु भेषजेभिर्भेषजैरौषधैः। भेषजौषधभैषज्यान्यगदो जायुरगदं तच्चौषधमिति चाभिधानात्। तैर्भिषजा भिषजौ स्थः। हशब्दोऽश्विनौ हि देवानां भिषजावित्यादिप्रसिद्धिद्योतनार्थः। अथो अपि च रथ्येभी रथवोढृभिरश्वै रथ्या रथवंतौ स्थः। आ वां रथो अश्विना। ऋ० १. ११८. १.। इत्यादिप्रसिद्धिद्योतनार्थो हशब्दः। अनयो रथेन विशेषसंबंधो युवोर्हि पूर्वं सवितोषसा रथमृताय चित्रं घृतवंतमिष्यति। ऋ० १. ३४. १०.। इत्यादिमंत्रांतरेषु प्रसिद्धः। अथो अपि च युवयोः क्षत्रं बलमधि ह। अधिकं खलु। हशब्दः प्रसिद्धौ। यस्मादेवं तस्माद्धे उग्रोद्गूर्णसामर्थ्यावश्विनौ वां युवाभ्यां यो हविष्मानाज्यपुरोडाशादिहविर्युक्तो यजमानो मनसा युष्मदायत्तेन चेतसा ददाश ददाति हविरादिकं तं धत्थः।

धारयथः । अत्यधिकमनुगृह्णीथ इत्यर्थः । प्रभूतबलौ युवां रथमारुह्यास्मद्देवयजनमागत्य हविरदं मां धृत्वास्मयचोऽस्मान्विचिकित्सतमिति तात्पर्यार्थः ॥ ॥२७॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्। पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके द्वितीयोऽध्यायः समाप्तः ॥

---

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥

अथ तृतीयाध्याय आरभ्यते। वसू रुद्रेत्येतदनुवाकापिचया द्वितीयं सूक्तं षडृचं दैर्घतमसं। पूर्वचाश्विनं त्वित्युक्तत्वादिदमप्याश्विनं। अनादेशपरिभाषया चैष्टुभं। दीर्घतमा मामतेय इत्यंत्यानुष्टुप्। तथा चानुक्रांतं। वसू अंत्यानुष्टुबिति ॥ अस्य विशेषविनियोगो लैंगिकः ॥

वसू॑ रु॒द्रा पु॑रु॒मंतू॑ वृ॒धंता॑ दश॒स्यतं॑ नो वृषणाव॒भिष्टौ॑।
दस्रा॑ ह॒ यद्रेक्ण॑ औच॒थ्यो वां॒ प्र यत्स॒स्राथे॒ अक॑वाभिरू॒ती ॥१॥

वसू॒ इति॑। रु॒द्रा। पु॒रु॒मंतू॒ इति॑ पु॒रु॒ऽमंतू॑। वृ॒धंता॑। द॒श॒स्यत॑। नः॒। वृ॒ष॒णौ॒। अ॒भिष्टौ॑। दस्रा॑। ह॒। यत्। रेक्ण॑ः। औ॒च॒थ्यः॑। वां॒। प्र। यत्। स॒स्राथे॒ इति॑। अक॑वाभिः। ऊ॒ती ॥१॥

हे वृषणौ कामानां वर्षितारौ दस्राश्वद्विरोध्युपचपयितारौ हे अश्विनौ युवां नोऽस्मभ्यं दशस्यतं। दत्तं दित्सितं फलं। कीदृशौ युवां। वसू वासयितारौ प्रजानां। वसुना धनेन तद्वंतौ वा ॥ मत्वर्थो लुप्यते ॥ रुद्रा रुद्रौ। रुद्दुःखं तद्धेतुभूतं पापं वा। तस्य द्रावयितारौ। संग्रामे भयंकरं शब्दयंतौ वा। रुद्रो रौतीति सतः। नि॰ १०. ५.। इति यास्कः। पुरुमंतू बहूनां ज्ञातारौ ॥ मनेरौणादिकस्तुन्प्रत्ययः ॥ वृधंता वर्धमानौ स्तोत्रादिना अभिष्टावाभिमुख्येन पूजितौ। अभीष्टसाधकौ वा। हशब्द उक्तगुणप्रसिद्धिद्योतनार्थः। किमर्थं दीयत इति चेत्। यद्यस्मादौचथ्य उचथ्यस्य पुत्रो दीर्घतमा वां युवां रेक्णो धनं स्तुतिव्याजेन प्रार्थयते तदर्थं। यद्वा। अयं यजमानो यद्यस्माद्रेक्णो हविर्लक्षणमन्नं वां युवाभ्यां दास्यति ददातीति शेषः। यस्मा-च्चाकवाभिरकुत्सिताभिरूतिभी रक्षणैः ॥ सुपां सुलुगिति तृतीयायाः पूर्वसवर्णदीर्घः ॥ प्र सस्राथे प्रसारयथः प्रकर्षेण दत्थः तस्माद्दशस्यतं। यस्मादभिमतप्रदौ यस्माच्चायं प्रार्थयते ददाति वा हविः तस्माद्दशस्यतमित्यर्थः ॥

को वां॑ दाशत्सुम॒तये॑ चिद॒स्यै वसू॒ यद्धेथे॒ नम॑सा प॒दे गोः।
जि॒गृ॒तम॒स्मे रे॒वतीः॒ पुरं॑धीः कामप्रे॒णेव॒ मन॑सा॒ चरं॑ता ॥२॥

कः। वां॒। दा॒श॒त्। सु॒ऽम॒तये॑। चि॒त्। अ॒स्यै। वसू॒ इति॑। यत्। धेथे॒ इति॑। नम॑सा। प॒दे। गोः। जि॒गृ॒तं। अ॒स्मे इति॑। रे॒वतीः॑। पुरं॑ऽधीः। का॒म॒प्रेण॑ऽइव। मन॑सा। चरं॑ता ॥२॥

हे वसू वासयितारावश्विनौ वां युवयोः संबंधिन्या अस्यै वक्ष्यमाणरूपायै सुमतये चित् शोभनबुद्ध्यै। चित् पूजायामप्यर्थे वा। स्वल्पेनैव हविषा महत्फलप्रदानरूपाया ईदृश्या अपि बुद्ध्यै प्रीणनाय को दाशत्।

को दद्यात् । दातुं शक्नुयात् । युवयोः प्रभावस्यातिमहत्त्वादिति भावः ॥ दाशतेर्लिंङ्यडागमः ॥ कथं मतेः सौष्ठवमिति तदुच्यते । यद्यस्मात्कारणाद्गोः पदे भूम्याः सर्वैर्गंतव्यायाः स्तुत्याया वा वेदिरूपायाः स्थाने । एतावती वै पृथिवी यावती वेदिरिति श्रुतेः । गौरिति भूमिनाम । तथा च निरुक्तं । गौरिति पृथिव्या नामधेयं यद्दूरं गता भवति यच्चास्यां भूतानि गच्छंति गातेर्वौकारो नामकरणः । नि॰ २. ५. । इति । तादृशे स्थानेऽस्माभिः प्रार्थितौ संतौ नमसा हविर्लक्षणेन यवमात्रप्रकारेणान्नेन धेथे धारयथो बहुप्रदानविषयां बुद्धिं ॥ दधातेर्लेटि बहुलं छंदसीति विकरणस्य लुक् । धातोर्ह्रस्वत्वं । आतो ङितः । पा॰ ७. २. ८१. । इतीयादेशः ॥ यस्मादेवं तस्मादस्मे अस्मभ्यं रेवतीः क्षीरादिधनवतीः पुरंधीः शरीरधारिकाः शरीराभिवृद्धिहेतूर्गा जिगृतं । शब्दयतं । दत्तमित्यर्थः ॥ गॄ शब्दे । छांदसः शपः श्लुः । अभ्यासस्येत्वं ह्रस्वत्वं च ॥ पुनस्ताविव विशिष्येते । कामप्रेणेव । इवशब्द एवकारार्थः । कामपूरकेणैव मनसा सह चरंता चरंतौ । यजमानस्य कामाः पूरणीया इति कृतसंकल्पावित्यर्थः ॥ प्रा पूरणे । कामं प्रातीति कामप्रः । आतोऽनुपसर्गे कः ॥

युक्तो ह यद्वां तौग्र्याय पेरुर्वि मध्ये अर्णसो धायि पज्रः ।
उप वामवः शरणं गमेयं शूरो नाज्म पतयद्भिरेवैः ॥ ३ ॥
युक्तः । ह । यत् । वां । तौग्र्याय । पेरुः । वि । मध्ये । अर्णसः । धायि । पज्रः ।
उप । वां । अवः । शरणं । गमेयं । शूरः । न । अज्म । पतयत्ऽभिः । एवैः ॥ ३ ॥

अत्रेतिहासमाहुः । तौग्र्यनामकं राजानं युद्धे शत्रवः पराभाव्य पाशैर्दृढं बद्ध्वा समुद्रमध्ये प्रचिक्षिपुः । स चोत्तरीतुमशक्तः सन्नश्विनौ तुष्टाव । तौ च तुष्टौ शीघ्रमेव रथमश्वैर्योजयित्वा समुद्रमागत्य तमुत्तार्यापालयतामिति । अयमर्थोऽजोहवीदश्विना तौग्र्यः । ऋ॰ १. ११७. १५. । इत्यादिमंत्रांतरे प्रसिद्धः । सोऽत्रोच्यते । हे अश्विनौ वां युवयोः संबंधी पेरुः पारणकुशलो रथो युक्तो ह । अश्वैर्युक्तः खलु । हशब्दो मंत्रांतरप्रसिद्धिद्योतनार्थः । स चोदाहृतः । कस्मै । तौग्र्यायैतन्नाम्ने राज्ञे तद्बंधमोचनार्थं । कुत्रेति तदुच्यते । अर्णसोऽंभसो मध्ये समुद्रस्य मध्ये । स च पज्रः पाजसा बलेन तीर्णः सन् वि धायि । धारितः । स्थापितः । यस्मादेवं तस्माद्वां युवयोरवो रक्षणं शरणमुप गमेयं । संप्राप्नुयां । ऐहिकदुःखाद्विमुक्तो युष्मत्स्थानं संभजेयं । गतौ दृष्टांतः । पतयद्भिरेवैरश्वैः शूरो न शूर इव । स यथाज्म जित्वा निर्भयं स्वगृहं प्राप्नोति तद्वत् ॥

उपस्तुतिरौचथ्यमुरुष्येन्मा मामिमे पतत्रिणी वि दुग्धां ।
मा मामेधो दशतयश्चितो धाक् प्र यद्वां बद्धस्त्मनि खादति क्षां ॥ ४ ॥
उपऽस्तुतिः । औचथ्यं । उरुष्येत् । मा । मां । इमे इति । पतत्रिणी इति । वि । दुग्धां ।
मा । मां । एधः । दशऽतयः । चितः । धाक् । प्र । यत् । वां । बद्धः । त्मनि । खादति । क्षां ॥ ४ ॥

अत्राख्यानमाहुः । जराजर्झरितगात्रं जात्यंधं दीर्घतमसं मामतेयं वरिवसितुमशक्नुवानाः स्वगर्भदासा अग्नौ प्रदाहाय प्रचिक्षिपुः । तत्र क्षिप्तोऽश्विनावस्तावीत् । तौ चैनमरक्षतां । ततोऽप्यम्रियमाणमुदकेष्वपातयन् । तत्र निमग्नः पुनरश्विनौ तुष्टाव । तुष्टौ संतौ तौ जलादुदहार्ष्टां । एवमवध्यं तं त्रैतनो नामकः कश्चिद्दासोऽस्य शिरो वक्षश्च व्यतक्षत् । ततोऽप्यपालयतामिति । तदिदमृग्द्वयाभ्यामुच्यते । हे अश्विनौ युवयोरनु बुद्ध्योपेत्य क्रियमाणा स्तुतिरौचथ्यमुचथस्य पुत्रं दीर्घतमसं मामुरुष्येत् । रक्षेदिहाहाद्युपद्रवात् । उरुष्यती रक्षाकर्मेति यास्कः । नि॰ ५. २३. । एवं सामान्येनोक्त्वा विशेषेण प्रत्युपद्रवपरिहारं प्रार्थयते । इमे प्रसिद्धे पतत्रिणी पतनशीले पुनरावर्तनशीले अहोरात्रे मां मा वि दुग्धां । विशेषेण दोहगतसारं मा कार्ष्टां । प्राणनिर्गमनानुकूल्यं मा कुरुतामित्यर्थः । किंच मां दशतयो दशवारश्चितः संचितः संपादित एधः प्रज्वालितेंधनसंघो मा धाक् । मा धाक्षीत् ॥ दहतेर्लुङि सिचि हलंतलक्षणा वृद्धिः । बहुलं छंदसीतीडभावः । [illegible]ादिसंयोगांतलोपौ ॥ दुःसहदुःखप्राप्तिं दर्शयति । यद्यस्माद्वां युवयोः संबंध्ययं जनो बद्धः पाशैर्गाढं वेष्टितः सन् त्मन्या-

त्मन्यात्मना स्वां भूमिं खादति भक्षयति । गंतुमशक्तः सन् भूमौ परिलुठतीत्यर्थः । तस्मादुपस्तुतिरौचथ्यमुरुष्येदिति ॥

अस्याः पंचम्या विनियोगमाह शौनकः । आततायिनमायांतं दृष्ट्वा व्याघ्रमथो वृकं । न मा गरन्निति जपंस्तेभ्य एव प्रमुच्यते । त्रिरात्रोपोषितो रात्रौ जपेद्वा सूर्यदर्शनात् । आप्लुत्य प्रयतः सूर्यमुपतिष्ठेद्दिवाकरं । पश्यंति तस्करा नैनं तथान्ये पापबुद्धयः । एकः शतानि चायेत तस्करेभ्यस्त्वरन्पथि । ऋग्वि० १. २५. । इति ॥

न मा गरन्नद्यो मातृतमा दासा यदीं सुसमुब्धमवाधुः ।
शिरो यदस्य त्रैतनो वितक्षत्स्वयं दास उरो अंसावपि ग्ध ॥ ५ ॥
न । मा । गरन् । नद्यः । मातृऽतमाः । दासाः । यत् । ईं । सुऽसंमुब्धं । अवऽअधुः ।
शिरः । यत् । अस्य । त्रैतनः । विऽतक्षत् । स्वयं । दासः । उरः । अंसौ । अपि । ग्धेति ग्ध ॥ ५ ॥

नद्यो नदनशीला मातृतमा मातृवज्जगतां हितकारिण्य आपो मा मां दीर्घतमसं गरन् । न गिरेयुः । निमग्नं मा कुर्युः ॥ गॄ निगरणे । लेटि व्यत्ययेन शप् ॥ गिरणप्राप्तिं दर्शयति । यद्यस्माद्दासा अस्मदुपक्षपयितारो मदीयगर्भदासा ईमेनं दीर्घतमसं मां सुसमुब्धं सुष्ठु संकुचितसर्वांगं ॥ स्वती पूजायां । पा० २. २. १८.* । इति प्रादिसमासेऽव्ययपूर्वपदप्रकृतिस्वरत्वं ॥ अवाधुः अवाङ्मुखमपातयन् । किंचास्य मम शिरः स त्रैतन एतन्नामको दासोऽत्यंतनिर्घृणः सन् यद्यस्माद्वितक्षत् विविधं तष्टवान् तस्मात्स दासः स्वयं स्वकीयमेव शिरस्तक्षतु । न केवलं शिर एव अपि तु मदीयमुरो वक्षःस्थलमंसौ च ग्ध । हतवान् । विदारितवानित्यर्थः ॥ हंतेर्लुङि च्छांदसमेतद्रूपं ॥ ततः स्वकीयमुरोंऽसावपि स्वशस्त्रेणैव तथा कृतवान् । तद्युवयोर्माहात्म्यमिति भावः ॥

दीर्घतमा मामतेयो जुजुर्वान्दशमे युगे ।
अपामर्थं यतीनां ब्रह्मा भवति सारथिः ॥ ६ ॥
दीर्घऽतमाः । मामतेयः । जुजुर्वान् । दशमे । युगे ।
अपां । अर्थं । यतीनां । ब्रह्मा । भवति । सारथिः ॥ ६ ॥

दीर्घतमा एतन्नामा महर्षिः स च मामतेयो ममतायाः पुत्रो दशमे युगे दशयुगपर्यंतं महानुभावयोरश्विनोः प्रभावात्पूर्वोक्ताद्दुःखादिमुक्तोऽत्यंतसुखी स्वपुत्रभार्यादिभिः सहितो जीवितवान् । दशमे युगेऽतीते सति जुजुर्वाञ्जीर्णो वलीपलितगात्रो बभूव । एवंभूतः सन्नर्थं पुरुषैरर्थ्यमानं कर्मफलं स्वर्गादिकं यतीनां प्राप्नुवतीनामपामप्कार्याणां प्रजानां । यद्वा । अपामपसां कर्मणामर्थं प्रयोजनं यतीनां तासां प्रजानां । ब्रह्मा ब्रह्मसदृशः परिवृढो भवति । किंच सारथिः तद्वन्निर्वाहको भवति । देवो भवतीत्यर्थः । एवमस्य वृत्तांतं मंत्रोऽनुवदति । स्वयं वा स्वात्मानं [illegible] प्रकटयितुं ब्रवीति ॥ ॥ १ ॥

प्र द्यावेति पंचर्चं तृतीयं सूक्तं दैर्घतमसं जागतं द्यावापृथिव्यं । अनुक्रांतं च । प्र द्यावा पंच द्यावापृथिव्यं तु जागतं त्विति ॥ अग्निष्टोमे पृष्ठ्यस्य षष्ठेऽहनि च [illegible]वैश्वदेवशस्त्रे [illegible]नेविद्धानमेतत्सूक्तं । तथा च सूत्रं । प्र द्यावेति दैर्घतमसं । आ० ५. १८. । इति ॥ आद्या द्यावापृथिव्ये पशौ हविषो याज्या । तथा च सूत्रितं । प्र द्यावा यज्ञैः पृथिवी ऋतावृधा मृळा नो रुद्रोत नो मयस्कृधीति द्वे । आ० ३. ८. । इति ॥

प्र द्यावा यज्ञैः पृथिवी ऋतावृधा मही स्तुषे विदथेषु प्रचेतसा ।
देवेभिर्ये देवपुत्रे सुदंससेत्था धिया वार्याणि प्रभूषतः ॥ १ ॥

प्र । द्यावा॑ । य॒ज्ञैः । पृ॒थि॒वी इति॑ । ऋ॒त॒ऽवृधा॑ । म॒ही इति॑ । स्तु॒षे । वि॒दथे॑षु । प्रऽचे॑तसा ।
दे॒वेभिः॑ । ये इति॑ । दे॒वपु॑त्रे॒ इति॑ दे॒वऽपु॑त्रे । सु॒ऽदंस॑सा । इ॒त्था । धि॒या । वार्या॑णि ।
प्र॒ऽभूष॑तः ॥ १ ॥

द्यावा पृथिवी द्यावापृथिव्यौ ॥ दिवो द्यावेति द्यावादेश आद्युदात्तः । पृथिवीशब्दो ङीषंतोऽंतोदात्तः । देवताद्वंद्वे चेत्युभयपदप्रकृतिस्वरत्वं । समासमध्ये पदांतरपाठश्छांदसः ॥ अहं यजमानो यज्ञैर्यागैस्तत्प्रदाने-निमित्तभूतैर्हविष्प्रदानार्थं प्र स्तुषे । प्रकर्षेण स्तौमि ॥ पुरुषव्यत्ययः ॥ कीदृश्यौ ते । ऋतावृधा यज्ञस्य वर्धयित्र्यौ मही महत्यौ विदथेषु यागेषु प्रचेतसा प्रकर्षेणास्मांश्चेतयित्र्यौ अस्माभिश्चेतयितव्ये वा । ईदृश्यौ स्तुषे । अनयोः कोऽतिशय इति उच्यते । ये द्यावापृथिव्यौ देवेभिर्यजमानैर्देवपुत्रे देवा यजमानाः पुत्रस्थानीयाः शुश्रूषका ययोस्ते तादृश्यौ । यद्वा । देवेभिर्विशिष्टे सुदंससा । दंस इति कर्मनाम । शोभनकर्मोपेते इत्था सत्यं । इत्थेति सत्यनाम सचेत्येति तन्नामसु पाठात् । सत्यं धियास्मदनुग्रहबुद्ध्या वार्याणि वरणीयानि धनान्यस्मभ्यं प्रभूषतः अलंकुरुतः । दत्त इत्यर्थः । यद्वा । वार्याणि हवींषि धिया कर्मणा निमित्तेन कर्मसमाप्त्यर्थं प्रभूषतः प्रकर्षेण स्वीकुरुतः ॥

उ॒त म॑न्ये पि॒तुर॒द्रुहो॒ मनो॑ मा॒तुर्महि॒ स्वत॑व॒स्तद्धवी॑मभिः ।
सु॒रेत॑सा पि॒तरा॑ भूम॑ चक्रतुरु॒रु प्र॒जाया॑ अ॒मृतं॒ वरी॑मभिः ॥ २ ॥
उ॒त । म॒न्ये॒ । पि॒तुः । अ॒द्रुहः॑ । मनः॑ । मा॒तुः । महि॑ । स्वऽत॑वः । तत् । हवी॑मऽभिः ।
सु॒ऽरेत॑सा । पि॒तरा॑ । भूम॑ । च॒क्र॒तुः॒ । उ॒रु । प्र॒ऽजायाः॑ । अ॒मृतं॑ । वरी॑मऽभिः ॥ २ ॥

उतापि च पितुः पितृस्थानीयायाः पात्र्या अद्रुहोऽद्रोग्धुः । न हि कदाचित्पिता स्वपुत्रादये द्रुह्यति । तादृश्याः पृथिव्याः स्वतवः स्वायत्तं बलं स्वयमेवास्मदनुग्रहाय त्वरमाणं अत एव महि महत् तत्तादृशमनुग्रहयुक्तं मनश्चित्तं हवीमभिर्हवनैराह्वानैर्मन्ये । जानामि । प्रसादयामीत्यर्थः । यद्वा । तत्तादृशमुक्तलक्षणं मनो हवीमभिर्हवनैर्महि मन्ये । अतिमहत्प्रवृद्धं मन्ये । तथा मातुः सर्वस्योत्पादयितुरंतरिक्षस्य द्युलोकस्य । मातांतरिक्षं निर्मीयंतेऽस्मिन्भूतानि । नि॰ २. ८. । इति निरुक्तं । यद्वा । पितुर्द्युलोकस्य मातुर्भूम्याः । द्यौर्वः पिता पृथिवी माता । ऋ॰ १. १९१. ६. । इति श्रुतेः । तत्तादृशमुक्तलक्षणं मनो मन्ये । द्यावापृथिव्योर्मनोऽस्मदाह्वानैः प्रीणयामीत्यर्थः । किंच पितरा माता च पिता च पितरौ द्यावापृथिव्यौ सुरेतसा शोभनसामर्थ्येन प्रजाया यजमानादिरूपाया वरीमभिर्वरिष्ठै रक्षणविशेषैर्भूम बहुतरमुरु विस्तीर्णममृतममरणभूतमभिलषितं चक्रतुः । कुरुतः ॥

ते सू॒नवः॒ स्वप॑सः सु॒दंस॑सो म॒ही ज॑ज्ञुर्मा॒तरा॑ पूर्व॒चित्त॑ये ।
स्था॒तुश्च॑ स॒त्यं जग॑तश्च॒ धर्म॑णि पु॒त्रस्य॒ पाथः॒ प॒दमद्व॑याविनः ॥ ३ ॥
ते । सू॒नवः॑ । सु॒ऽअप॑सः । सु॒ऽदंस॑सः । म॒ही इति॑ । ज॒ज्ञुः॒ । मा॒तरा॑ । पू॒र्व॒ऽचित्त॑ये ।
स्था॒तुः । च॒ । स॒त्यं । जग॑तः । च॒ । धर्म॑णि । पु॒त्रस्य॑ । पा॒थः॒ । प॒दं । अद्व॑याविनः ॥ ३ ॥

ते प्रसिद्धाः सूनवो युवाभ्यामुत्पन्नाः पुत्रस्थानीयाः प्रजाः स्वपसः शोभनकर्माणः सुदंससः शोभनदर्शना युवां मही महत्यौ मातरा मातृवद्धितकारिण्यौ जज्ञुः । जानंति । महानुभावतामवगच्छंति । किमर्थं । पूर्वचित्तये प्रथमबुद्धयेऽनुग्रहरूपायै । किंच ते द्यावापृथिव्यौ स्थातुः स्थावरस्य जगतो जंगमस्य पुत्रस्य पुत्रस्थानीयस्योभयविधस्य जगतोऽद्वयाविनो न विद्यते द्वयं यस्य तादृशस्य । स्वजीवनाय युष्मद्व्यतिरिक्तमजानत इत्यर्थः । ईदृशस्य धर्मणि धारणे रक्षणे निमित्तभूते सति पदं स्थानं सत्यमबाध्यं पाथः । रक्षथः । दत्थ इत्यर्थः । यद्वा । ते प्रसिद्धाः सूनव उत्पाद्यमानाः स्वपसः शोभनप्रकाशादिकर्माणः सुदंससः शोभनदर्शनाः

सुष्ठूपचयंतो वात्मानं स्वव्यापाराय ईदृशा रश्मयो मही महत्यौ द्यावापृथिव्यौ पूर्वचित्तये प्राणिनां पूर्वज्ञानाय जज्ञुः। जातवंतः। द्यावापृथिव्योरंतराले व्याप्ता इत्यर्थः। किंच स्थातुर्जगतश्च धर्मणि धारणे तदर्थमद्वयाविनो मार्गद्वयरहितस्य ॥ बहुलं छंदसीति द्वयशब्दान्मत्वर्थीयो विनिः। अन्येषामपि दृश्यत इति दीर्घः ॥ पुत्रस्य युष्मत्पुत्रस्थानीयस्यादित्यस्य पदं मार्गं सत्यं पाथः। अवश्यं रक्षथः ॥

ते मा॒यिनो॑ ममिरे सु॒प्रचे॑तसो जा॒मी सयो॑नी मिथु॒ना समो॑कसा।
नव्यं॑नव्यं॒ तंतु॒मा तं॑न्वते दि॒वि स॑मु॒द्रे अं॒तः क॒वयः॑ सु॒दी॒तयः॑ ॥४॥
ते। मा॒यिनः॑। म॒मि॒रे॒। सु॒ऽप्रचे॑तसः। जा॒मी इति॑। सयो॑नी॒ इति॒ सऽयो॑नी।
मि॒थु॒ना। सम्ऽओ॑कसा।
नव्यं॑ऽनव्यं। तंतुं॑। आ। त॒न्व॒ते॒। दि॒वि। स॒मु॒द्रे। अं॒तरिति॑। क॒वयः॑। सु॒ऽदी॒तयः॑ ॥४॥

ते प्रसिद्धे द्यावापृथिव्यौ मायिनः। माया प्रज्ञा। स्वविषयप्रज्ञावंतः प्रज्ञोपलक्षितकर्मवंतो वा सुप्रचेतसः सुष्ठु प्रकर्षेण चेतितुं शक्ता रश्मयो ममिरे। मिमते। प्रमाणेन परिच्छिंदंति। कीदृश्यौ ते। जामी परस्परं भगिनी। एतत्कुत इति चेत् उच्यते। सयोनी समानोत्पत्तिस्थाने मिथुना प्राण्युत्पत्तये मिथुनभूते। परस्परमवियुक्ते इत्यर्थः। समोकसा समानस्थाने। द्युपृथिव्योरेकस्मिन्नेवावकाशरूप आकाशेऽवस्थानात्। समोचीनस्थाने वा। किंच कवयो मेधाविनः स्वव्यापारविषयज्ञानवंतः सुदीतयः सुष्ठुद्योतना रश्मयो दिवि द्योतमाने समुद्रेऽंतरिक्षेऽंतर्मध्ये। समुद्रशब्दोऽंतरिक्षनामसु पाठात्तद्वचनः। स चैवं यास्केन निरुक्तः। समुद्रः कस्मात्समुद्द्रवंत्यस्मादापः समभिद्रवंत्येनमापः संमोदंतेऽस्मिन्भूतानि समुदको भवति समुनत्तीति वा। नि॰ २. १०.। इति। नव्यं नव्यं तंतुं तननीयं विस्तारणीयं। जात्येकवचनं। रश्मीना तन्वते। समंताद्विस्तारयंति ॥

तद्राधो॑ अ॒द्य स॑वि॒तुर्वरे॑ण्यं व॒यं दे॒वस्य॑ प्रस॒वे मं॑नामहे।
अ॒स्मभ्यं॑ द्यावापृथिवी सुचे॒तुना॑ र॒यिं ध॑त्तं वसु॑मंतं शत॒ग्विनं॑ ॥५॥
तत्। राधः॑। अ॒द्य। स॒वि॒तुः। वरे॑ण्यं। व॒यं। दे॒वस्य॑। प्र॒ऽस॒वे। म॒ना॒म॒हे॒।
अ॒स्मभ्यं॑। द्या॒वा॒पृ॒थि॒वी॒ इति॑। सु॒ऽचे॒तुना॑। र॒यिं। ध॒त्तं॒। वसु॑ऽमंतं। श॒त॒ऽग्विनं॑ ॥५॥

वयं यजमानाः सवितुः सर्वस्य प्रसवितुर्देवस्यादित्यस्यांतर्यामिरूपिणः प्रसवेऽनुज्ञायां सत्यां तत्तादृशं वरेण्यं वरणीयं राधः पुरुषार्थसाधनसमर्थं गवादि धनं मनामहे। याचामहे ॥ मन्यतिर्याञ्चाकर्मा। छांदसः शप् ॥ यद्वा। पुनःपुनरभ्यस्यामः। लप्स्यामहीति यावत् ॥ म्ना अभ्यासे। व्यत्ययेनात्मनेपदं। शपि पाघ्रादिना मनादेशः ॥ किंचास्मभ्यं द्यावापृथिवी द्यावापृथिव्यौ सुचेतुना शोभनचेतनेनास्मदनुग्रहबुद्ध्या रयिं धनं धत्तं। दत्तं। कीदृशं। वसुमंतं निवासयोग्यगृहादिविशिष्टं शतग्विनं शतसंख्याकगवादिविशिष्टं ॥ ॥२॥

ते हीति पंचर्चं चतुर्थं सूक्तं दैर्घतमसं जागतं द्यावापृथिव्यं। ते हीत्यनुक्रांतं ॥ चतुर्विंशेऽहनि वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानमेतत्सूक्तं ते हि द्यावापृथिवी यज्ञस्य वो रथ्यमिति वैश्वदेवं। आ॰ ७. ४.। इति सूचितत्वात् ॥ तथा पृष्ठ्याभिप्लवषडहयोर्द्वितीयेऽहनि वैश्वदेवे द्यावापृथिव्यं निविद्धानीयं चातुर्विंशिकं तृतीयसवनं। आ॰ ७. ६.। इत्याभिप्लविके द्वितीयेऽहन्यतिदिष्टत्वात्। आभिप्लविकाद्वितीयादह्नः पृष्ठ्यस्य द्वितीयेऽहन्येतत्सूक्तमतिदेशतः प्राप्तं पृष्ठ्यस्याभिप्लवेनोक्ते अहनी आद्ये आद्याभ्यां। आ॰ ७. १०.। इति सूचितत्वात् ॥ प्रथमाश्विनशस्त्रे विनियुक्तां। संस्थितेष्वाश्विनायेत्यत्र सूचितं। ते हि द्यावापृथिवी विश्वशंभुवा विश्वस्य देवीमृचयस्य। आ॰ ६. ५.। इति ॥

ते हि द्यावापृथिवी विश्वशंभुव ऋतावरी रजसो धारयत्कवी ।
सुजन्मनी धिषणे अंतरीयते देवो देवी धर्मणा सूर्यः शुचिः ॥ १ ॥
ते इति । हि । द्यावापृथिवी इति । विश्वऽशंभुवा । ऋतवरी इत्यृतऽवरी । रजसः ।
धारयत्कवी इति धारयत्ऽकवी ।
सुजन्मनी इति सुऽजन्मनी । धिषणे इति । अंतः । ईयते । देवः । देवी इति ।
धर्मणा । सूर्यः । शुचिः ॥ १ ॥

ते हि ते खलु प्रसिद्धे द्यावापृथिवी अंतस्तयोरंतराले शुचिः शुद्धो विश्वस्य शोचयिता वा देवो दीप्यमानः सूर्यो धर्मणा प्रकाशोदकदानादिधारणेन युक्तः सन्नीयते । सर्वदा गच्छति ॥ ईङ् गतौ दैवादिकः ॥ तादृशं कर्म युवयोरनुग्रहादिति स्तुतिः । कीदृश्यौ ते । विश्वशंभुवा । विश्वं सुखभावयितृ ययोस्ते विश्वशंभुवा । विश्वस्य सुखयित्र्यावित्यर्थः । ऋतावरी ऋतवत्यौ ॥ ऋतशब्दाच्छंदसीवनिपाविति वनिप् । वनो र चेति ङीब्रेफौ ॥ रजस उदकस्योदकोत्पत्तौ । उदकं रज उच्यत इति निरुक्तं ।४. १९.। धारयत्कवी धारकं कविं ययोस्ते तादृश्यौ । उदकोत्पादनायाप्रयत्नवत्यावित्यर्थः । यद्वा । धारयत्कविर्मनोष्यादित्यो ययोस्ते तादृश्यौ । वृष्ट्युदकधारयत्सूर्योपेते इत्यर्थः । सुजन्मनी शोभनजन्मवत्यौ धिषणे धर्षणोपेते । स्वव्यापारेषु प्रगल्भे इत्यर्थः । देवी द्योतमाने । अत्र यद्यपि धिषणे इत्येतत् धिषणे रोदसी इति तन्नामसूक्तत्वाद्द्यावापृथिवीनाम तथापि द्यावापृथिवी इत्यस्य विद्यमानत्वाद्यौगिकं द्रष्टव्यं ॥

उरुव्यचसा महिनी असश्चता पिता माता च भुवनानि रक्षतः ।
सुधृष्टमे वपुष्ये३ न रोदसी पिता यत्सीमभि रूपैरवासयत् ॥ २ ॥
उरुऽव्यचसा । महिनी इति । असश्चता । पिता । माता । च । भुवनानि । रक्षतः ।
सुधृष्टमे इति सुऽधृष्टमे । वपुष्ये३ इति । न । रोदसी इति । पिता । यत् । सीं । अभि ।
रूपैः । अवासयत् ॥ २ ॥

उरुव्यचसा प्रभूतव्यचनवत्यावतिविस्तीर्णे महिनी अत एव महत्यौ असश्चतासज्यमाने । परस्परवियुक्ते इत्यर्थः । पिता पालयित्री द्यौः माता निर्मात्री पृथिवी चेत्युभे भुवनानि भूतजातानि रक्षतः । पालयतः । द्यौष्पितः पृथिवि मातः । ऋ० ६. ५१. ५.। इत्यादिश्रुतेर्मातापितृरूपत्वं । किंच सुधृष्टमे अतिशयेन धृष्टे ॥ छांदसस्तकारलोपः ॥ प्रगल्भे रोदसी द्यावापृथिव्यौ वपुष्ये न वपुषो हिते इव । प्राणिनां पितराविव शरीररचके इत्यर्थः । तदेवोपपादयति । यद्यस्मात्सीं सर्वतः पिता पितृस्थानीया द्यौ रूपैर्निरूपणसाधनैः प्रशस्तैः प्रकाशैर्निरूप्यमाणै ध्यादिभिर्वाभ्यवासयत् अभिवासयति अधितिष्ठति तस्मात्पिता माता च भुवनानि रक्षतः ॥

स वह्निः पुत्रः पित्रोः पवित्रवान्पुनाति धीरो भुवनानि मायया ।
धेनुं च पृश्निं वृषभं सुरेतसं विश्वाहा शुक्रं पयो अस्य दुक्षत ॥ ३ ॥
सः । वह्निः । पुत्रः । पित्रोः । पवित्रऽवान् । पुनाति । धीरः । भुवनानि । मायया ।
धेनुं । च । पृश्निं । वृषभं । सुऽरेतसं । विश्वाहा । शुक्रं । पयः । अस्य । धुक्षत ॥ ३ ॥

पित्रोर्मातापित्रोर्द्यावा॰ थिव्योः ॥ पिता माचेति पिता शिष्यते । उदात्तयण इति पितुर्विभक्तिरुदात्ता ॥

पुत्रः पुत्रत्राता पुत्रस्थानीय आदित्यः पवित्रवान् पावनरश्मियुक्तो धीरो धीमान् स वह्निः फलस्य वोढा धारकः स्वमायया प्रज्ञया स्वकीयया भुवनानि भूतजातानि पुनाति । पावयति । प्रकाशयतीत्यर्थः । किंच स एव पुत्र पृश्निं शुक्लवर्णां धेनुं प्रीणयित्रीं भूमिं सुरेतसं शोभनसामर्थ्यं शोभनोदकं वा वृषभं सेक्तारं द्युलोकं च मायया पुनाति । प्रकाशयतीत्यर्थः । कदा । विश्वाहा सर्वाण्यहानि । सर्वकालमित्यर्थः । किंचास्य द्युलोकस्य । यद्वा ॥ कर्मणि षष्ठी ॥ इमं द्युलोकं । शुक्रं पयो दीप्तं पयःसदृशमुदकं धुक्षत । दोग्धि ॥ दुहेश्छांदसे लुङि शल इगुपधादनिटः क्स इति च्लेः क्सादेशः ॥ ईदृशो महानुभाव आदित्यस्तयोः पुत्र इति द्यावापृथिव्योः स्तुतिः ॥

अयं देवानामपसामपस्तमो यो जजान रोदसी विश्वशंभुवा ।
वि यो ममे रजसी सुक्रतूययाजरेभिः स्कंभनेभिः समानृचे ॥४॥
अयं । देवानां । अपसां । अपःऽतमः । यः । जजान । रोदसी इति । विश्वऽशंभुवा ।
वि । यः । ममे । रजसी इति । सुक्रतुऽयया । अजरेभिः । स्कंभनेभिः । सं । आनृचे ॥४॥

पूर्वं पुत्रमाहात्म्येनैते प्रशस्येदानीं स्वोत्पादकस्तुत्या प्रशंसति । अयं देवानां मध्ये देवतमोऽपसामपस्तमः । अप इति कर्मनाम । तेन तद्वान् लक्ष्यते । कर्मवतां मध्ये प्रकृष्टकर्मा । अयमित्युक्तं क इत्याह । यो देवो विश्वशंभुवा सर्वप्रकारेण भूतानां सुखस्य भावयित्र्यौ रोदसी द्यावापृथिव्यौ महानुभावे जजान उत्पादितवान् । न केवलमुत्पादनमात्रं अपि तु यो देवो रजसी रंजनात्मिके द्यावापृथिव्यौ । रजसी इति द्यावापृथिव्योर्नाम रजसी सदसी इति तन्नामसु पाठात् । उक्तरूपे वि ममे विशेषेण परिच्छिनत्ति । किं स्वोपभोगाय नेत्याह । सुक्रतूयया शोभनकर्मेच्छया । येन कर्मणा प्राणिनां सुखं संभवति तादृक्कर्मेच्छया । अथवैतदुत्तरत्र संबध्यते । सुक्रतूययोक्तेन निमित्तेनेमे [illegible]रेभिरजीर्णैर्दृढतरैः स्कंभनैर्गतिप्रतिबंधसाधनैः शंकुभिः समानृचे । सम्यक् सर्वतः पूजितवान् । स्थापितवानित्यर्थः ॥ ऋच स्तुतौ । लिटि रेफसामान्याद्धि-[illegible]ल्यमस्तीति तस्मात्नुड्द्विहल इत्यभ्यासस्य नुट् ॥ यस्मादेवं तस्मादयमेव देवोऽयमेवापस्तम इत्येवंमहानुभावेन परमेश्वरेणोत्पन्ने इति स्तुतिः ॥

ते नो गृणाने महिनी महि श्रवः क्षत्रं द्यावापृथिवी धासथो बृहत् ।
येनाभि कृष्टीस्ततनाम विश्वहा पनाय्यमोजो अस्मे समिन्वतं ॥५॥
ते इति । नः । गृणाने इति । महिनी इति । महि । श्रवः । क्षत्रं । द्यावापृथिवी इति । धासथः । बृहत् ।
येन । अभि । कृष्टीः । ततनाम । विश्वहा । पनाय्यं । ओजः । अस्मे इति । सं । इन्वतं ॥५॥

ते प्रसिद्धे हे द्यावापृथिवी द्यावापृथिव्यौ गृणाने अस्माभिः स्तूयमाने सत्यौ ॥ कर्मणि कर्तृप्रत्ययः ॥ महि महदतिप्रभूतं श्रवः सर्वत्र प्रसिद्धमन्नं सर्वत्र श्रूयमाणां कीर्तिं वा नोऽस्मभ्यं धासथः । धत्तं ॥ दधातेर्लेट्यडागमः । सिब्बहुलमिति सिप् ॥ तथा बृहदतिप्रभूतं चत्रं बलं धासथः । तदेव विशिष्यते । येनान्नबलेन विश्वहा सर्वेष्वप्यहःसु कृष्टीः पुत्रादिरूपाः प्रजा अभि ततनाम अभितो विस्तारयाम ॥ तनोतेर्लोटि छांदसो विकरणस्य लुः । आडुत्तमस्येत्याडागमः । तस्य छंदस्युभयथेत्यार्धधातुकत्वादभ्यस्तायुदात्तत्वाभावे धातुस्वरः ॥ कृष्टय इति मनुष्यनाम कृष्टयश्चर्षणय इति तन्नामसु पाठात् । किंच पनाय्यं स्तुत्यमोजः शरी[illegible] अस्मासु सम्यगिन्वतं । व्याप्नुतं । प्रवर्धयतमित्यर्थः । इन्वतिर्व्याप्तिवचनः इन्वति ननक्षेति तन्नामसु पाठात् ॥ ॥३॥

किमु श्रेष्ठ इति चतुर्दशर्चं पंचमं सूक्तं दैर्घतमसमार्भवं । अंत्या त्रिष्टुप् शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः । अनुक्रांतं च । किमु श्रेष्ठः षळूनार्भवं त्रिष्टुबंतमिति ॥ व्यूळ्हे दशरात्रे षष्ठेऽहनि वैश्वदेवशस्त्र आर्भवं निविद्धानं

द्विप्रतीकं। तत्र किमु श्रेष्ठ इत्येतदंत्यवर्जं प्रतीकं। व्यूळ्हश्चेदिति खंडे सूचितं। किमु श्रेष्ठ उप नो वाजा इति त्रयोदशार्धर्चं चतस्रश्च। आ॰ ८. ८.। इति ॥

किमु॒ श्रेष्ठः॒ किं यवि॑ष्ठो न॒ आज॑ग॒न्किमी॑यते दू॒त्यं१॒॑ कद्यदू॑चि॒म।
न निं॑दिम चम॒सं यो म॑हाकु॒लोऽग्ने॑ भ्रात॒र्द्रुण॒ इद्भू॒तिमू॑दिम ॥१॥

किं। ऊं इति॑। श्रेष्ठः॑। किं। यवि॑ष्ठः। नः॒। आ। अ॒ज॒ग॒न्। किं। ई॒य॒ते॒। दू॒त्यं॑। कत्। यत्। ऊ॒चि॒म।
न। निं॒दि॒म॒। च॒म॒सं। यः। म॒हा॒ऽकु॒लः। अग्ने॑। भ्रा॒त॒रिति॑। द्रुणः॑। इत्। भू॒तिं। ऊ॒दि॒म॒ ॥१॥

ऋभवो नाम सुधन्वनस्त्रयः पुत्रा ऋभुर्विभ्वा वाज इति। ते च मनुष्याः संतः सुकर्मणा देवत्वं प्राप्य कदाचित्कर्मकाले सोमपानाय प्रवृत्ताः। तान्प्रति देवैः प्रेरितोऽग्निः परस्परसमानरूपान्दृष्ट्वा स्वयमपि तदाकारं धृत्वा तेषु मध्ये स्वयं चतुर्थः सन् पातुं प्रवृत्तः। ते च ऋभव आगतं तं समानरूपमवलोक्य विवेक्तुमसमर्थाः परस्परमेवं संदिहते। अयं किमु श्रेष्ठः किं नु खल्वस्मत्तोऽयं प्रशस्यतमो वयसा श्रेष्ठः सोऽस्मानाजगन्। आगमत्। प्राप्तः॥ गमेर्लङि छांदसः शपः श्लुः। हल्ङ्यादिलोपे मो नो धातोरिति नत्वं। अजगन्निति गतिकर्मा [illegible] तन्नामसु पाठात्॥ किं यविष्ठः किं वास्माकं युवतमोऽस्मत्तः कनीयानाजगन्। प्राप्तः। किं वा दूत्यं दूतकर्म देवसंबंधीयते। गच्छति। देवैः प्रेरितो दूतोऽस्मानागतो वा॥ दूतस्य भागकर्मणी इति यत्॥ यदूचिम यदेतद्ब्रूमः तत्कत्। कथं निश्चेतव्यमित्यर्थः। वयं तावत्त्रय एवेदानीं चत्वारः समानरूपा वर्तामहे तस्मादयमधिकः किमु श्रेष्ठ इति विचिकित्सा। एवं संदिह्य कथंचित्त्वत्तोऽन्यं निश्चित्य तं प्रत्यापरोक्ष्येण ब्रुवते। हे अग्ने भ्रातर्भ्रातृवद्भागार्ह। भ्राता यथा बलात्स्वकीयभागं स्वीकरोति तद्वत् समानरूपमाश्रित्य बलाच्चमसपानाय प्रवृत्त इति भ्रातरित्युक्तं। हे तादृशाग्ने चमसं न निंदिम। अधिकः समागत इति पानमकृत्वा चमसं न दूषयामः॥ णिदि कुत्सायां। छंदसि वेति वक्तव्यमिति द्विर्वचनाभावः॥ अदूष्यत्वे कारणमाह। यश्चमसो महाकुलः महाकुलोत्पन्नः त्वष्ट्रा निर्मितत्वात्। वक्ष्यति च त्वष्टा मास्त्वंतर्ध्यानश्च इति। अतः कारणात् द्रुणः। विकारे [illegible]। ततस्तत्स्थे तच्छब्दः। इच्छब्दोऽवधारणे। दारुविकारचमसस्य भूतिं प्राप्तिमूदिम। ब्रूमः॥ विदेश्छांदसे लिटि वचिस्वपीति संप्रसारणं। क्रादिनियमादिट्॥

एकं॑ चम॒सं च॒तुरः॑ कृणोतन॒ तद्वो॑ दे॒वा अ॑ब्रुव॒न्तद्व॒ आग॑मं।
सौध॑न्वना॒ यद्ये॒वा क॑रि॒ष्यथ॑ सा॒कं दे॒वैर्य॒ज्ञिया॑सो भविष्यथ ॥२॥

एकं॑। च॒म॒सं। च॒तुरः॑। कृ॒णो॒त॒न॒। तत्। वः॒। दे॒वाः। अ॒ब्रु॒व॒न्। तत्। वः॒। आ। अ॒ग॒मं॒।
सौध॑न्वनाः। यदि॑। ए॒व। क॒रि॒ष्यथ॑। सा॒कं। दे॒वैः। य॒ज्ञिया॑सः। भ॒वि॒ष्य॒थ॒ ॥२॥

एवं पृष्टोऽग्निस्तान्प्रत्युवाच। हे सौधन्वनाः सुधन्वनः पुत्राः यूयमेकं चमसं त्वष्ट्रा संपादितं पूर्वमेकमेव संतं चमसं चतुरः कृणोतन। चतुःसंख्याकान्कुरुत॥ चतुरः शसीत्यंतोदात्तत्वं। पूर्ववत्तनप्॥ [illegible] ज्येष्ठ आह चमसा द्वा करेतीत्युपक्रम्य कनिष्ठ आह चतुरस्करेतीति चतुष्कं निर्धारितं। ऋ॰ ४. ३३. ५.। न केवलमहमेव ब्रवीमि किंतु वो युष्मान्प्रति तदुक्तं चतुर्धाकरणरूपं कर्मांतरं च वक्ष्यमाणमश्वरथादिकरणरूपं च कर्म देवा इंद्रादयोऽब्रुवन्। देवत्वप्राप्त्युपायत्वेन तत्तादृशं कर्म वो युष्माकं वक्तुमहमागमं। प्राप्तोऽस्मि। यस्मादेवं तस्माद्यूयं यद्येवा करिष्यथ यद्येवं मदुक्तप्रकारेण कर्तुं शक्नुथ तथा चेद्देवैः साकं सह यज्ञियासो भविष्यथ। इति तैरुक्तमित्यर्थः॥

अ॒ग्निं दू॒तं प्रति॒ यदब्र॑वीत॒नाश्वः॒ कर्त्वो॒ रथ॑ उ॒तेह कर्त्वः॑।
धे॒नुः कर्त्वा॑ युव॒शा कर्त्वा॒ द्वा तानि॑ भ्रात॒रनु॑ वः [illegible]त्व्येम॑सि ॥३॥

अ॒ग्निं । दू॒तं । प्रति॑ । यत् । अब्र॑वीतन । अश्वः॑ । कर्त्वः॑ । रथः॑ । उ॒त । इ॒ह । कर्त्वः॑ ।
धे॒नुः । कर्त्वा॑ । यु॒व॒शा । कर्त्वा॑ । द्वा । तानि॑ । भ्रा॒तः॒ । अनु॑ । वः॒ । कृ॒त्वी । आ । इ॒म॒सि॒ ॥ ३ ॥

हे आगत देव अग्निमंगनादिगुणविशिष्टं दूतं दूतकर्म प्राप्तवंतं त्वां प्रति यत् यत्कार्यमब्रवीतन । अब्रुवन् ॥ व्यत्ययेन मध्यमः । पूर्ववत्तनप् ॥ किमिति अश्वः कर्त्वः । एकस्मादश्वादश्वांतरं कर्तव्यमित्यर्थः । अश्वादश्वमतक्षतेति वक्ष्यमाणत्वात् ॥ कृत्यार्थे तवैकेनिति त्वन्प्रत्ययः ॥ उतापि च रथः कर्त्वः कर्तव्यः । धेनुः कर्त्वा । चर्मरहिता मृता गौर्नित्यदोग्ध्री पुनर्नूतना कार्या । तदुक्तरत्र निश्चर्मणो गामरिणीत धीतिभिरिति वक्ष्यमाणत्वात् । तथा द्वा द्वौ पितरौ जीर्णौ संतौ पुनर्युवशा युवानौ शयानौ प्रकृष्टयौवनोपेतौ कर्त्वा कर्तव्यौ । हे भ्रातरग्ने युष्माकं देवानां तैरुक्तानि कर्माणि कृत्वानु पश्चात्कृत्वी कृत्वा कर्मणेमसि । एमः । आभिमुख्येन प्राप्नुमः ॥ इण् गतौ । इदंतो मसिः ॥ यद्वा । ऋषेरिदं वाक्यं । हे ऋभवः यूयमागतमग्निं दूतं प्रति यदब्रवीतन यत्कार्यं वक्ष्यमाणरूपं कर्तव्यत्वेन वदथ अंगीकुरुथ तानि सर्वाणि संपाद्य हे भ्रातरग्ने कृत्वा कर्मणेमसीति ब्रूथेत्यृषिराह ॥

च॒कृ॒वांस॑ ऋभव॒स्तद॑पृच्छत॒ क्वेद॑भू॒द्यः स्य दू॒तो न॒ आज॑गन् ।
य॒दा॒वाख्य॑च्चम॒साञ्च॒तुरः॑ कृ॒ताना॒दित्त्वष्टा॒ ग्नास्व॒न्तर्न्या॑नजे ॥ ४ ॥
च॒कृ॒ऽवांसः॑ । ऋ॒भ॒वः॒ । तत् । अ॒पृ॒च्छ॒त॒ । क्व॑ । इत् । अ॒भू॒त् । यः । स्यः । दू॒तः । नः॒ । आ । अज॑गन् ।
य॒दा । अ॒व॒ऽअख्य॑त् । च॒म॒सान् । च॒तुरः॑ । कृ॒तान् । आत् । इत् । त्वष्टा॑ । ग्नासु॑ । अ॒न्तः ।
नि । आ॒न॒जे॒ ॥ ४ ॥

हे ऋभवः तत्कार्यं यथा चकृवांसः कृतवंतो यूयमपृच्छत । प्रश्नं कुरुत ॥ करोतेर्लिटः क्वसुः ॥ अत्र यद्यप्यृभुरिति त्रयाणां मध्य एकस्य नाम तथापि तस्य प्राथम्याच्छत्रिणो गच्छंतीतिवत्सर्वेऽप्यृभव उच्यंते । किमिति । स्यः स दूतः क्वेदभूत् । कुत्र गतः । स इत्युक्तं क इत्याह । यः यो दूतो नोऽस्मानाजगन् आगमत् प्राप्तः । एवंभूते सति यदायं त्वष्टा चतुरः कृतांश्चमसानवाख्यत् अभिपश्यति ॥ ख्यातिर्लुङ्यस्यतिवक्तिख्यातीति च्लेरङादेशः ॥ आदिदनंतरमेव त्वष्टा तस्य चमसस्योत्पादक एतन्नामको देवो ग्नासु स्त्रीषु । मेना ग्ना इति स्त्रीणामिति निरुक्तं । ३. २१. । अंतर्मध्ये न्यानजे । न्यक्तोऽभूत् । स्त्रियमात्मानममन्यतेत्यर्थः ॥ अंजेर्लिटि तस्मान्नुड्द्विहल इति नुट् । छांदसोऽनुनासिकलोपः ॥

हना॑मैनाँ॒ इति॒ त्वष्टा॒ यदब्र॑वीच्चम॒सं ये दे॑व॒पान॒मनि॑न्दिषुः ।
अ॒न्या नामा॑नि कृण्वते सु॒ते सचाँ॑ अ॒न्यैरे॑नान्क॒न्या॒३ नाम॑भिः स्परत् ॥ ५ ॥
हना॑म । ए॒ना॒न् । इति॑ । त्वष्टा॑ । यत् । अब्र॑वीत् । च॒म॒सम् । ये । दे॒व॒ऽपान॑म् । अनि॑न्दिषुः ।
अ॒न्या । नामा॑नि । कृ॒ण्व॒ते॒ । सु॒ते । सचा॑ । अ॒न्यैः । ए॒ना॒न् । क॒न्या॑ । नाम॑ऽभिः । स्प॒र॒त् ॥ ५ ॥

एनान्वक्ष्यमाणान् हनामेति यद्यदाब्रवीत्त्वष्टा । पूजार्थे बहुवचनं । एतच्छब्दस्य प्रकृतपरामर्शकत्वादृभूणां प्रकृतत्वात् तेषां हननप्रसक्तिं दर्शयति । ये देवपानं देवैः पातव्यं चमसं य ऋभवोऽनिंदिषुः निंदामकुर्वन् । देवयोग्यं त्वाष्ट्रचमसं मनुष्या ऋभवः स्वीकृत्य चतुर्धा व्यभजन् तान् हनामेति यदाब्रवीदित्यर्थः । तदाप्रभृति मनुष्याः सुतेऽभिषुते सोमे पानाय प्रसुते सति सचा सह परस्परमन्या नामान्यन्यानि होत्रध्वर्यून्नात्रादीनि कृण्वते । कुर्वंति । पूर्वनाम प्रच्छाद्योपहवकालेऽध्वर्य उपह्वयस्व होतरुपह्वयस्वेत्येवमन्यैरेव नामभिरात्मानं त्वष्टृवधभीत्या प्रख्यापयंतीत्यर्थः । पूर्वमन्यानि कथं प्रसक्तानीत्यत आह । एनान्नरान् कन्या स्वोत्पादयित्री मातान्यैरेव नामभिः स्परत् । प्रीणयति ॥ स्पृ प्रीतिबलयोः । लेट्यडागमः ॥ ॥ ४ ॥

इंद्रो हरी युयुजे अश्विना रथं बृहस्पतिर्विश्वरूपामुपाजत ।
ऋभुर्विभ्वा वाजो देवाँ अगच्छत स्वपसो यज्ञियं भागमैतन ॥ ६ ॥
इंद्रः । हरी इति । युयुजे । अश्विना । रथं । बृहस्पतिः । विश्वऽरूपां । उप । आजत ।
ऋभुः । विऽभ्वा । वाजः । देवान् । अगच्छत । सुऽअपसः । यज्ञियं । भागं । ऐतन ॥ ६ ॥

पूर्वं स्रष्टानां क्रमेण विनियोगमाह । इंद्रो हरी युयुजे । एतन्नामानावश्वौ रथे योजितवान् । तथाश्विनाश्विनौ रथं योजितवंतौ । तथा बृहस्पतिर्बृहतो मंत्रस्य पालयितैतन्नामको देवो विश्वरूपां नानारूपोपेतां गामुपाजत । उपागमत् । [illegible]र्थः । यद्यप्यत्र गौरिति विशेषो न श्रुतः तथापि पूर्वं धेनुः कर्त्वेत्युक्तत्वात् पुरस्ताच्च ये धेनुं विश्वजुवं विश्वरूपां । ऋ० ४. ३३. ८. । इति वक्ष्यमाणत्वाच्च विश्वरूपा गौरित्येवाध्यवसीयते । अत एव [illegible] पंक्तिरिति केचन व्याचक्षते तदसत् । युष्मत्संपादितानि रथादीनींद्रादयः स्वभागत्वेनाकल्पयन् । तस्मादृभुर्विभ्वा वाजश्च यूयं देवानिंद्रादीनगच्छत । गत्वा च हे स्वपसः [illegible]तो यूयं यज्ञियं यज्ञार्हं यज्ञसंबंधिनं भागं सोमरूपं देवत्वं प्राप्तिः सेवनीयमैतन । प्राप्नुत । कर्मसामर्थ्येन हविर्भुजो भवतेत्यर्थः । इत्येवमृषिराह ॥

निश्चर्मणो गामरिणीत धीतिभिर्या जरंता युवशा ताकृणोतन ।
सौधन्वना अश्वादश्वमतक्षत युक्त्वा रथमुप देवाँ अयातन ॥ ७ ॥
निः । चर्मणः । गां । अरिणीत । धीतिऽभिः । या । जरंता । युवशा । ता । अकृणोतन ।
सौधन्वनाः । अश्वात् । अश्वं । अतक्षत । युक्त्वा । रथं । उप । देवान् । अयातन ॥ ७ ॥

हे सौधन्वनाः यूयं निश्चर्मणो मृताया गोः सकाशादुत्कृत्ताच्चर्मणो गां नूतनां निररिणीत । निरगमयत । उत्पादितवंत इत्यर्थः । तेनैव चर्मणा संवीतां तत्सदृशीमन्यां धेनुं कृतवंत इत्यर्थः । यद्यपि पूर्वमेवाश्वादीनां विनियोग उक्तः तथापि तेषामत्यंतदुःखसंपादत्वज्ञापनाय पुनराह । न केवलं गोकरणमेव अपि च या जरंता यौ जीर्णौ पितरौ ता तौ युवशा युवानावकृणोतन । अकुरुत । [illegible] विद्यमानेनाश्वेनाश्वांतरमतक्षत । प्रयत्नेन संपादितवंतः । यस्मादेवं कृतवंतस्तस्माद्रथं युष्मदीयं युक्त्वाश्वैर्योजयित्वा देवानिंद्रादीनु[illegible] । देवसमीपं प्राप्नुत ॥

इदमुदकं पिबतेत्यब्रवीतनेदं वा घा पिबता मुंजनेजनं ।
सौधन्वना यदि तन्नेव हर्यथ तृतीये घा सवने मादयाध्वै ॥ ८ ॥
इदं । उदकं । पिबत । इति । अब्रवीतन । इदं । वा । घ । पिबत । मुंजऽनेजनं ।
सौधन्वनाः । यदि । तत् । नऽइव । हर्यथ । तृतीये । घ । सवने । मादयाध्वै ॥ ८ ॥

इदानीमृ[illegible]र्थं तान्संबोध्य यूयमृभूनेवमुक्तवंतः स्थेत्यनुवाचयति । हे सौधन्वनाः सुधन्वनः पुत्राः यूयमिदमुदकं सोमलक्षणं पिबतेत्यब्रवीतन । इत्युक्तवंतः ॥ ब्रवीतेर्लङि मध्यमबहुवचनस्य तस्य तनबादेशे पित्त्वाद्ब्रुव ईट् । पा० ७. ३. ९३. ॥ एतत्प्रातःसवनिकाभिप्रायं । वाथवा । घेत्यनर्थकः प्रसिद्ध्यर्थो वा । इदं मुंजनेजनं । मुंजवान्नाम पर्वतः सोमोत्पत्तिस्थानं । तत आहृतत्वात्तेन मुंजतृणेन शोधितं । अपगततृणमित्यर्थः । इदं सोमरसरूपमुदकं पिबतेत्यब्रवीतन । एतन्माध्यंदिनसवनाभिप्रायं । हे ऋभवः यूयं तदुभयसवनसंबंधि सोमपानकार्यं नेव हर्यथ । नैव कामयथ । हर्यतिः कांतिकर्मा । हर्यत्युशिगिति तत्कर्मसु पाठात् । तृतीये सवने तु मादयाध्वै । अत्यर्थं तृप्ता भवथ । ऋभवो देवाः सोमस्य मत्सन्निति तृतीयसवने तेषां सोमपानसद्भावात् । एवं यूयमृभूनुक्तवंतः । अथवा ऋभून्प्रति तस्यैवेदं वाक्यं । हे सौधन्वनाः यूयं देवत्वं प्राप्य देवयजनं

प्रति सोमपानाय रथेनागत्य श्रांतानश्वान् प्रातःसवन इदमुदकं सोमलक्षणं पिबतेत्यब्रवीतन । तत्र यदि नेच्छथ इदं वा मुंजनेजनं मुंजेन दूषितं वाजिनं पिबतेत्यब्रवीतन पश्चात्तद्द्वयं यदि नैव हर्यथ हे अश्वाः यूयं तृतीये सवने मादयाध्वै । तत्रापि वाजिनप्रचारात् ॥

आपो भूयिष्ठा इत्येको अब्रवीदग्निर्भूयिष्ठ इत्यन्यो अब्रवीत् ।
वधर्यंतीं बहुभ्यः प्रैको अब्रवीदृता वदंतश्चमसाँ अपिंशत ॥९॥
आपः । भूयिष्ठाः । इति । एकः । अब्रवीत् । अग्निः । भूयिष्ठः । इति । अन्यः । अब्रवीत् ।
वधःऽयंतीं । बहुऽभ्यः । प्र । एकः । अब्रवीत् । ऋता । वदंतः । चमसान् । अपिंशत ॥९॥

चमसचतुर्धाकरणकाले किमिति सत्यं वदंतो व्यभजन्निति तदाह । एकस्त्रयाणामन्यतम आपो भूयिष्ठा इत्यब्रवीत् । न ह्युदकात्प्रशस्तं लोकोपकारकं तत्त्वांतरमस्ति । आपो भूयिष्ठा इत्यृतमवादीत् । अपामेव श्रेष्ठत्वमप एव ससर्जादौ । मनु० १. ८. । इत्यादिशास्त्रात् । तथान्योऽग्निर्भूयिष्ठ इत्यब्रवीत् । आंतरं बाह्यं च दाहपाकभुक्त[illegible]रिणाग्निरेव जग[illegible]ग्निरेव भू[illegible]मितीव मन्यते । तथा वधर्यंतीं । वधरिति रेफांतोऽपि वज्रनाम वधोऽर्क इति तन्नामसु पाठात् । तदिच्छति वृष्ट्युदकायेति वधर्यंती मेघपंक्तिरुच्यते । यद्यपीयं स्ववधार्थं वज्रं स्वयमेव नापेक्षते तथापि वृष्ट्यर्थमिंद्रवज्रेण हन्यमानत्वात् तदिच्छतीत्युपचर्यते । यद्वा । बहुभ्यस्तेषामर्थाय वधर्यंतीं वधमात्मन इच्छंतीं भूमिं ॥ छांदसो रेफोपजनः ॥ तामेवैको बहुभ्यः संवादिभ्यः श्रेष्ठतमामब्रवीत् । उदकस्यापि मेघकारणत्वात् । एवमृता ऋतान्युक्तरूपाणि यथार्थानि वाक्यानि वदंतः परस्परं ब्रुवंतश्चमसानपिंशत । अवयविनोऽकुरुत । चतुर्धा व्यभजतेत्यर्थः ॥ पिश अवयवे । शे मुचादीनामिति नुम् ॥ इदमेवर्तवदनमपेक्ष्यर्भुशब्दं व्याचक्षाणो यास्कः । ऋभव उरु भांतीति वर्तेन भांतीति वर्तेन भवंतीति वा । नि० ११. १५. । इत्युक्तत्वात् ॥

श्रोणामेक उदकं गामवाजति मांसमेकः पिंशति सूनयाभृतं ।
आ निम्रुचः शकृदेको अपाभरत्किं स्वित्पुत्रेभ्यः पितरा उपावतुः ॥१०॥
श्रोणां । एकः । उदकं । गां । अव । अजति । मांसं । एकः । पिंशति । सूनया । आऽभृतं ।
आ । निऽम्रुचः । शकृत् । एकः । अप । अभरत् । किं । स्वित् । पुत्रेभ्यः । पितरौ ।
उप । आवतुः ॥१०॥

अत्रर्भव [illegible]रूपेण स्थित्वा सर्वत्र यज्ञं निर्वहंतीत्याह । श्रोणां श्रोणं ॥ वा छंदसीति पररूपाभावः ॥ शोणवर्णमुदकं रुधिरमेक ऋभुषु मध्ये [illegible] । बाह्यभूमिं प्रति गमयति । रक्षोभागत्वेन स्थापयति । तथैको मांसं सूनया छेदनसाधनेन स्वधितिनाभृतं संपादितं पिंशति । हृदयजिह्वावक्षआद्याकारेणाहृतं संपादितं मांसं पिंशति । अव[illegible] । स्वधितिना तत्तदवयवान्विभजतीत्यर्थः । अथैको निम्रुचो निःशेषेण च्छिन्नान्मांसात् शकृत् कुक्षिस्थं जरत्तृणमूवध्यनामकमपाभरत् । अपाहरन्निरसनाय । [illegible]रूपेण स्थितेभ्यः पुत्रेभ्यः पुरुत्रातृभ्यः पुत्रस्थानीयेभ्य ऋभुभ्यः सर्वेष्वनुष्ठितेषु पितरा यज्ञस्य पालयितारौ जायापती किं स्विदुपावतुः । किं नु खलु प्राप्नुतः ॥ अवतेः प्राप्त्यर्थाच्छांदसो लिट् ॥ सर्वं तैरेवानुष्ठितमिति तयोर्न किंचित्कृत्यमस्तीत्यर्थः । अथवायमर्थः । एकस्तेषामन्यतमः श्रोणां पंगुकां गामुदकं प्रत्यवगमयति । अपरः सूनया मांसविक्रयिण्याभृतं संपादितं मांसं पिंशति । अपर आ निम्रुचोऽस्तमयादर्वागेव शकृन्नोपुरीषं हरति । एवमृभुभिरनुष्ठिते सति किं स्विदेतस्मात्परिचरणादन्यत्पुत्रेभ्यः सकाशादुपावतुः । उपगच्छेतामिति ॥ ॥५॥

उद्वत्स्वस्मा अकृणोतना तृणं निवत्स्वपः स्वपस्यया नरः ।
अगोह्यस्य यदसस्तना गृहे तदद्येदमृभवो नानु गच्छथ ॥११॥

उद्वत्ऽसु । अस्मै । अकृणोतन । तृणं । निवत्ऽसु । अपः । सुऽअपस्यया । नरः ।
अगोह्यस्य । यत् । असस्तन । गृहे । तत् । अद्य । इदं । ऋभवः । न । अनु । गच्छथ ॥११॥

पुराणप्रसिद्धान्सुधन्वनः पुत्रान् कर्मणा देवत्वं प्राप्तवत ऋभून् स्तुत्वा वेदप्रसिद्ध्या सूर्यरश्मिरूपानृभूनिदानीं स्तौति । तथा च यास्को निरुक्ते पुराणप्रक्रियासिद्धानृभून्बहुधा निरुच्य तदुदाहरणत्वेन विष्ट्वी शमीत्येतामृचमुदाहृत्यादित्यरश्मयोऽप्यृभव उच्यंत इत्युक्त्वा तस्मिन्नर्थ एतामृचमुदाजहार । नि० ११. १६. । हे ऋभव उरु प्रभूतं भासमानाः ऋतेनादित्येन भासमाना वा ऋतेनोदकेनोदकार्थमुत्पन्ना वा । रश्मीनामुरुभासमानत्वं प्रसिद्धं । तथादित्यादुत्पत्तिरपि । उदकार्थं भवनमपि रश्मीनां घर्मकाले भूमिगतं सारमादाय पुनर्वर्षकाले प्रवर्षंतीति प्रसिद्धं । आदित्याज्जायते वृष्टिरिति शास्त्रात् । तथाविधा नरः प्रकाशवृष्ट्युदकादेर्नेतारः यूयमुद्वत्सून्नतेषु प्रदेशेषु मेर्वादिषु तृणं व्रीहियवादिरूपमस्मै प्राणिजाताय तदुपकारार्थमकृणोतन । कृतवंतः स्थ ॥ उपसर्गाच्छंदसि धात्वर्थ इति वतिः ॥ तथा निवत्सु प्रवणदेशेष्वस्मा एवाप उदकान्यकृणोतन । अकुरुत । किं स्वभोगार्थं नेत्याह । स्वपस्यया शोभनकर्मेच्छया । शोभनं कर्मभिः कृतमिति यथा यजमानाः स्तुवंति तदिच्छयेत्यर्थः । किंच यूयमगोह्यस्याग्राह्यस्यादित्यस्य गृहे मंडले यद्यावत्कालमसस्तन सुप्तवंतः स्थ रात्रौ निर्व्यापारास्तिष्ठथ ॥ षस स्वप्ने । अस्माल्लङि पूर्ववत्तस्य तनबादेशः । अदादित्वाच्छपो लुक् ॥ तत्तावंतं कालमद्याहनीदमिदानीं नानु गच्छथ । अनुसृत्य न गच्छथ । यावंतं कालं रात्रौ सूर्ये निगूढा वर्तध्वे तावंतमेव कालमहन्यपि नानुगच्छथेत्यर्थः । यद्वा । अगोपनीयस्य तस्य गृहेऽंतरिक्षे यद्यावंतं कालमसस्तन वृष्टिमदत्त्वा स्वापमकुरुत तत्तावंतं कालमद्येदानीं वर्षसमय इदं सस्याभिवर्धनवृष्टिप्रवाहरूपं कर्म नानु गच्छथ । अनुसृत्य न प्राप्नुथ । यावंतं कालं विवर्षथ तावंतमेव कालं प्रवर्षथेत्यर्थः ॥

संमील्य यद्भुवना पर्यसर्पत क्व स्वित्तात्या पितरा व आसतुः ।
अशपत यः करस्नं व आददे यः प्राब्रवीत्प्रो तस्मा अब्रवीतन ॥१२॥
सम्ऽमील्य । यत् । भुवना । परिऽअसर्पत । क्व । स्वित् । तात्या । पितरा । वः । आसतुः ।
अशपत । यः । करस्नं । वः । आऽददे । यः । प्र । अब्रवीत् । प्रो इति । तस्मै ।
अब्रवीतन ॥१२॥

हे ऋभवो रश्मयः यूयं यद्यदा भुवना भूतजातानि संमील्य संमीलनं कृत्वा जल[illegible] पर्यसर्पत परितः सर्पणं कुरुथ । वर्षथेत्यर्थः । तात्या तातौ तायमाने वृष्ट्युदके । यद्वा । तात्या तासु वर्षासु ॥ छांदसस्त्यप्रत्ययो दकारस्यात्वं च ॥ अथवा पितृविशेषणं । तात्या तत्कालीनौ पितरा जगतः पालकौ सूर्याचंद्रमसौ क्व स्विदासतुः । कुत्र खलु तिष्ठतः ॥ अस्तेर्लिटि व्यत्ययेन भूभावाभावः । यद्वा । असतेर्गत्यर्थस्य [illegible] ॥ अहोरात्रविभागेन प्रवर्षयथेत्यर्थः । किंचेदृशान्वो युष्मान् यः कोऽपि वृष्टिप्रतिबंधकारी राक्षसादिः करस्नं । बाहुनामैतत् करस्नौ बाहू इत्युक्तत्वात् अत्र त्वकारांतं । युष्मदीयं हस्तमाददे गृह्णाति प्रतिरोधं करोति तमशपत । नाशयथ । यश्च प्राब्रवीत् प्रकर्षेण वाचा निरुद्धे तस्मै प्रो प्रैवाब्रवीतन । प्रकर्षेण भर्त्सनादिशब्दं कुरुथ । यद्वा । यो नूनं स्तौति तं प्रकर्षेण स्तुतेत्यर्थः ॥

सुषुप्वांस ऋभवस्तदपृच्छतागोह्य क इदं नो अबूबुधत् ।
श्वानं बस्तो बोधयितारमब्रवीत्संवत्सर इदमद्या व्यख्यत ॥१३॥
सुसुप्वांसः । ऋभवः । तत् । अपृच्छत । अगोह्य । कः । इदं । नः । अबूबुधत् ।
श्वानं । बस्तः । बोधयितारं । अब्रवीत् । संवत्सरे । इदं । अद्य । वि । अख्यत ॥१३॥

हे ऋभवो रश्म्यात्मकाः यूयं सुषुप्वांस आदित्यमंडले स्वपंतो वर्षणाय ॥ स्वपेर्लिटः क्वसुः ॥ तमादित्यं तद्वाक्यमपृच्छत । प्रश्नं कुरुथ । किं तदिति चेत् उच्यते । हे अगोह्य केनचिदगोपनीयादित्य स्वामिन् नोऽस्मदीयमिदं कर्म वर्षणरूपं कोऽबूबुधत् । बोधयति । प्रेरयति । साहाय्यं करोति ॥ बुधेर्ण्यंताल्लुङि चङि रूपं ॥ बस्तः सर्वस्य वासयितादित्यः ॥ वसेरौणादिकस्तप्रत्ययः । बवयोरभेदाद्बत्वं ॥ बोधयितारं प्रेरयितारं श्वानमब्रवीत् । अंतरिक्षे श्वसंतं वायुं प्रावादीत् । असौ युष्मान्प्रेरयतीति । अथ वायुसहायेन वर्षंतो यूयं संवत्सरे पूर्णेऽद्येदानीमिदं जगद्व्यख्यत । विविधं प्रकाशितवंतः । पूर्वं सूर्याचंद्रमसौ यथा न दृश्येते तथा वर्षित्वेदानीं वर्षकालेऽतीते विश्वं जगद्व्यक्तं कुरुथेत्यर्थः ॥ ख्यातेर्लुङ्यस्यतिवक्तिख्यातीत्यङ् ॥

दि॒वा या॑ंति म॒रुतो॒ भूम्या॒ग्निर॒यं वातो॑ अं॒तरि॑क्षेण याति ।
अ॒द्भिर्या॑ति॒ वरु॑णः समु॒द्रैर्यु॒ष्माँ इ॒च्छंत॑ः शवसो नपातः ॥ १४ ॥
दि॒वा । यां॑ति॒ । म॒रुत॑ः । भूम्या॑ । अ॒ग्निः । अ॒यं । वात॑ः । अं॒तरि॑क्षेण । या॒ति॒ ।
अ॒त्ऽभिः । या॒ति॒ । वरु॑णः । स॒मु॒द्रैः । यु॒ष्मान् । इ॒च्छंत॑ः । श॒व॒स॒ः । न॒पा॒त॒ः ॥ १४ ॥

हे शवसो वृष्टिकार्यस्य बलस्य नपातो नपातयितारः ऋभवः युष्मानिच्छंतो वृष्ट्यनुकूलचिकीर्षया युष्मानेवेच्छंतः सर्वे देवा आयांति । कस्मादिति तदुच्यते । मरुतो वृष्ट्यनुकूला देवा दिवा द्युलोकाद्यांति । आगच्छंति ॥ सावेकाच इति तृतीयाविभक्तेरुदात्तत्वं ॥ भूम्या भूमेः सकाशादग्निर्याति । आगच्छति । अयं वातः सर्वदा संचारी वायुरंतरिक्षेण याति । अंतरिक्षादायाति । तथा वरुण आवरको जलाभिमानी देवः समुद्रैः समुंदनस्वभावैरद्भिः ताभ्य आयाति । यद्वा । पूर्वं वृष्टिसाहाय्यायागता एते देवाः कृतकार्याः संतः पुनर्युष्मान्कामयमानाः स्वस्वदेशं प्रति यांतीत्यर्थः ॥ ॥ ६ ॥

मा नो मित्र इति द्वाविंशत्यृचं षष्ठं सूक्तं दैर्घतमसं । तृतीयाषष्ठ्यौ जगत्यौ । शिष्टास्त्रिष्टुभः । अश्वस्य स्तूयमानत्वात्तया तेनोच्यते सा देवतेति न्यायेनाश्वो देवता । अत्रानुक्रमणिका । मा नो द्वावि[illegible] तृतीयाषष्ठ्यौ जगत्याविति ॥ अश्वमेधस्य मध्यमेऽहन्यध्रिगुप्रैषेऽध्रिगो शमीध्वमिति शिष्टा षड्विंशतिरस्य वंक्रय इत्यस्मात्पुरस्तादेतत्सूक्तमावपेत् । त्रीणि सूत्यानि भवंतीति खंडे सूचितं । अध्रिगो शमीध्वमिति शिष्टा षड्विंशतिरस्य वंक्रय इति वा मा नो मित्र इत्यावपेत । आ० १०. ८. । इति ॥

मा नो॑ मि॒त्रो वरु॑णो अर्य॒मायुरिंद्र॑ ऋभु॒क्षा म॒रुत॒ः परि॑ ख्यन् ।
यद्वा॒जिनो॑ दे॒वजा॑तस्य॒ सप्ते॑ः प्रव॒क्ष्यामो॑ वि॒दथे॑ वी॒र्या॑णि ॥ १ ॥
मा । न॒ः । मि॒त्रः । वरु॑णः । अ॒र्य॒मा । आ॒युः । इंद्र॑ः । ऋ॒भु॒क्षाः । म॒रुत॑ः । परि॑ । ख्य॒न् ।
यत् । वा॒जिन॑ः । दे॒वऽजा॑तस्य । सप्ते॑ः । प्र॒ऽव॒क्ष्याम॑ः । वि॒दथे॑ । वी॒र्या॑णि ॥ १ ॥

नोऽस्मानश्वं स्तोतुं प्रवृत्तान्मित्रादयो देवा मा परि ख्यन् । परिख्यानं मा कुर्वंतु । परिख्यानं नाम निंदा । महानुभावं देवजातमश्वं तुच्छा नराः स्तुवंतीति मा कुर्वंतु ॥ ख्यातेर्माङि लुङ्यस्यतिवक्तीत्यादिना च्लेरङ् ॥ अहरभिमानी देवो मित्रो रात्र्यभिमानी वरुणः । अर्यमा तयोरंतरालाभिमान्यादित्यः । आयुः सततगंता वायुः ॥ वकारलोपो वा ॥ इंद्रः प्रसिद्धः । ऋभुक्षा देवानां निवासभूतः प्रजापतिः । यद्वा । एतन्महन्नामिंद्रविशेषणं ऋभुक्षा उक्षेति तन्नामसु पाठात् । निंदायाः प्रसक्तिं दर्शयति । यद्यस्माद्वाजिनो वेजनवतो बहन्नवती वा देवजातस्य ब[illegible]पेणोत्पन्नस्य । उषआदीनामस्य शिरआद्यवयवत्वादिति भावः । उषा वा अश्वस्य मेध्यस्य शिर इत्यादिश्रुतेः । यद्वा । देवेभ्यो जातस्य गंधर्वकुल उत्पन्नत्वात् । सप्तेः सर्पणशीलस्य । अश्वनामैतत् । एवंविधस्याश्वस्य महानुभावस्य वीर्याणि वीरकर्माणि सामर्थ्यानि विदथे वेदनसाधने यज्ञे प्रवक्ष्यामः प्रकर्षेण ब्रूमः । अतो मा परि ख्यन् प्रत्युतानुगृह्णंत्वित्यर्थः ॥

यन्निर्णिजा रेक्णसा प्रावृतस्य रातिं गृभीतां मुखतो नयंति ।
सुप्राङजो मेम्यद्विश्वरूप इंद्रापूष्णोः प्रियमप्येति पाथः ॥ २ ॥
यत् । निःऽनिजा । रेक्णसा । प्रावृतस्य । रातिं । गृभीतां । मुखतः । नयंति ।
सुऽप्राङ् । अजः । मेम्यत् । विश्वऽरूपः । इंद्रापूष्णोः । प्रियं । अपि । एति । पाथः ॥ २ ॥

यद्यस्मान्निर्णिजा । निर्णिगिति रूपनाम । रेक्णसा । रेक्ण इति धननाम । निर्णिग्वव्रिरिति रेक्णो रिक्थमिति च तन्नामसूक्तत्वात् ॥ उभयत्र मत्वर्थो लुप्यते ॥ रूपवता हिरण्यवताभरणेन प्रावृतस्य सर्वतो वेष्टितस्याश्वस्य मुखतः पुरस्ताद्गृभीतां गृहीतां रातिं दातव्यां दातव्यत्वेन गृहीतामजां नयंत्यृत्विजः । स तादृशोऽजः सुप्राङ् सुष्ठु प्रशस्यागमनो मेम्यद्भन्यमानः ॥ मीञ् हिंसायां । अस्माद्यंङ्लुगंतात्कर्मणि व्यत्ययेन शतृ ॥ यद्वा । तस्य शब्दानुकरणं मेमेशब्दं कुर्वन् । विश्वरूपो बहुवर्णोपेतः कृष्णग्रीवः कृष्णललामो वा । नैकवर्ण इत्यर्थः । एवंरूपोऽयमिंद्रापूष्णोः । इंद्रः प्रसिद्धः । पूषा पोषको देवोऽग्निः । तयोः प्रियं । आग्नेयः कृष्णग्रीव इत्युक्तत्वादग्नेः प्रियत्वं । सर्वेऽपींद्रस्येतींद्रप्रियत्वं । एवंरूपं पाथोऽन्नमप्येति । प्राप्नोतु ॥

एष छागः पुरो अश्वेन वाजिना पूष्णो भागो नीयते विश्वदेव्यः ।
अभिप्रियं यत्पुरोळाशमर्वता त्वष्टेदेनं सौश्रवसाय जिन्वति ॥ ३ ॥
एषः । छागः । पुरः । अश्वेन । वाजिना । पूष्णः । भागः । नीयते । विश्वऽदेव्यः ।
अभिऽप्रियं । यत् । पुरोळाशं । अर्वता । त्वष्टा । इत् । एनं । सौश्रवसाय । जिन्वति ॥ ३ ॥

एष छागः शृंगरहितोऽजोऽश्वेन वाजिना शीघ्रव्यापकेनाश्वेन सह पूष्णः पोषकस्याग्नेर्भागो भजनीयो विश्वदेव्यः सर्वदेवार्हः । अग्नेः सर्वदेवात्मकत्वात् तदर्हत्वेन सर्वदेवप्रियत्वं । एवंविधोऽजः पुरः पुरस्तान्नीयते । प्राप्यते । यद्यस्मादेवं क्रियते तस्मात्प्रियं प्रीणयितारं पुरोडाशं पुरस्ताद्दातव्यमेनमजं त्वष्टा सर्वस्योत्पादको देवः । त्वष्टा रूपाणि विकरोतीति श्रुतेः । तूर्णव्यापकोऽग्निर्वा । उभे त्वष्टुर्बिभ्यतुरित्युक्तत्वात् अहोरात्रे इति वारणी इति वेति यास्केनारणी बिभ्यतुरित्युक्तत्वात् । नि० ८. १५. । अरणिसंबंधोऽग्नेरेवेति गम्यते । अर्वतारणवताश्वेन सह सौश्रवसाय देवानां शोभनान्ननिमित्तमभि जिन्वति । प्रीतिहेतुकं करोति ॥

यद्धविष्यमृतुशो देवयानं त्रिर्मानुषाः पर्यश्वं नयंति ।
अत्रा पूष्णः प्रथमो भाग एति यज्ञं देवेभ्यः प्रतिवेदयन्नजः ॥ ४ ॥
यत् । हविष्यं । ऋतुऽशः । देवऽयानं । त्रिः । मानुषाः । परि । अश्वं । नयंति ।
अत्र । पूष्णः । प्रथमः । भागः । एति । यज्ञं । देवेभ्यः । प्रतिऽवेदयन् । अजः ॥ ४ ॥

हविष्यं हविर्योग्यं देवयानं देवानां प्रापणीयमश्वं यद्यदा मानुषा ऋत्विज ऋतुश ऋतावृतौ काले काले त्रिः परि णयंति । पर्यग्निकुर्वंतीत्यर्थः । अत्रास्मिन्समये ॥ ऋचि तुनुघेति दीर्घः ॥ पूष्णः पोषकस्याग्नेर्भागोऽजः प्रथम एति । पुरोगामी सन् गच्छति । किं कुर्वन् । यज्ञं देवेभ्यः प्रतिवेदयन् प्रख्यापयन् ॥

होताध्वर्युरावया अग्निमिंधो ग्रावग्राभ उत शंस्ता सुविप्रः ।
तेन यज्ञेन स्वरंकृतेन स्विष्टेन वक्षणा आ पृणध्वं ॥ ५ ॥
होता । अध्वर्युः । आऽवयाः । अग्निंऽइंधः । ग्रावऽग्राभः । उत । शंस्ता । सुऽविप्रः ।
तेन । यज्ञेन । सुऽअरंकृतेन । सुऽइष्टेन । वक्षणाः । आ । पृणध्वं ॥ ५ ॥

होता देवानामाह्वातैतन्नामक ऋत्विक् अध्वर्युरध्वरयुरध्वरस्य नेता सोऽप्यावया आभिमुख्येन हविषां गमयिता। अध्वर्योर्विशेषणमेतत् ॥ आङ्पूर्वाद्वेतेरसुन्। पूर्वपदप्रकृतिस्वरत्वं च ॥ यद्वा। आभिमुख्येनावयष्टा [illegible]ते ॥ अवे यजः। पा० ३. २. ७२.। इति ण्विन्। अवाप्योरुपसर्गयोरित्यल्लोपः ॥ अग्निमिंधोऽमीत् ॥ भ्राष्ट्राग्न्योरिंधे। पा० ६. ३. ७०. ६.। इति मुम् ॥ ग्रावग्राभः। ग्राव्णः स्तुत्या गृह्णातीति ग्रावस्तुत् ॥ कर्मण्यण् ॥ उतापि च शंस्ता प्रशास्ता। सुविप्र इति मेधाविनाम। शोभनमेधोपेतो ब्रह्मोच्यते। ब्रह्मा त्वो वदति जातविद्यामित्यत्र ब्रह्मैको जाते जाते विद्यां वदति ब्रह्मा सर्वविद्यः सर्वं वेदितुमर्हति। नि० १. ८.। इत्युक्तत्वाद्ब्रह्मैव सुविप्रशब्देनाभिधेयः। स चानुक्तर्त्विगुपलक्षकः। एते सर्वे तेन प्रसिद्धेन स्वरंकृतेन सुष्ठुरणीयं कृतेन स्वलंकृतेन वोच्चारसौष्ठवादिना सुष्ठु संपादितेन स्विष्टेन सुष्ठिष्टेन यज्ञेन वक्षणा अभितो घृतकुल्यादीन् प्रवहणस्वभावाः प्रसिद्धा नदीर्वा पृणध्वं। सर्वतः पूरयत। यज्ञं सम्यग्निर्वर्त्य फलं साधयतेत्यर्थः ॥ ॥ ७ ॥

यूपव्रस्का उत ये यूंपवाहाश्चषालं ये अंश्वयूपाय तक्षंति ।
ये चार्वते पचनं संभरंत्युतो तेषामभिगूर्तिर्न इन्वतु ॥ ६ ॥
यूपऽव्रस्काः । उत । ये । यूपऽवाहाः । चषालं । ये । अश्वऽयूपाय । तक्षंति ।
ये । च । अर्वते । पचनं । संऽभरंति । उतो इति । तेषां । अभिऽगूर्तिः । नः । इन्वतु ॥ ६ ॥

यूपव्रस्का यूपार्हवृक्षस्य व्रश्चनकर्तारश्छेत्तारः। उत ये च यूपवाहाश्छिन्नस्य वोढारः। ये च चषालं। यूपस्योपरिस्थाप्यं यूपाग्रभागं चषालमाहुः। तद्येऽश्वयूपायाश्वबंधनयूपाय तक्षति ॥ तक्षतीति वचनव्यत्ययः ॥ साधु संपादयंति। ये चार्वतेऽरणवतेऽश्वाय पचनं पाकसाधनं काष्ठभांडादिकं संभरंति। उतो अपि च नोऽस्मत्संबंधिनां तेषामृत्विजामभिगूर्तिः संकल्पः सर्वथा करणीयमिति बुद्धिरिन्वतु। व्याप्नोतु ॥ इन्वतिर्व्याप्तिवचनः इन्वति नक्षतीति तद्वचनेषु पाठात् ॥ यद्वा। तेषामभिगूर्तिर्नोऽस्मानिन्वतु। यागं साधुपारं प्रापय्य फलेन योजयत्वित्यर्थः ॥

उप प्रागात्सुमन्मेऽधायि मन्म देवानामाशा उप वीतपृष्ठः ।
अन्वेनं विप्रा ऋषयो मदंति देवानां पुष्टे चकृमा सुबंधुं ॥ ७ ॥
उप । प्र । अगात् । सुऽमत् । मे । अधायि । मन्म । देवानां । आशाः । उप । वीतऽपृष्ठः ।
अनु । एनं । विप्राः । ऋषयः । मदंति । देवानां । पुष्टे । चकृम । सुऽबंधुं ॥ ७ ॥

मन्म मननीयं फलं सुमदुप प्रागात्। उपप्रैतु। सुमत्स्वयमित्यर्थः। नि० ६. २२.। इति यास्कः। यद्वा। स्वयमेव [illegible] मय्यधायि। धीयते। फलभूतोऽश्व आगतः स च मया धृत इत्यर्थः। किमर्थं। वीतपृष्ठः साधुपोषणेन प्राप्तपश्चाद्भागः कांतपृष्ठो वा। अत्यंतं दृप्त इत्यर्थः। तादृशोऽयं देवानामाशाः पूरयितुमुप गच्छतु। [illegible]गार्थमागतमेनं सुबंधुं शोभनबंधनमश्वं देवानामाशास्यमानानां पुष्टे पोषणाय चकृम। कुर्मः। तं च विप्रा मेधाविन ऋत्विज ऋषयोऽतींद्रियद्रष्टारोऽन्ये वा विप्रा ऋषयश्चानु मदंति। अनुमोदंतां। सम्यक् कृतमिति परितुष्यंतु ॥

यद्वाजिनो दाम संदानमर्वतो या शीर्षण्या रशना रज्जुरस्य ।
यद्वा घास्य प्रभृतमास्ये३ तृणं सर्वा ता ते अपि देवेष्वस्तु ॥ ८ ॥
यत् । वाजिनः । दाम । संऽदानं । अर्वतः । या । शीर्षण्या । रशना । रज्जुः । अस्य ।
यत् । वा । घ । अस्य । प्रऽभृतं । आस्ये । तृणं । सर्वा । ता । ते । अपि । देवेषु । अस्तु ॥ ८ ॥

वाजिनो गमनवतोऽश्वस्य यद्दाम ग्रीवाबद्धा रज्जुः। यच्च संदानं सम्यगवच्छेदकं बंधकं पादबंधनं दामास्ति। या चास्य शीर्षण्या शिरसि बद्धा खलीनरज्जुरस्ति ॥ शिरःशब्दाच्चवे छंदसीति यत्। ये च तद्धिते ।पा० ६. १. ६१.। इति शीर्षन्भावः। तित्स्वरितः ॥ यद्वा घास्यास्यास्ये मुखे प्रभृतं प्रहृतं प्रक्षिप्तं तृणमस्ति। घशब्दो ह्यर्थे स च प्रसिद्ध्यर्थः। सर्वा सर्वाणि ता तानि सर्वाण्यपि हे अश्व ते तव संबंधीनि देवेष्वस्तु। संतु। देवेषु मध्ये भवंतु। देवत्वं प्राप्नुवंतु वा ॥ वचनव्यत्ययः ॥ अत्रोपयुक्तानां सर्वेषां देवत्वं किल अश्वस्य तत्प्राप्तिर्नाशासनीया ॥

यदश्व॑स्य क्र॒विषो॒ मक्षि॒काश॒ यद्वा॒ स्वरौ॒ स्वधि॑तौ रि॒प्तमस्ति॑।
यद्धस्त॑योः शमि॒तुर्यन्न॒खेषु॒ सर्वा॒ ता ते॒ अपि॑ दे॒वेष्व॑स्तु ॥९॥
यत्। अश्व॑स्य। क्र॒विषः॑। मक्षि॑का। आश॑। यत्। वा॒। स्वरौ॑। स्वऽधि॑तौ। रि॒प्तं। अस्ति॑।
यत्। हस्त॑योः। श॒मि॒तुः। यत्। न॒खेषु॑। सर्वा॑। ता। ते॒। अपि॑। दे॒वेषु॑। अ॒स्तु॒ ॥९॥

अश्वस्य तदवयवभूतस्य क्रविष आममांसस्य यत् यदंगं मक्षिकाश अभक्षयत् ॥ अश भोजने ॥ यद्वा ॥ कर्मणि षष्ठी ॥ अश्वस्य यन्मांसं भक्षयति। वाथवा स्वरौ पश्वंजनकाले यद्रिप्तं लिप्तमस्ति। स्वरुणा पशुमनक्तीति श्रुतिः। अथवा स्वधितौ छेदनकाले चावदानकाले यद्रिप्तमस्ति शमितुर्हस्तयोर्लिप्तमस्ति। विशसनकाले यच्च नखेषु लिप्तं। ता सर्वा तानि सर्वाणि हे अश्व ते तव संबंधीनि देवेष्वस्तु। देवेषु संतोषार्थाय भवंतु ॥

यदूव॑ध्यमु॒दर॑स्यापवाति॒ य आ॒मस्य॑ क्र॒विषो॑ ग॒न्धो अस्ति॑।
सु॒कृ॒ता तच्छ॑मि॒तारः॑ कृण्वन्तू॒त मेधं॑ शृत॒पाकं॑ पचन्तु ॥१०॥
यत्। ऊव॑ध्यं। उ॒दर॑स्य। अ॒प॒ऽवाति॑। यः। आ॒मस्य॑। क्र॒विषः॑। ग॒न्धः। अस्ति॑।
सु॒ऽकृ॒ता। तत्। श॒मि॒तारः॑। कृ॒ण्व॒न्तु॒। उ॒त। मेधं॑। शृ॒त॒ऽपाकं॑। प॒च॒न्तु॒ ॥१०॥

उदरस्य संबंधि यदूवध्यमीषज्जीर्णं तृणं पुरीषमपवाति अपगच्छति। यश्चामस्यापक्वस्य क्रविषो मांसस्य गंधोऽस्ति लेशोऽस्ति। पाकस्य समये यत्किंचिदूवध्यमपक्वस्य च लेशोऽस्ति आमगंधोऽस्ति। तत्सर्वं शमितारो विशसनकर्तारः सुकृता कृण्वंतु। सुकृतमुक्तदोषरहितं कुर्वंतु। उतापि च मेधं मेध्यं यज्ञार्हं पश्ववयवं शृतपाकं देवयोग्यपाकोपेतं यथा भवति तथा पचंतु। [illegible]मीषत्पक्वं च मा [illegible]॥ ॥८॥

यत्ते॒ गात्रा॑द॒ग्निना॑ प॒च्यमा॑नाद॒भि शूलं॒ निह॑तस्याव॒धाव॑ति।
मा तद्भूम्या॒मा श्रि॑ष॒न्मा तृणे॑षु दे॒वेभ्य॒स्तदु॒शद्भ्यो॑ रा॒तम॑स्तु ॥११॥
यत्। ते॒। गात्रा॑त्। अ॒ग्निना॑। प॒च्यमा॑नात्। अ॒भि। शूलं॑। निऽह॑तस्य। अ॒व॒ऽधाव॑ति।
मा। तत्। भूम्यां॑। आ। श्रि॒ष॒त्। मा। तृणे॑षु। दे॒वेभ्यः॑। तत्। उ॒श॒त्ऽभ्यः॑। रा॒तं। अ॒स्तु॒ ॥११॥

हे अश्व ते तवाग्निना पच्यमानाद्गात्राद्यद्रूपं रसो वा यत्किंचिदवधावति। तथा निहतस्य निःशेषेण हतस्य तव यदंगं रसरूपं शूलमभिलक्ष्यावधावति निर्गच्छति। तत् तदंगं भूम्यां मा श्रिषत्। आश्लिष्टं मा भूत् ॥ श्रिषः पुषादित्वादङ् ॥ पाकसमये तथा मा तृणेषु विशसनसमये दर्भेषु मापगच्छतु। तर्हि तत्पतितं कुत्र गच्छत्विति चेत् उच्यते। तत्तादृशमुशद्भ्यः कृत्स्नं हविः कामयमानेभ्यो देवेभ्यो रातं दत्तमस्तु ॥

ये वा॒जिनं॑ परि॒पश्य॑न्ति प॒क्वं य ई॑मा॒हुः सु॑र॒भिर्निर्ह॒रेति॑।
ये चार्व॑तो मां॒सभि॒क्षामु॒पास॑त उ॒तो तेषा॑म॒भिगू॑र्तिर्न इन्वतु ॥१२॥

ये। वाजिनं। परिऽपश्यंति। पक्वं। ये। ईं। आहुः। सुरभिः। निः। हर। इति।
ये। च। अर्वतः। मांसऽभिक्षां। उपऽआसते। उतो इति। तेषां। अभिऽगूर्तिः।
नः। इन्वतु ॥१२॥

ये पक्वं वाजिनमश्वमश्वावयवं परिपश्यंति परितः पावनबुद्ध्येक्षंते। य ईं ये चैनं सुरभिः शोभनगंधोऽतो निर्हर किंचिदप्यस्मभ्यं देहीत्याहुः। यद्वा। निःशेषेण देवेभ्यो हरेत्याहुः। यतः सुरभिः अतो देवयोग्यमिति। किंच ये चार्वतो मांसभिक्षामुपासते ये नरा अस्यार्वतोऽश्वस्य हुतशिष्टमांसयाचनामुपासते कांक्षंते। उतो अपि च तेषामुक्तविधानामभिगूर्तिरभित उद्यमनं नोऽस्मानिन्वतु। व्याप्नोतु। यथास्माभिरश्व उपालब्ध एवं स्पृहयंति तथा यज्ञो निर्वाहयत्वित्यर्थः॥ यद्वा। मंत्रो देवपरो व्याख्येयः। ये देवा वाजिनं पक्वं परिपश्यंति कदा होष्यतीति विलंबं दृष्ट्वा ये च सुरभिरीमेनं निर्हर निःशेषेणास्मभ्यं देहीत्याहुः ये चार्वतोऽश्वस्य मांसभिक्षामुपासते तेषामभिगूर्तिर्न इन्वतु। तेषामुद्यमः सफलो भवत्वित्यर्थः॥

यन्नीक्षणं मांस्पचन्या उखाया या पात्राणि यूष्ण आसेचनानि।
ऊष्मण्यापिधाना चरूणामंकाः सूनाः परि भूषंत्यश्वं ॥१३॥
यत्। निऽईक्षणं। मांस्पचन्याः। उखायाः। या। पात्राणि। यूष्णः। आऽसेचनानि।
ऊष्मण्या। अपिऽधाना। चरूणां। अंकाः। सूनाः। परि। भूषंति। अश्वं ॥१३॥

मांस्पचन्या मांसपचन्याः॥ पचतेरधिकरणे ल्युट्। मांसस्य पचि युड्घञोः। का॰ ६.१.१४४.। इत्यंतलोपः॥ उखायाः स्थाल्या नीक्षणं पाकपरीक्षासाधनं काष्ठं तथा या यानि पात्राणि यूष्णो रसस्य क्वथितस्यासिचना-न्यासेचनसाधनानि तथोष्मण्योष्मनिवारणार्हाणि पात्राणि तथा चरूणां पात्राणां मां[illegible]पिधाना-पिधानानि तत्साधनानि तथांका हृदयाद्यवयवांकनसाधना वेतसशाखाः सूना अवदानसाधनाः स्वधि-त्यादय एतमश्वमश्वावयवं परि भूषंति। परितो भूषयंति। स्वस्वव्यापारेण साधयंतीत्यर्थः॥ भूष अलंकारे। भौवादिकः॥

निक्रमणं निषदनं विवर्तनं यच्च पड्बीशमर्वतः।
यच्च पपौ यच्च घासिं जघास सर्वा ता ते अपि देवेष्वस्तु ॥१४॥
निऽक्रमणं। निऽसदनं। विऽवर्तनं। यत्। च। पड्बीशं। अर्वतः।
यत्। च। पपौ। यत्। च। घासिं। जघास। सर्वा। ता। ते। अपि। देवेषु। अस्तु ॥१४॥

यन्निक्रमणं। नितरां क्रमते यत्र तन्निक्रमणं स्थानं। नितरां सीदत्यत्रेति निषदनं। विवर्तनं विविधवर्त-नमितस्ततो लुंठनं यत्र तत्॥ सर्वत्राधिकरणे ल्युट्॥ यच्चार्वतोऽश्वस्य पड्बीशं पादबंधनं। यद्वा। बंधनं पद् तद्वान्प्रदेशः। अत्र सर्वत्र देवार्थस्याश्वस्य रोमादीनामपि निरर्थकत्वाभावाय तत्स्थानमपि स्वीक्रियते। यद्वा। क्रियापरावगंतव्या। आलंभसमये निग्रहेण या निक्रमणाद्यश्चेष्टाः संति ता इत्यर्थः। यच्च पपौ यदुदकम-पिबत्। यच्च घासिमदनीयं तृणादिकं जघास अभक्षयत्। हे अश्व ते तव ता तानि सर्वाणि निक्रमणादीनि देवेष्वस्तु। संतु। देवेषु व्याप्नोतु। तान्यपि निरर्थकानि मा भूवन्नित्यर्थः॥

मा त्वाग्निर्ध्वनयीद्धूमगंधिर्मोखा भ्राजंत्यभि विक्त जघ्रिः।
इष्टं वीतमभिगूर्तं वषट्कृतं तं देवासः प्रति गृभ्णंत्यश्वं ॥१५॥

मा। त्वा। अग्निः। ध्वनयीत्। धूमऽगंधिः। मा। उखा। भ्राजंती। अभि। विक्त। जघ्रिः।
इष्टं। वीतं। अभिऽगूर्तं। वषट्ऽकृतं। तं। देवासः। प्रति। गृभ्णंति। अश्वं ॥१५॥

हे अश्व त्वा त्वां धूमगंधिर्धूमेन व्याप्तोऽग्निर्मा ध्वनयीत्। मा ध्वनयत्। धूमं दृष्ट्वा शब्दं मा कुर्वित्यर्थः। अश्वस्य शब्दने प्रायश्चित्तविधानात्। यद्वा। हे पच्यमानाश्वावयव त्वा त्वां धूमगंधिरग्निर्मा ध्वनयीत्। ध्वनौ सति भांडभंगः स्यात् ॥ नोनयतीत्यादिना चङ्प्रतिषेधः। पा० ३. १. ५१.। ह्म्यंतक्षणेति वृद्ध्यभावः ॥ किंच भ्राजंत्यत्यंताग्निसंयोगेन दीप्तोखा स्थाली माभि विक्त। अभितो मा चीचलत्। तापातिशयेन मा नीनशदित्यर्थः ॥ ओविजी भयचलनयोः। छांदसो विकरणस्य लुक्। लुङि वा झलो झलीति सलोपः ॥ स्थाली विशेष्यते। जघ्रिर्जिघ्रती तापेन ॥ घ्रा गंधोपादाने। आदृगमहनेति किन्प्रत्ययः ॥ तं तादृशमश्वमिष्टं होतुमिषितं वीतं होमायानीतमभिगूर्तमाभिमुख्येन प्रदानायोद्यतं। यद्वा। इष्टं प्रयाजैराप्रीतं वीतं पर्यग्निकृतमभिगूर्तं ये यजामह इत्यागूर्युक्तं। वषट्कृतं वषट्कारेण देवसंस्कृत एवंभूतं तं देवासो देवाः प्रति गृभ्णंति। प्रतिगृह्णंति ॥ ॥९॥

यदश्वाय वास उपस्तृणंत्यधीवासं या हिरण्यान्यस्मै।
संदानमर्वंतं पड्बीशं प्रिया देवेष्वा यामयंति ॥१६॥
यत्। अश्वाय। वासः। उपऽस्तृणंति। अधीवासं। या। हिरण्यानि। अस्मै।
संऽदानं। अर्वंतं। पड्बीशं। प्रिया। देवेषु। आ। यमयंति ॥१६॥

अश्वाय संज्ञप्यमानायाधीवासमुपर्याच्छादनयोग्यं यद्वास उपस्तृणंति सर्वत आच्छादयंति ॥ स्तृञ् आच्छादने क्र्यादिकः ॥ तथास्मा अश्वाय या यानि हिरण्यानि सौवर्णराजतकांस्यानि कल्पयंति। तथार्वंतं ॥ षष्ठ्यर्थे द्वितीया ॥ अर्वतोऽश्वस्य संदानं शिरोबंधनं पड्बीशं पादेषु प्रविष्टं पादबंधनं। एतानि प्रिया देवानां प्रियतराणि चात्वाले बद्ध्वा स्थापितानि देवेष्वा यामयंति। प्रापयंति ॥

यत्ते सादे महसा शूकृतस्य पार्ष्ण्या वा कशया वा तुतोद।
स्रुचेव ता हविषो अध्वरेषु सर्वा ता ते ब्रह्मणा सूदयामि ॥१७॥
यत्। ते। सादे। महसा। शूकृतस्य। पार्ष्ण्या। वा। कशया। वा। तुतोद।
स्रुचाऽइव। ता। हविषः। अध्वरेषु। सर्वा। ता। ते। ब्रह्मणा। सूदयामि ॥१७॥

महसा बलेन शूकृतस्य। शब्दानुकरणमेतत्। शूत्कारं कुर्वतस्ते तव सादे सदनेऽगमने निमित्तभूते सति ॥ सदेर्भावे घञ्। कर्षात्वत इत्यंतोदात्तत्वं ॥ अर्थतो गमनं कुर्वञ्शूत्कारं कुर्वतस्ते त्वां पार्ष्ण्या वा कशया वा तुतोद व्यथयति यद्यस्मात् तस्मात्ते तव ता तानि सर्वा सर्वाण्यध्वरेषु यागेषु ब्रह्मणा मंत्रेण सूदयामि। क्षरामि। आहुतित्वेन कल्पयामीत्यर्थः। तत्र दृष्टांतः। अध्वरेषु यागेषु हविषो हविराज्यादिकं स्रुचेव स्रुचा यथा सूदयंति तद्वत् ॥

चतुस्त्रिंशद्वाजिनो देवबंधोर्वंक्रीरश्वस्य स्वधितिः समेति।
अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या वि शस्त ॥१८॥
चतुःऽत्रिंशत्। वाजिनः। देवऽबंधोः। वंक्रीः। अश्वस्य। स्वऽधितिः। सं। एति।
अच्छिद्रा। गात्रा। वयुना। कृणोत। परुःऽपरुः। अनुऽघुष्य। वि। शस्त ॥१८॥

वाजिनोऽश्वस्य देवबंधोर्देवानां प्रियस्य चतुस्त्रिंशद्वंक्रीरेतत्संख्यान्युभयपार्श्वास्थीनि स्वधितिश्छेदनसाधनोऽसिः समेति। सम्यग्गच्छति छेदनाय। इतरेषामजादीनां षड्विंशतिरेव षड्विंशतिरस्य वंक्रयः। ऐ० ब्रा० २. ६.। इति प्रैषात्। हे विशसनस्य कर्तारः अस्याश्वस्य गात्राणि शरीरावयवानच्छिद्राच्छिद्राणि यथा भवंति तथा वयुना वयुनानि प्रज्ञानानि। वयुनमिति प्रज्ञानाम वयुनमभिख्येति तन्नामसूक्तत्वात्। कृणोत। कुरुत॥ तप्तनप्तनथनाश्चेति तबादेशः॥ हृदयजिह्वावक्षःप्रभृतीनि प्रज्ञाय मध्ये छिन्नानि मा कुरुतेत्यर्थः। तदर्थं परुःपरुः प्रतिपर्व प्रतिहृदयाद्यवयवमनुघुष्यिदमवद्यमिति संशब्द्यैव वि शस्त। विशसनं कुरुत॥ शस हिंसायां। छांदसः शपो लुक्॥ गात्रंगात्रमस्यानूनं कृणुतात्। ऐ० ब्रा० २. ६.। इति प्रैषात्॥

एकस्त्वष्टुरश्वस्या विशस्ता द्वा यंतारा भवतस्तथ ऋतुः।
या ते गात्राणामृतुथा कृणोमि ताता पिंडानां प्र जुहोम्यग्नौ ॥१९॥
एकः। त्वष्टुः। अश्वस्य। विऽशस्ता। द्वा। यंतारा। भवतः। तथा। ऋतुः।
या। ते। गात्राणां। ऋतुऽथा। कृणोमि। ताऽता। पिंडानां। प्र। जुहोमि। अग्नौ ॥१९॥

त्वष्टुरस्य दीप्तस्याश्वस्य विशस्ता विशसनस्य कर्तैकः। एक एव। स कः। ऋतुरेतदुपलक्षितः कालात्मा तस्यैव सर्वेषामपि पर्यवसितृत्वात्। यद्वा। ऋतुर्निःशंकविशसनाय गंता शमिता। तथा द्वा यंतारा नियमयितारावहोरात्रे देवौ द्यावापृथिव्यौ वा ऋत्विजौ भवतः॥ तथ ऋतुरित्यत्र ऋत्यक इति प्रकृतिभावो ह्रस्वत्वं च॥ हे अश्व ते तव गात्राणां मध्ये या यानि हृदयाद्यवयवान्यृतुथा काले कृणोमि छिनद्मि संपादयामि पिंडानां मध्ये ता ता तानि तानि प्रज्ञानानुरोधेनाग्नौ प्र जुहोमि। प्रकर्षेण हुतं करोमि॥

मा त्वा तपत्प्रिय आत्मापियंतं मा स्वधितिस्तन्व१ आ तिष्ठिपत्ते।
मा ते गृध्नुरविशस्तातिहाय छिद्रा गात्राण्यसिना मिथू कः ॥२०॥
मा। त्वा। तपत्। प्रियः। आत्मा। अपिऽयंतं। मा। स्वऽधितिः। तन्वः। आ। तिस्थिपत्। ते।
मा। ते। गृध्नुः। अविऽशस्ता। अतिऽहाय। छिद्रा। गात्राणि। असिना। मिथु। करिति कः ॥२०॥

हे अश्व त्वा त्वामपियंतं देवान्प्रति गच्छंतं प्रिय आत्मा भोगायतनत्वात्तव प्रियतरो देहो मा तपत्। तप्तं मा कार्षीत्। वियोगजनिता व्यथा मा भूदित्यर्थः। स्वधितिः शस्त्रं ते तव तन्वस्तनूरंगानि मा तिष्ठिपत्। त्वयि चिरमास्थितानि मा कार्षीत्॥ स्थापयतेर्लुङि तिष्ठतेरित्। पा० ७. ४. ५.। इतीत्वं॥ तथा ते तव गात्राणि गृध्नुः केवलमांसग्रहणेप्सुरविशस्ता विशसनेऽकुशलः शमितातिहाय न्यूनातिरेकभावेन तत्तदंगमतिक्रम्य मध्ये मिथु मिथ्या व्यर्थमसिना छिद्रा छिद्राणि तिर्यक्छिन्नानि मा कः। मा कार्षीत्॥ करोतेर्लुङि मंत्रे घसेति च्लेर्लुक्। गुणः। हल्ङ्याब्भ्य इति तलोपः॥

न वा उ एतन्म्रियसे न रिष्यसि देवाँ इदेषि पथिभिः सुगेभिः।
हरी ते युंजा पृषती अभूतामुपास्थाद्वाजी धुरि रासभस्य ॥२१॥
न। वै। ऊं इति। एतत्। म्रियसे। न। रिष्यसि। देवान्। इत्। एषि। पथिऽभिः। सुऽगेभिः।
हरी इति। ते। युंजा। पृषती इति। अभूतां। उप। अस्थात्। वाजी। धुरि। रासभस्य ॥२१॥

न वा उ नैव खल्वेतन्म्रियसे। वैशब्द एवकारार्थः। उ इत्यवधारणे। नैवेदानीमितराश्ववन्मृतो भवसि देवत्वप्राप्तेर्वक्ष्यमाणत्वात्। अत एव न रिष्यसि। न हिंस्यसे। व्यर्थहिंसाया अभावात्। ननु प्रत्यक्षतो मृतिर-

वयवनाशस्य दृश्यते कथमेवमुच्यत इति उच्यते। सुगेभिः पथिभिः शोभनगमनसाधनैर्मार्गैर्देवयानलक्षणैर्देवानिदेषि। देवानिव प्राप्नोषि। अतो युक्तैषोक्तिः। कैः साधनैरिति तत्राह। ते त्वां वोढुं हरी एतन्नामानाविंद्रस्याश्वौ ते तव युंजा रथे युक्तावभूतां। भविष्यतः। आशंसायामूतवत्प्रत्ययादिग्भूतार्थनिर्देशः। हरी इंद्रस्येति निरुक्तं। तथा पृषती पृषत्यौ मरुतां वाहनभूतौ युंजाभूतां। युक्तौ भविष्यतः। पृषत्यो मरुतामिति च निरुक्तं॥ युजेर्ऋत्विगित्यादिना क्विन्। युजेरसमासे। पा० ७.१.७१। इति नुम्। सुपां सुलुगित्याकारः॥ तथा रासभस्याश्विवाहनस्यैतन्नामकस्याश्वस्य धुरि स्थाने वर्तमानः कश्चिद्वाज्युपास्थात्। उपस्थास्यति। वहतीत्यर्थः। यद्वा। रासभस्य भानोर्धुरि वर्त्मनि युक्तो वाज्यस्य उपस्थास्यति। देवत्वं गच्छतस्तव गमनायेंद्रादयः स्वस्ववाहनानि प्रेषयंतीत्यर्थः। यद्वा। तत्तद्देवभावमापन्नं त्वां तानि तानि वाहनानि वहंति॥

उपाकरणकालेऽवघ्राणावर्तने यद्यश्वो न कुर्यात् तदैषा नैमित्तिकी यजमानवाचनार्था भवति। तथा च सूचितं। सुगव्यं नो वाजी स्वश्व्यमिति यजमानं वाचयेत्। आ० १०. ८.। इति॥

सुगव्यं नो वाजी स्वश्व्यं पुंसः पुत्राँ उत विश्वापुषं रयिं।
अनागास्त्वं नो अदितिः कृणोतु क्षत्रं नो अश्वो वनतां हविष्मान् ॥२२॥
सुऽगव्यं। नः। वाजी। सुऽअश्व्यं। पुंसः। पुत्रान्। उत। विश्वऽपुषं। रयिं।
अनागाःऽत्वं। नः। अदितिः। कृणोतु। क्षत्रं। नः। अश्वः। वनतां। हविष्मान् ॥२२॥

वाज्यश्व आलभ्यमानो नोऽस्माकं सुगव्यं शोभनेन गोसमूहेन युक्तं विश्वापुषं रयिं विश्वस्य पोषकं धनं कृणोतु। करोतु॥ खलगोरथात्। पा० ४.२.५०.। इति समूहार्थे यत्। छांदसमुत्तरपदाद्युदात्तत्वं। यद्वा। सामूहिकस्याणः प्रसंगे सर्वत्र गोरजादिप्रत्ययप्रसंग इति यत्। का० ४.३.१६०.। तदंतस्याद्युदात्तं द्व्यच्छंदसीत्युत्तरपदाद्युदात्तत्वं॥ तथा स्वश्व्यं शोभनाश्वसमूहयुक्तं। तथा पुंसः पुत्रान्। पुत्रशब्दः स्त्रीपुमपत्यसाधारणः। अतः पुमपत्यानीत्यर्थः। यद्वा। पुंसो वध्वादीन् पुत्रान् पुरुरवकानात्मजान्। स्त्र्यपत्यानि पुमपत्यानि चेत्यर्थः। उतापि च विश्वापुषं रयिं विश्वपोषणसमर्थं धनं। किंच नोऽस्मानदितिरदीनोऽश्वोऽनागास्त्वं कृणोतु। सर्वतो निष्पापत्वं करोतु। उक्तानां फलानां न्यूनातिरेकजनितपापचयाभावेऽसंभवात्पापत्वं प्रार्थ्यते। किंच हविष्मान् हविर्भूतावयवोपेतोऽश्वो नोऽस्माकं क्षत्रं बलं क्षात्रं तेजो वनतां। संभजतां। कुरुतां॥ ॥१०॥

यदक्रंद इति त्रयोदशर्चं सप्तमं सूक्तं दैर्घतमसं त्रैष्टुभं। अश्वस्य स्तूयमानत्वात्तद्देवत्यं। यदक्रंदः सप्तोनेत्यनुक्रमणिका॥ आश्वमेधिके मध्यमेऽहन्युपाकरणायावस्थितमश्वमाद्याभिरेकादशभिः स्तौति। तथा च त्रीणि सुत्यानीति खंडे सूचितं। तमवस्थितमुपाकरणाय यदक्रंद इत्येकादशभिः स्तौत्यप्रगुवन्। आ० १०. ८.। इति॥

यदक्रंदः प्रथमं जायमान उद्यन्त्समुद्रादुत वा पुरीषात्।
श्येनस्य पक्षा हरिणस्य बाहू उपस्तुत्यं महि जातं ते अर्वन् ॥१॥
यत्। अक्रंदः। प्रथमं। जायमानः। उत्ऽयन्। समुद्रात्। उत। वा। पुरीषात्।
श्येनस्य। पक्षा। हरिणस्य। बाहू इति। उपऽस्तुत्यं। महि। जातं। ते। अर्वन् ॥१॥

हे अर्वन्नरणकुशलाश्व ते तव जातं जन्म जननमुपस्तुत्यं। उपेत्य सर्वैः स्तोतव्यं॥ स्तौतेरेतिस्तुशास्वितिक्यप्। ततस्तुक्॥ कथं स्तुत्यत्वमिति उच्यते। यद्यस्मात्समुद्रात्। अंतरिक्षनामैतत्। उदकस्यंदनापादानाद्यक्षगंधर्वादिसंमोदनाधिकरणाद्वांतरिक्षात्प्रथमं पूर्वं जायमान उत्पन्नः। यद्वा। समुद्र आदित्यः समुंदनाद्भूयात्। तस्माद्वा जायमानः। सूरादश्वं वसवो निरतष्टेति वक्ष्यमाणत्वात्। उत वाथवा पुरीषात् सर्वकामानां पूरकादुदकात्प्रथममुद्यञ्जायमानः। स तादृशस्त्वं यद्यस्मादक्रंदः महाशब्दमकरोर्यजमानमनुग्रहीतुं। किंच ते पक्षा पतनसाधनौ पक्षौ श्येनस्य पक्षाविव। तौ यथा शीघ्रपतनसाधनौ तादृशावित्यर्थः। तव बाहू हरिणस्य बाहू इव। तौ यथा वेगवंतौ तादृशावित्यर्थः। यस्मादेवं तस्मात्ते जन्म स्तुत्यमित्यर्थः॥

यमेन॑ द॒त्तं त्रि॒त ए॑नमायुन॒गिंद्र॑ एणं प्रथ॒मो अध्य॑तिष्ठत् ।
गं॒ध॒र्वो अ॑स्य रश॒नाम॑गृभ्णा॒त्सूरा॑दश्वं वसवो॒ निर॑तष्ट ॥ २ ॥
यमे॑न । द॒त्तं । त्रि॒तः । ए॒नं॒ । अ॒यु॒न॒क् । इंद्रः॑ । ए॒नं॒ । प्र॒थ॒मः । अधि॑ । अ॒ति॒ष्ठ॒त् ।
गं॒ध॒र्वः । अ॒स्य॒ । र॒श॒नां । अ॒गृ॒भ्णा॒त् । सूरा॑त् । अ॒श्वं॒ । व॒स॒वः॒ । निः । अ॒त॒ष्ट॒ ॥ २ ॥

यमेन नियामकेनाग्निना दत्तमेनमश्वं त्रितः पृथिव्यादिषु त्रिषु स्थानेषु वर्तमानः स्तीर्णतमो वा वायुरयुनक् । रथे योजितवान् । किंचैनमश्वमिंद्रः प्रथमः प्रतमः प्रकृष्टतमः । प्रथम इति मुख्यनाम । अध्यतिष्ठत् । अधिष्ठितवान् । अस्य गंधर्वः सोमः । सोमेन समया विपृक्त इति वक्ष्यमाणत्वात् । स चास्याश्वस्य रशनां नियमनरज्जुमगृभ्णात् । अग्रहीत् । ईदृशोऽश्वः कुतः समुत्पन्न इति चेत् उच्यते । हे वसवो रश्मयः यूयं सूरादादित्यादश्वमेवंमहानुभावं निरतष्ट । निःशेषेण साधु संपादितवंतः । यद्वा । वसुशब्देनोक्ता एव यमादयः परामृश्यंते । हे वसवः स्वस्वव्यापारेण सर्वस्याच्छादयितारः यूयं सूरादादित्यादश्वमेनं निरतष्ट । अतक्षत । निरित्येष समित्येतस्य स्थाने । तक्षतिः करोतिकर्मा । स च क्रियासामान्यवचनः । अत्रौचित्याद्धारणे वर्तते । सम्यग्धारितवंत इत्यर्थः ॥ तक्षेर्लङि च्छांदसः शपो लुक् । स्कोः संयोगाद्योरिति कलोपः ॥

असि॑ य॒मो अस्या॑दि॒त्यो अ॑र्व॒न्नसि॑ त्रि॒तो गुह्ये॑न व्र॒तेन॑ ।
असि॒ सोमे॑न स॒मया॒ विपृ॑क्त आहुस्ते॒ त्रीणि॑ दि॒वि बंध॑नानि ॥ ३ ॥
असि॑ । य॒मः । असि॑ । आ॒दि॒त्यः । अ॒र्व॒न् । असि॑ । त्रि॒तः । गुह्ये॑न । व्र॒तेन॑ ।
असि॑ । सोमे॑न । स॒मया॑ । विऽपृ॑क्तः । आ॒हुः॒ । ते॒ । त्रीणि॑ । दि॒वि । बंध॑नानि ॥ ३ ॥

हे अर्वन् त्वं यमोऽसि । नियमितानिरसि । तेन दत्तत्वात्तच्छब्दव्यपदेशः । तथादित्योऽसि । सूरान्निरतष्टेत्युक्तत्वात् । तथा गुह्येन व्रतेन गोपनीयेन दुर्निरूपेण वा कर्मणा । सर्वत्रव्याप्तिरूपेणेत्यर्थः । तेन त्रितस्त्रिषु स्थानेषु तायमानो वायुरसि । त्रित एनमायुनगित्युक्तत्वात्तद्रूपत्वं । अथवा गुह्येन व्रतेन गोपनीयेन कर्मणा योगादिसाधनरूपेण त्रित एतन्नामक ऋषिरसि । किंच हे अश्व त्वं सोमेन समया सह विपृक्तः । वीत्येष समित्येतस्मिन्नर्थे । संपृक्तोऽसि तेन गृहीतत्वात् । हे अश्वरूप ते तव दिवि द्युलोक आदित्ये वा वर्तमानस्य त्रीणि बंधनान्युत्पत्तिकारणान्याहुः पुराविदः । वसव आदित्यो द्युस्थानं चेति त्रीणि ॥

त्रीणि॑ त आहुर्दि॒वि बंध॑नानि॒ त्रीण्य॒प्सु त्रीण्य॒न्तः स॑मु॒द्रे ।
उ॒तेव॑ मे॒ वरु॑णश्छंत्स्यर्व॒न्यत्रा॑ त आ॒हुः प॑र॒मं ज॒नित्रं॑ ॥ ४ ॥
त्रीणि॑ । ते॒ । आ॒हुः॒ । दि॒वि । बंध॑नानि । त्रीणि॑ । अ॒प्ऽसु । त्रीणि॑ । अ॒न्तरिति॑ । स॒मु॒द्रे ।
उ॒तऽइ॑व । मे॒ । वरु॑णः । छं॒त्सि॒ । अ॒र्व॒न् । यत्र॑ । ते॒ । आ॒हुः॒ । प॒र॒मं । ज॒नित्रं॑ ॥ ४ ॥

पूर्वं दिवि त्रीणि बंधनानीत्युक्तं । इदानीं स्थानत्रयेष्वपि त्रीणि बंधनानीत्याह । हे अर्वन् ते तव दिवि संबंधनानि त्रीण्याहुः । तानि पूर्वमुक्तानि । अप्सु । अबुपजीव्यो भूलोकोऽप्यप्शब्देनाभिधीयते । पृथिव्यां त्रीणि बंधनान्याहुः । अन्नं स्थानं बीजमिति त्रीणि । तथा समुद्रेऽंतः समुद्रमध्ये । समुद्रवणादपादानात्समुद्रमंतरिक्षं । तस्मिंस्त्रीणि वृष्ट्युत्पत्तिनिमित्तानि मेघो विद्युत् स्तनितमिति । उतेव । इवशब्दस्त्वर्थे । अपि च हे अर्वन्नश्व वरुणः पापस्य वारकः फलस्यावर्जयिता वा त्वं मे मह्यं छंत्सि । कथयसि । किं कथयसीति चेत् उच्यते । ते तव परमं जनित्रं निरतिशयं जन्म ॥ जनेरौणादिक इत्रप्रत्ययः ॥ यत्र येषु त्रिषूक्तेषु स्थानेष्वाहुः कथयंति । यद्वा । यत्र यस्मिन्नादित्ये परमं जनित्रमाहुः सूरादश्वं वसवो निरतष्टेत्युक्तत्वात् । तादृशं प्रशस्तं जन्म यज्ञसाधनभावेन कथयसीत्यर्थः ॥

इमा ते वाजिन्नवमार्जनानीमा शफानां सनितुर्निधाना ।
अत्रा ते भद्रा रशना अपश्यमृतस्य या अभिरक्षंति गोपाः ॥५॥
इमा । ते । वाजिन् । अवऽमार्जनानि । इमा । शफानां । सनितुः । निऽधाना ।
अत्र । ते । भद्राः । रशनाः । अपश्यं । ऋतस्य । याः । अभिऽरक्षंति । गोपाः ॥५॥

हे वाजिन्नश्व ते संबंधीन्यवमार्जनान्यंगसंशोधकानि स्थानानीमेमान्युक्तानि द्युलोकादीनि किंच सनितुर्यागसंभक्तुस्तवेमेमानि शफानां निधानानि स्थानानि । संचारप्रदेशा इत्यर्थः । किंचात्रैव ते तव भद्रा भंदनीयाः कल्याणा रशना ग्रीवादिषु संयुक्ता रज्जूरत्रापश्यं । एषूक्तेषु स्थानेष्वपश्यं । रशना विशेष्यंते । या गोपा गोपयित्र्यो रशना ऋतस्य सत्यभूतस्य यज्ञसाधनस्य वाश्वस्य ॥ कर्मणि षष्ठी ॥ ऋतमभिरक्षंति अभितः पालयंति ता अपश्यं । दृष्टवानस्मि । यद्वा । इमा ते तवावमार्जनान्यंगप्रक्षालनसाधनान्युदकानि । इमानि सनितुस्तव शफानां निधानानि देवयजनभूमयः संचारप्रदेशा वा । अत्रास्मिन्देवयजनस्थाने या रशना गोपास्तव पालयितारो राजपुरुषा ऋत्विजो वा ऋतस्य संबंधिन्योऽभिरक्षंति ता अपश्यं ॥ ॥११॥

आत्मानं ते मनसारादजानामवो दिवा पतयंतं पतंगं ।
शिरो अपश्यं पथिभिः सुगेभिररेणुभिर्जेहमानं पतत्रि ॥६॥
आत्मानं । ते । मनसा । आरात् । अजानां । अवः । दिवा । पतयंतं । पतंगं ।
शिरः । अपश्यं । पथिऽभिः । सुऽगेभिः । अरेणुऽभिः । जेहमानं । पतत्रि ॥६॥

हे अश्व ते तवात्मानं शरीरं मनसास्मदीयेन प्रकृष्टगमनवता चेतसारादतिदूरे स्थितमजानां । जानामि । अतिव्याप्तं भावयामीत्यर्थः । कथं । अवोऽवस्तात् । सामर्थ्याद्भूमेः । भूमिमारभ्य दिवांतरिक्षेण मार्गेण पतंगमादित्यं पतयंतं गच्छंतं व्याप्नुवंतं । यद्वा । यतो दिवांतरिक्षेण मार्गेण दिवि वा पतयंतं गच्छंतं पतंगमादित्यमवः आवः व्याप्नोषि अतो व्याप्तं जानामि । किंच शिरोऽपश्यं । तव शिर एवं पश्यामि । कथं । सुगेभिः शोभनगमनसाधनैररेणुभिरपापैः पथिभिर्मार्गैः । आदित्यमंडलादप्युपरिभूतैः सत्यलोकमार्गैरित्यर्थः । तत्र प्रतिबंधाभावान्मार्गाणामुक्तरूपत्वं । तथाविधैस्तैर्जेहमानमुपर्युपरि व्याप्नुवत् पतत्रि पतनवच्छिरोऽपश्यं । भावयामि । एवं लोकत्रयव्याप्तं भावयामीत्यर्थः । यद्वा । त आत्मानमेवं भावयामि मनसा दिवा द्योतनात्मकेनांतरिक्षमार्गेण दिवः सकाशाद्वावोऽवस्तादवाङ्मुखं पतयंतं यागदेशं प्रति व्याप्नुवत् अत एव पतंगं पतनशीलमधःपतदादित्यसदृशं वा । एवं तव शिरो भावयामीत्यर्थः । शिरश्चैवमपश्यं । उक्तरूपैर्देवयजनमार्गैर्जेहमानं यज्ञदेशं व्याप्नुवत् पतत्रि शीघ्रगामि शिरः पश्यामि । यद्यप्यात्मशब्देन सशिरस्कं शरीरमुक्तं तथापि देहात्पूर्वं शिरसो दृश्यमानत्वात् पृथगभिधीयते ॥

अत्रा ते रूपमुत्तममपश्यं जिगीषमाणमिष आ पदे गोः ।
यदा ते मर्तो अनु भोगमानळादिद्ग्रसिष्ठ ओषधीरजीगः ॥७॥
अत्र । ते । रूपं । उत्ऽतमं । अपश्यं । जिगीषमाणं । इषः । आ । पदे । गोः ।
यदा । ते । मर्तः । अनु । भोगं । आनट् । आत् । इत् । ग्रसिष्ठः । ओषधीः । अजीगरिति ॥७॥

एवं गमनानंतरं हे अश्व ते तवोत्तममुक्तरूपेणोत्कृष्टतमं रूपमत्रास्मिन्यागदेशेऽपश्यं । पश्यामि । कीदृशं । गोर्भूम्याः पदे स्थाने देवस्थाने देवयजनप्रदेश आजिधावनस्थाने वेषः ॥ कर्मणि षष्ठी ॥ इषमिष्यमाणमन्नमन्नानि वा आ सर्वतो जिगीषमाणं गंतुमिच्छंतं । हे अश्व ते तव यदा मर्तो मनुष्यो भोगं भोक्तव्यमन्नमन्वानट् ॥ नशतिर्गतिकर्मा ॥ अनुक्रमेण समीपं गमयति । आदिदनंतरं तदानीमेव तदनुग्रहाद्विलंबमकृत्वा ग्रसिष्ठो

महातृष्णयेव ग्रसितृतमो भक्षयितृतमः सन्नोषधीरन्नान्यजीगः । गिरसि । भक्षयसि । महानुभावोऽपि त्वं लौकिकाश्ववत्तुच्छेन पुरुषेण दीयमानं स्वल्पं भक्ष्यमनुग्रहात्स्वीकरोषीत्यर्थः ॥

अनु त्वा रथो अनु मर्यो अर्वन्ननु गावोऽनु भगः कनीनां ।
अनु व्रातासस्तव सख्यमीयुरनु देवा ममिरे वीर्यं ते ॥ ८ ॥
अनु । त्वा । रथः । अनु । मर्यः । अर्वन् । अनु । गावः । अनु । भगः । कनीनां ।
अनु । व्रातासः । तव । सख्यं । ईयुः । अनु । देवाः । ममिरे । वीर्यं । ते ॥ ८ ॥

इदानीं छत्स्नस्य लोकस्यापि मुख्य इति प्रतिपादयति । हे अर्वन् गमनशीलाश्व त्वा त्वामन्वनुसृत्य रथो गच्छति । ततः पुरतोऽश्वस्य गमनात् । तथा मर्यो मर्त्यस्त्वा त्वामनु ॥ जात्येकवचनं ॥ अनु गावः । गावोऽपि त्वामनुगच्छंति । तथा कनीनां कन्यकानां स्त्रीणां भगो भाग्यं सौंदर्यं त्वद्गमनु । तथा व्रातासो व्राताः संघात्मका अन्येऽश्वसमूहा वस्वादिदेवगणा वा त्वामन्वनुसृत्य तव सख्यमीयुः । सखिभावं गच्छंति । देवा ऋत्विजो द्योतमाना देवा वा त्वामनुसृत्य ते वीर्यं वीरकर्म ममिरे । स्तुत्या मांति । अतः सर्वोऽपि त्वामनुसरः त्वं तु सर्वस्य श्रेष्ठ इत्यर्थः ॥

हिरण्यशृंगोऽयो अस्य पादा मनोजवा अवर इंद्र आसीत् ।
देवा इदस्य हविरद्यमायन्यो अर्वंतं प्रथमो अध्यतिष्ठत् ॥ ९ ॥
हिरण्यऽशृंगः । अयः । अस्य । पादाः । मनःऽजवाः । अवरः । इंद्रः । आसीत् ।
देवाः । इत् । अस्य । हविःऽअद्यं । आयन् । यः । अर्वंतं । प्रथमः । अधिऽअतिष्ठत् ॥ ९ ॥

अयमश्वो हिरण्यशृंगो हितरमणीयशृंगो वा उन्नतशिरस्को हृदयरमणशृंगस्थानीयशिरोरुहो वा । अस्य पादा अयोऽयोमयाः । अयःपिंडसदृशा इत्यर्थः । तथा मनोजवा मनोवेगाः । अथवैतदिंद्रविशेषणं । ईदृशस्याश्वस्य सामर्थ्यं प्रति मनोवेग इंद्रोऽप्यवरो निकृष्ट आसीत् । किंचास्याश्वस्य हविरद्यं हविषोऽदनं भक्षणं ॥ स्वार्थिको यत् ॥ अदनयोग्यं हविर्वापेक्ष्य देवा इत् सर्वेऽपि देवा आयन् । प्राप्ताः । य इंद्रोऽर्वंतं प्रथमः प्रथमभागी सन्नध्यतिष्ठत् अधिष्ठितवान् । सहविष्टेन स्वकीयत्वेन वाश्रितवानित्यर्थः । इंद्र एणं प्रथमो अध्यतिष्ठदिति ह्युक्तं ॥

ईर्मांतासः सिलिकमध्यमासः सं शूरणासो दिव्यासो अत्याः ।
हंसा इव श्रेणिशो यतंते यदाक्षिषुर्दिव्यमज्ममश्वाः ॥ १० ॥
ईर्मऽअंतासः । सिलिकऽमध्यमासः । सं । शूरणासः । दिव्यासः । अत्याः ।
हंसाःऽइव । श्रेणिऽशः । यतंते । यत् । आक्षिषुः । दिव्यं । अज्मं । अश्वाः ॥ १० ॥

अत्राश्वसमूहस्तुतिद्वारेणायं स्तूयते । ईर्मांतास ईरिताः प्रेरिता अंता येषां ते तथोक्ताः । विरलांता इत्यर्थः । सिलिकमध्यमासः संस्रुताः संगता मध्यप्रदेशा येषां ते तथोक्ताः । मध्ये निविडा इत्यर्थः । अथवा शरीरस्यैते विशेषणे । ईर्मं ईरितः । पुरतो नुन्न इत्यर्थः । तादृशः पृथुरंतो जघनप्रदेशो येषां ते तादृशाः । तथा सिलिकमध्यमासः । संस्रुतः संगतः संलग्नो मध्यभागो येषां ते तादृशाः । पुष्टत्वात्प्रौढपृष्ठाः संलग्नमध्याश्चेत्यर्थः । जघनपुरोभागावपेक्ष्य सिलिकमध्यमा इत्युक्तं । समित्ययमुपसर्गो यतंत इत्याख्यातेन संबंधयितव्यः । शूरणासो विक्रमशीला दिव्यासो दिवि भवा अत्या अतनशीलाः । यद्यप्ययमश्वनाम तथाप्यश्वशब्दस्य वक्ष्यमाणत्वादयं यौगिकोऽवगंतव्यः । ईदृशा अश्वाः श्रेणिशः । एकव्यापाराणां बहूनां समूहः श्रेणिरित्युच्यते । शीघ्रधावनाय श्रेणिशः पंक्तीभूय सं यतंते । सम्यग्यत्नं कुर्वंति । तत्र दृष्टांतः । हंसा इव । ते यथा श्रेणीभूता

ईर्मांतास इत्याद्युक्तरूपाः संतोऽंतरिक्षे गमनाय यतंते तद्वत्। कदा। उच्यते। यद्यदाश्वा दिव्यमज्मं गमनं गंतव्यं वा मार्गमाक्षिषुः व्याप्नुवंति तदा॥ अयं मंत्रो यास्केनैवं व्याख्यातः। ईर्मांताः समीरितांताः पृथ्वंता वा सिलिकमध्यमाः संसृतमध्यमाः शीर्षमध्यमा वा। अपि वा शिर आदित्यो भवति यदनुशेते सर्वाणि भूतानि मध्ये चैषां तिष्ठति। इदमपीतरच्छिर एतस्मादेव समाश्रितान्येतदिंद्रियाणि भवंति। सं शूरणासो दिव्यासो अत्याः। शूरः शवतेर्गतिकर्मणो दिव्या दिविजा अत्या अतनाः। हंसा इव श्रेणिशो यतंते। हंसा हंतेर्घ्नंत्यध्वानं। श्रेणिश इति श्रेणिः श्रयतेः समाश्रिता भवंति। यदाक्षिषुर्यदापुर्दिव्यमज्ममजनिमाजिमश्वाः। नि० ४. १३.। इति॥ ॥१२॥

तव॒ शरी॑रं पतयि॒ष्ण्व॑र्व॒न्तव॑ चि॒त्तं वात॑ इव॒ ध्रजी॑मान्।
तव॒ शृंगा॑णि॒ विष्ठि॑ता पुरु॒त्रार॑ण्येषु॒ जर्भु॑राणा चरंति॥११॥
तव॑। शरी॑रं। प॒त॒यि॒ष्णु। अ॒र्व॒न्। तव॑। चि॒त्तं। वात॑ःऽइव। ध्रजी॑मान्।
तव॑। शृंगा॑णि। विऽस्थि॑ता। पु॒रु॒ऽत्रा। अर॑ण्येषु। जर्भु॑राणा। च॒र॒न्ति॒॥११॥

हे अर्वन् तव शरीरं पतयिष्णु पतनशीलं। व्याप्तमित्यर्थः। तथा तव चित्तं मनो वात इव ध्रजीमान् शीघ्रगमनवायुरिव। तद्वच्छीघ्रगमनानुकूलमित्यर्थः। किंच तव शृंगाणि शिरसो निर्गताः शृंगस्थानीयाः केशाः पुरुत्रा पुरुषु बहुषु प्रदेशेषु विष्ठिता विष्ठितानि विविधं स्थिताः। किंच त एवारण्येषु जर्भुराणा मनोहराणि पूर्यमाणानि वा एवंभूताः केशाश्चरंति। यद्वा। अत्राश्वस्य शृंगाभावात् तद्वदुन्नतानि तेजांसि परिगृह्यंते॥

आश्वमेधिके मध्यमेऽहन्यध्रिगुप्रैषे मा नो मित्र इति सूक्तानंतरमुप प्रागाच्छसनमिति द्वे ऋचौ शंसनीये। सूत्रितं च। उप प्रागाच्छसनमिति द्वे। आ० १०. ८.। इति॥

उप॒ प्रागा॒च्छस॑नं वा॒ज्यर्वा॑ देव॒द्रीचा॒ मन॑सा॒ दीध्या॑नः।
अ॒जः पु॒रो नी॑यते॒ नाभि॑र॒स्यानु॑ प॒श्चात्क॒वयो॑ यंति रे॒भाः॥१२॥
उप॑। प्र। अ॒गा॒त्। श॒स॑नं। वा॒जी। अर्वा॑। दे॒व॒द्रीचा॑। मन॑सा। दीध्या॑नः।
अ॒जः। पु॒रः। नी॒य॒ते॒। नाभि॑ः। अ॒स्य॒। अनु॑। प॒श्चात्। क॒वय॑ः। यं॒ति॒। रे॒भाः॥१२॥

अयमर्वारणकुशलो वाज्यश्वः शसनं विशसनस्थानमुप प्रागात्। उपप्रैति। किं कुर्वन्। देवद्रीचा मनसा देवान्गच्छता मनसा दीध्यानो ध्यायन्। कदा देवानस्मदवयवेनार्चामि देवत्वं प्राप्नोमीति वा मनसि ध्यायन्। किंचास्य पुरः पुरस्तान्नाभिर्नहनं। बंधुभूत इत्यर्थः। यद्वा। अस्य बंधनस्थानीयोऽविमुक्तत्वात्। एवंभूतोऽजः पुरो नीयते। पुरतः प्राप्यते। अन्वनुसृत्य पश्चादनंतरं। अत्र यद्यप्युभयोः पर्यवसितोऽर्थ एक एव तथाप्यजाश्वोभयानंतर्यत्वप्रकटनाय पदद्वयं। यद्वा। अन्विति क्रियया संबध्यते। कवयोऽनूचाना रेभाः स्तोतार ऋत्विजो यंति। गच्छंति। ये वा अनूचानास्ते कवय इति श्रुतेः। यद्वा। कवय इति मेधाविनाम कविर्मनीषीति तन्नामसु पठितत्वात्। रेभ इति स्तोतृनाम रेभो जरितेति तत्र पाठात्॥

उप॒ प्रागा॒त्पर॒मं यत्स॒धस्थ॒मर्वाँ॒ अच्छा॑ पि॒तरं॑ मा॒तरं॑ च।
अ॒द्या दे॒वाञ्जुष्ट॑तमो॒ हि ग॒म्या अथा शा॑स्ते दा॒शुषे॒ वार्या॑णि॥१३॥
उप॑। प्र। अ॒गा॒त्। प॒र॒मं। यत्। स॒धऽस्थं॑। अर्वा॑न्। अच्छ॑। पि॒तरं॑। मा॒तरं॑। च॒।
अ॒द्य। दे॒वान्। जुष्ट॑ऽतमः। हि। गम्याः। अथ॑। आ। शा॒स्ते॒। दा॒शुषे॑। वार्या॑णि॥१३॥

अर्वानरणकुशलोऽयमश्व उप प्रागात्। उपगच्छति। किं। यत्परममुत्कृष्टं सधस्थं सहस्थानं सुकृतिभिरेक-

चनिवासयोग्यं स्वर्गाख्यं यदस्ति तत्। किमर्थं। पितरं मातरं चाच्छाभिमुख्येन प्राप्तुं। हे अश्व अद्यास्मिन्काले जुष्टतमः प्रीततमः। स्वर्गं प्राप्नोमीति हर्षयुक्त इत्यर्थः। एवंभूतो देवान् गम्याः। गच्छेर्देवान्। हिशब्दो यत्र उपयुक्तस्य पशोः स्वर्गप्राप्तिः सगर्भ्योऽनु सखा सयूथ्यः। तै० सं० १. २. ४. २.। इत्यादिमंत्रांतरप्रसिद्धिद्योतनार्थः। अथानंतरं यजमान आ शास्ते। कस्मै। दाशुषे हविर्दत्तवते स्वस्मै। कानि। वार्याणि वरणीयानि धनानि। यद्वा ॥ पुरुषस्य व्यत्ययः ॥ आ शास्ते प्रार्थये यजमानार्थं ॥ ॥१३॥

अस्य वामस्येति द्विपंचाशदृचमष्टमं सूक्तं दैर्घतमसं। अत्रेयमनुक्रमणिका। अस्य द्विपंचाशदल्पस्तवं त्वितत्संशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र प्रायेण ज्ञानमोक्षाक्षरप्रशंसा च पंचपादं साकंजानां यज्ञायत्रेऽयं स शिंक्ते सप्तार्धगर्भा गौरीरिति जगत्यः। एतदंतं तु वैश्वदेवं तस्याः समुद्रा इति वाचः समुद्रा आपोऽक्षरं सा प्रस्तारपंक्तिः शकमयमिति शकधूम उक्षाणं पृश्निमिति सोमस्त्रयः केशिन इत्यग्निः सूर्यो वायुश्च केशिनश्चत्वारि वाग्वाच इंद्रं मित्रं सौर्यौ द्वादशेति संवत्सरसंस्थं कालचक्रवर्णनं यस्ते सरस्वत्यै यज्ञेन साध्येभ्यः परानुष्टुप्सौरी पर्जन्याग्निदेवता वांत्या सरस्वते सूर्याय वेति। अत्र स्तुत्याबहुत्वेन स्तुतिभागस्याल्पीयस्त्वादिदं सूक्तमल्पस्तवनं। न सूक्तांतरवद्बहुस्तवं। इदमेव वैलक्षण्यं तुशब्देन द्योत्यते। अस्मिन्सूक्ते प्रायेण संशयोत्थापनादयो बहवोऽर्थाः प्रतिपाद्यंते। अचिकित्वाश्चिकितुष इत्यनया संशय उत्थाप्यते। पृच्छामि त्वेत्यत्र प्रश्नः प्रतीयते। इयं वेदिरित्यत्र प्रतिवचनं। य ईं चकारेत्यादिना ज्ञानप्रशंसा प्रतिपाद्यते। अपश्यं गोपामित्यादिना ब्रह्मसाक्षात्काररूपस्य प्रशंसा। न क्षरतीत्यक्षरं ब्रह्म। द्वा सुपर्णेत्यादिना तस्य प्रशंसा। पंचपादं पितरं साकंजानां सप्तथं यज्ञायत्रे अधि अयं स शिंक्ते सप्तार्धगर्भा गौरीर्मिमायेति षड्जगत्यः। समानमेतदित्यनुष्टुप्। तस्याः समुद्रा इति प्रस्तारपंक्तिः। तल्लक्षणं छंदोग्रंथे सूचितं। प्रस्तारपंक्तिः पुरतः। पिं० ३. ४०.। इति। पुरतः पूर्वार्धे द्वादशाक्षरौ जागतौ पादौ ततो द्वावष्टाक्षरौ गायत्रौ सा प्रस्तारपंक्तिरिति सूत्रार्थः। अनुक्रमण्यामप्युक्तं। आद्यौ चेत्प्रस्तारपंक्तिः। अनु० ८. ६.। इति। शिष्टा अनादेशपरिभाषया त्रिष्टुभः। गौरीर्मिमायेत्येतदंतानां विश्वे देवा देवता। तस्याः समुद्रा इत्यस्याः पूर्वार्धस्य वाग्देवता। उत्तरार्धस्यापः। शकमयमित्यस्याः पूर्वार्धस्य शकधूमः। उक्षाणं पृश्निमित्युत्तरार्धस्य सोमो देवता। त्रयः केशिन इत्यस्या अग्निसूर्यवायवः। चत्वारि वागित्येषा वाग्देवताका। इंद्रं मित्रं वरुणं कृष्णं नियानमित्येते सूर्यदेवत्ये। द्वादश प्रधय इत्यस्याः संवत्सरात्मा कालो देवता। यस्ते स्तन इत्यस्याः सरस्वती। यज्ञेनेत्यस्याः साध्या देवता। समानमेतदित्यस्याः सूर्यः पर्जन्यो वाग्नयो वा देवता। दिव्यं सुपर्णमित्यस्याः सरस्वान् सूर्यो वा देवता ॥ कृत्स्नसूक्तस्य विनियोगं शौनक आह। स्तेयं कृत्वा द्विजो मोह[illegible]तः शुचिः। सूक्तं जप्त्वास्यवामीयं क्षिप्रं मुच्येत किल्बिषादिति। ऋग्वि० १. २६. ॥ महाव्रते वैश्वदेवशस्त्रे वैश्वदेवं निविद्धानं द्विप्रतीकं। तत्रास्य वामस्येत्यादिकमेकचत्वारिंशदृचं प्रथमं प्रतीकं। पंचमारण्यके सूचितं। अस्य वामस्य पलितस्य होतुरिति सलिलस्य दैर्घतमस एकचत्वारिंशतं। ऐ० आ० ५. ३. २.। इति ॥

अस्य वामस्य पलितस्य होतुस्तस्य भ्राता मध्यमो अस्त्यश्नः।
तृतीयो भ्राता घृतपृष्ठो अस्यात्रापश्यं विश्पतिं सप्तपुत्रं ॥१॥
अस्य। वामस्य। पलितस्य। होतुः। तस्य। भ्राता। मध्यमः। अस्ति। अश्नः।
तृतीयः। भ्राता। घृतऽपृष्ठः। अस्य। अत्र। अपश्यं। विश्पतिं। सप्तऽपुत्रं ॥१॥

अत्र द्वितीयपादे तच्छब्दश्रुतेः प्रथमपादे प्रतिविशेषणं योग्यक्रियार्थसंबद्धो यच्छब्दोऽध्याहार्यः। योऽयं दिवि द्योतते तस्यास्य वामस्य वननीयस्य संभजनीयस्यारोग्यार्थिभिः सर्वैः सेवनीयस्य पलितस्य पालयितुः प्रकाशवृष्ट्यादिप्रदानेन पालकस्य तथा योऽयं दिवि द्योतते तस्यास्य होतुर्ह्वातव्यस्याह्वानार्हस्यादित्यस्य मध्यमो मध्यमस्थानः। मध्ये भवो वायुरुच्यते। आदित्याग्नी अपेक्ष्यास्य मध्यमत्वं। स चाश्नः सर्वत्र व्याप्तः। न हि वायुरहितः कश्चित्प्रदेशोऽस्ति। तादृशो भ्रातास्ति। भ्रातृस्थानीयो भवति। यथा लोके भ्राता पितृधनस्य भागं हरति तद्वत्। मध्यस्थानमंतरिक्षलोकं हरतीति वा। वृष्ट्यर्थं रश्मिभिराहृतानां भौमानां रसानां हरणाद्वा भ्रातेत्युच्यते। पित्र्येण धनेन स्वार्जितेन वा भर्तव्यो भवतीति भ्राता। मध्यमो वायुरपि वृष्ट्यर्थं रसैर्भर्तव्यो भवति। किंच घृतपृष्ठः घृतमाहुतिलक्षणं पृष्ठे यस्य तादृशो भ्राता तस्य तृतीयोऽस्ति। भवति।

त्रयाणां पूरणस्तृतीयः । उक्तोभयापेक्षया तृतीयत्वं । भ्रातृत्वं प्रतिपादितप्रकारेणात्रापि द्रष्टव्यं । रात्रौ सवितुस्तेजोभागस्य हरणात् । दिवा स्वकीयतेजसो भागस्य तदर्थमेव भक्तव्यत्वाद्वा भ्रातृत्वं । अत्रैषु भ्रातृषु मध्ये पुरोदेशे वा विश्पतिं विशां प्रजानां पालयितारं सप्तपुत्रं सर्पणरश्मिपुत्रोपेतं । ऐतिहासिकपक्षेऽदितिः पुत्रकामेति प्रस्तुते मित्रवरुणादिष्वदितिपुत्रेष्वस्यादित्यस्य सप्तमपुत्रत्वं । ईदृशं महानुभावमादित्यमपश्यं । अद्राक्षं । भावनयात्मत्वेन साक्षात्करोमीत्यर्थः । तथोऽहं सोऽसौ योऽसौ सोऽहमिति श्रुतिः ॥ एवं वा । अस्य वामस्य विश्वस्योद्गरितुः । स्रष्टुरित्यर्थः । पलितस्य पालयितुः स्वसृष्टजगत्पालनशीलस्य होतुरादातुः । स्वस्मिन्संहर्तुरित्यर्थः । परमेश्वरस्य सृष्ट्यादिकर्तृत्वं श्रुतिस्मृतिपुराणादिषु प्रसिद्धं । तस्य तादृशस्य परमेश्वरस्य भ्राता तद्भागहारी तदंशभूतः सूत्रात्मा मध्यमः सर्वत्र मध्ये वर्तमानोऽस्ति । जगद्धारकत्वेन वर्तते । स चाश्नो व्यापनशीलः । वायुना वै गौतम सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि । बृ॰ उ॰ ३. ७. २. । इति श्रुतेः । वक्ष्यमाणविराडपेक्षया वा मध्यमत्वं । किंचास्य परमेश्वरस्य तृतीयो घृतपृष्ठः । घृतमित्युदकनाम । तेन तत्कार्यं शरीरमुच्यते । तदेव पृष्ठं स्पर्शकं वा यस्य स तादृशः । पृष्ठं स्पृशतेरिति निरुक्तं । ४. ३. । यद्वा । प्रदीप्तपृष्ठः । पृष्ठशब्दः कृत्स्नशरीरोपलक्षकः । प्रकाशितशरीराभिमानीत्यर्थः । न त्वयं सूक्ष्मशरीराभिमानिसूत्रात्मवत्स्पर्श नाविषयो भवति । अत्रैषु मध्ये विश्पतिं विशां प्रजानां पतिं । उपलक्षणमेतत् । सर्वस्य पतिमित्यर्थः । सर्वस्य पतिः सर्वस्येशान इति श्रुतेः । सप्तपुत्रं सप्त लोकाः पुत्रा यस्य तादृशं । स्वमायया सृष्टसर्वलोकमित्यर्थः । अपश्यं । पश्येयं । साक्षात्करोमीत्यर्थ ॥ अयमर्थः । स्वाधीनमायाजगत्कारणभूतः परमेश्वर एकः । तत उत्पन्नौ स्थूलसूक्ष्मशरीराभिमानिनौ द्वौ विराट्सूत्रात्मानौ । तेषु मध्ये द्वयोः साक्षात्कारेण मोक्षाभावात् सृष्ट्यादिकारणं परमेश्वरं ज्ञेयत्वेन प्रसिद्धं श्रवणमननादिसाधनेन साक्षात्करोमीत्यर्थः ॥ एवमुत्तरत्राप्यध्यात्मपरतया योजयितुं शक्यं । तथापि स्वरसत्वाभावाद्ग्रंथविस्तरभयाच्च न लिख्यते । यत्र द्वा सुपर्णेत्यादौ स्फुटमाध्यात्मिको ह्यर्थः प्रतीयते तत्र तत्र प्रतिपादयामः । अयं मंत्रो यास्केन व्याख्यातः । अस्य वामस्य वननीयस्य पलितस्य पालयितुरित्यादिना । नि॰ ४. २६. । तत्र व्याख्यानमत्रानुसंधेयं ॥

सप्त युंजंति रथमेकचक्रमेको अश्वो वहति सप्तनामा ।
त्रिनाभि चक्रमजरमनर्वं यत्रेमा विश्वा भुवनाधि तस्थुः ॥ २ ॥
सप्त । युंजंति । रथं । एकऽचक्रं । एकः । अश्वः । वहति । सप्तऽनामा ।
त्रिऽनाभि । चक्रं । अजरं । अनर्वं । यत्र । इमा । विश्वा । भुवना । अधि । तस्थुः ॥ २ ॥

एकचक्रमेकरथांगोपेतं । यद्यपि त्रीणि चक्राणि तथापि तेषामेकरूपत्वादेकचक्रमित्युच्यते । रथं रंहणस्वभावं सूर्यस्य संबंधिनं सप्तैतत्संख्याका अश्वा युंजंति । अनुबध्नंति । वहंत्यहोरात्रनिर्वाहाय । किं वस्तुतः सप्त नेत्याह । एकोऽश्वः सप्तनामैक एव सप्ताभिधानः सप्तधा नमनप्रकारो वा । एक एव वायुः सप्तरूपं धृत्वा वहतीत्यर्थः । वाय्वधीनत्वादंतरिक्षसंचारस्य । एकचक्रमित्युक्तं कीदृशं तदित्यत आह । त्रिनाभि वलयत्रयमध्यस्थितनाभिस्थानीयच्छिद्रत्रयोपेतं अजरममरणधर्मकं अनर्वमशिथिलं । पुनस्तदेव विशेष्यते । यत्र यस्मिंश्चक्र इमा विश्वा भुवनेमानि प्रसिद्धानि सर्वाणि भूतजातान्यध्याश्रित्य तस्थुः । तिष्ठंति । यद्वा । एकचक्रमेकचारिणमसाहाय्येन संचरंतं रथमादित्यमंडलं सप्त युंजंति । सर्पणस्वभावाः सप्तसंख्या वा रश्मयः सप्तप्रकारकार्या असाधारणाः परस्परविलक्षणाः षडृतवः । एकः साधारण इत्येवं । अथवा मासद्वयात्मकाः षट् अपरोऽधिकमासात्मक इत्येवं सप्तर्तवो युंजंति । एतस्य कार्यं निर्वहंतीत्यर्थः । स चैकोऽसहायोऽश्वो व्यापनशील आदित्यः सप्तनामा सप्त रसानां संनमयितारो रश्मयो यस्य तादृशः सप्तर्षिभिः स्तूयमानो वादित्यो वहति । धारयति । भ्रमयतीत्यर्थः । किं । त्रिनाभि चक्रं । तिस्रो नाभिस्थानीयाः संध्याः संबद्धा वा त्रय ऋतवो यस्य तत्तादृशं । के ते । ग्रीष्मवर्षाहिमंताख्याः । यद्वा । भूतभविष्यद्वर्तमानाख्यास्त्रयः कालास्त्रिनाभयः । तद्विशिष्टं चक्रं चक्रवत्पुनःपुनः परिभ्रममाणं संवत्सराख्यं चक्रमजरं मरणरहितं । न हि कदाचिदपि कालो म्रियते । अनादिनिधनः काल इति स्मृतेः । अनर्वमप्रतिहतं । ईदृशं संवत्सराख्यं चक्रं नानाकालावयवोपेतमयमादित्यः पुनरावर्तयति । संवत्सरादर्वाचीनानां तत्रैवांतर्भावात् ततो युगादीनां तदावृत्तिसाध्यत्वात्संवत्सरस्य चक्रत्वेन

निरूपणं। पुनः कीदृशं तत्। यत्र यस्मिंश्चक्रे इमा विश्वा भुवनेमानि सर्वाणि भूतान्यधि तस्थुः आश्रित्य तिष्ठंति कालाधीनत्वात्सर्वस्य स्थितेः। ईदृशस्य कालस्य कारणभूतपरमेश्वरपरिज्ञानेन मोक्षसद्भावात् ज्ञानमोक्षाच-रप्रशंसा चेत्यनुक्रमण्यामुक्तं। अयमपि मंत्रो यास्केन सप्त युंजंति रथमेकचक्रमेकचारिणमित्यादिना व्या-ख्यातः। नि॰ ४. २७.। तदप्यत्राप्यनुसंधेयं॥

इ॒मं रथ॒मधि॒ ये स॒प्त त॒स्थुः स॒प्तच॑क्रं स॒प्त व॑हं॒त्यश्वाः॑।
स॒प्त स्वसा॑रो अ॒भि सं न॑वंते॒ यत्र॒ गवां॒ निहि॑ता स॒प्त नाम॑॥३॥

इ॒मं। रथं॑। अधि॑। ये। स॒प्त। त॒स्थुः। स॒प्तऽच॑क्रं। स॒प्त। व॒हं॑ति॒। अश्वाः॑।
स॒प्त। स्वसा॑रः। अ॒भि। सं। न॒वं॑ते॒। यत्र॑। गवां॑। निऽहि॑ता। स॒प्त। नाम॑॥३॥

इममुक्तस्वरूपमादित्यमंडलाख्यं संवत्सराख्यं वा रथं ये सप्त रश्मयोऽधि तस्थुः अधिष्ठिताः। संवत्सरपक्षे ऽयनर्तुमासपक्षदिवसरात्रिमुहूर्ताख्याः सप्तावयवा अधितिष्ठंति। कीदृशं रथं। सप्तचक्रं। चकनाच्चरणात् क्रमणाद्वा चक्राणि रश्मयः। ते सप्त यस्य रथस्य तादृशमुभयविधं रथं पूर्वोक्ता अधिष्ठिता अश्वा व्यापन-शीलाः सप्त वहंति। निर्वहंति च। तादृशं रथं सप्त स्वसारः स्वयंसरणाः। स्वरादित्यः। तेन सारिताः परस्परं स्वरूपभूता वा सप्तसंख्याका रश्मय ऋतवश्चाभि सं नवंते। आभिमुख्येन संगच्छंते। असाधारणाः परस्परविलक्षणकार्याः षडृतवः सर्वसाधारण एक इति सप्तत्वं। यद्वा। उक्तरूपा मासद्वयात्मकाः षट् त्रयोदशमासात्मकः सप्तम इति सप्तत्वं। कीदृशो रथ इति तदुच्यते। यत्र यस्मिन्रथ उभयविधे गवां वाचां स्तुतिरूपाणां सप्त सप्तविधानि नाम नमनानि सप्तस्वररूपाणि निहितानि। सप्तस्वरोपेतैः सामभिः स्तुत्यं रथमित्यर्थः। यद्वा। गवामुदकानां सप्त सर्पणस्वभावानि नाम नमनानि यत्र यासु स्वरूपेषु निहिता स्वसारः परस्परस्वरूपभूता देवनद्योऽभि सं नवंते॥

को द॑दर्श प्रथ॒मं जाय॑मानमस्थ॒न्वंतं॒ यद॑न॒स्था बिभ॑र्ति।
भूम्या॒ असु॒रसृ॑गा॒त्मा क्व॑ स्वि॒त्को वि॒द्वांस॒मुप॑ गा॒त्प्रष्टु॑मे॒तत्॥४॥

कः। द॒द॒र्श॒। प्र॒थ॒मं। जाय॑मानं। अ॒स्थ॒न्ऽवंतं॑। यत्। अ॒न॒स्था। बिभ॑र्ति।
भूम्याः॑। असुः॑। असृ॑क्। आ॒त्मा। क्व॑। स्वि॒त्। कः॑। वि॒द्वांसं॑। उप॑। गा॒त्। प्रष्टुं॑। ए॒तत्॥४॥

एवं प्रपंचस्य कालायत्ततां प्रतिपाद्य तस्य कारणभूतस्य परमेश्वरस्याविषयत्वमाह। को ददर्श। को द्रष्टुं शक्नुयात्। कदा। प्रथमं। सृष्टेः पूर्वं। अव्याकृतावस्थायामित्यर्थः। किं। जायमानं। प्रथमभावविकारमापन्नं। उत्पद्यमानं प्रपंचमित्यर्थः। दुर्ज्ञेयत्वे हेतुमाह। यद्यस्मादस्थन्वंतमस्थिमंतं सशरीरं। उपलक्षणमेतत्। कार्यभा-[illegible]र्थः। अनस्थास्थिरहिताशरीरा सांख्यप्रसिद्धा प्रकृतिर्वेदांतप्रसिद्धेश्वरायत्ता माया बिभर्ति गर्भ-वदंतर्धारयति। अव्याकृतावस्थायामनस्थोऽशरीरः परमेश्वरो बिभर्ति। यदा केवलः परमेश्वरो मायाशब-लितः सन्निदं जगन्निर्मितवानुत्पत्तिसमये देहादिसहितस्य कस्यचिदभावात्को ददर्श। तदानीं मनो नित्यमात्मा च नित्यः तत्सं[illegible]द्रात्मा जानानीति चेत् सोऽपि न संभवतीत्यत आह। भूम्याः संबंधि पार्थिवं स्थूलशरीरं असुः प्राणः तदुपलक्षितं सूक्ष्मशरीरं असृक् शोणितं। एतत्सप्तधातूपलक्षकं। यद्यपि शरीरं पंचभूतात्मकं तथापि भूतद्वयप्रत्यक्षत्वात्तदपेक्षयोक्तं। आत्मा तैः संबद्धश्चेतनः क्व स्वित्। कुत्रास्ते। न कश्चिद-स्तीत्यर्थः। नान्यत्किंचन मिषत्। ऐ॰ आ॰ २. ४. १.। इति श्रुतेः। विद्वांसं जगत्कारणविषयज्ञानवंतमन्यं गुर्वादि-कमेतत्कारणं प्रष्टुं कः शिष्योऽल्पमतिरुप गात्। उपगच्छति। तादृशो देहेंद्रियसंघातरूप आत्मा तस्मिन्समये कुत्रास्ति। प्रष्टा प्रतिवक्ता चोभावपि नास्तीत्यर्थः। न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येदिति श्रुतेः। यद्वा। प्रथमं प्रथमभाविनं जगतः कारणभूतं को ददर्श। कः साक्षात्करोति। जायमानमस्थन्वंतं मनुष्यमन-स्थिकः परमेश्वरः सशरीरमशरीरो यद्यस्माद्बिभर्ति। द्रष्टुरपि तत्कार्यत्वादिति भावः। शिष्टं समानं॥

पाकः पृच्छामि मनसाविजानन्देवानामेना निहिता पदानि ।
वत्से बष्कयेऽधि सप्त तंतून्वि तत्निरे कवय ओतवा उ ॥ ५ ॥
पाकः । पृच्छामि । मनसा । अविऽजानन् । देवानां । एना । निऽहिता । पदानि ।
वत्से । बष्कये । अधि । सप्त । तंतून् । वि । तत्निरे । कवयः । ओतवै । ऊं इति ॥ ५ ॥

पाकः पक्तव्योऽपक्वमतिरहं मनसा संस्कृतेनाविजानन्नतिगहनं तत्त्वं विशेषेण ज्ञातुमशक्नुवन् पृच्छामि । प्रश्नं करोमि । अज्ञाने कारणमाह । एनैनानि पदानि संदेहास्पदानि तत्त्वानि देवानां निहितानि । देवानामपि गूढानीत्यर्थः । यद्वा । देवानां पदानि तत्त्वानि निधिवद्गोपयित्वा स्थापितानि । अतः पृच्छामि तत्त्वज्ञानोपयोगायेति शेषः । तानि कानीति उच्यते । वत्से सर्वस्य निवासभूते बष्कये । बडिति सत्यनाम । तत्क्षपतीति बष्कय आदित्यः । यद्वा । बष्कयो नामैकहायनो वत्सः । पुनरपि वत्सशब्दस्य पृथग्निर्देशाद्बष्कयशब्देन तत्कालमात्रं लक्ष्यते । तस्मिन्नादित्येऽध्यधिकं सप्त तंतूंस्तायमानान् सप्त सोमसंस्थान्कवयो मेधाविनो यजमाना ओतवै जगद्रूपतिर्यक्तंतून्वेतुं वि तत्निरे । वितन्वंति । यद्वा । सप्त तंतवः सप्त छंदांसि । तानि वितन्वंति । किमर्थं । ओतवै सप्तसोमसंस्थारूपतिर्यक्तंतुसंतानाय । यज्ञनिर्माणायेत्यर्थः । यज्ञानां स्थितिः सूर्याधीनत्वादिति भावः । ईदृशं तत्त्वं पृच्छामीत्यर्थः ॥ ॥ १४ ॥

अचिकित्वाञ्चिकितुषश्चिदत्र कवीन्पृच्छामि विद्मने न विद्वान् ।
वि यस्तस्तंभ षळिमा रजांस्यजस्य रूपे किमपि स्विदेकं ॥ ६ ॥
अचिकित्वान् । चिकितुषः । चित् । अत्र । कवीन् । पृच्छामि । विद्मने । न । विद्वान् ।
वि । यः । तस्तंभ । षट् । इमा । रजांसि । अजस्य । रूपे । किं । अपि । स्वित् । एकं ॥ ६ ॥

अचिकित्वान् देवतातत्त्वमजानन्नहं चिकितुषो विशेषेण तत्त्वं जानतः कवीन् क्रांतदर्शिनोऽधिगतपरमार्थानत्रास्मिंस्तत्त्वविषये पृच्छामि । किमर्थं । विद्मने वेदनाय परमार्थज्ञानाय । किं जानन्नेव पराभवायार्थं नेत्याह । विद्वान्न पृच्छामि अपि त्वज्ञानादेव । यः परमेश्वरस्तस्तंभ स्तंभितवान् नियमितवान् । अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय । छां० उ० ८. ४. १. । इति श्रुतेः । किं । इमेमानि षड्रजांसि लोकास्रंजनात्मकान् । लोका रजांस्युच्यंत इति निरुक्तं । यद्यपि लोकाः सप्त तथापि सत्यलोकस्य कर्मिणां सर्वेषां साधारणत्वाभावात् षडित्युक्तं । ननु षडेवोक्ताः सप्तमः किमिति न निर्दिष्ट इति उच्यते । अजस्य जननादिरहितस्य चतुर्मुखस्य ब्रह्मणो रूपे स्वरूप एकं सत्यलोकाख्यं पुनरावृत्तिरहितं स्थानं किमपि स्वित् । किंस्विदेव । तन्न केनाप्यधिगंतुं शक्यमित्यर्थः । केश्चिदेवोपासकैरर्चिरादिमार्गेण गंतव्यत्वादिति भावः । यद्वा । षड्रजांसि विलक्षणाः षडृतवः । तान्यस्तंभयत्तत्त्वं । अजस्य गमनशीलस्य जन्मरहितस्य वादित्यस्य रूपे रूप्यमाणे दृश्यमाने मंडल एकमद्वितीयं किमपि स्वित् । यत्किंचिद्वाङ्मनसगम्यं तत्त्वमस्ति तत्पृच्छामि । अथ य एषोऽंतरादित्ये हिरण्मयः पुरुषो दृश्यते । मै० उ० ६. १. । इत्यादिश्रुतिप्रतिपादितं तत्त्वमित्यर्थः । अथवा षडिमानि रजांसि त्रिविधान्भूलोकांश्च यस्तस्तंभ । तिस्रो भूमीर्धारयन्त्रीँरुत द्यून् । ऋ० २. २७. ८. । इति निगमः । तस्याजस्य परब्रह्मणो रूपे नानाविकारभाजि जगति किमपि स्विदेकमेकात्मकमस्तीति प्रश्नः । अविशेषमस्तिनाममात्रमेक(रू)पमस्तीत्युत्तराविवक्षया प्रश्नः । अस्तीत्येवोपलब्धव्यमिति श्रुतेः ॥

इह ब्रवीतु य ईमंग वेदास्य वामस्य निहितं पदं वेः ।
शीर्ष्णः क्षीरं दुह्रते गावो अस्य वव्रिं वसाना उदकं पदापुः ॥ ७ ॥
इह । ब्रवीतु । यः । ईं । अंग । वेद । अस्य । वामस्य । निऽहितं । पदं । वेरिति वेः ।
शीर्ष्णः । क्षीरं । दुह्रते । गावः । अस्य । वव्रिं । वसानाः । उदकं । पदा । अपुः ॥ ७ ॥

इहेदानीमीमेतद्वक्ष्यमाणं तत्त्वमंग चिप्रमविचारेण ब्रवीतु। कः। यो वेद सः। कीदृशं तत्। अस्य पुरतो दृश्यमानस्य वामस्य वननीयस्य वेर्गंतुरादित्यस्य पदं सर्वैर्गंतव्यं स्वरूपं निहितं गूढं वर्तते। किंचास्यादित्यस्य शीर्ष्णः शिरोवदुन्नतस्य सर्वेषामुत्कृष्टस्य वा गावः केचन वर्षकालीना रश्मयः चीरमुदकं दुह्रते। चरंति। वव्रिं। रूपनामैतत्। रूपं वसाना आच्छादयंतोऽतिविस्तरेण तेजसा तपंतः केचनास्य गावो रश्मय उदकं स्वच्छं पदा स्वष्टेनैव मार्गेणापुः। पिबंति। भूमिं निरुदकां कुर्वंतीत्यर्थः। तस्य स्वरूपं ब्रवीत्वित्यन्वयः॥

माता पितरमृत आ बभाज धीत्यग्रे मनसा सं हि जग्मे।
सा बीभत्सुर्गर्भरसा निविद्धा नमस्वंत इदुपवाकमीयुः ॥८॥
माता। पितरं। ऋते। आ। बभाज। धीती। अग्रे। मनसा। सं। हि। जग्मे।
सा। बीभत्सुः। गर्भऽरसा। निऽविद्धा। नमस्वंतः। इत्। उपऽवाकं। ईयुः ॥८॥

माता सर्वस्य निर्मात्री पृथिवी पितरं पालकं द्युलोकं तत्स्थं। द्युलोकस्थमादित्यमित्यर्थः। तमा बभाज। आभजते। किमर्थं। ऋत उदके यज्ञे वा निमित्तभूते सति। केन द्वारेण। धीती धीत्या कर्मणा यागादिरूपेण। स्वकीयेनाज्यसोमादिहविषा तर्पयतीत्यर्थः। अग्रे ततः पूर्वं पिता च मनसास्यामभिप्रायवता चेतसा सं जग्मे हि। संश्लिष्टो वर्तते खलु। वृष्टिमकरोदित्यर्थः। अनंतरं सा माता बीभत्सुर्गर्भबंधनेच्छावती गर्भरसा गर्भरसेन गर्भोत्पत्तिनिमित्तेन रसेन निविद्धा नितरां विद्धासीत्। यद्वा। गर्भे रस ओषध्याद्युत्पादनसमर्थमुदकं यस्याः सा तादृश्युदकेनात्यंतं क्लिन्ना निविद्धा कृषीवलैर्हलमुखेन नितरां विदारिता भवति बीजावापार्थं। अत्रायं समाधिः। या काचन योषिदपत्यार्थं स्वपतिं युवानं यौति स च तस्यामनुरागयुक्तः संगतो भवति सा चांतर्वती सती पुत्राञ्जनयतीति तद्वदत्रापि। अनंतरं नमस्वंत इडाविव्रीहिप्रियंग्वाद्यन्नवंत एवोपवाकमुपेत्य वचनं परस्परं सम्यगभिवृद्धानि सस्यानीति वचनमीयुः। प्राप्नुवंति। यद्वा। हविर्लक्षणान्नवंत उपेत्य वचनं प्रैषादिरूपमीयुः। वृष्टौ सत्यां सस्यादिद्वारा यागमनुतिष्ठेयुरित्यर्थः॥

युक्ता मातासीद्धुरि दक्षिणाया अतिष्ठद्गर्भो वृजनीष्वंतः।
अमीमेद्वत्सो अनु गामपश्यद्विश्वरूप्यं त्रिषु योजनेषु ॥९॥
युक्ता। माता। आसीत्। धुरि। दक्षिणायाः। अतिष्ठत्। गर्भः। वृजनीषु। अंतरिति।
अमीमेत्। वत्सः। अनु। गां। अपश्यत्। विश्वऽरूप्यं। त्रिषु। योजनेषु ॥९॥

माता। निर्मीयंतेऽस्मिन्भूतानीति माता द्यौः। दक्षिणाया अभिमतपूरणसमर्थायाः पृथिव्या धुरि निर्वहणे युक्तासीत्। वर्षणाय समर्थाभूदित्यर्थः। कथमिति तदुच्यते। गर्भो गर्भस्थानीय उदकसंघो वृजनीषूदकवत्सु मेघपंक्तिष्वंतर्मध्येऽतिष्ठत्। तिष्ठति। अनंतरं वत्सः पुत्रस्थानीय उदकसंघस्त्रिषु योजनेषु मेघरश्मिवायुषु संयुक्तेषु सत्स्वमीमेत्। वर्षणसमये शब्दयति। अनंतरं विश्वरूप्यं विश्वरूपवतीं गामन्वपश्यत्। अनुक्रमेण पश्यति। वर्षतीत्यर्थः। यद्वा। त्रिषु योजनेषु सत्सु वत्सो मेघो वर्षणाय गां भूमिं प्रत्यमीमेत्। अनंतरं सर्वो जनोऽनुक्रमेण विश्वरूप्यं सस्यादिभिर्नानारूपवतीं भूमिमपश्यत्। पश्यति॥

तिस्रो मातॄस्त्रीन्पितॄन्बिभ्रदेक ऊर्ध्वस्तस्थौ नेमव ग्लापयंति।
मंत्रयंते दिवो अमुष्य पृष्ठे विश्वविदं वाचमविश्वमिन्वां ॥१०॥
तिस्रः। मातॄः। त्रीन्। पितॄन्। बिभ्रत्। एकः। ऊर्ध्वः। तस्थौ। न। ईं। अव। ग्लपयंति।
मंत्रयंते। दिवः। अमुष्य। पृष्ठे। विश्वऽविदं। वाचं। अविश्वऽमिन्वां ॥१०॥

एकः प्रधानभूतोऽसहायो वा पुत्रस्थानीय आदित्यः संवत्सराख्यः कालो वा तिस्रो मातॄः सस्यवृष्ट्यादुत्पादयित्रीः । क्षित्यादिलोकत्रयमित्यर्थः । तथा त्रीन्पितॄञ्जगतां पालयितॄँल्लोकत्रयाभिमानिनोऽग्निवायुसूर्याख्यान्बिभ्रत् सन्नूर्ध्वस्तस्थौ । उन्नतोऽत्यंतदीर्घस्तिष्ठति भूतभविष्यदाद्यात्मना । सूर्यपक्षे सर्वेभ्य उन्नतः । ईमेनं नाव ग्लपयंति । ग्लानिं नैव कुर्वंति । न हि काल आदित्यो वान्येन पराभूयते । दिवः पृष्ठे द्युलोकस्योपर्यंतरिक्षे मंत्रयंते । गुप्तं परस्परं भाषंते देवाः । किं । विश्वविदं विश्ववेदनसमर्थां विश्वैर्वेदनीयां वाविश्वमिन्वामसर्वव्यापिनीं वाचं गर्जितलक्षणां । अमुष्यादित्यस्य संबंधिनीं मंत्रयंत इत्यर्थः ॥ ॥१५॥

द्वादशारं नहि तज्जराय ववर्ति चक्रं परि द्यामृतस्य ।
आ पुत्रा अग्ने मिथुनासो अत्र सप्त शतानि विंशतिश्च तस्थुः ॥११॥
द्वादशऽअरं । नहि । तत् । जराय । ववर्ति । चक्रं । परि । द्यां । ऋतस्य ।
आ । पुत्राः । अग्ने । मिथुनासः । अत्र । सप्त । शतानि । विंशतिः । च । तस्थुः ॥११॥

ऋतस्योदकस्य सत्यात्मकस्य वादित्यस्य चक्रं पुनःपुनःक्रमणशीलं मंडलाख्यं रथचक्रं वा ववर्ति । पुनःपुनर्वर्तते । संचरति । कुत्र । द्यां परि द्युलोकस्यांतरिक्षस्य परितः । कीदृशं तत् । द्वादशारं द्वादशसंख्याकमेषादिराश्यात्मकैर्मासात्मकैर्वारै रथांगावयवैर्युक्तं । किंच तच्चक्रं नहि जराय नैव खलु जरायै भवति । हे अग्ने सर्वदागमनयुक्तादित्य । यद्वा । अग्नेरेव स्थानत्रये तत्तदात्मना वर्तमानत्वादसावप्यग्निरित्युच्यते । अत्रास्मिंस्त्वदीये चक्रे मिथुनासः स्त्रीपुंसरूपेण परस्परं मिथुनभूताः सप्त शतानि विंशतिश्च विंशत्युत्तरसप्तशतसंख्याकाः पुत्राः पुत्रवदुत्पद्यमानाः प्राणिनां दुःखात्त्रातारो वाहोरात्ररूपास्तस्थुः । तिष्ठंति । निष्पद्यंते । षष्ट्यधिकशतत्रयसंख्याकान्यहानि तावत्य एव रात्रय इत्येवं तद्विभागः । सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राः स एषोऽहःसंमानः । ऐ॰ आ॰ ३. २. १. । इत्यारण्यकं ॥

पंचपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणं ।
अथेमे अन्य उपरे विचक्षणं सप्तचक्रे षळर आहुरर्पितं ॥१२॥
पंचऽपादं । पितरं । द्वादशऽआकृतिं । दिवः । आहुः । परे । अर्धे । पुरीषिणं ।
अथ । इमे । अन्ये । उपरे । विऽचक्षणं । सप्तऽचक्रे । षट्ऽअरे । आहुः । अर्पितं ॥१२॥

पंचपादं पंचसंख्याकर्त्वात्मकपादोपेतं । एतद्धेमंतशिशिरयोरेकत्वाभिप्रायं । पितरं सर्वस्य प्रीणयितारं द्वादशाकृतिं द्वादश मासा एवाकृतयो यस्य तादृशं पुरीषिणं वृष्ट्युदकेन तद्वंतं प्रीणयितारं वा । पुरीषमित्युदकनाम । उक्तलक्षणं संवत्सरचक्रं दिवो द्युलोकस्य परेऽर्धे । तात्स्थ्यात्ताच्छब्द्यं । परस्मिन्नर्धेऽंतरिक्षलक्षणेऽवस्थित आदित्य इत्यर्थः । तस्मिन्नर्पितमाहुः । एतदुत्तरत्र स्थितमत्राप्यनुषज्यते । यद्यत्रार्पितं तत्तदधीनं अतः संवत्सरं सूर्यायत्तमाहुरित्यर्थः । अथेमेऽपि चान्ये केचन वेदवादिन एवमाहुः । किमिति । उपरे । उपरमंतेऽस्मिन् उपरताः प्राणिनोऽत्रेति वोपरः संवत्सरः । तस्मिन्कीदृशे । सप्तचक्रे । सप्तादित्यरश्मयस्तद्द्वारेण चक्रस्थानीया यस्य स तथोक्तः । यद्वा । अयनर्तुमासपक्षाहोरात्रिमुहूर्तानि सप्त सप्त चक्राणि पुनःपुनःक्रममाणानि यस्य तादृशे । षळरे षडृतव एवारा नाभौ प्रत्यृताः संबद्धा यस्य तथोक्तलक्षणे संवत्सरे रथे विचक्षणं विविधदर्शनकरमादित्यमर्पितमाहुः । एतदुक्तं भवति । अमुमादित्यं दक्षिणोत्तररूपभिन्नगतेस्तीव्रमंदादिभावस्य च कालाधीनत्वात्तदधीनमाहुः । अन्ये तु संवत्सराद्यात्मकस्य कालस्य सूर्यगमनागमनसाध्यत्वात्तदायत्तत्वमाहुरिति ॥

पंचारे चक्रे परिवर्तमाने तस्मिन्ना तस्थुर्भुवनानि विश्वा ।
तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः ॥१३॥

पंचऽअरे । चक्रे । परिऽवर्तमाने । तस्मिन् । आ । तस्थुः । भुवनानि । विश्वा ।
तस्य । न । अक्षः । तप्यते । भूरिऽभारः । सनात् । एव । न । शीर्यते । सऽनाभिः ॥ १३ ॥

पंचारे पंचर्तुरूपैररैर्युक्ते चक्रे संवत्सरात्मके परिवर्तमाने संवत्सरपरिवत्सरादिरूपेण पुनःपुनरावर्तमाने सति तस्मिन्कालचक्रे विश्वा भुवनानि सर्वाणि भूतजातानि वर्तंत इत्यर्थः । किंच तस्य चक्रस्य मध्ये वर्तमानोऽक्षो भूरिभारः सकलभुवनवहनेन प्रभूतभारोऽपि न तप्यते । न पीड्यते । किंच सनादेव सनातन एव सनाभिः समाननाभिकः सर्वदैकरूपनाभिरसौ न शीर्यते । न भिद्यते । यथा लौकिकरथाक्षो भारेण भग्नो भवति अक्षघातेन च नाभिर्विवृता भवति तद्वदत्रापि नास्तीत्यर्थः ॥

सनेमि चक्रमजरं वि वावृत उत्तानायां दश युक्ता वहंति ।
सूर्यस्य चक्षू रजसैत्यावृतं तस्मिन्नार्पिता भुवनानि विश्वा ॥ १४ ॥
सऽनेमि । चक्रं । अजरं । वि । ववृते । उत्तानायां । दश । युक्ताः । वहंति ।
सूर्यस्य । चक्षुः । रजसा । एति । आऽवृतं । तस्मिन् । आर्पिता । भुवनानि । विश्वा ॥ १४ ॥

सनेमि समाननेम्येकप्रकारवहिर्वलयमक्षीणनेमि चक्रं संवत्सराख्यमजरं सदातनमपि जरारहितं वि ववृते । पुनःपुनर्विशेषेण वर्तते । उत्तानायामूर्ध्वतनायामीषायामुपरिविस्तृतभूम्यां वा दशेंद्रादयः पंच लोकपाला निषादपंचमाश्चत्वारो ब्राह्मणादयो वर्णा मिलित्वा दशसंख्याका युक्ताः स्वस्वव्यापारयुक्ता वहंति । निर्वहंति । कृत्स्नं जगन्निर्वहंतीत्यर्थः । तन्निर्वाहार्थत्वात्कालस्य । किंच सूर्यस्यादित्यस्य चक्षुः ख्यानस्वभावं सर्वस्य चक्षुःस्थानीयं वा मंडलं । चक्षुः ख्यातेर्वा चष्टेर्वेति निरुक्तं । ४. ३. । रजसा वृष्ट्युदकेनावृतं व्याप्तमेति । गच्छति । उदकं रज उच्यत इति यास्कः । नि॰ ४. १९. । तादृशे मंडले विश्वा भुवनानि सर्वाणि भूतजातान्यार्पिता । अर्पितानि । तदधीनत्वात्तेषां ॥

साकंजानां सप्तथमाहुरेकजं षळिद्यमा ऋषयो देवजा इति ।
तेषामिष्टानि विहितानि धामशः स्थात्रे रेजंते विकृतानि रूपशः ॥ १५ ॥
साकंऽजानां । सप्तथं । आहुः । एकऽजं । षट् । इत् । यमाः । ऋषयः । देवऽजाः । इति ।
तेषां । इष्टानि । विऽहितानि । धामऽशः । स्थात्रे । रेजंते । विऽकृतानि । रूपऽशः ॥ १५ ॥

साकंजानामेकस्मादादित्यात्सहोत्पन्नानां सप्तानामृतूनां मध्ये सप्तथं सप्तममृतुं ॥ थट् च छंदसि । पा॰ ५. २. ५०. । इति थट् ॥ एकजमेकेनोत्पन्नमाहुः कालतत्त्वविदः । चैत्रादीनां द्वादशानां मासानां द्वयमेलनेन वसंताद्याः षडृतवो भवंति । अधिकमासेनैक उत्पद्यते सप्तमर्तुः । न च तादृशो मास एव नास्तीति मंतव्यं । अस्ति त्रयोदशो मास इत्याहुः । तै॰ सं॰ ६. ५. ३. ४. । इति श्रुतिः । तदेवोच्यते । षळिद्यमाः । इच्छब्द एवकारार्थः । षडेवर्तवो मासद्वयरूपा ऋषयो गंतारः । ते च देवजा देवादादित्याज्जाता इत्येवमाहुः । सप्तमाधारस्य त्रयोदशस्य मासस्य देवाभावः । निःसूर्योऽधिकमासो मंडलं तपते रवेरित्यादिस्मृतेः । तस्मात् षडेव देवजाः अदेवज एकः । तेषामृतूनां स्वरूपाणीष्टानि सर्वलोकाभिमतानि धामशस्तत्तत्स्थाने विहितानि पृथक् पृथक् स्थापितानि रूपशो रूपभेदेन विकृतानि विविधाकृतियुक्तानि । स च रूपभेदस्तैत्तिरीयैराम्नातः । स रसमह वसंताय प्रायच्छद्यवं ग्रीष्मायेत्यादि । तै॰ सं॰ ७. २. १०. १. । स्थात्रेऽधिष्ठात्रे तदर्थाय रेजंते । चलंति । जगद्व्यवहाराय पुनःपुनरावर्तंत इत्यर्थः ॥ ॥ १६ ॥

स्त्रियः सतीस्ताँ उ मे पुंस आहुः पश्यदक्षण्वान्न वि चेतदंधः ।
कविर्यः पुत्रः स ईमा चिकेत यस्ता विजानात्स पितुष्पितासत् ॥ १६ ॥

स्त्रियः। सतीः। तान्। ऊं इति। मे। पुंसः। आहुः। पश्यत्। अक्षण्ऽवान्। न। वि। चेतत्। अंधः।
कविः। यः। पुत्रः। सः। ईं। आ। चिकेत। यः। ता। विऽजानात्। सः। पितुः। पिता। असत्॥१६॥

मे मदीया या दीधितयः स्त्रियः संस्त्यानवत्यो योषितः सतीः सत्यः। योषिद्वदुदकरूपगर्भधारणात्स्त्रीत्वं। एषां रश्मीनामाविष्टलिंगत्वात्स्त्रीलिंगता। तानु तान्रश्मीनेव पुंस आहुः। प्रभूतवृष्ट्युदकसेक्तॄन्पुरुषानाहुः। प्रतिनिर्देश्यापेक्षया पुँल्लिंगता। अमुमर्थमत्यंतनिगूढमक्षण्वान् ज्ञानदृष्ट्युपेतः कश्चिन्महान्पश्यत्। जानाति। अंधोऽतथारूपः स्थूलदृष्टिर्न वि चेतत्। न विचेतयति। न जानाति। किंच यः कविः क्रांतदर्शी पुत्रः स्त्रीपुरुषरूपाणां रश्मीनां पुत्रस्थानीयः पुरु जगतां त्राता वृष्ट्युदकलक्षणोऽस्ति स ईं स एव पुत्रः। यद्वा। ईमेनमर्थं। स्त्रीणां सतीनां पश्चात्पुरुषभावमा चिकेत सर्वतो जानाति। पित्रोः स्थितिं पुत्र एव जानाति नान्यः। यः कश्चित्ता तानि विजानात् स्त्रीपुरुषपुत्ररूपाणि जानीयात् स पितुः पितासत्। पिता वृष्ट्या जगत्पालको रश्मिसमूहः। तस्यापि पितादित्यः स भवति। आदित्य एव भवतीत्यर्थः। यद्वा। लौकिकोक्तिरियं। यस्तानि जानाति स एवं भवति। स्वयं पितुः पुत्रः सन्नपि स्वपुत्रापेक्षया पिता च भवति। पुत्रपौत्रादिसहितश्चिरकालं जीवो भवति। इत्यधिदैवतं॥ अथाध्यात्मं। या इदानीं स्त्रियः सतीः स्त्रीत्वं प्राप्ता आऽलौकिकाः तानु तानेव मे मह्यं पुंसः पुरुषानाहुः। प्रतिपादयंति तत्त्वज्ञाः। कथमन्यस्यान्यभावः उच्यते। एकस्यैव निरस्तसमस्तोपाधिकस्यात्मनस्तद्देहावस्थानमात्रेण तत्तद्व्यपदेशोपपत्तेः। श्रूयते हि। त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी। श्वे० उ० ४.३.। इत्यादि। स्त्रीत्वं पुंस्त्वं चोभयमपि वस्तुतो नास्तीत्युक्तं भवति। श्रुतिरपि तदभावं बोधयति। नैव स्त्री न पुमानेष नैव चायं नपुंसकः। यद्यच्छरीरमादत्ते तेन तेन स चोद्यते। श्वे० उ० ५.१०.। इति। द्वितीयः पादः पूर्ववत्। किंच पुत्रो वयसाल्पोऽपि यः कविः क्रांतप्रज्ञो ज्ञानी स्यात् ईमिममर्थं स विचिकेत। जानाति। एवमुक्तलक्षणस्य परमात्मनस्ता तानि स्त्रीत्वपुंस्त्वादीनि यो विजानात् औपाधिकानि जानीयात् स पितुः स्वोत्पादकस्यापि ज्ञानरहितस्य पितासत्। पितृवत्पूज्यो भवति। उक्तमर्थमभिप्रेत्य तांडकब्राह्मणं। शिशुर्वा आंगिरसो मंत्रकृतां मंत्रकृदासीत् स पितॄन् पुत्रका इत्यामंत्रयतेत्युपक्रम्य ते देवानपृच्छंत ते देवा अब्रुवन्नेष वाव पिता यो मंत्रकृदिति। तां० १३.३.२४.। मंत्रद्रष्टुरेव किल पितृत्वं तत्त्ववित् पितुः पितासदिति किमाश्चर्यमित्यभिप्रायः॥

अवः परेण पर एनावरेण पदा वत्सं बिभ्रती गौरुदस्थात्।
सा कद्रीची कं स्विदर्धं परागात्क्व स्वित्सूते नहि यूथे अंतः॥१७॥
अवः। परेण। परः। एना। अवरेण। पदा। वत्सं। बिभ्रती। गौः। उत्। अस्थात्।
सा। कद्रीची। कं। स्वित्। अर्धं। परा। अगात्। क्व। स्वित्। सूते। नहि। यूथे। अंतरिति॥१७॥

अत्रासौ हूयमानाहुतिर्गोरूपेण स्तूयते। गौर्गोरूपा गमनशीलैषाहुतिसंघेन पोष्यं वत्सं वत्सस्थानीयममिमवोऽवस्तादधोदेशे परेण पदा पादद्वयेन स्वावयवेनाक्रम्य बिभ्रती धारयंती तथा परः परस्तादुपरिदेश एनानेनावरेण च पदा पादद्वयेनाक्रम्य तमेव वत्सं बिभ्रत्युदस्थात्। सूर्यं प्रत्युत्तिष्ठति। असौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। मनु० ३.७६.। इति स्मृतेः। अथैवं कृतवती साहुतिः कद्रीची क्व गतेत्यनिश्चयगमना। आदित्यं प्राप्तवतीत्यर्थः। कं स्वित् कं फलभाजं पुरुषं प्रत्यर्धमर्धमार्गमागत्य। यद्वा। अर्धमृद्धं। परागात्। परागच्छति। आगत्य च क्व स्वित्सूते। कुत्र प्रदेशे फलमुत्पादयति। नहीतरगोवदियं यूथेऽंतः सजातीयगोमध्ये सूते। साधारण्येन यत्रक्वचिन्न सूते अपि तु कस्मिंश्चिदनुष्ठातरि। अतः स महान् को नु खल्विति। यद्वा।

आदित्यरश्मिसमूह एव गोरूपेण स्तूयते। गौरुक्तलक्षणा रश्मिरूपा गौर्वत्सं वत्सवद्रक्षणीयं यजमानमुक्तक्रमेण बिभ्रत्युदस्थात्। अथ तथा कृत्वा सा कद्रीच्यदृश्यगमना सती कं स्विदर्धमुद्गमर्धस्थानभाजं वा कं स्वित्पुरुषमादित्यं परागात्। अप्रतिनिवृत्ता गता। तं नयंत्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः। मुं॰ उ॰ १. २. ५.। इति श्रुतेः। तथा कृत्वा च क्व स्वित्सूते। कस्मिन्निंद्रादिलोके जनयति। न सर्वत्र। शिष्टं समानं॥

अवः परेण पितरं यो अस्यानुवेद पर एनावरेण।
कवीयमानः क इह प्र वोचद्देवं मनः कुतो अधि प्रजातं॥१८॥
अवः। परेण। पितरं। यः। अस्य। अनुऽवेद। परः। एना। अवरेण।
कविऽयमानः। कः। इह। प्र। वोचत्। देवं। मनः। कुतः। अधि। प्रऽजातं॥१८॥

अवोऽवस्तात्स्थितमस्य पितरमेतल्लोकपालकमग्निं परेणादित्येन सह योऽनुवेद अनुक्रमेण जानाति तथा परः परस्तात्स्थितमादित्यमस्य पितरं पालकं। सोऽपीममेव लोकं वृष्ट्यादिना पालयति। तादृशमादित्यमेनानेनावरेणाग्निना सह योऽनुवेद अग्न्यादित्यौ व्यतिहारेणोपास्ते। यद्वा। अभिभूतरजस्तमस्त्वादुद्बुद्धसत्त्वो अत एव स्वाधीनमायावितावेकत्वेन वाधिगच्छति। स तादृशः पुरुषः कवीयमानः कविवदाचरन् क्रांतदर्शित्वमात्मनः ख्यापयन् क इहास्मिँल्लोके प्र वोचत्। प्रब्रवीति। किंच देवं द्योतमानं देवविषयमलौकिकं वा मनः कुतः कस्माददृष्टविशेषादध्याधिक्येन प्रजातं। उत्पन्नं। उभयमपि दुर्लभमित्यर्थः॥

ये अर्वांचस्ताँ उ परांच आहुर्ये परांचस्ताँ उ अर्वाच आहुः।
इंद्रश्च या चक्रथुः सोम तानि धुरा न युक्ता रजसो वहंति॥१९॥
ये। अर्वांचः। तान्। ऊं इति। परांचः। आहुः। ये। परांचः। तान्। ऊं इति। अर्वांचः। आहुः।
इंद्रः। च। या। चक्रथुः। सोम। तानि। धुरा। न। युक्ताः। रजसः। वहंति॥१९॥

ये सूर्यसोमयोश्चक्रे वर्तमाना रश्मयो ग्रहादयश्च तत्परिभ्रमणवशेनार्वाचोऽर्वागंचना अधोमुखाः संति ताँ उ तानेव पराच आहुः। पराङ्मुखांचनानूर्ध्वानाहुः कालविदः। तथा प्रथमं ये परांचः परागंचनाः ताँ उ तानेवार्वाच आहुः। हे सोम त्वमिंद्रः परमेश्वर इरां भूमिं वृष्ट्या धारक आदित्यः। यद्वा। द्वादशादित्यानां मध्य इंद्रोऽप्येकः। विवस्वदिंद्रयुता इत्युक्तत्वादयमपींद्रः। स च युवां या यानि मंडलपरिभ्रमणानि चक्रथुः कृतवंतौ तानि रजसो रंजनात्मकस्य लोकस्य॥ कर्मणि षष्ठी॥ लोकं वहंति। निर्वहंति। तत्र दृष्टांतः। धुरा शकटादौ धुरि युक्ताः संबद्धा अश्वादयो यथा धुरं वहंति तद्वत्। यद्वा। एतत्पूर्वार्धे दृष्टांतितं। धुरा युक्ताः। धुरि स्थितं चक्रमपि धुरशब्देनोच्यते। तत्र युक्ताः समर्पिताः पुरुषास्तत्परिभ्रमणवशेनार्वाचोऽपि परांचः परांचोऽप्यर्वाचो भवंति तद्वत॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परि षस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभि चाकशीति॥२०॥
द्वा। सुऽपर्णा। सऽयुजा। सखाया। समानं। वृक्षं। परि। सस्वजाते इति।
तयोः। अन्यः। पिप्पलं। स्वादु। अत्ति। अनश्नन्। अन्यः। अभि। चाकशीति॥२०॥

अत्र लौकिकपक्षिद्वयदृष्टांतेन जीवपरमात्मानौ स्तूयेते। यथा लोके द्वौ सुपर्णौ सुपतनौ शोभनगमनौ सयुजा समानयोगौ सखाया समानख्यानौ समानं वृक्षं परि षस्वजाते एकमेव वृक्षं परिषस्वजाते आश्रयतः

तयोरन्य एकः पिप्पलं पक्कं स्वादुतरमत्ति अपरोऽनश्नन्नभि चाकशीति अभिपश्यति तद्वत् द्वौ सुपर्णस्थानीयौ क्षेत्रज्ञपरमात्मानौ सयुजा समानयोगौ। योगो नाम संबंधः स च तादात्म्यलक्षणः। स एवात्मा जीवात्मनः स्वरूपं यस्य परमात्मन स तदात्मा। [illegible]वमन्यस्या[illegible]पि स एवात्मा परमात्मनः स्वरूपं यस्य जीवात्मनः। एवमेकस्वरूपावित्यर्थः। अनेन भास्करमतानुसारिणोऽतिरिक्तिनाम्नो जीवात्मा परमात्मनो नान्यः स च परमात्मा जीवादन्यो नानाजीवाश्रयणादिति मतं निरस्तं भवति। ननु संबंधो द्विष्ठः स च पक्षिणोरिव भेदमपेक्षते अतः कथमैकात्म्यमिति न। औपाधिकभेदं वास्तवाभेदं चापेक्ष्य प्रवृत्तः। अत एव सखायौ समानख्यानौ नान्यख्यानौ। नन्वेकस्य यादृशं ख्यानं तादृशमेवान्यस्येति व्युत्पत्त्या भेदः स्फुटं प्रतिभाति कथं तादात्म्यमुच्यत इति न वक्तव्यं। नात्र परस्परं दृष्टांतदार्ष्टांतिकभावः। अपि तु यस्य यादृशं ख्यानं स्फुरणं परमात्मनः तदेव ख्यानमितरस्यापि जीवात्मन इति सखायावित्युच्यते। एकरूपप्रकाशावित्यर्थः। अत उपपन्नमैकात्म्यं। अनेन वास्तवभेदोऽपि निरस्तः। समानं वृक्षं परि षस्वजाते इत्यत्र यथाश्रयांतराभावादुभयोरेकाश्रयत्वमभ्युपगंतव्यं तद्वत्सयुजा सखायेत्युभयत्राप्येकयोगख्याने आश्रयणीये। वृश्च्यत इति वृक्षो देहः। स चोभयोः समान एक एव। जीवस्य भोगार्थत्वात् परमात्मना सृष्टैर्महाभूतैरारब्धत्वात्तस्योपलब्धिस्थानत्वाच्चोभयोरपि समानः। तादृशं समानं वृक्षं परि षस्वजाते। परिष्वजतः। आश्रयतः। न च जीवस्य वस्तुत ईश्वरत्वे कथं जीवबुद्ध्या संसारशोकाविति वाच्यं तयोर्मोहकृतत्वात्। तथा चाथर्वणिका अनुमंत्रमाम्नायास्य संदेहनिवर्तकमुत्तरं मंत्रमेवमामनंति। समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः। मुं० उ० ३. १. २.। इति। अस्यायमर्थः। एक एव शरीरे पूर्णः पुरुषः परमात्मा निमग्नो निगूढः सन् स्वयमपीश्वरोऽप्यनीशत्वबुद्ध्या मुह्यमानो मूढः सञ्छोचति। संसारेऽहं कर्ता सुखी दुःखीति जननमरणे अनुभवति। यदा तु जुष्टं नित्यतृप्तमन्यं संसारशोकातीतमीशं परमेश्वरं पश्यति स्वानन्यतया साक्षात्करोति। तदा वीतशोको देहाद्व्यतिरिक्तः स्वस्वरूपसाक्षात्कारेण गततापत्रयः सन्नस्य महिमानमिति। निरस्तसमस्तौपाधिकस्य परमेश्वरस्य महिमानं सार्वात्म्यसर्वज्ञत्वादिमहिमानमिति। एति। प्राप्नोति। न च तद्भावनाप्तौ तन्महिमा प्राप्यते। अतस्तद्रूपो भवतीत्यर्थः। तस्माद्वस्तुत एक एव। भेदस्तु मोहकृत इति प्रसिद्धं। अनुभवदशायां लौकिकबुद्ध्या भेदमभ्युपेत्योच्यते। तयोरन्यो जीवात्मा पिप्पलं कर्मफलं स्वादुभूतमत्ति। भुंक्ते। यस्य यदुपार्जितं तत्तस्य स्वादु भवति। अन्यः परमात्मानश्नन्नाप्तकामत्वेनाभुंजानः स्पृहाया अभावात्। आप्तकामस्य का स्पृहेति स्मृतेः। तस्मादवास्तवभेदमुपजीव्य तयोरन्य इत्युक्तं। वस्तुतस्त्वनीशया शोचति मुह्यमान इत्युक्तत्वादभेद एव। तादृशः परमात्मा स्वात्मन्यध्यस्तं जगत्साक्षित्वेनेक्षते। अत्र द्वौ द्वौ प्रतिष्ठितौ सुकृतौ धर्मकर्तारावित्यादि निरुक्ते गतमस्य मंत्रस्य व्याख्यानमनुसंधेयं। नि० १४. ३०.॥ ॥१७॥

यत्रा॑ सुप॒र्णा अ॒मृत॑स्य भा॒गमनि॑मेषं वि॒दथा॑भि॒स्वर॑न्ति ।
इ॒नो विश्व॑स्य॒ भुव॑नस्य गो॒पाः स मा॒ धीरः॒ पाक॒मत्रा वि॑वेश ॥२१॥
यत्र॑। सु॒ऽप॒र्णाः। अ॒मृत॑स्य। भा॒गं। अनि॑ऽमेषं। वि॒दथा॑। अ॒भि॒ऽस्वर॑न्ति।
इ॒नः। विश्व॑स्य। भुव॑नस्य। गो॒पाः। सः। मा॒। धीरः॑। पाक॑म्। अत्र॑। आ। वि॒वे॒श॒ ॥२१॥

यत्रादित्यमंडले सुपर्णाः सुपतनाः शोभनगमना रश्मयोऽमृतस्योदकस्य भागं भजनीयमंशमादायानिमेषमनवरतं विदथा वेदनेन ज्ञानेनास्माभिरेवं कर्तव्यमिति बुद्ध्याभिस्वरंति अभिप्रापयंति। यस्य विश्वस्य भुवनस्य भूतजातस्येनः स्वामी तथा तस्यैव गोपा गोपायिता रक्षिता। अयमादित्यः स परमेश्वरो धीरो धीमान् प्राण्यनुग्रहबुद्धियुक्तः सन् मा मां पाकं पक्तव्यमपक्वप्रज्ञमत्रास्मिन्स्वकीयमंडल आ विवेश। प्रवेशयति। अत्रास्मदीये देहे वा नियामकतया प्रविष्ट इत्यधिदैवतपक्षे ॥ अथाध्यात्मपक्षे। यत्र यस्मिन्नात्मनि सुपर्णाः शोभनपतनानि स्व[illegible] गमनकुशलानींद्रियाणि चक्षुरादीन्यमृतस्य भागं। अत्र विषय[illegible]न्न-चैतन्यममृतमित्युच्यते। तस्य भागं भजनीयं स्व[illegible] निमेषरहितमनारतं विदथा वेदनेन वृत्त्यवच्छिन्नचैतन्येनावरुद्धान्यभिस्वरंति अभिप्रयंति आवरणापगमनेन स्फोरयंति। किंच यस्त्विनः स्वाम्यस्य देहस्य विश्वस्य भुवनस्य गोपा गोपायिता रक्षिता। यद्वा। विश्वस्य भुवनस्य भूतजातस्य स्वाम्यस्य देहस्य गोपाः।

अनेन तत्त्वपदार्थयोरैकत्वं प्रतिपादितं भवति । स परमेश्वरो धीरः समाधिनिष्ठः सर्वदाविक्रियो मा मां पाकं परिपक्वमनस्कं यागदानादिनापगतरजस्तमस्कत्वेन दर्पणवदतिनिर्मलसत्त्वोद्रिक्तमनस्कं मामा विवेश । उक्तरूपे चित्ते तादृशं वस्तु स्फुरतीत्यर्थः । यद्वा । अपरिपक्वमना अहं पूर्वमज्ञानदशायां मदन्य ईश्वरोऽस्तीत्यविद्वान् ततः परमस्ति कश्चित्सर्वज्ञः सर्वेश्वरः सत्य[illegible] इति निश्चित्य पश्चाद्गुरुशास्त्राभ्यां स एवाहमस्मीति मत्वा एवं पारंपर्येणावगत्यासंभावनाविपरीतभावने व्युदस्य भावनया साक्षात्कृत्य परिपूर्णः परमात्माभूवमित्यर्थः । अयमेव स मा धीरः पाकमत्रा विवेशेत्यनेनोच्यते । [illegible] परमात्मनः सर्वत्र व्याप्तत्वात्प्राप्तिरिव नोपपद्यते संप्रत्यत्र प्राप्तिर्द्विविधा प्राप्तप्राप्तिरप्राप्तप्राप्तिश्चेति । प्राप्तस्यापि कंठे चामीकरन्यायेनावरणाज्ञानहानद्वारेण प्राप्तिरुपपद्यते । अस्य मंत्रस्य यन्निरुक्तं यत्र सुपर्णाः सुपतना आदित्यरश्मय इत्यादिकं तदत्र द्रष्टव्यं । नि० ३. १२. ॥

यस्मिन्वृक्षे मध्वदः सुपर्णा निविशंते सुवते चाधि विश्वे ।
तस्येदाहुः पिप्पलं स्वाद्वग्रे तन्नोन्नशद्यः पितरं न वेद ॥ २२ ॥
यस्मिन् । वृक्षे । मधुऽअदः । सुऽपर्णाः । निऽविशंते । सुवते । च । अधि । विश्वे ।
तस्य । इत् । आहुः । पिप्पलं । स्वादु । अग्रे । तत् । न । उत् । नशत् । यः । पितरं ।
न । वेद ॥ २२ ॥

अत्र वृक्षस्वरूपकल्पना । अधिदैवमादित्यमध्यात्ममात्मानं च प्रशंसति । यस्मिन्नादित्ये वृक्षे वृक्षवत्सर्वफलाश्रयभूते मध्वदः । मध्वित्युदकनाम । तददंतीति मध्वद उदकस्याहारः सुपर्णाः सुपतना रश्मयो निविशंते प्रविशंति रात्रौ सुवते च पुनरुदयकाले प्रकाशं जनयंति च [illegible] । कुत्र । अधि विश्वे विश्वस्योपरि । तस्यादित्यवृक्षस्य पिप्पलं पालकं फलं स्वादु रसवदग्र उपर्युपासनानंतरमाहुः । कथयंति तत्त्वविदः । यद्वा । सर्वस्याप्युपरि वर्तमानमाहुः । ईदृशं पितरं जगतः पालयितारं यो नरो न वेद नोपास्ते स तन्नोन्नशत् । नशतिर्गतिकर्मा । तत्फलं न प्राप्नोति । वेदितुस्त्वग्रे पिप्पलमाहुरित्यर्थः । इत्यधिदैवपक्षे ॥ अथाध्यात्मपक्षे । यस्मिन्परमात्मनि वृक्षे वृक्षवन्नमनादिरहितेऽविक्रिये सुपर्णाः शोभनगमनानींद्रियाणि मध्वदो मधुनो ज्ञानस्यात्तॄणि । तज्ज्ञानेन ज्ञानभांजीत्यर्थः । निविशंते स्वापकाले स्वस्वविषयेभ्यः प्रतिनिवृत्तान्यात्मनिवृत्त्या लीयंते पुनः प्रबोधकालेऽधि विश्वे विश्वस्योपरि सुवते च उद्यंति । [illegible] इत्यर्थः । तस्य परमात्मनः पिप्पलं पालकं संसारत उद्धारकं स्वाद्वास्वादनीयममृतत्वलक्षणं ज्ञानं । यत्फलास्वादने पुनः क्षुत्तृष्णाशोकमोहजरामरणादयो न भवंति तद्धि स्वादुतमं । इतरस्वर्गादिफलानि पुनर्जननाद्यापादकत्वादापातस्वादूनि । तत्फलमग्रे स्वरूपज्ञानोत्तरकालमाहुः । यः पुमान् पितरं पालकं ज्ञानफलं तत्फलाधारमात्मानं वा न वेद न जानाति गुरुशास्त्रात् स तत्फलं नोन्नशत् । न प्राप्नोति । अत आत्मानं यो वेद स एव तन्मोक्षफलं प्राप्नोतीत्यर्थः । यद्वा । चर्मवदाकाशं । श्वे० उ० ६. २०. । इत्यादिश्रुतेर्ज्ञानादन्योपायस्यामृतत्वप्राप्तिं निवारयति ब्रह्म वेद ब्रह्मैव भवतीत्यादिकाशुज्ञाप्राप्तिमाह । तस्मादीदृशं परमेश्वरं विदित्वा मुक्तो भूयासमित्यर्थः ॥

यद्गायत्रे अधि गायत्रमाहितं त्रैष्टुभाद्वा त्रैष्टुभं निरतक्षत ।
यद्वा जगज्जगत्याहितं पदं य इत्तद्विदुस्ते अमृतत्वमानशुः ॥ २३ ॥
यत् । गायत्रे । अधि । गायत्रं । आऽहितं । त्रैस्तुभात् । वा । त्रैस्तुभं । निःऽअतक्षत ।
यत् । वा । जगत् । जगति । आऽहितं । पदं । ये । इत् । तत् । विदुः । ते । अमृतऽत्वं ।
आनशुः ॥ २३ ॥

गायत्रे अधि गायत्रमाहितं। प्राथम्यात्सर्वैः स्तुत्यत्वाच्च गायत्री भूः। तदीयं स्थानं गायत्रं। अध्युपरि तत्र गायत्रमाग्नेयं पदमाहितं। प्रथमसृष्टत्वात् गायति त्रायते चेति व्युत्पत्त्या च प्रजापतेर्मुखाद्गायत्र्या सहोत्पन्नत्वाद्गत्रत्याग्निरपि गायत्रः। गायत्रोऽग्निः। तै० सं० २. २. ५. ५.। इति श्रुतेः। भूम्यामग्निः स्थापित इति यदस्ति। तथा त्रैष्टुभाद्वितीयत्वाद्वृष्टिपर्जन्यविद्युद्रूपत्रिस्तोभयुक्तादंतरिक्षात् त्रैष्टुभं स्तोभयुक्तमूर्ध्वाधस्तिर्यग्गलचणस्तोभत्रयोपेतं वायुं निरतक्षत साधु संपादितवंतो देवा इति यदस्ति। वाथवा जगति सर्वैर्गंतव्य उन्नततमे वा तृतीयभूते द्युलोके जगद्गमनशीलमादित्याख्यं पदमाहितमिति यदस्ति। तदिदं त्रिषु स्थानेषु त्रयाणामग्न्यादीनां पदाधानं य इत्थ एव नरा विदुः जानंति त एवामृतत्वमानशुः। अमरणरूपं पदमाप्नुवंति। इत्यधिलोकं ॥ अथाधियज्ञं। गायत्रे प्रातःसवनेऽध्युपरि गायत्रं छंदः पदमाहितमिति यत्। तथा त्रैष्टुभान्माध्यंदिनात्सवनात्त्रैष्टुभं छंदो निरतक्षत तत्र आहितमिति यत्। वा किंचेत्यर्थः। जगति तृतीयसवने जगज्जागतं पदमाहितमिति यत्। तत्तादृशं सवनत्रयेषु च्छंदस्त्रयसंस्थानं ये नरा विदुः यजमाना विदुः जानंति तेऽमृतत्वं ज्ञानानुष्ठानद्वारेण मोक्षमानशुः। आप्नुवंति। अथवा गायत्रे प्रातःसवने। त्रिषु सवनेषु च्छंदस्त्रयपरिमाणात् सवनान्यपि तत्तच्छंदःशब्देनोच्यंते। गायत्रं प्रातःसवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृतीयसवनमिति श्रुतेः। तै० सं० २. २. ९. ५–६.। तादृशे प्रातःसवनेऽध्युपरि गायत्रमष्टाक्षरात्मकमाहावप्रतिगररूपं गायत्रं पदमाहितं। तद्यथा होता शोंसावोमिति त्र्यक्षरेण तथा शंसामोदैवोमिति पंचाक्षरेणाध्वर्युः प्रतिगृणाति। तन्मिलित्वाष्टाक्षरं संपद्यते। तत्राष्टाक्षरं गायत्रीसदृशं तस्या अपि पादस्याष्टाक्षरत्वात्। इदमेकं प्रातःसवनरूपे गायत्रपदप्रतिष्ठापनं। तथा सवनांतेऽपि शंसनानंतरमुक्थं वाचीति चतुरक्षरमाह। ओमुक्थशा इति चतुरक्षरमध्वर्युः। तदष्टाक्षरं संपद्यते। एतदेकं परं गायत्रे गायत्रस्थापनं। तथा त्रैष्टुभान्माध्यंदिनसवनात्त्रैष्टुभमाहावप्रतिगररूपं पदं निरतक्षत ऋत्विजः। तद्यथा माध्यंदिनसवने होताध्वर्यो शोंसावोमित्याह्वयते षडक्षरेण अध्वर्युश्च शंसामोदैवोमिति पंचाक्षरेण प्रतिगृणाति। तन्मिलित्वैकादशाक्षरं संपद्यते। इदमेकं माध्यंदिनसवनादौ त्रैष्टुभे त्रैष्टुभाधानं। तथा सवनांतेऽपि शंसनानंतरमुक्थं वाचि इंद्रायेति सप्ताक्षरमाह। अध्वर्युश्चोमुक्थशा इति चतुरक्षरेण प्रतिगृणाति। तन्मिलित्वैकादशाक्षरं संपद्यते। इदमपरं त्रैष्टुभे त्रैष्टुभस्थापनं। तथा तृतीयसवने होताध्वर्यो शोंशोंसावोमिति सप्ताक्षरेणाह्वयते शंसामोदैवोमिति पंचाक्षरेणाध्वर्युः प्रतिगृणाति। द्वादशाक्षरं भवति। तदिदं प्रथमं जागते जागतोत्पादनं। तथा पश्चादपि शंसनानंतरमाह उक्थं वाचि इंद्राय देवेभ्य इति। एतदेवैकादशाक्षरं भवति। अध्वर्युश्चोमित्येकाक्षरेण प्रतिगृणाति। तदुभयं मिलित्वा द्वादशाक्षरं भवति। तदिदमपरं जागते जागतपदस्थापनं। एवं त्रिषु च्छंदःसु त्रिषु गायत्र्यादिसवनेषु गायत्रादिच्छंदस्त्रयपदप्रतिष्ठापनं। एतत्सर्वमैतरेयब्राह्मणे देवविशः कल्पयितव्या इति खंडे विस्पष्टमाम्नातं। १. ९.। तत्तादृशं छंदसि च्छंदःस्थापनं य इत्तद्विदुः य एव जानंति त एवामृतत्वमानशुः। प्राप्नुवंत्यनुष्ठानद्वारा। एवमजानंतोऽनुष्ठानेनापि फलं न प्राप्नुवंतीत्यर्थः। तस्य साकल्याभावादिति भावः॥

गा॒य॒त्रेण॒ प्रति॑ मिमीते अ॒र्कम॒र्केण॒ साम॒ त्रैष्टु॑भेन वा॒कं।
वा॒केन॑ वा॒कं द्वि॒पदा॒ चतु॑ष्पदा॒क्षरे॑ण मिमते स॒प्त वाणीः॑ ॥२४॥
गा॒य॒त्रेण॑। प्रति॑। मि॒मी॒ते॒। अ॒र्कं। अ॒र्केण॑। साम॑। त्रैस्तु॑भेन। वा॒कं।
वा॒केन॑। वा॒कं। द्वि॒ऽपदा॑। चतुः॑ऽपदा। अ॒क्षरे॑ण। मि॒म॒ते॒। स॒प्त। वाणीः॑ ॥२४॥

गायत्रेण गायत्रच्छंदसार्कमर्चनसाधनं मंत्रं प्रति मिमीते। प्रत्येकं परिच्छिनत्ति। अर्को मंत्रो भवति यदेनेनार्चंतीति निरुक्तं। ५. ४.। प्रतिमंत्रं गायत्रेण च्छंदसोपनिबद्धं करोति। उपलक्षणमेतदन्येषां छंदसां। यद्वा। इतरेषां छंदसामस्यैव चतुश्चतुरक्षराधिक्येन तत्तच्छंदोभिः प्रतिमिमीत इत्यर्थः। यद्वा। प्रतिशब्दः समित्येतस्मिन्नर्थे। छंदोभिर्मंत्रान् संमितं करोतीत्यर्थः। अर्केण साम। उक्तलक्षणेन मंत्रेण साम गायत्ररथंतरसंज्ञकं साम प्रति मिमीते। नन्वेकं साम तृचे क्रियत इति तिसृष्वेकं साम विहितं अतोऽर्कैः सामेति वक्तव्यं कथमुच्यतेऽर्केणेति न। वस्तुत एकं सामैकस्यामृच्यारूढं। पश्चादन्योन्यां तदुत्तरयोर्गायतीत्यतिदेशतः प्राप्तं तिसृषु गानं। अत एकवचनमविरुद्धं। त्रैष्टुभेन वाकं। अत्र त्रिष्टुप्छंदसा[illegible]छंदःप्रदर्शनार्थं। अथवा

अनादेशे सर्वत्र त्रिष्टुभो ग्रहणात्प्राचुर्याभिप्रायेणेदमुक्तं । त्रैष्टुभेन द्विवारत्रिवारावृत्तेन द्वृचतृचरूपं वाकं वक्तव्यमेकैकं छंदः प्रति मिमीते । अथवा वाकं सूक्तमेतावद्भिस्त्रिष्टुब्भिरूपनिबद्धमिदं सूक्तमिति । तादृशेन वाकेन वाकं वर्गमनुवाकं वा मिमीते । कीदृशेन वाकेनेति स विशेषयति । द्विपदा चतुष्पदा । पादद्वयबद्धविराडादिच्छंदोनिबद्धमंत्ररूपेण चतुष्पदा पादचतुष्टयोपेतेनानुष्टुबादिमंत्ररूपेणेति । इयतीभिर्द्विपदाभिर्वर्गः इयतीभिश्चतुष्पदाभिरुपेतो वर्गः । इयद्भिः पदरूपैर्वाकैः इयच्चतुष्पदरूपैर्वाकैश्च परिमितोऽनुवाक इति । सूक्तपत्त एतावद्भिः सूक्तैरयमनुवाक इति । किंचाक्षरेणाक्षरेणैव सप्त वाणीर्वागधिष्ठितानि सप्त च्छंदांसि मिमते । निर्माणं कुर्वंति । अष्टाक्षरा गायत्री एकादशाक्षरा त्रिष्टुप् द्वादशाक्षरा जगतीति । अक्षरैः पादाः परिमीयंते । परिमितैः पादैश्छंदांसि । ततः पादानां छंदसामक्षरं मूलमिति । तथा ऋग्वर्गसूक्तानुवाकादीनां चाक्षरं मूलमित्यक्षरप्रशंसा ॥

जग॑ता॒ सिंधुं॑ दि॒व्य॑स्तभायद्रथंत॒रे सूर्यं॒ पर्य॑पश्यत् ।
गा॒य॒त्रस्य॑ स॒मिध॑स्ति॒स्र आ॑हु॒स्ततो॑ म॒ह्ना प्र रि॑रिचे महि॒त्वा ॥२५॥
जग॑ता । सिंधुं॑ । दि॒वि । अ॒स्त॒भा॒य॒त् । र॒थं॒ऽत॒रे । सूर्यं॑ । परि॑ । अ॒प॒श्य॒त् ।
गा॒य॒त्रस्य॑ । स॒म्ऽइधः॑ । ति॒स्रः । आ॒हुः॒ । ततः॑ । म॒ह्ना । प्र । रि॒रि॒चे॒ । म॒हि॒ऽत्वा ॥२५॥

जगतीच्छंदस्कायामृच्युत्पन्नं साम जगत् । तेन ब्रह्मा सृष्टिकाले सिंधुं स्यंदनशीलमुदकस्य स्यंदकं वादित्यं दिवि द्युलोकेऽस्तभायत् । स्तंभितवान् । जागतो वा एष य एष तपतीति श्रुतिः । रथंतर एतन्नामके साम्नि स्तंभितं सूर्यं पर्यपश्यत् । परिदृष्टवान्प्रजापतिः । तदाधारभूतायामृचि । ऋ० ७. ३२. २२. । स्वर्दृशमिति सूर्यप्रतिपादकशब्ददर्शनात् । असौ वाव स्वर्दृगिति हि श्रुतिः । अत एव तत्र सूर्यदर्शनं विधीयते । रथंतरे प्रस्तूयमाने संमीलयेत् स्वर्दृशं प्रति वीक्षेतेति सामब्राह्मणेन । तां० ७. ७. १५. । गायत्रस्य गायत्र्यामुत्पन्नस्य साम्नः समिधः समिंधनास्तिस्रो विभक्तीराहुः । पादत्रयमाहुरित्यर्थः । अथवा तिस्र ऋच आहुः । ततो हेतोर्मह्ना बलेन महित्वा महत्त्वेन प्र रिरिचे । प्ररिच्यते । अन्यानि सामानि पृथक्पृथग्निर्मितवान् । यद्वा । गायत्रशब्दश्छंदोवाची । तस्य तिस्रो मूर्तीराहुः क्रमेणाष्टाक्षरैकादशाक्षरद्वादशाक्षरैर्गायत्रीत्रिष्टुब्जगत्यात्मिकाः । यस्मादेवं ततस्तस्माद्गायत्री छंदसां कनिष्ठा सती मह्ना बलेन महत्त्वेन प्र रिरिचे । सर्वाणि च्छंदांस्यतिक्रामति । येनैव बलेन सोममाहृतवती तादृशेनैवं भवति ॥ ॥ १८ ॥

प्रवर्ग्ये घर्मधुगाह्वानकाल उप ह्वय इत्यादिके द्वे ऋचौ । उप ह्वये सुदुघां धेनुमेतामिति द्वे । आ० ४. ७. । इति सूत्रितत्वात् ॥

उप॑ ह्वये सु॒दुघां॑ धे॒नुमे॒तां सु॒हस्तो॑ गो॒धुगु॒त दो॑हदेनां ।
श्रेष्ठं॑ स॒वं स॑वि॒ता सा॑विषन्नो॒ऽभी॑द्धो घ॒र्मस्तदु॒ षु प्र वो॑चं ॥२६॥
उप॑ । ह्व॒ये॒ । सु॒ऽदुघां॑ । धे॒नुं । ए॒तां । सु॒ऽहस्तः॑ । गो॒ऽधुक् । उ॒त । दो॒ह॒त् । ए॒ना॒ं ।
श्रेष्ठं॑ । स॒वं । स॒वि॒ता । सा॒वि॒ष॒त् । नः॒ । अ॒भिऽइ॑द्धः । घ॒र्मः । तत् । ऊं॒ इति॑ । सु ।
प्र । वो॒च॒ं ॥२६॥

अहं होतोप ह्वये । उपेत्याह्वयामि । किं । एतां धेनुमागच्छंतीं क्षीरेण प्रीणयित्रीं गां प्रवर्ग्यार्थां । पुनः कीदृशीं । सुदुघां सुष्ठु दोग्ध्रीं । उतापि चैनामुक्तलक्षणां गां सुहस्तः शोभनहस्तो दोहनकुशलो गोधुग्गोदोग्धाध्वर्युर्दोहत् । दोग्धि । यस्मादेवं तस्मादुप ह्वय इत्यर्थः । तदर्थं सविता सर्वस्यानुज्ञाता परमेश्वरो नोऽस्मदीयं श्रेष्ठं प्रशस्यं सवं सोमयागं क्षीरं वा साविषत् । अनुजानातु । कथमेवं । तच्छब्दश्रुतेर्यच्छब्दाध्याहारः । यद्यस्माद्धर्मः प्रवर्ग्यः । यद्घ्राँ इत्युपतत्तद्धर्मस्य घर्मत्वमिति तैत्तिरीयकं । तै० आ० ५. १. ५. । तस्मादृशोऽभीद्धो

ऽभिदीप्तः। तदुशब्द एवकारार्थः। तस्मादेव कारणात्तु प्र वोचं। सुष्ठु ब्रवीमि। उपह्वय इति। यद्वा। एतां पुरतो दृश्यमानां धेनुं वृष्ट्या प्रीणयित्रीं मेघलक्षणां धेनुमुप ह्वये। आह्वयामि वर्षदोहाय। किंचैनां धेनुं सुहस्तः शोभनदोहनकुशलहस्तोपेतो गोधुग्गोदोग्धादित्यो वा वायुर्वा दोहत्। दोग्धि। तदधीनत्वाद्वर्षणस्य। किंच तदर्थं सविता प्रेरकः परमेश्वरोऽस्मदर्थमस्मदुपभोगादृष्टमपेक्ष्य साविषत्। अनुजानातु। प्रतिबंधं मा करोत्वित्यर्थः। किमितीदमुच्यत इति उच्यते। घर्मो ग्रीष्मोऽवर्षणजनितः सस्यशोषोऽभीद्धः प्रवृद्धः। तदु षु प्र वोचं। तस्मादेव कारणाद्ब्रवीमि ॥ ब्रवीतेर्लुङि वच्यादेशेऽस्यतिवक्तीत्यादिना च्लेरङ्। छांदसो ऽडभावः ॥

हिं॒कृ॒ण्व॒ती व॑सु॒पत्नी॒ वसू॑नां व॒त्समि॒च्छंती॒ मन॑सा॒भ्याग॑त्।
दु॒हाम॒श्विभ्यां॒ पयो॑ अ॒घ्न्येयं सा व॑र्धतां म॒ह॒ते सौभ॑गाय ॥२७॥
हि॒ङ्ऽकृ॒ण्व॒ती। व॒सु॒ऽप॒त्नी॑। वसू॑नां। व॒त्सं। इ॒च्छंती॑। मन॑सा। अ॒भि। आ। अ॒गा॒त्।
दु॒हां। अ॒श्विऽभ्यां॑। पयः॑। अ॒घ्न्या। इ॒यं। सा। व॒र्ध॒तां॒। म॒ह॒ते। सौभ॑गाय ॥२७॥

यथाहूता गौर्हिंकृण्वती वत्सं प्रति हिंकारं कुर्वती वसूनां वसुपत्नी क्षीरदध्याज्यादिबहुधनानां सर्वदा पालयित्री। वृत्त्यवृत्तिभ्यां वसुनः पालयितृत्वं। तस्यैवाधिक्यं च प्रतिपाद्यते। पुनः कीदृशी। मनसा वत्समिच्छंती। ईदृशी साभ्यागात्। अभ्यागमत्। इयमागताघ्न्या। गोनामैतत्। अहननीया गौरश्विभ्यां ताभ्यामर्थाय पयः क्षीरं दुहां। दुग्धां। सा तादृशी महते सौभगाय प्रवृद्धाय सौभाग्याय वर्धतां। प्रवृद्धा भवतु। यद्वा। अस्मै सौभगाय क्षीरं वर्धयतां ॥ अत्रापि वृष्टिपरत्वेन यथायोगं योज्यं। हिंकृण्वती वर्षणाय शब्दयंती वसूनां गोसस्यादिधनानां बहूनां वसुपत्नी तेषामेव पालयित्री वत्सं लोकं वत्सवत्पोषणीयं मनसेच्छंती प्रीणयितुमभ्यागात्। अभिगच्छति मेघरूपा। सा चाघ्न्याहंतव्या। प्रस्तुत्येत्यर्थः। पय उदकमश्विभ्यां व्याप्ताभ्यां स्थावरजंगमाभ्यामर्थाय। यद्वा। अश्विनौ वाय्वादित्यौ। ताभ्यां सकाशात्। दुहां। दुग्धां। तौ हि वृष्टेर्मोचयितारौ। शिष्टमविशिष्टं ॥

प्रवर्ग्येऽभिष्टवे दोहनसमये वत्से मातुः सकाशादपनीयमाने गौरमीमेदित्येषा। सूत्रितं च। गौरमीमेदनु वत्सं मिषंतं नमसेदुप सीदत। आ० ४. ७.। इति ॥

गौर॑मीमे॒दनु॑ व॒त्सं मि॒षंतं॑ मू॒र्धानं॒ हिङ्ङ॑कृणो॒न्मात॒वा उ॑।
सृक्वा॑णं घ॒र्मम॒भि वा॑वशा॒ना मिमा॑ति मा॒युं पय॑ते॒ पयो॑भिः ॥२८॥
गौः। अ॒मी॒मे॒त्। अनु॑। व॒त्सं। मि॒षंतं॑। मू॒र्धानं॑। हिङ्। अ॒कृ॒णो॒त्। मात॒वै। ऊं इति॑।
सृक्वा॑णं। घ॒र्मं। अ॒भि। वा॒व॒शा॒ना। मिमा॑ति। मा॒युं। पय॑ते। पयः॑ऽभिः ॥२८॥

गौर्धेनुर्मिषंतं निमीलिताक्षं वत्समनु प्राप्यामीमेत्। शब्दं करोति। मीमयतिः शब्दकर्मा। यद्वा। उक्तं वत्समन्वात्मानं प्रक्षिपति। किंच तस्य वत्सस्य मूर्धानं मातवै मातुं निर्मातुं लेहनेन शोधयितुं। उशब्दोऽवधारणे। हिङ्ङकृणोत्। हिंकारमकरोत्। करोति। किंच सृक्वाणं वत्सस्य शब्दवदनप्रांतं फेनस्य स्रष्टारं घर्मं क्षीरस्य क्षरणशीलं वत्समभ्यभिलक्ष्य वावशाना भृशं कामयमाना मायुं शब्दं मिमाति। निर्माति। करोति। तादृशी सती पयोभिः प्रभूतैः क्षीरैः पयते। प्यायते। आप्यायनं करोति वत्सं ॥ अत्रापि मेघपरतया योजनीयं। एवमाहूता मेघरूपा गौर्धेनुर्मिषंतं वृष्टिरूपक्षीराभावेन निमीलिताक्षं लोकाख्यं पुत्रमन्वनुसृत्यामीमेत्। गर्जनशब्दं वर्षणचिह्नरूपं करोति। मूर्धस्थानीयां भूमिं मातवा उ निर्मातुमेव सस्यादियुक्तां कर्तुं हिङ्ङकृणोत्। हिंकाररूपं शब्दमकरोत्। प्रतिपादनभेदादपुनरुक्तिः। किंच सृक्वाणं फलस्य स्रष्टारं घर्मं दीप्तं पुत्रमभि वावशानाभिमुख्येन कामयमाना पयोभिरुदकैः पयते। प्यायते। आप्यायनं करोति ॥

अयं स शिंक्ते येन गौरभीवृता मिमाति मायुं ध्वसनावधि श्रिता ।
सा चित्तिभिर्नि हि चकार मर्त्यं विद्युद्भवंती प्रति वव्रिमौहत ॥ २९ ॥
अयं । सः । शिंक्ते । येन । गौः । अभिऽवृता । मिमाति । मायुं । ध्वसनौ । अधि । श्रिता ।
सा । चित्तिऽभिः । नि । हि । चकार । मर्त्यं । विऽद्युत् । भवंती । प्रति । वव्रिं । औहत ॥ २९ ॥

सोऽयं वत्सः शिंक्ते । अव्यक्तध्वनिं करोति । येन वत्सेन गौर्माताभीवृता आगत्याभितो वेष्टिता भवति । किंच सा गौर्मायुं शब्दं मिमाति । निर्मिमाति । कुत्र स्थिता । ध्वसनावधि श्रिता ध्वसनस्थाने गवां निवासाश्रयेऽधिष्ठिता । सा तादृशी चित्तिभिर्ज्ञानैस्तत्पूर्वकैः कर्मभिर्वा मर्त्यं नि चकार हि । नीचैः करोति । ज्ञानविशिष्टा मनुष्या यथा बालकस्यादनस्तनपानादिस्नेहं कुर्वंति ततोऽप्यतिशयमियं करोतीत्यर्थः । किंच विद्युद्भवंती बहुक्षीरतया विद्योतमाना वव्रिं स्वकीयं रूपं । वव्रिरिति रूपनाम । रूपं प्रत्यौहत । प्रकाशयति । यद्वा । वत्सस्नेहातिशयस्वरूपं विद्युद्भवंती विद्युदिव शीघ्रदर्शनौहत । अयमेकोऽर्थः ॥ अर्थांतरं च । शाकपूणिर्नाम निरुक्ताचार्यः सकलमंत्रदेवता जानामीत्यभिमानितवान् । दुर्ज्ञेयस्य तत्त्वस्य स्वरूपमसौ जानाति किलैनं व्यामोहयामीति मनसि कृत्वा संदिग्धोभयलिंगा देवता प्रादुरासीदथ तस्य पुरतः । स च तां न बुबुधे । बुभुत्सया च तां स्वरूपं प्रदर्शयेति पप्रच्छ । सा चायं स शिंक्त इत्येषा मद्देवता तत्र प्रतीयमानं मत्स्वरूपमित्युपदिदेश । नि० २. ८. । कथमत्रोभयलिंगत्वं वस्तुत उभयलिंगत्वे कथं दैवतैक्यमिति उच्यते । अत्रोभयलिंगत्वमुभयथा संभवति स्त्रीपुँल्लिंगद्वयेन मध्यमोत्तमलिंगद्वयेन च । तत्कथं । अयं स येनेति पुँल्लिंगवाचिना शब्दत्रयेण मेघः प्रतीयते । अधि श्रिता सेत्यादिना स्त्रीलिंगवाचकेन माध्यमिका वाक् । अत उभयलिंगत्वं । तथा विद्युद्भवंतीत्यंतं मध्यमलिंगं तत्र मेघस्तनितयोर्माध्यमिकयोः प्रतीतेः । तथा सति वव्रिमौहतेत्यत्र वर्षेण पृथिवीं प्रच्छाद्य तस्या रसं प्रत्यादत्त इत्ययमर्थो विवक्षितः । स चादित्यव्यापार इत्युत्तमलिंगत्वं । तर्हि वस्तुत उभयलिंगत्वप्रतीतेरुभे अपि देवते यल्लिंगं सा देवता । अनु० ऋ० १. १३९. । इति न्यायात् अतः कथमेकदेवतासिद्धिरिति अयं स येनेत्येतेषां व्यत्ययाश्रयणेन सर्वदेवतानामधिष्ठात्मिकाया एकत्वाश्रयणेन वा सर्वफलदात्रात्मन एकत्वाश्रयणेन वा देवतैक्योपपत्तेः । अनेन मध्यमोत्तमभेदेनोभयलिंगत्वपक्षेऽपि देवतैक्यमुक्तं भवति । अत एकैव वा महानात्मा देवतेत्युक्तत्वाद्वस्तुतो देवतैक्यं अधिष्ठात्रधिष्ठानभेदेन भेदस्य न विरुध्यते ॥ अयं स शिंक्ते । इयं सा माध्यमिकाया वाचोऽधिष्ठात्री देवता शिंक्ते । अव्यक्तध्वनिं करोति । येन गौरभीवृता । गौरिति वाङ्नाम । माध्यमिका वाग्ययाभिवृता अभितो व्याप्ता । अधिष्ठितेत्यर्थः । सेयं शिंक्ते । अथवा । अयं स शिंक्त इति नैव माध्यमिका वाग्निर्दिश्यते अपि तु मेघः । तस्यां वाचि शिंजानायां स एव शिंक्त इत्युपचर्यते मंचाः क्रोशंतीतिवत् । अयं स मेघः शब्दं करोति येन माध्यमिका वागभिव्याप्ता । शब्दने प्रकार एवोच्यते । मिमाति मायुं । स्तनितलक्षणं शब्दं करोति । अथवायं । लुप्तोपमा । मिनोति स्वतेजः सर्वत्र प्रक्षिपतीति मायुरादित्यः । तमिवातिदीप्तं करोतीत्यर्थः । अथवा सामर्थ्यादात्मानमादित्यसदृशं निर्मिमीते । कुत्र स्थिता । ध्वसनावधि श्रिता । ध्वंसने मेघेऽधिश्रिता । सेदृशी चित्तिभिः । कर्मनामैतत् । स्वकर्मभिर्वृष्टिरूपैर्मर्त्यं मरणधर्माणां स्थावरजंगमरूपं कृत्स्नं जगन्नि हि चकार । नीचैः करोति । मनुष्यान्प्रणतान्करोति । ओषध्यादिकं फलेनावनतं करोति । अथवा चित्तिभिर्द्योतनलक्षणैः कर्मभिः । विद्युति विद्योतमापद्यमाना प्रति वव्रिमौहत । वव्रिरिति रूपनाम । ऊहतिरत्र सामर्थ्यादुपसंहारवाची । प्रत्युपसंहरति । उदकलक्षणं रूपं पुनरादत्ते । रश्मिद्वारा वृष्टमुदकं पुनर्घर्मकाल आदत्ते । एकस्यैव ज्योतिषस्त्रेधाकरणाद्विद्युतः सूर्यरश्मिभाव उपपद्यते तमू अकृण्वन्त्रेधा भुवे कं । ऋ० १०. ८८. १०. । इति वक्ष्यमाणत्वात् । स्तनितस्य विद्युद्भावो मेघविद्युत्स्तनितानामभेदाभिप्रायेण ॥

इदं शरीरं जीवावस्थायां । अनेन देहस्यासारता जीवस्य नित्यत्वं च प्रतिपाद्यते ॥

अनच्छये तुरगातु जीवमेजद्ध्रुवं मध्य आ पस्त्यानां ।
जीवो मृतस्य चरति स्वधाभिरमर्त्यो मर्त्येना सयोनिः ॥ ३० ॥

अनत्। शये। तुरऽगातु। जीवं। एजत्। ध्रुवं। मध्ये। आ। पस्त्यानां।
जीवः। मृतस्य। चरति। स्वधाभिः। अमर्त्यः। मर्त्येन। सऽयोनिः ॥३०॥

अनत् प्राणनं कुर्वज्जीवं जीवनवत्तुरगातु स्वव्यापाराय तूर्णगमनं सदेजत्तच्छये। शेते। वर्तते। पश्चात्प्राणापगमनानंतरमुक्तविलक्षणं सद्ध्रुवमविचलितं सत् पस्त्यानां गृहाणां मध्य आशेते च। स्थाणुवत्तिष्ठति। आकारः पूरणो वा। जीवस्य वैलक्षण्यमाह। मृतस्य शरीरस्य संबंधी जीवो मर्त्येन मरणधर्मकेण शरीरेण सयोनिः पूर्वं समानोत्पत्तिस्थानः। यद्यपि जीवस्य न जन्मास्ति तथापि वपुषस्तत्सद्भावात्तत्संबंधेनोपचर्यते। तदेवाह। अमर्त्योऽमरणस्वभावः। जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते। छां० उ० ६. ११. ३.। इति श्रुतिः। उक्तस्वभावो जीवः स्वधाभिश्चरति। पुत्रकृतैः स्वधाकारपूर्वकदत्तैरन्नैश्चरति। वर्तत इत्यर्थः॥ ॥१९॥

प्रवर्ग्येऽभिष्टवेऽपश्यं गोपामित्येका विनियुक्ता। सूचितं च। अपश्यं गोपामनिपद्यमानं स्रक्के द्रप्सस्य। आ० ४. ६.। इति॥

अपश्यं गोपामनिपद्यमानमा च परा च पथिभिश्चरंतं।
स सध्रीचीः स विषूचीर्वसान आ वरीवर्ति भुवनेष्वंतः ॥३१॥
अपश्यं। गोपां। अनिऽपद्यमानं। आ। च। परा। च। पथिऽभिः। चरंतं।
सः। सध्रीचीः। सः। विषूचीः। वसानः। आ। वरीवर्ति। भुवनेषु। अंतरिति ॥३१॥

अहं गोपां सर्वस्य लोकस्य वृष्टिप्रकाशादिना गोपायितारमनिपद्यमानं कदाचिदप्यविषसं तथा पथिभिर्विचित्रैर्मार्गैरंतरिक्षरूपैरा चरंतं च परा चरंतं च उदयप्रभृत्या मध्याह्नमागच्छंतं मध्याह्नप्रभृत्या सायं पराङ्मुखं गच्छंतं एवंमहानुभावमादित्यमपश्यं। याथात्म्येन पश्येयं। किंच स आदित्यः सध्रीचीः सहांचंतीर्विषूचीर्विष्वगंचंती रात्रावपि चंद्रभौमादित्यानां प्रकाशयित्रीस्त्विषो वसान आच्छादयन् भुवनेषु भुवनैकदेशेषु लंकादिप्रदेशेष्वंतर्मध्य आ वरीवर्ति। उदयास्तमयं कुर्वन् पुनःपुनरावर्तते। तमपश्यमित्यर्थः। एष वै गोपा एष हीदं सर्वं गोपायतीत्याद्यस्मद्ब्राह्मणं। अपश्यं गोपामित्याह असौ वा आदित्यो गोपा स हीमाः प्रजा गोपायतीत्यादि तैत्तिरीयकं च द्रष्टव्यं। तै० आ० ५. ६. ४.॥

य ईं चकार न सो अस्य वेद य ईं ददर्श हिरुगिन्नु तस्मात्।
स मातुर्योना परिवीतो अंतर्बहुप्रजा निर्ऋतिमा विवेश ॥३२॥
यः। ईं। चकार। न। सः। अस्य। वेद। यः। ईं। ददर्श। हिरुक्। इत्। नु। तस्मात्।
सः। मातुः। योना। परिऽवीतः। अंतः। बहुऽप्रजाः। निःऽऋतिं। आ। विवेश ॥३२॥

अत्र गर्भवासक्लेशपूर्वकजननप्रतिपादनेन तत्परिहारायात्मा ज्ञातव्य इत्यर्थांतरेणाह। यः पुमान् पुत्रार्थीमिमं गर्भं चकार करोति विक्षिपति वा तत्कारणभूतस्य विक्षेपद्वारेण न स पुमानस्य तत्त्वं वेद॥ कर्मणि षष्ठी वा॥ एनं गर्भं न जानाति। कथंभूतः कथं वा केन प्रयोजनेनेति सर्वात्मना न जानातीत्यर्थः। यश्च मातुरुदरस्थं ददर्श उदरवृद्ध्यन्यथानुत्पत्त्यानुमानेन वा दर्शयति तस्माद्द्रष्टुः सकाशात्स हिरुगिन्नु। हिरुगित्यंतर्हितनाम। इच्छब्द एवकारार्थः। नु निश्चये। अत्यंतमंतर्हित एव खलु। यद्वा। यः संसारावस्थायामीमिमं कृषिवाणिज्यवेदाध्ययनादिकं चकार सोऽस्यैतन्न वेद लोकांतरे जन्मांतरे वा। तथा य ईमिमं ददर्श गिरिनदीसमुद्रबंध्वादिकं ददर्श जीवनसमये तस्माद्दृष्टाद्धिरुगिन्नु पृथगेव। अत्रानुभूतं सर्वं न जन्मांतरे लोकांतरे वानुभवतीत्यर्थः। स तादृशो मातुर्जनन्या योना योनावंतः परिवीत उल्बजरायुभ्यां परितो वेष्टितः सन् बहुप्रजा बहुजन्मभाक्। अथवा। उत्पन्नः सन् स्वयमप्यपत्योत्पादनेन बहुप्रजाः। एवं गर्भदुःखमनुभ-

वन्निर्ऋत्यभिधानं प्रदुःखमनुभवति यावत् स्वरूपभूतात्मज्ञानं। अतस्तत्परिहारायात्मा ज्ञातव्य इत्युक्तं भवति। एवमात्मविदामभिप्रेतोऽर्थः ॥ नैरुक्तानां तु मते य ईं चकार मध्यस्थानो वायुर्मेघो वैतद्वृष्ट्युदकं करोति सोऽस्य। तत्त्वमिति शेषः। अथवा एतत्कर्म। न जानाति। तयोरचेतनत्वादिति भावः। यस्त्वीमेतद्ददर्श पश्यति तस्मादपि हिरुगंतर्हितः। प्राणिकर्मवशेन काले वर्षिता परमेश्वर आदित्यात्मनि गूढ इत्यर्थः। य ईं हिरुगंतर्हितमीमेतद्ददर्श पश्यति स वृष्टिलक्षणः पुत्रो मातुर्निर्मातुरंतरिक्षस्य योनौ योनिवदुत्पत्त्याधारभूते ऽंतरिक्षे। उभयोरप्यंतरिक्षनामत्वात्सामान्यविशेषभावो द्रष्टव्यः। अंतरिक्षैकदेशे योन्यामंतर्मध्ये बहुप्रजा बहुप्रजातान्नो बहुप्राण्युपकारी। अथवा। जनिरत्रांतर्भावितण्यर्थः। बह्वनां धाराणां सस्यनिष्पादनद्वारेण प्राणिनां वा प्रजनयिता सन्। निर्ऋतिं निरमणसाधनां भूमिमा विवेश। प्रविशति। प्राप्नोतीत्यर्थः ॥

द्यौर्मे पिता जनिता नाभिरत्र बंधुर्मे माता पृथिवी महीयं।
उत्तानयोश्चम्वो३र्योनिरंतरत्रा पिता दुहितुर्गर्भमाधात् ॥३३॥
द्यौः। मे। पिता। जनिता। नाभिः। अत्र। बंधुः। मे। माता। पृथिवी। मही। इयं।
उत्तानयोः। चम्वोः। योनिः। अंतः। अत्र। पिता। दुहितुः। गर्भं। आ। अधात् ॥३३॥

दीर्घतमा ब्रवीति। मे मम द्यौर्द्युलोकः पिता पालकः। न केवलं पालकत्वमात्रं अपि तु जनिता जनयितोत्पादयिता। तत्रोपपत्तिमाह। नाभिरत्र नाभिभूतो भौमो रसोऽत्र तिष्ठतीति शेषः। ततश्चान्नं जायते अन्नाद्रेतः रेतसो मनुष्य इत्येवं पारंपर्येण जननसंबंधिनो हेतो रसस्यात्र सद्भावात्। अनेनैवाभिप्रायेण जनितेत्युच्यते। अत एव बंधुर्बंधिका तथेयं मही महती पृथिवी मे माता मातृस्थानीया स्वोद्भूतौषध्यादिनिर्मात्रीत्यर्थः। किंचोत्तानयोरूर्ध्वतनयोश्चम्वोः सर्वस्यात्त्व्योर्भोगसाधनयोर्द्यावापृथिव्योरंतर्मध्ये योनिः सर्वभूतनिर्माणाश्रयमंतरिक्षं वर्तत इति शेषः। अत्रांतरिक्षे पिता द्युलोकः। अधिष्ठात्रधिष्ठानयोरभेदेनादित्यो द्यौरुच्यते। स्वरश्मिभिः। अथवा इंद्रः पर्जन्यो वा। दुहितुर्दूरे निहिताया भूम्या गर्भं सर्वोत्पादनसमर्थं वृष्ट्युदकलक्षणमाधात्। सर्वतः करोति ॥

आश्वमेधिके मध्यमेऽहनि ब्रह्मोद्ये होत्रादयः पृच्छामि त्वेत्यनया यजमानं पृच्छेयुः। तथा च सूचितं। एकैकशो यजमानं पृच्छंति पृच्छामि त्वा परमंतं पृथिव्याः। आ० १०. ९.। इति ॥

पृच्छामि त्वा परमंतं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥३४॥
पृच्छामि। त्वा। परं। अंतं। पृथिव्याः। पृच्छामि। यत्र। भुवनस्य। नाभिः।
पृच्छामि। त्वा। वृष्णः। अश्वस्य। रेतः। पृच्छामि। वाचः। परमं। विऽओम ॥३४॥

हे यजमान त्वा त्वां पृच्छामि। प्रश्नं करोमि। किं। पृथिव्याः परमंतमुत्कृष्टां काष्ठां। यत्र सर्वा पृथिवी समाप्यते तत्पृच्छामि। तथा त्वामन्यत्पृच्छामि। किं तदिति उच्यते। यत्र भुवनस्य भूतजातस्य नाभिः संनाहो बंधनं। यत्र सर्वं संनद्धं भवति तमित्यर्थः। किंच त्वा त्वां वृष्णो वर्षकस्याश्वस्य व्याप्तस्यादित्यस्य। असौ वा आदित्यो वृषाश्व इति तैत्तिरीयकं। तस्य रेतो रेतोवत्कारणं तत्किमिति पृच्छामि। तथा वाचः सर्वस्य वाग्जातस्य परमं निरतिशयं व्योम स्थानं सर्वस्य वचसः कारणं। एतत्प्रश्नचतुष्टयं पृच्छामि ॥

अथैवं पृष्टो यजमान इयं वेदिरित्यनया प्रतिब्रूयात्। इयं वेदिः परो अंतः पृथिव्या इति प्रत्याह। आ० १०. ९.। इति सूचितत्वात् ॥

इयं वेदिः परो अंतः पृथिव्या अयं यज्ञो भुवनस्य नाभिः।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥३५॥

इयं। वेदिः। परः। अंतः। पृथिव्याः। अयं। यज्ञः। भुवनस्य। नाभिः।
अयं। सोमः। वृष्णः। अश्वस्य। रेतः। ब्रह्मा। अयं। वाचः। परमं। विऽओम ॥३५॥

पृथिव्याः प्रथनवत्या भूम्याः परो अंतः परमंतं पर्यवसानमियं वेदिः। न हि वेद्यतिरिक्ता भूमिरस्ति। एतावती वै पृथिवी यावती वेदिरिति श्रुतेः। तथायं यज्ञो भुवनस्य भूतजातस्य नाभिः संनहनं। तत्रैव वृष्ट्यादिसर्वफलोत्पत्तेः सर्वप्राणिनां बंधकत्वात्। अथ वृष्णो वर्षकस्यादित्यस्य रेतोऽयं सोमो रसात्मकः। अग्नौ हुतः सोमरस आदित्यं प्राप्य वृष्ट्यादिफलं जनयति। अयं ब्रह्मा प्रजापतिरिव वाचो मंत्रादिरूपायाः परमं व्योम। उत्कृष्टं रक्षकं स्थानं। तत्रैवोत्पत्तेस्तत्रैव पर्यवसानाच्च ॥ ॥२०॥

सप्तार्धगर्भा भुवनस्य रेतो विष्णोस्तिष्ठंति प्रदिशा विधर्मणि।
ते धीतिभिर्मनसा ते विपश्चितः परिभुवः परि भवंति विश्वतः ॥३६॥
सप्त। अर्धऽगर्भाः। भुवनस्य। रेतः। विष्णोः। तिष्ठंति। प्रऽदिशा। विऽधर्मणि।
ते। धीतिऽभिः। मनसा। ते। विपःऽचितः। परिऽभुवः। परि। भवंति। विश्वतः ॥३६॥

सप्त सर्पणस्वभावाः सप्तसंख्या वा रश्मयोऽर्धगर्भाः संवत्सरस्यार्धे गर्भे गर्भस्थानीयमुदकं धारयमाणाः। यद्वा। ब्रह्मांडस्यार्धे मध्येऽंतरिक्षे गर्भवद्वर्तमानाः। भुवनस्य लोकस्य रेतः सारं वृष्टिप्रदत्वेन रेतोभूताः तादृशा रश्मयो विष्णोर्व्यापकस्यादित्यस्य विधर्मणि जगद्धारणव्यापारे प्रदिशा प्रदेशेन तिष्ठंति। वर्तंते। किंच ते धीतिभिः प्रज्ञाभिर्मनसा जगदुपकारः कर्तव्य इति बुद्ध्या च विश्वतः सर्वतः ॥ द्वितीयार्थे तसिः ॥ विश्वं परि भवंति। परितो भावयंति। कृत्स्नं जगद्व्याप्नुवंतीत्यर्थः। यस्मादेवं तस्मात्ते त एव विपश्चितो बुद्धियुक्ताः परिभुवः सर्वत्र व्याप्ताश्च ॥ यद्वा। सप्तार्धगर्भाः। सप्त महदहंकारौ पंच तन्मात्राणीति मिलित्वा सप्तसंख्यानि तत्त्वानि। अर्धगर्भा अविकृतिरूपाः। विकाराश्रयाया मूलप्रकृतेः प्रकृतिविकृतेरुदासीनस्यात्मनश्चोत्पन्नत्वादर्धांशेन प्रपंचाकारेण परिणामादर्धगर्भाः। पुरुषांशस्याविक्रियत्व दित्यभिप्रायः। अत एव तेषां प्रकृतिविकृतित्वं। यस्मादेवं तस्माद्भुवनस्य रेतः कारणं। कारणभूतानि तान्येव विष्णोर्व्याप्तस्य पुरुषस्य विधर्मणि प्रदिशा प्रदेशेन तिष्ठंति। इतरत्समानं ॥

न वि जानामि यदिवेदमस्मि निण्यः संनद्धो मनसा चरामि।
यदा मागन्प्रथमजा ऋतस्यादिद्वाचो अश्नुवे भागमस्याः ॥३७॥
न। वि। जानामि। यत्ऽइव। इदं। अस्मि। निण्यः। संऽनद्धः। मनसा। चरामि।
यदा। मा। आ। अगन्। प्रथमऽजाः। ऋतस्य। आत्। इत्। वाचः। अश्नुवे।
भागं। अस्याः ॥३७॥

अहं यदिवेदं यदपीदं विश्वमस्मि। कृत्स्नः प्रपंचोऽप्यहमेवास्मि। नामरूपांशं परमार्थं त्यक्त्वा सर्वत्रानुगतोऽस्मि। योऽयं सच्चिदानंदाकारोऽस्ति सोऽहमस्मीति न वि जानामि। विविच्य नाज्ञासिषं। परं शास्त्रजनितमिदमहमस्मीति ज्ञानं जातं। अविवेक्यहमित्यर्थः। कार्यकारणयोरभेदात्। कृत्स्नप्रपंचस्यापि ब्रह्मानन्यत्वेन ब्रह्मैकत्वावगमे प्रपंचजातमपि स्वस्वरूपमेव भवति। इदं सर्वं यदयमात्मा ब्रह्मैवेदं सर्वं आत्मैवेदं सर्वं स ईक्षत बहु स्यां प्रजायेयेत्यादिश्रुतिभ्य एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानात्। तदनन्यत्वमारंभणशब्दादिभ्यः। वेदां० २. १. १४.। इत्याद्युपपत्तिभिश्च प्रपंचस्य ब्रह्मानन्यत्वं सिद्धं। यद्वा। इवशब्द उपमार्थः। यदिव यत्परोक्षज्ञानं सर्वैकात्म्यरूपमानुभाविकमस्ति तदिव तद्वदेवाहमस्मि। इदं सर्वमहमस्मीति ज्ञानं मे जातं। अपि त्वेतद्दार्ष्टांतिकभूतं। आनुभविकं सार्वात्म्यं यदस्ति तन्न वि जानामि। न प्राप्तोऽस्मि। शास्त्रजनितं सार्वात्म्यं जातं न

त्वानुभाविकमित्यर्थः। तत्र कारणमाह। यतोऽहं निण्यः। अंतर्हितनामैतत्। अंतर्हितो मूढचित्तः। चित्तप्रत्यक्प्रवणताभावेन परिच्छिन्न इत्यर्थः। तत्रोपपत्तिमाह। संनद्धोऽविद्याकामकर्मभिः सम्यग्बद्धो वेष्टितः अत एव मनसा युक्तो भावनासहिष्णुना वहिर्मुखेन विचित्रेन चेतसा युक्तः संचरामि संसारे। अथवा मनसा संनद्धश्चरामि। इंद्रियपरवश एव सन् संसारे दुःखमनुभवामि। न सार्वात्म्यं जानामीति परिदेवते। यास्कोऽपीमं परिदेवनार्थत्वेनोदाजहार। अथापि परिदेवना कस्माच्चिद्भावात् न वि जानामि यदिवेदमस्मि। नि० ७.३.। इति। वहिर्मुखचेतसः स्वरूपापरिज्ञानजनितं दुःखमन्यत्र श्रूयते। परांचि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नांतरात्मन्। क० उ० ४.१.। इति। तर्हि कदैतद्भवतीति आह। यदा मागन् आगमिष्यति तदा। किं तदिति उच्यते। ऋतस्य परमार्थस्य परस्य ब्रह्मणः प्रथमजाः प्रथमोन्मेषः प्रथमोत्पन्नश्चित्तप्रत्यक्प्रवणजनितोऽनुभावः। स यदा मा मां प्राप्नोति आदिदनंतरमेवाव्यवधानेनास्या वाच ऐकात्म्यप्रतिपादिकाया उपनिषद्वाचो यदिवेदमस्मीत्युक्ताया वा भागं भजनीयं शब्दब्रह्मणा व्याप्यं परं ब्रह्मपदमश्नुवे। प्राप्नोमि। चित्तस्य वहिर्मुखतां परित्यज्यांतर्मुखतैवादुःसंपाद्या। सा यदा स्यात् तदानीमेव स्वरूपं द्रष्टुं सुशकं भवति। पश्चाद्विलंबाभावात् यथा गिरिशिखरात्पतन् पाषाणोऽविलंबेन पतति तद्वत्। चित्तप्रत्यङ्मुखत्वस्य दुःशकत्वमपि तत्रैव श्रूयते। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्निति॥

अपाङ् प्राङेति स्वधया गृभीतोऽमर्त्यो मर्त्येना सयोनिः।
ता शश्वंता विषूचीना वियंता न्य१न्यं चिक्युर्न नि चिक्युरन्यं॥३८॥
अपाङ्। प्राङ्। एति। स्वधया। गृभीतः। अमर्त्यः। मर्त्येन। सऽयोनिः।
ता। शश्वंता। विषूचीना। विऽयंता। नि। अन्यं। चिक्युः। न। नि। चिक्युः। अन्यं॥३८॥

अमर्त्योऽमरणधर्मायमात्मा मर्त्येन मरणधर्मणा भूतात्मना देहेन सयोनिः समानस्थानः। यत्र परिच्छेदको देहोऽस्ति तत्र सर्वत्र सोऽयमपि तिष्ठन्नित्यर्थः। यद्वा। समानोत्पत्तिः। सहवासेन स्वस्मिन्नप्युत्पत्तिरुपचर्यते। एवंभूतः सन् स्वधयान्नेोपलक्षिततद्भोगेन गृभीतः। यद्वा। स्वधाशब्देनान्नमयं शरीरं लक्ष्यते। तेन गृहीतः सन्नपाङेति। अशुक्लं कर्म कृत्वाधो गच्छति। प्राङेति। ऊर्ध्वं स्वर्गादिलोकं प्राप्नोति। परमात्मैव सूक्ष्मशरीरोपाधिकः सन्नानाविधकर्म कृत्वा तद्भोगाय जीवसंज्ञां लब्ध्वा शरीरत्रयेण संबद्धो लोकांतरेषु संचरति। स्थूलसूक्ष्मोभयशरीरपरिग्रहेण लोके गुणत्रयान्वितः सन् परिभ्रमति। तथा च श्रूयते। गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता। स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति स्वकर्मभिः। श्वे० उ० ५.७.। इति। इदानीमुभयप्राधान्येनाह। ता तौ भूतात्मकर्त्रात्मानौ शश्वंता विभागेन सर्वदा वर्तमानौ। यद्वा। सूक्ष्मशरीरपक्षे सर्वदा सहवास उपपद्यते। स्थूलशरीरपक्षेऽपि सात्त्विकजातेः। तत्कारणानां भूतसूक्ष्माणां सद्भावात्तत्र शरीरसंबंध उपपद्यते। विषूचीनेह लोके सर्वत्रगमनौ वियंता तत्तत्फलोपभोगाय सर्वत्र लोकांतरेषु गच्छंतौ वर्तेते। तत्र नरा अन्यं भूतात्मानं नि चिक्युः। नितरां विशेषेण पश्यंति जानंति। अन्यमपरं देहवच्छायातिरिक्तं न नि चिक्युः। न जानंति। केचन पामरा देहव्यतिरिक्तं न जानंति। केचन विवेकिनः कर्तृत्वभोक्तृत्वोपेतो देहातिरिक्तः कश्चिदस्तीत्यनुमिमते। न केऽपि देहत्रयव्यतिरिक्तमात्मानं जानंति। अतो दुर्लभमात्मज्ञानमित्यर्थः॥

ऋचो अक्षरे परमे व्योमन्यस्मिंदेवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते॥३९॥
ऋचः। अक्षरे। परमे। विऽओमन्। यस्मिन्। देवाः। अधि। विश्वे। निऽसेदुः।
यः। तत्। न। वेद। किं। ऋचा। करिष्यति। ये। इत्। तत्। विदुः। ते। इमे। सं। आसते॥३९॥

पूर्वमंत्रे देहात्मजीवात्मानावुक्तौ। तयोरन्यस्य जीवात्मनः पारमार्थिकं रूपमस्ति तदत्रोच्यते। ऋचो

अक्षरे। अत्र ऋक्शब्देन ऋक्प्रधानभूताः सांगापरविद्यात्मकाश्चत्वारो वेदा उच्यंते। ऋगादीनामपरविद्यात्वं मुंडके श्रूयते। द्वे विद्ये वेदितव्ये इति प्रतिज्ञाय तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदः। मुं° उ° १. १. ५.। इत्यादिना। तस्याः संबंधिन्यक्षरेऽदृश्यादिगुणके चरणरहितेऽनश्वरे नित्ये सर्वत्र व्याप्ते ब्रह्मणि। अक्षरशब्दस्य ब्रह्मवाचकत्वं एतद्वै तदक्षरस्य प्रशासने गार्गि। बृ° उ° ३. ८.। यया तदक्षरमधिगम्यते। मुं° उ° १. १. ५.। येनाक्षरं पुरुषं वेद सत्यं। मुं° उ° १. २. १३.। इत्यादिश्रुतिषु प्रसिद्धं। ऋगक्षरयोः प्रतिपाद्यप्रतिपादकभावः संबंधः। सर्वैर्वेदैः खलु ब्रह्माधिगम्यते तं त्वौपनिषदं पुरुषं पृच्छामि। शत° १४. ६. ९. २८.। इत्यादिश्रुतेः। ननूपनिषद्भागानां तथास्तु। इतरेषां तु कथं ब्रह्मविषयत्वमिति उच्यते। यद्यपीतरभागानां यागादिविषयत्वं तथापि बुद्धिः शुद्ध्युत्पादनद्वारा वेदनसाधनत्वेन ब्रह्मविषया भविष्यति वेदानुवचनेन ब्राह्मणा विविदिषंति। बृ° उ° ४. ४. २२.। इत्यादिश्रुतेः। तदेव विशेष्यते। परम उत्कृष्टे निरतिशये व्योमन् व्योमनि व्योमसदृशे। अलेपत्वनीरूपत्वव्यापित्वादिसादृश्येन व्योमेत्युक्तं। यद्वा। विशेषेण सर्वस्य रचके। निरधिष्ठा न कस्यचिदस्ति स्वाध्यस्तस्य सर्वस्याधिष्ठानत्वेन रचकत्वात्। तादृशे तत्त्वे सर्वमध्यस्तमित्यर्थः। पुनस्तदेव विशेष्यते। यस्मिन्परमात्मनि विश्वे सर्वे देवा अधि निषेदुः निषीदंति आश्रित्य तिष्ठंति तस्मिन्। यद्वा। उक्तलक्षणे वस्तुन्यृगुपलक्षिताः सर्वे सांगा वेदाः पर्यवसिता इत्यर्थः। यः यो मर्त्यस्तत्तादृशं देवादीनां स्वरूपलाभास्पदं कृत्स्नवेदैस्तात्पर्येण प्रतिपाद्यं यद्वस्तु न वेद न जानाति स मर्त्य ऋचा पूर्वोक्तेनर्गादिशब्दजालेन किं करिष्यति। वेदनसाधनेन वेदेन वेद्यमविदित्वा किं साधयतीत्यर्थः। प्रयोजनाभावात्सर्वस्यापि वेदस्य नैष्फल्यादिति भावः। अथवा योऽक्षरमविदित्वा कर्मणां कर्ता भवति यागादीननुतिष्ठति तेन किंचिदपि कर्म कृतं न भवतीत्यर्थः। य इत् ये एव तत्तत्त्वं विदुः जानंति त इमे समासते। त एवेमे ज्ञातारः समासते। सम्यक्तिष्ठंति। अपुनरावृत्त्या स्वरूपेऽवस्थानं समासनं। यद्वा। ये विदुरिद्ये जानंत्येव नानुतिष्ठंति। इच्छब्दोऽवधारणे। त इमे त एव समासते। गवामयनादिसहस्रसंवत्सरसत्रपर्यंतानि सहोपयंति। सहार्थे संशब्दः। सत्रादधिकानां यागानामभावात् तेषामपि फलमेतज्ज्ञानेनैव प्राप्तं भवतीत्यर्थः। कर्तॄणां बहुत्वाद्बहुवचननिर्देशः॥ अन्ये त्वन्यथा वर्णयंति। ऋचः। ऋगर्चनीयमादित्यमंडलमृगादिमयं वा। ऋग्भिः पूर्वाह्णे दिवि देव आदित्यो वा एष एतन्मंडलं तपति तत्र ता ऋच इत्यादिश्रुतेः। तस्य संबंधिन्यक्षरे परमे व्योमन्नित्युक्तलक्षणे ब्रह्मणि य एषोऽतरादित्ये हिरण्मयः पुरुषो दृश्यत इत्यादिश्रुत्युक्तस्वरूपे यस्मिन् सर्वे देवा द्योतमाना रश्मयो निषेदुः वर्तंते। य एतन्न वेद स केवलयर्चा किं करिष्यति। ये जानंति भावयंति त एव विद्वांसः समासते। भूम्यां सुखेन रोगादिरहिता भोगिनः संतश्चिरकालं जीवंति॥ अपरे प्रकारांतरेण प्रतिपादयंति। ऋचोऽक्षर ऋगुपलक्षितसर्ववेदसंबंधिन्यक्षरे प्रणवरूप ओंकारेऽविनाशिनि सर्ववेदेषु व्याप्ते वा। प्रणवस्य सर्ववेदसारत्वं ब्राह्मणे श्रूयते। तान्वेदानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायंताकार उकारो मकार इति तानेकधा समभरत् तदेतदोमिति। ऐ° ब्रा° ५. ३२.। इति। परमे निरतिशये। न हि प्रणवादधिकं किंचिन्मंत्रजातमस्ति त्रिकालातीतस्य ब्रह्मणः प्रतिपादकत्वात्। यच्चान्यत्त्रिकालातीतं तदप्योंकार एव ओमिति ब्रह्म। तै° आ° ७. ८.। इत्यादिश्रुतेः। वेदानां प्रणवस्य स्थानप्रतिनिधिभावः संबंधो य ऋचोऽधीत इत्याद्युपक्रम्य यः प्रणवमधीते स सर्वमधीते ओमिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरं। तै° आ° २. ११. ४.। इत्यादिश्रुतेः। यस्मिन्विश्वे सर्वे देवा अधि निषेदुः। प्रणवस्य सर्वमंत्रात्मकत्वात् मंत्रेषु सर्वदेवतानां निवासात् सर्वदेवनिवासत्वं। ब्रह्माधिष्ठानत्वाद्वा ब्रह्मणि सर्वदेवानां निवासात्। शिष्टमविशिष्टं॥ अयं मंत्रो निरुक्ते व्याख्यातः। नि° १३. १०.॥ अपरे त्वपरथा वर्णयंति। ऋचः। ऋगर्चनीयो जीवः। तस्य संबंधिन्यक्षरेऽविनाशे व्याप्ते वा परमात्मनीत्यर्थः। अत एव जीवापेक्षया परम उत्कृष्टे निरुपाधिके व्योमन् विशेषेण सर्वाधिष्ठानत्वेन रचके व्योमसदृशे वा। यस्मिन्परमात्मनि देवा गमनवंतो व्यवहरंतो वेंद्रियसंज्ञका विश्वे सर्वेऽप्यधि निषेदुः निषीदंति आश्रित्य वर्तंते। यस्तन्न वेद न जानाति उपाध्यंशपरित्यागे तदेव स्वरूपमिति न पश्यति स्थूलो जनः किमृचा करिष्यति। केवलेन जीवेन जीवभावेन किं फलं प्राप्स्यति। जननमरणादिक्लेशस्यात्यागादिति भावः। ये तत्तत्त्वं विदुस्त इत्यादि सिद्धं॥

अग्निहोत्रार्था धेनुर्यदि कुत्सितं शब्दं कुर्यात्तदानीं सूयवसादित्यनया यवसादिकं प्रयच्छेत्। तथा च सूत्रितं। वाश्यमानायै यवसं प्रयच्छेत् सूयवसाद्भगवती हि भूयाः। आ° ३. ११.। इति॥ प्रवर्ग्येऽभिष्टव एषैव परिधानीया। सूत्रितं च। सूयवसाद्भगवती हि भूया इति परिदध्यात्। आ° ४. ७.। इति॥

सूयवसाद्भगवती हि भूया अथो वयं भगवंतः स्याम।
अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरंती ॥४०॥
सुयवसऽअत्। भगऽवती। हि। भूयाः। अथो इति। वयं। भगऽवंतः। स्याम।
अद्धि। तृणं। अघ्न्ये। विश्वऽदानीं। पिब। शुद्धं। उदकं। आऽचरंती ॥४०॥

हे अघ्न्ये। गोनामैतत्। अहननीये हे गौः त्वं सूयवसाच्छोभनयवसस्य तृणादिकस्यात्त्री भगवती। भग इति धननाम। सर्वैर्भजनीयप्रभूतक्षीरादिधनवती भूयाः। भव। हिः पूरणः प्रसिद्धौ वा। लोके यवसादिभक्षणेन क्षीरादिसमृद्धिः प्रसिद्धा। अथो अनंतरमेव वयं यजमाना अपि भगवंतः प्रभूतेन धनेन तद्वंतः स्याम। अथैकवारं पूर्वमुक्तमिदानीं सर्वदा कर्तव्यमिति प्रार्थयते। विश्वदानीं विश्वकालं सर्वदा तृणमद्धि। भक्षय। आचरंती सर्वतो निर्गच्छंती शुद्धं निर्मलमुदकं पिब। अयं मंत्रो यास्केनैवं व्याख्यातः। सुयवसादिनी भगवती हि भवाथेदानीं वयं भगवंतः स्यामाद्धि तृणमघ्न्ये सर्वदा पिब च शुद्धमुदकमाचरंती। नि॰ ११. ४४.। इति॥ ॥२१॥

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥४१॥
गौरीः। मिमाय। सलिलानि। तक्षती। एकऽपदी। द्विऽपदी। सा। चतुःऽपदी।
अष्टाऽपदी। नवऽपदी। बभूवुषी। सहस्रऽअक्षरा। परमे। विऽओमन् ॥४१॥

गौरीर्गिरणशीला माध्यमिका वाक्॥ सुलोपाभावश्छांदसः॥ मिमाय। शब्दयति। किं कुर्वती। सलिलानि वृष्ट्युदकानि तक्षती सम्यक्संपादयित्री। एकपद्येकपादोपेतैकाधिष्ठाना मेघे वर्तमाना गमनसाधनेन वायुनैकपदी वा द्विपदी मेघांतरिक्षाख्यद्व्यधिष्ठाना। आदित्यो वा द्वितीयः। तथा सा चतुष्पदी पादचतुष्टयोपेता दिक्चतुष्टयाधिष्ठाना। अथाष्टापदी विदिग्पेक्षयाष्टपादोपेताष्टाधिष्ठाना नवपद्युपरिदिगपेक्षया सूर्येण वा नवदिगधिष्ठाना बभूवुष्येवंभूता॥ भवेश्छांदसः क्वसुः। ततो ङीपि वसोः संप्रसारणं॥ किमनया परिगणनया। सहस्राक्षरा। अपरिमितवचनोऽयं। अपरिमितव्याप्तियुक्ता। बह्वव्यापनशीलोदकवतीत्यर्थः। कुत्रेति तदुच्यते। परमे व्योमन्नुदकाश्रयत्वेनोत्कृष्टेऽंतरिक्षे॥ केचिदेवमाहुः। गौरीर्गिरणशीला शब्दब्रह्मात्मिका वाग्मिमाय। माति॥ प्रसिद्धार्थे धातुः॥ प्रतिष्ठितानि घटादिद्रव्याणि तक्षती तत्तद्वाचकत्वेन निष्पादयंती एकपद्यव्याकृतत्वेनैकप्रतिष्ठानैकरूपा वात्मना द्विपदी सुप्तिङ्भेदेन पादद्वयवती चतुष्पदी नामाख्यातोपसर्गनिपातभेदेन अष्टापद्यामंत्रितसहिताष्टभेदेनाष्टपदी नवपदी बभूवुषी साव्ययैरुक्तैरष्टभिर्नवपदी। अथवा सनाभिकेषूरःकंठादिषु नवसु पदेषु भवंती पश्चाद्बहुविधाभिव्यक्तिमुपेयुषी परमे व्योमन्नुत्कृष्टे हृदयाकाशे मूलाधारे सहस्राक्षरानेकाकारेण व्याप्तानेकध्वनिप्रकारा भवतीत्यर्थः॥ अयं मंत्र आचार्येणैवं व्याख्यातः। गौरीर्मिमाय सलिलानि तक्षती कुर्वत्येकपदी मध्यमेन द्विपदी मध्यमेन चादित्येन च चतुष्पदी दिग्भिरष्टापदी दिग्भिश्चावांतरदिग्भिश्च नवपदी दिग्भिश्चावांतरदिग्भिश्चादित्येन च सहस्राक्षरा बहूदका परमे व्यवने। नि॰ ११. ४०.। इति॥

तस्याः समुद्रा अधि वि क्षरंति तेन जीवंति प्रदिशश्चतस्रः।
ततः क्षरत्यक्षरं तद्विश्वमुप जीवति ॥४२॥
तस्याः। समुद्राः। अधि। वि। क्षरंति। तेन। जीवंति। प्रऽदिशः। चतस्रः।
ततः। क्षरति। अक्षरं। तत्। विश्वं। उप। जीवति ॥४२॥

तस्या उक्ताया गोः सकाशात्समुद्रा वृष्ट्युदकसमुंदनाधिकरणभूता मेघा अध्यधिकं प्रभूतमुदकं वि क्षरंति। विविधं क्षरंति। तेनोदकेन प्रदिशश्चतस्रः। प्रशब्दो वीत्यर्थः। विदिशश्चतस्रो दिशश्च। अथवा प्रकृष्टा दिशो मुख्याश्चतस्रः। तत्स्थेषु ताच्छब्द्यं। तत्स्थाः पुरुषा जीवंति। ततः पश्चात्तदक्षरमुदकं क्षरति। सस्यादिकमुत्पादयतीत्यर्थः। तत् सस्यादिकं विश्वं जगदुप जीवति। अयमपि यास्केन व्याख्यातः। तस्याः समुद्रा अधिविक्षरंति वर्षंति मेघास्तेन जीवंति दिगाश्रयाणि भूतानि ततः क्षरत्यक्षरमुदकं तत्सर्वाणि भूतान्युपजीवंति। नि० ११. ४१.। इति ॥

शकमयं धूममारादपश्यं विषूवता पर एनावरेण।
उक्षाणं पृश्निमपचंत वीरास्तानि धर्माणि प्रथमान्यासन् ॥४३॥
शकऽमयं। धूमं। आरात्। अपश्यं। विषुऽवता। परः। एना। अवरेण।
उक्षाणं। पृश्निं। अपचंत। वीराः। तानि। धर्माणि। प्रथमानि। आसन् ॥४३॥

शकमयं शकृन्मयं शुष्कगोमयसंभूतं धूममारान्नातिदूर अपश्यं। दृष्टवानस्मि। दिवा धूमस्य दूरे दृश्यमानत्वात्स एव दर्शनविषयतयोक्तः। विषुवता व्याप्तिमतैनानेनावरेण निकृष्टेन धूमेन परः परस्तात्तत्कारणभूतमग्निमपश्यं। अहं यजमान इत्यर्थः। किंचोक्षाणं फलस्य सेक्तारं पृश्निं शुक्लवर्णं। प्राश्नुते तेन फलमिति स्वयं प्राश्नुत इति वा पृश्निर्वल्लीरूपः सोमः। तं वीरा विविधेरणकुशला ऋत्विजोऽपचंत। अत्र धात्वर्थानादरेण तिङ्प्रत्ययः करोत्यर्थः। स च क्रियासामान्यवचनोऽत्रौचित्यादभिषवेण संपादितवंत इत्यर्थः। तानि तत्साधनानि धर्माण्यनुष्ठानानि प्रथमानि प्रतमानि प्रकृष्टानि फलपर्यवसानीयान्यासन्। संपादितान्यभवन्। यद्वा। सोम उक्षाभवत् पूर्वं तं देवाः शक्तापचन्यज्ञार्थं तद्भवो धूमो मेघ आसीत् तदुच्यते। तत्परत्वेन वा मंत्रो व्याख्येयो विचक्षणैः ॥

त्रयः केशिनं ऋतुथा वि चक्षते संवत्सरे वपत एक एषां।
विश्वमेको अभि चष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपं ॥४४॥
त्रयः। केशिनः। ऋतुऽथा। वि। चक्षते। संवत्सरे। वपते। एकः। एषां।
विश्वं। एकः। अभि। चष्टे। शचीभिः। ध्राजिः। एकस्य। ददृशे। न। रूपं ॥४४॥

केशस्थानीय[illegible]स्त्रयोऽग्न्यादित्यवायवः। ते ऋतुथा काले काले वि चक्षते। विविधलक्षणां भूमिं पश्यंति। तेषां पृथक्पृथक्कार्यमाह। एषां मध्य एकोऽग्निः संवत्सरेऽतीते सति संवत्सरं वपते। दाहेन केश[illegible]वनस्पत्यादिके छेदनं नापितकार्यं करोति। एक अन्य आदित्यो विश्वं सर्वं जगच्छचीभिः स्वकीयैः प्रकाशवृष्ट्यादिकर्मभिरभि चष्टे। सर्वतः पश्यति। एकस्य वायोर्ध्राजिर्गतिर्ददृशे। दृश्यते सर्वैः। न रूपं। अप्रत्यक्षत्वात् स्पर्शशब्दधृतिकंपलिंगैर्गम्यत इति हि न्यायविदो वदंति। अयमपि मंत्रो यास्केनैव व्याख्यातः। त्रयः केशिन ऋतुथा विचक्षते काले कालेऽभिविपश्यंति संवत्सरे वपत एक एषामित्यग्निः पृथिवीं दहति सर्वमेकोऽभिपश्यति कर्मभिरादित्यो गतिरेकस्य दृश्यते न रूपं मध्यमस्य। नि० १२. २७.। इति ॥

वाग्देवत्ये पशौ चत्वारि वागिति हविषोऽनुवाक्या। चत्वारि वाक्परिमिता पदानि यज्ञेन वाचः पदवीयमायन्। आ० ३. ८.। इति सूचितत्वात् ॥

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेंगयंति तुरीयं वाचो मनुष्या वदंति ॥४५॥

चत्वारि । वाक् । परिऽमिता । पदानि । तानि । विदुः । ब्राह्मणाः । ये । मनीषिणः ।
गुहा । त्रीणि । निऽहिता । न । इंगयंति । तुरीयं । वाचः । मनुष्याः । वदंति ॥४५॥

वाग्वाचः कृत्स्नायाः पदानि चत्वारि परिमिता परिमितानि । लोके या वागस्ति सा चतुर्विधा विभक्तेत्यर्थः । तानि पदानि ब्राह्मणा वेदविदो मनीषिणो मनस ईषिणो मेधाविनो विदुः । जानंति । तेषां मध्ये त्रीणि गुहा गुहायां निहिता स्थापितानि नेंगयंति । न चेष्टंते । न प्रकाशंत इत्यर्थः । वाचस्तुरीयं पदं मनुष्या अध्यासञ्ज्ञाश्च वदंति । व्यक्तमुच्चारयंति । व्यवहरंति । कानि तानि चत्वारीत्यत्र बहवः स्वस्वमतानुरोधेन बहुधा वर्णयंति । सर्ववैदिकवाग्जालस्य संग्रहरूपा भूरादयस्तिस्रो व्याहृतयः प्रणव एक इति वेदत्रयसारत्वात्तासां व्याहृतीनामेव सारसंग्रहभूतत्वादकाराद्यात्मकस्य प्रणवस्येति सप्रणवासु व्याहृतिषु सर्वा वाक् परिमितेति केचन वेदवादिनो वदंति ॥ अपरे व्याकरणमतानुसारिणो नामाख्यातोपसर्गनिपातभेदेन । क्रियाप्रधानमाख्यातं । द्रव्यप्रधानं नाम । प्रागुपयुज्यत आख्यातपदस्येत्युपसर्गः प्रादिः । उच्चावचेष्वर्थेषु निपतनान्निपातोऽपितुचेत्यादिः । एतेष्वेव सर्वा वाक् परिमितेत्यखंडायाः कृत्स्नाया वाचश्चतुर्धा व्याकृतत्वात् । वाग्वै पराच्यव्याकृतावदत् तामिंद्रो मध्यतोऽवक्रम्य व्याकरोत्तस्मादियं व्याकृता वागुद्यते । तै० सं० ६. ४. ७. ३. । इति श्रुतेः ॥ अन्ये तु याज्ञिका मंत्राः कल्पो ब्राह्मणं चतुर्थी लौकिकीति । याज्ञिकैः समाख्यातोऽनुष्ठेयार्थप्रकाशको वेदभागो मंत्राः । मंत्रविधानप्रतिपादको वेदभाग इति मंत्राः कल्पोऽत ऊर्ध्वं । तै० आ० १. ३१. २. । इत्यादिनोक्तः कल्पः । मंत्रतात्पर्यार्थप्रकाशको वेदभागो ब्राह्मणं । भोगविषया ग[illegible]दिरूपा व्यावहारिकी । एष्वेव सर्वा वाङ्नियमितेति याज्ञिकाः ॥ ऋग्यजुःसामानि चतुर्थी व्यावहारिकीति नैरुक्ताः ॥ सर्पाणां वाग्वयसां क्षुद्रसरीसृपस्य च चतुर्थी व्यावहारिकीत्यैतिहासिकाः ॥ पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मवादिनः ॥ अपरे मातृकाः प्रकारांतरेण प्रतिपादयंति । परा पश्यंती मध्यमा वैखरीति चत्वारीति । एकैव नादात्मिका वाग्मूलाधारादुदिता सती परेत्युच्यते । नादस्य च सूक्ष्मत्वेन दुर्निरूपत्वात् सैव हृदयगामिनी पश्यंतीत्युच्यते योगिभिर्द्रष्टुं शक्यत्वात् । सैव बुद्धिं गता विवक्षां प्राप्ता मध्यमेत्युच्यते मध्ये हृदयाख्य उदीयमानत्वान्मध्यमायाः । अथ यदा सैव वक्त्रे स्थिता [illegible]व्यापारेण वहिर्निर्गच्छति तदा वैखरीत्युच्यते । एवं चत्वारि वाचः पदानि परिमितानि । मनीषिणो मनसः स्वामिनः स्वाधीनमनस्का ब्राह्मणा रवाख्यस्य शब्दब्रह्मणोऽधिगंतारो योगिनः परादिचत्वारि पदानि विदुः । जानंति । तेषु मध्ये त्रीणि परादीनि गुहा निहितानि हृदयांतर्वर्तित्वात् । तुरीयं तु पदं वैखरीसंज्ञकं मनुष्याः सर्वे वदंति ॥ व्याकरणप्रसिद्धानामाख्यातादिपक्षे मनीषिणो ब्राह्मणाः प्रकृतिप्रत्ययादिविभागज्ञा वाग्योगविदस्तानि पदानि जानंति । अवाग्योगविदः पामरा वाचो वाङ्मयस्य तुरीयं चतुर्थं भागं वदंति । व्यवहरंति । अर्थप्रकाशनाय प्रयुंजते ॥ अयं मंत्रो निरुक्ते व्याख्यातः । सोऽत्राप्यनुसंधेयः । नि० १३. ९. ॥ अथापि ब्राह्मणं भवति । सा वै वाक् सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयं । या पृथिव्यां साग्नौ सा रथंतरे । यांतरिक्षे सा वायौ सा वामदेव्ये । या दिवि सादित्ये सा बृहति सा [illegible] पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुः । तस्माद्ब्राह्मणा उभयीं वाचं वदंति या च देवानां या च मनुष्याणामिति ॥

इंद्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् ।
एकं सद्विप्रा बहुधा वदंत्यग्निं यमं मातरिश्वानमाहुः ॥४६॥
इंद्रं । मित्रं । वरुणं । अग्निं । आहुः । अथो इति । दिव्यः । सः । सुऽपर्णः । गरुत्मान् ।
एकं । सत् । विप्राः । बहुधा । वदंति । अग्निं । यमं । मातरिश्वानं । आहुः ॥४६॥

असुमादित्यमैश्वर्यविशिष्टमिंद्रमाहुः । तथा मित्रं प्रमीतेर्मरणात्त्रातारमहरभिमानिनमेतन्नामकं देवं तमाहुः । वरुणं पापस्य निवारकं राज्यभिमानिनं देवमाहुः । तथाग्निमंगनादिगुणविशिष्टमेतन्नामकमाहुः । अथो अपि चायमेव दिव्यो दिवि भवः सुपर्णः सुपतनो गरुत्मान् गरणवान् पक्षवान्वा । एतन्नामको यः पक्ष्यस्ति सोऽप्ययमेव । कथमेकस्य नानात्वमिति उच्यते । असुमेवादित्यमेकमेव वस्तुतः संतं विप्रा मेधाविनो

देवतातत्त्वविदो बहुधा वदंति। तत्तत्कार्यकारणेनेंद्राद्यात्मानं वदंति। एकैव वा महानात्मा देवता स सूर्य इत्याचक्षत इत्युक्तत्वात्। किंच तमेव वृष्ट्यादिकारणं वैद्युताग्निं यमं नियंतारं मातरिश्वानमंतरिक्षे श्वसंतं वायुमाहुः। सूर्यस्य ब्रह्मणोऽनन्यत्वेन सर्वात्मत्वमुक्तं भवति। अत्र ये केचिदग्निः सर्वा देवताः। ऐ० ब्रा० २. ३.। इत्यादिश्रुतितोऽयमेवाग्निरुत्तरे अपि ज्योतिषी इति मत्वाग्नेरेव सर्वात्मत्वप्रतिपादकोऽयं मंत्र इति वदंति। तत्पक्षे प्रथमोऽग्निशब्द उद्देश्यः। तमग्निमुद्दिश्येंद्राद्यात्मकत्वकथनं। अयं मंत्रो निरुक्त एवं व्याख्यातः। इममेवाग्निं महांतमात्मानमेकमात्मानं बहुधा मेधाविनो वदंति इंद्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मंतं। दिव्यो दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा। नि० ७. १८.। इति॥ ॥२२॥

वर्षकामेष्ट्यां तिस्रः पिंड्यो होतव्याः। तत्र कृष्णं नियानमिति तृतीयस्यानुवाक्या। कृष्णं नियानं हरयः सुपर्णा नियुत्वंतो ग्रामजितो यथा नरः। आ० २. १३.। इति॥

**कृ॒ष्णं नि॒यानं॒ हर॑यः सुप॒र्णा अ॒पो वसा॑ना॒ दिव॒मुत्प॑तंति।**
**त आव॑वृत्र॒न्सद॑नादृ॒तस्यादिद्घृ॒तेन॑ पृथि॒वी व्यु॑द्यते ॥४७॥**
**कृ॒ष्णं। नि॒ऽयानं॑। हर॑यः। सु॒ऽप॒र्णाः। अ॒पः। वसा॑नाः। दिव॑म्। उत्। प॒तं॒ति॒।**
**ते। आ। अ॒व॒वृ॒त्र॒न्। सद॑नात्। ऋ॒तस्य॑। आत्। इत्। घृ॒तेन॑। पृ॒थि॒वी। वि। उ॒द्य॒ते॒ ॥४७॥**

कृष्णं कृष्णवर्णं नियानं नियमेन गच्छंतं मेघं हरय उदकस्य हर्तारः सुपर्णाः शोभनपतना रश्मयोऽपो वसाना उदकानि वासयंतो मेघेषु। अद्भिर्मेघान्पूरयंत इत्यर्थः॥ अंतर्भावितण्यर्थाद्विकर्मकत्वं॥ यद्वा। कृष्णं नियानं नियमनं रात्रिः। देवानां हि रात्रिर्दक्षिणायनं। तत्प्रति। तस्मिन्वर्षकाल इत्यर्थः। एवं कुर्वंतो दिवं द्युलोकं तदाश्रितमादित्यं वोद्दिश्योत्पतंति। ऊर्ध्वं गच्छंति। ते रश्मय ऋतस्य सदनादुदकस्य स्थानादादित्यमंडलादाववृत्रन्। आवर्तंते। अर्वाच आगच्छंति। आदिदनंतरमेव यदार्वागगच्छंति तदानीमेव घृतेनोदकेन पृथिवी व्युद्यते। विविधं क्लिद्यते। कृष्णं निरयणं रात्रिरादित्यस्य हरयः सुपर्णा हरणा आदित्यरश्मय इत्यादि निरुक्तं द्रष्टव्यं। नि० ७. २४.॥

**द्वाद॑श प्र॒धय॑श्च॒क्रमेकं॒ त्रीणि॒ नभ्या॑नि॒ क उ॒ तच्चि॑केत।**
**तस्मि॒न्त्साकं॑ त्रि॒श॒ता न श॒ंकवो॑ऽर्पि॒ताः ष॒ष्टिर्न च॑लाच॒लासः॑ ॥४८॥**
**द्वाद॑श। प्र॒ऽधयः॑। च॒क्रम्। एक॑म्। त्रीणि॑। नभ्या॑नि। कः। उँ इति॑। तत्। चि॒के॒त॒।**
**तस्मि॑न्। सा॒कम्। त्रि॒ऽश॒ताः। न। श॒ंकवः॑। अ॒र्पि॒ताः। ष॒ष्टिः। न। च॒ला॒च॒लासः॑ ॥४८॥**

द्वादशैतत्संख्याकाः प्रधयः परिधयः प्रहिता वर्तंते। तत्स्थानीया द्वादश मासा एकमद्वितीयं चक्रं क्रमणस्वभावं संवत्सराख्यं चक्रमाश्रिताः। तथा त्रीणि त्रिसंख्याकानि नभ्यानि नाभ्याश्रयाणि फलकानि तत्स्थानीयानि ग्रीष्मवर्षाहेमंताख्यान्याश्रितानि। यथा सूर्यरथचक्रस्य द्वादश परिधयो नाभ्यर्हाणि त्रीणि फलकानि संति तद्वत्कालचक्रस्यापि। क उक्तोऽपि महांस्तच्चक्रं चिकेत। जानाति। तस्मिंश्चक्रे साकं सह शंकवो न शंकव इव। अत्र पुरस्तादुपचारोऽपि नशब्दः सामर्थ्यादुपमार्थीयः। तस्मिन्नपि संवत्सरचक्रे त्रिशता एतत्संख्याकाः षष्टिर्न। नशब्दश्चार्थे। षष्टिश्चारा अरस्थानीयान्यहान्यर्पिताः। अर्पितानि। कीदृशानि तानि। चलाचलासः। एकचलशब्दो द्विर्भावप्राप्तः। चलाः। चलनस्वभावानीत्यर्थः॥ चरिचलिपतिवदीनामच्याक्चाभ्यासस्य। पा० ६. १. १२. ६.। इति द्विर्वचनमागागमश्च। ततोऽसुक्॥ षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहानीति ब्राह्मणं। शत० ९. १. १. ४३.। द्वादश प्रधयश्चक्रमेकमिति मासानां मासा मानादित्यादि निरुक्तं। ४. २७.॥

प्रवर्ग्येऽभिष्टवे यस्ते स्तन इत्येका। सूचितं च। यस्ते स्तनः शशयो यो मयोभूर्गौर्मोमेदनु वत्सं मिषंतं। आ० ४. ७.। इति॥ एषैव सारस्वते पशौ हविषो याज्या। सूचितं च। यस्ते स्तनः शशयो यो मयोभूस्त्वं सोम प्र चिकितो मनीषेति द्वे। आ० ३. ७.। इति॥

यस्ते स्तनः शशयो यो मयोभूर्येन विश्वा पुष्यसि वार्याणि ।
यो रत्नधा वसुविद्यः सुदत्रः सरस्वति तमिह धातवे कः ॥४९॥
यः । ते । स्तनः । शशयः । यः । मयःऽभूः । येन । विश्वा । पुष्यसि । वार्याणि ।
यः । रत्नऽधाः । वसुऽवित् । यः । सुऽदत्रः । सरस्वति । तं । इह । धातवे । करिति कः ॥४९॥

हे सरस्वति ते तव संबंधी यः स्तनः स्तनवच्छिशुस्थानीयानां प्राणिनामाप्यायनकारी लौकिकवैदिकसुशब्दरूपः स्तनः शशयः शयानस्तव देहे वर्तमानः । यश्च स्तनो मयोभू रसास्वादिनां सुखस्य भावयिता । येन स्तनेन विश्वा सर्वाणि वार्याणि वरणीयान्यभिमतरूपाणि धनानि पुष्यसि भोक्तृभ्यः । यश्च स्तनो रत्नधा बहुविधरमणीयरसानां धारयिता वसुविद्वसूनां वासयितॄणां धनानां वेत्ता लब्धा वेदयिता वा । किंच यः स्तनः सुदत्रः शोभनदानः । सुदत्रः कल्याणदान इति निरुक्तं । ६. १४. । अत्रासकृद्यच्छब्दश्रवणं स्तनस्यातिप्रशस्तत्वज्ञापनार्थं । हे देवि तं तादृशं सर्वप्राण्युपकारकं सूक्तमयं स्तनमिहास्मिन्कर्मणीदानीं वा धातवेऽस्माभिर्धातुं पातुं पानाय कः । कुरु ॥

अग्निमंथने यज्ञेन यज्ञमित्येषा परिधानीया । यज्ञेन यज्ञमयजंत देवा इति परिदध्यात् । आ॰ २. १६. । इति सूचितत्वात् ॥

यज्ञेन यज्ञमयजंत देवास्तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचंत यत्र पूर्वे साध्याः संति देवाः ॥५०॥
यज्ञेन । यज्ञं । अयजंत । देवाः । तानि । धर्माणि । प्रथमानि । आसन् ।
ते । ह । नाकं । महिमानः । सचंत । यत्र । पूर्वे । साध्याः । संति । देवाः ॥५०॥

देवा व्यवहर्तारो यजमाना यज्ञेन निर्मथ्याग्निना यज्ञं होमसाधनमाहवनीयमयजंत । पूजितवंतः । अनुष्ठानाय संयोजितवंत इत्यर्थः । अग्निं मथित्वा प्रहरति तेनैवाग्नय आतिथ्यं क्रियत इति हि तैत्तिरीयकं । तानि धर्माण्यग्निसाधनानि कर्माणि प्रथमानि । प्रथम इति मुख्यनाम । प्रतमानि प्रकृष्टतमान्यासन् । फलप्रसवसमर्थान्यभवन्नित्यर्थः । ते ह ते च यजमाना नाकं । नास्मिन्नकमस्तीति नाकः स्वर्गः । तं महिमानो माहात्म्ययुक्ताः सचंत । संगताः । कीदृशं नाकं । यत्र यस्मिन्नाके पूर्वे पूर्वतनाः साध्याः साधना यज्ञादिसाधनवंतः । कर्मदेवा इत्यर्थः । ते संति निवसंति तं सचंत । तस्मादिदानीमपि मनुष्यैरेवं कर्तव्यमित्यर्थः । यद्वा । देवा इदानीं देवभागमापन्नाः पूर्वं यज्ञेनाग्निना पशुभूतेन यज्ञं यष्टव्यमग्निमयजंत । पूजितवंतः । अग्नेरेव मूर्तिभेदेन देवत्वं च पशुत्वं च द्रष्टव्यं । अग्निः पशुरासीत्तमालभंत तेनायजंतेति श्रुतेः । शिष्टं पूर्ववत् । यत्र यस्मिन् स्वर्गे निमित्तभूते सति पूर्वे पूर्वतनाः साध्या देवाः साधनाश्छंदोऽभिमानिनः । आदित्या अंगिरसश्च साध्या देवा उच्यंते । छंदांसि वै साध्या देवास्तेऽग्रेऽग्निनाग्निमयजंत ते स्वर्गं लोकमायन्नादित्याश्चैवेहासन्नंगिरसश्च तेऽग्रेऽग्निनाग्निमयजंत ते स्वर्गं लोकमायन् । ऐ॰ ब्रा॰ १. १६. । इति ब्राह्मणं । एते देवाः स्वर्गे संति । भवंति । स्वर्गप्राप्ता इत्यर्थः । यद्वा । यज्ञेन ज्ञानादियज्ञेन यज्ञं विष्णुमयजंत । पूजयंति । ते नाकं विष्णुलोकं महानुभावाः सचंत । संगच्छंते । यत्र पूर्वे साध्यादयो देवाः संति तत्स्थानं । अग्निनाग्निमयजंत देवा इत्यादि निरुक्तमनुसंधेयं । नि॰ १२. ४१. ॥

समानमेतदुदकमुच्चैत्यव चाहभिः । भूमिं पर्जन्या जिन्वंति दिवं जिन्वंत्यग्नयः ॥५१॥
समानं । एतत् । उदकं । उत् । च । एति । अव । च । अहऽभिः । भूमिं । पर्जन्याः ।
जिन्वंति । दिवं । जिन्वंति । अग्नयः ॥५१॥

एतत्प्रसिद्धमुदकं समानं। एकरूपमित्यर्थः। अहभिः कैश्चिदहोभिर्ग्रीष्मकालीनैरुच्चैति। ऊर्ध्वं गच्छति। तथाहभिर्वर्षकालीनैरेव तदुदकमव चैति। अवाङ्मुखं च गच्छति॥ चवायोगे प्रथमेति प्रथमा विभक्तिर्न निहन्यते॥ रश्मिनाड्येव भूमिं प्राप्नोति। तदेवोच्यते। पर्जन्याः प्रीणयितारो मेघा भूमिं जिन्वंति। उदकसंस्त्यायेन सस्याद्युत्पादनद्वारा भूमिष्ठान्प्रीणयंति। तथाग्नय आहवनीयाद्याः स्वे हुत आकृत्या दिवं द्युलोकस्थान्देवाञ्जिन्वंति। प्रीणयंति॥

सरस्वद्देवताके पशौ दिव्यं सुपर्णमिति वपायाज्या। दिव्यं सुपर्णं वायसं बृहंतं स वावृधे नर्यो योषणासु। आ॰ ३. ८.। इति सूचितत्वात्॥ अन्वारंभणीयायां सरस्वद्याग एषैव याज्या। सूचितं च। दिव्यं सुपर्णं वायसं बृहंतमा सवं सवितुर्यथा। आ॰ २. ८.। इति॥

दि॒व्यं सु॑प॒र्णं वा॑य॒सं बृ॒हंत॑म॒पां गर्भं॑ दर्श॒तमोष॑धीनां।
अ॒भी॒प॒तो वृ॒ष्टिभि॑स्त॒र्पयं॑तं॒ सर॑स्वंत॒मव॑से जोहवीमि॥५२॥
दि॒व्यं। सु॒ऽप॒र्णं। वा॒य॒सं। बृ॒हंतं॑। अ॒पां। गर्भं॑। द॒र्श॒तं। ओष॑धीनां।
अ॒भी॒प॒तः। वृ॒ष्टिऽभिः॑। त॒र्पयं॑तं। सर॑स्वंतं। अव॑से। जो॒ह॒वी॒मि॒॥५२॥

दिव्यं दिवि भवं सुपर्णं शोभनगमनं वायसं गमनशीलं बृहंतं महांतमपां गर्भं वृष्ट्युदकानां गर्भवदुत्पादकं। ओषधीनामोषधोर्दर्शतं दर्शनाय। दर्शयंतमित्यर्थः। यद्वा। ओषधीनां गर्भं दर्शतमिति पृथग्विशेषणं। किंचाभीपत आनुकूल्येन वृष्टिभिस्तर्पयंतं जगत्प्रीणयंतं। यद्वा। अभीपतोऽभिगमनवतः सलिलाधारांस्तटाकादींस्तर्पयंतं। अथवाभिगंताहं। सरस्वंतमुदकवंतं। सर इत्युदकनाम। देवं सूर्यं वावसे रक्षणाय जोहवीमि। पुनःपुनराह्वामि॥ ॥२३॥ ॥२२॥

त्रयोविंशेऽनुवाके पंचदश सूक्तानि। तत्र कया शुभेति पंचदशर्चं प्रथमं सूक्तं त्रैष्टुभं। अत्रानुक्रमणिका। कया पंचोना संवादस्तृतीयाद्ययुजो मरुतां वाक्यमंत्यस्तृचोऽगस्त्यस्य शिष्टा इंद्रस्यैकादशी च मरुत्वांस्त्विंद्रो देवतेति। अत्रेंद्रागस्त्यमरुतां संवादः प्रतिपाद्यते। तत्र तृतीयापंचमीसप्तमीनवमीनां मरुद्वाक्यरूपत्वात्त एवर्षयः। यस्य वाक्यं स ऋषिः। अनु॰ २. ४.। इति न्यायात्। अंत्यतृचस्यागस्त्यवाक्यत्वात्स एवर्षिः। शिष्टा युज आद्या चैकादशी चेंद्रस्य वाक्यं। अतः स एवर्षिः। अत्र या तेनोच्यते सा देवता। अनु॰ २. ५.। इति सामान्यापवादेन कृत्स्नस्य मरुत्वद्गुणक इंद्रो देवता॥ संसवचातुर्विंशकयोर्मरुत्वतीयशस्त्रे निविद्धानीयात्पूर्वमेतत्सूक्तं। यदि पर्यायान्मरुत्वतीय इति खंडयोः सूचितं। कया शुभेति च मरुत्वतीये पुरस्तात्सूक्तस्य शंसेत्। आ॰ ६. ६. ७. ३.। इति॥ आभिप्लविके पंचमेऽहनि मरुत्वतीय एतदेव सूक्तं। पंचमस्य कया शुभा यस्तिग्मशृंग इति मध्यंदिनः। आ॰ ७. ७.। इति सूचितत्वात्॥ महाव्रते मरुत्वतीयशस्त्र एतत्सूक्तं। पंचमारण्यके कया शुभा सवयसः सनीळा मरुत्वाँ इंद्र वृषभो रणाय। ऐ॰ आ॰ ५. १. १.। इत्युक्तत्वात्॥ विषुवति मरुत्वतीय एतदेव निविद्धानीयं। त्वं सु मेषं कया शुभेति च मरुत्वतीयं। आ॰ ८. ६.। इति सूचितत्वात्॥ अस्य विनियोगं शौनक आह। ज्ञातिपुत्रसुहृन्मित्रैर्यस्तु राज्यं चिकीर्षति। नित्यं स नियतो भूत्वा सूक्तं तु मनसा जपेत्। कया शुभेति पैशुन्यं कृत्वाचार्यनृपद्विजैः। श्रुत्वा पररहस्यं तु गुरोरप्याह शौनकः। ऋग्वि॰ १. २६.। इति॥

कया॑ शु॒भा सव॑यसः॒ सनी॑ळाः समा॒न्या म॒रुतः॒ सं मि॑मिक्षुः।
कया॑ म॒ती कुत॒ एता॑स ए॒तेऽर्चं॑ति॒ शुष्मं॒ वृष॑णो वसू॒या॥१॥
कया॑। शु॒भा। स॒ऽव॑यसः। स॒ऽनी॑ळाः। स॒मा॒न्या। म॒रुतः॑। सं। मि॒मि॒क्षुः॒।
कया॑। म॒ती। कुतः॑। आऽइ॑तासः। ए॒ते। अर्चं॑ति। शुष्मं॑। वृष॑णः। व॒सु॒ऽया॥१॥

इंद्रवाक्यं। सवयसः समानवयस्काः सनीळाः समानस्थाना एते मरुतः कया शुभा कैरपि दुर्ज्ञेयया

शोभया समान्या सर्वेषामेकरूपया महत्या युक्ताः । यद्वा । शुभित्युदकनाम । उक्तरूपया शुभोदकेन । सं मिमिक्षुः । लोकं सम्यक् सिंचंति ॥ मिहिसमानार्थो मिमिक्षतिधातुः ॥ यद्वा । मां युद्धादिषु प्रवर्तमानं सं मिमिक्षुः । तदर्थमेते मरुतः कयानिश्चेयया मती मत्या कुतो देशादेतासः । आगताः । आगत्य चैते वृषणो वर्षितारो वसूया वसूयया ॥ सुपां सुलुगिति पूर्वसवर्णदीर्घः ॥ धनेच्छया । यद्वा । वसवो वासयितारो वा ॥ तेनैव जसो याजादेशः ॥ शुष्मं बलं वृष्टिप्रदानजनितं लोकेऽर्चंति । पूजयंति । जगति कुर्वंति । यद्वा । मम बलं वर्धयंतीत्यर्थः । मरुतो हैनं नाजङ्कः । ऐ॰ ब्रा॰ ३. २०. । इति श्रुतेः । अत्रेंद्रमरुत्संवादरूपे सर्वत्र प्राणजीवात्मपरतयापि योजनीयं । अत्रापींद्रो ब्रूते ॥

कस्य॒ ब्रह्मा॑णि जुजुषु॒र्युवा॑नः॒ को अ॑ध्व॒रे म॒रुत॒ आ व॑वर्त ।
श्ये॒नाँ इ॑व॒ ध्रज॑तो अं॒तरि॑क्षे॒ केन॑ म॒हा मन॑सा रीरमाम ॥२॥
कस्य॑ । ब्रह्मा॑णि । जु॒जु॒षुः॒ । यु॒वा॑नः । कः । अ॒ध्व॒रे । म॒रुतः॑ । आ । व॒व॒र्त॒ ।
श्ये॒नान्ऽइ॑व । ध्रज॑तः । अं॒तरि॑क्षे । केन॑ । म॒हा । मन॑सा । री॒र॒मा॒म॒ ॥२॥

युवानो नित्यतरुणा महानुभावा मरुतः कस्य महाभागस्य ब्रह्माणि परिवृढानि हवींषि जुजुषुः । सेवंते । कश्च महानध्वरे स्वकीये यागे मरुत एताना ववर्त । यागांतरेभ्यो निवर्तयति । दुर्निग्रहत्वे दृष्टांतमाह । अंतरिक्षे ध्रजतो गच्छतः श्येनाञ्छंसनीयगमनानेतन्नामकान्पक्षिण इव । केन तत्प्रीतिसाधनेन महा महता मनसा मननवता स्तोत्रेण रीरमाम । रमेमहि ॥

अथ मरुत इंद्रेणोक्तास्तृतीययानया प्रतिब्रुवते ॥

कुत॒स्त्वमिं॑द्र॒ माहि॑नः॒ सन्नेको॑ यासि सत्पते॒ किं त॑ इ॒त्था ।
सं पृ॑च्छसे समरा॒णः शु॑भा॒नैर्वो॒चेस्तन्नो॑ हरिवो॒ यत्ते॑ अ॒स्मे ॥३॥
कुतः॑ । त्वं । इं॒द्र॒ । माहि॑नः । सन् । एकः॑ । या॒सि॒ । स॒त्ऽप॒ते॒ । किं । ते॒ । इ॒त्था ।
सं । पृ॒च्छ॒से॒ । स॒म्ऽअ॒रा॒णः । शु॒भा॒नैः । वो॒चेः । तत् । नः॒ । ह॒रि॒ऽवः॒ । यत् । ते॒ । अ॒स्मे इति॑ ॥३॥

हे इंद्र सत्पते सतां पालक त्वं माहिनो महनीयः पूजनीयः । अनुचरैरनुगंतव्य इत्यर्थः । तथाभूतः सन्नेकोऽसहायः सन् कुतो यासि । कुतः [illegible] । यद्वा । कुत्र यासि । ते तवेत्थेत्थं किं । किं त्वमेवमेव । किं न कोऽप्यनुचरोऽस्ति । किंच त्वं समराणोऽस्माभिः संगच्छमानः सं पृच्छसे । समीचीनं पृच्छसि । हे हरिवो हरिभ्यां तद्वन्निंद्र ते तवास्मे अस्मासु यद्वक्तुमिष्टतममस्ति तन्नोऽस्मभ्यं शुभानैः शोभमानैर्वचनैर्वोचेः । ब्रूहि ॥

ब्रह्मा॑णि मे म॒तयः॒ शं सु॒तासः॒ शुष्म॑ इयर्ति॒ प्रभृ॑तो मे॒ अद्रिः॑ ।
आ शा॑सते॒ प्रति॑ हर्यंत्यु॒क्थेमा हरी॑ वहत॒स्ता नो॒ अच्छ॑ ॥४॥
ब्रह्मा॑णि । मे॒ । म॒तयः॑ । शं । सु॒तासः॑ । शुष्मः॑ । इ॒य॒र्ति॒ । प्रऽभृ॑तः । मे॒ । अद्रिः॑ ।
आ । शा॒स॒ते॒ । प्रति॑ । ह॒र्यं॒ति॒ । उ॒क्था । इ॒मा । हरी॒ इति॑ । व॒ह॒तः॒ । ता । नः॒ । अच्छ॑ ॥४॥

अथैवं तैः पृष्टोऽनया चतुर्थ्येंद्रः प्रत्याह । हे मरुतः ब्रह्माणि सर्वाणि कर्माणि हवींषि वा मे मम स्वभूतानि । तथा मतयश्च मननयुक्ताः स्तुतयश्च मे मम शं सुखकार्योः । यद्वा । मे मतयो बुद्धयस्तेष्वेव वर्तंत इति शेषः । तथा सुतासोऽभिषुताः सोमा मे मदीया मदर्था एव । अतो यज्ञं प्रति गंतव्यमित्यर्थः । किंच मध्ये राक्षसादिबाधपरिहाराय शुष्मो बलवान्मे मदीयोऽद्रिः शत्रूणां भञ्जको वज्रः प्रभृतः सन्नियर्ति । गच्छत्येव लक्ष्यं प्रति न च निवर्तते । न केवलं हविरादीनां मदीयत्वमेव अपि तु यजमाना आ शासते । मामेव

प्रार्थयंते । किंचोकथोकथानि शस्त्राणि मां प्रति हर्यंति । कामयंते । मामेव शंसंतीत्यर्थः । किंच नोऽस्मदीयाविमा हरी इमावश्वौ ता तानि गंतव्यानि हविरादीन्यच्छाभिप्राप्तुं मां वहतः । अभिमतदेशं प्रापयतः । अत एव शीघ्रं गच्छामि । युष्माभिरपि तत्प्राप्तुं गंतव्यमित्यर्थः । अतोऽसहाय इति मंतव्यमिति भावः ॥

अतो वयमंतमेभिर्युजानाः स्वक्षत्रेभिस्तन्व१ः शुंभमानाः ।
महोभिरेताँ उप युज्महे न्विंद्र स्वधामनु हि नो बभूथ ॥५॥
अतः । वयं । अंतमेभिः । युजानाः । स्वऽक्षत्रेभिः । तन्वः । शुंभमानाः ।
महःऽभिः । एतान् । उप । युज्महे । नु । इंद्र । स्वधां । अनु । हि । नः । बभूथ ॥५॥

एवमुक्ता मरुतस्तमेव ब्रुवते । हे इंद्र त्वं यस्मादेवं करोषि अतः कारणाद्वयमप्यंतमेभिरंतिकतमैरश्वैर्युजाना युक्ताः संतः । कीदृशैः । स्वक्षत्रेभिः स्वायत्तबलैः । किंच महोभिस्तेजोभिस्तन्व आत्मशरीराणि शुंभमाना दीपयंतः । हर्षं प्राप्नुवाना इत्यर्थः । यद्वा । महोभिः स्वमहत्त्वेन युक्ता वयमेतान्गंतॄन्नु क्षिप्रमुप युज्महे । तव साकं हविरादि स्वीकुर्मह इत्यर्थः । हे इंद्र त्वमपि नोऽस्मत्संबंधि स्वधामुदकं बलं वानु बभूथ हि । अस्मत्सृष्टोदकजन्यं हविरनुभवसि खलु । हिशब्दः परस्परोपकार्योपकारिभावप्रसिद्धिद्योतनार्थः ॥ ॥२४॥

क्व१ स्या वो मरुतः स्वधासीद्यन्मामेकं समधत्ताहिहत्ये ।
अहं ह्यु१ग्रस्तविषस्तुविष्मान्विश्वस्य शत्रोरनमं वधस्नैः ॥६॥
क्व । स्या । वः । मरुतः । स्वधा । आसीत् । यत् । मां । एकं । संऽअधत्त । अहिऽहत्ये ।
अहं । हि । उग्रः । तविषः । तुविष्मान् । विश्वस्य । शत्रोः । अनमं । वधऽस्नैः ॥६॥

स्या सा स्वधा तदुदकं बलं वा वो युष्माकं संबंधि क्वासीत् । नैवासीदित्यर्थः । अस्माकमुदकं त्वमनुभवसीति ब्रूथ । यद्वा स्वधैकमसहायं [illegible] वृष्ट्यर्थं मेघहननकर्मणि वृत्रवधे वा समधत्त सहितमभूत् । [illegible] संबंधः । असहायस्य कथमिति मतं सेत्स्यतीति अत आह । अहं ह्यहं खलूग्र उद्गूर्णबलस्तविषो बलवांस्तुविष्मान्महत्त्वोपेतोऽस्मि । यस्मादतिबलोऽहं तस्माद्विश्वस्य कृत्स्नस्य शत्रोर्मेघस्य । शत्रुरेवायं ॥ कर्मणि षष्ठी ॥ सर्वं शत्रुसंघं वधस्नैर्वधरूपैः शोधनैः । वधकौशलैरित्यर्थः । यद्वा । वध इति वज्रनाम । वधस्नैर्वज्रस्यासनैः क्षेपणप्रकारैः । अनमं । अनमयं ॥ अंतर्भावितण्यर्थोऽयं ॥ वशीकरोमीत्यर्थः ॥

भूरि चकर्थ युज्येभिरस्मे समानेभिर्वृषभ पौंस्येभिः ।
भूरीणि हि कृणवामा शविष्ठेंद्र क्रत्वा मरुतो यद्वशाम ॥७॥
भूरि । चकर्थ । युज्येभिः । अस्मे इति । समानेभिः । वृषभ । पौंस्येभिः ।
भूरीणि । हि । कृणवाम । शविष्ठ । इंद्र । क्रत्वा । मरुतः । यत् । वशाम ॥७॥

अथैवमुक्ता इंद्रं पुनराहुः । हे इंद्र वृषभ वर्षितः त्वं भूरि चकर्थ । प्रभूतं [illegible] । सत्यमेव । तथाप्यस्मे अस्माकं समानेभिः समानैर्युज्येभिरस्माभिर्युक्तैः पौंस्येभिः पुंसः कर्मभिः सामर्थ्यैरेव चकर्थ । न त्वेक एवेत्यर्थः । हे शविष्ठ । शव इति बलनाम । हे इंद्र बलवत्तम वयं भूरीणि हि त्वत्कृतादपि प्रभूतानि कर्माणि कृणवाम । कृतवंतः स्म । हे इंद्र क्रत्वा क्रतुना कर्मणा यद्यद्वृष्ट्यादिकं वशाम कामयामहे । तानि त्वत्तोऽप्यधिकानीत्यर्थः । यतो वयं मरुतः ॥ छांदसमनुदात्तत्वं ॥ एतेन स्वमहत्त्वं स्थापितं भवति । स्वरो व्यस्तः । अथवा इंद्रस्येदं वाक्यं । हे मरुतः यद्यस्यैव तत्तस्यैव भवतु । तर्ह्यहं च यूयं च सहैव क्रत्वा कर्मणा यद्वशाम यद्वृष्टिकर्म कामयामहे । तस्मादुदकं समानमेवेत्यर्थः । एवं मरुत इति [illegible] व्याख्यानं ॥

वर्धीं वृत्रं मरुत इंद्रियेण स्वेन भामेन तविषो बभूवान् ।
अहमेता मनवे विश्वश्चंद्राः सुगा अपश्चकर वज्रबाहुः ॥ ८ ॥
वर्धीं । वृत्रं । मरुतः । इंद्रियेण । स्वेन । भामेन । तविषः । बभूवान् ।
अहं । एताः । मनवे । विश्वऽचंद्राः । सुऽगाः । अपः । चकर । वज्रऽबाहुः ॥ ८ ॥

इदानीमिंद्र आह । हे मरुतः अहमिंद्र इंद्रियेण स्वेन भामेन कोपेन तविषो बलवान् बभूवान् । भूतः । संपन्नः । कस्मै कर्मिति तदुच्यते । मनवे मनोरर्थायैता विश्वश्चंद्राः सर्वाल्हादकाः सुगाः सुगमनाः सर्वत्र नद्यादिषु गमनशीला अपो वृष्ट्युदकानि चकर । चकार । कृतवानस्मि । यतोऽहं वज्रबाहुः । अनेन सहायनैरपेक्ष्यमुक्तं भवति ॥

अनुत्तमा ते मघवन्नकिर्नु न त्वावाँ अस्ति देवता विदानः ।
न जायमानो नशते न जातो यानि करिष्या कृणुहि प्रवृद्ध ॥ ९ ॥
अनुत्तं । आ । ते । मघऽवन् । नकिः । नु । न । त्वाऽवान् । अस्ति । देवता । विदानः ।
न । जायमानः । नशते । न । जातः । यानि । करिष्या । कृणुहि । प्रऽवृद्ध ॥ ९ ॥

इदानीं ते मरुतो हर्षेण प्रत्याहुः । आ इति स्मरणे । स्मृतवंतो वयमिदानीं हे मघवन् ते त्वयानुत्तमप्रेरितं नकिर्नु । नैवास्ति । नु निश्चये । त्वया यदुक्तं तत्सत्यमित्यर्थः । हे देव त्वावांस्त्वत्सदृशो विदानो विद्वान् ॥ व्यत्ययेन शानच् ॥ जयोपायवेदिता देवता देवो नास्ति । किंच हे प्रवृद्धातिबल जायमानो जातो वा कश्चिद्देवो मर्त्यो वा त्वं यानि वृत्रवधादीनि करिष्या कर्तव्यानि कृणुहि कुरुषे तानि न नशते । न व्याप्नोति । नशतिर्व्याप्तिकर्मा । नान्यस्त्वच्चेष्टितानुकार्येवेत्यर्थः ॥

एकस्य चिन्मे विभ्व१स्त्वोजो या नु दधृष्वान्कृणवै मनीषा ।
अहं ह्यु१ग्रो मरुतो विदानो यानि च्यवमिंद्र इदीश एषां ॥ १० ॥
एकस्य । चित् । मे । विऽभु । अस्तु । ओजः । या । नु । दधृष्वान् । कृणवै । मनीषा ।
अहं । हि । उग्रः । मरुतः । विदानः । यानि । च्यवं । इंद्रः । इत् । ईशे । एषां ॥ १० ॥

इदानीमिंद्र आह । मे ममैकस्य चिदेकस्यैव विभु सर्वत्रगमनशीलमोजो बलमस्तु । यद्वा । बलमेकस्यैवास्तु । किमर्थमिति चेत् उच्यते । या यानि कर्माणि मनीषा मनीषया मनस ईषया दधृष्वान् धर्षितवानहं नु क्षिप्रं कृणवै कर्तुं शक्नुवानि । हे मरुतः अहं ह्यहं खलूग्र उद्गूर्णबलो विदानो वेदनावान् । यानि यानि वसूनि च्यवं अवगच्छामि एषामहमेवेंद्र इदीश्वर एव सन्नीशे । ईश्वरो भवामि । अथवा विदानोऽहं यानि च्यवं यान्युद्दिश्य गच्छेयं एषामीशे । यतोऽहमिंद्रः अतः शक्त इत्यर्थः ॥ ॥ २५ ॥

अमंदन्मा मरुतः स्तोमो अत्र यन्मे नरः श्रुत्यं ब्रह्म चक्र ।
इंद्राय वृष्णे सुमखाय मह्यं सख्ये सखायस्तन्वे तनूभिः ॥ ११ ॥
अमंदत् । मा । मरुतः । स्तोमः । अत्र । यत् । मे । नरः । श्रुत्यं । ब्रह्म । चक्र ।
इंद्राय । वृष्णे । सुऽमखाय । मह्यं । सख्ये । सखायः । तन्वे । तनूभिः ॥ ११ ॥

इदमपींद्रवाक्यं । हे मरुतः मा [illegible]कोत्पादनविषये स्तोमः स्तोत्रममंदत् । मादयति मोदयते

वा । हे नरः सखायः यूयं मे मम यच्छ्रुत्यं सर्वैः श्रोतव्यं ब्रह्म परिवृढमेघधारणादिरूपं चक्र कृतवंतः । स्वप्रभूतं स्तोत्रं वानुत्तमा त इत्यादिकं । इंद्राय परमैश्वर्यगुणकाय वृष्णेऽभिमतवर्षित्रे सुमखाय शोभनया- गाय सख्ये युष्माभिः समानख्यानाय तनूभिरनेकशरीरैरुपेताय मह्यं मम तन्वे मदीयशरीरपोषाय भवतु । यद्वा । तनूभिरस्मच्छरीरभूतैर्युष्माभिः कृतं मह्यमेवास्त्वित्यर्थः ॥

एवेदेते प्रति मा रोचमाना अनेद्यः श्रव एषो दधानाः ।
संचक्ष्या मरुतश्चंद्रवर्णा अच्छांत मे छदयाथा च नूनं ॥१२॥
एव । इत् । एते । प्रति । मा । रोचमानाः । अनेद्यः । श्रवः । आ । इषः । दधानाः ।
संऽचक्ष्य । मरुतः । चंद्रऽवर्णाः । अच्छांत । मे । छदयाथ । च । नूनं ॥१२॥

हे मरुतः एवेदेवमेवैते यूयं मा मां प्रति रोचमाना मद्विषये संप्रीयमाणा मां ख्यापयंतो वानेद्योऽनंति- कथ्यं श्रवः कीर्तिमिषश्च दधानाः । आ इति चार्थे । यद्वा । अनेद्य इति प्रशस्यनाम । प्रशस्यं यशोऽस्मत्तो दधाना अस्माभिर्वा धारयमाणाः । चंद्रवर्णाः । चंद्रमिति हिरण्यनाम । सुवर्णवर्णा यूयं मे मां संचक्ष्य सम्यक्प्रकाश्य नूनं निश्चयमच्छांत यशोभिराच्छादितवंतश्छदयाथ । आच्छादयथ च । मां प्रति सर्वदा रोचमाना मय्येव कीर्तिमन्नं च दधाना मत्कृतैः कर्मभिर्मामेव स्तुतेत्यर्थः ॥

को न्वत्र मरुतो मामहे वः प्र यातन सखीँरच्छा सखायः ।
मन्मानि चित्रा अपिवातयंत एषां भूत नवेदा म ऋतानां ॥१३॥
कः । नु । अत्र । मरुतः । ममहे । वः । प्र । यातन । सखीन् । अच्छ । सखायः ।
मन्मानि । चित्राः । अपिऽवातयंतः । एषां । भूत । नवेदाः । मे । ऋतानां ॥१३॥

हे मरुतः युष्मानत्र लोके को नु खलु मर्त्यो ममहे । पूजयति । हे सखायः सर्वस्य सखिवत्प्रियकारिणः संतः सखीन् हविष्प्रदानेन सखिभूतान्यजमानानच्छाभिमुख्येन प्राप्तुं प्र यातन । गच्छत । हे चित्राश्चायनीयाः यूयं मन्मानि मननीयानि धनान्यपिवातयंतः संपूर्णं प्रापयंतो भूत । भवत । किंच मे मदीयानामेषामृतानाम- वितथानां नवेदा भूत । ज्ञातारो भवत ॥

आ यद्दुवस्याद्दुवसे न कारुरस्माञ्चक्रे मान्यस्य मेधा ।
ओ षु वर्त्त मरुतो विप्रमच्छेमा ब्रह्माणि जरिता वो अर्चत् ॥१४॥
आ । यत् । दुवस्यात् । दुवसे । न । कारुः । अस्मान् । चक्रे । मान्यस्य । मेधा ।
ओ इति । सु । वर्त्त । मरुतः । विप्रं । अच्छ । इमा । ब्रह्माणि । जरिता । वः । अर्चत् ॥१४॥

हे मरुतः दुवस्याद्युष्मत्परिचरणार्हात्स्तोत्रात् तेन स्तोत्रेण दुवसे परिचरणाय पर्याप्ता कारुः कर्त्री स्तुतिकुशला मान्यस्य माननीयस्य विदुषो मेधा बुद्धिरस्मान् । नेति संप्रत्यर्थे । इदानींतनाना चक्रे । आभि- मुख्येन करोति । प्राप्नोतीत्यर्थः । यद्वा । षष्ठीबहुवचन इदं रूपं । दुवस्यानां परिचरणार्हाणां दुवसे परिचर- णायेत्यर्थः । अतो हे मरुतः यूयं विप्रं मेधाविनं यजमानं मामगस्त्यमच्छाभिमुख्येन प्राप्तुं सु सुष्ठो वर्त्त । ओ इति निपातद्वयसमुदायरूप एको निपातः । आङित्याभिमुख्येन । उकारोऽवधारणे । आवर्तध्वमेव । किमर्थ- मेवमिति उच्यते । इमा ब्रह्माणि परिवृढानि कर्माण्युद्दिश्य जरिता स्तोता वो युष्मानर्चत् । अर्चति । यस्मादेवं तस्मादावर्तध्वमित्यर्थः ॥

अथ पंचदश्यां सूक्तोपक्रममारभ्य कृतां स्तुतिं मरुद्भ्यो निवेद्याभिमतमाशास्ते ॥

एष वः स्तोमो मरुत इयं गीर्मांदार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुं ॥१५॥
एषः । वः । स्तोमः । मरुतः । इयं । गीः । मांदार्यस्य । मान्यस्य । कारोः ।
आ । इषा । यासीष्ट । तन्वे । वयां । विद्याम । इषं । वृजनं । जीरऽदानुं ॥१५॥

हे मरुतः एष स्तोम इदानींक्रियमाणप्रकारं स्तोत्रं वो युष्मदर्थं । युष्मत्प्रीणनाय भवत्वित्यर्थः । तथेयं गीः स्तुतिरूपा वागपि वो युष्मदर्थाय । यस्मादेवं तस्मान्मांदार्यस्य स्तुतिविशेषैर्मदयितुः स्तुतिभिर्मदस्य प्रेरयितुर्वा मान्यस्य वरप्रदानादिना माननीयस्य कारोः स्तोतुरिषेच्छया यासीष्ट । आगच्छत । किमर्थं । तन्वे शरीराय । तत्पोषायेत्यर्थः । वयां वयमपीषमन्नं वृजनं बलं जीरदानुं जयशीलदानमेतत्सर्वं विद्याम । युष्मास्वागतेषु यज्ञसंपूर्त्यैश्वर्यादिद्वारा लभेमहि ॥ ॥२६॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके तृतीयोऽध्यायः समाप्तः ॥

---

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥
इत्थं द्वितीयाष्टकगस्तृतीयोऽध्याय आदरात् । व्याख्यातः सायणार्येण पुरुषार्थप्रदर्शकः ॥

अथ चतुर्थोऽध्याय आरभ्यते । कया शुभेत्यस्मिंस्त्रयोविंशेऽनुवाके पंचदश सूक्तानि । तत्र तन्विवोचेतद्द्वितीयं सूक्तं पंचदशर्चं । अत्रानुक्रमणिका । तन्वगस्त्यो मारुतं हि द्विचिष्टुबंतं मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा वासतीवरे कुंभे रेतोऽपतत्ततोऽगस्त्यवसिष्ठावजायेतामिति । सूक्तसंख्यानुवर्तत आन्यस्याः सूक्तसंख्यायाः । अनु० १२. १. । इति परिभाषितत्वात्पंचदशर्चं । उक्तलक्षणेनागस्त्येन दृष्टत्वात्तस्यार्षं । मारुतं हीत्युक्तत्वात्तुह्यादिपरिभाषयेदमादिसूक्तत्रयं मरुद्देवताकं । अंत्ये द्वे त्रिष्टुभौ शिष्टास्त्रिष्टुबंतपरिभाषया जगत्यः ॥ विनियोगो लैंगिकः ॥

तन्नु वोचाम रभसाय जन्मने पूर्वं महित्वं वृषभस्य केतवे ।
ऐधेव यामन्मरुतस्तुविष्वणो युधेव शक्रास्तविषाणि कर्तन ॥१॥
तत् । नु । वोचाम । रभसाय । जन्मने । पूर्वं । महिऽत्वं । वृषभस्य । केतवे ।
ऐधाऽइव । यामन् । मरुतः । तुविऽस्वनः । युधाऽइव । शक्राः । तविषाणि । कर्तन ॥१॥

हे मरुतः वयं युष्मदीयं तत्तादृशं प्रसिद्धं पूर्वं पूरकं पूर्वतनं वा महित्वं माहात्म्यं नु क्षिप्रं वोचाम । ब्रूमः । किमर्थं । रभसाय राभस्ययुक्ताय जन्मने वेषां प्रादुर्भावाय । वेषां संनिधानायेत्यर्थः । तदपि किमर्थमित्यत आह । वृषभस्य फलस्य वर्षितुर्यज्ञस्य केतवे प्रज्ञानाय । वायुप्रेरणेन मेघागमनं प्रसिद्धं । हे तुविष्वणो गमनसंरंभेण प्रभूतध्वनियुक्ता हे शक्राः सर्वमपि कर्तुं शक्ताः यूयं यामन्यामनि यागगमने प्रस्तुते सत्यैधैवैधान्येधःसंबंधीनि तेजांसीव प्रायेण महत्त्वेन तविषाणि बलानि सामर्थ्यानि कर्तन । कुरुत । तत्सुम इत्यर्थः । तत्र दृष्टांतः । युधेव युद्धेन तत्तद्युद्धनिमित्तं यथा तविषाणि कुरुथ तद्वत् ॥

नित्यं न सूनुं मधु बिभ्रत उप क्रीळंति क्रीळा विदथेषु घृष्वयः ।
नक्षंति रुद्रा अवसा नमस्विनं न मर्धंति स्वतवसो हविष्कृतं ॥२॥
नित्यं । न । सूनुं । मधु । बिभ्रतः । उप । क्रीळंति । क्रीळाः । विदथेषु । घृष्वयः ।
नक्षंति । रुद्राः । अवसा । नमस्विनं । न । मर्धंति । स्वऽतवसः । हविःऽकृतं ॥२॥

नित्यं न सूनुमौरसं प्रियं पुत्रमिव मधु मधुरं हविर्बिभ्रतो धारयंतो मरुतो विदथे, यागेषु घृष्वयो रुद्रप्रभृतीनां घर्षकाः संतः क्रीळाः क्रीडनशीला उपोपेत्य क्रीळंति । विहरंति । किंच रुद्राः । रुद्रपुत्रा मरुतोऽपि रुद्रा उच्यंते जन्यजनकयोरभेदात् । मरुतां रुद्रपुत्रत्वं पुराणेषु तपसा तुष्टौ पार्वतीपरमेश्वरौ मरुतः पुत्रत्वेन स्वीचक्रतुरिति प्रसिद्धं । नमस्विनं नमस्कारोपलक्षितस्तोत्रोपेतं हविष्कृतं हविषः कर्तारं प्रदातारं यजमानमवसा रक्षणेन तर्पणेन वा निमित्तभूतेन नक्षंति । व्याप्नुवंति । किंच स्वतवसः स्वायत्तबला मरुतो यजमानं न मर्धंति । न संग्रामयंति । न क्लेशयंतीत्यर्थः ॥

यस्मा ऊमासो अमृता अरासत रायस्पोषं च हविषा ददाशुषे ।
उक्षंत्यस्मै मरुतो हिता इव पुरू रजांसि पयसा मयोभुवः ॥३॥
यस्मै । ऊमासः । अमृताः । अरासत । रायः । पोषं । च । हविषा । ददाशुषे ।
उक्षंति । अस्मै । मरुतः । हिताःऽइव । पुरु । रजांसि । पयसा । मयःऽभुवः ॥३॥

यस्मै यजमानाय हविषा ददाशुषे सोमादिहविर्दत्तवते हविषा प्रीता ऊमासोऽवितारोऽमृता अमरणधर्माणो मरुतो रायस्पोषं धनस्य पुष्टिं । चशब्दात्पश्वादिपुष्टिं । अरासत प्रायच्छन् । रासतिर्दानार्थः । अस्मै यजमानाय हिता इव हिताचरणाः सखाय इव संतो मयोभुवः सुखस्य भावयितारो मरुतो रजांसि लोकान् पुरु प्रभूतं यथा भवति तथा पयसोदकेन सस्याद्युत्पत्त्यर्थमुक्षंति । सिंचंति ॥

आ ये रजांसि तविषीभिरव्यत प्र व एवासः स्वयतासो अध्रजन् ।
भयंते विश्वा भुवनानि हर्म्या चित्रो वो यामः प्रयतास्वृष्टिषु ॥४॥
आ । ये । रजांसि । तविषीभिः । अव्यत । प्र । वः । एवासः । स्वऽयतासः । अध्रजन् ।
भयंते । विश्वा । भुवनानि । हर्म्या । चित्रः । वः । यामः । प्रऽयतासु । ऋष्टिषु ॥४॥

हे मरुतः युष्मत्संबंधिनो य एवास एवा अश्वविशेषास्तविषीभिः स्वकीयैर्बलैर्वृष्टिप्रदानादिरूपै रजांसि लोकानाव्यत सर्वत आवृण्वंति ते वो युष्माकमेवासोऽश्वाः स्वयतासः स्वयमेव सारथिना विनैव युक्ताः प्राध्रजन् । प्रकर्षेण गच्छंति । व्याप्नुवंति । किंच युष्मद्[illegible]श्वा भुवनानि सर्वाणि भूतजातानि विश्वा हर्म्या सर्वाणि हर्म्याणि च भयंते । बिभ्यति पतनात् । यस्मादेवं तस्माद्वो यामश्चित्रश्चायनीयः । आश्चर्यभूत इत्यर्थः । भीतेः कारणमाह । ऋष्टिषु युद्धस्थासु हेतिषु प्रयतासु प्रकर्षेणोद्यतासु सतीषु । अथवा भीतौ दृष्टांतः । ऋष्टिषु प्रयतासु सतीषु । लुप्तोपमेयं । आयुधेषूद्यतेषु यथा जना बिभ्यति तद्वद्युष्मदागमनाद्बिभ्यतीत्यर्थः ॥

यत्त्वेषयामा नदयंत पर्वतान्दिवो वा पृष्ठं नर्या अचुच्यवुः ।
विश्वो वो अज्मन्भयते वनस्पती रथीयंतीव प्र जिहीत ओषधिः ॥५॥
यत् । त्वेषऽयामाः । नदयंत । पर्वतान् । दिवः । वा । पृष्ठं । नर्याः । अचुच्यवुः ।
विश्वः । वः । अज्मन् । भयते । वनस्पतिः । रथियंतीऽइव । प्र । जिहीते । ओषधिः ॥५॥

मरुतस्त्वेषयामाः प्रदीप्तगमना यद्यदा पर्वतान् पर्ववतो गिरेर्गह्वराणि पूरकाम्मेघान्वा नदयंत नादयंति वाथवा दिवो विद्योतनात्मकस्यांतरिक्षस्य पृष्ठमुपरिभागं नर्या नरेभ्यो हिता अचुच्यवुः गच्छंति तदा वो युष्मत्संबंधिन्यज्मन् गमने निमित्तभूते सति विश्वो वनस्पतिर्वनस्य पालयिता वृक्षसमूहो भयते । बिभेति । तथौषधिः प्रियंगुव्रीह्यादिः प्र जिहीते । प्रकर्षेण गच्छति । स्वस्थानादितस्ततश्चलतीत्यर्थः । तत्र दृष्टांतः । रथीयंतीव रथमात्मन इच्छंती स्त्री । रथारूढेत्यर्थः । तादृशी स्त्रीव । सा यथा चलति तद्वत् ॥ ॥ १ ॥

यूयं न उग्रा मरुतः सुचेतुनारिष्टग्रामाः सुमतिं पिपर्तन ।
यत्रा वो दिद्युद्रदति क्रिविर्दती रिणाति पश्वः सुधितेव बर्हणा ॥ ६ ॥
यूयं । नः । उग्राः । मरुतः । सुऽचेतुना । अरिष्टऽग्रामाः । सुऽमतिं । पिपर्तन ।
यत्र । वः । दिद्युत् । रदति । क्रिविःऽदती । रिणाति । पश्वः । सुधिताऽइव । बर्हणा ॥ ६ ॥

हे उग्रा उद्गूर्णबला मरुतः यूयं सुचेतुना शोभनचेतसानुग्रहेण अहिंसितसंघाः संतो नोऽस्माकं सुमतिं शोभनबुद्धिं पिपर्तन । पूरयत । कस्मिन्काल इति तदुच्यते । यत्र यस्मिन्काले वो युष्मत्संबंधिनी क्रिविर्दती विक्षेपणशीलदंती दिद्युद्धेती रदति लिखति मेघसंस्त्यायं पश्वः पशूंश्च रिणाति रेषति हिनस्ति । वायौ वाति सति पशवः शीर्यंत इति प्रसिद्धं । हिंसायां दृष्टांतः । सुधिता सुहिता सुष्ठु प्रेरिता बर्हणा हतिस्तत्साधना हेतिर्वा यथा रिणाति तद्वत् ॥

प्र स्कंभदेष्णा अनवभ्रराधसोऽलातृणासो विदथेषु सुष्टुताः ।
अर्चंत्यर्कं मदिरस्य पीतये विदुर्वीरस्य प्रथमानि पौंस्या ॥ ७ ॥
प्र । स्कंभऽदेष्णाः । अनवभ्रऽराधसः । अलातृणासः । विदथेषु । सुऽस्तुताः ।
अर्चंति । अर्कं । मदिरस्य । पीतये । विदुः । वीरस्य । प्रथमानि । पौंस्या ॥ ७ ॥

प्र स्कंभदेष्णाः प्रकर्षेण स्तंभितदानाः । अविरतदाना इत्यर्थः । अनवभ्रराधसोऽभ्रष्टहविरादिधनाः । राध इति धननाम । अलातृणासः ॥ नकारस्य स्थाने लकारः ॥ अनातृणास आतर्दनरहिताः । अथवा । अलं पर्याप्तमातर्दनाः शत्रूणां । यद्वा । अलमत्यर्थं दातारः फलानां । एवंरूपा मरुतो विदथेषु यज्ञेष्वर्कमर्चनीयमिंद्रं स्वसखीभूतमर्चंति । पूजयंति । स्तुत्यादिना संभावयंतीत्यर्थः । किमर्थं मदिरस्य मादनसाधनस्य सोमस्य पीतये पानाय । तस्येंद्रस्य महत्त्वं कथं जानंतीत्यत आह । ते मरुतो वीरस्य विविधं शत्रूणामीरकस्येंद्रस्य प्रथमानि प्रतमानि मुख्यानि पौंस्या पुंस्त्वानि वृत्रवधादिरूपाणि विदुः । जानंति ॥

शतभुंजिभिस्तमभिह्रुतेरघात्पूर्भी रक्षता मरुतो यमावत ।
जनं यमुग्रास्तवसो विरप्शिनः पाथना शंसात्तनयस्य पुष्टिषु ॥ ८ ॥
शतभुंजिऽभिः । तं । अभिऽह्रुतेः । अघात् । पूःऽभिः । रक्षत । मरुतः । यं । आवत ।
जनं । यं । उग्राः । तवसः । विऽरप्शिनः । पाथन । शंसात् । तनयस्य । पुष्टिषु ॥ ८ ॥

हे मरुतः यूयं शतभुजिभिः । शतमित्यपरिमितनाम । असंख्यातभोगवद्भिः पूर्भिः पालनैर्जेतव्यैः शत्रूणां नगरैर्वा तं रक्षत । पालयत । तमित्युक्तं । कमित्याह । यं जनमभिह्रुतेरभिभवकारणात्कुटिलस्वभावादघात्पापादावत अरक्षत । किंच हे उग्रा उद्गूर्णतेजसो हे तवसो बलवंतो वेगवंतो वा हे विरप्शिनः । महन्नामैतत् । महांतः । रपणीयाः शब्दा रपाः । ते येषां ते रप्शिनः । विविधा रप्शिनः स्तोतारो येषां ते तथोक्ता हे तादृशाः यूयं यं च जनं पाथन पाथ रक्षथ । कस्मान्निमित्तादिति उच्यते । तनयस्य । उपलक्षणमेतत् । पुत्रा-

दोनां पुष्टिषु पोषेषु निमित्तभूतेषु शंसादभिशंसनात्। यमेवं कुरुथ तं रक्षतेति शेषः। पापक्षयाद्यनिष्टपरिहारेण पुत्रादिपोषरूपेष्टप्राप्त्या च रक्षथेत्यर्थः ॥

विश्वानि भद्रा मरुतो रथेषु वो मिथस्पृध्येव तविषाण्याहिता ।
अंसेष्वा वः प्रपथेषु खादयोऽक्षो वश्चक्रा समया वि वावृते ॥९॥
विश्वानि। भद्रा। मरुतः। रथेषु। वः। मिथस्पृध्याऽइव। तविषाणि। आऽहिता।
अंसेषु। आ। वः। प्रऽपथेषु। खादयः। अक्षः। वः। चक्रा। समया। वि। ववृते ॥९॥

हे मरुतः वो रथेषु युष्मत्संबंधिरथेषु रंहणसाधनेषु विश्वानि भद्रा सर्वाणि कल्याणानि भोगयोग्यानि द्रव्याण्यस्मभ्यं प्रदेयानि फलानि वाहितानि। तथा वोऽंसेष्वा तदुपलक्षितभुजेष्वपि। आकारोऽप्यर्थे। मिथस्पृध्येव बलाधिक्यात्परस्परस्पर्धाविषयाणि तविषाणि बलानि अंसेषूक्तलक्षणान्यायुधानि वाहितानि। किंच वः प्रपथेषु। प्रगताः पंथानो येषु विश्रामस्थानेषु तानि प्रपथानि। तेषु खादयः खाद्यानि भक्ष्याण्याहितानि। यद्वा। प्रगतः पंथा यैस्तेषु पादाग्रेषु खादयः स्थिरा आभरणविशेषा आहिताः। किंचाक्षो वो युष्मत्संबंधी रथ्योऽक्षश्चक्रा तत्रोपनिबद्धानि चक्राणि समया समीपे तेषां परिसरे वि ववृते। विशेषेण वर्तते। न कदाचिदपि चक्रेषु संलग्नो भवतीत्यर्थः। यस्मादेवं देवयजनगमनसाधनानि संति तस्माच्छीघ्रमागच्छध्वमित्यभिप्रायः ॥

भूरीणि भद्रा नर्येषु बाहुषु वक्षःसु रुक्मा रभसासो अंजयः ।
अंसेष्वेताः पविषु क्षुरा अधि वयो न पक्षान्व्यनु श्रियो धिरे ॥१०॥
भूरीणि। भद्रा। नर्येषु। बाहुषु। वक्षःऽसु। रुक्माः। रभसासः। अंजयः।
अंसेषु। एताः। पविषु। क्षुराः। अधि। वयः। न। पक्षान्। वि। अनु। श्रियः। धिरे ॥१०॥

ते मरुतो नर्येषु नरेभ्यो हितेषु बाहुषु भुजेषु भूरीणि प्रभूतानि भद्रा भद्राणि कल्याणानि धनानि स्तोतृभ्यो दातुं धिरे। दधिरे। धारयंति। तथा वक्षःसूरःस्थलेषु रुक्माः सुवर्णरत्नादिनिर्मितान्याभरणानि धारयंति। कीदृशानि। रभसासो राभस्ययुक्तानि कांतिमंति वा तथांजयो व्यक्तानि। अंसेषु भुजमूलेष्वेताः शुक्लवर्णा मालाः। पविषु वज्रसदृशेष्वायुधेषु क्षुराः क्षुरधाराः। अधि सप्तम्यर्थानुवादी। एवमेते मरुतः सर्वांगेषु श्रियो लक्ष्मीरनुक्रमेण वि धिरे। विविधं धारयंति। तत्र दृष्टांतः। वयो न पक्षान् पक्षिणः पक्षानिव ॥ ॥२॥

महांतो मह्ना विभ्वो३ विभूतयो दूरेदृशो ये दिव्या इव स्तृभिः ।
मंद्राः सुजिह्वाः स्वरितार आसभिः संमिश्ला इंद्रे मरुतः परिष्टुभः ॥११॥
महांतः। मह्ना। विऽभ्वः। विऽभूतयः। दूरेऽदृशः। ये। दिव्याःऽइव। स्तृऽभिः।
मंद्राः। सुऽजिह्वाः। स्वरितारः। आसऽभिः। संऽमिश्लाः। इंद्रे। मरुतः।
परिऽस्तुभः ॥११॥

ये मरुतो महांतो महात्म्योपेताः। केन। मह्ना महत्त्वेन प्रभावातिशयेन। तथा विभ्वो विभवो व्याप्ताः तथा विभूतयो विविधैश्वर्यवंतः दूरेदृशो दूरे दृश्यमानाः प्रकाशमानाः। दूरदर्शने दृष्टांतः। दिव्याः स्तृभिरिव। स्तृ इति नक्षत्रनाम ऋक्षाः स्तृभिरिति नक्षत्राणां। नि० ३. २०.। इति निरुक्तत्वात्। दिवि भवा देवाः स्तृभिः स्वपुष्पकभूतैस्तेजःपुंजैर्नक्षत्रैर्यथा दूरे दृश्यमाना भवंति तद्वत्। किंच मंद्रा मादनाः सुजिह्वाः शोभनजिह्वाः आसभिरास्यैः स्वरितारः शब्दयितारः। प्रियवचना इत्यर्थः। अत एव सुजिह्वा इत्युक्तं। किंच इंद्रे

संमिश्लाः सम्यग्मिश्रयितारः। इंद्रसहायिन इत्यर्थः। मरुतो हैनं नाजहुरिति श्रुतेः। तथा परिस्तुभः परिस्तो-भयुक्ताः स्तुतिभिर्युक्ताः। एवं महाभागा ये मरुतः संति तेऽस्मद्यज्ञमागच्छंतीति शेषः॥

तद्वः सुजाता मरुतो महित्वनं दीर्घं वो दात्रमदितेरिव व्रतं।
इंद्रश्चन त्यजसा वि ह्रुणाति तज्जनाय यस्मै सुकृते अराध्वं ॥१२॥
तत्। वः। सुऽजाताः। मरुतः। महिऽत्वनं। दीर्घं। वः। दात्रं। अदितेःऽइव। व्रतं।
इंद्रः। चन। त्यजसा। वि। ह्रुणाति। तत्। जनाय। यस्मै। सुऽकृते। अराध्वं॥१२॥

हे सुजाताः शोभनजनना हे मरुतः वो युष्मदीयं महित्वनं महत्त्वं तत् तादृक् खलु। तदित्युक्तं किमि-त्याह। वो युष्माकं दात्रं दानं वृष्ट्यादिरूपं दीर्घमत्यायतमविच्छिन्नं। प्रक्रष्टोपकारीत्यर्थः। दीर्घत्वे दृष्टांतः। अदितेर्व्रतमिव। अदीनाया देवमातुर्भूम्या वा। व्रतमिति कर्मनाम। तद्यथा दीर्घमतिविस्तृतं तद्वत्। अदि-तिर्द्यौरदितिरंतरिक्षं। ऋ॰ १. ८९. १०। इत्यादिमंत्रवर्णात्। किंच हे मरुतः यूयं यस्मै सुकृते शोभनयागा-दिकर्त्रे यजमानाय यदभिमतं धनमराध्वं तदिंद्रश्चेंद्रोऽपि त्यजसा त्यागेन न वि ह्रुणाति। न विह्वरति। कौटिल्यं न करोति॥ चनेत्ययं यद्यपि निपातद्वयसमुदायरूप एको निपातः तथाप्यवयवविभागेन चशब्दः समुच्चये नशब्दो निषेधेऽधिगंतव्यः॥ युष्मद्दत्तादित्यागमिंद्रत्यागोऽपि नातिक्रामतीत्यर्थः। यद्वा। यस्मै दत्तमराध्वं तमिंद्रोऽपि न कुटलयति। न निषेधयति किंत्वनुमोदयतीत्यर्थः॥

तद्वो जामित्वं मरुतः परे युगे पुरू यच्छंसममृतास आवत।
अया धिया मनवे श्रुष्टिमाव्या साकं नरो दंसनैरा चिकित्रिरे॥१३॥
तत्। वः। जामिऽत्वं। मरुतः। परे। युगे। पुरु। यत्। शंसं। अमृतासः। आवत।
अया। धिया। मनवे। श्रुष्टिं। आव्य। साकं। नरः। दंसनैः। आ। चिकित्रिरे॥१३॥

हे मरुतः वो जामित्वं बंधुत्वमस्मद्विषयप्रेमाधिक्यं तत् खलु प्रसिद्धमित्यर्थः। कियत्पर्यंतमिति तदुच्यते। परे युगे। युगशब्दः कालोपलक्षकः। उत्कृष्टे महति कालेऽतीतेऽपि वर्तत इति शेषः। तत्कथमधिगतमित्यत आह। अमृतासोऽमरणधर्माणो हे मरुतः यूयं यद्यस्माच्छंसमस्माभिः क्रियमाणां स्तुतिं पुरु प्रभूतं यथा भवति तथावत रक्षथ। तस्माद्युष्मत्कृतं जामित्वमविनाशीत्यर्थः। किंच यूयमया धियानया[illegible]कया बुद्ध्या मनवे मनुष्याय स्तोत्रे यष्ट्रे वास्मदादये श्रुष्टिमाव्य कीर्तिं स्तुतिं वा रचित्वा साकं संभूय नरो नेतारः संतो दंसनैः कर्मभिरित्थंभूता आ चिकित्रिरे। सर्वतो जानीथ॥

येन दीर्घं मरुतः शूशवाम युष्माकेन परीणसा तुरासः।
आ यत्ततनन्वृजने जनास एभिर्यज्ञेभिस्तदभीष्टिमश्यां॥१४॥
येन। दीर्घं। मरुतः। शूशवाम। युष्माकेन। परीणसा। तुरासः।
आ। यत्। ततनन्। वृजने। जनासः। एभिः। यज्ञेभिः। तत्। अभि। इष्टिं। अश्यां॥१४॥

हे तुरासो वेगवंतो मरुतः युष्माकेन युष्मत्संबंधिना येन परीणसा। यद्यप्येतद्बहुनामसु पठितं तथापि यद्बहु तन्महदपि भवतीत्यत्र महदित्यर्थे गृह्यते। महता युष्मदभिगमनेनैषणेन वा दीर्घमायतं सत्त्रादिरूपं कर्म शूशवाम प्रवर्धयामः। किंच येन चाभिगमनेनैषणेन वा जनासो जना अस्मदीया वृजने संग्राम आ ततनन् सर्वतो विस्तारयंति। स्वसामर्थ्यैः संग्रामं जयंतीत्यर्थः। तदिष्टिमेषणं गमनमेभिर्यज्ञेभिरिदानीं क्रियमाणैः स्तोत्रादिरूपैः पूजनैरभ्याभिमुख्येनाश्यां। व्याप्नुयां॥

एष वः स्तोमो मरुत इयं गीर्मांदार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुं ॥१५॥
एषः । वः । स्तोमः । मरुतः । इयं । गीः । मांदार्यस्य । मान्यस्य । कारोः ।
आ । इषा । यासीष्ट । तन्वे । वयां । विद्याम । इषं । वृजनं । जीरऽदानुं ॥१५॥

अयं मंत्रस्तृतीयाध्यायांते व्याख्यातः । सूक्तोपक्रमप्रभृति क्रियमाणां स्तुतिं मरुद्भ्यः समर्प्य स्वाभीष्टमाशास्ते । हे मरुतः एष स्तोम इदानीं कृतं स्तोत्रं वो युष्माकं । युष्मदर्थमित्यर्थः । तथेयं गीः स्तुतिरूपा वागपि वो युष्माकं । कस्य संबंधीदमिति तदुच्यते । मांदार्यस्य ॥ मंदतेरीयतेश्च मांदार्यः ॥ स्तुतिं प्रेरयतो मान्यस्य माननार्हस्य कारोः । स्तोतृनामैतत् । स्तोतुः संबंधि । यद्वा । एतत्पदत्रयमुत्तरत्र संबध्यते । उक्तलक्षणस्तोतुरिषेच्छया कामनया तन्वे युष्मच्छरीरवृद्ध्यै । स्तुत्या हि शरीरं वर्धते । आ यासीष्ट । अभिगच्छतु स्तुतिः । वयां वयं चेषमन्नं वृजनं बलं जीरदानुं चिरकालजीवनं च विद्याम । लभेमहि ॥ ॥३॥

सहस्रं त इत्येकादशर्चं तृतीयं सूक्तमागस्त्यं त्रैष्टुभं । आद्यैंद्री शिष्टा मरुद्देवताकाः पूर्वत्र हिशब्दात् । सहस्रमेकादशाद्यैंद्रीत्यनुक्रमणिका ॥ विशेषविनियोगो लैंगिकः ॥

सहस्रं त इंद्रोतयो नः सहस्रमिषो हरिवो गूर्ततमाः ।
सहस्रं रायो मादयध्यै सहस्रिण उप नो यंतु वाजाः ॥१॥
सहस्रं । ते । इंद्र । ऊतयः । नः । सहस्रं । इषः । हरिऽवः । गूर्तऽतमाः ।
सहस्रं । रायः । मादयध्यै । सहस्रिणः । उप । नः । यंतु । वाजाः ॥१॥

हे इंद्र ते तवोतयो रक्षाप्रकाराः सहस्रं । अपरिमिता इत्यर्थः । नोऽस्मभ्यमुप यंत्विति सर्वत्र योज्यं । तथा हे हरिवः । हरी इंद्रस्याश्वौ । ताभ्यां तद्वन्निंद्र गूर्ततमा अत्यंतं गूर्णानीष एषणीया अन्नानि सहस्रं बहूनि त्वदीयानि । तथा सहस्रं रायोऽपरिमितानि धनानि मणिमुक्तादीनि मादयध्या अस्मान्मादयितुं यानि संति तान्यस्मानुप यंतु । तथा सहस्रिणो वाजा गमनवंतश्चतुष्पाद्रूपाः पशवोऽपि नोऽस्मानुप यंतु । समीपं प्राप्नुवंतु ॥

आ नोऽवोभिर्मरुतो यांत्वच्छा ज्येष्ठेभिर्वा बृहद्दिवैः सुमायाः ।
अध यदेषां नियुतः परमाः समुद्रस्य चिद्धनयंत पारे ॥२॥
आ । नः । अवःऽभिः । मरुतः । यांतु । अच्छ । ज्येष्ठेभिः । वा । बृहत्ऽदिवैः । सुऽमायाः ।
अध । यत् । एषां । निऽयुतः । परमाः । समुद्रस्य । चित् । धनयंत । पारे ॥२॥

ते मरुतोऽवोभी रक्षणैः सहिता नोऽस्मानच्छाभिमुख्येना यांतु । आगच्छंतु । सुमायाः । मायेति प्रज्ञानाम । शोभनप्रज्ञा एव मरुतो ज्येष्ठेभिर्बृहद्दिवैर्वा ज्येष्ठैः प्रशस्यतमैर्मणिमुक्तादिधनैश्च सहिता आ यांतु । वाशब्दः समुच्चये । आगमने कथमेषां सामर्थ्यमिति अत आह । अधाथैषां मरुतां यद्यस्मान्नियुत एतन्नामकाः परमा उत्कृष्टा अश्वाः समुद्रस्य चित् । चिच्छब्दोऽप्यर्थे । समुद्रस्यापि पारे परस्मिंस्तीरे धनयंत धनधारणं वहनं कुर्वंति । तस्माद्रक्षणैर्धनैश्चायांत्वित्यर्थः ॥

मिम्यक्ष येषु सुधिता घृताची हिरण्यनिर्णिगुपरा न ऋष्टिः ।
गुहा चरंती मनुषो न योषा सभावती विदथ्येव सं वाक् ॥३॥

मिम्यक्ष । येषु । सुऽधिता । घृताची । हिरण्यऽनिर्निक् । उपरा । न । ऋष्टिः ।
गुहा । चरंती । मनुषः । न । योषा । सभाऽवती । विदथ्याऽइव । सं । वाक् ॥३॥

सुधिता सुष्ठु निहिता सुष्ठु हिता वा लोके घृताची घृतं चरणशीलमुदकमंचंती हिरण्यनिर्णिग्हितरमणीयरूपा । निर्णिगिति रूपनाम । एवंरूपा ऋष्टिर्विद्युदाख्यायुधविशेषो वा उपरा न मेघमालेव येषु मरुत्सु सं मिम्यक्ष । म्यक्षतिर्गतिकर्मा । संगताभूत् । मेघपंक्तिविद्युताविमे अपि संगते इत्यर्थः । मेघपंक्तिर्विद्युच्चोभे दृष्टांतेन विशेष्यते । गुहा निगूढा गुहायां वांतरिक्षे चरंती । तत्र दृष्टांतः । मनुषो न योषा मनुष्यस्य परिवृढादेर्महिषीवत् । सा यथा सुवेषांतःपुर एव मध्ये चरति तद्वत् । किं सर्वदैवमिति नेत्याह । सभावती । सभा जनसंघः । तद्वती । वर्षकाल आविर्भवंतीत्यर्थः । तत्र दृष्टांतः । विदथ्या वागिव । विदथो यज्ञः । तदर्हतीति विदथ्या प्रयत्नोच्चारितरूपा वाक् । सा यथा यज्ञसभां प्राप्याविर्भवति तद्वत् । यद्वा । विदथ्या वेदनार्हा विवदमानयोर्वाक् । सा यथा सभावती तद्वत् । सैवंरूपा येषु मिम्यक्ष ते मरुतो देवयज[illegible]इत्यर्थः ॥

परा शुभ्रा अयासो यव्या साधारण्येव मरुतो मिमिक्षुः ।
न रोदसी अप नुदंत घोरा जुषंत वृधं सख्याय देवाः ॥४॥
परा । शुभ्राः । अयासः । यव्या । साधारण्याऽइव । मरुतः । मिमिक्षुः ।
न । रोदसी इति । अप । नुदंत । घोराः । जुषंत । वृधं । सख्याय । देवाः ॥४॥

शुभ्राः शोभनालंकारा अयासोऽभिगंतारो मरुतो यव्या मिश्रणशीलया विद्युता परा मिमिक्षुः । प्रकर्षेण सिंचंत्युदकसंस्त्यायं । साधारण्येव । यथा लोके साधारण्या स्त्रिया संगता युवानो रेतो मुंचंति तद्वत् । एवं कुर्वंतो घोरा अतिवृष्टिप्रदानेन भयंकरास्ते रोदसी द्यावापृथिव्यौ नाप नुदंत । अपनोदनं वर्षणरूपं तिरस्कारं न कुर्वंति । द्यावापृथिवीवचनो रोदसीशब्दः सर्वत्राद्युदात्तः । अत्र तु व्यत्ययेनांतोदात्तत्वमिति द्रष्टव्यं । यद्वा । रोदसा शब्देन रोदनस्वभावो रुद्रः । तस्य स्त्री रोदसीति केचिदाहुः । अपरे तु मरुतां स्त्रियो रोदसीति नामधेयमित्याहुः । अयमेव पक्षो युक्त उत्तरत्रैवं व्यवहारात् । तत्पक्षे रोदसी रोदस्यां ॥ ङीषंतात्सप्तम्या ईकारो लुप्ता । ईदूतौ च सप्तम्यर्थ इति प्रगृह्यसंज्ञा ॥ तस्यां प्रियं धनं मुंचंति । किंतु देवा मोदयितारो मादयितारो वा मरुतः सख्याय वृधं वृद्धिं जुषंत । सेवंते । द्यावापृथिवीपक्षे सख्याय जगतां सखिभावाय तयोर्वृद्धिं कुर्वंतीत्यर्थः ॥

जोषद्यदीमसुर्या सचध्यै विषितस्तुका रोदसी नृमणाः ।
आ सूर्येव विधतो रथं गात्त्वेषप्रतीका नभसो नेत्या ॥५॥
जोषत् । यत् । ईं । असुर्या । सचध्यै । विसितऽस्तुका । रोदसी । नृऽमनाः ।
आ । सूर्याऽइव । विधतः । रथं । गात् । त्वेषऽप्रतीका । नभसः । न । इत्या ॥५॥

रोदसी मरुत्पत्नी विद्युद्वा एतन्नामिकेयमपीमेनं मरुत्संघं जोषत् । सेवते ॥ जुषेर्लेट्यडागमः ॥ किमर्थं । सचध्यै संगमनार्थं । कीदृशी सा । असुर्या । असुराः क्षेप्तारो मरुतः । तेषां स्वभूता विषितस्तुका विश्लिष्टकेशसंघा विप्रकीर्णकेशसंघा वा संभोगवशेन तथा नृमणा नृषु नेतृषु मरुत्सु मननवती मनुष्येषु वा वृष्टिप्रदानमनोयुक्ता त्वेषप्रतीका दीप्तोपक्रमा दीप्तावयवा । ईदृशी देवी विधतः परिचरतो मरुत्संघस्य रथमा गात् । आगच्छति । व्याप्नोति । यागदेशं गंतुं रथमारुह्य वा यज्ञमागच्छति । केव । विधतः सूर्यस्य रथं त्वेषप्रतीका सूर्यैव सूर्यपत्नीव । यद्वा । सूर्यस्य दुहिताश्विनो रथमिव सा यथारोहति तद्वत् । आगमने दृष्टांतः । नभस इत्या न । [illegible]त्ययोः साधारणोऽयं नभःशब्दः नभ इति षट् साधारणानि । नै० १. ४. । इत्युक्तत्वात् । अत्रादित्यवचनः । तस्य गतिरिव । सा यथा शीघ्रा तद्वत् ॥ ॥४॥

आस्थापयंत युवतिं युवानः शुभे निमिश्लां विदथेषु पज्रां ।
अर्को यद्वो मरुतो हविष्मान्गायद्गाथं सुतसोमो दुवस्यन् ॥६॥
आ । अस्थापयंत । युवतिं । युवानः । शुभे । निऽमिश्लां । विदथेषु । पज्रां ।
अर्कः । यत् । वः । मरुतः । हविष्मान् । गायत् । गाथं । सुतऽसोमः । दुवस्यन् ॥६॥

युवानो मिश्रयंतो नित्यतरुणा वा मरुतो युवतिं मिश्रयंतीं नित्यतरुणीं वा विद्युद्रूपां रोदस्यां स्त्रियमास्थापयंत । आस्थापयंति । देवतात्वेन रथे धारयंति । कीदृशीं तां । निमिश्लां नियमेन मिश्रयंतीं पज्रां । पज्रो बलं । तद्वतीं । शुभे । शोभते दीप्यत इति शुबुदकं । वृष्युदकार्थं । शुभे रथ इति वा योज्यं । किंनिमित्तं । विदथेषु यागेषु निमित्तभूतेषु । कदा । यद्यदा हे मरुतः वो युष्मानर्कः ॥ मत्वर्थो लुप्यते ॥ अर्चनसाधनमंत्रोपेतः स्तोता वा हविष्मान् प्रदेयाज्यादिहविर्युक्तः सुतसोमो होमायाभिषुतसोमोऽयं यजमानो दुवस्यन् परिचरन् गाथं गातव्यं स्तोत्रं गायत् गायति । तदेत्यर्थः ॥

प्र तं विवक्मि वक्म्यो य एषां मरुतां महिमा सत्यो अस्ति ।
सचा यदीं वृषमणा अहंयुः स्थिरा चिज्जनीर्वहते सुभागाः ॥७॥
प्र । तं । विवक्मि । वक्म्यः । यः । एषां । मरुतां । महिमा । सत्यः । अस्ति ।
सचा । यत् । ईं । वृषऽमनाः । अहंऽयुः । स्थिरा । चित् । जनीः । वहते । सुऽभागाः ॥७॥

एषां मरुतां यो महिमा महत्त्वातिशयो वक्म्यः सर्वैः स्तुत्यः सत्योऽबाध्योऽमोघोऽस्ति तं प्र विवक्मि । प्रवच्मि । वर्णयामि । कथमेषां महिमा प्राप्त इति उच्यते । यद्यस्मादीमेतेषां संबंधिनी रोदसी वृषमणा वृष्ट्यादिवर्षणमनस्काहंयुरहंकारवती । जगदुपकारकर्त्री न कदाचिदस्तीत्यहंकारः । स्थिरा चित् । चिदिति पूजायां । अत्यंतमविनश्वरा ईदृशी देवी सुभागाः शोभनभाग्योपेता जनीर्जननशीलाः प्रजा वृष्ट्युत्पत्तीर्वा वहते धारयति । वृष्टौ सत्यां सर्वे प्राणिन उत्पद्यंते । यस्मादेवं तस्मान्महिमास्ति । तं महिमानं स्तौमीत्यर्थः ॥

पांति मित्रावरुणाववद्याच्चयंत ईमर्यमो अप्रशस्तान् ।
उत च्यवंते अच्युता ध्रुवाणि वावृध ईं मरुतो दातिवारः ॥८॥
पांति । मित्रावरुणौ । अवद्यात् । चयंते । ईं । अर्यमो इति । अप्रऽशस्तान् ।
उत । च्यवंते । अच्युता । ध्रुवाणि । ववृधे । ईं । मरुतः । दातिऽवारः ॥८॥

हे मरुतः युष्मत्संबंधिनो देवा मित्रावरुणावहोरात्र्यभिमानिदेवावर्यमो । अर्यमा उ इति निपातसमुदायात्मकमेकं पदं । उशब्दोऽपिशब्दार्थे । अर्यमापि । एते त्रयोऽपीममुं लोकं यत्रं वावद्यान्नह्योदयथानुष्ठानात् जगत्पत्ते व्यवहारप्रतिबंधरूपात् पांति । रक्षंति । तथैतेषामप्रशस्तान् चीणानपि पदार्थांश्चयते । चातयंति । नाशयंति । उतापि चैतैः प्रेरितान्यच्युताच्युतान्यस्रावीणि अत एव ध्रुवाण्यविचलानि मेघस्थोदकानि च्यवंते । च्यावयंति वैते । अहोरात्रे वै मित्रावरुणावहोरात्राभ्यां खलु वै पर्जन्यो वर्षतीति श्रुतेः । यद्वा । अच्युतानि ध्रुवाणि धनानि च्यवंते । कदेति उच्यते । हे मरुतः युष्मदीय ईमयं कालो दातिवारः प्रदेयजलः खंडितमेघो वा यदा ववृधे वर्धते । तदा मित्रादयो देवा युष्मदनुकूलव्यापारेण जगद्रक्षंतीत्यर्थः । यद्वा । दातिवारो दत्तवरणीयहविर्लक्षणधनो यजमानो हे मरुतः ईमेनान्युष्मान्ववृधे वर्धयति यदा तदेत्यर्थः ॥

नही नु वो मरुतो अंत्यस्मे आरात्ताच्चिच्छवसो अंतमापुः ।
ते धृष्णुना शवसा शूशुवांसोऽर्णो न द्वेषो धृषता परि ष्ठुः ॥९॥

नहि। नु। वः। मरुतः। अंति। अस्मे इति। आरात्तात्। चित्। शवसः। अंतं। आपुः।
ते। धृष्णुना। शवसा। शूशुऽवांसः। अर्णः। न। द्वेषः। धृषता। परि। स्थुः॥९॥

हे मरुतः वः शवसो युष्माकं संबंधिनो बलस्यांतमवसानमंत्यंतिक आरात्ताच्चिद्दूरादपि। यद्वा। चिदिति कुत्सायां। अत्यंतदूरात्। अस्मे अस्मासु मध्य एकोऽपि नु चिप्रं नह्यापुः। नैव खलु प्राप्नुवंति। संनिधावसंनिधौ च न प्राप्नुवंतीत्यर्थः। अथ परोचे प्राप्तबललमाह। ते खलु मरुतो धृष्णुना धर्षकेण शवसा बलेन शूशुवांसो वर्धमानाः अत एव धृषता पराभिभावकेन सामर्थ्येन द्वेषो द्वेष्टॄन्परि ष्ठुः। परिभवंति। वशीकुर्वंति। तत्र दृष्टांतः। अर्णो नोदकमिव। यथोदकं स्वविरोधि रजआदिकमभिभवति तद्वत्। यस्मादेवं तस्माच्छवसोऽंतं नापुः॥

वयमद्येत्येतां दशमीमर्त्तमित आदित्ये जपेत्। तथा च सूत्रं। वयमद्येंद्रस्य प्रेष्ठा इत्यस्तं यात्यादित्ये। आ० गृ० २. ६. १४.। इति॥

वयमद्येंद्रस्य प्रेष्ठा वयं श्वो वोचेमहि समर्ये।
वयं पुरा महि च नो अनु द्यून्तन्न ऋभुक्षा नरामनु ष्यात्॥१०॥
वयं। अद्य। इंद्रस्य। प्रेष्ठाः। वयं। श्वः। वोचेमहि। सऽमर्ये।
वयं। पुरा। महि। च। नः। अनु। द्यून्। तत्। नः। ऋभुक्षाः। नरां। अनु। स्यात्॥१०॥

अद्यास्मिन्दिने वयं यष्टार इंद्रस्य देवस्य प्रेष्ठाः प्रियतमा भवेम। यद्वा। प्रियतमा वयमिंद्रस्य महत्त्वं वोचेमहि। स्तोतुं समर्था भूयास्म। किंच वयं श्वः परस्मिन्नपि दिने समर्ये। सह मर्या मर्त्या ऋत्विजो यस्मिन् स समर्यो यज्ञः। तस्मिन्। संग्रामे वा। इंद्रस्य महत्त्वं वोचेमहि। किंच वयं पुरा पूर्वस्मिन्नतीतेऽपि काले महि महद्बलं नोऽस्मदर्थं वोचेमहि। तथा द्यून्दिवसाननु। प्रतिदिवसमित्यर्थः। अतीत आगामिनि च दिवसे सर्वदा वोचेमहि। तत्तस्मादृभुक्षाः। महन्नामैतत् ऋभुक्षा उक्षा इति तन्नामसु पाठात्। महानिंद्रो नरां मनुष्याणां मध्ये नोऽस्माननु स्यात्। अनु भवतु। अनुकूलमभिमतप्रदो वा भवतु॥

एष वः स्तोमो मरुत इयं गीर्मांदार्यस्य मान्यस्य कारोः।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुं॥११॥
एषः। वः। स्तोमः। मरुतः। इयं। गीः। मांदार्यस्य। मान्यस्य। कारोः।
आ। इषा। यासीष्ट। तन्वे। वयां। विद्याम। इषं। वृजनं। जीरऽदानुं॥११॥

एष इत्येकादशी व्याख्याता॥ ॥५॥

यज्ञायज्ञेति दशर्चं चतुर्थं सूक्तमागस्त्यं मारुतं। [illegible]स्त्रिष्टुभः। शिष्टाः सप्त त्रिष्टुबंतपरिभाषया जगत्यः। यज्ञायज्ञा दश त्रित्रिष्टुबंतमित्यनुक्रांतं॥ विशेषविनियोगो लैंगिकः॥

यज्ञायज्ञा वः समना तुतुर्वणिर्धियंधियं वो देवया उ दधिध्वे।
आ वोऽर्वाचः सुविताय रोदस्योर्महे ववृत्यामवसे सुवृक्तिभिः॥१॥
यज्ञाऽयज्ञा। वः। समना। तुतुर्वणिः। धियंऽधियं। वः। देवऽयाः। ऊं इति। दधिध्वे।
आ। वः। अर्वाचः। सुविताय। रोदस्योः। महे। ववृत्यां। अवसे। सुवृक्तिऽभिः॥१॥

हे मरुतः वः समना समीचीनतिर्न्यूनाधिकाभावलक्षणा यज्ञा यज्ञा सर्वेष्वपि यज्ञेषु तुर्वणिस्तूर्णवनिस्त्वर-

माणा संभजमाना भवति। तुर्वणिस्तूर्णवनिरिति यास्कः। नि० ६. १४.। तत्तद्यागावसर आगत्य हविः स्वीकृत्य वैकल्यपरिहारेण समं कुरुथेत्यर्थः। किंच वो यूयं धियं धियं युष्मत्संबंधिवृष्टिप्रदानादिरूपं सर्वं कर्म देवया देवान्प्रापयितार एव संतो दधिध्वे। धारयथ धारयध्वे वा। देवार्थहविराद्युत्पादनाय वृष्टिं कुरुथेत्यर्थः। यस्मादेवं कुरुथ तस्माद्वो युष्मानर्वाचोऽस्मदभिमुखाना ववृत्यां। आवर्तयामि। किमर्थं। रोदस्योर्द्यावापृथिव्योर्महे महतेऽवसे रक्षणाय प्रीणनाय वा। तदपि किमर्थमिति। सुविताय सुष्ठु व्याप्ताय। कैः साधनैः। सुवृक्तिभिः शोभनावर्जनैः स्तोत्रैः॥

वव्रासो न ये स्वजाः स्वतवस इषं स्वरभिजायंत धूतयः।
सहस्रियासो अपां नोर्मय आसा गावो वंद्यासो नोक्षणः॥२॥
वव्रासः। न। ये। स्वऽजाः। स्वऽतवसः। इषं। स्वः। अभिऽजायंत। धूतयः।
सहस्रियासः। अपां। न। ऊर्मयः। आसा। गावः। वंद्यासः। न। उक्षणः॥२॥

ये मरुतो वव्रासो न। वव्रिरिति रूपनाम। रूपवंत इव। ते यथा प्रशस्ता लक्ष्यंते तद्वत्। यद्वा। अरूपा अपि सरूपा इव। स्वजाः स्वयमेव स्वस्माद्वा जायमानाः। अनन्यहेतुका इत्यर्थः। धूतयः कंपनशीलाः संति त इषमन्नं हविर्लक्षणमन्नसाधनं सस्यादिकं वा स्वः स्वर्गं चाभिजायंत। अभिलक्ष्य प्रादुर्भवंति। ते दृष्टांतमुखेन स्तूयंते। अपां नोर्मय उदकानामूर्मय इव सहस्रियासः सहस्रसंमिताः। तथा वंद्यासो वन्दनीयाः क्षीरादिप्रदत्वेन स्तुत्या गावो न गाव इवासा समीप एवोक्षणो वृष्ट्युदकस्य सेक्तारः। तादृशा मरुतः प्रादुर्भवंतीत्यन्वयः॥

सोमासो न ये सुतास्तृप्तांशवो हृत्सु पीतासो दुवसो नासते।
ऐषामंसेषु रंभिणीव रारभे हस्तेषु खादिश्च कृतिश्च सं दधे॥३॥
सोमासः। न। ये। सुताः। तृप्तऽअंशवः। हृत्ऽसु। पीतासः। दुवसः। न। आसते।
आ। एषां। अंसेषु। रंभिणीऽइव। ररभे। हस्तेषु। खादिः। च। कृतिः। च। सं। दधे॥३॥

ये मरुतः सुता अभिषुतास्तृप्तांशवस्तर्पितावयवाः सोमासो न सोमा इव यथा वल्लीरूपाः सोमा अभिषवात्पूर्वमाप्यायनेन तृप्तावयवाः संतः पश्चात्सुता अभिषुता रसभूताः पीतासः पीताः संतो हृत्सु पातॄणां हृदयेषु दुवसो नासते परिचरंत इवासते तद्वत् ये मरुतो यज्ञ आहूतास्तृप्तावयवा भवंति ध्यायमानाः संतो हृत्सु हृदयेषु दुवसो न परिचरंत इवासते। यद्वा। प्राणादिरूपेण शरीरे स्थिता दुवसः परिचरंत इव गमनादिचेष्टाः कुर्वंत आसते। एषामंसेषु रंभिणीव युवतमांसालंबिनी योषिदिवा रारभे। आरेभे। आश्लिष्यति। अवलंबने सामर्थ्याच्छक्त्याख्यायुधविशेषो भुजलक्ष्मीर्वा। किंच हस्तेषु खादिर्हस्तत्राणकस्य कृतिः कर्तनी च खड्गलताष्टिश्च सं दधे। संधीयते। सम्यग्धृता भवति। परस्परसमुच्चयार्थाश्चकाराः। ये मरुत उक्तरूपास्त आविर्भवंतीत्यर्थः॥

अव स्वयुक्ता दिव आ वृथा ययुरमर्त्याः कशया चोदत त्मना।
अरेणवस्तुविजाता अचुच्यवुर्दृळ्हानि चिन्मरुतो भ्राजदृष्टयः॥४॥
अव। स्वऽयुक्ताः। दिवः। आ। वृथा। ययुः। अमर्त्याः। कशया। चोदत। त्मना।
अरेणवः। तुविऽजाताः। अचुच्यवुः। दृळ्हानि। चित्। मरुतः। भ्राजत्ऽऋष्टयः॥४॥

एते मरुतः स्वयुक्ताः स्वैर्युक्ताः परस्परं संयुक्ताः स्वेन धनेन वा युक्ताः संतो दिवो द्युलोकाद्वृथानायासेनावा ययुः। अवाङ्मुखमागच्छंति। हे अमर्त्या मरुतः यूयं त्मनात्मना स्वयमेव कशया। वाङ्नामैतत्। वाचा

स्तुतिरूपया चोदत। प्रेरयत। स्तोतुमिति शेषः। ते च मरुतोऽरेणवोऽपापास्तुविजाता बहुयज्ञेषु प्रादुर्भूता भ्राजदृष्टयो दीप्ता एवंभूताः संतो दृळ्हानि चिद्दृढान्यपि पर्वतान्यचुच्यवुः। च्यावयंति। चालयंति॥

को वोऽन्तर्मरुत ऋष्टिविद्युतो रेजति त्मना हन्वेव जिह्वया।
धन्वच्युत इषां न यामनि पुरुप्रैषा अहन्यो३ नैतशः॥५॥
कः। वः। अंतः। मरुतः। ऋष्टिऽविद्युतः। रेजति। त्मना। हन्वाऽइव। जिह्वया।
धन्वऽच्युतः। इषां। न। यामनि। पुरुऽप्रैषाः। अहन्यः। न। एतशः॥५॥

हे मरुतो हे ऋष्टिविद्युतो मेघभेदनायुधविशेषेण विद्योतमानाः युष्माकमंतर्युष्मासु मध्ये स्थित्वा कः पुमान्रेजति। चालयति। प्रेरयति। तर्हि कथं चालनमिति उच्यते। त्मनात्मनैव। चालने दृष्टांतः। जिह्वया हन्वेव॥ द्विवचनस्याकारः॥ हनू इव। तौ यथा रसनया चाल्येते तद्वत्। यद्यप्येवं तथापीषामन्नानां तत्साधनानां मस्तानां यामनि प्राप्तौ समृद्ध्यर्थं धन्वच्युतो न। धन्वञ्छब्दोऽंतरिक्षस्य वचनः। तेन तत्स्थमुदकं लक्ष्यते। उदकस्राविणो मेघा इव। ते यथाकांक्ष्यंते तथा युष्मानन्नादिप्राप्तये पुरुप्रैषा बहुविधं फलमिच्छन् यजमानः स्तोत्रैर्बहुप्रकारमाकारयतीत्यर्थः। तत्र दृष्टांतः। अहन्योऽह्नि भव एतशो नाश्व इव। स यथा शिक्षकेण नानाप्रकारं प्राप्यते तद्वत्॥ ॥६॥

क्व स्विदस्य रजसो महस्परं क्वावरं मरुतो यस्मिन्नायय।
यच्च्यावयथ विथुरेव संहितं व्यद्रिणा पतथ त्वेषमर्णवं॥६॥
क्व। स्वित्। अस्य। रजसः। महः। परं। क्व। अवरं। मरुतः। यस्मिन्। आऽयय।
यत्। च्यवयथ। विथुराऽइव। संऽहितं। वि। अद्रिणा। पतथ। त्वेषं। अर्णवं॥६॥

हे मरुतः यूयं यस्मिन्नुदकनिमित्तभूते सत्यायय आगच्छत अस्य रजसो वृष्ट्युदकस्य लोकस्य वा महो महतः परं पारमंतं क्व स्वित्। कुत्रास्तीति। नास्तीत्यर्थः। तथावरमवाङ्भाग आदिश्च क्व स्वित्। कुत्रास्ति। आद्यंतं न कोऽपि जानातीत्यर्थः। यद्यदा यूयं विथुरेव विथुराणि शिथिलानि तृणानीव संहितमेकभूतमुदकं च्यावयथ स्वस्थानाच्चालयथ तदाद्रिणा वज्रेण त्वेषं दीप्तमर्णवमुदकवंतं मेघं वि पतथ। विशीर्णं पातयथ॥

सातिर्न वोऽमवती स्वर्वती त्वेषा विपाका मरुतः पिपिष्वती।
भद्रा वो रातिः पृणतो न दक्षिणा पृथुज्रयी असुर्येव जंजती॥७॥
सातिः। न। वः। अमऽवती। स्वःऽवती। त्वेषा। विऽपाका। मरुतः। पिपिष्वती।
भद्रा। वः। रातिः। पृणतः। न। दक्षिणा। पृथुऽज्रयी। असुर्याऽइव। जंजती॥७॥

हे मरुतः वो युष्माकं संबंधिनी सातिर्न संभक्तिरिव युष्मत्संभजनं यथा प्रशस्तगुणं तद्वद्वो रातिर्वृष्ट्यादिविषयामवत्यामवती रोगवती न भवति। यथा राजेवामवान्। ऋ० ४.४.१.। इत्यत्रामशब्दोऽमात्यवचनः तद्वत्। यद्वा। वः सातिः संविभक्तिर्नामवती। रोगवती न भवति। किंतु स्वर्वती सुखवती त्वेषा दीप्ता विपाका परिपक्वफला पिपिष्वती पेषणवती कृषीवलैः कर्षणवती। वृष्टौ सत्यां कर्षतीति प्रसिद्धं। स्वविरोधिपेषणवती वा। भद्रा भंदनीया स्तुत्या। किंच पृणतो दातुर्धनिकस्य दक्षिणा न दक्षिणेव तद्वत्समृद्धकरी पृथुज्रयी पृथुजवा शीघ्रगामिनी। किंचासुर्येवासुरस्य स्वभूता जंजती सर्वानभिभवंती शक्तिरिव। सा यथान्येभ्योऽपहृत्यान्यस्मै दातुं समर्था तद्वदियमपि मेघस्थमुदकमपहृत्य जगतो दातुं शक्तेत्यर्थः। ईदृशी रातिरस्माभ्यमस्त्विति भावः॥

प्रति ष्टोभंति सिंधवः पविभ्यो यदभ्रियां वाचमुदीरयंति ।
अव स्मयंत विद्युतः पृथिव्यां यदी घृतं मरुतः प्रुष्णुवंति ॥ ८ ॥
प्रति । स्तोभंति । सिंधवः । पविऽभ्यः । यत् । अभ्रियां । वाचं । उत्ऽईरयंति ।
अव । स्मयंत । विऽद्युतः । पृथिव्यां । यदि । घृतं । मरुतः । प्रुष्णुवंति ॥ ८ ॥

पविभ्यो मरुत्संबंधिवज्रेभ्यः सिंधवः स्यंदनशीला आपः प्रति ष्टोभंति । प्रतिचलंति । कदा । यद्यदाभ्रियामभ्रभवां वाचं शब्दं स्तनितलक्षणमुदीरयंति उच्चारयंति वज्राणि । किंच विद्युतो विद्योतमानास्तडितः पृथिव्यामंतरिक्षे । पृथिवीत्यंतरिक्षनाम पृथिवी भूरिति तन्नामसूक्तत्वात् । तत्राव स्मयंत । स्मयंते । अवाङ्मुखं प्रकाशंते । पृथिव्यामित्येतदुत्तरत्र वा योज्यं । यदि यदा पृथिव्यां भूम्यां घृतं क्षरदुदकं मरुतः प्रुष्णुवंति प्रुष्णंति सिंचंति ॥ प्रुषेः क्रैयादिकस्य व्यत्ययेन श्नुः ॥ यद्येवं तदेत्यर्थः ॥

असूत पृश्निर्महते रणाय त्वेषमयासां मरुतामनीकं ।
ते सप्सरासोऽजनयंताभ्वमादित्स्वधामिषिरां पर्यपश्यन् ॥ ९ ॥
असूत । पृश्निः । महते । रणाय । त्वेषं । अयासां । मरुतां । अनीकं ।
ते । सप्सरासः । अजनयंत । अभ्वं । आत् । इत् । स्वधां । इषिरां । परि । अपश्यन् ॥ ९ ॥

पृश्निर्मरुन्माता नानावर्णा । पृश्नियै वै पयसो मरुतो जाताः । तै॰ सं॰ २. २. ११. ४. । पृश्नेः पुत्रा उपमासः । ऋ॰ ५. ५८. ५. । इत्यादिश्रुतेः । तामेवांतरिक्षदेवतां केचिदाहुः । सा देवी त्वेषं दीप्तमयासां गंतॄणां मरुतामनीकं समूहमेकोनपंचाशत्संख्याकमसूत । उत्पादितवती । किमर्थं । महते रणाय संग्रामाय । मेघजयायेत्यर्थः । ते च मरुतः सप्सरासः समानरूपा हिंसका वा मेघानामभ्वं मेघं जनयंति । उत्पादितवंतः । आदिदनंतरमेवेषिरां सर्वैरेष्टव्यां स्वधामन्नं सस्यादिसमृद्धिलक्षणं पर्यपश्यन् । परिपश्यंति सर्वे जनाः ॥

एष वः स्तोमो मरुत इयं गीर्मांदार्यस्य मान्यस्य कारोः ।
एषा यासीष्ट तन्वे वयां विद्यामेषं वृजनं जीरदानुं ॥ १० ॥
एषः । वः । स्तोमः । मरुतः । इयं । गीः । मांदार्यस्य । मान्यस्य । कारोः ।
आ । इषा । यासीष्ट । तन्वे । वयां । विद्याम । इषं । वृजनं । जीरऽदानुं ॥ १० ॥

एष व इति दशमी व्याख्याता ॥ ॥ ७ ॥

महश्चित्त्वमित्यष्टर्चं पंचमं सूक्तमैंद्रमागस्त्यं त्रैष्टुभं । द्वितीया चतुष्पदा विराट् अथ चतुष्पदा विराडृशकेशस्तुल्लास्त् विराजो दिशः । पिं॰ ३. ५. । इति पिंगलनागेन सूचितत्वाच्च । मह्योऽष्टौ द्वितीया विराडित्यनुक्रमणिका ॥ समूळ्हे दशरात्रे द्वितीये छंदोमे मरुत्वतीय इदं विश्वजितोऽग्निं नर इति खंडे सूत्रितं । द्वितीयस्य शंसा महां महश्चित्त्वमिंद्र । आ॰ ८. ७. । इति ॥

महश्चित्त्वमिंद्र यत एतान्महश्चिदसि त्यजसो वरूता ।
स नो वेधो मरुतां चिकित्वान्सुम्ना वनुष्व तव हि प्रेष्ठा ॥ १ ॥
महः । चित् । त्वं । इंद्र । यतः । एतान् । महः । चित् । असि । त्यजसः । वरूता ।
सः । नः । वेधः । मरुतां । चिकित्वान् । सुम्ना । वनुष्व । तव । हि । प्रेष्ठा ॥ १ ॥

हे इंद्र त्वं यतः कारणादेतान्मरुतो महश्चिन्महतोऽपि सामर्थ्यातिशयवत्त्वात्त्वं निरपेक्षेणापि स्नेहान्न त्यजसीति शेषः। अतः कारणान्महश्चिदसि। चिदिति पादपूरणः। महतोऽपि त्यजसस्त्यागात्। यद्वा। एतत्क्रोधनाम। क्रोधाद्वा। वरूता वरिता रक्षितासि। भवसि। यद्वा। मरुतोऽपि त्यागाद्वृष्ट्यादिविषयाद्वारयितासि। यस्मादेवं तस्मात् हे मरुतां वेधो विधातः स तादृशस्त्वं चिकित्वांश्चेतनावानस्मदनुग्रहविषयज्ञानोपेतः सन्नोऽस्मभ्यं सुम्ना सुखानि मरुद्दायत्तानि वृष्ट्यादिरूपाणि वनुष्व। देहि। तानि सुम्नानि तव हि प्रेष्ठा। तव खलु प्रियतमानि। हिशब्दः अयमिंद्रो मरुत्सखा। ऋ॰ ८.७६.२.। इत्यादिश्रुतिषु प्रसिद्ध्यर्थः॥

अयुंजन्त इंद्र विश्वकृष्टीर्विदानासो निष्षिधो मर्त्यत्रा।
मरुतां पृत्सुतिर्हासमाना स्वर्मीळ्हस्य प्रधनस्य सातौ॥२॥
अयुंजन्। ते। इंद्र। विश्वऽकृष्टीः। विदानासः। निःऽसिधः। मर्त्यऽत्रा।
मरुतां। पृत्सुतिः। हासमाना। स्वःऽमीळ्हस्य। प्रऽधनस्य। सातौ॥२॥

पूर्वमंत्रे मरुतामिंद्रसाहाय्यमुक्तं। अत्रेंद्रस्य मरुत्साहाय्यमुच्यते। हे इंद्र ते मरुतोऽयुंजन्। युज्यंते। त्वया युक्ता भवंतीत्यर्थः। कीदृशास्ते। विश्वकृष्टीर्विश्वकृष्टयो राज्यत्वेन सर्वजनवंतः किंच मर्त्यत्रा मर्त्येषु मर्त्यार्थं निष्षिधो निःशेषेणोदकस्य सेक्तृन्मेघान्विदानासो जानानाः। किंच येषां मरुतां पृत्सुतिः सेना स्वर्मीळ्हस्य प्रधनस्य सुखसेक्तुः प्रकृष्टधनवतो वृत्रादिसंग्रामस्य सातौ लाभे जये निमित्तभूते सति सेना हासमाना हासं कुर्वती हर्षयुक्ता भवति। यद्वा। सुखेन मिह्यते जलं यस्मिन् तादृशस्य प्रधनस्य प्रकृष्टोदकाख्यधनसाधनस्य संग्रामस्य सातौ। मेघभेदनायेति यावत्। येषामीदृशी सेनास्ति ते मरुतोऽयुंजन्निति संबंधः॥

अम्यक्सा त इंद्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनंति।
अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि॥३॥
अम्यक्। सा। ते। इंद्र। ऋष्टिः। अस्मे इति। सनेमि। अभ्वं। मरुतः। जुनंति।
अग्निः। चित्। हि। स्म। अतसे। शुशुक्वान्। आपः। न। द्वीपं। दधति। प्रयांसि॥३॥

हे इंद्र ते तव सा प्रसिद्धा ऋष्टिर्वज्राख्यायुधविशेषोऽस्मे अस्मद्वृष्ट्यर्थमम्यक्। प्राप्नोति मेघसमीपे। एवं च सति मरुतोऽपि सनेमि। अह्नायेति षट् पुराणनामानीत्युक्तत्वात्सनेमीति पुराणनाम। पुराणं चिरकालं संगृहीतमभ्वमुदकं जुनंति। क्षिपंति। वर्षंतीत्यर्थः। वृष्ट्या सस्यादिसमृद्धौ सत्यामग्निश्चिद्धि ष्म। हि स्मेति पूरणे। अग्निरप्यतसे संतते कर्मणि निमित्तभूते सति शुशुक्वान्दीप्यमानो वर्तते। पश्चात्प्रयांसि चरुपुरोडाशादिहवींषि दधति। धारयंति ददति वा यजमानाः। किमिव। आपो न द्वीपं। द्विपार्श्वस्थोदकवान्पर्वतादिर्द्वीपः। तं यथापो धारयंति तद्वत्। यद्वा। आयुधमेवोच्यते। वज्राख्यायुधविशेषोऽतसे काष्ठसमूहे शुशुक्वान्दीपयन्नग्निश्चित्। चिच्छब्द उपमार्थे दधि चिदित्युपमार्थे। नि॰ १.४.। इति यास्केनोपमार्थस्योक्तत्वात्। काष्ठे ज्वलन्नग्निरिव तद्वद्दीप्तो वर्तते। एतदेव दीप्तत्वमपेक्ष्य सेत्युक्तं। एवं च सत्यापो द्वीपमिव वृष्ट्युदकानि प्रयांसि सस्याद्यन्नानि दधति। धारयंति। एतत्सर्वं महानुभावस्येंद्रस्यैः सामर्थ्यमितींद्रस्य स्तुतिः॥

त्वं तू न इंद्र तं रयिं दा ओजिष्ठया दक्षिणयेव रातिं।
स्तुतश्च यास्ते चकनंत वायोः स्तनं न मध्वः पीपयंत वाजैः॥४॥
त्वं। तु। नः। इंद्र। तं। रयिं। दाः। ओजिष्ठया। दक्षिणयाऽइव। रातिं।
स्तुतः। च। याः। ते। चकनंत। वायोः। स्तनं। न। मध्वः। पीपयंत। वाजैः॥४॥

हे इंद्र त्वं तु। तुरवधारणे। त्वमेव तं रयिं त्वद्दानयोग्यं गवादिधनं दाः। देहि। यस्मादितरेभ्योऽपि त्वमेव बहुप्रदः अतोऽतिमहद्धनं देहीत्यर्थः। वयं त्वोजिष्ठयौजस्वितमया परिक्रमणार्हया दक्षिणया समृद्धिसाधनया गवादिलक्षणयर्त्विजमिव रातिं दातारं त्वां प्रीणयाम इति शेषः। यद्वा। दक्षिणाशब्दो देयद्रव्यसामान्यवचनः। रातिशब्दो बंधुवचनः। हिरण्यादिसारवद्द्रव्यप्रदानेन बंधुं यथा वशीकुर्वंति तद्वत्त्वां वशीकुर्म इत्यर्थः। किंच वायोर्धीतियुवक्षेपिष्ठस्य शीघ्रवरप्रदस्य ते॥ कर्मणि षष्ठी॥ वायुं त्वां स्तुतो येऽस्मदीयाः स्तोतारस्त्वकनंत कामयंते अस्तवन्। याः स्तुतयस्त्वामेवाकामयंतेति वा योजना॥ कनतेर्लेटालुङि चङि रूपं। चङ्यन्यतरस्यामिति चङः पूर्वमक्षरमुदात्तं॥ त्वां होत्रादयो वाजैर्हविर्लक्षणैरन्नैः पीपयंत। आप्याययंति। तत्र दृष्टांतः। मध्वो मधुरस्य स्तन्यस्य लाभाय वाजैः सारवद्भिरन्नविशेषैः स्तनं न। तं यथाप्याययंति तद्वद्वयं त्वां बहुकृतप्रदानाय स्तुत्या हविषाप्याययामः। त्वं तु दातव्यत्वेन प्रसिद्धं धनं सर्वदा देहीत्यर्थः॥

त्वे राय॑ इंद्र तो॒शत॑माः प्रणे॒तार॒ः कस्य॑ चिदृता॒योः।
ते षु णो॑ म॒रुतो॑ मृळयं॒तु ये स्मा॑ पु॒रा गा॑तू॒यंती॑व दे॒वाः॥५॥
त्वे इति॑। राय॑ः। इं॒द्र॒। तोश॒ऽत॑माः। प्र॒ऽने॒तार॑ः। कस्य॑। चि॒त्। ऋ॒त॒ऽयोः।
ते। सु। न॒ः। म॒रुत॑ः। मृ॒ळ॒यं॒तु॒। ये। स्म॒। पु॒रा। गा॒तु॒यंति॑ऽइव। दे॒वाः॥५॥

हे इंद्र त्वे तव रायो धनविशेषास्तोशतमाः। अतिशयेन प्रीणयितारः॥ तुष्यतेस्तोषः। छांदसं शत्वं॥ यद्वा। ते रायो रातयो बंधवो बंधुभूताः सखिभूता मरुतस्तोशतमाः। तोशतिर्वधकर्मा नितोशयति निबर्हयतीति तन्नामसु पाठात्। तोशतमा हिंसितृतमा अवर्षकाणां मेघानां। कस्य चिदृतायोः। ऋतमिति यज्ञनाम। कस्यापि यज्ञेच्छोर्यजमानस्य प्रणेतारः प्रकर्षेण निर्वोढारः। ते मरुतो नोऽस्मान् सुष्ठु मृळयंतु। के ते। ये स्म ये खलु देवा द्योतनशीला मरुतः पुरा पूर्वं गातुयंतीव। यज्ञगमनमिच्छंतीव। त आगत्य मृळयंतु॥ ॥८॥

प्रति॒ प्र या॑हींद्र मी॒ळ्हुषो॒ नॄन्म॒हः पार्थि॑वे॒ सद॑ने यतस्व।
अध॒ यदे॑षां पृथुबु॒ध्नास॒ एता॑स्ती॒र्थे नार्यः॒ पौंस्या॑नि त॒स्थुः॥६॥
प्रति॑। प्र। या॒हि॒। इं॒द्र॒। मी॒ळ्हुष॑ः। नॄन्। म॒हः। पार्थि॑वे। सद॑ने। य॒त॒स्व॒।
अध॑। यत्। ए॒षा॒ं। पृ॒थु॒ऽबु॒ध्नास॑ः। एता॑ः। ती॒र्थे। न। अ॒र्यः। पौंस्या॑नि। त॒स्थुः॥६॥

हे इंद्र त्वं मीळ्हुष उदकसेक्तॄन्नृजगन्नेतॄन्नराकारान्वा महो महतो मेघान्प्रति प्र याहि। अभिगच्छ। मेघानां वृत्ररूपेण नराकारत्वं युक्तं। गत्वा च पार्थिवे सदने। पृथिवीत्यंतरिक्षनाम। तत्संबंधिनि स्थाने यतस्व। प्रयत्नं कुरु। तैः सह युध्यस्वेत्यर्थः। यद्वा। हविष्प्रदातॄन् कर्मनिर्वाहकान्महतो यजमानान्प्रति गच्छ। गत्वा च पार्थिवे सदने देवयजने यतस्व। यत्नं कुरु हविर्भोजनाय। अधापि यद्यदेषां त्वत्साहाय्यकारिणां मरुतां संबंधिनः पृथुबुध्नासो विस्तीर्णमूला एताः पृषद्वर्णा गंतारो वाश्वा अर्योऽरेः शत्रोः पौंस्यानि तीर्थे न युद्धमार्ग इव तस्थुः तिष्ठंति मेघानाक्रमंते। यद्वा। एषां मरुतां पृथुबुध्नासो बृहन्मूला एताः कृष्णवर्णा मेघास्तिष्ठंति। तत्र दृष्टांतः। अर्योऽरणीयस्य स्वामिनः पौंस्यानि बलानि तीर्थे न राजवीथ्यां यथा तिष्ठंति तद्वत्॥

प्रति॑ घो॒राणा॒मेता॑नाम॒यासां॑ म॒रुतां॑ शृण्व आय॒ताम॑प॒ब्दिः।
ये मर्त्यं॑ पृतना॒यंत॒मूमै॑र्ऋणा॒वानं॒ न प॒तयं॑त॒ सर्गैः॑॥७॥
प्रति॑। घो॒राणा॑ं। एता॑नां। अ॒यासा॑ं। म॒रुता॑ं। शृ॒ण्वे॒। आ॒ऽय॒ता॑ं। उ॒प॒ब्दिः।
ये। मर्त्यं॑। पृ॒त॒ना॒ऽयंत॑ं। ऊमैः॑। ऋ॒ण॒ऽवान॑ं। न। प॒तयं॑त। सर्गैः॑॥७॥

हे इंद्र ते संबंधिनां घोराणां भयानकानां शब्दाभिमानानां वैतानामेतवर्णानामयासामयमानानां गमनशीलानां मरुतामायतामागंतॄणां मरुतामुपब्दिः । उप गुर्वादिसमीपे गम्यते ज्ञायत उपपद्यत इति वोपब्दिर्वाक् । शृण्वे । श्रूयते ॥ कर्मणि कर्तृप्रत्ययः ॥ त एव विशिष्यंते । ये मरुतो मर्तं मरणधर्माणमूर्मिः स्वरवर्णोदकनिगमनसाधनैर्वा पृतनायंतं पृतनामात्मन इच्छंतं वैरिणं मेघं वा सर्गैः सृष्टैः स्वकीयप्रहारविशेषैः पतयंत । पातयंति । तेषामेव ध्वनिः श्रूयत इत्यर्थः । पातने दृष्टांतः । सर्गैर्ऋणवानं न ॥ छंदसीवनिपाविति वनिप् ॥ ऋणवंतमधमर्णं वैरिणमिव । तं यथा पीडयित्वा तदीयं धनमपहरंति तद्वत् । एवंमहानुभावा मरुतस्तवानुगा इतींद्रस्य स्तुतिः ॥

त्वं मानेभ्य इंद्र विश्वजन्या रदा मरुद्भिः शुरुधो गोअग्राः ।
स्तवानेभिः स्तवसे देव देवैर्विद्यामेषं वृजनं जीरदानुं ॥८॥
त्वं । मानेभ्यः । इंद्र । विश्वऽजन्या । रद । मरुत्ऽभिः । शुरुधः । गोऽअग्राः ।
स्तवानेभिः । स्तवसे । देव । देवैः । विद्याम । इषं । वृजनं । जीरऽदानुं ॥८॥

हे इंद्र त्वं मानेभ्यो मानार्थं । चित्तेनेत्यर्थः ॥ तादर्थ्ये चतुर्थी ॥ विश्वजन्या विश्वजन्यः ॥ सोराकारः ॥ विश्वे प्राणिन उत्पादनीया यस्य तादृशस्त्वं सर्वजनहितशत्या वा मरुद्भिः सह शुरुधः शोकस्य रोधयित्रीः शोषिका गोअग्रा गर्जितमुदकं वाग्रे पुरतो यासां ता मेघपंक्ती रद । विलिख । विदारय । हे देव द्योतमान त्वं स्तवानेभिः स्तूयमानैर्देवैरन्यैर्मरुदादिभिर्ऋत्विग्भिर्वा स्तवसे । स्तूयसे ॥ उभयत्र कर्मणि कर्तृप्रत्ययः ॥ विद्यामेत्ययं व्याख्यातः ॥ ॥ ९ ॥

न नूनमस्तीति पंचर्चं षष्ठं सूक्तमागस्त्यमैंद्रं । अत्रानुक्रमणिका । न नूनं पंचागस्त्यैनैंद्रे हविषि मरुतामुद्यत इंद्रागस्त्ययोः संवाद ऐंद्रस्त्वाद्या तृतीया चेंद्रवाक्यं चतुर्थी चाद्यौ बृहती तिस्रोऽनुष्टुभ इति । सूक्तमिंद्रागस्त्यसंवादरूपत्वादाद्या तृतीया चतुर्थी चेंद्रवाक्यं । अतस्तासां यस्य वाक्यन्यायेन स ऋषिः । शिष्टे अगस्त्यवाक्ये । अतस्तयोः स एवर्षिः । आद्या च बृहती ततस्तिस्रोऽनुष्टुभः । अंत्याविशेषात्त्रिष्टुप् ॥ विशेषविनियोगो लैंगिकः ॥ अत्र यास्कः । अगस्त्य इंद्राय हविर्निरूप्य मरुद्भ्यः संप्रदित्सां चकार स इंद्र एत्य परिदेवयां चक्रे । नि० १. ५. । इति ॥

न नूनमस्ति नो श्वः कस्तद्वेद यदद्भुतं ।
अन्यस्य चित्तमभि संचरेण्यमुताधीतं वि नश्यति ॥१॥
न । नूनं । अस्ति । नो इति । श्वः । कः । तत् । वेद । यत् । अद्भुतं ।
अन्यस्य । चित्तं । अभि । संऽचरेण्यं । उत । आऽधीतं । वि । नश्यति ॥१॥

परिदेवनप्रकारः प्रतिपाद्यते । इंद्र आह । अद्यतनं यदस्ति तन्नूनमद्य नास्ति । नूनमत्र विचिकित्सार्थे । अद्येति यद्यपि नास्ति तथाप्युत्तरवाक्ये श्व इति दर्शनादद्येति गम्यते । तथा श्वोऽपि नूनं नो । उशब्दोऽवधारणे । श्वस्तनमपि नैव नास्ति । अद्य यथास्मदर्थनिरूप्तमस्मभ्यं नास्ति किल श्वः कथं लप्स्यत इति भावः । यदद्भुतमन्यस्मै निरूप्यान्यस्मै दत्तमिति यदस्ति वैपरीत्यं तत्को वेद । यद्वा । यदद्भुतं भावि कार्यं यदस्ति तत्को वेद । अद्य श्वो वा लभ्यत इत्याशा न कार्येत्युक्तं भवति । तदेवाह । अभि संचरेण्यं सर्वतः संचार्यन्यस्य चित्तं मानसं जानातीति शेषः । उतापि चाधीतमाध्यातं चिंतितमपि न दृश्यं किमु सद्यात्स्मृतं वि नश्यतीति ॥

किं न इंद्र जिघांससि भ्रातरो मरुतस्तव ।
तेभिः कल्पस्व साधुया मा नः समरणे वधीः ॥२॥

किं । नः । इंद्र । जिघांससि । भ्रातरः । मरुतः । तव ।
तेभिः । कल्पस्व । साधुऽया । मा । नः । संऽअरणे । वधीः ॥२॥

इदमगस्त्यवाक्यं । हे इंद्र नोऽस्माननपराधिनः किं जिघांससि । हंतुमिच्छसि । कथमवध्यत्वमिति अत आह । मरुतस्तव भ्रातरः । त्वया भोगप्रदानेन भरणीया इत्यर्थः । अतो वयमवध्या इत्युक्तं भवति । मरुतामिंद्रभ्रातृत्वमेकस्मिन्नेवादितिगर्भ उत्पन्नत्वात् । सा चोत्पत्तिः पुराणेषु प्रसिद्धा । संतु भ्रातरस्ततश्च किमिति अत आह । तेभिस्तैर्मरुद्भिः सह साधुया साधु त्वं कल्पस्व । कल्पय हविर्भागं तैः सह युद्धं वा । नोऽस्मान् समरणे संग्रामे मा वधीः । मा हिंसीः । यद्वा । लुप्तो दृष्टांतः । संग्रामे यथा विरोधिनं हंसि न तथास्मानिति ॥

किं नो भ्रातरगस्त्य सखा सन्नति मन्यसे ।
विद्मा हि ते यथा मनोऽस्मभ्यमिन्न दित्ससि ॥३॥
किं । नः । भ्रातः । अगस्त्य । सखा । सन् । अति । मन्यसे ।
विद्म । हि । ते । यथा । मनः । अस्मभ्यं । इत् । न । दित्ससि ॥३॥

इदमिंद्रवाक्यं । हे भ्रातः हे अगस्त्य । हविप्रदानवरप्रदानाभ्यां परस्परोपकारत्वाद्भ्रातृत्वं । तादृशस्त्वं सखा सन्नस्मद्धितकार्येपि सन्नोऽस्मान्किमति मन्यसे । कस्मादपराधादतिक्रम्य मनुषे । अपलपसि । नायमपलापः किंतु तथ्यमेवेति चेत् उच्यते । गंतव्यं ते तव मनो मानसं यथा यथावस्तु विद्म । जानीमः । कथं जानीथेति उच्यते । अस्मभ्यमिन्न दित्ससि । अस्मदर्थं निरूप्तमस्मभ्यं दातुं नेच्छस्येव । इदेवार्थे ॥

अरं कृण्वंतु वेदिं समग्निमिंधतां पुरः ।
तत्रामृतस्य चेतनं यज्ञं ते तनवावहै ॥४॥
अरं । कृण्वंतु । वेदिं । सं । अग्निं । इंधतां । पुरः ।
तत्र । अमृतस्य । चेतनं । यज्ञं । ते । तनवावहै ॥४॥

इदमिंद्रवाक्यं । अपरेऽगस्त्यवाक्यमाहुः । हे ऋत्विजो यूयं अगस्त्योऽंगीकृतवान् तस्माद्वेदिमरं कृण्वंतु । संमार्जनपर्युक्षणादिना परिचरंतु । तथा पुरः पुरस्तादग्निमाहवनीयादिकं समिंधतां । इध्मप्रक्षेपेण प्रज्वालयंतु । तत्रावामवमृतस्यामरणलक्षणस्य वेदत्वस्य चेतनं प्रज्ञापकं यज्ञं हे अगस्त्य ते त्वदीयं त्वं चाहं च तनवावहै ॥ अगस्त्यवाक्यपक्षे शिष्टमविशिष्टं । तत्र वेद्याममृतस्य तत्साधनस्य हविषो वा चेतनं प्रज्ञापनमासादनं कुरुत । आवां पत्नीयजमानौ अध्वर्युयजमानौ वा हे इंद्र ते त्वदर्थं यज्ञं तनवावहै ॥

त्वमीशिषे वसुपते वसूनां त्वं मित्राणां मित्रपते धेष्ठः ।
इंद्र त्वं मरुद्भिः सं वदस्वाध प्राशान ऋतुथा हवींषि ॥५॥
त्वं । ईशिषे । वसुऽपते । वसूनां । त्वं । मित्राणां । मित्रऽपते । धेष्ठः ।
इंद्र । त्वं । मरुत्ऽभिः । सं । वदस्व । अध । प्र । अशान । ऋतुऽथा । हवींषि ॥५॥

इदमगस्त्यवाक्यं । हे वसूनां वसुपतेऽतिप्रभूतानां पुरोडाशाज्यादिधनानां स्वामिन् हे इंद्र त्वमीशिषे । ईश्वरो भवसि । सर्वस्य वृत्त्यवृत्तिभ्यां बहुत्वं नित्यं संबंधश्च प्रतिपद्यते । यद्वा । हे वसुपते वसूनामीशिष इति योजना । द्वितीयो वसुशब्दोऽनुवादो वा । तथा हे मित्राणां मित्रपतेऽस्मदादिमित्रस्य नित्यं पालकेंद्र त्वं

धिष्ठः। सर्वस्यातिशयेन धारकोऽसि। हे इंद्र त्वमुक्तमहिमस्त्वं मरुद्भिः सं वदस्व। तैः साकं सम्यक्कृतमिति वदस्व। अधापि च त्वमृतुथा ऋतावृतौ। उपलक्षणमेतत्कालस्य। तत्तद्यागकाले हवींष्याज्यचर्वादीनि प्राशान। प्रकर्षेण भुंक्ष्व॥ ॥१०॥

प्रति वं इति षड्डचं सप्तमं सूक्तमागस्त्यं त्रैष्टुभं मारुतं। आद्ये द्वे केवलमारुते। शिष्टाश्चतस्रो मरुत्वदिंद्रदेवताकाः। प्रति वः षण्मारुतं तु चतस्रोऽंत्या मरुत्वतीया इत्यनुक्रमणिका॥ विशेषविनियोगो लैंगिकः॥

प्रति॑ व ए॒ना नम॑सा॒हमे॑मि सू॒क्तेन॑ भिक्षे सुम॒तिं तु॒राणा॑म्।
र॒रा॒णता॑ मरुतो वे॒द्याभि॒र्नि हेळो॑ ध॒त्त वि मु॑चध्व॒मश्वा॑न्॥१॥
प्रति॑। वः॒। ए॒ना। नम॑सा। अ॒हं। ए॒मि॒। सु॒ऽउ॒क्तेन॑। भि॒क्षे॒। सु॒ऽम॒तिं। तु॒राणा॑म्।
र॒रा॒णता॑। म॒रु॒तः॒। वे॒द्याभिः॑। नि। हेळः॑। ध॒त्त। वि। मु॒च॒ध्वं॒। अश्वा॑न्॥१॥

हे मरुतः वो युष्मानहं प्रत्येमि। अभिगच्छामि। केन साधनेन। नमसा नमस्कारेण हविषा वा। नम इत्यन्ननाम। तथा सूक्तेन शोभनवचनेन स्तुतिरूपेण। तुराणां त्वरमाणानां शत्रूणां हिंसकानां वा युष्माकं सुमतिं शोभनमतिमनुग्रहबुद्धिं भिक्षे। याचे। इंद्रस्यैव पुनर्हविष्कृत्याः[illegible] याच्यते। किंच हे मरुतः यूयं वेद्याभिर्वेदितव्याभिः स्तुतिभी रराणता रममाणेन मनसेत्थंभूताः संतो हेळः। क्रोधनामैतत्। क्रोधं युष्मद्भिक्रमजनितं नि धत्त। निकृष्टं धारयत। त्यजतेत्यर्थः। तथाश्वान्वि मुचध्वं। रथेभ्यो वियोजयत। क्रोधात्पुनर्गमनं मा कुरुतेत्यर्थः॥

ए॒ष वः॒ स्तोमो॑ मरुतो॒ नम॑स्वान्हृ॒दा त॒ष्टो मन॑सा धायि देवाः।
उपे॒मा या॑त॒ मन॑सा जुषा॒णा यू॒यं हि ष्ठा नम॑स॒ इद्वृ॒धासः॑॥२॥
ए॒षः। वः॒। स्तोमः॑। म॒रु॒तः॒। नम॑स्वान्। हृ॒दा। त॒ष्टः। मन॑सा। धा॒यि॒। दे॒वाः॒।
उप॑। ई॒म्। आ। या॒त॒। मन॑सा। जु॒षा॒णाः। यू॒यं। हि। स्थ। नम॑सः। इत्। वृ॒धासः॑॥२॥

हे मरुतः एष वः स्तोम इदानीं क्रियमाणप्रकारो वो युष्माकं। युष्मदर्थ इत्यर्थः। कीदृशोऽयं। नमस्वान्। नम इत्यन्ननाम। हविर्लक्षणान्नवान्। न केवलं स्तुतिमात्रं भक्षणाय हविरपि युष्माकमित्यर्थः। किंच हृदा तष्टो युष्मन्निवेदनबुद्ध्या संपादितः। तादृशः स्तोमो हे देवा देवनशीलाः मनसास्मदनुग्रहवता चित्तेन धायि। धार्यतां। तदर्थं मनसादरया बुद्ध्या जुषाणा ईमेनां स्तुतिं तद्भविश्च सेवमाना उपा यात। उपागच्छतैव। मा विलंबं कुरुत। यूयं नमसोऽन्नस्य हवीरूपस्य वृधासः स्थ ह। वर्धयितारो भवथ खलु। अतो गंतव्यमेव। इत्पूरणः॥

स्तु॒तासो॑ नो म॒रुतो॑ मृळयंतू॒त स्तु॒तो म॒घवा॒ शंभ॑विष्ठः।
ऊ॒र्ध्वा नः॑ संतु को॒म्या वना॒न्यहा॑नि॒ विश्वा॑ मरुतो जिगी॒षा॥३॥
स्तु॒तासः॑। नः॒। म॒रु॒तः॑। मृ॒ळ॒यं॒तु॒। उ॒त। स्तु॒तः। म॒घऽवा॑। शंऽभ॑विष्ठः।
ऊ॒र्ध्वा। नः॒। सं॒तु॒। को॒म्या। वना॑नि। अहा॑नि। विश्वा॑। म॒रु॒तः॒। जि॒गी॒षा॥३॥

ते मरुतः स्तुतासः स्तुताः संतो नोऽस्मान्मृळयंतु। सुखयंतु। उतापि च मघवा। मघमिति धननाम। अस्मद्दातव्यबहुधनेन तद्वानिंद्रः स्तुतः शंभविष्ठः सुखस्य भावयितृतमः सन्नस्मान्मृळयतु। किंच हे मरुतः नो ऽस्माकं जिगीषा॥ [illegible] जिगीषा॥ जिगीषितव्यानि प्राप्तव्यान्युत्तरत्रानुभूयमानानि विश्वा सर्वाण्यहानि [illegible]न्नतान्युपर्युपरि श्रिया यशसा वोत्कृष्टानि कोम्या काम्यानि स्पृहणीयानि वनानि

सर्वैः संभजनीयानि संतु। जिगीषा जेतुमिष्टानि जेतव्यानि च संलिति वा योज्यं। एवं ज्ञात्वा मरुत इंद्रस्य सुहृत्वंतित्यर्थः॥

अस्मादहं तविषादीषमाण इंद्राद्भिया मरुतो रेजमानः।
युष्मभ्यं हव्या निशितान्यासन्तान्यारे चकृमा मृळता नः॥४॥
अस्मात्। अहं। तविषात्। ईषमाणः। इंद्रात्। भिया। मरुतः। रेजमानः।
युष्मभ्यं। हव्या। निऽशितानि। आसन्। तानि। आरे। चकृम। मृळत। नः॥४॥

हे मरुतः शृणुत। अहमस्मात्प्रसिद्धात्तविषाद्बलवत इंद्रात्तत्सकाशाद्भिया भीत्येषमाणः पलायमानः पुरतः स्थातुमशक्तः तथा रेजमानो वेपमानश्चाभवं। ततश्च किमायातमिति अत आह। यानि युष्मभ्यं हव्या हवींषि निशितानि संस्कृतान्यासन् तानि तान्येवारे चकृम। दूरे कृतवंतो वयमिंद्रभयात्। अतो नोऽस्मानपराधिनो मृळत। मृळयत। सुखयत॥

येन मानासश्चितयंत उस्रा व्युष्टिषु शवसा शश्वतीनां।
स नो मरुद्भिर्वृषभ श्रवो धा उग्र उग्रेभिः स्थविरः सहोदाः॥५॥
येन। मानासः। चितयंते। उस्राः। विऽउष्टिषु। शवसा। शश्वतीनां।
सः। नः। मरुत्ऽभिः। वृषभ। श्रवः। धाः। उग्रः। उग्रेभिः। स्थविरः। सहःऽदाः॥५॥

हे इंद्र येन शवसा बलभूतेन त्वयानुगृहीता मानासो मान्यास्त्वयाभिमानिता वोस्रा रश्मयः शश्वतीनां नित्यानां बह्वीनामुषसां व्युष्टिषु सतीषु प्रकाशिषु सत्सु चितयंते चेतयंते प्राणिनां स्वस्वव्यवहाराय प्रज्ञापयंति। ऐंद्र्यां दिशि तेनैवानुगृहीता उषसो रश्मय उन्नच्छंतीति प्रसिद्धं। हे वृषभ वर्षितरिंद्र स तादृशस्त्वं मरुद्भिः सहितः श्रवो धाः। सर्वत्र श्रूयमाणमन्नं धेहि। स्थापय। देहीत्यर्थः। कीदृशस्त्वं। उग्र उद्गूर्णबलः सहोदाः। पराभिभवसामर्थ्यं बलं सहः। तस्य दाता स्थविरः पुरातनः। कीदृशैर्मरुद्भिः। उग्रेभिः क्रूरबलैः। एवंमहानुभावोऽन्नं देहि॥

त्वं पाहींद्र सहीयसो नॄन्भवा मरुद्भिरवयातहेळाः।
सुप्रकेतेभिः सासहिर्दधानो विद्यामेषं वृजनं जीरदानुं॥६॥
त्वं। पाहि। इंद्र। सहीयसः। नॄन्। भव। मरुत्ऽभिः। अवयातऽहेळाः।
सुऽप्रकेतेभिः। ससहिः। दधानः। विद्याम। इषं। वृजनं। जीरऽदानुं॥६॥

हे इंद्र त्वं पाहि। रक्ष। कान्। सहीयसो नॄन् सहस्वितमांस्त्वदनुग्रहेणातिप्रवृद्धबलान्नेतॄननुष्ठातॄनस्मान् मरुतो वा। किंच मरुद्भिः साकमस्मास्ववयातहेळा भव। अपगतमन्युर्भव। मरुत्सु वा तथा भव। किंच सुप्रकेतेभिः शोभनप्रज्ञानैर्मरुद्भिः सह सासहिः शत्रूणामभिभविता सन्दधानोऽस्मदभिमतस्य धारयिता भवेति शेषः। शिष्टो व्याख्यातः॥ ॥११॥

चित्रो व इति तृचात्मकमष्टमं सूक्तमागस्त्यं मारुतं गायत्रं। चित्रस्तृचं गायत्रमित्यनुक्रमणिका॥ लैंगिको विशेषविनियोगः॥

चित्रो वोऽस्तु यामश्चित्र ऊती सुदानवः। मरुतो अहिभानवः॥१॥
चित्रः। वः। अस्तु। यामः। चित्रः। ऊती। सुऽदानवः। मरुतः। अहिऽभानवः॥१॥

हे मरुतः वो युष्माकं यामोऽस्मयज्ञागमश्चित्रश्चायनीयः पूज्य आश्चर्यभूतो वास्तु । भवतु । न केवलमागमनमेव चित्रं किंतु हे सुदानवः शोभनदाना हे अहिभानवोऽहीयमानप्रकाशाः युष्माकं संबंधी चित्रः स आगम ऊत्यूत्यै रक्षणायेष्टतर्पणाय वा युक्तश्च भवतु । तदागमनं शीघ्रमस्तु अभिमतप्रदं चास्त्वित्यर्थः ॥

आरे सा वः सुदानवो मरुत ऋंजती शरुः । आरे अश्मा यमस्यथ ॥ २ ॥

आरे । सा । वः । सुऽदानवः । मरुतः । ऋंजती । शरुः । आरे । अश्मा । यं । अस्यथ ॥ २ ॥

हे सुदानवः शोभनदाना मरुतः वो युष्माकं संबंधिन्यृंजती प्रसाधयंती स्वतेजसा स्वात्मानमलंकुर्वती प्रसिद्धिं प्राप्नुवाना वा सा प्रसिद्धा शरुर्हिंसका ऋष्टिरारे दूरे भवतु । तथा यमस्यथ क्षिपथ सोऽश्मा व्यापक आयुधविशेष आरे । दूरनामैतत् । दूरे भवतु । मां न प्राप्नोतु । यद्वा । आरेशब्द आराच्छब्दपर्यायः । स च दूरे समीपे च वर्तते । अत्र समीपवचनः । यमश्मानोऽन्यमस्यथ तं वैरिणमस्माकमुपलोपमः कठिन आयुधविशेष आरे समीपं प्राप्नोतु ॥

तृणस्कंदस्य नु विशः परि वृंक्त सुदानवः । ऊर्ध्वान्नः कर्त जीवसे ॥ ३ ॥

तृणऽस्कंदस्य । नु । विशः । परि । वृंक्त । सुऽदानवः । ऊर्ध्वान् । नः । कर्त । जीवसे ॥ ३ ॥

हे मरुतः सुदानवः शोभनदानाः यूयं तृणस्कंदस्य तृणवच्चलनस्वभावस्य शुष्यमाणस्य वा मम विशः पुत्रभृत्यादिरूपाः प्रजा नु क्षिप्रं परि वृंक्त । परिवर्जयत । बाधापरिहारेण रक्षत । यद्वा । उक्तलक्षणकालस्यासुरविशेषस्य वा प्रजाः परिवर्जयत । किंच नोऽस्मानूर्ध्वान् कर्त । कुरुत । जीवसे चिरजीवनाय ॥ ॥ १२ ॥

गायत्सामेति त्रयोदशर्चं नवमं सूक्तमागस्त्यं त्रैष्टुभमैंद्रं । गायत्सप्तोनेत्यनुक्रांतं ॥ समूळ्हे दशरात्रे तृतीयेऽहंदोमे मरुत्वतीयशस्त्र एतत्सूक्तं । विश्वजितोऽग्निं नर इति खंडे सूचितं । तृतीयस्येंद्रः स्वाहा गायत्साम । आ° ८. ७. । इति ॥

गायत्साम नभन्यं१ यथा वेरर्चाम तद्वावृधानं स्वर्वत् ।

गावो धेनवो बर्हिष्यदब्धा आ यत्सद्मानं दिव्यं विवासान् ॥ १ ॥

गायत् । साम । नभन्यं । यथा । वेः । अर्चाम । तत् । ववृधानं । स्वःऽवत् ।

गावः । धेनवः । बर्हिषि । अदब्धाः । आ । यत् । सद्मानं । दिव्यं । विवासान् ॥ १ ॥

हे इंद्र नभन्यं नभस्यं नभसि भवं नभोव्यापिनं हिंसकं वा राक्षसादिकस्य । नभतिर्वधकर्मा नभत्यर्दतीति वधकर्मसु गणनात् । तादृशं साम हे इंद्र यथा वेः येन प्रकारेण वेत्सि तथा गायत् । गायत्वुद्गाता । तत्तस्मात्तः स्तौति ततः कारणाद्ववृधानं वर्धमानं स्वर्वत् फलभूतेन स्वर्गेण तद्वच्छस्त्रं यथा वेः तथार्चाम । पूजयाम । शंसामेत्यर्थः । स्तुतमनुशंसतीति न्यायात् । यद्वा । तदुक्तलक्षणं साम ववृधानं सर्वत्र यथा भवति तथार्चाम । किंच धेनवो दोग्ध्र्योऽदब्धा अहिंसिता गावो यद्बर्हिषि सद्मानं सीदंतं दिव्यं दिवि भवमिंद्रं त्वामा विवासान् । विवासतिः परिचरणकर्मा । आगत्य परिचरंति क्षीरं दुहंति तथार्चाम ॥

अर्चद्वृषा वृषभिः स्वेदुहव्यैर्मृगो नाश्नो अति यज्जुगुर्यात् ।

प्र मंदयुर्मनां गूर्त होता भरते मर्यो मिथुना यजत्रः ॥ २ ॥

अर्चत् । वृषा । वृषऽभिः । स्वऽइदुहव्यैः । मृगः । न । अश्नः । अति । यत् । जुगुर्यात् ।

प्र । मंदयुः । मनां । गूर्त । होता । भरते । मर्यः । मिथुना । यजत्रः ॥ २ ॥

वृषा हविषां वर्षितायं यजमानः स्वेदुहव्यैः स्वायत्तेद्धहविष्कैः । यद्वा । स्वयंप्राप्तेंधकं हव्यं येषां तादृशैः ।

वृषभिर्वर्षकैर्हविष्प्रदातृभिरध्वर्य्वादिभिर्विशिष्टः सन्नर्चत्। अर्चयतींद्रं। यद्वा। वृषा फलस्य वर्षितायमिंद्र उक्तलक्षणैरध्वर्य्वादिभिरर्च्यते। यद्यस्मादग्नो व्यापकः पानाद्यर्थं धावन्मृगो न हरिणादिरिवायमिंद्रोऽग्नोऽशनशीलः सन्नति जुगुर्यात्। अत्यर्थमुद्युंक्ते हविर्भक्षणाय। यथा मृगः क्षुत्पिपासार्दितः शीघ्रमुद्युंक्ते तथायमिंद्रोऽपि। यस्मादेवं तस्मादर्चति। यद्वा। अयमिंद्रो यद्यथाग्नो मृग इवाति जुगुर्यात् भक्षयेत् तथार्चतीत्यर्थः। किंच हे गूर्तश्रवणेंद्र मनां मननं स्तोत्रमिच्छतां देवानां मंदयुः स्तुतियुक्तो मर्यो होता मानुष एतन्नामक ऋत्विग्यजत्रो यागनिष्पादकः सन्मिथुना मिथुनानि युग्मरूपाणि याज्यापुरोनुवाक्यादीनि मिथुनौ वा जायापतिरूपः सन् प्र भरते। प्रकर्षेण संपादयति। तस्मादर्चतीत्यर्थः॥

नक्षद्धोता परि सद्म मिता यन्भरद्गर्भमा शरदः पृथिव्याः।
क्रंददश्वो नयमानो रुवद्गौरंतर्दूतो न रोदसी चरद्वाक्॥३॥
नक्षत्। होता। परि। सद्म। मिता। यन्। भरत्। गर्भं। आ। शरदः। पृथिव्याः।
क्रंदत्। अश्वः। नयमानः। रुवत्। गौः। अंतः। दूतः। न। रोदसी इति। चरत्। वाक्॥३॥

होता होमनिष्पादकोऽयमग्निर्मिता परिमिता सद्म सदनानि गार्हपत्यादिस्थानानि परि यन् परितो गच्छन्नक्षत्। व्याप्नोति। व्याप्य च शरदः संवत्सरसंबंधिनं पृथिव्या भूम्याश्च संबंधिनं गर्भं गर्भस्थानीयमन्नं हविर्लक्षणमा भरत्। आहरति। स्वीकरोति। संभरति वा। संवत्सरपर्यंतं वर्धितं भूम्यामुत्पन्नमित्यर्थः। यद्वा। संवत्सरसंबंधिनं वसंतादिकाले ज्योतिष्टोमादिषु दीयमानं पार्थिवं हविर्भरत्। वसंते वसंते ज्योतिषा यजेतेति श्रुतेः। तथा कृत्वा क्रंददश्वः। लुप्तोपममेतत्। अश्व इव क्रंदति हर्षातिशयात्। किं कुर्वन्। नयमानो नयदिंद्राय हविर्भारं। किंच गौर्गंतोद्वृत्तो वृष इव रुवत्। रौति। शब्दायते। किं कुर्वन्। दूतो न वार्त्ताहरो दूत इव रोदसी रोदस्योर्द्यावापृथिव्योरंतर्मध्ये रोदस्योरंतरा वाक् स्तूयमानः स्तुवन् वा देवांश्चरत्। चरति। गच्छति। हविःस्वीकाराय पृथिवीं तत्प्रापणाय द्युलोकं च परिभ्रमतीत्यर्थः॥ वक्तेः कर्तरि कर्मणि वा क्विब्वचीत्यादिना क्विब्दीर्घौ संप्रसारणाभावश्च॥

ता कर्मार्षतरास्मै प्र च्यौत्नानि देवयंतो भरंते।
जुजोषदिंद्रो दस्मवर्चा नासत्येव सुग्म्यो रथेष्ठाः॥४॥
ता। कर्म। अर्षऽतरा। अस्मै। प्र। च्यौत्नानि। देवऽयंतः। भरंते।
जुजोषत्। इंद्रः। दस्मऽवर्चाः। नासत्याऽइव। सुग्म्यः। रथेऽस्थाः॥४॥

ता तान्यषतरार्षतराणि व्याप्ततराणि वा हवींष्यस्मा इंद्राय तदर्थं कर्म। कुर्मः। संपादयामः॥ कृञश्छांदसे वर्तमानार्थे लुङि मंत्रे घसेति च्लेर्लुक्। छंदस्युभयथेत्यार्धधातुकत्वेन ङित्त्वाभावाद्गुणः॥ च्यौत्नानि च्यावयितॄणि दृढानि स्तोत्राणि कर्माणि स्वकीयानि सामर्थ्यानि वा देवयंतो देवानात्मन इच्छंतो यजमानाः प्र भरंते। प्रकर्षेण संपादयंति। तद्द्वयमपि संपादयाम इत्यर्थः। दस्मवर्चा दर्शनीयतेजाः शत्रूपक्षयणबलो वा नासत्येव नासत्याविवाश्विनाविव। तौ हि द्यावापृथिव्यात्मानौ। ताविव सुग्म्यः सुगम्यः सुखेन गंतुं शक्यो रथेष्ठा रथे वर्तमान एवंभूतः सञ्जुजोषत्। अस्मत्कृतं स्तोत्रादि कर्म सेवतां॥

तमु ष्टुहींद्रं यो ह सत्वा यः शूरो मघवा यो रथेष्ठाः।
प्रतीचश्चिद्योधीयान्वृषण्वान्ववव्रुषश्चित्तमसो विहंता॥५॥
तं। ऊं इति। स्तुहि। इंद्रं। यः। ह। सत्वा। यः। शूरः। मघऽवा। यः। रथेऽस्थाः।
प्रतीचः। चित्। योधीयान्। वृषण्ऽवान्। ववव्रुषः। चित्। तमसः। विऽहंता॥५॥

तमु तमेवेंद्रं स्तुहि । हे होतः स्तुतिं कुरु । किमस्याधिक्यमिति उच्यते । यो ह यः खलु सत्वातिप्रभूतबलः । यद्वा । सत्वा सादकः शत्रूणां । यश्च शूरः शौर्योपेतो मघवा बलवानन्नवान्वा । यश्च रथेष्ठा रथे वर्तमानः । किंच प्रतीचश्चित् प्रत्यभिमुखं योद्धुरपि योधीयान् योद्धृतमः ॥ प्रतिपूर्वादंचतेः क्विनंतात्लुप्तनकाराच्छसि अच इत्यकारलोपे चाविति दीर्घः । अंचेश्छंदस्यसर्वनामस्थानमिति विभक्तिरुदात्ता ॥ वृषखान् । वृषाणो वर्षितारो वज्रादयः । तद्वान् । वृषा ते वज्र उत ते वृषा रथः । ऋ॰ २. १६. ६. । इति हि निगमः । तथा ववव्रुषश्चित्तमस आवरकस्यापि तमसो मेघादेर्विहंता विशेषेण घातकः । यस्मादेवंमहानुभावः तस्मात्स्तुहि ॥ ॥ १३ ॥

प्र यदि॒त्था म॑हि॒ना नृभ्यो॒ अस्त्यरं॒ रोद॑सी क॒क्ष्ये॒३ नास्मै॑ ।
सं वि॑व्य॒ इंद्रो॑ वृ॒जनं॒ न भूमा॒ भर्ति॑ स्व॒धावाँ॑ ओप॒शमि॑व॒ द्यां ॥ ६ ॥
प्र । यत् । इ॒त्था । म॒हि॒ना । नृऽभ्यः॑ । अस्ति॑ । अरं॑ । रोद॑सी॒ इति॑ । क॒क्ष्ये॒३ इति॑ । न । अ॒स्मै॒ ।
सं । वि॒व्ये॒ । इंद्रः॑ । वृ॒जनं॑ । न । भूम॑ । भर्ति॑ । स्व॒धाऽवा॑न् । ओ॒प॒शंऽइ॑व । द्यां ॥ ६ ॥

यद्य इंद्रो महिना महत्त्वेन स्वैश्वर्येण नृभ्यो नेतृभ्यः कर्मनिर्वाहकेभ्यो यजमानेभ्यः प्रास्ति प्रभवति ईष्टे स्वर्गादिप्रदाने रचितुं अस्मै रक्षकायेंद्राय रोदसी द्यावापृथिव्यौ कक्ष्ये कक्ष्यते सती संचाराय नारं नालं । न पर्याप्ते । जगतोऽधीशस्येंद्रस्य संचारायाल्पत्वाद्द्यावापृथिव्यौ न पर्याप्ते इत्यर्थः । स्त्रष्टादपि स्त्रष्टुर्महिम्नो ऽधिकत्वादिति भावः । अयमिंद्रो वृजनं न भूम भूमिं भूतानि वा वृजनं न वृजनमिव ॥ वृजेः कर्तनार्थस्येदं रूपं ॥ तदिव तद्यथावृणोति तथायमपि स्वतेजसा सं विव्ये । सम्यगावृणोति लोकत्रयं । किंचायं स्वधावानन्नवान् वृष्टिलक्षणोदकवान्वा द्यां दिवं भर्ति । बिभर्ति । धारणे दृष्टांतः । ओपशमिव । ईषदुपशेत इत्योपशं शृंगं । तद्वृषभ इव । यद्वा । परस्परं समीपे वर्तमानं चित्यंतरिक्षाख्यं लोकद्वयमोपशं । तदिव द्यां बिभर्ति । लोकत्रयमपि बिभर्तीत्यर्थः ॥ भृञो लटि च्छांदसः शपो लुक् ॥

स॒मत्सु॑ त्वा शूर स॒तामु॑रा॒णं प्र॑प॒थिंत॑मं परितंस॒यध्यै॑ ।
स॒जोष॑स॒ इंद्रं॒ मदे॑ क्षो॒णीः सू॒रिं चि॒द्ये अ॑नु॒मदं॑ति॒ वाजैः॑ ॥ ७ ॥
स॒मत्ऽसु॑ । त्वा॒ । शू॒र॒ । स॒तां । उ॒रा॒णं । प्र॒प॒थिन्ऽत॑मं । प॒रि॒ऽतं॒स॒यध्यै॑ ।
स॒ऽजोष॑सः । इंद्रं॑ । मदे॑ । क्षो॒णीः । सू॒रिं । चि॒त् । ये । अ॒नु॒ऽमदं॑ति । वाजैः॑ ॥ ७ ॥

हे शूर शौर्योपेतेंद्र समत्सु संग्रामेषु सतां त्वामेवाश्रित्य वर्तमानानां प्राणिनामुराणमुरूणातिप्रभूतानि बलादीनि कुर्वाणं प्रपथिंतमं प्रकृष्टमार्गेतमं सुकृतिनामुत्तममार्गभूतमिंद्रं शत्रूणां दारकं त्वा त्वां परितंसयध्या अवतंसीकर्तुं भूषणीकर्तुं । भूषयितुं वा निमित्तेऽर्थे । मदे तव मदार्थं च सजोषसः सह सेवमानाः समानप्रीतयो वा क्षोणीः क्षोण्यो विशः परिजना मरुतः प्रयतंते । कीदृशास्ते । ये [illegible] ते अनुकूलं मादयंति संग्रामे मरुतस्त्वमेव स्वामिनं कृत्वा मादयंति । हर्षयंतीत्यर्थः । यद्वा । ये यजमाना वाजैर्हविर्भिर्मादयंति ते समानप्रीतियुक्तास्तव मनुष्यभूता ऋत्विजो यजमानभूताः प्रजाः समत्सु सहमादनस्थानेषु यागेषूक्तलक्षणविशिष्टं त्वामेव पूजयितुं तव मादाय च प्रयतंते ॥

ए॒वा हि ते॒ शं सव॑ना समु॒द्र आपो॒ यत्त॑ आ॒सु मदं॑ति दे॒वीः ।
विश्वा॑ ते॒ अनु॒ जोष्या॑ भूद्गौः सू॒रीँश्चि॒द्यदि॑ धि॒षा वेषि॒ जना॑न् ॥ ८ ॥
ए॒व । हि । ते॒ । शं । सव॑ना । स॒मु॒द्रे । आपः॑ । यत् । ते॒ । आ॒सु । मदं॑ति । दे॒वीः ।
विश्वा॑ । ते॒ । अनु॑ । जोष्या॑ । भू॒त् । गौः । सू॒रीन् । चि॒त् । यदि॑ । धि॒षा । वेषि॑ । जना॑न् ॥ ८ ॥

हे इंद्र एवा ह्येवं हि सति ते तव संबंधीनि सवनानि। सूयते सोमोऽत्रेति सवनानि सोमयागाः। ते शं सुखकरा भवंति। कथं सति। यद्यदि देवीर्दैव्यो द्योतमाना आपः समुद्र उदकसमुद्रवणापादानभूते ऽंतरिक्ष आसु प्रजासु निमित्तभूतासु ते त्वां मदंति मादयंति ॥ अंतर्भावितण्यर्थोऽयं ॥ यदा प्राण्युपकारार्थं वर्षणाय त्वां प्रेरयंति वृष्ट्युदकानि तदा खलु तव सोमयागाः सुखकरा भवंति। यज्ञसाधनवृष्टिप्रदानेन यागान्निर्वर्तयेत्यर्थः। किंच हे इंद्र विश्वा गौः सर्वापि स्तोत्रशस्त्ररूपा वाक् त्वामनुक्रमेण जोष्या जोषणार्हा प्रीणयित्री भूत्। भवति। कदा। यदि सूरींश्चित् स्तोत्रादिप्रेरयितॄन् स्तोतृजनानपि धिया धिषणया प्रज्ञया वृष्टिप्रदानरूपेण कर्मणा वा वेषि कामयसे तदा सर्वापि स्तुतिस्त्वदर्था भवति ॥

असाम यथा सुषखाय एन स्वभिष्टयो नरां न शंसैः।
असद्यथा न इंद्रो वंदनेष्ठास्तुरो न कर्म नयमान उक्था ॥९॥
असाम। यथा। सुऽसखायः। एन। सुऽअभिष्टयः। नरां। न। शंसैः।
असत्। यथा। नः। इंद्रः। वंदनेऽस्थाः। तुरः। न। कर्म। नयमानः। उक्था ॥९॥

हे एनेनेश्वरेंद्र यथा सुसखायः शोभनत्वद्रूपसहायवंतोऽसाम भूयास्म किंच स्वभिष्टयः शोभनाभिषणाः शोभनाभीष्टाश्चासाम। किमिव। नरां न शंसैः। नराणां राजादीनां शंसैः शंसनैरिव। स्तुतिभिर्यथा मनुष्याः शोभनाभीष्टा भवंति तद्वत्। इदानीं परोक्षेणाह। नोऽस्मभ्यमिंद्रो वंदनेष्ठा अस्मत्स्तुतौ वर्तमानः संस्तुरो न त्वरमाण इव नोऽस्माकं कर्मोक्थोक्थैः शस्त्रैर्नयमानः फलं प्रापयन् स्तुत्या तुष्टः सन्नस्मदीयेन कर्मणा फलप्रापयिता यथासत् भवेत्। हे ऋत्विजः तथा कुरुतेति शेषः ॥

विष्पर्धसो नरां न शंसैरस्माकासदिंद्रो वज्रहस्तः।
मित्रायुवो न पूर्पतिं सुशिष्टौ मध्यायुव उप शिक्षंति यज्ञैः ॥१०॥
विऽस्पर्धसः। नरां। न। शंसैः। अस्माक। असत्। इंद्रः। वज्रऽहस्तः।
मित्रऽयुवः। न। पूःऽपतिं। सुऽशिष्टौ। मध्यऽयुवः। उप। शिक्षंति। यज्ञैः ॥१०॥

नरां नेतॄणां मध्ये सस्पर्धान्नरान्यथा विस्पर्धसः कुर्वंति सखिभूताः तद्वद्वयमपींद्रं शंसैः स्तुतिभिः सखायो वयं तं तथा कुर्मः। स च वज्रहस्तो विरोधिशिक्षणाय सर्वदा वज्रधारींद्रोऽस्माकमसत्। विस्पर्धमनुकूलो भवतु। किंच मित्रायुवो न मित्रेच्छवो हितैषिण इव सुशिष्टौ सुशासने वर्तमानं पूर्पतिं पुरः स्वामिनं यथाभिमतदानेन पूजयंति तथा मध्यायुवोऽस्माकं श्रियां यशसां च मध्येऽवस्थितिं कामयमाना अध्वर्य्वादयो यज्ञैर्यज्ञसाधनैर्हविःस्तोत्रादिभिरुप शिक्षंति। उपेत्य यजंते। शिक्षतिर्दानकर्मा ॥ ॥१४॥

यज्ञो हि ष्मेंद्रं कश्चिदृंधञ्जुहुराणश्चिन्मनसा परियन्।
तीर्थे नाच्छा तातृषाणमोको दीर्घो न सिध्रमा कृणोत्यध्वा ॥११॥
यज्ञः। हि। स्म। इंद्रं। कः। चित्। ऋंधन्। जुहुराणः। चित्। मनसा। परिऽयन्।
तीर्थे। न। अच्छ। ततृषाणं। ओकः। दीर्घः। न। सिध्रं। आ। कृणोति। अध्वा ॥११॥

कश्चिद्यज्ञो यज्ञवान् यज्ञानुष्ठाय्यृधन् वर्धयन्भवति। इंद्रं यज्ञेन वर्धयतीत्यर्थः। जु[illegible] कुटिलगतिस्तु कश्चिन्मनसा केवलेन परियन् परितो गच्छन् लौकिकविषयादिकं ध्यायन्वर्तते। यद्वा। परि वर्जनार्थः। वर्जयित्वा गच्छन्नेदं प्राप्नोति। तत्र दृष्टांतः। तीर्थे प्रसिद्धे मार्गेऽच्छाभिमुख्येन समीपे वर्तमानमोकः पानीयादिकं सदनं ततृषाणं पिपासायुक्तं यथाविलंबेन प्रीणाति। स यथा तत्सदनमागच्छतीत्यर्थः। तद्वद्यज्ञेन

कश्चित्पुमानिंद्रमभिगच्छतीति। कुटिलस्य दृष्टांतः। दीर्घो न वक्रत्वेनातिदूरोऽध्वा मार्ग इव। स यथा क्षिप्रं फलं पानीयादिरूपं फलार्थिनं वा पुरुषमा कृणोति अर्वाक्करोति नीचैः करोति। वर्जयतीत्यर्थः। तस्मात्त्व-न्मार्गमजानानो वक्रो दूरे परिभ्रमति नेंद्रं तर्पयति। तद्विलक्षणस्तु वर्जयत्येव ॥

मो षू ण इंद्रात्र पृत्सु देवैरस्ति हि ष्मा ते शुष्मिन्नवयाः।
मह[illegible] मीळ्हुषो यव्या हविष्मतो मरुतो वंदते गीः ॥१२॥
मो इति। सु। नः। इंद्र। अत्र। पृत्ऽसु। देवैः। अस्ति। हि। स्म। ते। शुष्मिन्। अवऽयाः।
महः। चित्। यस्य। मीळ्हुषः। यव्या। हविष्मतः। मरुतः। वंदते। गीः ॥१२॥

हे इंद्र अत्र पृत्स्वेषूपस्थितेषु संग्रामेषु वृष्ट्यर्थं मेघजयेषु देवैर्मरुदादिभिः सह नोऽस्मान् मो षु मैव त्याक्षीरिति शेषः। मरुत्सहितो युध्यस्वेत्यर्थः। हे शुष्मिन् बलवन्निंद्र अस्ति हि स्म ते। अस्ति हि स्म तव खलु। तव किमस्तीति उच्यते। अवया अवयजनं अवयुज्य पृथक्कृत्य यजनं हविर्भागोऽस्ति। मरुद्भ्यः पृथगप्यस्ति हविर्भागः। केवलं मरुद्भ्य एव दीयते नास्मभ्यं अतः कथं योत्स्यामीति न मंतव्यमित्यर्थः। यद्वा। अवयाः शत्रूणां वर्जनाय गंता वज्रोऽस्ति ते। किंच हविष्मतः प्रदेयहविर्युक्तस्य मीळ्हुषो हविष्प्रदातुः। यद्वा। एतत्पदद्वयं मरुतां विशेषणं। यस्य मम यव्या फलेनेंद्रेण वा सह मिश्रयंती गीः स्तुति[illegible]दिरूपा वाङ्मह-स्विमहतोऽपि मीळ्हुषः सेक्तॄन् हविष्मतो दत्तहविषा तद्वतो मरुतो वंदते स्तौति ॥

अथ त्रयोदशी सूक्तादिमारभ्य कृतां स्तुतिं निगमय्य फलं प्रार्थयते ॥

एष स्तोम इंद्र तुभ्यमस्मे एतेन गातुं हरिवो विदो नः।
आ नो ववृत्याः सुविताय देव विद्यामेषं वृजनं जीरदानुं ॥१३॥
एषः। स्तोमः। इंद्र। तुभ्यं। अस्मे इति। एतेन। गातुं। हरिऽवः। विदः। नः।
आ। नः। ववृत्याः। सुविताय। देव। विद्याम। इषं। वृजनं। जीरऽदानुं ॥१३॥

हे इंद्र एष स्तोम [illegible]दार्मीक[illegible]रितप्रकारः स्तोत्रविशेषस्तुभ्यं त्वदर्थं। हे हरिवो हरिभ्यां तद्वन्निंद्र एतेन स्तोत्रेण गमनेन वा नोऽस्मदीयं गातुं देवयजनमार्गं विदः। विदस्व। विदित्वा च हे देव सुविताय सुहिताय शोभनगमनाय वा नोऽस्माना ववृत्याः। आवर्तस्व। अस्मद्यागं प्रत्यागच्छ। विद्यामेत्यादि व्याख्यातं ॥ ॥१५॥

त्वं राजेति दशर्चं दशमं सूक्तमागस्त्यमैंद्रं त्रैष्टुभं। त्वं राजा दशेत्यनुक्रांतं। पृष्ठ्ये षळहे स्तोमवृद्धौ स्तोमा-तिशंसनार्थं होत्रकैरेतच्छंस्तव्यं। ऐंद्राणि त्रैष्टुभान्यमरुच्छब्दान्यावपेरन्। आ० ७.१२.। इति सूत्रं ॥

त्वं राजेंद्र ये च देवा रक्षा नॄन्पाह्यसुर त्वमस्मान्।
त्वं सत्पतिर्मघवा नस्तरुत्रस्त्वं सत्यो वसवानः सहोदाः ॥१॥
त्वं। राजा। इंद्र। ये। च। देवाः। रक्ष। नॄन्। पाहि। असुर। त्वं। अस्मान्।
त्वं। सत्ऽपतिः। मघऽवा। नः। तरुत्रः। त्वं। सत्यः। वसवानः। सहःऽदाः ॥१॥

हे इंद्र त्वं राजाधिपतिः सर्वस्य जगतः। किंच ये देवा मरुदादयः संति तेषामपि विशेषेण। अतो हे असुर शत्रूणां निरसितः त्वं नॄनस्मान् कर्मनेतॄन्यजमानान्रक्ष। पालय। विशेषतोऽस्मानपि रक्ष। त्वं च सत्पतिः सतां सतः कर्मफलस्य वा पाता मघवा धनवान्नोऽस्माकं [illegible] पापात् किंच त्वं सत्यो ऽबाध्यः सत्यफलो वा वसवानः स्वतेजसा सर्वं छादयन् वसूनि वा कुर्वन् स्तोतृभ्यः सहोदाः सहसो बलस्य दाता भवेति शेषः ॥

दनो॒ विश॑ इंद्र मृध्रवा॑चः स॒प्त यत्पुरः॒ शर्म॒ शार॑दी॒र्दर्त्।
ऋ॒णोर॒पो अ॑नवद्या॒र्णा यू॒ने वृ॒त्रं पु॑रु॒कुत्सा॑य रंधीः ॥२॥
दनः॑। विशः॑। इं॒द्र॒। मृ॒ध्रऽवा॑चः। स॒प्त। यत्। पुरः॑। शर्म॑। शार॑दीः। दर्त्।
ऋ॒णोः। अ॒पः। अ॒न॒व॒द्य॒। अर्णाः॑। यू॒ने। वृ॒त्रं। पु॒रु॒ऽकुत्सा॑य। र॒धीः॒ ॥२॥

हे इंद्र त्वं वृत्रसंबंध्यसुराणां पुरभेदनसमये मृध्रवाचो मर्षणवचना विशस्तदीयाः प्रजाः शर्म सुखं यथा भवति तथा दनः। अदमयः ॥ दमेरिदं रूपं ॥ यद्वा ॥ वर्णव्यत्ययः ॥ नदः। अनदः। अशब्दयोऽसुरप्रजाः। अतिभयंकरशब्दमकरोः। कदेति आह। यद्यदा शारदीः प्रत्यग्राः। यद्वा। एतत्संवत्सरलक्षकः। संवत्सरपर्यंतं दृढीकृता अपि। सप्त पुर एतत्संख्याकाः पुरीर्दर्त् अदारयः ॥ पुरुषव्यत्ययः। दृणातेर्लङि छांदसो विकरणस्य लुक्। रात्सस्य। पा० ८.२.२४.। इति नियमात् तलोपाभावः ॥ तथा कृत्वा हे अनवद्य कातरत्वानिंदावन् हे इंद्र अर्णा अरणशीला अपस्तदीयदुर्गस्थानान्युदकाश्रयाणि तटाकादीन्यृणोः। अगमयः प्रावर्तयः। भग्नान्यकरोः। एवमुपद्रुत्य पुरुकुत्सायैतन्नाम्ने राज्ञे यूने नित्यतरुणाय तदर्थं वृत्रमेतन्नामकमसुरं रंधीः। असाधयः। अहनः। अयमैतिहासिकपक्षः ॥ निरुक्तरूढ्या तु हे इंद्र मृध्रवाचो विशो मर्षणध्वनियुक्ता वृष्टिरूपाः प्रजा दनः। अदमयः। अशब्दयो वा। अवर्षय इत्यर्थः। कदा। यद्यदा सप्त पुरः शारदीर्दर्त् सर्पणस्वभावान्प्रत्यग्रान् वृष्ट्या जगत्पूरकान्मेघानदारयः तदेत्यर्थः। तथा कृत्वा हे अनवद्य अर्णा अरणस्वभावा अप ऋणोः। अगमयः। प्रावर्तयः कुल्यादिरूपेण। अनंतरं यूने पुरुकुत्साय वृत्रं मुख्यं मेघं रंधीः। असाधयः। अहनः। अयमर्थः त्वं ह त्यदिंद्र सप्त युध्यन्। ऋ० १.६३.७.। इत्यादिमंत्रांतरेषु प्रसिद्धः। यास्कस्त्वेवं व्याख्यात्। दनो दानमनसो नो मनुष्यानिंद्र मृदुवाचः कुरु। नि० ६.३१.। इति ॥

अजा॑ वृ॒तं इं॑द्र॒ शूर॑पत्नी॒र्द्यां च॒ येभिः॑ पुरुहूत नू॒नं।
रक्षो॑ अ॒ग्निम॒शुषं॒ तूर्व॑याणं सिं॒हो न दमे॑ अपां॑सि॒ वस्तोः॑ ॥३॥
अजः॑। वृ॒तः॑। इं॒द्र॒। शूर॑ऽपत्नीः। द्यां। च॒। येभिः॑। पु॒रु॒ऽहू॒त॒। नू॒नं।
रक्षो॒ इति॑। अ॒ग्निं। अ॒शुषं॑। तूर्व॑याणं। सिं॒हः। न। दमे॑। अपां॑सि। वस्तोः॑ ॥३॥

हे इंद्र शूरपत्नीः शूरे रक्षोभिः पालिता वृतः। वर्तंत आस्विति वृतोऽसुरपुरीः। यद्वा। शूरा यजमानाः। तैः पालिता वृतो वेदिभूमीः। अज। गच्छ जेतुं। तथा कृत्वा द्यां च नूनमवश्यमज। किं त्वमेक एव न। हे पुरुहूत बहुभिर्बहुधा वाहूतेंद्र येभिर्मरुदादिभिरनुगतोऽसि तैः सहितः सन्। तथा कृत्वाशुषमाशोषयितारमशांतं वा तूर्वयाणं तूर्णगमनमग्निं वैद्युतं होमाधारं वाग्निं रक्षो। रक्षस्वैव। किमर्थं रक्षणमिति उच्यते। दमे गृहेऽपांसि कर्माणि कुर्वन् वस्तोर्वस्तुं। यद्वा। वासयितुं स्थापयितुं। कारयितुमित्यर्थः। यज्ञादिषु हतेष्वग्नौ सुस्थिरे सति यागाद्यनुष्ठानपरः स्थास्यामीत्यर्थः। रक्षणे दृष्टांतः। सिंह इव। स यथा स्वाश्रयभूतं वनं गजाद्युपद्रवपरिहारेण रक्षति तद्वत्। असुरपुरभंगगमने वा दृष्टांतः। सिंहो यथा निर्भयो विरोधिमृगान् हंतुं धावति तद्वत् ॥

शेष॒न्नु त इं॑द्र॒ सस्मि॒न्योनौ॒ प्रश॑स्तये॒ पवी॑रवस्य म॒ह्ना।
सृ॒जदर्णां॒स्यव॒ यद्यु॒धा गास्तिष्ठ॒द्धरी॑ धृष॒ता मृ॑ष्ट॒ वाजा॑न् ॥४॥
शेष॑न्। नु। ते। इं॒द्र॒। सस्मि॑न्। योनौ॑। प्रऽश॑स्तये। पवी॑रवस्य। म॒ह्ना।
सृ॒जत्। अर्णां॑सि। अव॑। यत्। यु॒धा। गाः। तिष्ठ॑त्। हरी॒ इति॑। धृ॒ष॒ता। मृ॒ष्ट॒। वाजा॑न् ॥४॥

हे इंद्र ते शत्रवः सस्मिन् सर्वस्मिन् समाने वा योनौ स्वकीये स्थानेऽंतरिक्षे वा। योनिरंतरिक्षं। नु क्षिप्रं

शेषन्। शेरतां ॥ शीङो लेट्यडागमः। व्यत्ययेन परस्मैपदं। छंदस्युभयथेति सिप् ॥ किमर्थं। प्रशस्तये प्रशंसनाय त्वत्स्तुतये। त्वन्महिमज्ञापनायेत्यर्थः। किं सेवनादिसाधनेनेति आह। पवीरवस्य कुलिशस्य कुलिशशब्दस्य वा मह्ना महिम्ना। त्वद्वज्रप्रहारेण हता मेघाः शत्रवो वा तत्रैव शेरते निपातेन पलायंत इत्यर्थः। किंच यद्यदा युधा प्रहरणसाधनेनायुधेन युद्धेन वा गाः गच्छसि तदार्णांस्युदकान्यव सृजत्। अवासृजः। अवाङ्मुखमपातयः ॥ पुरुषव्यत्ययः ॥ तदर्थं हरी अश्वौ तिष्ठत्। अध्यतिष्ठः ॥ अत्रापि पुरुषव्यत्ययः ॥ यद्वा। यदा हरी अधितिष्ठसि तदावासृजः। अथैवं कृत्वा वाजानन्नानि सस्यादिलक्षणानि धृषता धर्षकेण सामर्थ्येन मृष्ट। शोधय। प्रवर्धयेत्यर्थः ॥

वह॒ कुत्स॑मिंद्र॒ यस्मि॑ञ्चा॒कन्त्स्यू॑म॒न्यू ऋ॒ज्रा वात॒स्याश्वा॑।
प्र सूर॑श्च॒क्रं वृ॑हता॒द॒भीके॑ऽभि स्पृधो॑ यासिष॒द्वज्र॑बाहुः ॥५॥
वह॑। कुत्स॑म्। इं॒द्र॒। यस्मि॑न्। चा॒कन्। स्यू॒म॒न्यू इति॑। ऋ॒ज्रा। वात॑स्य। अश्वा॑।
प्र। सूरः॑। च॒क्रम्। वृ॒ह॒ता॒त्। अ॒भीके॑। अ॒भि। स्पृधः॑। या॒सि॒ष॒त्। वज्र॑ऽबाहुः ॥५॥

हे इंद्र कुत्समेतन्नामानमृषिं प्राप्तं स्यूमन्यू। स्यूमकमिति सुखनाम। तदिच्छंतौ सततगामिनौ वा ऋज्रा ऋजुगामिनौ वातस्य वायोः समानवेगावश्वा तदीयावश्वौ वह। प्रस्थापय। यस्मिन् हविषि निमित्तभूते सति कुत्सं चाकन् कामयसे तर्पयसे वा हविरादिकं। तदर्थं सूरः प्रेरकः सूर्यश्चक्रं स्वमंडलं स्वरथचक्रं वाभीक आसन्ने देशे वृहतात्। ऊर्ध्वं गमयतु। प्रकाशयतु। अथ परोक्षेणाह। वज्रबाहुरिंद्रः स्पृधः संग्रामं कुर्वतः शत्रूनभि यासिषत्। अभियातु ॥ ॥१६॥

ज॒घ॒न्वाँ इं॑द्र मि॒त्रेरू॑ञ्चो॒दप्र॑वृद्धो हरिवो॒ अदा॑शून्।
प्र ये पश्य॑न्नर्य॒मणं॑ स॒चायो॒स्त्वया॑ शू॒र्ता वह॑माना॒ अप॑त्यं ॥६॥
ज॒घ॒न्वान्। इं॒द्र॒। मि॒त्रेरू॑न्। चो॒द॒ऽप्र॑वृद्धः। ह॒रि॒ऽवः॒। अदा॑शून्।
प्र। ये। पश्य॑न्। अ॒र्य॒मण॑म्। सचा॑। आ॒योः। त्वया॑। शू॒र्ताः। वह॑मानाः। अप॑त्यं ॥६॥

हे इंद्र हरिवः हरिभ्यां तद्वन् त्वं चोदप्रवृद्धश्चोदनैः स्तोत्रैः प्रवृद्धः सन्नदाशूनदातॄन् मित्रेरून्मित्राणां यजमानानामीरयितॄन्बाधकान् तद्वैरिणां मित्रत्वं गच्छतो वा जघन्वान्। हतवानसि। किंच येऽर्यमणं दातारं त्वां प्र पश्यन् पश्यंति ते नरा आयोर्मनुष्यस्याध्वर्य्वादेर्हविर्लक्षणान्नस्य वा सचा सह शूर्ताः क्षिप्रा हविष्प्रदानेन त्वयापत्यं कुलस्यापातयितारं पुत्रं वहमाना ये संति ते प्र पश्यन्। यद्वा। येऽर्यमणं त्वां पश्यंति त एवं भवंति। यद्वा। ये नरा अर्यमणं यं कंचिद्दातारं पश्यन् पश्यंतस्त्वामयजंत आयोर्मनुष्यस्य सचा सहायभूतास्त्वया शूर्ताः क्षिप्ता वर्जिता अपत्यं पुत्रं वहमाना ये संति ताञ्जघन्वान्भवेत्यर्थः ॥

रप॑त्क॒विरिं॑द्रा॒र्कसा॑तौ॒ क्षां दा॒सायो॑प॒बर्ह॑णीं कः।
कर॑त्ति॒स्रो म॒घवा॒ दानु॑चित्रा॒ नि दु॑र्यो॒णे कुय॑वाचं मृ॒धि श्रे॑त् ॥७॥
रप॑त्। क॒विः। इं॒द्र॒। अ॒र्कऽसा॑तौ। क्षाम्। दा॒साय॑। उ॒प॒ऽबर्ह॑णीम्। क॒रिति॑ कः।
कर॑त्। ति॒स्रः। म॒घऽवा॑। दानु॑ऽचित्राः। नि। दु॒र्यो॒णे। कुय॑वाचम्। मृ॒धि। श्रे॒त् ॥७॥

हे इंद्र त्वां कविः क्रांतदर्शी स्तोता वा होतार्कसातावर्चनीयस्यान्नस्य लाभे निमित्तभूते सति रपत्। स्तौति। यद्वा। एतन्नामर्षी रपत् अस्तौत् अन्नार्थं। तस्यातिप्रभूतमन्नं प्रादा इत्यर्थः। तथा च दासाय प्रायुपक्षपयित्रेऽसुराय क्षां भूमिमुपबर्हणीं शय्यां कः। अकरीः। हत्वा भूमावपातय इत्यर्थः ॥ करोतेर्लुङि मंत्रे

घसेति चेर्लुक् ॥ अथ परोक्षकृतः । मघवा धनवानयमिंद्रस्तिस्रो भूमीः । दार्ष्टिकपामुकसौमिकरूपा भूमीः क्षित्यंतरिक्षद्युरूपा वा भूमीर्दानुचित्रा दानेन देयैर्धनैर्वा चायनीयाः करत् । करोति । यद्वा । तिस्रोऽयोरजतहिरण्मयाः पुरीर्दानुचित्राः खंडनेन चित्रा अकरोत् । तथा दुर्योणे दुष्टयोनौ स्थाने एतन्नामकस्य राज्ञः प्रीत्यर्थं वा कुयवाचं कुत्सितं शब्दायंतमेतन्नामानमसुरं मृधि संग्रामे नि श्रेत् । हिंसितवान् ॥

सना॒ ता त॑ इंद्र॒ नव्या॒ आगुः॒ सहो॒ नभो॒ऽविर॑णाय पू॒र्वीः ।
भि॒नत्पुरो॒ न भिदो॒ अदे॑वीर्न॒नमो॒ वध॒रदे॑वस्य पी॒योः ॥ ८ ॥
सना॑ । ता । ते॒ । इं॒द्र॒ । नव्याः॑ । आ । अ॒गुः॒ । सहः॑ । नभः॑ । अवि॑ऽरणाय । पू॒र्वीः ।
भि॒नत् । पुरः॑ । न । भिदः॑ । अदे॑वीः । न॒नमः॑ । वधः॑ । अदे॑वस्य । पी॒योः ॥ ८ ॥

हे इंद्र ते तव संबंधीनि सना सदातनानि नित्यानि तानि शौर्याणि नव्या नवतरा इदानींतना ऋषय आगुः । आगच्छंति । स्तुतिव्याजेन प्राप्नुवंतीत्यर्थः । कानि तानीति उच्यते । पूर्वीर्बह्वीर्नभो हिंसाः ॥ नभेर्हिंसार्थात्क्विप् । तदंतस्येदं रूपं ॥ ता हिंसा अविरणायाविगतरणाय संग्रामनाशनाय सहः । अभ्यभवः । तदर्थं भिदो भेत्तृर्घातिका अदेवीरासुरीः पुरो न पुरीरपि भिनत् । विदारितवानसि ॥ पुरुषव्यत्ययः । नशब्दश्चार्थे ॥ तथादेवस्यास्तुत्यस्य पीयोर्हिंसकस्यासुरस्य वधर्वज्रं ननमः । अनमयः । अनुकूलमकरोः ॥ यद्वा । हे इंद्र सना नित्यं तत्तत्काले ते तव संबंधिन्यस्ता तानि ॥ लिंगव्यत्ययः ॥ ताः पूर्वीः पुरातन्य आपो नव्या नूत्नाः स्तुत्याः सत्य आगुः । आगच्छंति । किमर्थं । अविरणायाविरमणाय प्राणिनामविनाशाय । तदर्थं नभो हिंसकान्बंधकान्वा मेघान् सहः । मर्षणमकरोः । किंचादेवीः पुरोऽवर्षणेनादेवनशीलानुदकपुटबंधान् भिनत् । भिन्नानकरोः । तथादेवस्यादेवनशीलस्य पीयोः प्रतिकूलस्य वृत्रस्य वधर्वज्रं ननमः । अनमयः ॥

त्वं धुनि॑रिंद्र॒ धुनि॑मतीर्ऋ॒णोर॒पः सी॒रा न स्रव॑न्तीः ।
प्र यत्स॑मु॒द्रमति॑ शूर॒ पर्षि॑ पा॒रया॑ तु॒र्वशं॒ यदुं॑ स्व॒स्ति ॥ ९ ॥
त्वं । धुनिः॑ । इं॒द्र॒ । धुनि॑ऽमतीः । ऋ॒णोः । अ॒पः । सी॒राः । न । स्रव॑न्तीः ।
प्र । यत् । स॒मु॒द्रं । अति॑ । शूर॒ । पर्षि॑ । पा॒रय॑ । तु॒र्वशं॑ । यदुं॑ । स्व॒स्ति ॥ ९ ॥

हे इंद्र त्वं धुनिः कंपयिता शत्रूणामसि । अतो धुनिमतीः कंपनोपेततरंगवतीः । अथवा । धुनिर्नाम जलप्रतिबंधकार्यसुरः । स एव प्रतिबंधकतया यासां तादृशीः । अप ऋणोः । अगमयः । भूमावपातयः । तत्र दृष्टांतः । स्रवंतीः प्रवहंतीः सीरा न । नदीनामैतत् । सरणवतीर्नदीरिव । तद्वत्संतता इत्यर्थः । एवं कृत्वा हे शूर यद्यदा समुद्रमति पर्षि अतिक्रम्य पूरयस्युदकं तदानीं तुर्वशं यदुमुभावपि राजर्षी स्वस्त्यविनाशं पारय । अपालयः संपूर्णजलवर्षणेन । तथा च मंत्रांतरं । त्वमपो यदवे तुर्वशायारमयः । ऋ० ५. ३१. ८. । इति ॥

त्वम॒स्माक॑मिंद्र वि॒श्वध॑ स्या॒ अवृ॑कतमो न॒रां नृ॑पा॒ता ।
स नो॒ विश्वा॑सां स्पृ॒धां स॑हो॒दा वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुं ॥ १० ॥
त्वं । अ॒स्माकं॑ । इं॒द्र॒ । वि॒श्वध॑ । स्याः॒ । अवृ॑कऽतमः । न॒रां । नृ॒ऽपा॒ता ।
सः । नः॒ । विश्वा॑सां । स्पृ॒धां । स॒हः॒ऽदाः । वि॒द्याम॑ । इ॒षं । वृ॒जनं॑ । जी॒रऽदा॑नुं ॥ १० ॥

हे इंद्र त्वमस्माकं विश्वध विश्वस्मिन्नपि काले विश्वप्रकारैर्वावृकतमः । यद्वा । दातृतम इत्यर्थः । स्याः । भव । तथा नरां नृपातास्मदीयानां पुत्रभृत्यादिरूपाणां बहूनां मनुष्याणां सर्वदा रक्षको भव । अपरो

नृशब्दोऽनुवादः। किंच स त्वं विश्वासां सुधां सर्वासां स्पर्धानिमित्तानामस्मत्सेनानां सहोदास्तासामर्थाय बलस्य दाता भव। विद्यामेति गतं॥ ॥१७॥

मत्स्यपायीति षड्टचमेकादशं सूक्तमागस्त्यमैंद्रं। आद्या स्कंधोग्रीवी बृहती द्वितीयपादस्य द्वादशाक्षरत्वादितरेषां चयाणामष्टाक्षरत्वाच्च। द्वितीयश्चेत्र्यंकुसारिण्युरोबृहती वा स्कंधोग्रीवी वा। अनु॰ ७. ३.। इत्युक्तलक्षणसद्भावात्। अंत्या त्रिष्टुप्। शिष्टास्त्रिष्टुबंतपरिभाषाया आनुष्टुभं त्विति विशेषवचनेनापोदितत्वादनुष्टुभः। मत्सि षळानुष्टुभं तु त्रिष्टुबंतं त्वाद्या स्कंधोग्रीवीत्यनुक्रांतं॥ द्वितीये स्वरसाम्न्याद्यस्तृचः स्तोत्रियः। अभिजिद्बृहत्पृष्ठ इति खंडे सूचितं। मत्स्यपायि ते मह एमेनं प्रत्येतन। आ॰ ८. ५.। इति॥

मत्स्यपायि ते महः पात्रस्येव हरिवो मत्सरो मदः।
वृषा ते वृष्ण इंदुर्वाजी सहस्रसातमः॥१॥
मत्सि। अपायि। ते। महः। पात्रस्यऽइव। हरिऽवः। मत्सरः। मदः।
वृषा। ते। वृष्णे। इंदुः। वाजी। सहस्रऽसातमः॥१॥

हे हरिवो हरिभ्यां तद्वन्निंद्र महो महान् पूज्योऽयं सोमः पात्रस्येव तत्पात्रेणेव सोमपात्रेण यथा धार्यते सोमस्तत्सदृशेन ते त्वया। तृतीयार्थे षष्ठी। यद्वा। पात्रस्येव ते तव स्वभूतो महो महान् सोम इति वा योजना। अपायि। पीयते॥ आशंसाया विवक्षितत्वाद्भूतवत्प्रयोगः॥ यतः पिबसि अतो मत्सि। माद्यसि माद्यस्व वा। पात्रे यथा सोमः पूर्यते तथात्यधिकं पिब पीत्वा च माद्यस्वेत्यर्थः। किंच वृष्णे तेऽभिमतवर्षित्रे तुभ्यं। चतुर्थ्यर्थे षष्ठी। मत्सरो मदसाधनो मदस्तर्पयिता वृषा वर्षितेंदुः क्लेदयिता। आह्लादकारीत्यर्थः। वाज्यन्नवान्। [illegible]। सहस्रसातमोऽपरिमितदातृतमः सहस्रपुरुषसंभजनपर्याप्तशक्त्यतिशयो वा एवंमहानुभावः सोमः संपादितः। तं पिबेत्यर्थः॥

आ नस्ते गंतु मत्सरो वृषा मदो वरेण्यः।
सहावाँ इंद्र सानसिः पृतनाषाळमर्त्यः॥२॥
आ। नः। ते। गंतु। मत्सरः। वृषा। मदः। वरेण्यः।
सहऽवान्। इंद्र। सानसिः। पृतनाषाट्। अमर्त्यः॥२॥

हे इंद्र ते त्वां नोऽस्मदीयो मत्सरो मर्षणसाधनः सोम आ गंतु। आगच्छतु। कीदृशोऽयं। वृषा वर्षकः [illegible] वरेण्यो वरणीयः सहावान् सहायवान् सहसा बलेन तद्वान्वा सानसिः संभजनीयः पृतनाषाट् [illegible] अभिभविता अमर्त्योऽविनाशी। ईदृशः सोमस्त्वामागच्छतु। यद्वा। उत्तरार्धं इंद्रपरतया व्याख्येयः। हे इंद्र सहावानस्मदीयसोमसहायवान् बलवान्वा सानसिरस्माभिः संभजनीयः पृ[illegible] भवसि॥

त्वं हि शूरः सनिता चोदयो मनुषो रथं।
सहावान्दस्युमव्रतमोषः पात्रं न शोचिषा॥३॥
त्वं। हि। शूरः। सनिता। चोदयः। मनुषः। रथं।
सहऽवान्। दस्युं। अव्रतं। ओषः। पात्रं। न। शोचिषा॥३॥

हे इंद्र त्वं खलु शूरः शौर्योपेतः सनिता दातासि। अतो मनुषो मानुषस्य मे रथं रंहणं स्यंदनं मनोरथं वा स्वर्गगमनसाधनं यज्ञाख्यं रथं वा चोदयः। प्रेरय। किंच त्वं सहावान् सोमसहायवान् बलवान्वा भूत्वा [illegible]मनुष्ठा।यिनमोषः। दह। किमिव। शोचिषा दीप्त्या ज्वालयाग्निः पात्रं न स्वाधारं पात्रविशेषमिव। यागाधिकारी सन्यो न यजते तं दहेत्यर्थः॥

मुषाय सूर्यं कवे चक्रमीशान ओजसा। वह शुष्णाय वधं कुत्सं वातस्याश्वैः ॥४॥

मुषाय। सूर्यं। कवे। चक्रं। ईशानः। ओजसा। वह। शुष्णाय। वधं। कुत्सं। वातस्य। अश्वैः ॥४॥

हे कवे क्रांतदर्शिन्निंद्र ईशानः समर्थः सन् सूर्यं सूर्यस्य ॥ सुपां सुपो भवंतीति षष्ठ्येकवचनस्य द्वितीयैकवचनादेशः ॥ तत्संबंधि चक्रमेकमोजसा बलेन सामर्थ्यातिशयेन मुषाय। अमुष्णाः ॥ छंदसि शायजपीति शायजादेशः ॥ पूर्वं सूर्यरथस्य चक्रद्वयमस्ति एकमिंद्रो मुमुष इतीतिहासः। तथा च मंत्रांतरं। प्रान्यच्चक्रमवृहः सूर्यस्य कुत्सायान्यत्। ऋ० ५. २९. १०.। इति। किंच शुष्णायैतन्नामकायासुराय तद्वधार्थं। द्वितीयार्थे वा चतुर्थी। शुष्णं हंतुमित्यर्थः। कुत्सं कर्तनसाधनं वधं वज्रं वातस्य वायोरश्वैर्वायुवेगैर्वाश्वैर्युक्तः सन् वह। अवहः। शुष्णं हंतुं वज्रमधारयः। यद्वा। शुष्णवधाय वज्रमवहः। तं च हत्वा तदीयैर्वायुवेगैरश्वैस्तदुपलक्षितैस्तदीयैर्धनैः कुत्सं महर्षिमगमः। शुष्णासुरधनं कुत्सायादा इत्यर्थः। तथा चान्यत्र त्वं कुत्सं शुष्णहत्येष्वाविथ। ऋ० १. ५१. ६.। कुत्साय शुष्णमशुषं। ऋ० ४. १६. १२.। इत्यादीति ॥

शुष्मिंतमो हि ते मदो द्युम्निंतम उत क्रतुः।
वृत्रघ्ना वरिवोविदा मंसीष्ठा अश्वसातमः ॥५॥

शुष्मिन्ऽतमः। हि। ते। मदः। द्युम्निन्ऽतमः। उत। क्रतुः।
वृत्रऽघ्ना। वरिवःऽविदा। मंसीष्ठाः। अश्वऽसातमः ॥५॥

हे इंद्र ते तव मदः सोमपानजनितः शुष्मिंतमो बलवत्तमः। उतापि च ते क्रतुः कर्म व्यापारोऽस्मदर्थो द्युम्निंतमोऽतिशयेनान्नवान् यशोवान्वा ॥ उभयत्रायस्मयादीनि च्छंदसीति भसंज्ञाया बाधितत्वान्न लोपः ॥ हे इंद्र अश्वसातमोऽश्वोपलक्षितबहुधनदास्त्वं वृत्रघ्ना वृत्रघातिनौ वरिवोविदा धनस्य परिचरणस्य वा वेदयितारौ लंभयितारौ तव मदक्रतू मंसीष्ठाः। अनुज्ञातवानसि। शत्रुघातिनौ धनदातारौ च स्यातामित्यनुग्रहमकरोरित्यर्थः ॥

यथा पूर्वेभ्यो जरितृभ्य इंद्र मय इवापो न तृष्यते बभूथ।
तामनु त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुं ॥६॥

यथा। पूर्वेभ्यः। जरितृऽभ्यः। इंद्र। मयःऽइव। आपः। न। तृष्यते। बभूथ।
तां। अनु। त्वा। निऽविदं। जोहवीमि। विद्याम। इषं। वृजनं। जीरऽदानुं ॥६॥

हे इंद्र पूर्वेभ्यो जरितृभ्यः पुरातनेभ्यो गरितृभ्यः स्तोतृभ्यो मय इव बभूथ। मयः सुखं। सुखस्वरूपमिवाभवः। तद्वत् स्तोतृभ्योऽस्मभ्यं सुखो भव। तत्र दृष्टांतः। तृष्यत आपो न तृषार्तस्योदकानि यथा सुखकराणीति तद्वत्। तस्मात्तां निविदं त्वत्प्रीतिकरीं प्रसिद्धां स्तुतिं त्वा तुभ्यमनु जोहवीमि। पुनःपुनः करोमि। यद्वा। तां निविदमनु ॥ तृतीयार्थे। पा० १. ४. ८५.। इत्यनोः कर्मप्रवचनीयत्वं ॥ तया स्तुत्या त्वां जोहवीमि। पुनःपुनराह्वयामि। विद्यामेति व्याख्यातं ॥ ॥१८॥

मत्सि न इति षडृचं द्वादशं सूक्तमागस्त्यमैंद्रमानुष्टुभं। पूर्वत्र तुशब्दात् त्रिष्टुबंतं [illegible] त्रिष्टुप्। मत्सि न इत्यनुक्रांतं ॥ विशेषविनियोगो लैंगिकः ॥

मत्सि नो वस्यइष्टय इंद्रमिंदो वृषा विश।
ऋघायमाण इन्वसि शत्रुमंति न विंदसि ॥१॥

मत्सि । नः । वस्यः॒ऽइष्टये । इंद्रं । इंदो इति । वृषा । आ । विश ।
ऋघायमाणः । इन्वसि । शत्रुं । अंति । न । विंदसि ॥१॥

हे इंदो मदयितः सोम त्वं नो वस्यइष्टये वसीयसो धनस्य प्राप्तय उक्तलक्षणाय यागाय वेंद्रं मत्सि । मादयस्व । तदर्थं त्वमेवेंद्रं वृषा कामानां वर्षिता आ विश । अथ तथा पीतः सन्नृघायमाणः शत्रून् हिंसयन्निन्वसि । व्याप्नोषि । अतोऽत्यंतिके शत्रुं न विंदसि । न लभसे । यतः शत्रवस्त्वत्सामर्थ्येन पलायिताः अतो न विंदसि । यद्वा । उत्तरार्धं इंद्रपरतया व्याख्येयः । हे इंद्र त्वं तं सोमं पीत्वर्घायमाणः सन्निन्वसि । अंतिके शत्रुं न विंदसि ॥

तस्मिन्ना वेशया गिरो य एकश्चर्षणीनां । अनु स्वधा यमुप्यते यवं न चर्कृषद्वृषा ॥२॥
तस्मिन् । आ । वेशय । गिरः । यः । एकः । चर्षणीनां । अनु । स्वधा । यं । उप्यते ।
यवं । न । चर्कृषत् । वृषा ॥२॥

हे अंतरात्मन् होतर्वा तस्मिन्प्रसिद्ध इंद्रे गिरः स्तुतिरूपा वाच आ वेशय । स्थापय । तं स्तुहीत्यर्थः । य इंद्रश्चर्षणीनां ज्ञानवतां मनुष्याणामेक एक एव स्थानीयः । यमनु यमेवेंद्रमनु स्वधा हविर्लक्षणमन्नमुप्यते । दीयत इत्यर्थः । स चेंद्रो वृषा वर्षकः सन्यवं न यवमिव पक्वं यवं यथा चर्कृषत् क्रमेणाददते कर्षकाः तद्वदादत्ते । यद्वा । अनु स्वधान्नसाधनं व्रीह्या[illegible] भूमौ । यमेंद्रस्य वृष्टिरूपमनुग्रहमपेक्ष्योप्यत इत्यर्थः । स च वृषा वृष्टेर्वर्षिता स इंद्रो यवं न यवमिव सर्वबीजमपि चर्कृषत् । पुनःपुनः करोति । अंकुरयति । हविःसाधनत्वप्राशस्त्यमपेक्ष्य यवशब्दः प्रयुक्तः । एवंमहानुभाव इंद्रे गिर आ वेशयेति ॥

यस्य विश्वानि हस्तयोः पंच क्षितीनां वसु ।
स्पाशयस्व यो अस्मध्रुग्दिव्येवाशनिर्जहि ॥३॥
यस्य । विश्वानि । हस्तयोः । पंच । क्षितीनां । वसु ।
स्पाशयस्व । यः । अस्मऽध्रुक् । दिव्याऽइव । अशनिः । जहि ॥३॥

यस्येंद्रस्य हस्तयोः पंच क्षितीनां । क्षियंति निवसंति गच्छंति वा क्षितयो मनुष्याः । पंचानां मनुष्याणां प्रीणयितॄणि विश्वानि सर्वाणि वसु वसूनि धृतानि भवंति । देवा मनुष्याः पितरः पशवः पक्षिणश्चेति पंच जनाः । चत्वारो वर्णा निषादपंचमाः पंच जना इत्यन्ये । स तादृशेंद्र त्वं स्पाशयस्व । बाधस्व । योऽस्मध्रुक् अस्मभ्यं द्रुह्यति तं । केन प्रकारेणेति स उच्यते । दिव्या दिवि भवाशनिरिवाशनिर्भू[illegible] ॥

असुन्वंतं समं जहि दूणाशं यो न ते मयः ।
अस्मभ्यमस्य वेदनं दद्धि सूरिश्चिदोहते ॥४॥
असुन्वंतं । समं । जहि । दुःऽनशं । यः । न । ते । मयः ।
अस्मभ्यं । अस्य । वेदनं । दद्धि । सूरिः । चित् । ओहते ॥४॥

हे इंद्र असुन्वंतं सोमाभिषवमकुर्वाणं । त्वामयजंतमित्यर्थः । दूणाशं दुःखेन नाशनीयं समं । अयं सर्वानुदात्तः सर्वशब्दपर्यायः । अयष्टॄन् सर्वान् । यद्वा । सममेकोयोगे[illegible] वा जहि । तेन [illegible]मिति अत आह । यस्ते तव मयः । मय इति सुखनाम । तव सुखहेतुर्न भवति । यो होमेन स्तुत्या वा न प्रीणाति तं जहि । किंचास्य वेदनं धनमस्मभ्यं दद्धि । देहि ॥ दद दान इत्यस्माद्व्यत्ययेन परस्मैपदं । छांदसः शपो लुक् ॥ सूरिश्चिदोहते । चिदेवार्थे । सूरिस्तव स्तोतैवौहते । वहति । प्राप्नोति धनं ॥

आवो यस्य द्विबर्हसोऽर्केषु सानुषगसत्। आजाविंद्रस्येंदो प्रावो वाजेषु वाजिनं ॥५॥
आवः। यस्य। द्विऽबर्हसः। अर्केषु। सानुषक्। असत्। आजौ। इंद्रस्य। इंदो इति। प्र। आवः। वाजेषु। वाजिनं ॥५॥

हे इंदो सोम तव यस्य द्विबर्हसः स्तोत्रहवीरूपद्विविधपरिवृढकर्मवतो यजमानस्यार्केषु मंत्रेषु सानुषक् सानुषंगः सातत्यमसत् भवेत् तमावः। तं यजमानं रक्षसि तर्पयसि वा। यद्वा ॥ कर्मणि षष्ठी ॥ यं द्वयोः स्थानयोः परिवृढं यमिंद्रं हे इंदो यदार्केषु सानुषगसत् भवेः तदावः। अरक्षः। अतर्पयो वा। तस्यैवेंद्रस्याजौ संग्रामे हे सोम वाजिनं तथान्नवंतं तमिंद्रं वाजेषु बलेष्वन्नेषु वा निमित्तभूतेषु प्रावः। प्रकर्षेणारक्षयः। पानसमये तर्पयित्वा संग्रामसमये बलवर्धनेन जयप्राप्तशत्रुधनतर्पणेन वारक्ष इत्यर्थः ॥

यथा पूर्वेभ्यो जरितृभ्य इंद्र मय इवापो न तृष्यते बभूथ।
तामनु त्वा निविदं जोहवीमि विद्यामेषं वृजनं जीरदानुं ॥६॥
यथा। पूर्वेभ्यः। जरितृऽभ्यः। इंद्र। मयःऽइव। आपः। न। तृष्यते। बभूथ।
तां। अनु। त्वा। निऽविदं। जोहवीमि। विद्याम। इषं। वृजनं। जीरऽदानुं ॥६॥

यथा पूर्वेभ्य इति षष्ठी व्याख्याता ॥ ॥१९॥

आ चर्षणिप्रा इति पंचर्चं त्रयोदशं सूक्तमागस्त्यमैंद्रं त्रैष्टुभं। आ चर्षणिप्राः पंचेत्यनुक्रमणिका ॥ होत्रकशस्त्रेषु स्तोमवृद्धावस्य विशेषविनियोगः। ऐंद्राणि त्रैष्टुभान्यमरुच्छब्दान्यावपेरन्। आ॰ ७. १२.। इति सूचितत्वात् ॥

आ चर्षणिप्रा वृषभो जनानां राजा कृष्टीनां पुरुहूत इंद्रः।
स्तुतः श्रवस्यन्नवसोप मद्रिग्युक्त्वा हरी वृषणा याह्यर्वाङ् ॥१॥
आ। चर्षणिऽप्राः। वृषभः। जनानां। राजा। कृष्टीनां। पुरुऽहूतः। इंद्रः।
स्तुतः। श्रवस्यन्। अवसा। उप। मद्रिक्। युक्त्वा। हरी इति। वृषणा। आ। याहि। अर्वाङ् ॥१॥

अयमिंद्रश्चर्षणिप्राः। चर्षणयो मनुष्याः। तेषां धनादिना प्रीणयिता। जनानां सर्वेषां वृषभः कामानां वर्षिता। तथा कृष्टीनां। मनुष्यनामैतत्। मनुष्याणां राजा स्वामी पुरुहूतो बहुभिराहूतः। ईदृश इंद्रोऽस्मानाजानात्वागच्छतु वा। उत्तरार्धः परोक्षवादः। हे इंद्र स्तुतोऽस्माभिः श्रवस्यन् हविर्लक्षणान्नमिच्छन्नवसास्मद्रक्षणेन तर्पणेन वा युक्तः सन्मद्रिगस्मदभिमुखमंचन् वृषणा वर्षकौ युवानौ हरी अश्वौ युक्त्वा रथे योजयित्वार्वाङस्मदभिमुखमा याहि। आगच्छ ॥

ये ते वृषणो वृषभास इंद्र ब्रह्मयुजो वृषरथासो अत्याः।
ताँ आ तिष्ठ तेभिरा याह्यर्वाङ् हवामहे त्वा सुत इंद्र सोमे ॥२॥
ये। ते। वृषणः। वृषभासः। इंद्र। ब्रह्मऽयुजः। वृषऽरथासः। अत्याः।
तान्। आ। तिष्ठ। तेभिः। आ। याहि। अर्वाङ्। हवामहे। त्वा। सुते। इंद्र। सोमे ॥२॥

हे इंद्र ते तव संबंधिनो वृषणो वर्षका युवानो वर्षणवंतो वा वृषभासः श्रेष्ठा ब्रह्मयुजः परिवृढेन मंत्रेण

युज्यमाना वृषरथासो वर्षणरथवंतः। तत्र नियुक्ता इत्यर्थः। ईदृशा अत्या अश्वा ये संति ताना तिष्ठ। आश्रय। आरोह। तेभिस्तैरर्वाङस्मदभिमुखमा याहि। आगच्छ। वयं च हे इंद्र सोमे सुते सति त्वा त्वां हवामहे। आह्वयामः॥

आ तिष्ठ रथं वृषणं वृषा ते सुतः सोमः परिषिक्ता मधूनि।
युक्त्वा वृषभ्यां वृषभ क्षितीनां हरिभ्यां याहि प्रवतोप मद्रिक्॥३॥
आ। तिष्ठ। रथं। वृषणं। वृषा। ते। सुतः। सोमः। परिऽसिक्ता। मधूनि।
युक्त्वा। वृषऽभ्यां। वृषभ। क्षितीनां। हरिऽभ्यां। याहि। प्रऽवता। उप। मद्रिक्॥३॥

हे इंद्र त्वं रथमा तिष्ठ। आश्रय यज्ञगमनार्थं। कीदृशं रथं। वृषणं वर्षकं कामानां। किमर्थमिति चेत् उच्यते। ते त्वदर्थं वृषा वर्षकः सोमः सुतः। अभिषुतः। तथा मधूनि मधुराणि घृतक्षीरादीनि परिषिक्ता। परितः सिक्तानि संपादितानि। यद्वा। मधूनि मधुराः सोमरसाश्चमसेषु पूरिताः। आगमनप्रकार उच्यते। हे वृषभ वर्षकेंद्र वृषभ्यां वर्षकाभ्यां हरिभ्यां युक्त्वा रथं योजयित्वा क्षितीनां कर्मसु निवसतां यजमानानामस्माकमनुग्रहाय। क्षितीनां वृषभेति वा योज्यं। प्रवता वेगवता रथेन मद्रिङ्मदभिमुखमंचन्मदाभिमुख्येनोप याहि॥

अयं यज्ञो देवया अयं मियेध इमा ब्रह्माण्ययमिंद्र सोमः।
स्तीर्णं बर्हिरा तु शक्र प्र याहि पिबा निषद्य वि मुचा हरी इह॥४॥
अयं। यज्ञः। देवऽयाः। अयं। मियेधः। इमा। ब्रह्माणि। अयं। इंद्र। सोमः।
स्तीर्णं। बर्हिः। आ। तु। शक्र। प्र। याहि। पिब। निऽसद्य। वि। मुच। हरी इति। इह॥४॥

अहर्गणेषु मध्येष्वहःसु हारियोजनग्रहस्य याज्या। अग्निष्टोमोऽत्यग्निष्टोम इति खंडे सूत्रितं। अयं यज्ञो देवया अयं मियेध इतीतरेषु। आ° ६. ११.। इति॥ हे इंद्र अयं यज्ञो देवया देवान्गच्छन्भवति। तथायं यज्ञो मियेधः। मेधः पशुः। पशुर्वै मेध इति हि श्रुतिः। इमेमानि ब्रह्माणि मंत्राः। अयं सुतः सोमः। स्तीर्णं बर्हिः। आसनायास्तृता दर्भाः। एते पदार्थास्त्वदुचिता एवं संपादिताः। हे शक्रेंद्र तु पुनः किमित्युक्ति आ प्र याहि। प्रकर्षेण शीघ्रमागच्छ। आगत्य च निषद्य बर्हिष्युपविश्य पिब सोमं। तदर्थमिहास्मिन्देवयजने हरी अश्वौ वि मुच। वियोजय॥ छांदसो गुमभावः॥

ओ सुष्टुत इंद्र याह्यर्वाङुप ब्रह्माणि मान्यस्य कारोः।
विद्याम वस्तोरवसा गृणंतो विद्यामेषं वृजनं जीरदानुं॥५॥
ओ इति। सुऽस्तुतः। इंद्र। याहि। अर्वाङ्। उप। ब्रह्माणि। मान्यस्य। कारोः।
विद्याम। वस्तोः। अवसा। गृणंतः। विद्याम। इषं। वृजनं। जीरऽदानुं॥५॥

हे इंद्र सुष्टुतोऽस्माभिः सम्यक्स्तुतः सन्नर्वाङस्मदभिमुखमा याहि। आगच्छैव। मा विलंबय। किमुद्दिश्य। मान्यस्य माननीयस्य कारोः स्तोतुर्होतुः कर्तुर्यजमानस्य वा ब्रह्माणि मंत्रानुपोपलक्ष्य। गृणंतः स्तुवंतोऽभिमतं शब्दयंतो वा वयमवसा त्वद्रक्षणेन रक्षिताः संतो वस्तोर्वस्तुं सुखेन संस्थातुमहनि वा सर्वेष्वहःस्वन्नादिकं विद्याम। लभेमहि। विद्यामेत्यादि व्याख्यातं॥ ॥२०॥

यद्ध स्येति पंचर्चं चतुर्दशं [illegible]तमागस्त्यमैंद्रं त्रैष्टुभं। यद्ध [illegible]॥ विशेषविनियोगः पूर्ववत्॥

यद्ध स्या त इंद्र श्रुष्टिरस्ति यया बभूथ जरितृभ्य ऊती।
मा नः कामं महयंतमा धग्विश्वा ते अश्यां पर्याप आयोः॥१॥

यत् । ह । स्या । ते । इंद्र । श्रुष्टिः । अस्ति । यया । बभूथ । जरितृऽभ्यः । ऊती ।
मा । नः । कामं । महयंतं । आ । धक् । विश्वा । ते । अश्यां । परि । आपः । आयोः ॥१॥

हे इंद्र यद्वा स्यासौ प्रसिद्धा श्रुष्टिः सर्वत्र श्रूयमाणा समृद्धिस्ते तवास्ति यया जरितृभ्यः स्तोतृभ्य ऊत्यूती रक्षणाय बभूथ समर्थो भवसि नोऽस्माकं महयंतमस्मान्महतः कुर्वाणं काममभीष्टं मा धक्। मा धाक्षीः। ते तव संबंधीनि विश्वा सर्वाणि भोगजातान्याप आप्तव्यानि। यद्वा। विश्वा सर्वा आप आप्ताः श्रुतय आयोर्मनुष्यस्योचिताः। पर्यश्यां। परितो व्याप्नुयां॥

न घा राजेंद्र आ दभन्नो या नु स्वसारा कृणवंत योनौ ।
आपश्चिदस्मै सुतुका अवेषन्गमन्न इंद्रः सख्या वयश्च ॥२॥

न । घ । राजा । इंद्रः । आ । दभत् । नः । या । नु । स्वसारा । कृणवंत । योनौ ।
आपः । चित् । अस्मै । सुऽतुकाः । अवेषन् । गमत् । नः । इंद्रः । सख्या । वयः । च ॥२॥

अयं राजा राजमान ईश्वरो वेंद्रो नोऽस्मदीयानि कर्माणि ना दभत्। सर्वतो न हिंस्यात्। कानीति उच्यते। या यानि कर्माणि वृष्ट्यादिरूपाणि स्वसारा परस्परं स्वरूभूते स्वयंसरणभूते अहोरात्रे। नु पूरणः। योनौ स्वकीये स्थाने कृणवंत॥ द्विवचनस्थाने बहुवचनं॥ कुरुतः॥ कृवि हिंसाकरणयोश्च। धिन्विकृण्व्योरच्चेत्युप्रत्ययः। बहुलग्रहणाच्छप्॥ तानींद्रोऽप्यनुजानात्वित्यर्थः। स्वरूभूतावध्वर्युयजमानौ वा कुरुतः। यद्वा। स्वसारोऽंगुलयो योनौ फलोत्पादनस्थाने यज्ञे यानि कुर्वंतीति योज्यं। किंचास्मा इंद्राय सुतुकाः शोभनबलहेतून्यापोऽप्कार्याणि हवींष्यवेषन्। व्याप्नुवंति। नोऽस्मभ्यमिंद्रः सख्या सख्यानि वयश्च प्रभूतमन्नं च गमत्। गमयतु॥

जेता नृभिरिंद्रः पृत्सु शूरः श्रोता हवं नाधमानस्य कारोः ।
प्रभर्ता रथं दाशुष उपाक उद्यंता गिरो यदि च त्मना भूत् ॥३॥

जेता । नृऽभिः । इंद्रः । पृत्ऽसु । शूरः । श्रोता । हवं । नाधमानस्य । कारोः ।
प्रऽभर्ता । रथं । दाशुषः । उपाके । उत्ऽयंता । गिरः । यदि । च । त्मना । भूत् ॥३॥

अयमिंद्रः शूरो विक्रांतः सन्नृभिः संग्रामनेतृभिर्मरुद्भिः सहितः सन्पृत्सु संग्रामेषु जेता जयशीलः शत्रूणां तथा नाधमानस्य त्वदनुग्रहं याचमानस्य कारोः स्तोतुर्हवमाह्वानं श्रोता भवति। किंच यदि च यदा च त्मनात्मनानन्यप्रेरित एव गिरः स्तुतिरूपाणि वचांसि स्तोतॄन्वोद्यंतोच्छ्रयिता भूत् भवेत् तदा दाशुषो हविर्दत्तवतो यजमानस्योपाके। समीपनामैतत्। समीप एव यागदेशे रथं प्रभर्ता। सम्यक्प्रभरन्भवति॥ जेतेत्यादिषु तृन्नंतेषु न लोकाव्ययेत्यादिना कर्मणि षष्ठीप्रतिषेधः॥ यदा स्तुतिं श्रोतुमिच्छति तदा स्वयमेव शीघ्रं रथं धावयित्वा यागं प्राप्नोतीत्यर्थः॥

एवा नृभिरिंद्रः सुश्रवस्या प्रखादः पृक्षो अभि मित्रिणो भूत् ।
समर्य इषः स्तवते विवाचि सत्राकरो यजमानस्य शंसः ॥४॥

एव । नृऽभिः । इंद्रः । सुऽश्रवस्या । प्रऽखादः । पृक्षः । अभि । मित्रिणः । भूत् ।
सऽमर्ये । इषः । स्तवते । विऽवाचि । सत्राऽकरः । यजमानस्य । शंसः ॥४॥

अयमिंद्रो नृभिः कर्मनिर्वाहकैर्यजमानैर्दत्तं पृक्षो हविर्लक्षणमन्नं सुश्रवस्या शोभनान्नेच्छयान्नेच्छुर्वा प्रखादः प्रकर्षेण खादिता एवैवं एवमेव पूर्वं यथा तथैव मित्रिणः सहायवतोऽपि यजमानस्य शत्रूनभि भूत्। अभिभ-

वति। यद्वा। नृभिर्वृष्टिनेतृभिर्मरुद्भिः सहितोऽयमिंद्रः सुश्रवस्या प्रस्वादः सन्नेवमेव मिचिणा ऋत्विग्रूपमित्रवतो यजमानस्यार्थे तदभिमतायाभि भूत्। अभीत्यनर्थकः। भवति। आभिमुख्येन वा भवति। तस्य हविः स्वीकृत्य तदभिमताय भवतीत्यर्थः। अथ तथाभूः सन् विवाचि विविधपरस्पराह्वानध्वनियुक्ते समर्ये संग्रामे विविधस्तोत्रशस्त्रध्वनियुक्ते समर्ये मर्त्ययुक्ते यज्ञे वा तन्निमित्तं यजमानस्य शंसः शंसकः सन् सत्राकरः फलानां सत्यकार्ययमिंद्र इषो हविर्लक्षणमन्नं स्तवते। स्तौति॥

त्वया॑ व॒यं म॑घवन्निंद्र॒ शत्रू॑नभि ष्या॑म मह॒तो मन्य॑मानान्।
त्वं त्रा॒ता त्वमु॑ नो वृ॒धे भू॑र्वि॒द्यामे॒षं वृ॒जनं॑ जी॒रदा॑नुं॥५॥
त्वया॑। व॒यं। म॒घ॒ऽव॒न्। इं॒द्र॒। शत्रू॑न्। अ॒भि। स्या॒म॒। म॒ह॒तः। मन्य॑मानान्।
त्वं। त्रा॒ता। त्वं। ऊं॒ इति॑। नः॒। वृ॒धे। भूः॒। वि॒द्याम॑। इ॒षं। वृ॒जनं॑। जी॒रऽदा॑नुं॥५॥

हे मघवन्धनवन्निंद्र त्वया सहायेन वयं यजमाना महतो मन्यमानानतिबलानवध्यान्मन्यमानाञ्छत्रूनभि ष्याम। अभिभवितारो भवेम। हे इंद्र त्वं त्राता त्वमेवास्माकं रक्षकः। अतस्त्वमु त्वमेव नोऽस्माकं वृधे धनादिवर्धनाय भूः। भव। विद्यामेत्यादि गतं॥ ॥२१॥

पूर्वीरहमिति षडृचं पंचदशं सूक्तं त्रैष्टुभं। उपांत्या बृहती। अत्र त्रयाणां तृचानां लोपामुद्रागस्त्यतच्छिष्यैर्दृष्टत्वात्त एवर्षयः। सूक्तप्रतिपाद्योऽर्थो रतिर्देवता। अत्रानुक्रमणिका। पूर्वीः षड्जायापत्योर्लोपामुद्राया अगस्त्यस्य च तृचाभ्यां रत्यर्थं संवादं श्रुत्वांतेवासी ब्रह्मचार्यंत्ये बृहत्यादी अपश्यदिति॥ विशेषविनियोगो लैंगिकः॥

लोपामुद्राह॥

पू॒र्वीर॒हं श॒रदः॑ शश्रमा॒णा दो॒षा वस्तो॑रु॒षसो॑ ज॒रयं॑तीः।
मि॒नाति॒ श्रियं॑ ज॒रिमा त॒नूना॒मप्यू॒ नु पत्नी॒र्वृष॑णो जगम्युः॥१॥
पू॒र्वीः। अ॒हं। श॒रदः॑। श॒श्र॒मा॒णा। दो॒षाः। वस्तोः॑। उ॒षसः॑। ज॒रयं॑तीः।
मि॒नाति॑। श्रियं॑। ज॒रि॒मा। त॒नूनां॑। अपि॑। ऊं॒ इति॑। नु। पत्नीः॑। वृष॑णः। ज॒ग॒म्युः॒॥१॥

हे अगस्त्य अहं लोपामुद्रा पूर्वीः शरदः पुरातनानसंख्यातान्संवत्सरान् दोषा रात्रीर्वस्तोरहानि तथा देहं जरयंतीरुषस उषःकालांश्च॥ सर्वत्रात्यंतकालसंयोगे द्वितीया॥ अद्यतनकालपर्यंतं बहुसंवत्सरं कात्स्न्र्येन त्वच्छुश्रूषया शश्रमाणा श्रांताभूवं। इदानीं तु जरिमा जरा तनूनामंगानां श्रियं सौंदर्यं मिनाति। हिनस्ति। एवमपि मामुपगृह्णासीत्यर्थः। अप्यू नु। अपिः संभावनायां। उ इत्यवधारणे। न्विति वितर्के। इदानीमपि किं संभावनीयं। लोके हि पत्नीः स्त्रियो वृषणः सेक्तारः पुरुषा जगम्युः। गच्छेयुः। संभोगं कुर्युः। अतो मां किमित्थवमन्यसे। इदानीमपि वा संभावयेत्यर्थः॥

सा तमेवाह॥

ये चि॒द्धि पूर्व॑ ऋत॒साप॒ आस॑न्त्सा॒कं दे॒वेभि॒रव॑दन्नृ॒तानि॑।
ते चि॒दवा॑सु॒र्नह्यंत॒मापुः॒ समू॒ नु पत्नी॒र्वृष॑भि॒र्जग॑म्युः॥२॥
ये। चि॒त्। हि। पूर्वे॑। ऋ॒त॒ऽसापः॑। आस॑न्। सा॒कं। दे॒वेभिः॑। अव॑दन्। ऋ॒तानि॑।
ते। चि॒त्। अव॑। अ॒सुः॒। न॒हि। अंतं॑। आ॒पुः॒। सं। ऊं॒ इति॑। नु। पत्नीः॑। वृष॑ऽभिः।
ज॒ग॒म्युः॒॥२॥

हे पतेऽगस्त्य ये चिद्धि येऽपि तु पूर्वे पुरातना ऋतसापः सत्यस्यापयितारो व्याप्नुवाना महर्षय आसन् ते देवेभिर्देवैः साकं सहर्तानि सत्यवाक्यान्यवदन्। वदंति। ये महत्तपो यज्ञं वानुतिष्ठंति ये च देववाक्यानि देवस्तुतिरूपाणि वदंति ते चित्। चिदप्यर्थे। ते चिदवासुः। अवचिपंति रेतः॥ स्यतिरुपसृष्टो विमोचने वर्तते॥ ते नह्यंतमापुः। नहि ब्रह्मचर्यादेरंतं प्राप्नुवन्। ब्रह्मचर्यमनिषिद्धर्तुकालगमनमपि कुर्वंतीत्यर्थः। तथा पत्नीः पत्न्यश्च तपस्यमाना वृषभिर्भोगवर्षकैः पतिभिः सह समू नु जगम्युः। उ न्विति पूरणौ। संगच्छेरन्। अतस्त्वं कथं मां नानुभवसीत्यर्थः॥

अगस्त्यस्तामाह॥

न मृषा श्रांतं यदवंति देवा विश्वा इत्स्पृधो अभ्यश्नवाव।
जयावेदत्र शतनीथमाजिं यत्सम्यंचा मिथुनावभ्यजाव॥३॥

न। मृषा। श्रांतं। यत्। अवंति। देवाः। विश्वाः। इत्। स्पृधः। अभि। अश्नवाव।
जयाव। इत्। अत्र। शतऽनीथं। आजिं। यत्। सम्यंचा। मिथुनौ। अभि। अजाव॥३॥

भोः पत्नि त्वया मया न मृषा श्रांतं। व्यर्थं नैव खिन्नमावाभ्यां। यद्यस्माद्देवा अवंति रक्षंति तपोभिः प्रीता देवाः। विश्वाः सर्वाः स्पृधोऽभ्यश्नवाव। अभितो व्याप्नुयाव। अत्रास्मिन्संसारे शतनीथमपरिमितभोगप्राप्तिसाधनमाजिं प्राप्तिं परस्परं जयाव। जयलक्षणं सुरतसंग्रामं वा जयाव। यद्यस्मात्सम्यंचा सम्यक्परस्परं गच्छंतौ प्रजयंतौ वा मिथुना मिथुनौ स्त्रीपुरुषरूपौ संतावभ्यजाव। त्वं चाहमपि परस्परमभिजयावेत्येवं तयोक्तं संभोगं संभावयामास॥

अथ चतुर्थ्याप्यगस्त्य आह॥

नदस्य मा रुधतः काम आगन्नित आजातो अमुतः कुतश्चित्।
लोपामुद्रा वृषणं नी रिणाति धीरमधीरा धयति श्वसंतं॥४॥

नदस्य। मा। रुधतः। कामः। आ। अगन्। इतः। आऽजातः। अमुतः। कुतः। चित्।
लोपामुद्रा। वृषणं। निः। रिणाति। धीरं। अधीरा। धयति। श्वसंतं॥४॥

हे जाये नदस्य नदनस्य जपशब्दयितुर्जपाध्ययनकर्तू रुधतो रेतो निरोद्धुर्ब्रह्मचर्यमास्थितस्य॥ उभे कर्मणि षष्ठ्यौ॥ उक्तलक्षणं मां काम आगन्। आगमत्। नदनस्य मा रुधतः काम आगमदिति निरुक्तं। ५. २.। कस्य हेतोरिति उच्यते। इतस्त्वत्संगमनिमित्तात् तथामुतो वसंतादिकालात् कुत[illegible]तः सर्वत उत्पन्नः। यद्वा। इत एतल्लोकजनितादमुतो लोकांतरजनिताद्वा कुतश्चिन्निमित्तात्कामात्। कथमिति उच्यते। इयं लोपामुद्रा वृषणं रेतसः प्रवर्तकं मां नी रिणाति। नितरां गच्छतु। किंच धीरं धीमंतं नियमादविचालिनं श्वसंतं महाप्राणं महाबलमधीरा कातरैषा योषिद्धयति। उपभुंक्तां॥

अथानयोर्दंपत्योः संभोगसंलापं श्रुत्वा तत्प्रायश्चित्तं चिकीर्षुरुत्तराभ्यामाह। अनयोर्विनियोगः शौनकेनोक्तः। इमं नु सोममित्येते द्वे ऋचौ प्रयतो जपन्। सर्वान्कामानवाप्नोति पापेभ्यश्च प्रमुच्यते। ऋग्वि० १. २६.। इति॥

इमं नु सोममंतितो हृत्सु पीतमुप ब्रुवे।
यत्सीमागश्चकृमा तत्सु मृळतु पुलुकामो हि मर्त्यः॥५॥

इमं। नु। सोमं। अंतितः। हृत्ऽसु। पीतं। उप। ब्रुवे।
यत्। सीं। आगः। चकृम। तत्। सु। मृळतु। पुलुऽकामः। हि। मर्त्यः॥५॥

--- उपेत्य मनसा प्राप्य प्रार्थयते । किं ब्रवीति उच्यते । यदागो गुर्वोः कामप्रलापश्रवणविषयं पापं चकृम कृतवंतो वयं तत्तस्मादागसः स सोमः सु सम्यग्मृळतु । सुखयतु । पापजनितदुःखं मा करोत्वित्यर्थः । महत्पापमनुभुज्यमानं प्रार्थनया कथं लुप्यत इति अत आह । हि यस्मान्मर्त्यो मनुष्यः पुलुकामो बहुकामनावान् । अल्पेनैव कर्मणा बहुकामानाकालयति । यस्मादेवं तस्मात्परिहरेत्यर्थः । यद्वा । अयमपवर्जनीयतया प्राप्यत इवेत्याह । पुलुकामो हि खलु मर्त्यः कामहतः सन् कामेन निरुद्ध एव वर्तते । अतस्तयोरुत्सेकोऽयुक्तः । तच्छब्दश्रवणदोषोऽपि प्रामादिकोऽस्माकं प्राप्तेन सोमेन परिहर्तव्य इत्यर्थः । यद्वा । अयं मंत्रश्चंद्रपरो व्याख्येयो मनसोऽभिमानित्वात्तस्य पापस्यापि मनस्येव संभावितत्वात् । अस्मिन्पक्षे हृत्सु पीतं हृदयस्थितमित्यर्थः । शिष्टं स्पष्टं ॥

अथ विनियुक्तयोर्मध्ये द्वितीयया सूक्ते षष्ठ्यांतेवास्याह ॥

अगस्त्यः खनमानः खनित्रैः प्रजामपत्यं बलमिच्छमानः ।
उभौ वर्णावृषिरुग्रः पुपोष सत्या देवेष्वाशिषो जगाम ॥ ६ ॥
अगस्त्यः । खनमानः । खनित्रैः । प्रऽजां । अपत्यं । बलं । इच्छमानः ।
उभौ । वर्णौ । ऋषिः । उग्रः । पुपोष । सत्याः । देवेषु । आऽशिषः । जगाम ॥ ६ ॥

अयमगस्त्यो मनुष्यः खनित्रैः फलस्योत्पादनसाधनैर्यज्ञस्तोत्रादिभिः खनमानः फलमभिमतमुत्पादयन् प्रजां प्रकर्षेण पुनःपुनर्जायमानमपत्यं कुलस्यापतनसाधनं पुत्रादिकं बलं चेच्छमानः सन् । यद्वा । प्रजां भृत्यादिरूपां चेच्छन् । ऋषिरतींद्रियद्रष्टा महानुभाव उग्र उद्गूर्णः संसारे संचरन्नप्यपापः सन्नुभौ वर्णौ वर्णनीयावाकारौ कामं च तपश्च पुपोष । सत्या आशिषो देवेषु देवेभ्यो जगाम । प्राप्तवान् । यतोऽयं महानुभावस्तस्मादस्मान्मातीत्यर्थः ॥ ॥ २२ ॥ ॥ २३ ॥

अथ चतुर्विंशेऽनुवाके द्वादश सूक्तानि । तत्र युवो रजांसीति दशर्चं प्रथमं सूक्तमागस्त्यं त्रैष्टुभं । तुह्यादिपरिभाषयेदमादिसूक्तपंचकमाश्विनं । युवोर्दशाश्विनं वा [illegible] ॥ एतदादीनि तृतीयवर्जितानि पंच सूक्तानि [illegible]ष्टुभे छंदसि विनियुक्तानि । अथाश्विन इति खंडे सूत्रितं । युवो रजांसीति पंचानां तृतीयमुद्धरेत् । आ० ४. १५. । इति ॥

युवो रजांसि सुयमासो अश्वा रथो यद्वां पर्यर्णांसि दीयत् ।
हिरण्यया वां पवयः प्रुषायन्मध्वः पिबंता उषसः सचेथे ॥ १ ॥
युवोः । रजांसि । सुऽयमासः । अश्वाः । रथः । यत् । वां । परि । अर्णांसि । दीयत् ।
हिरण्ययाः । वां । पवयः । प्रुषायन् । मध्वः । पिबंतौ । उषसः । सचेथे इति ॥ १ ॥

हे अश्विनौ युवोर्युवयोरश्वा रथवोढारो रजांसि रंजकाँल्लोकान् सुयमासः शोभननियमनाः । लोकत्रयसंचारिण इत्यर्थः । कदेति आह । यद्यदा वां रथोऽर्णांस्युदरणीयानभिमतदेशान् परि दीयत् परिगच्छेत् परितो गच्छति वा । तदेत्यर्थः । दीयतिर्गतिकर्मा दीयति तकतीति तत्कर्मसु पाठात् । किंच रथागमनकाले वां युवयोः पवयो वज्रा रथनेमयो वा हिरण्यया हिरण्मयाः प्रुषायन् । प्रुष्णंत्यभिमतं । यद्वा । हिरण्ययानि पवयो मधुपात्राणि वां युवाभ्यामर्थाय । यस्मादेवं तस्माद्युवां मध्वो मधुनो मधुसदृशस्य सोमरसस्य ॥ कर्मणि षष्ठी ॥ सोमरसं पिबंतावास्वादयंतावुषस उषःसंबंधिनि काले सचेथे । यज्ञं संगच्छेथे । अत्र क्रमो न विवक्षितः । उषःकाल एवागत्य मधुरं सोमरसं पिबतमित्यर्थः ॥

युवमत्यस्याव नक्षथो यद्विपत्मनो नर्यस्य प्रयज्योः ।
स्वसा यद्वां विश्वगूर्ती भराति वाजायेट्टे मधुपाविषे च ॥ २ ॥

युवं । अत्यस्य । अवं । नक्षथः । यत् । विऽपत्मनः । नर्यस्य । प्रऽयज्योः ।
स्वसा । यत् । वां । विश्वगूर्ती इति विश्वऽगूर्ती । भराति । वाजाय । ईट्टे । मधुऽपौ ।
इषे । च ॥२॥

हे अश्विनौ युवं युवां यदत्यस्यातनशीलस्य सततसंचारिणो विपत्मनो विविधगमनस्य विचित्रगमनस्य वा नर्यस्य मनुष्याणां हितस्य प्रयज्योः प्रकर्षेण पूज्यस्य ॥ एतानि कर्मणि षष्ठ्यंतानि ॥ उक्तरूपं रथमवावस्तात्तदुदयात्पूर्वं नक्षथः व्याप्नुथो देवयजनं गंतुं । किंच यद्यदा हे विश्वगूर्ती सर्वस्तुत्यौ सर्वदोद्यूर्णौ वा वां युवयोः स्वसा स्वसृस्थानीया स्वयंसारिणी वोषा भराति पोषते त्वदागमनाय प्रभातं करोति । यदा हे मधुपौ मधुरस्य सोमरसस्य पातारौ युवां यजमानो वाजाय बलाय गमनाय वेषे प्रभूतान्नायेट्टे स्तौति । तदा रथं प्राप्नुथ इत्यर्थः ॥

युवं पय उस्रियायामधत्तं पक्वमामायामव पूर्व्यं गोः ।
अंतर्यद्वनिनो वामृतप्सू ह्वारो न शुचिर्यजते हविष्मान् ॥३॥
युवं । पयः । उस्रियायां । अधत्तं । पक्वं । आमायां । अवं । पूर्व्यं । गोः ।
अंतः । यत् । वनिनः । वां । ऋतप्सू इत्यृतऽप्सू । ह्वारः । न । शुचिः । यजते ।
हविष्मान् ॥३॥

हे अश्विनौ युवं युवामुस्रियायां । गोनामैतत् । भोगोत्स्राविण्यां गवि पयोऽधत्तं । अधारयतं । स्थापितवंतौ । तथामायामपक्वायां पक्वं परिपक्वं भोगयोग्यं गोसंबंधि दुग्धं पूर्व्यं पूर्वभवं तत्रवोत्पन्नमवावस्ताद आरयतं । गवि क्षीरमुत्पाद्य पुनर्भोगाय पृथक्कृतवंतावित्यर्थः । यद्यस्मात् हे ऋतप्सू सत्यस्वरूपौ यज्ञियहविर्भक्षयितारौ वा हे अश्विनौ वां वनिन उदकवत उदकोपलक्षितहविष्मतो यज्ञस्यांतर्मध्ये हविष्मान् प्रदेयहविषा तद्वान् शुचिः शुद्धो यजमानो यजते पूजयति युवां तस्मादेवमकुरुतं । यद्वा । यदैवं यजमानः करोति तदेत्यर्थः । तत्र दृष्टांतः । वनिनो वनसंबंधिवृक्षसमूहस्यांतर्मध्ये ह्वारो न चोर इव । स यथा जागरूको वर्तते तथा यजमानोऽपीत्यर्थः ॥

युवं ह घर्मं मधुमंतमत्रयेऽपो न क्षोदोऽवृणीतमेषे ।
तद्वां नरावश्विना पश्वइष्टी रथ्येव चक्रा प्रति यंति मध्वः ॥४॥
युवं । ह । घर्मं । मधुऽमंतं । अत्रये । अपः । न । क्षोदः । अवृणीतं । एषे ।
तत् । वां । नरौ । अश्विना । पश्वःऽइष्टिः । रथ्याऽइव । चक्रा । प्रति । यंति । मध्वः ॥४॥

अत्रेतिहासमाहुः । प्रवर्ग्येण प्रचरंतमत्रिं राक्षसास्तप्ते घर्मेऽपातयन् । स च तप्यमानोऽश्विनौ तुष्टाव । तौ च स्तुत्या हृष्टमनसावरक्षतामिति । अपरेऽग्नौ क्षिप्तमपालयतामित्याहुरिति । हे अश्विनौ युवं युवां मधुमंतं पयोघृतरूपाभ्यां मधुभ्यां तद्वंतं घर्मं दीप्तं प्रवर्ग्यमेषे सौख्यमिच्छतेऽत्रय एतन्नाम्ने महर्षये क्षोदः क्षोदांसि क्षोद्यमानान्यपो नोदकानीवावृणीतं । अवारयतं । औष्ण्यं शैत्यसुखं कृतवंतौ । तप्तघर्मसकाशाद्रक्षितवानित्यर्थः । यद्वा । अत्रये क्षोदः । उदकनामैतत् । तत्स्थं शैत्यं लक्ष्यते । अपः क्षोदो न । अप इति षष्ठ्यर्थे द्वितीया । उदकानां शैत्यं यथा भवति तद्वत् । पक्षांतरे तु घर्मं दीप्तमग्निं मधुमंतं कृत्वावृणीतं । सुखयतमित्यर्थः । तथा च मंत्रांतरं । तप्तं घर्ममोम्यावंतमत्रये । ऋ॰ १. ११२. ७. । इति । तत्तस्मात् यस्मादेवं तस्मात् हे नरौ नेतारौ नराकारौ वाश्विनाश्विनौ वां युवाभ्यां पश्वइष्टिः । पशुरित्यग्नेर्नाम । अग्निः पशुरासीदित्यादिश्रुतेः । तै॰ सं॰ ५. ७. २६. । यद्वा । पशु[illegible] । तस्याग्नेरिष्टिर्भवति । अग्नौ यागः सर्वो युष्मदर्थं

प्रवर्तंत इत्यर्थः। यद्वा। पशुसाध्यो यागो युवाभ्यां प्रवर्तत इति शेषः। आश्विनं धूम्रललाममा लभेत यो दुर्ब्राह्मणः सोमं पिपासेत्। तै॰ सं॰ २. १. १०. १.। इत्यादिनाप्यश्विभ्यां पशुर्विहितः। तथा मध्वो मधुसदृशाः सोमरसा अपि युवाभ्यां प्रति यंति। अभिगच्छंति। तत्र दृष्टांतः। रथ्येव चक्रा रथसंबंधीनि चक्रा चक्राणीव। तानि यथा प्रवणदेशमभिगच्छंति तद्वत्॥

आ वां दानाय ववृतीय दस्रा गोरोहेण तौग्र्यो न जिव्रिः।
अपः क्षोणी सचते माहिना वां जूर्णो वामक्षुरंहसो यजत्रा ॥५॥
आ। वां। दानाय। ववृतीय। दस्रा। गोः। ओहेन। तौग्र्यः। न। जिव्रिः।
अपः। क्षोणी इति। सचते। माहिना। वां। जूर्णः। वां। अक्षुः। अंहसः। यजत्रा ॥५॥

हे दस्रा शत्रूणामुपक्षपयितारावश्विनौ वां युवयोर्दानायास्मदभिमताय युवाभ्यां वाहयितुमा ववृतीय। आवर्तयामि यागदेशं॥ वृतेरंतर्भावितण्यर्थस्येदं॥ केन साधनेनेति तदुच्यते। गोः स्तुतिरूपाया वाच ओहेन वहनेन साधनेन। यद्वा। आवर्तनकाल उच्यते। गोर्गंत्र्या उषसो वहनेन। जिव्रिर्जीर्णो जयशीलो वा तौग्र्यो न तुग्राख्यस्य राज्ञः पुत्रो भुज्युरिव। स यथा शत्रुभिः संताड्य समुद्रे पातितो युवां परितोष्य स्वोद्धाराय स्वसमीपमानयत तद्वदित्यर्थः। इयमाख्यायिका तुग्रो ह। ऋ॰ १. ११६. ३.। भुज्युमंहसः पिपृथः। ऋ॰ १०. ६५. १२.। नासत्या भुज्युं। ऋ॰ १. ११६. ४.। इत्यादिषु प्रसिद्धा च। किमाश्चर्यमहमावर्तयामीति। किंत्वपः क्षोणी। अप इत्यंतरिक्षनाम। क्षोणीति पृथिवीनाम। द्यावापृथिव्यावपि वां युवयोर्माहिना माहात्म्येन युवयोः प्रसादेन सर्वोपकारिण्याविति ख्यातिं सर्वप्रदेशव्यापित्वं वा सचते। सेवते प्रत्येकं। यद्वा। वां माहिना यजमानो द्यावापृथिव्यौ सचते। किंच हे यजत्रा यष्टव्यौ प्रसादादयमृषिर्जूर्णो जरया जीर्णांगः सन्नंहसः पापाज्जरालक्षणात्प्रमुच्याक्षुश्चिरकालव्याप्तो दीर्घजीवी भूयात्। यद्वा। हे यजत्रा वां प्रसादाज्जूर्णो जीर्णो यजमानोऽंहसो दुरितस्य हंत्रीरप एतल्लक्षणानि सोमरसरूपाण्युदकानि क्षोणी क्षोण्यां॥ सप्तम्यर्थे प्रगृह्यं॥ भूम्यां चिरकालमक्षुर्व्याप्तः सन् माहिना माहात्म्येन सचते। द्वितीयो वामित्ययमादरार्थः॥ ॥२३॥

नि यद्युवेथे नियुतः सुदानू उप स्वधाभिः सृजथः पुरंधिं।
प्रेषद्वेषद्वातो न सूरिरा महे ददे सुव्रतो न वाजं ॥६॥
नि। यत्। युवेथे इति। निऽयुतः। सुदानू इति सुऽदानू। उप। स्वधाभिः। सृजथः। पुरंऽधिं।
प्रेषत्। वेषत्। वातः। न। सूरिः। आ। महे। ददे। सुऽव्रतः। न। वाजं ॥६॥

हे सुदानू शोभनदानावश्विनौ यद्यदा नियुतोऽश्वान्नि युवेथे नियुंजाथे नियोजयथः ताभिरस्मद्यज्ञगमनाय संयुक्तौ भवथः तदा स्वधाभिरन्नैस्तत्कारणैरुदकैर्वा पुरंधिं बहूनां धात्रीं पृथिवीमुप सृजथः। एवं च सति सूरिः स्तोतायं यजमानो वातो न वायुरिव तद्वत् क्षिप्रं युवां प्रेषत्। तर्पयतु। वेषत्। व्याप्नोतु। कामयतां वा॥ प्रीणातेर्वेतेश्च लेटि रूपे॥ अनंतरं सुव्रतो नातिप्रशस्तोष्मादिकर्मवानिव वाजमन्नं महे महत्त्वायायं यजमान आ ददे। आदत्ते। स्वीकरोति॥ आङो दोऽनास्यविहरणे। पा॰ १. ३. २०.। इत्यात्मनेपदं। लोपस्त आत्मनेपदेष्विति तलोपः। यद्वा। छांदसे लिटि रूपं॥ स्वीकृत्य स्वमहत्त्वाय युवामेव तर्पयत्वित्यर्थः॥

वयं चिद्धि वां जरितारः सत्या विपन्यामहे वि पणिर्हितावान्।
अधा चिद्धि ष्माश्विनावनिंद्या पाथो हि ष्मा वृषणावंतिदेवं ॥७॥
वयं। चित्। हि। वां। जरितारः। सत्याः। विपन्यामहे। वि। पणिः। हितऽवान्।
अध। चित्। हि। स्म। अश्विनौ। अनिंद्या। पाथः। हि। स्म। वृषणौ। अंतिऽदेवं ॥७॥

वयं चिद्धि वयमपि जरितारस्तव स्तोतारः सत्याः सत्यफलाः संतो विपन्यामहे। विविधं स्तुमः। पणिः पणाधारो द्रोणकलशो वि हितवान्। स्थापितरसवानासीत्। यद्वा। पणिर्वणिग्लुब्धकोऽयष्टा हितवान्नियतधनो धनाढ्योऽप्ययष्टा वि। वियुज्यतां॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥ अधापि च चिद्धि ष्म। एते त्रयः पूरणाः। हे अश्विनावनिंद्या। प्रशस्यनामैतत्। हे प्रशस्यौ वृषणौ हे कामानां वर्षितारौ युवामंतिदेवं देवानामंतिके पाथः। सोमं पिबथः। यद्वा। अंतिके वर्तमानं देवान्प्राप्नुवानं सोममिति योज्यं॥

युवां चिद्धि ष्माश्विनावनु द्यून्विरुद्रस्य प्रस्रवणस्य सातौ।
अगस्त्यो नरां नृषु प्रशस्तः काराधुनीव चितयत्सहस्रैः॥८॥
युवां। चित्। हि। स्म। अश्विनौ। अनु। द्यून्। विऽरुद्रस्य। प्रऽस्रवणस्य। सातौ।
अगस्त्यः। नरां। नृषु। प्रऽशस्तः। काराधुनीऽइव। चितयत्। सहस्रैः॥८॥

हे अश्विनौ युवां। चिद्धि ष्मेति त्रयः पूरणाः। अनु द्यून् प्रतिदिनं विरुद्रस्य विशिष्टोष्णरूपदुःखद्रावणस्य विविधरोरूयमाणद्रवणवतो वा प्रस्रवणस्य वृष्ट्युदकसंस्त्यायस्य सातौ लाभे निमित्तभूते सत्यगस्त्य एतन्नामा महर्षिर्नरां नेतॄणां कर्मनिर्वाहकानां मनुष्याणां नृषु येषु तादृशा मनुष्याः संति तेषु प्रशस्तः प्रशस्यतरोऽयं सहस्रैरपरिमितैः स्तोत्रैश्चितयत्। चेतयति। स्तुत्या प्रबोधयति। तत्र दृष्टांतः। काराधुनीव। कारा शब्दः। तस्य धूनयितोत्पादयिता शंखादिः स इव। यद्वा। एतदप्यगस्त्यविशेषणं। कारः शब्दयिता होत्रादिः। तस्य धुनिः कंपयिता प्रेरक इव। इवेति संप्रत्यर्थे। अस्त्युपमार्थस्य संप्रत्यर्थे प्रयोग इति निरुक्तं। ७. ३१.॥

प्र यद्वहेथे महिना रथस्य प्र स्यंद्रा याथो मनुषो न होता।
धत्तं सूरिभ्य उत वा स्वश्व्यं नासत्या रयिषाचः स्याम॥९॥
प्र। यत्। वहेथे इति। महिना। रथस्य। प्र। स्यंद्रा। याथः। मनुषः। न। होता।
धत्तं। सूरिऽभ्यः। उत। वा। सुऽअश्व्यं। नासत्या। रयिऽसाचः। स्याम॥९॥

हे अश्विनौ युवां रथस्य गमनसाधनस्य महिना महत्त्वेन यद्यस्मात्प्र वहेथे धारयथो यज्ञं। यद्वा। रथस्य स्वर्गगमनसाधनस्य यागस्य धुरं वहतः। तथा हे स्यंद्रा स्यंदनशीलौ युवां याथः। गच्छथः। स्वस्थानं यज्ञारंभ आगच्छथः यज्ञसमाप्तौ पुनर्गच्छथश्च। तत्र दृष्टांतः। मनुषो होता मनुष्यस्य यजमानस्य होता यथा यज्ञप्रारंभ आगच्छति कर्मणि निर्वृत्ते पुनरपगच्छति तद्वत्। आगमनसमये सूरिभ्यः स्तोतृभ्यो धत्तं। धारयतं फलं। उत वा स्वश्व्यं शोभनाश्वसमूहं धत्तं। नासत्या। सत्सु भवौ सत्यौ। न असत्यौ नासत्यौ। हे तादृशौ त्वदनुग्रहाद्रयिसाचो धनसमवायिनः स्याम। भवेम॥

तं वां रथं वयमद्या हुवेम स्तोमैरश्विना सुविताय नव्यं।
अरिष्टनेमिं परि द्यामियानं विद्यामेषं वृजनं जीरदानुं॥१०॥
तं। वां। रथं। वयं। अद्य। हुवेम। स्तोमैः। अश्विना। सुविताय। नव्यं।
अरिष्टऽनेमिं। परि। द्यां। इयानं। विद्याम। इषं। वृजनं। जीरऽदानुं॥१०॥

हे अश्विना हे अश्विनौ वां युवयोः संबंधिनं शीघ्रगमनेन स्तुत्यं रथं वयमगस्त्या अद्यास्मिन्सुत्येऽहनि हुवेम। आह्वयेम। केन साधनेनेति उच्यते। स्तोमैः स्तोत्रैः। किमर्थं। सुविताय सुष्ठु प्राप्तये। कीदृशं। नव्यं स्तुत्यं नूतनं वा तथारिष्टनेमिमहिंसितचक्रवलयं द्यां परीयानं द्युलोकस्य परितो गच्छंतं। विद्यामेत्यादि गतं॥ ॥२४॥

कदु प्रेष्ठाविति नवर्चं द्वितीयं सूक्तमागस्त्यं त्रैष्टुभमाश्विनं। कदु नवेत्यनुक्रांतं॥ प्रातरनुवाकाश्विनशस्त्रयोर्विनियोगः पूर्वसूक्त एवोक्तः॥

कदु प्रेष्ठाविषां रयीणामध्वर्यंता यदुन्निनीथो अपां।
अयं वां यज्ञो अकृत प्रशस्तिं वसुधिती अवितारा जनानां॥१॥
कत्। ऊं इति। प्रेष्ठौ। इषां। रयीणां। अध्वर्यंता। यत्। उत्ऽनिनीथः। अपां।
अयं। वां। यज्ञः। अकृत। प्रऽशस्तिं। वसुधिती इति वसुऽधिती। अवितारा।
जनानां॥१॥

हे अश्विनौ प्रेष्ठौ प्रियतमौ वां युवां कदु कदा भविष्यति इषामिष्यमाणानामन्नानां रयीणां धनानां॥ कर्मणि षष्ठ्यौ॥ अन्नानि धनानि चोन्निनीथः ऊर्ध्वं प्रापयथः अध्वर्यंताध्वरं पारयितुमिच्छंतौ युवामपां वृष्ट्युदकानां वृष्ट्युदकानि चोन्निनीथः उत्कृष्टमधः प्रापयथ इति यत्तत्कदा। कस्मादेवमुच्यत इति उच्यते। अयं यज्ञोऽस्माभिरनुष्ठीयमानो वां युवयोरेव प्रशस्तिं प्रशंसां स्तुतिमकृत। करोति। यज्ञे शंसनीयानि शस्त्राणि युवामेव प्रशंसंतीत्यर्थः। यस्मादेवं तस्मात् हे वसुधिती वसुनो धनस्य धातारौ वस्तव्यकर्माणौ तथा हे जनानामवितारावुक्तलक्षणौ युवां कदान्नानां धनानां च दातारौ भवथ इति॥

आ वामश्वासः शुचयः पयस्पा वातरंहसो दिव्यासो अत्याः।
मनोजुवो वृषणो वीतपृष्ठा एह स्वराजो अश्विना वहंतु॥२॥
आ। वां। अश्वासः। शुचयः। पयःऽपाः। वातऽरंहसः। दिव्यासः। अत्याः।
मनःऽजुवः। वृषणः। वीतऽपृष्ठाः। आ। इह। स्वऽराजः। अश्विना। वहंतु॥२॥

अश्विनौ शोभनाश्वयुक्तौ वां युवामश्वासो युष्मदीया इहास्मिन्यज्ञ आ वहंतु। प्रापयंतु। अवशिष्टान्यश्वविशेषणानि। कीदृशास्ते। शुचयः शुभ्रा दीप्ता वा पयस्पा वृष्ट्युदकस्य पातारः वातरंहसो वायुवेगाः दिव्या दिविभवाः अत्या अतनशीलाः मनोजुवो मनोजवाः वृषणो वर्षकाः। युवान इत्यर्थः। वीतपृष्ठाः कांतपृष्ठाः। वपुष्मंत इत्यर्थः। स्वराजः स्वयमेव राजमानाः। ईदृशा भवंतु॥

आ वां रथोऽवनिर्न प्रवत्वान्त्सृप्रवंधुरः सुविताय गम्याः।
वृष्णः स्थातारा मनसो जवीयानहंपूर्वो यजतो धिष्ण्या यः॥३॥
आ। वां। रथः। अवनिः। न। प्रवत्वान्। सृप्रऽवंधुरः। सुविताय। गम्याः।
वृष्णः। स्थातारा। मनसः। जवीयान्। अहंऽपूर्वः। यजतः। धिष्ण्या। यः॥३॥

पूर्वमंत्रेऽश्वव्याजेनाश्विनोरागमनमुक्तं। अनेन रथव्याजेनोच्यते। हे धिष्ण्योन्नतस्थानार्हौ स्थातारा स्वरथाधिष्ठानौ वां युवयोर्यो रथोऽस्ति स सुविताय शोभनफलाया गम्याः। अस्मद्यज्ञमागच्छतु॥ पुरुषव्यत्ययः॥ कीदृशो रथ इति स विशेष्यते। अवनिर्न प्रवत्वान् भूमिरिवात्यंतविस्तारवान् सृप्रवंधुरो विस्तीर्णपुरोभागः वृष्णो वर्षकस्याश्वस्य मनसोऽपि जवीयान्। मनोवेगवानित्यर्थः। अहंपूर्वोऽहंकारपूर्वो मनस्वी चात्युदारः यजतो यष्टव्यः। ईदृशो रथ आगच्छतु॥

इहेह जाता समवावशीतामरेपसा तन्वा३ नामभिः स्वैः।
जिष्णुर्वामन्यः सुमखस्य सूरिर्दिवो अन्यः सुभगः पुत्र ऊहे॥४॥

इहऽइह । जाता । सं । अवावशीतां । अरेपसा । तन्वा । नामऽभिः । स्वैः ।
जिष्णुः । वां । अन्यः । सुऽमखस्य । सूरिः । दिवः । अन्यः । सुऽभगः । पुत्रः । ऊहे ॥ ४ ॥

हे अश्विनौ युवां समवावशीतां । सह सम्यग्वा पुनःपुनः स्तूयेथे कामयेथां वा यज्ञं ॥ पुरुषव्यत्ययः ॥ कीदृशौ युवां । इहेह जाता । उभाभ्यामिहशब्दाभ्यां मध्यमोत्तमस्थाने उच्येते । तयोः संभूतौ । चंद्रसूर्यौ गतौ यावत् । सूर्याचंद्रमसावित्येके । नि० १२. १. । इति निरुक्तं । अरेपसापापौ । आथर्वणस्य गुरोः शिरश्छेदनादिना पापलेपरहिताविति भावः । आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतं । ऋ० १. ११७. २२. । इत्यादिमंत्रवर्णात् । केन हेतुनेति उच्यते । तन्वा शरीरेण शरीरसौंदर्येण निमित्तेन स्वैर्नामभिः स्वीयैर्माहात्म्यविशिष्टैरश्विनौ नासत्यावित्यादिभिरपि । रमणीयशरीरवत्त्वान्महिमोपेतनामवत्त्वाच्च हेतोः संस्तूयेथे इत्यर्थः । यद्वा । अरेपसा तन्वेति योज्यं । उक्तप्रकारेण गुरुशिरश्छेदादप्यपापेन शीर्षेण तादृङ्महत्त्वख्यापनेनेति यावत् । किंच वां युवयोरन्य एको मध्यमस्थांतरिक्षस्य पुत्रस्थानीयः सोमो जिष्णुर्जयशीलः सुमखस्य शोभनयज्ञस्य सूरिः प्रेरयिता सन्नूहे । वहति । विश्वं जगद्धारयति । चंद्रात्मनस्तस्योदये सति ह्योषधिवनस्पत्यादयो वर्धंते । अन्योऽपर उत्तमस्थानो दिवो द्युलोकस्य पुत्रः पुत्रस्थानीय आदित्यः सुभगः शोभनरश्मिरूपधन ऊहे । वहति । कृत्स्नमेवं पृथग्जगन्निर्वाहकौ महानुभावौ युवां सह स्तूयेथे । अत्र निरुक्तं । इहेह जातौ संस्तूयेथे पापेनालिप्यमानया तन्वा नामभिश्च स्वैर्जिष्णुर्वामन्यः सुमहतो बलस्येरयिता मध्यमो दिवोऽन्यः सुभगः पुत्र उह्यत आदित्यः । नि० १२. ३. । इति ॥

प्र वां निचेरुः ककुहो वशाँ अनु पिशंगरूपः सदनानि गम्याः ।
हरी अन्यस्य पीपयंत वाजैर्मथ्रा रजांस्यश्विना वि घोषैः ॥ ५ ॥
प्र । वां । निऽचेरुः । ककुहः । वशान् । अनु । पिशंगऽरूपः । सदनानि । गम्याः ।
हरी इति । अन्यस्य । पीपयंत । वाजैः । मथ्रा । रजांसि । अश्विना । वि । घोषैः ॥ ५ ॥

हे अश्विनाश्विनौ वां युवयोर्मध्येऽन्यस्यैकस्य ककुहः श्रेष्ठः पिशंगरूपो हिरण्यरूपः पीतवर्णो वा बहुभिरत्याद्यवयवैर्निरूप्यमाणो वा रथो वशाननु कामाननुलक्ष्य यथाकामं । अस्मद्यज्ञागमनेच्छयेत्यर्थः । यद्वा । वशान् स्वाधीनाः ककुहो दिशो दिगंतरालानुक्रमेण नीचैरुच्चैश्चरन् स्वस्थानाद्देवयजनमुखं गच्छन् । सदनान्यस्मद्यागगृहाणि प्र गम्याः । प्रकर्षेण गच्छतु ॥ पुरुषव्यत्ययः ॥ अत्र यद्यप्यन्यस्येति नोक्तं तथाप्युत्तरवाक्ये तथोक्तत्वादत्रापि लभ्यते । अन्यस्य युवयोरन्यतमस्य हरी अश्वौ रजांसि लोकाः । अत्र लोकशब्दो जनवाचकः । ते यजमानरूपा जना इत्यर्थः । ते च मथ्रा प्रमथनेनालोडनेन निष्पादितैर्वाजैरन्नैरामिक्षादिरूपैर्घोषैः स्तुतिभिश्चाद्भा[illegible] पीपयंत । आप्याययंति ॥ ॥ २५ ॥

प्र वां शरद्वान्वृषभो न निष्षाट् पूर्वीरिषश्चरति मध्व इष्णन् ।
एवैरन्यस्य पीपयंत वाजैर्वेषंतीरूर्ध्वा नद्यो न आगुः ॥ ६ ॥
प्र । वां । शरत्ऽवान् । वृषभः । न । निष्षाट् । पूर्वीः । इषः । चरति । मध्वः । इष्णन् ।
एवैः । अन्यस्य । पीपयंत । वाजैः । वेषंतीः । ऊर्ध्वाः । नद्यः । नः । आ । अगुः ॥ ६ ॥

हे अश्विनौ युवयोरन्यतमो मध्यमस्थानः शरद्वाञ्छरणवान् मेघवृक्षपर्णादीनां विशरणवान् । अथवा बहुसंवत्सरः पूर्वतनो नित्य इत्यर्थः । वृषभो न । वर्षितेवेंद्रः । स इव शत्रूणां निष्षाभिःसारयिता सन् पूर्वीर्बह्वीः पुरातनीर्वैषोऽन्नानि सस्यादीन्युद्दिश्य प्र चरति । प्रकर्षेण गच्छति । मध्यमस्थानश्चंद्र इति पक्षे शरद्वाञ्छरत्कालवान् । तस्मिन्नृतौ हि चंद्रः संनद्धो भवति । तेन च तृणगुल्मौषध्यादीनि वर्धंते । स [illegible]

करोतीति उच्यते। मध्व इष्णन् मधुनो मधुसदृशस्य हविषः ॥ कर्मणि षष्ठी ॥ हविरिच्छन्। तदर्थमेवं करोति। तथान्यस्योत्तमादित्यस्यैवैः कार्मगमनैर्वा निमित्तभूतैः पीपयंत। आप्याययंति हविर्भिर्यजमानाः। तुष्टेन तेन प्रेरिता वर्षंतीर्व्याप्यंतीरूर्ध्वा उन्नता उत्तीरा नद्यो न नदनशीला यथा नोऽस्मदर्थमागुः आगच्छंति ॥

असर्जि वां स्थविरा वेधसा गीर्बाळ्हे अश्विना त्रेधा क्षरंती।
उपस्तुतावतं नाधमानं यामन्नयामञ्छृणुतं हवं मे ॥७॥
असर्जि। वां। स्थविरा। वेधसा। गीः। बाळ्हे। अश्विना। त्रेधा। क्षरंती।
उपऽस्तुतौ। अवतं। नाधमानं। यामन्। अयामन्। शृणुतं। हवं। मे ॥७॥

हे वेधसा विधातारावश्विनौ वां युवयोर्बाळ्हे दृढे स्थैर्ये निमित्तभूते सति गीः स्तुतिरूपा वागसर्जि। सृज्यते। कीदृशी सा। स्थविरात्यंतं स्थिरा नित्या वेदमयी त्रेधा मंत्रादिभेदेन त्रिप्रकारा क्षरंती युवां गच्छंती। ईदृशी स्तुतिः कृतेत्यर्थः। तथोपस्तुतौ संतौ नाधमानमभिमतफलं याचमानमवतं। रक्षतं तर्पयतं वा। किंच यामन्गमनेऽयामन्नगमने च हवमाह्वानं शृणुतं ॥

उत स्या वां रुशतो वप्ससो गीस्त्रिबर्हिषि सदसि पिन्वते नॄन्।
वृषा वां मेघो वृषणा पीपाय गोर्न सेके मनुषो दशस्यन् ॥८॥
उत। स्या। वां। रुशतः। वप्ससः। गीः। त्रिऽबर्हिषि। सदसि। पिन्वते। नॄन्।
वृषा। वां। मेघः। वृषणा। पीपाय। गोः। न। सेके। मनुषः। दशस्यन् ॥८॥

हे अश्विनौ वां युवयो रुशतो दीप्तस्य वप्ससो रूपस्येव वपुषो वा व्यापयित्री गीः स्तुतिवाक् त्रिबर्हिषि त्रिधास्तास्तीर्णबर्हिष्के सदसि यागसदने नॄन् कर्मनेतॄनस्मान्पिन्वते। आप्याययति आप्याययतु वोचितप्रदानादिना। केन प्रकारेण उच्यते। हे वृषणा वर्षितारौ कामानां वां युवयोः स्वभूतो मेघः सेक्ता जलदः प्रदानविशेषो वा वृषा वर्षकः सन् मनुषो मनुष्यान् प्रति दशस्यन् प्रयच्छन् पीपाय। आप्याययति। आप्यायने दृष्टांतः। गोर्न सेक उदकसेक इव शांतनात्सेक उदकस्येव। तद्यथाप्याययति तद्वदित्यर्थः। यद्वा। नेति संप्रत्यर्थे। गोरुदकस्य सेके निमित्तभूते सति पीपायेति संबंधः ॥

युवां पूषेवाश्विना पुरंधिरग्निमुषां न जरते हविष्मान्।
हुवे यद्वां वरिवस्या गृणानो विद्यामेषं वृजनं जीरदानुं ॥९॥
युवां। पूषाऽइव। अश्विना। पुरंऽधिः। अग्निं। उषां। न। जरते। हविष्मान्।
हुवे। यत्। वां। वरिवस्या। गृणानः। विद्याम। इषं। वृजनं। जीरऽदानुं ॥९॥

हे अश्विनौ युवां पुरंधिर्बहुप्रज्ञः पूषेव पोषक इव हविष्मान् हविर्युक्तो जरते। स्तौति। यद्वा। पुरंधिर्बहूनां धारयित्री पूषेव पृथिवीव ॥ द्वितीयार्थे प्रथमा ॥ तां यथा स्तौति तद्वत्। किमिव। अग्निमुषां न। अग्निमुषसं च यथा तथा युवामपि। प्रातरनुवाकाश्विनशस्त्रयोराश्विनक्रतुवदाग्नेयोषस्ययोरपि सद्भावादिति भावः। कदेति आह। यद्यदा वरिवस्या वरिवस्यया परिचर्यया युक्तो गृणानः स्तोता स्तौति तदा यजमानोऽपि जरत इत्यर्थः। विद्यामित्यादि गतं॥ ॥२६॥

अभूदिदमित्यष्टर्चं तृतीयं सूक्तमाश्विनं जागतं। अववित्द्रमिति षष्ठी तद्वां नरा नासत्यावित्यष्टमी चोभे त्रिष्टुभौ। अभूदिदमष्टौ षष्ठ्यंत्ये त्रिष्टुभावित्यनुक्रमणिका ॥ प्रातरनुवाकाश्विनशस्त्रयोर्जागते छंदस्यस्य विनियोगः। तथा च सूचितं। अभूदिदं यो वां परिज्मेति त्रीणि। आ० ४.१५। इति ॥

अभूदिदं वयुनमो षु भूषता रथो वृषण्वान्मदता मनीषिणः ।
धियंजिन्वा धिष्ण्या विश्पलावसू दिवो नपाता सुकृते शुचिव्रता ॥ १ ॥
अभूत् । इदं । वयुनं । ओ इति । सु । भूषत । रथः । वृषण्ऽवान् । मदत । मनीषिणः ।
धियंऽजिन्वा । धिष्ण्या । विश्पलावसू इति । दिवः । नपाता । सुऽकृते ।
शुचिऽव्रता ॥ १ ॥

हे मनीषिणो मनस्विनो मेधाविन ऋत्विजः अस्माकमिदं वयुनं प्रज्ञानमभूत् । उत्पन्नं । कीदृशं तदिति उच्यते । वृषण्वानभिमतवर्षणवान्रथोऽश्विनोः संबंधी गमनसाधनो रथ आगत इति शेषः । तत्स्थावश्विनावो षु भूषत । ओ इति निपातद्वयसमुदायात्मक एको निपातः । सुष्ठाभूषत । अभिमुखा भवत स्तोतुं । तादृशौ महानुभावावश्विनौ मदत ॥ अंतर्भावितण्यर्थोऽयं ॥ मदयत । संभावयत । अश्विनौ विशेष्येते । सुकृते सुष्ठु कृतवते मह्यं धियंजिन्वा कर्मणो बुद्धेर्वा प्रीणयितारौ धिष्ण्या धिषणार्हौ स्तुत्यौ विश्पलावसू विशां प्रजानामस्माकं पालयितृधनौ विश्पलाख्यायाश्छिन्नजंघाया हिरण्मयजंघाप्रदानेन तथाभूतौ । सद्यो जंघामायसीं विश्पलायै । ऋ॰ १. ११६. १५. । इत्यादिनिगमः । दिव आदित्यस्य नपाता नप्तारौ नपातयितारौ वा शुचिव्रता दीप्तकर्माणौ । ईदृशावश्विनौ मदत ॥

इंद्रतमा हि धिष्ण्या मरुत्तमा दस्रा दंसिष्ठा रथ्या रथीतमा ।
पूर्णं रथं वहेथे मध्व आचितं तेन दाश्वांसमुप याथो अश्विना ॥ २ ॥
इंद्रऽतमा । हि । धिष्ण्या । मरुत्ऽतमा । दस्रा । दंसिष्ठा । रथ्या । रथिऽतमा ।
पूर्णं । रथं । वहेथे इति । मध्वः । आऽचितं । तेन । दाश्वांसं । उप । याथः । अश्विना ॥ २ ॥

हे अश्विनौ युवामिंद्रतमा हीश्वरतमौ खलु । एवं प्रतिविशेषणं हिः संबंध्यः । तथा धिष्ण्या स्तुत्यर्हौ मरुत्तमा मरुद्वद्वेगगामिनौ मितरागिणौ मितराविणौ वा दस्रोपक्षपयितारौ शत्रूणां दंसिष्ठातिशयकर्माणौ रथ्या रथार्हौ रथवंतौ रथितमा । रथिनो नेतारः । तेषां श्रेष्ठौ । रथीरध्वराणां । ऋ॰ ८. ११. २. । इति नेतृपरतया व्याख्यातत्वात् । ईदृशौ युवां मध्वो मधुसदृशस्योदकस्यामृतस्य वा पूर्णं पूरितमाचितं सर्वतः संनद्धं रथं वहेथे । नयथः । तेनोक्तगुणविशिष्टेन रथेन हे अश्विनाश्विनौ उक्तगुणविशिष्टौ संतावुप याथः । यज्ञमभिप्राप्नुथः ॥

किमत्र दस्रा कृणुथः किमासाथे जनो यः कश्चिदहविर्महीयते ।
अति क्रमिष्टं जुरतं पणेरसुं ज्योतिर्विप्राय कृणुतं वचस्यवे ॥ ३ ॥
किं । अत्र । दस्रा । कृणुथः । किं । आसाथे इति । जनः । यः । कः । चित् । अहविः । महीयते ।
अति । क्रमिष्टं । जुरतं । पणेः । असुं । ज्योतिः । विप्राय । कृणुतं । वचस्यवे ॥ ३ ॥

हे दस्रोपक्षपयितारौ युवामत्रास्मिन्मनुष्ये किं कृणुथः । कुरुथः । हविषोऽभावादिति भावः । तत्रैव किमासाथे । किं तिष्ठथः । अत्रेत्युक्तं कुत्रेत्याह । यः कश्चिज्जनो जन्मवानहविर्यज्ञार्थहवीरहितो महीयते पूज्यते स्वयं न युष्मान् पूजयति । तं जनमति क्रमिष्टं । पराभूय तिष्ठतं । न केवलमतिक्रममात्रं किंतु पणेर्वणिग्भूतस्य लुब्धकस्यायष्टुस्तस्यासुं प्राणं जुरतं । अहिंसिष्टं । अनीनशतं । विप्राय मेधाविने वचस्यवे वचसः स्तोत्ररूपस्य युवाभ्यामिच्छते मह्यं ज्योतिः कृणुतं । युष्मत्[illegible] कुरुतं ॥

जंभयंतमभितो रायतः शुनो हतं मृधो विदथुस्तान्यश्विना ।
वाचंवाचं जरितू रत्निनीं कृतमुभा शंसं नासत्यावतं मम ॥४॥

जंभयंतं । अभितः । रायतः । शुनः । हतं । मृधः । विदथुः । तानि । अश्विना ।
वाचंऽवाचं । जरितुः । रत्निनीं । कृतं । उभा । शंसं । नासत्या । अवतं । मम ॥४॥

हे अश्विनौ रायतो निंदितं शब्दयतोऽस्मान्हंतुमागच्छतो वा शुनः श्वसदृशानभितो जंभयतं । नाशयतं । तथा मृधस्तेषां संग्रामान् संग्रामं कुर्वतो वा हतं । मारयतं । तानि हननोपायान्विदथुः । जानीथः । किंच जरितुर्युष्मान् स्तोतुर्वाचं वाचं तां तां स्तुतिलक्षणां वाचं रत्निनीं कृतं । सर्वामपि स्तुतिं रमणीयफलवतीं कुरुतं । हे नासत्या सत्यभूतौ युवामुभोभौ मम मदीयां शंसं स्तुतिमवतं । रक्षतं ॥

युवमेतं चक्रथुः सिंधुषु प्लवमात्मन्वंतं पक्षिणं तौग्र्याय कं ।
येन देवत्रा मनसा निरूहथुः सुपप्तनी पेतथुः क्षोदसो महः ॥५॥

युवं । एतं । चक्रथुः । सिंधुषु । प्लवं । आत्मन्ऽवंतं । पक्षिणं । तौग्र्याय । कं ।
येन । देवऽत्रा । मनसा । निःऽऊहथुः । सुऽपप्तनि । पेतथुः । क्षोदसः । महः ॥५॥

हे अश्विनौ युवं युवां सिंधुषु समुद्रोदकेष्वेतं प्लवं प्रसिद्धं प्लुतिसाधनं प्लवं नावमात्मन्वंतं दार्ढ्यवंतं पक्षिणं पक्षवद्गतिसाधनरथवंतं तौग्र्याय तुग्रनाम्नो राज्ञः पुत्राय भुज्युनाम्ने राज्ञे कं सुखकरं चक्रथुः । तौग्र्यो भुज्यू राजा समुद्रवर्ती ससेनः परचक्रं प्रमथितुं प्रस्थितः । तं प्रतीपबलान्यागत्यापातयन् । स च प्रसादफलकराश्विनौ स्तुत्वा स्वात्मानं ररक्षेत्ययमितिहासो बहुधा पूर्वं प्रपंचितः । यद्वा । कमिति पूरणः । तस्य जलसंचारिरथस्य सहायभुतान्बहून्रथादीनकुरुतमित्यर्थः । अयमर्थस्तु तमूहथुर्नौभिः । ऋ० १. ११६. ३. । चतस्रो नावः । ऋ० १. १८२. ६. । त्रिभी रथैः । ऋ० १. ११६. ४. । इत्यादिमंत्रांतरेषु प्रसिद्धः । येन युष्मद्दत्तेन प्लवेन देवत्रा देवेषु मध्ये मनसानुग्रहयुक्तया बुद्ध्या । येन मनसेति वा योज्यं । निरूहथुः निर्गमनं कुरुथः । तथा सुपप्तनि शोभनपतनं यथा भवति सुपतनौ वा युवां महो महतः क्षोदसः । उदकनामैतत् । उदकात्पेतथुः । तदधः पतथ उत्तरीतुं ॥ ॥२७॥

अवविद्धं तौग्र्यमप्स्वं१तरनारंभणे तमसि प्रविद्धं ।
चतस्रो नावो जठलस्य जुष्टा उदश्विभ्यामिषिताः पारयंति ॥६॥

अवऽविद्धं । तौग्र्यं । अप्ऽसु । अंतः । अनारंभणे । तमसि । प्रऽविद्धं ।
चतस्रः । नावः । जठलस्य । जुष्टाः । उत् । अश्विऽभ्यां । इषिताः । पारयंति ॥६॥

अप्स्वंतर्मध्येऽवविद्धमवस्तात्छत्रुभिः पातितमनारंभणेऽनालंबन आलंबनरहिते तमसि । तमोवत्तमः । दृष्टिश्वासादिप्रतिबंधके जलमध्ये प्रविद्धं प्रकर्षेण पीडितं तौग्र्यं भुज्युं जठलस्य जठरवदुदकधारकस्य मध्ये जुष्टाः सेविताः । यद्वा ॥ कर्मणि षष्ठी ॥ जठरं प्राप्ता अंतर्जलं प्रविष्टाः । अश्विभ्यामिषितास्ततस्रो नाव उत्पारयंति । उत्तारयंति । प्रापयंति ॥

कः स्विद्वृक्षो निष्ठितो मध्ये अर्णसो यं तौग्र्यो नाधितः पर्यषस्वजत् ।
पर्णा मृगस्य पतरोरिवारभ उदश्विना ऊहथुः श्रोमताय कं ॥७॥

कः। स्वित्। वृक्षः। निःऽस्थितः। मध्ये। अर्णसः। यं। तौग्र्यः। नाधितः। परिऽअसस्वजत्।
पर्णा। मृगस्य। पतरोःऽइव। आऽरभे। उत्। अश्विना। ऊहथुः। श्रोमताय। कं ॥७॥

कः स्वित् कश्चिदनुग्राहको वृक्षो वृक्षविकारो रथः। विकारे प्रकृतिशब्दः। यद्वा। संस्तवाभिप्रायमेतत्। स्तोत्राख्यो वृक्ष इत्यर्थः। कीदृशो रथः। निष्ठितो निश्चलं वर्तमानः। कुत्रेति उच्यते। अर्णस उदकस्य मध्ये। यं वृक्षं तौग्र्यस्तुग्र्यपुत्रो भुज्युर्नाधितो याचमानः पर्यषस्वजत् परिष्वक्तमकरोत्। आलंबने दृष्टांतः। पतरोः पतनशीलस्य मृगस्य मार्जयितुः शोधयितुर्हिंसादेरारभ आलंबनाय पर्णानीव। तानि यथालंबनाय प्रभवंति तद्वत्। हे अश्विनौ श्रोमताय कीर्तिमत्त्वायोदूहथुः। ऊर्ध्वं प्रापयथः। स्तुतिपक्षे स्तोत्राख्यं वृक्षमाश्रितवंतं तमूहथुरित्यर्थः॥

तद्वां नरा नासत्यावनु ष्याद्यद्वां मानास उचथमवोचन्।
अस्मादद्य सदसः सोम्यादा विद्यामेषं वृजनं जीरदानुं ॥८॥

तत्। वां। नरा। नासत्यौ। अनु। स्यात्। यत्। वां। मानासः। उचथं। अवोचन्।
अस्मात्। अद्य। सदसः। सोम्यात्। आ। विद्याम। इषं। वृजनं। जीरऽदानुं ॥८॥

हे नरा नेतारौ कर्मणो नराकारौ वा हे नासत्यावसत्यरहितौ सत्यफलौ वा वां युवां तत्तादृशं स्तोत्रमनु स्यात्। अनुकूलं भवतु। अनुभवतु वा वां। तदित्युक्तं यदित्याह। वां प्रति मानासः पूजावंतोऽस्मदीया होत्रादयो यदुचथं स्तोत्रमवोचन् अकुर्वन् तद्वामनु ष्यात्। हे अश्विनौ अद्यास्मिन्प्रधानयागदिनेऽस्मादस्माभिः क्रियमाणात्सदसः संबंधिनः सोम्यात् सोमयागसंपादकात्। आ इत्यप्यर्थे। अस्माभिर्यजमानैरद्य क्रियमाणादपि स्तोत्रात् प्रीणयतमिति। विद्यामेति गतं॥ ॥२८॥

तं युंजाथामिति षड़ृचं चतुर्थं सूक्तं त्रैष्टुभमागस्त्यमाश्विनं॥

तं युंजाथां मनसो यो जवीयान् त्रिवंधुरो वृषणा यस्त्रिचक्रः।
येनोपयाथः सुकृतो दुरोणं त्रिधातुना पतथो विर्न पर्णैः ॥१॥

तं। युंजाथां। मनसः। यः। जवीयान्। त्रिऽवंधुरः। वृषणा। यः। त्रिऽचक्रः।
येन। उपऽयाथः। सुऽकृतः। दुरोणं। त्रिऽधातुना। पतथः। विः। न। पर्णैः ॥१॥

हे वृषणा वर्षकौ कामानां युवां तं वक्ष्यमाणगुणविशिष्टं रथं युंजाथां। योजयतं। तमित्युक्तं कमित्याह। यो रथस्त्रिवंधुरः [illegible]। वंधुरं रथिनः स्थानमित्याहुः। आ याह्यर्वाङुप वंधुरेष्ठाः। ऋ० ३.४३.१.। इत्यादिमंत्रांतरात्। यश्च त्रिचक्रः चक्रत्रितयोपेतः। पुनः स एव विशेष्यते। येन रथेनोपयाथः उपगच्छथः। किं। सुकृतः शोभनसोमाख्यकर्मवतो यजमानस्य दुरोणं। गृहनामैतत्। यागगृहं। येनेत्युक्तं केनेत्याह। त्रिधातुना त्रिप्रकारस्थानोपेतेन सुवर्णरजतताम्रधातुत्रयोपेतेन वा रथेन। गमने दृष्टांतः। विर्न पर्णैः पक्षी पक्षैर्यथा शीघ्रमप्रयत्नेन गच्छति तद्वदुक्तलक्षणेन रथेन पतथः। गच्छथः॥

सुवृद्रथो वर्तते यन्नभि क्षां यत्तिष्ठथः क्रतुमंतानु पृक्षे।
वपुर्वपुष्या सचतामियं गीर्दिवो दुहित्रोषसा सचेथे ॥२॥

सुऽवृत्। रथः। वर्तते। यन्। अभि। क्षां। यत्। तिष्ठथः। क्रतुऽमंता। अनु। पृक्षे।
वपुः। वपुष्या। सचतां। इयं। गीः। दिवः। दुहित्रा। उषसा। सचेथे इति ॥२॥

हे अश्विनौ युवयो रथः सुवृच्छोभनवर्तनः शोभनचक्रपरिभ्रमणो यन् गच्छन् वामभि वर्तते। देवयजनभूमिं प्रति गच्छति। यद्यं रथं क्रतुमंता संकल्पवंतौ कर्मवंतौ वा पृंचे। अन्ननामैतत्। हविषि निमित्तभूते सति। अन्वधीत्यर्थे। अधि तिष्ठथः आश्रयथः। तादृशो रथो देवयजनं प्रत्यागत इत्यर्थः। अनंतरं वपुष्या युष्मद्वपुषि हिता शरीरवर्धनीयं गीरिदानींक्रियमाणप्रकारा स्तुतिरूपा वाग्वपुः सचतां। युवां च दिवो द्युलोकस्यादित्यस्य वा दुहिता दुहितृस्थानीययोषसोषोदेवतया सचेथे। यद्वा संगच्छेथे। उषस्याश्विनयोः समानकामत्वादिति भावः॥

आ तिष्ठतं सुवृतं यो रथो वामनु व्रतानि वर्तते हविष्मान्।
येन नरा नासत्येषयध्यै वर्तिर्याथस्तनयाय त्मने च॥३॥
आ। तिष्ठतं। सुऽवृतं। यः। रथः। वां। अनु। व्रतानि। वर्तते। हविष्मान्।
येन। नरा। नासत्या। इषयध्यै। वर्तिः। याथः। तनयाय। त्मने। च॥३॥

हे अश्विनौ वां युवां सुवृतं शोभनवर्तनं रथमा तिष्ठतं। आश्रयतं। यो रथो हविष्मान्। षष्ठ्यर्थे प्रथमा। हविष्मतो यजमानस्य व्रतानि कर्माण्यनु वर्तते। यद्वा। यजमानाय दत्तहविषा तद्वान्। येन च रथेन हे नरा नेतारौ वा हे नासत्यासत्यरहितौ युवामिषयध्यै। यज्ञं प्राप्तुमिच्छतमिति शेषः। तेन रथेन वर्तिः। गृहनामैतत्। यजमानस्य यज्ञगृहं तनयाय पुत्रलाभाय त्मन आत्मन आत्महिताय च याथः॥

मा वां वृको मा वृकीरा दधर्षीन्मा परि वर्क्तमुत माति धक्तं।
अयं वां भागो निहित इयं गीर्दस्राविमे वां निधयो मधूनां॥४॥
मा। वां। वृकः। मा। वृकीः। आ। दधर्षीत्। मा। परि। वर्क्तं। उत। मा। अति। धक्तं।
अयं। वां। भागः। निऽहितः। इयं। गीः। दस्रौ। इमे। वां। निऽधयः। मधूनां॥४॥

हे दस्रौ शत्रूणामुपक्षपयितारावश्विनौ वां युवयोरनुग्रहादिति शेषः। वृको हिंसकोऽरण्यश्वादिर्मा दधर्षीन्मा। तथा वृकीर्वृक्यो हिंसिका अन्या अपि मा दधर्षीत्॥ वचनव्यत्ययः॥ धर्षणं मा कार्षुः। युवामेव वा मा दधर्षीदिति योज्यं। तथा युवां मा परि वर्क्तं। परितो मा वर्जयतं मां। उतापि च माति धक्तं। अस्मानतिक्रम्यान्यस्मै मा दत्तं। किमर्थमेवमिति उच्यते। वां युवयोरर्थायायं भागो भजनीयो हविरंशो निहितः। तथेयं च गीः स्तुतिरूपा वागपि निहितेति शेषः। हे दस्रावश्विनौ वां युवाभ्यामिमा इमानि मधूनां सोमरसानां निधयो निधानानि स्थापितानि॥

युवां गोतमः पुरुमीळ्हो अत्रिर्दस्रा हवतेऽवसे हविष्मान्।
दिशं न दिष्टामृजूयेव यंता मे हवं नासत्योप यातं॥५॥
युवां। गोतमः। पुरुऽमीळ्हः। अत्रिः। दस्रा। हवते। अवसे। हविष्मान्।
दिशं। न। दिष्टां। ऋजुयाऽइव। यंता। आ। मे। हवं। नासत्या। उप। यातं॥५॥

हे दस्रा दस्रावश्विनौ युवां गोतमश्च पुरुमीळ्हश्चात्रिश्च महर्षयश्च एतेष्वेकैको हविष्मान् सन्नवसे रक्षणाय युष्मत्तर्पणाय वा हवते। आह्वयति। एवमहमप्याह्वयामि। फलसाधनाह्वाने दृष्टांतः। यंतोपगंतोपगंतुकाम ऋजूयेव॥ द्वितीयाया आकारः॥ ऋजुगामिनं मार्गं च दिष्टां दिशं न गंतव्याममिमतां दिशं प्रति यथा तथा वामपि। यथाध्वगामी स्वगंतव्यस्य शीघ्रगमनाय मार्गज्ञमृजुगामिनमाह्वयति तद्वत्। यद्वा। ऋजूयेव। इवशब्द एवार्थे। गंता ऋजुनैव मार्गेणेष्टां दिशमिव तथा युष्मत्प्रीणनेन मार्गेण स्वाभिमतं फलं प्राप्नोति। हे नासत्यावश्विनौ मे मम हवमाह्वानमालक्ष्योप यातं। उपगच्छतं॥

अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि ।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुं ॥६॥
अतारिष्म । तमसः । पारं । अस्य । प्रति । वां । स्तोमः । अश्विनौ । अधायि ।
आ । इह । यातं । पथिऽभिः । देवऽयानैः । विद्याम । इषं । वृजनं । जीरऽदानुं ॥६॥

हे अश्विनौ युवयोः प्रसादादस्य तमसस्तमनहेतोः श्रेयःप्रतिबंधरूपस्य दुःखस्य पारं पर्यंतभूमिमतारिष्म । उत्तीर्णाः स्मः । हे अश्विनौ वां प्रति स्तोमः स्तोत्रमधायि । अकारीत्यर्थः । युवां देवयानैर्देवगंतव्यैर्मार्गैरिहास्मद्यज्ञ आ यातं । आगच्छतं । शिष्टो व्याख्यातः ॥ ॥२९॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् । पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरेण सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे ऋक्संहिताभाष्ये द्वितीयाष्टके चतुर्थोऽध्यायः समाप्तः ॥

---

## ॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वंदे विद्यातीर्थमहेश्वरं ॥
द्वितीयाष्टकमध्यस्थश्चतुर्थोऽध्याय आदरात् । व्याख्यातः सायणाचार्यैण पंचमो व्याकरिष्यते ॥

तत्र ता वामितीदं प्रथममंडलस्य चतुर्विंशेऽनुवाके पंचमं सूक्तं । पूर्वसूक्ते षडित्युक्तत्वात् सूक्तसंख्यानुवर्तत इति परिभाषितत्वात् षडृचं । ऋषिश्चान्यस्मादिति परिभाषयागस्त्यं । तथाश्विनं वा इत्युक्तत्वात्तुह्यादिपरिभाषयेदमप्याश्विनं । अनादेशपरिभाषया त्रैष्टुभं । ता वामित्यनुक्रांतं ॥ युवो रजांसीत्यादीनां पंच सूक्तानां तृतीयवर्जितानां प्रातरनुवाकाश्विनशस्त्रयोर्विनियोग उक्तः । तत्रेदं पंचमं ॥

ता वामद्य तावपरं हुवेमोच्छंत्यामुषसि वह्निरुक्थैः ।
नासत्या कुह चित्संतावर्यो दिवो नपाता सुदास्तराय ॥१॥
ता । वां । अद्य । तौ । अपरं । हुवेम । उच्छंत्यां । उषसि । वह्निः । उक्थैः ।
नासत्या । कुह । चित् । संतौ । अर्यः । दिवः । नपाता । सुदाःऽतराय ॥१॥

ता तौ रत्नकत्वेन प्रसिद्धौ वां युवामद्यास्मिन्यागदिने हुवेम । आह्वयाम इत्याशीः । तथापरमपरस्मिन्नपि दिने तौ युवां हुवेम । अपरमित्येतदपरस्मिन्नित्यर्थे समभिव्याहारात् अद्या च नो मृळयतापरं च । ऋ० २. २९. २. । इत्यादिमंत्रांतरे तथा दर्शनाच्च । अपरयागं प्रत्यपीति वा । कस्मिन्काले । उषस्युषोदेवतायामुच्छंत्यां तमो विवासयंत्यां सत्यां । उषःकाले हि प्रातरनुवाकाश्विनशस्त्रे प्रयुज्येते । उक्ते काले हे नासत्यासत्यरहितौ दिवो नपाता द्युलोकस्य नपातयितारौ नप्तृस्थानीयौ वा कुह चित्संतौ कुचचिद्देशे वर्तमानौ युवां वह्निः स्तुतेर्वोढार्य ईरयिता स्तुतेरीश्वरो वा ईदृशोऽहं होता सुदास्तरायात्यर्थं शोभनहविर्दात्रे यजमानाय तदर्थं तौ युवामुक्थैः शस्त्रैर्हुवेमेति संबंधः । अत्राख्यातं पदमेकवचनतया नेतव्यं । वह्निरर्यशब्दौ वा बहुवचनत्वेन नेतव्यौ । अथवा वाक्यद्वयं । यस्माद्वह्निरर्यो होतोक्तगुणकौ युवां शंसति तस्माद्वयं यजमानास्तौ युवामाह्वयाम इति ॥

अस्मे ऊ षु वृ॑षणा मादयेथामुत्प॒णीँर्ह॑तमू॒र्म्या मद॑न्ता ।
श्रु॒तं मे॒ अच्छो॑क्तिभिर्म॒तीना॒मेष्टा॑ नरा॒ निचे॑तारा च॒ कर्णैः॑ ॥२॥

अस्मे इति॑ । ऊं इति॑ । सु । वृ॒ष॒णा॒ । मा॒द॒ये॒था॒ं । उत् । प॒णीन् । ह॒तं॒ । ऊ॒र्म्या॑ । मद॑न्ता ।
श्रु॒तं । मे॒ । अच्छो॑क्तिऽभिः । म॒तीनां॑ । एष्टा॑ । न॒रा॒ । निऽचे॑तारा । च॒ । कर्णैः॑ ॥२॥

हे वृषणा कामानां वर्षकावश्विनौ युवामस्मे उ अस्मास्वेव सु मादयेथां । सुष्ठु तृप्यतं । अस्मभ्यं तर्पयतमभिमतं । तथा पणीन्वणिजो लुब्धकानयष्टृनुदुन्मूल्य हतं । नाशयतं । कीदृशौ युवां । ऊर्म्या । रात्रिनामैतत् । रात्रौ मदंता मावंतौ । यद्वा । ऊर्मिरिति सोमनाम । ऊर्मिर्यस्ते पवित्र आ । ऋ॰ ९. ६४. ११. । इत्यादिषु तथा प्रयोगात् । अस्मदीयेन सोमेन मदंतौ । तादृशौ युवां मे ममाच्छोक्तिभिराभिमुख्यकरैर्निर्मलवेदवाक्यै रचिता मतीनां ॥ कर्मणि षष्ठी ॥ मननसाधनाः स्तुतीः कर्णैराकर्णनसाधनैः श्रोत्रैः श्रुतं । शृणुतं । हे नरा नेतारौ युवां खल्वेष्टान्वेष्टारावस्मत्स्तुतीनां तथा निचेतारा लब्धानां तासां संचयकर्तारौ । निरित्येष समित्येतस्य स्थाने । यस्मादेवंविधौ तस्माच्छृणुतमिति ॥

श्रि॒ये पू॑षन्निषु॒कृते॑व दे॒वा नास॑त्या वह॒तुं सू॒र्याया॑ः ।
व॒च्यन्ते॑ वां ककु॒हा अ॒प्सु जा॒ता यु॒गा जू॒र्णेव॒ वरु॑णस्य॒ भूरेः॑ ॥३॥

श्रि॒ये । पू॒ष॒न् । इ॒षु॒कृता॑ऽइव । दे॒वा । नास॑त्या । व॒ह॒तुं । सू॒र्याया॑ः ।
व॒च्यन्ते॑ । वा॒ं । क॒कु॒हाः । अ॒प्ऽसु । जा॒ताः । यु॒गा । जू॒र्णाऽइ॑व । वरु॑णस्य । भूरेः॑ ॥३॥

सविता सूर्यो दुहितरं सूर्याख्यां प्रदातुमना देवानाहूय सामर्थ्यसमीक्षणायाजिं परिकल्प्य य इमं जेष्यति स एषां कन्यकामृक्सहस्रक्लृप्तं स्तोत्रं च लभत इत्यकल्पयत् । तमग्निः प्रथममजयत् तमन्वश्विनावपि जित्वाग्निं प्रधृष्यर्क्सहस्रं कन्यकां चालभेतां । तत इंद्र उषाश्चाजयतां । तौ च तैरग्न्यादिभिः प्रार्थितौ स्वशस्त्रस्य कंचित्कंचिद्भागं तेभ्यः परिकल्प्य सूर्यां स्वरथेऽ[illegible]ति । अयमितिहासो ब्राह्मणे प्रजापतिर्वै सोमाय राज्ञे । ऐ॰ ब्रा॰ ४. ७. । इत्यत्राम्नातोऽस्माभिः प्रथमाष्टमे आ वां पतित्वं सख्याय । ऋ॰ १. ११९. ५. । इत्यत्र प्रपंचितः । अत्राह । हे पूषन् पोषक सूर्य । एतच्चंद्रस्याप्युपलक्षणं सूर्याचंद्रमसोरेवाश्वित्वात् । सूर्याचंद्रमसावित्येके । नि॰ १२. १. । इति यास्केनोक्तत्वात् । अतः पूषन्नित्युक्ते हे पोषकावश्विनावित्युक्तं भवति । हे पोषकौ हे नासत्यासत्यरहितौ देवा देवौ युवां श्रिये श्रेयसे । शस्त्रस्य कन्यायाश्च लाभायेत्यर्थः । इषुकृतेव । इवशब्द एवार्थे । आजिधावनायेषुवच्छीघ्रमृजुगामिनौ कृताविव संतौ सूर्याया एतन्नामिकायाः सवितुः पुत्र्याः ॥ कर्मणि षष्ठी ॥ सूर्यां वहतुं रथे धारयितुं । आजिमुदजयतामित्यर्थः । यस्मादेवं तस्मादप्सु जाताः कर्मसु संपादिताः ककुहाः शस्त्ररूपाः स्तुतयो भूरेरविच्छिन्नप्रवाहस्य वरुणस्य फलप्रतिबंधकपापनिवारकस्य यागस्य सिद्ध्यर्थं तत्संबंधिन्यो वां प्रति वच्यंते होत्रादिभिः । युवामेव शस्त्रगतमंत्रैर्यागकाले च स्तुवंतीत्यर्थः । युगा जूर्णेव जीर्णानि युगानीव । इवशब्दः संप्रत्यर्थः । पुरातना यागकाला यथा तद्वदद्यतना अपीत्यर्थः । पूर्वकाले यथा युवामेव स्तुवंति तद्वदिदानीमपीति तात्पर्यं ॥

अस्मे सा वां॑ माध्वी रा॒तिर॑स्तु॒ स्तोमं॑ हिनोतं मा॒न्यस्य॑ का॒रोः ।
अनु॒ यद्वां॑ श्रव॒स्या॑ सुदानू सु॒वीर्या॑य चर्ष॒णयो॒ मद॑न्ति ॥४॥

अस्मे इति॑ । सा । वा॒ं । माध्वी॒ इति॑ । रा॒तिः । अ॒स्तु॒ । स्तोम॑ं । हि॒नो॒त॒ं । मा॒न्यस्य॑ । का॒रोः ।
अनु॑ । यत् । वा॒ं । श्र॒व॒स्या॑ । सु॒दा॒नू॒ इति॑ सुऽदा॒नू॒ । सु॒ऽवी॒र्या॑य । च॒र्ष॒णय॑ः । मद॑न्ति ॥४॥

हे माध्वी मधुपूर्णपात्रयुक्तावश्विनौ वां युवयोः संबंधिनी सा प्रसिद्धा रातिर्दानमस्मे अस्माकमस्तु ।

भवतु। तदर्थं मान्यस्य मननीयस्य कारोः स्तोतुरगस्त्यस्य स्तोमं स्तुतिं हिनोतं। प्रीणयतं। हे सुदानू शोभनफलदानौ वां युवां अवस्या कीर्तिरन्नस्य वेच्छया यद्यस्मात्सुवीर्याय यजमानाय शोभनबलाय वा चर्षणयो मनुष्या ऋत्विग्रूपा अनु मदंति। अनुक्रमेण मादयंति युवाभ्यां सह स्वयं वा॥

एष वां स्तोमो अश्विनावकारि मानेभिर्मघवाना सुवृक्ति।
यातं वर्तिस्तनयाय त्मने चागस्त्ये नासत्या मदंता॥५॥
एषः। वां। स्तोमः। अश्विनौ। अकारि। मानेभिः। मघऽवाना। सुऽवृक्ति।
यातं। वर्तिः। तनयाय। त्मने। च। अगस्त्ये। नासत्या। मदंता॥५॥

हे अश्विनौ हे मघवाना हविर्लक्षणान्नवंतौ वां युवाभ्यामेष स्तोमः स्तोत्रं सुवृक्ति सुष्ठु पापवर्जनं यथा भवति तथा यद्वा सुसमाप्यकारि। कृतः। कीदृशोऽयं। मानेभिर्मानैर्हविष्प्रदानरूपैः सहितः। हे नासत्यासत्यरहितौ युवामगस्त्य एतन्नाम्नि महर्षौ मयि मदंता मादयंतौ संतौ वर्तिर्गृहं यज्ञसंबंधि यातं। प्राप्नुतं। किमर्थं। तनयाय पुत्रादिलाभाय त्मन आत्मने च हिताय॥

अतारिष्म तमसस्पारमस्य प्रति वां स्तोमो अश्विनावधायि।
एह यातं पथिभिर्देवयानैर्विद्यामेषं वृजनं जीरदानुं॥६॥
अतारिष्म। तमसः। पारं। अस्य। प्रति। वां। स्तोमः। अश्विनौ। अधायि।
आ। इह। यातं। पथिऽभिः। देवऽयानैः। विद्याम। इषं। वृजनं। जीरऽदानुं॥६॥

अतारिष्मेति षष्ठी व्याख्याता॥ ॥१॥

कतरा पूर्वेत्येकादशर्चं षष्ठं सूक्तमागस्त्यं त्रैष्टुभं। कतरैकादश द्यावापृथिवीयमित्यनुक्रांतं॥ आभिप्लविके षष्ठेऽहनि वैश्वदेवशस्त्रे द्यावापृथिव्यनिविद्धानमिदं। तृतीयस्येति खंडे सूत्रितं। कतरा पूर्वोषासानक्तेति वैश्वदेवं। आ॰ ७. ७.। इति॥ महाव्रतेऽपि वैश्वदेवशस्त्र इदमेव द्यावापृथिव्यनिविद्धानं। उत्तमादाभिप्लविकात्तृतीयसवनं। ऐ॰ आ॰ ५. ३. २.। इत्यतिदेशात्॥

कतरा पूर्वा कतरापरायोः कथा जाते कवयः को वि वेद।
विश्वं त्मना बिभृतो यद्ध नाम वि वर्तेते अहनी चक्रियेव॥१॥
कतरा। पूर्वा। कतरा। अपरा। अयोः। कथा। जाते इति। कवयः। कः। वि। वेद।
विश्वं। त्मना। बिभृतः। यत्। ह। नाम। वि। वर्तेते इति। अहनी इति।
चक्रियाऽइव॥१॥

अयोरनयोर्द्यावापृथिव्योर्मध्ये कतरा पूर्वा पूर्वमुत्पन्ना। कतरा वापरा पश्चाद्भाविनी। एवं पौर्वापर्यप्रश्नः। उभयोरविनाभावेन सहैव वर्तमानत्वादिति भावः। तथा कथा केन हेतुना जाते। किमनयोरुत्पादनमित्यर्थः। हे कवयः क्रांतदर्शिनोऽतींद्रियज्ञाः यूयं वदत को वि वेद। पौर्वापर्यं कारणं च विशेषेण विविच्य वा जानाति। न केनापि ज्ञायत इत्यर्थः। अज्ञाने कारणमाह। यद्ध यस्मात्खलु हेतोर्नाम प्रसिद्धं विश्वं कृत्स्नमपि जगद्विशेषेण त्मनात्मनैवान्यनिरपेक्षेणैव बिभृतः धारयतः। यद्वा। यद्ध नाम यत्किंचित्पदार्थजातमस्ति विश्वं तत्सर्वमात्मना बिभृतः। अनेन यत्कारणं ब्रूमस्तदप्याभ्यामेव ध्रियत इति कारणाभावः प्रतिपादितः। उत्तरेण पौर्वापर्याभाव उच्यते। अहनी एते द्यावापृथिव्यौ चक्रियेव चक्रयुक्ते इव वि वर्तेते। अत्र कतरा पूर्वा कतरापरैनयोरित्यादि निरुक्तं द्रष्टव्यं। नि॰ ३. २२.॥

भूरिं द्वे अचरंती चरंतं पद्वंतं गर्भमपदी दधाते ।
नित्यं न सूनुं पित्रोरुपस्थे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ २ ॥
भूरिं । द्वे इतिं । अचरंती इतिं । चरंतं । पत्ऽवंतं । गर्भं । अपदी इतिं । दधाते इतिं ।
नित्यं । न । सूनुं । पित्रोः । उपऽस्थे । द्यावा । रक्षतं । पृथिवी इतिं । नः । अभ्वात् ॥ २ ॥

अचरंती अविचले द्वे एवैते द्यावापृथिव्यौ भूरिं बहुतरं चरंतं पद्वंतं पादयुक्तं गर्भं गर्भवदाश्रितं कृत्स्नं प्राणिजातमपदी स्वयं पादरहिते दधाते । धारयतः । अनयोर्मध्ये खलु सर्वं जगत्क्षेमेण वर्तते । धारणे दृष्टांतः । पित्रोर्मातापित्रोरुपस्थ उत्संगे वर्तमानं नित्यं ध्रुवमात्मजं सूनुं न पुत्रमिव यथा स्नेहेन वर्धयंतौ धारयंतौ मातापितरौ तद्वत् । अथ प्रत्यक्षेणाह । हे द्यावा पृथिवी द्यावापृथिव्यौ । इतरेतरापेक्षया द्वित्वमुभयोः । नोऽस्मानभ्वान्महतो भयहेतोः पापाद्रक्षतं । पालयतं । यद्वा । अभ्वादभ्वं महत् । अत्यर्थमित्यर्थः । अभ्वेति महन्नाम ॥ द्वंद्वे कृतद्यावादेशस्य द्यावापृथिवीशब्दस्य मध्ये रक्षितमिति पदप्रयोगश्छांदसः । आमंत्रितस्याविद्यमानत्वेन निघाताभावः ॥

अनेहो दात्रमदितेरनर्वं हुवे स्वर्वदवधं नमस्वत् ।
तद्रोदसी जनयतं जरित्रे द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ३ ॥
अनेहः । दात्रं । अदितेः । अनर्वं । हुवे । स्वःऽवत् । अवधं । नमस्वत् ।
तत् । रोदसी इतिं । जनयतं । जरित्रे । द्यावा । रक्षतं । पृथिवी इतिं । नः । अभ्वात् ॥ ३ ॥

अदितेः । एतदंतरिक्षस्याप्युपलक्षणं । अखंडनीयायाः पृथिव्यास्तादृशस्यांतरिक्षस्य च संबंधि दात्रं धनं हुवे । आह्वयामि । स्पृहयामीत्यर्थः । कीदृशं तद्धनं । अनेहोऽपापं दुःखरहितं सुखात्मकं अनर्वमनरणं । अक्षीणमित्यर्थः । स्वर्वत् सर्वतः फलभूतेन स्वर्गेण तद्वत् अवधमहिंसितं नमस्वदन्नवत् । ईदृशं धनं हुवे । तदस्माभिः [illegible]लक्षणं धनं हे रोदसी द्यावापृथिव्यौ जरित्रे स्तोत्रे यजमानाय जनयतं । उत्पादयतं । द्यावेत्यादि व्याख्यातं ॥

अतंप्यमाने अवसावंती अनु ष्याम रोदसी देवपुत्रे ।
उभे देवानामुभयेभिरह्नां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ४ ॥
अतंप्यमाने इतिं । अवसा । अवंती इतिं । अनु । स्याम । रोदसी इतिं । देवपुत्रे इतिं देवऽपुत्रे ।
उभे इतिं । देवानां । उभयेभिः । अह्नां । द्यावा । रक्षतं । पृथिवी इतिं । नः । अभ्वात् ॥ ४ ॥

अवसा स्वतोऽधिकेन केनचित्कृतेनावनेन समृद्ध्यातप्यमाने अनीश्वरे ॥ तप ऐश्वर्यकर्मण इदं रूपं ॥ अतप्यमाने अन्यैरपीड्यमाने । अवसान्नेनावंती तर्पयंत्यौ देवपुत्रे देवा व्यवहर्तारो मनुष्याः पुत्रस्थानीया ययोस्तादृश्यौ । लोकद्वयस्था मनुष्याश्च देवाश्च तदुपजीव्यत्वात्पुत्रा इत्युच्यंते । ईदृशावुभे रोदसी द्यावापृथिव्यौ देवानामह्नां । एतद्रात्रेरप्युपलक्षणं । द्योतमानानामह्नां रात्रीणां च संबंधिभिरुभयविधैः शीतोष्णादिरूपैर्विलक्षणैर्धनैर्निमित्तभूतैः । तेषां लाभायेत्यर्थः । तदर्थं युवामनु स्याम । अनुभवेम । शिष्टो व्याख्यातः ॥

संगच्छमाने युवती समंते स्वसारा जामी पित्रोरुपस्थे ।
अभिजिघ्रंती भुवनस्य नाभिं द्यावा रक्षतं पृथिवी नो अभ्वात् ॥ ५ ॥

संगच्छमाने इति संऽगच्छमाने । युवती इति । समंते इति संऽअंते । स्वसारा ।
जामी इति । पित्रोः । उपऽस्थे ।
अभिजिघ्रंती इत्यभिऽजिघ्रंती । भुवनस्य । नाभिं । द्यावा । रक्षतं । पृथिवी इति ।
नः । अभ्वात् ॥५॥

संगच्छमाने परस्परमुपकारित्वेन सह युज्यमाने । वृष्टिहविषोश्च परस्परमुपकार्योपकारकभावः । यद्वा । पूर्वं संस्पृष्टे एव सत्यौ पश्चाद्वियुज्य वृष्टिहविषी अकुर्वंत्यौ पश्चान्मनुष्यैः प्रार्थितैर्देवैर्विवाहिते सत्यौ संगते अभूतामित्याहुः । अयमर्थो द्यावापृथिवी सहास्तां । तै॰ ब्रा॰ १. १. ३. २. । इत्यादिब्राह्मणे समाम्नातः । युवती नित्यतरुण्यौ मिश्रयंत्यौ वा सर्वेषु भावेषु समंते समानांतिके समानपर्यंते वा स्वसारा परस्परं स्वसृभूते जामी बंधुभूते । प्रजापतेः सकाशात्सहोत्पन्नत्वात्परस्परं जामित्वं । तथा च निगमौ दिवं च पृथिवीं चांतरिक्षमथो स्वः । ऋ॰ १०. १९०. ३. । यतो द्यावापृथिवी निष्टतक्षुः । ऋ॰ १०. ३१. ७. । इति । पित्रोः सर्वस्य पितृस्थानीययोः पालकयोस्तयोरुपस्थ उत्संगे स्थितं भुवनस्य भूतजातस्य नाभिं बंधकमुदकमभिजिघ्रंती अभिघ्राणं कुर्वंत्यौ स्पृशंत्यौ । समानमेतदुदकं । ऋ॰ १. १६४. ५१. । इत्यादिमंत्रवर्णादुभयोरुदकप्रदत्वं प्रसिद्धं । ईदृश्यौ नो रक्षतं ॥ ॥२॥

उर्वी सद्मनी बृहती ऋतेन हुवे देवानामवसा जनित्री ।
दधाते ये अमृतं सुप्रतीके द्यावा रक्षतं पृथिवी नो अभ्वात् ॥६॥
उर्वी इति । सद्मनी इति । बृहती इति । ऋतेन । हुवे । देवानां । अवसा । जनित्री इति ।
दधाते इति । ये इति । अमृतं । सुप्रतीके इति सुऽप्रतीके । द्यावा । रक्षतं । पृथिवी
इति । नः । अभ्वात् ॥६॥

उर्वी विस्तीर्णे सद्मनी सदनाधारभूते बृहती महत्यौ महानुभावे देवानां । उपलक्षणमेतत् । देवमनुष्यादीनामवसा प्रीत्या निमित्तेन जनित्री वृष्टिसस्ययोर्जनित्र्यौ । वृष्ट्यादेर्देवानामवसा तर्पणेन निमित्तेन ऋतेन यज्ञेन च निमित्तभूतेन हुवे । आह्वयामि । देवानां हविरर्थमस्यावज्ञायेत्यर्थः । ये सुप्रतीके शोभनरूपे अमृतमुदकं दधाते धारयतः ते युवामाह्वयामि । शिष्टं स्पष्टं ॥

उर्वी पृथ्वी बहुले दूरेअंते उप ब्रुवे नमसा यज्ञे अस्मिन् ।
दधाते ये सुभगे सुप्रतूर्ती द्यावा रक्षतं पृथिवी नो अभ्वात् ॥७॥
उर्वी इति । पृथ्वी इति । बहुले इति । दूरेअंते इति दूरेऽअंते । उप । ब्रुवे । नमसा ।
यज्ञे । अस्मिन् ।
दधाते इति । ये इति । सुभगे इति सुऽभगे । सुप्रतूर्ती इति सुऽप्रतूर्ती । द्यावा ।
रक्षतं । पृथिवी इति । नः । अभ्वात् ॥७॥

उर्वी उर्व्यौ महत्यौ पृथ्वी पृथिव्यौ बहुले अनेकप्रकारेण प्रथमाने बह्वाकारे दूरेअंते विप्रकृष्टांतदेशे । अपारे इत्यर्थः । ईदृश्यौ युवामस्मिन्यज्ञे नमसा नमःसाधनेन स्तोत्रेणोप ब्रुवे । उपेत्य ब्रवीमि । स्तौमीत्यर्थः । पुनः कीदृश्यौ । ये सुभगे शोभनभाग्ये सुप्रतूर्ती सुप्रतरणे शोभनदाने दधाते विश्वं जगत् ते युवामुप ब्रुवे । स्तौमि ॥

देवान्वा यच्चकृमा कच्चिदागः सखायं वा सदमिज्जास्पतिं वा ।
इयं धीर्भूया अवयानमेषां द्यावा रक्षतं पृथिवी नो अभ्वात् ॥८॥
देवान् । वा । यत् । चकृम । कत् । चित् । आगः । सखायं । वा । सदं । इत् । जाःपतिं । वा ।
इयं । धीः । भूयाः । अवऽयानं । एषां । द्यावा । रक्षतं । पृथिवी इति । नः । अभ्वात् ॥८॥

हे द्यावापृथिव्यौ वयं देवान् देवान्प्रति यत्कच्चिदागोऽपराधं तत्तद्यागकाले तेषां तेषामयागलक्षणं सदमित्सर्वदैव चकृम कृतवंतो वयं । सखायं वा प्रियं मित्रं वा प्रति यच्चकृम । जास्पतिं । जाः पुत्र्यः । तासां पतिं जामातरं वा जायापतिं प्रति दोषारोपणकलहोत्पादनादिरूपं यत्सर्वदैव चकृम । एषामुक्तरूपाणां पापानामपगमं कर्तुमियं धीर्युष्मत्स्तुतिरूपमिदं कर्म भूयाः । भूयात् । भवतु । द्यावेत्यादि गतं । अत्र सर्वत्र प्रकारांतरेण मंत्रमंतरेण रक्षतं रक्षतमिति प्रार्थनं तयोरश्विन्यादिवत्क्रमननासंभवादुचितमेव । तस्मात्स्वस्थान एव स्थिते अनुकूले भवतमित्येवं प्रार्थ्यते ॥

उभा शंसा नर्या मामविष्टामुभे मामूती अवसा सचेतां ।
भूरि चिदर्यः सुदास्तरायेषा मदंत इषयेम देवाः ॥९॥
उभा । शंसा । नर्या । मां । अविष्टां । उभे इति । मां । ऊती इति । अवसा । सचेतां ।
भूरि । चित् । अर्यः । सुदाःऽतराय । इषा । मदंतः । इषयेम । देवाः ॥९॥

उभा शंसा द्यावापृथिव्योरुभयोर्विषयावुभावपि शंसौ नर्या नरेभ्यो हितावीदृशावुभयाश्रये स्तुती मामविष्टां । रक्षतां । यद्वा । द्यावापृथिव्यभिमानिदेवयोरेव शंसशब्देनाभिधानात्पुँल्लिंगता । तथोभे ऊती रक्षिके द्यावापृथिव्यौ मामवसा रक्षणेन सचेतां । यद्वा । प्राणिभ्यो हितकरावुभावैहिकामुष्मिकविषयौ शंसौ मामविष्टां । प्राप्नुतां । तथोभे अप्यूती तयोः संबंधिन्योरभिमानिदेवतयोरवसास्मत्तर्पणेन निमित्तेन सचेतां । हे देवा द्यावापृथिव्योरंतर्भूताः सर्वेऽपि देवाः अर्यः स्तोतारो वयं सुदास्तरायातिशयेन शोभनदातृत्वा- येषान्नेन सोमलक्षणेन मदंतो मादयंतः संतो भूरि चित् । चित् पूजायां । अभिपूजितं धनमिषयेम । इच्छेम । यद्वा । अर्य इति षष्ठ्या रूपं । ईश्वराद्राजादेरपि सुदास्तरायेत्यर्थः । शिष्टं समानं ॥

ऋतं दिव इति द्वे द्यावापृथिवीये पशौ पुरोडाशहविषोरनुवाक्ये । अग्नीषोमाविति खंडे सूत्रितं । ऋतं दिवे तदवोचं पृथिव्या इति द्वे । आ० ३. ८. । इति ॥

ऋतं दिवे तदवोचं पृथिव्या अभिश्रावाय प्रथमं सुमेधाः ।
पातामवद्याद्दुरितादभीके पिता माता च रक्षतामवोभिः ॥१०॥
ऋतं । दिवे । तत् । अवोचं । पृथिव्यै । अभिऽश्रावाय । प्रथमं । सुऽमेधाः ।
पातां । अवद्यात् । दुःऽइतात् । अभीके । पिता । माता । च । रक्षतां । अवःऽभिः ॥१०॥

सुमेधाः शोभनप्रज्ञोऽहं दिवे द्युदेवतायै पृथिव्यै पृथिवीदेवतायै तत्तत्प्रीतिकरमृतं स्तोत्रं प्रथमं । मुख्यनामैतत् । प्रतमं प्रकृष्टतममवोचं । ब्रवीमि । किमर्थं । अभिश्रावायाभितः सर्वतः श्रवणाय । किंच पिता पालको द्युलोको माता सस्यादेर्निर्मात्री पृथिवी चोभे अवद्यान्निंदिताद्दुःखप्रापकादंहसः सकाशात्पातां । रक्षतां । तथाभीके । अंतिकनामैतत् । समीप एवावोभिरभिमततर्पणै रक्षतां । पालयतां ॥

इदं द्यावापृथिवी सत्यमस्तु पितर्मातर्यदिहोपब्रुवे वां ।
भूतं देवानामवमे अवोभिर्विद्यामेषं वृजनं जीरदानुं ॥११॥

इदं। द्यावापृथिवी इति। सत्यं। अस्तु। पितः। मातः। यत्। इह। उपऽब्रुवे। वां।
भूतं। देवानां। अवमे इति। अवःऽभिः। विद्याम। इषं। वृजनं। जीरऽदानुं ॥११॥

हे द्यावापृथिवी द्यावापृथिव्यौ इदमस्माभिः क्रियमाणं स्तोत्रं सत्यमस्तु। अवितथं भवतु। फलवद्भवत्वित्यर्थः। इदमित्युक्तं किं तदित्याह। हे पितर्द्यौः हे मातः पृथिवि वां युवां प्रतीहास्मिन्यज्ञे यत्स्तोत्रमुपब्रुवे उपेत्य ब्रवीमि तत्सत्यमस्तु। देवानां स्तोतॄणामस्माकमवमे। अंतिकनामैतत्। नित्यसंनिहिते युवामवोभिस्तर्पणैर्युक्ते भूतं। भवतं। अवशिष्टं गतं ॥ ॥३॥

आ न इळाभिरिति सप्तमं सूक्तमेकादशर्चमागस्त्यं त्रैष्टुभं वैश्वदेवं। आ नो वैश्वदेवमित्यनुक्रांतं ॥ विनियोगो लैंगिकः ॥

आ न इळाभिर्विदथे सुशस्ति विश्वानरः सविता देव एतु।
अपि यथा युवानो मत्सथा नो विश्वं जगदभिपित्वे मनीषा ॥१॥
आ। नः। इळाभिः। विदथे। सुऽशस्ति। विश्वानरः। सविता। देवः। एतु।
अपि। यथा। युवानः। मत्सथ। नः। विश्वं। जगत्। अभिऽपित्वे। मनीषा ॥१॥

नो विदथेऽस्मदीये यज्ञे सुशस्ति ॥ सुपो लुक् ॥ सुशस्तिभिः शोभनशंसनैः स्तुतिभिः प्रदेयै रत्नैः सह। यद्वा। इळाभिः। तदाश्रितेषु ताच्छब्द्यं। भूमिस्थानाभिर्देवताभिः सह। विश्वानरः सर्वप्राणिहितकार्यपि: सविता प्रेरक आदित्यश्च देव एतु। आगच्छतु। हे युवानो नित्यतरुणा यज्ञस्य मिश्रयितारो वा यूयं नोऽस्मानभिपित्वेऽभिपतनीयेऽस्मद्यज्ञे मनीषा मनीषया मनस ईशित्रुत्वेन। स्वेच्छयेत्यर्थः। अपिः संभावनायां। अप्यस्मान्मत्सथ। मादयथ। यथा विश्वं जगत्। एतत्स्थावरस्याप्युपलक्षणं। यद्वा। कृत्स्नं प्रपंचं मत्सथ तथास्मानपि। यद्वा। जगच्छब्दो यजमानरूपमनुष्यवाची। सर्वानपि यजमानान्यथा मत्सथ तथेत्यर्थः ॥

वैश्वदेवे पशावा नो विश्व इत्येषा हविषः पुरोनुवाक्या। आ नो देवानामुपवेतु शंस आ नो विश्व आस्क्रा गमंतु देवाः। आ० ३.७.। इति ॥

आ नो विश्व आस्क्रा गमंतु देवा मित्रो अर्यमा वरुणः सजोषाः।
भुवन्यथा नो विश्वे वृधासः करन्त्सुषाहा विथुरं न शवः ॥२॥
आ। नः। विश्वे। आस्क्राः। गमंतु। देवाः। मित्रः। अर्यमा। वरुणः। सऽजोषाः।
भुवन्। यथा। नः। विश्वे। वृधासः। करन्। सुऽसहा। विथुरं। न। शवः ॥२॥

नोऽस्माकं यज्ञं विश्वे सर्वे देवा आस्क्राः शत्रूणामास्कंदयितार आक्रमितारो वा आ गमंतु। आगच्छंतु। के ते। मित्रोऽर्यमा वरुणश्च त्रयोऽपि सजोषाः समानप्रीतयः संत आगच्छंतु। किंतु विश्वे देवा नोऽस्माकं वृधासो वर्धयितारो यथा भुवन् भवेयुः तथा सुषाहा सुष्ठु शत्रूणामभिभवेन नोऽस्मदीयं शवोऽन्नं विथुरं हीनं यथा न करन् न कुर्युः तथागच्छंतु ॥

प्रेष्ठं वो अतिथिं गृणीषेऽग्निं शस्तिभिस्तुर्वणिः सजोषाः।
असद्यथा नो वरुणः सुकीर्तिरिषश्च पर्षदरिगूर्तः सूरिः ॥३॥
प्रेष्ठं। वः। अतिथिं। गृणीषे। अग्निं। शस्तिऽभिः। तुर्वणिः। सऽजोषाः।
असत्। यथा। नः। वरुणः। सुऽकीर्तिः। इषः। च। पर्षत्। अरिऽगूर्तः। सूरिः ॥३॥

हे देवाः वो युष्माकं प्रेष्ठं प्रियतमं । सर्वेषामा[illegible]वानां प्रियतमः । तमतिथिं गृणीषे । गृणे । स्तौमि ॥ व्यत्ययेन मध्यमः ॥ केन साधनेन । शस्तिभिः शंसनैः स्तुतिभिः । कीदृशोऽहं । तुर्वणिस्तूर्णवनिः शीघ्रं संभक्ता सजोषा युष्माभिः सह प्रीयमाणः । यद्वा । एते अग्निविशेषणे । यस्तुर्वणिः शीघ्रं यष्टस्य संभक्ता सजोषा युष्माभिः सह प्रीयमाणः तमग्निं गृणीषे । यथा येन प्रकारेण नोऽस्माकं वरुण एतन्नामको देवः सुकीर्तिः शोभनकीर्तिमानसत् । सुकीर्तिं भिक्षे वरुणस्य भूरेः । ऋ॰ २. २८. १. । इत्यादिमंत्रवर्णेषु वरुणात्सुकीर्तिरेषणीया । अरिगूर्तोऽरिष्वदातृषु सदा शब्दितः अरीणां हननायोद्युक्तो वा सूरिः प्रेरयितायं वरुण इषस्यान्नानि पर्षत् । पूरयेत् । तथा तमपि स्तुम इत्यर्थः ॥

उप व एषे नमसा जिगीषोषासानक्ता सुदुघेव धेनुः ।
समाने अहन्विमिमानो अर्कं विषुरूपे पयसि सस्मिन्नूधन् ॥४॥
उप । वः । आ । ईषे । नमसा । जिगीषा । उषसानक्ता । सुदुघाऽइव । धेनुः ।
समाने । अहन् । विऽमिमानः । अर्कं । विषुऽरूपे । पयसि । सस्मिन् । ऊधन् ॥४॥

हे देवाः वो युष्माकं नमसा हविषा नमस्कारेण वोपोपेत्य जिगीषा पापानां जिगीषयैषे । इच्छामि ॥ इष गतावित्यस्य वेषतेर्वा गत्याद्यर्थस्य लिड्युत्तमैकवचन इदं रूपं ॥ भजामि । कस्मिन्काले । उषासानक्ताहनि रात्रौ च । यद्वा । अहोरात्रदेवते अप्यभिगच्छामि । गतौ दृष्टांतः । सुदुघा धेनुरिव सुदोग्ध्री धेनुर्यथा दोहाय दोग्धुर्गृहमागच्छति तद्वत् । किं कुर्वन् । सस्मिन् समान ऊधन्नूधस्युत्पन्ने विषुरूपे नानारूपे पयसि क्षीरघृतादिकेऽर्कमर्चनीयमन्नं चरुपुरोडाशादिकं विमिमानो विविधं मिमानः । कस्मिन्काले । समानेऽहन् षष्ठेऽहनि । एकस्मिन्नेवाहनि सर्वदैव वेत्यर्थः । एकस्मिन्नेवाहनि समान ऊधस्युत्पन्ने नानारूपे पयसि त्वदर्थं हविर्मिमान उपगच्छामीत्यर्थः । यद्वा । सस्मिन् सर्वस्मिन्नूधसि फलाख्यक्षीरोत्पादके यज्ञे निमित्तभूते सति विषुरूपे पयसि नानारूपे सोमलक्षणोदकेऽर्कमन्नसाधनं स्तोत्रं विमिमानोऽहं युष्मानभिगच्छामि ॥

उत नोऽहिर्बुध्न्यो३ मयस्कः शिश्रुं न पिप्युषीव वेति सिंधुः ।
येन नपातमपां जुनाम मनोजुवो वृषणो यं वहंति ॥५॥
उत । नः । अहिः । बुध्न्यः । मयः । करिति कः । शिश्रुं । न । पिप्युषीऽइव । वेति । सिंधुः ।
येन । नपातं । अपां । जुनाम । मनःऽजुवः । वृषणः । यं । वहंति ॥५॥

उतापि च नोऽस्माकमहिरंतरिक्षगाम्यहंता वाहीनो वाहन्यमानो वैतन्नामको देवः स एव बुध्न्यः । बुध्नं बंधकमंतरिक्षं । तदर्हतीति बुध्न्योऽंतरिक्षचार्येतन्नामको देवो मयः सुखं कः । करोतु ॥ [illegible] रूपं ॥ किंच पिप्युषी । इवशब्द एवार्थः पूरणो वा । अस्मान्रसेनाप्याययंती सिन्धुर्नाम नदी वेतु । आगच्छतु । तत्र दृष्टांतः । शिश्रुं न यथा शिश्रुं प्याययंती गौर्गच्छति तद्वत् । अपां नपातमुदकानामपातयितारं वर्षकमेतन्नामकं यद्वोदकानां नप्तारं तृतीयं पुत्रं । अद्भ्य ओषधिवनस्पतयः तेभ्योऽग्निरिति नप्तृत्वं । तादृशमग्निं जुनाम । स्तुतिभिः संगच्छेम ॥ जु इति सौत्रो धातुर्गत्यर्थः ॥ यं देवं मनोजुवो मनोवेगा वृषणो वर्षका मेघा अश्वा वहंति स सुखं करोतु ॥ ॥४॥

उत न ईं त्वष्टा गंत्वच्छा स्मत्सूरिभिरभिपित्वे सजोषाः ।
आ वृत्रहेंद्रश्चर्षणिप्रास्तुविष्टमो नरां न इह गम्याः ॥६॥
उत । नः । ईं । त्वष्टा । आ । गंतु । अच्छ । स्मत् । सूरिऽभिः । अभिऽपित्वे । सऽजोषाः ।
आ । वृत्रऽहा । इंद्रः । चर्षणिऽप्राः । तुविःऽतमः । नरां । नः । इह । गम्याः ॥६॥

त्वष्टा देवोऽपि नोऽस्मानच्छाभिप्राप्तुमीमिदानीमिमं यज्ञं वा गंतु। आगत्य च। स्मत्सहार्थे प्राशस्त्ये वा वर्तते। अत्र प्रशंसायां। प्रशस्तं यथा तथाभिपित्वेऽभिगंतव्ये यज्ञे निमित्तभूते सति सूरिभिः स्तोतृभिर्ऋत्विग्भिः सजोषाः समानप्रीतिर्भवत्विति शेषः। तथा वृत्रहा वृत्रघाती चर्षणिप्राः। चर्षणयो मनुष्या यजमानाः। कामैस्तेषां पूरकस्तुविष्टमो बहुतमो महत्तम इहास्मिन्कर्मणि नरां नृणां नोऽस्माकमुक्तगुणोपेतः सन्ना गम्याः। आगच्छतु॥

उत नं ईं मतयोऽश्वयोगाः शिशुं न गावस्तरुणं रिहंति।
तमीं गिरो जनयो न पत्नीः सुरभिष्टमं नरां नसंत ॥७॥
उत। नः। ईं। मतयः। अश्वऽयोगाः। शिशुं। न। गावः। तरुणं। रिहंति।
तं। ईं। गिरः। जनयः। न। पत्नीः। सुरभिःऽतमं। नरां। नसंत ॥७॥

उतापि चेमेनं तरुणं नित्ययुवानमिंद्रं मतयोऽस्मद्बुद्धयोऽश्वयोगा अश्वसमानप्राप्तयो रिहंति। आस्वादयंति। स्तुवंतीत्यर्थः। तत्र दृष्टांतः। गावो दोग्ध्यो धेनवः शिशुं न शिशुमिव वत्समिव तं यथा लिहंति तद्वत्। तदेवाह। तमीं तमेवैनं नरां नराणां यजमानानां सुरभिष्टममतिशयेन सुरभिं जनयः फलस्योत्पादयित्र्यो गिरः स्तुतयो नसंत। व्याप्नुवंति। नसतिर्व्याप्तिकर्मा। तत्र दृष्टांतः। जनयो नोत्पादयित्र्यः पत्नीः पत्न्यः पतिमिव॥

उत नं ईं मरुतो वृद्धसेनाः स्मद्रोदसी समनसः सदंतु।
पृषदश्वासोऽवनयो न रथा रिशादसो मित्रयुजो न देवाः ॥८॥
उत। नः। ईं। मरुतः। वृद्धऽसेनाः। स्मत्। रोदसी इति। सऽमनसः। सदंतु।
पृषत्ऽअश्वासः। अवनयः। न। रथाः। रिशादसः। मित्रऽयुजः। न। देवाः ॥८॥

उतापि च नोऽस्मदीयमीमिदानीमेनं यागं वा मरुतः स्मत् सहापि सदंतु। गच्छंतु। कुतो देशात्। रोदसी रोदस्योर्द्यावापृथिव्योः सकाशात्। यद्वा। रोदस्यावपि गच्छतां। कीदृशास्ते मरुतः। वृद्धसेनाः प्रवृद्धबलाः समनसः समानमनस्काः पृषदश्वासः पृषद्वर्णाश्वाः। पृषत्यो मरुतामिति यास्कः। अवनयो न यथैव नमनस्वभावा रथा रंहणस्वभावा रथवंतो वा॥ मत्वर्थो लुप्यते॥ यद्वा। अवनयो रक्षका रथा इव स्थिताः। रिशादसः। रिशाः शत्रवः। तेषामत्तारो मित्रयुजो देवा न मैत्रीयुक्ता व्यवहर्तार ऋत्विज इव। यद्वा। मैत्रीयुक्ता अन्ये देवा यथा गच्छंति तद्वत्॥

प्र नु यदेषां महिना चिकित्रे प्र युंजते प्रयुजस्ते सुवृक्ति।
अध यदेषां सुदिने न शरुर्विश्वमेरिणं प्रुषायंत सेनाः ॥९॥
प्र। नु। यत्। एषां। महिना। चिकित्रे। प्र। युंजते। प्रऽयुजः। ते। सुऽवृक्ति।
अध। यत्। एषां। सुऽदिने। न। शरुः। विश्वं। आ। इरिणं। प्रुषायंत। सेनाः ॥९॥

एषां मरुतां महिना महिमा वृष्टिलक्षणो यद्यस्मात्प्र चिकित्रे प्रज्ञायते। यद्वा। एषां महत्त्वेन युक्ता नराश्चिकित्रे जानंत्यनुष्ठेयं। न्विति पूरणः। ततस्ते ज्ञातारः सुवृक्ति॥ सुपो लुक्॥ सुष्टुतीनां प्रयुजः प्रयोगान्प्र युंजते। अधाथ प्रयोगानंतरं यद्यस्मादेषां सेना वृष्ट्युत्पादका विश्वं सर्वं भुवनमिरिणमूषरप्रदेशं यथा तथा सर्वतः प्रुषायंत उत्पादयंति। तत्र दृष्टांतः। सुदिने मेघावरणादिरहिते दिने शरुरंधकारहिंसकः प्रकाश इव। स यथा सर्वमावृणोति तथा मरुत्सेना वृष्ट्या सर्वमूषरं करोति। यद्वा। मरुन्महिमा वृष्टिर्भवति। तदा सस्यादिसमृद्धौ सत्यां प्रयोगं कुर्वंति। यदा यजंति तदा मरुत्सेनाः सर्वां महीमुंदंतीत्येवं महानुभावा मरुत इति तेषां स्तुतिः॥

प्रो अश्विनाववसे कृणुध्वं प्र पूषणं स्वतवसो हि संति ।
अद्वेषो विष्णुर्वात ऋभुक्षा अच्छा सुम्नाय ववृतीय देवान् ॥१०॥
प्रो इति । अश्विनौ । अवसे । कृणुध्वं । प्र । पूषणं । स्वऽतवसः । हि । संति ।
अद्वेषः । विष्णुः । वातः । ऋभुक्षाः । अच्छ । सुम्नाय । ववृतीय । देवान् ॥१०॥

हे ऋत्विजः अश्विनावेतन्नामकौ देवावुद्दिश्यावसेऽस्मद्रक्षणाय प्रो कृणुध्वं । स्तुतिं प्रकर्षेण कृणुध्वं । पूषणं पोषकमेतन्नामकं देवमप्यवसे प्रकर्षेण स्तुतिं कृणुध्वं । किंच ये स्वतवसः स्वायत्तबलाः संति तानपि प्र कृणुध्वं । के ते । अद्वेषो द्वेषरहितो विष्णुर्व्याप्त एतन्नामको देवः । प्रथममनाहूतोऽपि न कुप्यतीति वक्तुमद्वेष इत्युक्तं । तथा वातः सर्वत्र संचारी वायुरृभुक्षाः पतिरिंद्रश्च । एतानपि प्र कृणुध्वं । अतोऽहं स्वायत्तबलान् सर्वानपि देवान् सुम्नाय सुखायाच्छाभिमुख्येन ववृतीय । स्तोत्रैरभिवर्तयेयं ॥

इयं सा वो अस्मे दीधितिर्यजत्रा अपिप्राणी च सदनी च भूयाः ।
नि या देवेषु यतते वसूयुर्विद्यामेषं वृजनं जीरदानुं ॥११॥
इयं । सा । वः । अस्मे इति । दीधितिः । यजत्राः । अपिऽप्राणी । च । सदनी । च । भूयाः ।
नि । या । देवेषु । यतते । वसुऽयुः । विद्याम । इषं । वृजनं । जीरऽदानुं ॥११॥

हे यजत्रा यष्टव्या देवाः वो युष्मत्संबंधिनी सेयं प्रसिद्धा दीधितिर्दीप्तिरस्मे अस्माकमपिप्राणी सर्वदा चेष्टयित्री सदनी च निवासवती च भूयाः । भूयात् । भवतु । या दीधितिर्वसूयुर्वसुमती देवेषु नि यतते नियमेन प्रयत्नं करोति । तानपि प्रकाशितुं सैव भूयात् । विद्यामेति गतः ॥ ॥५॥

पितुं न्वित्येकादशर्चमष्टमं सूक्तमागस्त्यमन्नदेवताकं गायत्रं । आद्यानुष्टुब्गर्भौष्णिक् । आद्यः पंचकस्त्रयोऽष्टका अनुष्टुब्गर्भा । अनु॰ ५.७. । इत्युक्तत्वात् । तृतीया पंचमी षष्ठी सप्तम्येकादशी चेति पंचानुष्टुभः । तथा चानुक्रमणिका । पितुं न्वन्नस्तुतिर्गायत्रं त्वाद्यानुष्टुब्गर्भा तृतीयांत्ये पंचम्याद्याश्च तिस्रोऽनुष्टुभ इति ॥ विनियोगं शौनक आह । पितुं न्वित्युपतिष्ठेत नित्यमन्नमुपस्थितं । पूजयेदशनं नित्यं भुंजीत ह्यविकुत्सयन् ॥ नास्य स्यादन्नजो व्याधिर्विषमप्यमृतं भवेत् । विषं च पीत्वैतत्सूक्तं जपेद्विषविनाशनं ॥ नावाग्यतस्तु भुंजीत नाशुचिर्न जुगुप्सितं । दद्याच्च पूजयेच्चैव जुहुयाच्च हविस्तदा । त्रुन्नयं नास्य किंचित्स्यान्नान्नजं व्याधिमाप्नुयात् । ऋग्वि॰ १. २७. । इति ॥

पितुं नु स्तोषं महो धर्माणं तविषीं । यस्य त्रितो व्योजसा वृत्रं विपर्वमर्दयत् ॥१॥
पितुं । नु । स्तोषं । महः । धर्माणं । तविषीं । यस्य । त्रितः । वि । ओजसा । वृत्रं ।
विऽपर्वं । अर्दयत् ॥१॥

अहमगस्त्यो नु क्षिप्रं पितुं पालकमन्नं स्तोषं । स्तौमि । महो महांतं धर्माणं सर्वस्य धारकं तविषीं बलात्मकं । यद्वा । महतो लोकस्य धारकं । यस्यान्नस्यौजसा बलेन सामर्थ्येन त्रितो विस्तीर्णतमः प्रख्यातकीर्तिस्त्रिषु त्रित्यादिस्थानेषु तायमानोऽपींद्रो वृत्रं विपर्वं विच्छिन्नसंधिकं यथा तथार्दयत् हिंसितवान् ॥

स्वादो पितो मधो पितो वयं त्वा ववृमहे । अस्माकमविता भव ॥२॥
स्वादो इति । पितो इति । मधो इति । पितो इति । वयं । त्वा । ववृमहे । अस्माकं ।
अविता । भव ॥२॥

हे स्वादो आस्वादनीय पितो पालक मधो माधुर्योपेत पितो हे पानसाधनान्न वयं त्वा त्वां ववृमहे। सेवामहे॥ अत्र सर्वत्रामन्त्रितानां पूर्वस्यासामान्यवचनत्वेनानिघातत्वं। अनुदात्तानां तु विशेषवचनत्वान्नि- घातत्वं॥ असकृत्पितुशब्दश्रवणं तस्य प्राशस्त्यज्ञापनार्थं। हे पितो अस्माकमविता तर्पयिता भव॥

उप॑ नः पितवा च॑र शि॒वः शि॒वाभि॑रू॒तिभि॑ः।
म॒यो॒भुर॑द्विषे॒ण्यः सखा॑ सु॒शेवो॒ अद्व॑याः॥३॥
उप॑। नः॒। पितो॒ इति॑। आ। च॒र॒। शि॒वः। शि॒वाभि॑ः। ऊ॒तिऽभि॑ः।
म॒यः॒ऽभुः। अ॒द्वि॒षे॒ण्यः। सखा॑। सु॒ऽशेव॑ः। अद्व॑याः॥३॥

हे पितो यतस्त्वं शिवो मंगलः अतः शिवाभिर्मंगलयुक्ताभिरूतिभी रक्षणैर्नोऽस्माना चर। आगच्छ। आगत्य च मयोभुः सुखस्य भावयिताद्विषेण्योऽद्वेष्यरसः। प्रियरस इत्यर्थः। सखा सखिवत्प्रियकारी सुशेवोऽत एव सुष्ठु सुखकरोऽद्वया द्वयरहित उक्तगुण एव न तु तद्विपरीतो भवेत्यर्थः। अथवा दृष्टांतवादोऽयं। सुशेवो ऽद्वया मनःकर्मविसंवादरहितः सखा यथा मयोभुरद्वेष्यश्च भवति तद्वत्त्वमपि भवेत्यर्थः॥

तव॒ त्ये पि॑तो॒ रसा॒ रजां॒स्यनु॒ विष्ठि॑ताः। दि॒वि वाता॑ इ॒व श्रि॒ताः॥४॥
तव॑। त्ये। पितो॒ इति॑। रसा॑ः। रजां॑सि। अनु॑। वि॒ऽस्थि॑ताः। दि॒वि। वाता॑ःऽइ॒व।
श्रि॒ताः॥४॥

हे पितो तव त्वत्संबंधिनस्त्ये ते स्वादम्लादिषड्रसा रजांसि लोकाँल्लोकस्थानार्थानन्वानुकूल्येन विष्ठिताः। विविधं स्थिताः। विविधस्थितौ दृष्टांतः। दिवि द्युलोकेऽंतरिक्षे श्रिता वाता वायवः ते यथा व्याप्तास्तद्वत्॥

तव॒ त्ये पि॑तो॒ दद॑त॒स्तव॑ स्वादिष्ठ॒ ते पि॑तो।
प्र स्वा॒द्मानो॒ रसा॑नां तुवि॒ग्रीवा॑ इ॒वेरते॥५॥
तव॑। त्ये। पितो॒ इति॑। दद॑तः। तव॑। स्वा॒दि॒ष्ठ॒। ते। पितो॒ इति॑।
प्र। स्वा॒द्मान॑ः। रसा॑नां। तु॒वि॒ग्रीवा॑ःऽइ॒व। ई॒र॒ते॒॥५॥

हे पितो पालकान्न त्ये ते त्वदर्थिनो नरास्तव भोक्तारो भवंतीति शेषः। के ते नराः। हे स्वादिष्ठ स्वादुतम पितो पालक तव त्वदनुग्रहात्ते त्वां ददतः प्रयच्छंतो भवंति। यद्वा। ते पितो इत्यादरार्थं। अभ्यासे हि भूयां- समर्थं मन्यंते। किंच तव रसानां स्वादम्लादीनां षण्णां स्वाद्मानः स्वादयितारो भवयितार एव तुविग्रीवा इव। तुवीति बहुनाम। प्रवृद्धग्रीवा एव प्रेरते। प्रकर्षेण गच्छंति। संचरंति। इवशब्द एवकारार्थः पूरणो वा। भूलोकेऽन्नार एव दृढांगा भवंतीति प्रसिद्धं। अनशने हि ग्रीवा अधो लंबते। यद्वा। तव रसानामत्तारो ऽसंख्यातग्रीवा इव भवंति रसानां बाहुल्यादिति भावः। एवं बहुरसोपेतमन्नमिति तस्य स्तुतिः॥ ॥६॥

त्वे पि॑तो म॒हानां॑ दे॒वानां॒ मनो॑ हि॒तं। अका॑रि॒ चारु॑ के॒तुना॒ तवाहि॒मव॑साव॒धीत्॥६॥
त्वे इति॑। पितो॒ इति॑। म॒हानां॑। दे॒वानां॑। मन॑ः। हि॒तं। अका॑रि। चारु॑। के॒तुना॑।
तव॑। अहि॑। अव॑सा। अ॒व॒धी॒त्॥६॥

हे पितो महानां पूज्यानां महतां वा देवानामिंद्रादीनां मनस्त्वे त्वयि हितं निहितमकारि। कृतं। अमृ- तमपि विहाय त्वय्येव वर्तते। हे पितो तव चारु समीचीनेन केतुना त्वत्कृतेन प्रज्ञानलक्षणेनावसा रक्षणेनाहिं

मेघं वृत्रं वावधीत्। हतवानिंद्रः। अन्नमयं हि सोम्य मनः। छां० उ० ६.५.४। इति श्रुतेः। अथवा त्वत्केतुना जगद्रक्षणेन निमित्तेनेति योज्यं। जगद्रक्षणार्थं हींद्रेणाहिर्भिद्यते ॥

यद॒दो पि॑तो॒ अज॑गन्वि॒वस्व॒ पर्व॑तानां।

अत्रा॑ चिन्नो मधो पि॒तोऽरं॑ भ॒क्षाय॑ गम्याः ॥७॥

यत्। अ॒दः। पितो॒ इति॑। अज॑गन्। वि॒वस्व॑। पर्व॑तानां।

अत्र॑। चि॒त्। नः॒। म॒धो॒ इति॑। पि॒तो॒ इति॑। अरं॑। भ॒क्षाय॑। ग॒म्याः॒ ॥७॥

हे पितो अन्न त्वां यद्यदा विवस्व ॥ सुपो लुक्। अंत्यलोपश्छांदसः ॥ विवासनवतां विद्युद्रूपप्रकाशनवतां। विवो धनमुदकलक्षणं। धनवतां वा पर्वतानां मेघानां संबंध्यदः प्रसिद्धं तदुदकमजगन् अगमत् गच्छेत् अत्र चिदस्मिन्काले नोऽस्मान् हे मधो हे पितो माधुर्योपेतान्न त्वं नोऽस्मानरमलं संपूर्णं भक्षाय भक्षणाय गम्याः। गच्छ। संनिहितो भव ॥

यद॒पामोष॑धीनां परि॒शमा॑रि॒शाम॑हे। वाता॑पे॒ पीव॒ इद्भ॑व ॥८॥

यत्। अ॒पां। ओष॑धीनां। प॒रि॒शं। आ॒ऽरि॒शाम॑हे। वाता॑पे। पीवः॑। इत्। भ॒व॒ ॥८॥

यद्येनापामोषधीनां संबंधि परिंशं परिलेशं परितः सुखकरमन्नमारिशामहे आस्वादयामः भक्षयामः तेनान्नोदकसारेण हे वातापे। वातेन प्राणेनाप्नोति स्वनिर्वाहमिति वातेनाप्यायत इति वा वातापि शरीरं। हे शरीर त्वं पीव इदाप्यायित एव भव। अन्नोदकाभ्यां शरीरवृद्धिः प्रसिद्धा। यद्वा। यद्यप्यपामोषधीनां परिंशं लेशमास्वादयामः तथापि हे वातापे वातवत्सर्वव्यापक पितो [illegible] पीवः पीवानेव भव ॥

यत्ते॑ सोम॒ गवा॑शिरो॒ यवा॑शिरो॒ भजा॑महे। वाता॑पे॒ पीव॒ इद्भ॑व ॥९॥

यत्। ते॒। सो॒म॒। गोऽआ॑शिरः। यव॑ऽआशिरः। भजा॑महे। वाता॑पे। पीवः॑। इत्। भ॒व॒ ॥९॥

पूर्वमन्नसामान्येन स्तुत्वेदानीं सोमलक्षणमन्नं स्तौति। हे सोम ते तव यद्यमंशं गवाशिरो गोविकारक्षीराद्याश्रयणद्रव्यं यवाशिरो यवविकाराश्रयणद्रव्यं भजामहे सेवामहे तेन हे वातापे शरीर पीवो भव ॥

क॒रं॒भ ओ॑षधे भव॒ पीवो॑ वृ॒क्क उ॑दार॒थिः। वाता॑पे॒ पीव॒ इद्भ॑व ॥१०॥

क॒रं॒भः। ओ॒ष॒धे॒। भ॒व॒। पीवः॑। वृ॒क्कः। उ॒दा॒र॒थिः। वाता॑पे। पीवः॑। इत्। भ॒व॒ ॥१०॥

करंभो यः करंभादिरूपः सक्तुपिंडोऽस्ति तदात्मक हे ओषधे त्वं पीवः स्थौल्यवान् वृक्को व्याधेर्वर्जयिता भव। उदारथिरूर्ध्वगम इंद्रियाणामुद्दीपयिता भव। शिष्टो गतः ॥

तं त्वा॑ व॒यं पि॑तो॒ वचो॑भि॒र्गावो॒ न ह॒व्या सु॑षूदिम।

दे॒वेभ्य॑स्त्वा सध॒माद॑म॒स्मभ्यं॑ त्वा सध॒माद॑म् ॥११॥

तं। त्वा॒। व॒यं। पि॒तो॒ इति॑। वचः॑ऽभिः। गावः॑। न। ह॒व्या। सु॒सू॒दि॒म॒।

दे॒वेभ्यः॑। त्वा॒। स॒ध॒ऽमाद॑म्। अ॒स्मभ्य॑म्। त्वा॒। स॒ध॒ऽमाद॑म् ॥११॥

हे पितो अन्न सोमरूप तं तादृशं स्तुतं त्वा त्वां महानुभावं वचोभिः स्तुतिवाग्भिर्वयं सुषूदिम। क्षारयामो रसान्। तत्र दृष्टांतः। गावो न हव्या गाव इव [illegible] तथा त्वत्सकाशात्सोमं सुषूदिम। किमर्थं कीदृशं चेति चेत् उच्यते। देवेभ्य इंद्रादिभ्यस्तदर्थं सधमादं तेषां सह मादयितारं। न केवलं देवेभ्य एव किंतु सधमादमस्माभिः सह मादयितारं कृतशेषरूपं त्वा त्वामस्मभ्यमस्मदर्थमपि ॥ ॥७॥

समिद्धो अद्येत्येकादशर्चं नवमं सूक्तमागस्त्यं सर्वं गायत्रं। समिद्धाग्नितनूनपादादय एकादश प्रत्यृचं देवता यास्केन किंदेवताः प्रयाजा ... प्रयाजा ऋतुदेवताश्छंदोदेवताः पशुदेवताः प्राणदेवता आत्मदेवता इत्यादिना बहून्पक्षानुपन्यस्य ब्राह्मणानि च प्रदर्श्याग्नेया एवेति सिद्धांतितं । नि० ८. २२. । समिद्ध आप्रिय इत्यनुक्रांतं ॥ पशावगस्त्यानामेकादशप्रयाजरूपमिदमाप्रीसूक्तं ॥

समिद्धो अद्य राजसि देवो देवैः सहस्रजित् । दूतो हव्या कविर्वह ॥१॥
सम्ऽइद्धः । अद्य । राजसि । देवः । देवैः । सहस्रऽजित् । दूतः । हव्या । कविः । वह ॥१॥

हे अग्ने देवैर्हविर्वहनर्तृभिर्ऋत्विग्भिः समिद्धः सम्यग्दीपितो देवोऽत एव दीप्यमानः समिद्धैर्वा देवैः सहितः समिद्धः सन्न... ...द्दीने राजसि । दीप्यसे । हे सहस्रजित् सहस्रस्य धनस्यैतत्संख्याकानां शत्रूणां वा जेतः ततो दूतो देवानां दूत... ...र्त्तीहर आह्वाता वा । अग्निर्देवानां दूत आसीदिति श्रुतेः । कविः क्रांतदर्शी ईदृशस्त्वं हव्यास्मदीयानि हवींषि वह । देवेभ्यः प्रापय ॥

तनूनपादृतं यते मध्वा यज्ञः समज्यते । दधत्सहस्रिणीरिषः ॥२॥
तनूऽनपात् । ऋतं । यते । मध्वा । यज्ञः । सं । अज्यते । दधत् । सहस्रिणीः । इषः ॥२॥

तनूनपाद्यज्ञशरीरस्य नपातयिता । यद्वा । आपोऽत्र तन्व उच्यंत इत्युक्तत्वादपां नपातयिता तासां नप्ता वा । अद्य ओषधयः ओषधीभ्योऽग्निरिति नप्तृत्वं । यज्ञः पूज्यः । यज्ञनिर्वाहकत्वाद्वा यज्ञः । ईदृशोऽग्निर्ऋतं यज्ञं यते । गच्छते । अनुतिष्ठते । यजमानाय तदभिमतार्थं । मध्वा मधुरेणाज्यसोमादिद्रव्येण समज्यते । किं कुर्वन्नयं । सहस्रिणीरेतत्संख्याकानीषोऽन्नानि दधद्यजमानेभ्यो धारयन् ॥

आजुह्वानो न ईड्यो देवाँ आ वक्षि यज्ञियान् । अग्ने सहस्रसा असि ॥३॥
आऽजुह्वानः । नः । ईड्यः । देवान् । आ । वक्षि । यज्ञियान् । अग्ने । सहस्रऽसाः । असि ॥३॥

हे अग्ने आजुह्वानोऽस्माभिराहूयमानः सन्नीड्योऽस्माभिः स्तुत्य इडनामकस्त्वं नोऽस्मदर्थं यज्ञियान् यज्ञभाजो देवाना वक्षि । आवह । हे अग्ने त्वं सहस्रसा असि । अपरिमितधनस्य दातासि ॥

प्राचीनं बर्हिरोजसा सहस्रवीरमस्तृणन् । यत्रादित्या विराजथ ॥४॥
प्राचीनं । बर्हिः । ओजसा । सहस्रऽवीरं । अस्तृणन् । यत्र । आदित्याः । विऽराजथ ॥४॥

प्राचीनं प्रागग्रं सहस्रवीरं सहस्रसंख्याका वीराः शत्रूणां विशेषेणेरयितारो देवा यस्य तत्तादृक् । यद्वा । अपरिमितवीराः पुत्रादयो येन तादृक् । बर्हिरोजसा मंत्रलक्षणबलेनोपेता ऋत्विजोऽस्तृणन् । आच्छादयन् । यत्र यस्मिन्बर्हिष्यादित्या अदितेः पुत्राः यूयं विराजथ विविधं राजध्वे तद्बर्हिरस्तृणन् ॥

विराट् सम्राड्विभ्वीः प्रभ्वीर्बह्वीश्च भूयसीश्च याः । दुरो घृतान्यक्षरन् ॥५॥
विऽराट् । सम्ऽराट् । विऽभ्वीः । प्रऽभ्वीः । बह्वीः । च । भूयसीः । च । याः । दुरः ।
घृतानि । अक्षरन् ॥५॥

विराट् ॥ विशेषेण राजंत इति व्यत्ययेनैकवचनं ॥ सम्राट् सम्यगिति पूज्यतरं राजमानाः ॥ अत्रापि व्यत्ययेनैकवचनं ॥ विभ्वीर्विभ्व्यो विविधं भवित्र्यः प्रभ्वीः प्रभ्व्यः प्रकर्षेण भवित्र्यो बह्वीर्बह्व्यो भूयसीर्लोकप्र... ...संख्याभिश्च भूयस्यश्च या दुरो यज्ञगृहद्वारः संति ता घृतान्युदकानि प्राण्युपकारार्थमक्षरन् । क्षरंति । ...। बह्वीर्भूयसीरित्येते संख्यावचने । शिष्टानि तासां नामधेयानि ॥ ॥८॥

सुरुक्मे हि सुपेशसाधि श्रिया विराजतः। उषासावेह सीदतां ॥६॥

सुरुक्मे इति सुऽरुक्मे। हि। सुऽपेशसा। अधि। श्रिया। विऽराजतः। उषसौ। आ। इह। सीदतां ॥६॥

सुरुक्मे शोभनदीप्ताभरणे प्रसिद्धे सुपेशसा शोभनरूपे ईदृशावहोरात्रदेवते अध्यधिकं श्रिया सौंदर्येण विराजतः। विशेषेण दीप्येते ॥ हियोगादनिघातः ॥ तादृशावुषसौ। एतद्रात्रेरप्युपलक्षणं। उषःशब्दो दिवसस्योपलक्षकः। रात्रिरुषाश्चोभे इहास्मिन्दिन आ सीदतां। आगत्य तिष्ठतां। आगच्छतां वा ॥

प्रथमा हि सुवाचसा होतारा दैव्या कवी। यज्ञं नो यक्षतामिमं ॥७॥

प्रथमा। हि। सुऽवाचसा। होतारा। दैव्या। कवी इति। यज्ञं। नः। यक्षतां। इमं ॥७॥

प्रथमा। मुख्यनामैतत्। प्रतमौ प्रकृष्टतमौ। हिः प्रसिद्धौ। सुवाचसा प्रियवचनौ दैव्या देवार्हौ होतारा देवानामाह्वातारौ होमनिष्पादकौ वा कवी मेधाविनावेतौ नोऽस्मदीयमिमं यज्ञं यक्षतां। यजतां। गच्छतां वा ॥

भारतीळे सरस्वति या वः सर्वा उपब्रुवे। ता नश्चोदयत श्रिये ॥८॥

भारति। इळे। सरस्वति। याः। वः। सर्वाः। उपऽब्रुवे। ताः। नः। चोदयत। श्रिये ॥८॥

हे भारति। भरत आदित्यः। तस्य संबंधिनी भारती। तादृशि द्युलोकदेवते हे इळे भूदेवि हे सरस्वति। सरो वागुदकं वा। तद्वत्यंतरिक्षदेवते तादृशि देवि। एताः क्षित्यादिदेवताः। एतास्तिस्र आदित्यप्रभावविशेषरूपा इत्याहुः। यास्तिस्रः सर्वा वो युष्मानुपब्रुवे उपेत्य स्तौमि ता यूयं नोऽस्माञ्छ्रिये संपदे चोदयत। प्रेरयत ॥

त्वष्टा रूपाणि हि प्रभुः पशून्विश्वान्त्समानजे। तेषां नः स्फातिमा यज ॥९॥

त्वष्टा। रूपाणि। हि। प्रऽभुः। पशून्। विश्वान्। संऽआनजे। तेषां। नः। स्फातिं। आ। यज ॥९॥

त्वष्टा यज्ञसाधनपात्राभिमानी देवो रूपाणि योनौ सृष्टानि रेतांसि रूपाणि कर्तुं प्रभुर्हि। हिशब्दः श्रुत्यंतरप्रसिद्धिद्योतनार्थः। यावच्छो वै रेतसः सिक्तस्य त्वष्टा रूपाणि विकरोति। तै० सं० १. ५. ९. १। इति श्रुतेः। स देवो विश्वान् सर्वानपि पशूनस्मदीयान् गवादिकान् समानजे। सम्यगनक्ति। व्यक्तीकरोति ॥ संपूर्वादनक्तेर्लिटि तस्मान्नुडिति नुट् ॥ अथ प्रत्यक्षः। तेषामक्तानां पशूनां स्फातिं वृद्धिं नोऽस्मदर्थमा यज। सर्वतः पूजय। कुर्वित्यर्थः ॥

उप त्मन्या वनस्पते पाथो देवेभ्यः सृज। अग्निर्हव्यानि सिष्वदत् ॥१०॥

उप। त्मन्या। वनस्पते। पाथः। देवेभ्यः। सृज। अग्निः। हव्यानि। सिस्वदत् ॥१०॥

हे वनस्पते यूपाभिमानि देव त्मन्यात्मनैव देवेभ्योऽग्न्यादिभ्यः पाथः पशुरूपमन्नमुप सृज। उत्पादय। यूपाभावे पशुनियोजनाभावेन हविषोऽभावात्। त्वय्येवं कृतवति सत्यग्निर्हव्यानि हवींषि सिस्वदत्। स्वदयतु। स्वादूकरोतु ॥

पुरोगा अग्निर्देवानां गायत्रेण समज्यते। स्वाहाकृतीषु रोचते ॥११॥

पुरःऽगाः। अग्निः। देवानां। गायत्रेण। सं। अज्यते। स्वाहाऽकृतीषु। रोचते ॥११॥

अयमग्निर्देवानां पुरोगा असुरयुद्धं प्रति पुरोगामी। यद्वा। देवानां मध्ये यज्ञं प्रत्यग्निरिव पुरोगामी। अत एवाग्रणीत्वादेवाग्निशब्दो निष्पन्नः। अग्निः कस्मादग्रणीर्भवतीति निरुक्तं।७.१४।। तादृशोऽयं गायत्रेणैतदुपलक्षितेन मंत्रेण समज्यते। सम्यग्लक्ष्यते। स्वाहाकृतीषु स्वाहाकारेषु सत्सु हविःषु दीयमानेषु रोचते। अत्यर्थं दीप्यते। एताः प्रयाजदेवता यज्ञावयवाभिमानिन्यः। तद्द्वारा यज्ञ एव स्तूयत इति केषांचिन्मतं। अग्नेरेव नामांतरमित्यन्ये॥ ॥९॥

अग्ने नयेति दशमं सूक्तमष्टर्चमागस्त्यं त्रैष्टुभमाग्नेयं। अग्ने [illegible]यामित्यनुक्रमणिका॥ प्रातरनुवाकाश्विनशस्त्रयोस्त्रैष्टुभच्छंदसि विनियोगः। अथैतस्या इत्यत्राग्ने नयाग्ने बृहन्नित्यष्टानामुत्तमादुत्तमास्तिस्र उद्धरेत।आ०४.१३.। इति सूचितत्वात्॥ अत्र शौनकः। उत्पथप्रतिपन्नो यो भ्रष्टो वापि पथः क्वचित्। पंथानं प्रतिपद्येत हुत्वा वा कर्म गर्हितं॥ अग्ने नयेति सूक्तेन प्रत्यृचं जुहुयाद्घृतं। जपेच्च प्रयतो नित्यमुपतिष्ठेत पावकं।ऋग्वि०१.२७.। इति॥ आद्यास्तस्रः श्रवणाकर्मणि विनियुक्ताः। श्रावण्यां पौर्णमास्यामित्यत्र सूत्रितं। अग्ने नय सुपथा राये अस्मानिति चतसृभिः प्रत्यृचं हुत्वा।आ०गृ०२.१.४.। इति॥ आग्नेये पशौ वपापुरोडाशयोराद्ये द्वे अनुवाक्ये। तथा च सूत्रितं। अग्ने नय सुपथा राये अस्मान् पाहि नो अग्ने पायुभिरजस्रैः।आ०३.७.। इति॥ आद्या प्रायणीयेष्टावाग्नेयस्यानुवाक्या। सैवोदयनीये याज्या। तदहः प्रायणीयेष्टिरित्यत्र सूचितं। अग्ने नय सुपथा राये अस्माना देवानामपि पंथामगन्म।आ०४.३.। इति। विपरीतास्तु याज्यानुवाक्या इति च॥

अग्ने॒ नय॑ सु॒पथा॑ रा॒ये अ॒स्मान्विश्वा॑नि देव व॒युना॑नि वि॒द्वान्।
युयो॒ध्य१॒॑स्मज्जु॑हुरा॒णमेनो॒ भूयि॑ष्ठां ते॒ नम॑उक्तिं विधेम॥१॥

अग्ने॑। नय॑। सु॒ऽपथा॑। रा॒ये। अ॒स्मान्। विश्वा॑नि। दे॒व॒। व॒युना॑नि। वि॒द्वान्।
यु॒यो॒धि। अ॒स्मत्। जु॒हु॒रा॒णं। एनः॑। भूयि॑ष्ठां। ते॒। नमः॑ऽउक्तिं। वि॒धे॒म॒॥१॥

हे अग्नेऽंगनादिगुणविशिष्ट देव द्योतमान विश्वानि वयुनानि सर्वाणि प्रज्ञानानि। अनेनैतदनुष्ठितमिदं प्रायणीयमिति यदेतज्ज्ञानमस्ति तद्विद्वानित्यर्थः। यतो विद्वान् अतस्त्वमस्मान् सुपथा शोभनेन मार्गेण राये गंतव्याय स्वर्गादिधनाय। द्वितीयार्थे वा चतुर्थी। प्रापणीयं रयिं प्रति नय। तदर्थं जुहुराणं कुटिलकार्येनः पापं फलप्रतिबंधरूपमस्मदस्मत्तो युयोधि। पृथक्कुरु। ते तव वयं भूयिष्ठामतिप्रवृद्धां नमउक्तिं न[illegible] स्तुतिं विधेम। परिचरेम। कुर्मः॥

आयुष्कामेष्ट्यामग्ने त्वं पारयेति द्वे स्विष्टकृतो याज्ये पाहि न इति चतुर्थ्यनुवाक्या। पाहि नो अग्ने पायुभिरजस्रैरग्ने त्वं पारया नव्यो अस्मानिति संयाज्ये।आ०२.१०.। इति सूचितं॥ एते एव स्वस्त्ययन्यामपि संयाज्ये इति सूचितत्वात्॥

अग्ने॒ त्वं पा॑रया॒ नव्यो॑ अ॒स्मान्स्व॒स्तिभि॒रति॑ दु॒र्गाणि॒ विश्वा॑।
पूश्च॑ पृ॒थ्वी ब॑हु॒ला न॑ उ॒र्वी भवा॑ तो॒काय॒ तन॑याय॒ शं योः॥२॥

अग्ने॑। त्वं। पा॒र॒य॒। नव्यः॑। अ॒स्मान्। स्व॒स्तिऽभिः॑। अति॑। दुः॒ऽगानि॑। विश्वा॑।
पूः। च॒। पृ॒थ्वी। ब॒हु॒ला। नः॒। उ॒र्वी। भव॑। तो॒काय॑। तन॑याय। शं। योः॥२॥

हे अग्ने त्वं नव्यो नवतरः स्तुत्यो वा त्वमस्मान्यागानुष्ठातॄनति पारय। कर्म समापय्यातिपारय। अतिगमय। केन साधनेन। स्वस्तिभिः। अस्तिरभिपूजितः। सुशब्दः शोभनवचनः। अत्यंतं पूजितैर्यज्ञादिसाधनैः। ानि। दुर्गाणि दुर्गमनानि पापानि। अनतिक्रमणीयानि दुरिताख्यान्यतिपारय। किंच नोऽस्माकं पृथ्वी र्थुतरा पूश्च पुर्यपि भवत्विति शेषः। चशब्दो वक्ष्यमाणेन सह समुच्चयार्थः। पूरिति जात्येकवचनं। पुराश्चापि

भवंत्वित्यर्थः । तथा नोऽस्माकमुर्वी पृथ्व्यपि बहुतरा भवतु । त्वं तु तोकायापत्याय तनयाय पुत्राय । तोकशब्दोऽपत्यसामान्यवचनः । तनयशब्दः पुत्रवचनः । शं सुखं योर्मिश्रयिता भव । यद्वा । रोगाणां शमनं भयानां यावनं च भव । कुर्वित्यर्थः ॥

अग्ने त्वमस्मद्युयोध्यमीवा अनग्नित्रा अभ्यमंत कृष्टीः ।
पुनरस्मभ्यं सुवितायं देव क्षां विश्वेभिरमृतेभिर्यजत्र ॥३॥
अग्ने । त्वं । अस्मत् । युयोधि । अमीवाः । अनग्निऽत्राः । अभि । अमंत । कृष्टीः ।
पुनः । अस्मभ्यं । सुवितायं । देव । क्षां । विश्वेभिः । अमृतेभिः । यजत्र ॥३॥

हे अग्ने त्वममीवा रोगानस्मदस्मत्तो युयोधि । व्यावर्तय । या अनग्नित्रा अग्निनापालिताः कृष्टीः प्रजा अभ्यमंत अभिमिमतेऽस्मान् ॥ यच्छब्दाध्याहारादनिघातः ॥ ता युयोधि । यद्वा । ता अनग्नित्राः पापिन्यः कृष्टयः प्रजा अभ्यमंत । त्वयाभ्यमितुमभितो रोगैः प्रापयितुमर्हंति । वयं तु न तादृशाः । अतोऽस्मत्तो वियोजयेत्यर्थः । न केवलं वियोगमात्रं अपि तु पुनःपुनरिदं कर्तव्यं । अस्मभ्यमस्मदर्थं सुविताय शोभनफलाय हे यजत्र यष्टव्य देव द्योतमानाग्ने विश्वेभिरमृतेभिः सर्वैरमरणधर्मभिरन्यैर्यष्टव्यैर्देवैः सह त्वां पृथिवीं देवयजनलक्षणामागच्छेति शेषः ॥

पाहि न इत्यस्या विनियोगद्वयमग्ने त्वं पारयेत्यत्रोक्तं ॥ तथाग्नेयपशाविषैव हविषोऽनुवाक्या । तथा च सूत्रितं । पाहि नो अग्ने पायुभिरजस्रैः प्र वः शुक्राय भानवे भरध्वं । आ० ३.७. । इति ॥

पाहि नो अग्ने पायुभिरजस्रैरुत प्रिये सदन आ शुशुक्कान् ।
मा ते भयं जरितारं यविष्ठ नूनं विदन्मापरं सहस्वः ॥४॥
पाहि । नः । अग्ने । पायुऽभिः । अजस्रैः । उत । प्रिये । सदने । आ । शुशुक्कान् ।
मा । ते । भयं । जरितारं । यविष्ठ । नूनं । विदत् । मा । अपरं । सहस्वः ॥४॥

हे अग्ने नोऽस्मानजस्रैरनवरतैरविच्छिन्नैः पायुभिः पालनप्रकारैः पाहि । पालय । उतापि च प्रिये सदने तव प्रियभूते यागगृह आ सर्वतः शुशुक्कान् दीप्यमानो भवेति शेषः । किंच हे यविष्ठ युवतम ते तव जरितारं गरितारं स्तोतारं मां नूनमद्य भयं मा विदत् । मा लभतां । माप्नोतु । हे सहस्वो बलवन्नग्ने अपरमपरस्मिन्काले भयं मा विदत् । अपरं मदन्यं वा मा विदत् ॥

अच्युताय भौमायैककपालपुरोडाशहोमे मा नो अग्न इत्यनयाश्वत्थपर्णेनाभिजुहोति । तथा च सूत्रितं । मा नो अग्नेऽव सृजो अघायेत्येनमाशयेनाभिजुहोति । आ० गृ० २. १. ६. । इति ॥

मा नो अग्नेऽवं सृजो अघायाविष्यवे रिपवे दुच्छुनायै ।
मा दत्वते दशते मादते नो मा रीषते सहसावन्परा दाः ॥५॥
मा । नः । अग्ने । अवं । सृजः । अघायं । अविष्यवे । रिपवे । दुच्छुनायै ।
मा । दत्वते । दशते । मा । अदते । नः । मा । रिषते । सहसाऽवन् । परा । दाः ॥५॥

हे अग्ने नोऽस्मानघाय हिंसकायाविष्यवे । अविष्यतिरत्तिकर्मा । अत्तिच्छवे दुच्छुनायै । शुनं सुखं । दुष्टसुखकारिणे । दुःखकारिण इत्यर्थः । तस्मै रिपवे माव सृजः । मा त्याक्षीः । तदधीनं मा कुर्वित्यर्थः । तथा नोऽस्मान्दत्वते दंतवते दशते खादते सर्पादये माव सृजः । तथा नोऽस्मानदतेऽदंतकाय शृंगादिभिर्घातिने माव सृजः । तथा रिषते हिंसकाय तस्कराराक्षसादये हे सहसावन् सहस्विन् मा परा दाः । पराभूतं मा देहि । सर्वथा न देहीत्यर्थः ॥ ॥१०॥

वि घ त्वावाँ ऋतजात यंसद्गृणानो अग्ने तन्वे३ वरूथं ।
विश्वाद्रिरिक्षोरुत वा निनित्सोरभिह्रुतामसि हि देव विष्पट् ॥ ६ ॥
वि । घ । त्वाऽवान् । ऋतऽजात । यंसत् । गृणानः । अग्ने । तन्वे । वरूथं ।
विश्वात् । रिरिक्षोः । उत । वा । निनित्सोः । अभिऽह्रुतां । असि । हि । देव । विष्पट् ॥ ६ ॥

हे ऋतजात यज्ञार्थमुत्पन्नाग्ने वरूथं वरणीयं त्वां तन्वे शरीरपोषाय गृणानः स्तुवंस्त्वावांस्त्वया देवतया तद्वाञ्जनो वि घ यंसत् । विमुंचति खल्वात्मानं । कस्मात्सकाशात् । रिरिक्षोर्हिंसितुमिच्छोश्चोरादेः सकाशात् । उत वाथवा निनित्सोर्निंदितुमिच्छतः । हे देव अभिह्रुतामाभिमुख्येन कुटिलं कुर्वतां द्विषां विष्पाड्विशेषेण बाधकोऽसि हि । अतस्त्वदनुग्रहादयं जनो वि यंसत् ॥

त्वं ताँ अग्न उभयान्वि विद्वान्वेषि प्रपित्वे मनुषो यजत्र ।
अभिपित्वे मनवे शास्यो भूर्मर्मृजेन्य उशिग्भिर्नाक्रः ॥ ७ ॥
त्वं । तान् । अग्ने । उभयान् । वि । विद्वान् । वेषि । प्रऽपित्वे । मनुषः । यजत्र ।
अभिऽपित्वे । मनवे । शास्यः । भूः । मर्मृजेन्यः । उशिक्ऽभिः । न । अक्रः ॥ ७ ॥

हे यजत्र यष्टव्याग्ने त्वं तान्यष्टॄनयष्टॄंश्चोभयान्मनुषो मनुष्यान्विविच्य विद्वाञ्जानन् प्रपित्वे संनिहित एव काले वेषि । कामयसे यष्टॄन् । तथा कुर्वन्नक्र आक्रमिता त्वं मनवे । षष्ठ्यर्थे चतुर्थी । मनुष्यस्य यजमानस्याभिपित्वेऽभिप्राप्तकालेऽभिगमनवति यज्ञे वा शास्यो भूः । शिक्षणीयो भव । इदं कुर्विदं कुर्विति विधेयो भव । मर्मृजेन्यः शोधयिता यजमान उशिग्भिः कामयमानैर्ऋत्विग्भिरिव ॥

अवोचाम निवचनान्यस्मिन्मानस्य सूनुः सहसाने अग्नौ ।
वयं सहस्रमृषिभिः सनेम विद्यामेषं वृजनं जीरदानुं ॥ ८ ॥
अवोचाम । निऽवचनानि । अस्मिन् । मानस्य । सूनुः । सहसाने । अग्नौ ।
वयं । सहस्रं । ऋषिऽभिः । सनेम । विद्याम । इषं । वृजनं । जीरऽदानुं ॥ ८ ॥

वयमस्मिन्नग्नौ निवचनानि नियमपूर्वकाणि वचांसि स्तोत्ररूपाण्यवोचाम । ब्रूमः । अग्निर्विशेष्यते । मानस्य सूनुः । मीयत इति मानो मंत्रः । तस्य सूनुरग्निः मंत्रेणोत्पद्यमानत्वात् । सप्तम्यर्थे प्रथमा । मानस्य सूनौ सहसाने शत्रूणामभिभवितर्यग्नावेवोचाम । वयमेभिर्ऋषिभिरतींद्रियार्थप्रकाशकैर्मंत्रैः साधनैः सहस्र[illegible] धनं सनेम । संभजेमहि । विद्यामेति गतं ॥ ॥ ११ ॥

अनर्वाणमित्यष्टर्चमेकादशं सूक्तमागस्त्यं बार्हस्पत्यं त्रैष्टुभं । अनर्वाणं बार्हस्पत्यमित्यनुक्रांतं ॥ श्रौतविनियोगो लैंगिकः ॥ अत्र शौनकः । स्नात्वा जपेदनर्वाणं नमस्कृत्य बृहस्पतिं । वीराग्धनं च प्राप्नोति सोऽस्योक्यं च नियच्छति । ऋग्वि० १. २७. । इति ॥

अनर्वाणं वृषभं मंद्रजिह्वं बृहस्पतिं वर्धया नव्यमर्कैः ।
गाथान्यः सुरुचो यस्य देवा आशृण्वंति नवमानस्य मर्ताः ॥ १ ॥
अनर्वाणं । वृषभं । मंद्रऽजिह्वं । बृहस्पतिं । वर्धय । नव्यं । अर्कैः ।
गाथान्यः । सुऽरुचः । यस्य । देवाः । आऽशृण्वंति । नवमानस्य । मर्ताः ॥ १ ॥

हे होतः नव्यं नवतरं स्तुत्यं वा तमनर्वाणमगंतारं । स्तोतुरधीनमित्यर्थः । वृषभमपां फलानां वर्षितारं मंद्रजिह्वं मादकवाचं बृहस्पतिं मंत्रस्य पालयितारमेतन्नामकं देवमर्कैरर्चनसाधनैर्मंत्रैर्वर्धय । प्रवृद्धं कुरु । गृणतः शोभनदीप्तेर्नवमानस्य स्तूयमानस्य ॥ कर्मणि कर्तृप्रत्ययः ॥ यस्य बृहस्पतेः ॥ कर्मणि षष्ठ्यः ॥ रोचमानं स्तूयमानं गाथान्यः । गाथेति वाङ्नाम । स्तुतिवचसो नेतारो देवा व्यवहर्तारो मर्ता मनुष्या होत्रादयः । यद्वा । नवमानस्य स्तुवानस्य यजमानस्य संबंधिनस्ते । आशृण्वंति आश्रावयंति पुरा तं बृहस्पतिं वर्धय । अत्रानर्वाणमप्रत्यृतमन्यस्मिन्नित्यादि निरुक्तं द्रष्टव्यं । नि० ६. २३. ॥

बार्हस्पत्ये पशौ तमृत्वियेत्येषा वपायाज्या । सूचितं च । बृहस्पते अति यदर्यो अर्हान्तमृत्विया उप वाचः सचंते । आ० ३. ७. । इति ॥

तमृत्विया उप वाचः सचंते सर्गो न यो देवयतामसर्जि ।
बृहस्पतिः स ह्यंजो वरांसि विभ्वाभवत्समृते मातरिश्वा ॥ २ ॥
तं । ऋत्वियाः । उप । वाचः । सचंते । सर्गः । न । यः । देवऽयतां । असर्जि ।
बृहस्पतिः । सः । हि । अंजः । वरांसि । विऽभ्वा । अभवत् । सं । ऋते । मातरिश्वा ॥ २ ॥

तं बृहस्पतिमृत्विया वर्षर्तुसंबंधिन्यो वाचो माध्यमिका उप सचंते । समीपे सेवंते । यः सर्गो नोदकस्य स्रष्टापि । नशब्दोऽप्यर्थे । देवयतां देवानिच्छतां यजमानानामसर्जि फलं । यद्वा । देवं तमिच्छतां मनुष्याणामसर्जि स्रष्टवान्वृष्ट्युदकं । यद्वा । ऋत्वियाः प्राप्तकालीना वाचो होत्रादिप्रेरिता वाच उप सचंते तं यः सर्गो नोदकस्रष्टिरिव । सः स एव बृहस्पतिरंजो हि व्यंजकः खलु । तस्मिन्वर्षति सर्वे भवंति । अत एव विभ्वा विभुर्व्याप्तो मातरिश्वा वृष्टिनिर्मातर्यंतरिक्षे चेष्टमानो वायुसदृशो वा वरांसि वरणीयानि वृष्ट्यादिफलानि संपादयन्नृत उदके निमित्तभूते सति समभवत् । संभूतः । अथवा । अंजो यज्ञियानां व्यंजको मातरिश्वा फलस्य निर्मातरि यज्ञे श्वसिता वर्तमानः स बृहस्पतिर्ऋते यज्ञे निमित्तभूते सति वरांसि वरणीयानि हवींषीच्छन् विभ्वा विभुः समभवत् ॥

उपस्तुतिं नमस उद्यतिं च श्लोकं यंसत्सवितेव प्र बाहू ।
अस्य क्रत्वाहन्यो३ यो अस्ति मृगो न भीमो अरक्षसस्तुविष्मान् ॥ ३ ॥
उपऽस्तुतिं । नमसः । उत्ऽयतिं । च । श्लोकं । यंसत् । सविताऽइव । प्र । बाहू इति ।
अस्य । क्रत्वा । अहन्यः । यः । अस्ति । मृगः । न । भीमः । अरक्षसः । तुविष्मान् ॥ ३ ॥

अयं बृहस्पतिरुपस्तुतिं यजमानेनोपेत्य क्रियमाणां स्तुतिं नमसो हविर्लक्षणस्यान्नस्योद्यतिमुद्गारं च श्लोकमन्यो यो मंत्रविशेषोऽस्ति तं च प्र यंसत् । प्रकर्षेण यतते स्वीकर्तुं । यजमानो वा तत्सर्वं प्रयच्छत्वस्मै । तत्र दृष्टांतः । सवितेव सूर्य इव स यथा स्तोत्रादिकं स्वीकरोति तद्वत् । यजमानप्रदानपक्षे सविता सर्वस्य प्रसविता सूर्य इव । स यथा बाहुभ्यः प्रकाशादि प्रयच्छति तद्वद्बाहू बाहुभ्यां यजमानोऽपीत्यर्थः । तस्य महत्त्वमाह । अरक्षसः स्वविरोधिरक्षोरहितस्यास्य बृहस्पतेः क्रत्वा कर्मणा सामर्थ्येनाहन्योऽह्नि साधुर्यः सूर्योऽस्ति स भीमो न मृग इव भयजनकः सिंहादिरिव भीमो भयहेतुस्तुविष्मान् बलवान् परिभ्रमतीति शेषः । यस्य माहात्म्येन मंत्राभिमानिनो बृहस्पतेः सामर्थ्यात्संदेहाद्यसुराञ्जित्वातितेजस्वी भवति तादृशो महानुभावो यजमानदत्तं हविरादिकं स्वीकरोतीत्यर्थः ॥

अस्य श्लोको दिवीयते पृथिव्यामत्यो न यंसद्यक्षभृद्विचेताः ।
मृगाणां न हेतयो यंति चेमा बृहस्पतेरहिमायाँ अभि द्यून् ॥ ४ ॥

अस्य। श्लोकः। दिवि। ईयते। पृथिव्यां। अत्यः। न। यंसत्। यक्षऽभृत्। विऽचेताः।
मृगाणां। न। हेतयः। यंति। च। इमाः। बृहस्पतेः। अहिऽमायान्। अभि। द्यून् ॥४॥

अस्य बृहस्पतेः श्लोकः स्तुत्यात्मिका कीर्तिर्गर्जितवाग्वा दिवि द्योतमाने द्युलोके पृथिव्यां चेयते। गच्छति। व्याप्नोति। यो बृहस्पतिरत्यो नातनशील आदित्य इव यक्षभृत् पूजितं हविरादिकं दधानो विचेता विविधं चेतयिता प्राणिनां विशिष्टप्रज्ञायुक्तो वा यंसत् नियच्छति फलं। किंच मृगाणां हंतुमन्विष्यतां हेतयो नायुधानीवास्य बृहस्पतेरिमा हेतयो हिंसाख्यायुधानि यंति। गच्छंति च ॥ चवायोगे प्रथमेति न निघातः ॥ अहिमायानागत्य हंत्र्योऽंतरिक्षचारिण्यो वा माया येषां वृत्रादीनां तानसुरान् द्यून् दिवसान् ॥ कालाध्वनोः। पा० २. ३. ५.। इति द्वितीया ॥ तान्यायुधान्यभि लक्षयंति च ॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥

ये त्वा देवोस्रिकं मन्यमानाः पापा भद्रमुपजीवंति पज्राः।
न दूढ्ये३ अनु ददासि वामं बृहस्पते चयस इत्पियारुं ॥५॥
ये। त्वा। देव। उस्रिकं। मन्यमानाः। पापाः। भद्रं। उपऽजीवंति। पज्राः।
न। दुःऽध्ये। अनु। ददासि। वामं। बृहस्पते। चयसे। इत्। पियारुं ॥५॥

हे देव बृहस्पते ये पापाः पापबुद्धयोऽल्पाः पज्रा हविर्लक्षणान्नवंतः पापेन जीर्णा वा नरा भद्रं कल्याणं त्वा त्वामुस्रिकं। उस्रियेति गोनाम। कुत्सितामल्पक्षीरोत्स्राविणीं गां जीर्णमनड्वाहं वा मन्यमाना उपजीवंति उपेत्य प्राणंति। अल्पं याचंत इत्यर्थः। दूढ्ये दुर्धिये ॥ वचनव्यत्ययः ॥ दुर्बुद्धिभ्यस्तेभ्यो वामं वननीयं धनं नानु ददासि। अनुकूलं न वितरसि। हे बृहस्पते देव पियारुं सोमपानशीलं सोमेन यष्टारं महाफललिप्सुं तु चयस इत्। गच्छस्येवानुग्रहीतुं ॥ चय गतावित्यस्येदं रूपं ॥ यद्वा। हे बृहस्पते पियारुं हिंसकं ॥ पीयतेर्हिंसाकर्मण इदं रूपं ॥ तं प्राणिहिंसकं चयस इत्। हंस्येव। बृहस्पते यक्षातयसि देवपीयुमिति निरुक्तं। ४. २५.॥ ॥१२॥

सुप्रैतुः सूयवसो न पंथा दुर्नियंतुः परिप्रीतो न मित्रः।
अनर्वाणो अभि ये चक्षते नोऽपीवृता अपोर्णुवंतो अस्थुः ॥६॥
सुऽप्रैतुः। सुऽयवसः। न। पंथाः। दुःऽनियंतुः। परिऽप्रीतः। न। मित्रः।
अनर्वाणः। अभि। ये। चक्षते। नः। अपिऽवृताः। अपऽऊर्णुवंतः। अस्थुः ॥६॥

हे बृहस्पते त्वं सुप्रैतुः सुष्ठु गंतुर्मनुष्यस्य सुयवसः शोभनान्नस्य पंथा न मार्ग इव सुष्ठु यज्ञमार्गगामिनो सुयवसः पंथा इव। सुखकारी भवेत्यर्थः। किंच दुर्नियंतुर्दुःखेन नियमितू राज्ञः परिप्रीतः सर्वप्रकारेण संतुष्टो द्वेषादिरहितो मित्रो न सुहृन्मंत्रीव। स यथा दुर्नयान्निवर्तयति तद्वत् त्वमपि तथास्मभ्यं कुर्वित्यर्थः। सखिवद्-मार्गान्निवर्त्य मार्गे यज्ञादिरूपे योजयित्वा तत्रापि फलप्रदो भवेत्यर्थः। किंचानर्वाणोऽपापा ये नरा नोऽस्मानभ्याभिमुख्येन चक्षते बोधयंति तेऽपीवृता अज्ञानेनावृता अप्यपोर्णुवंतोऽपगतावरणवंतो ज्ञानवंतोऽस्थुः। तिष्ठंतु। यद्वा। अनर्वाणस्त्वामप्राप्नुवंतो येऽस्मद्विरोधिनो नोऽस्मानभि चक्षते अभिवदंति निंदंति तेऽपीवृता आच्छादिता रक्षिता अप्यपोर्णुवंतोऽपगतरक्षणा भवंति ॥

सं यं स्तुभ इत्येषा बार्हस्पत्ये पशौ पुरोडाशस्य याज्या। सूत्रितं च। सं यं स्तुभोऽवनयो न यंत्येवा पित्रे। आ० ३.७.। इति ॥

सं यं स्तुभोऽवनयो न यंति समुद्रं न स्रवतो रोधचक्राः।
स विद्वाँ उभयं चष्टे अंतर्बृहस्पतिस्तर आपश्च गृध्रः ॥७॥

सं । यं । स्तुभः । अवनयः । न । यंति । समुद्रं । न । स्रवतः । रोधऽचक्राः ।
सः । विद्वान् । उभयं । चष्टे । अंतः । बृहस्पतिः । तरः । आपः । च । गृध्रः ॥ ७ ॥

यं बृहस्पतिं स्तुभः स्तोत्राण्यवनयो न सर्वा अवनयो भूमयो मनुष्या यथा स्वामिनं कर्म प्रति वा सं यंति संगच्छंति तद्वत् तथा समुद्रं रोधचक्राः । नदीनामैतत् । रोधनशीलानि चक्राणि यासु तास्तादृश्यः कूलं क्रममाणा वा स्रवतः स्रवंत्यो नद्यो यथा यंति तद्वत् सर्वा अपि स्तुतयो यमेव प्राप्नुवंति गृध्रो गर्धनशीलो वृष्टिमाकांक्षमाणः स बृहस्पतिर्विद्वान् वक्ष्यमाणाभिज्ञस्तरस्तरणं जलाभिवृद्धिमाप उदकानि चोभयमंतर्मध्ये स्थित्वा चष्टे । पश्यति । करोतीत्यर्थः ॥

एवा महस्तुविजातस्तुविष्मान्बृहस्पतिर्वृषभो धायि देवः ।
स नः स्तुतो वीरवद्धातु गोमद्विद्यामेषं वृजनं जीरदानुं ॥ ८ ॥
एव । महः । तुविऽजातः । तुविष्मान् । बृहस्पतिः । वृषभः । धायि । देवः ।
सः । नः । स्तुतः । वीरऽवत् । धातु । गोऽमत् । विद्याम । इषं । वृजनं । जीरऽदानुं ॥ ८ ॥

महो महांस्तुविजातो बह्वर्थमुत्पन्नस्तुविष्मान् बलवान् वृषभोऽपां वर्षिता देवो बृहस्पतिरेवैवं स्तुतिप्रकारेण धायि । धीयते । स्तूयत इत्यर्थः । स स्तुतो देवो नोऽस्माकं वीरवत्पुत्राद्युपेतं गोमद्गोभिर्युक्तं फलं धातु । करोत्वित्यर्थः । विद्यामेति गतं ॥ ॥ १३ ॥

कंकत इति षोडशर्चं द्वादशं सूक्तं । ऋषिरगस्त्यः । अप्तृणसूर्यास्त्रयो देवताः । त्रिष्टुप् छंदः । सूर्ये विषमित्याद्यास्तिस्रो महापंक्तयः । अष्टकौ सप्तकः षट्को दशको नवकश्च । अनु० १०. ३. । इत्युक्तलक्षणोपेतत्वात् । नवानामित्येषा त्रयोदशी महाबृहती । चत्वारोऽष्टका जागतश्च महाबृहती । अनु० ९. ९. । इति ह्युक्तं । अत्र यद्यप्यक्षराणि न्यूनानि तथापि व्यूहेन पूरणीयानि । अत्रानुक्रमणिका । कंकतः षोळशोपनिषदानुष्टुभमप्तृणसौर्यं विषशंकावानगस्त्यः प्राब्रवीद्दशम्याद्याश्च तिस्रो महापंक्तयो महाबृहती चेति । उपनिषदिति रहस्यमित्यर्थः । विषशंकायुक्तोऽगस्त्यस्तत्परिहारायेदमुक्तवान् ॥ श्रौतस्य विशेषविनियोगो लैंगिकः ॥ अत्र शौनकः । कंकतो नेति सूक्तं तु विषार्तः प्रयतो जपेत् । विषं न क्रमते चास्य सर्पाद्दृष्टिविषादपि ॥ यत्कीटलूतासु विषं दंष्ट्रिवृश्चिकतश्च यत् । मूलं च कृत्रिमं चैव जपन्सर्वमपोहति । ऋग्वि० १. २८. । इति ॥

कंकतो न कंकतोऽथो सतीनकंकतः । द्वाविति प्लुषी इति न्य१दृष्टा अलिप्सत ॥ १ ॥
कंकतः । न । कंकतः । अथो इति । सतीनऽकंकतः । द्वौ । इति । प्लुषी इति । इति ।
नि । अदृष्टाः । अलिप्सत ॥ १ ॥

कंकतोऽल्पविषः कश्चित् न कंकतस्तद्विपरीतोऽनल्पविषो महोरगादिः ॥ तकतेर्गत्यर्थस्य वर्णव्यत्ययेन कंकत इति सरन् भवति ॥ अथो अपि च सतीनकंकतः । सतीनमित्युदकनाम सतीनं गहनमिति तन्नामसु पाठात् । उदकचार्यल्पविषवान् कश्चिद्डुंडुभादिः । एवं द्वाविति । अल्पविषमहाविषभेदेन जलस्थलभेदेन वा द्विप्रकाराविति । प्लुषी इति प्लोषणाविति । प्रकारद्वैविध्यदाहकत्वयोः प्रतिपादनायेतिकारद्वयं । तथादृष्टा अदृश्यमानरूपा एतत्संज्ञकाश्च केचिद्विषधरा एवमुक्तप्रकारा ये संति ते नूनं मां न्यलिप्सत । विशेषेण लिंपति । सर्वाण्यंगानि विषमावृणोति । केनैवं कृतमिति ज्ञायत इति भावः ॥

अदृष्टान्हंत्यायत्यथो हंति परायती । अथो अवघ्नती हंत्यथो पिनष्टि पिंषती ॥ २ ॥
अदृष्टान् । हंति । आऽयती । अथो इति । हंति । पराऽयती । अथो इति । अवऽघ्नती ।
हंति । अथो इति । पिनष्टि । पिंषती ॥ २ ॥

अनेन विषघ्न्योषधिः स्तूयते। आयती विषदष्टस्य सकाशमागच्छंती विषनिर्हरणसाधनौषधिरदृष्टानदृश्यमानान्विषधरान्हंति। हिनस्ति। अथो अपि च परायती परागच्छंती संमार्जनसमयेऽर्वाक्प्रवृत्ता हंति। नाशयति जलचरविषधरान्। अथो अपि चावघ्नती॥ कर्मणि कर्तृप्रत्ययः॥ अवहन्यमानौषधिः स्वगंधेन हंति बहुविषान्। यद्वा। काचिदोषधिर्दंशकान्मारयत्येव। अथो अपि च पिंषती पेषणकर्त्री दृषत्पिष्यमाणा वौषधिः पिनष्टि। चूर्णीकरोत्यल्पविषान्। अथवा सर्वेषु वाक्येष्वविशेषेण सर्वविषकारिणां नाश उक्तः॥

शरासः कुशरासो दर्भासः सैर्या उत।
मौंजा अदृष्टा वैरिणाः सर्वे साकं न्यलिप्सत॥३॥
शरासः। कुशरासः। दर्भासः। सैर्याः। उत।
मौंजाः। अदृष्टाः। वैरिणाः। सर्वे। साकं। नि। अलिप्सत॥३॥

अन्यांश्च विषहेतूनाह। शरासः शरा वेणुदंडसदृशा अंतश्छिद्रास्तृणविशेषाः। कुशरासः कुत्सितशरा अंतश्छिद्राः शरसदृशास्तृणविशेषाः। दर्भासो दर्भाः कुशाः। सैर्यास्तटाकादिप्रांतोद्भवास्तृणविशेषा अश्ववाला इति प्रसिद्धाः। मौंजा मुंजाः प्रसिद्धाः। वैरिणा वीरणप्रकाराः। एतेषु वर्तमाना अदृष्टा उक्तरूपाः सर्वे विषधराः साकं मिलित्वा न्यलिप्सत। निलिंपंति स्म॥

नि गावो गोष्ठे असदन्नि मृगासो अविक्षत।
नि केतवो जनानां न्य१दृष्टा अलिप्सत॥४॥
नि। गावः। गोऽस्थे। असदन्। नि। मृगासः। अविक्षत।
नि। केतवः। जनानां। नि। अदृष्टाः। अलिप्सत॥४॥

गावो गोष्ठे न्यसदन्। निषीदंति। मृगासो मृगा न्यविक्षत। निविष्टाः। स्वस्वस्थान उपरताः। जनानां प्राणिनां केतवः प्रज्ञानानि नि॥ उपसर्गश्रुतेर्योग्यक्रियाध्याहारः॥ नीचान्यभवन्। एतेऽस्मिन्समयेऽदृष्टा अदृश्यमानरूपाः संतो न्यलिप्सत। निलिंपंति विशेषेण॥

एत उ त्ये प्रत्यदृश्रन्प्रदोषं तस्करा इव। अदृष्टा विश्वदृष्टाः प्रतिबुद्धा अभूतन॥५॥
एते। ऊं इति। त्ये। प्रति। अदृश्रन्। प्रऽदोषं। तस्कराःऽइव। अदृष्टाः। विश्वऽदृष्टाः।
प्रतिऽबुद्धाः। अभूतन॥५॥

त्ये त एते सर्पाः प्रत्यदृश्रन्। प्रतिदृश्यंते रात्रौ श्वासादिलिंगेन। यद्वा। ते रात्रौ हंतारो दिवैते प्रति दृश्यंते। तत्र दृष्टांतः। प्रदोषं। रात्रिर्दोषा। रात्रिं प्रति तमसाभिभूतासु रात्रिषु तस्करा इव हिंसकाश्चौरा दृश्यंते यथा तद्वत्। कीदृशास्ते। अदृष्टा अपरिदृश्यमाना विश्वदृष्टा विश्वं दृष्टं यैस्ते तादृशाः प्रतिदृश्यंते। अतो हे नराः प्रतिबुद्धा अभूतन। भवत॥ ॥१४॥

द्यौर्वः पिता पृथिवी माता सोमो भ्रातादितिः स्वसा।
अदृष्टा विश्वदृष्टास्तिष्ठतेळयता सु कं॥६॥
द्यौः। वः। पिता। पृथिवी। माता। सोमः। भ्राता। अदितिः। स्वसा।
अदृष्टाः। विश्वऽदृष्टाः। तिष्ठत। इळयत। सु। कं॥६॥

अतः परं विषविचिकित्सा। तत्र तावत् हे सर्पाः वो युष्माकं द्यौः पिता। पृथिवी माता। सोमो भ्राता। अदितिर्देवमाता स्वसा। एवंमहानुभावा महोरगाः अदृष्टा अन्यैरदृश्यमानरूपाः स्वयं तु विश्वदृष्टाः सर्वस्य द्रष्टारो यूयं तिष्ठत स्वस्वस्थाने। मां प्रति मा गच्छत। सु सुतरां कं सुखं यथा तथेळयत। ईरयत। गच्छत। सोमशब्देन सोमाधारो द्युलोक उच्यते। पृथिव्यंतरिक्षद्युस्थानस्थाः सर्पाः स्वस्वस्थानं प्राप्नुतास्मद्बाधं मा कुरुतेत्यर्थः॥

ये अं॒स्या॒ ये अंग्याः॑ सू॒चीका॒ ये प्र॑कंक॒ताः।
अदृ॑ष्टाः॒ किं च॒नेह वः॒ सर्वे॑ सा॒कं नि ज॑स्यत ॥७॥
ये। अं॒स्याः॑। ये। अंग्याः॑। सू॒चीकाः॑। ये। प्र॒ऽकं॒क॒ताः।
अदृ॑ष्टाः। किं। च॒न। इ॒ह। वः॒। सर्वे॑। सा॒कं। नि। ज॒स्य॒त ॥७॥

येंऽस्या अंसार्हा अंसगा अंसे भवा अंसाभ्यां खादंतो वा। तथा येंऽग्या अंगगा अंगेन शरीरेण हंतारो वा लूतिकादयः। सूचीकाः सूचीसदृशपुच्छरोमाणो वृश्चिकाद्याः। ये च प्रकंकताः प्रकृष्टविषाः प्रकृष्टगामिनो वा महोरगा अदृष्टा अदृश्यमानाः किं चन यत्किंचित्सर्पजातमस्ति। इहास्मिन् समीपे वो युष्माकं किमस्ति। अतो यूयं सर्वे साकं सह नितरां जस्यत। मुंचतास्मान्॥ जसु मोक्षणे दैवादिकः॥

उत्पु॒रस्ता॒त्सूर्य॑ एति वि॒श्वदृ॑ष्टो अदृष्ट॒हा। अ॒दृष्टा॒न्त्सर्वा॑ञ्ज॒म्भय॒न्त्सर्वा॑श्च यातुधा॒न्यः॑ ॥८॥
उत्। पु॒रस्ता॑त्। सूर्यः॑। ए॒ति॒। वि॒श्वऽदृ॑ष्टः। अ॒दृ॒ष्ट॒ऽहा। अ॒दृष्टा॑न्। सर्वा॑न्। ज॒म्भय॑न्।
सर्वाः॑। च॒। या॒तु॒ऽधा॒न्यः॑ ॥८॥

असौ सूर्यः पुरस्तात्पूर्वस्यां दिश्युदेति। कीदृशः सः। विश्वदृष्टः। विश्वे द्रष्टव्या यस्य स तादृशः। अदृष्टहा। अदृष्टा विषविशेषा विषधरविशेषा वा। तेषां हंता। यद्वा। अदृष्टमदर्शनमज्ञानमंधकारः। तस्य हंता। सूर्य उदिते सति सर्वे विषधरा विषाणि वा पलायंते। किं कुर्वन्नुदेतीति चेत् उच्यते। सर्वानदृष्टानद्रष्टव्यान्विषराक्षसादीञ्जंभयन् हिंसयन्। तथा सर्वा यातुधान्यः। यातवो यातनास्तीव्रवेदनाः। तासां धात्रीरुत्पादयित्रीर्महोरगी राक्षसीर्वा जंभयन् पुरस्तादुदेति। अतोऽस्मत्तो नि जस्यतेति संबंधः॥

उद॑पप्तद॒सौ सूर्यः॑ पु॒रु विश्वा॑नि॒ जूर्व॑न्। आ॒दि॒त्यः पर्व॑तेभ्यो वि॒श्वदृ॑ष्टो अदृष्ट॒हा ॥९॥
उत्। अ॒प॒प्त॒त्। अ॒सौ। सूर्यः॑। पु॒रु। विश्वा॑नि। जूर्व॑न्। आ॒दि॒त्यः। पर्व॑तेभ्यः। वि॒श्वऽदृ॑ष्टः।
अ॒दृ॒ष्ट॒ऽहा ॥९॥

असौ पुरस्ताद्दृश्यमानः सूर्यः सर्वस्य प्रेरक आदित्य उदपप्तत्। ऊर्ध्वं गच्छति॥ पततेर्लुङि पुमागमे रूपं॥ किं कुर्वन्। विश्वानि बहूनि विषाणि पुरु प्रभूतं जूर्वन् हिंसन्। कीदृशोऽसौ। पर्वतेभ्यः पर्ववद्भ्यः प्राणिभ्यस्तेषामु[illegible]ो विषोदकादीनामदनशीलः विश्वदृष्टो विश्वं दृष्टं येन तादृशः अदृष्टहादृष्टानां विषविशेषाणां हंता। एवंमहानुभावः सूर्य ऊर्ध्वमारोहति। अतो विषशंका न कार्या॥

सूर्ये॑ वि॒षमा स॑जामि॒ दृतिं॒ सुरा॑वतो गृ॒हे।
सो चि॒न्नु न म॑राति॒ नो व॒यं म॑रामा॒रे अ॑स्य॒ योज॑नं हरि॒ष्ठा मधु॑ त्वा मधु॒ला
च॑कार ॥१०॥

सूर्ये । विषं । आ । सजामि । दृतिं । सुराऽवतः । गृहे ।
सः । चित् । नु । न । मराति । नो इति । वयं । मराम । आरे । अस्य । योजनं ।
हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥ १० ॥

आदित्यमंडले चतुर्थेनांगुलिना विषमादाय मधुकृत्य योजयित्वा निर्विषो भवेदिति यदेतद्विषविद्याया-मुक्तं तदिदमत्रोच्यते । अहं विषावृतोऽगस्त्यः सूर्ये सर्वस्य प्रेरयितरि मधुविद्यारूपे सूर्यमंडले विषमावृत्य वर्तमानं सूर्य आ सजामि । आसक्तं करोमि । तत्र दृष्टांतः । सुरावतो गृहे सुरानिर्मातृसदने दृतिमिव चर्ममयं सुरापात्रमिव । यथा तत्कर्तुर्न दोषाय भवति तद्वद्विषमादित्यस्य न बाधकमित्यर्थः । सो चित् स । चित् पूजायां । उः प्रसिद्धौ । पूज्यः स सूर्यः खलु न मराति । न म्रियते । नो वयं मराम । तदनुग्रहात्तत्रैव विषस्य योजितत्वाद्वयमपि न म्रियामहे । उभयोरमरणे कारणमाह । हरिष्ठाः । हरयोऽश्वाः । तेषु स्थित आदित्य आरे दूरेऽस्य विषस्य योजनं प्रापणं चकार । तदेवोच्यते । हे विष त्वा त्वां मध्वमृतं चकार । विषस्य विषभावं दूरेऽपनोद्यामृतीचकारेति । एषैव मधुला मधुदात्री निर्विषीकर्त्री मधुविद्या । यदेतदादित्यस्य विषयोजनं तेन चामृतीकरणं यदस्ति एषा मधुविद्या ॥ ॥ १५ ॥

इयत्तिका शकुंतिका सका जघास ते विषं ।
सो चिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ ११ ॥

इयत्तिका । शकुंतिका । सका । जघास । ते । विषं ।
सो इति । चित् । नु । न । मराति । नो इति । वयं । मराम । आरे । अस्य । योजनं ।
हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥ ११ ॥

इयत्तिका । इयत्तां कुर्वाणेयत्तावती वा । बालेत्यर्थः । शकुंतिका । शकुंतः शकुनः । तस्य स्त्री । तां कपिंजलीमाहुः । सका सा ते तव विषं जघास । भक्षितवती । सा विषहर्त्रीति प्रसिद्धा । सो चित् ॥ सा उ इति निपातसमुदाय एकं पदं ॥ सापि शकुंतिका न म्रियते नित्यप्रतिपक्षत्वाद्विषस्य । शिष्टं व्याख्यातचरं । अनेन विद्यायां यद्देहावृतं विषं तस्य शकुनेभ्य आदित्याय च प्रदानमस्तीत्युक्तं भवति ॥

त्रिः सप्त विष्पुलिंगका विषस्य पुष्यमक्षन् ।
ताश्चिन्नु न मरंति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ १२ ॥

त्रिः । सप्त । विष्पुलिंगकाः । विषस्य । पुष्यं । अक्षन् ।
ताः । चित् । नु । न । मरंति । नो इति । वयं । मराम । आरे । अस्य । योजनं ।
हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥ १२ ॥

त्रिः सप्त त्रिगुणिताः सप्तसंख्याका विष्पुलिंगका विविधाः विष्पुलिंगकाः । सप्तसु जिह्वासु लोहितशुक्ल-कृष्णभेदेनैकविंशतिर्यासां ताः । यद्वा । त्रिः सप्तैकविंशतिभेदा विष्पुलिंगकाः सूक्ष्मचटकिका विषप्रतिपक्षभूताः । विषस्यास्मदावरकस्य पुष्यं पोषमक्षन् । अदंतु । नाशयंतु । ताश्च न मरंति न वयमपि । शिष्टमविशिष्टं ॥

नवानां नवतीनां विषस्य रोपुषीणां ।
सर्वासामग्रभं नामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥१३॥
नवानां । नवतीनां । विषस्य । रोपुषीणां ।
सर्वासां । अग्रभं । नाम । आरे । अस्य । योजनं । हरिऽस्थाः । मधु । त्वा । मधुला । चकार ॥१३॥

नवानां नवतीनां नवाधिकानां नवतिसंख्याकानां नदीनां । पुनः कीदृशीनां । विषस्यासद्व्यापकस्य सर्वस्य विषस्य रोपुषीणां लोपयित्रीणां छेत्त्रीणां । सर्वासामुक्तानां गंगादिनदीनां नामाग्रभं । गृह्णामि । संकीर्तयामि ॥ गृहेश्छांदसे लुङि च्छांदसश्च्लेर्लुक् । हृग्रहोर्भः ॥ अस्य योजनमित्यादि गतं ॥

त्रिः सप्त मयूर्यः सप्त स्वसारो अग्रुवः ।
तास्ते विषं वि जभ्रिर उदकं कुंभिनीरिव ॥१४॥
त्रिः । सप्त । मयूर्यः । सप्त । स्वसारः । अग्रुवः ।
ताः । ते । विषं । वि । जभ्रिरे । उदकं । कुंभिनीःऽइव ॥१४॥

त्रिः सप्तैकविंशतिसंख्याका मयूर्यो मयूरस्त्रियः । ता विषकारिसर्पद्वेषिण्य इति प्रसिद्धा नागद्वेषिगरुडपचादुत्पन्नत्वात् । तथा सप्तैतत्संख्याकाः सर्पणस्वभावाः स्वसारः स्वयमेव सरणा अग्रुवः । नदीनामैतत् । सुरगंगाद्याः प्रसिद्धाः सप्त नद्यः संति । तास्ते हे देह तव विषं वि जभ्रिरे । विशेषेण हरंतु । तत्र दृष्टांतः । उदकं कुंभिनीः कुंभिन्यः कुंभवत्यः कुंभेन जलहारिण्य इव । ता यथा तद्धरंति तद्वन्नद्यो मयूर्यश्चातिप्रभूतं हरंतु ॥

इयत्तकः कुषुंभकस्तकं भिनद्म्यश्मना । ततो विषं प्र वावृते पराचीरनु संवतः ॥१५॥
इयत्तकः । कुषुंभकः । तकं । भिनद्मि । अश्मना । ततः । विषं । प्र । ववृते । पराचीः । अनु । संऽवतः ॥१५॥

इयत्तकः कुत्सितेयत्तः । अल्पप्रमाण इत्यर्थः । कुषुंभकः कुं पृथ्वीं सुंभति विलिखतीति सर्पाणां कुत्सितं सुंभयिता निग्रहीता कुषुंभको नकुलः । स ते विषं हरत्विति शेषः । यदि न तथा स करोति तकं कुत्सितं तं नकुलमश्मना भिनद्मि । विदारयामि । विषनिर्हरणप्रयोगे [illegible] तं पाषाणानुघातमनुतिष्ठंति तद्विदः । तदिदमत्रोक्तं । तत एवं प्रयोगे सति विषं प्र वावृते । [illegible]षं प्रवर्तते । निर्गच्छतु । काः प्रति । उच्यते । पराचीः परागंचनवतीरतिदूरगाः संवतः संविभागवतो दिशोऽनु लक्षीकृत्य । दिगंतं प्रति गच्छतु न मां प्रति गच्छत्वित्यर्थः ॥

अध्यायोपाकरणोत्सर्गयोः कुषुंभकस्तदित्यंत्या विनियुक्ता । दधिसक्तूञ्जुहोतीत्युपक्रम्य कुषुंभकस्तदब्रवीत् । आ॰ गृ॰ ३. ५. ५. । इति सूचितत्वात् ॥

कुषुंभकस्तदब्रवीद्गिरेः प्रवर्तमानकः । वृश्चिकस्यारसं विषमरसं वृश्चिक ते विषं ॥१६॥
कुषुंभकः । तत् । अब्रवीत् । गिरेः । प्रऽवर्तमानकः । वृश्चिकस्य । अरसं । विषं । अरसं । वृश्चिक । ते । विषं ॥१६॥

एवं महानुभावेनागस्त्यमहर्षिणोच्यमाने सति गिरेः सकाशात्प्रवर्तमानकः प्रवर्तमानोऽतिशीघ्रमभिगच्छन् कुषुंभको नकुलस्तदब्रवीत्। तद्वाक्यमाचख्यौ। किं तदिति उच्यते। वृश्चिकस्यैतद्विषमरसमसारं। बाधकं न भवतीत्यर्थः। तथा लोकेऽपि सर्पदष्टमपि क्रिम्यादिदंशनमेव अतो न बाध इति हि वदंति। एवमभिवचनेन सोऽपि निर्विषोऽभवत्। अथ तं वृश्चिकं प्रति नकुल आह। हे वृश्चिक ते विषमरसं। अतस्तमृषिं किं करिष्यति। तस्मात्परिहरेति। यदैवमवादीत् तदाप्रभृति वृश्चिकविषमसारमभवत्। एषा विषनिर्हरणुपनिषत्॥ ॥१६॥

इति सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे द्वितीयाष्टके प्रथमे मंडले चतुर्विंशोऽनुवाकः प्रथमं मंडलं च॥

---

## ABBREVIATIONS USED IN THE REFERENCES.

अथ॰ Atharva-veda Sa*m*hitâ.
अनु॰ Sarvânukrama*n*î Paribhâshâ.
अनु॰ ऋ॰ Sarvânukrama*n*î on Rig-veda, Ma*n*-*d*ala . , Sûkta .
अम॰ Amarakosha.
आ॰ Â*s*valâyana's *S*rauta-sûtra.
आ॰ गृ॰ Â*s*valâyana's G*ri*hya-sûtra.
आ॰ प॰ Âpastamba's Paribhâshâsûtrâ*n*i, M. M. in Zeitschrift der Deutschen Morgenl. Gesellschaft, vol. ix. pp. xliii seqq.
आप॰ Âpastambîya *S*rauta-sûtra.
आप॰ गृ॰ Âpastambîya G*ri*hya-sûtra.
आर्य॰ The Âryabha*t*îya, edited by Dr. H. Kern. Leiden, 1874.
उ॰ U*n*âdi-sûtras, ed. Aufrecht. Bonn, 1859.
ऋ॰ and ऋवे॰ Rig-veda.
ऋवि॰ Rigvidhâna, ed. R. Meyer. Berlin, 1878.
ऐ॰ आ॰ Aitareya Âra*n*yaka.
ऐ॰ ब्रा॰ Aitareya Brâhma*n*a.
क॰ उ॰ Ka*th*a Upanishad.
का॰ Kâ*s*ikâ[1].
कौ॰ उ॰ Kaushîtaki-Brâhma*n*a Upanishad.
छां॰ उ॰ *Kh*ândogya Upanishad.
जै॰ न्या॰ *G*aiminîya Nyâya-mâlâ-vistara, ed. Goldstücker. London, 1878.
तां॰ Tâ*nd*ya Mahâ-Brâhma*n*a.
तै॰ आ॰ Taittirîya Âra*n*yaka.
तै॰ प्रा॰ Taittirîya Prâti*s*âkhya.
तै॰ ब्रा॰ Taittirîya Brâhma*n*a.
तै॰ सं॰ Taittirîya Sa*m*hitâ.
धा॰ Dhâtupâ*th*a, ed. Westergaard.
नि॰ Yâska's Nirukta, ed. Roth.
नृ॰ ता॰ N*ri*si*m*ha Tâpanîya Upanishad.
नै॰ Naigha*nt*uka, ed. Roth.
परा॰ Parâ*s*ara Dharma*s*âstra.
परि॰ Nâgo*g*îbha*tt*a's Paribhâshendu*s*ekhara, ed. Kielhorn. Bombay, 1868[1].
पा॰ Pâ*n*ini[1].
पिं॰ Pi*n*gala's *Kh*anda*h*-sûtra, ed. Weber, Indische Studien, vol. viii.
पू॰ मी॰ *G*aimini's Mîmâ*m*sâ-dar*s*ana.
फि॰ *S*ântanava's Phi*t*-sûtra, ed. Kielhorn. Leipzig, 1866.
बृ॰ B*ri*had-devatâ (Adhyâya and *S*loka), MS.
बृ॰ उ॰ B*ri*had Âra*n*yaka Upanishad.
म॰ Mahâbhâshya, ed. Kielhorn[1].
मनु॰ Manu Sm*ri*ti.
मुं॰ उ॰ Mu*nd*aka Upanishad.
मै॰ उ॰ Maitri Upanishad.
वा॰ सं॰ Vâ*g*asaneyi Sa*m*hitâ.
वेदां॰ Bâdarâya*n*a's Vedânta-sûtras.
शत॰ (ब्रा॰) *S*atapatha Brâhma*n*a.
शि॰ Pâ*n*inîya *S*ikshâ for Rig-veda (*S*loka), Indische Studien, vol. iv. pp. 360 seqq.
श्वे॰ उ॰ *S*vetâ*s*vatara Upanishad.

[1] Vârttikas have been referred to by पा॰ with four figures, giving the Sûtra in Pâ*n*ini and the number of the Vârttika in Kielhorn's edition of the Mahâbhâshya. म॰ has been used instead of पा॰ when Sâya*n*a does not quote the Vârttika itself, but Pata*ñg*ali's note on it. When a Vârttika does not occur in the Mahâbhâshya, but in the Kâ*s*ikâ only, it has been referred to by का॰ with four figures. This does not mean that Sâya*n*a had just this or that book in his mind, but is only meant to facilitate the finding of a quotation. When references are given to the Paribhâshendu*s*ekhara, this does not mean that Sâya*n*a knew this book, but that the passage referred to will help to explain Sâya*n*a's meaning. A few grammatical quotations have not been found either in the Mahâbhâshya or in the Kâ*s*ikâ. In these cases the Sûtra of Pâ*n*ini has been given with an * after it. They will be found in the Siddhânta Kaumudî or in the Ga*n*apâ*th*a, etc.

